❋ श्रीरामकृष्णौ विजयेतेतमाम् ❋

श्रीमध्वगौरांगौ जयतः

श्रीश्रीमन्माध्वगौडेश्वरसंप्रदायाचार्यवर्येण हस्तामलकवन्निजहृदयविन्यस्त–
समस्तसद्ग्रन्थतात्पर्येण वेद–वेदांग–षड्दर्शनेतिहास–पुराण–स्मृति–
वाकोवाक्य–काव्यालंकारादि–निखिलशास्त्रपारावाराऽवार–
पारीणेन सन्देहग्रन्थिच्छेदनसमर्थेन वैष्णवसिद्धान्त–
साम्राज्यसंरक्षकेन श्रीमद्रूप–सनातनानुगतेन
श्रीमद्वल्लभात्मजेन जीवजीवातुना

श्रीजीवगोस्वामिना विरचितं

# श्रीहरिनामामृतव्याकरणम्

श्रीमद्धरेकृष्णाचार्यकृतया "बालतोषणी"-टीकया समुपेतम्

सङ्गणकसंस्करणं दासाभासेन हरिपार्षददासेन कृतम्


Digitization, PDF Creation and Uploading by:
Hari Pārṣada Dāsa (HPD)
on 29-November-2016

# उपोद्घातः

—ः*ः—

[ प्रथमसंस्करणसम्पादकेन प्रभुपादेन श्रील-भक्तिसिद्धान्तसरस्वती-गोस्वामिठक्कुरेण लिखितः ]

इह खलु वेदशास्त्रं षड़ङ्गमितिव्यपदेशार्हं भवति, षड़ङ्गेषु व्युत्पत्तिसमागमात् पुरुषस्य वेदाधिकारोवेदपरिज्ञानाच्च सम्बन्धज्ञान-मुपजायते, वेदपुरुषस्याखण्डात्मनः पूर्णत्वेन प्रतीतावेव तादृग्दर्शनं सुदर्शनशब्दवाच्यतामधिगच्छति, द्रष्टृरात्ममनोरथानुगत्या खण्डज्ञानमेव यदा पूर्णत्वेन भ्रान्तिपद्धतिमारोहति तदैवादि–विद्वदनुभूतिक्रमेण तस्मिन् ज्ञेयवस्तुनि वृहत्त्वबोधाद् 'ब्रह्म'-शब्दस्य प्रयोगः परिकल्प्यते, वस्तुतस्तु प्रापञ्चिकं शकलज्ञानमनुत्वसम्वद्धमिति पूर्णपुरुष एव ब्रह्मशब्दा-भिधेयत्वमधिगन्तुमर्हति, तस्यैव परिपूर्णपुरुषस्य द्रष्टृत्वेन स्वस्याणुत्व-सन्धान-मुखेन तद्गतवृहत्त्वोपलब्धिर्जायते, तस्मिन्नेवाणुत्वे यदैवाज्ञान-प्रवेशाज्जीवानां प्रापञ्चिककर्तृत्वाभिमानरूप-प्रमादसम्प्राप्तिस्तदैव तद्-दर्शने हेयत्वपरिच्छिन्नत्व-भिन्नत्वादयो धर्मा अद्वयज्ञानानुशीलने व्याहति-मुपस्थापयन्ति। प्रापञ्चिकवैचित्र्ये परस्परं द्वन्द्वभावः प्रवर्त्तते प्रपञ्चा-तीते वैकुण्ठराज्ये तु तादृग्वरता न लब्धप्रसरा भवति, तत्र वैचित्र्य-बाहुल्येऽपि सच्चिदानन्दस्याद्वयज्ञानानुशीलने न काचिद् व्याहतिरुत्पद्यते, मायाजगति स्थूल-सूक्ष्मभेदाद्वस्तुप्रतीतिरद्वयज्ञान-श्रीकृष्णस्य पूर्णत्व-प्रतिषेधं परिकल्पयति, रूप-रस-गन्ध-स्पर्श-शब्दादीनामिन्द्रियजन्याः प्रतीतयः परस्परं वैषम्यसमुपस्थापनादद्वयज्ञान-श्रीकृष्णस्वरूपबोधे प्राति-कूल्यमेव सङ्घटयन्ति, वैकुण्ठप्रतीतौ तु वैकुण्ठवस्तु चिन्मयैरिन्द्रियै-श्चिन्मयरूप-रस-गन्ध-स्पर्श-शब्दास्वादनेन चिन्मयचिन्तनवशादज्ञान-स्पर्श-राहित्येनाखण्डकाल-निरवधिकानन्दसमागमाच्चिद्विलास-वैचित्र्य-लब्धप्रतिष्ठं भवति, तादृगद्वयज्ञानप्रतीतिरन्तरेण श्रवणेन्द्रियमि-तरेन्द्रियचतुष्टयेन न लभ्यते, यत्र श्रवणेन्द्रियमितरेन्द्रियचतुष्टयेनां-

सम्बद्धतया मनसि सङ्कल्प-विकल्पात्मिकां वृत्तिं समुपस्थापयति तत्रैव भूताकाशनिनादितः शब्दोऽयमद्वय-ज्ञानस्य व्याहता विविधाभावगतो भवति वैकुण्ठवस्तूद्देशके शब्दे प्रापञ्चिक-वस्त्वन्तर-ज्ञानोद्देशकत्व-भ्रान्त्या प्रतीयमानो भेदश्चाद्वयज्ञानस्य प्रतियोगितामावहति, वैकुण्ठाभिधानं हि वैकुण्ठवस्तुद्योतकं, यदैवेन्द्रियाणि प्रापञ्चिकभूताकाशमतिक्रम्य वैकुण्ठमभियान्ति तदा तादृगभिगमने कियानप्यज्ञानतमः-सम्पर्को जड़-कर्तृत्वाभिमान-सश्लेषलेशो वा न भवति, तस्मादेवाखण्डवेदपुरुषस्य वदनं सरस्वतीत्यभिधीयते, तत्र च चतुराननस्यानन-गर्भात्प्रपञ्चः समुत्पद्यते। वेदपुरुषस्य वदनाच्च शब्दशास्त्रं व्याकरणं, तस्य दृष्टे-रखण्डकालत्रयसत्त्वाच्च महाकालस्त्रिलोचनत्वेन परिकीर्त्यते, वेदपुरुषस्य श्रोत्राग्निरुक्तं कण्ठात् कल्पः पदयुगलाच्छन्दो घ्राणाच्च शिक्षाशास्त्र-मुपजायते, शब्दशास्त्रमेव तन्मुखस्वरूपं श्रवणप्रवेशार्हमिति तदवलम्बनेन चिदचिद्भाषाद्वयस्योत्पत्तिर्विचार्यते, चिन्मयजगति प्रविविक्षुः शब्द-ब्रह्मण आश्रयेण ससीमराज्याद्युत्क्रम्य परब्रह्मधामातिक्रमणेन परव्योमाधि-गन्तुं प्रभवति, तत्र वैकुण्ठसुरभिस्तद् घ्राणगोचरीभूतस्तमुन्मादयति, स च चिन्मय-रस-रसिकतया भावनाधर्म-सम्पर्कशून्यं परिपूर्णवैचित्र्य-मुपलब्धुमर्हति, तदानीं तन्मनसो रजस्तमोऽनुबन्ध-रहित-विशुद्धसत्त्वेन प्रतिभानाच्चिद्विलास-वैचित्र्ये प्रतिष्ठिततया श्रौतमार्ग एवेतरेन्द्रिय-जन्यज्ञानोद्भासितायाः कुदार्शनिकवृत्तेश्चिरं स्तम्भनाय भवति।

श्रीमान् गौरसुन्दरो जगत्यपरविद्यालोचनच्छद्मना शब्दशास्त्राध्यापक-त्वेनात्मनः प्राकट्यं प्रदर्शयन्नचिरमेव शब्देभ्यश्चिदिन्द्रियोद्भासित-विद्वद्रूढ़ि-वृत्तेराकर्षणलीलामभिनिनाय, ततश्चासौ हरिरिति यौगिक-शब्दवाच्यो भवति, तदानीं विद्वद्रूढ़ि-वृत्त्याकृष्टसम्प्रदायस्ततः शब्द-शास्त्रशिक्षापाटवमधिजगाम, तत्राचार्यवरः श्रीमज्जीवपादः पूर्णाधिकार-लाभेनास्माकं बद्धजीवानामज्ञरूढिवृत्तिमपनयति, श्रीहरिनामामृत-व्याकरणमेव तस्य विद्वद्रूढ़िवृत्तेः पाटवपरिज्ञानमस्यानुशीलनमुखेन वयं भगवन्नामनामिनोरद्वयज्ञानमधिगत्य जड़-संज्ञा-रूप-गुण-क्रियाभ्य आत्म-

मोचन प्रभविष्यामः क्रमशश्च वाच्य-वाचकयोः प्रापञ्चिकहेयतासी-मानमुल्लङ्घ्य वैकण्ठराज्याभिगमने परिबद्धसङ्कल्पा एव बद्धभावात् संस्कृताः संस्कृतसाहित्याधिकारं प्राप्स्यामस्तदैव च–'स्वयं ब्रह्मणि निक्षिप्तान् जातानेव हि मन्त्रतः। विनीतानथ पुत्रादीन् संस्कृत्य प्रतिबोधये'दिति पाञ्चरात्रिक-चिन्मयज्ञान-भागित्यमपि सम्यगधि-गमिष्यते। नामसेवायाः परिहारप्रसङ्गमात्रेणैव श्रौतमार्गः परिहृतः यात् ततश्च जीवानां परिरक्षणार्थं श्रीकृष्णद्वैपायनपादेन–'अर्च्ये विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमल-मथने पादतीर्थेऽम्बुबुद्धिः। श्रीविष्णोर्नाम्नि मन्त्रे सकलकलुषहे शब्द-सामान्यबुद्धिर्विष्णौ सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः' इति परिकीर्तितम्। श्रीहरिनामामृत-व्याकरणाध्ययनं हि मुक्तजीव-धर्मभूतम्, इतरवृत्तिप्रेरणया संसारवासनासमुदये वेदाङ्गान्यतमं व्याक-रणं हरिनामामृतत्वेनापरि ाय विषयविषकूप एव निपातिष्यामः, परन्तु परविद्यानुसन्धानाद् वैकण्ठानुभूतिरेवास्माकं मायामेघापवरण-मपनेष्यति। मायिकवस्तूनामचिदावृतमिति सञ्ज्ञा भवति, तया हि विनश्वरं जीवभोग्यमज्ञानाश्रितं दुःखार्णव-निमज्जनार्हं परिणाम्येव वस्तु समुद्दिश्येत, तादृगुद्देशश्च नामापराध एव यत्र च तादृगुद्देशस्य चिद्वैचित्र्यानुभूतेश्च सत्ताविरहात् केवला चिन्मात्रधारणैव प्रवर्तते तादृङ्नामोद्दिष्टं वस्तु चिज्जगतस्तटवर्तितया-नामाभाससंज्ञया परि-गीयमानं सदस्मान् जड़ाभिनिवेशतो विमुच्य तूर्णमेव चिदुद्दीपक-नामसान्निध्यं प्रापयतीति शम्॥

अत्रान्ते वक्तव्यमिदमस्य प्रकाशे राय-श्रीमन्नन्दलालविद्यासागर-काव्यतीर्थो वि, ए इत्युपाह्वेन श्रीमता गौरदासब्रह्मचारिणा च कृत-साहाय्यस्य मे तौ सतां धन्यवादार्हाविति प्रार्थये।



# द्वितीयसंस्करणप्रकाशकस्य निवेदनम्

"कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥" भा: ७।६।१
"नामसङ्कीर्तनं यस्य सर्वपापप्रणाशनम् ।
प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥" भा: १२।१३।२३
( श्रीमद्भागवतस्य सर्वशेषः श्लोकः )

"हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥"
( वृहन्नारदीय-वचनम् )

निखिल-श्रुतिमौलि-रत्नमालाद्युति-नीराजित-पाद-पङ्कजान्त ।
अयि मुक्तकुलैरुपास्यमानं परितस्त्वां हरिनाम संश्रयामि ॥"
—श्रील रूप-गोस्वामी ।

कुमारेभ्योऽपि व्याकरणवेदाङ्गानुशीलनव्यपदेशेन सर्वपापहर-सर्वतापहर-प्रेमामृतप्रद-नित्यकल्याणकर-हरिनाम-ग्रहण सौभाग्यप्रदानार्थ-निखिल-वेदवेदान्त-वेदाङ्ग-षड्दर्शनेतिहास-पुराणकाव्यालङ्कार-सङ्गीत-शास्त्रादि-पारावार-पारीणेन महामहोपाध्यायाध्यापकनिकरैः परमवृहत्तमसिद्ध-सङ्घैश्च निषेवितपदपङ्कजेन, वैष्णवसिद्धान्तराज्यरक्षणैकसेनापतिना श्रीमत्-सनातन-रूपानुगवरेण परमहंसकुल मुकुटमणिना श्रीगौड़ीय-वैष्णवाचार्यवर्येण श्रील-जीवगोस्वामिपादेन श्रीहरिनामामृतव्याकरणमिदं प्रणीतम् । चतुःचत्वारिंशद्वर्षप्रागस्माकं गुरुदेवेन श्रीचैतन्यमठ-श्रीगौड़ीय-मठानां प्रतिष्ठातृवरेण प्रभुपाद-श्रील भक्तिसिद्धान्त-सरस्वती-गोस्वामि-ठक्कुरेण सम्पादितमस्य प्रथमसंस्करणं श्रीचैतन्यमठतःप्रकाशितम् । तन्निःशेषे सुदीर्घकालं ग्रन्थराजस्याभावोऽतिशयमनुभूयते । अधुना श्रीचैतन्यमठाचार्यपादेन त्रिदण्डि-गोस्वामिना श्रीमता भक्तिविलास-तीर्थ-महाराजेन सम्पादितं द्वितीयसंस्करणं श्रीगौराविर्भाव-धाम-श्रीमायापुरस्थ-नदीयाप्रकाशप्रिण्टिं ओयार्कसाख्य-मुद्रायन्त्रे मुद्रितं, श्रीचैतन्यमठतः प्रकाशितञ्च । सर्व-भारते, तथा सर्वविश्वे प्रचारार्थं

संस्करणमिदं देवनागराक्षरैर्मुद्रितम् । पण्डितप्रवर—श्रीहरेकृष्णाचार्य-विरचिता श्रीगोपीचरणदासवेदान्तभूषणपरिशोधिता 'बालतोषणी'-नाम्नी टीका संयुक्ता । टीकायाः शेषांशो वेदान्तभूषणपादेन लिखितः । तस्य परिचयो निम्ने प्रदत्तः । प्रुफ—संशोधनसेवायां पण्डितः श्रीमान् चैतन्यानन्ददासब्रह्मचारि-व्याकरणतीर्थ-भक्तिशास्त्री तथा पण्डितः श्रीहरिचरण-ब्रह्मचारि-व्याकरणतीर्थ-भक्तिशास्त्री धन्यवादार्हौ भवतः । मुद्रणाक्षरयोजनादिदोषादत्र ये केचिंद् भ्रमा भवेयुस्ते सारग्राहिभिः सुधीभिः संशोध्य पठनीयाः ।

**टीका—परिशोधकस्य तथा टीकायाः शेषांश-लेखकस्य**
**श्रीमद्गोपीचरणदास-वेदान्तभूषणस्य स्वलिखितः परिचयः ।**

श्रीश्रीरामः । वृद्धपितामह-श्रीमद्वैकुण्ठचक्रवर्तिनः । पितामह-श्रीगोलोक-शर्मणः पाठकस्य च । मत्पितृ-ठक्कुर-गौरकिशोरचक्रवर्तिनः । श्रीगोपी-चरणदासवेदान्तभषणस्य च । भ्रातृ-गोविन्दचरणदासवाचस्पतेर्मम । वात्स्यगोत्र सीमलान् गाञि श्रीकाह्नु सन्ततेः । शाण्डिल्यासितप्रवर-सामकाठकशाखिनः । सर्वाणि वस्तुजातानि पुस्तकादीनि यान्युत । सनाब्दे शशियुग्माभ्यां सजुवाणाग्निसम्मिते । प्रथमे मासि वैशाखे दिवसे सोमनायके । यथानाम-गोत्रकेभ्यो ब्राह्मणेभ्यो ददान्यहम् । वृद्धमातामह-श्रीमन्मणिरामाधिकारिकः । मातामह-मणिरामाधिकारि-देवशर्मकः । मातामही च महिमप्रियेति प्रथिता तथा । माता श्यामप्रिया ज्ञेया बोधार्थं कथिता मया । मातुल-श्रीगोराचान्दाधिकारी गोत्रकाश्यपः । चाटुतिगाञिकः ख्यातो गोशब्दाख्यग्रामके पुरा । निवासः पैत्रिकोऽस्माकं वीरभूमीकसञ्ज्ञितः । पूर्वं परिचयं सर्वं भवद्भ्यो विनिवेदितम् ॥

श्रीहरिनामामृत-व्याकरणस्य

# विषय-सूची

# श्लोक-सूची

# धातुसूची

[ भ्वा–भ्वादिः ; अ–अदादिः ; ह्वा–ह्वादिः ; दि–दिवादि ; स्वा–स्वादिः ; तु–तुदादिः ; रु–रुधादिः ; त–तनादिः ; क्र्या–क्र्यादिः ; चु–चुरादि ; पर–परस्मैपदी ; आत्म- आत्मनेपदी ; उभय–उभयपदी ]

| धातवः | धात्वर्थाः | विवरणानि | अच्युतरूपाणि | सूत्राङ्काः |
|---|---|---|---|---|
| अङ्क | लक्षणे ( पदे च ) | चु, पर | अङ्कयति | ७९२ |
| अज | गतौ क्षेपणे च | भ्वा, पर | अजति | ४९९-५०८ |
| अट | गतौ | भ्वा, पर | अटति | ४७४-४७६ |
| अद | भक्षणे | अ, पर | अत्ति | ६४२-६४६ |
| अन | प्राणने | अ, पर | अनिति | ६८० |
| अन्चु | गतिपूजनयोः | भ्वा, पर | अञ्चति | ४९४ |
| अन्जु | ब्रक्षणादिषु | रु, पर | अनक्ति | ७६३ |
| अय | गतौ | भ्वा, आत्म | अयते, परा-अय् = पलायते ; प्र-अय् = प्लायते ; परि-अय् = पल्ययते । | ५९९-६०० |
| अर्थ | याच्ञायाम् | चु आत्म | अर्थयते | ७९२ |
| अशूङ् | व्याप्तौ | स्वा, आत्म | अश्नुते | ९४५ |
| अश् | भोजने | क्र्या पर | अश्नाति | ७८२ |
| असु | क्षेपणे | दि, पर | अस्यति | ७३६ |
| अस् | भुवि, सत्तायामित्यर्थे | अ, पर | अस्ति | ६६८-६७४ |
| आङ्-आसु | इच्छायाम् | अ, आत्म | आशास्ते | ६९२ |
| आछि | आयामे | भ्वा, पर | आञ्छति | ४९५ |
| आस | उपवेशने | अ, आत्म | आस्ते | ६९८ |
| इक् | स्मरणे | अ, पर | अधि–अध्येति | ६६१ |
| इङ् | अध्ययने | अ, आत्य | अधि-अधीते | ७०२ |

| | | | | |
|---|---|---|---|---|
| कुथि | हिंसा-संक्लेशयोः | भ्वा, पर | कुन्थति | ४५८-४५९ |
| कुष | निष्कष, निष्कर्षः– निष्काशनम् | क्र्या, पर | कुष्णाति | ७८३ |
| (डु) क्रिञ् | करणे | त, उभय | करोति, कुरुते | ७७१-७६ |
| कृती | छेदने | तु, पर | कृन्तति | ७४९ |
| कृपू | सामर्थ्ये | भ्वा, आत्म | कल्पते | ६१४-६१५ |
| कृवि | हिंसायाम् | भ्वा, पर | कृण्वति | ५४३ |
| कृवि | जिघांसायाम् | स्वा, पर | कृणोति | ७४४ |
| कृष | विलेखने आकर्षणे च, | भ्वा, पर | कर्षति | ५३५-५३९ |
| कॄ | विक्षेपे | तु, पर | किरति | ७४९-७५२ |
| कॄत | संशब्दने | चु, उभय | कीर्तयति, कीर्तयते | ७९०-७९१ |
| क्रमु | पादविक्षेपे | भ्वा, पर | क्रामति | ५२३-५२५ |
| क्रमु | पादविक्षेपे | दि, पर | क्राम्यति | ७३४ |
| (डु) क्रीञ् | द्रव्यविनिमये | क्र्या, उभय | क्रीणाति, क्रीणीते | ७७७-७७८ |
| क्लमु | ग्लानौ | भ्वा, पर | क्लामति | ५२१-५२२ |
| क्लमु | ग्लानौ | दि, पर | क्लाम्यति | ७३५ |
| क्षणु | हिंसायाम् | त, जभय | क्षणोति, क्षणुते | ७६९-७० |
| क्षि | क्षये | भ्वा, पर | क्षयति | ५१३ |
| क्षिणु | हिंसायाम् | त, उभय | क्षिणोति, क्षिणुते | ७६९-७७० |
| क्षुभ | सञ्चलने | क्र्या, पर | क्षुभ्नाति | ७८४ |
| खनु | अवदारणे | भ्वा, उभय | खनति, खनते | ६२१ |
| खव | भूति-प्रातुर्भावे | क्र्या, पर | खौनाति | ७८६ |
| ख्या | प्रकथने | अ, पर | ख्याति | ६६३ |
| गण | संख्याने | चु, उभय | गणयति, गणयते | ७९१ |

| | | | | |
|---|---|---|---|---|
| गद | व्यक्तायां वाचि | भ्वा, पर | गदति | ४७१ |
| गम्लृ | गतौ | भ्वा, पर | गच्छति | ५२६-५७३ |
| गाङ् | गतौ | भ्वा, आत्म | गाते | ६०३ |
| गुपू | रक्षणे | भ्वा, पर | गोपायति | ५१५ |
| गुप् | गोपन-कुत्सनयोः | भ्वा, आत्म | जुगुप्सते | ६०४ |
| गुफ् | ग्रन्थे | तु, पर | गुफति | ७५४ |
| गुहू | संवरणे | भ्वा, उभय | गूहति, गूहते | ६२३ |
| गॄ | निगरणे, निगरणम् गलाधःकरणम् | तु, पर | गिरति | ७५३ |
| गै | शब्दे | भ्वा, पर | गायति | ५४६ |
| ग्रन्थ | सन्दर्भे ( संक्लेशने इति दुर्ग | क्र्या, पर | ग्रथ्नाति | ७८२ |
| | उपादाने | क्र्या, उभय | गृह्णाति, गृह्णीते | ७७६ |
| ग्लै | हर्षक्षये | भ्वा, पर | ग्लायति | ५४४ |
| घ्रा | गन्धोपादाने | भ्वा, पर | जिघ्रति | ५५५ |
| चकासृ | दीप्तौ | अ, पर | चकास्ति | ६६० |
| (आ-) चक्षिङ् | व्यक्तायां वाचि | अ, आत्म | आचष्टे | ६६४ |
| चमु | अदने | भ्वा, पर | (आ)चामति | ५२१ |
| चिञ् | चयने | स्वा, उभय | चिनोति, चिनुते | ७४२ |
| चिती | संज्ञाने संज्ञानम्—चैतन्यम् | भ्वा, पर, | चेतति | ४४४ |
| चुर | स्तेये | चु, उभय | चोरयति, चोरयते | ७८८ |
| चुलुम्प | लोपे | भ्वा, पर | चुलुम्पति | ५१८ |
| च्युतिर् | आसेचने | भ्वा, पर | च्योतति | ४५५ |
| छो | छेदने | दि, पर | छ्यति | ७२८ |
| जक्ष | भक्ष-हसनयोः | अ, पर | जक्षिति | ६८१ |
| जनी | प्रादुर्भावे | दि, आत्म | जायते | ७४१ |

| | | | | |
|---|---|---|---|---|
| जभ ( जभी ) | गात्रविनामे<br>गात्रविनामः—जृम्भणम् | भ्वा, आत्म | जम्भते | ५८७ |
| जागृ | निद्राक्षये | अ, पर | जागर्ति | ६८३ |
| जि | जये | भ्वा, पर | जयति | ५३३ |
| जॄष | वयहानौ | दि, पर | जीर्यति | ७२७ |
| ज्या | वयहानौ | क्र्या, पर | जिनाति | ७८२ |
| णद | अव्यक्तशब्दे | भ्वा, पर | नदति | ४८० |
| णय | गतौ | भ्वा, पर | नयति | ५२९ |
| णह | बन्धने | दि, उभय | नह्यति, नह्यते | ७४१ |
| णिजिर | शौचे (पोषणे च) | ह्वा, उभय | नेनेक्ति, नेनिक्ते | ७१६ |
| णू | स्तवने | तु, पर | नुवति | ७५७ |
| तनु | विस्तारे | त, उभय | तनोति, तनुते | ७६५ |
| तप | सन्तापे | भ्वा, पर | तपति | ५१९ |
| तिज | निशाने, क्षमायाञ्च | भ्वा, आत्म | तेजते, तितिक्षते | ५८७ |
| तुद | व्यथने | तु, उभय | तुदति, तुदते | ७४६ |
| तृणु | अदने | त, उभय | तर्णोति, तृणोति ;<br>तर्णुते, तृणुते | ७७० |
| तृण्हू | हिंसायाम् | तु, पर | तृहति | ५४३ |
| तृपु | तर्पणे | क्र्या, पर | तृप्नोति | ७८४ |
| तृप् | प्रीणने | दि, पर | तृप्यति | ७३१ |
| तृह् | हिंसायाम् | रु, पर | तृणेढ़ि | ७६१ |
| तॄ | प्लवन-तरणयोः | भ्वा, पर | तरति | ५७७ |
| त्रसी | उद्वेगे | दि, पर | त्रस्यति | ७२७ |
| त्सर | छद्मगतौ | भ्वा, पर | त्सरति | ७५४ |
| दन्भु | दम्भे ; दम्भः—<br>परवञ्चना | स्वा, पर | दभ्नोति | ७४४ |
| दन्श | दंशने | भ्वा, पर | दशति | ५८१ |

| | | | | |
|---|---|---|---|---|
| धूप | सन्तापे | भ्वा, पर | धूपायति | ५१८ |
| धेट् | पाने | भ्वा, पर | धयति | ५५१ |
| ध्मा | शब्दाग्निसंयोगयोः | भ्वा, पर | धमति | ५५५ |
| नश ( णश ) | अदर्शने | दि, पर | नश्यति | ७३२ |
| नृती | गात्रविक्षेपे | दि, पर | नृत्यति | ७२७ |
| पण | व्यवहारे स्तुतौ च | भ्वा, आत्म | पणते | ५८८ |
| पत्लृ | गतौ | भ्वा, पर | पतति | ६१८ |
| पद | गतौ | दि, आत्म | पद्यते | ७४१ |
| पन | व्यवहारे स्तुतौ च | भ्वा, पर | पनायति | ५८८ |
| पा | पाने | भ्वा, पर | पिवति | ५५५ |
| पुष | पुष्टौ | दि, पर | पुष्यति | ७२८ |
| पूञ् | पवने | क्र्या, उभय | पुनाति, पुनीते | ७७७ |
| पॄ | पालन-पूरणयोः | ह्वा, पर | पिपर्ति | ७१२ |
| ( ओ ) प्यायी | वृद्धौ | भ्वा, आत्म | प्यायते | ६०१ |
| प्रच्छ | ज्ञीप्सायाम् | तु, पर | पृच्छति | ७५४ |
| प्रीञ् | तर्पणे ( कान्तौ च ) | क्र्या, उभय | प्रीणाति, प्रीणीते | ७७८ |
| प्सा | भक्षणे | अ, पर | प्साति | ६४६ |
| फण | गतौ | भ्वा, पर | फणति | ६२० |
| ( ञि ) फला | विशरणे ; विशरणम् —विदीर्णता | भ्वा, पर | फलति | ५३० |
| बध | बन्धने, निन्दायाञ्च | भ्वा, आत्म | बधते, वीभत्सते | ६०५ |
| वुध | अवगमने | दि, आत्म | वुध्यते | ७४१ |
| व्रूञ् | व्यक्तायां वाचि | अ, उभय | व्रवीति, व्रूते | ७०६ |
| भज | सेवायाम् | भ्वा, उभय | भजति, भजते | ६२५ |
| भन्जो | आमर्दने | रु, पर | भनक्ति | ७६४ |
| ( ञि ) भी | भये | ह्वा, पर | विभेति | ७११ |

| | | | | |
|---|---|---|---|---|
| यज् | देवपूजा-सङ्गतिकरण-दानेषु | भ्वा, उभय | यजति, यजते | ६२६ |
| यमु | उपरमे | भ्वा, पर | यच्छति | ५२६ |
| यसु | प्रयत्ने | दि, पर | यस्यति | ७३७ |
| या | प्रापणे | अ, पर | याति | ६६३ |
| यु | मिश्रणामिश्रणयोः | अ, पर | यौति | ६५६ |
| युज् | संयमने | चु, उभय | योजयति, योजयते | ७६३ |
| रद् | विलेखने | भ्वा, पर | रदति | ४७७ |
| रध् | हिंसायाम् | दि, पर | रध्यति | ७३० |
| रन्ज् | रागे | भ्वा, पर | रजति, रजते | ६२५ |
| रभ् | राभस्ये, कौतुके इत्यर्थः | भ्वा, आत्म | रभते; आङ्-पूर्वस्त्वारम्भे—आरभते | २०६ |
| रहि | गतौ | भ्वा, पर | रंहति | ५४३ |
| रह | त्यागे | भ्वा, पर | रहति | ५४३ |
| राजृ | दीप्तौ | भ्वा, उभय | राजति, राजते | ६२० |
| राध | संसिद्धौ | दि, पर | राध्यति | ७२८ |
| रिष | हिंसायाम् | भ्वा, पर | रेषति | ५३९ |
| रु | शब्दे | अ, पर | रौति | ७०५ |
| रुदिर् | अश्रुविमोचने | अ, पर | रोदिति | ६७७ |
| रुधिर | आवरणे | रु, उभय | रुणद्धि, रुन्धे | ७६० |
| रुष | हिंसायाम् | भ्वा, पर | रोषति | ५३९ |
| लगि | गतौ | भ्वा, पर | लगति | ४५९ |
| लगे | सङ्गे | भ्वा, पर | लगति | ५१४ |
| (डु) लभस् | प्राप्तौ | भ्वा, आत्म | लभते | ६०७ |
| लिख | लिखने | तु, पर | लिखति | ७५७ |
| लिप | उपदेहे | तु, उभय | लिम्पति, लिम्पते | ७४९ |

| | | | | |
|---|---|---|---|---|
| व्यथ् | दुःखे, भये, चलने च | भ्वा, आत्म | व्यथते | ६१६ |
| व्यध | ताड़ने | दि, पर | बिध्यति | ७२८ |
| व्येञ् | संवरणे | भ्वा, उभय | व्ययति, व्ययते | ६३२ |
| व्रज | गतौ | भ्वा, पर | व्रजति | ४६८ |
| (ओ) व्रस्चू | छेदने | तु, पर | वृश्चति | ७४६ |
| शद्लृ | शातने | भ्वा, पर | शीयते | ६२० |
| शमु | उपशमे | दि, पर | शाम्यति | ७३५ |
| शासु | अनुशिष्टौ; अनुशिष्टिः उपदेशो दण्डनञ्च। | अ, पर | शास्ति | ६६२ |
| शिष्लृ | विशेषणे | रु, पर | शिनष्टि | ७६० |
| शीङ् | स्वप्ने | अ, आत्म | शेते | ७०० |
| शृ | हिंसायाम् | क्र्या, पर | शृणाति | ७८२ |
| शो | तनूकरणे | दि, पर | श्यति | ७२८ |
| श्चुतिर | क्षरणे | भ्वा, पर | श्च्योतति | ४५४ |
| श्रिञ् | सेवायाम् | भ्वा, उभय | श्रयति, श्रयते | ६२५ |
| श्रु | श्रवणे | भ्वा, पर | शृणोति | ५६७ |
| श्लिष | आलिङ्गने | दि, पर | श्लिष्यति | ७२६ |
| श्वस् | प्राणने | अ, पर | श्वसिति | ६८० |
| (टु ओ) श्वि | गति-वृद्ध्योः | भ्वा, पर | श्वयति | ६३७ |
| षणु | दाने | त, उभय | सनोति, सनुते | ७६८ |
| षद्लृ | विशरण-गत्यवसादनेषु | भ्वा, पर | सीदति | ६१६ |
| षन्ज् | सङ्गे | भ्वा, पर | सजति | ५८० |
| षस्ज् | गतौ | भ्वा, पर | सज्जति | ४६६ |
| षह | मर्षणे | भ्वा, आत्म | सहते | ६१६ |
| षिच् (सिच्) | क्षरणे (क्षरणमिह सेचनम्) | तु, उभय | सिञ्चति, सिञ्चते | ७४६ |
| षिधु | गत्याम् | भ्वा, पर | सेधति | ४६० |

| | | | | |
|---|---|---|---|---|
| षिधू | शास्त्रे, माङ्गल्ये च | भ्वा, पर | सेधति | ४६६ |
| षिवु | तन्तुसन्ताने | दि, पर | सीव्यति | ७२२ |
| षु | प्रसवे | भ्वा, पर | सवति | ५७२ |
| षुञ् | अभिसवे | स्वा, उभय | सुनोति, सुनुते | ७४२ |
| षू | प्रेरणे | तु, पर | सुवति | ७४६ |
| षूङ् | प्राणिगर्भविमोचने | अ, आत्म | सूते | ६९९ |
| षूङ् | प्राणिप्रसवे | दि, आत्म | सूयते | ७३८ |
| ष्टुञ् ( स्तु ) | स्तुतौ | अ, उभय | स्तौति, स्तुते | ७०५ |
| ष्ठा ( स्था ) | गतिनिवृत्तौ | भ्वा, पर | तिष्ठति | ५५५ |
| ष्ठिवु | निरसने | भ्वा, पर | ष्ठीवति | ५३१ |
| ( ञि ) ष्वप् | शये | अ, पर | स्वपिति | ६७९ |
| सृ | गतौ | भ्वा, पर | धावति | ५५५, ५६२ |
| | अजवार्थे तु– | | सरति | |
| सृज | विसर्गे ; विसर्गः- सृष्टिस्त्यागो वा । | तु, पर | सृजति | ७५४ |
| स्कन्दिर् | गतिशोषणयोः | भ्वा, पर | स्कन्दति | ५७६ |
| स्कुञ् | आप्लवने | क्र्या, उभय | स्कुनाति, स्कुनीते | ५७८ |
| स्तृञ् | आच्छादने | स्वा, उभय | स्तृणोति स्तृणुते | ७४२ |
| स्पृश | संस्पर्शने | तु, पर | स्पृशति | ७५४ |
| स्पृह | ईप्सायाम् | चु, पर | स्पृहयति, स्पृहयते | ७९१ |
| स्फुटिर् | विशरणे, विशरणम्- विदारणम् ; विसरणे इति पाठे विकाशः । | भ्वा, पर | स्फोटति | ४५२ |

| | | | | |
|---|---|---|---|---|
| स्फुर | स्फुरणे | तु, पर | स्फुरति | ७५७ |
| स्मृ | चिन्तायाम् | भ्वा, पर | स्मरति | ५५८ |
| स्रु | गतौ | भ्वा, पर | स्रवति | ५७३ |
| स्वृ | शब्दोपतापयोः | भ्वा, पर | स्वरति | ५६१ |
| हन | हिंसा-गत्योः | अ, पर | हन्ति | ६४७ |
| हय | गतौ | भ्वा, पर | हयति | ५२६ |
| (ओ) हाक् | त्यागे | ह्वा, पर | जहाति | ७१४ |
| (ओ) हाङ् | गतौ | ह्वा, आत्म | जिहीते | ७२५ |
| हि | गतौ, वृद्धौ च | स्वा, पर | हिनोति | ७४३ |
| हिसि | हिंसायाम् | रु, पर | हिनस्ति | ७६२ |
| हु | बह्नौ दाने | ह्वा, पर | जुहोति | ७०६ |
| हृञ् | हरणे | भ्वा, उभय | हरति, हरते | ६२५ |
| ह्री | लज्जायाम् | ह्वा, पर | जिह्रेति | ७११ |
| ह्वेञ् | स्पर्द्धायाम् | भ्वा, उभय | ह्वयति, ह्वयते | ६३३ |
| | [ शब्दे च ] | [ अक—शब्दे ] | | |



# कारिका-सूची

# परिभाषा-सूची

[ दक्षिणपार्श्वस्थसंख्या प्रकरण-सूत्राङ्कज्ञापिका ; पा सु—पाणिनीय-सूत्रम् ; पा--पाणिनीय-परिभाषा-पाठः ]

## न्याय-सूची

श्रीश्रीगुरु-गौरांगौ जयतः ।

# श्रीहरिनामामृत-व्याकरणम्

## ग्रन्थारम्भः

श्रीश्रीराधाकृष्णाभ्यां नमः

कृष्णमुपासितुमस्य स्रजमिब नामावलिं तनबै ।
त्वरितं वितरेदेषा, तत्साहित्यादिजामोदम् ॥ [१]

---

श्रीश्रीराधाकृष्णाभ्यां नमः ।

बन्दे तं कृष्णचैतन्यं तस्य भक्तगणं तथा ।
यस्य प्रसादादज्ञोऽपि सद्यः सर्वज्ञतां ब्रजेत् ॥
गदाधरं रूपसनातनञ्च श्रीभट्टयुग्मं रघुनाथदासम् ।
श्रीजीबदेवं परमं कृपालुमानन्दसिन्धुं शिरसा नमामि ॥
हरिनामामृतं बन्दे विष्णोः शब्दानुशासनम् ।
निखिलाघहरं कृष्णलीलानामयुतं शुभम् ॥
अहञ्च भाष्यकारश्च कुशाग्रीयधियावुभौ ।
नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः ॥

इति पाणिनिमुनिना यदुक्तं, तथापि––

श्रीलश्रीजीवगोस्वामिचरणाब्जाग्रमाश्रितः ।
बालोप्यहं तितीर्षामि हरिनामामृतार्णबम् ॥

ततः परम-कृपासरित्पति-परमेश्वरेण निजगुण-नाम-गण-कीर्तन-गरिम-प्रेम-प्रकाशातिस्निग्धीकृत पाषण्ड-दानवघटाघटित-दुर्घटोद्दाम-पावक-ज्वाला-ज्वलित ब्रह्माण्डभाण्डेनैव विखर्वीकृत-विशंकटतर-दोर्दण्ड-गर्व-पर्वतनिभ-

गर्विततराधिकार-कलिप्रचण्डप्रतापेन श्रीलश्रीकृष्णचैतन्यचन्द्रेण भगवता प्रथित-निजप्रणीत-नीति-व्रजविलासलसत्सान्द्रानन्दरस-शास्त्र-कासार-परम-हंसकः श्रीप्रणवांकुर-विद्युद्दामलसत्पुराणच्छदनानन्त-शाखा-कलित-श्रीभगवन्मुखोद्गत-परम-परमेष्ठि-प्रणीत सूत्र-श्रुति-रसालसार-श्रीवृन्दावन-भाव-परिचित-सरस-मुकुलास्वादक-कोविदकोकिलः परम-कृपालुमौलिर्महामहोपाध्यायावलिविराजित-चरणपंकजः श्रीमान् शुष्कालाप-कलित-कलापावलि-व्याकरणानुशीलन-दुस्थमतीनामनेकप्रकार-प्रकरण-निर्णयचिन्तितानामिदानीन्तनजनानां धर्मार्थकाममोक्षार्थं सदा हरिरस-लुब्धमानसानामनधीत-व्याकरणानामधीतेतर-व्याकरणानांच वैष्णवानां हिताभिलाष-परवशतया श्रीनामग्रहणपूर्वकविशिष्टव्युत्पत्तिवांछया श्रीकृष्णदेवप्रसादमधिगम्य श्रीमत् श्रीलसनातनगोस्वामिनां सूत्रानुसारेण श्रीजीवगोस्वामिनामा ग्रन्थकारः परम-मंगल-रूप-मनोहर-मधुर-हरिनामावलिभिः संकेतीकुर्वन् श्रीहरि-नामामृताख्य-वैष्णव-व्याकरणमारभमाणः स्वप्रयोजनोद्घाटनपूर्वकवस्तु-निर्देशाशीर्वादरूप-मंगलमाचरति एवं सर्व एव ग्रन्थोऽयं मंगलरूप इति च विज्ञापयति ।

कृष्णमिति । कृष्णं स्वयं भगवन्तम् उपासितुम् अनुशीलयितुम् अस्य श्रीकृष्णस्य नामावलिं नामश्रेणीं सर्वेश्वर-दशावतारादिभिरहं तनवै विस्तारयाणि वस्तुनिर्देशोऽयम् ।

कृष्णस्य स्वयंभगवत्त्वे प्रमाणं, श्रीभागवते यथा—'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इति 'संकल्पविशेषार्थे' इत्यादिना विधातृ प्रत्ययः कृष्णोपासनमहं करवाणीतिवत् । कामिव स्रजं मालामिव । अन्यो यथा—'कृष्णमुपासितुं स्रजं तनुते' तद्वदित्यर्थः । माल्यं मालास्रजावित्यमरः । 'बीथ्यालिरावलिः पंक्तिः श्रेणी'ति च अमरः । 'प्रयोजनमनुद्दिश्य न मन्दोहि प्रवर्तते' इति । आशीर्वादमाह । (आशीर्नमस्क्रिया वस्तु-निर्देशोवाऽपि तन्मुखम् इति मंगलाचरणम्) एषा मया तन्यमाना नामावलिस्त्वरितं शीघ्रं यथास्यात्तथा तस्य श्रीकृष्णस्य साहित्यादि मनोहर-मधुर-सुन्दर-भक्तिपरमतात्पर्यलीलामय श्रीमद्भागवतशास्त्रादि साहित्यादि-

आहृत-जल्पित-जटितं, दृष्ट्वा शब्दानुशासन-स्तोमम् ।
हरिनामावलि-वलितं, व्याकरणं वैष्णवार्थमाचिन्मः ॥ [२]

पदेन लक्षणया तदनुशीलनम् । अत्रानुशीलनं धात्वर्थमात्रमुच्यते । तस्माज्जातमामोदं तदनुशीलनपरमानन्दसुखविशेषं वितरेत् दद्यात् स्वानुशीलकेभ्य इति शेषः । व्याकरणशास्त्रपरिज्ञानजन्यज्ञानविशेषं जनयित्वा भागवतग्रन्थानुशीलनेऽधिकारं ददात्विति निर्गलितार्थः । पक्षे परमानन्दप्रदस्वरूपत्वेन तमेव नन्दीश्वरेश्वरात्मजं निजेष्टदेवं कृष्णचैतन्यम् उपासितुम् इत्यादि पूर्ववत् साहित्यं शास्त्रविशेषम् । अत्र च हितेन प्राणिनामविद्यामोचनरूपोपकारेण सह वर्तमाना सहिता भगवद्भक्तिस्तामर्हति इति । गर्गादेर्नृसिंह-य इत्यनेन साहित्यं श्रीभागवतं भगवत्स्वरूपत्वात् । यद्वा तत्सहितस्य भगवत्संगस्य भावस्तत्साहित्यम् । आदिशब्देन तत्सेवादि । यद्वा तत्सहितमर्हतीति तत्साहित्यः श्रीवासनामा तद्भक्तः स आदिर्येषां ते श्रीस्वरूपादय स्तेभ्योजातम् आमोदं श्रीभागवतशास्त्रादि-परमार्थानुशीलनरूपं सुखविशेषम् । केचित्तु सहितस्य भावः साहित्यं शास्त्रमात्रं तच्चापि तच्छब्दोपादानात् श्रीभागवतम् । स्रजमिवेत्यनेन यथा परमभागवताः श्रीतुलसीमालिकामनिशं निजकण्ठे धारयन्ति तथा एतदनुशीलका वैष्णवा एतद् व्याकरणरूपां हरिनामावलिम् अभ्यासरूपेण कण्ठे धारयन्तु इति आक्षिप्यते । कृष्णमुपासितुमिति तुमन्तप्रयोगे नामावलिविस्तारस्य श्रीकृष्णानुशीलनमेव प्रयोजनम् । तदनुशीलनपूर्वकमनायासेन लभ्यमपि व्याकरण-परिज्ञानजन्यज्ञानञ्च, सम्वन्धस्य द्विनिष्ठतया नामनामिनोरभेदाच्च श्रीकृष्ण एव सम्वन्धः । श्रीभागवतार्थानुमोदनजातानन्दरूपमेवाभिधेयम् । एते त्रयोऽस्य ग्रन्थस्य व्यवहाराः । तेन श्रीकृष्णनामग्रहणपूर्वक-व्याकरण-परिज्ञानजन्य-ज्ञानविशेषं जनयित्वा श्रीमद्भागवतग्रन्थानुशीलनेऽधिकारं दद्यादिति निर्गलितार्थः ॥ [१]

ननु व्युत्पत्तिरेव साध्या चेत्तर्हि अन्यानि वहूनि व्याकरणानि सन्ति. तैरेव सा भविष्यति किमेतद्वहूद्यमेनेति चेत्तत्राह आहृतेति । शब्दानु-

व्याकरणे मरुनीवृति, जीवनलुब्धाः सदाघ संविघ्नाः।
हरिनामामृतमेतत्, पिवन्तु शतधावगाहन्ताम् ॥ [३]

शासनस्तोमम् अन्यव्याकरणसमूहम् आहत-जल्पित-जटितं दृष्ट्वा वयं हरिनामावलिवलितं व्याकरणं वैष्णवार्थं वैष्णवानामनुशीलनार्थम् आचिन्मः कुर्म इत्यर्थः। शब्दा अनुशिष्यन्ते व्युत्पाद्यन्ते येन तत् शब्दानुशासनं कलापादि-व्याकरणं तस्य स्तोमं समूहम्। यद्वा शब्दा विष्णुसम्वन्ध-वर्जित-वर्णात्मिका अनुशिष्यन्ते व्युत्पाद्यन्ते यैस्तानि शब्दमात्रसाध्यसूत्राणि स्तेषां स्तोमः समूहो यत्र तत् कलापादिकं किंविशिष्टं तत् आहतं निरर्थकं शुभादृष्टजनकताशून्य-जल्पितमुच्चारणं तेन जटितं युक्तम्। 'संघात-प्रकरौघवारनिकरव्यूहाः समूहश्च यः सन्दोहः समुदायराशि विशरव्राताः कलापोव्रजः। कूटं मण्डलचक्रवालपटल स्तोमागणः पेटकं बृन्दं चक्र-कदम्वकं समुदयः पुंजोत्करौ संहतिः' इति हैमः। आहतन्तु मृषार्थ-कमित्यमरः। व्याक्रियन्ते व्युत्पाद्यन्तेऽर्थपर्यवसानाः क्रियन्ते शब्दा अनेनात्र वा टनः करणाधिकणयोरित्यनेन सिद्धं व्याकरणं शब्दानुशासनं शास्त्रं कथं भूतं तत्। हरेः कृष्णस्य नामावलिभिः सर्वेश्वर-दशावतारादिभिः वलितं युक्तम्। 'राजीर्लेखा ततिः वीथीमालाल्यावलि पंक्तयः धोरणि श्रेणी'ति हैमः। वैष्णवार्थमिति ग्रन्थकरणप्रयोजनं निर्दिष्टम्। वैष्णवानां कृष्णानुशीलनेन कालक्षेपणमुचितं तत्तु अन्यव्याकरणानुशीलनेन न भवतीति ममायमुद्यम इति भावः। तेनात्राध्यापनाध्ययनाभ्यां गुरुत्वेऽपि श्रीवैष्णवा एवाधिकारिणः। नत्वन्ये षाड्दर्शनीया अपि देवतान्तरोपासका विष्णु-दीक्षारहितत्वेन हरिवहिर्मुखत्वात् ॥ [२]

तस्मादधीतेतरव्याकरणैरपि वैष्णवैस्तत्र तत्र व्याकरणे स्वाग्रहं परित्यज्य एतद् व्याकरणमेवानुशीलनीयमित्याह व्याकरणे इति,इतरव्याकरण-रूपे किंविशिष्टे मरूनीबृति निर्जलप्रदेशे ये सदाघसंबिघ्नाः सतताहत-जल्पितदुःखोद्विग्ना जीवनलुब्धा जललुब्धाश्च ते एतत् श्रीहरिनामरूपममृतं पियूषं पिवन्तु, परमादरेणानुशीलयन्तु, एतस्मिन् शतधा शतप्रकारम्

सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा।
वैकुण्ठनाम-ग्रहणमशेषाघहरं विदुः ॥ [४] (श्रीभाः ६।२।१४) इति।

---

अवगाहन्तां सदोहापोहादिना अत्यासक्ता भवन्तु च। 'समानौ मरुधन्वानौ' इति, 'नीवृज्जनपदोदेशः' इति चामरः। ये तु मरुदेशजन्मानः सदाघ-संविघ्ना दुःखं तु तत्तद्देशवासजन्यं प्राक्तनमेव मन्यन्ते तेऽपि कथंचिज्जीवन-लुब्धा भवन्ति, तदा एतत् परमकारुणिकमौलिनोद्दिष्टममृतजलं परमादरेण तृष्णानिरासार्थं पिवन्तु, प्राक्तनतापखण्डनाय एतस्मिन्नवगाहन्तामिति च भावः। तेन येतु त्रितापोपशमहेतु जनम-मरण-भ्रान्तबीजोत्पाटनोद्धुर-मेतदेव भगवत्स्वरूप-व्याकरणं प्रोह्य मिथ्याजल्पितयुक्तमन्यदेव व्याकरण-मनुशीलयन्ति, तेषां हा किमधिकं वक्तव्यमिति। हरिनामामृतमिति भंग्या ग्रन्थनामोऽपि निर्दिष्टं हरिनामरूपममृतं यत्र तत्—'पिवन्तु रसिकाः सर्वे कृष्णाख्यं परमामृतम्' इति पाद्मवचनात्। यद्वा हरिनामभिस्तत्-कीर्तनादिभिरमृतं मुक्तिरविद्यामोचनं यस्मात्तत् ।। [३]

ननु व्याकरण-परिज्ञानसाध्ये श्रीहरिनामसंकेतादिभिर्विघ्नधंसपूर्वक-परमानन्दहितं भवेदित्यत्र किं प्रमाणमित्यत्राह श्रीभागवतपद्यं 'सांकेत्यम्' इति। विशदान्वयोऽत्र सांकेत्यं—स्त्री-पुत्रादौ संकेतितं, यथा—हे स्त्रि विष्णुप्रिये! हे पुत्र नारायण! इति। पारिहास्यं—परिहासेन कृतं, यथा—पश्वाद्युपचारेण श्यालकादौ त्वं हरिः त्वं हरिरिति। स्तोभं—गीतालाप-पुरणार्थं कृतम्। हेलनं—सावज्ञं यथा किं विष्णुनेति। वैकुण्ठनामग्रहणं—विकुण्ठजातस्य श्रीकृष्णस्य नामोच्चारणम् अशेषाघहरं निखिलपापनाशकं विदुर्जानन्ति मुनय इति शेषः ।। [४]



[प्रथमम्]

# संज्ञा-सन्धि-प्रकरणम्

## संज्ञा-प्रकरणम्

१। नारायणादुद्भूतोऽयं वर्णक्रमः।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः। क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म। य र ल व श ष स ह क्ष। एते 'वर्णाः', 'अक्षराणि', 'अलः' च।

---

अथ श्रीगंगास्रोतवत् साध्यानुक्रममवलम्ब्य साधनानुक्रममनतिशीघ्रज्ञेयत्वेनानंगीकृत्य च संस्कृत-प्राकृत-पैशाच्यादि-षट्पंचाशद्भाषासु संस्कृतभाषायाः प्रधानत्वात् तदारभमाणोऽयं गोस्वामिपादः सन्ध्यादि-सप्तपादस्वरूपं ग्रन्थमाचष्टे। तत्रादौ सन्धिकार्यस्य सर्वप्रकरणव्यापित्वेन तत् प्रथमपरिज्ञानाय 'संज्ञा-सन्धिप्रकरणम्' प्रथमम्। तत्र नारायणादित्यादौ पंचम्यादिमात्रज्ञानविषयीभूतत्वात् द्वितीयं 'सुवन्तम्'। तत्र पदलक्षणे तत्-साधनविष्णुभक्तिलक्षणे च धातु-तिवादि-विशेषापेक्षया तृतीयम् 'आख्यातम्', तदुभयसम्वन्धवैशिष्टत्वेन विणुभक्त्यर्थजिज्ञासया चतुर्थं 'कारकम्'। तत्र कर्तृ-कर्मणोः षष्ठीत्यत्रोट्टंकितेन तद्विशेषसाध्यत्वात् 'कृदन्तम्' पंचमम्। तत्र तत्रैवाध्यापक-मुखोद्गतत्वेन कृत्प्रकरणे तत् सूत्रकथनाच्च 'समासः' षष्ठः। तत्रैवोट्टंकितत्वेन विष्णूधिदैवतो वैष्णव इत्यनुसन्धानाच्च सप्तमः 'तद्धितः'। एवमेवमनेककारणमनुक्रमस्य तत्तत्प्रकरणे विवेचनीयम्। तावत् शास्त्राणां शब्दयोनित्वेन शब्दानां वर्णमूलत्वात् प्रथमतो वर्णक्रमस्य उत्पत्तिमाह—

१। नारायणादिति। अयम् अरामादि हरामान्तो वर्णक्रमो नारायणात् प्रपंचाप्रपंच-सर्वकारणभूतत्वेऽपि सर्वाम्नाय तत्कारणवक्तुरुद्भूत उत्पन्न इत्यन्वयः। नारायणादिति जनने प्रकृतित्यनेनापादाने पंचमी। नारीणां नराणां वा वृन्दं नारं जलं वा तदयनमाश्रयो यस्य तस्मात्। गोपरामादिषु विहारित्वेन सर्वान्तर्यामित्वेन कारणार्णव-गर्भोद-क्षीरोदशायित्वेन च यो विराजमानः श्रीकृष्णस्तस्मादित्यर्थः। उद्भूत इति—उत्पूर्वात् भूसत्तायां

एषामुद्भवस्थानानि—अ-आ-कवर्ग-ह-विसर्गाणां कण्ठः; इ-ई-च-वर्ग-य-शानां तालु ; उ-ऊ-पवर्गाणामोष्ठः; ऋ-ॠ-टवर्गरषाणां मूर्द्धा ; ऌ-ॡ-तवर्ग-ल-सानां दन्ताः ; एदैतोः कण्ठतालू ; ओदौतोः कण्ठौष्ठम् ; वकारस्य दन्तौष्ठम् ; अनुस्वारस्य शिरोनासिका वा इत्यादीनि ॥१॥

---

भूधातोः गत्यर्थाकर्मकेत्यादिना कर्तरि भूतकाले क्तः। अत्राख्यातवन्मुख्यत्वेनाकांक्षा-पूरकत्वान्न क्रियान्तरापेक्षा। अयमिति 'इदमोऽयं सौ' इत्यनेन वर्णक्रमविनिर्देशे इदमोरूपम्। वर्णक्रम इति—वर्णश्चासौ क्रमश्चेति क्रमस्य विशिष्टतानुत्पत्तेः वर्णेभ्यो वर्णानां वर्णेषु वा क्रम इति जन्य सम्बन्धविशेषस्वरूपस्य लभ्यत्वेनैव वर्णानां क्रियायं व्यावृत्तिवारणाय च वर्णैर्युक्तः क्रम इति मध्यपदलोपी तृतीयाकृष्णपुरुषः सभ्यः। तुलस्युदकम् अनन्ताय दातव्यमितिवत् वर्णानि उद्भूतानि तत्क्रमश्च उद्भूत इत्यर्थः। यदा तु वर्णैः सहितः क्रम इति तदगम्ये सहशब्दे विष्णुभक्त्यर्थः-गुप्तत्वात् तत् समस्त एव न सार्वत्रिको यत्र यत्र समासेन विष्णुभक्त्यर्थगुप्तः स्यात् नातिव्यक्तश्च स्यात्तत्र तत्र न समास इष्ट इति वक्ष्यमाणत्वात्। वर्णो-द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे इति नानार्थवर्गः। क्रमः परिपाटिः। तेन भगवतः श्रीनारायणस्य तदितरेषांच मुखोद्गतत्वेन कण्ठादि-अभिहितारामादीनामुच्चारणभेदसौष्ठवं दर्शितम्। अन्यथा वर्ण इत्येवकृते अत्यनुक्रमत्वेनैव यथेष्टोच्चारणम्। नारायणादित्यनेन वर्णानां नित्यत्वं तदंशभूतत्वंच दर्शितम्। अयमित्यनेन—'मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह। चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथक् ॥' इति श्रीभागवतोक्तत्वात् वर्णो द्विजादावित्यादि शासनाच्च कथं विप्रादिक्रमो नांच्यते इति पूर्वपक्षोऽपि निराकृतः। यस्मान्नारायणादयं वर्णक्रमः प्रादुर्भुतः स एवास्मदादीनांच मूलाधारादि-षट्चक्रानधितिष्ठन् सूक्ष्मवागाद्यवस्थावता प्रणवरूपेण वर्णक्रमात्मकोऽपि भवति तद्यथा—आत्मा वुद्ध्या सामर्थ्यार्थान् नियुंक्ते तद्विवक्षया। मनस्त्वह्निमाहन्ति स प्रेरयति मारुतम्। वह्नि मारुतसंयोगात् क्षोभाद्वागिन्द्रियस्य च। सूक्ष्मा वाक् जायते पूर्वं स एव कथित ध्वनिः। तत्तत् स्थनेष्वथ यदा वायुश्चलति सेन्द्रियः। पश्यन्ती वर्णरूपा वाक् तत उत्पत्तिमर्हति। मध्यमा पदरूपाथो

## २। तत्रादौ चतुर्दश सर्वेश्वराः।

तस्मिन् वर्णक्रमे आदौ चतुर्दश वर्णाः 'सर्वेश्वर'-नामानो भवन्ति— अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ। एते 'स्वराः' 'अचः'च प्राचीनानाम्। एते स्वतन्त्रोच्चारणाः। कादीनामुच्चारणंचैषा-

---

वाक्यरूपाथो वैखरी। इति वाचामवस्थाः स्युर्मुखमध्ये तदिन्द्रियम्। अर्थ-प्रयत्नयोर्वाक्यात् श्रुतादनुमितान्मतात्। विशिष्टं खं मुखं राति विखरा सैव वैखरी जायते प्रादुर्भवति। तथाच भगवद्वाक्यम्—'ओम् इत्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' इति।

ननु स क इत्याह—अ आ इत्यादि। अत्र क-ष-संयोगे 'क्ष' इति वक्ष्यमाणत्वेऽपि क्ष-रामश्च दर्शितः। एते इति। एते अरामादयो वर्णा अक्षराणि अलश्चोच्यन्ते इत्यन्वयः।

सर्वेषामेव वर्णानां सामान्यतो नारायणादुत्पत्तिमुक्त्वा कः कुतो उत्पन्न इति पुनर्विशेषमाह—एषामिति।

अ आ। अ-आ-कवर्ग-ह-विसर्गाणामुद्भवस्थानं नारायणस्य कण्ठो भवतीति हेतोरेते कण्ठया उच्यन्ते, एवमुत्तरत्रापि यथा योग्यमूह्यम्। यथोक्तमन्यैः—'हृत्-कण्ठ-जिह्वं खलु तालु-मूर्धा-दन्तास्तथोष्ठावथनासिका च। वर्णप्रकोष्ठान्यध-ऊर्धभेदानीत्याह चाष्टावुपदेशतोऽन्यत्॥' तथाच शिक्षाकारा आहुः,—'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलंच दन्ताश्च नासिकौष्ठंच तालु च॥' इति। एदैतोः कण्ठतालिवत्यत्र क्रमेणेष्टः। तेन एरामस्य ऐरामस्य च कण्ठतालूद्भवस्थानमित्यर्थः; तदपि युगपदेवेति वोद्धव्यम्।

ओदौतोः कण्ठौष्ठमिति। वकारस्य दन्तौष्ठमित्यत्रापि युगपदेवेति वोद्धव्यम्। यद्यपि दन्तौष्ठमित्युक्तं तथापि अविष्णुवर्गीयस्यास्य व्यवहारात् सर्वत्र दन्त्यत्वेनैव प्रसिद्धिः। कण्ठतालु, कण्ठोष्ठं, दन्तौष्ठमिति 'प्राण्यं-गानाम्' इति समाहारः, समाहारे ब्रह्मत्वमेकत्वंचेति। इत्यादिनीत्यस्य उद्भवस्थानानीत्यनेनान्वयः॥

२। संज्ञाच परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च इति सूत्राणि षड्विधानि तेषु प्रथमनिर्दिष्टतया संज्ञाया एव प्राधान्यात्

मधीनमिति सर्वेश्वराः। एवमन्यत्रापि ज्ञेयम्। 'मात्रालाघवमात्रं पुत्रोत्सवः' इति परेऽभिमन्यन्ते। हरिनामाक्षरलाभाद्वयं त्वमूदृक् तिरस्कुर्मः ॥ २ ॥

३। दश दशावताराः।

तत्रादौ दश वर्णाः 'दशावतार'-नामानो भवन्ति—अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ। एते 'समानाः', 'अकः' च प्राचीनानाम् ॥ ३ ॥

४। तेषां द्वौ द्वावेकात्मकौ।

तेषां दशावताराणां मध्ये क्रमेण द्वौ द्वौ वर्णौ प्रत्येकं परस्परंच एकात्मकौ ज्ञेयौ; यथा—अ आ इति द्वौ एकात्मकौ, इ ई इति द्वौ

प्रथमं संज्ञासूत्रान्येव कुर्वन् तत्रापि सर्वव्यापकतया आदौ सर्वेश्वर-संज्ञमाह तत्रेति, आदिशब्दोऽत्र प्रथमवाचकः। एते स्वतन्त्रोच्चारणा इति, एते चतुर्दशवर्णाः स्वतन्त्रोच्चारणा भवन्ति। स्वतन्त्रं—निरपेक्ष्यं, कादीनामधीनम् उच्चारणं येषां ते स्वतन्त्रोच्चारणाः। कादीनां वर्णानामुच्चारणंवैषां वर्णानामधीनं भवतीति हेतुः सर्वेश्वरा उच्यन्ते। सर्वेषां स्थावरजंगमादीनामिश्वरः, सर्वेश्वरशब्देन सर्वावतारि-स्वयंभगवान् कृष्ण उच्यते इति भगवन्नामता प्रसिद्धिः। एवमन्यत्रापि ज्ञेयमिति, एवमुक्तप्रकारेण सर्वेश्वरादन्यत्रापि दशावतारादि-संज्ञासु च गुणानुरूपं नामकरणं ज्ञेयं यथा सर्वेश्वरशब्दस्यार्थः कृतस्तथा अन्य संज्ञाशब्दस्यापि अर्थो ज्ञेयमित्यर्थः।

अत्र शास्त्रे मात्रालाघवे तात्पर्यं नास्तीत्याह मात्रेति। मात्रालाघवमात्रं—मात्रालाघवमेव मात्राल्पतैव पुत्रोत्सववत् भवतीत्येतद्वचनम् अपरे पण्डिता अभिमन्यन्ते स्वीकुर्वन्तीत्यर्थः, 'मात्रं कार्त्स्न्येऽवधारणः' इति नानार्थवर्गः। वयं पुन अमूदृक् अदो मात्रालाघवमात्रं पुत्रोत्सब इति तिरस्कुर्म अत्र हेतुर्हरीति ॥

३। दश दशा। सुगमम्। अत्र सर्वेश्वरेषु दशावतारशब्देन मत्स्य-कूर्मादय उच्यन्ते, इति हेतुर्भगवन्नामता ॥

४। तेषां। सुगमम्। एक अद्वितीय आत्मास्वरूपं यस्य स एकात्मकः, एकात्मकशब्देन ब्रह्मभावापन्न-जीव उच्यते। अथवा हरिहराद्वैवतां

एकात्मकौ एवम् उ ऊ इत्यादि। अत्र 'सवर्ण'-संज्ञा च। प्रत्येकमेकात्मकत्वं स्पष्टमेवेति परस्परार्थमिदं सूत्रम् ॥ ४ ॥

५। पूर्वो वामनः।

तेषामेकात्मकानां पुर्वपुर्वो वर्णो 'वामन'-नामा—अ इ उ ऋ ऌ। एते 'ह्रस्वाः', 'निर्ह्रस्वाः' च ॥ ५ ॥

६। परस्त्रिविक्रमः।

तेषामेकात्मकानां परपरो वर्णः 'त्रिबिक्रम'-नामा—आ ई ऊ ॠ ॡ। एते 'दीर्घाः' च ॥ ६ ॥

७। त्रिमात्रो महापुरुषः।

त्रिमात्रत्वेनोच्चार्यमाणो वर्णो वामनस्त्रिबिक्रमश्च 'महापुरुष'-संज्ञः स्यात्। एष दूराह्वाने गाने रोदनादौ च प्रसिद्धः। 'प्लुत'-संज्ञश्च, यथोक्तम्—

**एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते।**
**त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्धमात्रकम्** ॥ इति।

आदित्रयस्य कुक्कुट-रुतौ क्रमेण प्रसिद्धिः। अत्र महापुरुषे वामनमपि त्रिबिक्रममुच्चारयन्ति लिखन्ति च तज्ज्ञाः। आगच्छ भो विष्णुमित्रा३ आगच्छ। आगतोऽस्मि भो विश्वपा३ आगतोऽस्मि ॥७॥

---

एकात्मकशब्दस्य भगवन्नामता। प्रत्येकमिति अतावित्यर्थः। परस्परमिति अदातावित्यर्थः। एवमन्यत्रापि ज्ञेयम् ॥

५। पूर्व इति। त्रिबिक्रमापेक्षया वलेरध्वरगतस्य भगवतः प्रथमतो ह्रस्व-विग्रहप्रकटनेनैव वामनत्वं प्रसिद्धम्, इति भगवन्नामता ॥

६। पर इति। वामनापेक्षया पश्चाद्वलेः सकाशात् त्रिपाद-भूमियाचनेन भगवतो वृहद्वपुः प्रदर्शनात् त्रिबिक्रमत्वम्, इत्यस्य भगवन्नामता ॥

७। त्रिमात्र इति। महापुरुषशब्देन सर्वसल्लक्षणान्वितपुरुष उच्यते, स भगवानेव नान्योऽतोऽस्य भगवन्नामता। अत्र शास्त्रान्तरस्य लक्षणमुच्यते न्यग्रोधपरिमण्डलो महापुरुषः। 'पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः

८। अ-आ-वर्जिताः सर्वेश्वरा ईश्वराः।

अ आ इति वर्णद्वयवर्जिताः सर्वेश्वराः 'ईश्वर'-नामानः—इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ। एते 'नामिनः', 'इचः' च ॥ ८ ॥

९। दशावतारा ईशाः।

अ आ-वर्जिता दशावताराः 'ईश'-नामानः—इ ई उ ऊ ऋ ॠ ऌ ॡ। एते 'इकः' च ॥ ९ ॥

१०। अ-आ-इ-ई-उ-ऊ अनन्ताः।

'अणः' च ॥ १० ॥

११। इ-ई-उ-ऊ चतुःसनाः।

'इणः' च ॥ ११ ॥

१२। उ-ऊ-ऋ-ॠ चतुर्भुजाः।

'उकः' च। प्रयोजनाभावात् ऌ ॡ न गृह्यते ॥ १२ ॥

---

षडुन्नतः। त्रिह्रस्वः पृथुगम्भीरो द्वात्रिंशल्लक्षणो महान् ॥' एतैरुपलक्षितो महापुरुषः। आदित्रयस्य ह्रस्वदीर्घप्लुतरूपस्य कुक्कुटध्वनौ; तज्ज्ञा महापुरुषज्ञाः पण्डिताः ॥

८। अ आ। सुगमम्। ईश्वरशब्देन मायानियन्ता भगवानुच्यते, इत्यस्य भगवन्नामता ॥

९। दशा। सुगमम्। ईशशब्देन मायामुग्धजीव-निकाय-नियामको भगवान् उच्यते, अतोऽस्य भगवन्नामता ॥

१०। अ आ इति सुगमम्। अनन्तशब्देन सहस्र फणः शेष उच्यते, इत्यस्य भगवन्नामता ॥

११। इ ई चत्वारः सना यत्र ते 'चतुःसनाः'। चतुःसनशब्देन सनक-सनातन-सनन्दन-सनत्कुमारा उच्यन्ते, इति भगवन्नामता ॥

१२। उ ऊ। सुगमम्। चत्वारो भुजा येषां ते 'चतुर्भुजाः', चतुर्भुजशब्देन नारायण उच्यते, अतो भगवन्नामता ॥

१३। ए-ऐ-ओ-औ चतुर्व्यूहाः

'सन्ध्यक्षराणि', 'एचः' च। एते सर्वे एव त्रिविक्रमाः ॥ १३ ॥

१४। अं इति विष्णुचक्रम्।

अकार उच्चारणार्थः। विन्दुस्वरूपो वर्णो 'विष्णुचक्र'-नामा, 'अनुस्वारः', 'विन्दुः', 'लवः' च ॥ १४ ॥

१५। अँ इति विष्णुचापः।

अर्धचन्द्राकृतिवर्णो 'विष्णुचाप'-नामा, 'अनुनासिकः' च। नासिकाभवोऽयम् ; सानुनासिकस्तु मुखनासिकाभवः ॥ १५ ॥

१६। अः इति विष्णुसर्गः।

विन्दुद्वयाकारो वर्णो 'विष्णुसर्ग'-नामा, 'विसर्गः', 'विसर्जनीयः', 'विसृष्टः', 'अभिनिष्ठानः' च ॥ १६ ॥

---

१३। ए ऐ सुगमम्। चत्वारो व्यूहो येषां ते 'चतुर्व्यूहाः'। चतुर्व्यूहशब्देन वासुदेव-संकर्षण-प्रद्युम्नानिरुद्धा उच्यन्ते, इति भगवन्नामता ॥

१४। अमिति सुगमम्। विष्णोश्चक्रं—विष्णुचक्रं, विष्णुचक्रशब्देन सुदर्शनाख्यमस्त्रमुच्यते, इति भगवन्नामता। 'विन्दुर्लवेति विन्दुर्लवेऽप्यव्ययम्वे'ति मेदिनी ॥

१५। अँ इति सुगमम्। अकार उच्चारणार्थः, चन्द्रस्य अर्धं अर्धचन्द्रः, अर्धचन्द्र इवाकृतिराकारो यस्य सोऽर्धचन्द्राकृतिः, अर्धचन्द्राकृतिश्चासौ वर्णश्चेति अर्धचन्द्राकृतिवर्ण इत्यस्य सविन्दुरित्यपि विशेषणमुह्यं चन्द्रविन्दुत्वेनैव प्रसिद्धः 'नादाद्वायुरजायत विन्दोराकाशसम्भूति'रित्यागमाच्च। विष्णोश्चाप विष्णुचापः, चापशब्देन धनुरुच्यते, अतो विष्णुचापः शार्ङ्गमित्यस्य भगवन्नामता। नासिकाभवोऽयमिति। अयमनुनासिको नासिकाभवः; अनुनासिकसहितो वर्णस्तु मुखनासिकाभवः। वर्णो मुखभव अनुनासिको नासिकाभव इत्यर्थः। वर्णानां कण्ठताल्वादि भवत्वेनैव मुखभवत्वं विद्यत एवेति ॥

१६। अः इति सुगमम्। अकार उच्चारणार्थः। सर्गः सृष्टिः विष्णोः सर्गो विष्णुसर्ग इति विष्णुसर्गशब्दस्यार्थः; ब्रह्मलोकोपरिवैकुण्ठध्रुवलोकयो र्विन्दुद्वयाकारत्वेन विष्णुसर्गस्य प्रसिद्धिरित्यस्य भगवन्नामता ॥

१७। कादयो विष्णुजनाः।

ककारादयो हकारान्ता वर्णा 'विष्णुजन'-नामानो भवन्ति; विष्णोः सर्वव्यापकतया 'सर्वेश्वरस्य' जना इव तस्याधीना इत्यर्थः—क ख ग घ ङ। च छ ज झ ञ। ट ठ ड ढ ण। त थ द ध न। प फ ब भ म। य र ल व श ष स ह; क-ष-संयोगे तु क्षः। एते 'व्यञ्जनानि', 'हलः' च ॥ १७ ॥

१८। य-व-वर्जितास्तु वलाः।

'रलः' च ॥ १८ ॥

१९। ते मान्ताः पञ्च पञ्च विष्णुवर्गाः।

ते ककारादयो मकारान्ता वर्णाः पञ्च पञ्च 'विष्णुवर्गा' भवन्ति। एते 'वर्गाः' च। क ख ग घ ङ इति क-वर्गः; एवं च-वर्गः, ट-वर्गः, त-वर्गः, प-वर्गश्च। एते 'कु-चु-टु तु पु'-नामानश्च; 'स्पर्शाः' तु सर्व एव ॥१९॥

---

१७। कादयः। सर्वेश्वरस्येत्यनन्तरं कृष्णस्येति वहुषु पुस्तकेषु दृश्यते, तत्तु लिपिकरप्रमादकृतं। विष्णोर्यथा सर्वव्यापकतया धर्मेण आब्रह्म-स्तम्बपर्यन्ताः स्थावरजंगमादयः सर्वे जना स्तस्य विष्णोरधीना सन्ति, तथैव सर्वेश्वरस्य सर्वेश्वरसंज्ञवर्णस्य कादयो विष्णुजना वर्णा अधीना भवन्ति। विष्णुजनशब्देन सुनन्दनमुखाः पार्षदा उच्यन्ते, इति हेतुर्भग-वन्नामता ॥

१८। यव वर्जिताः। सुगमम्। यव वर्जिता विष्णुजनाः 'वल'-नामानो भवन्ति। वलशब्दो वलरामवाची, इति भगवन्नामता ॥

१९। ते मान्ताः। सुगमम्। विष्णोर्वर्गाः—विष्णुवर्गाः। विष्णुवर्ग-शब्देन सत्यलोकोपरि वैकुण्ठाद्यधीश्वरादय उच्यन्ते, इति भगवन्नामता।

कु चु टु तु पु नामानश्चेति। उकार पंचमवर्णग्रहणार्थः, उकारस्य पंचमस्वरत्वात्। स्पर्शाः—स्पर्शनामानो भवन्तीत्यर्थः। यद्वा सर्वे विष्णु-वर्गा एव निश्चितं स्पर्शाः स्वस्वोद्भवस्थानेषु स्पर्शोच्चारणा भवन्ति ॥

२०। ञ-वर्जितास्तु विष्णुगणाः।

'मयः च। तत्र समानवर्गः 'सवर्ग' उच्यते, 'सबर्णः' च ॥२०॥

२१। क-च-ट-त-पा हरिकमलानि।

'प्रथमाः', 'चपः' च ॥२१॥

२२। ख-छ-ठ-थ-फा हरिखड्गाः।

'द्वितीयाः', 'छफः' च ॥२२॥

२३। ग-ज-ड-द-बा हरिगदाः।

'तृतीयाः', 'जवः' च ॥२३॥

२४। घ-झ-ढ-ध-भा हरिघोषाः।

'चतुर्थाः', 'झभः' च ॥२४॥

२५। ङ-ञ-ण-न-मा हरिवेणवः।

'पंचमाः', 'अनुनासिकाः', ञमश्च। एते च मुखनासिकाभवाः ॥२५॥

---

२०। ञ वर्जिताः। ञ-र्वजिता विष्णुवर्गाः 'विष्णुगण'-नामानो भवन्ति। विष्णुगणशब्देन अनन्त-वैकुण्ठनिवासिनः सारूप्यप्राप्ता उच्यन्ते, इति भगवन्नामता ॥

२१। क च। सुगमम्। हरेः कमलानि—हरिकमलानि ; हरिकमलशब्देन हरेः पद्ममुच्यते, अतो भगवन्नामता ॥

२२। ख छ। सुगमम्। हरेः खड्गाः—हरिखड्गाः, हरिखड्गशब्देन नन्दक उच्यते, अतो भगवन्नामता ॥

२३। ग ज। सुगमम्। हरेर्गदा—हरिगदा ; हरिगदाशब्देन कौमोदकी उच्यते, इत्यस्य भगवन्नामता ॥

२४। घ झ। सुगमम्। घोषो—गोपपल्ली, 'घोष-आभीरपल्ली' स्यादित्यमरः। हरिसम्वन्धी घोषो—हरिघोष, नन्दालय प्रभृतिः, किंवा नादेन घोषेण गुहां प्रविष्ट इति श्रीभागवतोक्तत्वात् हरेः प्रणवोच्चारणादिश्चेति हरिघोष-शब्दस्यार्थोऽतोऽस्य भगवन्नामता ॥

२५। ङ ञ। सुगमम्। हरेर्वेणवः—हरिवेणवः ; हरिवेणु-शब्देन हरेर्वंश्यादय उच्यन्ते, इति भगवन्नामता ॥

२६। त एतद्वर्जिता विष्णुदासाः।

हरिवेणु-वर्जिता विष्णुवर्गा 'विष्णुदास'-नामानः—क ख ग घ, च छ ज झ, ट ठ ड ढ, त थ द ध, प फ ब भ। एते 'झपः' च॥२६॥

२७। य-र-ल-वा हरिमित्राणि।

'अन्तःस्थाः', 'यणः' च। एते सविष्णुचापा, निर्विष्णुचापाश्च॥२७॥

२८। श-ष-स-हा हरिगोत्राणि।

'उष्माणः', 'षिटः', 'शलः' च॥२८॥

२९। श-ष-साः शौरयः।

'शरः' च॥२९॥

३०। विष्णुदास-हरिगोत्राणि वैष्णवाः।

एतानि 'वैष्णव'-नामानि—क ख ग घ, च छ ज झ, ट ठ ड ढ, त थ द ध, प फ ब भ, श ष स ह। एते 'धुटः', 'झलः' च॥३०॥

३१। हरिगदा-हरिघोष-हरिवेणु-हरिमित्राणि-हश्च गोपालाः।

एते 'गोपाल'-नामानः—ग घ ङ, ज झ ञ, ड ढ ण, द ध न, ब भ म, य र ल व ह; एते 'घोषवन्तः', 'हशः' च॥३१॥

---

२६। त एतद्वर्जिता। सुगमम्। विष्णोर्दासाः—बिष्णुदासाः; विष्णुदासशब्देन सारंग-पत्रि-प्रभृतय उच्यन्तेऽतो भगवन्नामता॥

२७। य र। सुगमम्। हरेर्मित्रं—हरिमित्रं। हरिमित्रशब्देन नन्दादिरुच्यते, यन्मित्रं परमानन्दमिति स्मरणात्, अतोऽस्य भगवन्नामता॥

२८। श ष स ह। सुगमम्। हरेर्गोत्रं—हरिगोत्रं। हरिगोत्र-शब्देन कन्दर्प-सांवादय उच्यन्ते, इति भगवन्नामता।

२९। श ष स। सुगमम्। शौरि-शब्देन वसुदेवादय उच्यन्ते, इत्यस्य भगवन्नामता॥

३०। विष्णु। वैष्णव-शब्देन विष्णुधिदैवताः शुक-प्रह्लादादयः कन्दर्पादयश्च उच्यन्तेऽत एषामुभयेषां विष्णुधिदैवत्वेन वैष्णवनामता॥

३१। हरिगदा। सुगमम्। अत्र गोपाल-शब्देन गोपरूपिणो भगवतः

**३२। यादवा अन्ये।**

गोपालेभ्योऽन्ये विष्णुजनाः 'यादव'-नामानः—क ख, च छ, ट ठ, त थ, प फ, श ष स ; एते 'अघोषाः' 'खरः' च ॥३२॥

**३३। शौरि-वर्जितास्तु सात्वताः।**

शौरि-वर्जितास्तु यादवाः 'सात्वत'-नामानः 'खपः' च ॥३३॥

**३४। 'अस्पर्शी' प्रयत्नः सर्वेश्वराणाम्, 'स्पर्शी' विष्णु-वर्गाणाम्, 'ईषत्स्पर्शी' हरिमित्राणाम्।**

**३५। रादनुस्वाराच्च परं य-वाभ्यान्तु पूर्वं विना यरामस्य पुनरविष्णुपदादावीषत्स्पर्शितरः।**

---

सम्बन्धात् गोरक्षकत्वेन एते हरिगदादयो गोपाल-नामान उच्यन्ते। प्रत्येकं तेषां भगवन्नामता पूर्वत्र प्रतिपादिता इति भगवन्नामता ॥

३२। यादवा। सुगमम्। यादव-शब्देन सामान्य यदुकुलोद्भवा उच्यन्ते, यद्यपि यादवानां कियद्गोपालांचैकवंशत्वं, तथापि वृन्दावनस्थत्वेन गोपाला मथुरास्थत्वेन यादवा इति भेदविवक्षितम् ॥

३३। शौरिः। शौरि-वर्जिता यादवाः सात्वत-नामानः। सात्वत-शब्देन तद्वंशोत्पन्ना उच्यन्ते, तेतु परमभक्ता इति। अथवा सत्शब्देन सत्वमूर्तिर्भगवानुच्यते, उपास्यतया स विद्यते येषामिति सत्वन्तः ततः स्वार्थेऽण् सात्वता वैष्णवा इति ॥

३४। अस्पर्शी। सर्वेश्वराणामरामादीनां प्रयत्न उच्चारणम् अस्पर्शी अस्पृष्टकरण एषामुच्चारणस्य करणेन सह स्पर्शो न भवतीत्यर्थः। विष्णु-वर्गाणां करामादीनां प्रयत्नः स्पर्शी स्पृष्टकरणः, एषामुच्चारण-करणस्य करणेन सह स्पर्शो भवतीत्यर्थः। हरिमित्राणां य-र-ल-वानां प्रयत्न ईषत्स्पर्शी ईषत्स्पृष्टकरणः, एषामुच्चारणकरणस्य करणेन सह ईषत्स्पर्शो भवतीत्यर्थः ॥

३५। रात्। ररामादनुस्वाराच्च परं यरामं यवाभ्यां पूर्वं च यरामं विना वर्जयित्वा अविष्णुपदादौ वर्तमानस्य अन्यस्य यरामस्य प्रयत्न ईषत्स्पर्शितरो भवति। अस्पर्शितुल्यो भवतीत्यर्थः ॥

३६ । उपेन्द्रात् क्वचित् विष्णुपदादौ च ।

'उपेन्द्र'-संज्ञा (आ° प्र° ४०७), 'विष्णुपद'-संज्ञा (वि° प्र° १५४) च वक्ष्येते। त्रिबिक्रम-महापुरुष-हरिगोत्राणां विवृतश्चेति ज्ञेयम्। तत्र 'रात्' इति क्रमेण दर्श्यंते––अर्य्यमा, यंयम्यते, अय्यते, वाय्वग्नी, नारायणाय, नियमः, प्रयुङ्क्ते। अत्र पञ्चमषष्ठे एवोदाहरणे, अन्यानि तु प्रत्युदाहरणानि ॥ ३५-३६ ॥

३७। वर्णस्वरूपे रामः।

वर्णस्य स्वरूपमात्रे वाच्ये 'राम'-शब्दो देयः, तस्यैकपरिग्रहताख्यातेः, यथा––अ-रामः, इ-रामः इत्यादि। 'अत्', 'इत्' इत्यादि च पाणिनेः; 'अ-कार' इत्यादि च कलापस्य। यथा च––क-राम इत्यादि। 'क-कार' इत्यादि तु प्राचाम्। ररामस्तु 'रेफ' इति ॥३७॥

३८। तदादिद्वये द्वयम्।

यो वर्णो निर्द्दिश्यते, तदादिद्वये वाच्ये 'द्वय'-शब्दो देयः; यथा—

---

३६। उपेन्द्रात्। विष्णुपदादौ वर्तमानस्यापि उपेन्द्रात् परस्य यरामस्य प्रयत्नः क्वचिदीषत्स्पर्शितरो भवति। त्रिबिक्रमादीनां प्रयत्नो विवृतश्च विवृतो विवृतकरण एषामुच्चारणे करणविस्तारो मुखव्यादानेन उच्चार इत्यर्थः। किन्तु हरिगोत्राणां प्रयत्नस्य विवृतत्वं नातिस्पष्टम्। तत्रेति दर्श्यते उदाहरणं प्रत्युदाहरणञ्चेति शेषः क्वचिदिति वचनान्नात्रेषत्-स्पर्शितरः प्रयुङ्क्त इति पञ्चमषष्ठे इति पञ्चमषष्ठे पदे इत्यर्थः॥

३७। वर्ण। स्वरूपमात्रे स्वरूप एवेत्यर्थः। ननु शब्दान्तरं कथं न दीयते, तत्राह तस्येति तस्य रामस्य रामशब्दाभिधेयस्य श्रीरघुनन्दनस्य एकपरिग्रहताख्यातेः श्रीसीतैकभार्यत्वख्यातेरित्यर्थः। अथ चायं राम-शब्दः एकमेव वर्णं परिगृह्णातीति। ररामस्तु रेफ इति प्राचामिति शेषः॥

३८। तदादि। ननु श्रीकृष्णानुशीलनेनैव वैष्णवानां कालहरणं

अ-द्वयम्, इद्वयम् इत्यादि। अस्य लक्ष्मीनारायणवाचित्वाद्भगवन्नामताः तन्मन्त्रो हि 'द्वय'-मन्त्राख्यः पद्मपुराणे। 'अवर्ण' इत्यादि च प्राचाम्; 'अकार' इत्यादि च पाणिनेः ॥३८॥

३९। आदेशो विरिञ्चिः।

विरिञ्चिर्ब्रह्मा यथैकं वस्तूपादाय अन्यत् करोति, तथा यो विधिः प्रवर्त्तते, स 'आदेशः', 'विरिञ्चिः' चोच्यते ॥३९॥

---

युक्तमतोऽस्य व्याकरणस्य भगवन्नामभिः सम्वलितं संज्ञादि-करणीयमिति भवता प्रतिपादितं तथाप्यस्मिन् कथं द्वयशब्दो गृहीतो द्वयशब्दस्य तावद् द्वित्व संख्यावाचित्वेन भगवन्नामताभावादिति चेत्तत्रोच्यते अस्येति अस्य द्वयशब्दस्य। तन्मन्त्रो लक्ष्मीनारायणमन्त्रो हि यतो द्वयमन्त्राख्यो द्वयमन्त्र-नामा पद्मपुराणेऽस्तीति दर्शनात् ॥

३९। आदेशः। उपादेशगृहीत्वेत्यर्थः। आदेशो विरिञ्चिश्चोच्यते इति। प्राचीनैरादेश उच्यते अस्माभिर्विरिञ्चिरुच्यते इत्यर्थः। एवमुत्तर-त्रापि। तथाहि यथा विरिञ्चिरेकं वस्तु गृहीत्वा अन्यत् करोति तथा यो विधिः प्रवर्तते स आदेशो विरिञ्चिरुच्यते इत्यर्थः। ननु विष्णुर्यथा मध्यत इत्यत्र आगमस्य यथा विष्णुत्वं घटते तथात्रादेशस्य विरिञ्चित्वं न घटते, किन्तु सूत्रस्यैवेति चेत् तदेवं व्याख्येयं तद् यथा—विरिञ्चिर्ब्रह्मा यथा एकं वस्तूपादाय गृहीत्वा अन्यदन्याकारं वस्त्वन्तरं करोति वस्त्वन्तरं गृहीत्वा स्वयमेव वान्यदन्याकारमात्मानं करोति, तथा यो विधिः प्रवर्तते स आदेशो विरिञ्चिश्च कथ्यते। समष्टिव्यष्टिभेदेन ब्रह्मण एव सर्वरूपि-त्वात् इत्यनेन व्याख्यानेन सूत्रस्य तत्कार्यस्य च विरिञ्चित्वं ज्ञेयं यदैकं वस्तु गृहीत्वा वस्त्वन्तरं करोति तदा सूत्रस्य विरिञ्चिता यदा चात्मानम् अन्यद्वस्त्वन्तरं करोति तदा सूत्रकार्यस्यैव विरिञ्चितेति तथाच स्वयमपि ग्रन्थकृता 'कर्तव्यत्वेनोपदेशो विधि'रित्यनेन सूत्रस्य ईदृशो विधिर्विरिञ्चि-रित्यनेन तत्कार्यस्य च विरिञ्चित्वं वक्ष्यते ॥

४०। आगमो विष्णुः।

विष्णुर्यथा मध्यतः स्वयमाविर्भूय पोषको भवति, तथा यो विधिः प्रवर्तते, स 'आगमः', 'विष्णुः' चोच्यते ॥४०॥

४१। लोपो हरः।

हरो यथा नाशहेतुर्भवति, तथा यो विधिः प्रवर्तते, स 'लोपः' 'हरः' चोच्यते। तत्र हरो द्विधा भवेत्—तत्रादर्शन-मात्रहेतु'र्हरः', आत्यन्तिकलयहेतु'र्महाहरः', 'लुग्' इत्यन्ये ॥४१॥ .

४२। सूत्राणि षड्विधानि।

***'संज्ञा[1] च परिभाषा[2] च विधि[3]र्नियम[4] एव च।**
**अतिदेशो[5]ऽधिकारः[6] च षड्विधं सूत्रलक्षणम् ॥'** इति।

---

४०। आगमः। मध्यत इति ब्रह्मरुद्रयोः सृष्टिसंहारयोर्वा मध्ये इत्यर्थः। तथा प्रकृतिप्रत्ययोर्मध्ये आविर्भूय द्वयोः पोषको भूत्वा यो विधिः प्रवर्तते स विष्णुरुच्यते ॥

४१। लोपः। वृत्तिमाह हर इति। हरो यथा वस्तूनां नाशहेतुर्भवति तथा वर्णादीनां नाशहेतुरिति शेषं समानम्। नन्वादेशो विरिञ्चिरित्यत्र ब्रह्मणः समष्टि-व्यष्टि-शरीरद्वयावच्छेदकत्वेन दृष्टान्तकृतेन-सूत्र-तत्कार्ययो-र्विरिञ्चितोक्ता भवता सा तत्र संगच्छते, इदानीन्तु लोपो हर इत्यत्र सूत्र-तत्कार्ययोः कथं हरत्वं किन्तु सूत्रस्यैव तत् सत्यमुच्यते, यद्यप्यत्र सूत्रस्यैव हरत्वं घटते तथापि कार्यकारणयोरभेदोपचारत्वेन द्वयोस्तज्ज्ञेयम्। ननु यद्यप्येवं तथापि दृष्टान्ते समाधानं न दार्ष्टान्ते, नहि हरो यस्य नाशहेतु-र्भवति तं नाशयन् स्वयं नश्यति इति चेत् तदैवं समाधेयं, नाशस्या-दर्शनार्थत्वात् हरोऽयं नाशयति तन्नाशे सति स्वयमप्यन्तर्धत्ते नतु तिष्ठती-त्यांशिकदृष्टान्तमिति हरसंज्ञयोर्भेदमाह तत्रेति अदर्शनस्य अदर्शनत्वमेव हेतुरदर्शनमात्रहेतुः ॥

४२। संज्ञाचेति। सूत्रलक्षणं सूत्रस्वरूपं सूत्रमिति फलितार्थः। अन्यानीति परिभाषादीनां लक्षणानीत्यर्थः। यद्वा सूत्रलक्षणं सूत्रचिह्नं

---

*१। संज्ञा ( १-४३ सूत्राणि ), २। परिभाषा ( स० प्र० [५] ), ३। विधिः (स० प्र० ४७), ४। नियमः ( वि० प्र० २५७ ), ५। अतिदेशः ( स० प्र० ५४ ), अधिकारः ( वि० प्र० ३४५)।

'प्रतिषेधोऽधिकारश्च' इति केचित् पठन्ति च। अत्र नामकरणं 'संज्ञा' यथा—'तत्रादौ चतुर्दश सर्वेश्वराः' इत्यादि; अन्यानि वक्ष्यन्ते ॥४२॥

**४३। असिद्धरूपं न त्याज्यम्, प्रतिज्ञेयं कृदन्तिका।**

अत्र व्याकरणे त्वन्यत्रैवासिद्धरूपं मध्ये मध्ये न त्यज्यते, किन्तु सिद्धं कृत्वैव त्यज्यते। तत्तच्च कृत्पर्यन्तं ज्ञेयम्; न समासतद्धितयोरित्यर्थः। दर्शनीयन्त्वग्रे ॥४३॥

**इति संज्ञादि *।**

---

चिह्नस्य षड्विधत्वेन सूत्राणामपि षड्विधत्वमत उक्तं सूत्राणि षड्विधानीति। सूत्रं कितावदित्यपेक्षायां सूत्रमुच्यते—'स्वल्पाक्षरमनल्पार्थं विशुद्धं सर्वतोमुखम्। विशेषकथनापेक्षं सूत्रं सूत्रविदो विदुः॥' इति शास्त्रान्तरोक्तम्॥

४३। स्वव्याकरणनिष्ठ-रचनावैशिष्ट्यं ज्ञापयति असिद्धरूपमिति। अन्यत्रैवेति अन्यस्मिन् व्याकरणे यथा असिद्धरूपं मध्ये मध्ये त्यज्यते तथात्र व्याकरणेत्वसिद्धरूपं मध्ये मध्ये न त्यज्यते किन्तु सिद्धं कृत्वा एव त्यज्यते॥

* इति संज्ञादीति उक्तमिति शेषः। एवं सुवन्तपादादौ ये संज्ञादयो वक्ष्यन्ते तेष्वपि गुणानुरूपं नामकरणं ज्ञेयमिति। संज्ञादीत्यत्रादिशब्देन परिभाषादीनां ग्रहणम्॥

# सन्धि-प्रकरणम्

## सर्वेश्वर-सन्धिः

[५] यदिदं सन्धिनिर्माणं वर्णानामारभे मुदा।
तेन मे कृष्णपादाब्जे मनःसन्धिर्विधीयताम् ॥

**सन्धिरेकपदे नित्यं नित्यं धातूपसर्गयोः।**
**अनित्यं सूत्रनिर्देशेऽन्यत्र चानित्यमिष्यते ॥**

परिभाषेयम्; सा चानियमे नियमकारिणी ॥ [५]

४४। सर्वप्रकरणव्यापी वर्णमात्रनिमित्तकः।
वार्णो विकारः सन्धिः स्याद्विषयापेक्षकः क्वचित् ॥

---

[५] वर्णानां सन्धिनिर्माणमारभमाणः श्रीमद् ग्रन्थकारस्तद्दृष्टान्तेन स्वस्य श्रीकृष्णपादाब्जविषयक-मनःसन्धिं श्रीकृष्णं प्रार्थयते यदिदमितिपद्येन। आरभे अहमिति शेषः। मुदा हर्षेण तेन वर्णानां सन्धिनिर्माणेन। मनः-सन्धिर्मनोमेलनं विधीयतां क्रियताम्। हे कृष्ण! यद् येन प्रकारेण वर्णानाम् इदं सन्धिनिर्माणं मुदा हर्षेण अहम् आरभे, तेन प्रकारेण मे मम मनःसन्धिः मनसः सन्धानं तव पादाब्जे त्वया विधीयताम् इति समुदितार्थः।

परिभाषामाह सन्धिरिति। नित्यमित्यनित्यमितिच क्रियाविशेषणम्। परिभाषालक्षणमाह अनियम इति। अनियमे नियमं कर्त्तुं शीलं यस्या सा परिभाषा ॥

४४। सन्धिलक्षणमाह—सर्वेति। सर्वप्रकरणं व्याप्तुं शीलमस्य सर्व-प्रकरणव्यापी वर्णमात्रं वर्णएव निमित्तमुपादानादिकारणं यत्र स वर्णमात्र-निमित्तको वर्णस्यायं वार्णोविकारः स्वरूपादन्यथाभावः। विषयमपेक्षत इति विषयापेक्षकः सर्वप्रकरणव्यापी वर्णमात्रनिमित्तको वर्णसम्वन्धी विकारः सन्धिः स्यादित्यन्वयः। स च सन्धिः क्वचित् सुवन्तादौ विषये विष्णुपदान्तविषयेऽविष्णुपदान्तविषये च अपेक्षको भवति। ननु विकारः सन्धिरित्येवास्तु लक्षणं किमेभिर्विशेषणैः। सत्यं। यदि भवतोक्तः सन्धिः

किञ्च—

४५। अचो ये हलिसंलग्नास्ते सर्वे परतो मताः।

हल् च तत् स्यादरामान्तं यत्र नान्याच् न चांघ्रिभित्॥

ततश्च कृष्ण + अग्रे इति स्थिते 'कार्यार्थमक्षरं विश्लेषयेन्मेलयेच्च' इति न्यायेन अरामविश्लेषः—कृष्ण् + अ + अग्रे ; ततश्च— ॥४५॥

४६। दशावतार एकात्मके मिलित्वा त्रिबिक्रमः।

'दशावतार'-नामा वर्ण एकात्मके वर्णे परे सति तेन मिलित्वा त्रिबिक्रमो भवति। ततश्च आरामस्य पुनर्मिलनम् = कृष्णाग्रे'; एवं राधा + आगता = राधागता; हरिहरि + इति = हरिहरीति; हरि + ईहा = हरीहा; विष्णु + उदयः = विष्णूदयः; विष्णु + ऊढा = विष्णूढा; नरभ्रातृ + ऋषिः = नरभ्रातॄषिः; गमॢ + ॢकारः = गमॣकारः ॥४६॥

---

स्यात्तदा यस्य कस्यापि सन्धित्वं स्यादतो वार्णो इत्युक्तस्तस्मिन्नपि गोविन्द-वृष्णीन्द्रावतिव्याप्तिरिति वर्णमात्रनिमित्तक इत्युक्त स्तस्मिन् सत्यपि सन्धेः सर्वप्रकरणव्यापित्वसूचनाय सर्वप्रकरणव्यापीत्युक्तंस्तस्मिन् सति सर्वत्रैवाग्रे सन्धिः प्राप्नोतीत्यतो विषयापेक्षक इत्यप्युक्त एवं सर्वेषां हेतुहेतुमद्भावः कल्पनीय इति।

४५। ननु कृष्ण हरीत्यादौ येऽरामादयो विद्यन्ते ते परत्र पूर्वत्र वेति न ज्ञायन्ते एवं केवाऽरामान्तादयस्तेऽपि न ज्ञायन्ते इत्यपेक्षायामाह अच इति, परतः परत्र मता ज्ञाताः। तद्धल् अरामान्तं स्यादिति, हलन्तानामिति पाणीनि-सूत्रदर्शनात् हल् शब्दस्य ब्रह्मत्वम्। अंघ्रिं भिनत्तीति अंघ्रिभित्, व्यञ्जनवर्णस्य चिह्नविशेषः। यत्र हलि अरामादन्याच् न विद्यते तद्धल् अरामान्तं स्यादित्युपलक्षणम्, एवं यत्र हलि अरामादन्याच् न विद्यते तद्धल् अरामान्तं स्यात् तथा यत्र हलि उरामादन्याच् न विद्यते तद्धल् उरामान्तं स्यादित्यादि दिशा यत्र यत्र हलि यस्माद् यस्मादचोऽन्याच् न विद्यते तत्तद्धल् तत्तदजन्तं स्यादिति सर्वत्र कल्पनीयम्॥

४६। दशा। तेनेति तेन सहेत्यर्थः। ननु कृष्णाग्रे हरिहरीतीत्या-दावेव दशावतारे त्रिबिक्रमविधानस्य सार्थकं 'राधागता', 'वधूदयः'

४७। ऋद्वय-ऌद्वययोरेकात्मकत्वं वाच्यम्।

ऋ ऌद्वयम् ऋद्वयम्, ऌ-ऋद्वयम् ऌद्वयमित्यादि। ईदृशो विधिर्विरिञ्चिः—'कर्तव्यत्वेनोपदेशो विधिः' इति ॥४७॥

४८। अद्वयमिद्वये ए।

अ आ इति द्वयम् इ ई इतिद्वये परे तेन मिलित्वा एरामो भवति। यादव+इन्द्रः=यादवेन्द्रः; गोकुल+ईशः=गोकुलेशः ; मथुरा+ईशः=मथुरेशः ॥४८॥

---

रुक्मिणीहेत्यादौ तु निरर्थकं तेन दशावतार इत्यत्र वामन एकात्मक इति क्रियताम्। सत्यम्। यद्येवं तर्हि सूत्रे दशावतारस्याग्रहणात् राधागतेत्यादौ त्रिबिक्रमविधानाभावात् राधा आगता इत्यादि स्थितिः स्यात्, परस्परमिलनमपि न स्यात् कथनाभावात्। वक्ष्यते च ग्रन्थकृता वामनस्य त्रिबित्रमो नामीत्यत्र 'कृष्णस्य त्रिबिक्रमः' इत्यनेन सिद्धत्वेऽपि सूत्रस्य प्रयोजनं हरीणामित्यादावेव तद्वदिह यद्यपि राधागतादौ स्वल्पं फलं तथापि कृष्णाग्रे इत्यादौ सम्यक् फलमिति न सूत्रस्य निरर्थकत्वम्। उक्तञ्चान्यैः—'अदीर्घो दीर्घतां याति पुनर्दीर्घेण दीर्घताम्। पर्जन्यवदिदं शास्त्रं जले वृष्टिः स्थले यथा ॥' इति। हरीहा—हरिचेष्टा, विष्णूढा—रुक्मिण्यादिः। नरभ्रातॄषिरिति नरभ्राता नारायणः सतु ऋषिरेव ततश्च नरभ्राता चासौ ऋषिश्चेति श्यामरामसमासः। गम्ॡकार इत्येतत् पदं क्रमदीश्वरासम्मतं तन्मते गमॄकार इत्येव भवति।

४७। ऋद्वयम्। ऋऌद्वयमित्युक्तम् एवम् ऌऋद्वयम् ऌद्वयमित्यपि भवतीति ज्ञेयम्। ऋदृति रराम-भागद्वययुक्त ऋरामोवेति वक्तव्यम्। होतृ ऋकार इत्यत्र होतृकारः, होतॄकारो वा। ऋद्ऌति ऌदृति लराम-भागद्वययुक्त ऌरामोवेति च वक्तव्यम्। होतृ ऌकार इत्यत्र होत्ल्लॢकारः। गम्ॡ ऋकार इत्यत्र गम्ल्लॢकार इति।

ईदृशेति। ईदृशो दशावतार एकात्मके मिलित्वा त्रिबिक्रम इत्यनेन दशावतारस्य स्थाने त्रिबिक्रमविधिर्विरिञ्चि र्भवति। एवमुत्तरत्रापि इद्वयादि परे अद्वयस्य स्थाने एरामादिरपि विधिर्विरिञ्चिरिति ज्ञेयम्।

## ४९। प्रादेषैष्ययोर्वा तथा।

प्रात् उत्तरस्मात् एष-एष्ययो परयोस्तथा सन्धिर्वा भवति। प्र+एषः=प्रेषः; प्र+एष्यः=प्रेष्यः; पक्षे 'एद्वये ऐ'—प्रैषः, प्रैष्यः ॥४९॥

## ५०। उद्वये ओ।

अ आ इति-द्वयम् ड ऊ इति-द्वये परे मिलित्वा ओरामो भवति। अद्वयमत्र पूर्वतोऽनुवर्तते; यदुक्तम्—

**'कार्यिणा हन्यते कार्यी कार्यं कार्येण हन्यते।**
**निमित्तञ्च निमित्तेन यच्छेषमनुवर्तते ॥'** इति।

पुरुष+डत्तमः=पुरुषोत्तमः; सुपर्ण+ऊढः=सुपर्णोढः; द्वारका+डत्सवः=द्वारकोत्सवः ॥५०॥

---

विधिलक्षणमाह कर्तव्यत्वेनेति कर्तव्यत्वरूपेण य उपदेशः स विरिञ्चिः। अत्रोपदेशपदं करणघणन्तं कर्मघणन्तञ्च गृहीतं, यदा करणघणन्तं तदा सूत्रस्यैव विरिञ्चित्वं, यदा कर्मघणन्तं तदा कार्यस्यैवेति प्रतिपादितसूत्रस्यतु पाणिनीयैरप्युक्तं तद् यथा—'धातुसूत्रगणोनादि वाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥' इति।

४८। अद्वयम्। सुगमम्।

४९। प्रात्। एषैष्ययोः परयोः प्रादुत्तरोऽराम स्तथा वा भवति एषैष्ययोरेरामेण मिलित्वा एरामो वा भवतीत्यर्थः। प्रादिति सौत्रत्वाद-रामान्तनिर्देशः ॥

५०। उद्वये। सुगमम्। ननु सूत्रेऽद्वयं न दृश्यते, वृत्तौ कथम् अ आ इति द्वयम् उ ऊ इति द्वय इत्युच्यते इति चेत् तत्रैवाह अद्वयमत्रेति यद्यत्रा-द्वयमनुवर्तते तदा इद्वय इति ए इति च कथं नानुवर्तते इत्यत आह यदुक्त-मिति। कार्यिणेति। कार्यिणा कार्यी हन्यते वाध्यते, कार्येण कार्यं हन्यते वाध्यते, निमित्तञ्च निमित्तेन हन्यते वाध्यते, यत् शेषम् अवशिष्टं केनापि न वाध्यते तदनुवर्तते इत्यर्थः। कार्यमस्यास्तीति कार्यी, यत् क्रियते तत् कार्यं, येन विना यन्न भवति तत्तस्य निमित्तं, तच्चात्र द्विविधं—प्राङ्-

## ५१। ओमि च तथा।

कृष्ण+ओम्=कृष्णोम् ॥५१॥

## ५२। ऋद्वये अर्।

अ आ इतिद्वयम् ऋ ॠ इतिद्वये परे मिलित्वा अर् भवति—कृष्ण+ऋद्धिः=कृष्ण्-अर्-द्धिः इति स्थिते,—'जलतुम्विका'न्यायेन पूर्वविष्णुजनस्य परोर्धगमनम्, 'जलवालुका'न्यायेन परसर्वेश्वरस्य पूर्व-विष्णुजने प्रवेशः=कृष्णर्द्धिः ॥५२॥

## ५३। ऌद्वये अल्।

अ आ इतिद्वयम् ऌ ॡ इतिद्वये परे मिलित्वा अल् भवति—यमुना+ऌकारायते=यमुनल्कारायते ॥५३॥

---

निमित्तं परनिमित्तञ्च। अवाध्यत्वेनैवोत्तरोत्तरतः पुनर्वर्तनमनुवृत्तिरिति, साच कार्य्यनुवृत्ति कार्यानुवृत्ति निमित्तानुवृत्तिरिति त्रिधा। अत्र उद्वयेन परनिमित्तेन इद्वयं परनिमित्तं वाध्यते, ओरामकार्येण एरामकार्यं वाध्यते। अद्वयकार्यितु केनापि न वाध्यते, अतस्तदनुवर्तते इति ज्ञेयम्। कार्यिणा कार्यि वाध्यते इति स्थानान्तरे वोद्धव्यम्। स्थानान्तरन्तु उद्वयं व इत्यादो ज्ञेयम्। सुपर्णोढ इति सुपर्णो गरुड स्तेनोढः सुपर्णोढः श्रीकृष्णः॥

५१। ओमि। अ आ इति द्वयम् ओमिच परे तथा सन्धिर्भवति, ओमीत्यनेन मिलित्वा ओरामो भवतीत्यर्थः॥

५२। ऋद्वये। ऋद्धिर्वृद्धिः। जलतुम्विकेति जले तुम्विका इव यो न्यायः प्रवर्तते स जलतुम्विकान्यायः,तेन जलतुम्विकान्यायेन तुम्वी अलावुः। 'तुम्व्यलावुरुभे समे' इत्यमरः। सात्र शुष्कान्तःशून्यैव ज्ञेया। सा यथा जले अन्तस्त्यक्तापि ऊर्धमेव गच्छति तथा पूर्वस्थितो विष्णुजनः परोर्धमेव गच्छतीत्यर्थः। जलवालुकेति। जले वालुका इव यो न्यायः प्रवर्तते, स जल-वालुकान्यायः, तेन जलवालुकान्यायेन वालुका यथा जलोपरि निक्षिप्तापि अन्तरे प्रविशति तथा परस्थितः सर्वेश्वरः पूर्वविष्णुजने एव प्रविशतीत्यर्थः॥

५३। ऌद्वये। ऌकारायत इति ऌकार इवाचरतीत्यर्थः॥

## ५४। पुनरद्वयसन्धौ आङादेशः परनिमित्तवद् वक्तव्यः।

अतिदेशोऽयम्—'अन्यतुल्यत्वविधानमतिदेशः'। अत्रारामास्य ङित्त्वं क्रियायोगे इति वक्ष्यते (स° प्र° ७०)। आ+इहि=एहि, कृष्ण+एहि=कृष्णेहि; आ+ऊढा=ओढा, कृष्ण+ओढा=कृष्णोढा; आ+ऋद्धिः=अर्द्धिः, कृष्ण+अर्द्धिः=कृष्णर्द्धिः; आ+ऌकारायते=अल्कारायते, यमुना+अल्कारायते=यमुनल्कारायते॥५४॥

## ५५। एद्वये ऐ।

अ आ इतिद्वयम् ए ऐ इतिद्वये परे मिलित्वा ऐरामो भवति। कृष्ण+एकनाथः=कृष्णैकनाथः। कृष्ण+ऐश्वर्यम्=कृष्णैश्वर्यम्॥

## ५६। स्वादीरेरिणोश्च तथा।

स्व+ईरम्=स्वैरम्; स्व+ईरी=स्वैरी; स्वैरिणी च; 'नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति न्यायात्॥५६॥

---

५४। पुनरद्वयम्। पुनरद्वयसन्धौ विषये आङादेश अर्थादिरामादिना सहेति शेषः। आङ् आदेश एरामादिः परनिमित्तवत् इरामादिवद्वक्तव्य आङ् पूर्वनिमित्तम्। तेन यथा अराम इरामेण सह मिलित्वा एरामो भवति तथा अराम एरामेणापि सह मिलित्वा एराम भवतीत्येवं क्रमेण वोद्धव्यम्। अतिदेशलक्षणमाह अन्येति। अन्यतुल्यत्वस्य विधानं अन्यतुल्यत्वविधानम्। अत्रेति अत्र अस्य लक्षणस्योदाहरणेषु आरामस्य क्रियायोगे ङित्त्वमिति वक्ष्यते इत्यर्थः।

५५। एद्वये। सुगमम्।

५६। स्वात्। इरेरिणोः परयोः स्वादुत्तरोऽरामस्तथा भवति मिलित्वा ऐरामो भवतीत्यर्थः। स्वादिति पूर्ववत्। ननु सूत्रे ईरिन् शब्दोऽस्ति तर्हि कथं स्वैरिणी इति भवतु, इति चेत्तत्राह नाम्न इति। लिङ्गेति लिंग्यते ज्ञायते स्त्रीत्वादिकमनेनेति लिङ्गमावादि तद्विशिष्टस्य तद्युक्तस्य इत्यर्थः॥

## ५७। ओद्वये औ।

अ आ इति द्वयम् ओ औ इति द्वये परे मिलित्वा औरामो भवति—कृष्ण+ओदनम्=कृष्णौदनम्; कृष्ण+औन्नत्यम्=कृष्णौन्नत्यम् ॥५७॥

## ५८। प्रादूढोढ्योश्च तथा।

प्र+ऊढः=प्रौढः; प्र+ऊढिः=प्रौढिः; ऊहमिति केचित् पठन्ति—प्रौह। नेह प्रोढवान्, 'अर्थवद्ग्रहणेऽनर्थकस्य न ग्रहणम्' इति न्यायात् ॥५८॥

## ५९। इद्वयमेव यः सर्वेश्वरे।

इ ई इति द्वयमेव सर्वेश्वरे परे यरामो भवति, नतु मिलित्वा। य इत्यत्र अराम उच्चारणार्थः। एवमन्यत्रापि। हरि+अर्चनम्=हर्यर्चनम्; हरि+आसनम्=हर्यासनम्; दधि+उपेन्द्रस्य=दध्युपेन्द्रस्य; रुक्मिणी+एषा=रुक्मिण्येषा। द्वित्वप्रकरणे एतावतैव सिद्धिः। विकल्पेन तु मतान्तराणि वक्ष्यन्ते[1]; 'तस्मादसिद्धरूपं न त्याज्यम्' (स° प्र° ४३) इति प्रतिज्ञा नात्र व्यभिचरति।

---

५७। ओद्वये। सुगमम्।

५८। प्रात्। ऊढोढ्योः परयोः प्रादुत्तरोऽरामस्तथा भवति मिलित्वा औरामो भवतीत्यर्थः। प्रादिति पूर्ववत्। अर्थवदिति अत्र ऊढशब्दः स्वार्थको गृह्यते, अत ऊढवच्छब्दैकदेशस्य ऊढेत्यस्य अर्थशून्यत्वात्तस्मिन् परे न भवतीत्यर्थः। अत्रार्थ एव नास्तीति न, किन्तु यत्र यदर्थं गृहीत्वा यत्कार्यं क्रियते, तदतिरिक्तार्थोऽनर्थक इति ॥

५९। इद्वयमेव। नतु मिलित्वेति सर्वेश्वरेण सहेति एवशब्दोपादानादिति शेषः। एतावतैव सिद्धिरिति। एषामुदाहरणानामनेन लक्षणेनैव सिद्धिरित्यर्थः ॥

द्वित्वेति। द्वित्वञ्च विकल्पञ्च तयोः समाहारः, द्वित्वविकल्पं

---

१। स० प्र० ९१, १२०-१२२-संख्यक-सूत्राणि द्रष्टव्यानि।

कथं 'हरिहरीति' ? हरिहरीति, एकात्मकतामवलम्ब्य त्रिबिक्रम-विधेर्विशेषत्वेन वलवत्वात् । तथाहि—समस्तव्यापि 'सामान्यम्', एकदेशव्यापी 'विशेषः' ; सामान्यविधिः 'उत्सर्गः', विशेषविधिः 'अपवादः' इति स्थिते 'पूर्वपरयोः परविधिर्वलवान्', 'नित्यानित्ययोर्नित्यः', 'अन्तरङ्गवहिरङ्गयोरन्तरङ्गः', 'डत्सर्गापवादयोरपवादः' । तेषु चोत्तरोत्तर इति । दशावतारे सामान्यत्वञ्चेत्तत्राद्वयमित्येव क्रियेत, 'विष्णूदयः' इत्यादावपि परपरसूत्रप्राप्तेः । तदेवमेते चान्ये च न्याया युक्त्या प्रसिद्धयाच स्वीकृतत्वात् पूर्वमुत्तरञ्च ग्रन्थं व्याप्नुवन्ति ॥५६॥

गवाश्वादित्वात् । तेन द्वित्वविकल्पेन पुनर्मतान्तराणि कार्याणि वक्ष्यन्ते । कथमिति सिद्धान्तमाह एकात्मकतामिति सर्वेश्वरमात्रे परे यरामो भवति इति यरामविधेः सामान्यत्वम् । एकात्मकतामित्यत्र स्वरूपमात्रे ताप् प्रत्यय एकात्मकस्वरूपमित्यर्थः । उक्तमर्थं द्रढयति तथाहीत्यादिना तेषु चोत्तर इत्यन्तेन । समस्तमनेकदेशं व्याप्तुं शीलमस्येति समस्तव्यापी, एकदेशं व्याप्तुंशीलमस्येति एकदेशव्यापी । उत्सर्ग इति उत्सर्गनामेत्यर्थः । एवमपवादेऽपि वलवानिति नित्यादिष्वपि योज्यम् । तेष्विति । ननु तेष्वित्यत्र चतुर्षु अष्टसु वेति किं व्याख्येयमिति सन्देहो मैवं, यद्यत्र तेषु चाष्टष्विति व्याख्यायते, तदा फलाभावः प्रत्युत पौनरुक्तमेव पूर्वपरयोः परविधिर्वलवानित्यादिना व्याख्यानेनाष्टसु न्यायेषु उत्तरोत्तरन्यायानां वलवत्वसिद्धेःरतएव युग्मत्वेन निर्दिष्टेषु तेषु च चतुर्षु न्यायेषु उत्तरोत्तर-न्यायवलवानित्येवं व्याख्येयं, तेन उत्सर्गापवादयोरपवाद इत्यस्य सर्वेभ्य एव वलवत्वं व्यक्तम् । दशावतार इति त्रिबिक्रमता दशावतारस्य भवति, यरामता इद्वयस्य एव भवति । दशावतारे त्रिबिक्रमविधेः सामान्यत्वं यदि वक्तव्यं, तदा तत्र त्रिबिक्रमसूत्रे अद्वयमित्येव क्रियेत । ननु अद्वयमात्रे कथं त्रिबिक्रमः प्रवर्ततां हरिहरीतीत्यत्र विष्णूदय इत्यादावपि तस्य प्रवृत्तेरित्याह विष्णूदय इत्यादाविति । यथा हरिहरीतीत्यत्र इद्वयमेव यः सर्वेश्वर इत्यस्य प्राप्तिः, तथा विष्णूदय इत्यादावपि उद्वयं व इत्यादेः प्राप्तिस्तस्मात् त्रिबिक्रमस्य अद्वय एव प्राप्तिरिति अद्वयमित्येव क्रियेत

## ६०। उद्वयं वः।

उ ऊ इतिद्वयं सर्वेश्वरे परे वरामो भवति—मधु+अरिः= मध्वरिः; विष्णु+आश्रितः=विष्ण्वाश्रितः ॥६०॥

## ६१। ऋद्वयं रः।

ऋ ॠ इतिद्वयं सर्वेश्वरे परे ररामो भवति—रामभ्रातृ + उदयः= रामभ्रात्रुदयः। रामभ्रातृ + ऐश्वर्यम् = रामभ्रात्रैश्वर्यम् ॥६१॥

## ६२। ऌद्वयं लः।

ऌ ॡ इतिद्वयं सर्वेश्वरे परे लरामो भवति—शक्ऌ+अर्थः= शक्लर्थः। श्रीपतेरेव। व्याडिगालवयोर्मतेन मध्ये एव य-व-र-ला भवन्ति—हरियर्चनम्, मधुवरिः, भुवादि इत्यादि ॥६२॥

---

तस्माद‌द्वयं न कृत्वा यद्दशावतार इति कृतं ततएव हेतोर्हरिहरीत्यादौ त्रिबिक्रम एव प्रवर्तते इत्यर्थः। दशावतारे सामान्यत्वं चेत् तदाऽद्वयं मिलित्वा त्रिबिक्रम इत्येवं क्रियते, यस्मादित्येवं सूत्रं न कृतं तस्माद्दशावतारे एकात्मकत्वाऽपेक्षया सामान्यत्वं नास्त्येव इति ध्वन्यर्थः। तदेवमिति तत्तस्मात् प्राचीनैः स्वीकृतत्वाद्धेतोरेवमुक्तं प्रकारेणार्थपोषकत्वेन एते पूर्वापरयोः परविधिर्बलवानित्यादय अन्ये उक्ता वक्ष्यमाणाश्च न्यायाः स्थित्यनतिक्रमाः केचित् युक्त्या तर्केण स्वीकृताः केचित् प्रसिद्ध्या च लोकप्रसिद्ध्या पूर्वमुत्तरञ्च ग्रन्थं व्याप्नुवन्ति इति ज्ञेयम्। तर्कप्रसिद्ध्यो-रेषामनुसारित्वं ज्ञेयम्। यथा पूर्वापरविरोधे च कोन्वऽर्थोऽभिमतो भवे-दित्यादीनामूहनं तर्क इति ॥

६०। उद्वयम्। सुगमम्। मधुरसुरविशेषः।

६१। ऋद्वयम्। सुगमम्।

६२। ऌद्वयम्। शकऌधातोरर्थः शक्तिः, सातु भगवत एव। श्रीपतेरिति श्रीपतेः पण्डितस्य मते एवमुक्तप्रकारेण इद्वयादीनां स्थाने सर्वेश्वरे परे यादयः प्रयोगा भवन्ति। एवशब्दोऽत्र उपमान-वाचक एवौपम्येऽवधारणे इति विश्वः। व्याडीति व्याडिगालवौ पण्डितविशेषौ तयोर्मतेन मध्ये एव इति नतु इद्वयादय इत्यर्थः।

६३। ए अय्।

एराम अय् भवति, सर्वेश्वरे परे--कृष्णे + उत्कर्षः = कृष्णयुत्कर्षः ॥६३॥

६४। ऐ आय्।

ऐराम आय् भवति, सर्वेश्वरे परे--यमुनायै + अर्घः = यमुनायायर्घः ; गोप्यै + आसनम् = गोप्यायासनम् ॥६४॥

६५। ओ अव्।

ओरामो अव् भवति, सर्वेश्वरे परे--विष्णो + इह = विष्णविह ॥६५॥

६६। औ आव्।

औराम आव् भवति, सर्वेश्वरे परे—कृष्णौ + अत्र = कृष्णावत्र ॥६६॥

६७। ए-ओभ्यामस्य हरो विष्णुपदान्ते।

ए-ओरामाभ्यां विष्णुपदान्ते स्थिताभ्यां परस्य अरामस्य हरो भवति—हरे + अत्र = हरेऽत्र। विष्णो + अत्र = विष्णोऽत्र ॥६७॥

६८। अयादीनां य-वयोर्वा।

अय् आय् अव् आव् इत्येषां विरिञ्चीनां य-वयोर्वा हरो भवति विष्णुपदान्ते विषये—कृष्णयुत्कर्षः = कृष्णउत्कर्षः ; यमुनायायर्घः =

---

६३। ए अय्। सुगमम्।

६४। ऐ आय्। सुगमम्।

६५। ओ अव्। सुगमम्।

६६। औ आव्। सुगमम्।

६७। ए-ओभ्याम्। सुगमम्। ए अय् इत्ययादेशे प्राप्ते ओ अव् इत्यवादेशेच प्राप्ते नियमोऽयं तेन अरामादन्यस्मिन् सर्वेश्वरेऽयादिर्भवति। ए-ओभ्यान्तु परस्यारामस्य हर एव स्यादिति भावः ॥

६८। अय्। सुगमम्।

यमुनायाअर्घः; गोप्यायासनम्=गोप्याआसनम्; विष्णविह=विष्ण-इहः; कृष्णावत्र=कृष्णाअत्र। यवाविमावीषत्स्पर्शिनावीषत्स्पर्शि-तरौ च मतौ ॥६८॥

६९। तेषां न सन्धिर्नित्यम्।

तेषां य-व-लोपिनां नित्यं सन्धिर्न भवति। प्रतिषेधोऽयम्। कृष्ण-उत्कर्षः, यमुनायाअर्घः, गोप्याआसनम्, विष्णइह इत्यादि ॥६९॥

७०। ओरामान्तानामनन्तानां चाव्ययानां सर्वेश्वरे।

ओरामान्तानामनन्तानाञ्च केवलानामव्ययानां सर्वेश्वरे परे सति पूर्वस्य च परस्य च सन्धिर्न भवति—नोउपेन्द्र; नोअच्युतः। कथं तद्धिते वि-प्रत्ययान्तस्य 'गो'-शब्दस्याव्ययत्वे सति 'गोऽभवत्' इति? 'गोऽभवत्' इत्यत्र 'लाक्षणिक-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति न्यायेन स्यात्।

---

६९। तेषाम्। वाऽनुवृत्ति-शङ्कानिरासार्थं नित्यमिति कृतम्॥

७०। ओरा। ए-ओभ्यामस्य हर इत्यादिना प्राप्तेऽयं प्रतिषेध ओरामान्तानामव्ययानाम् अनन्तानाञ्च केवलानामव्ययानामित्यर्थः। ओरामान्तानां विष्णुजनसंयुक्तत्वेन केवलत्वाभावात्। अथवा वृत्युक्त-केवलशब्देन सर्वेषामेवाव्ययानां केवलत्वं लक्ष्यते, तस्मादोरामान्ताव्यया-नामपि केवलत्वं लाक्षणिकौरामान्तं वर्जयित्वा प्रतिपदोक्तत्वापेक्षयोक्तम्। 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायात्। तेन नञूपक्रान्तस्याव्ययस्यापि केवलत्वञ्चेति अन्यथा गोऽभव-दित्यादावप्यतिव्याप्तिः स्यात्। 'अलक्ष्ये लक्षणगमनमतिव्याप्तिः'। 'लक्ष्ये लक्षणगमनं व्याप्ति'श्चेति। नो इति निषेधार्थम्। कथमिति ननु अगौ-गौ रभवदित्यर्थे तद्धिते सर्वेऽद्विप्रत्ययान्तस्य गोशब्दस्याव्ययत्वे सति गो अभवदित्यत्र गोऽभवदिति कथं सिद्ध्यतु इत्याक्षेपे सिद्धान्तमाह लाक्षणि-केति। लाक्षणिक-प्रतिपदोक्तयोरित्यत्र मध्ये इति शेषः। प्रतिपदोक्तं प्रति-स्थानोक्तं, स्वभावसिद्धमित्यर्थः। 'पदं व्यवसिति-त्राण-स्थान-लक्ष्मांघ्रि-

अरामादयः सम्वोधनादौ। तत्र सम्वोधने—'अ अनन्त'; स्मरणे—'आ एवमच्युतलीला'; भर्त्सने—'इ अच्युतं न भजसि'; वाक्पूरणे—'ई ईदृशः संसारः'; आमन्त्रणे—'ड अच्युत'; प्रतिषेधे—'ड डपसन्नं मां त्यजसि'। आङस्तु सन्धिर्भवत्येव—आ+अनन्तम्=आनन्तम्, अनन्तमर्यादां कृत्वेर्थः।

**"ईषदर्थे क्रियायोगे व्याप्ति-मर्यादयोश्च यः।**
**एतमातं ङितं विद्याद्वाक्य-स्मरणयोरङित्॥"** इति ॥७०॥

---

वस्तुषु' इति नानार्थवर्गः। आरामादयः सम्वोधनादौ वर्तन्ते, तेषां सन्धि-निषेधेन रूपाणि दर्श्यन्ते इति शेषः। अत्र सम्वोधने यथेति शेषः। एवं स्मरण इत्यादावपि। अ अनन्तेति हे अनन्तेत्यर्थः। स्मरणं चिन्तनं तस्मिन् यथा—आ एवेति एवमुक्तप्रकारेण अच्युतलीला आ स्मरणीया इत्यर्थः। भर्त्सने तिरस्कारे रूपं यथा—इ अच्युतेति। भो अवैष्णव अच्युतं न भजसि इ त्वां धिगित्यर्थः। वाक्पूरणं वाक्पोषणं तस्मिन्नर्थे रूपं यथा—ई ईदृश इति। हे भ्रातरीदृशः संसारः, ई एतादृशो भवितु-मर्हतीत्यर्थः। आमन्त्रणं सम्वोधनं कामाचारकरणमिति यावत् तस्मिन् यथा—उ अच्युतेति। अच्युत उ भोः स्वाभिप्रेतश्चेन्मामुद्धर। प्रतिषेधे निषेधे रूपं यथा—उ उपसन्नमिति। तवानुगतं मां त्यजसि उ मात्यज। सर्वेश्वरे परे इति किम्? एहि+अ=एह्य, अत्र+इ=अत्रे, प्र+उ=प्रो। पूर्वसर्वेश्वरत्वादित्यादौ वृत्तौ केवलानामित्युपादानात् प्रैतीत्यादौ च सन्धिर्भवत्येव।

आङः। ङित् आरामस्य अव्ययस्य सन्धिर्भवत्येव। आङोऽपि केवलानन्ताव्ययत्वात् सन्धिनिषेधो भवितुमर्हति, सतु आचार्यानां सम्मत इति नियमसूत्रमेतत् कृतम्। सानुवन्ध-निरनुवन्धयोरारामयोर्भेदार्थं सिद्धान्तकारिकामाह ईषदिति। ईषदर्थे इति ईषदर्थे अल्पार्थे—आ श्यामः। क्रियायोगे—आगच्छेति। व्याप्तौ—आ वैकुण्ठं संसारः। मर्यादायाम्—आ वैकुण्ठं व्यासकीर्त्तिः। वाक्ये—आ एवं किलैतत्। स्मरणे—आ एवमच्युतलीलेति॥

## ७१। ईदूदेतां द्विवचनस्य मणीवादिवर्जम्।

द्विवचनस्थानीयानाम् ई-ऊ-एरामाणां सम्बन्धे सर्वेश्वरे परे सन्धिर्न भवति। हरी अत्र; विष्णू अत्र; अमू अत्र; गङ्गे अत्र; भजेते अजितम्; अमुके अत्र स्तः। चान्द्रास्त्वत्र सन्धिमिच्छन्ति—'अमुकेऽत्र स्तः'। मणीवादौ तु सन्धिर्भवत्येव, विकल्प इत्येके—मणी+इव=मणीव; एवं दम्पती+इव=दम्पतीव; रोदसी+इव=रोदसीव; जम्पती+इव=जम्पतीव ॥७१॥

## ७२। अदसोऽमीत्यस्य।

'अदस्'-शब्दसम्बन्धिनः 'अमी' इत्यस्य पदस्य सर्वेश्वरे परे सन्धिर्न भवति—अमी अच्युतप्रिया। 'अमी' इति किम्? अमुकेऽत्र स्युः। ओरामान्ताद्या असन्धयः पाणिनीयानां (पा १।१।११) 'प्रगृह्य'-संज्ञाः ॥७२॥

## ७३। महापुरुषस्य च।

महापुरुषस्य च सम्बन्धे सर्वेश्वरे परे सन्धिर्न भवति ॥७३॥

---

७१। ईदू। द्विवचनस्थानीयानां द्विवचनरूप-स्थानिसम्बन्धिनां द्विवचन-सम्बन्धिनामित्यर्थः। हरी अत्रेत्यादावुदाहरणे 'इद्वयमेव यः सर्वेश्वरे' इत्यादिना सूत्रेण यरामादिप्राप्तेर्निषेधोऽयम्। अजितं श्रीकृष्णमित्यर्थः। अत्र विषये चान्द्रास्तु सन्धिमिच्छन्त्येव। विकल्प इत्येक इत्येके क्रमदीश्वरादयः। मणिवादिर्गणो यथा—'मणी भार्यापती चैव दम्पती रोदसी तथा। वाससी जम्पतीचैवमिव जायापती तथा॥'

७२। अदस। अदस इत्युपादानात् अम रोगे इत्यस्य धातोः कृत्प्रत्ययान्तस्य अम इत्यस्मात् तद्धितेऽणिप्रत्यये कृते यदमीति भवति तस्य सन्धिर्भवत्येव। तथा अमा कला चन्द्रो विद्यतेऽस्य अमी चन्द्र इत्यस्यापि सन्धिः। असन्धय इति असन्धिनामान इत्यर्थः। पाणिनीयानां पण्डितानां मते ओरामान्ताद्या असन्धिनामानः प्रगृह्यसंज्ञा भवन्ति॥

७३। महा। सुगमम्।

७४। दूराह्वानादावन्त्यसर्वेश्वरस्य महापुरुषत्वं मतम्।

आगच्छ हरे३, आगच्छ। तिष्ठ हरे३, अत्र तिष्ठ। 'सर्वेश्वरे परे' निषेधादत्र तु सन्धिः—गच्छ आ३च्युतदत्त, गच्छा३च्युतदत्त। आदि-महापुरुषमिदं सम्बोधनम्। तथाहि तत्सूत्राणि—दूराह्वानादौ यत्नविशेषे वाक्यस्यान्ते सम्बोधनपदस्य संसारो 'महापुरुषः'। क्रियान्वयावच्छिन्नः पदसमूहो 'वाक्यम्' ॥७४॥

---

७४। दूराह्वानादाविति। दूराह्वानादौ यत्नविशेष इत्यनेनान्त्य-सर्वेश्वरस्य महापुरुषत्वं मतमिति वक्ष्यते। आगच्छ हरे३ आगच्छ इत्यत्र ए अय् इत्यनेन प्राप्तसन्धिनिषेधः। तिष्ठ हरे३ अत्र तिष्ठ इत्यत्रतु ए-ओभ्यामित्यनेन प्राप्तसन्धिनिषेध इति। सर्वेश्वरे परे निषेधात् सर्वेश्वरपूर्वत्वेऽत्र सन्धिर्भवेदिति भावः। आ अच्युतदत्तेत्यत्र गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचामित्यनेन वक्ष्यमाणेनाच्युतदत्त-शब्दस्याद्यरामस्य महापुरुषत्वमित्याह आदीति। महापुरुषो वामनमपि त्रिबिक्रममुच्चारयन्ति लिखन्ति च तज्ज्ञाः, अतोऽच्युतदत्तस्याद्यरामस्य त्रिबिक्रमपाठश्चेति। प्रसङ्गाद् यथा महापुरुषलक्षणानि दर्शितानि तथा तेन प्रकारेण हि निश्चितं, तत्सूत्राणि महापुरुषलक्षणानीदानीं दर्श्यन्ते।

दूरा। स्वाभाविकात् यत्नादधिको यत्नोऽत्र यत्नविशेषः, दूरात् आह्वानमाक्रोशनं दूराह्वानं तत् आदिर्यस्य स दूराह्वानादि, तस्मिन् दूराह्वानादावर्थविषये यत्नविशेषे सति वाक्यस्यान्ते वर्तमानस्य सम्बोधन-पदस्य संसारो महापुरुषः स्यात्।

वाक्यलक्षणमाह क्रियेति। क्रिया सत्तादिलक्षणो धात्वर्थः, तस्या क्रियाया अन्वयेन सम्बन्धेन अवच्छिन्नो युक्तः क्रियान्वयावच्छिन्नः पदानां समूहः पदसमूहः, पदमत्र विष्णुपदं, समूहशब्दोऽत्रानेकत्ववाची। तथा च क्रियासम्बन्धयुक्तो विष्णुपदसमूहो वाक्यं स्यादिति निर्गलितार्थः। 'तिङ्-सुबन्तचयो वाक्यं क्रिया वा कारकान्विता' इत्यमरः॥

७५। अन्त्यसर्वेश्वरादिवर्णाः संसार-संज्ञाः।

'टि'-संज्ञाश्च। आगच्छ हरे३। तिष्ठ हरे३। 'आदि'-पदेन 'गाने रोदने विचारे च' इति सारस्वतादयः। 'सम्बोधनमात्रे च' इति काशिकाः। कृष्णं भजस्व वैष्णवा३। वाक्यस्यान्ते न त्विह,—हरे आगच्छ। 'कृष्णा३ एहि' इति प्रक्रियाकौमुद्यां (पा ६।१।१२५) भ्रमः।

सारस्वत-प्रक्रियायां भ्रमा ये सन्ति भूरयः।
लिखितुं ते न शक्यन्ते ज्ञेयास्त्वस्यानुसारतः॥
**सर्वेषाममतं यत् स्यात् स 'भ्रमः' परिचीयते।**
**बहूनाममतं यत्तत् केषाञ्चिन्मतमिष्यते ॥७५॥**

---

७५। अन्त्य। अन्ते भवोऽन्त्यः, अन्त्यश्चासौ सर्वेश्वरश्चेति अन्त्य-सर्वेश्वरः, अन्त्यसर्वेश्वर आदिर्येषां ते अन्त्यसर्वेश्वरादयः, तेच ते वर्णाश्चेति अन्त्यसर्वेश्वरादिवर्णाः। सम्यक् सारः संसारः श्रीकृष्ण इति संसारपदस्य भगवन्नामता। अन्त्यसर्वेश्वरप्रभृतयो वर्णाः संसारसंज्ञा भवन्तीत्यर्थः। टि-संज्ञाश्चेति प्राचामिति शेषः। सूत्रे दूराह्वानादावित्यादिपदगृहीतार्थान् सारस्वतादिमतेनैव स्पष्टयति आदीति। सूत्रस्थादिपदेन गाने रोदने विचारेचार्थे विषये वाक्यस्यान्ते वर्तमान-सम्बोधनपदस्य संसारो महापुरुष इति सारस्वतादयः पण्डिता वदन्तीत्यर्थः। मतान्तरमाह सम्बोधनेति। सम्बोधनपदमात्रे चकारात् दूराह्वानादावपि वर्तमाने तस्मिन् महापुरुषः स्यादिति काशिका आहूरिति गौरवे बहुवचनम्। यद्यपि सम्बोधनमात्रे चेत्युक्तं तथापि वाक्यस्यान्त एव न तदभाव इत्याह वाक्येति। भ्रम इति वाक्यस्यान्ते महापुरुषोदाहरणादिति शेषः। सारस्वतेति भूरयो बहवो ये भ्रमाः सन्ति मया ते लिखितुं न शक्यन्ते, पुनरस्य प्रक्रिया-कौमुद्युदाहरणस्यानुसाराद्बुद्धिर्ज्ञेया इत्यर्थः। भ्रमः क इत्यपेक्षायामाह सर्वेषामिति। परिचीयते ज्ञायते बहूनामित्यवान्तरानेकानामित्यर्थः॥

७६। है-हे-प्रयोगे तु है-हयोरेवानन्त्ययोरपि।

है३ कृष्ण ; हे३ कृष्ण ; कृष्ण है३ ; कृष्ण हे३ ॥७६॥

७७। प्रत्यभिवाद-वाक्ये संसारः, न तु स्त्री-शूद्र-विषये।

'अभिवादये विष्णुमित्रोऽहम्' इत्यनन्तरं गुरुराह—'आयुष्मानेधि विष्णुमित्रा३' ॥७७॥

पूर्वोक्तविधीनां स्थानविशेषमाह—

७८। गुरोरनृतोऽनन्तस्याप्येकैकस्य प्राचाम्।

ऋरामवर्जितस्य गुरोरनन्तस्यापि वर्णस्य यः संसारस्तस्यैकैकस्य सम्बोधने महापुरुषः स्यात्—प्राचामाचार्यानां मते, न तु अन्येषाम् ॥७८॥

---

७६। है हे। दूराह्वानादौ यत्नविशेषे गम्ये वाक्यस्यान्ते वर्तमान-सम्बोधनपद-सम्बन्धिनो हैहयोः प्रयोगेतु सति सम्बोधनस्यानन्त्ययोरपि-कारादन्त्ययोश्च तयोर्यः संसारः स एव महापुरुषः स्यान्नतु सम्बोधनस्य संसारः ॥

७७। प्रत्य। अभिवादो नमस्कारस्तं प्रत्यभिवादस्य गुर्वादेराशीर्वचनं प्रत्यभिवादस्तथाभूते वाक्ये वर्तमान-सम्बोधनपदस्य संसारो महापुरुषः स्यात्। स्त्रीशूद्रौ विषयौ यस्य तस्मिन् प्रत्यभिवादवाक्ये तस्य संसारो महापुरुषो नतु स्यात्। अभिवादये इति नमस्करोमीत्यर्थः। इति इत्यस्याभिवादवाक्यस्यानन्तरमित्यर्थः। स्त्री-शूद्रविषये यथा—आयुष्मती भव गार्गि! आयुष्मान् भव भद्रदास! स्वयं ग्रन्थकृद्वृत्तिकाराभिमानी सन् आह पूर्वोक्तेति। पूर्वमुक्ता विधयः सूत्राणि येषां तेषां महापुरुषाणां स्थानविशेषमाह ग्रन्थकृदिति शेषः ॥

७८। गुरोः। न ऋत् अनृत्, तस्य वृत्तिमाह—ऋरामेति। दुराह्वानादावित्यनुवर्तत एव। तेन दुराह्वानादौ यत्नविशेषे वाक्यस्यान्ते वर्तमाने सम्बोधने पदे ऋरामवर्जितस्य गुरुरूपस्य अन्त्यस्य अन्तभवरहितस्य आद्यस्य मध्यस्यापि शब्दादन्त्यस्य वर्णस्य यः संसारस्तस्य संसारस्यैकस्य स्थाने क्रमेण महापूरुषः स्यात्। प्राचां पाणिन्यादीनामा-

७९। वामनो लघुः।

८०। त्रिबिक्रमो गुरुः।

८१। सत्सङ्गात् पूर्वो वामनोऽपि गुरुः।

८२। मिथः संलग्नो विष्णुजनः सत्सङ्ग-संज्ञः।

'संयोगः' च। वी३ष्णुमित्र; विष्णुमी३त्र। मतान्तरे विष्णुमित्रा३ इत्येव। 'अनृतः' किम्? कृष्णमी३त्र; कृष्णमित्रा३। 'आगच्छ' इति सर्वस्यादौ योज्यम्, वाक्याधिकारात् ॥८२॥

८३। पृष्ट-प्रतिवचने हेर्वा।

अकार्षीर्मालां विष्णुमित्र? अकार्षं ही३, अकार्षं हि ॥८३॥

---

चार्याणां मतेऽयं नत्वन्येषामाधुनिकानामित्यर्थः। आनुसङ्गिकतया लघ्वादीनां लक्षणान्यप्याह वामनेत्यादि ॥

७९। वामन। सुगमम् ॥

८०। त्रिबि। सुगमम् ॥

८१। सत्स। सुगमम् ॥

८२। मिथः। मिथः संलग्नः परस्परं संयुक्त इत्यर्थः। संयोगः-संज्ञश्चेत्यन्ये। यथोक्तं छन्दमञ्जरिकृता—'सानुस्वारश्च दीर्घश्च विसर्गी च गूरुर्भवेत्। वर्णसंयोगपूर्वश्च तथा पादान्तगोऽपि वा ॥' वाक्यस्यान्ते वर्तमान-सम्बोधनपदे महापुरुष इति यदुक्तं, तत्तु सर्वस्यादावागच्छेति योजनं विना न घटते इत्याह आगच्छेति हेतुमाह वाक्येति ॥

८३। पृष्ट। प्रतिवचनं प्रत्युक्तिः, पृष्टस्य प्रतिवचनं तत्र वर्तमानस्य हि-शब्दस्य संसारो महापुरुषो वा स्यात्। प्रतिवचनं पृष्टस्यैव भवति, तथापि शब्दोपादानां स्पष्टार्थम्। कृष्णार्थं मालाकरणे प्रेरितविष्णूमित्रं वैष्णवाचार्यो जिज्ञासतेऽकार्षीरिति। तदन्तरं स प्रत्युत्तरमाह अकार्षमिति पदमत्र पूर्वतोऽनुकर्षणीयम् ॥

८४। आक्षेप-गर्भे निगृहीत-परमतस्यानुवादे वाक्यस्य संसारो वा।

'अनित्या हरिभक्तिः' इत्यात्था३ ? पक्षे तु न ॥८४॥

८५। आम्रेडितस्य संसारो भर्त्सने पर्यायेण।

अवैष्णवा३, अवैष्णव ; अवैष्णव, अवैष्णवा३ ॥८५॥

८६। अङ्गेत्यनेन युक्तस्याख्यातस्य संसारो भर्त्सने साकांक्षता चेत्।

हरिं विनाङ्ग प्रीणीही३, इदानीं दुःखमाप्स्यसि। 'इदानीम्' इत्यादिरत्राकांक्षा ; एतां विना तु न स्यात् ॥८६॥

---

८४। आक्षेप। आक्षेपो गर्भे यस्य स आक्षेपगर्भस्तस्मिन्निगृहीतं यत् परस्य मतं तन्निगृहीतपरमतं तस्यानुवादे आक्षेपगर्भे निन्दान्तरे सति वाक्यस्य यः संसारो महापुरुषो वा स्यात्। अणुवादः पश्चात् कथनम्। रेऽवैष्णव या हरिभक्तिरणपायिनी साऽनित्यात्वमित्यात्थ ब्रवीषि त्वां धिगित्याक्षेपगर्भत्वम् ॥

८५। आम्रे। भर्त्सने गम्यमाने पर्यायेण क्रमेण आम्रेडितस्य द्विस्त्रिरुक्तस्य संसारो महापुरुषः स्यात्। 'आम्रेडितो द्विस्त्रिरुक्ति'रित्यमरः ॥

८६। अङ्ग। आकांक्षया सह वर्तमानां साकांक्षां तस्य भावः साकांक्षता। चेद् यदि भर्त्सने साकांक्षता स्यात् तर्हि सम्बोधनसूचकेन अङ्गेतिशब्देन युक्तस्यान्ते वर्तमानस्याख्यातपदस्य संसारो महापुरुषो भवति। हे अङ्ग! हे भ्रातः! यतो हरिं विनान्यत्र प्रीणीहि प्रीतियुक्तो भवसि? अत इदानीमित्यादि योज्यं, इदानीमित्यादिरिति प्रथमान्तःपाठो लिपिकारप्रमादकृतः षष्ठ्यन्तःपाठोऽत्र ज्ञेयः। आकांक्षाशब्दस्य धर्मवाचित्वात्। एताम् आकांक्षाम् ॥

८७। विचारे पूर्ववाक्यस्य संसारः।

तमालो नु३, कृष्णो नु ॥८७॥

८८। प्रतिश्रवणे च संसारः।

प्रतिश्रवणमभ्युपगमः, प्रतिज्ञानं, श्रवणाभिमुख्यञ्च। हरिमन्त्रं देहि। हरिमन्त्रं ददामी३। हरिभक्तिर्नित्या भवितुमर्हती३। विष्णुमित्र भोः, किमात्था३ ? एवमन्येऽपि ज्ञेयाः। विचार-प्रश्न-पूजासु चतुर्व्यूहस्य वक्ष्यते ॥८८॥

८९। पूर्वार्धस्य त्वरामः स्यादिदुतावुत्तरस्य हि।
विभक्तावयवात्तस्माच्छकारो द्विर्भवत्युत ॥

हरा३ इच्छत्रमेतत्ते ? पटा३ उच्छत्रम् इत्यपि ॥८९॥

---

८७। विचा। सन्दिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षाविचारस्तस्मिन् सति पूर्ववाक्यस्य संसारो महापुरुषः स्यात्। नु-शब्दो वितर्के। भवत्ययं तमालः कृष्णो वेत्यर्थः ॥

८८। प्रति। प्रतिश्रवणेऽर्थे वाक्यस्य संसारो महापुरुषः स्यात्। प्रतिश्रवणं त्रिधा भिद्यत इत्याह प्रतीति। अभ्युपगमो देयतया स्वीकारः प्रतिज्ञानं प्रतिज्ञा। श्रवणाभिमुक्ष्यं श्रवणेऽभिमुक्ष्यता। क्रमेणोदाहरण-त्रयमाह हरिमन्त्रमिति। एवमुक्तप्रकारेण अन्येऽपि महापुरुषस्य प्रयोगा ज्ञेयाः। विधिवाक्यमाह विचारेति। विचारप्रश्नपूजासु गम्यमानासु चतुर्व्यूहस्य महापुरुषत्वं वक्ष्यते वक्तव्यं पूर्वार्धस्येत्यनेन इति शेषः ॥

८९। पूर्वा। विचारप्रश्नपूजासु गम्यासु चतुर्व्यूहस्य सन्ध्यक्षरस्य पूर्वार्धस्यारामः सन् सतु महापुरुषः स्यात्। उत्तरस्य परार्धस्य इदुतौ इ-उ-रामौ निश्चितं स्याताम्। हि-शब्देन नियमात् तौ महापुरुषौ न स्याताम्। तस्मात् इ-उ-रामस्वरूपात् विभक्तावयवात् विभागीकृताङ्गात् पर उतः पुनश्छकारो द्विर्भवति, द्विप्रकारः स्यादित्यर्थः। सन्दिग्धे वस्तुनीत्यनेन विचार उक्तः, प्रश्नः ज्ञीप्सा। पूजा सत्कारव्यापारणा। चतुर्व्यूहस्य सन्ध्य-क्षरत्वात् सन्धिविश्लेषे कृते ए-ओरामयोरुत्तरार्धस्य इरामोरामौ भवेताम्।

## ९०। ओरामस्य वुद्ध-निमित्तस्येतौ सन्धिर्वा।

बुद्धनिमित्तको य ओरामस्तस्य सन्धिर्वा स्यात्, 'इति'-शब्दे परे। 'बुद्ध'-संज्ञा वक्ष्यते (वि° प्र° २४)। विष्णो इति, विष्णविति वा। 'बुद्धनिमित्तस्य' इति किम्? 'गवित्ययमाह'—अत्रानुकार्यानुकरणयो-र्भेदस्याविवक्षितत्वादसत्यर्थवत्वे विष्णुभक्तिर्नोपपद्यते, 'विष्णुभक्ति'-(वि° प्र°१४८) संज्ञा च वक्ष्यते ॥९०॥

## ९१। ईशस्यानेकात्मके वामनश्च वा।

'ईश'-संज्ञस्य एकात्मकान्य-सर्वेश्वरे परे सन्धिर्वा स्यात्, त्रिबिक्रमस्य वामनश्च वा—हरि आसनम्; रुक्मिणि एषा, रुक्मिणी

---

ऐ-औरामयोः परार्धस्य तु तौ न भवेतामिति वर्णस्वरूप-निरूपक-त-प्रत्ययान्तौ इदुताविति दर्शितम्। उदाहरणे हरा इति हे हरे एतच्छत्रं तव भवति किं न वेत्यर्थः। एवं हे पटो एतच्छत्रं तव भवति किं न वेति च। अत्रतु हरि-शब्दस्य भगवद्वाचित्वात् पटु-शब्दस्य निपुण-वाचित्वादादराधिक्येन पूज्यत्वं। एतच्छत्रं तव किं न वेत्यनेन तु युगपत् प्रश्नविचारत्वमिति ॥

९०। ओराम। वृत्तिमाह वुद्धेति। वुद्धे निमित्तं यस्येति पीताम्वरे क-प्रत्ययः। वक्ष्यते इति 'सम्बोधने सु-र्वुद्धसंज्ञ' इत्यनेनेति शेषः। वुद्ध-निमित्तौरामादन्यत्रतु न स्यादिति व्यावर्तयति वुद्धेति। अयं जनो गो वक्तीत्यर्थः। अत्रेति गो-शब्दोऽनुकार्ये गो व्यक्तिवोधकः, अनुकरणो गो-शब्दमात्रवोधकोऽपि स एव किन्त्वत्र तयोरनुकार्यानुकरणभूतयो गो-शब्दयो-र्भेदो न विवक्षित इत्यविवक्षितत्वादुन्मत्त-प्रलपितवदनर्थवत्त्वं, तस्मिन्ननर्थ-वत्त्वे सति गवित्यत्र विष्णुभक्तिर्नोपपद्यते नोपपन्ना भवति, अर्थवत्त्वे नैव नामसंज्ञस्य वक्ष्यमानत्वादिति वुद्धनिमित्ताभावात् सन्धिरित्यभिप्रायो वक्ष्यते इति स्वादितिवाद्या विष्णुभक्तय इत्यनेनेति शेषः ॥

९१। ईश। विवरणोदाहरणे स्पष्टे। वामनविधानं त्रिबिक्रमे एव सम्भवतीति त्रिबिक्रमस्येत्युक्तम्। ननु हरि + आसनमित्यादौ कथमनेन विभाषा क्रियते? 'अन्यत्र चानित्यमिष्यते' इत्यनेन सन्धिविभाषाया अवश्य-

एषा इति च । 'अन्यत्र चानित्यमिष्यते' इति मध्ये विलम्बोच्चारणे सन्धिर्न स्यादित्यर्थः । सूत्रेषु संहितासंज्ञेषु शीघ्रोच्चारणेऽपि विकल्प्यते ॥९१॥

९२। ऋद्वयाद्वययोर्ऋति ।

अनयोर्ऋति परे सन्धिर्वा स्यात्, त्रिविक्रमस्य वामनश्च वा—स्रष्टृ-ऋषभः, यादव-ऋषभः । "हिम-ऋतावपि ताः स्म भृशस्विदः" इति माघः (६।६१)। माला-ऋषभस्य, मालर्षभस्य इति च । पक्षे यथाप्राप्तं हर्यासनम् इत्यादि ॥९२॥

९३। न नित्यसमासे न चाविष्णुपदान्ते निषेधवामनौ ।

हर्यर्थम् ; कुमार्यौ ॥९३॥

---

म्भावित्वादिति चेत् तत्राह अन्यत्रेति । अन्यत्र चानित्यमिष्यत इति इत्यस्य मध्ये विलम्बोच्चारणे सन्धिर्न भवतीत्यर्थः । अन्यत्रे चेत्यनेन मध्ये विलम्बोच्चारणे सति सन्धिर्न स्यात्, अत्रतु सूत्रकरणान्मध्ये शीघ्रोच्चारणेऽपि विभाषा इत्यभिप्रायः । ननु यदि अन्यत्र चेत्यत्र मध्ये विलम्बोच्चारणे सन्धिर्विकल्प्यते, तर्ह्येकत्र-पाठात् अनित्यं सूत्रनिर्देश इत्यत्रापि मध्ये विलम्बोच्चारणे सन्धिर्विभाष्यते इति चेत् तत्राह सूत्रेषु त्विति । सूत्रेषु तु संहिता-संज्ञेषु च नेयं व्यवस्था, किन्तु सूत्रेष्वित्यत्र मध्ये शीघ्रोच्चारणेऽपि विकल्प्यते इति पूर्वोक्तस्य विषयविभागः प्रतिपादितः । तत्र सूत्रे यथा—कृष्णात् टा इन, ते आते अन्ते इत्यादिः । संहितायां यथा—या तुष्टा राजऋषये वृतादात् पुरवे वरमित्यादिः । अन्यत्र चेति—छन्दसि यथा—सत्त्वं रजस्तम इति अहंकारश्चतुर्भुज इत्यादिः ॥

९२ । ऋद्वय । सुगमम् । ऋषभः श्रेष्ठः । सूत्रे ऋतीति ऋरामे परे न ऋद्रूपे शब्दे इति सोदाहरणे न दृढीकृतमप्यतिदार्ढ्याय माघोदाहरणमुपन्यस्यति हिमेति । हिम-ऋतावपि ताः श्यामाः स्त्रियो भृशः स्विदः अतिशयेन स्वेदयुक्ताः स्म इत्यर्थः । पूर्वोक्तसूत्राणुसारेण यथाप्राप्तं हर्यासनमित्याद्यपि स्यादित्याह पक्ष इति ॥

९३ । न नित्य । नित्यसमासे सति निषेधवामनौ न भवतः । अविष्णुपदान्ते च तौ न भवतः । हर्यर्थमिति हरये इदमित्यर्थे इदं

९४। ङञः सन्ध्यभावः, ऊं वश्चेतौ।

९५। विष्णुगणाद्वो वा सर्वेश्वरे।

उ-इति, ऊं इति, विति; किमु उक्तम्, किम्बुक्तम्; किमु इति, किम्बिति इत्यपि बोद्धव्यम्। 'विष्णुगणात्' इति किम्? नञूक्तम्। अद्येव, हलीषा, प्राच्छर्तति, ऋणार्णम्, गोऽग्रम्, गवेन्द्र इत्यादयस्त्वाख्यातसमासयोर्वक्ष्यन्ते, दुर्गमत्वात् ॥९४-९५॥

**इति सर्वेश्वरसन्धिः।**

---

वाच्यर्थशब्देन चेति नित्य-समासः। कुमार्यावित्येकशेषे कृते कुमारीशब्दात् औ, 'इद्वयमेव यः सर्वेश्वरे' इति य-रामः। र-रामस्य पूर्वोर्धगमनम्, औ-रामस्य पूर्वविष्णुजने प्रवेशः॥

९४। उञः। सन्ध्यभावो भवति इति परे उञस्थाने ऊं भवति वश्च॥

९५। विष्णु। सर्वेश्वरे परे विष्णुगणादुत्तरस्य उञः सन्ध्यभावो भवति, तस्य वस्तु वा भवति। प्रथमसूत्रस्य क्रमेणोदाहरणत्रयं दर्शयति—उ इतीत्यादि। परसूत्रस्योदाहरणद्वयमाह—किमु उक्तमित्यादि। यद्यपि परत्र सर्वेश्वर इत्युक्तं तथापि पूर्वोक्तेति-शब्दस्य विशेषत्वात् इति परे विष्णु-गणादुत्तरस्यापि उञः पूर्वोक्तविधिरेवेत्यतः पुनरपि पूर्वोक्तोदाहरणान्युप-न्यस्यति किमु इतीत्यादिः। किन्तु किमु इतीत्यस्मात् परं किमुं इतीति-लिपिकरप्रमादात् पतितम्। विष्णुगणादन्यस्मात् परस्यतु न स्यादित्याह—विष्णुगणात् किमिति। पक्षेऽपि 'ओ-रामान्तानामनन्तानाञ्चाव्ययानां सर्वेश्वरे' इत्यनेनासन्धिरेव। नञूक्तमिति प्रत्युदाहरणन्तु बहुषु पुस्तकेषु दृश्यते, तत्तु लिपिकरप्रमादकृतम्। नञुक्तमित्येव ज्ञेयं, सन्धिनिषेधस्या-परिहार्यत्वात्, किम्बा उञ इति पृथङ्निर्देशात् ओऽन्तत्वेन केवलाव्ययत्वा-भावाच्च नञूक्तमिति प्रत्युदाहरणमपि संगच्छते। इतिशब्दे तु पूर्व-वदेवेत्याह—नञु इतीत्यादिः। दुर्गमाः सन्धयो बहवः सन्ति, तेषां दुर्गमत्व त् प्रथमतश्छात्राणामनधिकाराच्चात्रोदाहरणमनुचितमित्याह—अद्येवेत्यादयो वक्ष्यन्त इति। तत्र अद्येवेति 'अद्ययस्य हर एवेऽनवधारणे' इत्यनेन। हलीशेति 'शकन्ध्वादयोऽरामहरेण साधव' इत्यनेन। प्राच्छर्तीति 'उपेन्द्रार-

## अथ विष्णुजन-सन्धिः

९६। विष्णुदासो विष्णुपदान्ते हरिघोषे च हरिगदा।

विष्णुपदान्ते विषये, हरिघोषे च परे सति अविष्णुपदान्ते च, विष्णुदासनामा वर्णः सवर्ग-तृतीयः स्यात्, 'स्थाने सदृशतमः' इति न्यायेन—वाक्+अच्युतस्य=वागच्युतस्य ; वाक्+गोविन्दस्य=

---

स्त्रिबिक्रमो', 'नामधातौ तु वा तदलश्च, नतु त्रिबिक्रम-भवस्य' इत्यनेन। ऋणार्णमिति 'ऋण-प्र-वसन-वत्सर-वत्सतर-दश-कम्बलानां मिलित्वा वृष्णिन्द्र ऋणे' इत्यनेन। गोऽग्रमिति 'गोररामो वा सन्धि'रित्यनेन। गवेन्द्र इति 'गवेन्द्रो गवेशे अवेन साधु'रित्यनेन वक्ष्यत इति शेषः। इत्यादय इत्यादिशब्दात् पुनराख्याते 'संपर्युपेभ्यः सुट् करोतौ संस्काराद्यर्थेष्वि'त्यादिना संस्करोतीत्यादयो ज्ञेयाः। समासे तु 'ओत्वोष्ठयोस्तु वा' इत्यादीना श्यामोतुः, श्यामौतुरित्यादयो ज्ञेयाः॥

॥ सर्वेश्वरसन्धिं समापयति इतीति॥

अथेति। अथानन्तरं सर्वेश्वरसन्धि-र्निरूपणानन्तरं विष्णुजनसन्धिर्निरूप्यते इत्यर्थः॥

९६। विष्णु। विष्णुपदान्ते विषये वर्तमानो विष्णुदासनामा वर्णो हरिगदा-संज्ञो भवन् समानवर्गस्य तृतीयवर्णः स्यात्। हरिघोषे च परे सति अविष्णुपदान्ते चकारात् विष्णुपदान्तेऽपि वर्तमानः सः तद्वर्गतृतीयः स्यात्। ननु विष्णुदासो हरिगदा भवतीत्युक्तं, तर्हि कथं विष्णुदासः सवर्ग-तृतीयः स्यादित्युच्यते इति चेत् तत्र हेतुमाह—स्थान इति। आदेशो भवन् स्थाने उच्चारणस्थाने सदृशतमोऽतिशयसदृशो भवतीति न्यायार्थः। अतः करामादिर्गरामादिरेव नतु जरामादिः। एवमन्यत्रापि। क्रमेणोदाहरति वागित्यादि। ककुभ्शब्दो दिग्वाची। विष्णुपदान्तादन्यत्राविष्णुपदान्ते न स्यादित्यर्थः। तत्र चतुर्थ्यां यथा—उदेति। उदाहरणान्तरमविष्णुपदान्तोदाहरणमग्रे वक्तव्यमिति शेषः। तत्तु अवड्ढमित्यादि। नन्वत्र सर्वेषूदाहरणेषु सर्वेश्वर-गोपालयोरेव परनिमित्तता दृश्यते, तर्हि कथं विष्णुदासो विष्णुपदान्ते सर्वेश्वर-गोपालयोर्हरिगदेति न कृतम्? एवं

वाग्गोविन्दस्य ; षट्+गोपिका=षड्गोपिका ; भगवत्+इच्छा=भगवदिच्छा ; ककुभ्+विष्णोः=ककुब्विष्णोः। विष्णुपदान्तादन्यत्र न—(चतुर्थ्याम्) कंसजित्+ए=कंसजिते। उदाहरणान्तरमग्रे ॥९६॥

## ९७। हरिवेणौ हरिवेणुर्वा।

विष्णुपदान्ते वर्तमानो विष्णुदासो हरिवेणौ परे हरिवेणुर्वा स्यात् ; स च स्थानिवर्गपञ्चमः—जगत्+नाथः=जगन्नाथः, जगद्नाथः ; कृष्णगुप्+ञुङुवे=कृष्णगुम्ञुङुवे, कृष्णगुव्ञुङुवे ॥९७॥

## ९८। यादवमात्रे हरिकमलम्।

विष्णुदासो यादवे परे तद्वर्गप्रथमः स्यात्—वाक्+कृष्णस्य=वाक्कृष्णस्य। अत्र विष्णुपदान्ते हरिगदावाधनार्थमिदं सूत्रम्। 'मात्र'-ग्रहणादविष्णुपदान्ते च। उदाहरणन्त्वग्रे ॥९८॥

---

कृते हरिघोषस्यापि हरिगदान्तःपातात् सर्वमनवद्यं स्यात्। मैवं, तदुक्तानुरूपं सूत्रं यदि क्रियते, तदा सुवन्तपादे वाक् वाग्, षट् षडित्यादौ परनिमित्ताभावात् यथा 'विष्णुदासस्य हरिकमलं वा विरामे' इति सूत्रमपेक्षते तथा विष्णुदासस्य हरिगदा वा विरामे इत्यपेक्षा स्यात्, पुनर्हरिघोषे परेऽविष्णुपदान्ते विष्णुदासस्य हरिगदा न स्याच्चेत्यवधेयम् ॥

९७। हरि। अत्र वा-करणात् हरिवेण्वभावपक्षे 'विष्णुदासो विष्णुपदान्ते' इत्यनेन हरिगदा स्यात्। यस्य स्थाने य आदेशो विधीयते स आदेशस्तत्सदृशो भवतीत्याह—स चेति। स च हरिवेणुर्भवन् स्थानिवर्गपञ्चम एव भवति। स्थानी चासौ वर्गश्चेति स्थानिवर्गस्तस्य पञ्चम इति विग्रहः। कृष्णगुप्—कृष्णरक्षकः। ञुङुव इति शब्दार्थस्य ङुधातोरधोक्षजस्य ए-प्रत्ययान्तम् ॥

९८। यादव। यद्वर्गो विष्णुदासस्तद्वर्गः प्रथमः स्यादित्यन्वयः। अत्रापि 'स्थाने सदृशे'ति योज्यम्। ननु वाक् कृष्णस्येत्यत्र करामस्य स्थाने करामविधानेन किमिति चेत्तत्राह—अत्रेति। अत्र विष्णुदास इत्यनेन विष्णुपदान्ते प्राप्त-हरिगदाया वाधनार्थमिति योज्यम्। यादवे इत्यकृत्वा

९९। ततः शश्छो वा।

विष्णुदासात् परः शरामश्छरामो वा स्यात्—सुवाक्शौरिः, सुवाक्छौरिर्वा ; अप्शायी, अप्छायी वा ॥९९॥

१००। न श्च्युतेरिति वाच्यम्।

वाक्श्च्योतति ॥१००॥

१०१। हो हरिघोषः। •

विष्णुदासात् परो हरामस्तद्वर्गचतुर्थवर्णो वा स्यात्—वाक्+हरेः=वाग्घरेः, वाग्हरेः ; अच्+हलौ=अज्झलौ, अज्हलौ ; षट्+हरेः=षड्ढरेः, षड्हरेः ; तत्+हलिनः=तद्धलिनः, तद्हलिनः ; ककुभ्+हरस्य=ककुब्भरस्य, ककुब्हरस्य ॥१०१॥

१०२। द-तौ परवर्णौ ल-च-टवर्गेषु नित्यम्।

दरामस्तरामश्च ले परे, चवर्गे टवर्गे च परे, परो यो वर्णः, स एव नित्यं स्यात्—तद्+लक्ष्मीपतेः=तल्लक्ष्मीपतेः ; तत्+चतु-

---

यादवमात्र इति यत् कृतं तत्फलमाह—मात्रेति। उदाहरणन्त्वग्रे इति अग्रे आख्यातादौ तत्तु 'धत्ते, धत्से' इत्यादि ॥

९९। ततः। पूर्वत्र विष्णुदासस्योक्तत्वात् वृत्तौ तत इत्यस्य वाच्यभूतं विष्णुदासादित्युक्तम्। सुवाक्—सुवचनः। अप्शायी—जलशायी ॥

१००। नश्च्यु। विष्णुदासात् परश्च्युतेः शरामश्छरामो न स्यादिति वक्तव्यम्। श्च्युतधातुः क्षरणार्थः। श्च्योततीत्यत्र 'सस्य शश्चवर्गयोगे' इत्यनेन सरामस्य शरामप्राप्तौ प्रतिषेधोऽयम् ॥

१०१। हो। विष्णिृति यद्वर्गो विष्णुदासात् परो हस्तद्वर्गस्यैव चतुर्थो वर्णो वा स्यात्। वाग्घरे इत्यादौ हरिघोषे कृते पश्चात् 'विष्णुदास' इत्यनेन करामादेर्गरामादिः। हलिनो वलदेवस्य ॥

१०२। दतौ। छादयतीति छदधातुरपवारणार्थः। यादवेति 'यादवमात्रे हरिकमलमि'त्यनेन छरामस्य चराम इति शेषः। झङ्कार इति शब्दविशेषः। विष्णिृति 'विष्णुदासो विष्णुपदान्ते' इत्यनेन झरामस्य

र्भुजस्य = तच्चतुर्भुजस्य ; कंसजित् + छादयति = ('यादवमात्रे' स° प्र° ९६ इत्यादिना) कंसजिच्छादयति ; तत् + जनार्दनस्य = तज्जनार्दनस्य ; कंसजित् + झङ्कारः = कंसजिझ्झङ्कारः, ('विष्णुदासो' स° प्र° ९८ इत्यादिना) कंसजिज्झङ्कारः ; तद्-ञरामः तञ्ञरामो वा इति निवृत्तम् । 'तद्ञरामः' इत्यपि पाणिनीयाः ; तन्मते 'पूर्वत्रासिद्धम्' इति न्यायेन (पा८।२।१) तद्वर्गतृतीयस्यैव स्थितिरिति ; एवं णरामेऽपि । कंसजित् + टीकते = कंसजिट्टीकते ; कंसजित् + ढौकते = कंसजिड्ढौकते ॥१०२॥

१०३ । तश्च शे ।

तरामः शरामे परे चरामः स्यात्—तत् + शौरेः = तच्शौरेः ; पक्षे छत्वम्—तच्छौरेः ॥१०३॥

१०४ । नोऽन्तश्च-छयोः शरामो, विष्णुचक्र-पूर्वो विष्णुचाप-पूर्वो वा ।

नरामो विष्णुपदान्तश्चछयोः परयोः शरामः स्यात् ; स च विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा—भगवान् + चलति = भगवांश्चलति, भगवाँश्चलति ; भगवान् + छादयति = भगवांश्छादयति, भगवाँश्छादयति ॥१०४॥

---

जराम इति शेषः । वेति सूत्रे नित्यशब्दोपादानात् 'हरिवेणौ हरिवेणुर्वे'त्यनेनाणुवर्तमानस्य वा इत्यस्य निवृत्तिः । तद्ञराम इत्यपि भवतीति पाणिनीया वदन्ति । तन्मत इति पाणिनीयमते ञरामस्य चवर्गत्वं पूर्वत्रासिद्धं हरिवेणुत्वन्तु सिद्धमेव, अतो 'हरिवेणौ हरिवेणुर्वे'त्यनेन हरिवेणुर्भवति । पक्षेऽपि च-वर्गत्वासिद्धत्वात् दरामस्यैव स्थितिरिति । एवमिति एवमुक्तप्रकारेण पाणिनीयानां मते ण-रामेऽपि तद्वर्ग-तृतीयस्य स्थितिरिति । तत् + णरामः = तद्णराम इत्युदाहरणम् । टीकृ-ढौकृ-गतौ ॥

१०३ । तश्च । पक्षे छत्वमिति 'ततः शश्छो वा' इत्यनेनेति शेषः ॥

१०४ । नोऽन्तः । विष्णुपदान्त इति विष्णुपदान्तस्थित इत्यर्थाल्लभ्यते । चरधातुर्गत्यर्थः ॥

१०५। ट-ठयोः षरामः।

नरामो विष्णुपदान्तष्टठयोः परयोः षरामः स्यात्; स च विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा—भगवान्+टीकते=भगवांष्टीकते, भगवाँष्टीकते; भगवान्+ठक्कुरः=भगवांष्ठक्कुरः, भगवाँष्ठक्कुरः॥१०५॥

१०६। त-थयोः सरामः।

नरामो विष्णुपदान्तस्तथयोः परयोः सरामः स्यात्; स च विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा—भगवान्+तरति=भगवांस्तरति, भगवाँस्तरति; भगवान्+थुत्करोति=भगवांस्थुत्करोति, भगवाँस्थुत्करोति॥१०६॥

१०७। न त्से।

त्से परे नरामो विष्णुपदान्तो विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा सरामो न स्यात्—भगवान्त्सरुः। कान्-कान् इत्यत्र—कांस्कान् इति वाच्यं वा॥१०७॥

---

१०५। ट-ठयोः। टे उदाहरणमुक्त्वा ठे उदाह्रियते। भगवान् ठक्कुर इति॥

१०६। तथ। तरतीति तॄधातुरत्र तरणार्थः। तरणं नद्यादेः पारगमनम्। तत्तु अत्र यमुनाया ज्ञेयम्। यमुनामुत्तीर्य नन्दगोकुलमागत इत्युक्तदिशा॥

१०७। न त्से। नरामो विष्णुपदान्तः त्से परे विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा सरामो न स्यात्। त्सर-धातुश्छद्मगत्यर्थः॥

कान्। सुगमम्। कानो द्विरुक्ताविति लक्षणेन द्विरुक्तेः कानो नकारः सानुस्वारः सानुनासिकश्च सकारो भवतीत्येके। अतस्तन्मते शसन्त किंशब्दस्य वीप्सादौ द्विरुक्तौ सत्यां 'प्राग्द्वि'रित्यनेन पूर्वकालो नकार एव सानुस्वारादिक-हलन्तः सकारः स्यात्। द्विरुक्तेरन्यत्र वृक्षान् कान् कानेष्यति ग्रामानिति प्रत्युदाहरणञ्च। अस्माकं मते तु वक्तव्यस्य विकल्पत्वात् यस्मिन् पक्षे सानुस्वारः सरामो न स्यात्, तस्मिन् पक्षे एवेदं प्रत्युदाहरणं सम्भवत्येवेत्यतो न तदर्थः प्रयास इति। 'नॄ़नः पे सविष्णु-

## १०८। प्रशानो नस्य चादौ हरिवेणुः।

विष्णुपदान्तस्य प्रशानो नरामस्य च-छ-ट-ठ-त-थेषु परेषु परवर्णानुरूपो हरिवेणुर्भवति—प्रशान्+चतुर्भुजः=प्रशाञ्चतुर्भुजः ; प्रशान्+छादयति=प्रशाञ्छादयति ; प्रशान्+टीकते=प्रशाण्टीकते ; प्रशान्+ठक्कुरः=प्रशाण्ठक्कुरः ; प्रशान्+तरति=प्रशान्तरति ॥१०८॥

## १०९। ले लराम एव।

नरामो विष्णुपदान्तो ले परे लरामः स्यात्—भगवान्+लीलायते=भगवाँल्लीलायते। अत्र 'स्थाने सदृशतमः' इति न्यायेन सानुनासिक एव लरामः स्यात्। अत्र य-व-ला हि द्विविधा मताः—सानुनासिकाः, निरनुनासिकाश्च ॥१०९॥

---

चक्रः सविष्णुचापश्च सो वाच्यः'। स इत्यराम उच्चारणार्थः समासे सति कार्यान्तराभावात् विष्णुसर्गश्च सः। नॄँ पिनष्टि, नॄँः पिनष्टि। पक्षे उपध्वानीयः–नॄँ पिनष्टि, नॄँः पाहीत्यादिः ॥

१०८। प्रशा। विष्णुपदान्तः पूर्वतोऽनुवर्तत इति वृत्तौ विष्णुपदान्तस्येति सूत्रस्थादि-शब्दात् च-छ-ट-ठ-त-थेष्विति च व्याख्यातम्। प्रपूर्वः शमशान्तावित्यस्मात् शाम्यतीति क्विप्, तत् पश्चात् 'हरिवेणून्तोद्धवस्य त्रिबिक्रमः क्वौ कंसारि वैष्णवे चे'त्यनेन त्रिबिक्रमः। 'धातोर्मो नो विष्णुपदान्ते म-वयोश्चे'त्यनेन तु मस्य नः। 'केवलस्यप्रत्ययवे'रिति क्विप् लोपः। 'राधा-विष्णुजनाभ्यामि'त्यनेन सोर्हरः, प्रशानिति ॥

१०९। लेल। सुगमम्। अत्रेति 'स्थाने सदृशतम' इति न्यायेन नरामस्य मुखनासिकाभवत्वात् लरामोऽपि भवन् सानुनासिकोऽर्थात् सानुनासिकत्वेन च लरामस्य मुखनासिकाभवत्वं प्रतिपादितम्। ननु लरामस्य स्वभावत एव सानुनासिकत्वमप्यस्ति, तर्हि न्यायाङ्गीकारेण किमिति चेत्तत्राह य-व-ला हीति। न्यायाङ्गीकारादत्र कृत-लरामस्य सानुनासिकत्वमेव भवति। अन्यथा परवर्णानुरूप-निरनुनासिकत्वमपि स्यादित्यर्थः।

११०। डढ। गरुत्मन्निति हे गरुडेत्यर्थः। डयस इति डीङ विहायसा गतावित्यस्य रूपम्। चक्रिन्निति हे कृष्णेत्यर्थः। णमिति

११० । ड-ढ-णेषु णरामः ।

नरामो विष्णुपदान्तो ड-ढ-णेषु परेषु णरामः स्यात्—गरुत्मन्+डयसे=गरुत्मण्डयसे ; चक्रिन्+ढौकसे=चक्रिण्ढौकसे ; शार्ङ्गिन्+णंकुरु=शार्ङ्गिण्णंकुरु ॥११०॥

१११ । ज-झ-ञ-शरामेषु ञरामः ।

नरामो विष्णुपदान्तो ज-झ-ञ-शरामेषु परेषु ञरामः स्यात्—भगवान्+जयति=भगवाञ्जयति ; भगवान्+झषरूपी=भगवाञ्झषरूपी ; भगवान्+ञुङ्वे=भगवाञ्ञुङ्वे ; भगवान्+शूरः=गभवाञ्शूरः ॥१११॥

११२ । शे चान्तो वा ।

नरामो विष्णुपदान्तः शरामे परे चरामान्तो ञरामः स्याद्वा—भगवान्+शूरः=भगवाञ्च्शूरः, भगवाञशूरः ; छत्वे—भगवाञ्च्छूरः ॥११२॥

११३ । मो विष्णुचक्रं विष्णुजने ।

मरामो विष्णुपदान्तो विष्णुजने परे विष्णुचक्रं स्यात्—कृष्णम्+स्मरति=विष्णुचक्रस्य पूर्वोर्धगामित्वं लोकात्, कृष्णं स्मरति । विष्णु-

---

सुखमित्यर्थः । णश्च निर्वृतिवाचकमिति शास्त्रान्तरम् । तेन णं कुर्विति णरामं कुरु सुखं कुरु वेत्यर्थः ॥

१११ । ज झ । झषरूपी मत्स्यरूपीत्यर्थः ।

११२ । शे चा । चरामान्तो ञरामः स्याद् वा, पक्षे केवल ञ-रामश्च । छत्व इति । ततः शश्छो वेत्यनेन छत्वे सतीत्यर्थः ॥

११३ । मोवि । अन्तरालपाठाद्विष्णुचक्रस्य सर्वेश्वरत्वं विष्णुजनत्वञ्चास्तीति वक्षमानरीत्या विष्णुचक्रस्य सर्वेश्वरत्वस्वीकारे कस्याप्यूर्धगमनं न सम्भवति । विष्णुजनत्वस्वीकारे तु परोर्धगमनमेव सम्भवतीति सहेतुक-पूर्वोर्धगमनं प्रतिपादयन्नाह—विष्णिृति लोकादिति

जनादन्यत्र तु न—कृष्णम् + इच्छ = कृष्णमिच्छ। कथं 'किम्बुक्त', 'कृष्णगुम्ञुङुवे' ? 'असिद्धरूपं न त्याज्यम्' (स॰ प्र॰ ४३) इति प्रतिज्ञासिद्धयर्थमिदं तत्रैव कर्तुं योग्यमपि यन्न कृतम्, तस्मात्तत्राकरणान्न विष्णुचक्रमिति ॥११३॥

११४। विष्णुचक्रस्य हरिवेणुर्विष्णुवर्गे विष्णुपदान्तस्य तु व्रा।

विष्णुचक्रस्य परवर्णानुरूपो हरिवेणुः स्यात्, विष्णुवर्गे परे ; विष्णुपदान्तस्य तु विकल्पः। अविष्णुपदान्तोदाहरणं वक्ष्यते। कृष्णं कीर्तयति, कृष्णङ्कीर्तयति वा ; कृष्णं भजति, कृष्णम्भजति वा ; संसारं तरति, संसारन्तरति वा। अत्र त-थयोः सरामनिषेधो वक्तव्यः। 'विष्णुवर्गे' इति किम् ? संवत्सरः ॥११४॥

लौकिकव्यवहारादित्यर्थः। अत्र 'मो विन्दुरवसाने' इति कस्यचिल्लक्षणम्। तत्तु न बहुसम्मतं, सर्वेश्वरे परे सति पुनस्तस्य म-विधानलक्षणापेक्षत्वात् द्राविडादि-लिपौ विरामे खण्डमकारस्यैव स्थितित्वाच्च। आक्षिपति—कथमिति। ननु किम्बुक्तं, कृष्णगुम्ञुङुव इत्यत्र वराम-ञरामयोर्विष्णुजनयोः परत्वे पूर्वम-रामस्य विष्णुचक्रं कथं न स्यादित्यत्र सिद्धान्तमाह—असिद्धेति। इदं 'मो विष्णुचक्रमि'ति सूत्रं तत्रैवेति 'विष्णुगणाद्वो वा सर्वेश्वरे' इत्यस्मात् पूर्वस्मिन्नेवेत्यर्थः ॥

११४। विष्णु। विवरणं विष्णिूति विष्णुचक्रस्येत्यस्मात् पूर्वमविष्णुपदान्तस्येति योज्यं, परत्र विष्णुपदान्तस्येत्युक्तत्वात्। विष्णुवर्गे परे इति मध्यपाठात् उभयत्रान्वेति। विकल्प इत्यस्य च पूर्वस्थित-हरिवेणुना सहान्वयः। सूत्रे तु शब्देन भिन्नोपक्रमात् अविष्णुपदान्तस्य विष्णुचक्रस्य नित्यं हरिवेणुर्भवति। अतएवाविष्णुपदान्तोदाहरणानामपेक्षत्वे आह—अविष्णिूति वक्ष्यत इत्यतः पूर्वमग्र इति द्रष्टव्यम्। उदाहरणन्तु तत्र—गन्ता, मन्तेत्यादि। ननु 'नामधातु-प्रत्यय-विष्णुपदानामादेशस्य तज्जातिवद्भावः सर्वत्रैवे'ति वक्ष्यमाणरीत्या विष्णुपदान्तस्थ-विष्णुचक्रस्यादेशो यो हरिवेणुस्तस्यापि विष्णुपदान्तस्थितत्वात् संसारन्तरतीत्यत्र

११५। य-व-लेषु सविष्णुचाप-पररूपञ्च मन्यन्ते।

सँव्वत्सरः, यँय्यम्यते, सँल्लुनाति ॥११५॥

११६। द्विः सर्वेश्वरमात्राच्छः।

अविष्णुपदान्तादपि सर्वेश्वरात् परश्छरामो द्विर्भवति—कृष्ण + छत्रम् = कृष्णच्छत्रम् ॥११६॥

११७। विष्णुपदान्तात् त्रिबिक्रमाद्वा।

विष्णुपदान्तात् त्रिबिक्रमात् परश्छरामो द्विर्वा भवति—यमुना-छाया, यमुनाच्छाया वा ॥११७॥

---

'तथयोः सरामः' इत्यनेन विष्णुचक्रादिपूर्वः सरामः कस्मान्न स्यादित्यस्य प्रकारान्तरेण सिद्धान्तं कर्तुमशक्तः सन् निषेधो-वक्तव्यमाह—अत्रेति। विष्णुचक्रस्येत्यनेनात्रविहिते नरामे सति 'त-थयोः सरामः' इत्यनेन प्राप्त-सरामस्य निषेधो वक्तव्यः। अनेन 'लाक्षणिक-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं' सूचितम्। अतः संसारन्तरतीत्यादौ 'त-थयोः सरामः' इति न प्रवर्तते, सरामस्त-थयोरेव भवति, तथापि त-थयोरिति कृतं स्पष्टार्थम्॥

११५। यव। यवलेषु परेषु विष्णुचक्रस्य स्थाने सविष्णुचापं परवर्ण-रूपञ्च भवतीति मन्यन्ते पूर्वाचार्या इति शेषः। सविष्णुचापयवला भवन्तीत्यर्थः। यँय्यम्यत इति 'विणुजनाद्येकसर्वेश्वरादि'त्यनेन यङ, 'धातो-र्द्विर्वचनमधोक्षज-सन्नङ-यङ्ष्वि'त्यनेन द्विरुक्तिः, 'हरिवेण्वन्तानां जप-जभ-दह-दंश-भञ्जाञ्वे'ति-नरारामाद्विष्णुचक्रम्। सँल्लुनातीति संपूर्वो लूङ् छेदने इत्यस्मात् तिप्, 'क्र्यादेः शपः श्ना' इति श्ना, 'प्वादीनां वामनः शिवे' इति वामनः॥

११६। द्विः। सूत्रे मात्रशब्दोपादानात् वृत्तावपिशब्द उपन्यस्तः, तेन विष्णुपदान्तादविष्णुपदान्ताच्चेति लभ्यते॥

११७। विष्णु। अविष्णुपदान्तात् त्रिबिक्रमात्तु पूर्वेणैव नित्यं स्यात्, मात्रग्रहणात्। यमुनाच्छायेति छायात्र कान्तिः। 'छाया-सूर्यप्रिया-कान्तिः प्रतिविम्बमनातपः' इति नानार्थवर्गः॥

११८। आङ्-माङ्भ्यां नित्यम्।

आङ-माङभ्यां परश्छरामो नित्यं द्विर्भवति ; ङरामस्याप्रयोगः—आच्छादयति, माच्छिदत् ॥११८॥

११९। वामनात् ङ-ण-ना द्विः सर्वेश्वरे।

वामनात् परा ङ-ण-ना विष्णुपदान्ताः सर्वेश्वरे परे द्विः स्युः—पर्यङ + अनन्तः = पर्यङङनन्तः ; सुगण् + अनन्तः = सुगण्णनन्तः ; कुर्वन् + अस्ति = कुर्वन्नस्ति। वामनादन्यत्र तु न—भगवान् + इह = भगवानिह। 'उणादि'-'तिङन्त'-'सनन्ता'दयस्तु सूत्रनिर्देशबलात् ॥११९॥

१२०। विष्णुजने विष्णुजनो वा, ह-रौ विना।

वामनात् परो विष्णुजनो विष्णुजने परे द्विर्वा स्यात्, ह-रौ तु द्विर्न भवतः—दध्युपेन्द्रस्य, दद्ध्युपेन्द्रस्य वा ॥ १२० ॥

---

११८। आङ। आङमाङोरपि विष्णुपदान्तत्वात् विष्णुपदान्तादित्यनेन विकल्पे प्राप्ते नित्यतार्थमिदम्। ङरामस्याप्रयोग इत्यस्मात् परं क्रियायोगे वक्ष्यत इति योज्यम्। माच्छिददिति छिद-धातुर्द्वैधिकरणार्थः ॥

११९। वाम। विष्णुपदान्तस्था एव ङणना द्विः स्युरिति स्वाभिप्रायव्यक्तार्थं वृत्तौ विष्णुपदान्ता इत्युक्तम्। पर्यञ्चतीति परि पूर्वोऽन्चु—गतौ पूजायाञ्चेत्यस्य क्विवन्तस्य पर्यङिति स्वन्तं रूपम्। सुगणयतीति सु-पूर्वो गण—संख्याने इत्यस्य चौरादिकस्य सुगन्नित्यपि तथा ? कुर्वन्निति डुकृञ्करणे इत्यस्य शत्रन्तस्य रूपम्। वामनेति वामनादन्यस्मात् त्रिबिक्रमात् परभूता ङणना द्विर्न स्युर्वामनोपादानादित्यर्थः। ननु उणादीत्यादीषु वामनो विद्यत एव। तर्हि कथं ङणना द्विर्नस्युरित्यत्र समादधाति उणादीति। उणादि-तिङन्त-सनन्तादयः प्रयोगाः पुनर्द्विवचनयुक्ता न स्युरित्यर्थः। अन्यतस्तु न इत्यस्मात् नञत्रानुसञ्जनीयम्। द्वित्वाभावे साधकहेतुमाह—सूत्रेति। 'अनित्यं सूत्रनिर्देशे' इत्यनेन सूत्रनिर्देशबलादिति द्रष्टव्यम्।

१२०। विष्णु। सुगमम्। हरौत्विति हराम-ररामाविति ज्ञेयम् ॥

१२१। हरिमित्राद्विष्णुगणो, विष्णुगणाद्हरिमित्रं, शौरितः सात्वतः, सात्वताच्छौरिर्द्विर्वा सर्वेश्वरे इति वाच्यम् ।

यमुनल्क्कारायते, दध्ध्ययुपेन्द्रस्य, भगवांश्च्छादयति, सुवाक्श् शौरिः। अत्र छोऽपि न मन्यते ; पक्षे पूर्ववत् ॥ १२१ ॥

१२२। ररामात्, सर्वेश्वरे तु हरिगोत्रं विना।

ररामात् परो विष्णुजनो, विष्णुजने परे, द्विर्वा स्यात्, सर्वेश्वरे परे तु हरिगोत्रं विना—हर्य्यासनं, हर्यासनं वा ; कार्ष्ष्णं, कार्ष्णं वा ॥१२२॥

१२३। हाच्च सर्वेश्वरतः परादिति व्यक्तव्यम्।

सर्वेश्वरतः परात् हादुत्तरो विष्णुजनो द्विर्वा स्यात्—ब्रह्मा, ब्रह्ममा वा। नेह—ह्नुते। 'सर्वेश्वरे तु' इत्यादि किम् ? परामर्शः, वार्षभानव्याः, अर्हति ॥ १२३ ॥

---

१२१। हरि। सर्वेश्वरे परे हरिमित्रात् परो विष्णुगणो द्विर्वा स्यात्, विष्णुगणात् परं हरिमित्रं द्विर्वा स्यात्, शौरितः परः सात्वतो द्विर्वा स्यात्, सात्वतात् परः शौरिर्द्विर्वा स्यादिति वक्तव्यम्। अत्र छोऽपि न मन्यत इति ततः शश्छो वेत्यनेनेति शेषः। पक्षे पूर्ववदिति यमुना—ऌकारायते = यमुनल्कारायते इत्यादिः ॥

१२२। ररा। ररामात् परो विष्णुजनो विष्णुजने परे द्विर्वा स्यात्, सर्वेश्वरे परे तु ररामात् परो विष्णुजनो द्विर्भवन् हरिगोत्रं विना स्यादिति भावः। अतएव सर्वेश्वरे हर्य्यासनमिति विकल्पेन दर्शितम्। विष्णुजने कार्ष्ण्यमिति च किन्त्विदं हरिगोत्रस्योदाहरणम्। 'वर्णाद् दृढादेश्च नृसिंह य इमनिश्च' इत्यनेनात्र कृष्णशब्दात् नृसिंह यः। 'आदि सर्वेश्वरस्य वृष्णीन्द्रो नृसिंह' इति वृष्णीन्द्रः ॥

१२३। हाच्च। सर्वेश्वरतः परात् परभूतात् हात् हरामाच्चोत्तरो विष्णुजनो द्विर्वा स्यात्, सर्वेश्वरे विष्णुजने चेति वाच्यम्। बृहि वृद्धौ

१२४। हस्तु विष्णुजने च न।

अर्ह्यते। 'विष्णुजने' (स० प्र० १२०) इत्यादौ द्वित्वप्रकरणे 'सर्वत्र साकल्यस्य' इति अद्वित्वपक्षानुल्लेखस्तस्यां प्रमादः ॥ १२४ ॥

१२५। विष्णुजनाद्विष्णुदासस्यादर्शनं सवर्गे विष्णु-दासे।

विष्णुजनात् परस्य विष्णुदासस्यादर्शनं वा स्यात्, सवर्गे विष्णुदासे परे—भगवाञ्च्छूरः, भगवाञ्छूरो वा। अस्य पूर्वत्राकरणं, विकल्पेनावश्यकत्वाभावात् ॥ १२५ ॥

---

इत्यस्मात् मनिप् ब्रह्मेति। ह्नुत इति ह्नु-धातुरपनयनार्थः। अत्र हरामस्य सर्वेश्वरतः परत्वाभावस्तेन तत्पर-विष्णुजनो द्विर्न स्यात् इत्यवधेयम्। सर्वेश्वरेत्वित्यादि किं किमर्थं सर्वेश्वरेतु हरिगोत्रं द्विर्न स्यात्? एकेन वाक्येन उदाहरणत्रयमाह—परामर्शेत्यादि। वार्षभानव्या राधायाः परामर्शोऽर्हति योग्यो भवतीत्यर्थः ॥

१२४। हस्तु। ररामात् परो हरामस्तु विष्णुजने च परे द्विर्न स्यात्। सर्वेश्वरे द्विर्न स्यादिति पूर्वेणैवोक्तम्। अर्ह्यते इति अर्ह्—पूजायाम्। मतान्तरं दूषयति—विष्णिति, 'विष्णुजने विष्णुजनो वा हरौ विना' इत्यादौ द्वित्वप्रकरणे सर्वत्र साकल्यस्य द्वित्वं स्यादिति या वक्तिः तया सर्वत्र साकल्यस्येति पदद्वयेनाद्वित्वपक्षानुल्लेखोऽद्वित्वपक्षस्योल्लेखाभावः कृत इति तस्यां प्रक्रियाकौमुद्यां प्रमादो यतस्तन्मतेऽपि यथायोग्यमद्वित्वपक्षोल्लेखो योग्यः। 'प्रमादोऽनवधानतेत्यमरः' ॥

१२५। विष्णु। ननु 'शे-चान्तो वे'ति लक्षणात् परमिदं सुत्रं कस्मान्नकृतम्? तस्मात् परत्रास्मिन् कृते सति भगवाञ्छूर इत्युदाहरणमपि तत्रैव दातुं शक्यं स्यादिति चेत्तत्राह—अस्येति। इदं सूत्रमुदाहरणञ्च तत्र यदि न कृतं तर्हि का क्षति? अस्य विकल्पेनावश्यकत्वाभावात्।

१२६। अव्यक्तानुकरणशब्दानामद्भागस्य हर इतौ, हरिगदानिषेधश्च।

पटत्+इति=पटिति ; घटत्+इति=घटिति ॥ १२६ ॥

१२७। नैकसर्वेश्वरत्वे।

स्रत्+इति=स्रदिति ॥१२७॥

१२८। न द्विस्त्रिरुक्तावन्त्यस्य, तरामस्य तु वा।

पटत्पटत्+इति=पटत्पटदिति, पटत्पटेति वा। कथं 'वड़भी वलभी, पर्यङ्कः पल्यङ्कः, रघुः लघुः, कपिरिका कपिलिका' इत्यादि ? डलयो रलयोश्च प्राय एकत्वश्रवणात् ॥ १२८ ॥

---

१२६। अव्य। अनुक्रियते यैस्तेऽनुकरणा यद्रूपास्तन्मात्रबोधकाः, शब्द्यते प्रकाश्यते यैस्ते शब्दाः, आकाशस्य गुणः शब्दो वर्णो ध्वन्यात्मक-द्विधेत्यनेनाकाशस्य प्रकाशत्वात्, तेऽत्र वर्णात्मका एव गृह्यन्ते। अव्यक्ताश्च ते अनुकरणाश्चेति अव्यक्तानुकरणाः, अव्यक्तानुकरणाश्च ते शब्दाश्चेति अव्यक्तानुकरणशब्दाः, तेषामिति शब्दे परे अद्भागस्य हरो भवति। विष्णुपदान्तत्वात् प्राप्तहरिगदाया निषेधश्च ॥

१२७। नैक। एकसर्वेश्वरत्वे सति अव्यक्तानुकरणशब्दानामितौ परे अद्भागस्य हरो न भवति। हरिगदा निषेधश्च यथा—स्रदिति एवं चडिति च।

१२८। न द्विः। द्विस्त्रिरुक्तौ सत्यामव्यक्तानुकरणशब्दानामितौ परे अद्भागस्य हरो न भवति, अन्त्यस्य तरामस्य तु हरो वा भवति। पटत्पटेति वेत्यत्र तरामे हरे सति 'अद्वयमि'त्यनेन एरामः। ननु वडभीत्यादिः कथं डराम-मध्यो लराम-मध्यश्च तथा रराम-मध्यो लराम-मध्यश्च वेति पूर्वपक्षे सिद्धान्तमाह—डलयोरिति। एकत्वश्रवणादिति एकत्वेन एकरूपत्वेन श्रवणं एकत्वश्रवणं तस्मात्। प्रायो वाहुल्यं यथा स्यात्तथा डलयो रलयोश्च एकत्वश्रवणाद्धेतोः डरामस्य लरामो ररामस्य च लरामः सिद्ध एवेति भावः। कपिलिकेत्यादीत्यत्रादिशब्दोपादानं रोहिणी लोहिनीत्यादीनां संग्रहार्थम् ॥

१२९। सरामे ट-नाभ्यां तुग्वेति वक्तव्यम्।

षट्+साधवः=षट्त्साधवः; भगवान्+साधुः=भगवान्त्साधुः ॥ १२९ ॥

१३०। शौरौ ण-ङाभ्यां ट-कौ वेति वक्तव्यम्।

सुगण्+शङ्कर=सुगण्ट्शङ्करः; प्राङ+स्वभूः=प्राङ्क्स्वभूः; प्राङ+षष्ठः=प्राङ्क्षष्ठः ॥ १३० ॥

**इति बिष्णुजनसन्धिः**

---

१२९। सरामे परे सति टनाभ्यामुत्तरे तुग्वा भवतीति वाच्यम्। ननु षटत्साधव इत्यत्र 'षात्परस्य टवर्गयुक्तस्य च तवर्गस्ये'ति वक्ष्यमाणेन तरामस्य टरामः कथं न स्यात्, सत्यं, यद्यत्र वक्ष्यमाणेन त इति टः स्यात् तदा टरामद्वयरूपं 'विष्णुजने विष्णुजनो वे'त्यनेन द्वित्वकृतेऽपि सिद्धं स्यात्। तस्मादत्र सूत्रकरणात् तरामस्यैव स्थितिरिति। नन्वेतदस्तु भगवान्त्साधुरित्यत्र 'त-थयोः सरामः' इत्यनेन नरामस्य विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा सरामः कस्मान्न स्यात्? उच्यते, किदागमस्य पूर्वसम्बन्धित्वाद् नरामस्य विष्णुपदान्तस्थितत्वाभावस्तेन विष्णुचक्रादिपूर्वः सरामो न स्यात्, किम्बा 'नत्से' इति प्रतिषेधेन ।।

१३०। शौरौ। शौरौ परे नङभ्यामुत्तरे यथाक्रमं टकौ वा भवत इति वचनीयम्। सुगणयतीति सुगणिति प्राञ्चतीति प्राङिति च क्विवन्तस्य रूपम्। स्वेनैव भूयते इति भावे क्विप् स्वभूर्विष्णुः ।।

विष्णुजनसन्धिं समापयति इतीति। इत्येवं विष्णुजनसन्धिर्दर्शितः ।।

## अथ विष्णुसर्ग-सन्धिः

### १३१। विष्णुसर्गो जिह्वामूलीयः क-खयोर्वा।

विष्णुसर्गः क-खयोः परयोर्जिह्वामूलीयो वा स्यात्; स च वज्राकृतिलेखो जिह्वामूलभवो वर्णविशेषः। अस्य विष्णुजनवत् परोर्ध्वगामित्वं, लोकात्। एवमुपध्मानीयस्य च। कः कृष्णः, क × कृष्णः; कृष्णः खेलति, कृष्ण × खेलति॥ १३१॥

### १३२। प-फयोरुपध्मानीयः।

विष्णुसर्गः प-फयोः परयोरुपध्मानीयो वा स्यात्; स च गजकुम्भाकृतिलेख ओष्ठभवो वर्णविशेषः। कृष्णः परमः कृष्ण ⌒ परम :वा, कृष्णः फलम्, कृष्ण ⌒ फलम् वा॥ १३२॥

### १३३। न शौरि-परेषु तेषु।

शौरिपरेषु तेषु क-ख-प-फेषु परेषु विष्णुसर्गस्थाने जिह्वामूलीयादिन स्यात्—कृष्णः क्षीरस्यति, कृष्णः प्सांति।

---

अथेति अथानन्तरं विष्णुसर्गसन्धिर्दर्श्यते॥

१३१। विष्णु। लिखनप्रकारमुच्चारणप्रकारञ्च निरूपयति स च इति। वज्रस्याकृतिरिव लेखो लिखनं यस्येति विग्रहः। जिह्वामूलीय इत्यस्य जिह्वामूलभव इति वाक्यप्रदर्शनम्। विष्णुसर्गभवत्वेन जिह्वामूलीयस्यापि विष्णुसर्गवत् सर्वेश्वरत्वं विष्णुजनत्वञ्च सम्भवतीति विष्णुजनत्वमनेन परोर्ध्वगमनं प्रतिपादयति अस्येति। अस्य जिह्वामूलीयस्य लोकादिति लौकिक व्यवहारादित्यर्थः अति दिशति एवमिति। एवंप्रकारेण उपध्मानीयस्य च परोर्ध्वगमनं ज्ञेयम्॥

१३२। पफ। उप समीपे ध्मायतेऽनेनेत्युपध्मान ओष्ठः तस्मिन् भव उपध्मानीय इति। पूर्ववदस्यापि लिखनप्रकारमुच्चारणप्रकारञ्चाह, स चेति, स इति उपध्मानीयः। गजेति—गजो हस्ती तस्य कुम्भयोः शिरसः कुम्भाकारपिण्डयोराकृतिरिव लेखो लिखनं यस्येति विग्रहः। कुम्भौ तु पिण्डौ शिरस इत्यमरः। औष्ठ्य इति भवार्थ नृसिंह यान्तम्॥

अत्र समासकार्ये षसौ च वक्ष्येते (समा° प्र° २०१७); यथा—निष्कृष्णः, रक्षस्पाशः इत्यादि ॥ १३३ ॥

१३४। च-छयोः शरामः।

विष्णुसर्गः च-छयोः परयोः शरामः स्यात्—कृष्ण+चरति = कृष्णश्चरति ; कृष्णः+छादयति = कृष्णश्छादयति ॥ १३४ ॥

१३५। ट-ठयोः षरामः।

विष्णुसर्गः ट-ठयोः परयोः षरामः स्यात्—कृष्णः+टीकते = कृष्णष्टीकते ; कः+ठरामः = कष्ठरामः ॥ १३५ ॥

१३६। त-थयोः सरामः।

विष्णुसर्गः त-थयोः परयोः सरामः स्यात्—कृष्णः+तरति = कृष्णस्तरति ; कृष्णः+थुत्करोति = कृष्णस्थुत्करोति ॥ १३६ ॥

---

१३३। नशौ। शौरिः परो येभ्यस्तेषु क-ख-प-फेषु परेषु विष्णुसर्गस्य स्थाने जिह्वामूलीयादिर्न स्यादिति। यथासम्भवत्वात् क-खयोर्जिह्वामूलीयो न स्यात्, प-फयोरुपध्मानीयो न स्यादित्यर्थः। क्षीरस्यतीति लालसायां क्षीरशब्दस्य क्षीरस्येति क्यन्नन्त निपातात् तिप्, क्षीरं लालसयेच्छतीत्यर्थः। प्सा—भक्षणेऽदादिरित्यस्य प्सातीति। अत्रेति क-ख-प-फेषु विष्णुसर्गस्य विष्णुसर्गे वा समासकार्ये षसौ च वक्ष्यते इति। 'विष्णुसर्गस्य स' ईश्वरात्तुषः क-ख-प-फेषु स च स्थानिवदित्यनेनेति शेषः। निष्कृष्ण इति निष्क्रान्तः कृष्णादिति 'निरादयः पञ्चम्या' इत्यनेन मध्यपदाऽप्रयोगी कृष्णपुरुषः। रक्षस्पाश इति, निन्द्यरक्ष इति, 'गर्ह्ये पाश' इति पाशप्रत्यय स्तद्धितः ॥

१३४। चछ। सुगमम् ॥

१३५। टठ। सुगमम् ॥

१३६। तथ। सुगमम्। थुत्करोतीत्यत्र, थुदिति कर्मपदमव्यक्तानुकरणमव्ययम्।

## १३७। न त्से।

कःत्सरुः ॥ १३७ ॥

## १३८। शौरिषु शौरिर्वा।

विष्णुसर्गः शौरिषु परेषु परो यो वर्णः स एव वा स्यात्—कृष्णः शरणम्, कृष्णश्शरणम् वा; हरेः षण्डः, हरेष्षण्डः वा; हरेः सुरभिः, हरेस्सुरभिः वा ॥ १३८ ॥

## १३९। सात्वत-परत्वे लोप्यश्च।

सात्वतः परो येभ्यस्तेषु शौरिषु परेषु विष्णुसर्गः पक्षे लोप्यश्च स्यात्—हरेः+स्थलम्=हरेस्थलम्, हरेस्स्थलम् वा ॥ १३९ ॥

## १४०। आदराम-गोपालयोर्गनित्यम्।

अरामात् परो विष्णुसर्ग उरामः स्यात्, अराम-गोपालयोः परायोः—कृष्णः+अत्र=कृष्णोऽत्र, कृष्णः+गच्छति=कृष्णो गच्छति। अराम निर्देशात् महापुरूषे तु न—आगच्छ तीर्थश्रवा३ अत्र। विष्णुसर्गलोपो वक्ष्यते ॥ १४० ॥

---

१३७। न त्से। त्से परे विष्णुसर्गः सरामो न स्यात्। त्सरुः खड्गादि मुष्टिः स्यात् ॥

१३८। शौरि। शौरिषु परेषु विष्णुसर्गः परवर्णानुरूपः शौरिर्वा स्यादित्यर्थः। प्रतिपादकः परो यो वर्णः स एव स्यादिति। शरणमिति रक्षितेत्यर्थः। शरणं 'गृहरक्षित्रो'रिति नानार्थवर्गः। षण्डो बृषभेदः, 'षण्डो गोपति रिटचरः' इत्यमरः। सुरभिः स्त्री गौः, 'सुरभिर्गविच स्त्रिया'मिति नानार्थवर्गः' ॥

१३९। सात्व। सात्वतः परो येभ्यस्येषु शौरिषु परेष्विति फलितार्थकथनम्। शौरीणां सात्वतपरत्वे सतीत्यक्षरार्थः ॥

१४०। आत्। आदिति अ-शब्दात् 'कृष्णात् ङसेरादि'ति आत्। कृष्णोऽत्रेति उरामे कृते 'उद्वये ओ' इति ओरामः। 'ए-ओभ्यामस्य हरो विष्णुपदान्ते' इत्यरामो हरः। अरामेति सूत्रेऽरामनिर्देशात् महापुरुषे सति

१४१ । अद्वय-भो-भगो-अघोभ्यो लोप्यः, सर्वेश्वरे तु यश्च, न च लोप्ये सन्धिः ।

अ-आ इति वर्णद्वयात् 'भोः-भगोः-अघोः'-शब्देभ्यश्च परो विष्णु-सर्गो लोप्यः स्यात्, सर्वेश्वर-गोपालयोः परयोः ; सर्वेश्वरे तु परे पक्षे यरामश्च स्यात् ; तस्मिन् लोप्ये सति पुनः सन्धिर्न स्यात्—कृष्णः+इह=कृष्णइह, कृष्णयिह ; कृष्णाः+अत्र=कृष्णाअत्र, कृष्णायत्र ; भोः+अनन्त=भोअनन्त, भोयनन्त ; भगोः+अनन्त=भगोअनन्त, भगोयनन्त ; अघोः+अवैष्णव=अघोअवैष्णव, अघोयवैष्णव। अत्राद्वयात् पर ईषत्स्पर्शी, ईषत्स्पर्शितरश्च यरामो ज्ञेयः। ओरामात् परस्त्वीषत्स्पर्शितर एव। गोपाले न यरामः—कृष्णा गच्छन्ति, भोगोविन्द, भगोगोविन्द, अघोहरिविमुख। 'आदरामगोपालयोः' इति विशेष-विधानान्नेह—कृष्णोऽत्र, कृष्णो गच्छति।

सैष इति पादपूरणे ; सः+एष=स एषः।
'सैष दाशरथी रामः, सैष राजा युधिष्ठिरः।
सैष कर्णो महात्यागी, सैष भीमो महावलः॥' १४१॥

---

विष्णुसर्ग उरामो न तु स्यात्। तीर्थश्रवः शब्दः सान्तः। 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचामि'त्यनेन महापुरुषः। अत्र 'वामनमपि त्रिविक्रम' इत्यनेन त्रिविक्रमलिखनोच्चारणे। प्रसंगात् प्राप्तविष्णुसर्गो हर-सूत्रस्य भूमिकामाह,—अत्रेति। अत्र अरामे वक्ष्यते इति अव्यवहितेनेति शेषः॥

१४१। अद्व। स्पष्टयितुं स्वयमेव वृत्तिमाह—अ आ इत्यादि। 'भगवतु-अघवतु-भवतूनां भगोस्-अघोस्-भोस्इति निपाता वा वुद्धे' इत्यनेन विहितानां भोसादीनां सरामरहितत्वेनात्र निर्देशः कृतः। अव्ययस्यापि भोः शब्दस्य सराम विहितत्वेन यद्भो इति भवति ततः परोऽपि विष्णुसर्गो-लोप्यः स्यादिति ज्ञापनार्थः। सर्वेश्वरेतु यश्चेत्युक्तेः सर्वेश्वरेऽन्यस्मिंश्च परे विष्णुसर्गो लोप्यो भवतीत्यायातं। अतः पूर्वसूत्राद्गोपालश्चानुवर्त्तत एव, अतएवोक्तं सर्वेश्वर गोपालयोरिति। किञ्च—आदराम गोपा-

## १४२। एष-स-परो विष्णुजने।

एतच्छब्दस्य 'एष' इत्यस्मात्, तच्छब्दस्य 'स' इत्यस्माच्च परो विष्णुसर्गो लोप्यः स्याद्विष्णुजने परे—एषः+कृष्णः =एष कृष्णः ; सः+रामः=स रामः ॥ १४२ ॥

## १४३। न तु नञ्‌समासाक्प्रत्यययोः।

अनेषः कृष्णः, असो रामः, एषकः कृष्णः, सको रामः। 'स' इत्यस्य साहचर्यात् एषणमेष इत्यस्मान्न स्यात्—एषो भवति ॥१४३॥

---

लयोरित्यत्रारामस्य पर निमित्तत्वेन दर्शितत्वात् अरामादरामं परनिमित्तं विना सर्वेभ्यः सर्वेश्वरोऽत्र पर निमित्त ज्ञेयम्। भो इति हे भगवन्नित्यर्थः। अनन्तेति हे अनन्तेत्यर्थः। एवमव्ययत्वेपि भो अनन्तेत्यादिः। भगो इति हे भगवन्नित्यर्थः। अघो इति हे अघवन् हे पापिन्नित्यर्थः। विष्णुसर्गीय यरामस्य उच्चारणं निरूपयति अत्रेति। गोपाल इति नेदं लक्षणं किन्तु सर्वेश्वरेतु यश्चेति यदुक्तं तदेव विवृतम्। आदिति इह स्थले विष्णुसर्गो लोप्यो न स्यात्, उरामस्तु स्यादेव।

सैष। पादपूरणे साध्ये सैष इति भवति विणुसर्ग लोपेऽप्यत्र सन्धिनिषेधो न भवतीति भावः। दाशरथी राम इत्यादौ कृतेऽपि अर्थ संगतिर्भवेदेवेति सैषः पादपूरणार्थः। कश्चित् कमपि परिचाययति स प्रसिद्ध एष दाशरथी राम एवं सर्वत्र योज्यम् ॥

१४२। एष। एषच सच इत्येताभ्यां पर एष स पर इति। भवति हि व्याख्यानतो विशेष लाभ इति शिष्टाचारात् एतच्छब्दस्य एष इत्यस्मादिति तत् शब्दस्य स इत्यस्मादिति च व्याख्यातम्। व्याख्यानमुपदेशपरम्पराधिगतार्थ विवेचनमिति ॥

१४३। न तु। नञ् समासाक्प्रत्यययोः सतोः एष स परो विष्णुसर्गो लोप्यो न स्यात्। 'एकदेशविकृतमनन्यवदि'ति न्यायेन प्राप्ते प्रतिषेधोऽयम्। नञ् समासः समासपादे कृपायामित्यादिना तद्धितेऽक्प्रत्ययश्च वक्ष्यते। व्याख्यानतो विशेष लाभो भवतीति हृदि निधाय एतत् शब्दस्येति

१४४। र ईश्वरात् सर्वेश्वर-गोपालयोः।

ईश्वरात् परो विष्णुसर्गो ररामः स्यात्, सर्वेश्वरगोपालयोः परयोः—हरेः+इदम्=हरेरिदम्; हरिः+ गच्छति=हरिर्गच्छति ॥ १४४ ॥

१४५। अनीश्वरादपि ररामजः।

स एव विष्णुसर्गो यदि ररामजातस्तदा ईश्वरादनीश्वरादपि च परो ररामः स्यात्, सर्वेश्वर गोपालयोः परयोः—प्रातः+अत्र=प्रातरत्र; गीः+मुकुन्दस्य=गीमकुन्दस्य; भ्रातः+व्रजे=भ्रातर्व्रजे; भ्रातः+ गोविन्दं पश्य=भ्रातर्गोविन्दं पश्य ॥ १४५ ॥

---

तच्छब्दस्येति च यदुक्तं—तत्रापरितुष्यन् सिद्धान्तान्तरमाह स इत्यस्येति। अनियत धर्मिणां नियत धर्मणासह चरितत्वं साहचर्यत्वं तस्मात् एष इत्यनेन साकं स इत्यस्य साहचर्याद्धेतोः इषु इच्छायामित्यस्य एषणमिति वाक्येन एष इत्यस्माद्भावयणन्ताद्विष्णुजने विष्णुसर्गो लोप्यो न स्यादित्यर्थः। ननु स इत्यस्य साहचर्यादिति कथं संगच्छतां यतः सह समान शब्दयोः समासे सरूपत्वं दृश्यते, तथा सो तनुकरणे षोऽन्तकर्मणि इत्यनयो धात्वोरपि कृदन्ते अकर्मण्यारामात् क इत्यनेन क प्रत्ययान्त सरूपत्वं दृश्यते चेति तच्छब्द सम्बन्धि सरामादन्य सरामस्यापि विद्यमानत्वादेतच्चिन्त्यम्। चिन्त्यञ्चात्र प्रकृति सिद्धानुकूलमेव तद्यथा। सहादि शब्दद्वयस्य सभावत्वेऽपि विष्णुसर्गस्याविद्यमानत्वात् धातु द्वयस्य तु स्वरूपत्वस्य विष्णुसर्गस्यापि विद्यमानत्वेपि गौणत्वात् तद्रूपमनंगीकृत्य प्रसिद्धत्वात् तच्छब्दस्य स इत्यस्यैव साहचर्यमुक्तमित्यवधेयम्॥

१४४। रई। सर्वेश्वर गोपालावत्र पूर्वतोऽनुवर्तेते इति वृत्तौ सर्वेश्वर गोपालयोरित्युक्तम्॥

१४५। अनी। गीर्वाक्। हे भ्रातः हे भ्रातः व्रजे गोविन्दं पश्येत्यन्वयः॥

१४६। अह्नो विष्णुसर्गस्य रो रात्रि-रूप-रथन्तरादन्येषु।

रात्रि-रूप-रथन्तरादन्येषु परेषु अह्नो विष्णुसर्गस्य स्थाने रो भवति—अहः + अहः = अहरहः ; अहः + गणः = अहर्गणः। सवश्वर-गोपालयोरेव ; नेह—अहःपतिः। रात्रादौ तु न—अहोरात्रिः ; 'एकदेशविकृतमनन्यवत्'—अहोरात्रः, अहोरूपम्, अहोरथान्तरं साम ॥ १४६ ॥

१४७। रो रे लोप्यः, पूर्वश्च त्रिविक्रमः।

रो ररामे परे लोप्यः स्यात्, ररामात् पूर्वो वामनश्च त्रिविक्रमः स्यात्—भ्रातः + रामानुजं पश्य = भ्रातारामानुजं पश्य ; हरिः + राधाप्रियः = हरीराधाप्रियः ॥ १४७ ॥

---

१४६। अह्नो। रात्रि रूपरथान्तरादन्येषु परेषु अहन् शब्द सम्बद्धिनो विष्णुसर्गस्य स्थाने ररामो भवति। अहन् शब्दो दिवस वाची अहरह इतिप्रथमैक वचनान्तस्य द्वितीयैक वचनान्तस्य वा वीप्सायां द्विरुक्तिः। अहर्गण इति अह्नं गण इति विग्रहः। गणः समूहः। यद्यपि वृत्तौ सर्वेश्वर गोपालयोरिति नोक्तं तथापि तयोः परयोरेवेत्याह सर्वेश्वर इति। नेह इत्यस्मात् पूर्वं तेनेति योज्यम्। अहः पतिरिति समस्त-मसमस्तं वा। एवमहः पाता। पाता—रक्षिता। रात्रयादौतु न वर्जनादिति शेषः। अह्नो रात्रिरिति विग्रहः। अत्र 'आदराम गोपाल-यो'रित्यनेन उरामः। ननु सूत्रे रात्रि शब्वोपादानात् रात्र शब्दे कथं ररामो न स्यादित्यत्र सिद्धान्तमाह—एक देशेति यथैकदेशे खण्डितेऽपि जनः स एवेतिप्रतीतिः। तद्वदिरामाभावोऽप्यत्र रात्रिप्रतीतिरिति भावः। अहोरात्र इति अहश्च रात्रिश्चेति विग्रहे तद्धित केशवारामः कर्तव्यः। टित् 'केशव'-संगं इति वक्ष्यते। अहोरूपमिति अह्नों रूपमिति विग्रहः। अहो रथान्तरमिति—अहो रथान्तर शब्देन सामवेद उच्यते इति सामेति वाच्यपदं दत्तम् ॥

**इति विष्णुसर्गसन्धिः * ।**

इति श्रीश्रीहरिनामामृताख्ये वैष्णवव्याकरणे संज्ञा-
सन्धि-प्रकरणं **प्रथमं** समाप्तम् ॥ १ ॥

---

१४७। रोरे। रामानुजं श्रीकृष्णम् ।।

* विष्णुसर्गसन्धिं समापयति इतीति ।।

संगासन्धि प्रकरणमिति संगाच सन्धिश्च तयोः प्रकरणमिति ।। १ ।।

प्रणत्य परंमात्मानं वालानां वुद्धिवृद्धये ।
सन्धिपादमृजुं कृत्वा व्याख्यातं हि सुहृन्मुदे ।।

इति श्रीपरमभागवतोत्तम श्रील हरेकृष्णाचार्यविरचितायां श्रीमद्गोपी चरण दासाख्यपरिशोधितायांच श्रीमद्धरिनामामृताख्य वैष्णवव्याकरण टीकायां वालतोषणीनाम्न्यां प्रथमा संगा-सन्धि-प्रकरणटीका समाप्ता ।।



[ द्वितीयम् ]

# अथ विष्णुपदप्रकरणम्

[ ६ ] य एकः सर्वरूपाणां सर्वनाम्नां तथाश्रयः ।
तस्य विष्णोः पदं सर्वं विष्णुभक्त्या निरूप्यते ।।

**अथ नामजानि विष्णुपदानि**

नाम्नो जातानि यानि विष्णुपदानि, अथानन्तरं तानि निरूप्यन्ते ।

१४८ । अधातुविष्णुभक्तिकमर्थवन्नाम ।

---

श्रीश्रीहरिः ।।

यमर्थं वक्तुकामेन शब्दग्रामः प्रवर्तते ।
तस्य विष्णोः पदं कार्त्स्न्य व्याचक्षेऽहं यथामति ।।

[६] पदनिरूपणमपि विष्णुसन्बन्ध्यनुशीलनमेव भवतीति प्रतिपादयन् तदारभते य एक इति । यो विष्णुरेक एव सर्वरूपाणां सर्वपदानां कृष्ण इत्यादीनां भवतीत्यादीनांच तथा सर्वनाम्नां सकलशब्दानामाश्रय आस्पदं स्थानमिति यावत् । तस्य विष्णो र्विष्णुसम्बन्धि सर्वं पदं कृष्ण इत्यादिकं भवतीत्यादिकंच विष्णुभक्त्या विभक्त्या निरूप्यते साध्यत इत्यर्थः । सर्वनाम्नामित्यनेन कृत् समास जादीनां ग्रहणं तथाभूवादीनांच ग्रहणं तेषामव्ययत्वेन नामत्वात् दर्शनादौ शब्दत्वेन निर्दिष्टाच्च । तथाच यः सर्वरूपाणां सर्वशरीराणां तथा सर्वसंगानामाश्रयस्तस्य विष्णोः सर्वं पदं स्थानं वैकुण्ठादिकं विष्णुभक्त्यैव निरूप्यते अलं केनचिदिति शेषः । तत्रच प्रथमं नामज विष्णुपदानामेव निरूपणं कर्तव्यमित्याह अथेति ।।

१४८ । अधातु । विष्णुभक्त्य एव विष्णुभक्तिकाः स्वार्थे कप्रत्ययस्तद्धितः लक्षणया विष्णुभक्त्यन्तानि पदानि वा गृह्यन्ते । धातुपदेन धातुत्वानि वा धातुत्वादिनीति केवल सत्तादि सिद्ध क्रियावाचि भू प्रभृति धातुपराणीत्यर्थः । अनेनानुसन्धानेन भूप्रभृतीनां विष्णुपदानां विष्णुभक्तीनांच ग्रहणमत्र सूचितमिति । धातवश्च विष्णुभक्तिकाश्च तासां समाहारः धातुविष्णुभक्तिकं समाहारे व्रह्मत्वमेकत्वंचेति व्रह्मत्वमेकत्वंच ततश्च न धातुविष्णुभक्तिक मधातुविष्णुभक्तिकमिति विग्रहः । धातु

भू-सनन्ताद्या 'धातवः'; स्वादि-तिवाद्या 'विष्णुभक्तयः' 'विभक्तयः' इति प्राञ्चः। तान् धातून्, ता विष्णुभक्तीश्च वर्जयित्वा यदर्थयुक्तं शब्दरूपम्, तन्नाम-संज्ञं स्यात्; 'लिङ्गम्' इत्येके, 'प्रातिपदिकम्' इत्यन्ये। ते चार्था द्रव्यगुणजातिक्रियाः। तद्युक्तं तदभिधायकं शब्दरूपमित्यर्थः। (१) 'द्रव्यं' परमेश्वरमारभ्य मृन्मयपर्यन्तं सर्वं वस्तु; (२) 'गुण' स्तदाश्रयी ऐश्वर्यादिशब्दस्पर्शादिको धर्मः; (३) 'जातिः' समानत्वं ब्राह्मणत्वं गोत्वादि; (४) 'क्रिया' धात्वर्थः सत्त्वाहारज्ञानविहार प्रभृतिः। अर्थवद्ग्रहणात् 'कृष्ण' इत्यादौ प्रत्यक्षरं नामत्वं न स्यात्; 'गवित्ययमाह' इत्यत्र च ॥१४८॥

---

विष्णुभक्ति विष्णुभक्त्यन्तभिन्नमर्थवन्नामेत्यर्थः। तान् धातून् ता विष्णुभक्तीश्च वर्जयित्वा यदर्थयुक्तं शब्दरूपं उक्तमिति शेषः तन्नामसंज्ञं भवतीतितु फलितार्थकथनम्। किन्तु लक्षणया विष्णुपदग्रहणपूर्वक वर्जनं न वहुप्रयोजनकं विष्णुपद लक्षणस्य वक्ष्यमाणत्वेन विष्णुपदस्य नामत्वाभावात्। यद्वा धातवश्च विष्णुभक्तयश्च धातुविष्णुभक्तयः न विद्यन्ते धातुविष्णुभक्त्ययो यत्रेति विग्रहे समासान्तः क-प्रत्ययस्तद्धितः अधातुकं अविष्णुभक्तिकञ्चाऽर्थवन्नामेत्यर्थः। धातून् वर्जयित्वेति तु फलितार्थकथनम्। विष्णुभक्तिश्चेत्यपि फलितार्थमित्यर्थः। अर्थवदिति अर्था अस्य सन्तीत्यर्थे मतु प्रत्ययस्तद्धितः। मतोर्मोव इत्यनेनमरामस्य वरामः, ननु यदि धातु विष्णुभक्तिभिन्नमर्थवन्नाम तर्हि कथं सनन्त संख्यातः कतेश्चत्यत्र 'जस्शसोरौस्' इत्यत्र विष्णुभक्तेरौस। भूवः भूरित्यत्र ङस् क्रियाविशेषणं कर्मेत्यत्र तस्यालिङ्गस्य विशेषणमिति ब्रह्म इत्यत्र च क्रियाविशेषणस्य च ब्रह्मत्वं सिद्धयति। सत्यमुच्यते सूत्रे वेदवद्वयवहारात् सर्वमनुकरणे वा इत्यस्माच्च जस्शसोरित्यत्र भुव भूरित्यत्रच विष्णुभक्तिर्भवत्येव, क्रियाविशेषणमित्यत्र अलिङ्गमव्यय संज्ञमित्यनेन भ्वादीनामव्ययत्वम् नामलक्षणे वर्जनाच्च नामत्वाभावत्वमिति नकश्चिद्विरोधः।

भू-सनन्ताद्या इति भूश्च सनन्तश्च भू-सनन्तौ आद्यौ येषामिति विग्रहः। अर्थयुक्तमिति अर्थैर्युक्तमिति विग्रहः। अर्थानेवाह चेति तद्युक्तं तदभिधायकमिति वाच्य-वाचक-सम्बन्धो ज्ञेयः। तदाश्रयी। ऐश्वर्यादिति

१४९ । प्रकृतिः पूर्वा ।

सा च नाम-धातुभेदाद्द्विविधा ॥ १४९ ॥

१५० । प्रत्ययः परः ।

स च स्वाद्याख्यात-कृत्तद्धितभेदाच्चतुर्विधः ॥ १५० ॥

१५१ । तत्र नाम्नः 'सुँ औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्यम् भ्यास्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप्' ।

एते 'सुँ' इत्यादय एकविंशतिर्विष्णुभक्तयः प्रत्येकं नाम्नः परे स्युः । तासु च 'सुँ औ जस्' प्रथमा ; 'अम् औ शस्' द्वितीया ;

---

ऐश्वर्यादिश्चासौ शब्द-स्पर्शादिकश्चेति विग्रहः । क्वचिद्विशेषणेन च विशषणं समस्यत इत्यनेन श्यामरामसमासः, ऐश्वर्यादिः शब्दस्पर्शादिकश्चेत्यर्थः । प्रथमादिशब्देन भक्तवात्सल्यादेर्ग्रहणम् । द्वितीयादिशब्देन रूपरसगन्धादीनां ग्रहणम् । समानत्वं सामान्यम् ऐक्यमिति यावत् । समानां सत्समैक्यस्युरितिनानार्थवर्गः । तथाच एकत्वे सत्यप्यनेकव्यक्तौ सामान्यं जातिरिति निर्गलितार्थः । यथोक्तमन्यैश्च । नित्यैकत्वे सत्यनेक समवेतत्वं समवायि सम्बन्धावच्छिन्न वृत्तिमत्वम् नित्यमेकमनेकव्यक्तिमत्वम् सामान्यं जातिरित्यर्थः ॥

१४९ । प्रकृतिः । प्रकृतिः पूर्वा, पूर्वस्थिता भवति । परिभाषा सूत्रमिदम् । ननु प्रकृतिरेव केति तत्राह साचेति । साच प्रकृतिः ॥

१५० । प्रत्ययः । प्रत्ययः परः परस्थितो भवति । इदमपि परिभाषा सूत्रम् । प्रत्ययमेवाह सचेति स च प्रत्ययः ॥

१५१ । तत्र । तत्रेत्यादिकंसुवित्यन्तं लक्षणमिदं प्रत्येकमितिक्रमेणेत्यर्थः । विष्णुभक्तीनामवान्तरभेदानाह तासु चेति । तासु विष्णुभक्तिषु मध्ये सुँ औ जस् प्रथमेत्यादि । प्रथमादिष्वप्यवान्तर भेदानाह तत्र चेति । तत्र प्रथमादिषु मध्येषु प्रथमाया एक वचनं सुँ इत्यादि । एता विष्णुभक्तयः स्वादय इति स्वादि नामान इत्यर्थः ॥

'टा भ्याम् भिस्' तृतीया ; 'ङे भ्याम् भ्यस्' चतुर्थी ; 'ङसि भ्याम् भ्यस्' पञ्चमी ; 'ङस् ओस् आम्' षष्ठी ; 'ङि ओस् सुप्' सप्तमी। तत्र प्रथमाया एकवचनं 'सुँ', द्विवचनम् 'औ', वहुवचनं 'जस्' ; द्वितीयैकवचनम् 'अम्', द्विवचनम् 'औ', वहुवचनं 'शस्' इत्यादि ज्ञेयम्। एताः 'स्वादयः' ; 'स्यादयः' इत्यन्ये ; 'सुप्' इत्येके ॥१५१॥

१५२। तत्र ज-ट-श-ङ-पा इतः, उँश्च सोँः, ङसेरिश्च।

एति—गच्छति—न तिष्ठतीति 'इत्', 'अनुवन्धः' च। स च उच्चारणार्थश्चिह्नार्थो विध्यादिनिमित्तश्च क्वचित्। इतश्चैते—सिद्धोपदेशे विरिञ्चौ च सविष्णुचापसर्वेश्वर इत्, अन्त्यो विष्णुजनश्च 'अत् इत्' इत्यादौ, आङ्-माङ्-उञ-नञ्सु च। विरिञ्चौ तु क्वचित्। धात्वादि-ञि-टु-डु। प्रत्ययाद्या ज-ट-ण-पाः, श-कवर्गाव-

१५२। तत्रेति। तत्र विष्णुभक्तिषु ज-ट-श-ङ-पा इतो भवन्ति, जटशङपाश्चेत्यनेनेति ज्ञेयम्। सोरुँश्च इद्भवति, सोरित्येकदेश निर्देशः सुँ इत्यस्येत्यर्थः। ङसेरिरामश्च इद्भवति, तत्र उँः सिद्धोपदेशे विरिञ्चौच सविष्णुचाप सर्वेश्वर इदित्यनेन इरामोऽपि तेनैवेति ज्ञेयम्। इरामस्य सविष्णुचापत्वम् अरामादि भेदाः सविष्णुचापास्तु वैदिका इत्यनेन सेत्स्यति। इच्छब्दः क्विवन्तः। सचेति स च उच्चरणार्थो भवति, यथा सुँ इत्यादेरुँरामादिः। चिह्नार्थश्च यथा जसादेर्जरामादिः। क्वचिद्विध्यादि निमित्तश्च अथवा क्वचिदिति सर्वत्र व्याख्येयं विध्यादिर्निमित्तं यस्येति विग्रहः। यथा–ङे ङसि ङस् नुट् औच् आच् शि इत्यादीनां ङराम टराम चराम शरामादिः। आदि-शब्देन प्रतिषेधस्य ग्रहणम्। प्रतिषेधनिमित्तो यथा। तत्र जटौ प्रत्ययाद्या ज-ट-न-पाइत्यनेन। शङौ श-क-वर्गावतद्धित इत्यनेन। पस्तु अन्त्यो विष्णुजनेत्यनेन। यगादीनां करामादिश्च। तथाहि किच्च-ङिच्च कंसारिः, कंसारौ परे गोविन्द वृष्णीन्द्र निषेधो भवति, ईशस्य न गोविन्द वृष्णीन्द्रौ कंसारिष्विति प्रतिषेध लक्षणम्। एवमपरमपि ज्ञेयम्। इतश्चेत इति एते अनुवन्धाः प्राचीनैरपि इतश्चोच्यन्ते इत्यर्थः। तस्मादत्र संज्ञा भेदोनास्तीति भावः।

तद्धिते। न विष्णुभक्तौ त-न-स-मा इति। 'सिद्धोपदेशाः—धातु-प्रत्ययविष्णवः। अरामादिभेदाः स-विष्णुचापास्तु वैदिका उच्यन्ते ॥ १५२ ॥

सिद्धो। सिद्धोपदेशे धात्वादौ विरिञ्चौच स्थितः सविष्णुचाप-सर्वेश्वर इद्भवति। तत्र धातौ यथा चिती संज्ञाने इत्यादीनामीरामादिः। 'द्व्यक्षरधातोरन्तः पूर्वश्च सर्वेश्वरः सविष्णुचापो जागृकथादिवर्जमित्य-नेन इरामस्य सविष्णुचापत्वम्। प्रत्यये यथा सुँ इत्यादेरुरामादिः ङस्यादीनामपि इरामादिश्च सविष्णुचापत्व स्वीकारात्। विष्णौ यथा नुट् लुम् लुक् इत्यादीनामुरामादिः अत्रापि सविष्णुचापत्व स्वीकारात्, एवमन्यत्रापि वोद्धव्यम्। विरिञ्चौ यथा तस्मात् सोनः पुंसि इत्यादि लक्षणैर्विहितानां नरामादीनामरामादिः। 'पुंसः पुमसुः कृष्णस्थाने' इत्यनेन विहितस्य पुमसोरुरामश्च, एवमन्यत्रच ज्ञेयम्। अन्त्यो—सिद्धो-पदेशे अन्त्यो विष्णुजनश्च इद्भवति। तत्र धातौ यथा स्फुटिर विशरण इत्यादीनां ररामादिः। प्रत्यये यथा तिवादीनां परामादिः। विष्णौ यथा नुड़ादीनां टरामादिः॥ आङ्। एतेषु अन्त्यो विष्णुजन इद्भवति॥

विरि। विरिञ्चौतु अन्त्यो विष्णुजनः क्वचिद्भवति यथा 'हरितो ङेरौच्' इत्यादि लक्षणैर्विहितानामौजादीनां चरामादिः। 'वाहोवा ऊठ् भगवतीत्यादि' लक्षणैर्विहितानां ऊठादीनां ठरामादिश्च क्वचिद्ग्रहणात् पाददन्तानां पद्दादिषु विरिञ्चिषु अन्त्यो विष्णुजन इन्नभवति, एवमन्य-त्रापि ज्ञेयम्॥ धात्वादि। धातोरादि भूतं ञि टु डु इद्भवति। ञि टु ड्विति समाहारे व्रह्मत्वमेकत्वञ्चेति ज्ञेयम्। तत्र ञिञिमिद, ञिफला-दीनां टु भ्राजृ टुओस्वि प्रभृतीनाम्। डुर्डुपचषादीनाम्॥

प्रत्यया। प्रत्ययस्यादि भूता ज-ट-ण-पा-इतो भवन्ति। अत्र सूत्रे जटणपा सत्यः। पमित्यत्र प्रत्ययादि-परामेत्वसम्भवात्। तत्र जरामो-जसादीनां टरामष्टादीनाम्। णरामोणलादीनाम्॥

श-क। तद्धित भिन्ने प्रत्यये शकवर्गो इतौ भवतः। तत्र शरामः शसादीनाम्। करामः क्वसुकिकानादीनाम्। खरामः खल् खशादीनाम्।

१५३। नामसंज्ञश्चतुर्विधः।

यथा पुंलिङ्गः 'पुरुषोत्तम'-संज्ञः; स्त्रीलिङ्गो 'लक्ष्मी'-संज्ञः; नपुंसकलिङ्गो 'ब्रह्म'-संज्ञः; अलिङ्गः 'अव्यय' संज्ञः ॥ १५३ ॥

**तत्र सर्वेश्वरान्ताः पुरुषोत्तमलिङ्गाः**

अत्र अरामान्तः 'कृष्ण'-शब्दः। तत्र प्रथमैकवचने कृष्ण-सुँ इति स्थिते, उराम उच्चारणार्थः।

---

घरामो घिनुण् घणादीनाम्। ङरामो ङे ङसि ङसादीनाम्। अतद्धित इत्युपादानात्, 'वह्वल्पार्थात् कारकाच्छस् माङ्गलिके' इत्यनेन विहितस्य शसः शराम इन्नभवति, एवमन्यत्रापि वोद्धव्यम्। स एषां ग्रामनीरिति। क इत्यनेन विहितस्य कस्य करामः सर्वचर्मणावृतः ख नृसिंह खावित्यनेन विहितस्य खस्य खरामश्च इन्नभवति। एवमन्यत्रापि वोद्धव्यम्॥

न विष्णु। विष्णुभक्तौ त-न-स-मा इतो न भवन्ति। अतः यादादीनां तराम इन्नभवति। ईरन् अन् इत्यादीनां नराम इन्नभवति। जस् शस् भिस् भ्यासादीनां तस् थसादीनाञ्च सराम इन्नभवति, अम् भ्याम्-आम्-इत्येषां याताम् यातम् याम् इत्यादीनाञ्च मराम इन्नभवति, अन्त्यो विष्णुजनश्चेत्यनेन प्राप्ते निषेधः। सिद्धोपदेशानाह सिद्धोपेति। ननु ङस्यादीनामिरामादिर्नुड़ादीनामुरामादिश्च कथमिद्भवतु स विष्णुचापत्वाभावादिति चेत्तत्राह अरामादि भेदा इति। अरामादि भेदाः अरामादि-विशेषाः। अराम विशेषादयः सविष्णुचापा भवन्ति, तेतु वैदिका अतएवन्मतानुसारेणसविष्णुचापत्वादिद्भवति इति ज्ञेयम्। ननु तर्हि धातोः सर्वेश्वरस्य सविष्णुचापत्वं कथं विधीयते इति चेत् तत्रोच्यते—जागृ कथादि वर्जं द्वयक्षर धातोरन्तः पूर्वश्च सर्वेश्वरः सविष्णुचापः, चकासृ प्रभृतीनामन्तः सर्वेश्वरः सविष्णुचापः, ओरै ओश्वि प्रभृतीनां पूर्वः सर्वेश्वरः सविष्णुचाप इति विशेषप्रतिपत्तेः स्पष्टतार्थम्॥

१५३। नाम। नामेति संज्ञा यस्य स नामसंज्ञः शब्दः। पुंलिङ्गः पुरुषोत्तमसंज्ञ इत्यादिनि संज्ञासूत्राणि। तत्रेति तत्र चतुर्विधे सर्वेश्वरान्ताः पुंलिङ्गा उच्यन्ते इति शेषः। तत्रेति तत्र सर्वेश्वरान्त पुंलिगेषु॥

## १५४। विष्णुभक्तिसिद्धं विष्णुपदम्।

विष्णुभक्तिसिद्धं नाम्नो धातोर्वा रूपं 'विष्णुपद'-संज्ञं स्यात्। 'पदम्' इति प्रांचः। **गङ्गास्रोतोवदेवास्य भवेद्विधिरतःपरः।**
**नारोहति परः पूर्वं यत्रोपाधिर्न विद्यते॥ १५४॥**

## १५५। स-र-रामयोर्विष्णुसर्गो विष्णुपदान्ते।

स-र-रामयोः स्थाने विष्णुसर्गः स्यात्, विष्णुपदान्ते विषये—कृष्णः।

एवं सूत्रं ततो वृत्तिरिति विस्तरशङ्कया।
सूत्रेणैवार्थसिद्धिस्तु यथा स्यात् क्रियते तथा॥
साधनानुक्रमार्थञ्च नाधिकारेण सूत्र्यते।
अन्यथा प्रक्रिया भिन्ना मृग्येताज्ञप्रबोधनी॥

---

१५४। विष्णु। गङ्गेति, अस्य ग्रन्थस्य अतः परो यो विधिर्वक्तव्यः, स गङ्गा स्रोतवदेव भवेत्। अतो हेतोः परोविधिः पूर्वं नारोहति, गङ्गास्रोतोऽपि पूर्वं नारोहतीति। एतद्व्यवस्थायाः स्थानमाह यत्रेति, तस्माद् यत्र उपाधिर्विद्यते तत्र परविधिः पूर्वमारोहतीत्यर्थः। अत्र उपाधिर्विशेषणम्। गङ्गास्रोतसोपि समुद्रनिकटे पूर्वारोहणं भवतीति। परविधेः पूर्वारोहणस्तु पतिस्त्वसमास इत्यत्र 'ख्यात्याभ्यां ङसि ङसोरुस्' इत्यादिषुच व्यक्तं भविष्यति॥

१५५। स-रराम। एवमिति, वृत्तिः सूत्रार्थ विवरणम्। विस्तरशङ्कया—वाहुल्यभयेन। यथा येन प्रकारेण सूत्रेणैवार्थसिद्धिः स्यात्, तया तेन प्रकारेण क्रियते सूत्रमिति शेषः। ननु किं सूत्रलक्षणं, किञ्चिद्वृत्ति लक्षणमित्यपेक्षायां तयोर्लक्षणञ्च दर्श्यते। 'स्वल्पाक्षरं असन्दिग्धं सारवद्विश्वतोमुखं अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरिति' माध्वभाष्योक्तम्। सूत्रस्थितानां वर्णानामर्थानाञ्च प्रतीतये। विशुद्धाचाधिकाव्याख्या वृत्तिरुक्ता मनीषिभिरिति। साधनेति साधनानुक्रमार्थं साधनपरिपाट्यर्थम्। अधिकारेण अनुवृत्तेत्यर्थः न सूत्र्यते, न सूत्रं

'प्राङ्-निमित्तं' तथा 'कार्यी' 'कार्यं' 'परनिमित्तकम्' ।
अत्र क्रमेण वक्तव्यं प्रायः सूत्रेषु सर्वतः ॥
क्रमाच्च पञ्छमी षष्ठी प्रथमा सप्तमी तथा ।
क्वचित् परनिमित्तस्य स्थाने 'विषयसप्तमी' ॥
कार्यपूर्वे पञ्चमी स्यात्, कार्यस्थाने तु षष्ठिका ।
कार्ये तु प्रथमा वाच्या, सप्तमी विषये परे ॥
विना-योगे निषेधार्थं द्वितीया क्वचिदिष्यते ।
सर्वाङ्गासम्भवो यत्र स्वल्पान्यङ्गानि तत्र तु ॥
अतो वालकवोधाय पदं विच्छिद्य मूर्धनि ।
अङ्का देया विष्णुभक्तिव्यक्त्यर्थं सर्वसूत्रतः ॥

यथा 'स-र-रामयोः' इति कार्यस्थानं, 'विष्णुसर्गः' इति कार्यं, 'विष्णुपदान्तः' विषयः। परनिमित्तं' पूर्वनिमित्तञ्चात्र नास्ति ; तत्तञ्च यथा—'इद्वयमेव यः सर्वेश्वरे' ( स° प्र° ५९ ) इत्यत्र परनिमित्तं सर्वेश्वरः ; 'ततः शश्छो वा' ( स° प्र° ६९ ) इत्यत्र पूर्वनिमित्तं विष्णुदासः ; 'विष्णुजने' ( स° प्र° १२० ) इत्यादौ 'ह-रौ विना' इति तौ निषिद्धौ ।

---

क्रियते, एतत्तु एतत् प्रकरणपरं वोद्धव्यम् । अन्यथा अधिकारे स्वीकृते सति अज्ञप्रवोधनी भिन्ना पृथक् प्रक्रिया मृग्येत मृग्या स्यादित्यर्थः। प्रांनिमित्तमिति अत्र ग्रन्थे प्रांनिमित्तादिकं प्रायः सर्वतः सर्वेषु सूत्रेषु क्रमेण वक्तव्यम् । प्रांनिमित्त कार्यि कार्यं परनिमित्तानि सर्वसूत्रेषु न सन्तीति प्रायःशब्दोपादानम् । प्राङ्निमित्तमित्यत्र परनिमित्तमित्यत्रच श्यामरामः समासः कर्त्तव्यः । परनिमित्तकमिति स्वार्थे क-प्रत्ययः । क्रमाच्चेति पञ्चमी षष्ठी प्रथमा सप्तमी च सर्व सूत्रेषु क्रमात् वक्तव्येति शेषः । पञ्चम्यादयो वक्तव्या इत्युक्तं, कुत्र का वक्तव्या इत्यपेक्षायामाह कार्यपुर्वं इति कार्यपूर्वे प्राङ्निमित्ते पञ्चमी वाच्या स्यात् । कार्यस्थाने कार्यिणि, क्वचित् परनिमित्तस्य स्थाने विषयसप्तमीति यदुक्तं तदेवाचष्टे विषय इति ॥ विना । अङ्गशब्देनात्र प्राङ्निमित्तादिकमुच्यते । अतः ।

तदेवं प्रथमाया एकवचने कृष्णः। द्विवचने कृष्ण-औ—'ओद्वये औ' ( स° प्र° ५७ ) कृष्णौ। बहुवचने कृष्ण-जस्, ज् इत् चिह्नार्थः, शसादिभेदज्ञापनाय; एवमुत्तरत्रापि; त्रिविक्रमविष्णुसर्गौ—कृष्णाः ॥ १५५ ॥

**द्वितीयैकवचने कृष्ण-अम्—**

१५६। दशावतारादम्शसोररामहरः।

कृष्णम्। हरोऽयं ज्ञापयति—'सूत्रे प्रत्ययरूपान्निमित्तादन्यस्य हरोऽपि महाहरः' इति; तेनैकात्मकमात्रनिमित्तत्वान्न त्रिविक्रमः। द्वितीया-द्वित्वे कृष्ण-औ कृष्णौ। पूर्ववद्बहुत्वे कृष्ण-शस्, श् इत्, अरामहरः। 'एकदेश-विकृतमनन्यवत्', तथापि तन्नामेवेत्यर्थः ततश्च—॥ १५६ ॥

---

विच्छिद्य पृथक् कृत्वा व्यक्तिः प्राकटयम्। सर्वसूत्रतः सर्वसूत्रेषु। प्राङ्-निमित्तादिकं दर्शयति। यथा। परनिमित्तं पूर्वनिमित्तञ्च। विष्णुजन इत्यादौ 'विष्णुजने विष्णुजनो वा हरौ विनेति' सूत्रे। शसादीति, शसादिना सह ज-सो भेदस्य भिन्नताया ज्ञापनायेत्यर्थः। अथवा शसादेर्भेदस्य ज्ञापनाय ज-सा सहेति शेषः। ननु जसो जरामेण कृतेपि भेदो भवत्येव, तर्हि शसादि भेदज्ञापनायेति किमर्थमुक्तं तदेतच्चिन्त्यम्। अथवा अस् इति कृतेपि शसा सह भेदः स्यात्, किन्तु तद्धितासा सह भेदो नस्यात्, अतोजसिति कृतं, शसादीत्यत्रादिपदम् एतज्ज्ञापयति। अकारान्ताज्जसोऽसुक् क्वचिद्वक्तव्यः। देवासः, सौम्यासः इति पदं केचित्, केचित्तु छान्दसं वदन्ति। एवमुत्तरत्रेति शसः शरामः जरामादि भेदज्ञापनाय ङसे-रिरामश्च, ङस् भेदज्ञापनाय इत्यर्थः॥

१५६। दशा। ननु कृष्ण—कृष्णमित्यत्र अरामे हरे कृते दशावतार इत्यादिना त्रिविक्रमः कस्मान्न स्यादिति चेत्तत्राह हरोयमिति। यदि हरे कृतेऽपि त्रिविक्रमो भविष्यति, तदायं हरो निरर्थकः एव भूतः, तस्माद्धरोऽयं ज्ञापकः किं ज्ञापयतीत्यपेक्षायामाह सूत इति। सूत्रे यत्र कुत्रचित् सूत्रविशेषे प्रत्ययरूपेण यन्निमित्तं ततोऽन्यस्य हरोऽपि महाहरो

१५७। दशावतारस्य त्रिविक्रमः शसि, तस्मात् सो नः पुंसि।

अराम उच्चारणार्थः ; कृष्णान् ॥ १५७ ॥

तृतीयैकत्वे टा–

१५८। अरामान्तः कृष्णसंज्ञः।

१५९। कृष्णात् टा इनः।

'टा' इति सूत्रवलेन लुप्तषष्ठी, स्पष्टतार्थमसन्धिः। एवमन्यत्रापि। कृष्ण-इन, 'अद्वयमिद्वये ए', कृष्णेन ॥ १५९ ॥

द्वित्वे कृष्ण-भ्याम्–

१६०। कृष्णस्य त्रिविक्रमो गोपाले।

'एकवर्णो विधिरन्ते प्रवर्तते'—कृष्णाभ्याम् ॥ १६० ॥

---

भवतीति। हरोऽपि महाहर इत्यनन्तरमिति शब्दप्रयोग उचितः। अत्र अमोऽरामः त्रिविक्रम विधान सूत्रे प्रत्ययरूपेण न निमित्तं, किन्तु एकात्मकरूपेण अतोऽस्य हरो महाहरः, अतो न त्रिविक्रमः। एकात्मकमात्रनिमित्तत्वादिति त्रिविक्रमविधानस्येति शेषः। ननु अराम हरे कृते कथं शसः परतेति चेत्तत्राह, एकदेशेति। अनन्यवदित्यस्यार्थमाह तथापीति, यद्यपि एकदेश विकृतं तथापि तन्नामैवेत्यर्थः इति अतोऽत्र सरामः शस् नामैव ॥

१५७। दशा। तस्मात्–त्रिविक्रमात्। अराम इति नरामस्येति शेषः ॥

१५८। अरा। संज्ञासूत्रमेतत् ॥

१५९। कृष्णात्। ननु टा इन इत्यत्र टेन इति कस्मान्नस्यादिति चेत्तत्राह, स्पष्टतार्थमिति। एवमिति अन्यात्राप्यऽसन्धिस्पष्टतार्थ एवेत्यर्थः ॥

१६०। कृष्णस्य। ननु कृष्णस्य त्रिविक्रम इत्युक्ते अन्ते भवतीति कुतोलभ्य इति चेत्तत्राह, एकवर्ण इति। एक वर्णो यत्रेति विग्रहः ॥

**बहुत्वे कृष्ण-भिस्-**

१६१ । कृष्णाद्भिस् ऐस् ।

'एद्वये ऐ' ( स॰ प्र॰ ५५ ), विष्णुसर्गः—कृष्णैः ॥ १६१ ॥

**चतुर्थ्येकत्वे ङे-**

१६२ । कृष्णात् ङेर्यः ।

'कृष्णस्य त्रिविक्रमो' ( वि॰ प्र॰ १६० )—कृष्णाय। द्वित्वे—कृष्णाभ्याम् ॥ १६२ ॥

**बहुत्वे भ्यस्-**

१६३ । कृष्णस्य ए वैष्णवे बहुत्वे ।

कृष्णेभ्यः ॥ १६३ ॥

**पंचम्येकत्वे कृष्ण-ङसि-**

१६४ । कृष्णात् ङसेरात् ।

कृष्णात् । पञ्चमी द्वित्वबहुत्वयोश्चतुर्थीवत्, कृष्णाभ्याम्, कृष्णेभ्यः ॥ १६४ ॥

**षष्ठयेकत्वे कृष्ण-ङस्-**

१६५ । कृष्णात् ङसः स्य ।

कृष्णस्य ॥ १६५ ॥

---

१६१ । कृष्णात् । सुगमम् । कृष्णाद्भिस् ऐस् इत्यत्र एस् न कृत्वा, ऐस् विधानं निर्जरसैः सिद्ध्यर्थम् ॥

१६२ । कृष्णात् ङेरिति । सुगमम् । कृष्णस्येति 'कृष्णस्य त्रिविक्रमो गोपाले' इत्यनेन त्रिविक्रम इत्यर्थः ॥

१६३ । कृष्णस्य । बहुत्वे विषये वैष्णवे परे इत्यर्थः । 'एकवर्णो विधिरन्ते प्रवर्तते' इति न्यायेन अन्तस्य स्थाने एरामो भवतीति ज्ञेयम् ॥

१६४ । कृष्णात् । सुगमम् ॥

१६५ । कृष्णात् । सुगमम् ॥

**द्वित्वे श्रोस्–**

१६६। कृष्णस्य ए ओसि।

'ए अय्' ( स॰ प्र॰ ६३ )—कृष्णयोः ॥ १६६ ॥

**बहुत्वे श्राम्–**

१६७। वामन-गोपी-राधाभ्यो नुड़ामि।

ईदृशो विधिर्विष्णुः। उटावितौ। टिदागमः परसम्बन्धी ; किदागमः पूवसम्बन्धी ॥ १६७ ॥

१६८। तत्र टिन्मितौ सर्वत्रागमौ श्नमं विना, उगन्त-किच्च।

यथा—'नुक्', 'पुक्', 'तुक्', 'युक्' इत्यादि। ततो 'नामि' स्थिते —॥ १६८ ॥

१६९। वामनस्य त्रिविक्रमो नामि, नृशब्दस्य तु वा, न तिसृ-चतस्रोः।

कृष्णानाम्। 'कृष्णस्य त्रिविक्रमो' ( वि॰ प्र॰ १६० ) इत्यनेनैव सिद्धत्वेऽपि सूत्रस्य प्रयोजनं 'हरीणाम्' (वि॰ प्र॰ १७६) इत्यादावेव। सप्तम्येकत्वे कृष्ण-ङि, ङ् इत्, 'अद्वयमिद्वये ए' (स॰ प्र॰ ४८)—कृष्णे। द्वित्वे ओस्—कृष्णयोः ॥ १६९ ॥

---

१६६। कृष्णात्। सुगमम्। कृष्णस्य अन्तस्य स्थाने एरामो भवति ॥

१६७। वामन। ई ऊ लक्ष्मीर्गोपी संज्ञा। आरामान्त लक्ष्मी राधा संज्ञा। परसम्बन्धी प्रत्ययसम्बन्धी। पूर्वसम्बन्धी प्रकृतिसम्बन्धी ॥

१६८। तत्र। श्नमं विना सर्वत्रटिन्मितौ आगमौ उगन्तकिच्चागमः। परिभाषा सूत्रमेतत् ॥

१६९। वामनस्य। नृशब्द, न तिसृ। ननु कृष्णानामित्यत्र 'कृष्णस्य त्रिविक्रम गोपाले' इत्यनेनैव त्रिविक्रमो भविष्यति, किमनेन लक्षणेन इति चेत्तत्राह–कृष्णस्येति। तस्मात्तदर्थं क्रियमाणं सूत्रमेतदर्थमपीति ॥

**बहुत्वे सुप्, पराम इत्—'कृष्णस्य ए' ( वि° प्र° १६३ )**

१७०। ईश्वर-हरिमित्र-क-ङ भ्यः प्रत्यय-विरिञ्चि-सस्य षो, नुम्-विष्णुसर्ग-व्यवधानेऽपि, न तु विष्णुपदाद्यन्त-सातीनाम् ।

कृष्णेषु ॥ १७० ॥

**अथ सम्बोधनम् ; तत्र 'हे'-शब्दः सम्बोधनसूचकः—**

१७१। सम्बोधने सुर्वुद्ध-संज्ञः ।

'सम्बुद्धिः' च ॥ १७१ ॥

१७२। ए-ओ-वामनेभ्यो वुद्धस्यादर्शनम् ।

हे कृष्ण ! द्वित्व-बहुत्वयोः पूर्ववत्—हे कृष्णौ, हे कृष्णाः ! अत्र प्रथमैव। 'हे'-शब्दाद्यभावेऽपि—कृष्ण, कृष्णौ, कृष्णाः ! विष्णुभक्ति हरेऽपि तदर्थावृतत्वान्नामत्वातिक्रमः ; ततः 'कृष्ण यासि', 'कृष्ण भासि' इत्यादौ नामविशेषस्य विहितं त्रिविक्रमादिकं न स्यात्। एवं रामः, रामौ, रामाः इत्यादि ॥ १७२ ॥

---

१७०। ईश्वर। आदिश्च अन्तश्च आद्यन्तौ, विष्णुपदस्याद्यन्तौ विष्णुपदाद्यन्तौ, विष्णुपदाद्यन्तौच सातिश्च विष्णुपदाद्यन्तसातयस्तेषाम्। विष्णुपदस्यादावन्तेच स्थितस्य सातेश्च सस्य यो न भवतीत्यर्थः ॥

१७१। सम्बो। संज्ञासूत्रमेतत् ॥

१७२। ए-ओ। अत्र सम्बोधने। ननु कृष्णायासीत्यादौ 'कृष्णस्य त्रिविक्रमो गोपाले' इत्यनेन त्रिविक्रमः कस्मान्नस्यादिति चेत्तत्राह, विष्णु-भक्तीति, तदर्थावृतत्वादिति, कृष्णेत्यस्येति शेषः, अतिक्रमो लङ्घनम् अभाव इति फलितार्थः। ननु कृष्ण यासीत्यादौ वुद्धस्यादर्शनमेव विहितं, अतो गोपालस्य परता नास्तीति कथं त्रिविक्रमो भवतु, उच्यते,—अरामान्तात् परस्य वुद्धस्य सूत्रे प्रत्ययरूपेण निमित्तत्वाभावादस्य हरोऽपि महाहर इति त्रिविक्रमः स्यात् ॥

१७३। र-ष-ऋद्वयेभ्यो नस्य णः, सर्वेश्वर-ह-य-व-कवर्ग-पवर्ग-व्यवधानेऽपि, समान-विष्णुपदे, न तु विष्णु-पदान्तस्य।

रामान्, रामेण इत्यादि। 'वामन'-'नारायण'-'गोविन्द'-'वैकुण्ठ'-'वासुदेव'-आदयोऽपि अरामान्ताः 'कृष्ण'-तुल्याः।

'कुर्वन्नस्ति' इत्यादौ द्वित्वे पूर्वनरामस्य न णत्वं, तत्राकरणात्।

'अ' इति शब्दोऽपि 'आद्यन्तवदेकस्मिन्' इति न्यायेन अरामान्तः। अः, औ, आः इत्यादि। सम्बोधने 'अन्यत्र चानित्यमिष्यते' (स° प्र° [५]) इति हे अ, अ हे वा। दूराह्वाने है-हयोरेव महापुरुषत्वं मतम्—हे अ३, अ हे३ वा॥ १७३॥

१७४। शसादयो यदु-संज्ञाः।

१७५। अत्र पाद-दन्त-मास-युष इत्येतेषां पद्-दत्-मास्-युषन् इत्येते विरिञ्चयो यदुषु वा।

यथासंख्यमनुदेशः; समानां कार्यिणां कार्याणाञ्च, प्रकृतीनां प्रत्ययानाञ्च तुल्यसंख्यानां सतां यद्विधानं, तद्यथासंख्यं स्यात्।

---

१७३। र-ष। समान विष्णुपदे एक विष्णुपदे रामानित्यत्र विष्णुपदात्रत्वन्नणत्वम्। कुर्वन्निति। तत्राकरणादिति, 'असिद्धरूपं न त्याज्यमिति' प्रतिज्ञा सिद्धचर्थमिदं तत्रैव कर्तुं योग्यमपि यन्नकृतं तस्मात् तत्राकरणान्नात्र णत्वम्। आद्यन्तेति, एकस्मिन् आद्यन्तयोरिव कार्यं भवति, आदावन्तेच यथा तथैवेत्यर्थः। आद्यन्तवदेकस्मिन्नित्यत्र आद्यन्तवदेक-मिति पाठः सभ्यः। 'अन्यत्र चानित्यमिष्यत' इति सन्धेरनित्यता। महापुरुषत्वं मतमिति है-हे प्रयोगेतु हैहयोरेवानन्त्ययोरपि इत्यनेनेति शेषः॥

१७४। शसा। संज्ञासूत्रमेतत्॥

१७५। अत्र पाद। यथा चात्र पादादयः कार्यिणः, पदादयः कार्याणि॥ अथेति। धातुस्वरूप इति क्विवन्तादिति शेषः॥

प्रथमस्य प्रथमं, द्वितीयस्य द्वितीयम् इत्यादिक्रमेणेत्यर्थः। प्रयोगाश्च पक्षे विष्णुजनान्तवज्ज्ञेयाः। यथा—पदः पादान्, पदा पादेन, पद्भ्यां पादाभ्याम् इत्यादि।

अथ धातुस्वरूप आरामान्तो 'विश्वपा'-शब्दः। विश्वपाः, विश्वपौ, विश्वपाः ; विश्वपाम्, विश्वपौ ॥ १७५ ॥

**विश्वपा-शस्—**

१७६। आरामहरो यदु सर्वेश्वरे, न त्वापः।

विश्वपः। विश्वपा-टा, ट् इत्, विश्वपा, विश्वपाभ्याम्, विश्वपाभिः ; विश्वपा-ङे, ङ् इत्, विश्वपे, विश्वपाभ्याम्, विश्वपाभ्यः ; विश्वपा-ङसि, इङावितौ, विश्वपः, विश्वपाभ्याम्, विश्वपाभ्यः ; विश्वपा-ङस् विश्वपः, विश्वपोः, विश्वपाम् ; विश्वपा-ङि विश्वपि, विश्वपोः, विश्वपासु। सम्बोधने पूर्ववत् 'हे विश्वपाः' इत्यादि। एवं 'सोमपा' प्रभृतयः। आरामहरविधिर्वा 'हाहा-अब्जादीनाम्' इति क्रमदीश्वरादयः—हाहः हाहान्, अब्जः अब्जान्। 'हाहाः अब्जाः' इति केचित्। एवम् 'अग्रेगाः', 'उदधिक्राः' ॥ १७६ ॥

**इरामान्तो 'हरि'-शब्दः—**

१७७। इ-उ-रामान्तो हरि-संज्ञः।

'अग्निः', 'घिः' च। हरिः ॥ १७७ ॥

---

१७६। आराम। आराम हरविधिर्वेति। क्रमदीश्वरादयः इति यदुक्तं तदसङ्गतमिव प्रतिभाति, क्रमदीश्वरकृतव्याकरणे ईदृशमतादर्शनात्। अव्युत्पन्नोपि गन्धर्ववाचको हाहा शब्दोऽस्ति, तस्य हाहानिति भवभीतितु तट्टीकाकारेणोक्तम्। अब्जा शब्दस्य उल्लेखोपि न दृश्यते इति। हाहा अब्जादयः क्विवन्ताः, एवमिति, हाहाब्जादिवत् एतयोरपि रूपमित्यर्थः। अग्रे—गा शब्द, उदधिक्रा शब्दश्च क्विवन्तः ॥

१७७। इ-उ-रामान्तो। सुगमम् ॥

१७८। हरित औ पूर्वसवर्णः।

'हरित' इति पञ्चम्यास्तस् तद्धितः। हरी ॥ १७८ ॥

१७९। इद्वयस्य ए, उद्वयस्य ओ, ऋद्वयस्य अर्, लृद्वयस्य अल् गोविन्द-संज्ञः।

'गुण'-संज्ञश्च ॥ १७९ ॥

१८०। ङितो वृष्णि-संज्ञाः।

१८१। हरेर्गोविन्दो जसि वृष्णिषु वुद्धे च।

हरयः ; हरिम्, हरी, हरीन् ॥ १८१ ॥

१८२। हरितष्टा ना, न तु लक्ष्म्याम्।

हरिणा, हरिभ्याम्, हरिभिः ; हरये, हरिभ्याम्, हरिभ्यः ॥ १८२ ॥

१८३। ए-ओभ्यां ङसि-ङसोररामहरः।

हरेः, हरिभ्याम्, हरिभ्यः ; हरेः, हर्योः, हरीणाम् ॥ १८३ ॥

१८४। हरितः ङे रौच्।

चराम इत् ॥ १८४ ॥

१८५। अन्त्यसर्वेश्वरादि-वर्णाः संसार-संज्ञाः।

---

१७८। हरितः। औ इति सूत्रवलेन लुप्तषष्ठी ॥

१७९। इद्वयस्य। सुगमम् ॥

१८०। ङितो। सुगमम् ॥

१८१। हरेः। सुगमम् ॥

१८२। हरितः। टेति सूत्रवलेन लुप्तषष्ठी ॥

१८३। ए-ओभ्यां। सुगमम्।

१८४। हरितः। पूर्वोक्तमेव संसारसंज्ञासूत्रं पाठकहिताय पुनर्लिखति ॥

१८५। अन्त्येति, टिसंज्ञाश्चेति यदुक्तं तन्नोचितं प्रयोजनाभावात् ॥

१८६। संसारस्य हरश्चिति।

'ङित्' इति प्राञ्चः। हरौ, हर्योः, हरिषु ; हे हरे ! एवम् 'अग्नि'-'रवि'-'कवि'-'गिरि'-प्रभृतयः। 'त्रि'शब्दो वाच्यलिङ्गो नित्य-बहुवचनान्तस्तस्य पुंसि—त्रयः, त्रीन्, त्रिभिः, त्रिभ्यः, त्रिभ्यः ॥१८६॥

१८७। त्रेस्त्रयो नामि स्वार्थे।

त्रयाणाम्। तदन्तत्वेऽपि—परमत्रयाणाम्। अस्वार्थे तु—प्रियत्रीणाम्। त्रिषु ॥ १८७ ॥

'कति'शब्दोऽपि तद्वत्—

१८८। षनान्त-संख्यातः कतेश्च जस्-शसोर्महाहरः स्वार्थे।

अत्र आत्यन्तिकलयात् प्रत्ययकार्यं न गोविन्दः। कति, कति, कतिभिः इत्यादि। कतेरिति यति-तत्योरुपलक्षणम्, "यति ते नाग शीर्षाणि, तति ते नाग वेदनाः" इति प्रयोगात्। एवं 'परमकति' इत्यादि। अस्वार्थे तु—प्रियकतयः ॥ १८८ ॥

---

१८६। संसारस्य। सुगमम् ॥

१८७। त्रे स्त्रयो। स्वार्थे विषये। प्रधानार्थस्य त्रिशब्दस्य त्रयोभवतीत्यर्थः। परमत्रयाणामिति परमाश्च ते त्रयश्चेति परमत्रयस्तेषामिति, प्रियत्रीणामिति, प्रियास्त्रयो येषामिति विग्रहः। तद्वदिति वाच्यलिङ्गो, नित्य बहुवचनश्चेत्यर्थः ॥

१८८। षनान्त। षश्च नश्च षनौ, षनावन्ते यस्याः सा षनन्ता, षनन्ता चासौ संख्याचेति षनान्तसंख्या तस्याः। षनेति, सौत्रत्वादरामान्त निर्देशः। ननु कतीत्यत्र जसि लुप्ते 'हरेर्गोविन्दोजसि वृष्णिषु वुद्धे'चेत्यनेन गोविन्दः कस्मान्न स्यादितिचेत्तत्राह, अत इति। गोविन्दविधानसूत्रे जस् प्रत्यय रूपेण निमित्तं, अतोऽस्य हरोमहाहरो न भवतीति महाहरविधानम्। कतेरिति पञ्चम्यन्तं पदं, यतितत्योः शब्दयोरुपलक्षणं भवति। तद्यथा स्वं ज्ञापयत् परं यच्च ज्ञापयत्युपलक्षणमिति अत्र कतेरिति पञ्चम्यन्तं

अथ 'सखि'-शब्दः—

१८९। ऋराम-सखिभ्यामुशनस्-पुरुदंशस्-अनेहस् इत्येतेभ्यश्च सोराच्, बुद्धं विना।

संसारस्य हरः ॥ १८९ ॥

१९०। अद्वयस्य आ, इद्वयस्य ऐ, उद्वयस्य औ, ऋद्वयस्य आर, ऌद्वयस्य आल् वृष्णीन्द्र-संज्ञः, ए-ओ-स्थाने ऐ औ च।

'बृद्धि'-संज्ञश्च ॥ १९० ॥

१९१। स्वादयः पञ्च पाण्डवाः।

'घुटः', 'सुटः' च ॥ १९१ ॥

१९२। सख्युर्वृष्णीन्द्रः सुवर्जं पाण्डवेषु।

'ऐ आय्' (स° प्र° ६४) —सखायौ, सखायः ; सखायम्, सखायौ सखीन् ॥ १९२ ॥

---

पदं जस् शसोर्महाहरकार्ये सिद्धे आत्मनः प्राङ्‌निमित्तत्वं ज्ञापयत् सत् यति तत्योरपि तन्महाहरकार्ये प्राङ्‌निमित्तत्वं ज्ञापयतीति उपलक्षणमिति करणे कर्तरि वा टनप्रत्ययः। प्रियकतय इति प्रियाः कति येषामिति विग्रहः ॥

१८९। ऋराम। सुगमम्। सुगममिति व्याख्यापरम्। किन्तु विशेष उच्यते, ननु सोराचित्यत्र बुद्धं विनेत्यनेन बुद्धसंज्ञस्य वर्जनेन प्रथमैक वचन सुसदृशस्य सप्तम्याः सोरपि आच् कथं नस्यादिति कैश्चिदाशङ्क्यते चेत्तत्र एवं वक्तव्यं बुद्धसंज्ञकेन सुना सह झटिति प्रथम बुद्धिग्राह्यस्य प्रथमैक वचनसोः स्फुरणात्तस्यैवाच् स्यान्नतु सप्तम्याः सोस्तत्र बुद्ध्यस्फुरणात् ॥

१९०। अद्वयस्य। ए ओ स्थाने ऐ औ च वृष्णीन्द्रसंज्ञः ॥

१९१। स्वादयः। सुगमम्।

१९२। सख्युः। सु-वर्जनस्य प्रयोजनं बुद्ध एवेति ज्ञेयम् ॥

१९३। न सखिर्हरिसंज्ञष्टादौ, पतिस्त्वसमासे।

सख्या, सखिभ्याम्, सखिभिः ; सख्ये, सखिभ्याम्, सखिभ्यः ॥१९३॥

१९४। ख्य-त्याभ्यां ङसि-ङसोरुस्।

खिशब्द-खीशब्दयोः, तिशब्द-तीशब्दयोः कृतयरामादेशयोरिदंग्रहणम्। सख्युः, सखिभ्याम्, सखिभ्यः ; सख्युः, सख्योः, सखीनाम् ॥ १९४ ॥

१९५। सखि-पतिभ्यां ङेरौ।

सख्यौ, सख्योः, सखिषु ; हे सखे, हे सखायौ, हे सखायः! तदन्तत्वेऽपि—'बहुसख्या, बहुसख्ये, बहुसख्युः, बहुसख्यौ' इत्याहुः। पञ्चम्यां 'सुसखेरागच्छति' इति भाष्यादौ। एतद्दृष्ट्वैव "सख्युः समासे 'घि'- संज्ञोऽस्ति" इति प्रक्रियायाम्। 'समास इत्युपलक्षणम्' इति कृष्ण-पण्डितः ; तेन प्रकृतेः पूर्वत्र बहुप्रत्ययेऽपि 'बहुसखेः' इत्यादि। 'पति'शब्दस्य प्रथमा-द्वितीययोर्हरिशब्दवत्, तृतीयादौ सखि-शब्दवत् ; समासान्तस्य तु हरिशब्दवदेव—यदुपतिना, यदुपतये इत्यादि।

---

१९३। न सखिः। पतिशब्दस्तु टादौ परे असमासे हरिसंज्ञो न भवति, समासेतु भवत्येव इत्यर्थः ॥

१९४। ख्यात्याभ्यां। खी शब्द ती शब्दौ क्यन् क्यङ् सिद्धौ ॥

१९५। सखि। तदन्तत्वेपीति, वहुसख्येत्यादौ पीताम्वर समासः कर्तव्यः। आहुरिति पूर्वाचार्यः इति शेषः। एतन्मते सखिशब्दः समासेऽपि हरिसंज्ञो न भवतीत्यर्थः। सुसखेरिति शोभनः सखा सुसखिस्तस्मादिति, 'स्वतिभ्यां नतौ प्रत्ययौ प्रशंसायामित्य'नेन समासान्त निषेधः। भाष्यादिमते समासे हरिसंज्ञो भवतीत्यर्थः। एतद्दृष्ट्वेति, भाष्यादिमत दर्शनेनैवेत्यर्थः। भाष्यादिमतं दृष्ट्वैव सख्युः समासे घिसंज्ञोऽस्तीति, प्रक्रियायां कथितमिति उपलक्षणमिति, तदन्तत्वमात्रेऽपीत्यस्येति शेषः। अथवा उपलक्षणमिति समस्तासमस्तयोर्ग्रहणमित्यर्थः। तेन बहुसखेरिति स्यात्, सखिना वानरेन्द्रेणेत्यपिच। कृष्णपण्डितः—प्रक्रिया टीकाकारः। समासान्तस्येति समासे अन्तस्थितस्येत्यर्थः। उदाहरणन्तु

ईरामान्तो 'दैत्यप्रमी'शब्दः—दैत्यान् प्रमीनाति हिनस्तीति क्विवन्तो विष्णुवाची। दैत्यप्रमीः, दैत्यप्रम्यौ, दैत्यप्रम्यः। धातुत्वादत्र सर्वत्र सर्वेश्वरे यराम एव वक्ष्यते (वि° प्र° १९७)। तस्यैवोदाहरणमिदं 'वातप्रमी'-भेदज्ञापनार्थमत्र लिखितम्। एवमन्यत्रापि ज्ञेयम्। दैत्यप्रम्यम्, दैत्यप्रम्यौ, दैत्यप्रम्यः ; दैत्यप्रम्या, दैत्यप्रमीभ्याम्, दैत्यप्रमीभिः ; दैत्यप्रम्ये, दैत्यप्रमीभ्याम्, दैत्यप्रमीभ्यः ; दैत्यप्रम्यः, दैत्यप्रमीभ्याम्, दैत्यप्रमीभ्यः ; दैत्यप्रम्यः, दैत्यप्रम्योः, दैत्यप्रम्याम् ; दैत्यप्रम्यि, दैत्यप्रम्योः, दैत्यप्रमीषु। सम्बोधने पूर्ववत्। एवं 'वातप्रमी'-शब्द ईप्रत्ययान्तत्वात् अम्-शस्-ङिषु विशेष इति केचित्। वातप्रमीम् ; 'यावत्सम्भवस्तावद्विधिः' इति न्यायेन दशावतारस्य (वि° प्र° १५७) इति त्रिविक्रमे कृते 'तस्मात् सो नः'—वातप्रमीन्। ङौ वातप्रमी। 'वातप्रमी हूहूप्रभृतेर्धातुत्वं वा' इत्यन्ये—वातप्रम्यम्, वातप्रमीम् ; हूह्वम्, हूहूम्।

उरामान्तो 'विष्णु'शब्दः ; 'हरि'-सुत्रैरेव साधनम् ; विष्णुः, विष्णू, विष्णवः ; विष्णुम्, विष्णू, विष्णून् ; विष्णुना, विष्णुभ्याम्, विष्णुभिः ; विष्णवे, विष्णुभ्याम्, विष्णुभ्यः ; विष्णोः, विष्णुभ्याम्, विष्णुभ्यः ; विष्णोः, विष्ण्वोः, विष्णूनाम् ; विष्णो, विष्ण्वोः, विष्णुषु ; हे विष्णो !

"चालनी तितउः पुमान्" इत्यमरः ( २।९।७६ ) ; प्रकृतौ सन्धिः विनैव सिद्धोऽयमुणादाविति प्रकृत्यङ्गयोर्न सधिः ; तितिउः, तितऊ, तितअवः इत्यादि ॥ १९५ ॥

---

यदुपतिनेत्यादि। स्वमतेतु न सखिरित्यत्र सूत्रे नञ्प्रयोगात् सर्वं सिद्धं स्यात्। क्वचिन्नञ् विधेरनित्यमिति न्यायेनाऽसमासेऽपि सखिना पतिना चेति। पतिना नीयमानायां पुरः शुक्रो न दुष्यतीति दृश्यतेचान्यत्र। धातुत्वादिति अत्र दैत्यप्रमीशब्दे। तस्यैवेति यराम विधानसूत्रस्यैवेत्यर्थः। वातप्रमीति, वातप्रमीशब्देन सह भेदज्ञापनार्थमित्यर्थः। भेदस्तु परमतेनैवेति ज्ञेयम्। ईप्रत्ययान्तत्वादिति, पुंसि ईप्रत्ययः कृतः, वातप्रमीर्वात-

कृष्णश्रीः—

१९६। धातोरीदूतोरियुवौ सर्वेश्वरे बहुलम्।

ईरामस्य इय्, उरामस्य उव्। 'प्रत्ययवर्णेन तदादिर्गृह्यते', ततः सर्वेश्वरादौ विष्णुभक्तावित्यर्थः। एवमन्यत्रापि। एतद्विधसूत्रस्य नामप्रकरणपाठात् लुप्तकृत्प्रत्ययस्य धातुत्वेऽपि नामत्वम् ; ततः प्रत्ययाश्च—कृष्णश्रियौ, कृष्णश्रियः ; परत्वादम्शसोरपि—कृष्णश्रियम् इत्यादि।

भावे क्विपि–भूः, भुवौ, भुवः। बाहुल्यात् न सर्वत्र ; यथोक्तम्—

**"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥"** तेन–॥१९६॥

---

मृग इत्यमरः। ननु वातप्रमीशब्दस्य शसि त्रिविक्रमस्य किं प्रयोजनमिति चेत्तत्राह यावदिति। दशावतारस्येति–दशावतारस्य त्रिविक्रमः शसीत्यनेनेत्यर्थः। धातुत्वं वेत्यन्य इति धातुत्वे वातप्रम्यमितिहूह्वमितिच। हूहू शब्दोगन्धर्ववाचकः। ननु तितउरित्यादौ सन्धिं कस्मान्नस्यादिति चेत्तत्राह, प्रकृताविति। अयं तितउ-शब्दः प्रकृतौ प्रकृत्यवस्थायां स्वभावेन सन्धिं विनैव उनादौ सिद्ध इति पदसाधन कालेऽपि प्रकृत्यङ्गयोररामोरामयो र्न सन्धिरित्यर्थः॥

१९६। धातो। बहुलमिति क्रिया विशेषणम्। प्रत्ययेति, प्रत्ययबलेन तदादिः प्रत्ययवर्णादिर्गृह्यते। प्रत्ययवर्णोऽत्र सर्वेश्वरः। तदादिरित्यत्र सर्वेश्वरादावित्यत्र च पीताम्वर समासः। एतद्विधेति, एतत् प्रकार सूतस्येत्यर्थः। विधाविधौ प्रकारेचेति नानार्थवर्गः। लुप्तकृत् प्रत्ययो यत्र तस्य धातुत्वेऽपि नामत्वं भवति, अतस्तस्मात् स्वादिप्रत्यया भवन्ति। ननु कृष्णश्रियं कृष्णश्रिय इत्यत्र दशावतारादमशसोरराम हर इत्यनेनाराम हरः कस्मान्नस्यादिति चेत्तत्राह परत्वादिति। पूर्वापरयोः परविधिर्वलवान् इति न्यायेन अम् शसोरपि इय् भवतीत्यर्थः। बाहुल्यान्न सर्वत्रेति यदुक्तं, तत् पूर्वाचार्यवचनेन दृढ़यति यथोक्तमिति। विधेः क्वचित् प्रवृत्तिः, क्वचित् अप्रवुत्ति र्निवृत्तिः। क्वचित् विभाषा विकल्प

१९७। सहजानेकसर्वेश्वरस्य क्विवन्तस्य केवल-धात्वक्षर-सत्सङ्गास्पृष्टयोरीदूतोर्यवौ।

तत्र कृत्समासे—विश्वनीः, विश्वन्यौ, विश्वन्यः इत्यादि ; षष्ठी-बहुत्वे—विश्वन्याम् ॥ १९७ ॥

१९८। नी-राधाभ्यां ङेराम्।

विश्वन्यां, विश्वन्योः, विश्वनीषु। एवं प्रकृष्टं ध्यायतीति क्विपि निपातात्—प्रधीः, प्रध्यौ। केवलक्विवन्ते मालीयति इति—मालीः', माल्यौ ; ङौ—माल्यि।

'सहज'-इति किम् ? पश्चाद्योगे तु न स्यात् ; विश्वस्य नीः—विश्वनीः, विश्वनियौ, विश्वनियः ; आमि ङौ च विश्वनियाम्। 'अनेक' इति किम् ? नीः, नियौ, नियः। 'धात्वक्षरसत्सङ्गा-स्पृष्टयो-' इति किम् ? कृष्णप्रीः, कृष्णप्रियौ ; कृष्णपटप्रूः, कृष्ण-पटप्रुवौ। 'केवल-' इति किम् ? इह तु स्यादेव—उन्नीः, उन्न्यौ, उन्न्यः ॥ १९८ ॥

---

क्वचित् अन्यत् एव अपूर्वं विधानं, एवं क्रमेण विधानं बहुधा बहु प्रकारं समीक्ष्य दृष्ट्वा बाहुलकं बहुलं चतुर्विधं वदन्ति पूर्वाचार्या इति शेषः। बाहुलकमिति स्वार्थे तद्धितः। बहूनर्थान् लाति ददातीति बहुल-शब्दस्यार्थः ॥

१९७। सह। केवलञ्च तत्, धात्वक्षरञ्चेति केवलधात्वक्षरं तस्य सत्सङ्गः केवलधात्वक्षर-सत्सङ्गस्तेनास्पृष्टयोः। विश्वनीरिति—उपेन्द्रो-र्यादिव्यान्ताजन्तपूर्वपदानि कृदन्तेन समस्यन्त इत्यनेन समासः ॥

१९८। नी-राधा। केवलेति। मालीयतीति क्यन्नन्तान्मालीय धातोः क्विपि यवयोर्हरोवले इति यरामहरेच माली शब्दो निष्पन्नः। तस्य मालीरित्यादि रूपम्। विश्वस्य नीः विश्वनीरिति षष्ठी कृष्ण पुरुषः। उन्नीरिति, अत्र ईत् केवल धात्वक्षरस्यसत्सङ्गेन न स्पृष्टः, किन्तु उपाक्षर धात्वक्षरयोः सत्सङ्गेन स्पृष्टः, अतोऽत्र भवत्येव ॥

१९९। सुधी-भुवोरियुवावेव।

सुष्ठु ध्यायतीति क्विपि निपातनात्—सुधीः, सुधियौ, सुधियः। कृष्णभूः, कृष्णभुवौ, कृष्णभुवः ॥ १९९॥

२००। वर्षा-पुन-र्दृन्-कर-कार-काराभ्यो भुवो व एव।

'कर एव कारः, सोऽपि गृह्यते' इति विस्तरादुभयोरुपादानम्। वर्षाभूः, वर्षाभ्वौ, वर्षाभ्वः। दृन्भूः, दृन्भ्वौ ; एवं 'खलपू'-प्रभृतयः।

कृष्णं सुखीयति—कृष्णसुखीः, कृष्णसुख्यौ, कृष्णसुख्यः। अनन्तीयति—अनन्तीः, अनन्त्यौ, अनन्त्यः। 'ख्यत्याभ्याम्' (वि॰ प्र॰ १९४) इति त्रिविक्रमग्रहणात् ङसि-ङसोरुस्—कृष्णसुख्युः, अनन्तुः। नरामादेशस्य तरामस्थानिवत्त्वात्—लून्युः। 'कृष्णसुख्युः' इत्याद्य् के ॥ २०० ॥

---

१९९। सुधी। एतयोरियुवावेव नतु यवौ, नियम सूचनार्थमेव शब्दोपादानम् ॥

२००। वर्षा। वर्षादिभ्यः परस्य भू-शब्दस्य वएवभवति, नतूव्। पूर्व लक्षणे प्राप्तमुवं वाधित्वा वएव भवतीत्यर्थः। ननु व्याकरणान्तरे कारशब्द एव गृहीतस्तर्हि कथं करशब्दोपादानं कृतमिति चेत्तत्राह, कर एवेति। सूत्रे यः कार शब्दो गृहीतः स स्वार्थे तद्धितेन करशब्द निष्पन्नः, अतः सोऽपि करोपि गृह्यते इति विस्तरार्थः। विस्तरो व्याकरण विशेषः। वर्षाभूर्भेकादौ। पुनर्भूर्द्विरूढयाम्। दृन्निति हिंसार्थेऽव्ययं हिंसायां भवतीति दृन्भूः, दृन् शब्दस्तवर्गान्तः। दृन्भूः पन्नगे रुद्रे वज्रेच। करभूः कारभूश्च नखे। काराभूः काराजाते, कारा निगडवन्धनस्थानं। 'कारा स्यात् वन्धनालये' इत्यमरः। ख्यत्याभ्यामितीति। ख्यत्याभ्यां ङसिङसोरुसित्यत्र खीशब्द तीशब्दयोश्च कृत यरामादेशयोर्ग्रहणादित्यर्थः। लून्युरिति—लूनमिच्छतीति क्यन्। उक्तार्था—नामप्रयोग इति न्यायेन इच्छतेरप्रयोगः, अन्तरङ्ग-स्वादेर्महाहर एकपदत्वारम्भे इति अमोमहाहरः अद्वयस्य ई क्यनीति अरामस्येरामः ततो लूनीय धातोः क्विप्, यवयोर्हरोवले इत्यनेन यलुक् ततो

**अथ ऋरामान्ताः ; तत्र 'पितृ'-शब्दः ।** 'ऋरामसखिभ्याम्' (वि° प्र° १८९) इत्यादि—पिता ।

२०१ । ऋरामस्य गोविन्दः पाण्डवेषु ङौ च ।

पितरौ, पितरः ; पितरम्, पितरौ, पितॄन् ; पित्रा, पितृभ्याम्, पितृभिः ; पित्रे, पितृभ्याम्, पितृभ्यः ॥ २०१ ॥

२०२ । ऋरामतो ङसि-ङसोरस्य उच् ।

पितुः पितृभ्यांम्, पितृभ्यः ; पितुः, पित्रोः, पितॄणाम् ; पितरि, पित्रोः, पितृषु ॥ २०२ ॥

२०३ । बुद्धे गोविन्दः ।

२०४ । राधा-विष्णुजनाभ्यामीपश्च त्रिविक्रमात् सोर्हरः ।

हे पितः ! एवं 'जामातृ'-प्रभृतयः । 'नृ'-शब्दः—ना, नरौ, नरः ; नरम्, नरौ, नॄन् ; न्रा, नृभ्याम्, नृभिः ; 'नृशब्दस्य तु वा' (वि° प्र° १६९)—नॄणाम् ॥ २०३-२०४ ॥

**'कर्तृ'शब्दस्य भेदः—कर्ता,—**

२०५ । स्वसृ-तृल्-तृण्-प्रत्ययान्तानां वृष्णीन्द्रः, सुवर्जं पाण्डवेषु ।

---

लूनीशब्दात् ङसि ईरामस्य यरामः, ततोऽस्य नरामरूपादेशस्य तरामरूप स्थानिवत्त्वात् ख्यात्यभ्यामित्यादिना ङसेरुस् । नरामस्य तरामस्थानिवत्त्व स्थान्यादेशाः स्थानिवदिति न्यायेन इति ज्ञेयं, लूनशब्दः क्तान्तः । कृष्णसुख्य इत्येक इति तन्मते उस् न भवति ।

२०१ । ऋरामस्य । सुगमम् ॥

२०२ । ऋराम । पितुरित्यत्र संसारस्य हरश्चितीति ऋरामहरः ॥

२०३ । बुद्धे । बुद्धे गोविन्द इति ऋरामस्येत्यादिनेति शेषः ॥

२०४ । राधा । त्रिविक्रमादिति, ईपोविशेषणं, कर्तृशब्दस्येति, भेदोवर्तत इति शेषः । सुवर्जं पाण्डवेषु वृष्णीन्द्रोभतीति भेदः ॥

कर्तारौ, कर्तारः ; कर्तारम्, कर्तारौ ; यद्बुषु पितृवत् ; हे कर्तः! लेष्टृ —लेष्टा, लेष्टारौ, लेष्टारः ; लेष्टारम्, लेष्टारौ। हरिमित्रादिरेवायं, हरिवेण्वादिस्त्वपपाठः।

लेष्टृ-त्वष्टृ-तृशब्दान्तास्तृल्-तृनन्ता बुधैर्मताः।
पितृ-मातृ-भ्रातृ-यातृ-जामातृ-दुहितृर्विना ॥ २०५ ॥

२०६। क्रोष्टु-शब्दस्य पाण्डवेषु तृल्-प्रत्ययान्तस्यैव रूपं, बुद्धं विना, टादिसर्वेश्वरे तु विकल्पः।

क्रोष्टा, क्रोष्टारौ, क्रोष्टारः ; क्रोष्टारम्, क्रोष्टारौ, क्रोष्टून् ; क्रोष्ट्रा, क्रोष्टुना, क्रौष्टुभ्याम्, क्रोष्टुभिः ; क्रोष्ट्रे, क्रोष्टवे इत्यादि। कृतेऽप्यकृते यः स्यात्, स 'नित्यः' ; नित्यस्य वलवत्त्वात् पूर्वन्त्वामि नुड़ेव (वि° प्र° १६७)—क्रोष्टूनाम्, 'क्रोष्टृणाम्' इत्येके ; हे क्रोष्टो ! लक्ष्म्यान्तु—क्रोष्ट्री ॥ २०६ ॥

**ऐ रामान्तः 'कृष्णरै' शब्दः—**

२०७। राय आ स-भोः।

कृष्णराः, कृष्णरायौ, कृष्णरायः ; कृष्णरायम् इत्यादि। एवं

---

२०५। स्वसृ। तृल्च तृन्च तृल्तृणौ, तृल्तृणौ च तौ प्रत्ययौ चेति तृल् तृन् प्रत्ययौ, स्वसाच तृल् तृन् प्रत्ययौच स्वसृ-तृल्-तृन् प्रत्यायास्तेषाम्। हरीति। हरि मित्रादिर्लरामादिः। हरिवेण्वादिस्तवर्गान्तादि, केवलयोस्तृल् तृणोरसम्भवात् तदन्ता एव गृह्यन्ते। तदन्ता एव के इत्यपेक्षायां पद्यमाह लेष्ट्रिति। लेष्टृत्वष्ठृ शब्दौ पित्रादीन् वर्जयित्वा तृशब्दान्ताश्च बुधैः पण्डितैः तृल्तृणन्ता मता इत्यर्थः॥

२०६। क्रोष्टु। टादि बुद्धं विना पाण्डवेषु परेषु क्रोष्टुशब्दस्य तृल् प्रत्ययान्तस्यैव रूपं भवति। टादि सर्वेश्वरेतु परे तृल् प्रत्यायान्तस्यैव रूपस्य विकल्पः। ननु क्रोष्ट्र शब्दस्यामि क्रोष्टृणामित्यपि कथं नस्यादिति चेत्तत्राह, कृतेपीति। तृल् प्रत्ययान्तस्येव रूपे कृते न कृतेऽपि नुटः प्राप्तिरतोनुटोनित्यत्वम् अतोवलवत्वञ्च, अतः प्रथमं नुड़ेव अतः क्रोष्टुनामित्येव भवति। लक्ष्म्यां तु क्रोष्ट्री निपातनात् इति शेषः॥

'रै'शब्दश्च। नेह—तद्धिते 'रैत्वम्', क्यनि—रैयति, पाणिनीयेऽपि (७।२।८५) 'रायो हलि' इत्यत्र विष्णुभक्त्यनुवृत्तेः ॥ २०७ ॥

**ओ रामान्तो 'गो'-शब्दो बलीवर्दादिषु पुरुषोत्तमलिङ्गः—**

२०८। ओ औ पाण्डवेषु।

गौः, गावौ, गावः ॥ २०८ ॥

२०९। ओ आ अम्शसोर्न च सो नः।

अन्यथा 'वातप्रमीन्' इतिवत् 'गा' इत्यत्र सो न स्यात्। गाम्, गावौ, गाः ; गवा, गोभ्याम्, गोभिः ; गवे, गोभ्याम्, गोभ्यः ; 'ए-ओभ्यां ङसि ङसो'-(वि॰ प्र॰ १८३) इत्यादिना अरामहरः—गोः, गोभ्याम्, गोभ्यः ; गोः, गवोः, गवाम् इत्यादि। 'सर्वविधिभ्यो हरो, हरात् सर्वेश्वरादेशो वलवान्', 'अन्तरङ्ग'- इत्यादि च विधान-सामर्थ्यात् न सोर्हरः—हे गौः !

औरामान्तो 'ग्लौ'-शब्दः — ग्लौः, ग्लावौ, ग्लावः इत्यादि ॥२०९॥

**इति सर्वेश्वरान्ताः पुरुषोत्तमलिङ्गाः *।**

---

२०७। रायः। 'एकवर्णोविधिरन्ते प्रवर्तते' इति न्यायेन रैशब्दस्य ऐरामस्य स्थाने आरामो भवति, सभोः परयोः। रैत्वमित्यत्र रैयतीत्यत्रच आरामो न भवति, सभोः परत्वाभावात्। रायोहलीति पाणिनीयसूत्रेऽपि विभक्त्यनुवृत्तेर्हेतोः रैत्वमित्यादौ न भवति ।।

२०८। ओ औ। सुगमम् ।।

२०९। ओ आ। अन्यथेति, सरामस्य स्थाने नरामस्य निषेधं विनेत्यर्थः। सोनरामो न स्यात्, अपितु स्यादेवेति। निषेधविधानं सो नः स्यादिति पाठान्तरम्। ननु गोशब्दस्य बुद्धे 'ए-ओ वामनेभ्य' इत्यादिना बुद्धस्य हरः कस्मान्नस्यादिति चेत्तत्राह सर्वेति। सर्वविधिभ्योहरोबलवान्, हरात् सर्वेश्वरादेशो बलवान् इत्यस्ति, अतो विधानस्य, औराम विधानस्य सामर्थ्यात् बलवत्त्वात् प्रथमं औरामः, अतो न सोर्हरः। प्रकृत्याश्रितत्वा-दौरामविधानस्यान्तरङ्गत्वम्। ग्लौशब्दश्चन्द्रवाचकः ।।

।। * ।। इति सर्वेश्वरान्ताः पुंरुषोत्तमलिङ्गाः ।। * ।।

## अथ सर्वेश्वरान्ता लक्ष्मीलिङ्गाः

### २१०। तत्रावन्तलक्ष्मी राधा-संज्ञा।

'श्रद्धा'-संज्ञा च। तत्र 'राधा'-शब्दः; 'राधा-विष्णुजनाभ्याम्' (वि° प्र° २०४) इति—राधा ॥ २१० ॥

### २११। राधा-ब्रह्मभ्यामौ ई।

'अद्वयमिद्वये ए' (स° प्र° ४८)—राधे, राधाः ॥ २११ ॥

### २१२। राधाया ए टौसोर्बुद्धे च।

'ए अय्' (स° प्र° ६३)—राधया, राधाभ्याम्, राधाभिः ॥२१२॥

### २१३। राधातो याप् वृष्णिषु।

'एद्वये ऐ' (स° प्र° ५५)—राधायै, राधाभ्याम्, राधाभ्यः; राधायाः, राधाभ्याम्, राधाभ्यः; राधायाः, राधयोः, राधानाम्;

---

२१०। तत्र। सुगमम् ॥

२११। राधा। सुगमम् ॥

२१२। राधाया। राधायाः आराम एरामो भवति ॥

२१३। राधातो। ननु राधायामित्यत्र 'नीराधाभ्यामित्यादिना' ङेरामिकृते 'बामनगोपीत्यादिना' नुट् न स्यादिति चेत्तत्राह लाक्षणिकेति। ननु राधाशब्दस्य बुद्धे 'राधाविष्णुजनाभ्यामित्यादिना' सोर्हरः कस्मान्न स्यादिति चेत्तत्राह अन्तरङ्गेति। अन्तरङ्गेत्यादि न्यायेन प्रथमं राधाया एटौसोर्बुद्धे चेत्यनेन एत्वमेव। ततो बुद्धादर्शनमिति। नत्वन्तरङ्गविधिर्वा, को बहिरङ्गो वा, क इत्यपेक्षायामाह प्रकृत्याश्रितमिति। प्रकृत्याश्रितमित्यादेर्विधानमिति विशेष्यम्। पुंस्त्वनिर्देशस्तु सभ्यः अन्तरङ्गविधेर्बलवान् इत्यस्य वक्ष्यमाणत्वात् प्रकृत्याश्रितमन्तरङ्गं प्रकृतावपि पूर्वपूर्वमन्तरङ्गमिति। अत्र एत्वविधानस्य प्रकृत्याश्रितत्वात् स्वल्पाश्रितत्वाच्च अन्तरङ्गत्वम्। राधाया ए भवतीति स्वल्पाश्रितत्वम्। सुहरविधानस्य प्रकृतेर्बहिरा-

'ङेराम्' (वि° प्र° १९८), लाक्षणिकप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति न नुट्—राधायाम्, राधयोः, राधासु ।

सम्बोधने—'प्रकृत्याश्रितं प्रकृतावपि पूर्वपूर्वमन्तरङ्गं, प्रकृतेर्वहिराश्रितं वहिरङ्गम् ; स्वल्पाश्रितमन्तरङ्गं, बह्वाश्रितं बहिरङ्गम् ; अन्तरङ्ग-बहिरङ्गयोरन्तरङ्गो विधिर्वलवान्' इति न्यायेन प्रथममेत्वे कृते 'ए-ओ-वामनेभ्यो बुद्धस्यादर्शनम्' (वि° प्र° १७२) इति हे राधे !

एवं 'रमा'-'रामा'-'श्रद्धा'-'माला'-आदयः ; अम्बादयश्च। 'लक्ष्मी' (वि° प्र° २१०) ग्रहणान्नेह 'राधा'संज्ञा ; समासे वामनो वक्ष्यते (समा° प्र° १७४८)—प्रियराधाय कृष्णाय ॥ २१३ ॥

## २१४। अम्बादीनां गोप्याश्च वामनो बुद्धे ।

हे अम्ब ! हे अक्क ! हे अत्त ! हे अल्ल ! हे अप्प ! हे अब्ब ! एत एवाम्बादयः। नेह—हे अम्बाड़े ! हे अम्बाले ! हे अम्बिके इत्यादि ॥ २१४ ॥

**अथ जरा—**

## २१५। जराया जरस् वा सर्वेश्वरे।

---

श्रितत्वात् बह्वाश्रितत्वाच्च बहिरङ्गत्वं राधादिभ्यः परस्य सोर्हरो भवतीति बह्वाश्रितत्वम् । प्रकृतावपि पूर्वपूर्वमितितु स्थानान्तरे बोद्धव्यम् । प्रियराधायेति प्रिया राधा यस्य तस्मै गोरीप् आप् ऊङश्चान्तस्याप्रधानस्य वामन इत्यनेन वामनः ॥

२१४। अम्बा। ईऊ लक्ष्मीर्गोपीसंज्ञा। अम्बादयः षट्शब्दा अम्ब वाचकाः। नाटचोक्तौ माता अम्बा कथ्यते । अम्बाड़ादयोऽपि त्रयः शब्दा अम्बावाचका एव किन्त्वेषामम्बादित्वं नास्ति, एते एवेति नियमात् ॥

२१५। जरा । एवमिति आदेशो भवतीति ज्ञापनार्थं, स्त्रीलिङ्गप्रकरणेऽरामान्तस्योल्लेखः कृत इति ज्ञेयम् । निर्जरशब्दस्यापि जराया इत्यादि जरेति भागस्त विकल्पेनादेशो भवतीत्यत्र हेतुमाह वर्णेनेत्यादि । तत्र

जरा, जरसौ जरे, 'जरसी' इति केचित्, जरसः जराः ; जरसम् जराम् इत्यादि। एवमरामान्त 'निर्जर' शब्दस्यापि जरेतिभागस्य विकल्पेनादेशो ज्ञेयः ; 'वर्णेन विधौ तदन्तस्य कार्यं स्यान्नाम्ना तु क्वचित्' इति, 'निर्दिश्यमानानामादेशिनामादेशाः' इति, 'एकदेशविकृतमनन्यवत्' इति च न्यायेभ्यः—निर्जरसौ निर्जरौ, निर्जरसः निर्जराः इत्यादि ; निर्जरेण निर्जरसा, 'निर्जरसिन' इत्येके ; निर्जरैः निर्जरसैः, निर्जरात् निर्जरसः, 'निर्जरसात्' इति केचित्।

'विश्वपा' पुरुषोत्तम-'विश्वपा'-शब्दवत् ॥ २१५ ॥

२१६। अत्र निशानासिकयोर्निश्-नसावादेशौ यदुषु वा वाच्यौ, प्रयोगाश्च पक्षे विष्णुजनान्तवज्ज्ञेयाः।

यथा निशः निशाः, निज्भ्यामित्यादि।

इरामान्तो 'भक्ति'शब्दः। तस्य पाण्डवेषु 'हरि'शब्दवत् ; शसि—भक्तीः ; 'पुंसि' (वि° प्र° १५७) इति विशेषणान्नरामो न स्यात्। 'न तु लक्ष्म्याम्' (वि° प्र° १८२) इति न नादेशः—भक्त्या, भक्तिभ्याम्, भक्तिभिः ॥ २१६ ॥

---

वर्णेनेति विधौ विधाने सूत्रे येन वर्णेन यत् कार्यं विधीयते, तत्कार्यं तद्वर्णान्तस्यापि भवतीति सर्वत्र। येन नाम्ना यद्विधीयते, तत्तन्नामान्तस्यापि भवतीतितु क्वचिदिति न्यायार्थः। तदन्तस्येत्यत्र सवर्णः अन्ते यस्य इति विग्रहेण पीताम्बरसमासे कृते सति, तस्य तद्गुणसम्विज्ञानमनेन उभयपदस्य तत् कार्यं स्यात्। अतद्गुणसम्विज्ञानस्वीकारेण पूर्वपदस्य तत् कार्यं स्यादिति विरोधे प्राप्ते 'यावत् सम्भवस्तावद्विधि'रिति न्यायेन अन्तर्भूततद्वर्णस्यैव तत् कार्यं स्यादिति। अथवा स एव वर्णः अन्तः तद्वर्णान्त इति श्यामरामे कृते न कश्चिद्दोष इति। अतएव ग्रन्थकारेणाप्युक्तं जरेति भागस्येति। एवं तन्नामान्तस्येत्यत्रापि ज्ञेयम्। निर्दिश्येति इत्येवम्प्रकारेण निर्दिश्यमानानां आदेशिनां स्थाने आदेशाभवन्त्येवेति शेषः। अत्रादेशी जराशब्दः। एकदेशेति स्पष्टार्थमेव। केचिदिति क्रमदीश्वरादय इत्यर्थः ॥

२१७। हरित आप् वा वृष्णिषु लक्ष्म्यां, नित्यं गोप्याः।

वृष्णिनिमित्तापो न याप्—भक्त्यै भक्तये, भक्तिभ्याम्, भक्तिभ्यः; भक्त्याः भक्तेः, भक्तिभ्याम्, भक्तिभ्यः; भक्त्याः भक्तेः, भक्त्योः, भक्तीनाम्। आवन्तत्वेऽपि 'नीराधाभ्यां ङेराम' (वि° प्र° १८६)—भक्त्याम् भक्तौ, भक्त्योः, भक्तिषु; हे भक्ते! एवं 'बुद्धि'-'मति'-'भूति'-'कृति'-'धृति'-'रुचि'-प्रभृतयः।

अथ 'धेनु'-शब्दः—धेनुः, धेनू, धेनवः; धेनुम्, धेनू, धेनूः इत्यादि। वृष्णिषु—धेन्वै धेनवे, धेन्वाः धेनोः, धेन्वाम् धेनौ। अशन्यादीनां लक्ष्मीत्व-पक्षेऽपि एवमेव ज्ञेयम्। अत्र हरेः स्वभाव-लक्ष्मीत्वे सत्येवेति वाच्यम्; तेन नेह—प्रियहरये, प्रियविष्णवे श्रियै। एवं 'प्रियत्रिः'; 'मतिवदम्' इति तु तस्यां भ्रमः। शसि—प्रियहरीः। नादेशस्तु (वि° प्र° १८२) न—प्रियहर्या। 'पटु-प्रभृतीनान्तु विकल्पः' इति केचित्—पटवे, पट्वै ॥ २१७ ॥

**'त्रि'-शब्दस्य लक्ष्म्याम्—**

२१८। लक्ष्मीस्थयोस्त्रि-चतुरोस्तिसृ-चतसृ विष्णुभक्तौ।

---

२१६। अत्र निशा। सुगमम् ॥

२१७। हरित। वृष्णि। अशन्यादीनामिति अशनिर्द्वयोरित्यमरात्, अशनिशब्दस्य पुरुषोत्तमत्वं लक्ष्मीत्वञ्च। अशनिशब्दः वज्रवाचकः, आदिशब्देन तिथि-मणिप्रभृतीनां रेणु प्रभृतीनाञ्च ग्रहणम्। अत्रेति। अत्र हरित आप् वेत्यादिलक्षणे। प्रियहरये इति प्रियो हरिर्यस्यास्तस्यै। अत्र हरेः स्वाभाविकलक्ष्मीत्वं नास्ति, किन्तु पीताम्बर-समासेन लक्ष्मीत्वम्; एवं प्रियविष्णवे इति। एवमिति प्रियत्रिशब्दोऽपि, एवं प्रियहरिशब्दवदित्यर्थः। प्रियास्त्रयः 'प्रियाणि त्रीणि वा यस्या' इति विग्रहः। मतिवदिति अयं प्रियत्रिशब्दः। तस्यां प्रक्रियाकौमुद्याम्। पटु-प्रभृतीनामिति—पटुशब्दादीनामपि स्वभावलक्ष्मीत्वं नास्ति वाच्यलिङ्ग-त्वात्, अतोऽस्माकं मते आप् न भवति, केचिदिति क्रमदीश्वरादय इत्यर्थः ॥

२१६। तिसृ-चतस्रो रः सर्वेश्वरे।

गोविन्द-त्रिविक्रमोरामाणामपवादः। षत्वे केवलसरामो विरिञ्चि-गृहीतः। तिस्रः, तिस्रः, तिसृभिः, तिसृभ्यः, तिसृभ्यः ; आमि तु 'न तिसृ-चतस्रोः (वि॰ प्र॰ १६६ )इति ज्ञापकात् नुड़ेव–तिसृणाम्, तिसृषु ॥ २१८-२१६ ॥

**ईरामान्तो 'गोपी'शब्दः ; ईविति लक्ष्मीबिहितप्रत्ययः—**

२२०। ई-ऊ-लक्ष्मीर्गोपीसंज्ञा।

'नदी'-संज्ञा च। गोपी, गोप्यौ, गोप्यः ; गोपीम्, गोप्यौ, गोपीः ; गोप्या, गोपीभ्याम्, गोपीभिः ; गोप्यै, गोपीभ्याम्, गोपीभ्यः ; गोप्याः गोपीभ्याम्, गोपीभ्यः ; गोप्याः गोप्योः, गोपीनाम्, गोप्योः गोपीषु ; हे गोपि ! अत्र वामन-विधान-सामर्थ्यान्न

---

२१८। लक्ष्मी। लक्ष्मीस्थयोर्लक्ष्म्यां वर्तमानयोः ॥

२१६। तिसृ। तिसृचतस्रिति समाहारात्तिसृ। 'एकवर्णो विधिरन्ते प्रवर्तते इति न्यायेन ऋरामस्य स्थाने ररामो भवति। गोविन्देति ऋरामस्य गोविन्दः पाण्डवेषु ङौ चेत्यनेन गोविन्दः स्यात्। दशावतारस्य त्रिविक्रमः शसीत्यनेन त्रिविक्रमः स्यात्। ऋरामतो ङसि ङसोरस्य उच् इत्यनेन उरामः स्यात् ; तेषामपवादो वाधकोऽयं ररामः। प्रियास्तिस्रो यस्मिन् तस्मात्तस्य वा प्रियतिस्र इत्यतो रराम न स्यात्। ननु तिस्र इत्यादिषु विरिञ्चिसस्य षत्वं कथं न स्यादिति चेत्तत्राह षत्वमिति। केवल-सरामो यत्र विरिञ्चिस्तत्र षत्वं। अत्रतु तिसृविरिञ्चिरिति न षत्वम्। नत्वामितितिसृणामित्यत्र यरामः कथं न स्यादिति चेत्तत्राह आमित्विति, यद्यत्र ररामः स्यात्तर्हि न तिसृचतस्रोर्लक्षणं निरर्थकं स्यात्तस्मादत्र नुड़ेव भवति नतु ररामः ॥

२२०। ई ऊ। ई ऊ लक्ष्मीः ईरामोरामान्तलक्ष्मीरित्यर्थः। ननु हे गोपीत्यत्र हरेर्गोविन्द इत्यादिना गोविन्दः कस्मान्न भवतीति चेत्तत्राह। अत्र वामनेति। यद्यत्र गोविन्देन भाव्यं तदा बुद्धे वामनविधान-

गोविन्दः। एवं 'नदी'-'मही'-प्रभृतयः; सखी च—सखी सख्यौ। 'अत्र नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषा नेष्यते; ङौ—सख्याम्। एवं 'सुपथी' इत्यत्र नात्वम्। 'त्रिविक्रमात्' (वि° प्र° २०४) इति विशेषणान्नेह सोर्हरः। पुंसि वृष्णिषु अति-गोपये इत्यादि; लक्ष्म्याम्—अतिगोप्यै अतिगोपये इत्यादि।

**अवी-तन्त्री-तरी-लक्ष्मी-ह्री-धी-श्रीणामुणादितः।**
**शब्दानान्तु भवत्येषां सुलोपो न कदाचन॥**

लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः इत्यादि गोपीवत्। तन्त्री वीणाया-मिति तु तन्त्रयतेरणन्तत्वादीपि सिद्धा। गौरादित्वात् 'स्त्री'शब्द ईवन्तः सोर्हरः—स्त्री॥ २२०॥

२२१। स्त्री-भ्रुवोरियुवौ सर्वेश्वरे, स्त्रिया अम्-शसोर्वा।

स्त्रियौ, स्त्रियः; स्त्रियम् स्त्रीम्, स्त्रीयौ, स्त्रियः स्त्रीः; स्त्रिया, स्त्रीभ्याम्, स्त्रीभिः; 'नित्यं गोप्याः' (वि° प्र° २१७)—

---

सूत्रमकृत्वा गोप्या अपि गोविन्दविधानसूत्रमेव विदध्यात्। ननु सखी-त्यादौ नाम्न इत्यादि न्यायेन पूर्वोक्तं सखिशब्दस्य कार्यं कस्मान्न भवतीति चेत्तत्राह अत्रेति। एवमिति नाम्न इत्यादिन्यायस्यानिष्टत्वात् सुपथी-त्यत्रापि पथ्यादीनामिरामस्यारामः कृष्णस्थान इत्यनेननात्वम्। अतिगोपि-रिति–अतिक्रान्तो गोपीमिति अत्यादयो द्वितीययेत्यनेन कृष्णपुरुषः। गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामन इत्यनेन वामनः। अवीति। एषामवीत्यादीनां शब्दानां कदाच न कदाचिदपि सुलोपो न भवति, ईप्-प्रत्ययान्तत्वाभावादिति शेषः। उणादिनेति उपलक्षणे तृतीया उणादि-सिद्धानामित्यर्थः। उणादिनेतितु अवी-तन्त्री-तरी-लक्ष्मीपरं ज्ञेयम्। ह्री-धी-श्रीणां क्विवन्तत्वात्। तन्त्रीति। तन्त्री वीणायां, इतितु इत्यत्र वर्तमाना तन्त्री तन्त्रयतेर्ण्यन्तस्य तन्त्रीधातोरण्प्रत्ययान्तत्वादीपि ईप्प्रत्यये सिद्धा। इपीति सप्तम्यन्तम्। गौरादित्वादिति। गोरादेरीप् प्रत्ययस्तद्धिते वक्ष्यते॥

२२१। स्त्री भ्रुवो। स्त्रियाः। नन्वामि किं इयादेशेन भाव्यं नुड़ागमेन वेति सन्देह आह विरिञ्चित इति। अतिस्त्रीरिति अतिक्रान्तः

स्त्रियै, स्त्रीभ्याम्, स्त्रीभ्यः ; स्त्रियाः, स्त्रीभ्याम्, स्त्रीभ्यः ; स्त्रियाः, स्त्रियोः, 'विरिञ्चितो विष्णुर्बलवान्'–स्त्रीणाम् ; स्त्रियाम्, स्त्रियोः, स्त्रीषु ; हे स्त्रि ! गौणत्वे पुंसि तु 'अतिस्त्रिः'। 'नाम्ना तु क्वचित्' इति तदन्तविधिः स्यात् ; तत्र 'क्वचिद्'-ग्रहणात् गोविन्दं ना-नुड़ौ च वर्जं स्त्रिया इयादेश इति विस्तरः ; मतान्तरन्तु न भाष्यादिमतमिति च ; अतिस्त्रियौ, अतिस्त्रियः ; अतिस्त्रियम् अतिस्त्रिम्, अतिस्त्रियौ, अतिस्त्रियः अतिस्त्रीन् ; अति-स्त्रिणा ; अतिस्त्रये ; अतिस्त्रेः अतिस्त्रयोः, अतिस्त्रीणाम् ; अतिस्त्रौ। लक्ष्म्यां शस्-टा-परत्वे—अतिस्त्रियः अतिस्त्रीः ; अति-स्त्रिया। वृष्णिषु पक्षे—अतिस्त्रियै अतिस्त्रये, अतिस्त्रियाः ; अतिस्त्रियाम्।

'श्री'शब्दः—श्रीः 'धातोरीदूतोः'- ( वि° प्र° १९६) इति श्रियौ, श्रियः इत्यादि ॥ २२१ ॥

२२२। नेयुवस्थानं गोपी, स्त्रियं विना, वृष्णिष्वामि च वा।

श्रियै श्रिये, श्रीभ्याम्, श्रीभ्यः ; श्रियाः श्रियः ; श्रियाः श्रियः श्रियोः, श्रीणाम् श्रियाम् ; श्रियाम् श्रियि, श्रियोः, श्रीषु ; हे श्रीः !

---

स्त्रीमिति विग्रहः। नाम्नात्विति तदन्तविधिर्नाम्नान्तविधिर्भवतीति शेषः। अतः स्त्रीशब्दस्य विहित इयादेशस्तदन्तकस्यातिस्त्रिशब्दस्याति भवतीति। अत्रेति। स्त्रियाः स्त्रीशब्दान्तकस्य इति चेति विस्तर इति शेषः। तत्र विस्तरमतमेव ग्रन्थकारस्यापि मतमिति ज्ञेयम् ॥

२२२। नेयुव। स्त्रीशब्दं विना इयुवस्थानं गोपी न भवति। वृष्णिषु आमिच परे इयुवस्थानं गोपी वा भवति। हे श्रीरिति गोपीत्वा-भावात् अम्बादीनां गोप्याश्च वामनो बुद्धे इत्यनेन न वामनः। केचिदिति क्रमदीश्वरादय इत्यर्थः। शिष्टप्रयोगमपि दर्शयति। हा पितरिति। तस्यां प्रक्रियाकौमुद्यां भ्रमः, सहजानेकसर्वेश्वरत्वाभादिति शेषः। तन्मत एवेति न भवतीति शेषः। हेतुमाह गतीति। गतित्वं खण्डयति प्रादीना-मिति। हि यतः। केवलेति। केवलाव्ययपूर्वत्वेऽपि भवतीतितु मतम-

एवं 'धी'प्रभृतयः ; 'भ्रू' प्रभृतयश्च—भ्रू, भ्रुवौ, भ्रुवः। एवं सुभ्रूः ; 'बुद्धे वामनः' इति केचित्—( भट्टिः ६।११ )

"आः कष्टं वत ही चित्र हूं मातर्दैवतानि धिक्।
हा पितः ! क्वासि हे 'सुभ्रु' ! बह्वेवं विललाप सः ॥" इति

पश्चात् 'प्र'शब्दयोगे प्रकृष्टा धीः—प्रधीः, प्रधियौ, प्रधियः ; ङे—प्रधियै प्रधिये। अत्र 'या'देशस्तस्यां भ्रमः, तन्मते एव गति-कारकपूर्वत्वाभावात्। प्रादीनां क्रियायोगे एव हि 'गति' संज्ञा इति। 'केवलाव्ययपूर्वत्वेऽपि' इति त्वपाणिनीयम्। 'पुनर्भु'शब्दस्य पुन-र्व्यूढावाचकस्य नित्यस्त्रीत्वे—हे पुनर्भु ! क्वचिद्भिन्नपदत्वेऽपि णत्वं वाच्यम्—पुनर्भूणाम्। 'वधू 'प्रभृतीनां 'लक्ष्मी'शब्दवत्—वधूः, वध्वौ, वध्वः ; हे वधु ! किञ्च अनियुवां पश्चात् पुंस्त्वेऽपि 'गोपी'-संज्ञा-माहुः ; ततो 'बहुप्रेयसी'शब्दः शसं विना पुंस्यपि 'गोपी'-शब्दवत्। एवम् 'अतिलक्ष्मीः' 'लक्ष्मी'शब्दवत्। 'अवयवस्त्रीविषयत्वात् सिद्धम्' इति भाष्यम्। 'ईप्रत्ययान्त-वातप्रमीवत्' इति तु प्रक्रियाकारः। 'बहुप्रेयसीः' इति गौणत्वान्न सोर्हरः ; वृष्णिषु 'गोपी'संज्ञत्वञ्च न इति विस्तरः। इदमपाणिनीयम्।

तथा गोपीमिच्छतीति क्यन्नन्तात् क्विपि—गोपी कृष्णः। सौ 'गोपी'वत्, शस्पर्यन्तं 'धातु'वत्, पुनर्गोपीवत्। वामनत्वे तु 'गोपी' संज्ञत्वं नेच्छन्ति। सखीमतिक्रान्तस्य 'अतिसखेः' इति भाष्यम्। 'अनियुवामिति किम् ? अतिश्रिये गोपीसंघाय। कश्चित्त्वत्र 'आप' इच्छति। ई-ऊ-रामयोरस्वाभाविकलक्ष्मीत्वे 'गोपी'संज्ञत्वं न—विश्वन्ये श्रियै। 'मातृ'शब्दः पितृवत्—माता, मातरौ मातरः ;

---

पाणिनीयम्। पुनर्भूशब्दस्येति पुनर्भूशब्दो नेयुवस्थानमतोऽस्य न गोपीत्व-निषेधः, अतो नित्यस्त्रीत्वम्। हे पुनर्भु इत्यत्र अम्बादीनामित्यादिना वामनः। ए ओ वामनेभ्य इत्यादिना बुद्धादर्शनम्। क्वचित्। वध्विवति लक्ष्मीशब्दवत् साधनमिति शेषः। किञ्चेति। अनियुवां शब्दानाम्।

शसि तु मातॄः। 'स्वसृ'शब्दः कर्तृशब्दवत्—स्वसा, स्वसारौ' स्वसारः; शसि तु—स्वसॄः। 'रैशब्दः स्त्रियामपीत्येके' इति क्षीरस्वामी; तेन पूर्ववत्। 'गो'शब्दः पूर्ववत्; 'द्यो'-शब्दः 'गो'वत्; 'नौ'शब्दः 'ग्लौ'वत् ॥ २२२ ॥

*** इति सर्वेश्वरान्ता लक्ष्मीलिङ्गाः।**

---

आहुरिति पूर्वाचार्या इति शेषः। बह्व्यः प्रेयस्यो यस्येति विग्रहे नचेयस्याः पीताम्बर इति वामननिषेधः, कृष्णवाची बहुप्रेयसीशब्दः। अतिलक्ष्मी-रिति अतिक्रान्तो लक्ष्मीनिति विग्रहः। अवयवेति बहुप्रेयसीप्रभृतीनां अवय-वस्य बहुप्रेयसीप्रभृतेः स्त्रीविषयत्वात् स्त्रीप्रतिपादकत्वात् नदीसंज्ञत्वं सिद्धमिति। बहुप्रेयसीप्रभृति री-प्रत्ययान्त वातप्रमीवदिति तु प्रक्रिया-कारः। वध्विति। न सोर्हर इति विस्तरः, गोपीसंज्ञत्वञ्च नेति विस्तरः। इदं मतं। धातुवदिति गोप्यौ गोप्यः गोप्यमित्यादि। नेच्छन्तीति पूर्वाचार्या इति शेषः। अतिश्रिये इति अतिक्रान्तः श्रियं अतिश्रीः तस्मै; नात्र गोपीसंज्ञत्वम्। विश्वन्ये इति वाच्यलिङ्गत्वात् स्वाभाविकलक्ष्मीत्वाभावः। रैशब्द इति तेन तस्य रूपं पूर्ववत् ॥

इति सर्वेश्वरान्ता लक्ष्मीलिङ्गाः * ॥

## अथ सर्वेश्वरान्ता ब्रह्मलिङ्गाः

**तत्र अरामान्तो 'गोकुल'शब्दः—**

२२३। ब्रह्मकृष्णात् सोरम्।

'दशावतारादम्शसोररामहरः' (वि° प्र° १५६)–गोकुलम्; 'राधा-ब्रह्मभ्यामौ ई' (वि° प्र° २११)–गोकुले॥ २२३॥

२२४। ब्रह्मतो जस्-शसोः शिः।

श् इत्। एकवर्णत्वादन्ते प्राप्ते 'शित् सर्वस्य' इति शिदादेशः सर्वस्य भवति॥ २२४॥

२२५। सर्वेश्वर-वैष्णवान्तयोर्नुम् शौ।

उमावितौ॥ २२५॥

२२६। अन्त्यसर्वेश्वरात् परं मितः स्थानम्।

२२७। अन्त्यात् पूर्ववर्ण उद्धव-संज्ञः।

'उपधा' इति प्राञ्चः॥ २२७॥

२२८। अब्रह्मपाण्डवाः शिश्च कृष्णस्थान-संज्ञाः।

'घुट्'संज्ञा इत्येके; 'सर्वनाम'संज्ञा इत्यन्ये॥ २२८॥

---

२२३। ब्रह्म। मरामं न कृत्वा यदमिति कृतं तत् निर्जरसमित्यस्य सिद्ध्यर्थम्॥

२२४। ब्रह्मतो। एकेति–'एकवर्णविधिरन्ते प्रवर्तते' इति न्यायेन, अन्ते प्राप्ते शित् सर्वस्येति शिदादेशः, सर्वस्य समुदायस्य स्थाने भवतीति अरामसहित सरामस्य स्थाने शिर्भवति॥

२२५। सर्वेश्वर। शौ परे सर्वेश्वरान्तस्य वैष्णवान्तस्य च नुम् भवति॥

२२६। अन्त्य। परिभाषासूत्रमिदम्॥

२२७। अन्त्यात्। सुगमम्॥

२२८। अब्रह्म। अब्रह्मपाण्डवाः पुरुषोत्तमलक्ष्मीपाण्डवाः॥

२२९। नान्त-धातुर्वजितसान्तसत्सङ्ग-महदपामुद्धवस्य त्रिविक्रमः कृष्णस्थाने, बुद्धं विना।

नान्तस्य धातुर्वजितसान्तसत्सङ्गस्य महतः अपश्चेति विच्छेदः। गोकुलानि; एवं द्वितीयायाम्; तृतीयादौ पुरुषोत्तमवत्। बुद्धस्थानीयत्वादमपि 'बुद्ध'संज्ञः—हे गोकुल! एवं 'कुल'-'फल'-'मूल'-आदयः॥ २२९॥

२३०। हृदयस्य हृद् यदुषु वा।

'शीर्षस्य शीर्षन् वा' इत्येके; प्रयोगाश्च पक्षे विष्णुजनान्तवज्ज्ञेयाः; यथा,—हृन्दि हृदयानि, हृदा हृदयेन। उभयत्रापि शीर्षाणि। 'जराया जरस् वा सर्वेश्वरे' (वि° प्र° २१५)—निर्जरम् निर्जरसम्; निर्जरे निर्जरसी। नुमः पूर्वं जरसादेशं मन्यन्ते॥ २३०॥

२३१। अविष्णुपदान्तस्य नस्य मस्य च विष्णुचक्रं वैष्णवे।

निर्जराणि निर्जरांसि; पुनस्तद्वत्। बुद्धे—हे निर्जर! 'हे निर्जरसम्' इत्यपि केचित्॥ २३१॥

---

२२९। नान्त। नान्तश्च धातुर्वजितसान्तसत्सङ्गश्च महच्च अप्च तेषाम्। बुद्धेति। बुद्धरूपस्थानिसम्बन्धित्वात् अम् बुद्धसंज्ञ इति। ए ओ वामनेभ्य इत्यादिना अदर्शनम्॥

२३०। हृदय। शीर्षस्य। उभयत्र शीर्षाणीति आदेशपक्षे सर्वेश्वरवैष्णवान्तत्वाभावात् न नुम्। नुम् इति मन्यन्ते पूर्वाचार्या इति शेषः। नुमः पूर्वं पूर्वस्मिन् जरसादेशं मन्यन्ते इत्यर्थः। यदि प्रथमं नुम् स्यात्तदा सर्वेश्वरपरत्वाभावात् जरसादेशो न स्यात्। तस्मादभिप्रायेणैतद्बोद्धव्यं, ते पण्डिताः 'प्रकृत्याश्रितं प्रकृतावपी'ति न्यायमनङ्गीकृत्य 'भाविनि भूतवत्' स्वीकारेण जस्शसोः शौ कृते प्रथमतो नुम् प्राप्नोति, तं नुमं विरिञ्चितो विष्णूर्बलवान्; विष्णुतः सर्वविरिञ्चिरिति न्यायेन वाधित्वा जरसादेशं मन्यन्ते, अन्यथा व्यर्थमुक्तं स्यात्। अस्माकं मते प्रथमतो जरासादेशः पश्चादन्यत् कार्यमिति॥

इरामान्तो 'दधि'शब्दः—

२३२। ब्रह्मतः स्वमोर्महाहरः।

दधि। कथं 'गोकुलम्' ? तत्राकरणात् ॥ २३२ ॥

२३३। ब्रह्मे शान्तान्नुक् सर्वेश्वरे, न त्वामि।

उकावितौ। दधिनी, दधीनि ; पुनस्तद्वत् ॥ २३३ ॥

२३४। दधि-अस्थि-सक्थि-अक्षि-शब्दानामिरामस्य अन् टादि-सर्वेश्वरे।

२३५। अकृष्णस्थान-सर्वेश्वरो भगवत्-संज्ञः, तद्धिते यश्च।

अत्र पाणिनीयानां (१।४।१८) प्रकृते 'भं' संज्ञा ॥ २३५ ॥

२३६। ब-म-सत्सङ्गहीनस्यानोऽरामहरो भगवति, न तु ये, ईङ्योस्तु वा।

---

२३१। अविष्णु। वैष्णवे परे ॥

२३२। ब्रह्मतः। कथमिति सिद्धान्तमाह तत्रेति गोकुलमिति द्वितीयैकवचनान्तं प्रथमैकवचने तु ब्रह्मकृष्णात् सोरम् इत्यम्विधानसामर्थ्यदेव-महाहरो न भवति, यद्यमो महाहरः स्यात्तदा पूर्वत्रैवेदं विदध्यात् तस्मादरामान्तान्महाहरो न भवति ॥

२३३। दधि। ब्रह्मेशान्तात्। आमितु परे नुक् न भवति। अतो वारीणामित्यादौ वामनगोपीत्यादिना नुटि कृते वामनस्येत्यादिना त्रिविक्रमो भवति। नुकि सति त्रिविक्रमो न स्यात् ॥

२३४। अकृष्ण। कृष्णस्थानेभ्योऽन्यः सर्वेश्वरस्तद्धितः यश्च भगवत्संज्ञः स्यात्। अत्रेति। यो भगवत्संज्ञः सप्रत्यय एव यस्याः प्रकृतेः परे सविधीयते तस्या भसंज्ञा पाणिनीयानाम् ॥

२३५। बम। बम-सत्सङ्गः संयोगः अन इति अनन्तस्येत्यर्थः। ईङ्योः परयोः ॥

२३६। ब्रह्म। अतिदध्नेति अतिक्रान्तो दधि अतिदधिस्तेन अतिक्रान्ता दधि अतिदधिस्तया वा। ननु अतिदध्नेत्यत्र पुरुषोत्तमे अतिदधिना

दध्ना, दधिभ्याम्, दधिभिः; दध्ने, दधिभ्याम्, दधिभ्यः इत्यादि। ङौ—दध्नि, दधिनि ॥ २३६ ॥

## २३७। ब्रह्मणो गोविन्दो वा बुद्धे।

हे दधे! हे दधि! एवम् 'अस्थि', 'सक्थि', 'अक्षि'। अतिक्रान्तं दधि येन यया वा—अतिदध्ना गोपालेन गोपाल्या वा। स्वभावतो ब्रह्मैव 'दधि'शब्दो गृह्यते; ततो दधातीति दधिः, तेन—दधिना। 'इरामस्य' इति (वि° प्र° २३४) किम्? पद्माक्षेण।

वारि, वारिणी, वारीणि; वारि, वारिणी, वारीणि; वारिणा, वारिभ्याम्, वारिभिः; वारिणे इत्यादि; वारीणाम्।

मधु मधुनी, मधूनि ॥ २३७ ॥

## २३८। ब्रह्मान्त-त्रिविक्रमस्य वामनः।

---

लक्ष्म्यामिति दध्या इति कृते को दोषः? यतोऽतिगोपिना प्रियहर्या इत्यादौ समस्तत्वेऽपि पुरुषोत्तमलक्ष्मीवद्रूपं स्यादिति चेत् सिद्धान्तमुच्यते दधि अस्थि सक्थि अक्षिशब्दानामित्यादौ ब्रह्मणीत्यविशेषणत्वेनान्विधानसामर्थ्यादेतेषां टादिसर्वेश्वरे परे हरिसंज्ञत्वं न व्याख्यातम्। ततो न वाच्यानुसाररूपत्वमिति फलितार्थं स्यादेवेति भावः। अथोवा समस्तत्वेनान्यलिङ्गत्वेऽपि दधिशब्दस्य ब्रह्मत्वमस्त्येवेति वर्णेन विधौ तदन्तस्य कार्यं नाम्ना तु क्वचिदिति न्यायेन इरामस्यान् दधिनेति किप्रण्त्ययान्तो दधिशब्दः। पद्माक्षेणेति। पद्मे इव अक्षिणी यस्येति स्वाङ्गाभ्यामक्षि सक्थिभ्यामित्यनेन केशवारामस्तद्धितः संसारस्य हरो भगवतीत्यनेन इरामहरः ॥

२३७। ब्रह्मान्त। गोकुलाभ्यामित्यादाविति वामनाप्राप्तौ हेतुमाह, क्वचिदिति—क्वचिदन्तरङ्गकार्ये क्रियमाणे तन्निमित्तं वहिरङ्गमसिद्धं स्यादिति न्यायेन। अत्रान्तरङ्गकार्यं वामनः प्रकृत्याश्रितत्वात् त्रिविक्रमविधानं वहिरङ्गम्। वहिरङ्गत्वं प्रतिपादयति त्रिविक्रमेति। उभयाश्रितत्वेन हेत्वन्तरमप्याह तत्रेति ॥

विश्वनि, विश्वनिनी, विश्वनीनि। 'गोकुलाभ्याम्' इत्यादौ तु न वामनः, त्रिविक्रमविधेरुभयाश्रितत्वेन बहिरङ्गत्वात्, 'क्वचिदन्तरङ्गकार्ये क्रियमाणे तदनिमित्तं बहिरङ्गमसिद्धं स्यात्' इति वक्ष्यमाणन्यायेन, तत्राकरणेन वा ॥ २३८ ॥

२३९। समानार्थतया पुरुषोत्तमतार्हमीशान्तं ब्रह्मपुरुषोत्तमवद्वा टादि-सर्वेश्वरे।

विश्वन्या, विश्वनिना; आमि—विश्वन्याम्, विश्वनीनाम्। अत्र पुरुषोत्तमे ब्रह्मणि च विश्वप्रेरकत्वं समानम्। असमानार्थे तु पुंसि वृक्षे, यथा—'पीलवे'; ब्रह्मणि फले च तथा न, किन्तु केवलं 'पीलुने'। पूर्वत्र तद्वृक्षत्वम्, उत्तरत्र तज्जातत्वमित्यर्थभेदः॥ २३९॥

---

२३८। समा। टादिसर्वेश्वरे परे समानार्थत्वेन पुंस्त्वार्हमीशान्नं ब्रह्मपुरुषोत्तमवद्वा भवति। पुरुषोत्तमवत्त्वे विश्वन्यामिति च। असमानार्थत्वे त्विति पुंसि पुरुषोत्तमे वृक्षे वाच्ये यथा पीलवे इति भवति, ब्रह्मणि फले वाच्ये तथा न भवति, किन्तु केवलं पीलुने इति भवति। पूर्वत्र पीलवइत्यत्र तद्वृक्षत्वं पीलुवृक्षत्वम्। उत्तरत्र पीलुने इत्यत्र तज्जातत्वं पीलुवृक्षजातत्वम्॥

२३९। ए ऐ। परिभाषासूत्रमेतत्। पुरुषोत्तमवत्त्वात् कृष्णरायेति। ननु कृष्णराभ्यामित्यत्र वामने कृते राय असभोरिति कथं प्रवर्ततामिति चेत्तत्राह एकदेशेति। पुरुषोत्तमवत्त्वात् कृष्णरायामिति सभोरित्यत्र सभ्भ्यामिति पाठः सभ्यः। अन्यार्थयोगे पञ्चम्या विधानात्। टामोरिति कृष्णराणा कृष्णराणामित्येव नतु कृष्णरिणा कृष्णरीणामिति।

आमित्विति। टापरत्वे कृष्णराणेति नोज्वलदत्तमतम्। येषामिति—येषां मते विष्णुजनादिकविष्णुभक्तिमात्रे परे आद्भवति, तेषां मतेऽपि टामोः सन्निपातलक्षणत्वेन आन्नभवति। इति प्रक्रियाकारेण तन्मतं न गृहीतम्। सन्निपातेति यं दृष्ट्वा यस्योत्पत्तिः स तस्य सन्निपातः, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातायेति। अत्र इरामं दृष्ट्वा नुको नुटश्च

**'कृष्णरै'शब्दस्य वामन इराम एव, यतः—**

२४० । ए-ऐ-स्थाने इरामः, ओ-औ-स्थाने उरामो वामनः स्यात् ।

कृष्णरि, कृष्णरिणी कृष्णरीणि ; कृष्णराया कृष्णरिणा ; 'एकदेशविकृतमनन्यवत्'—कृष्णराभ्याम् ; कृष्णरायाम् ; 'स-भो'-(वि॰-प्र॰ २०७) रन्यत्र नात्वम्—कृष्णरीणाम् । 'टामोः—कृष्णराणा, कृष्णराणाम्' इत्येव जुमरमतम् । 'आमि तु कृष्णराणाम्' इत्येवोज्वलदत्तमतम् । येषां विष्णुजनादिविष्णुभक्तिमात्रेऽप्यात्वम् तेषामपि सन्निपातलक्षणत्वेन नात्वम इति प्रक्रियाकारेण तन्न गृहीतम् । सन्निपातलक्षणं वक्ष्यते ( आ॰ प्र॰ ५५३ ) ।

'सुद्यो'शब्दस्य—सुद्यु, सुद्युनी, सुद्यूनि ; टादौ—सुद्यवा सुद्युना ; हे सुद्यो ! हे सुद्यु !

'कर्तृ'—पृथग्विधानेन ब्रह्मकार्यस्य बलवत्त्वान्न वृष्णीन्द्रः—कर्तृणी, कर्तृणि ; टादौ—कर्त्रा कर्तृणा ; हे कर्तः ! हे कर्तृ ! एवं प्रियक्रोष्टुनी, प्रियक्रोष्टूनि । अत्रापि 'तृभावः' इति तस्यां भ्रमः । 'तृभावात् पूर्वं विप्रतिषेधेन नुम्-नुटौ भवतः' इति काशिका ; 'परत्वान्नुमा क्रोष्टुभावो बाध्यते' इति पदचन्द्रिका ; 'आगमविधिर्बलवान्' इति कातन्त्रो विस्तरश्च ।

---

उत्पत्तिरतो नुक् नुट्च इरामस्य सन्निपातः । अतो नुक् नुट्च इरामस्य आरामादेशरूपविघाताय निमित्तं न भवति । पुरुषोत्तमवत्त्वात् सुद्यवेति । ननु कर्तृणी इत्यादौ नुकः पूर्वं स्वसृ-तृल्-तृन्प्रत्ययानां वृष्णीन्द्रं सुवर्जपाण्डवेष्वित्यनेन वृष्णीन्द्र कस्मान्नस्यादिति चेत्तत्राह । पृथगिति पुरुषोत्तमवत्त्वात् कर्त्रेति । अत्रापीति । तस्यां प्रक्रियाकौमुद्याम् । तृभावाभावे शास्त्रान्तराणि प्रमाणयति तृभावादिति । परत्वादिति । आगम इतिच । विप्रतिषेधेन उभयप्राप्तिविरोधेन नुम् नुठौ भवतः, परत्वादिति शेषः । प्रियक्रोष्ट्वित्यत्रापि परत्वात् । प्रथमं महाहर एव भवतीति ज्ञेयम् । प्रिया इति प्रियास्तिस्रो यस्मिन् तत् प्रियत्रीति स्थिते सोर्महाहर-

प्रियास्तिस्रो यस्मिन् गोकुले तत् 'प्रियत्रि'। महाहरत्वेऽपि तिसृभावः काशिकादौ दृश्यते—प्रियतिसृ। यद्येवं तर्हि विष्णुभक्ता-वित्यस्य प्रत्युदाहरणन्तु त्रित्वमिति तद्धितादावेव ज्ञेयम्। प्रियति-सृणी, प्रियतिसृणि ; प्रियतिस्रा प्रियतिसृणा ; ङसिङसोः—प्रिय-तिस्रः, र-विधानस्य नित्यत्वात्। एवं प्रियचतसृ। विस्तरकारस्तु विकल्पयति ; तेन प्रियत्रि, प्रियचतुः इत्यपि। 'सानु'-आदि-शब्दानां स्वत एव द्विलिङ्गता—सानुने, सानवे ; "स्नुः प्रस्थः सानुरस्त्रियौ" इत्यमरः (२।३।५)। 'मधु'-शब्दानन्तरम् 'एवम् अम्बुसान्वादयः' इति प्रक्रिया ( पा ७।१।७५) तु चिन्त्या ॥ २४० ॥

* **इति सर्वेश्वरान्ता ब्रह्मलिङ्गाः।**

त्वेऽपि तिसृभावो दृश्यते। अत्र त्रिशब्दस्य लक्ष्मीस्थत्वं विद्यत एवेति लक्ष्मीस्थयोस्त्रिचतुरोस्तिसृ चतसृ विष्णुभक्तावित्यनेन तिसृभावः। यद्येव-मिति यदि महाहरत्वेऽपि तिसृभावः स्यादित्यर्थः। तिसृणां भावस्त्रित्वम्। अत्रेति शब्द आद्यर्थः। अन्यथा तद्धितादावित्यनेन सहासङ्गतिः स्यात्। इति हेतु प्रकरणप्रकाशादिसमाप्तिष्विति नानार्थवर्गः। पुरुषोत्तमवत्त्वात् प्रियतिस्रेति। ङसिङसोः प्रियतिस्र इति, पुरुषोत्तमवत्त्वपक्षे इति शेषः। पक्षे प्रियतिसृण इत्यपि भवतीति ज्ञेयम्। ननु प्रियतिस्र इत्यत्र ऋरामतो ङसि-ङसोरस्य उच् इत्यनेन उच् कथं न स्यादिति चेत्तत्राह र-विधानस्य नित्यत्वादिति। उचि कृते न कृतेऽपि रः प्राप्नोतीति र-विधानस्य नित्यत्व-मतो बलवत्त्वञ्च। अतः प्रथमं रराम एव भवति। ननु र-विधान-सूत्रे गोविन्दत्रिविक्रमो रामाणामपवाद इत्युक्तम्। अत उच् न प्राप्नोत्येव-तर्हि रविधानस्य नित्यत्वादिति कथमत्रोच्यते इति चेत्तत्रोच्यते सिद्धान्त-समुच्चयोऽयम्। प्रियचतस्रिति प्रियाश्चतस्रो यस्मिन् तत्। सान्वादीति स्वत एव स्वस्मिन्नेव स्वभावत एवेत्यर्थः। मध्विबति। मधुशब्दस्य ब्रह्मत्वमेव सान्वादीनान्तु द्विलिङ्गता। अतः प्रक्रिया न सङ्गच्छते ॥

इति सर्वेश्वरान्ता ब्रह्मलिङ्गाः *।



## अथ विष्णुजनान्ताः पुरुषोत्तमलिङ्गाः

तत्र चरामान्ताः केचन शब्दा वाच्यलिङ्गाः। तत्र 'प्रत्यच्', प्रतिपूर्वादञ्च्धातोः क्विप्-प्रत्ययः ; क्विप्-लोपः, नलोपश्च ; षत्वम् ; ततः 'प्रत्यच्'शब्दात् स्वादयः।

२४१। अचश्चतुर्भुजानुवन्धानाञ्च नुम् कृष्णस्थाने।

'राधा-विष्णुजनाभ्याम्' (वि॰ प्र॰ २०४) इति सोर्हरः ॥ २४१ ॥

२४२। तवर्गस्य चवर्गश्चवर्गयोगे।

२४३। सत्सङ्गान्तस्य हरो विष्णुपदान्ते।

२४४। चवर्गस्य कवर्गो विष्णुपदान्ते, वैष्णवे त्वसवर्गे।

प्रत्यङ् ॥ २४२-२४४ ॥

२४५। विष्णुजनस्य द्वित्वं वा विरामे।

'विरामः'—परवर्णादर्शनम्। प्रत्यङ्ङ् ; सवर्गे तु—प्रत्यञ्चौ, प्रत्यञ्चः ; प्रत्यञ्चम्, प्रत्यञ्चौ। कथं 'तच्शौरेः', 'भगवाञ्च्-शूरः' ? तत्राकरणात् ॥ २४५ ॥

---

तत्रेति। तत्र विष्णुजनान्तेषु। तत्रेति तत्र चरामान्तेषु। नलोपश्चेति अनिरामेतां विष्णुजनान्तानामुद्धवनरामहरः कंसारावित्यनेन। इद्वयमेव यः सर्वेश्वर इत्यनेन षत्वम् ॥

२४१। अचश्च। अन्चुधातोः क्विपि तल्लोपे न लोपे च कृते यदच् इति भवति तस्य। चतुर्भुजानुबन्धा इतो येषां तेषाञ्च ॥

२४२। तवर्गस्य। अत्रानेन नरामस्य ञरामः ॥

२४३। सत्सङ्गान्त। विष्णुपदान्ते विषये ॥

२४४। चवर्गस्य। विष्णुपदान्ते विषये चवर्गस्य स्थाने कवर्गो भवति। वैष्णवे तु परे तस्मिन् वैष्णवे असवर्गे सति चवर्गस्य स्थाने कवर्गो भवति। अत्रानेन ञरामस्य ङरामः ॥

२४५। विष्णु। कथमिति सिद्धान्तमाह तत्राकरणादिति ॥

२४६। अचोऽरामहरो भगवति, पूर्वस्य त्रिविक्रमश्च।

'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन यरामस्य इरामः, ततस्त्रिविक्रमः—प्रतीचः, प्रतीचा ॥ २४६ ॥

२४७। पूर्वस्य विष्णुपदवत्त्वं स्वादि-तद्धितयोरय-सर्वेश्वराद्योः।

प्रत्यग्भ्याम् इत्यादि। 'चवर्गस्य' (वि॰ प्र॰ २४४) इत्यादौ 'वैष्णव'ग्रहणं केवलधात्वर्थम्, अन्येषामपि सूत्राणां तत्पर्यन्तव्याप्ते-र्ज्ञापकम्। एवं 'प्राच्'। तथा 'पित्रच्' इत्यस्य शसि—पितॄचः। 'अनन्तस्यैव त्रिविक्रमः' इति तु तस्यां भ्रमः, तदधिकारनिवृत्तेः। तिर्यच्—तिर्यङ्, तिर्यञ्चौ तिर्यञ्चः; तिर्यञ्चम्, तिर्यञ्चौ ॥२४७॥

२४८। तिर्यचस्तिरश्चिरुदच उदीचिर्भगवति।

इराम इत्। तिरश्चः; तिरश्चा, तिर्यग्भ्याम्, तिर्यग्भिः।

---

२४६। अचोऽराम। निमित्ताय इति निमित्तमत्रारामः नैमित्तिको यरामः ॥

२४७। पूर्वस्य। यसर्वेश्वरादिभिन्नयोः स्वादितद्धितयोः परयोः पूर्वस्य विष्णुपदवत्त्वं भवति। प्रत्यग्भ्यामिति। विष्णुपदवत्त्वात् चवर्गस्येत्यादिना चरामस्य करामः विष्णुदासो विष्णुपदान्ते इत्यादिना करामस्य गरामः। ननु प्रत्यग्भ्यामित्यादौ यदि विष्णुपदवत्त्वेनैव चवर्गस्य कवर्गः कृतस्तर्हि चवर्गस्येत्यादौ वैष्णवग्रहणम्। किमर्थं कृतमिति चेत्तत्राह चवर्गस्येत्यादाविति। चवर्गस्य कवर्गो विष्णुपदान्ते वैष्णवे त्वसवर्गे इत्यस्मिन् लक्षणे वैष्णवग्रहणं केवलधात्वर्थम्। अन्येषां नामज-विष्णुपदसम्बन्धिनां सूत्राणामपि धातुपर्यन्तप्राप्तेर्ज्ञापकञ्च तथेति। तथा तेन पूर्वोक्तेन प्रकारेणेत्यर्थः पितॄच इति अचोऽरामहर इत्यादिना अराम-हरे कृते निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायेन ररामस्य ऋराम-स्ततस्त्रिविक्रमः। तदधिकारनिवृत्तेरनन्ताधिकारनिवृत्तः ॥

२४८। तिर्यच्। भगवति परे तिर्यचः स्थाने तिरश्चिर्भवति, तस्मिन्नेव परे उदचः स्थाने उदीचिर्भवति। कुङ्ष्विति ईश्वरहरिमित्र-

एवम् उदच्—उदङ्; उदञ्चम्, उदञ्चौ उदीचः; उदीचा, उदग्भ्याम् इत्यादि। क्रुञ्च्—क्रुङ्, क्रुञ्चौ, क्रुञ्चः; क्रुञ्चम्, क्रुञ्चौ, क्रुञ्चः; क्रुञ्चा, क्रुङ्भ्याम्; क्रुङ्षु। एवम् अञ्चु पूजार्थे; प्रत्यञ्चः, प्राञ्चः॥ २४८॥

**ओव्रसचू छेदने धातुर्दन्त्य-मध्यः; ओ-उरामावितौ--**

२४९। सस्य शश्चवर्गयोगे।

ततो व्रश्च् इति स्थिते—तस्य 'दैत्य'-शब्दपूर्वस्य क्विप्प्रत्ययलोपे ररामस्य ऋरामः—दैत्यवृश्च्; सोर्हरः॥ २४९॥

२५०। छ-शो राज्-यज्-भ्राज्-परिव्राज्-सृज्-मृज्-भ्रस्ज्-व्रश्चां च षो विष्णुपदान्ते वैष्णवे च।

अथ नैमित्तिकापाये दन्त्यमध्य एव॥ २५०॥

२५१। स्कोः सत्सङ्गाद्योर्हरो विष्णुपदान्ते वैष्णवे च।

---

कङेभ्य इत्यादिना षत्वम्। पूजार्थे इति अञ्चेः पूजायां नलोपाभाव इत्यनेन, नलोपनिषेधः, प्रत्यगादिशब्दानां सप्तमीबहुवचने प्रत्यक्षु प्रत्यङ्ष्वित्यादयः प्रयोगाः प्रसिद्धाः। अन्येषां मतन्त्वेवं शषसे वर्गाद्यास्तद्द्वितीय इत्यनुपदकारा आहुः—तन्मते प्रत्यक्ख्सु इत्यादयः। पक्षे यथासम्भवं द्वित्वादिकं ज्ञेयम्। केचिन्मते वर्गादिस्तद्द्वितीयः शषसे वा इत्यनेन, तन्मते प्रत्यक्सु प्रत्यक्ख्सु इत्यादिकमिति। दन्त्यमध्यो दन्त्यवर्णमध्यः॥

२४९। सस्य। तस्य ब्रश्च इत्यस्य। ररामस्य ऋरामः। इति ग्रहिज्या व्ययि व्यधि वशि व्यचि व्रश्चि प्रच्छि भ्रस्जीनां सङ्कर्षणः कंसारावित्यनेन। सपरसर्वेश्वर यवराणामिऊरामादेशः सङ्कर्षणसंज्ञ इति। सोर्हर इति राधाविष्णुजनाभ्यामित्यादिना॥

२५०। छ-शो राज्। विष्णुपदान्ते विषये वैष्णवे च परे छशोः स्थाने राज् यजादीनामन्तस्यच स्थाने षो भवति। अथेति। नैमित्तिकोऽत्र शरामः॥

२५१। स्कोः। विष्णुपदान्ते विषये वैष्णवे च परे सत्सङ्गादिस्थितयोः सरामकरामयोर्हरो भवति॥

२५२। षस्य डो विष्णुपदान्ते हरिघोषे च।

२५३। विष्णुदासस्य हरिकमलं वा विरामे।

दैत्यवृट् दैत्यवृड्, दैत्यवृश्चौ, दैत्यवृश्चः; दैत्यवृड्भ्याम्; दैत्यवृट्सु। जलमुच्; सत्सङ्गान्तहरेणैव सुलोपसिद्धौ 'राधाविष्णुजनाभ्याम्' (वि° प्र° २०४) इत्यत्र 'विष्णुजन'-ग्रहणवलात् नात्र 'स्कोः' (वि° प्र° २५१) इति हरः—जलमुक् जलमुग्, जलमुचौ, जलमुचः; जलमुग्भ्याम् ॥ २५६ ॥

२५४। पाणिनीयप्रत्याहारवाचिनामच्-शब्दादीनामुञ्-नञनुकरणस्य च न कवर्गादित्वम्।

अच, अचौ, अचः; अच्भ्याम्; 'सस्य शः (वि° प्र° २४६)—अच् शु, छत्वे—अच्छु। उञ्, उञौ, उञः।

यदुराज्—यदुराट् यदुराड्, यदुराजौ, यदुराजः।

भ्रस्ज्धातोः क्विपि भृज्ज्—'सत्सङ्गान्तस्य हरो' (वि° प्र° २४३) भृट् भृड्, भृज्जौ, भृज्जः ॥ २५४ ॥

---

२५२। षस्य। विष्णुपदान्ते विषये हरिघोषेच परे षस्य स्थाने डो भवति ॥

२५३। विष्णुदास। विरामे परवर्णादर्शने। दैत्यवृट्स्विति षस्य ड् कृते यादवमात्रे हरिकमलमित्यनेन डरामस्य टरामः। ननु जलमुगित्यत्र चवर्गस्येत्यादिना चरामस्य करामे कृते स्कोरित्यादिना करामहरः कस्मान्न स्यादिति चेत्तत्राह सत्सङ्गान्तेति। सत्सङ्गान्तस्य हरो विष्णुपदान्ते इत्यनेनैव विष्णुजनात् परस्य सोर्हरः सिध्यतीति। राधाविष्णुजनाभ्यामित्यत्र विष्णुजनग्रहणमनर्थकं भूतं, तस्मात्तत्र विष्णुजनग्रहणसामर्थ्यात् प्रथमं सोर्हरो भवतीति। जलमुगिति चरामस्य करामे कृते विष्णुदासो विष्णुपदान्त इत्यादिना करामस्य गरामः। ततश्च 'विष्णुदासस्य हरिकमलं वा विरामे' इत्यतेन गरामस्य करामः। पक्षे गरामस्यैव स्थितिः। एवमन्यत्रापि ॥

२५४। पाणिनीयेति। अच्शब्दादीनामिति आदिशब्देन इच् एच्

२५५। स्रज्-दिश्-दृश्-ऋत्विज्-उष्णिष्-दधृष्-अनुदकपूर्वस्पृश्-तादृश् इत्यादीनां को विष्णुपदान्ते।

ऋतौ यजति--ऋत्विक्, ऋत्विजौ ॥ २५५ ॥

**युजः पुंसि---**

२५६। युजोऽसमस्तस्य नुम् कृष्णस्थाने, न तु समाधौ।

अत्र 'सुटी'ति तस्यां भ्रमः। युङ्, युञ्जौ, युञ्जः; युग्भ्याम्। समस्तस्य समाध्यर्थस्य च न नुम्—कृष्णयुक् कृष्णयुग्, कृष्णयुजौ, कृष्णयुजः; कृष्णयुग्भ्याम्। युक् युग्, युजौ ॥ २५६ ॥

**ऊर्जः पुंसि--**

२५७। रात् सस्यैव सत्सङ्गान्तहरविधिः।

नियमोऽयम्;—'बहुत्र प्राप्तौ सङ्कोचनं नियमः'। ऊर्क् ऊर्ग्, ऊर्ज्जौ, ऊर्ज्जः। विश्वसृज्—विश्वसृट् विश्वसृड्, विश्वसृजौ,

---

प्रभृतीनां ग्रहणम्। उञो नञ् इत्येव पाठः। अनुकरणस्य अनुकरण शब्दस्य। कवर्गादित्वनिषेधात्। सस्य श इति। सस्य शश्चवर्गयोग इत्यनेन छत्व इति। ततः शश्चो वेत्यनेन। भृज्जिति। ग्रहिज्या व्ययि व्यधि वशीत्यादिना सङ्कर्षणः। सस्य जो जे नतु वैष्णवे इत्यनेन सस्य जः॥

२५५। स्रज्-दिश्। विष्णुपदान्ते विषये स्रज् दिश दृशादीनामन्तः को भवति। अनुदकेति। उदकशब्देतरशब्दपूर्वस्पृशोऽन्तः को भवतीत्यर्थः। ऋत्वगिति। वचि स्वपि यजादीनां सङ्कर्षणः कपिल इत्यनेन सङ्कर्षणः। छशोरित्यादिना षरामे प्राप्ते करामविधानम्। युजः पुंसीति रूपं निरूप्यते इति शेषः॥

२५६। युजो। कृष्णस्थाने परे असमस्तस्य युजो नुम् भवति, नतु समाधाविति। युज् समाधावित्यस्य क्विवन्तस्य युजो नुम् न भवतीत्यर्थः। युङिति। युजिर योग इत्यस्य क्विवन्तस्य रूपम्। असमस्तस्येति नतु समाधावितिच यदुक्तः। तदेव व्याचष्टे समस्तस्येति युगिति युज् समाधावित्यस्य क्विवन्तस्य रूपम्॥

विश्वसृजः। षत्वं न इति' केचित्—विश्वसृक्। विश्वसृट्सु।

कंसजित्, कंसजितौ, कंसजितः ; कंसजिद्भ्याम्, कंसजित्सु।

उरामानुवन्धो 'महतु'। तस्य पुंसि 'नान्त-धातुबर्जित'-(वि° प्र° २२९) इति त्रिविक्रमः ; 'अचश्चतुर्भुज'-(वि° प्र° २४१) इति नुम् ; सोर्हरः सत्सङ्गान्तस्य हरः ; अत्राकरणात्, 'क्वचिदन्तरङ्गे' इत्यादि वक्ष्यमाणन्यायात्, ब्रह्मेशान्तान्नुक्' (वि° प्र° २३३) इत्यत्र ज्ञापकेन सर्वेश्वरेण त्वागम-नराम-हराभावस्य नाम्नि निश्चयात् नस्य हरो न स्यात्—महान्, महान्तौ, महान्तः ; महान्तम्, महान्तौ, महतः ; महता, महद्भ्याम् ; हे महन्! ॥ २५७ ॥

**'भगवतु'—**

## २५८। अत्वसन्तोद्धवस्य त्रिविक्रमो बुद्धवर्जित-सौ, धातुं विना।

भगवान्, भगवन्तौ, भगवन्तः ; भगवन्तम्, भगवन्तौ, भगवतः ; भगवता, भगवद्भ्याम् ॥ २५८ ॥

---

२५७। रात्। रात् परस्य सत्सङ्गान्तस्य हरविधिर्भवन् सस्यैव भवति नान्यस्येत्यर्थः। नियमलक्षणमाह बहुत्रेति। सङ्कोचनं स्थापनविशेषेण स्थानम्। ननु महानित्यत्र नामान्तस्य नस्य हरोविष्णुपदान्ते बुद्धं विनेत्य-नेन नस्य हरः कस्मान्नस्यादितिचेत्तत्र सिद्धान्तमाह—अत्राकरणादित्यादि। तत्रात्रेति यद्यत्र नस्य हरः स्यात्, तदानामान्तस्येति लक्षणमत्रैव विदध्यात् तस्मादत्राकरणान्न नस्य हर इति। क्वचिदिति। क्वचिदन्तरङ्गे क्रियमाणे कार्ये तदनिमित्तं बहिरङ्गमसिद्धं स्यादिति तत्रान्तरङ्ग कार्यं नस्य हरः। बहि-रङ्गं नुम्विधानं उभयाश्रितत्वात्। ब्रह्मेशान्तादिति। नुकि कृते नामान्त-स्येत्यादिना तस्य हरेच कृते दधिभ्यामित्यादीनां सिद्धत्वात् सर्वेश्वरस्यो-द्भूतत्वमतो ज्ञापकत्वम्। निश्चयादित्यनन्तरं च शब्द प्रयोग उचितः॥

२५८। अत्व। अत्वन्तस्य असन्तस्यच सम्बन्धिन उद्धवस्य त्रिवि-क्रमो भवति॥

२५९। भगवतु-अघवतु-भवतूनां भगोस्-अघोस्-भोस् इति निपाता वा बुद्धे।

'पूर्व-परयोः सहैवादेशौ निपातः'। हे भगोः! हे भगवन्! हे अघोः! हे अघवन्! हे भोः! हे भवन्! कथं 'भो वैष्णवाः? अव्ययत्वात्। 'भगवत्'-शब्दात् भगवानिवाचरति क्यङन्तात् क्विपि 'भगवत्'। तस्मात् स्वादौ प्रकृतवदेव रूपं स्यात्, नामावस्थायां चतुर्भुजानुवन्धत्वात् भगवान्।

'ददतृ'-'जक्षतृ'-इत्यादिशब्दानां तु कृदन्तप्रकरणे (१२४२-संख्यक-सूत्रे) नुम्-निषेधो वक्ष्यते—ददत्, ददतौ, ददतः; ददद्भ्याम्। जक्षत्, जक्षतौ, जक्षतः; जक्षद्भ्याम्। ऋरामानुवन्धो 'भवतृ', तत् पुंसि—भवन्, भवन्तौ, भवन्तः; भवद्भ्याम्; हे भवन्!

मुरं मथ्नातीति—मुरमत् मुरमद्, मुरमथौ।

कृष्णं वेत्तीति कृष्णविद्, तत् पुंसि—कृष्णवित् कृष्णविद्, कृष्णविदौ॥ २५९॥

**सुपाच्छब्दस्य—सुपात् सुपाद्;—**

२६०। पाच्छब्दस्य वामनो भगवति।

सुपदः। एवं 'पाद'-शब्दस्य 'पद्'-आदेशेऽपि 'पदः' इत्यादि। आमि नुटं वाधित्वा विरिञ्चिरेव, 'विरिञ्चितो विष्णुर्बलवान्, विष्णुतः सर्वविरिञ्चिः' इति न्यायेन—पदाम्।

---

२५९। भगवतु। निपातलक्षणमाह पूर्वेति। सहैवेति एकदैवेत्यर्थः। कथमिति। कथं भो वैष्णवा इति भवतु भवन्तो वैष्णवा इत्येव भवितुमर्हति। तत्र सिद्धान्तमाह अव्ययत्वादिति। तथाच भाष्यम्। अव्ययमेष भोः शब्दोनैष भवत् प्रकृतिरिति। भगवत् शब्दादिति। स्वादाविति स्वादौ सतीत्यर्थः; प्रकृतवत् उक्तभगवच्छब्दरूपवत्। अत्र हेतुमाह नामेति। नुम् निषेधो वक्ष्यत इति न नारायणाच्छतुर्नुम् ब्रह्मणस्तु कृष्णस्थाने वेत्यनेन॥

—१५

'निशा-हृदय-मास-यूष-दोषां विष्णुजने तु विरिञ्चिर्नास्ति, भाष्य-चान्द्रादिष्वधृतत्वात्' इति वर्धमानः। विरिञ्चिसद्भावे तु 'षस्य ड़ः' इतिवत् शस्य जो मन्तव्यः। 'छशो राज्'-इत्यादिकञ्च धातुपरमेव, ततो—निज्भ्याम्, निच्शु निच्छु ॥ २६० ॥

**कृष्ण-पूर्वस्य बुध्धातोः 'कृष्णं बुध्यति' इति क्विपि 'कृष्णबुध्', तत् पुंसि—**

२६१। जवर्ज-हरिगदादेरेकसर्वेश्वरस्य धातो-र्हरिघोषान्तस्यादौ हरिघोषत्वं विष्णुपदान्ते, सध्वोश्च।

कृष्णभुत् कृष्णभुद्, कृष्णबुधौ, कृष्णबुधः। एवं तत्त्वभुदादयः। 'जवर्ज'-इति किम्? जभ्—जप्, जभो, जभः इत्यादि 'एकसर्वेश्वरस्य' इति किम्? क्यन्-क्विवन्तस्य धातोर्दामरुधः—दामरुत्।

'धातु'-पदेन धात्ववयवोऽपि गृह्यते; तेन गोविन्देन भातीति क-प्रत्ययान्तस्य गोविन्दभः, तस्य णि-क्विवन्तस्य गोविन्दभ्—गोविन्धप्, गोविन्दभौ, गोविन्दभः। एवं 'पुण्ड्रभ्'—पुण्ढ्रप्। अत्र प्रक्रिया-कलाप-काशिका-भाषावृत्तयो विचार्याः; किन्तु प्रक्रियायाम् 'अधोक्' 'गोविन्धप्' च प्रश्नपदं भवेत्; कालापे 'दामरुत्' 'जप्' च। काशिकादौ न संशयः ॥ २६१ ॥

---

२६०। पाच्छब्दस्य। आमि नुटं बाधित्वा विरिञ्चिरेवेति अत्र हेतुमाह विरिञ्चित इति। निशेति। नास्ति न भवति। अत्र बर्द्धमान-मतन्तु नास्माकं मतम्। विरिञ्चीति। सद्भावः सत्ता विद्यमानता विरिञ्चि विद्यमानतायामित्यर्थः। ननु विरिञ्चौ कृते छशोराजेत्यादिना शस्य यः कस्मान्नस्यादिति चेत्तत्राह छशो राजेत्यादिकञ्च धातु परमेवेति ॥

२६१। जवर्ज। विष्णुपदान्ते विषये सध्वोश्च परयोः एकसर्वेश्वरस्य जवर्ज हरिगदादेर्हरिघोषान्तस्य धातोरादौ हरिघोषत्वं भवति। गोविन्धविति—गोवि देन भातीति 'अकर्मण्यारामात् कः' इत्यनेन कः, 'आरामहरः कंसारिसर्वेश्वर रामधातुके इटि ऊसि चेत्य'नेन आरामहरः, ततो गोविन्दभमाचष्टे इत्यर्थे गोविन्दभशब्दात् मुण्ड मिश्रेत्यादिना णिः,

'राजन्' ; 'नान्त-' (वि° प्र° २२९) इति त्रिविक्रमः, सोर्हरः—

२६२। नामान्तस्य नस्य हरो विष्णुपदान्ते, बुद्धं विना।

प्रथमतो नलोपाभावः, 'पथिन्-मथिन्'-(वि° प्र° २६५) इत्यादौ वक्ष्यमाण-नलोपवैयर्थ्यात्—राजा, राजानौ राजानः ; राजानम्, राजानौ ; 'व-म-सत्सङ्गहीनस्य' (वि° प्र° २३६) इति अरामहरः ; 'तवर्गस्य चवर्ग'- (वि° प्र° २४२) ज्ञोः सत्संगे ज्ञः—राज्ञः, राज्ञा। 'क्वचिदन्तरङ्गे कार्ये क्रियमाणे तदनिमित्तं बहिरङ्गमसिद्धं स्यात्'

---

'अरामहरोरामधातुके' इत्यनेन अरामहरः, ततः क्विप्, 'णेर्हरोऽनिड़ादौ रामधातुके' इत्यनेन णेर्हरः, अत्र क्विवन्तस्य गोविन्दभो धातोरवयवस्य दभ आदौ हरिघोषत्वम्। पुण्ड्रविति, पुण्ड्रेण भातीति क-प्रत्ययान्तः पुण्ड्रभस्तस्य णि-क्विवन्तस्य पुण्ड्रभ्, पुण्ड्रविति पूर्ववत्। अत्रेति—अत्र हरिघोषत्वविधाने प्रक्रिया-कलाप-काशिकावृत्तय इति—प्रक्रिया, कलापः, काशिका वृत्तिश्चेत्यर्थः। पाठकैरेता विचार्याः। किन्तु प्रक्रियायां अधोगिति, गोविन्धविति च प्रश्नपदं भवेद्धवति, तस्मात् प्रक्रियायां संशयो वर्तते इत्यर्थः। कलापे दामरुद्जप् च प्रश्नपदं, तस्मात्तत्रापि संशयो वर्तते। काशिकादावित्यादिशब्देन वृत्तेर्ग्रहणम्। अधोगिति, दुह प्रपूरणे भूतेश्वर दिप्, 'धातोः पूर्वमत् भूतेश्वर-भूतेशाजितेष्विति' धातोः पूर्वमत्, 'लघूद्धवस्य गोविन्दः' इत्यनेन गोविन्दः, 'दादेस्तु धातो र्घः' इति हस्य घः 'विष्णुजनात् दिस्योर्हरः' इत्यनेन दिप् सिपोर्हरः, ततो जवर्जमित्यादिना दस्य धः, विष्णुदासो विष्णुपदान्तेत्यादिना गरामः, विष्णुदासस्य हरिकमलम्वेत्यनेन करामः ॥

२६२। नामान्तस्य। नामान्तस्य नाम्नोऽन्तेस्थितस्य। प्रथमतो न लोपाभाव इति, त्रिविक्रमानन्तरं प्रथमतो न लोपे सति न लोपस्य महाहरत्वात् राजा इति सविष्णुसर्गरूपं स्यात्। प्रथमतो न-लोपाभावे हेतुमाह पथिन्निति। 'पथिन्-मथिन्-ऋभुक्षिन्नित्येषां नस्य हरः सावि'त्यस्मिन् लक्षणे वक्ष्यमाणस्य न-लोपस्य वैयर्थादिति, तस्मात्तत्र प्रथमतो न लोपः, अतः पन्था इत्यादि सविष्णुसर्गरूपं भवति। क्वचिदिति अत्रान्तरङ्गकार्यं

इति न्यायेन नस्य हरासिद्धेः 'कृष्णस्य त्रिविक्रमो गोपाले' (वि॰ प्र॰ १६०) इत्यादिकं न प्राप्नोतीत्यर्थः ; किन्तु नवयोर्हरे 'कृष्ण'-संज्ञा न वाच्या—राजभ्याम्, राजभिः ; राज्ञे, राजभ्याम्, राजभ्यः ; राज्ञः, राजभ्याम्, राजभ्यः ; राज्ञः, राज्ञोः, राज्ञाम् ; 'ईङ्योस्तु वा' (वि॰ प्र॰ २३६) राज्ञि राजनि, राज्ञोः, राजसु ; हे राजन् !

'यूष'-शब्दस्य 'यदुषु वा' (वि॰ प्र॰ १७५) इत्यादिना यूषन्नादेशे— 'आदेशः स्थानिवत् क्वचित् नाम-धातु-प्रत्यय-विष्णुपदानामादेशस्य तज्जातिवद्भावः सर्वत्रैव, वर्णानां तद्व्यक्तिवद्भावश्च' यत्र मंस्यते तत्रैव इत्यर्थः—तेन नामत्वे सत्यनोऽरामहरः (वि॰ प्र॰ २३६)—यूष्णः, यूष्णा। एवं 'यज्वन्,' 'आत्मन्,' सुधर्मन्' इत्यादयः ; किन्तु 'व-म-सत्संगहीनस्य' इति विशेषणादरामहरो नास्ति—यज्वनः, यज्वना। एवं 'श्वन्', 'युवन्', 'मघवन्' । श्वा, श्वानौ, श्वानः ॥ २६२ ॥

**क्वचिद्विशेषः—**

२६३ । श्वन्-युवन्-मघवन् इत्येषां वस्य उर्भगवति।

ईव्वर्जित-तद्धिते तु न, युवतीत्यादिवर्जम्। 'वस्य' इति साराम-

---

त्रिविक्रमादि, बहिरङ्गं नस्य हरः, न प्राप्नोतीत्यर्थ इति बहुषु पुस्तकेषु दृश्यते, तत्तु लिपिकरप्रमादकृतम्। न प्राप्नोतीत्यन्य इत्येव ज्ञेयम्। अत्र क्वचिदन्तरङ्ग इत्यादिन्यायाङ्गीकारमकृत्वा कृष्णसंज्ञत्वमेव निषिध्यते, किन्तु 'नवयोर्हरे कृष्णसंज्ञा न वाच्ये'ति सूत्रे प्रत्ययरूप निमित्तादन्यस्य हरोपि महाहर इति महाहरत्वात् त्रिविक्रमादिकं नस्यादिति ज्ञेयम्। आदेशः स्थानिवत् क्वचिदिति, अर्थमाह नामेति, नाम्नो धातोः प्रत्ययस्य, विष्णुपदस्य च तज्जातिवद्भावः, नामादिस्वरूपवद्भावः सर्वत्रैव भवति, वर्णानामादेशस्य, तद्व्यक्तिवद्भाव आदेशि-वर्ण-स्वरूप-वद्भावश्च यत्र मन्तव्यस्तत्रैव, नतु सर्वत्रेति। अतो अत्र युषन्नादेशस्यापि नामत्वम्। क्वचिद्विशेष इति, विशेषमाह ॥

२६३ । श्वन्-युवन् । ईव्वर्जित युवती इति आदियैषां तान् वर्ज-यित्वा, ईव्वर्जित-तद्धिते तु परे वस्य उ र्न भवति । ईव्वर्जिततद्धिते निषे-

निर्देशः। शुनः ; शुना, श्वभ्याम्, श्वभिः। शसि—यूनः ; यूना, युवभ्याम्, युवभिः। एवं मघोनः, मघोना। 'सौ च मघवन् मघवा वा' इति तु कालापाः (शब्दप्रकरणम्—१६५)।

"वहति स्वेच्छया वायुरुद्गच्छति च भास्करः।
हविर्जक्षिति निःशङ्को मखेषु मघवानसौ॥" इति भट्टिः (१८।१६)

'मघवतु' शब्दोऽप्यस्ति, 'मघवद्वज्रलज्जानिदानम्', 'स एवमुक्त्वा मघवन्तम्' इत्यादि प्रयोगदर्शनात् ; मघवान्, मघवन्तौ, मघवन्तः ; मघवद्भ्याम्।

अथ दिवसवाची 'प्रतिदिवन्'-शब्दः—प्रतिदिवा, प्रतिदिवानौ, प्रतिदिवानः ; प्रतिदिवानम्, प्रतिदिवानौ ॥ २६३ ॥

२६४। धातो र-व-प्रागिदुतोस्त्रिविक्रमो र-वतो विष्णुजने, न कुर-छुर-नामधातूनां, न च तद्धित-ये।

नाम्नो जातो धातुः 'नामधातुः' (विभुः—आ° प्र° ८७५-९२९) इति वक्ष्यते। अत्र पाठाद्विष्णुजनो वर्णमात्रं गृह्यते, न केवल-

---

धात् नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायाङ्गीकारेण युवती-त्यादिषु वस्य उः स्यादिति ज्ञेयम्। युवतीति ईवन्तम्। वस्यैति साराम-निर्देश इति, तस्मादरामसहितवरामस्य उर्भवतीति। ननु युन इत्यत्र लुलुवुष्-इतिवदुरामे कृते, धातुचतुःसनस्येयुवावित्यनेन उवादेशः कस्मान्नस्यादिति चेत्तत्रैवं वक्तव्यम्। आदेशः स्थानिवत् क्वचिदिति न्यायेनात्र उरामस्य पूर्ववरामव्यक्तिवद्भावो मन्तव्यस्तत्र तु न सौ। मघवेति। अस्माकं मते मघवानिति तु कालापा वदन्तीति शेषः। मघवानिति पदं विरुद्धमिति भट्टिप्रयोगं दर्शयति हविर्जक्षितीति। मघवन्शब्द इन्द्रवाचकः। यदि मघवानित्यविरुद्धं, तर्हि अस्माकं मते तत् कथं भवत्विति चेत्तत्राह मघवतु शब्दोऽप्यस्तीति, सोऽपीन्द्रवाचक एव। मघवतुशब्दसद्भावे हेतुमाह मघवद्वज्रेति ॥

२६४। धातो र-व। र-वतः र-वाभ्यां परवर्तिनि विष्णुजने परे धातु-सम्बन्धिनो र-वाभ्यां पूर्वयोरिरामोरामयोस्त्रिविक्रमो भवति। न कुर्।

स्त्रादयः। कुरादिनिषेधान्नाम्नोऽन्यत्रापि ज्ञेयम्। ततः शसि—प्रतिदीव्नः; प्रतिदीव्ना। अरामहरस्य निमित्तत्वं मत्वैवात्र त्रिविक्रम-विधानं, ततो नासिद्धत्वम्। प्रतिदिवभ्याम्; तदेतत् प्रक्रिया-कौमुद्यादौ (पा° ८।२।२)। अन्ये तु 'प्रतिदीव्नो नस्य विष्णुसर्गो विष्णुपदान्ते' इति मन्यन्ते—प्रतिदिवाः, प्रतिदिवोभ्याम् ॥ २६४ ॥

---

कुर्-छुर् नामधातूनां त्रिविक्रमो न भवति। अतः कुर्वः कुर्मः कुर्यादित्यादौ छुर्यत इत्यादौ, नामधातौ दिव्यति चतुर्यतीत्यादौ, व्यतिरेकेण कुक्कुरायत इत्यादौ च त्रिविक्रमो न भवति।

न च। तद्धित-येच परे त्रिविक्रमो न भवति, अतः धुर्य इत्यादौ त्रिविक्रमाभावः। रवत इति स्पष्टार्थम्, अन्यथा येन न व्यवधानं सम्भवति, तेन व्यवधानेऽपि स्यादिति न्यायेनान्यव्यवधानेऽपीति प्रतिदिवानावित्यादौ त्रिविक्रमशङ्का स्यात्, किञ्च स्थान्यंशेऽनयोः सद्भावे एव निमित्तांशे सद्भाव उचितो, विपरीते तु विपरीतस्तदन्वयव्यतिरेकानुविधानात्, एवं निमित्तांशेऽपि योज्यं, तस्मादनयोः परतः परवर्तिनि विष्णुजने सति अनयोः पूर्वस्मिन् धातोरिदुतोस्त्रिविक्रमो भवति, नान्यव्यवधानेन। र-वप्रागिति किं ? विध्यति, बुध्यति। धातोरिति किं ? निर्गुणः, चतुर्धा, वलिव्यवसितिः, गुरुव्यवस्था, दुरित्यादौ न त्रिविक्रमेण भाव्यं, कुरादिगण पठनानुरोधात्, तथा उब्ज क्विप्, उप् उब्भ्यां, तृण्, उब्जितेत्यादौच रराम-साहचर्यादन्तस्थस्यैव ग्रहणादस्य त्वौष्ठचत्वात् न। विष्णुजन इति किं ? प्रतिदिवानौ। अत्रेति– अत्र धातुसम्बन्धिलक्षणे विष्णुजनस्य पाठात् विष्णुजनवर्णमात्रं गृह्यते। नाम्नोऽन्यत्रापि ज्ञेयमिति, दीव्यतीत्यादौ त्रिविक्रमो भवति–अरामहरस्येति। प्रतिदीव्न इत्यादौ अरामहरस्य निमित्तत्वं मत्वैव त्रिविक्रमविधाणं कृतमिति क्वचिदन्तरङ्गइत्यादिन्यायेन अरामहरस्य नासिद्धत्वम्। तदिति–तदेतद् दर्शितं रूपं मतं वा प्रक्रिया-कौमुद्यादौ सम्मतमिति शेषः। अन्येतु प्रतिदी॰ो नस्य विष्णुसर्गो विष्णु-पदान्त इति मन्यन्ते, तन्मते प्रतिदिवाः प्रतिदिवोभ्यामिति, प्रतिदिवा इति, प्रथमतस्त्रिविक्रमस्ततः सोर्हरस्ततो नस्य विष्णुसर्गः ॥

२६५। पथिन्-मथिन्-ऋभुक्षिन्नित्येषां नस्य हरः सौ।

२६६। पथ्यादीनामिरामस्यारामः कृष्णस्थाने, थात् पूर्वं नुक् च।

'अविष्णुपदान्तस्य' ( वि° प्र° २३१ ) इति 'विष्णुचक्रस्य हरिवेणुः' (स° प्र° ११४) इति ; अत्र नागरलिपावप्यविष्णुपदान्ते यद्विष्णुचक्रं, तन्नोचितम् ; पन्थाः, पन्थानौ, पन्थानः ; पन्थानम्, पन्थानौ ॥ २६५-२६६ ॥

२६७। पथ्यादीनां संसारहरो भगवति।

पथः ; पथा। 'एव'कारेणैव सर्वत्र नियमात् 'नामान्तस्य नस्य हरः' (वि° प्र° २६२ ), तेन पथिभ्याम्, पथिभिः। एवं मन्थाः, मन्थानौ, मन्थानः ; ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणः ॥ २६७ ॥

अथ 'शार्ङ्गिन्'—

२६८। इन्-हन्-पूषन्-अर्यमन् इत्येषामुद्धवस्य त्रिविक्रमः सु-श्योरेव।

शार्ङ्गी, शार्ङ्गिणौ, शार्ङ्गिणः ; शार्ङ्गिणम्, शार्ङ्गिणौ, शार्ङ्गिणः ; शार्ङ्गिभ्याम् ; हे शार्ङ्गिन् ! एवं 'वनमालिन्', 'हलिन्', 'दण्डिन्'।

---

२६५। पथिन्। सुगमम् ॥

२६६। पथ्या। अविष्णिवति, 'अविष्णुपदान्तस्य नस्य मस्यच विष्णु चक्रं वैष्णवे' इत्यनेन विहितस्य विष्णुचक्रस्य स्थाने 'विष्णुचक्रस्य हरिवेणु-र्विष्णुवर्गे' इत्यादिना हरिवेणुरिति। अत्रेति—नागरलिपो नागरलिखने ॥

२६७। पथ्या। ननु पथिन् मथिन् इत्यादि लक्षणस्य पृथक्करणात् पथिभ्यामित्यादौ नामान्तस्येत्यादिना नलोपो न भवत्विति चेत्तत्राह एव-कारेणैवेति—एवकारेणैव सर्वत्र नियमः, अतः एवकाराभावेन नियमा-भावात् ; नामान्तस्येत्यादिना नस्य हरः स्यादेवेति ॥

२६८। इन्-हन्। नियमसूचनार्थमेवशब्दोपादानम् ॥

'हन्' इति 'हन्'धातुः ; ततः कंसहन्—कंसहा, कंसहनौ, कंसहनः ; कंसहनम्, कंसहनौ ॥ २६८ ॥

**'व-म-सत्सङ्गहीनस्य' ( वि° प्र° २३६ ) इति अरामहरः—**

## २६९। हनो हस्य घो णिन्नयोः।

कंसघ्नः ; कंसघ्ना, कंसहभ्याम् ; ङौ—कंसहनि, कंसघ्नि ; हे कंसहन् ! एवं पूषा, पूषणौ, पूषणः ; पूषणम्, पूषणौ, पूष्णः ; पूष्णि, पूषणि, 'पूषि.च' इत्येके। अर्य्यमा, अर्य्यमणौ।

संख्याशब्दाः 'पञ्चन्'-प्रभृतयो नित्यबहुवचनान्ताः त्रिषु सरूपाः। 'षनान्त-संख्यातः कतेश्च' (वि° प्र° १४४) इति पञ्च, पञ्च, पञ्चभिः, पञ्चभ्यः ॥ २६९ ॥

## २७०। र-ष-नान्त-संख्याभ्यो नुड़ामि स्वार्थे।

## २७१। नान्तोद्धवस्य त्रिविक्रमो नामि।

पञ्चानाम् ; पञ्चसु। एवं 'सप्तन्', अष्टन्', 'नवन्', दशन्' ॥ २७०-२७१ ॥

## २७२। अष्टन् आ विष्णुभक्तिषु वा।

## २७३। तस्मात् जस्-शसोरौश् स्वार्थे।

---

२६९। हनो हस्य। ण इत् यस्य स णित्, णिच्च नश्च णिन्नौ, तयोः परयोः। पुषि चेत्येक इति–तन्मते ङौ परे अनो लुग् भवति। संख्याशब्दा इति–त्रिषु लिङ्गेषु सरूपाः समानरूपाः। 'षणान्ते'ति जस्-शसोर्महाहरः ॥

२७०। र-ष-नान्त। सुगमम् ॥

२७१। नान्तो। ननु नान्तात् कथं नुड़् विधीयते ? पञ्चानामित्यादीनां 'संख्यानान्तोद्धवस्य त्रिबिक्रम आमी'ति कृते सिद्धत्वादिति न वाच्यं, अस्वार्थे प्रियपञ्च्ञामित्यत्र प्रियपञ्चानामित्यनिष्टरूपं स्यात्, अष्टानामित्यत्र अष्टन् आ विष्णुभक्तिषु वेत्यनेनारामे कृते अष्टामितिच स्यात् ॥

२७२। अष्टन्। एकवर्णो विधिरन्ते प्रवर्तते इति नरामस्यारामः ॥

श् इत्। 'शित् सर्वस्य' इति न्यायेन शिदादेशः सर्वादेशः। अष्टौ अष्ट, अष्टौ अष्ट, अष्टाभिः अष्टभिः, अष्टाभ्यः अष्टभ्यः ; पक्ष-द्वयेऽपि अष्टानाम् ; अष्टासु अष्टसु। एवं परम-पञ्च, परमाष्टौ इत्यादि। अस्वार्थे तु – प्रियपञ्चा, प्रियपञ्चानौ, प्रियपञ्चानः ; भगवति—प्रिय-पञ्च्ञः इत्यादि ; आमि—प्रियपञ्च्ञाम्। अष्टनः परार्थत्वेऽप्यात्वं वा, न त्वौश् -- प्रियाष्टा, प्रियाष्टौ, प्रियाष्टाः ; भगवति –'विश्वपा'-वदेव। प्रियाष्टः ; आमि – प्रियाष्टाम्। पक्षे—प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टानः ; भगवति—प्रियाष्ट्नः ; आमि—-प्रियाष्ट्नाम् ॥२७२-२७३॥

**'अर्वन्'-अर्वा ;--**

२७४। अनञ्-पूर्वस्यार्वणोऽर्वतृ सुं विना।

चतुर्भुजानुवन्धानां नुम् ॥ २७४ ॥

२७५। नवर्ज-तवर्गस्थस्य नस्य न णत्वम्।

अर्वन्तौ, अर्वन्तः ; अर्वन्तम्, अर्वन्तौ, अर्वतः ; अर्वता अर्वद्भ्याम् ; हे अर्वन् ! नञ्पूर्वस्य तु—-अनर्वा, अनर्वाणौ।

कृष्णगुप्, तस्य पुंसि – कृष्णगुप् कृष्णगुव्, कृष्णगुपौ ॥ २७५ ॥

**मान्तः 'प्रशाम्', तस्य पुंसि--**

२७६। धातोर्मो नो विष्णुपदान्ते म-वयोश्च।

---

२७३। तस्मात्। तस्मादारामात् परयोर्जसशसोः स्थाने स्वार्थे औश भवति। शिदिति–सर्वादेशः समुदयादेशः। परमपञ्चेति–परमाश्च ते पञ्च चेति विग्रहः, एवं परमाष्टाविति, प्रियपञ्चेति–प्रियाः पञ्च यस्येति विग्रहः। अष्टन इति–परार्थत्वेप्यात्वं वेति, आरामविधानसूत्रे स्वार्थशब्दोपादानाभावादिति शेषः। नत्वौशिति–औश्विधानसूत्रे स्वार्थ-शब्दोपानादिति शेषः ॥

२७४। अनञ्। सुं विना विष्णुभक्तिषु परासु अनञ् पूर्वस्य अर्वन् शब्दस्य स्थाने अर्वतृ भवति ॥

२७५। नवर्ज। सुगमम् ॥

अत्र 'झलि च' इति तस्यां भ्रमः ; 'संगंस्यते' इत्यादौ विधान-बलान्नरामस्यैव स्थितिः स्यात्। प्रशान् ; 'प्रशानो नस्य चादौ' (स° प्र° १०८) इति ज्ञापकान्नस्य हरो न स्यात्। प्रशामौ, प्रशामः ; प्रशान्भ्याम् ॥ २७६ ॥

**'चतुर्' नित्यं बहुवचनान्तः, तस्य पुंसि—**

२७७। चतुरनडुहोराम् कृष्णस्थाने, बुद्धे त्वम्।

म् इत्। चत्वारः ; चतुरः। विष्णुसर्गे कृते पुनाररामः— चतुर्भिः ; चतुर्भ्यः ; 'र-ष-नान्त-' (वि° प्र° २७०) इति नुट्— चतुर्णाम् ॥ २७७ ॥

२७८। ररामस्य न विष्णुसर्गः सुपि।

चतुर्षु। 'प्रियचतुर्,—प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः। अस्वार्थत्वादामि न नुट्—प्रियचतुराम् ; हे प्रियचत्वः !

---

२७६। धातोः। विष्णुपदान्ते विषये म-वयोश्च परयोः। अत्रेति, झलिचेति तस्यां प्रक्रियाकौमुद्यां भ्रमः सर्वेषाममतम्। दोषमप्याह संगंस्यत इत्यादाविति, विधानबलात् विधानसामर्थ्यात्। गंस्यत इति—गम्लृ सृप्लृ गतौ अविष्णुपदान्तस्येत्यादिना मस्य विष्णुचक्रम्। यद्यत्र नरामः स्यात् तदा तस्यैव स्थितिः स्यात्, अन्यथा झलीति तद्विधानमनर्थकं भवतीति। प्रशान्भ्यामित्यादीनां प्रक्रियाकौमुदीमतेऽपि विष्णुपदत्वेनैव सिद्धिरिति ज्ञेयम्। ननु प्रशानित्यत्र नामान्तस्येत्यादिना नस्य हरः कस्मान्न भवतीति चेत्तत्राह प्रशान् इति, यद्यत्र नस्य हरः स्यात्तदा प्रशानो नस्य चादौ हरिवेणुरिति सूत्रमनर्थकं स्यात्तस्मान्नात्र नस्य हरः ॥

२७७। चतु। पुनारराम इति, 'अनीश्वरादपि ररामजः' इत्यनेन ॥

२७८। ररामस्य। सुपि परो हलष्विति, 'ईश्वरहरिमित्रेत्या'दिना षत्वम्। षण इति—'यणो हरिमित्रस्य लुक् प्रतिषेधो वाच्य' इति, अवभ्र-शब्दस्य ररामहरो न भवतीति तु मतं, तस्यां कल्पितमेव, नतु पुर्वचार्य-सम्मतम्। दैत्येति, 'अनेकसर्वेश्वरस्य संसारहरः' इत्यनेन संसारहरः। दैत्यवित्यत्र वरामस्य विष्णुदासत्वाभावात् पक्षे हरिकमलत्वाभाव इति ॥

'हल्'शब्दस्य सुपि हल्षु। अभ्रतीति क्विपि 'अभ्र'शब्दस्य सौ सत्सङ्गान्तहरे—अप् अव्। 'यणः प्रतिषेधो वाच्यः' इति तु तस्यां विकल्पितम्। 'दैत्यवृश्चमाचष्टे' इति ण्यन्तात् क्विप्-प्रत्ययः—दैत्यव्, दैत्यवौ ॥ २७८ ॥

२७९। यवयोर्विष्णुपदान्तयोर्हरो गोपाले।

'नवयोर्हरे' (वि° प्र° वृत्तिः २६२) इति—दैत्यभ्याम्; दैत्यभिः; दैत्यव्षु ॥ २७९ ॥

२८०। सर्वेश्वरे तु विकल्पः, हरे सति पुनर्न सन्धिश्च।

दैत्यव् आयाति=दैत्य आयाति, दैत्यवायाति।

'प्रच्छ्'धातोः क्विबन्तः शरामान्तः कृष्णप्राश्—कृष्णप्राट्, कृष्णप्राशौ, 'कृष्णप्राच्छौ' इत्येके। एवं वाञ्छेर्वान्श्, हरविधेर्नित्यत्वात्—वान्, वांशौ, वांशः; 'वाञ्छौ' इत्येके। कृष्णस्पृश्—कृष्णस्पृक्, कृष्णस्पृशौ। 'उदक'-पूर्वत्वे तु उदकस्पृट्।

---

२७९। यवयो। सुगमम्। नवयोर्हर इतीति। 'नवयोर्हरे कृष्णसंज्ञा न वाच्येति' दैत्यभ्यामित्यादौ न त्रिविक्रमादि। दैत्यव्ष्विति—'ईश्वर हरिमित्र'इत्यादिना षत्वम् ॥

२८०। सर्वे। विष्णुपदान्तयोर्यवयोः सर्वेश्वरे तु परे हरो वा भवति। हरे। कृष्णप्राशिति, प्रच्छधातोः क्विप् 'प्रछादीनां त्रिविक्रमो न च सङ्कर्षणः' इति त्रिविक्रमः, सङ्कर्षणनिषेधश्च 'छस्य शो वस्य ऊठ् हरिवेणौ' क्वौ, कंसारि-वैष्णवे च' इति छस्य शः। कृष्णप्राड़िति, 'छशोराजे'त्यादिना शस्य यः, षस्य ड इत्यादिना यस्य डः, विष्णुदासेत्यादिना डस्य टः। वान्शिति, वाछि इच्छायाम्, इरामेत्त्वान्नुम्, 'छस्य श' इत्यादिना छस्य शः। वानिति—छशोराजेत्यादिना शस्य ये कृतेऽपि षस्य हरो भवतीति ष-विधानात् पूर्वमेव सत्सङ्गान्तस्येत्यादिना शस्य हरो भवति। कृष्णस्पृगिति—'स्रज्-दिश्-दृशे'त्यादिना शस्य कः। दधृगित्यत्रापि तेनैव षस्य कः। षनान्तेति—जस्शसोर्महाहरः ॥

षरामान्तो दधृष्—दधृक्, दधृषौ, दधृषः। कंसद्विष्—'षस्य ड़ः' (वि° प्र° २५२) इति कंसद्विट् कंसद्विड़, कंसद्विषौ।

'षष्' नित्यं बहुवचनान्तः। 'षनान्त'- (वि° प्र° १८८) इति षट् षड़् ; षड़्भिः ; षड़्भ्यः ॥ २८० ॥

**'रषनान्त-'** (वि° प्र° २७०) **इति नुट् ; 'षस्य ड़ः'** (वि° प्र° २५२)—

२८१। नित्यं हरिवेणुविधिः प्रत्ययहरिवेणौ।

'मयटचेव' इति तस्यां भ्रमः ॥ २८१ ॥

२८२। षात् परस्य टवर्गयुक्तस्य च तवर्गस्य टवर्गः, न तु विष्णुपदान्ताट्टवर्गादनाम-नवति-नगरीणाम्।

तेन नामष्टवर्गत्वम्—षण्णाम् ; षट्सु। नवति-नगर्योष्टवर्गत्वम्—षण्णवतिः, षड़्णवतिः ; षण्णगर्यः पड़्णगर्यः। नेह—षन्नरः, षड़्नरः ;

---

२८१। नित्यम्। प्रत्ययहरिवेणौ परे हरिवेणुविधिर्नित्यं भवति। हरिवेणौ हरिवेणुर्वेत्यनेन विकल्पे प्राप्ते नित्यतार्थं सूत्रमिदम्, अत्रानेन डरामस्य णरामः ॥

२८२। षात् परस्य। षात् परस्य तवर्गस्य, टवर्गयुक्तस्य तवर्गस्य-च स्थाने टवर्गो भवति। नतु। विष्णुपदान्ताट्टवर्गात् परस्य नाम-नवति-नगरीभिन्नानां तवर्गस्य टवर्गो न भवति। तेनेति—न सहित आम् नाम्, तस्य नामः। षण्णर इति, नाम-नवति-नगरी-भिन्नत्वान्न टवर्गत्वम्। ननु यद्यत्र टवर्गयुक्तस्तेति कृतं—तर्हि कंसजिट्टीकत इत्यादीनि, प्रशाण्टीकत इत्यादीनि, गरुत्मण्डयसे, चक्रिण्ढौकस इत्यादीनि चानेनैव सिध्यन्ति, तत् किमर्थं तत्सिध्यर्थं सन्धिप्रकरणे लक्षणं कृतमिति चैत्तत्राह। दतावितिं—टवर्गे परे दतौ परवर्णाविति टठे परे प्रशानो नरामस्य हरिवेणुरिति ; डढणेषु णराम इति लक्षणञ्च सन्धिमात्रसुवोधाय पृथगुक्तम्। वस्तुतस्तु **अनेनैव** सिध्यन्तीति। नत्विति—'नतु विष्णुपदान्ताट्टवर्गादनाम-नवति-नगरीणामिति' सूत्रे। घट्टिरिति—घट चेष्टायां 'क्तिर्लक्ष्म्यां भाव' इति क्तिः, यदि विष्णुपदान्तादिति न कृतं स्यात्तदात्रापि टवर्गो न

षन्नावः, षड्नावः। 'दतौ परवर्णौ' (स° प्र° १०२) इत्यादीनि तु सन्धिमात्रसुबोधाय पृथगुक्तानि। 'न तु विष्णुपदान्तात्' इत्यादौ 'विष्णुपदान्त'ग्रहणफलं 'घट्टिः' (कृ° प्र° वृत्ति १६६४) इत्यादौ दर्शयिष्यते।

अस्वार्थत्वात्—प्रियषषः ; प्रियषषाम् ॥ २८२ ॥

**'सजुष्'**—

२८३। सजुष् आशिष् इत्यनयोरिसुंसन्तधातोश्च रो विष्णुपदान्ते, तस्य विष्णुसर्गश्च सुपि।

'धातु'ग्रहणफलं समासकार्ये सष्विधाने (समा° प्र° २०२०) 'सर्पिष्काम्यति' इत्यत्र वक्ष्यते ॥ २८३ ॥

२८४। इरुरन्तधातोरुद्धवस्य त्रिविक्रमो विष्णुपदान्ते।

सजूः, सजुषौ ; सजूर्भ्याम् ; सजूःषु, शौरित्वं सजूष्षु। सनन्तधातोः क्विप्—पिपठिष् ; विष्णुपदान्तत्वान्निमित्तत्वनिवृत्तेः षत्वा-

---

स्यादिति। प्रियषष इति, प्रियाः षट् येषां ते इति, अस्वार्थत्वात् षनान्तेत्यादिना न जस्शसोर्महाहरः। प्रियषषामिति—अस्वार्थत्वात् रषनान्तेत्यादिना न नुट् ॥

२८३। सजुष्। एकवर्णो विधिरन्ते प्रवर्तत इति अन्ते ररामो भवतीति। तस्य। तस्य ररामस्य स्थाने सुपि परे विष्णुसर्गः स्यात्। ररामस्य न विष्णुसर्गः सुपीत्यनेन प्रतिषेधे प्राप्ते विधानम्। सर्पिष्काम्यतीति—सर्पिरिच्छतीत्यर्थे काम्यप्रत्यये कृते उक्तार्थानामप्रयोग इति न्यायेन इच्छतेरप्रयोगः। अन्तरङ्गेत्यादिना अमो महाहरः, ततः सर्पिष्काम्य इति स्थिते, विष्णुपदान्तत्वात् सरामस्य ररामे प्राप्ते धातुग्रहणान्न तत्प्राप्तिस्ततः 'सरामस्य विष्णुसर्गः' काम्ये तु, न ररामजविष्णुसर्गं विनेत्यनेन विष्णुसर्गस्य षरामस्ततो धातुसंज्ञत्वात् तिप्, शप् ॥

२८४। इरुरन्त। शौरित्वमिति, शौरिषु शौरिर्वेत्यनेन। सनन्तेति, सनन्तधातोः पिपठिषः, क्विवन्तः पिपठिष्शब्द इति। विष्ण्वति—निमित्तत्वमविष्णुपदान्तत्वं, विश्वचिकीरिति, विष्णुपदान्तत्वात् षत्वापायः,

पायः ; पिपठीः, पिपठिषौ, पिपठिषः ; पिपठीर्भ्याम् ; पिपठीःषु । एवं 'विश्वचिकीर्ष्' ; 'रात् सस्यैव' ( वि॰ प्र॰ २५७ ) इति— विश्वचिकीः, विश्वचिकीर्षौ, विश्वचिकीर्भ्याम् ; विश्वचिकीर्षु ॥२८४॥

२८५। सहजस्य मूर्धन्यजात-करामसम्बन्धिनश्च क्षरामस्य सत्सङ्गादिहरे डः, अन्यस्य तु को वक्तव्यः, दिशि-दृशि-अनुदकपूर्व-स्पृशि-जातस्य च।

तत्र सहजे गोरक्ष्—गोरट् गोरड्, गोरक्षौ, गोरक्षः ; गोरड्भ्याम् ; गोरट्सु ॥ २८५ ॥

२८६। 'रक्षेर्वा कः' इति केचित्।

गोरक्। मूर्धन्यजे विशि-विष्लृ-धात्वोः सनि वेष्टुमिच्छति विविक्ष्—विविट् विविड्, विविक्षौ, विविक्षः। वहधातोर्विवक्ष्— वोढुमिच्छति ; विवट् विवड्, विवक्षौ विवक्षः। 'अन्यस्य तु'—

---

रात् सस्यैवेति सत्सङ्गान्तस्य सस्य हरः, इरुरन्तेन त्रिविक्रमः, ररामस्य विष्णुसर्गः। विश्वचिकीर्ष्विति—'ररामस्य न विष्णुसर्गः सुपी'त्यनेन विष्णुसर्गनिषेधः ॥

२८५। सहज। सहजस्य स्वभावसिद्धस्य, मूर्धन्यवर्णजातकराम-सम्बन्धिनश्च क्षरामस्य सत्सङ्गादिहरे सति डो भवति—षरामस्य स्थाने डो भवतीत्यर्थः। अन्यस्य। अन्यस्य तु क्षरामस्य सत्सङ्गादिहरे सति को वक्तव्यः। दिशि। दिश्यादिजातस्य क्षरामस्यच सत्संगादिहरे को वक्तव्यः ॥

२८६। रक्षेर्वेति। रक्षधातोः क्षरामस्य सत्सङ्गादिहरे को वा भवतीति केचिन्मन्यन्ते, तन्मते गोरगित्यपि। विविक्षिति—विश प्रवेशने सन्, द्विर्वचनं 'छशो राजे'त्यादिना शस्य षः, 'षढोः कः से' इत्यनेन षस्य कः, षत्वं, क-षसंयोगेतु क्षः, विषलृ व्याप्तावित्यस्मादपि सन्, द्विर्वचनं, 'षढोः कः से' इति षस्य कः, षत्वम्। विविक्षिति—वह प्रापणे सन्, द्विर्वचनं, नरारामस्येरामः सनीत्यनेन नरारामस्येरामः, हस्य ढ इत्यादिना हस्य ढः

वच्धातोर्विवक्ष्—विवक् विवग्, विवक्षौ। 'दह्'-धातोर्दिधक्ष्—दिधक् दिधग्, दिधक्षौ, दिधक्षः। दिश्यादीनां—दिदिक्; दिदृक्; पिस्पृक्। मन्यन्ते च तदिदं पाणिनीयाः। कालापास्तु घकार-चवर्गस्थानिकादन्यस्य षढादि-स्थानिकस्यापि कस्य लोपमाहुः; तेन 'विवीः' इत्याहुः। 'पिस्'धातोः सरामान्तः सुपिस्; 'तुस्' धातोः सुतुस्—सुपीः, सुपिसौ, सुपिसः; सुतूः, सुतुसौ, सुतुसः; षत्वम्—सुपीःषु, सुतूःषु। उरुश्रवस्—'अत्वसन्तोद्धवस्य' (त्रि° प्र° २५८) इति त्रिविक्रमः उरुश्रवाः, उरुश्रवसौ, उरुश्रवसः; उरुश्रवोभ्याम्; उरुश्रवःसु; हे उरुश्रवः! एवं 'विष्टरश्रवस्', 'वेधस्' इत्यादि। अथ दोष् उणादिप्रत्ययान्तः—दोः, दोषौ, दोषः; दोषम्, दोषौ॥ २८६॥

---

'षढोः कः स' इति ढस्य कः, षत्वम्। विवक्षिति—वचपरिभाषणे सन्, द्विर्वचनं, नरारामस्येरामः, चवर्गस्येत्यादिना चस्य कः, षत्वम्। दिधक्षिति—दह भस्मीकरणे सन्, द्विर्वचनं, नरारामस्येरामः; दादेस्तु धातोर्घ इति हस्य घः, जवर्ज-हरिगदादेरित्यादिना दस्य धः, यादवमात्रे हरिकमलमिति घस्य कः, षत्वम्। दिदिगिति—दिदिक्ष शब्दस्य रूपम्, दिदिक्षिति—दिश अति-सर्जने सन्, द्विर्वचनं; छशोराजेत्यादिना शस्य षः, षढोः कः स इति षस्य कः, षत्वम्। दिदृगिति—दिदृक्षशब्दस्य रूपं दिदृक्षिति, दृशिरप्रेक्षणे सन्, द्विर्वचनं, 'नर ऋरामस्याराम' इति नरऋरामस्यारामः, नरारामस्येरामः, छशोराजेत्यादिना शस्य षः, ततः षस्य कः षत्वम्। पिस्पृगिति—पिस्पृक्षशब्दस्य रूपं, पिस्पृक्षिति—स्पृश संस्पर्शे सन्, द्विर्वचनं, नरऋराम-स्यारामः, नरारामस्येरामः, शस्य षः, षस्य कः, षत्वम्। मन्यन्ते चेति, तदिदं मतं पाणिनीयाश्च म यन्ते इति। कालापास्त्विति—घकारचवर्गस्थानीयात् ककारादन्यस्य षढादिस्थानीयस्यापि ककारस्य लोपमाहुः; नतु क्षकारस्य संयोगादिलोपे डकारककारविधानं, तेन ते विवीरित्याहुः। विवीरिति—विशविषलृ धात्वोः सनन्तस्य विविक्षधातोः क्विवन्तस्य रूपम्, अत्र ककारः यकारस्थानीयः। तन्मते क-लोपे कृते सनः सस्य पूर्वं यत् षत्वं विहितं, तस्य पदान्तत्वानिवृत्तिर्भवति, ततः सस्य रः, ततो दीर्घः, रस्य विसर्गः। षत्व-

२८७। दोषो दोषन् यदुषु वा।

'व-म-सत्सङ्ग-' ( वि° प्र° २३६ ) इति अरामहरः—दोष्णः दोषः ; दोष्णा दोषा, दोर्भ्याम् दोषभ्याम् इत्यादि। पीतं वस्ते परिदधाति—पीतवस् ; 'धातुं विना' ( वि° प्र° २५८ ) इति त्रिविक्रमाभावः—पीतवः, पीतवसौ । कंसं हिनस्तीति—कंसहिंस् । अन्तरालपाठाद्विष्णुचक्रविष्णुसर्गयोः सर्वेश्वरत्वं विष्णुजनत्वञ्चास्तीति सत्सङ्गान्तत्वात् सस्य हरः, निमित्तापायान्नराम एव,-'धातुवर्जित-' (वि° प्र° २२६) इति विशेषणान्नात्र त्रिविक्रमः—कंसहिन्, कंसहिंसौ ; कंसहिन्भ्याम् । षत्वविधौ तु नुमो विष्णुचक्रमेव गृह्यते, ततो नेह षत्वम्—कंसहिन्सु ॥ २८७ ॥

**'वैकुण्ठध्वस्'**—

२८८। ध्वंसु-श्रंसु-वस्वनडुहां दो विष्णुपदान्ते।

अत्र 'झलि च' इति तस्यां ( पा ८।२।७२ ) भ्रमः, 'ध्वस्त' इत्यादौ दोषश्च। 'ध्वंसु' 'श्रंसु' धातू ; चतुर्भुजानुवन्धत्वं नामा-

---

मिति—विष्णुसर्गव्यवधाने ईश्वरहरिमित्रेत्यादिनेतिशेषः। दोरिति—विष्णुपदान्तत्वात् षत्वापायः ॥

२८७। दोषो। पीतमिति पीतवस्त्रमित्यर्थः। वस्त इति, वस् आच्छादने अदादि। अन्तरालेति—वर्णक्रमे अंअ इति द्वौ सर्वेश्वरविष्णुजनयोर्मध्ये पठितौ, अत एतयोः सर्वेश्वरत्वं विष्णुजनत्वञ्चास्तीति, अत्र विष्णुचक्रस्य विणुजनत्वमतः सत्सङ्गान्तत्वात् सस्य हर इति। धात्विति—धातुवर्जितेति विशेषणात् 'नान्तधातुवर्जितसान्तसत्सङ्गे'त्यादिना नात्र त्रिविक्रम इति। ननु कंसहिन्स्वित्यत्र नुमव्यवधाने षत्वं कथं न स्यादिति चेत्तत्राह ; षत्वविधौ नुमः स्थाने विहितस्य विष्णुचक्रस्यैव व्यवधाने षत्वं भवतीति नात्र षत्वम्। विष्णु पदान्तत्वान्नात्र नस्य विष्णुचक्रत्वम् ॥

२८८। ध्वंसु। विष्णुपदान्ते विषये ध्वंस्वादीनामन्तस्य दो भवति। अत्रेति—दोषमप्याह ध्वस्त इत्यादौ दोषश्चेति। ध्वस्त इति, ध्वन्सु अधःपतने क्तः, 'अनिरामेतां विष्णुजनान्तानामुद्धवनरामहरः कंसारा'वित्य-

वस्थायामेव गृहीतम्, 'अच'-उपादानात्, तेनात्र न नुम्—वैकुण्ठध्वद् वैकुण्ठध्वत्, वैकुण्ठध्वसौ ; वैकुण्ठध्वद्भ्याम्। एवं 'वैकुण्ठश्रत्'।

अत्र 'वसु'-प्रत्ययः—विद्वसु। उदित्वात् 'चतुर्भुजानुवन्धानाञ्च नुम्' (वि° प्र° २४१), 'नान्त-' (वि° प्र° २२९) इति त्रिविक्रमः, 'सत्सङ्गान्तहरः (वि° प्र° २४३)—विद्वान्, विद्वांसौ, विद्वांसः ; विद्वांसम्, विद्वांसौ ॥ २८८ ॥

२८९। वसोर्वस्य उर्भगवति।

'वस्य' इति सारामनिर्देशः ; षत्वम्—विदुषः ; विदुषा, विद्वद्भ्याम्, विद्वद्भिः ; विदुषे ; हे विद्वन् !

'आदिवस्'-प्रभृतयः कृदन्तप्रकरणे (१२५६) साधयिष्यन्ते। रूपाणि यथा—आदिवान्, आदिवांसौ, आदिवांसः ; आदिवांसम्, आदिवांसौ, आदुषः ; आदुषा, आदिवद्भ्याम्। एवं 'जक्षिवस्'।

अथ 'जग्मिवस्'—जग्मिवान्, जग्मिवांसौ, जग्मिवांसः ; जग्मि-

---

नेन नरामहरः। ननु वैकुण्ठध्वदित्यत्र चतुर्भुजानुवन्धत्वात् अच इत्यादिना नुम् कस्मान्नस्यादिति चेत्तत्राह, चतुर्भुजानुवन्धत्वमिति हि नामावस्थायां यस्य चतुर्भुजानुवन्धत्वं तस्य नुम् भवति, अस्य तु धात्ववस्थायां चतुर्भुजानुवन्धत्वमतो न नुम्। अत्र हेतुमाह अच उपादानादिति, अन्यथा अच इति न कृतं स्यात् ॥

२८९। वसोर्वस्य। सरामनिर्देश इति, अरामसहितस्य वरामस्य स्थाने उर्भवतीत्यर्थः। आदुष इति—निमित्तापायादिटो निवृत्तिः। उभयत्रेति, उभयत्र जग्मिवस् जगन्वस् इति शब्दद्वये। जग्मिवस् शब्दे वस्य उरामे कृते निमित्तापायादिटो निवृत्त्या जग्मुष इत्यादि भवति। जगन्वस्शब्दे तु वस्य उरामे कृते निमित्तापायान्नरामस्य मरामः। ततो 'गम-हन-जन-खन-घसामुद्धवादर्शनं कंसारिसर्वेश्वरे ङः विना' इत्यनेन उद्धवादर्शनमिति जग्मुष इत्यादि। अत्र असिद्धरूपं न त्याज्यमिति प्रतिज्ञाया व्यभिचारो जात इति ज्ञेयम् ॥

वांसम्, जग्मिवांसौ। तथा 'जगन्वस्'—जगन्वान्, जगन्वांसौ, जगन्वांसः। उभयत्र भगवति—जग्मुषः इत्यादि ॥ २८९ ॥

'पुंस्'—

२९०। पुंसः पुमसुः कृष्णस्थाने।

अत्र च 'सुटि' इति तस्यां ( पा ७।१।८९ ) भ्रमः, गौणत्वे ब्रह्मणि दोषश्च। उराम इत्; पुमान्, पुमांसौ, पुमांसः; पुमांसम्, पुमांसौ, पुंसः; पंसा, पुंभ्याम् पुम्भ्याम्। 'नुमा सर्वोऽप्यनुस्वारो लक्ष्यते'—इति भाषावृत्तिकारादयः। अत्र औणादिकस्यास्य 'पुंसः' इत्यादौ षत्वनिषेधो वाच्यः; अत्र तु षत्वम्—पुंषु। 'न' इत्यन्ये—पुंसु। उशनस्—उशना, उशनसौ, उशनसः ॥ २९० ॥

२९१। उशनसो नान्तत्वं सलोपित्वं विष्णुसर्गान्तत्वं च बुद्धे।

हे उशनन्, हे उशन, हे उशनः! एवं अनेहा, अनेहसौ; पुरुदंशा, पुरुदंशसौ; हे अनेहः! हे पुरुदंशः! 'श्वेतवाह्'-'पुरोडाश्'-'उक्थशास्'-प्रभृतयस्तु छान्दसाः ॥ २९१ ॥

---

२९०। पुंसः। अत्र चेति। दोषमप्याह गौणत्वे ब्रह्मणि दोषश्चेति, तथाहि अतिपुम् इत्यादौ पुमसुः स्यात्। नुमेति—यस्य कस्यापि स्थाने योऽनुस्वारो विधीयते, नुमा स सर्वोपि लक्ष्यते, षत्वविधाविति शेषः, इति भाषावृत्तिकारादयो, वदन्तीति शेषः। ननु तर्हि पुंस इत्यादौ षत्वं कथं नस्यादिति चेत्तत्राह अत इति, अस्य औणादिकस्येति, सरामस्य प्रत्ययत्वसूचनार्थमौणादिकसस्यैव षत्वनिषेधज्ञापनार्थञ्चोक्तम्। अत्र तु षत्वं पुंष्विति, यतः स्वादि सरामोऽयम्। नेत्यन्य इति—अन्ये क्रमदीश्वरादयः। उशनेति—'ऋराम सखिभ्यामुशनस्' इत्यादिना सोराच 'संसारस्य हरश्चि'ति इत्यस्हरः॥

२९१। उश। बुद्धे परे उशनसो नान्तत्वं भवति, सरामस्य स्थाने नरामो भवतीत्यर्थः। सलोपित्वमिति—सरामस्य लोपो भवती-

'कृष्णवाह्'—

२९२। हस्य ढः, नहो धः, दादेस्तु धातोर्घः, द्रुह-मुह-नश-स्नुह-स्निहां वा विष्णुपदान्ते वैष्णवे च।

एते सर्वेऽपि धातवः। कृष्णवाट् कृष्णवाड्, कृष्णवाहौ, कृष्णवाहः॥ २९२॥

२९३। वाहो वा ऊठ् भगवति।

ठ् इत्॥ २९३॥

२९४। अद्वयादूठो वृष्णीन्द्रः।

कृष्णौहः; कृष्णौहा, कृष्णवाड्भ्याम्; कृष्णवाट्सु। अत्र, 'कंसद्विट्सु' इत्यत्र च 'षढोः कः से' (आ° प्र° ५३६) इति न प्राप्नोति, अत्राकरणेन केवलधातु-विषयत्वात्; ततश्च 'कृष्णवाट्-

---

त्यर्थः। विष्णुसर्गान्तित्वञ्चेति, सरामस्य विष्णुसर्गो भवतीत्यर्थः। हे उशनेति, सलोपे कृते, 'ए-ओ वामनेभ्य' इत्यादिना बुद्धस्यादर्शनम्। हे उशन इति, सस्य विष्णुसर्गे कृते अन्तरालपाठाद्विष्णुसर्गस्य विष्णुजनत्वात् 'राधा विष्णुजनाभ्या'मित्यादिना सोर्हरः॥

२९२। हस्य ढः। हस्य स्थाने ढो भवति, नहो हस्य स्थाने धो भवति, दादेर्धातोस्तु हस्य स्थाने घो भवति, द्रुहमुहादीनामन्तस्य घो वा भवति, विष्णुपदान्ते वैष्णवे चेति सर्वत्र योज्यं, सर्वेऽपीति—सर्व एवेत्यर्थः॥

२९३। वाहो वा। वेति सूत्रबलेन लुप्तषष्ठी॥

२९४। अद्वय। अत्रेति—अत्र कृष्णवाट्सु इत्यत्र च। हेतुमाह अत्रेति, अत्र नामजविष्णुपदप्रकरणे, अकरणेन, तस्य लक्षणस्य केवलधातु-विषयत्वादिति। ततश्चेति—ततः केवल धातुविषयत्वाद्धेतोः कृष्णवाट्-सादिति सातिप्रत्ययस्तद्धितः। तद्धितेपि न स्यादिति, षतः अत्र केवल धातु विषयत्वाभावः। सम्मतेति—कृष्णवाट् सादित्यादेः सर्वसम्मतरूपत्वात् पाणिनीयैरपि इदं कृष्णवाट्सादित्यादिकं रूपं समाधेयमेव, तेषामत्र स्पष्टं समाधानं नास्तीति तैरप्यत्र समाधानं कर्तव्यमित्यर्थः; असुपीति—क्रमदी-

साद्भवति' इत्यादौ कृदन्तधातोस्तद्धितेऽपि न स्यात् ; सम्मतरूपत्वात् पाणिनीयैरपि समाधेयमेवेदम् । 'असुपि' इत्युक्त्वापि क्रमदीश्वर-पद्मनाभाभ्यां तद्धिते तु समाधेयमेव । कृष्णपण्डितस्तु 'अपदान्ते' इत्युक्त्वा सर्वमेव समादधे ॥ २९४ ॥

**अथ 'अनडुह्' ; 'चतुरनडुहोराम्' (वि° प्र° २७७)--**

## २९५। अनडुहो नुम् च सौ ।

सत्सङ्गान्तहरः ( वि° प्र° २४३ ) ; असिद्धत्वान्न नस्य हरः—अनड्वान्, अनड्वाहौ, अनड्वाहः ; अनड्वाहम्, अनड्वाहौ, अनडुहः ; अनडुहा, अनडुद्भ्याम् ; 'बुद्धे त्वम्' ( वि° प्र° २७७ )—हे अनड्वन् ! गोदुह्—'जवर्जहरिगदादे'- (वि° प्र° २६१) इत्यादि —गोधुक् गोधुग्, गोदुहौ ; गोधुग्भ्याम् ; गोधुक्षु । घत्वे 'धातो-' (वि° प्र° २९२) इति औपदेशिकत्वमेव गृह्यते, तेन दामलिड्वाच-रतीति क्यङन्तात् क्विप् दामलिट् । कंसद्रुह्—कंसध्रुक् कंसध्रुग्, कंसध्रुट् कंसध्रुड्, कंसद्रुहौ ; कंसध्रुग्भ्याम् कंसध्रुड्भ्याम् । एवं 'कृष्णमुह्', 'कृष्णस्निह्' इत्यादयः । कृष्णांघ्रिलिह्—'हस्य ढः' (वि° प्र° २९२) इति कृष्णांघ्रिलिड्, कृष्णांघ्रिलिहौ ॥ २९५ ॥

---

श्वरपद्मनाभाभ्यामसुपीत्युक्त्वा कृष्णवाट्स्वित्यादिकं समाहितं, तद्धिते कृष्णवाट्सादित्यादिकन्तु ताभ्यां समाधेयमेव भवति, न तु समाहितम् । कृष्णेति कृष्णपण्डितः, प्रक्रियाटीकाकारः । अपदान्त इत्युक्त्वेति—कराम-विधानसूत्रे इति शेषः । कृष्णवाट्सादित्यादौ च पदान्तत्वादसमाधेयपरो न भवतीति ॥

२९५ । अन । असिद्धत्वादिति, क्वचिदन्तरङ्ग इत्यादि न्यायेनेति शेषः । गोधुगिति– दादेस्तु धातोर्घ इति हस्य घः, विष्णुदास इत्यादिना घस्य गः, विष्णुदासस्य हरिकमलमित्यादिना गस्य कः, पक्षे गरामस्यैव स्थितिः । घत्व इति– घरामविधाने धातोरित्यस्य औपदेशिकत्वमेव गृह्यते, उपदेशे उच्चारणमात्रे यो दादिधातुस्तस्य हरामस्य स्थाने घो

'तुरासाह्'--

२९६। साढः षाट्।

तुराषाट् तुराषाड़, तुरासाहौ, तुरासाहः ; तुराषाड्भ्याम् ॥ २९६ ॥

**इति विष्णुजनान्ताः पुरुषोत्तमलिङ्गाः *।**

## अथ विष्णुजनान्ता लक्ष्मीलिङ्गाः

तत्र चरामान्त ऋच् ; 'चवर्गस्य' (वि° प्र° २४४) इति—ऋक् ऋग्, ऋचौ, ऋचः ; ऋग्भ्याम् ; ऋक्षु। एवं 'त्वच्', 'वाच्', 'स्रज्', 'दिश्', 'दृश्' इत्यादि ; स्रक् स्रग्, स्रजौ, स्रजः। समिध्—समित् समिद्। सीमन्—सीमा, सीमानौ, सीमानः ; सीम्नः ; सीम्ना ; 'ईङ्योस्तु वा' (वि° प्र° २३६)—सीम्नि सीमनि।

'अप्' नित्यं बहुवचनान्तः ; 'नान्त-' ( वि° प्र° २२९ ) इति त्रिविक्रमः—आपः ; अपः।

२९७। अपो दो भे।

अद्भिः ; अप्सु ; हे आपः ! तदन्तत्वात् स्वद्भिः इत्यादि। ककुभ्—ककुप् ककुव्, ककुभौ ; ककुव्भ्याम् ; ककुप्सु। गिर्—'इरु-रन्तधातोः' (वि° प्र° २८४) गीः, गिरौ, गिरः ; गीर्भ्याम् ; गीर्षु।

---

भवतीत्यर्थः। गणपठितधातोरेव ग्रहणमिति फलितार्थः। तेनेति, दाम-लिड़िवाचरतीति, 'य इवाचरति तस्मात् क्यङ्' इति क्यङ्, क्वचित् क्यङः क्विप्' इति क्यङः क्विप्, ततः कृत्क्विप्। कंसध्रुगिति द्रुहमुहेत्यादिना हस्य घः, पक्षे हस्य ढः, कंसध्रुड़िति ॥

२९६। साढः। साढः स्थाने षाट् स्यात्, हस्य स्थाने ढ़े सति षत्वं भवतीत्यर्थः ॥

* इति विष्णुजनान्ताः पुरुषोत्तमलिङ्गाः ॥

एवं 'पुर्'—पूः, पुरौ, पुरः। चतुरस्त्रियां चतस्रादेशः ( वि° प्र° २१८ )—चतस्रः; चतस्रः; चतसृभिः; चतसृभ्यः; चतसृभ्यः; चतसृणाम्; चतसृषु। 'लक्ष्मीस्थयो-' ( २१८ ) इति विशेषणात् समस्तस्यान्यलिङ्गत्वेऽपि तत्तदादेशः। प्रियास्तिस्रो यस्य सः—प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः; प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः; ङसि-ङसोः—प्रियतिस्रः, प्रियचतस्रः; प्रियतिसृणाम्। समस्तमात्रस्य लक्ष्मीत्वे तु—प्रियत्रिः, प्रियत्री, प्रियत्रयः॥ २९७॥

२९८। दिव् औ सौ।

द्यौः, दिवौ, दिवः; दिवम्, दिवौ, दिवः; दिवा॥ २९८॥

२९९। दिव उर्विष्णुपदान्ते।

द्युभ्याम्; द्युषु। दिश्—दिक् दिग्, दिशौ; दिग्भ्याम्; दिक्षु। एवं 'दृश्'। 'अघद्विष' 'कंसद्विड्'-वत्। एवं 'विप्रुष्'। अथ 'आशिष्'; 'सजुष्' (वि° प्र° २८३) इत्यादिना रः—आशीः, आशिषौ, आशिषः; आशीर्भ्याम्; आशीःषु। उष्णिह्—उष्णिक् उष्णिग्, उष्णिहौ। उपानह्—'नहो धः' ( वि° प्र° २९२) इति उपानत् उपानद्, उपानहौ॥ २९९॥

**इति विष्णुजनान्ता लक्ष्मीलिङ्गाः *।**

---

२९७। अपो। भे परे अपोऽन्तस्य दो भवति। इरुरन्तधातोरित्यादिना उद्धवस्य त्रिविक्रमः। प्रियचतसेति— प्रियाश्चतस्रो यस्येति विग्रहः। प्रियत्रिरिति— प्रियास्त्रयः, प्रियाणि त्रीणि वा यस्याः सेति; अत्र समस्तस्यैव लक्ष्मीत्वं, न तु त्रिशब्दस्येति न तिस्रादेशः॥

२९८। दिव्। सौ परे दिवोऽन्तस्य और्भवति॥

२९९। दिवः। विष्णुपदान्तेविषये दिवोवस्य उर्भवति॥

* इति विष्णुजनान्ता लक्ष्मीलिङ्गाः॥

## अथ विष्णुजनान्ता ब्रह्मलिङ्गाः

तत्रापि 'प्रत्यच्'—प्रत्यक्, प्रतीची, प्रत्यञ्चि ; प्रतीचा, प्रत्यग्भ्याम्। एवं 'प्राच्'—प्राङ्, प्राञ्ची, प्राञ्चि। प्रत्यञ्च्-प्राञ्च्-शब्दयोस्तु—प्रत्यङ्, प्रत्यञ्ची, प्रत्यञ्चि। शौ नरामद्वयं लेख्यम्, किन्तु मित-स्थाने नराम-सद्भावे नुम् न दृश्यते ; यथा,—कंसहिंसो ब्रह्मणि 'कंसहिंसि' इति केवलं विष्णुचक्रं स्यात्। तिर्यच्—तिर्यक्, तिरश्ची, तिर्यञ्चि। ऊर्ज्—ऊर्क्, ऊर्ग्, ऊर्जी, ऊर्न्जि। *

### ३००। बहूर्जो नुम्-प्रतिषेधः।

बहूर्जि ; अन्त्यात् पूर्वं नुम् इच्छन्त्येके—'बहूर्ञ्जि' इति। जगत्—जगत्, जगती, जगन्ति। अथ शतृप्रत्ययान्तः भवतृ—'भवत्'। 'नुम् ई-प्रत्यये' कृदन्त-प्रकरणे ( १२४३ ) वक्ष्यते—भवन्ती, भवन्ति। 'तुदतृ'-'भातृ'-'करिष्यतृ'-प्रभृतीनां विकल्पः—तुदत्, तुदती तुदन्ती, तुदन्ति ; एवं भात्, भाती भान्ती, भान्ति ; करिष्यत्, करिष्यती करिष्यन्ती, करिष्यन्ति। 'महत्'-शब्द—महत्, महती, महान्ति ; ब्रह्मन्—ब्रह्म, 'ब-म-सत्सङ्गहीनस्य' (वि॰ प्र॰ २३६ ) इति विशेषणादरामहराभावः—ब्रह्मणी, ब्रह्माणि ; ब्रह्मणा, ब्रह्मभ्याम् ॥ ३०० ॥

---

* प्रतीची इति, 'अचोऽरामहर' इत्यादिना अरामहरः, निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायेन यरामस्य इरामस्ततस्त्रिविक्रमश्च। शाविति—शौ नरामद्वयं लेख्यं भवति, सर्वेश्वरवैष्णवान्तयोर्नुम्शावित्यनेन विहितस्य नुमोऽपरिहार्यत्वादिति शेषः, किन्तु मितः स्थाने अन्त्यसर्वेश्वरात् परे नरामसद्भावे नरामविद्यमानतायां नुम् न दृश्यते, नुम् न तिष्ठतीत्यर्थः। यथेति—कंसहिंसो ब्रह्मणि शौ कंसहिंसीति भवति, अत्र केवलं विष्णुचक्रं भवति, नतु नुम् तिष्ठतीति ; तिरश्ची इति—तिर्यचस्तिरश्चिरित्यादिना तिर्यचस्तिरश्चिः ॥

३००। बहूर्जो। अन्त्यादिति, अन्त्यात् जरामात्। ई-प्रत्यये नुम् कृत्प्रकरणे वक्ष्यत इति—'शप्-शाभ्यां शतुर्नुम् ई-प्रत्यये' इत्यनेनेति

३०१। नस्य हरो वा ब्रह्मणि बुद्धे ।

हे ब्रह्म, हे ब्रह्मन् ! एवं 'शर्मन्', 'वर्मन्', 'चर्मन्' ॥ ३०१ ॥

३०२। अह्नो विष्णुसर्गो विष्णुपदान्ते ।

'न समासे पुंसि' इति वाच्यम्। अहः; 'ईङ्चोस्तु वा', धातुत्वाभावात् षत्वाभावः—अह्नी अहनी, अहानि ; अह्ना ॥ ३०२ ॥

३०३। अस्य स्वाद्यभाव एव र-विधिर्वाच्यः ।

अहोभ्याम् ; बुद्धेऽपि—हे अहः ! समासे पुंसि तु त्रिविक्रमो, न तु विष्णुसर्गः—दीर्घहा निदाघः ; बुद्धे तु—हे दीर्घाहन् ! अत्र णत्वं वाच्याम्—दीर्घाहाणौ, दीर्घाहाणः ; दीर्घाह्नः । सुपथिन्—सुपथि, सुपथी, सुपन्थानि । शसि च—सुपन्थानि । 'पथ्यादीनां सुटि नुम्' इति तस्यां भ्रमः । दृष्टशार्ङ्गिन्—दृष्टशार्ङ्गि, दृष्टशार्ङ्गिणी, दृष्टशार्ङ्गीणि । ऐवं 'दृष्टकंसहन्—दृष्टकंसह, दृष्टकंसहनी दृष्टकंसघ्नी, दृष्टकंसहानि। एवं 'दृष्टपूषन्', 'दृष्टार्यमन्' । स्वप्, स्वपी, 'नान्त-धातुर्वजित'- (वि° प्र° २२९) इति त्रिविक्रमः—स्वाम्पि ; सद्भ्याम्। वार्—वाः, वारी, वारि ; 'अनीश्वरादपि ररामजः' (स° प्र° १४५) वार्भ्याम्। अत्रापि 'चतुर्'—चत्वारि। पयस्—पयः, पयसी, पयांसि ; पयोभ्याम् । हविस्—हविः, औणादिक-सरामोऽयं प्रत्ययः, अतः षत्वम्—हविषी, हवींषि ; हविर्भ्याम् ; विष्णुसर्गः, षत्वम्—हविःषु, शौरित्वम्—हविष्षु । एवं 'धनुस्' । अतिपुंस्—अतिनुम्, अतिपुंसी, अतिपुमांसि । स्वनडुह्—स्वनडुत्, स्वनडुही, स्वनड्वांहि ॥

इति विष्णुजनान्ता ब्रह्मलिङ्गा ।

॥ इति लिङ्गत्रयं दर्शितम् ॥

---

शेषः । तुदतृ-भातृ-करिष्यतृ-प्रभृतीनां विकल्प इति, 'शेषादद्वयात्तु वेत्य-नेनेति शेषः ॥

३०१ । नस्य । सुगमम् ॥

# अथ विशेषणलिंगाः

३०४। अत्र कृष्णादिशब्दाः संज्ञाविशेषादौ नियत-पुरुषोत्तमादयः।

३०५। संख्यादि-शब्दास्तु वाच्यलिङ्गाः।

---

३०२। अह्नो। विष्णुपदान्तेविषये अह्नोऽन्तस्य विष्णुसर्गो भवति; न समासे। धातुत्वाभावात्—हनो हस्य घो निन्नयोरित्यनेन घो न भवति॥

३०३। अस्य। अस्य विष्णुसर्गस्य स्थाने र-विधिः स्वाद्यभाव एव वाच्यः, तेन अहोभ्यामित्यादौ 'अह्नो विष्णुसर्गस्य रो' इत्यादिना ररामो न भवति। दीर्घाहेति— दीर्घाणि अहानि यत्रेति विग्रहः। पथ्यादीनामिति— अस्माभिः कृष्णस्थाने थात् पूर्वं लुग्विधीयते, अतः सुपथीत्यादौ न लुग् भवति, सुटिपरे थात् पूर्वं नुम् भवतीति प्रक्रियाकौमुदीमतं, तत्तु भ्रम एवेति। दृष्टकंसघ्नी इति— 'हनो हस्य घो णिन्नयोः' इति हस्य घः। स्वद्भ्यामिति—'अपो दो भे' इत्यनेन परामस्य दः। अतिपुमिति, 'सत्-सङ्गान्तस्य हरः' इत्यादिना रामहरः॥

इति विष्णुजनान्ता ब्रह्मलिङ्गाः॥

३०४। अत्रेति। अत्र लिङ्गत्रये, कृष्णादिशब्दाः संज्ञाविशेषादौ वर्तमानाः सन्तो नियतपुरुषोत्तमादयो भवन्तीति शेषः। कृष्णादीति, आदिशब्देन रामवामनादीनां राधादीनां गोकुलादीनाञ्च ग्रहणं, नियत-पुरुषोत्तमादय इति—आदिशब्देन नियतलक्ष्मी नियतब्रह्मणोर्ग्रहणम्। संज्ञा-विशेषादावित्यादिशब्दश्चिन्त्यः, संज्ञाविशेष एव नियतपुरुषोत्तमादित्व सम्भवात्, किम्वा संज्ञाविशेषादाविति; रूढिविशेष—योगरूढिविशेष—यौगिक-विशेषादावित्यर्थोऽनुसन्धेयः॥

३०५। संख्यादि। संख्यादिशब्दास्तु समानाधिकरण विशेषणरूपाः सन्तो विशेष्यलिङ्गादीनि भजन्ते, यतो वाच्यलिङ्गानां हि तादृश एव स्वभाव इति। संख्यादीति— आदिशब्देन जातिगुणक्रियादेर्ग्रहणम्॥

३०६। समानाधिकरण-विशेषणरूपा विशेष्यलिङ्ग-विष्णुभक्ति-वचनानि भजन्ते *।

३०७। जाति-गुण-क्रियाद्वारा यस्य विशेषः कथ्यते, तद्विशेष्यं ; येन तस्य विशेषः कथ्यते, तद्विशेषणम्।

यथा—गोपः कृष्णः, गोपी राधा, क्षौमं वसनम्, श्यामः कृष्णः, गौरी राधा, पीतं वसनम्, विहारी कृष्णः, विहारिणी राधा, विहारि गोकुलम् इत्यादि ॥ ३०४-३०७ ॥

३०८। अव्ययविशेषणं ब्रह्म।

यथा—महत् स्वः ॥ ३०८ ॥

३०६। समाना। समानमेकमधिकरणं यस्य तत्समानाधिकरणं' तच्च तत् विशेषणञ्चेति समानाधिकरणविशेषणं, तदेव रूपं स्वरूपं येषां त इति। अथवा समानमेकमधिकरणं येषां ते समानाधिकरणाः; विशेषणमेव रूपं स्वरूपं येषां ते विशेषणरूपाः। समानाधिकरणाश्चामी विशेषणरूपाश्चेति समानाधिकरण-विशेषण-रूपाः। विष्णुभक्तेर्वचनानि विष्णुभक्तिवचनानि, लिङ्गानि च विष्णुभक्तिवचनानि च लिङ्गविष्णुभक्ति-वचनानि, विशेष्यस्य लिङ्ग विष्णुभक्तिवचनानि, विशेष्य-लिङ्ग-विष्णु-भक्ति-वचनानि ; समानाधिकरणविशेषणरूपाः शब्दा विशेष्यस्य लिङ्ग-विष्णुभक्तिवचनानि भजन्त इत्यर्थः ॥

३०७। जाति। विशेष्यलक्षणमाह—जातीति। जातिद्वारा, गुण-द्वारा, क्रियाद्वारा च। विशेषणलक्षणमप्याह येनेति। तस्येति—विशेष्य-स्येत्यर्थः। उदाहरणं दर्शयति यथेति; क्षौममिति—'क्षौमं दुकुलमि'त्यमरः॥

३०८। अव्यय। अव्ययस्य विशेषणं ब्रह्म भवति। स्वरिति—स्वर्शब्दोऽव्ययं स्वर्गवाची, 'स्वरव्ययमि'त्यमरः॥

---

* विशेष्यस्य हि यल्लिङ्गं विभक्तिवचने च ये।
तानि सर्वाणि योज्यानि विशेषणपदेष्वपि॥

३०९। केचिच्छब्दा विशेषणत्वेऽपि स्वलिङ्गं न त्यजन्ति।

यथा—प्रधानं कृष्णः, प्रधानं राधा, गतिः कृष्णः, आश्रयो राधा इत्यादि ॥ ३०९ ॥

३१०। एकस्य विशेषणस्य विशेष्यमनेकञ्चेत्, प्रत्येकं वा समुदायस्य वा संख्यानुरूपं वचनम्।

चार्थस्य समुच्चयेतरेतरयोगभेदेन द्वैविध्यात्; यथा—रामः कृष्णश्च सुन्दरः, रामः कृष्णश्च प्रत्येकमित्यर्थः; सुन्दरौ वा, रामः कृष्ण इति द्वावित्यर्थः। तदिदं रामकृष्णसमासे विवरणीयम् ॥ ३१० ॥

३११। क्वचिद्बहूनां विशेषणत्वेऽप्येकत्वम्। *

यथा—धर्मे वेदाः प्रमाणम् इत्यादि ॥ ३११ ॥

३१२। विंशत्याद्याः सदैकत्वे अनावृत्तौ।

विंशतिर्वैष्णवाः। तासामेवावृत्तौ तु—द्वे विंशती, तिस्रो विंशतयः। एवम् एकविंशतिः इत्यादि; तदन्तत्वादूनविंशतिश्च। तत्र विशेषणशब्देषु कृष्णनामाख्यशब्दा उच्यन्ते ॥ ३१२ ॥

---

३०९। केचित्। केचिदिति—स्वलिङ्गं न त्यजन्तीति तेषां तादृशस्वभावत्वादिति शेषः ॥

३१०। एकस्य। एकस्य विशेषणस्य यदि अनेकं विशेष्यं भवति, तदा प्रत्येकं समुदायस्य वा संख्याया अनुरूपं वचनं भवति, विशेषण इति शेषः। हेतुमाह चार्थस्येति—चार्थस्य च-शब्दार्थस्य; द्वैविध्यात् द्विविधत्वात्। रामः कृष्णश्च सुन्दर इत्यत्र च-शब्दः समुच्चयार्थः। तदिदमिति—तदिदं चार्थविवरणं रामकृष्णसमासे विवरणीयं—विस्तार्य कथनीयम् ॥

३११। क्वचिद्। सुगमम् ॥

३१२। विंश। बहूनां विशेषणत्वेऽप्यनावृत्तौ विंशत्याद्याः सदा

---

* आपः सुमनसो वर्षा अप्सरः-सिकताः समाः।
एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरे त्रयः ॥

# अथ कृष्णनामप्रकरणम्

## ३१३। सर्वादीनि कृष्णनामानि।

'सर्वनामानि' इत्यन्ये। सर्व, विश्व; उभ, उभय; अन्य, अन्यतर; ततर, ततम; यतर, यतम; कतर, कतम; एकतर, एकतम; इतर; त्वत्, त्व; नेम, सम, सिम; पूर्व, पर, अवर; दक्षिण, उत्तर; अपर, अधर; स्व, अन्तर; (त्यद् छान्दसः) तद्, यद्, एतद्, इदम्, अदस्; एक, द्वि; युष्मद्, अस्मद्; भवतु, किम्॥ ३१३॥

**तत्र पुंसि—सर्वः, सर्वौ—**

## ३१४। कृष्णनाम-कृष्णतो जसः शीः।

श् इत्, सर्वे; सर्वम्, सर्वौ, सर्वान्; सर्वेण, सर्वाभ्याम्, सर्वैः॥३१४॥

---

एकत्वे वर्तन्ते। तासामिति—तासां विंशत्याद्यानां संख्यानां, आवृत्तौ पुनर्गणनायाम्। एवमिति—यथा त्रिंशतिर्वैष्णवा इति भवति, तथा एकविंशतिर्वैष्णवा इति भवतीति। तदन्तत्वादिति—तदन्तत्वात् विंशत्यन्तत्वात्, तथाचेयं व्यवस्था स्वीकर्तव्या, अष्टादशपर्यन्ताः संख्याः संख्येये वर्तन्ते, ततः पराः संख्याः संख्यानेचेति समासप्रकरणे वक्ष्यते, अतएव यदैते संख्येयवृत्तयो भवन्ति, तदा वैष्णवादिपदैः सहैषां विशेष्यविशेषणभावः। ततः संख्येयस्य बहुत्वाद्बहुवचने प्राप्ते एकवचन-विधानार्थं सूत्रम्। यदा तु संख्यानवृत्तयोऽमी भवन्ति, तदा समुदायस्यैकत्वेन बहुवचनत्वाभावान्न बहुत्वप्रसङ्गः। अस्मादेव गोपानां विंशतिः, गोपीनां विंशतिरित्याद्युदाहार्यम्। आवृत्तौ यदा पुनरमी विंशत्यादाः संख्यानवृत्तयः स्युः, तदैकत्वे एकवचनं, द्विरावृत्तौ द्विवचनं, बहुधावृत्तौ बहुवचनं, सूत्रेण यर्ह्येते संख्येयवृत्तयस्तदामीषां विशेषणत्वेनावृत्त्यभिधानशक्तिर्नास्त्यनभिधानादतो नहि भवति द्वे विंशती वैष्णवाः, तिस्रो विंशतयो गोप्य इत्येके। अस्माकं मते भवति किं नेति न निश्चिन्म इति। इति विशेषणलिङ्गा॥

३१३। सर्वा। संज्ञासूत्रमेतत्। कृष्णनामानि सर्वनामानि॥

३१४। कृष्ण। पुंस्येवायं विधिरिति ज्ञेयम्। अरामान्तः कृष्णसंज्ञ इति। ननु शीरित्यत्र, शिरिति कृते को दोष इति चेत् तत्रोच्यते—सर्वे इत्यादौ 'सर्वेश्वर-वैष्णवान्तयोर्नुम् शौ' इत्यस्य प्रवृत्तिशङ्का स्यात्॥

**सर्व-ङे--**

३१५। कृष्णनाम-कृष्णतो ङेः स्मै।

सर्वस्मै, सर्वाभ्याम्, सर्वेभ्यः ॥ ३१५ ॥

३१६। कृष्णनाम-कृष्णतो ङसेः स्मात्।

सर्वस्मात्, पञ्चम्यास्तस्प्रत्ययस्तद्धितः—सर्वतः; सर्वाभ्याम्, सर्वेभ्यः; सर्वस्य, सर्वयोः ॥ ३१६ ॥

**सर्व-आम्--**

३१७। कृष्णनाम-कृष्ण-राधाभ्यां सुड़ामि।

उटावितौ। 'कृष्णस्य ए वैष्णवे', षत्वम्—सर्वेषाम् ॥ ३१७ ॥

३१८। कृष्णनाम-कृष्णतो ङेः स्मिन्।

सर्वस्मिन्, सर्वयोः, सर्वेषु। सप्तम्यां त्र-प्रत्ययस्तद्धितः—सर्वत्र; हे सर्व ! ॥ ३१८ ॥

'आदि' ( वि° प्र° ३१३ )-शब्दः प्रसिद्धगणविशेषग्राहकः, ततश्च—

३१९। सर्वादिः कृष्णनामाख्यो गौण-संज्ञे विना भवेत्।

तेन नेह—सर्वमतिक्रान्ताय—अतिसर्वाय; दृष्टः सर्वो येन, तस्मै—दृष्टसर्वाय। सर्वो नाम कश्चित्, तस्मै—सर्वाय ॥ ३१९ ॥

३२०। पूर्वादि च व्यवस्थायां सप्तकं कृष्णनामकम्।

---

३१५। कृष्ण। सुगमम् ॥

११६। कृष्ण। सुगमम् ॥

२१७। कृष्ण। सुगमम् ॥

३१८। कृष्ण। आदिशब्द इति, सर्वादिनीत्यत्रादिशब्दः प्रसिद्धस्य गणविशेषस्यैव ग्राहकः। ततश्च हेतोः सर्वादीनि कृष्णनामानीति सामान्यत उक्त्वा तत्र विशेषमाह॥

३१९। सर्वादिः। गौणसंज्ञे विनेति, यदा गौणः, संज्ञा च न भवतीत्यर्थः ॥

दिग् देश-कालविभागोऽत्र 'व्यवस्था', तस्यां गम्यमानायाम्। पूर्वस्मै दिगन्तराय, देशादये वा। तथा—पूर्वस्मै कालाय, दिनाय, पदार्थविशेषाय वा। अन्यत्र तु पूर्वाय, श्रेष्ठाय इत्यर्थः ; दक्षिणाय, प्रवीणाय इत्यर्थः। 'गौणसंज्ञे विना' (३१९) इत्येव अत्युतराय ; उत्तराः कुरवः ॥ ३२० ॥

३२१। समोऽतुल्ये कृष्णनाम।

समस्मै, सर्व्वस्मै इत्यर्थः। नेह—समाय, तुल्याय इत्यर्थः ॥३२१॥

३२२। स्वमज्ञातिधनाह्वये।

"स्वो ज्ञातावात्मनि, स्वं-त्रिष्वात्मीये, स्वोऽस्त्रियां धने" (अमरकोषः ३।३।६४६)। स्वस्मै—आत्मने, आत्मीयाय वा इत्यर्थः। नेह—स्वाय ज्ञातये, धनाय वा इत्यर्थः ॥ ३२२ ॥

---

३२०। पूर्वादि च। पूर्वादिसप्तकं व्यवस्थायां कृष्णनामकं स्यात्। व्यवस्थालक्षणमाह दिक्कालेति, दिक्कालयोर्विभाग इति– दिग्विभागः, कालविभागश्चेत्यर्थः, 'विभागोऽंशः। पदार्थविशेषाय वेति– पदार्थविशेषस्य कालविभागत्वमुपचारेणेति ज्ञेयम्। गौणसंज्ञे इति–इदं लक्षणं प्रति गौणसंज्ञे विनेत्यनुवर्तत एवेत्यर्थः। अत्युत्तरायेति– उत्तरमतिक्रान्तो इत्युत्तरस्तस्मै। उत्तराः कुरव इति, अत्र दिग्विभागो गम्यो भवत्येव, किन्तु उत्तर-शब्दस्य कुरुरूपदेशविशेषस्य नामत्वात् न कृष्णनामत्वम् ॥

३२१। समो। अतुल्येऽर्थे समशब्दः कृष्णनाम भवति। सर्वार्थस्यैव कृष्णनामतेत्यर्थः ॥

३२२। स्वम। अज्ञातिधनाह्वये स्वं कृष्णनाम भवति, आत्मनि आत्मीये च कृष्णनामता, आह्वयो नाम, ज्ञातिनाम्नि, धननाम्नि च न कृष्णनामतेत्यर्थः। स्वशब्दस्य ज्ञात्यादिवाचित्वं स्पष्टयितुं नानार्थवर्गमाह स्वो ज्ञाताविति ॥

**३२३। अन्तरो बाह्यपरिधानीययोर्नत्वसौ पुरि।***

अन्तरस्मै—बाह्याय इत्यर्थः, वस्त्रान्तरावृत-परिधानीयाय इति वा। बाह्यत्वेऽपि पुरि वर्तमानस्तु न—अन्तराय पुराय, बाह्याय इत्यर्थः॥ ३२३॥

**३२४। पूर्वादीनि नव कृष्णनामानि जसि वा।**

पूर्वे पूर्वाः, स्वे स्वाः, अन्तरे अन्तराः। 'सर्व'वद् 'विश्व'-आदयोऽपि अरामान्ताः। तत्र 'उभ'शब्दो नित्यं द्विवचनान्तः—उभौ, उभौ, उभाभ्याम्, उभाभ्याम्, उभाभ्याम्, उभयोः, उभयोः। उभस्य सर्वादिषु पाठो हेत्वर्थे कृष्णनाम्नो योगे सर्वविष्णु-भक्त्यर्थस्तस्य वृत्तिमात्रे पुंवद्भावार्थश्च। त्वत्-त्वौ अन्यपर्यायौ; नेमोऽर्धपर्यायः; समादय उक्तार्थाः; सिमश्च सर्वार्थः, 'शक्तावबद्ध-मर्यादानां वाची' इति तु मतभेदाः; अन्ये तु प्रसिद्धाः॥ ३२४॥

---

३२३। अन्तरो। बाह्यपरिधानीययोर्वर्तमानोऽन्तरः कृष्णनाम भवति, असौ अन्तरः बाह्यत्वेपि पुरि वर्तमानस्तु कृष्णनाम न भवति। परिधानीयशब्देनात्र अन्यवस्त्रावृतपरिधानीयमेवोच्यते, अतएवोक्तं—वस्त्रान्तरावृतेति, अन्तर शब्दोऽन्यार्थः। बाह्यपरिधानीययोरिति किं? ग्रामयोरन्तरे तापसः, मध्ये इत्यर्थः॥

३२४। पूर्वादीनि। सर्ववदिति—सर्व शब्दवदित्यर्थः। ननु उभ-शब्दो नित्यं द्विवचनान्त एव, अरामान्तशब्दानां कृष्णनामकार्याणि तु एक-वचन-बहुवचन विषयाणि, तत्कथमयं सर्वादिगणे पठ्यत इति चेत्तत्राह; उभस्येति—अनुकरणत्वादेकवचनं, ऊभशब्दस्येत्यर्थः। कृष्णनाम्नो योग हेत्वर्थे सर्वविष्णुभक्त्यर्थः इति, 'कृष्णनामयोग निमित्तकारणहेत्वर्थाद्द्वितीया-

---

* ३१९-३२३ संख्यक-सूत्राणां युगपत्पाठे श्लोकद्वयं भवति; ततश्च—

"सर्वादिः सर्वनामाख्यो न चेद्गौणोऽथवाभिधा।
पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि।
परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि॥"

३२५। पूर्वादिभ्यो नवभ्यः स्मात्-स्मिनौ वा।

पूर्वस्मात्, पूर्वात्; पूर्वस्मिन्, पूर्वे ॥ ३२५ ॥

३२६। न कृष्णनाम तृतीया-समासे तद्वाक्ये च।

मासेन पूर्वाय इति वाक्ये–मासपूर्वाय। केवलवाक्ये तु— मासेन पूर्वस्मै धनं देहि ॥ ३२६ ॥

३२७। न कृष्णनाम द्वन्द्वे, जसि तु वा।

पूर्वापराणाम्, वैष्णवेतरे, वैष्णवेतराः ॥ ३२७ ॥

---

वर्जं सर्वा विष्णुभक्तयः' इत्यनेनेति शेषः। तस्य उभ-शब्दस्य वृत्तिमात्रे पुम्वद्भावार्थश्चेति 'कृष्ण नाम वृत्तिमात्रे' इत्यनेनेति शेषः; वृत्तिमात्रमेकपदत्वम्। अव्ययकृष्णनाम्नोस्तु संसारात् प्रागक् इत्यनेन अक्प्रत्ययार्थः, सप्तमीतस्त्र इत्यनेन त्रप्रत्ययार्थश्चेति च ज्ञेयम्। अन्यपर्यायाविति–अन्यार्थावित्यर्थः, अर्धपर्यायोऽर्धार्थः। समादय इति–समस्वान्तरा उक्तार्थाः कथितार्थाः। शक्तेति– सिमशब्दः पुनः शक्तादीनां वाचीति तु मतभेदः इति च पाठान्तरं दृश्यते; शक्तस्य वाचीति मतभेदः; अवबद्धस्य वाचीति मतभेदः, मर्यादाया वाचीति मतभेदः, एवं क्रमेण मतभेदा इत्यार्थः। अन्येत्विति–अन्ये तु शब्दाः प्रसिद्धा इत्यर्थः ॥

३२५। पूर्वा। सुगमम् ॥

३२६। न कृष्णनाम। तृतीयासमासे–तृतीयासमासवाक्ये च सर्वादिकृष्णनाम न भवति; मासेनपूर्वायेति वाक्ये 'तृतीयार्थकृत गुणवचनेनार्थादिभिश्चे'त्यनेन तृतीयासमासः। तृतीयेति–पदोपादानेन यः समासः स तृतीयासमासः; अतः 'कर्तृकरणे कृते'त्यनेन समासे तु कृष्णनामकार्यं भवत्येव। त्वयकाकृतं–त्वकत्कृतं, मयकाकृतं–मकत्कृतमिति। मासेन पूर्वस्मै धनं देहीति, नेदं समासवाक्यम् ॥

३२७। न कृष्ण। द्वन्दसमासे सर्वादि कृष्णनाम न भवति, जसि तु वा भवति। पूर्वापराणामिति–पूर्वे च अपरे च पूर्वापरास्तेषाम्। वैष्णवेतरे इति– वैष्णवाश्च इतरे चेति विग्रहः ॥

३२८। प्रथम-चरम-तयायाल्पार्ध-कतिपय-नेमाः कृष्णनामानि जसि वा।

प्रथमे, प्रथमाः। 'तयायौ' प्रत्ययौ—द्वितये, द्वितयाः; द्वये, द्वयाः; शेषं 'कृष्ण'वत्। उभयस्य द्विवचनाभावः—उभये, उभयाः। 'इहापि जसः कार्यं प्रति विभाषा' इति काशिका (१।१।३३)। 'उभय इति नित्यं भाषायाम्' इति तु कालापाः (चतुष्टयवृत्तिः—३१)। नेमे, नेमाः; शेषं 'सर्व'वत्॥ ३२८॥

३२९। तीयस्य कृष्णनामता वृष्णिषु वा।

द्वितीयस्मै, द्वितीयाय; द्वितीयस्मात्, द्वितीयात्; द्वितीयस्मिन् द्वितीये; शेषं 'कृष्ण'वत्। एवं 'तृतीयः'। 'अर्थवद्ग्रहणात्' तु—गोपजातीयाय॥ ३२९॥

**अथ तदादयः—**

३३०। तदादिसप्तानां * संसारस्यारामः स्वादौ, दस्य च मः, तदादेस्तः सः सौ।

३२८। प्रथम। प्रथमचरमादयः जसि कृष्णनामानि वा भवन्ति, नेमव्यतिरिक्ताः सर्वे जसि कृष्णनामानि वा भवन्ति, अन्यत्रैषां न कृष्णनामत्वं न सर्वादिष्वपाठात्, नेमशब्दस्तु जसि वा अन्यत्र नित्यं कृष्णनाम भवति, सर्वादिषु पाठादित्यर्थः। द्वितये इति, 'अवयववृत्तेः संख्यायाः केशवस्तयः', इत्यनेन तय-प्रत्ययः द्वये इति द्वित्रिभ्यामयश्चेत्येनेन अय-प्रत्ययः। शेषमिति— शेषं रूपमित्यर्थः। उभये इति—उभादय इत्यनेन अय-प्रत्ययः; इहापीति उभयशब्देऽपीत्यर्थः। अत्र काशिकामतमेवास्माकमपि मतम्। उभया इति छान्दसमिति कालापानां मतम्॥

३२९। तीयस्य। तीय-प्रत्ययान्तस्य वृष्णिषु कृष्णनामता वा भवति, नान्यत्र कृष्णनामत्वं द्वितीयस्मै इति, पूरणार्थे तीयप्रत्ययः। गोप-

* इदमस्तु सन्निकृष्टं, समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयात्॥

सः, तौ, ते ; तम्, तौ, तान् ; तेन, ताभ्याम्, तैः ; तस्मै, ताभ्याम्, तेभ्यः ; तस्मात् इत्यादि। बुद्धस्यादर्शनम्—हे स ! 'तदोः सः सावनन्त्ययोः' इति सूत्रे ( पा ७।२।१०६ ) काशिकादावप्येतद्दर्शितम्। 'हे स, हे असौ' इति भाष्योदाहरणात् प्रक्रिया तु चिन्त्या। गौण-संज्ञयोस्तु न तदादिकार्यम्, सर्वादिगणत्यागात्—अतितद्, अतितदौ, अतितदः। तद्धिते पञ्चम्याम्—ततः ; सप्तम्याम्—तत्र। यद्—यः, यौ, ये ; तद्धिते पञ्चम्याम्—यतः ; सप्तम्याम्—यत्र। एतद्—एषः, एतौ, एते ; एतम् ; तद्धिते पञ्चम्याम्—अतः ; सप्तम्याम्—अत्र ॥ ३३० ॥

## ३३१। इदमोऽयं सौ, इयन्तु लक्ष्म्यां, साकस्य त्वयकमियकमौ।

अयम्, इमौ, इमे ; इमम्, इमौ, इमान् ॥ ३३१ ॥

## ३३२। इदमोऽकरामस्य अनष्टौसोः।

---

जातीयायेति—'प्रकारवति जातीयः' इत्यनेन जातीयप्रत्ययः। जातीयावयवतीयस्यार्थे नास्ति ॥

३३०। तदादि। स्वादौ परे तदादिसप्तानां संसारस्य स्थाने अरामो दस्य स्थाने मरामश्च भवति। तदा— सौ परे तदादेस्तरामः सरामो भवति। तदादेरिति, एतत् हे स, इति पदम्। एतद्दर्शने हेतुमाह—हे स, हे असाविति भाष्योदाहरणादिति। प्रक्रियातु चिन्त्येति हे स इति न भवतीति प्रक्रियामतम्। अतितदिति—अतिक्रान्तस्तमिति विग्रहः। तद्धिते पञ्चम्यां ततः इति—तदस्ततस्तत्र, यदोयतो यत्र, एतदोऽतोऽत्र इदम इत इह ; अदसोऽमुतोऽमुत्र, किमः कुतः कुत्रेति। तस्त्राभ्यां त्रिष्वपि लिङ्गेषु साधवः, 'कुत्रस्य क्वेति च' इति तद्धिते वक्ष्यते ॥

३३१। इद। सौ परे इदमः स्थाने अयमिति निपात्यते। इयन्तु—सौ परे लक्ष्म्यान्तु इयमिति निपात्यते। साकस्य—साकस्यतु इदमः स्थाने सौ परे अयकमियकमौ निपात्येते पुरुषोत्तमलक्ष्म्योरिति शेषः ॥

३३३। वैष्णवे त्वश्।

३३४। सकरामस्य च कथितानुकथने।

अनेन ; 'शित् सर्वस्य' इति सर्वादिशः—आभ्याम् ; इमकाभ्यामहः कृष्णोऽर्चितः, अथ आभ्यां रात्रिमपि ॥ ३३२-३३४ ॥

३३५। इदमदोभ्यामकरामाभ्यां नैस्।

एभिः ; अस्मै, आभ्याम्, एभ्यः ; अस्मात्, आभ्याम्, एभ्यः ; तद्धिते पञ्चम्याम्—इतः ; अस्य, अनयोः, एषाम् ; अस्मिन्, अनयोः, एषु। तद्धिते सप्तम्याम्—इह। संसारात् पूर्वमक्प्रत्यये 'इदकम्'-शब्दो भवति ; अयकम्, इमकौ, इमके—'सर्व'वत् ॥ ३३५ ॥

३३६। एतदिदमोरेनः कथितानुकथने द्वितीयाटौस्सु।

एतम् इमं वा दीक्षय, अथो एनं पाचय। एनम्, एनौ, एनान् ; एनेन ; एनयोः ; एनयोः ॥ ३३६ ॥

---

३३२। इद। न विद्यते करामो यत्र तादृशस्य इदमः स्थाने टौसोः परयोरनो भवति ॥

३३३। वैष्णव। अकरामस्य इदमः स्थाने वैष्णवे तु परे अश् भवति ॥

३३४। सक। अनुशब्दः पश्चादर्थे, कथितस्यानुकथनं कथितानुकथनं तस्मिन् सति सकरामस्य च इदमः स्थाने अश् भवति। अहरिति द्वितीयैकवचनान्तं, 'कालाध्वनोरत्यन्तव्याप्तौ द्वितीया' इत्यनेन द्वितीया। अथ आभ्यामिति, अत्र सकरामस्याश् ॥

३३५। इदम। अ-करामाभ्याम् इदम् अदस् इत्येताभ्यां परस्य भिसः स्थाने ऐस् न भवति। 'कृष्णाद्भिस् ऐसि'त्यनेन प्राप्ते निषेधः। एभिरिति—इदमः स्थाने अशि कृते, 'कृष्णस्य ए वैष्णवे बहुत्वे' इत्यनेन अरामस्य एरामः। अ-करामाभ्यामिति किम् ?—इमकैः, अमुकैः ॥

३३६। एतद्। एनेनेति, एतेन अनेन वा रात्रिरधीता, अथो एनेनाहरप्यधीतम्। एनयोरिति—एतयोरनयोर्वा शोभनं शीलम्, अथ एनयोर्भक्तिश्च निर्मला इति ॥

**अदस्-सुँ, 'संसारस्यारामः' ( वि° प्र° ३३० ),—**

## ३३७। अदसो दस्य सः, सोरौच्।

असौ ॥ ३३७ ॥

**'अमौ' इति स्थिते—**

## ३३८। अदो मात् परस्य सर्वेश्वरस्य उ ऊ यथेष्टसिद्धिः।

वामनस्य वामनः, त्रिविक्रमस्य त्रिविक्रमः ; अमू ॥ ३३८ ॥

**जसि अमे स्थिते—**

## ३३९। अदस एत ई बहुत्वे, न तु कात्।

अमी ; अमुम्, अमू, अमून् ; मत्वे चोत्वे च कृते 'हरितष्टा ना' ( वि° प्र° १८२ ) – अमुना। भ्यामि 'कृष्णस्य त्रिविक्रमः' ( वि° प्र° १६० ), पश्चात् ऊ—अमूभ्याम्, अमीभिः ; स्मै-प्रभृतौ कृते

---

३३७। अदसो। सौ परे अदसो दस्य स्थाने सो भवति, सोः स्थाने औच्च भवति। असाविति—औचि कृते संसारहरः ॥

३३८। अदो। अदसोमात् परस्य सर्वेश्वरस्य स्थाने यथेष्टसिद्धि उ ऊ भवति। यथेष्टसिद्धीति—इष्टसिद्धिमनतिक्रम्येत्यर्थे 'अव्ययं सप्त-म्याद्यर्थेषु नित्यमित्य'नेनाव्ययीभावः, 'तस्याव्ययत्वं ब्रह्मत्वंच' इति ब्रह्मत्वंच। येन प्रकारेण इष्टसिद्धिर्भवति, तथैव उ ऊ भवतीत्यर्थः ॥

३३९। अदस। बहुत्वे विषये अदस एतः स्थाने ई र्भवति, कादुत्त-रस्य एतः स्थाने ई र्न भवति। ननु हे गोकुलेत्यत्र यथा बुद्धस्थानीयत्वा-दमोऽदर्शनं कृतं, तथा हे असावित्यत्रापि औचोऽदर्शनं कस्मान्नस्यादिति चेत्तत्राह, चित्करणेनेति-चित्करणेन संसारहरो भवतीति, वामनाभावात् न बुद्धादर्शनमिति। अदस इति—अदस औ सुलोपश्चेत्यत्र लक्षणे काशिका-दावपि अस्य हे असावित्यस्य बुद्धादर्शनाभावस्य वा सम्मतिवर्तत इति शेषः, प्रसादे चास्य सम्मतिः, प्रसादो व्याकरणटीकाविशेषः। मन्यन्त इति पूर्वाचार्या इति शेषः। मराममध्या इति प्रयोगा इति शेषः। अमुके इति, नतु कादिति न ईः ॥

पश्चादुरामः—अमुष्मै, अमूभ्याम्, अमीभ्यः ; अमुष्मात्, अमूभ्याम्, अमीभ्यः। तद्धिते पञ्चम्याम्—अमुतः ; अमुष्य ; एत्वे अयादेशे च कृते पश्चादुरामः—अमुयोः, अमीषाम् ; अमुष्मिन्, अमुयोः, अमीषु। तद्धिते—अमुत्र। चित्-करणेन 'हे असौ' इति बुद्धस्यादर्शनं न स्यात्। 'अदस औ सुलोपश्च' इत्यत्र ( पा ७।२।१०७ ) काशिकादावप्यस्य सम्मतिः, प्रसादे च। अक्प्रत्यये 'असकौ, अमुकश्च' इति मन्यन्ते। औ-प्रभृतौ मराम-मध्याः—अमुकौ, अमुके। एकः 'सर्व'वत् ॥ ३३९ ॥

**अथ द्विशब्दो नित्यं द्विवचनान्तः ;—**

३४०। न द्वेर्मः।

द्वौ, द्वौ, द्वाभ्याम्, द्वाभ्याम्, द्वाभ्याम्, द्वयोः, द्वयोः ॥ ३४० ॥

**युष्मदस्मदौ त्रिष्वपि समानौ ;—**

३४१। युष्मदस्मदोस्त्वमहमादयः स्वादिना सह।

तत्र युष्मच्छब्दस्य—त्वम्, युवाम्, यूयम् ; त्वाम्, युवाम्, युष्मान् ; त्वया, युवाभ्याम्, युष्माभिः ; तुभ्यम्, युवाभ्याम्, युष्मभ्यम् ; त्वत् युवाभ्याम्, युष्मत् ; तव, युवयोः, युष्माकम् ; त्वयि, युवयोः, युष्मासु। अस्मच्छब्दस्य—अहम्, आवाम्, वयम् ; माम्, आवाम्, अस्मान् ; मया, आवाभ्याम्, अस्माभिः ; मह्यम्, आवाभ्याम्, अस्मभ्यम् ; मत्, आवाभ्याम्, अस्मत् ; मम, आवयोः, अस्माकम् ; मयि, आवयोः, अस्मासु ॥ ३४१ ॥

३४२। अनयोर्विष्णुपदत्वे सत्येव संसारात् पूर्वमक्-प्रत्ययः।

त्वकम्, युवकाम्, यूयकम् ; किन्तु त्रिसर्वेश्वरत्वे मध्यसर्वेश्वरात्

---

३४०। न द्वेर्मः। द्विशब्दस्य दरामस्य स्थाने मो न भवति ॥

३४१। युष्मद्। स्वादिना सह युष्मदस्मदोः स्थाने त्वमहमादयो निपात्यन्ते ॥

पूर्वमक्—युवकाभ्याम्, युष्मकाभिः ; युष्मकभ्यम् ; युष्मकाकम् ; युष्मकासु। एवमस्मदोऽपि—अहकम्, आवकाम्, वयकम् ; मकाम्, अस्मकान् ; मयका, आवकाभ्याम्, अस्मकाभिः ; मह्यकम्, अस्मकभ्यम्; अस्मकत् ; ममक, आवकयोः, अस्मकाकम् ; मयकि, अस्मकासु। गौणत्वे 'त्वामतिक्रान्तः' इत्यर्थे—अतित्वत् ; 'युवामतिक्रान्तः' इत्यर्थे—अतियुवत् ; 'युष्मानतिक्रान्तः' इत्यर्थे—अतियुष्मत् ; एवम् 'मामतिक्रान्तः' इत्यर्थे—अतिमत् ; 'आवामतिक्रान्तः' इत्यर्थे—अत्यावत् ; 'अस्मानतिक्रान्तः' इत्यर्थे—अत्यस्मत्। एवं प्रत्वदादयोऽपि ॥ ३४२ ॥

३४३। तेषामतित्वदादीनां सर्वेषान्त्वमहमादय एव सु-जस्-ङे-ङस्सु।

यथा—अतित्वम् अतियूयम् ; अतितुभ्यम् ; अतितव। एवम् अत्यहम् इत्यादि ॥ ३४३ ॥

---

३४२। अनयो। अनयोरिति युष्मदस्मदोः। किन्त्विति—त्रिसर्वेश्वरत्वे इति—विष्णुपदस्येति शेषः। गौणत्व इति, अतित्वदिति—अतित्वच्छब्दो भवतीति मन्तव्यमित्यर्थः। एवमतियुवदित्यादि। अतित्वदित्यस्य आदेशावस्थायां दान्तत्वं ज्ञेयम्। अतित्वद् औ इति स्थिते, अद औभागस्येत्यस्य वक्ष्यमाणत्वात्। एवमतियुवदित्यादेः तान्तता तु पदत्वेन। एवमतिमदिति—मामतिक्रान्त इत्यर्थे ; अत्यावदिति—आवामतिक्रान्त इत्यर्थे ; अत्यस्मदिति—अस्मानतिक्रान्त इत्यर्थे। एवमिति—प्रकृष्टः त्वं यत्रेत्यर्थे प्रत्वदिति ॥

३४३। तेषाम्। तेषां सर्वेषां अतित्वदित्यादीनां प्रत्वदादीनाञ्च त्वदादीनां स्थाने सु-जस्-ङे-ङस्सु त्वमहमादय एव निपात्यन्ते। उदाहरणं दर्शयति यथेति। अतित्वमिति, अतित्वच्छब्दस्य अतियुवच्छब्दस्य अतियुष्मच्छब्दस्य च रूपम्, एवमतियूयमित्यादि ॥

३४४। अन्यत्र ब-म-पर्यन्तवर्जमक्षराणि प्रकृतपदवत् कार्याणि।

यथा—अतित्वद्-औ इति स्थिते अद औभागस्य 'युवाम्' इत्यन्तस्थित आम्भाग आदिश्यते—अतित्वाम्। एवम् अम्—अतित्वाम्; पुनरौ—अतित्वाम्; शस्—अतित्वान्; टा—अतित्वया, अतित्वाभ्याम, अतित्वाभिः; अतित्वाभ्याम्, अतित्वभ्यम्; अतित्वत्, अतित्वाभ्याम्, अतित्वत्; अतित्वयोः, अतित्वाकम्; अतित्वयि, अतित्वयोः, अतित्वासु। यथा च अतियुवच्छब्दात्—अतियुवाम्; अतियुवाम्, अतियुवाम्, अतियुवान्; अतियुवया। यथा च अतियुष्मच्छब्दात्—अतियुष्माम्; अतियुष्माम्, अतियुष्माम्, अतियुष्मान्; अतियुष्मया। आमि च—'अतित्वाकम्' इत्यादि; 'अतित्वयाकम्' इत्यादि केषाञ्चित्। एवम् 'अस्मदो'ऽपि ॥ ३४४ ॥

३४५। विष्णुपदाद्वा, अन्वादेशे तु नित्यम्।

अधिकारोऽयम्; 'उत्तरप्रकरणव्याप्यधिकारः'। 'वां-नौ'-पर्यन्ता

---

३४४। अन्यत्र। सु-जस्-ङे-ङस्भ्योऽन्यत्र वमपर्यन्तवर्जं अवशिष्टानि अक्षराणि प्रकृतपदवत् पूर्वोक्तपदवत् कार्याणि कर्तव्यानि। अतित्वच्छब्दस्य उदाहरणं दर्शयति यथेति। एवं अम् अतित्वामिति, अतित्वद् अम् इति स्थिते, 'अद् अम्' भागस्य त्वामित्यन्तस्थित आम्भाग आदिश्यते, एवमन्यत्रापि बोद्धव्यम्, अतियुवच्छब्दस्योदाहरणं दर्शयति यथाचेति, अतियुवामिति, अतियुवद् औ इति स्थिते, अद् औभागस्य युवामित्यन्तस्थित आम्भाग आदिश्यते, एवमन्यत्रापि बोद्धव्यम्। अतियुष्मच्छब्दस्योदाहरणं दर्शयति यथाचेति। अतियुष्मामिति, अतियुष्मद् औ इतिस्थिते, अद्औभागस्य युवामित्यन्तस्थित आम्भाग आदिश्यते, एवमन्यत्रापि बोद्धव्यम्। अतित्वाकमिति, अतित्वद् आम् इति स्थिते, 'अद् आम्' भागस्य युष्माकमित्यन्तस्थित आकम्भाग आदिश्यते। आदिशब्देन अतियुवाकं अतियुष्माकमिति। अतित्वयाकमित्यादीति। आदिशब्देन अतियुवयाकं अतियुष्मयाकमिति ॥

ये विरिञ्चियो वक्ष्यन्ते, ते सर्वे विष्णुपदाद्वक्तव्याः ; ते च अनन्वादेशे वा, अन्वादेशे तु नित्यमित्यर्थः। पुनःकथनम्—अन्वादेशः ॥३४५॥

३४६। युष्मान् युष्मभ्यं युष्माकमित्येषां वस्, अस्मान् अस्मभ्यम् अस्माकमित्येषां नस्।

हरिर्युष्मान् अवतु, हरिर्वोऽवतु ; हरिर्युष्मभ्यं रोचताम्, हरिर्वो रोचताम् ; हरिर्युष्माकं सर्वस्वम्, हरिर्वः सर्वस्वम् ; हरिरस्मान् अवतु, हरिर्नः ; हरिरस्मभ्यं रोचताम्, हरिर्नः ; हरिरस्माकं सर्वस्वम्, हरिर्नः। अन्वादेशे तु नित्यम्—हरिरस्मान् अवतु, अथो नस्तद्भक्ताः कृपयन्तु इत्यादि सर्वत्र योज्यम् ॥ ३४६ ॥

३४७। तुभ्यम्-तवयोस्ते, मह्यम्-ममयोर्मे।

हरिस्तुभ्यं रोचताम्, हरिस्ते ; एवं हरिस्तव, हरिस्ते ; हरिस्तुभ्यं रोचताम्, अथो हरिस्ते प्रेम ददातु ; हरिर्मह्यं, हरिर्मे ; हरिर्मम, हरिर्मे ॥ ३४७ ॥

३४८। त्वां मां त्वा मा।

हरिस्त्वां पातु, हरिस्त्वा पातु ; हरिर्मां पातु, हरिर्मा। अथो हरिस्त्वा पश्यतु, हरिर्मा रक्षतु ॥ ३४८ ॥

---

३४५। विष्णु। अधिकारलक्षणमाह, उत्तरेति ॥

३४६। युष्मान्। विष्णुपदं प्राप्य युष्मान् युष्मभ्यं युष्माकमित्येषां स्थाने अनन्वादेशे वस् वा भवति, अन्वादेशे तु नित्यं भवति। एवं सर्वत्र बोद्धव्यम्। अस्मान् अवतु रक्षतु। तद्भक्ता हरिभक्ताः ॥

३४७। तुभ्यम्। तुभ्यं तवयोरिति, अनुकरणत्वात् एवं मह्य ममयोरिति ॥

३४८। त्वाम्। त्वामिति मामितिच सूत्रबलेन लुप्तषष्ठी। पातु रक्षतु ॥

३४९। युष्मदस्मद्विष्णु-पदयोर्वां-नौ द्वितीया-चतुर्थी-षष्ठीद्वित्वे, न तु समासे।

हरिर्युवां पातु, हरिर्वाम्; हरिर्युवां रक्षतु, अथ हरिर्वां पश्यतु; हरिर्युवाभ्यां रोचताम्, हरिर्वाम्; हरिर्युवयोः स्वामी, हरिर्वाम्; हरिरावां पातु, हरिर्नौ; हरिरावाभ्यां रोचताम्, हरिर्नौ; हरिरावयोः स्वामी, हरिर्नौ। समस्तत्वे तु न—हरिरस्मत्स्वामी ॥ ३४९ ॥

३५०। सपूर्वपदात् प्रथमान्ताद्वाऽन्वादेशेऽपि ते विरिंचयः।

ब्रजे कृष्णो मम स्वम्, मे वा। अथो वृन्दाबने कृष्णो मम स्वम्, मे वा ॥ ३५० ॥

३५१। न ते वाक्यादौ श्लोकपादादौ च।

हे वैष्णव ! त्वं सुखी भव। त्वां हरिः पातु। मां हरिः पातु। 'कृष्णैकशरणस्यास्य, तव हन्त कुतो भयम्' इत्यादि ॥ ३५१ ॥

---

३४९। युष्मद्। द्वितीयाद्वित्वे, चतुर्थीद्वित्वे, षष्ठीद्वित्वेच युष्मदस्मच्छब्दसिद्धयोर्विष्णुपदादुत्तरयोर्विष्णुपदयोः स्थाने अनन्वादेशे वां नौ इत्येतौ वा भवतः, अन्वादेशे तु नित्यं भवतः, समासे तु न भवतः। हरिरावामिति, पात्विति शेषः। हरिरावाभ्यामिति, रोचतामिति शेषः। हरिरावयोरिति, स्वामीति शेषः। अस्मत्स्वामीति, आवयोः स्वामीति विग्रहः ॥

३५०। सपूर्व। सहशब्दो विद्यमानवचनः, पीताम्बरे वेत्यनेन सभावः, विद्यमानपूर्वपदात् प्रथमान्तादुत्तरेषां पूर्वोक्तानामादेशिनां स्थाने अन्वादेशेऽपि ते विरिंचयो वा भवन्ति ॥

३५१। न ते। क्रियान्वयावच्छिन्नपदसमूहो वाक्यं, तस्य आदौ श्लोकपादादौ श्लोकचतुर्थांशस्यादौच वर्तमानानामादेशिनां स्थाने ते विरिंचयो न भवन्ति। 'पादा रश्म्यंघ्रितुर्यांशाः' इति नानार्थवर्गात् पादशब्देन चतुर्थो भाग उच्यते, स तु गद्यस्यापि सम्भवतीति श्लोकशब्दोपादानं

३५२। न च चादिभिर्योगे।

'कृष्णो मम च सौख्याय, रामस्तव च शर्मणे'। च, वा, हा, अह, एव ॥ ३५२ ॥

३५३। परम्परायोगे तु न निषेधः।

हरिश्च मे स्वामी ॥ ३५३ ॥

३५४। न च दर्शनार्थैरचाक्षुषत्वे।

चेतसा त्वामीक्षते वैष्णवः ॥ ३५४ ॥

३५५। परम्परायोगेऽपि न।

कृष्णश्चेतसा तव रूपमीक्षते। 'भक्तस्तव रूपं ध्यायति' इति तु तस्यां विचार्यं, दर्शनार्थधातुयोगाभावात्। चाक्षुषत्वे तु—कृष्णस्त्वा पश्यति ॥ ३५५ ॥

---

कृतम्। कृष्णैकेति– कृष्ण एको मुख्यः केवलो वा शरणं रक्षिता यस्य, एवंभूतस्यास्य तव कुतः कस्माद्भयमिति। 'एके मुख्यान्यकेवला' इति नानार्थवर्गः ॥

३५२। न च। चादिभिर्योगे ते विरिंचयो न भवन्ति। मम चेति–अत्र च-शब्देन सह साक्षात् सम्बन्धः, सौख्याय सुखाय भवत्विति शेषः। शर्मणे– सुखाय ॥

३५३। परम्परा। चादिभिः सह परम्परायोगे साक्षात् सम्बन्धाभावे तु निषेधो न भवति ॥

३५४। न च। दर्शनार्थैर्योगे ते विरिंचयो न भवन्ति; अचाक्षुषत्व इति– चाक्षुषत्वेतु निषेधो न भवतीत्यर्थः। त्वामीक्षत इति–त्वामनुभवतीत्यर्थः ॥

३५५। पर। परम्परायोगेऽपि विरिंचयो न भवन्ति। कृष्णश्चेतसा तव रूपमीक्षते इत्यत्र दर्शनार्थेन न युष्मदो योगः, किंतु तत्सम्बन्धिनो रूपस्य; भक्तस्तव रूपं ध्यायतीत्यत्र विरिंचिनिषेधो न भवतीति विचार्यम्। पश्यतीति–निरूपयतीत्यर्थः ॥

३५६। आमन्त्रितं पूर्वमसद्वत्।

'ततो नादेशाः' इति काशिकादौ ( पा ८।१।७२ ) च मतम्। हे कृष्ण ! तवाहम्। हे रामकृष्णौ ! युवयोरहम्। कथम् "उचितं रचयामि देवि ते" इति, आमन्त्रितस्य असद्वत्तेऽपि तत्पूर्वपदस्य सत्त्वात्॥ ३५६॥

३५७। सामान्यवचन-तुल्याधिकरणे आमन्त्रिते क्रमस्थे चेत् पूर्वं सत्।

३५८। बहुवचने चेद्वा।

तत्र आदेशाः। हे वैष्णव ! सप्रेमंस्ते कृष्णः। वैष्णवोऽत्र सप्रेमा तद्रहितश्च भवतीति सामान्यवचनः। तौ द्वौ तु तद्विशेष्यौ। तत्रान्वादेशे नित्यमादेशाः, अनन्वादेशे तु वा। 'सामान्यवचन'-इति किम्? ब्रह्मरात कृष्णज्ञ ! तव कृष्णः। ब्रह्मरात इत्येकस्य नाम, ततो न सामान्यवचनः; तत उभयमप्यामंत्रितमसद्वत् (३५६ संख्यकसूत्रेण)। एवं हरे कृपालोऽस्मान् पाहि। बहुवचने—वैष्णवाः श्रीभागवतज्ञाः ! वः कृष्णः, युष्माकं वा। 'अनन्वादेशेऽप्यादेशा वा'—एतत् पाणिनीय-मतं प्रक्रिया-धृतम्; मतान्तरन्तु न किंचित्। तथाहि तत्सूत्रत्रयम्—
(१) "आमन्त्रितं पूर्वमविद्यमानवत्" ( पा ८।१।७२ );
(२) "नामन्त्रिते समानाधिकरणे सामान्यवचनम्" (पा ८।१।७३);

---

३५६। आम। पूर्वं पूर्वस्थितमामन्त्रितं पदं असद्वत् अविद्यमान-वद्भवति, तत आदेशा न भवन्तीति। पदस्यामन्त्रितत्वमुपचारेणेति ज्ञेयम्। कथमिति सिद्धान्तमाह, आमन्त्रितस्येति—आमन्त्रितस्य देवीत्यस्य असत्त्वेपि अविद्यमानवत्त्वेऽपि तत्पूर्वपदस्य सत्त्वात् विद्यमानत्त्वादिति॥

३५७। सामान्य। सामान्यवचनञ्च तुल्याधिकरणञ्च इति सामान्य-वचनतुल्याधिकरणे ते आमन्त्रिते चेत् यदि क्रमस्थे भवतः, तदा पूर्वं सामान्यवचनं आमन्त्रितं सद्भवति॥

(३) "विभाषितं विशेषवचने बहुवचनम्" (पा ८।१।७४) इति। 'आमन्त्रिते' इत्यादिषु परसप्तम्येव। मध्यमे सूत्रे सामान्यवचनस्याविद्यमानताखण्डनात्तन्मूला एवादेशाः। अन्तिमे तु तद्विकल्पात्तद्विकल्पः। 'भवतु'शब्दो युष्मद्वाचको 'भगवतु'शब्दवत् ॥ ३५८ ॥

**अथ 'किम्'-शब्दः—**

३५९। किमः को विष्णुभक्तौ साकस्यापि।

कः, कौ, के। कम्, कौ, कान्—'सर्व'वत्। तद्धिते पञ्चम्याम्—कुतः ; सप्तम्याम्—क्व, कुत्र ॥ ३५९ ॥

**अथ कृष्णनाम्नां लक्ष्मीलिङ्गोदाहरणम्**

'कृष्णादाप् लक्ष्म्याम्' ( त° प्र° २२४८-४९ ) इति वक्ष्यमाणसूत्रात् 'सर्व'शब्दादाप्—सर्वा, सर्वे इत्यादि 'राधा'वत्। वृष्णिष्वामि च विशेषः।

---

३५८। बहु। यदि बहुवचने आमन्त्रिते क्रमस्थे भवतः, तदा पूर्वं सामान्यवचनमामन्त्रितं सद्वा भवति, तत आदेशा भवन्तीति। वैष्णवेति, सप्रेमन्निति वैष्णवस्य तुल्याधिकरणम् ; तद्रहितः प्रेमरहितः। ताविति—तौ द्वौ तु सप्रेमाऽप्रेमाणौ, तद्विशेषौ—वैष्णवविशेषौ। उभयमप्यामन्त्रितमसद्वदिति, आमन्त्रितं पूर्वमसद्वदित्यनेनेति शेषः। हरे कृपालोऽस्मान् पाहीति, अत्र हरिशब्दस्यैकाभिधायित्वात् न सामान्यवचनत्वम्। तत् सूत्रत्रयं पाणिनिसूत्रत्रयं, आमन्त्रितमिति व्यक्तार्थम्। नामन्त्रित इति—समानाधिकरणे आमन्त्रिते परे सामान्यवचनं आमन्त्रितं न अविद्यमानवद्भवति। विभाषितमिति—विशेषवचने आमन्त्रिते परे बहुवचनमामन्त्रितं विभाषितं अविद्यमानवद्भवति, विकल्पेनाविद्यमानवद्भवतीत्यर्थः। पाणिनिसूत्रयोरामन्त्रित इत्यादिपदेषु। तन्मूला एव अविद्यमानताखण्डनमूला एव। अन्तिमे तु सूत्रे तद्विकलपात् अविद्यमानवत्त्वस्य विकल्पात् तद्विकल्पः, विरिंचि विकल्पः ॥

३५९। किमः। विष्णुभक्तौ परस्यां किमः स्थाने को भवति, साकस्यापि किमः स्थाने को भवति ॥

सर्वा-ङे—

३६०। कृष्णनाम-राधातः स्याप् वृष्णिषु, पूर्वस्य च वामनः।

प् इत् —सर्वस्यै ; ङसि—सर्वस्याः ; ङस्—सर्वस्याः ; आमि—'कृष्णनाम-कृष्णराधाभ्याम्' (वि° प्र° ३१७) इति सुट्—सर्वासाम् ; ङि—'नीराधाभ्यां ङेराम' (वि° प्र° १९८) इति सर्वस्याम् ; तद्धिते पूर्ववत्। एवं 'विश्व'-आदयः॥ ३६०॥

३६१। दिग्बहुव्रीहौ कृष्णनामता वा।

उत्तरपूर्वस्यै,उत्तरपूर्वायै। तदादिसप्तानां संसारस्यारामे कृते पश्चादाप्, 'तदादेस्तः सः सौ' ( वि° प्र° ३३० )—सा, ते, ताः ; ताम्, ते, ताः। एवं 'यद्'—या, ये, याः। एतद्—एषा, एते, एताः। इदम्—'इयन्तु लक्ष्म्याम्' ( वि° प्र° ३३१ ) इयम्, इमे, इमाः ; इमाम्, इमे, इमाः। 'इदमोऽकरामस्य अनष्टौसोः' ( वि° प्र° ३३२ )—अनया, 'वैष्णवे त्वश्' ( वि° प्र° ३३३ )—आभ्याम्, आभिः ; अस्यै, अस्याः। सुट् ( वि° प्र° ३१७ ), अश् ( वि° प्र° ३३३ ), पश्चादाप्—आसाम्।

'अदस्'-शब्दस्य सौ पुंवत्—असौ ; 'दस्य च मः' ( वि° प्र° ३३० ), आप्, 'अदो मात् परस्य सर्वेश्वरस्य उ ऊ' ( वि° प्र° ३३८ )—अमू, अमूः ; अमूम्, अमू, अमूः ; अमुया, अमूभ्याम्,

---

३६०। कृष्णनाम। वृष्णिषु परेषु कृष्णनाम-राधात उत्तरे स्याप् भवति, पूर्वस्य वामनश्च॥

३६१। दिग्बहु। उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं, सा उत्तरपूर्वा–विदिक्, तस्यै 'दक्षिणपूर्वादयस्तदन्तराले' इति पीताम्बरसूत्रम्। दिग्बहुव्रीहावित्यत्र दिक्पीताम्बर इति पाठ उपयुक्तः। अदःशब्दस्येति, पुंवदिति, पुंलिंगे इवेत्यर्थः। सर्वाणीति, 'ब्रह्मतो जस्शसोः शिः' इति जशः शिः, 'सर्वेश्वर वैष्णवे'त्यादिना नुम्, 'नान्ते'त्यादिना त्रिविक्रमः॥

अमूभिः ; 'स्याप् वृष्णिषु, पूर्वस्य च वामनः' ( वि° प्र° ३६० )— अमुष्यै, अमूभ्याम्, अमूभ्यः ; अमुष्याः, अमूभ्याम्, अमूभ्यः ; अमुष्याः, अमुयोः, अमूषाम् ; अमुष्याम्, अमुयोः, अमूषु ।

एकः 'सर्व'वत् । द्विशब्दस्य—द्वे, द्वे, द्वाभ्याम्, द्वाभ्याम्, द्वाभ्याम्, द्वयोः, द्वयोः । 'भवतु'शब्दादीप्—भवती, भवत्यौ । 'किम्'-शब्दस्य—का, के, काः — 'सर्व'-वत् ॥ ३६१ ॥

**अथ ब्रह्मणि**

सर्वम्, सर्वे, सर्वाणि ; पुनस्तद्वत् ; तृतीयादौ पुरुषोत्तमवत् । ( उभ-औ ) उभे ।

३६२ । अन्यादिभ्यस्तुक् स्वमोर्ब्रह्मणि ।

उकावितौ—अन्यत् अन्यद्, अन्ये, अन्यानि । अन्यादय एकादशैकतरवर्जम् । तत्, ते, तानि । इदम्, इमे, इमानि ॥ ३६२ ॥

३६३ । द्वितीयैकत्वे कथितानुकथने इदमेतदोरेनदादेशो ब्रह्मणि वाच्यः ।

एतद्गच्छति, अथो एनत् पश्य । अदः ; 'अमे' इति स्थिते पश्चात् ऊ—अमू, अमूनि ; पुनस्तद्वत् । द्वे, द्वे । भवत्, भवती, भवन्ति ; पुनस्तद्वत् । किम्, के, कानि ; पुनस्तद्वत् ॥ ३६३ ॥

---

३६२ । अन्या । स्वमोः परयोः । तदिति 'ब्रह्मतः स्वमोर्महाहरः' इत्यनेन प्रथमं महाहर एव भवति, अतः स्वादिपरत्वाभावान्न संसारस्यारामः ।।

३६३ । द्वितीय । द्वे इति संसारस्यारामे कृते औई ।।

३६४ । अव्ययात् । अव्यायादुत्तरस्य स्वादेर्महाहरो भवति । ननु अव्ययमेव किम्, इति चेत्तत्राह–स्वरादीति, स्वराद्यव्ययं, चाद्यव्ययं, वदादि-तद्धितोऽव्ययं, क्त्वामान्तश्च कृदव्ययमिति, स्वः प्रातरित्यादय इति, आदिशब्देन अन्तर् प्रादुर् पुनर् उच्चैस् नीचैस् शनैस् ऋते युगपद्

३६४। अव्ययात् स्वादेर्महाहरः। *

स्वरादि, चादि, वदादि-तद्धिताः, क्त्वा, मान्तश्च कृदव्ययम्। अव्ययाः खलु—(१) वाचकाः, (२) द्योतकाश्च ; तत्र वाचकाः —स्वः, प्रातः इत्यादयः। एषां विशेषणस्य ब्रह्मत्वमव। सुन्दरं स्वः, सुन्दरे स्वः, सुन्दराणि स्वः इत्यादयः। 'अत्रैकवचनमेव' इति तस्यां भ्रमः, द्वित्वादीनामनिवार्यत्वात्, 'अव्ययादाप् सुपः' इति सुलोपे विरोधाच्च। द्योतकाः—च, वा, ह, अह, वै, तु, अपि इत्यादयः, प्रादयश्च ॥ ३६४ ॥

३६५। चादयो निपातसंज्ञाः।

एतेभ्यो 'द्योत्यतया-अर्था विद्यन्ते एषाम्' इत्यर्थत्वात् स्वाद्युत्पत्तिः, किन्तु प्रथमैकवचनमेव। वदादितद्धिताः—'हरिवत् कृष्णी भवति' इत्यादयः ; क्त्वा, मान्तकृत्—कृत्वा, कर्तुं, कारं कारम् इत्यादि च। महाहरत्वात् 'ओ औ पाण्डवेषु' ( वि° प्र° २०८ ) न—अहो इत्यादि ज्ञेयम् ॥ ३६५ ॥

**इति कृष्णनाम-प्रकरणम्।**

इति श्रीश्रीहरिनामामृताख्ये वैष्णवव्याकरणे नामविष्णुपद-
प्रकरणं **द्वितीयं** समाप्तम् ॥ २ ॥

---

आरात् पृथक् ह्यस् श्वस् दिवा सायम् मनाक् ईषत् तूष्णीम् बहिस् निकषा समया स्वयम् नक्तम् मृषा अद्धा सामि इत्यादीनां ग्रहणम्। एषामिति—एषां वाचकाव्ययानाम्। अत्रेति—अत्र वाचकाव्ययेषु, भ्रमे हेतुमाह द्वित्वादीनामिति। हेत्वन्तरमप्याह अव्ययादिति। द्योतका इति—चादयः प्रादयश्च द्योतकाः। इत्यादय इति आदिशब्देन एव एवम् इव नूनम्

---

* 'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥'

शश्वत् चित् क्वचित् हन्त नञ् तत् उत ओम् आहो अहो खलु किल अथ अथो ननु जातु इत्यादीनां ग्रहणम् ॥

३६५। चादय। एतेभ्य इत्यस्य स्वाद्युत्पत्तिरित्यनेनान्वयः। किंतु प्रथमैकवचनमेवेति। यत उक्तं लिङ्गसंख्याविनिर्मुक्तात् सुः पदत्वार्थमव्ययादिति, अद्रव्यवाचिनामव्ययानां लिङ्गसंख्याविनिर्मुक्तत्वमिति। हरिवदिति–'उपमानक्रियाद्वतिस्तत्क्रियातुल्यक्रियत्वे' इत्यनेन वतिप्रत्ययः। कृष्णीभवतीति–अकृष्णः कृष्णोभवतीति 'अभूततद्भावे कृभ्वस्ति योगे विः' इति विः, विः सर्व इत्; 'अद्वयस्य वावीरामे' इति अद्वयस्य ईरामः। कृत्वेति, 'एककर्तृकयोः क्रिययोः पूर्वकालस्थधातोः क्त्वा' इति क्त्वा-प्रत्ययः। कर्तुमिति, 'तुमु-णकौ तत्क्रियार्थत्वे' इति तुमुः। कारं कारमिति 'क्त्वार्थे णमुश्चाभीक्ष्ण्ये' इति णमुः, 'आभीक्ष्ण्यवीप्सयो'रिति द्विरुक्तिः। महाहरत्वादिति–सोर्महाहरत्वात् 'ओ औ पाण्डवेषु'इत्यनेन न औरामः ॥

इति श्रीलहरेकृष्णाचार्यविरचितायां श्रीमद्गोपीचरणदासाख्यपरिशोधितायां श्रीहरिनामामृताख्यवैष्णवव्याकरणटीकायां बालतोषणीनाम्न्यां द्वितीया नामविष्णुपदप्रकरणटीका समाप्ता ॥

[ तृतीयम् ]

# आख्यातप्रकरणम्

श्रीकृष्णाय नमः ।

[ ७ ] प्रवर्तन्ते क्रियाः सर्वा यतोऽर्वाचीनवस्तुषु ।
हरेस्तस्यैव लीलास्ता निरूप्यन्ते यथामति ।।

अथ धातुजानि विष्णुपदानि

३६६ । भूसनन्ताद्या 'धातवः' । *

भू सत्तायामित्यादयः सनादि-प्रत्ययान्ताश्च 'धातु' संज्ञाः स्युः ॥३६६॥

३६७ । धातोः ।

अधिकारोऽयम् । पूर्वनिमित्तादिभेदेन स चाधिकारस्तावच्चतुर्विधः । तत्र कार्यञ्च संज्ञा-विधि-निषेध-भेदेन त्रिविधमिति सप्तविधः । स च सजातीय-विजातीयानेकाधिकारस्य व्यापी 'वासुदेव'-

---

श्रीमज्जीवगोस्वामिचरणेभ्यो नमः ।
निखिलाम्नायवेद्यस्य लीला भगवतः क्रियाः ।
प्रवर्तन्ते जने यास्ता व्याख्यायन्तेऽधुना मया ।।

पूर्वं यएकइत्यादिना पदनिरूपणस्य विष्णवनुशीलनत्वं प्रतिपादितमेव, सम्प्रति क्रियापदनिरूपणस्य हरिलीलानिरूपणत्वमपि प्रतिपादयन् तदारभते, प्रवर्तन्त इति । क्रियाशब्देनात्र लक्षणया उपचारेण वा क्रियापदान्युच्यन्ते, ततश्च यतो हरेः सकाशात् भवति, स्पर्धते, वर्धते, शोभते, नश्यतीत्याद्या याः सर्वाः क्रियाः, अर्वाचीनवस्तुषु आधुनिकवस्तुषु प्रवर्तन्ते, तस्यैव हरेर्लीलारूपास्ताः क्रिया निरूप्यन्ते साध्यन्ते, यथामतीति–मत्यनतिक्रमेणेत्यर्थः, मतिर्ज्ञानम् ।। [ ७ ]

अथेति । धातोर्जातानि यानि विष्णुपदानि, अथानन्तरं तानि निरूप्यन्ते ।।

---

* 'भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च ।
तुदादिश्च रुधादिश्च तनक्र्यादि-चुरादयः ।।"

संज्ञः ; तदवान्तरादेकाधिकारव्यापी 'विभु'संज्ञः ; केवलः 'प्रभु'संज्ञः ; तत्र वासुदेवोऽयम् । किन्तु 'धातोः' इति सम्बन्धसामान्यनिर्देशात् यथायथं पञ्चम्याद्यर्थो ज्ञेयः ॥ ३६७ ॥

३६८ । तत्र प्रायो वर्तमानकाले तिवादयोऽष्टादश'अच्युत'-नामानः ।

तिप् तस् अन्ति ; सिप् थस् थ ; मिप् वस् मस् । ते आते अन्ते ; से आथे ध्वे ; ए वहे महे । एते 'वर्तमाना' इत्यन्ये, 'लट्' इत्येके ॥ ३६८ ॥

---

३६६ । भूसनन्त । भूश्च सनन्तश्च भूसनन्तौ, भूसनन्तौ आद्यौ येषामिति विग्रहः, अत्र तद्गुणसंविज्ञानपीताम्बरो ज्ञेयः । तद्गुणस्य समस्तैकदेशस्थपदस्य सम्यक् विज्ञानं यत्र, स इति ।।

३६७ । धातोः । धातोरिति षष्ठ्यन्तं । अधिकारोऽयमिति–उत्तरप्रकरणव्यापी अधिकार इति । पूर्वनिमित्तादीति–'प्राङ्निमित्तं तथा कार्यी, कार्यं परनिमित्तकमि'ति, चतुर्विध इत्यत्र पंचविध इति पाठः क्वचिदृश्यते, स तु न संगच्छते क्वचित् परनिमित्तस्य स्थाने विषयसप्तमीत्यस्योक्तत्वेऽपि पांचविध्यनुपपत्तेः । सप्तविध इत्यत्र षड् विध इति पाठ उचितः, साप्तविध्यनुपपत्तेः, अथवा संज्ञायाः पूर्वावरत्व-द्वैविध्येन सह निषेधविधि द्विविधस्य ग्रहणात् कार्यस्य तावच्चतुर्विधत्वमतः पूर्वोक्त-प्रांनिमित्तादित्रिविधेन सह मिलित्वा सप्तविधत्वं संगच्छत इति । सचेति,–सचाधिकारः सजातीयेत्यादिलक्षणो यदि भवति, तदा वासुदेवसंज्ञ इति । तदिति, वासुदेवाऽवान्तरानेकाधिकारव्यापी यदि भवति, तदा विभुसंज्ञ इति । केवल इति–केवलो यदि भवति, तदा प्रभुसंज्ञ इति, केवलत्वं अधिकारान्तराव्यापित्वम् । तत्रेति–तत्र वासुदेव-विभु-प्रभूषु । किन्त्विति–धातोरित्यस्य सम्बन्ध-सामान्यनिर्देशात्, यथायथं यथायोग्यं यथोचितमिति यावत्, पञ्चम्याद्यर्थो ज्ञेय इति, क्वचित् पञ्चम्यर्थः, क्वचित् षष्ठ्यर्थः, क्वचित् सप्तम्यर्थश्च ज्ञेयः ।।

३६९। विधि-सम्भावनादौ यादादयो 'विधि'-नामानः।

यात् याताम् युस्; यास् यातम् यात; याम् याव याम। ईत ईयाताम् ईरन्; ईथास् ईयाथाम् ईध्वम्; ईय ईवहि ईमहि। एते 'सप्तमी' इत्यन्ये, 'विधिलिङ्' इत्येके॥ ३६७॥

३७०। आशीः-प्रेरणादौ तुवादयो 'विधातृ'-नामानः।

तुप् ताम् अन्तु; हि तम् त; आनिप् आवप् आमप्। ताम् आताम् अन्ताम्; स्व आथाम् ध्वम्; ऐप् आवहैप् आमहैप्। एते 'पंचमी' इत्यन्ये, 'लोट्' इत्येके॥ ३७०॥

३७१। अनद्यतन-भूते दिवादयो 'भूतेश्वर'-नामानः।

दिप् ताम् अन्; सिप् तम् त; पम् व म। त आताम् अन्त; थास् आथाम ध्वम; इ वहि महि। एते 'ह्यस्तनी' इत्यन्ये, 'लङ्' इत्येके॥ ३७१॥

---

३६८। वर्तमाने काले धातोरुत्तरे तिवादयोऽष्टादश भवन्ति, ते तु अच्युतनामानः। पुरादियोगे भूतकाले भवन्ति, यावत्पुराकदाकर्ह्यादि-योगे भविष्यति, भवन्तीति प्रायःशब्दोपादानं कृतम्। व्यक्त्या जात्या चैकक्रियाव्याप्तत्वेन भूतभविष्यदतिरिक्ततया विवक्षितः कालो वर्तमान इति वक्ष्यते। तिवादीनाह, तिप् तस् अन्तीत्यादि॥

३६९। विधि। विधिसम्भावनादौ गम्यमाने धातोरुत्तरे यादादयोऽष्टादश भवन्ति, ते तु विधिनामानः। विधिरज्ञातज्ञापनं, प्रेषणञ्च, सम्भावना तत्क्रिया-योग्यतानिश्चितिः। यादादीनाह—यात् यातामित्यादि॥

३७०। आशीः। आशीः प्रेरणादौ गम्यमाने धातोरुत्तरे तुवादयोऽष्टादश भवन्ति, ते तु विधातृनामानः, आशीरिष्टार्थस्याशासनम्, आशासनमिच्छा, प्रेरणं नियुक्तिः॥

३७२। भूते दिवादयो 'भुतेश'-नामानः।

एते 'अद्यतनी' इत्यन्ये, 'लुङ्' इत्येके ॥ ३७२ ॥

३७३। परोक्ष-भूते णलादयो'ऽधोक्षज'-नामानः।

णल् अतुस् उस्; थल् अथुस् अ; णल् व म। ए आते इरे; से आथे ध्वे; ए वहे महे। एते 'परोक्षा' इत्यन्ये, 'लिट्' इत्येके ॥३७३॥

३७४। आशिषि यात् यास्तामित्यादयः 'कामपाल'-नामानः।

यात् यास्ताम् यासुस्; यास् यास्तम् यास्त; यासम् यास्व यास्म। सीष्ट सीयास्ताम् सीरन्; सीष्ठास् सीयास्थाम् सीध्वम्; सीय सीवहि सीमहि। एते 'आशीः'रित्यन्ये, 'आशीर्लिङि' त्येके ॥३७४॥

३७५। अर्हार्थेऽनद्यतन-भविष्यति च तादयो 'बाल-कल्कि'-नामानः।

ता तारौ तारस्; तासि तास्थस् तास्थ; तास्मि तास्वस् तास्मस्। ता तारौ तारस्; तासे तासाथे ताध्वे; ताहे तास्वहे तास्महे। एते 'श्वस्तनी' इत्यन्ये, 'लुट्' इत्येके ॥ ३७५ ॥

---

३७१। अन। अनद्यतनभूतकाले धातोरुत्तरे दिवादयोऽष्टादश भवन्ति, ते तु भूतेश्वरनामानः। पूर्वापरनिशयोर्द्वाभ्यां द्वाभ्यां यामाभ्यां सह दिवसमद्यतनः कालस्तद्भिन्नोऽनद्यतन इति वक्ष्यते ॥

३७२। भूते। भूतकाले दिवादयोऽष्टादश भवन्ति, ते तु भुतेश-नामानः। दिवादयस्तूक्ता एव ॥

३७३। परोक्ष। परोक्षभूते धातोरुत्तरे णलादयोऽष्टादश भवन्ति, ते तु अधोक्षजनामानः, अक्षणः परं परोक्षमिति परोक्षशब्दः समासान्त-प्रकरणे निपातनीयः ॥

३७४। आशिषि। आशिषि गम्यमानायां धातोरुत्तरे यात् यास्तामित्यादयोऽष्टादश भवन्ति, ते तु कामपालनामानः ॥

३७६। भविष्यत्काले स्यत्यादयः 'कल्कि'नामानः।

स्यति स्यतस् स्यन्ति ; स्यसि स्यथस् स्यथ ; स्यामि स्यावस् स्यामस् स्यते स्येते स्यन्ते ; स्यसे स्येथे स्यध्वे ; स्ये स्यावहे स्यामहे। एते 'भविष्यन्ती' इत्यन्ये, 'ऌट्' इत्येके ॥ ३७६ ॥

३७७। साकांक्षं यत्र क्रियातिक्रमो निर्दिश्यते, तत्र कार्य-कारणयोः स्यदादिका 'अजित'-नामानो भूते भविष्यति च।

स्यत् स्यताम् स्यन् ; स्यस् स्यतम् स्यत ; स्यम् स्याव स्याम। स्यत स्येताम् स्यन्त ; स्यथास् स्येथाम् स्यध्वम् ; स्ये स्यावहि स्यामहि। एते 'क्रियातिपत्तिः' इत्यन्ये, 'ऌङ्' इत्येके।

अच्युतादयः 'तिङ्' इत्येके ; 'आख्यातम्' इति सर्वे। सर्वत्र प्राम इत्, ण-लौ च, दिप्-सिपोरिरामश्च ॥ ३७७ ॥

---

३७५। अर्हार्थे। अर्हतीति अर्हो योग्यः, अर्हे कर्तरि अर्थे सति अनद्यतनभविष्यति च तादयोऽष्टादश भवन्ति, ते तु वालकक्लिनामानः ॥

३७६। भविष्यत्। भविष्यत्काले स्यत्यादयोऽष्टादश भवन्ति, ते तु कल्कि नामानः ॥

३७७। साकांक्षं। साकांक्षं यथा स्यात्तथा यत्र क्रियातिक्रमः क्रियाया अनिष्पत्तिर्निर्दिश्यते, तत्र कार्यकारणयोर्गम्यमानयोर्भूते भविष्यति च काले स्यदादिका अष्टादश भवन्ति, ते तु अजितनामानः ॥

सर्वत्रेति। तिवादीनां परामः, अन्त्योविष्णुजनश्चेत्यनेन इद्भवति। पमः परामस्य इत्वविधानसूत्रं न दृश्यत इति यत्नान्तरमास्थेयं, यत्नान्तरन्तु तत् प्रकरणे उक्तम्। ण-लौचेति, तत्र णरामः 'प्रत्यययाद्या ज-ट-णाः' इत्यनेन इद्भवति। लरामस्तु अन्त्योविष्णुजनश्चेत्यनेन इद्भवति। दिप्-सिपोरिरामश्चेति, सिद्धोपदेश इत्यादिनेति शेषः ॥

३७८। पित् 'पृथुः'।

३७९। णित् 'नृसिंहः'।

३८०। कित् 'कपिलः'।

३८१। ङि'न्निर्गुणः'।

३८२। किच्च ङिच्च 'कंसारिः'।

३८३। शित् 'शिवः'।

३८४। तिबादि नवनवानां पूर्वपूर्वाणि 'परपद'संज्ञानि।

'परस्मैपदानि' इत्यन्ये। तिप् तस अन्ति इत्यादीनि ; यात् याताम् युस् इत्यादीनि ; एवमुत्तरत्रापि ॥ ३८४ ॥

३८५। उत्तरोत्तराणि'आत्मपद'-संज्ञकानि।

'आत्मनेपदानि' इत्यन्ये, 'तङ्' इति च। ते आते अन्ते इत्यादीनि ; ईत ईयाताम् ईरन् इत्यादीनि। एवमुत्तरत्रापि ॥ ३८५ ॥

---

३७८। पित्। पित् पृथुसंज्ञो भवति ॥

३७९। णित्। नित् नृसिंहनामा भवति ॥

३८०। कित्। कित् कपिलनामा ॥

३८१। ङित्। ङित् निर्गुणनामा ॥

३८२। किच्च। किच्च ङिच्च कंसारिनामा ॥

३८३। शित्। शित् शिवनामा ॥

३८४। तिवादि। तिवादिनवनवानां पूर्वपूर्वाणि नव नव परपदसंज्ञानि भवन्ति। परपद-शब्देन वैकुण्ठादिकमुच्यत इति भगवन्नामता। सर्वेषामादौ तिप् वर्ततएवेति, तिवादीत्युक्तम्। नवनवानामिति वीप्सायां द्विरुक्तिः, न तु रामकृष्णसमासः ॥

३८५। उत्तरो। तिवादि नवनवानामुत्तरोत्तराणि नव-नव-आत्मपदसंज्ञानि भवन्ति। आत्मशब्दस्य ब्रह्मवाचित्वात्, आत्मपदं ब्रह्म-पदमिति भगवन्नामता ॥

३८६। नवकेषु त्रीणि त्रीणि 'प्रथम-मध्यमोत्तम-पुरुष'-संज्ञकानि।

यथा—-तिप् तस् अन्ति इति प्रथमपुरुषः ; सिप् थस् थ इति मध्यमः ; मिप् वस् मस् इति उत्तमः। ते आते अन्ते इति प्रथमः ॥ ३८६ ॥

३८७। अच्युतादयः पंच, शिवश्च 'कृष्णधातुकाः'।

'सार्वधातुकानि' इत्येके ॥ ३८७ ॥

३८८। अन्ये प्रत्यया 'रामधातुकाः'।

'आर्धधातुकानि' ईत्येके ॥ ३८८ ॥

३८९। परपदानि कर्तरि।

३९०। आत्मपदिभ्य आत्मपदानि ङितश्च।

३९१। उभयपदिभ्य उभयपदानि ञितश्च।

३९२। आत्मपदान्येव कर्मणि।

---

३८६। नवकेषु। सुगमम् ॥

३८७। अच्युत। अच्युतादयः पंच, शिवश्च कृष्णधातुक-नामानो भवन्ति ॥

३८८। अन्ये। कृष्णधातुकेभ्योऽन्ये प्रत्यया रामधातुक नामानो भवन्ति ॥

३८९। पर। कर्तरि वाच्ये धातोरुत्तरे परपदानि भवन्ति ॥

३९०। आत्म। कर्तरि वाच्ये आत्मपदिभ्यो ङितश्चोत्तरे आत्मपदानि भवन्ति ॥

३९१। उभय। कर्तरि वाच्ये उभयपदिभ्यो ञितश्चोत्तरे उभय-पदानि भवन्ति ॥

३९२। आत्मपद। कर्मणि वाच्ये आत्मपदान्येव भवन्ति, न तु परपदानि ॥

३६३। आत्मपद-प्रथमपुरुषैकवचनमेव भावे।

भावो धात्वर्थः। कर्तृ-कर्मणी वक्ष्येते (१३१७) ॥ ३६३ ॥

भू-तिप् इति स्थिते प् इत्,—

३६४। शप् कृष्णधातुके।

अत्र भुवादिगणे परपदिनां पदानि दर्श्यन्ते। भू सत्तायाम्; सत्ता—विद्यमानता। तत्र कर्तरि एकवचनादयः स्वादिवज्ज्ञेयाः। विकरणाख्योऽयम्। शपावितो, अरामशेषः ॥ ३६४ ॥

३६५। धातोरन्तस्य गोविन्दः प्रत्यये।

स इद्वयादीनामेव विहितः। शिवत्वात् कृष्णधातुकत्वम् ॥ ३६५ ॥

३६६। अपृथु-कृष्णधातुको निर्गुणः।

तस्मात् पृथुत्वान्नात्र निर्गुणत्वम्। 'ओ अव्' (६५)—भवति। भू-तस्, 'स-र-रामयोर्विष्णुसर्गो' (१५५)—भवतः ॥ ३६६ ॥

---

३६३। आत्म। भावे वाच्ये आत्मपदप्रथमपुरुषैकवचनमेव भवति। भावलक्षणमाह—भावो धात्वर्थ इति; धात्वर्थः सत्तादिः। कर्तृ—कर्मणी वक्ष्येते इति 'स्वतन्त्रं तत्प्रयोजकंच कर्तृ', 'क्रिया यत्साधिका तत् कर्मे'ति ॥

३६४। शप्। कृष्णधातुके परे धातोरुत्तरे शप् भवति ॥

३६५। धातो। प्रत्यये परे धातोरन्तस्य गोविन्दो भवति। स इति, स गोविन्दः; इद्वयादीनामिति—आदिशब्देन उद्वयस्य ऋद्वयस्य लृद्वयस्य च ग्रहणम्। धातोरित्यनुवर्तत एव, तथापि धातोरिति यत् कृतं, तत्फलमग्रे वक्ष्यते ॥

३६६। अपृथु। पृथुभिन्नः कृष्णधातुको निर्गुणो भवति। भवतीत्यत्र शपः कृष्णधातुकत्वात्तस्मिन् परे पुनः शशि कृतेऽपि 'अरामहर ए-अयोरविष्णुपदान्त' इत्यनेन तस्य हरो भवतीति पुनः शप् न भवतीति ज्ञेयम् ॥

भू-अन्ति—

३९७। अरामहर ए-अयोरविष्णुपदान्ते।

भवन्ति। 'अविष्णुपदान्ते' इति किम् ? प्लायते। 'दैत्यमर्दति' इति कर्मण्यणि 'दैत्यार्द' इत्यादीनां वक्ष्यमाणत्वादरामहरो न स्यात्। भवसि, भवथः, भवथ ॥ ३९७ ॥

३९८। अ आ व-मोः।

भवामि, भवावः, भवामः। अकर्मकोऽयम्; यतः—

**सत्ता-वृद्धि-विशुद्धि-सिद्धि-शयन-स्थानासने भासने**
**लज्जा-जीवन-रोदने च हृदने नृत्ये विलासे क्रुधि।**
**त्रास-स्यन्द-निवास-शोष-मरण-स्पर्धा विहारेष्वपि**
**ज्ञातो धातुरकर्मकः क्षय-मदोद्वेग-प्रकम्पेष्वपि ॥**

उपलक्षणञ्चैतत्; जागरणार्थादिष्वपि। तस्मान्नास्य कर्मणि प्रयोगः ॥ ३९८ ॥

---

३९७। अराम। ए अयोः परयो रराम हरो भवति, अविष्णु-पदान्ते विषये। प्लायत इति, अय—गतौ 'प्र-परा-परीणां ररामस्य लत्वमयतौ' इत्यनेन र-रामस्य ल-रामः। दैत्यार्द इति अर्द—पीड़ायां कर्मण्यण् इत्यनेन अण्। प्लायते दैत्यार्द इत्यादीनां यदि उक्तत्वं स्यात्, तदा तत्राकरणादेव अरामहरो न स्यात्, इदानीन्तु वक्ष्यमाणत्वादरामहरः स्यादेव, अतोऽविष्णु-पदान्त इति कृतम् ॥

३९८। अ आ। अ इति सूत्रबलेन लुप्तषष्ठी; वमोः परयो-रॅरामस्य स्थाने आरामो भवति। सत्तेति—सत्तादिषु प्रकम्पान्तेषु अर्थेषु धातुरकर्मको ज्ञातः, पण्डितैरिति शेषः। तत्र स्थानं स्थितिः; आसनमुपवेशनम्। भासनं—दीप्तिः। हृदनं—पुरीषोत्सर्गः। क्रुत्—क्रोधः। स्यन्दः—स्रवणम्। उपलक्षणमिति। जागरण-रूपादिष्वप्यर्थेषु धातुरकर्मको ज्ञातः। तस्मादिति—अस्य भूधातोः ॥

**भावे दर्श्यते—भू-ते इति स्थिते—**

३९९। यक् कृष्णधातुके भाव-कर्मणोः।

क् इत् ॥ ३९९ ॥

४००। ईशस्य न गोविन्द-वृष्णीन्द्रौ कंसारिषु।

भूयते 'ईशस्य' इति किम्? कामयते। प्राप्त्यर्थोऽपि भूधातुरस्ति, तदा सकर्मकत्वेन कर्मणि च। तथा चाख्यातचन्द्रिका—"प्राप्तौ प्राप्नोति, भवति, विन्दत्यवरुणद्ध्यपि; आत्मनेऽपि द्वयम्" इति। 'भवत्यप्यात्मने' इति केचित्। भूयते ॥ ४०० ॥

**भूय-आते—**

४०१। अ-त आ ईस्तथयोः।

भूयेते, भूयन्ते; भूयसे, भूयेथे, भूयध्वे; भूये, भूयावहे, भूयामहे ॥ ४०१ ॥

---

३९९। यक्। भावकर्मणोर्वाच्ययोः कृष्णधातुके परे धातोरुत्तरे यक् भवति ॥

४००। ईशस्य। कंसारिषु परेषु ईशस्य गोविन्दवृष्णीन्द्रौ न भवतः। भूयत इत्यत्र 'धातोरन्तस्य गोविन्द' इत्यादिना गोविन्दे प्राप्ते निषेधविधानम्। कामयत इति—कमुकान्तौ 'कमेर्णिङ', 'उद्धवारामस्य वृष्णीन्द्रो नृसिंहे' इत्यनेन वृष्णीन्द्रः, ङित्त्वादात्मपदं, शप्, गोविन्द; ए अय। ईशस्तैव निषेधात् अत्र ङित्त्वेपि वृष्णीन्द्रः। कर्मणिचेति प्रयोगो दृश्यत इति शेषः। भूधातोः प्राप्त्यर्थत्वं द्रढ़यति तथाचेति। आत्मनेपीति—द्वयं शेषोक्तधातुद्वयं आत्मनेपदीति। भवत्यप्यात्मन इति च केचित् वदन्तीति शेषः। आत्मनेपीति—आत्मनेपद्यपीत्यर्थः। ततश्च विन्दत इत्यादि। अवरुन्धे इत्यादि। भवते इत्यादि च भवतीति ॥

४०१। अ-त आ। आ इति सूत्रबलेन लुप्तषष्ठी। तथयोः परयोरत उत्तरस्य आरामस्य स्थाने इर्भवति। भूयन्ते इत्यत्र—भूये

**अथ विधौ कर्तरि--**

## ४०२। अ-तो या ईः।

भवेत्, भवेताम्॥ ४०२॥

## ४०३। अत इट् युसि।

भवेयुः; भवेः, भवेतम्, भवेत॥ ४०३॥

## ४०४। अतो याम इयम्।

भवेयम्, भवेव, भवेम। भावे—भूयेत। प्राप्त्यर्थे कर्मणि—भूयेत, भूयेयाताम्, भूयेरन्; भूयेथाः, भूयेयाथाम्, भूयेध्वम्; भूयेय, भूयेवहि, भूयेमहि॥ ४०४॥

**अथ विधातरि कर्तरि--भवतु;--**

## ४०५। तु-ह्योस्तातङाशिषि वा सर्वत्र।

भवताद्वा, भवताम्, भवन्तु॥ ४०५॥

## ४०६। अतो हेर्हरः।

भव भवताद्वा, भवतम्, भवत। भवानि, भवाव, भवाम॥ ४०६॥

---

इत्यत्र च अरामहर इत्यादिना अराम हरः। भूयावहे इति–अ आ वमोरित्यनेन अरामस्यारामः॥

४०२। अ-तो। या इति लुप्तषष्ठी। अत उत्तरस्य यारामस्य स्थाने ईर्भवति॥

४०३। अतः। युसि परे अत उत्तरे इड् भवति॥

४०४। अतो। अत उत्तरस्य यामः स्थाने इयम् भवति॥

४०५। तु-ह्योस्ता। आशिषि गम्यमानायां सर्वत्र तुह्योः स्थाने तातङ् वा स्यात्॥

४०६। अतो। अत उत्तरस्य हेर्हरो भवति॥

४०७। प्रादय उपेन्द्र-संज्ञा धातु-योगे, ते च प्राक्।

उपसर्गाः प्राञ्चः।

**प्र-पराऽप-समन्वव-निर्दुरभि-व्यधि-सूदति-नि प्रति पर्यपयः।**

**उप-आङिति विंशतिरेष सखे उपसर्गविधिः कथितः कविना॥**

प्र परा अप सम् अनु अव निर् दुर् अभि वि अधि सु उद् अति नि प्रति परि अपि उप आङ्; 'निस्' इति पाठान्तरम्; आङो ङ् इत्। ततो भूधातोः प्र-पूर्वत्वे प्राद्यव्ययात् स्वादेर्महाहरः (३६४); एवं सर्वत्र; प्रभवति, प्रभवतः इत्यादि॥ ४०७॥

४०८। पूर्वोक्तनिमित्तत्वे सत्येव षत्व-णत्वे।

सर्वत्र नियमोऽयम्॥ ४०८॥

४०९। उपेन्द्रात् णोपदेशस्य णत्वम्।

---

४०७। प्रादयः। धातुयोगे सति प्रादय उपेन्द्रसंज्ञा भवन्ति। तेच प्रादयः प्राक् धातोः पूर्वे प्रयुज्यन्त इत्यर्थः। प्र-परापेति, हे सखे इत्येते प्रादयो विंशतिः कविना उपसर्गविधिः कथित इत्यन्वयः। एष इत्यस्य उपसर्गविधिरित्यनेनान्वयः, प्राचीनोक्तत्वात्। तदेवोह्यते 'उद्देश्यञ्च विधेयंच यत्रोक्तत्वं द्वयोरपि। उद्देश्यगतसंख्यादि नतु वैधेयिकं भवेत्।' उद्देश्यंच विधेयंच यत्रोक्तत्वं स्याद् द्वयमपि। नोद्देश्यगतसंख्यादि वैधेयिकं सदा भवेदिति द्वयप्रकारादत्र विधेयगतं संख्यादि ज्ञेयम्। भूतलं भूरितिवत् उपसर्गविधिरुपसर्ग इति ज्ञेयम्। उपसृज्यते समीपे सम्बध्यते इत्युपसर्गः। सम्बन्धश्च केनापि सह भवति, सच धात्वधिकारो धातुना सहेति, अतएवोक्तं धातुयोग इति, तेच प्रागिति च। निसितीति निरित्यत्र। आङिति, आङ्माङित्यनेन ङित्। प्राद्यव्ययात् स्वादेर्महाहर इति 'अव्ययात् स्वादेर्महाहरः' इत्यनेनेति शेषः। एवमिति,—एवं सर्वत्र उपेन्द्रेषु स्वादेर्महाहरो बोद्धव्यः॥

४०८। पूर्वोक्त। पूर्वोक्तयोः ईश्वरादिरषाद्योर्निमित्तत्वे सत्येव षत्वणत्वे भवतः॥

४१०। हिनुमीनानिपाञ्च।

४११। निंस्निंक्ष्निन्दां वा।

४१२। निंसादीनां कृतीत्येके।

हि गतौ+श्नु=हिनु; मीञ् हिंसायाम्+श्ना=मीना; आनिपः—प्रभवाणि। 'उपेन्द्रात्' (४०९) इति किम्?—प्रगतो नायकः=प्रनायकः। 'दुरुपसर्गस्य प्रतिषेधः' इति भाष्यम्—दुर्भवानि। 'उपसर्ग-प्रतिरूपकत्वादेव न णत्वम्' इति अष्टक-वृत्तिकृत् ॥४०९-१२॥

४१३। आङोऽन्येन विष्णुपदेन व्यवधानेन णत्वं न।

पर्यंवभवानि ॥ ४१३ ॥

४१४। वक्ष्यमाणकृदादौ च।

प्रापयानम्। आङा तु णत्वमेव—पर्याभवाणि ॥ ४१४ ॥

---

४०९। उपेन्द्रात्। उपेन्द्रादुत्तरस्य णोपदेशस्य धातोर्नस्य णत्वं भवतीत्यर्थः। 'सर्वे नादयो णोपदेशा नृ॒-नृति-नर्दि-नन्दि-नक्कि-नाथि-नाधि नटि-वर्जमि'ति वक्ष्यते ॥

४१०। हिनु। उपेन्द्रादुत्तरेषां हिनुमीनानिपांच नस्य णत्वं भवति॥

४११। निंस्। उपेन्द्रादुत्तरेषां निंस-निंक्ष-निन्दां नस्य णत्वं वा भवति ॥

४१२। निंसा। निंसादीनां कृति णत्वं वा भवतीत्येके वदन्ति। हिन्वित्यादि यदुक्तं, तदेव विवृणोति—हि गतावित्यादि। प्रनायक इति, अत्र धातुयोगाभावात् नास्योपेन्द्रत्वम्। उपसर्गेति—दुरः उपसर्गप्रतिरूपकत्वादेव उपसर्गसदृशत्वादेव न णत्वमिति, दुर् उपसर्गसदृशः नतूपसर्ग इति णत्वं न भवतीत्यर्थः। अष्टकवृत्तिकृत् ग्रन्थकारविशेषः ॥

४१३। आङो। आङोऽन्येन विष्णुपदेन व्यवधाने सति णत्वं भवति ॥

४१४। वक्ष्य। वक्ष्यमाणकृदादौ च प्रापयानमित्यत्र विहितं णत्वं आङोऽन्येन विष्णुपदेन व्यवधाने सति न भवति। प्रापयानमिति,—

४१५। व-मादयस्ते त्वच्युतादेरेव, नान्यस्य।

नियमोऽयम्; तेन 'अवहत्' इत्यादौ' न त्रिविक्रमादि। भावे—भूयताम्। कर्मणि—भूयताम्, भूयेताम्, भूयन्ताम्; भूयस्व, भूयेथाम्, भूयध्वम्। भूयै, भूयावहै, भूयामहै ॥ ४१५ ॥

४१६। धातोः पूर्वमत् भूतेश्वर-भूतेशाजितेषु।

विष्णुरयम्। 'अट्' पा° (६।४।७१); अत्र 'पा' इति 'पाणिनीयानाम्' इति संकेतितम्। 'येन नाव्यवधानं सम्भवति, तेन व्यवधानेऽपि स्यात्' इति वचनप्रामाण्यात् वपादिव्यवधानेऽपि—अभवत्, अभवताम्, अभवन्; अभवः, अभवतम्, अभवत; अभवम्, अभवाव, अभवाम। भावे—अभूयत। कर्मणि—अभूयत, अभूयेताम्, अभूयन्त; अभूयथाः, अभूयेथाम्, अभूयध्वम्; अभूये, अभूयावहि, अभूयामहि ॥ ४१६ ॥

---

उपेन्द्रात् कृन्नस्य सर्वेश्वरात् परस्य णत्वमित्यनेन णत्वं स्यात्। कृदादावित्यादिशब्देन समासे विहितं णत्वं च न भवति, तेन हरियागयोगेनेत्यत्र 'एकसर्वेश्वरे कवर्गवति चोत्तरपदे सति नित्यमि'त्यनेन न णत्वं, अत्र यागपदेन व्यवधानात्। वक्ष्यमाण-कृदादावित्यत्र श्यामरामसमासश्चिन्त्यः, वक्ष्यमाणेत्यस्य व्यावर्त्तकत्वाभावात्। आङन्तिविति, व्यवधान इति शेषः॥

४१५। व-मा। अ आ वमोरित्यादौ ये वरामादयो गृहीतास्ते तु अच्युतादेरेव गृह्यन्ते, नान्यस्येति। अवहदिति, वह—प्रापणे भूतेश्वरदिप्, शप्, धातोः पूर्वमत्। अत्र बहधातोर्वरामे परे न अरामस्यारामः॥

४१६। धातोः। भूतेश्वर-भूतेशाजितेषु धातोः पूर्वमद्भवति। विष्णुरयमिति—औपचारिकमस्य विष्णुत्वमिति परेषु ज्ञेयम्। पाणिनीयानामित्यस्येत्यर्थः, सङ्केतितं संके'तम्। ननु अभवदित्यादौ शपा व्यवधानेन भूतेश्वरस्य परत्वाभावात् कथमद्भवत्विति चेत्तत्राह—येनेति वचनप्रामाण्यात् लक्षणस्य प्रमाणत्वात्। अत्र वचनैकदेशे वचनशब्दप्रयोगः कृतः। भुतेश्वरे शपा अव्यवधानं न सम्भवतीति तद्व्यवधानेऽद्भवत्येव। अभवन्निति, अरामहर इत्यादिना अरामहरः। अभवाव, अभवामेति, अ आ

**भूतेशे कर्तरि—भू-दिप्, अदागमः—**

४१७। सिर्भूतेशे।

इराम इत्। 'सिच्' (पा° ३।१।४४) ॥ ४१७ ॥

४१८। इण्-स्था-पिवति-दामोदर-भूभ्यः सेर्महाहरः परपदे।

४१९। दाप्-दैप्-दीङो विना दा-धा 'दामोदर'-संज्ञाः।

'दा' इत्यन्ये, 'घुः' इत्येके। दाप्-दैप्-दीङम् 'अदासीत्, अदास्त' इत्यादौ प्रयोजनम् ॥ ४१९ ॥

४२०। भुवो न गोविन्दः सि-लुकि।

अभूत्; अत्र शपं वाधित्वा सिर्जातः इति तस्य महाहरेति शप् न स्यात्, 'सकृदपि विप्रतिशेधे यद्वाधितं तद्वाधितमेव' इति न्यायात्। अभूताम् ॥ ४२० ॥

---

वमोरित्यनेन अरामस्यारामः। अभूयतेति, 'यक् कृष्णधातुके' इत्यादिना यक्। येन नाव्यवधानं सम्भवति, तेन व्यवधानेऽपि स्यादिति यका व्यवधानेऽप्यत् ॥

४१७। सिर्भू। भुतेशे परे धातोरुत्तरे सिर्भवति। पेति पूर्ववत्, एवमन्यत्रापि बोद्धव्यम् ॥

४१८। इण्। इण्—गतौ, ष्ठा—गतिनिवृत्तौ, पा—पाने, दामोदरो वक्ष्यते, भू—सत्तायामित्येतेभ्यः परस्य सेः परपदे महाहरो भवति। पिवतीति निर्देशः; पा—रक्षणे इत्यस्यादादिकस्य निरासार्थः ॥

४१९। दाप्। दाप्—लवने, दैप—शोधने, दीङ—क्षये इत्येतान् विना दा-धा-दामोदरसंज्ञा भवन्ति। 'मीनाति-मिनोति-दीङामारान्त-पाठश्चतुर्व्यूहविधिस्थाने यपि चे'ति वक्ष्यते। दाप्दैप्-दीङामिति वर्जनस्येति शेषः। अदासीदिति—नात्र सेर्महाहरः। अदास्तेति, दीङ्क्षये, मीनातीत्यादिना आत्वम्, अत्र 'स्थादामोदरयोरिरामो वैष्णवादि सावि'त्यादिना न आरामस्येरामः ॥

४२१। भुवो-भूव् भूतेशाधोक्षज-सर्वेश्वरे।

अभूवन् ; अभूः, अभूतम्, अभूत ; अभूवम्, अभूव, अभूम ॥४२१॥

४२२। अत्-प्रतिषेधो मा-मास्मयोगे।

मा भवान् भूत् ; मास्म भूत ॥ ४२२ ॥

**भावे—**

४२३। इण् भूतेश-ते भाव-कर्मणोः।

ण् इत् ; 'चिण्' ( पा° ३।१।६०, ६६ ; ६।४।१०४) ॥ ४२३ ॥

४२४। अन्तस्य वृष्णीन्द्रो नृसिंहे।

४२५। इणस्तो हरः।

अभावि। कर्मणि—अभावि ॥ ४२५ ॥

४२६। इट् रामधातुके।

४२७। सहज-सर्वेश्वरान्त-हन-ग्रह-दृशिभ्य इण्-वदिड्वा स्य-सि-कामपाल-बालकल्किषु भाव-कर्मणोः।

'दृशस्त्विड्' इति कृते पृथगारम्भे गौरवं स्यात्। अभाविषाताम्, अभविषाताम् ॥ ४२६-४२७ ॥

---

४२०। भुवो। सिलुकि सति भुवो गोविन्दो न भवति। अत्रेति, अत्र भूतेशे। तस्य सेः। हेतुमाह—सकृदपीति—सकृच्छब्द एकवार-वचनः। विप्रतिषेधे उभयप्राप्तिविरोधे ॥

४२१। भुवो। भूतेशाधोक्षजयोः सर्वेश्वरे परे भुवः स्थाने भूव् भवति ॥

४२२। अत्-प्रति। मा-शब्दस्य मास्म-शब्दस्य च योगे अत्-प्रतिषेधो भवति ॥

४२३। इण्। भावकर्मणोर्वाच्ययोर्भूतेशते परे धातोरुत्तरे इण् भवति, सर्वापवादोऽयम् ॥

४२४। अन्तस्य। नृसिंहे परे अन्तस्य वृष्णीन्द्रो भवति ॥

४२८। अरामान्यवर्णादन्ते-अन्तामन्तानां नस्य हरः।

४२९। शीङो रुट् च।

४३०। वेत्ते रुट् तु वा।

अभाविषत, अभविषत। 'षात् परस्य टवर्गयुक्तस्य' (२८२) इति—अभाविष्ठाः, अभविष्ठाः; अभाविषाथाम्, अभविषाथाम् ॥४३०॥

४३१। सस्य हरो धे।

४३२। ईश्वर-हरिमित्र-हकारेभ्यः सीध्वं, भूतेशाधोक्षजानां धस्य ढः।

---

४२५। इण। इण् उत्तरस्य तस्य हरो भवति॥

४२६। इट्। रामधातुके परे धातोरुत्तरे इड् भवति॥

४२७। सहज। स्ये, सौ, कामपाले, बालकल्कौ च परे भावकर्मणोर्वाच्ययोः सहजसर्वेश्वरान्तात् हन हिंसागत्योः, ग्रह उपादाने, दृशिर् प्रेक्षणे इत्येतेभ्यश्चोत्तरे इण्वदिड् वा भवति। ननु दृश्धातोः कथमिण्वदिट् कृतवान्, इण्वदिड् विधानस्य वृष्णीन्द्रादिकमेव प्रयोजनं, तत्तु दृश्धातोर्न सम्भवतीति चेत्तत्राह–दृशस्त्विवड़ितीति। दृशस्त्विवड़ित्यत्रापि वेति ज्ञेयम्। दृशस्त्विवड्वेति पृथगारम्भे कृते गौरवं स्यादिति। इण्वत्त्वस्य प्रयोजनाभावेपि गौरवभयेनैव न पृथगारम्भः कृत इत्यर्थः। अभविषातामिति, से रामधातुकत्वात् तस्मिन् परे 'इट् राम धातुके' इत्यनेन इट्॥

४२८। अरामान्य। अरामादन्यद्वर्णादुत्तरेषाम् अन्ते अन्तामन्तानां नस्य हरो भवति, अन्ते अन्तामन्तानामिति सौत्रत्वादसन्धिरिति ज्ञेयम्॥

४२९। शीङो। शीङः स्वप्ने इत्यस्मादुत्तरे रुट् च भवति। नस्य हरः सिध्यत्येव, रुड्विधानार्थं सुत्रमिदम्॥

४३०। वेत्ते। विद् ज्ञाने इत्यस्मादुत्तरे रुट् तु वा भवति। षात्परस्येत्यादिना थस्य ठः॥

४३१। सस्य। धे परे सस्य हरो भवति॥

४३३। इड्‌व्यवधाने तु वा।

अभाविढ्वम्, अभाविध्वम्; अभविढ्वम्, अभविध्वम्। द्वित्व-पक्षे—अभाविड्ढ्वम्; अभाविषि अभविषि; अभाविष्वहि अभ-विष्वहि; अभाविष्महि अभविष्महि ॥ ४३१-४३३ ॥

**अधोक्षजे कर्तरि– भू-णल्; णलावितौ, 'भुवो भूव्'** (४२१)—

३३४। धातोर्द्विर्वचनमधोक्षज-सन्नङ्-यङ्षु।

४३५। सर्वेश्वरपर्यन्तस्यादिभागस्य अ-नरस्य द्विर्वचनम्।

४३६। सर्वेश्वरादित्वे तु सत्सङ्गादि-न-ब-द-र-वर्जस्यान्यभागस्य।

४३७। सन्-यङोस्तु तत्सम्बन्धिनः सर्वेश्वरस्य च।

---

४३२। ईश्वर। ईश्वर-हरिमित्र-हकारेभ्य उत्तरेषां सीध्वं भूतेशाधोक्षजानां धस्य ढो भवति ॥

४३३। इड्‌व्य। इड्‌व्यवधाने तु धस्य ढो वा भवति। द्वित्वपक्षे अभाविड्ढ्वमिति, 'विष्णुजने विष्णुजनो वा, ह-रौ विनेति' ढस्य द्वित्वं, ततो 'विष्णुदासो विष्णुपदान्ते हरिघोषे च हरिगदे'त्यनेन ढस्य डः ॥

णलाविताविति—अरामशेष इति शेषः। भुवो भुविति, 'भुवो भूव् भूतेशाधोक्षजसर्वेश्वरे' इत्यनेनेति शेषः ॥

४३४। धातोः। अधोक्षज-सन्नङ्-यङ्सु परेषु धातोर्द्विर्वचनं भवति ॥

४३५। सर्वे। नरव्यतिरिक्तस्य सर्वेश्वरपर्यन्तस्य आदिभागस्य द्विर्वचनं भवति। धातोर्द्विर्वचनं भवतीति सामान्यत उक्त्वा विशेषमाह ॥

४३६। सर्वे। धातोः सर्वेश्वरादित्वे अनरस्य सर्वेश्वर पर्यन्तस्यान्य-भागस्य द्विर्वचनं, धातोः सर्वेश्वरादित्वे तु सति सत्सङ्गादिभूतान् नवदरान् वर्जयित्वा अन्यभागस्य च द्विर्वचनं भवति, अत्रापि सर्वेश्वरपर्यन्तस्य अन-रस्य चेति सम्बध्यते। सर्वेश्वरादित्वे सन्-यङोस्तु सतोः नवदरवर्जयोः सर्वेश्वरपर्यन्तयोरनरयोर्द्विर्वचनं भवति ॥

तदेवं 'भू' इत्यस्य द्विर्वचनरूपे 'भू भू' इत्यादेशे कृते—

**द्विरुक्तस्य—**

४३८। पूर्वो 'नरः'।

४३९। परो 'नारायणः'।

'पूर्वः—अभ्यासः ; परम्—अभ्यस्तम' इति प्राञ्चः ॥ ४३८-४३९॥

४४०। भू-नरस्य भोऽधोक्षजे।

४४१। हरिखड्‌गस्य हरिकमलं, हरिघोषस्य हरिगदा नरस्य।

४४२। नेट् य-सर्वेश्वरयोः।

नित्यत्वाद् भूवादेशः (४२१)—वभूव, वभूवतुः, वभूवुः ; टिदागमः परसम्बन्धी, अत इटोऽप्यधोक्षजता—वभूविथ, वभूवथुः, वभूव ;

---

४३७। सन्। सन् यङोः परयोरन्यभागस्य, सन्-यङ्-सम्बन्धिनः सर्वेश्वरस्य च द्विर्वचनं भवति ॥

४३८। पूर्वो। पूर्वो नरनामा ॥

४३९। परो। परो नारायणनामा ॥

४४०। भू-नर। अधोक्षजे परे भू-नरस्य स्थाने भो भवति ॥

४४१। हरि। नरस्य हरिखड्गस्य स्थाने हरिकमलं, नरस्य हरिघोषस्य स्थाने हरिगदा च भवति ॥

४४२। नेट्। य सर्वेश्वरयोः परयोरिट् न भवति। ननु वृष्णीन्द्रादिकं कृत्वा पश्चादेकदेशविकृतमनन्यवद्भवतीति न्यायेन भूवादेशः करणीयः किंवा प्रथममेवेत्याशंकायामाह—नित्यत्वाद्भूवादेश इति, भूवादेशस्यावश्यकत्वात् प्रथममेव भूवादेशः। वृष्णीन्द्रादिकृतेऽप्यकृतेऽपि भूवादेशो भवतीति भूवादेशस्य नित्यत्वम्। ननु वृष्णीन्द्रादौ कृते यदि भूवादेशः क्रियते तदा का क्षतिः, उभयथैव वभूवेत्यादिपदानां सिद्धत्वात् उच्यते, वृष्णीन्द्रादिकं कृत्वा भूवादेशे कृते प्रक्रियागौरवं स्यात्। ननु

वभूव वभूविव, वभूविम। भावे—वभूवे। कर्मणि—वभूवे, वभूवाते, वभूविरे ; वभूविषे, वभूवाथे, वभूविढ्वे वभूविध्वे ; वभूवे, वभूविवहे, वभूविमहे। 'वुभूव' इत्यादि केषाञ्चित्॥ ४४०-४४२॥

**कामपाले कर्तरि—**

४४३। कामपालपरपदं कपिलः।

कपिलत्वान्निर्गुणः। भूयात्, भूयास्ताम्, भूयासुः ; भूयाः, भूयास्तम्, भूयास्त ; भूयासम्, भूयास्व, भूयास्म। भावे—भाविषीष्ट, भविषीष्ट। कर्मणि—भाविषीष्ट, भाविषीयास्ताम्, भाविषीरन्। भाविषीष्ठाः, भाविषीयास्थाम्, भाविषीढ्वम् भाविषीध्वम् ; भाविषीय, भाविषीवहि, भाविषीमहि। पक्षे—भविषीष्ट इत्यादि।

बालकल्कौ कर्तरि—भविता, भवितारौ, भवितारः ; भवितासि, भवितास्थः, भवितास्थ ; भवितास्मि, भवितास्वः, भवितास्मः। भावे—भाविता, भविता। कर्मणि—भाविता, भावितारौ, भावितारः ; भावितासे, भावितासाथे, भाविताध्वे ; भाविताहे, भावितास्वहे, भावितास्महे। पक्षे—भविता इत्यादि।

कल्कौ कर्तरि—भविष्यति, भविष्यतः, भविष्यन्ति ; भविष्यसि, भविष्यथः, भविष्यथ ; भविष्यामि, भविष्यावः, भविष्यामः। भावे—भाविष्यते भविष्यते। कर्मणि—भाविष्यते, भाविष्येते, भाविष्यन्ते ; भाविष्यसे, भाविष्येथे, भाविष्यध्वे ; भाविष्ये, भाविष्यावहे, भाविष्यामहे। पक्षे—भविष्यते इत्यादि।

---

वभूविथेत्यादो कथं भूवादेशः, अधोक्षज-सर्वेश्वर-परत्वाभावादिति चेत्तत्राह—टिदागम इति ॥

४४३। काम। कामपालस्य परपदं कपिलो भवति, भूयादित्यादौ कपिलत्वात् ईशस्येत्यादिना गोविन्दनिषेधः। तस्माज्जागरणैकार्थ्यादिति—जागरणमेको मुख्योऽर्थो यस्य स जागरणैकार्थस्तस्य भावस्तस्मात्। तत्रेति—तत्र विशेषज्ञाने। सकर्मकत्वे भट्टिप्रयोगं प्रमाणयति चिचेतेति ॥

अजिते कर्तरि—अभविष्यत्, अभविष्यताम्, अभविष्यन्; अभविष्यः, अभविष्यतम्, अभविष्यत; अभविष्यम्, अभविष्याव, अभविष्याम। भावे—अभाविष्यत, अभविष्यत। कर्मणि—अभाविष्यत, अभाविष्येताम्, अभाविष्यन्त; अभाविष्यथाः, अभाविष्येथाम्, अभाविष्यध्वम्; अभाविष्ये, अभाविष्यावहि, अभाविष्यामहि। पक्षे—अभविष्यत इत्यादि ॥ ४४३ ॥

**चिती संज्ञाने**; संज्ञानम्—चैतन्यम्; तस्माज्जागरणैकार्थादकर्मकोऽयम् (३९८)। क्वचिद्विशेषे ज्ञानेऽपि दृश्यते; तत्र सकर्मकः;—"चिचेत रामस्तं क्लेशम्" इति भट्टिः (१४।६२)।

## ४४४। द्व्यक्षरधातोरन्तः पूर्वश्च सर्वेश्वरः सविष्णुचापः जागृ-कथादिवर्जं, चकासृ-प्रभृतीनामन्तः, ओरै-ओश्वि-प्रभृतीनां पूर्वः।

तत ईराम इत् ॥ ४४४ ॥

## ४४५। लघूद्धवस्य गोविन्दः, वामनो 'लघुः'।

अच्युते कर्तरि—चेतति; भावे—चित्यते। विधौ—चेतेत्;

---

४४४। द्व्यक्षर। जागृकथादिवर्जं द्व्यक्षरधातोरन्तः पूर्वश्च सर्वेश्वरः सविष्णुचापो भवति, ततश्च ओविजीप्रभृतीनामन्तः पूर्वश्च सर्वेश्वरः सविष्णुचापो भवति; चितीप्रभृतीनामन्तः सर्वेश्वरः सविष्णुचापो भवति; पूर्वसर्वेश्वरत्वाभावात्। सविष्णुचापत्वे तु सिद्धोपदेश इत्यादिना इत्त्वं भवति। जागृधातोर्वर्जनात् ऋरामस्य न सविष्णुचापत्वं तत एव नेत्त्वम्। कथादिवर्जनात्—कथादेरन्तस्य सर्वेश्वरस्य सविष्णुचापत्वाभावान्नेत्त्वं किन्तु तस्य हरो वक्ष्यते। चकासृ-प्रभृतीनामन्तः सर्वेश्वरः सविष्णुचापः स्यात्। ओरै ओश्वि-प्रभृतीनां पूर्वः सर्वेश्वरः सविष्णूचापः स्यात् ॥

४४५। लघु। लघूद्धवस्य गोविन्दो भवति। चित्यत इति—ईशस्येत्यादिना गोविन्दनिषेधः। चेतेदिति—अतो या ईरिति यारा-मस्येरामः ॥

भावे–चित्येत। विधातरि—चेततु ; चित्यताम्। भूतेश्वरे– अचेतत् ; अचित्यत ॥ ४४५ ॥

**भूतेशे—दिप्, सिः (४१७), इट् (४२६), गोविन्दः (३९५),—**

४४६। अस्ति-सिभ्यामीड् दिप्-सिपोः।

४४७। इटः सि-लोप ईटि।

अचेतीत्, अचेतिष्टाम् ॥ ४४६-४४७ ॥

४४८। सि-नारायण-वेत्तिभ्योऽन उस्।

अचेतिषुः ; अचेतीः, अचेतिष्टम्, अचेतिष्ट ; अचेतिषम्, अचेतिष्व, अचेतिष्म। भावे–अचेति ॥ ४४८ ॥

**अधोक्षजे–चिचेत ;—**

४४९। असंयोगादलिदधोक्षजः कपिलः।

४५०। स्वञ्जेर्वा।

---

४४६। अस्ति। दिप् सिपोः परयोरस् भुरीत्यस्मात्, सेश्चोत्तरे ईड् भवति ॥

४४७। इटः। ईटि परे इठ् उत्तरस्य सेर्लोपो भवति। सिहर इति पाठ उपयुक्तः। अचेतिष्टामिति, ईश्वरेत्यादिना षत्वं, षात् परस्येत्यादिना टत्वम् ॥

४४८। सि-नारा। सेर्नारायणात्, विद्–ज्ञाने इत्यस्माच्च परस्य अनः स्थाने उस् भवति। द्विर्वचने कृते परो वर्णो नारायण इत्युक्तं, जक्षादिरपि नारायण इति वक्ष्यते, द्वयोरेव ग्रहणं, अचेतीति–'इण् भूतेश-ते' इत्यादिना इण्, गोविन्दः। 'इणस्तो हर' इति तरामस्य हरः ॥

४४९। असंयोग। असंयोगात् परोऽलिदधोक्षजः कपिलो भवति ॥

४५०। स्वंजेर्वा। स्वंज-परिष्वङ्गे इत्यस्मात् परोऽलिदधोक्षजः कपिलो वा भवति। संयुक्तान्तत्वात् अप्राप्ते विभाषा ॥

### ४५१ । श्रन्थि-ग्रन्थि-दम्भिभ्यस्थल् च वा ।

'सत्सङ्गमात्रात्' इति तु न वृद्धानां मतम्। चिचिततुः, चिचितुः ; चिचेतिथ, चिचितथुः, चिचित ; चिचेत, चिचितिव, चिचितिम ; भावे—चिचिते। कामपाले—चित्यात् ; भावे—चेतिषीष्ट। बालकल्कौ—चेतिता ; भावे—चेतिता। कल्कौ—चेतिष्यति ; भावे—चेतिष्यते। अजिते—अचेतिष्यत् ; भावे—अचेतिष्यत। एवं कर्मणि ज्ञेयम्। स्फुटिर् विशरणे ; विशरणम्—विदारणम् ; 'विसरणे' इति पाठे विकाशः। धातोरन्त इरित्। कर्तरि—स्फोटति। कर्मणि—स्फुटचते ॥ ४५१ ॥

### ४५२। अरामहरस्य निमित्तमरामः पूर्ववच्च ।

ततो न नस्य हरः ; स्फुटचन्ते ; चित्यन्ते। विध्यादौ—स्फोटेत् ; स्फुटचेत। स्फोटतु ; स्फुटचताम्। अस्फोटत् ; अस्फुटचत ॥ ४५२ ॥

---

४५१। श्रन्थि। श्रन्थ-मोचनप्रतिहर्षणयोः, ग्रन्थ-सन्दर्भे, दम्भ-दम्भे इत्येभ्यः परोऽलिदधोक्षजः थल् च कपिलो वा भवति। सत्सङ्गेति-सत्सङ्गमात्रात् परोऽलिदधोक्षजस्थल्च कपिलो वा स्यादिति तु न वृद्धानां प्राचीनानां मतम्। चिचिततुरित्यादौ कपिलत्वान्न गोविन्दः। कामेति-कामपाले। चित्यादिति कपिलत्वान्न गोविन्दः। चेतिषीष्टेति भावे। बालेति-बालकल्कौ। भावेऽपि। चेतितेति-चेतिष्यत इति भावे। विशरणं विदारणमिति, विदारणे सकर्मकः, यथा स्फोटति बाणेन शत्रुं हरिः, विदारयतीत्यर्थः ; तुदादिरपि स्फुटधातुरस्ति। यथा-'स्फुटति न सा मनसिजविशिखेनेति' जयदेवः। अत्र ण्यर्थशून्यत्वादकर्मकः, न स्फुटति न विदीर्णा भवतीत्यर्थः। विकाशेऽकर्मकः ; यथा स्फुटितसरोजान्पश्येति ॥

४५२। अराम। अरामहरस्य निमित्तं अरामः पूर्ववच्च पूर्वारामवच्च भवति। स्फुटचन्त इत्यादौ अरामहर इत्यादिना अरामहरे कृते तस्य महाहरत्वात् 'अरामान्यवर्णादन्ते अन्तामन्तानां नस्य हरः' इत्य-

**भूतेशे—**

४५३। इरनुबन्धान् ङो वा भुतेश-परपदे।

ङ् इत्; अरामशेषः। 'अङ्' पा। अस्फुटत्, अस्फोटीत्; अस्फुटताम्, अस्फोटिष्टाम्। इटो व्यवधानतया निर्देशान्न निमित्तत्वम्; ततो न ढत्वम्—अस्फोटिध्वम्। एवम् अचेतिध्वम्॥ ४५३॥

**अधोक्षजे—**

४५४। नर-विष्णुजनानामादिः शिष्यते।

४५५। शौरिशिरस्कस्तु सात्वतः।

अन्यो विष्णुजनो न रक्ष्यते। पुस्फोट, पुस्फुटे। कामपाले—स्फुटयात्, स्फोटिषीष्ट। बालकल्कौ—स्फोटिता। कल्कौ—स्फोटिष्यते। अजिते—अस्फोटिष्यत्, अस्फोटिष्यत। एवं श्च्युतिर् क्षरणे; दम्भ्यादिरयम्; 'सस्य शश्चवर्गयोगे' (२४६)—श्च्योतति; अश्च्युतत्, अश्च्योतीत्; चुश्च्योत। एवं च्युतिर् आसेचने॥ ४५५॥

---

नेन नस्य हरः स्यादित्यरामस्य पूर्ववत्त्वं विहितमतो न नस्य हरः। स्फुटचेतेति कर्मणि एवमन्यत्र च॥

४५३। इरनु। भूतेशस्य परपदे इरनुबन्धाद्धातोरुत्तरे ङो वा भवति। अस्फुटदिति—ईशस्येत्यादिना गोविन्दनिषेधः। ननु अस्फोटिध्वमित्यादौ इट ईश्वरत्वात् 'ईश्वरहरिमित्रे'त्यादिना ढत्वं कथं नस्यादिति चेत्तत्राह—इट इति। न निमित्तत्वमिति, ढत्वे इति शेषः। ततो न ढत्वमिति; अन्यथा इड़्व्यवधाने तु वेत्यत्र इटस्तु वेति विदध्यात्॥

४५४। नर। नरविष्णुजनानामादिः शिष्यते, अवशिष्टतया स्थाप्यते, अन्यो विष्णुजनो न रक्ष्यते। यथा— प्रच्छादीनां प्रादेर्द्विर्वचने कृते पादेरेव स्थितिर्नतु रादेः॥

४५५। शौरि। शौरिशिरस्कस्तु सात्वतः शिष्यते, अन्यो न रक्ष्यते। पुस्फोटेति, 'हरिखड़्गस्य हरिकमलमि'त्यादिना फस्य पत्वम्। अश्च्युतदिति, 'इरनुबन्धान् ङो वे'त्यादिना ङः॥

**मन्थ् विलोड़ने—मन्थति ;—**

४५६। अनिरामेतां विष्णुजनान्तानामुद्धवनरामहरः कंसारौ।

४५७। लगि-कप्योरुपताप-शरीरविकारयोः।

मथ्यते। भूतेशे—अमन्थीत्, अमन्थि। अधोक्षजे—ममन्थ, ममन्थे। कामपाले—मथ्यात्, मन्थिषीष्ट ॥ ४५६-४५७ ॥

**कुथि हिंसा-संक्लेशयोः ; इराम इत्—**

४५८। इरामेद्धातोर्नुम्।

उपदेश एवायं नुम् ; कुन्थति। इरामेत्वान्न नस्य हरः (४५६)—कुन्थ्यते ॥ ४५८ ॥

४५९। कवर्ग-नरस्य चवर्गः।

चुकुन्थ। लगि गतौ—विलग्यते। कपि चलने—विकप्यते। उपतापादिभ्यामन्यत्र तु—लंग्यते ; कम्प्यते ॥ ४५९ ॥

**षिधु गत्याम्, उराम इत् ;—**

४६०। धात्वादेः षः सः।

---

४५६। अनि। इराम इत् येषां ते इरामेतः, न इरामेतः अनिरामेतस्तेषां विष्णुजनान्तानां कंसारौ उद्धव-नरामस्य हरो भवति ॥

४५७। लगि। उपतापशरीरविकारयोर्वर्तमानयोर्लगिगतौ, कपिचलने इत्येतयोरुद्धव-नरामस्य हरो भवति। इरामेत्त्वादप्राप्ते विधानम् ॥

४५८। इरामे। इराम इद् यस्य स इरामेत्, इरामिच्चासौ धातुश्चेति इरामेद्धातुस्तस्य नूम् भवति। उपदेशेति—उपदेश एव उच्चारणमात्रएव ॥

४५९। कवर्ग। कवर्ग-नरस्य स्थाने चवर्गो भवति। विलग्यत इति उपतापोऽत्रार्थः। विकप्यत इति—शरीरविकारोऽत्रार्थः। उपतापादिभ्याम् उपतापशरीरविकाराभ्याम् ॥

४६१। सर्वेश्वर-दन्त्यपरा धातोरादिसाः षोपदेशाः।

४६२। स्वक्क-स्विद-स्वद स्वञ्ज-स्वप-स्मिङाञ्च।

४६३। सृप्लृ-सृ-स्तृ-सृज्-स्तॄ-स्त्या-सूच-सूत्र-स्तन-संग्राम-सार-साम-सभाज-सेक्र-स्तेन-स्तोम-वर्जम्।

सूत्र-स्थूल-सुखाश्च धातुप्रदीपे दृश्यन्ते। दन्त्यपरत्वेऽपि स्वक्कादीनां पाठो नियमार्थस्तेन स्वृ-प्रभृतीनां न स्यादिति। सेधति ॥ ४६३ ॥

---

४६०। धात्वादेः। धात्वादेः षरामः सरामो भवति। ष इत्यत्र षस्येति पाठः सभ्यः; कार्यस्थानेतु षष्ठिकेत्युक्तत्वात्, ष इति षष्ठचन्तं वा, ष इत्यराम उच्चारणार्थः ॥

४६१। सर्वे। सर्वेश्वराश्च दन्त्याश्च सर्वेश्वरदन्त्यास्ते पराः परभूता येभ्यस्तादृशा धातोरादिसाः षोपदेशाः। सरामाणां षोपदेशत्वं कष्टप्रतिपाद्यं, तस्मात् सर्वेश्वरदन्त्यपरसादयो धातवः षोपदेशा इति सुसङ्गतः पाठः ॥

४६२। स्वक्क। ष्वक्क गतौ, ष्विद गात्रप्रक्षरणे, ष्वद आस्वादने, ष्वन्ज परिष्वङ्गे (आलिंगे), ञिष्वप शये, ष्विङ् ईषद्धसने इत्येषाञ्च आदिसाः षोपदेशाः ॥

४६३। सृप्लृ। सृप्लृ गतौ, सृ गतौ, स्तृञ् आच्छादने स्वादिः, सृज् विसर्गे, स्तॄञ आच्छादने क्र्यादिः, स्त्यै शब्दसङ्घातयोः, सूच पैशुन्ये, सूत्र-वेष्टने, स्तन शब्दे, संग्राम युद्धे, सार दौर्बल्ये, साम सान्त्वने, सभाज संपूजायां, सेक्र गतौ, स्तेन चौर्ये, स्तोम श्लाघायाम् इत्येतान् वर्जयित्वा एते सर्वेश्वर-दन्त्यपरसादयोऽपि न षोपदेशा इति। सत्र सन्तानक्रियायां, स्थूल परिवृंहणे, सुख-तत्क्रियायाम् इत्येते च धातुप्रदीपे दृश्यन्ते, वर्जन इति शेषः। दन्त्यपरत्वेऽपीति—तेन स्वृ-प्रभृतीनां न स्यादिति, षोपदेशत्वमिति शेषः। दन्त्यपरत्वेऽपि स्वक्कादीनां पाठो नियमार्थ इति चेत्तर्हि स्तृ, स्तॄ, स्त्या, स्तन, स्तेन, स्तोम इत्येते कथं वर्ज्यन्ते, उच्यते, वरामपरत्वेन ये दन्त्यपरसादयस्तेषां मध्ये स्वक्वादीनामेव षोपदेशत्वं न स्वृ-प्रभृतीनां; तराम-

४६४। उपेन्द्रादपि षोपदेशस्य षत्वं क्वचित्।

निषेधति। अद्व्यवधानेऽपि षत्वम् —न्यषेधत्। षिधू शास्त्रे माङ्गल्ये च; ऊराम इत्; शास्त्रम्—अनुशासनम्; माङ्गल्यम्—शिवम्; सेधति शिष्यं गुरुः; सेधति हरिभक्तिः॥ ४६४॥

४६५। स्वरति-सूति-सूयति-धूञ्-ऊदित इड् वा।

असेधीत्, असेधिष्टाम् इत्यादि॥ ४६५॥

४६६। विष्णुजनान्तानामनिटां वृष्णीन्द्रः सौ परपदे।

'यादवमात्रे हरिकमलम्' (८९)—असैत्सीत्॥ ४६६॥

४६७। वामन-वैष्णवाभ्यां सेर्हरो वैष्णवे, न त्विटः।

४६८। हरिघोषात्त-थोर्धो धा-वर्जम्।

असैद्धाम् इत्यादि। वस्यापि वैष्णवत्वाभावात् सेर्हराभावः;—

---

परत्वेन ये दन्त्यपरसादयस्तेषां मध्ये स्तृप्रभृतीनामेव वर्जनं भवति। अन्येषां तु षोपदेशत्वं भवतीति न कश्चिद्विरोधः॥

४६४। उपे। उन्द्रपेन्द्रादप्युत्तरस्य षोपदेशस्य सस्य षत्वं क्वचिद्-भवति। अद्व्यवधानेऽपीति—षत्वं भवतीति शेषः। सेधति शिष्यं गुरु-रिति, अनुशासनमत्रार्थः। सेधति हरिभक्तिरिति—शिवमत्रार्थः॥

४६५। स्वरति। स्वृ-शब्दोपतापयोः, सूङ्-प्राणिगर्भविमोचने अदादिर्दिवादिश्च, धूञ-कम्पने, ऊत् इत् यस्य स ऊदित्, इत्येतेभ्य उत्तरे इड् वा भवति॥

४६६। विष्णु। परपदे सौ परे सति अनिटां विष्णुजनान्तानां वृष्णीन्द्रो भवति। 'यादवमात्रे हरिकमलम्'इति धस्य तः॥

४६७। वामन। वैष्णवे परे वामनवैष्णवाभ्यां परस्य सेर्हरो भवति, इट् उत्तरस्य सेर्हरो न भवति। इटो वामनत्वात् प्राप्ते निषेधः, तेन असेधिष्टामित्यादौ न सेर्हरः॥

**उदूठौ यत्र विद्येते प्रत्ययोऽच्प्रभवश्च यः ।**

**अन्तःस्थं वं विजानीयात्तदन्यो वर्ग्य उच्यते ॥ ***

इति स्मरणात्—असैत्स्व, असैत्स्म । कर्मणि—असेधि, असेधिषाताम् ॥ ४६७-४६८ ॥

४६९ । ऋद्वयाद्विष्णुजनान्तेशोद्धवाच्च वैष्णवादि-सि-कामपालौ कपिलावात्मपदे, गमेस्तु वा ।

असित्साताम् ॥ ४६९ ॥

४७० । कृ-सृ-भृ-वृ-स्तु-द्रु-श्रु-स्रुभ्य एवाधोक्षज-मात्रे नेट् ।

अन्येभ्यस्त्वनिड्भ्योऽपीट् इति नियमादधोक्षजे नित्यमिट्—सिषेधिथ ; सित्सीष्ट सेधिषीष्ट ॥ ४७० ॥

---

४६८ । हरि । धावर्जं हरिघोगादुत्तरयोस्तथोः स्थाने धो भवति । वस्यापीति । कथं वैष्णवत्वाभाव इति चेत्तत्राह—उदूठाविति । यत्र व उदूठौ विद्येते भवतः, यो वः प्रत्ययः, अच्प्रभवश्च यो वः, तं वं अन्तस्थं विजानीयात् । असैत्स्वेत्यत्र वस्य प्रत्ययत्वादन्तस्थत्वम् ॥

४६९ । ऋद्वयात् । वैष्णवादी च तौ सि-कामपालौचेति वैष्णवादिसि-कामपालौ ; ऋद्वयात्—विष्णुजनान्तेशोद्धवाच्च परौ वैष्णवादिसि-कामपालौ आत्मपदे कपिलौ भवतः, गमेस्तु वैष्णवादिसि-कामपालौ कपिलौ वा भवतः । वैष्णवादीति विशेषणात् असेधिषातां, असेधिष्टेत्यादौ न कपिलत्वम् । अन्यथा टिदागमः परसम्बन्धीति इटोऽपि कपिलत्वेन गोविन्दनिषेधः स्यात् । असित्सातामिति, कपिलत्वाद्गोविन्दनिषेधः ॥

४७० । कृ-सृ । डुकृञ् करणे, सृ गतौ, डुभृञ् धारणपोषणयोः, वृङ् सम्भक्तौ, वृञ् वरणे, द्वयोरेव ग्रहणं, ष्टुञ् स्तुतौ, दु-द्रु-स्रु गतौ, श्रु श्रवणे, इत्येतेभ्य एव अधोक्षजमात्रे परे इट् न भवति, तेन अन्येभ्यस्तु अनिड्-भ्योऽपि इड़िति ॥

---

* उदूठौ यत्र विद्येते यो वः प्रत्ययसन्धिजः ।

अन्तःस्थं तं विजानीयात्तथोपसर्गयोर्द्वयोः ॥

**गद् व्यक्तायां वाचि--**

४७१। विष्णुजनादेर्लघोररामस्य वृष्णीन्द्र इड़ादौ सौ वा परपदे।

अगादीत्, अगदीत् ॥ ४७१ ॥

४७२। उद्धवारामस्य वृष्णीन्द्रो नृसिंहे।

भावे—अगादि। जगाद ॥ ४७२ ॥

४७३। उत्तम-णल् नृसिंह-कार्यकरो वा।

जगाद, जगद ॥ ४७३ ॥

४७४। सर्वेश्वरादेर्वृष्णीन्द्रोऽत्प्रसङ्गमात्रे।

'आट्वृद्धिः' च पा ( ६।४।७२)। आटत्। आटीत्। विष्णुजनादित्वाभावात्—मा भवानटीत् ॥ ४७४ ॥

**अधोक्षजे द्विर्वचने कृते लोपापवादमाह—**

४७५। नरादेररामस्य त्रिविक्रमः।

---

४७१। विष्णु। परपदे परे इड़ादौ सौ परे विष्णुजनादेर्धातोर्लघोररामस्य वृष्णीन्द्रो भवति। सर्वेश्वरव्यवधाने विष्णुजनादेर्लघोरिति न मन्यन्ते, तेन अचकासीदित्यादौ न वृष्णीन्द्र इति वक्ष्यते ॥

४७२। उद्धवा। नृसिंहे परे उद्धवारामस्य वृष्णीन्द्रो भवति। जगादेति—कवर्गनरस्य चवर्ग इत्येनेन गस्य जत्वम् ॥

४७३। उत्तम। उत्तमपुरुषस्य णल् नृसिंहकार्यकरो वा भवति ॥

४७४। सर्वे। अत्प्रसङ्गमात्रे सर्वेश्वरादेर्धातोर्वृष्णीन्द्रो भवति, आदेरिति शेषः। आट् वृद्धिश्च, पेति ; अस्माकं मते सर्वेश्वरादेर्धातोरत्प्रसङ्गमात्रे आदेर्वृष्णीन्द्रो भवति, नत्वत्, प्रयोजनाभावात्, पाणिनीयानान्तु मते आट् वृद्धिश्च भवतीत्यर्थः। विष्णुजनादित्वाभावादिति, विष्णुजनादेर्लघोरित्यादिना न वृष्णीन्द्र इति शेषः। अधोक्षज इति। लोपापवादलक्षणमाह लोपस्तु अरामहर ए अयोरित्यादिना विहितः ॥

४७६। तस्मान्नुड् द्विविष्णुजने धातौ।

आट, आटतुः ॥ ४७५-४७६ ॥

**रद् विलेखने—रराद ;—**

४७७। आदेशहीन-नराद्यक्षरस्य धातोरसंयुक्तविष्णुजनमध्य-स्यारामस्य एत्वं नरादर्शनंच कपिलाधोक्षजे सेट्थलि च।

४७८। तॄ-फल-भज-त्रपां, नलोपि-ग्रन्थि-श्रन्थि-दन्भीनाञ्च।

---

४७५। नरादे। नरश्चासौ आदिश्चेति नरादिस्तथाभूतस्य अरामस्य त्रिविक्रमो भवति। ननु नरारामस्येति कृते को दोष इति चेत्तत्रोच्यते, नरस्यारामः नरारामस्तस्येति अनिष्टविग्रहे पपाटेत्यादावपि त्रिविक्रमः स्यात् ॥

४७६। तस्मात्। द्विविष्णुजने धातौ परे तस्मात् त्रिविक्रमादुत्तरे नुड् भवति ॥

४७७। आदेश। नरस्य आद्यक्षरं नराद्यक्षरं, आदेशहीनं नराद्य-क्षरं यस्य, तादृशस्य धातोरसंयुक्तविष्णुजनयोर्मध्यस्य मध्यवर्तिनोऽरामस्य स्थाने कपिलाधोक्षजे सेट् थलिच परे एत्वं भवति, नरादर्शनञ्च भवति, असंयुक्तेति, एकैकहलौ सन्निहितौ यस्य तादृशस्यैवारामस्य एत्वं भवतीति। ततक्षुः, तत्सरुरित्यादौ न भवति। ननु आदेशहीननरस्येति कृते को दोष इति चेत्तत्रोच्यते—आदेशहीन-नरस्येति कृते जगदतुरित्यादावपि एत्वं नरा-दर्शनञ्च स्यात्, यतोऽराम सहितगराम एव नरः, आदेशस्तु अरामरहित-गरामस्य, सारामगरामस्य आदेश इति न वाच्यं, यतो हि गतावित्यस्य हे-र्द्विर्वचने कृते हरामस्य जत्वं न स्यात्, तस्मादरामरहितस्यैव जत्वमिति। इदानीन्तु जगदतुरित्यादौ आदेशहीननराद्यक्षरत्वाभावादेत्वं, नरादर्शनञ्च न भवतीति न कश्चिद्विरोधः ॥

४७८। तॄ-फल। तॄ प्लवनतरणयोः, फलनिष्पत्तौ ञिफला विश-रणे द्वयोरेव ग्रहणं, भज सेवायां, त्रपुष लज्जायाम् इत्येतेषां नलोपिनां

४७९। जॄ-भ्रमु-त्रस-फणादीनां हिंसार्थ-राधश्च वा।

रेदतुः, रेदुः; रेदिथ। आदेशयुक्तस्य तु—जगदतुः। संयुक्त-विष्णुजनमध्यस्य तु—ननन्दिथ॥ ४७७-४७९॥

**णद् अव्यक्तशब्दे—**

४८०। धात्वादेर्णो नः।

४८१। सर्वे नादयो णोपदेशा नॄ-नृति-नर्दि-नन्दि-नक्कि-नाथि-नाधि-नटिवर्जम्।

नाथौ तु भाष्ये णोपदेशत्वं; पारायणे तु न। नदति॥४८०-४८१॥

---

श्रन्थमोचनप्रतिहर्षणयोः, ग्रन्थ सन्दर्भे, दन्भ दम्भे इत्येषाञ्च अरामस्य एत्वं, नरादर्शनञ्च भवति, तरतेः सत्सङ्गादृदन्तस्येत्यादिना गोविन्दे कृते, शसुददवरामादीनां गोविन्दारामस्य च नैत्वादीत्येनेन निषेधे प्राप्ते फल भजोरादेशहीननराद्यक्षरत्वाभावेनाप्राप्ते, त्रपस्त्वरामस्य असंयुक्त-विष्णुजनमध्यत्वाभावादप्राप्ते च विधानं, ग्रन्थेरादेशहीननराद्यक्षरत्वा-भावात्, अरामस्यासंयुक्तविष्णुजनमध्यत्वाभावाच्चाप्राप्ते विधानम्। दम्भेस्तु पूर्वेणैव सिद्धे पृथगुपादानं नियमार्थं, नलोपिनां मध्ये दम्भेरेवेति॥

४७९। जॄभ्रमु। जॄष झॄष वयोहानौ, भ्रमु अनवस्थाने दिवादिः, भ्रमु चलने भ्वादिः, द्वयोरेव ग्रहणं, त्रसी उद्वेगे एषां, फणादीनां हिंसार्थ-राधश्च एत्वं, नरादर्शनञ्च वा भवति। अप्राप्ते विभाषेयम्। फणादयः सप्त भ्वाद्यन्तर्गणा एकत्रैव पठिताः। यथा—फण गतौ, राजृ दीप्तौ, टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ, स्यमु-स्वन् शब्दे। हिंसार्थेति—यद्यपि राध-साध संसिद्धाविति राध बृद्धाविति पठ्यते, तथापि धातूनामनेकार्थत्वात्तस्य हिंसार्थे बृत्तिरिति ज्ञेयम्। टुनदि समृद्धौ, इरामेत्त्वान्नुम्॥

४८०। धात्वा। धात्वादेर्णो नो भवति, णो न इति षः स इति-वद् बोद्धव्यम्॥

४८१। सर्वे। नॄ नये क्र्यादिः, नृति गात्रविक्षेपे दिवादिः, नर्द शब्दे, टुनदि समृद्धौ, नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु, चत्वारो भ्वादयः।

## ४८२। उपेन्द्रात् णोपदेशस्य णत्वम्।

प्रणदति ॥ ४८२ ॥

## ४८३। उपेन्द्रान्नेर्णत्वं नद-गद-पत-पद-बह-बप-हन्ति-द्राति-मा-या-दामोदर-शमु-सो-चिञ्-दिहि-बाति-प्साति-ष्वद्-व्यवधानेऽपि, क-खादि-सहज-षान्तौ विना शेषे तु वा।

'मा' इति मेङ्माङोर्ग्रहणम् ; 'मातेरपि' इति केचित्। प्रणिनदति, प्रण्यनदत्। एवं प्रणिगदति इत्यादि। ननाद, नेदतुः। अर्द गतौ याचने च—-अर्दति ; प्रण्यर्दति प्रन्यर्दति। 'कखादिसहजषान्तौ विना' इति किम् ? प्रनिकषति, प्रनिखनति। भूतेश्वरे—आर्दत्। 'नरादे'-इति, 'तस्मान्नुड्' इति ; उटावितौ—आनर्द। इदि परमैश्वर्ये, इराम इत् ; 'इरामेद्धातोर्नुम् (४५८)—इन्दति ऐन्दत् ॥ ४८३ ॥

---

नट नृतावित्यपि भ्वादिः, नक्क नाशने चुरादिः, एतान् वर्जयित्वा सर्वे नादयो णोपदेशाः, ण-उपदेश आद्योच्चारणं येषां ते, एवं षोपदेशा ज्ञेयाः। नाटीति केचिद्वदन्ति, तन्मते नट अवङ्कसन्दने चुरादिः, भ्वादिस्तु णोपदेश-एव। नाथौ त्विति। अत्र पारायणमतमङ्गीकृतम्।।

४८२। उपेन्द्र। उपेति सुगमम्।।

४८३। उपे। नद अव्यक्तशब्देगद व्यक्तायां वाचि, पत्लृ गतौ, पद गतौ, वह प्रापणे, डुवप् वीजतन्तुसन्ताने, हन-हिंसागत्योः, द्रा कुत्सायां, मेङ्–प्रणिदाने भ्वादिः, माङ्मामे ह्वादिः, या प्राप्तौ, दामोदर उक्त, शमु उपशमे, षोऽन्तकर्मणि, चिञ् चयने, दिह प्रलेपे, वा गतिगन्धनयोः, प्सा-भक्षणे, इत्येतेषु परेषु उपेन्द्रादुत्तरस्य नेरुपेन्द्रस्य णत्वं भवति, अद्व्यव-धानेऽपि भवति। कश्च खश्च कखौ, कखावादी यस्य स कखादिः, कखादिश्च सहजषान्तश्च कखादिसहजषान्तौ, तौ विना नदादिभ्योऽन्यस्मिन् धातौ परे उपेन्द्रादुत्तरस्य नेर्णत्वं वा भवति, अद्वयवधानेऽपि वा भवति। मातेरिति, मा माने इत्यस्यादादेः। कखादिसहजषान्तौ विनेति किं,

४८४। ऋच्छ-वर्जित-गुर्वीश्वरादेरामधोक्षजे।

आमो मस्येत्त्वनिषेधः ॥ ४८४ ॥

४८५। आमः कृ-भ्वस्तयोऽनुप्रयुज्यन्ते।

४८६। कृञ आमन्तधातुवत् परपदादि।

४८७। अस्भुवोस्त्वस्भूवत्।

४८८। नर-ऋरामस्यारामः।

इन्दाञ्चकार ॥ ४८५-४८८ ॥

४८९। आमो मस्य हरिवेणु-विधिर्वा।

इन्दांचकार। कर्तरि न त्विन्दाञ्चक्रे ॥ ४८९ ॥

---

प्रनिकुन्थति, प्रनिखनति, प्रनिघोषति, एवमन्यदपि बोद्धव्यम्। अधोक्षजे 'नरादेररामस्य त्रिविक्रम', तस्मान्नुड़ित्यादिना नुट्॥

४८४। ऋच्छ। अधोक्षजे परे ऋच्छवर्जिताद् गुर्वीश्वरादेर्धातोरुत्तरे आम् भवति। आम्। आमो मस्य इत्वनिषेधो भवति॥

४८५। आमः। आम उत्तरे डुकृञ् करणे, भू सत्तायाम्, अस्भूरित्येते अनुप्रयुज्यन्ते॥

४८६। कृञ। आमन्त इव आमन्तवत्, कृञ उत्तरे आमन्तवत् परपदादि भवति; अत आमन्तस्यात्मपदित्वे कृञोऽप्यात्मपदं भवति, ईहाञ्चक्रे इत्यादि। भुवोऽस्तेश्च कर्तरि परपदमेव, नत्वामन्तवत् परपदादि, ईहाम्बभूव ईहामासेत्यादि॥

४८७। अस्। अस्भु सुगमम्॥

४८८। नर। नर-ऋरामस्य स्थाने अरामो भवति। इन्दाञ्चकारेति—अविष्णुपदान्तस्येत्यादिना मस्य विष्णुचक्रं, हरिवेणुरित्यादिना विष्णुचक्रस्य ञरामः॥

—२५

४९०। द्विर्वचननिमित्त-सर्वेश्वरपरमात्रे सति यः सर्वेश्वरस्यादेशः, स स्थानिवत् द्विर्वचने एव कर्तव्ये।

अत्र लोपोऽप्यादेशवत्। ततो गोविन्द-वृष्णीन्द्रौ, यादयश्चादया-दयश्चादेशा आरामोद्धव-णि-लोपाश्च स्थानिवत्। ततो ररामादेशस्य स्थानिवत्त्वे कृते क्ररामस्य द्विर्वचनम्। अतः पश्चादेव द्विर्वचनं यत्,

---

४८९। आमो। मस्येत्यत्र विष्णुचक्रस्येति ज्ञेयम्। आमो विष्णु-चक्रस्य स्थाने हरिवेणुविधिर्वा भवति, अविष्णुपदान्तत्वात् नित्यं प्राप्ते विभाषा। कर्तरि नत्विन्दाञ्चक्र इति, इन्दधातोः परपदित्वादिति शेषः॥

४९०। द्विर्वचन। द्विर्वचनस्य निमित्ते सर्वेश्वरे परमात्रे सति, यः सर्वेश्वरस्य आदेशः स द्विर्वचन एव कर्तव्ये स्थानिवद्भवति परमात्र इति, व्यवधानेन अव्यवधानेन वेत्यर्थः। द्विर्वचन एवेति, नान्यस्मिन् कार्ये कर्तव्ये इत्यर्थः। अत्रेति। अत्र लोपोऽपि आदेशवत् मन्तव्य इति शेषः। यदुक्तं तदेव विवृणोति तत इति। आरामेति—आरामोद्धव-णिलोपाश्च स्थानिवद्भवन्ति इत्यर्थः; आराम इति—आरामश्च उद्धवश्च णिश्च, ते आरामोद्धव-णयः, लोपश्च लोपश्च लोपश्च लोपाः, आरामोद्धव-णय एव लोपा आरामोद्धव-णिलोपाः। अथवा लोपश्चेत्यत्र लिपिकारप्रमादात् बहुवचनान्तप्रयोगः, लोपएव पाठः सभ्यः, तर्हि आरामोद्धव-णीनां लोपश्चेत्येवं व्याख्यातम्। आराम। लोपस्य प्रयोजनं, ग्लै हर्षक्षये इत्यत्र 'आरामहरः कंसारिसर्वेश्वरे'त्यादिना आरामहरे सति पश्चात् द्विर्वचने सेत्स्यति। उद्धव-लोपस्य तु प्रयोजनं 'गम-हन-जनित्यादिना विहितोद्धवारामहरस्या'नेन सूत्रेण स्थानिवत्त्वे जग्मतुरित्यादौ वक्ष्यते, णि-लोपस्य आटिटदित्यादौच। तत इति ररामादेशस्य ररामरूपादेशस्य। ननु प्रथममेव द्विर्वचनं क्रियतामिति चेत्तत्राह अत्रेति, सेत्स्यतीति सिद्धं भविष्यतीत्यर्थः, दुद्यूष्यतीति, दिवु-क्रीड़ादौ सन् ऊठि षत्वेच कृते द्विर्वचनं, तिप्, शप्, देवितुमिच्छतीत्यर्थः। द्विर्वचननिमित्तसर्वेश्वर इत्युक्तत्वादत्र सर्वेश्वरादेशो न स्थानिवत्। कृ-सृ-भृ-वृ इत्यादिना इड़्निषेधः। मात्रेति—उवोखेत्यत्र द्विर्वचन एव कर्तव्ये ओरामस्य स्थानिवत्त्वं मात्रग्रहणादेव भवति, अन्यथा खरामस्य व्यवधाने

तत् प्रयोजनं 'दुद्यूषति' (८२६) इत्यादौ सेत्स्यति। इन्दाञ्चक्रतुः इन्दाञ्चक्रुः। 'कृ-सृ-भृ वृ'- (४७०) इति नेट्—इन्दाञ्चकर्थ, इन्दाञ्चक्रथुः, इन्दाञ्चक्रु ; इन्दाञ्चकार इन्दाञ्चकार, इन्दाञ्चकृव, इन्दाञ्चकृम। इन्दांवभूव इत्तादि, इन्दामास इत्यादि। 'मात्र'-ग्रहणात् उवोख इति सेत्स्यति, आटिटत् इति च॥ ४६०॥

**उख् गतौ-ओखति ;--**

४६१। उपेन्द्राद्वयहर ए-ओ-रामयोरिनेधौ विना।

४६२। नामधातौ वा।

प्र-ओखति इति स्थिते—असिद्धत्वात् न सत्सङ्गान्तहरः। अतः प्रोखति। 'इनेधौ विना' इति किम्? उपैति ; प्रैधते ; औखत् ; औखीत्। अधोक्षजे—॥ ४६२॥

---

नस्यादिति, उवोखेति निकट एव वक्ष्यते। आटिटदिति चेति, सेत्स्यति इति शेषः ; आटिटदित्यस्य सिद्धेर्मात्रग्रहणं न हेतुः, किन्तु अत्र लोपोऽप्यादेशवदिति यदुक्तं तदेव। आटिटदिति ण्यन्तादाटिधातोर्भूतेशदिप्, अङ्णेर्हरः, लोपोऽप्यादेशवदिति द्विर्वचन एव कर्तव्ये आरामोद्धवेत्यनेन णि-लोपः स्थानिवत्, ततष्टेर्द्विर्वचनम्॥

४६१। उपे। एरामे ओरामे च परे उपेन्द्रसम्बन्धिनोऽद्वयस्य हरो भवति, इनेधौ विनेति, इन् गतौ ए-ध वृद्धौ इत्येतौ विना, एतयोरेरामे परे न भवतीत्यर्थः॥

४६२। नाम। नामधातौ स्थितें एरामे ओरामे च परे उपेन्द्राद्वयहरो वा भवति। ननु प्रोखतीत्यत्र अरामहरे कृते तस्य महाहरत्वात् सत्सङ्गान्तस्येत्यादिना सत्सङ्गान्तहरः कस्मान्न भवतीति चेत्तत्राह असिद्धत्वादिति, क्वचिदन्तरङ्गे कार्ये क्रियमाणे तदनिमित्तं वहिरङ्गमसिद्धं स्यादिति न सत्सङ्गान्तहरः। अत्र अन्तरङ्गकार्यं सत्सङ्गान्तहरः, वहिरङ्गमरामहरः। इनधौ विनेति किम्? उपैति, प्रैधते। कुत्रचित् पुस्तके एतत् प्रत्युदाहरणं दृश्यते, तत्तु न ग्रन्थकारलिखितमिति लिखितम्॥

## ४९३। नरेदुतोरियुवावेकात्मकेतरसर्वेश्वरे।

द्विर्वचने कृते परस्य न स्थानिवत्त्वम् ; तत उव्। आम् तु न स्यात्, 'गुर्वीश्वरादेः' इति सहजस्यैव ग्रहणात्। उवोख, ऊखतुः। कथमिदेराम् ? परानपेक्षत्वेन, नुमः सहजत्वात्। गोविन्दस्तु कंसारिवर्जमपेक्षते। अन्चु गति-पूजनयोः—'तवर्गस्य चवर्ग'-( २४२ ) —अञ्चति। कर्मणि गतौ—अच्यते ; 'अनिरामेतां' (४५६) इति नस्य हरः ॥ ४९३ ॥

## ४९४। अञ्चेः पूजायां नलोपाभावः।

अञ्च्यते ; आनञ्च, आनञ्चतुः, आनञ्चुः। कामपाले गतौ-अच्यात् ; पूजायाम्—अञ्च्यात्। आछि आयामे आञ्छति—॥४९४॥

## ४९५। नरस्य वामनः।

'नरादे'-( ४७५ ) इति कृते, ततो नुट्—आनञ्छ। 'न' इति बहवः। आञ्छ। षस्ज गतौ—॥ ४९५ ॥

---

४९३। नरे। एकात्मकादितरस्मिन् सर्वेश्वरे परे नरेदुतोः स्थाने इयुवौ भवतः। उवोखेति प्रथमं गोविन्दः, तत ओरामस्य स्थानिवत्त्वादुरामस्य द्विर्वचनम् एव कर्तव्य इति नियमाद् द्विर्वचने कृते, परस्य ओरामस्य न स्थानिवत्त्वं, ततः सर्वेश्वरस्य एकात्मकेतरत्वादुर्। गोविन्दे कृते गुर्वीश्वरत्वादुखधातोराम् कस्मान्नस्यादिति चेत्तत्राह—आम्त्विति, अस्माद्धातोराम् तु न स्यात्, गुर्वीश्वरादेरित्यत्र सहजस्यैव ग्रहणात्, सहजगुर्वीश्वरादेरेव ग्रहणात्। कथमिति सिद्धान्तमाह—परानपेक्षत्वेनेति। गोविन्दस्तु कंसारिवर्जमपेक्षत इति न सहजत्वं, परापेक्षत्वात्। अच्यत इति, 'अनिरामेतामित्यादिना नरामहरः'॥

४९४। अञ्चेः। पूजायामर्थे वर्तमानस्य अञ्चेर्नलोपाभावो भवति। आनञ्चेति—नरादेरित्यादिना त्रिविक्रमः, तस्मान्नुड़ित्यादिना नुट्। आछि आयाम इति, आयामो दैर्घ्यम्। 'दैर्घ्यमायाम आरोह' इत्यमरः॥

४९६। सस्य जो जे, न तु वैष्णवे।

सज्जति। वैष्णवग्रहणम् अमांक्षीदित्यादौ सेत्स्यति। वज् गतौ—॥ ४९६ ॥

४९७। शसुददवरामादीनां गोविन्दारामस्य च नैत्वादि।

'शसिति द्वितालव्य' इत्येके। वजोऽयं दन्तौष्ठ्यादिगण-पठितः। तत्प्रसङ्गाद्वरामादिरपि तदादिरेव ; ववजतुः। व्रज गतौ—॥ ४९७ ॥

४९८। वद-व्रजयोर्वृष्णीन्द्रः सौ परपदे।

---

४९५। नरस्य। नरस्य वामनो भवति। आनाञ्छेति—वामने कृते नरादेरिति त्रिविक्रमः, ततो नुट्। नेति बहव इति, त्रिविक्रमो, नुट्च न भवतीति बहूनां मतं, तन्मते आञ्छेति॥

४९६। सस्य। जे परे सस्य स्थाने जो भवति, वैष्णवे तु विषये न भवति। अमाङ्क्षीदिति, टुमस्जो शुद्धौ भुतेश-दिप्, सिः, अस्ति-सिभ्यामित्यादिना ईट्, धातोः पूर्वमत् स्कोरित्यादिना सलोपः। 'मस्-जिनशोर्नुम् वैष्णवे' इत्यनेन नुम्, विष्णुजनान्तानामित्यादिना वृष्णीन्द्रः, च-वर्गस्य क-वर्ग इत्यादिना जस्य गः, यादवमात्रे हरिकमलमिति गस्य कः, अविष्णुपदान्तस्येत्यादिना नस्य विष्णुचक्रं, विष्णुचक्रस्य हरिवेणुरित्यादिना विष्णुचक्रस्य ङरामः, षत्वं—क-ष-संयोगे क्षः। अत्र वैष्णवग्रहणात् न सस्य जः॥

४९७। शसु। शसु हिंसायां, दद दाने एतयोर्वरामादेश्च, गोविन्दा-रामस्य च एत्वादि न, एत्वं, नरादर्शनञ्च न भवति, कपिलाधोक्षजे, सेट् खलि च। आदेशहीनत्वादिना प्राप्ते निषेधोऽयमिति। वजोऽयमिति। वरामो द्विविधः—दन्त्योष्ठ्य ओष्ठ्यश्च, तत्रायं वजस्य वरामः, दन्त्योष्ठ्यः। तत्प्रसङ्गात् वज-प्रसङ्गात्, वरामादिरपि तदादिरेव, दन्त्योष्ठ्य वरामा-दिरेव गृह्यत इति शेषः॥

४९८। वद। परपदे सौ सति वद व्यक्तायां वाचि व्रज गतौ इत्येतयोर्वृष्णीन्द्रो भवति। विष्णुजनादेरित्यादिना विकल्पे प्राप्ते नित्य-तार्थं वचनमिदम्॥

अव्राजीत्। अज् गतौ क्षेपणे च। अजति॥ ४९८॥

४९९। अजेर्वी घणं विना रामधातुके।

५००। बले तु वा, यपि च।

घण्-यपौ कृत्प्रत्ययौ। वीयते ; वीरयमनिट्।

**अथानिटः**

ऊ-ऋृरामान्त-रु-स्नु,-क्ष्नु,-शी-यु-नु-क्षु-श्वि-डी-श्रिभिः।
वृङ्-वृञभ्यां च विनैकाचः, स्वरान्ता धातवोऽनिटः॥
अनिड़ेकः शक्लृः कान्ते, चान्ते पचि-वची विचिः।
सिचिर्मुचिरिची चैक,-श्छान्ते प्रच्छिरुदाहृतः॥
भजि-भञ्जि-यजि-त्यजि-रञ्जि-रुजो
भुजि-सञ्जि-सृजोऽप्यथ मज्जिरपि।
युजि-भृज्जि-निर्जिविजिरश्च तथा
स्वजिरुद्धरणे जगणेऽप्यनिटः॥

---

४९९। अजे। घणं विना रामधातुके परे अजेः स्थाने वी भवति॥

५००। बले। बलेतु परे अजेः स्थाने वी वा भवति, यपिच वा भवति। नन्वनिटएव के इति चेत्तत्राह अथानिट इति उच्यन्ते इति शेषः। ऊ-ऋृ इति। ऊ-रामान्तेन, ऋृ-रामान्तेन, रु-शब्दे, स्नु-प्रस्रवणे, क्ष्नु-तेजने, शीङ् स्वप्ने, यु मिश्रणे, णु स्तुतौ, टुक्षु शब्दे, टुओश्वि गतिवृद्धयोः, डीङूविहायसां गतौ, श्रिञ् सेवायाम् इत्येतैः, वृङ् संभक्तौ, वृञ् वरणे इत्येताभ्याञ्च विना, स्वरान्ता एकाचो धातवोऽनिटः। उभयत्र विनायोगे तृतीया। अनिड़ेक इति, कान्ते कान्तगणमध्ये एकः शक्लृ शक्तावित्येष धातुरनिट्। चान्त इति चान्ते, डुपचस् पाके, वच भाषणे, विचिर् पृथग्भावे, सिचिर् क्षरणे, मुच्लृ मोक्षणे, रिचिर्वि रेचने इत्येते अनिटः। एक इति, च्छान्ते एकः प्रच्छज्ञीप्सायामित्येष धातुरनिडु-दाहृतः कथितः। भजीति, भज सेवायां, भन्जो आमर्दने, यज देवपूजादौ, त्यज व्ययहानौ, रन्ज रागे, रुजो भङ्गे, भुज पालनाभ्यवहारयो ; रुधादिः,

अदिं हदिं स्कन्दि-भिदि-च्छिदि-क्षुदीन्
शदिं सदिं स्विद्यति-पद्यती खिदिम् ।
तुदिं नुदिं विद्यतिकं विनत्तिकं
प्रतीहि दान्तान् दश पञ्च चानिटः ॥
क्रुधि-राधि-रुधि-क्षुधि-बुध्यतयो
व्याधि-शुध्यति-सिध्यति-बन्धि-युधः ।
सह साधय इत्यनिटो ध-गणे
हनि-मन्यति चेत्यपि नान्तगणे ॥
स्वपि-वपि-तिपि-तपि-तृप्यापि-शपोऽपि
क्षिपि-सृपि-लिपि-लुम्प-च्छुपि-दृपयः ।
पान्तगणेष्वथ भान्ते – लभि-रभि-जभि-
यभयो मगणे – यमि-रमि-णमि-गमयश्च ॥
शिषि-श्लिषी दुष्य-विषि-त्विषि-द्विषीन्
पिषिं कृषिं पुष्यति-शुष्य-तुष्यतीन् ।
दिशिं दृशिं दंशि-मृशी रिशिं रुशिं
लिशि-स्पृशि-क्रोश-विशोऽनिटो जगुः ॥

---

भुजो कोटिल्ये तुदादिः ; द्वयोरेव ग्रहणं, षन्ज सङ्गे, सृज विसर्गे, टुमस्जो शुद्धौ, युज समाधौ दिवादिः ; युजिर योगे रुधादिः ; द्वयोरेव ग्रहणं, भ्रस्ज पाके, निजिर शौचपोषणयोः, विजिर पृथग्भावे, ष्वन्ज परिष्वङ्गे इत्येते धातवो जगणे जान्तगणेऽनिटः । अदिमिति–अद भक्षणे, हद पुरीषोत्सर्गे, स्कन्दिर गतिशोषणयोः, भिदिर विदारणे, छिदिर द्विधाकरणे, क्षुदिर संपेषणे, शद्लृ शातने, षद्लृ खेदनगत्यवसादनेषु भ्वादिः ; सद्लृ विशरणे तुदादिः ; द्वयोरेव ग्रहणं ञिष्विदा गात्र प्रक्षरणे दिवादिः ; पद गतौ खिद दैन्ये दिवादिः, रुधादिश्च ; खिद परिघाते तुदादिस्त्रयाणामेव ग्रहणं, तुद व्यथने, नुद प्रेरणे, विद सत्तायां, विद विचारणे, इत्येतान् दशपञ्चच दान्तान् अनिटः प्रतीहि जानीहि । स्विद्यतीति निर्देशात् ञि ष्विदा स्नेहनमोचनयोरित्यस्य भ्वादे र्न ग्रहणम । 'विद्यति विनत्तीति निर्देशात्

घसिश्च वसतिः सान्ते, हान्ते दहति-मेहती ।
दिहिर्दुहि-लिही रोही,-वहि-नहिरिमेऽनिटः ॥

यु इति—यु मिश्रणे । 'युल् मिश्रणामिश्रणयोः' इति वोपदेवः, नु-साहचर्यात् । शक्लृरिति कृष्णपण्डितः । प्रक्रियाटीकायामत्र लृदिदेव शक्लृर्गृह्यते । कविकल्पद्रुमे तु स्वादि-शक्लृर्विकल्पितेट्, दिवादिशक्लृस्तु सेट् । 'भुज्' इति भुजो-भुजौ गृह्येते । 'युजि' इति युज्-युजिरौ । स्वजिरुद्धरण इति स्वञ्जिरित्यर्थः । कालापा विन्दतिमपि गृह्णन्ति । लुम्पादयो लुम्पत्यादीनामेकदेश-निर्देशाः । 'लिशि' इति लिश् अल्पीभावे ; 'निशि' इत्यपपाठः, वोपदेवाद्यसम्मत-त्वात् । अत एकसर्वेश्वरः सर्वेश्वरान्तश्चेति वीरनिट् ॥ ५०० ॥

---

ज्ञानार्थलाभार्थयोर्णानिट्त्वं, क्रुधि इति, क्रुध कोपे, राध साध संसिद्धौ, रुधिरावरणे रुधादिः, अ नौ रुध कामे दिवादिर्द्वयोरेव ग्रहणम्, क्षुध वुभु-क्षायाम्, वुध अवगमने दिवादिः, व्यध ताड़णे, शुध शौचे, सिधू संराद्धौ, वन्ध वन्धने, युध संप्रहारे, राध साध संसिद्धौ इत्येते धातवो धगणे धान्त-गणेऽनिटः । बुध्यतीति निर्देशात् भ्वादेर्नग्रहणं ; सिध्यतीति निर्देशात् सिधुगत्यामित्यस्य भ्वादेर्नग्रहणं, सहसाधय इति, साधिना सह वर्तमाना इति । हनीति–हनहिंसागत्योः मन ज्ञाने एतौ नान्तगणेऽनिटौ । मन्य-तीति निर्देशात् मनुवोधन इत्यस्य तनादेर्नग्रहणम् । स्वपीति । ञि ष्वपशये, डुवप वीजतन्तुसन्ताने, तप सन्तापे भ्वादिः, तप ऐश्वर्ये दिवादिर्द्वयोरेव ग्ररणं, तृप प्रीणने दिवादिः, आप्लृव्याप्तौ, शप आक्रोशे, क्षिप प्रेरणे सृप्लृ-गतौ, लिप उपदेहे, लुप्लृ च्छेदने, च्छु्प संर्स्पशे, दृप हर्षविमोचनयोर्दिवा-दिः, एते धातवः पान्तगणेष्वनिटः । तृपिदृप्योरनिङ्गणे पाठः शास्त्रान्त-रानिट्कारिकादर्शनाद्गतानुगतिकतया । यतोऽनयोः रुधादिपाठादि-विकल्पितेट्त्वम्, अथेति । डुलभष् प्राप्तौ, रभ राभस्ये, यभ मैथुने एते भान्तेऽनिटः । मगण इति । यमु उपरमे, रमु क्रीड़ायां, णम प्रह्वत्वे, शब्देच, गम्लृ गतौ, ए तेचत्वारो मान्तगणेऽनिटः । शिषीति । शिष हिंसायां भ्वादिः, शिष्लृ विशेषणे रुधादिर्द्वयोरेव ग्रहणं, श्लिष आलिङ्गने दिवादिः,

५०१। ईशान्तस्य वृष्णीन्द्रः सौ परपदे।

५०२। ऊर्णोतेर्वा।

'बले तु वा' ( ५०० ) इत्यस्य वैयर्थ्यात् 'विष्णुतः सर्वविरिञ्चिः' इत्यतश्चेटः पूर्वमेव पक्षे वीभावः—अवैषीत्, आजीत् ॥ ५०१-५०२ ॥

---

दुष वैकृत्ये, विषलृ व्याप्तौ ह्वादिः, वियु सेचने भ्वादिर्द्वयोरेव ग्रहणं, त्विष दीप्तौ, द्विष अप्रीतौ, पिष्लृ संचूर्णने, कृष विलेखनाकर्षणयोः, पुष पुष्टौ, शुष शोषणे, तुष तुष्टौ, एते षान्तगणेऽनिटः। दुष्येति, दुष्यतेरेकदेशनिर्देशः। पुष्यतीति निर्देशात् भ्वादेः, क्र्यादेश्च न ग्रहणम्। शुष्येति, शुष्यतेरेकदेशनिर्देशः। विकरणनिर्देशस्तुच्छन्दोनुरोधात्, न पुनरितरव्यावृत्तये।

दिशिमिति। दिश अतिसर्जने, दृशिर प्रेक्षणे, दन्श दंशने, मृश आमर्षणे, रुश रिश हिंसायां तुदादिः, लिश अल्पीभावे, स्पृश संस्पर्शे, क्रुश आह्वाने, विश प्रवेशने, एतान् शान्तगणेऽनिटो जगुः, पण्डिता इति शेषः। क्रोशेति, क्रोशतेरेकदेशनिर्देशः। घसिश्चेति, घस्लृ अदने, वस निवासे, एतौ सान्ते अनिटौ। वसतीतिनिर्देशात् वस आच्छादन इत्यस्यादादेर्नानिट्त्वम्। हान्त इति, दह भस्मीकरणे, मिह सेचने, दिह उपचये, दुह प्रपूरणे, लिह आस्वादने, रुह जन्मनि प्रादुर्भावेच, वह प्रापणे, नह बन्धने, इमे हान्तेऽनिटः, रोहेति, रोहतेरेकदेशनिर्देशः। युलिति, अदादिरयमिति सूचनार्थं वोपदेवेन लशब्दोपादानं कृतं, नु-साहचर्यादिति, नुसाहचर्याददादेर्ग्रहनं, नतु षुञ बन्धन इत्यस्य क्र्यादेः। शक्लृरितीति, कृष्णपण्डितस्य प्रक्रियाटीकायाम्। अत्र कारिकायां लृदिदेव शकधातुर्गृह्यते कृष्णपण्डितेनेति शेषः, कृष्णपण्डितः प्रक्रियाटीकाकारः। एतन्मते यः शकधातु र्लृदित् सोऽनिड़ेवेति। कविकल्पद्रुमे तु स्वादिर्विकल्पितेट्, दिवादिस्तु सेड़िति, शक मृष क्षमायां दिवादिः। कालापा इति, विद्लृलाभ इत्येतमपि गृह्णन्ति, अनिट्कारिकायामिति शेषः ॥

५०१। ईशा। परपदे सौ सति ईशान्तस्य धातो र्वृष्णीन्द्रो भवति॥

५०२। ऊर्णो। परपदे सौ सति ऊर्णुञ आच्छादने इत्यस्य वृष्णीन्द्रो वा भवति। नन्वजधातोः सेट्त्वात् प्रथममेव इड़ भवत्विति

५०३। नरस्य वामनः।

विवाय ॥ ५०३ ॥

५०४। धातोश्चतुःसनस्येयुवौ सर्वेश्वरे।

५०५। संयुक्तश्नोश्च।

५०६। असंयोगपूर्वस्यानेकसर्वेश्वरस्येद्वयस्य तु यः।

५०७। एति-हुवोर्य-वौ कृष्णधातुक एव।

गोविन्दवृष्णीन्द्राभ्यामन्यत्रैते। इद्वयादीनां याद्यादेशः स्थानिवत्, न तु द्वित्वविधाविति। 'धातो र-व-प्राक्' (२६४) त्रिविक्रमो न स्यात्। 'विष्णुजने विष्णुजनो वा' (१२०) इति पक्षे द्वित्वं तु स्यात् —विव्यतुः, विव्व्यतुः। 'वी प्रजनकान्त्यसन-खादनेषु' इति 'वी'-धातुरप्यस्ति। तत्र च सति 'धातुप्रतिरूपादेशस्तद्धातुवत् प्रयोगो वक्तव्यः' इति न्यायेन वी-वदेवास्य प्रयोगः। ततश्च— ॥५०४-५०७॥

---

चेत्तत्राह बलेतु वेति, यदि वीभावात् पूर्वमिट् स्यात्तदा बलेतु वेति व्यर्थं स्यात्, तस्मात् तस्य वैयर्थ्यात्, विष्णुतः सर्वविरिञ्चिर्बलवानिति न्यायाच्च इटः पूर्वमेव पक्षे वीभाव इति ॥

५०३। नर। सुगमम् ॥

५०४। धातो। सर्वेश्वरे परे धातोश्चतुःसनस्य स्थाने इयुवौ भवतः। धातोरिति स्पष्टार्थं कृतम् ॥

५०५। संयुक्त्। सर्वेश्वरे परे संयुक्तश्नोरुरामस्य स्थाने उव् भवति ॥

५०६। असंयोग। अनेकसर्वेश्वरस्य धातोरसंयोगपूर्वस्य असंयुक्तपूर्वस्य इद्वयस्य तु यो भवति ॥

५०७। एति। इण् गतौ, हु वह्नौ दाने इत्येतयोरिरामोरामयोः स्थाने कृष्णधातुक एव यवौ भवतः। गोविन्देति, एते इयुव्यवः गोविन्दवृष्णीन्द्राभ्यामन्यत्र भवन्ति। एतेनैतदुक्तं, गोविन्दवृष्णीन्द्रौ यत्र न प्राप्नुतस्तत्रैषां विषय इति। इद्वयादीनां याद्यादेशः स्थानिवद्भवति, अतो विव्यतु-

५०८। सर्वेश्वरान्तात् सहजानिट इड् वा थलि।

५०९। सहजारामवतश्च तादृशात्।

५१०। सृजि-दृशिभ्याञ्च।

५११। अत्त्यर्ति-वृ-व्येञ्भ्यो नित्यम्।

५१२। ऋरामात्तु नित्यं नेट्।

सहजा अनिटः शकादिगण-पठिताः। 'सहज'-ग्रहणं सनादावनिट्त्वेऽपि 'वभूविथ' इत्यादौ नित्यमिड्भावार्थः। विवेथ, विवयिथ; अनादेशपक्षे—आजिथ। **क्षि क्षये—क्षयति, क्षयन्ति** ॥ ५१२ ॥

---

रित्यादौ 'धातो र व-प्रागिदुतोस्त्रिविक्रमो रवतो विष्णुजने' इत्यनेन त्रिविक्रमो न स्यात्, विष्णुजनस्य परत्वाभावात्। द्वित्वविधौ तु स्थानिवन्न-भवति, अतो विष्णुजने विष्णुजनोवेत्यादिना पक्षे द्वित्वं तु स्यात्। वीति। प्रजनो गर्भग्रहणं, असनं क्षेपणं, तत्र चेति, तत्रच वीधातौ। प्रतिरूपत्वं सादृश्यम्। वीवदेव वीधातुवदेव। अस्य आदेशवीत्यस्य ॥

५०८। सर्वे। थलि परे सर्वेश्वरान्तात् सहजानिटो धातोरुत्तरे इड्वा भवति ॥

५०९। सह। तादृशात् सहजानिटः सहजारामवतश्च उत्तरे थलि इड्वा भवति, सहजारामावत इत्यत्र सहजग्रहणं ससर्थेत्यादौ इट् प्राप्ति-शङ्कानिरासार्थम् ॥

५१०। सृजि। सृज विसर्गे, दृशिर् प्रेक्षणे इत्येताभ्याञ्चोत्तरे थलि इड्वा भवति ॥

५११। अत्त्यर्ति। अद भक्षणे, ऋगतौ प्रापणे च भ्वादिः, ऋगतौ ह्वादिः, द्वयोरेव ग्रहणम्, वृञ वरणे, व्येञ सम्वरणे इत्येतेभ्य उत्तरे नित्य-मिड् भवति ॥

५१२। ऋरा। उक्तादन्यत ऋरामात्तु थलि नित्यं इट् न भवति। सहजग्रहणमिति सहजानिटः इत्यत्रेति शेषः। सहजानिट इत्यत्र सहजग्रहणं उद्वयग्रहगुहेभ्य इत्यनेन सनादौ प्रत्यये परे अनिट् त्वविद्यमानेऽपि वभूविथे-त्यादौ प्रयोगे नित्यमिड्भावार्थमिति, अन्यथा इटो विकल्पः स्यादिति ॥

५१३ । वामनस्य त्रिविक्रमः कृत्-कृष्णधातुकेतर-य-प्रत्यये ।

क्षीयते ; अक्षैषीत् ; चिक्षाय, चिक्षियतुः, चिक्षियुः ; चिक्षयिथ चिक्षेथ । कृति तु क्षेयम् । कृष्णधातुके क्षियात् । **लगे सङ्गे** ॥ ५१३ ॥

५१४ । ह-म-यान्त-क्षण-श्वस-श्वीनामेरामेतश्च न वृष्णीन्द्रः, सेटि सौ परपदे ।

अलगीत् । **गुपू रक्षणे ; ऊराम इत्** ॥ ५१४ ॥

५१५ । गुपू-धूप-विच्छि-पणि-पनिभ्य आयः ।

गोपाय । सनाद्यन्ताश्च धातवः ;—

सन्-क्यन्-क्यङश्च काम्यश्च क्यङर्थ-क्विप् च णिस्तथा ।
कण्ड्वादि यक् तथैवाय ईयङ् यङ् स्युः सनादयः ॥

तिप्, शप्—गोपायति ॥ ५१५ ॥

---

५१३ । वामनस्य । कृत्कृष्णधातुकाभ्यामितिरस्मिन् य-प्रत्यये परे वामनस्य त्रिविक्रमो भवति । अक्षैषीदिति, 'ईशान्तस्य वृष्णीन्द्रः सौ परपदे' इत्यनेन वृष्णीन्द्रः । चिक्षायेति, 'नरविष्णुजनानामादिः शिष्यते' इति 'क-वर्गनरस्य चवर्गः' इति । चिक्षियतुरिति, 'धातोश्चतुःसनस्ये'-त्यादिना इय् । कृति तु क्षेयमिति, सर्वेश्वरान्तधातोर्यदिति यत् । नात्र वामनस्य त्रिविक्रमः ॥

५१४ । हम । हश्च मश्च यश्च ते हमयास्ते अन्ते येषाम् । क्षणु हिंसायां श्वस प्राणने, टुओश्विगतिवृद्ध्योरित्येतेषाम्, एरामेतश्च परपदे सेटि सौ सति वृष्णीन्द्रो न भवति, अलगीदिति, विष्णुजनादेर्लघोरित्यादिना वृष्णीन्द्रः नः स्यात् ॥

५१५ । गुपू । गुपू रक्षणे, धूप सन्तापे, विच्छ गतौ, पणपन व्यवहारे स्तुतौ च इत्येतेभ्य उत्तरे आयो भवति । ननु सनाद्यन्ताश्च धातव इत्युक्तं, सनादय एव के इति चेत्तत्राह सन्, क्यन्, क्यङश्चेति । आय उक्तः, अन्येतु वक्ष्यन्ते । गोपायतीति, अरामहर इत्यादिना अरामहरः ॥

५१६। अरामहरो रामधातुके।

अत्र लिखनाद्वामनस्य त्रिविक्रममपि वाधते ; गोपायते ॥ ५१६ ॥

५१७। आय ईयङ् कर्मेर्णिङ् च रामधातुके तु वा।

'भाविनि भूतवदुपचारः'—गुप्यते ; अगोपायीत्। ऊदित्वादिड् वा ( ४६५ )—अगोपीत्, अगौप्सीत् ; अगौप्ताम् ; अगोपायि, अगोपि ; 'अगोपायायि' इत्यपि मन्यन्ते ॥ ५१७ ॥

५१८। अनेकसर्वेश्वरकासिभ्यामामधोक्षजे।

कृञादेरनुप्रयोगः (४८५) ; गोपायाञ्चकार, जुगोप। अरामहरस्य नित्यत्वादन्तरङ्गत्वाच्च 'गोपाय्यात्' इत्यादौ न 'अ-तो या ईः' (४०६)।

धूप् सन्तापे—धूपायति ; अधूपायीत्। इट् तु नित्यम्, अधूपीत्। 'कासि-प्रत्ययात् इत्यत्र कास्यनेकाच इति वक्तव्यम्' इति काशिका।

---

५१६। अरामः। रामधातुके परे अराम हरो भवति। ननु गोपाय्यत इत्यादौ वामनस्य त्रिविक्रमः कस्मान्न भवतीति चेत्तत्राह अत्रेति, अत एतस्य लक्षणस्य लिखनात् वामनस्य त्रिविक्रममपि वाधते, अरामहर इति शेषः, तेन गोपाय्यत इति ॥

५१७। आय। व्यक्तार्थमेतत्, भाविनीति, भाविनि रामधातुके भूतवदुपचारः, रामधातुक इति विषयसप्तमीत्यपि सिद्धान्तान्तरं ज्ञेयम्। ऊदित्वादिड्वेति, स्वरति सूतीत्यादिनेति शेषः। अगौप्सीदिति, विष्णुजनान्तानामनिटामित्यादिना वृष्णीन्द्रः, अगौप्तामिति, वामनवैष्णवाभ्यामित्यादिना सेर्हरः। अगोपायायीत्यपि मन्यन्ते इति, अगोपायीत्यत्रेति अगोपायायीति एवं साध्यम्, अग्लोपित्वमित्यनेन अरामहरविकल्पात् तत्स्थितिः, पक्षे इणि कृते अन्तस्य वृष्णीन्द्र इत्यनेन त्रिविक्रमस्तत 'आतोः युगि'त्येनेन युक् ॥

५१८। अनेक। अनेकसर्वेश्वरात्, कासृदीप्तौ इत्येतस्माच्चोत्तरे अधोक्षजे परे आम् भवति। ननु कामपाले गोपाय्यादित्यादौ अरामहरात् पूर्वं अतो याः ईरिति कथं न प्रवर्तते इति चेत्तत्राह, अरामहरस्येति। नित्यत्वा-

'प्रत्ययग्रहणमनेकाजुपलक्षणम्' इति भाषावृत्तिः ( पा ३।१।३५ )। चुलुम्प लोपे—चुलुम्पाञ्चकार। तप् सन्तापे—तपति; —॥ ५१८॥

५१९। निसः षत्वं तपतौ सकृत् सेवने।

निष्टपति सुवर्णम्; सकृदग्निं स्पर्शयति इत्यर्थः। अताप्सीत्, अताप्ताम्॥ ५१९॥

५२०। नानोस्तप इण्।

अन्वतप्त; तताप। 'सहजारामवतश्च तादृशात्' (५०९) इति वेट्—तेपिथ, ततप्थ। चमु अदने—॥ ५२०॥

५२१। ष्ठिव्वाचमु-क्लमां त्रिविक्रमः शिवे।

आचामति। स्वादावपि पाणिनीयाः पठन्ति—आचाम्नोति। वैष्णवपरत्वाभावान्न विष्णुचक्रम्। आचाम्यते। इणि—आचामि।

क्लमु ग्लानौ—क्लामति। 'भौवादिकस्य तु न त्रिविक्रमः' इति तस्यां भ्रमः। पाणिनीयादौ हि भुवादौ नैवायं पठ्यते, किन्तु दैवादिकादेव श्यो विकल्प्यते। तथैव क्लमतीति न कुत्रापि दृश्यते च॥ ५२१॥

---

दन्तरङ्गत्वाच्च प्रथमं अरामहरे कृते पश्चात् तस्य महाहरत्वात् 'अतो या ईरि'ति न प्रवर्त्तते। इट्तु नित्यमिति उदित्वाभावान्नास्य विकल्पितेट्-त्वम्। अनेकसर्वेश्वरेति यदुक्तं तदेव द्रढयति कासीति। कासिप्रत्यया-दित्यत्र लक्षणे अनेकाजुपलक्षणमिति अनेकाचो धातून् उपलक्षयतीति, अन्यथा चुलुम्पाञ्चकार, दरिद्राञ्चकार, चकासामासेत्यादि न स्यात्॥

५१९। निसः। सकृत्सेवनेऽर्थे तपतौ तपधातौ परे निसः सरामस्य षत्वं भवति। सकृत्सेवनमेकवारसेवनम्॥

५२०। नानो। अनोरुत्तरस्मात्तप उत्तरे इण् न भवति 'इण् भूतेश-ते भाव-कर्मणो'रित्यनेन प्राप्ते निषेधः। तेपिथेति, आदेशहिनेत्या-दिना अरामस्य एत्वं, नरादर्शनञ्च। सेट्थलि विधानात् ततप्थेत्यत्र न एत्वनरा दर्शने॥

५२२। जनि-वध्योर्मान्तानाञ्चाचम्यमि-कमि-वमि-यमि-रमि-नमि-गमां न वृष्णीन्द्रः इणि कृति च।

अक्लमि ॥ ५२२ ॥

५२३। अम-चम-विश्रमां वेत्येके।

क्रमु पादविक्षेपे ॥ ५२३ ॥

५२४। क्रमस्त्रिविक्रमः परपदे शिवे।

क्रामति ॥ ५२४ ॥

५२५। स्नु-क्रमिभ्यामिड् नात्मपद एव।

अक्रमीत्। अक्रमि। 'हरेर्यदक्रामि पदैककेन खम्' इत्यादि-प्रयोगे बाहुल्याद्विकल्पः। अक्रंसाताम्। यमु उपरमे –॥ ५२५ ॥

---

५२१। ष्ठिव्वा। ष्ठिवु निरसने, आङ पूर्व चमु अदने, क्लमु ग्लानौ एषां शिवे परे त्रिविक्रमो भवति। पाणिनीयाः पठन्तीति, चमु-मिति शेषः। वैष्णवेति, वैष्णवपरत्वाभावात् अविष्णुपदान्तस्येत्यादिना नविष्णुचक्रम् भौवादिकस्येति। तस्यां प्रक्रियाकौमुद्यां भ्रममुक्त्वा तत्र हेतु-माह पाणिनीयादौहीति। हि यतः भूवादौ भ्वादिगणे नायं क्लमधातुः पठ्यते। किन्तु दैवादिकादेव क्लमधातोः श्यो विकल्प्यते विकल्पेन क्रियते, दीर्घस्तु नित्यं क्रियते. तस्मात् पाणिनीयादिमते क्लाम्यति, क्लामतीति भवतीति। अपरमपि हेतुमाह तथैवेति ॥

५२२। जनि। जनिप्रादुर्भावे, वध सौत्रा हिंसायाम् एतयोः, आङ पूर्व चमु अदने, अमु रोगे, कमु कान्तौ, टुवम उद्‌गिरणे, यमु उप-रमे, रमु क्रीड़ायां, णम प्रह्वत्वे शब्देच, गम्लृ गतौ एतेभ्यो भिन्नानां मान्तानाञ्च, इणि कृति च परे वृष्णीन्द्रो न भवति। अत्र इणीत्यत्र वृष्णीन्द्रप्राप्ते निषेधः सम्भवति, कृति तु नेति चेत्, तदैवं वाच्यम्, इणः साहचर्यात् कृतिच नृसिंहकृतीति, नतु सामान्यकृतिः ॥

५२३। अम। अमुरोगे, चमू अदने, वि पूर्व श्रमु तपसि खेदे च इत्येतेषां इणि कृति च वृष्णीन्द्रो वा भवतीत्येके वदन्ति ॥

५२६। इषु-गमि-यमां छः शिवे।

यच्छति ॥ ५२६ ॥

५२७। यम-रम-नमारामान्तेभ्यः सुगिटौ सौ परपदे।

अयंसीत्, अयंसिष्टाम्; अयामि ॥ ५२७ ॥

५२८। सूचनार्थाद्यमः सिः कपिल आत्मपदे स्वीकारार्थाद्वा।

५२९। हरिवेण्वन्त-सहजानिटां तनु-क्षणु-क्षिणु-तृणु-वनु-मनूनामपि हरिवेणु-हरो वैष्णवादि-कंसारौ।

उदायसाताम्, सूचितावित्यर्थः; उपायसाताम्, उपायंसाताम् वा, स्वीकृतावित्यर्थः। 'सहज' इति किम्? कृत्प्रत्यये शान्तः।

णय् हय् गतौ—अनयीत्। **दल् विदारणे**—॥ ५२८-५२९ ॥

---

५२४। क्रम। परपदसम्बन्धिनि शिवे परे क्रमस्त्रिविक्रमो भवति॥

५२५। स्नुक्रमि। स्नुप्रस्रवणे, क्रमु पादविक्षेपे इत्येताभ्यामुत्तरे आत्मपदएव इट् न भवति, परपदे तु भवत्येव। अक्रंसातामिति आत्मपदे इड़भावः॥

५२६। इषु। शिवे परे इषु इच्छायां, गम्लृगतौ, यमु उपरमे एषामन्तस्य स्थानेच्छो भवति। यच्छतीति मस्य छे कृते, 'द्विः सर्वेश्वरमात्राच्छः' इत्यनेन द्वित्वेच कृते, यादवेत्यादिना छस्य चत्वम्॥

५२७। यम। यमु उपरमे, रमु क्रीड़ायां, णम प्रह्वत्वे शब्देच, एतेभ्य आरामान्ताच्चोत्तरे परपदे सौ सति सुगिटौ भवतः, अयंसीदिति इटः सिलोप इत्यादिना सिलोपः। अयामीति यमे र्वर्जनात् नात्र वृष्णीन्द्रनिषेधः॥

५२८। सूच। आत्मपदे सूचनार्थाद्यम उत्तरः सिः कपिलोभवति। आत्मपदे स्वीकारार्थाद्यम उत्तरः सिः कपिलो वा भवति॥

५२९। हरि। हरिवेणुरन्ते येषां तादृशां सहजानिटां तनुविस्तारे क्षणु क्षिणु हिंसायां तृणु अदने वनु याचने मनु वोधने इत्येतेषांच वैष्णवादिकंसारौ परे हरिवेणु हरोभवति। उदायसातामिति आद्यन्तवदेकमिति वैष्णवादिकंसारिपरता। वैष्णवादीति किं तेनिथ तनित्वा॥

५३० । अरलित्यन्तस्य वृष्णीन्द्रः सौ परपदे ।

अदालीत् । ञिफला विशरणे ; विशरणम्—विदीर्णता ; ञ्यारामावितौ । 'तॄ-फल-' ( ४७८ ) इत्यादि—फेलतुः, फेलिथ । 'फल निष्पत्तावित्यस्य तु ग्रहणम्' इति प्रसादकारः ( पा ६।४।१२२ ) । 'द्वयोरपि ग्रहणम्' इति तु कालापाः । **ष्ठिवु निरसने ; निरसनम्—थुत्कारः ; उराम इत्—** ॥ ५३० ॥

५३१ । नामधातुष्टैच-ष्वष्क-ष्ठिवां सत्वनत्वनिषेधः ।

ष्ठीवति । 'धातो र-व-प्रागिदुतो'-(२६४) इति ष्ठीव्यते ॥५३१॥

५३२ । ष्ठिवेर्नर-ठरामस्य तरामो वा ।

तिष्ठेव, टिष्ठेव । **जि जये—जयति ; भावे—जीयते ; विधान्तरि—** ॥ ५३२ ॥

---

शान्त इति । शमु उपशमे क्तः, 'हरिवेण्वन्तोद्धवस्य त्रिविक्रमः क्वौ कंसारिवैष्णवे च' इत्यनेन उद्धवस्य त्रिविक्रमः, 'मस्य विष्णुचक्रं', 'विष्णुचक्रस्य हरिवेणुः' । शमधातो र्न सहजानिट्त्वं, किन्तु 'उरामेद्धातोः क्त्व विकल्पितेट्त्वमि'ति विष्णुनिष्ठामिड्भावः । अनयीदिति, 'हमयान्ते'त्यादिना वृष्णीन्द्रनिषेधः ॥

५३० । अर । अर् अल् इति अन्ते यस्य, तादृशस्य धातोः परपदे सौ सति वृष्णीन्द्रो भवति । 'विष्णुजनादे'रित्यादिना विकल्पे प्राप्ते नित्यतार्थं वचनमिदम् तॄ-फलेत्यादीति, 'तॄ-फल-भज-त्रपामि'त्यादिना एत्वं, नरादर्शनञ्च ॥ [ निक्षेपश्चेति । कस्यचिद्वस्तुनः अन्यत्र निक्षेपश्चेत्यर्थः ]

५३१ । नाम । नाम्नो जातो धातु र्नामधातुस्तस्य, ष्टैच शब्द-संघातयोः, ष्वष्क गतौ, ष्ठिवु निरसने इत्येतेषाञ्च, सत्वनत्वनिषेधो भवति । सत्वनिषेधः सर्वेषामेव, नत्वनिषेधस्तु नामधातोरेवेति लक्षणार्थः । ष्ठीवतीति, 'ष्ठिव्वाचमुक्लमां त्रिविक्रम शिवे' इत्यनेन त्रिविक्रमः ॥

५३२ । ष्ठिवे । व्यक्तार्थमेतत् । तिष्ठेवेति, 'शौरिशिरस्कस्तु सात्वत' इति, ततष्ठस्य तत्वं, टिष्ठेवेति, 'हरिखड्गस्य' इत्यादिना ठस्य टत्वम् ॥

५३३। जेस्त्वन्त्वोस्त्यन्ती।

जयति, जयन्ति। 'सर्वत्र' ( ४०५ )-ग्रहणात् तातङ्-पक्षे—जयतात् ॥ ५३३ ॥

५३४। जेर्गिः सन्नधोक्षजयोः, चेः किर्वा।

जिगाय। कृष् विलेखने, आकर्षणे च—कर्षति—॥ ५३४ ॥

५३५। कृष्-स्पृश्-मृश्-तृप्-दृप्-सृपः सिर्वा।

५३६। षढोः कः से।

षत्वम्—अकार्क्षीत्, अकार्ष्टाम्, अकर्षि। 'ऋद्वयाद्'-( ४६९ ) इत्यादिना कपिलत्वम्—अकृक्षाताम्, अकृक्षत ; अकृष्ठाः। क-विधौ स-मात्रस्य निमित्तत्वेनाप्रत्ययरूपनिमित्तत्वान्महाहरत्वम्—अकृड्ढ्वम् ॥ ५३५-५३६ ॥

---

५३३। जेस्त्व। जि जये इत्यस्य त्वन्त्वोः स्थाने त्यन्ती भवतः। जयतादिति 'तुह्योस्तातङाशिषि वा सर्वत्रे'त्यनेन तातङ ॥

५३४। जेर्गिः। सनि अधोक्षजे च परे जि जये इत्यस्य स्थाने गिर्भवति, तस्मिन्नेर परे चिञ्‌चयने इत्यस्य स्थाने कि र्वा भवति ॥

५३५। कृष्। कृष् विलेखने, स्पृश् संस्पर्शे, मृश् आमर्शने आकर्षणेच, तृप् प्रीणने, दृप् हर्षणबिमोचणयोः, सृप्लृ गतौ एतेभ्य उत्तरे सि र्वा भवति। कृषस्पृशमृशिभ्य 'ईशोद्धवादनिटो हरिगोत्रान्तात् सक् भूतेशे दृशि विने'त्यनेन नित्यं सकि प्राप्ते, तृप्-दृप्-सृपिभ्यस्तु 'पुषादि-द्युतादि-लृदितो ङो भूतेशपरपदे' इत्यनेन ङे प्राप्ते, विकल्पेन सिविधानम् ॥

५३६। षढोः। से परे षढोः स्थाने को भवति। अकार्क्षीदिति, 'विष्णुजनान्तानामनिटामि'त्यादिना वृष्णीन्द्रः। अकार्ष्टामिति, 'वामने'-त्यादिना सि-हरः, 'षात् परस्ये'त्यादिना तस्य टत्वं। कपिलत्वमिति, अतो न गोविन्दः। अकृक्षतेति, 'अरामान्यवर्णादि'त्यादिना नस्य हरः। अकृष्ठा इति, 'वामनवैष्णवाभ्यामि'त्यादिना सि-हरः, 'षात्परस्ये'त्यादिना थस्य ठत्वम्। ननु अकृड्ढ्वमित्यत्र 'सस्य हरो धे' इत्यनेन सस्य हरे कृते

५३७। ऋरामोद्धवसहजानिटोऽम् वा वैष्णवादावकपिले।

म् इत्, 'ऋद्वयं रः ( १६१ ), वृष्णीन्द्रः ( ४६६ )—अक्राक्षीत्, अक्राष्टाम्। 'सहज' इति किम्? वृहू उद्यमे तुदादिः; अवार्ड्ढे' इति काशिकाभाषावृत्त्योः। 'ततोऽम्राक्षीत्' इति तु प्रक्रिया चिन्त्या। 'अमागमोऽप्यस्य न दृश्यते'—इति ह्यनिड्गणे काशिका। सेरभावपक्षे— ॥ ५३७ ॥

५३८। ईशोद्धवादनिटो हरिगोत्रान्तात् सक् भूतेशे दृशिं विना।

---

'षढोः कः से' इति कथं न प्रवर्तत इति चेत्तत्राह क-विधाविति, क-विधाने स-मात्रस्य निमित्तत्वेन अप्रत्ययरुपनिमित्तत्वात् प्रत्ययरुपनिमित्तत्वाभावात् स-रामस्येति शेषः, हरस्य महाहरत्वं, अतो न कत्वम्। अक्रुड्ढ्मिति, 'षस्य ड़ो विष्णुपदान्ते हरिघोषे चे'त्यनेन षस्य डत्वं, 'षात् परस्ये'त्यादिना धस्य ढत्वम् ॥

५३७। ऋरा। वैष्णवादौ कपिलेतरे परे ऋरामोद्धवात् सहजानिट उत्तरे अम् वा भवति। म इदिति, अतो'ऽन्त्यसर्वेश्वरात् परं मितः स्थानम्'। अक्राष्टामिति, सि-हरस्तस्य टत्वम्। वैष्णवादाविति किं, चकर्षिथ। अवार्ड्ढेति, भूतेशमध्यमपुरुषबहुवचनं त, 'धातोः पूर्वमत्', 'सिस्तस्य हरः', 'विष्णुजनान्तानामनिटामि'त्यनेन वृष्णीन्द्रः हस्य ढः', 'तस्य धः', 'धस्य ढः', 'विष्णुदासविष्णुपदान्ते' इत्यादिना ढस्य डः। नास्य सहजानिट्त्वम्, किन्तु उरामेत्त्वात् 'स्वरति-सूति-सूयती'त्यादिना विकल्पितेट्त्वम्। आत्मपदे तु 'ऋद्वयादि'त्यादिना कपिलत्वात् अवृढेति भवति। अत इति, अम्राक्षीदिति, मृजुष् शुद्धावित्यस्य रूपमिति प्रक्रियामतं सहजानिट्त्वाभावात् तत्तु न भवतीति चिन्त्यत्वमुक्तम्। तस्य तु अमार्जीत्, अमार्क्षीदिति भवति, चिन्त्यत्वे काशिकालिखनमपि प्रमाणमित्याह अमागमोऽपीति, अस्येति मृज्धातोरित्यर्थः। अनिड्गणे पठितस्याप्यस्य मृज्धातोरमागमो न दृश्यत इति काशिका वदन्ति ॥

'क्सः' पा ( ३।१।४५ ) ; क् इत् ; कत्व-षत्वादि ( ५३६, १७० ), कपिलत्वान्न अम्—अक्रुक्षत्, अकर्षि ॥ ५३८ ॥

५३९। सकोऽन्तहरः सर्वेश्वरे।

अक्रुक्षाताम्, अक्रुक्षत। 'न तु वहुत्वे' इति कालापाः। अक्रुक्षन्त, अक्रुक्षथाः, अक्रुक्षि। चकर्ष, चकृषे। कृष्यात्; कृक्षीष्ट रुष् रिष्—हिंसायाम्; भूतेशे—अरोषीत्, अरोषि, आरोषिषाताम् ॥ ५३९ ॥

५४०। इषु-सह-लुभ-रुष-रिष इड् वा ते।

रोषिता, रोष्टा। उष् दाहे—॥ ५४० ॥

५४१। उष-वेत्ति-जागृभ्य आमधोक्षजे वा।

ओषाम्बभूव, उवोष ॥ ५४१ ॥

---

५३८। ईशो। दृशिर प्रेक्षण इत्येतं विना हरिगोत्रान्तादनिट् ईशोद्धवादुत्तरे भूतेशे सक् भवति। अनिट् इति किं, अगूहीत्, अकोषीत्। ईशोद्धवादिति किं, दह अधाक्षीत्, दृशेस्तु अद्राक्षीत् ॥

५३९। सको। सर्वेश्वरे परे सकोऽन्तस्य हरो भवति। अक्रुक्षतेति, अन्तहरे कृते 'अरामान्यवर्णादि'त्यादिना नस्य हरः। न त्विति, बहुत्वे सकोऽन्तहरो न भवतीति कालापा वदन्ति। अक्रुक्षन्तेति, 'अरामहरः' इत्यादिना अराम हरः, 'अरामहरस्य निमित्तमरामः पूर्ववच्च', ततो न नस्य हरः। चकृष इति, 'असंयोगादलिदधोक्षजः कपिल' इति कपिलत्वात् कंसारित्वमतो न गोविन्दः। कृष्यादिति, 'कामपालपरपदं कपिल' इति कपिलत्वान्न गोविन्दः। कृक्षीष्टेति, 'ऋद्वयादि'त्यादिना कपिलत्वम् ॥

५४०। इष। इषु इच्छायां भ्वादिः, इषु आभीक्ष्ण्ये क्र्यादि र्द्वयोरेव ग्रहणम्। षह मर्षणे, लुभ विमोहने तुदादिः, लुभ गार्ध्ये दिवादि र्द्वयोरेव ग्रहणम्, रुष रिष हिंसायाम् इत्येतेभ्य उत्तरे ते परे इड्वा भवति, रुष रोषे इत्यस्यापि ग्रहणमिति ज्ञेयम् ॥

५४१। उष। उष दाहे, विद् ज्ञाने, जागृ निद्राक्षये इत्येतेभ्य उत्तरे अधोक्षजे परे आम्बा भवति। वेत्तीति निर्देशो विद् सत्तायामित्यादीनां

मिह् सेचने—सक्, हस्य ढः, कत्वषत्वे—अमिक्षत् । वालकल्कौ गोविन्दः, हस्य ढः, 'हरिघोषात्' (४६८) इति धत्वं, 'षात् परस्य' (२८२) इति ढत्वम्—

५४२ । ढस्य हरो ढे, पूर्वस्य त्रिविक्रमश्च ।

मेढा । अत्र तु गोविन्देन त्रिविक्रमः सिद्ध एव ॥ ५४२ ॥

५४३ । ऋरामस्य न ।

कृति—तृण्हू+क्त=तृढः । कथं 'कंसजिड्ढौकते' ? तत्राकरणात् । दह् भस्मीकरणे । 'दादे-' ( २९२ ) इति घत्वम्, आदौ 'जवर्जहरिगदा-' ( २९१ ) इत्यादिना हरिघोषत्वम्—अधाक्षीत् । हरिघोषविधौ स-मात्रस्य निमित्तत्वात् पूर्ववत् महाहरत्वम्—अदाग्धाम् ।

---

निरासार्थः । ओषाम्वभूवेति आमः कृभ्वस्तयोऽनुप्रयुज्यन्त इति भुवोऽनुप्रयोगः ॥

५४२ । ढस्य । ढे परे ढस्य हरः पूर्वस्य त्रिविक्रमश्च भवति । अत्रत्विति, मेढ़ेत्यत्र गोविन्देन त्रिविक्रमः सिद्ध एवेति, त्रिविक्रमविधानस्य प्रयोजनं स्थानान्तरे ज्ञेयमिति ॥

५४३ । ऋरा । ढस्य हरे कृते ऋरामस्य त्रिविक्रमो न भवति । तृढ इति तृण्हू हिंसायां 'अनिरामेतामि'त्यादिना नरामहरः, 'हस्य ढः', 'हरिघोषादि'ति धत्वं, 'षात् परस्ये'ति ढत्वं, 'ढस्य हरः' । कथमिति, कंसजिड्ढौकत इत्यत्र 'दतौ परवर्णावि'त्यादिना तरामस्य ढरामे कृते, हरिगदाविधानात् पूर्वमेव ढस्य हरः कस्मान्न स्यादिति सिद्धान्तमाह—तत्राकरणादिति, असिद्धरूपं न त्याज्यमिति प्रतिज्ञासिद्ध्यर्थमिदं तत्रैव कर्तुं योग्यमपि यन्न कृतं, तस्मात्तत्राकरणान्न ढस्य हरः । ननु अदाग्धामित्यत्र सेर्हरे कृतेऽपि 'जवर्जमि'त्यादिना हरिघोषत्वं कथं न स्यादिति चेत्तत्राह, हरिघोषविधाविति । ध्वं शब्दे तु परे महाहरत्वेऽपि हरिघोषत्वं भवत्येव, एवं अधग्ध्वमिति । अरहीदिति, 'हमयान्ते'त्यादिना वृष्णीन्द्रनिषेधः । परत्वादिति, 'पूर्वपरयोः परविधिर्बलवानि'ति 'अविष्णुपदान्तस्य नस्ये'त्यादिना विष्णुचक्रमेव । सर्वेश्वरधर्मत्वादिति सर्वेश्वरस्य धर्मत्वादित्यर्थः । वृंहे-

ध्वम्-शब्दे तु—अधग्ध्वम्। रह् त्यागे—अरहीत्। रहि गतौ; परत्वान्नत्वं वाधित्वा विष्णुचक्रम्—रंहति। विष्णुचक्रस्य सर्वेश्वर-धर्मत्वात्तद्व्यवधानेऽपि णत्वम्—रंहाणि। बृहि वृद्धौ—बृंहति। 'बृंहेः स्वरेऽनिटि वा नलोपः' इति कालापाः—बर्हति; कृति च—बृंहकः, बर्हकः। येषां प्रकृत्यन्तरमस्ति, तेषां मते विष्णुजनादावपि रूपद्वये सिद्धे दोषः स्यादिति चाहुः। कृवि हिंसायाम्; हरि-मित्रान्तोऽयम्—कृण्वति। 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति सूत्रे (पा ८।४।२) 'नुमानुस्वारमात्र-व्यवधानं णत्वविधौ गृह्यते' इति पाणिनीयाश्च; तेनेह न णत्वम्—कृण्वानि। तृण्हू हिंसायाम् इत्यस्य कृति 'तृंहणम्' इत्यादौ तु स्यात्। ग्लै हर्षक्षये—ग्लायति; — ॥५४३॥

## ५४४। चतुर्व्यूहान्तानामारामान्तपाठोऽशिवे।

यक्—ग्लायते। 'पाठ'-ग्रहणात् सुगिटौ सौ (५२७)—अग्लासीत्, अग्लासिष्टाम् ॥ ५४४ ॥

---

रिति, इड्व्यतिरिक्ते स्वरे परे वृंहेर्न लोपो वा भवतीति कालापा वदन्तीति-शेषः। वृंहक इति, णक-प्रत्ययः कृत्। येषामिति। येषां प्रकृत्यन्तरं वृह-धातुरस्ति, तेषां मते विष्णुजने इतिच रूपद्वये सिद्धे सति दोषः स्यादितिच आहुः कालापा इति शेषः। विष्णुजनादावित्यादिशब्दश्चिन्त्यः, अथवा विष्णुजन आदिर्यस्य, तस्मिन् प्रत्यये इत्यर्थः। कृण्वतीति वैष्णवपरत्वा-भावात् न विष्णुचक्रमतो णत्वमेव। अड़िति, अट् कुप्विति अच् ह-य-व-कवर्गपवर्गाणां संज्ञा। अनुस्वारमात्रव्यवधानं अनुस्वारस्यैव व्यवधान-मित्यर्थः। नुमानुस्वारमात्रं णत्वविधौ गृह्यत इत्येवपाठः सभ्यः। तृंहण-मित्यादौ नुमोऽसद्भावेऽपि अनुस्वारस्य विद्यमानत्वात् णत्वं भवत्येव ॥

५४४। चतु। अशिवे विषये चतुर्व्यूहान्तानां धातूनामारामान्त-रूपेण पाठो भवति, चतुर्व्यूहस्य स्थाने आरामो भवतीत्यर्थः। अशिवे विषये इति व्याख्यानात्, प्रत्ययोत्पत्तेः प्रागेवारामान्तपाठो भवतीति वोद्धव्यम्, अतएव कृत्-प्रकरणे 'कर्मण्यनुपेन्द्राददारामात् कः' इति सूत्रस्य त्रैङ

५४५। आतो युगिणि नृसिंह-क्कृति च।

अग्लायि ॥ ५४५ ॥

५४६। आरामाण्णल औ।

जग्लौ ॥ ५४६ ॥

५४७। आरामहरः कंसारि-सर्वेश्वर-रामधातुके इटि उसि च।

आरामहरस्य स्थानिवत्त्वाद्द्विर्वचनम्—जग्लतुः। 'उत्तमणल्' (४७३) इत्यत्र 'नृसिंहकार्यकरः' इति किम्? जग्लौ; पक्षे औनर्भविष्यत् ॥ ५४७ ॥

५४८। सत्सङ्गादेरात एरामः कपिल-कामपाले वा।

ग्लेयात्, ग्लायात्; ग्लासीष्ट, ग्लायिषीष्ट। एवं म्लै गात्रविनामे। **गै शब्दे—गायति;**—॥ ५४८ ॥

---

भक्तत्र इत्युदाहरणं वक्ष्यते। पाठग्रहणादिति, पाठशब्दग्रहणात् सहजारामान्तवद्व्यवहारः, अतो 'यम-रम-नमारामान्तेभ्यः' इत्यादिना सुगिटौ ॥

५४५। आतो। इणि, नृसिंहक्कृतिच परे आत उत्तरे युग् भवति। अग्लायीति, 'इण् भूतेश-ते भावकर्मणो'रितीण्, 'इणस्तो हरः' ॥

५४६। आरामा। आरामादुत्तरस्य णलः स्थाने औ भवति, जग्लाविति, 'नर-विष्णुजनानामादिः शिष्यते', 'नरस्य वामनः', 'कवर्ग-नरस्य चवर्गः' ॥

५४७। आराम। कंसारिश्चासौ सर्वेश्वरश्चेति कंसारिसर्वेश्वरः, सचासौ रामधातुकश्चेति तस्मिन्, इटि उसिच परे आरामहरो भवति। जग्लतुरिति, 'असंयोगादलिदधोक्षजः कपिल' इति कपिलत्वात् कंसारित्वम्॥ उत्तमेति, 'उत्तम-णल् नृसिंह-कार्यकरो वे'त्यत्र लक्षणे। कार्येति, नृसिंहो वेत्येवास्त्विति शेषः। पक्ष इति, नृसिंहो वा इति कृते पक्षे णलत्वाभात् 'आरामाण्णल औ'रिति न स्यात्। ततोऽसिद्धरूपं स्यात् तस्मात् कार्यकरपदोपादानात् वृष्णीन्द्रस्यैव पाक्षिकता ॥

५४९। दामोदर-मा-स्था-गा-पिवति-जहाति-स्यतीनामीरामो विष्णुजन-रामधातुक-कंसारौ।

'मा' इति मा-माङौ, 'गा' इति गै-गाङौ गृह्येते। गीयते॥५४९॥

५५०। दामोदरादीनामेरामः कपिल-कामपाले।

गेयात्। दैप् शोधने; प्राम इत्—दायति। कर्मणि—दायते। दामोदराभावान्नेत्वं, न सेर्महाहरत्वञ्च—अदासीत्; अदायि। एत्वं च न—दायात्। **धेट् पाने—ट्-इत् कृत ईवर्थः; धयति; धीयते—**॥५५०॥

---

५४८। सत्स। सत्सङ्ग आदिर्यस्य, तादृशस्य धातोराराामस्य स्थाने कपिलकामपाले परे एरामो वा स्यात्। ग्लेयादिति, 'कामपालपरपदं कपिलः' इति कपिलत्वम्। सत्सङ्गादेरिति किं, यायात्। सत्सङ्गादेरिति नातो विशेषणं, तेन निर्यायादिति। ग्लायिषीष्टेति, 'सहज-सर्वेश्वरान्त-हन-ग्रह-दृशिभ्य इण्वदिड्वा स्य-सि-कामपाल-वालकल्किषु भाव-कर्मणो'रिति इण्वदिट्, 'आतो युगिणि नृसिंह-कृति चे'ति युक्। म्लै गात्रविनाम इति, विनामः कान्तिक्षयः॥

५४९। दामो। विष्णुजनश्चासौ रामधातुकश्चेति विष्णुजनरामधातुकः, सचासौ कंसारिश्च तस्मिन् दामोदरस्य, मा माने अदादिः, माङ माने ह्वादिर्दिवादिश्च, ष्ठा गतिनिवृत्तौ, गै शब्दे भ्वादिः, गाङ गतौ भ्वादिः, पा पाने ओहाक् त्यागे, षो अन्तकर्मणि इत्येतेषाञ्च, अन्त ईरामो भवति। पिवतीतिनिर्देशः पा रक्षण इत्यस्य निरासार्थः। जहातीतिनिर्देशः ओहाङ-गतावित्यस्य निरासार्थः। स्यतीतिनिर्देशस्तु दैवादिकत्वसूचनार्थो, नत्वन्यनिरासार्थः, यङलुकि ईरामविधानाभावार्थश्च॥

५५०। दामो। कपिल-कामपाले परे दामोदरादीनामन्त एरामो भवति। कपिलेति किं, गासीष्ट। नेत्वमिति, 'दामोदर-मा-स्थे'त्यादिना न ईरामः। न से र्महाहरश्चेति, 'इण्-स्था-पिवती'त्यादिना न सेर्महाहरः। एत्वं च नेति, 'दामोदरादीनामि'त्यादिना न एरामः। ट्-इत् कृत ईवर्थ इति, टरामस्य इत्त्वं स्तनन्धयीत्यादौ कृत्प्रत्ययान्तादीप् प्रत्ययार्थमित्यर्थः। धीयत इति, 'दामोदरमास्थे'त्यादिना ईरामः॥

५५१। धेट्-श्विभ्यामङ् वा भूतेशे कर्तरि।

ङ इत्, अरामशेषः; 'चङ' पा (३।१।४८, ४९)। आरामान्तपाठः, आरामहरः, स्थानिवत्त्वाद्द्विर्वचनम्—अदधत्, अदधताम्, अदधन्। सि-पक्षे ॥ ५५१ ॥

५५२। घ्रा-धेट्-शा-छा-साभ्यः सेर्महाहरो वा परपदे।

अधात्, अधाताम् ॥ ५५२ ॥

५५३। आरामादन उस्, भूतेश्वरस्य तु वा।

अधुः। अत्रारामहरेऽपि न नैमित्तिकापायः—यं दृष्ट्वा यस्योत्पत्तिः, स तस्य 'सन्निपातः', 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघाताय' इति न्यायेन; तथा 'कृष्णाय' इत्यत्र त्रिविक्रमश्च य-कार-

---

५५१। धेट्। भूतेशे परे धेट् पाने, टुओश्वि गति-वृद्ध्योरित्येताभ्यामुत्तरे कर्तरि वाच्ये अङ्वा भवति। आरामहर इति, 'आरामहरः कंसारि-सर्वेश्वर-रामधातुके इटि उसिचे'त्यनेनेति शेषः। अदधदिति, 'हरिखड्गस्य हरिकमलं, हरिघोषस्य हरिगदा नरस्ये'त्यनेन धस्य दत्वम्। अकर्तरितु, अधिषातां गावौ वत्सेन ॥

५५२। घ्राधेट्। घ्रा गन्धोपादाने, धेट् पाने, शो तनुकरणे, छो छेदने, षो अन्तकर्मणि इत्येतेभ्य उत्तरस्य सेः परपदे महाहरो वा भवति ॥

५५३। आरा। आरामादुत्तरस्य अनः स्थाने उस् वा भवति, भूतेश्वरस्य तु अनः स्थाने उस् वा भवति। अधुरिति, 'आरामहरः कंसारि-सर्वेश्वरे'त्यादिना आरामहरः। अत्रेति, अत्र आरामो निमित्तं, उस् नैमित्तिकः। यं दृष्ट्वेति, अत्र उसं दृष्ट्वा आरामहरस्य उत्पत्तिरिति आरामहर उसः सन्निपातः। सन्निपातस्वरूपो विधिरारामहरो न तिमित्तमुस्विघातायेति। तथेति, तत्र यरामं दृष्ट्वा त्रिविक्रमस्योत्पत्तिरिति त्रिविक्रमो यरामस्य सन्निपातः। अधायिषातामिति, 'सहजसर्वेश्वरान्ते'-त्यादिना इण्वदिट्, 'आतो युगि'त्यादिना युक्, पक्ष इति इण्वदिडभावपक्ष इत्यर्थः ॥

विघाताय न स्यादिति। पक्षे—अधासीत्। कर्मणि—अधायि, अधायिषाताम् ॥ ५५३ ॥

५५४। स्था-दामोदरयोरिरामो वैष्णवादिसावात्मपदे, सिश्च कपिलः।

अधिषाताम्। पा पाने—॥ ५५४ ॥

५५५। पः पिवः, घ्रो जिघ्रः, ध्मो धमः, स्थस्तिष्ठः, म्नो मनः, दानो यच्छः, दृशेः पश्यः, अर्तेॠर्च्छः, सर्तेर्जवार्थस्य धावः, शदेः शीयः,सदेः सीदः शिवे।

५५६। अन्तहरे न गोविन्दवृष्णीन्द्रौ।

पिवति; पीयते। भूतेशे—'इण्-स्था-' (४१८) इति अपात्। घ्रा गन्धोपादाने—जिघ्रति; घ्रायते। ध्मा शब्दाग्निसंयोगयोः—धमति। ष्ठा गतिनिवृत्तौ;—

---

५५४। स्था-दामो। वैष्णवादिश्चासौ सिश्चेति, तस्मिन् परे आत्मपदे स्था-दामोदरयोरन्त इरामो भवति, सिश्च कपिलवद्भवति। अधिषातामिति, कपिल वत्त्वान्न गोविन्दः। 'आद्यन्तवदेकस्मिन्नि'ति वैष्णवादिसि-परता, वैष्णवादीत्युपादानात् अधायिषातामित्यादौ नेरामः। किदागमः पूर्वसम्बन्धीति युको धात्ववयवत्वात्तत्प्राप्तिः स्यात्। ननु कपिलवत्त्वस्य गोविन्दनिषेध एव प्रयोजनं, गोविन्दस्तु इरामविधानसामर्थ्यादेव न भविष्यति, अन्यथा एराममेव विदध्यात्, तदेतत्कृतं स्पष्टतार्थं, ज्ञापकलभ्याच्छाब्दोऽर्थः स्पष्टो भवति ॥

५५५। पः पिव। पा पाने, घ्रा गन्धोपादाने, ध्मा शब्दाग्निसंयोगयोः, ष्ठा गतिनिवृत्तौ, म्ना अभ्यासे, दाण दाने, दृशिर प्रेक्षणे इत्येतेषामर्तेः, सृ गतौ, शद्लृ शातने, सद्लृ विसरण-गत्यवसादनेषु इत्येतेषाञ्च स्थाने शिवे परे यथाक्रमं पिवादय आदेशा भवन्ति। अर्तेरिति, ॠ गतौ प्रापणेच भ्वादिः, ॠ गतौ ह्वादिर्द्वयोरेव ग्रहणं, ॠ गतावित्यस्य ग्रहणं, शतृप्रत्यये इयृच्छदिति सिद्धयर्थमिति ज्ञेयम्। जवार्थस्येति वेगार्थ-

नरामजावनुस्वार-पञ्चमौ झलि धातुषु ।
सरामजः शरामश्चे रषाभ्यां टुस्तवर्गजः ॥

यथा शंस्, अञ्च, व्रश्चू, ऊर्णुञ्; ष्ठा इति ठमध्यस्य धातोरादौ सत्वे कृते 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन ष-निमित्तस्य ठस्य थत्वे। 'स्थस्तिष्ठः' ( ५५५ ) – तिष्ठति। भावे— स्थीयते ॥ ५५५-५५६ ॥

५५७। उदः स्थास्तम्भोः सस्य हरः।

उत्थीयते; द्वित्वे (१२०)—उत्त्थीयते। 'इण्-स्था' (४१८) इति सेर्महाहरः—अस्थात्। अस्यात्मपदञ्च वक्ष्यते (११७१)। ततः 'स्था-दामोदरयो' ( ५५४ ) इति—अस्थित, अस्थिषाताम्। 'आरामाण्णल औ' ( ५४६ )—तस्थौ। दामोदरादित्वान्नित्यमेत्वम्

---

स्येत्यर्थः। अवेगे तु अनुसरति। ऋच्छधातो ऋच्छतीति धावुधातो र्धावतीति सिध्यत्येव, किन्तु ऋधातोररतीति वेगेऽपि सर्तेः सरतीति स्यात्, तन्निरासार्थं वचनम् ॥

५५६। अन्त। अन्तस्य हरे सति गोविन्दवृष्णीन्द्रौ न भवतः। पिबतीति, 'अरामहर ए अयोरविष्णुपदान्ते' इति अरामहरः। 'लघूद्धवस्य गोविन्द'इत्यनेन गोविन्दः स्यात्। नरामजाविति धातुष्विति सर्वत्र योज्यं, झलि वैष्णवे परे अनुस्वारपञ्चमौ नरामजौ ज्ञेयो, चे परे शरामः सरामजो ज्ञेयः। रषाभ्यां परष्टवर्गस्तवर्गजो ज्ञेयः। क्रमेणोदाहरणमाह यथेति ॥

५५७। उदः। ष्ठा गतिनिवृत्तौ, स्तन्भु सौत्रधातुः, उद उत्तरयोरेतयोः सस्य हरो भवति। द्वित्व इति, विष्णुजने 'विष्णुजनो वा हरौ विने'त्यनेन द्वित्वम्। अस्येति, स्था धातोः 'स्थो निर्णीताविʼत्यनेनात्मपदं वक्ष्यते। अस्थितेति, 'स्था-दामोदरयोरिराम' इत्यादिना इरामे कृते, 'वामन वैष्णवाभ्यां सेर्हरो वैष्णवे नत्विट्' इत्यनेन सेर्हरः। तस्थाविति, 'शौरिशिरस्कस्तु सात्वतः', 'नरस्य वामनः', 'हरिखड्गस्य हरिकमलं', 'आरामाण्णल औः'। नित्यमेत्वमिति, 'दामोदरादीनामेरामः कपिल-कामपाले' इत्यनेनेति शेषः ॥

(५५०)—स्थेयात् ; स्थाता। उत्थाता। म्ना अभ्यासे—मनति। दान दाने ; न इत्—यच्छति ; दीयते। दृशिप्रभृतयोऽग्रे (५८०) दर्शयितव्याः। स्मृ चिन्तायाम्—स्मरति ; —॥ ५५७ ॥

५५८। अर्ति-सत्सङ्गाद्यृदन्तयोर्गोविन्दो यक्-काम-पाल-ययोर्यङि च।

स्मर्यते। अस्मार्षीत्, अस्मार्ष्टाम्, अस्मारि ॥ ५५८ ॥

५५९। ऋराम-वृ-सत्सङ्गाद्यृदन्तेभ्य इड्वा सि-काम-पालयोरात्मपदे।

अस्मरिषाताम्, अस्मृषाताम्, अस्मारिषाताम्। सस्मार ॥५५९॥

५६०। सत्सङ्गाद्यृदन्तस्य ऋच्छेर्ऋरामान्तानाञ्च गोविन्दोऽधोक्षजमात्रे, न तु वृष्णीन्द्रे।

सस्मरतुः, सस्मरुः ; थलि 'ऋरामात्तु नित्यं नेट्' (५१२)—सस्मर्थ ; 'कृ-सृ-भृ-वृ-' (४७०) इत्यादिनियमान्नित्यमिट्—सस्मरिव,

---

५५८। अर्ति। सत्सङ्ग आदिर्यस्य स सत्सङ्गादिः, ऋत् अन्ते यस्य स ऋदन्त, सत्सङ्गादिश्चासौ ऋदन्तश्चेति सत्सङ्गाद्यृदन्तः, अर्तेः सत्सङ्गाद्यृदन्तस्य च यकि, कामपाल-ये, यङिच परे गोविन्दो भवति। सत्सङ्गादिति किं, म्रियते। अस्मार्षीदिति 'ईशान्तस्य वृष्णीन्द्रः सौ परपदे' इत्यनेन वृष्णीन्द्रः॥

५५९। ऋराम। अस्मृषातामिति, 'ऋद्वयाद्विष्णुजनान्तेशोद्धवाच्च वैष्णवादिसि-कामपालौ कपिलावात्मपदे, गमेस्तुवे'त्यनेन कपिलत्वान्न गोविन्दः, इण्वदिट्पक्षे अस्मारिषातामिति। सस्मारेति, 'नर-ऋरामस्याराम:' इत्यनेन ऋरामस्यारामः॥

५६०। सत्स। वृष्णीन्द्र इति विषयसप्तमी। नतु वृष्णीन्द्र इति सस्मारेत्यादौ न गोविन्दः। (सर्वेश्वरान्तादित्यादाविति लक्षणविशेषणम्)। स्मर्यादिति, 'अर्ती'त्यादिना गोविन्दः। य-ग्रहणादिति, अर्तीत्यादिलक्षणे 'यक्-

सस्मरिम ; सस्मरे। स्मर्यात्। 'य'-ग्रहणात् नेह गोविन्दः— स्मृषीष्ट स्मर्ता ॥ ५६० ॥

५६१। ऋराम-हनिभ्यामिट् स्ये स्वरतेश्च।

स्मरिष्यति। स्वृ शब्दोपतापयोः ; 'स्वरति-सूति'-( ४६५ ) इति वेट्—-अस्वारीत्, अस्वार्षीत्,। 'स्वरिष्यति' इति तु नित्यम्। सृ गतौ; **'सर्तेर्जवार्थस्य धावः'**(५५५) **धावति। अजवार्थे—सरति ;—**॥५६१॥

५६२। ऋरामस्य रिः श-यक्-कामपाल-येषु, न च त्रिविक्रमः।

स्रियते ५६२ ॥

५६३। सर्ति-शास्त्यर्तिभ्यो ङो भूतेशे कर्तरि।

५६४। ऋद्वयान्त-दृश्योर्गोविन्दो ङे।

असरत् ; स्रियात् ; सर्ता ; सरिष्यति। **ऋ गतौ प्रापणे च—-ऋच्छति ;—**॥ ५६३-५६४ ॥

---

कामपाल-ययो'रिति कृते सत्सङ्ज्ञाद्यृदन्तेतिविशेषविधानात् 'ऋद्वयाद्विष्णु-जनान्तेशोद्धवाच्चे'त्यादिलक्षणे सत्यपि स्मृषीष्टेत्यादौ गोविन्दः स्यादिति य-ग्रहणं कृतम् ॥

५६१। ऋरामेति। ऋरामान्ताद् हन हिंसागत्योरित्येतस्माच्चोत्तरे स्ये परे इड् भवति। स्वर। स्वृ शब्दोपतापयोरित्येतस्माच्चोत्तरे स्ये परे इड् भवति। ऋरामान्तत्वात् पूर्वेणैव सिद्धे लक्षणमिदं 'स्वरति-सूती'-त्यादिना विहितस्य विकल्पितेटो वाधनार्थम् ॥

५६२। ऋराम। शे, यकि कामपाल-ये च परे ऋरामस्य स्थाने रि भवति, त्रिविक्रमश्च न भवति। स्रियत इति, 'वामनस्य त्रिविक्रमः कृत्-कृष्णधातुकेतर-य-प्रत्यये' इत्यनेन त्रिविक्रमः स्यात्, शे परे त्रिविक्रम-विधेरसम्भवात् तन्निषेधो यक् कामपाल-ययोरेव ज्ञेयः ॥

५६३। सर्ति। सृ-गतौ, शासु अनुशिष्टौ, ऋ गतौ प्रापणेच, ऋ गतौ इत्येतेभ्य उत्तरे कर्तरि वाच्ये भूतेशे परे ङो भवति ॥

५६४। ऋद्व। ङे परे ऋद्वयान्तस्य दृशेश्च गोविन्दो भवति ॥

५६५। उपेन्द्रारस्त्रिविक्रमः।

५६६। नामधातौ तु वा तदलश्च, न तु त्रिविक्रम-भवस्य।

'नित्यं धातूपसर्गयोः' इति पुनः 'नित्यग्रहणान्निषेधः, तदनुगतो वामनश्च न स्यात्'—प्राच्छंति, पराच्छंति। 'अंति-सत्सङ्गाद्यृदन्तयोर्गोविन्दः' (५५५) इति—अर्यते। आर्च्छत्, आरत्। समस्त्वात्मपदं वक्ष्यते (११७५)—समारत। तदेतत् काशिकादावपि मतम्। 'अन्तस्य' (४२४) इति वृष्णीन्द्रः, आदेशः स्थानिवत्, तत ऋरामस्य द्विर्वचनम्, 'नरऋरामस्यारामः' (४८८), 'नरादेररामस्य त्रिविक्रमः' (४७५)—आर। 'ऋद्वयं रः' ( ६१ ), स्थानिवत्त्वं द्विर्वचनं, त्रिविक्रमः—आरतुः, आरुः ; 'अत्यर्ति-वृ-व्येञ्भ्यो नित्यम्' ( ५११ ) इति इट् थलि—आरिथ। **श्रु श्रवणे**—॥ ५६५-५६६ ॥

५६७। श्रुवः शपः श्नुस्तस्य शृश्च।

'श्रुव' इति बाहुल्यादुवादेशः। श् इत् ॥ ५६७ ॥

---

५६५। उपे। उपेन्द्र-सम्बन्धिनोऽरस्त्रिविक्रमो भवति ॥

५६६। नाम। नामधातौ तु उपेन्द्रार उपेन्द्रालश्च त्रिविक्रमो वा भवति, त्रिविक्रमभवस्य उपेन्द्रार उपेन्द्रालस्तु त्रिविक्रमो न भवति। ननु प्राच्छंतीत्यत्र 'ऋद्वयाद्वयो ऋंती'त्यनेन पक्षे सन्धिनिषेधः पराच्छंतीत्यत्रापि पक्षे सन्धिनिषेधस्तदनुगतो वामनश्च भवतु इति चेत्तत्राह, नित्यमिति। नित्यं धातूपसर्गयोरित्यत्र पुनर्नित्यग्रहणाद्धेतोः पाक्षिकसन्धिनिषेधस्तदनुगतवामनश्च न स्यादित्यर्थः। प्राच्छंतीति, 'ऋद्वये अरि'त्यनेन अर्। नामधातौत्वित्यादेरुदाहरणं वक्ष्यते। आरदिति, 'सर्ती'त्यादिना ङः, 'ऋद्वयान्ते'त्यादिना गोविन्दः। तदेतदिति, यथा भूतेशमात्रे नित्य-ङ-विधानमात्मपदविधानञ्चास्माभिः कृतम्। तथा काशिकादावपि। क्रमदीश्वरादयस्तु सर्तेरर्तेश्च आत्मपदे विकल्पयन्ति ॥

५६८। उ-श्न्वोर्गोविन्दः।

शृणोति, शृणुतः, शृण्वन्ति; शृणोषि, शृणुथः, शृणुथ; शृणोमि ॥ ५६८ ॥

५६९। असंयोगपूर्वस्य प्रत्यययोरामस्य हरो वा निर्गुण-वमोः।

५७०। करोतेस्तु नित्यं ये च।

शृण्वः शृणुवः, शृण्मः शृणुमः; श्रूयते। शृणुयात्। शृणोतु ॥ ५६९ ५७० ॥

५७१। उरामात् प्रत्ययादसंयोगपूर्वात् हेर्हरः।

शृणु; शृणवानि, शृणवाव, शृणवाम। अशृणोत्। अश्रौषीत्। शुश्राव, शुश्रुवतुः। 'कृ'-आदिनियमे 'मात्र'-(४७०) ग्रहणात् थल्यपि नेट्—शुश्रोथ। श्रूयात्। श्रोता। श्रोष्यति। अश्रोष्यत्। षु प्रसवे—॥ ५७१ ॥

---

५६७। श्रुवः। श्रु श्रवणे इत्यस्य शपः स्थाने श्नु भवति, श्रुवः स्थाने शृश्च भवति। नामप्रकरणे ऊरामस्यैवोवादेशो विहितः, अतएवोक्तं बाहुल्यादुवादेश इति ॥

५६८। उश्न्वोः। उश्न्वोर्गोविन्दो भवति उर्वक्ष्यते। शृणुत इति, 'अपृथुः कृष्णधातुको निर्गुण' इति निर्गुणत्वम् ॥

५६९। असं। निर्गुणवमोः परयोरसंयोगपूर्वस्य प्रत्यययोरामस्य हरो वा भवति ॥

५७०। करो। निर्गुणवमोर्येच परे करोतेः प्रत्यययोरामस्य नित्यं हरो भवति। असंयोगपूर्वस्येति किं, प्राप्नुवः, प्राप्नुमः। निर्गुणेत्युपादानात् शृणोमीत्यादौ न भवति ॥

५७१। उरा। असंयोगपूर्वात् प्रत्ययादुरामात् परस्य हे र्हरो भवति। असंयोगपूर्वस्येति किं, प्राप्नुहि। क्रादिनियम इति, 'कृ-सृ-भृ-वृ स्तु-द्रु श्रु-स्रुभ्य एवाधोक्षजमात्रे नेडिति' नियमे ॥

५७२। सुस्तुधूञ्भ्य इट् सौ परपदे।

असावीत्। स्रु गतौ — ॥ ५७२ ॥

५७३। णि-श्रि-द्रु-स्रु-कमिभ्योऽङ् भूतेशे कर्तरि।

'धातोश्चतुःसनस्येयुवौ' ( ५०४ )—असुस्रुवत्। गम्लृ गतौ ; 'इषु-गमि'-(५२६) इति च्छः—गच्छति ; गम्यते ;—॥ ५७३ ॥

५७४। पुषादि-द्युतादि-ऌदितो ङो भूतेश-परपदे।

पुषादिरयं दिवाद्यन्तर्गणः। अगमत् ; अगामि। 'गमेस्तु वा' (४६९) इति सेः कपिलत्वम् ; 'हरिवेण्वन्त'-(५२९) इत्यादिना अगसाताम्, कपिलत्वाभावे अगंसाताम्। एवम्—अगसत, अगंसत ; अगथाः, अगंस्थाः। जगाम ॥ ५७४ ॥

५७५। गम-हन-जन-खन-घसामुद्धवादर्शनं कंसारि-सर्वेश्वरे ङं विना।

जग्मतुः, जग्मुः ; जगमिथ, जगन्थ ॥ ५७५ ॥

---

५७२। सुस्तु। ष्टुञ् स्तुतौ, षु प्रसवे, धुञ् कम्पने इत्येतेभ्य उत्तरे सौ परे परपदे इड् भवति ॥

५७३। णि-श्रि। ण्यन्तात्, श्रिञ् सेवायां, द्रु गतौ, स्रु गतौ, कमु कान्तौ इत्येतेभ्यश्चोत्तरे कर्तरि वाच्ये भूतेशे परे अङ भवति ॥

५७४। पुषादि। भूतेशपरपदे परे पुषादेर्द्युतादेर्ऌदितश्चोत्तरे ङो भवति, द्युतादिर्भ्वाद्यन्तर्गणः। अगथा इति, 'वामनवैष्णवाभ्यामि'त्यादिना से-र्हरः ॥

५७५। गम। ङं विना कंसारिसर्वेश्वरे परे गमॢ गतौ, हन हिंसा-गत्योः, जनी प्रादुर्भावे, जन जनने, खनु अवदारणे इत्येतेषां, घसश्च उद्धवारामादर्शनं भवति। घसिति, घस्ॢ अदने इत्यस्य 'अदो घस्ॢ भूतेश-सनोरधोक्षजे तु वे'त्यनेन विहितस्य ग्रहणमिति केचित्, घसादेशस्यच घस्ॢधातोरसार्वत्रिकप्रयोगत्वात्। आदेशस्यैव ग्रहणमित्यपि केचित्। ङं विनेति किं, अगमत्। जगमिथ, जगन्थेति, 'सहजारामवतश्च तादृशा-दि'ति वेट् ॥

५७६। गमेरिट् सरामादि-रामधातुके, नात्मपदे।

गमिष्यति ; गंस्यते। स्कन्दिर् गति-शोषणयोः ; 'इरनुबन्धान् ङो वा (४५३), 'अनिरामेतां' (४५६) इति नस्य हरः—अस्कदत् ; पक्षे—अस्कान्तसीत्। प्रक्रिया (पा ८।३।७४) तु चिन्त्या। **तॄ प्लवन-तरणयोः—तरति ;—॥ ५७६ ॥**

५७७। ऋ़रामस्येर् कंसारौ।

'धातो र-व'-( २६४ ) इति त्रिविक्रमः—तीर्यते। अतारीत् ; अतारि ॥ ५७७ ॥

५७८। ऋ़राम-वृभ्य इटस्त्रिविक्रमो वा, न तु पर-पद-सौ कामपालाधोक्षजयोश्च।

५७९। इण्वदिटो न त्रिविक्रमः।

अतरीषाताम्, अतरिषाताम्, अतारिषाताम्। 'ऋ़राम-वृ-सत्-सङ्गाद्यदन्तेभ्यः' ( ५५९ ) इति पक्षे नेट्—अतीर्षाताम्। ततार।

---

५७६। गमेः। सरामादिरामधातुके परे गमेरुत्तरे इड् भवति, आत्मपदे च न भवति ॥ अस्कान्त्सीत् इति, 'विष्णुजनान्तानामनिटां सौ परपदे' इत्यनेन वृष्णीन्द्रः 'यादवमात्रे हरिकमलन्'। प्रक्रियातु चिन्त्येति, तस्मात् प्रक्रियायां नैवं मतमिति बोद्धव्यम् ॥

५७७। ऋ़राम। कंसारौ परे ऋ़रामस्य स्थाने इर् भवति ॥

५७८। ऋ़राम। ऋ़रामवृभ्यः परस्य इटस्त्रिविक्रमो वा भवति, परपद-सौ कामपाले अधोक्षजे च परे न भवति। वृ इति, वृङ संभक्तौ, वरणे द्वयोरेव ग्रहणम्, अतो बहुवचनमुपन्यस्तं, द्विवचनोपन्यासेऽपि असङ्गतिर्न स्यात्।

५७९। इण्व। इण्वदिटस्त्रिविक्रमो न भवति। एत्वे, 'नराद‍र्शने, इति, तॄ-फल-भज-त्रपामि'त्यादिनेति शेषः। नैत्वादीति, 'शसु-दद-वरामा-दीनामि'ति निषेधः ॥

'सत्सङ्गाद्यृदन्तस्य' ( ५६० ) इति गोविन्दः, एत्वे, नरादर्शने—तेरतुः। तीर्यात् ; तरिषीष्ट, तीर्षीष्ट, तारिषीष्ट ; तरिषीध्वम् तरिषीढ्वम्, तारिषीध्वम् तारिषीढ्वम्, तीर्षीढ्वम्। अतीढ्वंम् ; 'ईश्वर'-(४३२) इति 'ढः न' इति कश्चित्। तरिता, तरीता, तारिता। दॄ भये ; गोविन्दारामत्वान्नैत्वादि—ददरतुः, ददरिथ। षन्ज् सङ्गे—॥ ५७८-५७९ ॥

५८०। दन्श-रन्ज-षन्ज-स्वञ्जां नस्य हरः शपि।

सजति ; सज्यते। असाङ्क्षीत्, असाङ्क्ताम्। ससञ्ज, ससञ्जतुः दृशिर् प्रेक्षणे ; इरामस्य केवलग्रहणात् (४५५) नात्र नुम्। अत्र तु 'धातोरन्त इरित्' इति पृथगेव हि इद्विधानम्। पश्यति ; दृश्यते। 'इरनुवन्धान् ङो वा' (४५३), 'ऋद्वयान्त-दृश्योर्गोविन्दो ङे' (५६४)—अदर्शत्। सि-पक्षे—॥ ५८० ॥

५८१। सृजि-दृशोरमकपिलवैष्णवे।

म् इत्। 'ऋद्वयं रः' (६१), वृष्णीन्द्रः (४६६), 'छशो' (२५०) इत्यादिना षत्वम्, 'षढोः कः से' (५३६)—अद्राक्षीत्, अद्राष्टाम् ;

---

५८०। दन्श। दन्श दंशने, रन्ज् रागे, षन्ज् सङ्गे, ष्वन्ज् परिष्वङ्गे इत्येतेषां शपि परे नस्य हरो भवति, सज्यत इति। 'अनिरामेतामि'-त्यादिना नस्य हरः। इरामस्येति, 'इरामेद्धातो र्नुमि'त्यत्र इरामस्य केवल-ग्रहणात् केवलस्येरामस्य ग्रहणात्। पृथगेव हि इद्विधानमिति, तेन दृश-प्रभृतीनां इरनुवन्धत्वेनैव प्रसिद्धिर्नत्विरामानुवन्धत्वेन। टु नदि प्रभृती-नान्तु टुभागोऽपि पृथगिति इरामानुवन्धत्वमविरुद्धमेव। इरामस्येत्यादि पूर्वं स्कन्दधातोः प्रसङ्गे कथं नोक्तमिति न निश्चिन्मः, अथवा स्कन्दिरि-त्यत्र नरामस्य विद्यमानत्वेन नुमः प्रयोजनाभावान्नोक्तमत्रतु पूर्वं नरामा-भावेन नुमः संभावनयात्रैव सर्वं विवृतमिति। 'ऋद्वयान्तदृशोर्ङे' इति वहुषु पुस्तकेषु दृश्यते, तत्तु लिपिकरप्रमादकृतम्। 'ऋद्वयान्तदृश्योर्गोविन्दो ङे' इति वोद्धव्यम्॥

भावे — अर्दशि। 'ऋद्वयाद्विष्णुजनान्तेशोद्धवाच्च' (४६९) इति सेः कपिलत्वात् — अद्क्षाताम्, अर्दशिषाताम्। ददर्श। 'सृजि-दृशिभ्याञ्च' (५१०) इति थलि वेट् — दर्दशिथ, दद्रष्ठ। दृश्यात्; दृक्षीष्ट, दर्शिषीष्ट। द्रष्टा। द्रक्ष्यति। अद्रक्ष्यत्। दन्श् दंशने — दशति। **कित् निवासे, रोगापनयने च——॥ ५८१ ॥**

५८२। गुप्-तिज्-किद्भ्यः सन्।

**गुपो बधश्च निन्दायां क्षमायां सन् भवेत्तिजः।**
**सन्देहे रुक्-प्रतीकारे कितो मानो विचारणे ॥ २७ ॥**

५८३। नेट् स्वार्थे सनि।

५८४। ईश-समीपाद्विष्णुजनादनिट् सन् कपिलः।

५८५। ईशाच्च।

धातोर्द्विर्वचनम्; सनाद्यन्ताश्च धातवः (५१५), पूर्वधातुवत् सनः परपदादि — विचिकित्सति धर्मम्; चिकित्सति रोगिणम्। **ऋत घृणायाम्, सौत्रधातुः; सर्वे सौत्राः परपदिनः;—— ॥ ५८५ ॥**

---

५८१। सृजि। अकपिलश्चासौ वैष्णवश्चेति, तस्मिन् परे सृज् विसर्गे, दृशिर् प्रेक्षणे इत्येतयोरम् भवति॥ कपिलत्वादिति, 'ऋद्वयाद्विष्णुजनान्तेशोद्धवाच्चे'त्यादिना कपिलत्वम्। कितेति, रोगापनयन इत्यनन्तरं संशय इत्यपि ज्ञेयम्। चिकित्सतीत्यादौ स्वार्थसनि इड्निषेधस्य वक्ष्यमाणत्वात्॥

५८२। गुप्-तिज्। गुप गोपनकुत्सनयोः, तिज् निशाने क्षमायाञ्च, कित् निवासे रोगापनयनेच इत्येतेभ्य उत्तरे सन् भवति। गुपोवधश्चेति, रुक् प्रतीकारे रोगप्रतीकारे। वधो मानश्च। सन्विधानलक्षणं वक्ष्यते॥

५८३। नेट्। स्वार्थे विहिते सनि परे इड् न भवति॥

५८४। ईश। ईशसमीपवर्तिनो विष्णुजनादुत्तरोऽनिट् सन् कपिलो भवति॥

५८५। ईशा। ईशाच्च परोऽनिट् सन् कपिलो भवति। पूर्व। सनन्तादुत्तरे पूर्वधातुवत् परपदादि भवति, सन्विधानात् पूर्वं यस्य

५८६। ऋतेरीयङ्।

ङित्त्वादात्मपदम्—ऋतीयते। कर्मणि—ऋतीय्यते; 'आय ईयङ' (५१७)—ऋत्यते। ऋतीयामासे; आनर्त्त। ऋरामैकदेशो ररामोऽपि नुड्विधिं (४७६) प्रति विष्णुजनो मन्तव्यः—आनृततुः। 'संज्ञा' तावत् द्विविधा—(१) पूर्वा, (२) अवरा च। अवरा तु द्विविधा—(१) पूर्वस्या विशेषरूपा, (२) उपमर्दकरूपा च। तत्राश्रुता विशेषरूपा; यथा—सर्वेश्वरादेर्दशावतारादिः। श्रुता तूपमर्दिका; यथा—भुवाद्यादौ श्रुता सनाद्यन्तादेर्नामत्वाद्युपमर्दिका धात्वादिरिति ज्ञेयम्। तद्वदिहापीति। एजृ कम्पने—एजति; प्रेजति। एजाञ्चकार॥ ५८६॥

**इति भ्वादि-परपदप्रक्रिया।**

---

परपदित्वं, सन्विधानेऽपि तस्य परपदित्वमेव, यस्यात्मपदित्वं, तस्यात्मपदित्वमेवेत्यर्थः। विचिकित्सति धर्ममिति, अस्ति न वेति सन्देहविषयं करोतीत्यर्थः, विपूर्वस्य चिकित्सधातोः सन्देहार्थत्वेनाकर्मकत्वाद्धर्मे इति सप्तम्यन्तपाठस्तु सभ्यः, रोगिणमित्यत्र रोगमिति वा पाठः। चिकित्सतीत्युक्ते रोगं प्रतिकरोतीत्यर्थो लभ्यत एव, तथापि देवं जयतीत्यादिवत् रोगं चिकित्सतीत्यादि प्रयुज्यते। सर्व इति। सर्वे सौत्रा धातवः परपदिनो भवन्ति, आत्मपदविधानलक्षणाभावादिति भावः॥

५८६। ऋते। ऋतेरुत्तरे ईयङ भवति। आय ईयङिति, 'आय ईयङ कर्मणिङ च रामधातुके तु वेति' लक्षणम्। आनर्त्तेति, गोविन्दः, ऋरामस्य द्विर्वचनं, 'नरऋरामस्यारामः', 'नरादेररामस्य त्रिविक्रमः', 'तस्मान्नुड् द्विविष्णुजने धातौ'। ननु आनृततुरित्यत्र द्विविष्णुजनधातुपरत्वाभावात् कथं नुट्? तत्राह ऋरामैकदेश इति। संज्ञेति, पूर्वा पूर्वोक्ता, अवरा परोक्ता, पूर्वस्य संज्ञाविशेषस्य इत्यर्थो न मनोरमोऽतः पूर्वस्येत्यत्र पूर्वस्या इति पाठः सभ्यः, संज्ञाया एव वाच्यत्वात्, उपमर्दकरूपा बाधकरूपा। अश्रुतेति अन्यत्रेति शेषः। यथेति, सर्वेश्वरादेरित्यादिशब्देन

# अथ भ्वादि-आत्मपदप्रक्रिया

एध् बृद्धौ—एधते; प्रैधते। तिज् निशाने, क्षमायाञ्च; निशानम्—तीक्ष्णीकरणम्। तत्र तेजते; क्षमायाम्—तितिक्षते। **जभ् गात्रविनामे; गात्रविनामः—जृम्भणम्;**

५८७। रधि-जभोर्नुम् सर्वेश्वरे।

जम्भते पण पन व्यवहारे, स्तुतौ च; 'गुपू-धूप'-( ५१५ ) इति आयः; अन्यधातुत्वात् परपदम्—पणायति; एवं पनायति इत्यादि॥ ५८७॥

---

विष्णुजनादेर्ग्रहणं, दशावतारादिरित्यादिशब्देन वलादेर्ग्रहणम्। श्रुतेति अन्यत्रेति शेषः। उपमर्दिकामाह यथा भुवाद्येति, भूसनन्ताद्याश्च धातव इत्यत्र भुवाद्याः दशगणप्रपठिता धातव इत्यनेन भुवाद्यानामादौ प्रथमतः संज्ञोल्लेखे सनान्ताद्याश्चेत्यनेन सनाद्यन्तादे र्या श्रुता नामत्वादी सा तूपमर्दिका वाधिकावरासंज्ञा धात्वादिरिति। नामत्वादीत्यत्र 'इरामादक्त्यर्थादीप्' इत्यनेन ईप् सिद्धा, सनाद्यन्तादेरित्यत्रादिशब्देनान्तर्गणादेर्ग्रहणं, यथा दिवादेरन्तर्गणः पुषादिः, एवं यथासम्भवमादिशब्दार्थमनुसन्धेयम्। धात्वादेरिति षष्ठ्यन्तः षाठः सभ्यः। यद्वा केचित् शब्दा विशेषणत्वेऽपि स्वलिङ्गं न त्यजतीतिस्वीकारेण धात्वादिरिति संज्ञाया विशेषणम्वा। तद्वदिति, अत्र करामादौ श्रुता ऋरामस्य सर्वेश्वरत्वोपमर्दिका विष्णुजनसंज्ञा, अथवा इहेत्यत्र इह परपदोऽपि पूर्वभूवादिधातूनां विशेषरूपा सूत्रधातुसंज्ञा इत्यपीत्यर्थः, प्रेजतीति, 'उपेन्द्राद्वयहर ए-ओ-रामयोरिनेधौ विने'-त्यनेन अरामहरः॥

॥ * ॥ इति परपदप्रक्रिया ॥ * ॥

---

एध बृद्धाविति। सविष्णुचक्रपाठो बहुषु पुस्तकेषु दृश्यते, स तु विष्णुचक्रस्य प्रसङ्गानुल्लेखाद् ग्रन्थकृतामनभीष्ट इति ज्ञेयम्। प्रैधत इति, 'इणेधौ विने'ति न अरामहरः। तत्रेति, निशानेऽर्थे॥

५८८। मूर्धन्यान्तादायो न व्यवहारे।

पणते। कमु कान्तौ ; कान्तिरिच्छा ;—॥ ५८८॥

५८९। कमेर्णिङ्।

अत्र ङित्त्वेऽपि वृष्णीन्द्रः ( ४७२ ) ईशस्यैव निषेधेन—कामयते॥ ५८९॥

५९०। णेर्हरोऽनिड़ादौ रामधातुके।

५९१। इण्वदिटि च।

काम्यते, कम्यते। ण्यन्तत्वादङ् ( ५७३ ) ;—॥ ५९०-५९१॥

५९२। अशास्वृदित उद्धवस्य वामनः।

---

५८७। रधि। रध हिंसायाञ्चेत्यस्य, जभधातोश्च सर्वेश्वरे विषये नुम् भवति। सर्वेश्वरे विषये इति व्याख्यानात् 'विष्णुनिष्ठा-सेट्क-गुरुमद्विष्णुजनान्तात् प्रत्ययान्ताच्च भावे लक्ष्म्यां ङाप्' इत्यनेन ङापा जम्भेति सेत्स्यति। अन्यधातुत्वात् परपदमिति, आत्मपदविधानलक्षणा-भावादिति भावः। पनायतीति, स्तौतीत्यर्थः॥

५८८। मूर्ध। व्यवहारेऽर्थे वर्तमानात् मूर्धण्यान्तात् पणधातोरुत्तरे आयो न भवति। पणत इति व्यवहारोऽत्रार्थः॥

५८९। कमेरुत्तरे णिङ भवति, अत्र ङित्त्वेऽपीति, ङित्त्वात् कंसारित्वं भवति, कंसारिषु ईशस्यैव वृष्णीन्द्रनिषेध उक्तः। अत्र त्वीशस्याभावात् वृष्णीन्द्रो भवत्येव। 'ईशस्येति किं, कामयत इति' पूर्वमेवोक्तं, तथाप्यत्र किमर्थमिदमुक्तमिति न निश्चिन्मः॥

५९०। णेर्हरो। अनिडादौ इडादिरामाधातुकभिन्ने रामधातुके परे णेर्हरो भवति॥

५९१। इण्व। इण्वदिटिच परे णेर्हरो भवति। कम्यत इति णिङभावपक्षे। इडादिरामधातुके तु, कामयिता, चोरयिता, अनिडादावित्यत्र अनिटीति वा पाठः॥

५९२। अशा। शास्वृदिद्भ्यामन्यस्य धातोरुद्धवस्य वामनो भवति॥

५९३। लघुयुक्त-धात्वक्षरपरस्य नरस्य सन्निमित्त-कार्यम्।

५९४। नरारामस्येरामः सनि।

५९५। तत्परस्य नर-लघोस्त्रिविक्रमः।

५९६। अङ्-परे णौ, न तु दशावतारादर्शने।

'णेर्हरः' (५७०)—अचीकमत। णिङभावपक्षे – अचकमत ॥ ५९२-५९६ ॥

५९७। णेर्न हर आम-अन्त-आलु-आय्य-इत्नु इत्येषु।

५९८। इत्नौ तु छन्दस्येव।

कामयाञ्चक्रे। अय् गतौ—अयते ;—॥ ५९७-५९८ ॥

५९९। प्र-परा-परीणां ररामस्य लत्वमयतौ।

प्लायते, पलायते, पल्ययते ॥ ५९९ ॥

---

५९३। लघु। लघुयुक्तं धात्वक्षरं परं यस्मात्, तादृशस्य नरस्य सन्निमित्तकार्यं भवति ॥

५९४। नरा। सनि परे नरारामस्य स्थाने इरामो भवति ॥

५९५। तत्पर। तत्परस्य लघुयुक्तधात्वक्षरपरस्य नरलघोस्त्रिविक्रमो भवति ॥

५९६। अङ्। अङ् परो यस्मात्, तादृशे णौ परे वामनादिकं भवति। दशावतारादर्शने तु वामनादिकं न भवति। प्रत्युदाहरणानि वक्ष्यन्ते। अचकमतेति, ण्यन्तत्वाभावेऽपि 'णि-श्रि-द्रु-स्रु-कमिभ्य' इत्यादिना अङ् भवत्येव ॥

५९७। णेर्न। आमादिषु परेषु णेर्हरो न भवति ॥

५९८। इत्नौ। इत्नौ परे तु छन्दस्येव णेर्हरो न भवति, भाषायान्तु णेर्हरो भवत्येव। अन्तादिषु पञ्चसु उदाहरणानि कृत्-प्रकरणे वक्ष्यन्ते ॥

६०० । अयास-दयेभ्य आमधोक्षजे ।

अयाञ्चक्रे । ओप्यायी वृद्धौ ; ओ-ई-रामावितौ ; प्यायते ; —॥६००॥

६०१ । दीप्-जनी-वुध्यति-पूरी-तायि-प्यायिभ्य इण् वा भूतेश-ते कर्त्तरि ।

६०२ । पदस्तु नित्यम् ।

'इणस्तो हरः' ( ४२५ ) — अप्यायि, अप्यायिष्ट ॥ ६०१-६०२ ॥

६०३ । प्यायः पीर्यङधोक्षजयोः ।

---

५९९ । प्रपरा । अयधातौ परे प्र-परा-परीणां ररामस्य स्थाने लरामो भवति । प्र-परा-परीणामिति, सान्निध्यात् अयतेरेव प्रपरापरयो गृह्यन्ते, तेन प्रगता आयका यस्मात् स प्रायको देश इत्यादौ न भवति ॥

६०० । अया । अधोक्षजे परे अय गतौ, आस उपवेशने, दय दान-गति रक्षण हिंसादानेषु इत्येतेभ्य उत्तरे आम् भवति ॥

६०१ । दीप । दीपी दीप्तौ, जनी प्रादुर्भावे, वुध अवगमने, पुरी आप्यायने, तायृ विस्तारपालनयोः, ओप्यायी वृद्धौ इत्येतेभ्य उत्तरे कर्त्तरि वाच्ये भूतेश-ते परे इण् वा भवति, वुध्यतीतिनिर्देशात् भ्वादेर्न ग्रहणम् ॥

६०२ । पद । कर्त्तरिवाच्ये भूतेश-ते परे पद गतावित्येतस्मादुत्तरे इण् नित्यं भवति ॥

६०३ । प्यायः । यङि अधोक्षजे च परे प्यायः स्थाने पीर्भवति, 'पी' इत्यस्य एकवर्णत्वाभावात् नान्ते प्रवर्त्तते, पिप्ये इति आदेशानन्तरं द्विर्वचनम् । कासाञ्चक्र इति, सौधैर्गृहविशेषैः । 'सौधोऽस्त्री राजसदन-मि'त्यमरात् । ननु 'वार्णो विकारः सन्धिः स्याद्विषयापेक्षकः क्वचिदि'त्य-नेन सन्धेर्विषयापेक्षकत्वात् शपा सह सन्धिमकृत्वा गाते गाते इत्यत्र द्विवचनवहुवचनविषये प्रथमतः 'अ-त आ ईस्तथयो'रित्यनेनारामस्य ईत्वं कथं न स्यात्, शपोऽरामविद्यमाने अन्त इत्यस्य नरामहरो वा कथं स्यादिति चेत् केनाप्युक्तम् । तत्रैवं समाधेयं, विषयापेक्षकः क्वचिदित्यस्य पारिभाषिकत्वेन, तत्र क्वचिद् ग्रहणेन च, मातृवत् परिभाषेति नेष्टं हि

असंयोगपूर्वस्ये'-( ५०६ ) त्यादिना यः—पिप्ये, पिप्याते, पिप्यिरे। काशृ दीप्तौ—काशते। 'काशाञ्चक्रे पुरी सौधैः' इति भाषावृत्तिः। कासृ कासरोग-शब्दे। 'अस्मादेवाम्' इति काशिका; अतो मतभेदात् 'उभयोरपि विकल्पः' इति केचित्। गाङ् गतौ—गाते, गाते, गाते; गासे इत्यादि; गीयते। कालापास्तु 'दामोदर'-( ५४९ ) इत्यादौ 'गायति' इति निर्दिश्य 'गायते' इत्येव मन्यन्ते देङ् पालने—दयते; दीयते। 'स्था-दामोदरयो'-( ५५४ ) इति—अदित, अदिषाताम् ॥ ६०३ ॥

६०४। देङः सनरस्य दिगिरधोक्षजे।

दिग्ये। गुप् गोपन-कुत्सनयोः—गोपते; कुत्सायाम्—जुगुप्सते। **मान विचारणे, पूजायाञ्च**—॥ ६०४ ॥

६०५। मान-बध-दान-शान्भ्यः सन्नीरामश्च नरस्य।

मीमांसते। पूजायाम्—मानते। बध बन्धने, निन्दायाञ्च; बधते; निन्दायाम्—बीभत्सते। बीभत्साञ्चक्रे। वर्ग्यादित्वात् 'शसु-दद'-

---

विरुद्धयते इत्युक्ताद्धेतोरन्तरङ्गबहिरङ्गयोरन्तरङ्गविधिर्बलवानिति न्याय-वलवत्वाच्च सन्धेरनिवार्यत्वम्, अतः सन्धौ सति शपोऽरामान्तर्भावात् तत्सर्वं नासमञ्जसम्, एतत् प्राचीनानामपि मतं, तथोक्तं तैः सन्निहिता-लाभे अन्यत् कार्यं, सन्निहितलाभे सन्निहितकार्यमेवेति न कश्चिद्विरोध इति। गीयत इति 'दामोदरे'त्यादिना ईरामः। कालापास्त्विवति, दामो-दरेत्यादाविति, दामोदरेत्यादिलक्षणानुरूपलक्षणे इत्यर्थः। गायतीति निर्दिश्येति, तस्मात् कालापानां मते गै शब्दे इत्यस्यैव ग्रहणं। अदितेति, 'स्था-दामोदरयो'रित्यादिना इरामे कृते 'वामनवैष्णवाभ्यामि'त्यादिना सेर्हरः॥

६०४। देङ। अधोक्षजे परे नरसहितस्य देङः स्थाने दिगिर्भवति॥

६०५। मान। मान विचारणे पूजायाञ्च, बध बन्धने निन्दायाञ्च, दान अवखण्डने, शान तेजने इत्येतेभ्य उत्तरे सन् भवति, नरस्यान्त

(४६७) इति न—वेधे। **रभ् राभस्ये, कौतुके इत्यर्थः ; आङ्पूर्वस्त्वारम्भे ; —॥ ६०५ ॥**

६०६। रभि-लभोर्नुम् शवधौक्षजवर्जितसर्वेश्वरे।

आरभते ; आरभ्यते। आरब्ध ; आरम्भि। **डुलभष् प्राप्तौ ; डु-षावितौ ; लभते ; लभ्यते। अलब्ध ;—॥ ६०६ ॥**

६०७। लभेर्नुम् णम्बिणोर्वा, सोपेन्द्रस्य तु नित्यम्।

अलम्भि, अलाभि ; प्रालम्भि। **द्युत दीप्तौ—द्योतते ; —॥६०७॥**

६०८। द्युतादिभ्यः, परपदं वा भूतेशे।

'पुषादि-द्युतादि'-(५७४) इति ङः—अद्युतत्, अद्योतिष्ट ॥६०८॥

६०९। सपरसर्वेश्वर-य-व-राणामि-उ-ऋ-रामादेशः सङ्कर्षण-संज्ञः।

---

ईरामश्च भवति। दान-शानोर्गुपादिवदर्थान्तरं नास्तीति सन्विधानेऽर्थ-व्यवस्था नोक्ता, किन्तु स्वार्थे भवतीति ज्ञेयम्। वीभत्सते इति 'जवर्जं हरिगदादे'रित्यादिना वस्य भत्वम्। वीभत्साञ्चक्रे इति, 'अनेकसर्वेश्वर-काशिभ्यामि'त्यादिना आम्। वर्ग्यादित्वादिति, वर्ग्यवरामादित्वात् 'शसु-ददु-वरामादीनामि'त्यादिना न एत्वादिनिषेधः ॥

६०६। रभि। शवधोक्षजयोर्वर्जितं वर्जनं यत्र, तादृशे सर्वेश्वरे परे रभि-लभोर्नुम् भवति, शवधोक्षजाभ्यां वर्जिते सर्वेश्वरे परे इति व्याख्याने तु अर्थसौष्ठवं न भवति। शवधोक्षजवर्जं सर्वेश्वर इति वा पाठः। आरब्धेति, 'वामनेत्यादिना सेर्हरः'। डु लभष् प्राप्तावित्यनन्तरं डुषाविताविति बहुषु पुस्तकेषु न दृश्यते, किन्तु तत् लिपिकरप्रमादात् पतितमिति लक्ष्यते ॥

६०७। लभे। णमौ इणि च परे लभेर्नुम् वा भवति, सोपेन्द्रस्य लभेस्तु नित्यं नुम् भवति। णमु कृत्, तत्रोदाहरणं कृत्प्रकरणे वक्ष्यते ॥

६०८। द्युता। भूतेशे विषये द्युतादिभ्य उत्तरे परपदं वा भवति ॥

'संप्रसारणम्' इत्यन्ये ॥ ६०९ ॥

६१० । द्युति-ष्वाप्योर्नरस्य सङ्कर्षणः ।

दिद्युते । वृतु वर्तने—वर्तते । द्युतादित्वात् अवृतत्, अर्वातिष्ट ; —॥६१०॥

६११ । वृतादिभ्यः परपदं वा स्य-सनोः

६१२ । क्रृपेर्वालकल्कौ च ।

६१३ । वृतु-वृधु-शृधु-स्यन्दूभ्यो नेट् सरामे आत्मपदाभावे ।

वर्त्स्यति ; वर्तिष्यते । क्रृपू सामर्थ्ये—॥ ६११-६१३ ॥

६१४ । क्रृपेर्ऋॄ ल्व ।

कल्पते । अक्लृपत्, अक्लृप्त ; अकल्पिष्ट । स्थानिवत्त्वात् 'नरऋरामस्यारामः' ( ४८८ )—चक्लृपे ॥ ६१४ ॥

---

६०९ । सपर । परसवर्णेश्वरसहितानां यराम-वराम-ररामाणामिरामोराम-ऋरामादेशः सङ्कर्षणसंज्ञो भवति ॥

६१० । द्युति । द्युतेर्ण्यन्तस्वपधातोश्च नरस्य सङ्कर्षणो भवति । दिद्युत इति, सङ्कर्षणविधानस्य परत्वात् नात्र 'नरविष्णुजनानामादिः शिष्यते' इति प्रवर्तते, यत उक्तं पूर्वपरयोः परविधिर्बलवानिति । अस्य चानन्तरपाठादित्यादिकं यद्वक्ष्यते, तदत्रैव वक्तुं योग्यमिति ज्ञेयम् ॥

६११ । वृता । स्य-सनोः सतोर्वृतादिभ्य उत्तरे परपदं वा भवति । वृतु वर्तने, वृधु वृद्धौ, शृधु अपानशब्दे, स्यन्दू स्रवणे एते चत्वारो वृतादयः ॥

६१२ । क्रृपेः । स्य-सनोः सतोर्वालकल्कौ च विषये क्रृपेरुत्तरे परपदं वा भवति ॥

६१३ । वृतु । आत्मपदाभावे सति सरामे परे वृतादिभ्य उत्तरे इड् न भवति ॥

६१४ । क्रृपेः । क्रृपेर्ऋॄराम लृरामो भवति । अक्लृपदिति, द्युतादित्वाद् ङोः, अक्लृप्त, अकल्पिष्टेति उरामेत्वाद्विकल्पितेट्त्वम् ॥

६१५। कृपेर्नेट् सरामादि-वालकल्क्योरात्मपदाभावे।

कल्प्ता। आत्मपदे—कल्प्ता, कल्पिता। **व्यथ् दुःखे, भये, चलने च—अव्यथिष्ट ; अव्याथि ;—॥ ६१५॥**

६१६। व्यथो नरस्य सङ्कर्षणोऽधोक्षजे, पुनर्न सङ्कर्षणः।

अस्य चानन्तरपाठान्नात्र 'नर-विष्णुजनानामादिः शिष्यते' (४५४)—विव्यथे। **ऊह् वितर्के—ऊहते ; ऊह्यते ;—॥ ६१६॥**

६१७। उपेन्द्रादूहतेर्वामनः कपिल-ये।

समुह्यते। केवलोहतेरेव। नेह—आ+ऊह्यते=ओह्यते, समोह्यते। नित्यत्वाद्वामनं वाधित्वा वृष्णीन्द्रः; 'सकृदपि विप्रतिषेधे यद्वाधितं, तद्वाधितम्' इति न्यायेन पुनर्न वामनः—समौह्यत॥ ६१७॥

**इति भ्वादि-आत्मपदप्रक्रिया।**

---

६१५। कृपे। आत्मपदाभावे सति सरामादौ प्रत्यये वालकल्कौ च परे कृपेरुत्तरे इड् न भवति। कल्प्ता, कल्पितेति विकल्पितेट्त्वात्॥

६१६। व्यथो। अधोक्षजे परे व्यथो नरस्य सङ्कर्षणो भवति॥ पुन। सङ्कर्षणे कृते पुनः सङ्कर्षणो न भवति। अस्य चेति अस्य सङ्कर्षण विधानस्यअनन्तरपाठात् परोक्तत्वात्॥

६१७। उपे। कपिल-ये परे उपेन्द्रादुत्तरस्य ऊह धातोर्वामनो भवति। ननु समौह्यतेत्यत्र वृष्णीन्द्रात् पुर्वं वामनः कथं न स्यादिति चेत्तत्राह नित्यत्वादिति। वामने कृतेऽपि न कृतेऽपि वृष्णीन्द्रो भवतीति वृष्णीन्द्रस्य नित्यत्वम् ननु वृष्णीन्द्रे कृतेऽपि वामनः कथं न स्यादिति चेत्तत्राह, सकृदपीति। विप्रतिषेधे ऊभयप्राप्तिविरोधे॥

॥ * ॥ इति आत्मपदप्रक्रिया॥ * ॥

# अथ भ्वादि-मिश्रप्रक्रिया

**पत्लृ गतौ--पतति ;--**

६१८। पतः पुम् ङे।

उमावितौ ; अपप्तत्। **सह् मर्षणे--सहते ; 'इषु-सह-'** (५४०) **इति वेट् ;** —॥ ६१८ ॥

६१९। सहि-वहोररामस्य ओरामो ढ-लोपे।

सोढा, सहिता। षद्लृ विशरण-गत्यवसादनेषु ; 'सदेः सीदः' (५५५)—सीदति ; निषीदति। **शद्लृ शातने ; शातनम्--छेदनम्--**॥ ६१९ ॥

६२०। शदेरात्मपदं शिवे।

'शदेः शीयः' (५५५)—शीयते। फण गतौ—फणति। पफाण, फेणतुः, पफणतुः। राजृ दीप्तौ—राजति, राजते। रेजतुः, रराजतुः। टुभ्राजृ दीप्तौ—भ्राजते। भ्रेजे, वभ्राजे। **खनु अवदारणे--खनति, खनते**—॥ ६२० ॥

---

अथ मिश्रप्रक्रियेति। अतःपरं परपद्यात्मपद्युभयपदीनां प्रक्रियेत्यर्थः। पत्लृ गताविति एष परपदी ॥

६१८। पत। ङेपरे पत उत्तरे पुम् भवति, अपप्तदिति लृदित्त्वान् ङः। सह मर्षण इति। एष आत्मपदी ॥

६१९। सहि। ढलोपे सति सह मर्षणे, वह प्रापणे इत्येतयो ररामस्य स्थाने ओरामो भवति। ढलोप इत्यत्र ढइर इति वा पाठः। सोढेति हस्य ढः 'हरिघोषात्तथोर्धोधावर्जमि'त्यनेन तस्य धः, 'षात् परस्ये'त्यादिना धस्य ढः, 'ढस्य हरो ढे' इति ढस्य हरः परत्वात्-त्रिविक्रमं वाधित्वा ओरामः। षद्लृ विशरणे इति विशरणं खेदनं, एष परपदी। निषीदतीति 'उपेन्द्रादपि षोपदेशस्य षत्वं क्वचिदि'त्यनेन षत्वं शद्लृ शातन इत्येष परपदी ॥

६२०। शदे। शिवे विषये शदेरुत्तरे आतमपदं भवति, परपदित्वादप्राप्ते विधानं शिव इति किं शत्स्यति। फण गताविति एष पर-

६२१। जन-खन-सनामारामो वा कंसारि-ये।

६२२। वैष्णवाद्योः कंसारि-सनोर्नित्यम्।

खायते,खन्यते। चखान, चख्नतुः। खायात्, खन्यात्। **गुहू संवरणे; ऊराम इत्** —॥ ६२१-६२२॥

६२३। गोह ओ ऊ सर्वेश्वरे।

गूहति, गूहते ; अगूहीत्, अघुक्षत्, अगूहिष्ट॥ ६२३॥

६२४। दुह्-लिह्-दिह-गुहेभ्यः सको हरो वा दन्त्याद्यात्मपदे।

अगूढ़, अघुक्षत ; 'सकोऽन्तहरः सर्वेश्वरे' (५३६)—अघुक्षाताम्, अघुक्षत ; अगूढाः, अघुक्षथाः, अघुक्षाथाम् ; अघूढ्वम्, अघुक्षध्वम् ; अघुक्षि ; प्रत्यय-वरामस्य दन्तौष्ठ्यत्वात् अगुह्वहि, अघुक्षावहि। जुगूह, जुगुहतुः। गोढा॥ ६२४॥

---

पदी। फेणतुरिति 'जृ-भ्रम-त्रस-फणादीनां हिंसार्थ राधश्च वे'त्यनेन एत्वं, नरादर्शनञ्च, राजृ दीप्ताविति एष उभयपदी। राजत इति उभयपदिभ्यः कर्तृगामिक्रियाफले आत्मपदं वक्ष्यते। टु-भ्राजृ दीप्ताविति एष आत्मपदी॥

६२१। जन। जन जनने ह्वादिः, जनी प्रादुर्भावे दिवादिर्द्वयोरेव ग्रहणं, खनु अवदारणे, षनु दाने इत्येतेषामन्तः कंसारि-ये परे आरामो वा भवति॥

६२२। वैष्ण। वैष्णवाद्योः कंसारि-सनोः परयोर्जन-खन-सनामन्त आरामो नित्यं भवति। उदाहरणानि वक्ष्यन्ते चख्नतुरिति, 'गम-हन-जन खने'त्यादिना उद्धवादर्शनम्॥

६२३। गोह। सर्वेश्वरे परे गोह ओरामस्य स्थाने ऊरामो भवति। अगूहीदिति इट्पक्षे सर्वेश्वर इति किं गोढा इडभावपक्षे सक्, अघुक्षदिति आत्मपदेतु इट्पक्षे अगूहिष्टेति॥

६२४। दुह्। दुह् प्रपूरणे, लिह् आस्वादने, दिह् उपचये, गुहू सम्वरणे इत्येतेभ्यः परस्य सको दन्त्याद्यात्मपदे परे हरो वा भवति।

हृञ् हरणे—हरति, हरते ; अहार्षीत्। 'ऋद्वयाद्विष्णुजनान्ते-' (४६९) त्यादिना सेः कपिलत्वम्—अहृत, अहृषाताम् ।

६२५ । हस्य जो नरस्य ।

जहार ; 'ऋरामात्तु नित्यं नेट्' (५१२)—जहर्थ । भज् सेवायाम्—भजति, भजते । बभाज, भेजतुः, भेजुः ; भेजिथ, बभक्थ । श्रिञ् सेवायाम्—'णि-श्रि'-(५७३) इति अङ—अशिश्रियत् । रन्ज् रागे—रजति ; रज्यते । **यज् देवपूजा-सङ्गतिकरण-दानेषु—यजति, यजते**—॥ ६२५ ॥

६२६ । वचि-स्वपि-यजादीनां सङ्कर्षणः कपिले ।

यजो वपो दहश्चैव वेञ-व्येञौ ह्वयतिस्तथा ।
वद्-वसो श्वयतिश्चैव नवैते स्युर्यजादयः ॥

इज्यते । नित्यत्वात् सङ्कर्षणे सति—ऐज्यत । 'छशो राज्'-(२५०) इति षत्वम्—अयाक्षीत्, अयाष्टाम् ॥ ६२६ ॥

---

अगूढेति सको हरे कृते हस्य ढः, तस्य धः, धस्य ढः, ढस्य हरः त्रिविक्रमः। अघुक्षतेति 'अरामान्यवर्णादि'त्यादिना नस्य हरः ॥

६२५ । हस्य । नरस्य हस्य स्थाने जो भवति । रजतीति 'दन्श रन्जे'त्यादिना नस्य हरः ॥

६२६ । वचि । वच् परिभाषण इत्यस्य व्रुञादेश वचेश्च, ञिष्वप् शय इत्यस्य च यजादीनाञ्च कपिले परे सङ्कर्षणो भवति । यजादीनाह यज इति । यज्धातोरर्थ उक्त एव, अष्टानामर्था निकट एव वक्ष्यन्ते । वद् वसावित्यत्र वस् वदाविति ज्ञेयं, वसधातोरनन्तरं वदधातोर्वक्ष्यमाणत्वात् अन्यत्र क्रमभङ्गाभावाच्च । नित्यत्वादिति । अदागमे कृतेऽनकृतेऽपि सङ्कर्षणो भवतीति सङ्कर्षणस्य नित्यत्वं तस्मात् अदागमात् पूर्वमेव सङ्कर्षणे कृते 'अत्प्रसङ्गमात्रे वृष्णीन्द्रः' ऐज्यतेति । अयाजीदिति 'षढोः कः से' इति षस्य कत्वम् । अयाष्टामिति 'वामने' त्यादिना सेर्हरः ॥

६२७। वच्यादीनां ग्रहादीनाञ्च नरस्य सङ्कर्षणोऽधोक्षजे।

ग्रहादयो वक्ष्यन्ते। इयाज, ईजतुः, ईजुः ; इयजिथ, इयष्ठ। इज्यात्। डुवप् वीज-तन्तु-सन्ताने ; डुरित् ; वपति, वपते ; उप्यते। वह् प्रापणे—वहति, वहते ; उह्यते। अवाक्षीत्। विशेषत्त्वादोरामो वृष्णीन्द्रं वाधते—अवोढाम्, अवोढ। उवाह, ऊहतुः। **वेञ् तन्तु-सन्ताने—वयति, वयते ; ऊयते—॥ ६२७ ॥**

६२८। वेञो न सङ्कर्षणोऽधोक्षजे।

ववौ, ववतुः ॥ ६२८ ॥

६२९। वेञो वयि वाधोक्षजे।

ग्रहादित्वात् नरस्य सङ्कर्षणः—उवाय ॥ ६२९ ॥

---

६२७। वच्या। अधोक्षजे परे वचि-स्वपि-यआदीनां ग्रहादीनाञ्च नरस्य सङ्कर्षणो भवति। ईजतुरिति नरस्य सङ्कर्षणे कृते 'असंयोगादलिदधोक्षजः कपिलः' इति कपिलत्वात् 'वचि-स्वपी'त्यादिना सङ्कर्षणः। इयष्ठेति 'षात् परस्ये'त्यादिना थस्य ठत्वं। ननु अवोढामित्यत्र ओरामविधानात् पूर्वं 'विष्णुजनान्तानामनिटामि'त्यादिना वृष्णीन्द्रः कस्मान्न स्यादितिचेत्तत्राह विशेषत्वादिति, अवोढामिति 'सहि-वहोररामस्य ओरामो ढलोपे' इत्यनेन ओरामः। ऊयत इति सङ्कर्षणे कृते 'वामनस्य त्रिविक्रम' इत्यादिना त्रिविक्रमः ॥

६२८। वेञो। अधोक्षजे परे वेञः सङ्कर्षणो न भवति। ववाविति आरामान्तपाठः, 'आरामाण्णल औ'। नात्र नरस्य सङ्कर्षणः। ववतुरिति 'आराम हरः कंसारी'त्यादिना आराम हरः, नात्र नरस्य धातोश्च सङ्कर्षणः ॥

६२९। वेञो। अधोक्षजे परे वेञः स्थाने वयिर्वा भवति, इराम इत्। ग्रहादित्वदिति वयेरिति शेषः ॥

६३० । ग्रहि-ज्या-वयि-व्यधि-वशि-व्यचि-व्रश्चि-प्रछि-भ्रस्जीनां संकर्षणः कंसारौ ।

'वयि'-ग्रहणं 'वेञो न' (६२८) इति निषेधात्ययार्थम् ॥ ६३० ॥

६३१ । वयो यस्य वो वा कपिले ।

ऊयतुः, ऊवतुः ; उवयिथ । **व्येञ् संवरणे**—॥ ६३१ ॥

६३२ । व्येञो नात्वमधोक्षजे ।

वृष्णीन्द्रः (४२४) – विव्याय, विव्यतुः । नारायणस्य सङ्कर्षण-निषेधात् 'विव्ययतुः' इति कालापाः । थलि 'अत्त्यर्ति-वृ-व्येञ्भ्यो नित्यम्' (५११) इति—विव्ययिथ । वीयात् । **ह्वेञ् स्पर्धायाम्--ह्वयति, ह्वयते ; हूयते--**॥ ६३२ ॥

६३० । ग्रहि । ग्रह उपादाने, ज्या वयोहानौ इत्येतयोर्वयेश्च व्यधि ताड़ने, वश कान्तौ, व्यचि व्याजीकरणे, ओव्रश्चू छेदने, प्रच्छ ज्ञीप्सायां, भ्रस्ज पाके इत्येतेषाञ्च कंसारौ परे सङ्कर्षणो भवति ।।

वयीति । व्ययि ग्रहणं 'वेञो न सङ्कर्षणोऽधोक्षजे' इत्यनेन विहितस्य निषेधस्य अत्ययार्थम् । अत्ययः खण्डनम् ।।

६३१ । वयो । कपिले परे वयो यस्य स्थाने वो वा भवति । उवयिथेति वय्यादेशपक्षे थलि नित्यमिट् । आदेशाभावपक्षेतु वेट् ।।

६३२ । व्येञो । अधोक्षजे परे व्येञ आरामान्तपाठो न भवति । वृष्णीन्द्र इति 'अन्तस्य वृष्णीन्द्रो नृसिंहे' इत्यनेन एरामस्य ऐरामः । विव्यायेति नरस्य सङ्कर्षणः । विव्यतुरिति नरस्य सङ्कर्षणे कृते 'धातोः सङ्कर्षणः', 'असंयोगपूर्वस्ये'त्यादिना यः । ननु विव्याय, विव्यतुरित्यत्र नर-नारायण-वरामयोः पुनः सङ्कर्षणं कस्मान्न स्यादिति चेत्तदैवं वाच्यं 'व्यथो नरस्य सङ्कर्षणमि'त्यत्र पुन र्न सङ्कर्षणमिति यन्निषेधनं तत्तूपक्षलणमेवान्येषां ज्ञापकत्वादुपलक्षणविधेः प्रकृतसिद्धोपयोगित्वात्तदप्यस्मिन् प्रयोक्तव्य-मिति । किम्बा 'प्रकृताश्रितत्वं प्रकृतावपी'त्यनेन पूर्वस्यान्तरङ्गत्वं तेन नरनारायण-वरामयोः पुनः सङ्कर्षणविधौ सति 'क्वचिदन्तरङ्गकार्यं

६३३। लिपि-सिचि-ह्वो ङो भूतेशे कर्तरि।

६३४। आत्मपदे तु वा।

आरामहरः—अह्वत् ; अह्वत, अह्वास्त ॥ ६३३-६३४ ॥

६३५। ह्वो नर-नारायणयोः संकर्षणो नामधातुं विना।

जुहाव। वस् निवासे—बसति—॥ ६३५ ॥

६३६। वसि-घस्योः षः।

उष्यते ॥ ६३६ ॥

६३७। सस्य तः सरामादि-रामधातुके।

अवात्सीत्, अवात्ताम्, अवात्सुः। उवास, ऊषतुः ; उवस्थ, उवसिथ। वद् व्यक्तायां वाचि—अवादीत्। टुओश्वि गति-वृद्धयोः ; 'टु ओ' इतौ ; श्वयति, श्वयते ; शूयते ॥ ६३७ ॥

---

क्रियमाणे तदनिमित्तं वहिरङ्गमसिद्धं स्यादि'त्यनेन यरामस्यासिद्धत्वात् सपरसर्वेश्वर-ररामस्याभावस्तस्मात् पुनः सङ्कर्षणसम्भावनैव न स्यादिति न क्वचिद्विरुद्धं स्यादिति ज्ञेयम्, वीयादिति 'सङ्कर्षणे', कृते 'त्रिविक्रमः' ।।

६३३। लिपि। लिप् उपदेहे, षिच् क्षरणे, ह्वेञ् स्पर्द्धायां इत्येतेभ्य उत्तरे कर्तरि वाच्ये भूतेशे परे ङो भवति ।।

६३४। आत्म। आत्मपदेतु ङो वा भवति ।।

६३५। ह्वोनर। नामधातुं विना ह्वो नर-नारायणयोः सङ्कर्षणो भवति। जुहावेति 'हस्य जो नरस्ये'ति हस्य जत्वम्। प्रत्युदाहरणं वक्ष्यते ।।

६३६। वसि। वसिघस्योरन्तः षो भवति। घसीति घस्लृ अदन इत्यस्य घसादेशस्य च ग्रहणम् ।।

६३७। सस्य। सरामादि-रामधातुके परे सस्य स्थाने तो भवति। सराम-रामधातुक इति वा पाठः। अवादीदिति 'वदव्रजयो र्वृष्णीन्द्रः सौ परपदे' इत्यनेन वृष्णीन्द्रः ।।

६३८। जॄ-स्तन्भु-म्रुचु-म्लुचु-ग्लुञ्चु-ग्लुचु-श्विभ्यो ङो वा भुतेश-परपदे।

ग्लुचुनैव सिद्धौ ग्लुञ्चेः पृथगुपादानान्नलोपाभावः; तेन—अग्लुञ्चत् ॥ ६३८ ॥

६३९। श्वयतेरिरामहरो ङे।

अश्वत्; पक्षे सिः, 'ह-म-यान्त'-(५१४) इति न वृष्णीन्द्रः—अश्वयीत्; पक्षे अङ—अशिश्वियत् ॥ ६३९ ॥

६४०। श्वेः संकर्षणो वा यङधोक्षजयोः।

६४१। सन्नङ्परे णौ च।

अत्र सकृद्गतन्यायो न वाधकः। मातृवत् परिभाषेति नेष्टं हि विरुध्यते। ततो 'यावत्सम्भवस्तावद्विधिः' इति न्यायेन वृष्णीन्द्रः, ततो द्विर्वचनम्—शुशाव, शुशुवतुः, शुशविथ; शिश्वाय, शिश्वियतुः, शिश्वयिथ ॥ ६४०-६४१ ॥

**इति भ्वादि-मिश्रप्रक्रिया।**

भूवादिगणः समाप्तः।

---

६३८। जॄ-स्तन्भु-जॄष वयोहानौ, स्तन्भू सौत्रधातुः, म्रुचु-म्लुचु-ग्लुचु-ग्लुञ्चु गतौ, टु ओश्वि गतिवृद्धचोः इत्येतेभ्य उत्तरे भूतेशपरपदे ङो वा भवति। ग्लुचुनैव सिद्धाविति अत्र ग्लुचु स्तेयकरण इत्यस्य ग्रहणे कृते ग्लुञ्चेः पृथगुपादानं सार्थकं भवति, किन्त्वत्र ग्लुचु गत्यर्थ एव गृह्यते, न तु स्तेयकरणार्थः, तथापि पृथगुपादानान्नलोपाभावः ॥

६३९। श्वय। ङे परे श्वयतेरिरामहरो भवति। पक्षे अङिति 'धेट् श्विभ्यामङ् वा भूतेशे कर्तरी'त्यनेनेति शेषः ॥

६४०। श्वेः। यङि अधोक्षजे च परे श्वेः सङ्कर्षणो वा भवति ॥

६४१। सन्नङ। सन् च अङ्च सन्नङौ तौ परौ यस्मात् तादृशे णौ च परे श्वेः सङ्कर्षणो वा भवति, सन् पर-णौ अङ् पर-णौ चेत्यर्थः, ननु

# अथ अदादिः

**अद् भक्षणे--**

६४२। अदादेः शपो महाहरः।

अत्ति, अत्तः, अदन्ति ; अद्यते। अद्यात्। अत्त ॥ ६४२ ॥

६४३। हु-वैष्णवाभ्यां हेर्धिः।

अद्धि ॥ ६४३ ॥

६४४। अदेरट् भूतेश्वर-दि-स्योः।

६४५। रुदादेरीट् च।

आदत्, आदः ॥ ६४४-६४५ ॥

---

शुशावेत्यत्र सङ्कर्षणस्य नित्यत्वात् प्रथमतो वाधितो वृष्णीन्द्रः सङ्कर्षणे कृते सकृद्गतन्यायात् पश्चादपि न भवत्विति चेत्तत्राह अत्रेति सकृद्गतमेवेति न्यायः हि यतः इष्टं विरुद्धचते, अतो मातृसदृश-परिभाषेति नेष्टं, अत्र यावदित्यादिन्यायाङ्गीकारः प्रयोजनाधिक्यशुन्य इति ज्ञेयम् ॥

॥ * ॥ इति मिश्रप्रक्रिया। भूवादिगणः समाप्तः ॥ * ॥



६४२। अदादेः। अदादिगणपठितस्य धातोः शपो महाहरो भवति। अत्तीति 'यादवमात्रे हरिकमलमि'ति दस्य तत्वम् ॥

६४३। हुवै। हु वह्नौ दाने इत्येतस्मात् वैष्णवाच्चोत्तरस्य हेः स्थाने धिर्भवति ॥

६४४। अदेः। भूतेश्वरदिस्योः परयोः अदेरुत्तरे अड् भवति। ट इत्। दिस्योरिति दिप्सिपोरेकदेशनिर्देशः ॥

६४५। रुदा। भूतेश्वरदिस्योः परयोः रुदादेरुत्तरे अट् ईट्च भवति। रुदादिर्वक्ष्यते। ननु अदेरडित्यादौ अ-ई न कृत्वा अडीडिति किमर्थं कृतमिति चेत् केनाप्युच्यते तत्रोच्यते, अदितोः केवलागमत्वेन षष्ठी निर्देशात् केवलप्रकृतिसम्बन्धित्वभावेन वा कपिलादिशङ्कया तद्वचवधाने दिप्सिपोः परयोः रुदादेर्लघूद्धवस्य गोविन्दो न भवतु, अतो अनिश्चिते सति अडीडिति कृतं टिदागमस्य प्रसिद्धपरसम्बन्धित्वेन पृथुत्वात् तद्वचवधानेऽपि न रुदादेर्गोविन्दस्य वाध इति ॥

६४६। अदो घस्ऌर्भुतेश-सनोरधोक्षजे तु वा।

ऌराम इत्; 'पुषादि'-(५७४) इति ङः—अघसत्; अघासि; अघत्साताम्। जघास, जक्षतुः, जघसिथ। विकल्पनमिदं ज्ञापकम्। ततः सहजानिट्-घस्ऌप्रयोगो न सार्वत्रिक इति 'जघस्थ' इति न भवेदेव। पक्षे—आद, आदतुः। 'अत्त्यर्ति-वृ-व्येञ्भ्यो नित्यम्' (५११) इति थलि—आदिथ। प्सा भक्षणे—प्साति। 'आरामादन उस्, भूतेश्वरस्य तु वा' (५५३)—अप्सुः, अप्सान्। 'आरामाण्णल औ' (५४६)—पप्सौ। प्सायात्, प्सेयात्। वश् कान्तौ; कान्तिरिच्छा; वष्टि, उष्टः, उशन्ति, वक्षि; उश्यते। वष्टु। 'षस्य डः' (२५२)—उड्ढि॥ ६४६॥

६४७। विष्णुजनाद् दि-स्योर्हरः।

अवट्, औष्टाम्। 'वष्टिश्छान्दसः' इति भाष्यम्। हन् हिंसा-

---

६४६। अदो। भूतेशे सनि च परे अदः स्थाने घस्ऌ भवति, अधोक्षजे परेतु वा भवति। अघत्सातामिति 'सस्य तः सरामादिरामधातुके' इति सस्य तः। जक्षतुरिति 'गम-हने'त्यायिना उद्धवादर्शनं तस्य स्थानिवत्वेन घरामस्य द्विर्वचने कृते 'हरिघोषस्य हरिगदा' 'कवर्ग नरस्य चवर्गः', 'यादवमात्रे हरिकमलमि'ति घस्य कत्वं, 'वसिघस्योः षः' इति षत्वं विकल्पनमिति। जघासेत्यादिकं घस्ऌ-धातुनापि सिद्धयतीति अधोक्षजे विकल्पविधानमप्रयोजनकमेवेत्युद्वतत्वात् ज्ञापकत्वम्, अतो ज्ञापकात् जघस्थेति न भवेदेवेति अदधातो स्थलि नित्येट्त्वात् जघसिथ आदिथेति रूपद्वयं भवति, जधस्थेति घस्ऌधातुं विना न भवति, तस्य त्वसार्वत्रिकप्रयोगत्वेन तत्तु न भवत्येव। अत्त्यर्तीति लक्षणैकदेशोल्लेखः। प्सेयादिति 'सत्सङ्गादेरात एरामः कपिल-कामपाले वे'त्यनेन आत एत्वम्। उष्ट इति 'अपृथुः कृष्णधातुको निर्गुण' इति निर्गुणत्वात् कंसारित्वं, ततः सङ्कर्षणः। षस्य ड इति 'षस्य डो विष्णुपदान्ते हरिघोषे चे'ति लक्षणैकदेशोल्लेखः॥

६४७। विष्णु। विष्णुजनादुत्तरयोर्दिस्योर्हरो भवति। अवडिति हरे कृते शरामस्य षत्वं, षस्य डत्वं, डस्य टत्वम्। अवडित्यादौ 'सत्-

गत्योः—हन्ति। 'हरिवेण्वन्त'-(५२९) इत्यादि—हतः ; 'गम-हन'-( ५७५ ) इत्युद्धवादर्शनम्, 'हनो हस्य घो णिन्नयोः' ( २६६ )—घ्नन्ति ; हंसि, हथः, हथ ; हन्मि, हन्वः, हन्मः ॥ ६४७॥

६४८। उपेन्द्राद्धन्तेरराम-पूर्वस्य नस्य णः।

६४९। अन्तरस्त्वदेशे।

प्रहण्यते, अन्तर्हण्यते। नेह—अन्तर्हननो देशः। 'उपेन्द्रात्' इति किम् ? वृत्र-हननम्, छत्र हननम्। प्रक्रिया तु चिन्त्या (पा ८।४।२३) ॥ ६४८-४९ ॥

६५०। उपेन्द्राद्धनो णत्वं व-मोर्वा।

प्रहण्मि, प्रहन्मि ; प्रहण्वः, प्रहन्वः। हन्तु, हतात् ॥ ६५० ॥

---

सङ्गान्तस्य हरो विष्णु पदान्ते' इत्यनेनापि हरः सिद्धयति, किन्तु अजागरित्यादौ 'रात्सस्यैव सत्सङ्गान्त-हरविधि'रिति नियमात् हेर्हरो न स्यादिति तदर्थं क्रियमाणमेतदर्थमपि भवतीति न कश्चिद्विरोधः नियमेऽपि सेर्हरः सिद्धयत्येव, सेर्हरविधानं किमर्थं कृतमिति न निश्चिन्मः। किन्तु किञ्चिदुच्यते। रात् सस्यैवेति नियमादन्यस्मात् सेर्हरो न भवत्विति केषाञ्चिन्मन्दमतीनां शङ्कानिरासार्थं तस्यापि ग्रहणमिति। औष्टामिति नित्यत्वात् 'सङ्कर्षणे' कृते 'वृष्णीन्द्रः' ॥

६४८। उपेन्द्रादुत्तरस्य हनधातोः अरामः पूर्वो यस्मात् तादृशस्य नस्य स्थाने णो भवति ॥

६४९। अन्तः। अन्तर-उत्तरस्य हन्तेररामपूर्वस्य नस्य णो भवति। देशे वाक्ये तु न भवति। अन्तर्हनन इति अन्तर्हननं यत्रेति विग्रहः। वृत्रहननमिति वृत्रस्य हननमिति विग्रहः। वृत्रोऽसुरविशेषः। प्रक्रियातु चिन्त्येति तस्मात् प्रक्रियायां नैवं मतमिति वोद्धव्यम्। अरामपूर्वस्येति किं—प्रघ्नन्ति अन्तर्घ्नन्ति ॥

६५०। उपे। वमोः परयोः उपेन्द्रादुत्तरस्य हतो नस्य णत्वं वा भवति ॥

६५१। हन्तेर्जहि।

जहि। तातङ-पक्षे तु—हतात्; हनानि, हनाव, हनाम। अहन्, अहताम्, अघ्नन्॥ ६५१॥

६५२। हनो बधो भूतेश-कामपालयोः।

६५३। भूतेशात्मपदे तु वा।

सर्वेश्वरान्तत्वेऽप्येकाच्त्वाभावादिट्, 'अरामहरः' (५१६), 'अन्तहरे न गोविन्दवृष्णीन्द्रौ' (५५६)—अवधीत्; अवधि, अघानि। **इण्वदिडभावपक्षे**—॥ ६५२-६५३॥

६५४। हनः सिः कपिलः।

अहसाताम्। इण्वदिटि—अघानिषाताम्। 'अत्र हनेर्णिङादेशा न भवन्ति' इति काशिकादि ( पा १।२।१४)-मतम्॥ ६५४॥

---

६५१। हन्तेः। हन्तेः स्थाने जहि भवति॥

६५२। हनो। भूतेशे कामपालेच परे हनः स्थाने वधो भवति॥

६५३। भूते। भूतेशात्मपदे तु वा भवति। सर्वेश्वरान्तत्वेऽपीति एकाच् सर्वेश्वरान्तस्यानिट्त्वमुक्तम्, अस्य तु एकाच्त्वस्याभावादिड् भवत्येव। अराम हर इति 'अरामहरो रामधातुके' इत्यनेनेति शेषः। अवधीदिति 'विष्णुजनादेर्लघोररामस्य वृष्णीन्द्रः'। 'इडादौ सौ वा परपदे' इत्यनेन वृष्णीन्द्रः स्यात्। अवधीति 'उद्धवारामस्य वृष्णीन्द्रो नृसिंहे' इत्यनेन वृष्णीन्द्रः स्यात्। अघानि इति 'हनो हस्य घो णिन्नयो'रित्यनेन हस्य घत्वम्, 'उद्धवारामस्य वृष्णीन्द्रो नृसिंहे' इत्यनेन वृष्णीन्द्रः॥

६५४। हनः। हन धातोः सिः कपिलो भवति। अहसातामिति कपिलत्वात् 'हरिवेण्वन्ते'त्यादिना नरामहरः। सिरित्यत्र वैष्णवादि-सिरिति पाठः सभ्यः। अघानिषातामित्यादौ कपिलत्वाभावस्येष्टत्वात्। अत्रेति अत्र वधादेशाभाववदिण्वदिट्पक्षे हनधातोर्णिङादेशा न भवन्तीति काशिकादीनां मतं, णिङि सति ये आदेशा भवन्ति, ते णिङादेशा उच्यन्ते, ते त्वत्र घवृष्णीन्द्रतरामाः। अतस्तन्मते अहनिषातामिति भवति, अस्माकं मतेतु तरामस्यैवाभावः॥

६५५। नराद्धन्तेर्हंस्य घः।

जघान, जघ्नतुः, जघ्नुः ; जघनिथ, जघन्थ। वध्यात्। हनिष्यति ॥ ६५५ ॥

**यु मिश्रणामिश्रणयोः—**

६५६। उरामस्य वृष्णीन्द्रः शव्लुकि पृथु-विष्णुजने।

६५७। ऊर्णोतेर्वा।

६५८। न तु नारायणस्य।

यौति, युतः युवन्ति ; यूयते। युयात्। अयावीत्। लाक्षणिकत्वान्नारामान्तपाठत्वम् ॥ ६५६-६५८ ॥

---

६५५। नरादुत्तरस्य हनधातो र्हंस्य स्थाने घो भवति। जघान, जघ्नतुरित्यादौ 'हनो हस्य घोणिन्नयो'रित्यनेनापि हस्य घत्वं सिद्धयति, किन्तु जघनिथेत्यादौ न भवतीति लक्षणस्याखण्डनीयत्वं सिद्धम्। हनिष्यतीति 'ऋरामहनिभ्यामिट् स्ये' इति इट् ॥

६५६। उरा। शपो लुकि सति विष्णुजने परे उरामस्य वृष्णीन्द्रो भवति ॥

६५७। ऊर्णो। ऊर्णुञ् आच्छादने इत्यस्योरामस्य शव् लुकि सति विष्णुजने परे वृष्णीन्द्रो वा भवति ॥

६५८। नतु। नारायणस्यतु वृष्णीन्द्रो न भवति। युत इति 'ईशस्य न गोविन्दवृष्णीन्द्रौ कंसारिष्वि'त्यनेन वृष्णीन्द्रनिषेधः। युयादिति विधौ। शव्लुकीति किं ष्टुञ् स्तुतौ वालकल्किपरपदं ता स्तोता, विष्णुजन इति किं आनिप् स्तवानि, अयावीदिति 'ईशान्तस्य वृष्णीन्द्रः सौ परपदे' इत्यनेन वृष्णीन्द्रः। नन्वत्र वृष्णीन्द्रे कृते आरामान्तपाठः कथं न स्यादिति। चेत्तत्राह लाक्षणिकत्वादिति। आरामान्तपाठत्वमिति कृतपीताम्बरसमासादारामान्तपाठशब्दात् त्वप्रत्ययः, ननु चतुर्व्यूहान्तानामित्यादि लक्षणे अशिव इति विषयसप्तमीति पूर्वमेवोक्तं, अतः प्रत्ययोत्पत्तेः पूर्वमेवारामान्तपाठो भवतीति प्रत्ययोत्पत्तेः पूर्वमेव यत्र

इण् गतौ ; ण् इत् ; एति, इतः ; 'एति-हुवो'-(५०७) इति यः—यन्ति ; ईयते । इयात् ।

६५९ । इणो गा भूतेशे ।

'इण्-स्था' (४१८) इति सेर्महाहरः—अगात् । वृष्णीन्द्रः (४२४), द्विर्वचनम् (४३४), इयादेशः (४९३) – इयाय । 'एति'-( ५०७ ) इत्यादौ 'एव'कारान्न यादेशः, ततो द्विर्वचने इयादेशे च कृते—ईयतुः, ईयुः ; इययिथ, इयेथ । ईयात् ॥ ६५९ ॥

६६० । उपेन्द्रादिणो न त्रिविक्रमः कामपाले ।

अन्वियात् । सन्धिर्भवत्येव—अतीयात् ॥ ६६० ॥

**इक् स्मरणे**—

---

चतुर्व्यूहान्तत्वं, तत्रैव तस्य विषय इति लब्धमेव, एवं सति अयावीत्यत्र प्राप्तिसम्भावनापि नास्ति, तथापि किमर्थं न्यायाङ्गीकारः कृत इति न निश्चिन्मः । विषयसप्तमी-वाख्यायामेतदनिश्चितमुक्तम् । भाविनि भूतवदङ्गीकारे नतु अशिवे परे इति व्याख्यायां वृष्णीन्द्रे कृतेऽप्यरामान्तपाठः सम्भवत्येव, तन्निरासार्थं लाक्षणिकत्वान्नेति स्वीकृतमिति, इयादिति विधौ ॥

६५९ । इणो । भूतेशे परे इण. स्थाने गा भवति । द्विर्वचनमिति स्थानिवत्त्वादिरामस्येति शेषः । इयादेश इति 'नरेदुतोरियुवावेकात्मकेतरसर्वेश्वरे'-इत्यनेनेति शेषः । एतीत्यादाविति 'एति-हुवोर्य-वौ कृष्णधातुक एवे'ति लक्षण इत्यर्थः । ईयतुरित्यत्र एतीत्यादौ कृष्णधातुके एवे'त्यनेनैवकारेण कृष्णधातुकादन्यत्र 'इद्वयमेव य' इत्यनेन प्राप्त-यरामोऽपि वाध्यते इति । ईयतुरिति एकात्मकसर्वेश्वरपरत्वान्न नरेदुतो इय् । इययिथेति 'इय् गोविन्दः, स्थानिवत्त्वादिरामस्य द्विर्वचनं', 'इयादेशः', 'ए अय्' । इडभावपक्षे इयेथेति, इयादिति कामपाले ॥

६६० । उपे । कामपाले परे उपेन्द्रादुत्तरस्येण्धातो स्त्रिविक्रमो न भवति ॥

—३२

६६१। इण्वदिक्।

ततो यरामादि ॥ ६६१ ॥

६६२। इकिङौ नित्यमधि-पूर्वौ।

अध्येति, अधीतः, अधियन्ति। अध्यगात्। मा माने—माति; मीयते। मेयात् ॥ ६६२ ॥

**ख्या प्रकथने—**

६६३। अस्यति-वक्ति-ख्यातिभ्यो ङो भूतेशे कर्तरि।

आरामहरः (५४७)—अख्यत्। या प्रापणे—याति। वा गति-गन्धनयोः; गतिर्वातस्यैव; गन्धनम्—हिंसा, सूचनं वा। द्रा कुत्सायाम्; निपूर्वो निद्रायाम्—निद्राति ॥ ६६३ ॥

**विद् ज्ञाने —वेत्ति, वित्तः, विदन्ति इत्यादि ;—**

६६४। वेत्ति-प्रभृतीनां वेदादयो नव निपाता वा।

वेद, विदतुः, विदुः; वेत्थ, विदथुः, विद; वेद, विद्व, विद्म। अनयोस्तु विष्णुसर्गाभावेन निपातः ॥ ६६४ ॥

---

६६१। इन्व। इक्धातुः इण्धातुवद्भवति। यरामादिरित्यादि-शब्देन गादेर्ग्रहणम्। त्रिविक्रमो न भवतीत्युक्तं, अतः सन्धिप्रकरणोक्त-त्रिविक्रमोऽपि न भवत्विति मन्दधियां शङ्का स्यात्तन्निरासार्थमाह—सन्धिर्भवत्येवेति। सन्धिरिति त्रिविक्रमनामा सन्धिरिति ॥

६६२। इकिङौ। इक् स्मरणे, इङ अध्ययने इत्येतौ नित्यमधि-पूर्वौ भवतः। इकिङाविति 'अनित्यं सूत्रनिर्देशे' इत्यसन्धिः ॥

६६३। अस्यति। कर्तरि वाच्ये भूतेशे परे अस्यति-व्यक्ति-ख्यातिभ्य उत्तरे ङो भवति। अस्यतीति निर्देशादसुक्षेपण इत्यस्यैव ग्रहणं, नत्वस् भुवीत्यस्य। वक्तीति वच परिभाषणे इत्यस्य ब्रुवो वच्यादेशस्य च ग्रहणम् ॥

६६४। वेत्ति। व्यक्तार्थमेतत्। अनयोस्त्विवति विशेषोक्तपदयो-रित्यर्थः ॥

६६५। वेत्तु-प्रभृतीनां विदांकरोतु-प्रभृतीनि वा।

विदाङ्करोतु, विदाङ्कुरुताद्वा, विदाङ्कुरुताम्, विदाङ्कुर्वन्तु ; विदाङ्कुरु, विदाङ्कुरुताद्वा, विदाङ्कुरुतम्, विदाङ्कुरुत ; विदाङ्करवाणि, विदाङ्करवाव, विदाङ्करवाम इति ॥ ६६५ ॥

**अवेत् अवित्ताम्, अविदुः ;—**

६६६। द-धोरुः सिपि वा।

अवेः, अवेत्। अवेदीत् ॥ ६६६ ॥

**'उष-वेत्ति-जागृभ्य आम्' (५४१) ;—**

६६७। विदेरामि न गोविन्दः।

विदाञ्चकार, विवेद ॥ ६६७ ॥

**अस् भुवि, सत्तायामित्यर्थः—अस्ति ;—**

६६८। श्नमस्त्योरेरामहरो निर्गुणे।

स्तः, सन्ति ॥ ६६८ ॥

६६९। अस्तेः स-लोपः से।

असि, स्थः स्थ ; अस्मि, स्वः, स्मः ॥ ६६९ ॥

---

६६५। वेत्तु। इदमपि व्यक्तार्थम्। प्रभृतिशब्द आद्यर्थः। अवेदिति 'विष्णुजनाद्दिस्योर्हरः' इति देर्हरः। अविदुरिति 'सि नारायणवेत्तिभ्यः अन् उस्' इत्यनेन उस् ॥

६६६। दधोः। सिपि परे दधोः स्थाने रुर्वा भवति, उराम इत् ॥

६६७। विदेः। आमि परे विदेर्गोविन्दो न भवति। विवेदेति आमभावपक्षे ॥

६६८। श्नम। निर्गुणे परे श्नमोऽस्तेश्च अरामहरो भवति। श्नम् वक्ष्यते ॥

६६९। अस्तेः। से परे अस्तेः सरामस्य लोपो भवति, स-लोप इत्यत्र स-हर इति वा पाठः ॥

६७० । उपेन्द्र-प्रादुर्भ्यामस्तेः सः षो य-सर्वेश्वरयोः ।

निषन्ति, प्रादुःषन्ति । प्रादुरिति शब्दोऽयं पृथगव्ययं, न तु प्रादीनां समुदायः, पृथगुपादानात् । तेनोपेन्द्रकार्यमन्यत्रापि नास्य गम्यम् । क्रिया-व्यतिहारे धातोरात्मपदं वक्ष्यते (११५४)—व्यतिषाते, व्यतिषते । प्रत्यय-सरामस्य विष्णुपदादित्वान्न षत्वम्—व्यतिसे । पाणिनीयाश्च (८।३।१११) 'सात् पदाद्योः' इति सूत्रयन्ति, उदाहरन्ति च—अग्निसाद्भवति, दधि सिञ्चति, व्यतिसे इति । व्यतिषाथे, व्यतिध्वे ॥ ६७० ॥

६७१ । अस्तेः सस्य ह एरामे ।

व्यतिहे, व्यतिस्वहे, व्यतिस्महे । तत्राकरणादनुप्रयोगे तु न—इन्दामासे । 'श् तिपा धातुस्वरूपनिर्देशान्न स्यात्' इति कालापाः ॥६७१॥

६७० । उपे । ये सर्वेश्वरे च परे उपेन्द्रप्रादुर्भ्यामुत्तरस्य अस्तेः सरामः षरामो भवति । स इत्यत्र सस्येति पाठ उचितः । कार्यस्थानेतु षष्ठिकेत्युक्तत्वात् । ननु अस्तेः ष इत्युक्तेऽपि 'एकवर्णो विधिरन्ते प्रवर्तते' इति अस्तेः सस्य स्थाने षो भवतीति लभ्यत एव, कथं तर्हि स इति क्रियते, उच्यते, अस्तेररामहरे न कृते षत्वस्य प्राप्तियोग्यतैव नास्ति । कृतेतु आद्यभावात् केवलसरामेऽन्तत्वानुपपत्तेरेकवर्ण इत्यादि न्यायोऽत्र नाङ्गीकृतः । प्रादुरितीति इतीत्यत्र छेदः, अन्यथा अयमिति व्यर्थं स्यात्, प्रादुरितीत्युल्लेखकरणम् । प्रादीनां प्राङ्दुरां समुदायो मिलनम् । कुत एतदुच्यते इति चेत्तत्राह पृथगुपादानादिति । तेनेति तेन पृथगव्ययत्वेन हेतुना अस्य पृथगव्ययस्य प्रादुरित्यस्य अन्यत्रापि उपेन्दकार्यं न गम्यं ज्ञेयम् । क्रियेति । क्रियाव्यतीहारेऽर्थे । व्यतीहारः परिवर्त्तः । प्रत्ययेति । व्यतिस इत्यत्र अराम-सरामयोर्हरे कृते प्रत्ययमात्रस्य से इत्यस्यैव विष्णुपदत्वम्, अतः सरामस्य विष्णुपदादित्वम्, अतो नतु विष्णुपदाद्यन्तसातीनामिति न षत्वम् । व्यतिस इत्यत्र षत्वाभावमुक्त्वा पाणिनीयमतदर्शनेन द्रढयति पाणिनीयाश्चेति । सूत्रयन्ति सूत्रं कुर्वन्ति । व्यतिध्वे इति 'सस्य हरो धे' इति सस्य हरः ॥

६७२। अस्तेर्भूर्ब्रुवो वची रामधातुके।

भूयते। स्यात्, स्याताम्। षत्वे – निष्यात्। अस्तु, स्ताद्वा ॥६७२॥

६७३। अस्हेरेधि।

एधि। पक्षे—स्तात्। असानि। 'अस्ति-सिभ्यामीट्' (४४६) – आसीत् ॥ ६७३ ॥

६७४। अस्तेर्नारामहरो भूतेश्वरे।

आस्ताम्, आसन्। अभूत्; भुवं प्रति महाहरोऽयं सन्निपातस्तस्य विघाताय न भवति। वभूव इत्यादि ॥ ६७४ ॥

---

६७१। अस्तेः। एरामे परे अस्तेः सस्य स्थाने हो भवति। ननु इन्दामासे इत्यत्र सस्य हः कथं न स्यादिति चेत्तत्राह तत्रेति। असिद्ध-रूपं न त्याज्यमितिप्रतिज्ञासिद्ध्यर्थम् इदं तत्रैव कर्तुं योग्यमपि यन्न कृतं तस्मात्तत्राकरणादनुप्रयोगे सस्य हो न भवति, एराम इति सान्निध्या-दस्तेरेव एरामो गृह्यते, अत इन्दामासे इत्यत्र न सस्य हः, अत्र एरामः नास्तेः किन्त्विन्दधातोरित्यपि सिद्धान्तान्तरं ज्ञेयम्। श्तिपेति कृत्-प्रकरणोक्तेन श्तिप्-प्रत्ययेन धातुस्वरूपस्य निर्देशात् न भवतीति कालापा वदन्तीति शेषः। धातुस्वरूपनिर्देशादिति धातुनिर्देशादित्यर्थः। श्तिपा धातुनिर्देशात् केवलस्याऽस्धातोः सस्य हो भवति, नत्वनुप्रयोग-युक्तस्येति तेषां भावः ॥

६७२। अस्तेः। रामधातुके परे अस्तेः स्थाने भूर्भवति, ब्रूञ्-व्यक्तायां वाचि इत्यस्य स्थाने वचिर्भवति ॥

६७३। अस्हेः। अस्हेः स्थाने एधि भवति। अस्हेरिति प्रकृति-प्रत्ययसमुदायनिर्देशः। आसीदिति 'अस्ति सिभ्यामीड्दिप्सिपो'रिति ईट् ॥

६७४। अस्तेः। भूतेश्वरे परे अस्तेररामहरो न भवति। अभू-दिति भूभावे कृते 'इण्-स्था-पिवति' इत्यादिना से र्महाहरः। ननु अभू-दित्यत्र से र्महाहरे कृते पुनः असरूपं कथं न स्यादिति चेत्तत्राह भुवं प्रतीति। तस्येति भुव इत्यर्थः ॥

मृजूष् शुद्धौ ; ऊषावितौ ;—

## ६७५। मृजेर्वृष्णीन्द्रः।

मार्ष्टि ; 'ईशस्य न गोविन्दवृष्णीन्द्रौ' (४००) – मृष्टः। 'कंसारिसर्वेश्वरादौ वा' इति तु भाष्यमतम्—मृजन्ति, मार्जन्ति। मार्क्षि। मृज्यते। मृड्ढि। अमार्ट्। अमार्जीत्, अमार्क्षीत्। ममृजतुः, ममार्जतुः। आदिग्रहणान्न कसर्वेश्वरे – ममृजुः ॥ ६७५ ॥

वच् परिभाषणे ; 'चवर्गस्य कवर्गः' ( २४४ ) – वक्ति, वक्तः ; 'वचन्ति' इति तु न स्यात्। 'न हि वचिरन्तिपरः प्रयुज्यते' इति भास्यम्। एवं 'वचन्तु, अवचन्' इत्यपि न स्यादिति ज्ञेयम्। उच्यते।

'अस्यति-वक्ति'-( ६६३ ) इति ङः ;—

## ६७६। वच उम् ङे।

अवोचत्, अवोचताम्, अवोचन् इत्यपि। उवाच, ऊचतुः, ऊचुः ॥ ६७६ ॥

---

६७५। मृजेः। मृजेर्वृष्णीन्द्रो भवति। मार्ष्टीति 'छशोराजे'त्यादिना जस्य षत्वम्। कंसारीति। कंसारिश्चासौ सर्वेश्वरश्चेति कंसारिसर्वेश्वरः स आदिर्यस्य तादृशे प्रत्यये परे मृजे वृष्णीन्द्रो वा भवतीति तु भाष्यमतम्। अत्र भाष्यमते ग्रन्थकारस्य सम्मतिरस्तीति ज्ञेयम्। अमार्क्षीदिति इडभावपक्षे। ननु कंसारि-सर्वेश्वरे इति कृतेऽपि मृजन्ति, मार्जन्तीत्यादिसिद्धत्वेव, तर्हि कथमादिशब्दः। क्रियत इति चेत्तत्राह—आदि ग्रहणादिति। अत्रादिशब्दस्य ज्ञापकं ज्ञेयम्। न स्यादिति प्रयोगदर्शनाभावादिति शेषः। वचन्तीतितु न स्यादिति यदुक्तं, तद्भाष्यमतदर्शनेन द्रढयति, नहीति। वचिः वचधातुः ॥

६७६। वचः। ङे परे वच उत्तरे 'उम्' भवति म् इत्। अवचन्नित्यपि न स्यादित्युक्तम्, अतः अवोचन्निति भवति न वेति सन्देहः। स्यात्तन्निरासार्थमाह—अवोचन्नित्यपीति। स्यादेवेति शेषः ॥

**रुदिर् अश्रुविमोचने--**

६७७। रुदादिभ्य इट् कृष्णधातुके।

रोदिति, रुदितः॥ ६७७॥

६७८। नेट् य-सर्वेश्वरयोः।

रुदन्ति। भावे—रुद्यते। रुद्, स्वप्, श्वस्, अन्, जक्ष्—रुदादिः॥ ६७८॥

६७९। दि-स्योस्तु रुदादेरीट् च।

अरोदीत्, अरोदत्, अरुदिताम्। 'इरनुबन्धान् ङो वा' (४५३)—अरुदत्, अरोदीत्। ञिष्वप् शये—स्वपिति ; सुप्यते। 'कृष्णधातुक'-ग्रहणात्तत्रानिटोऽपि स्यात्, न त्वन्यत्र—स्वप्ता॥ ६७९॥

**अन्, श्वस् प्राणने—श्वसिति। 'ह-म-यान्त-' ( ५१४ ) इति—अश्वसीत्। अनिति ;—**

६८०। उपेन्द्रादनो णत्वमन्तस्य च, नारायणस्य च।

प्राणिति। हे प्राण्! केशववृत्तौ तु 'हे प्रान्' इति वा॥६८०॥

---

६७७। रुदा। कृष्णधातुके परे रुदादिभ्य उत्तरे इड् भवति। रुदित इति टिदागमः परसम्बन्धीति इटोनिर्गुणत्वात् न गोविन्दः॥

६७८। नेट्। रुदिति रुदधातोरर्थ उक्तः। स्वपादीनामर्था निकट-एव वक्ष्यन्ते॥

६७९। दि-स्योः। अरोददिति अठ्पक्षे। सुप्यत इति 'वचि-स्वपी'त्यादिना सङ्कर्षणः'। कृष्णेति कृष्णधातुकग्रहणात् तत्र कृष्णधातुके अनिटोऽपि सहजानिटोऽपि स्वप्धातुरुत्तरे इट् स्यात्, नतु कृष्णधातुका-दन्यत्र इड्विधानलक्षणाभावादिति शेषः। अतः स्वप्तेति। रुद्-श्वस्-अन्-जक्षां सेट्त्वात् कृष्णधातुक इति केवलं स्वप्धातुं प्रत्येव सार्थकमिति भावः। 'ह-म-यान्ते'तीति वृष्णीन्द्रनिषेध इति शेषः॥

६८०। उपे। उपेन्द्रादुत्तरस्य अनधातोर्णत्वं भवति, नस्येति शेषः। उपेन्द्रादुत्तरस्य अनधातोरन्तस्थितस्य च नस्य णत्वं भवति।

**जक्ष् भक्ष-हसनयोः—जक्षिति ;--**

६८१। जक्षादिरपि नारायणः।

जक्ष्, जागृ, दरिद्रा, चकासृ, शासु—जक्षादिः ॥ ६८१ ॥

६८२। नारायणादन्तो नस्य हरः।

'अन्तः' इत्यन्त्यादीनामेकदेशनिर्देशः, षष्ठ्यन्तः ; जक्षति। अजक्षुः ॥ ६८२ ॥

**जागृ निद्राक्षये--जागर्ति, जागृतः, जाग्रति ;--**

६८३। जागर्तेर्गोविन्दः सर्वत्र, न तु इण्-णल्-निर्गुणेषु।

६८४। उत्तमणलि वा।

जागर्यते। अजागः, अजागृताम् ॥ ६८३-६८४ ॥

---

विष्णुपदान्तत्वादप्राप्ते विधानम्। उपेन्द्रादुत्तरस्य अनधातोर्नारायणस्य च नस्य णत्वं भवति। हे प्राण् इति क्विवन्तात् सुँ, 'राधाविष्णुजने'त्यनेन सोर्हरः। केशवेति। केशवः पण्डितविशेषः। पर्युपेन्द्रनिषेध इति केचित्। तन्मते पर्यनिति इति दन्त्यमध्यमिति ज्ञेयम् ॥

६८१। जक्षा। जक्षादिरपि नारायणसंज्ञो भवति। जक्षादीत्यत्र जक्षादिरिति पाठ उचितः, जक्षादिरपीत्युक्तत्वात् ॥

६८२। नारा। नारायणादुत्तरस्य अन्तो नस्य हरो भवति। अन्त्यादीनामिति आदिशब्दस्यान्तग्रहणमेव फलम्। ददत इत्यादौ तु 'अरामान्यवर्णादि'त्यादिनैव नस्य हरो भवति, तथापि अन्त्यादीनामिति यद्बहुवचननिर्देशः कृतस्तन्न बहुप्रयोजनकमिति ज्ञेयम्। अजक्षुरिति 'सि-नारायणे'त्यादिना अन उस् ॥

६८३। जाग। व्यक्तार्थमेतत् ॥

६८४। उत्त। इदमपि व्यक्तार्थमप्राप्ते विभाषेयम्। अजागरिति 'विष्णुजनाद्दिस्योर्हरः' इति देर्हरः ॥

६८५। ईशान्तस्य गोविन्दोऽन उसि।

अजागरुः, अजागः। गोविन्दे कृते न तु 'अरलित्यन्तस्य वृष्णीन्द्रः' (५३०), न च 'विष्णुजनादेर्लघोः'-(४७१) इति तद्विकल्पः, 'सर्वत्र'-( ६८३ ) ग्रहणेन सर्वापवादत्वात्—अजागरीत्; अजागारि। जजागार, जजागरतुः। एकसर्वेश्वरादेव सर्वमप्यनिटं मन्यन्ते—जजागरिथ; जजागार, जजागर। आमि—जागरामास, जागरामासतुः॥ ६८५॥

**दरिद्रा दुर्गतौ—दरिद्राति ;—**

६८६। दरिद्रातेरिरामो निर्गुण-विष्णुजने।

दरिद्रितः॥ ६८६॥

---

६८५। ईशा। अनः स्थाने उसि सति ईशान्तस्य गोविन्दो भवति। अजागरुरिति निर्गुणत्वात् पूर्वेणाप्राप्ते अनेन विधानं कृतम्। अजागरीदित्यत्र वृष्णीन्द्रप्राप्तिमाशङ्क्य समादधति गोविन्द इति 'अरलित्यन्तस्ये'त्यनन्तरमिति-शब्दप्रयोग उचितः, अन्यथा अन्वयशुद्धि र्न स्यात्। वृष्णीन्द्र इति पर्यन्तं लक्षणोल्लेख इत्युक्तेः। तद्विकल्प इत्यत्र तच्छब्देन वृष्णीन्द्रस्याकर्षणं दुर्घटं, सर्वत्रग्रहणेन सर्वापवादत्वादिति। अत्रायं भावः। गोविन्दस्य सर्वापवादत्वादेव 'ईशान्तस्य वृष्णीन्द्रः सौ परपदे' इत्यनेन विहितस्य वृष्णीन्द्रापवादत्वमायातम्, अतः वृष्णीन्द्रं वाधित्वा गोविन्द एव भवति। गोविन्दे कृते तु 'अरलित्यन्तस्ये'त्यादिना 'विष्णुजनादेर्लघो'रित्यादिना च वृष्णीन्द्रो न भवति, वृष्णीन्द्रापवादत्वस्य व्यर्थत्वात्। एकेति एकस्मात् सर्वेश्वरादेव सर्वमनिटं मन्यन्ते। अपीति निश्चये। अतो जागृधातो र्द्विसर्वेश्वरत्वान्नानिटत्वम्, अत स्थलि न विकल्पितेट्त्वम्। जागरामासेति 'उष-वेत्ति-जागृभ्य आमधोक्षजे वे'त्यनेन आम्॥

६८६। दरि। निर्गुणविष्णुजने परे दरिद्रातेरन्त इरामो भवति। निर्गुणेति किं—दरिद्राति, विष्णुजन इति किं—दरिद्रति। क्त-प्रत्यये दरिद्रितः॥

६८७। श्ना-नारायणयोरारामहरो निर्गुण-कृष्ण-धातुके।

दरिद्रति। इद्विधानादन्यत्र दम् ॥ ६८७ ॥

६८८। दरिद्रातेरारामहरो वैष्णवादि-सन्-युक्-टन्-वर्जित-रामधातुके।

६८९। भूतेशे तु वा।

भावे—दरिद्रयते। आराम-हरपक्षे सिः—अदरिद्रीत्। पक्षान्तरे सुगिटौ (५२७)—अदरिद्रासीत्। अदरिद्रि, अदरिद्रायि। 'अनेक-सर्वेश्वर-' (५१८) इति—दरिद्राञ्चकार। 'ददरिद्रौ' इति कश्चित् ॥ ६८८-६८९ ॥

**चकासृ दीप्तौ—चकास्ति। हौ—चकाधि; 'चकाद्धि' इति केचित्;—**

६९०। सस्य तो दिव्लोपे।

---

६८७। श्ना। निर्गुणकृष्णधातुके परे श्ना-नारायणयोरारामहरो भवति। श्ना वक्ष्यते। ननु निर्गुणकृष्णधातुक इत्युक्तमतः दरिद्रित इत्यादावपि आरामहरो भवत्विति चेत्तत्राह—इ-विधानादिति, निर्गुणेति किं—दरिद्राति, कृष्णधातुक इति किं—डुदाञ् दाने, यङ,—देदीयते 'दामो-दरे'त्यादिना ई, ततो द्विर्वचनं, यङि नरस्य गोविन्दो वक्ष्यते ॥

६८८। दरि। वैष्णवादि-सनं युकं टनञ्च वर्जयित्वा रामधातुके परे दरिद्रातेरारामहरो भवति, टनः कृत् ॥

६८९। भूते। भूतेशे परे तु दरिद्रातेरारामहरो वा भवति। पक्षान्तर इति आरामहराभावपक्षे इत्यर्थः। अदरिद्रायीति आरामहरा-भावपक्षे। चकाधीति 'सस्य हरो धे' इति सस्य हरः ॥

६९०। सस्य। दिव्लोपे सति सस्य स्थाने तो भवति। त इत्यराम-उच्चारणार्थः ॥

६९१ । सिव्लोपे तु रश्च ।

अचकात् ; अचकाः, अचकात् । सर्वेश्वरव्यवधाने 'विष्णुजनादेर्लघो'-( ४७१ ) इति न मन्यन्ते, अचकासीत् । चकासामास ॥ ६९०-६९१ ॥

अचकाः

**शासु अनुशिष्टौ ; अनुशिष्टिरुपदेशो दण्डनञ्च ; शास्ति ;—**

६९२ । शासः शिष् कंसारि-विष्णुजन-ङ्योः ।

शिष्टः, शासति ; शिष्यते । शिष्यात् । 'आङः शासु इच्छायाम्' इत्यात्मपदिनो न शिषो ग्रहणं, धात्वन्तरतया पृथक्पाठात् ; तेन—आशास्ते ॥ ६९२ ॥

६९३ । शास्-हेः शाधि ।

शाधि ; पक्षे—शिष्टात् । भूतेश्वरे—अशात्, अशाः, अशात् । भूतेशे—अशिषत् ॥ ६९३ ॥

**चक्षिङ् व्यक्तायां वाचि ; इङावितौ ; इराम उच्चारणार्थः ;—**

---

६९१ । सिव् । सिव्लोपेतु सति सस्य स्थाने तो भवति, रश्च । अचकासीदित्यत्र 'विष्णुजनादेर्लघो'रित्यादिना वृष्णीन्द्रः कथं न भवतीत्याशङ्क्य समादधाति सर्वेश्वरेति, तस्मात् 'विष्णुजनादेर्लघो'रित्यादेरेकसर्वेश्वरधातावेव विषय इति भावः । उपदेशो दण्डनञ्चेति । उपदेशे यथा—आचार्यः शिष्यं शास्ति, दण्डने यथा—कंसो यदून् शास्ति ॥

६९२ । शासः । कंसारिविष्णुजने ङेच परे शासः स्थाने शिष् भवति, कंसारित्युपादानात् शास्तीत्यादौ न भवति । विष्णजनेत्युपादानात् शासतीत्यादौ न भवति । पृथक्-पाठादित्यत्र पृयक्पदं न बहुप्रयोजनकमिति ज्ञेयं, धात्वन्तरतयेत्यनेनैवार्थावगमात् । अथवा स्थानान्तरापेक्षया पृथगित्युक्तम् ॥

६९३ । शास्हेः । शास्-हेः शाधि भवति । शास्-हेरिति प्रकृतिप्रत्यय-समुदायनिर्देशः । अशादिति 'सस्य तो दिव्लोपे' इति सस्य तः । अशिषदिति 'सर्तिशास्त्यर्तिभ्यो ङो भूतेशे कर्तरी'त्यनेन ङः ॥

६९४। नित्यमाङ् पूर्वोऽयम्।

'स्कोः सत्सङ्गाद्योर्हरः ( २५१ )—आचष्टे, आचक्षाते, आचक्षते ॥ ६९४ ॥

६९५। चक्षिङः ख्याञ् रामधातुके।

६९६। अधोक्षजे तु वा।

आख्यायते। 'भाविनि भूतवदुपचारः' इति ङप्रत्ययात् पूर्वमेव ख्यादेशः; ञित्त्वादुभयपदम्; 'अस्यति-वक्ति'-( ६६३ ) इत्यादौ आदेशो वचिः ख्याञोपलक्ष्यते; आख्यत्, आख्यताम्, आख्यत ॥ ६९५-६९६ ॥

६९७। वर्जने तु नादेशः।

समचक्षिष्ट। आचख्यौ, आचख्ये, आचचक्षे ॥ ६९७ ॥

**ईड् स्तुतौ—ईट्टे**;—

---

६९४। नित्यम्। अयं चक्षिङ-धातुर्नित्यमाङ्पूर्वो भवति, नित्यमाङ्पूर्वोऽयमिति प्राचुर्यापेक्षया उक्तं, नत्विकिङाविवेति ज्ञेयम्। समचक्षिष्टेति स्वयमेव हि उदाहरिष्यते ॥

६९५। चक्षिङः। रामधातुके परे चक्षिङः स्थाने ख्याञ् भवति। रामधातुके विषय इत्युक्ते तु भाविनीत्यादिकं व्यर्थं भवति ॥

६९६। अधो व्यक्तार्थमेतत्। भाविनीति भाविनि रामधातुके भूतवदुपचारः भुतवत्त्वोपचारः। ननु सप्तमीविषये परे इत्युक्तमतो रामधातुके विषये इत्युक्त एवायमर्थो लभ्यते। कथमुपचारः क्रियत इति चेत्तत्रोच्यते। भाविनीत्यादिकं पाठकानामपरव्युत्पत्तिविशेषार्थमुक्तं, बहुप्रकारेणार्थावगमे हि पाठकानां बहुविषया व्युत्पत्तिर्जायत इति। उपलक्ष्यते इति। गृह्यते इति फलितार्थः ॥

६९७। वर्ज। वर्जनेऽर्थे ख्याञादेशो न भवति। समचक्षिष्टेति वर्जनमात्रार्थः। आचचक्षे इति आदेशाभावपक्षे ॥

६९८। ईडीशिभ्यामिट् स-ध्वोर्न तु भूतेश्वरे।

ईडिषे, ईडिध्वे। ऐड्ढ्वम्। ऐडिष्ट। ईश् ऐश्वर्ये—ईष्टे, ईशिषे, ईशिध्वे। आस उपवेशने—आस्ते। आसाञ्चक्रे। वस् आच्छादने—वस्ते ॥ ६९८ ॥

**षूङ् प्राणिगर्भ-विमोचने—सूते ;—**

६९९। सुवः कृष्णधातुके न गोविन्दः।

सुवै, सुवावहै, सुवामहै। 'सूतेर्लुग्विकरणस्येदं ग्रहणम्' इति काशिकालिखनदृष्ट्या श्तिपि च कृति—'सूतिः'। सूत्रे श्तिपा-निर्देशाभावात् यङ-लुकि च 'सोषूति, सोषुवीति' सेत्स्यति। पाणिनीया (७।३।८८) हि 'भूसुवोस्तिङि' इति गुणं निषिध्य 'वोभवीति, वोभोति' इत्यत्रैव 'वोभूति' इत्यादिद्वयस्य छन्दः-सूत्रे निपातज्ञापकवलाद् गुणं साधयन्ति। असविष्ट, असोष्ट ॥ ६९९ ॥

---

६९८। ईडीश। सध्वोः परयोः ईडीशाभ्यामुत्तरे इड् भवति, भूतेश्वरे तु परे इड् न भवति। ऐड्ढ्वमिति भूतेश्वर-ध्वं, 'षात्परस्ये'त्यादिना धस्य ढत्वम्। आसाञ्चक्रे इति 'अयास-दयेभ्य आमधोक्षजे' इत्यनेनाम् ॥

६९९। सुवः। व्यक्तार्थमेतत्। सुवै इति गोविन्दाभावे उव्। कृष्णधातुकेऽपि गोविन्दो न भवतीति दर्शयितुं काशिकालिखनं प्रमाणयन्नाह—सूतेरिति। काशिकालिखने लुग्विकरणस्येति अदादेरित्यर्थः। शिवस्य कृष्णधातुकत्वात् श्तिपः कृष्णधातुकत्वम्। सूत्रे श्तिपा-निर्देशमविधाय तत्फलमाह—सूत्र इति, श्तिपा धातुनिर्देशे कृते तु केवलस्य सूधातोर्ग्रहणं स्यादतः सोषूति, सोषुवीतीत्यादौ गोविन्दनिषेधो न स्यात्। सोषुवीत्यत्र 'चक्रपाणेस्तु वा' इत्यनेन ईड् भवतीति वक्ष्यते। सोषूति, सोषुवीतीत्यत्र गोविन्दनिषेधमुक्त्वा स्वमतस्य कल्पितत्वं वारयति पाणिनीया हीति। हि यतः गुणं निषिध्येति यङ्लुकीति ज्ञेयम्। वोभूतीत्यादिद्वयस्य वोभूति, वोभुवीतीति-पदद्वयस्य निपातज्ञापकवलात् निपातरूपस्य

शीङ् स्वप्ने—

७००। शीङः शे कृष्णधातुके।

शेते, शयाते; 'अरामान्य'-( ४२८ ) इत्यादौ 'शीङो रुद् च' (४२९)—शेरते॥ ७००॥

७०१। शेतेः शय् कंसारि-ये।

शय्यते॥ ७०१॥

इङ अध्ययने; नित्यमधि-पूर्वोऽयम्; अधीते, अधीयाते, अधीयते; कर्मणि च—अधीयते। भूतेश्वरे—अध्यैत। इय् ( ५०४ ) ततो वृष्णीन्द्रः (४७४) 'योगविभागेन यथेष्टसिद्धि' इति सर्वत्र-कल्पनात्—अध्यैयाताम्।

---

ज्ञापकस्य वलात् गुणं साधयन्ति कुर्वन्तीत्यर्थः। इत्यत्रैव इति एवकारेण सूधातोरूपद्वये तु गुणाभाव इति वोधितम्। हि यतो पाणिनीया भूसु-वोस्तिङीत्यनेन यङ-लुकि विषये भूसुवोर्गुणं निषिध्य छन्दःसूत्रे निपात-ज्ञापकस्य सामर्थ्याद्बोभूति, वोभुवीतीति-द्वयस्य स्थाने वोभोति वोभवी-तीत्यत्रैव गुणं साधयन्तीति निर्गलितार्थः। भूधातोरूपद्वये गुणाभावे सति निपातस्य वैयर्थ्यं स्यात्, अतो निपातस्य ज्ञापकत्वं सिद्धम्। किन्तु भूसु-वोस्तिङीति पाणिनीयलक्षणे भूग्रहणफलमस्माभिर्नावकलितमिति ज्ञेयम्। तथापि किञ्चिदुच्यतेऽवधार्यताम्। पाणिनीयमते भाषायां पदद्वये गुणा-भावश्छन्दसि तु पदद्वये गुणाभाव इति वा प्रयोजनमिति। असविष्ट, असोष्टेति 'स्वरति-सूती'त्यादिना वेट्॥

७००। शीङः। कृष्णधातुके परे शीङः स्थाने शे भवति। कृष्ण-धातुक इति किं—शिष्ये॥

७०१। शेतेः। कंसारि-ये परे शेतेः स्थाने शय् भवति। नित्य-मधिपूर्वोऽयमिति। इकिङौ नित्यमधिपूर्वावित्युक्तत्वादिति शेषः। कर्मणि चेति चरामोपादानं न सभ्यं, पूर्वोक्तेन अधीयत इत्यनेन सह समानविष्णु-भक्तित्वाभावात्। इयनन्तरं वृष्णीन्द्रमुक्त्वा तत्राशङ्क्य समादधाति, योगेति। योगविभागेन यथेष्टमनतिक्रम्य कार्यं भवतीति सर्वत्र-कल्पनात्।

७०२। इङो गामधोक्षजे, भूतेशाजितयोस्तु गीर्वा।

'येन नाव्यवधानं सम्भवति' इति न्यायेन सि-प्रभृति-व्यवधानेऽपि गीः स्यात्—अध्यगीष्ट, अध्यैष्ट; अध्यगायि, अध्यायि। अधिजगे। अध्यगीष्यत, अध्यैष्यत; गोविन्दत्वं चेदेरामः क्रियते।

द्विष् अप्रीतौ—द्वेष्टि, द्विष्टः। अद्वेट्, अद्विषन्; 'उस् वा' इति केचित्,—अद्विषुः। अद्विक्षत्, अद्विक्षन्।

दुह् प्रपूरणे—दोग्धि, धोक्षि; दुग्धे, धुग्ध्वम्। अधोक्। अधुक्षत्, अधुक्षत। पक्षे 'दुह्-लिह्-दिह्'-(६२४) इति सको हरः—अदुग्ध अधुक्षाताम्। दिह् उपचये—देग्धि, दिग्धे। लिह् आस्वादने—लेढि, लीढे ॥ ७०२ ॥

ऊर्णुञ आच्छादने; 'उरामस्य वृष्णीन्द्रः (६५६) इत्यादौ 'ऊर्णोतेर्वा' (६५७)—ऊर्णोति, ऊर्णौति।

७०३। ऊर्णोतेर्गोविन्दो दिस्योः।

और्णोत्, और्णोः। 'ईशान्तस्य' इत्यादौ 'ऊर्णोतेर्वा' (५०२)—और्णावीत् ॥ ७०३ ॥

---

यथेष्टसिद्धीति अनतिक्रम इत्यनेनाव्ययीभावम्। अत्र वृष्णीन्द्र इति योगं विभज्य इय्, अनन्तरं वृष्णीन्द्रः क्रियत इति ॥

७०२। इङो। व्यक्तार्थमेतत्। भूते। इदमपि व्यक्तार्थम्। येनेति। येन नाव्यवधानं सम्भवति तेन व्यवधानेऽपि स्यादिति न्यायः। अध्यायि, अध्यगायीति कर्मणि। अधिजग इति 'आरामहरः' इत्यादिना आरामहरः। अध्यगीष्ट, अध्यगीष्यतेत्यत्र गोविन्दः कथं न भवतीत्याशङ्क्य समादधाति—गोविन्दत्वमिति। गोविन्दत्वं गोविन्दः स्वरूपमात्रे त्वप्रत्ययः। चेद्यदि स्यादिति शेषः। तदेत्यूह्यम्। केचिदिति। क्रमदीश्वरादय इति ज्ञेयम्। अद्विक्षदिति 'ईशोद्धवादनिटो हरिगोत्रान्तात् सक् भूतेशे दृशि विने'त्यनेन सक्। धोक्षीति 'जवर्जे'त्यादिना दस्य धत्वं, एवं दुग्धमित्यत्रापि। अधोगिति भूतेश्वरे। अधुक्षतेति 'सक् सद्भावपक्षे'॥

७०४। ऊर्णोतेरिट् निर्गुणो वा।

और्णुवीत्, और्णवीत् ; और्णुविष्ट, और्णविष्ट ॥ ७०४ ॥

७०५। ऊर्णोतेर्नाम्।

'सर्वेश्वरादित्वे तु सत्सङ्गादि-न-व-द-र-वर्जस्यान्यभागस्य'(४३६) इति णोर्द्विर्वचने प्राप्ते 'कार्यार्थमक्षरं विश्लेषयेत्' इति न्यायेन ररामविश्लेषणं, ततो द्विर्वचनं, 'रषाभ्यां टुस्तवर्गजत्वात्' नैमित्तिकापायः—ऊर्णुनाव, ऊर्णुनुवतुः ; ऊर्णुनुविथ, ऊर्णुनविथ। ऊर्णुविता, ऊर्णविता। ष्टुञ् स्तुतौ—स्तौति, स्तुतः ; स्तुते ; स्तूयते। 'सुष्टुधूञभ्यः' (५७२) इतीट्—अस्तावीत्। 'कृ'-(४७०)-आदि-नियमात् तुष्टोथ। रु शब्दे—रौति। एवं णु स्तुतौ—नौति ॥ ७०५ ॥

**ब्रूञ् व्यक्तायां वाचि—**

७०६। ब्रुव ईट् कृष्णधातुक-पृथु-विष्णुजने।

७०७। चक्रपाणेस्तु वा।

'तुरुस्तुशम्यमः सार्वधातुके' (पा ७।३।९५) इत्यत्रापृथावपीट् छन्दस्येवेति भाषावृत्त्यादौ—स्तवीति, स्तुवीतः। 'पृथावेव' इति तस्यां (पा ७।३।९३) भ्रमः। ब्रवीति, ब्रूतः, ब्रुवन्ति ॥ ७०६-७०७ ॥

---

७०३। ऊर्णो। दिस्योः परयोः ऊर्णोतेर्गोविन्दो भवति। ऊर्णोतेर्वे'त्यनेन वृष्णीन्द्रे प्राप्ते विधानम् ॥

७०४। ऊर्णो। व्यक्तार्थमेतत्। और्णुवीदिति 'गोविन्दाभावे उव्'। और्णुविष्ट और्णविष्टेति परपदाभावाद्वृष्णीन्द्राभावः ॥

७०५। ऊर्णो। ऊर्णोतेरुत्तरे 'आम्' न भवति। गुर्वीश्वरादित्वात् अनेकसर्वेश्वराच्च प्राप्ते प्रतिषेधः। प्राप्त ईति सम्भावनायां क्त-प्रत्ययः। रषाभ्यामिति रषाभ्यां परस्य टोष्टवर्गस्य नैमित्तिकापाय इति पुनस्तवर्गत्वं जातमित्यर्थः। ऊर्णुनुविथेति। 'ऊर्णोतेरिट् निर्गुणो वे'त्यनेन निर्गुणत्वम् ॥

७०६। ब्रुव्। पृथुश्चासौ विष्णुजनश्चेति पृथुविष्णुजनकृष्णधातुकश्चासौ पृथु विष्णुजनश्च तस्मिन् परे ब्रुव उत्तरे ईड् भवति ॥

७०८। ब्रवीत्यादिपञ्चानामाहादयो वा।

आह, आहतुः, आहुः; आत्थ, आहथुः। 'ब्रुवो वची' (६७२)—उच्यते। अवोचत्। उवाच ॥ ७०८॥

इति अदादिः।

## अथ ह्वादिः

**हु वह्नौ दाने—**

७०९। जुहोत्यादेः पूर्वद्विर्वचनं शव्लुकि।

'न तु नारायणस्य' (६५८) इति न वृष्णीन्द्रः—जुहोति, जुहुतः, जुह्वति। जुहुधि। अजुहवुः ॥ ७०९॥

---

७०७। चक्र। कृष्णधातुके पृथुविष्णुजने परे चक्रपाणेरुत्तरे ईड् वा भवति। चक्रपाणिसंज्ञा वक्ष्यते। इत्यत्रेति लक्षणविशेषणम्। छन्दस्येवेति भाषायां अपृथौ इट् न भवतीत्यर्थः। भाषावृत्त्यादाविति उक्तमिति शेषः। स्तवीतीति विष्णुजनपरत्वाभावात् 'उरामस्ये'त्यादिना न वृष्णीन्द्रः। स्तुवीत इति टिदागमः परसम्बन्धीति इटोऽपि निर्गुणत्वाद्गोविन्दाभावे उव्। पृथाविति भाषायां छन्दसि च पृथावेवेति प्रक्रियामतम्। अतो भ्रम इत्युक्तम्। ब्रूत इति पृथुत्वाभावान्न इट्। कृष्णधातुकेति किं—क्त्वा, यप्, प्रोच्य। विष्णुजन इति किं—ब्रवाणि ॥

७०८। ब्रवी। ब्रवीत्यादिपञ्चानां स्थाने क्रमेण आहादयः पञ्च निपाता वा भवन्ति। उच्यत इति 'वचि-स्वपी'त्यादिना सङ्कर्षणः। अवोचदिति 'अस्यति-व्यक्ति-ख्यातिभ्य' इत्यादिना ङः, 'वच उम् ङे' इति उम् ॥

॥ * ॥ इत्यदादिप्रकरणम् ॥ * ॥

७०९। जुहो। शव् लुकि सति जुहोत्यादेः पूर्ववत् द्विर्वचनं भवति। पूर्ववदिति पूर्वोक्तव्यवस्थायैवेत्यर्थः। जुह्वतीति 'नारायणादन्तो

७१० । भी-ह्री-भृ-हुभ्य आमधोक्षजे वा, दिर्वचनञ्च ।

जुहवामास, जुहाव ॥ ७१० ॥

**ञिभी भये ; ञिराम इत् ; विभेति ;—**

७११ । भियो वामनो वा कृष्णधातुके ।

विभितः, विभीतः, विभ्यति । अभैषीत्, अभैषीः । कथं 'मा भैः शशाङ्क मम सीधुनि नास्ति राहुः' इति ? 'आगमशासनमनित्यम्' इति न्यायात् ईटोऽसद्भावात् । ह्री लज्जायाम्—जिह्रेति, जिह्रीतः जिह्रियति ॥ ७११ ॥

**पॄ पालनपूरणयोः—**

---

नस्य हरः' इति नस्य हरः । जुहुधीति 'हु-वैष्णवाभ्यां हेर्धि'रिति हेर्धिः । अजुहवुरिति 'सि-नारायणे'त्यादिना अन उस्, 'ईशान्तस्य गोविन्दोऽन उसी'त्यनेन गोविन्दः ॥

७१० । भीह्री । ञिभी भये, ह्री लज्जायां, डुभृञ् धारण-पोषणयोः, हु वह्नौ दाने, इत्येतेभ्य उत्तरे अधोक्षजे परे आम् वा भवति । आम्-पक्षे द्विर्वचनञ्च भवति ॥

७११ । भियो । कृष्णधातुके परे भियो वामनो वा भवति । कृष्णधातुके इत्यत्र कृष्णधातुक निर्गुण-विष्णुजन इति पाठः सभ्यः । अन्यथा विभेति, विभ्यतीत्यादौ पक्षे वामनविधानसामर्थ्याद्गोविन्दाद्यभावो भवत्विति शङ्का स्यात् । अथवा विभेतीत्यतः परस्मिन् सूत्रस्य करणात्तत्र तत्रेदं वामनविधानं न प्राप्नोतीति, यदि तत्रापि वामनः स्यात्तदा असिद्ध-रूपं न त्याज्यमिति प्रतिज्ञासिद्ध्यर्थमिदं सूत्रं तत्रैव कर्तुं योग्यमपि यन्न कृतं तस्मात्तत्राकरणान्नेत्यपि ज्ञेयं, तस्माद् यत्रान्यकार्याभावस्तत्रैवास्य सूत्रस्य विषय इत्यर्थः । अतः सर्वं समञ्जसमिति मा भैरिति । हे शशाङ्क चन्द्र त्वं मा भैः भयं मा कुरु । यतस्त्वद्ग्रासको राहुर्मम सीधुनि अमृते नास्ति । सिद्धान्तमाह आगमेति । आगमस्य शासनमिति विग्रहः । शासनमधिकारः । जिह्रियतीति संयोगपूर्वत्वात् न यादेशः ॥

७१२। अर्ति-पिपर्त्योर्नरस्येरामः कृष्णधातुके।

पिपर्ति ॥ ७१२ ॥

७१३। ओष्ठ्योद्धवस्य ॠत उर् कंसारौ।

पिपूर्तः, पिपुरति ; पूर्यते। 'सत्सङ्गाद्यृदन्तस्य' ( ५६० ) इत्यादिना गोविन्द एव, 'मात्र'-ग्रहणात्—पपरतुः। वामनोऽप्यस्ति—पिपृतः ; पप्रतुः ॥ ७१३ ॥

**ओहाक् त्यागे ; ओकाँवितौ ; जहाति ;—**

७१४। दामोदरं विना श्ना-नारायणारामयोरी कृष्णधातुक-निर्गुणविष्णुजने जहातेरिश्च।

जहीतः, जहितः, जहति ; हीयते ॥ ७१४ ॥

७१५। जहातेरारामहरः कृष्णधातुक-ये।

जह्यात्। जहिहि, जहीहि ; 'जहाहि' इत्यपि मतम्। ऋ गतौ ; 'आर्ति-पिपर्त्योर्नरस्येरामः' (७१२), 'नरेदुतोरियुवौ' (४६३) इति—

---

७१२। अर्ति। ऋगतावित्यस्य पॄ-धातोश्च कृष्णधातुके परे नरस्यान्त इरामो भवति, ऋ-धातोर्नरस्याद्यभावात् ऋरामस्यैवेराम इति ज्ञेयम् ॥

७१३। ओष्ठ्यो। कंसारौ परे ओष्ठ्य उद्धवो यस्य तादृशस्य धातोः ॠतः स्थाने उर् भवति। ओष्ठ्योद्धवस्येति किम्—ॠ गतौ ऋयादिः क्तप्रत्ययः समीर्णः। सदिति। गोविन्द एव न तूर् हेतुमाह—मात्रेति। गोविन्दविधानसूत्र अधोक्षजमात्र इत्युपादानात् वामन इति। वामनोऽपि पॄ-धातुरस्ति ॥

७१४। दामो। कृष्णधातुक-निर्गुण विष्णुजने परे श्ना इत्यस्य दामोदरं विना नारायणारामस्य च स्थाने ई भवति, जहातेर्नारायणारामस्य स्थाने ई, इश्च भवति। श्ना इत्यस्य स्थाने ई भवतीत्युक्ते एकवर्ण इत्यादिन्यायात्। जहतीति 'श्ना-नारायणयो'रित्यादिना आरामहरः ॥

इर्यति, इयृतः, इय्रति ; अर्यते। इय् (५०४), वृष्णीन्द्रः (४७४), गोविन्दः (३६५), 'विष्णुजनाद्दि-स्योर्हरः' (६४७), 'रात् सस्यैव' (२५७) इति नियमात् न तु सत्सङ्गान्तहरः—ऐयः ऐयृताम्, ऐयरुः। 'आरत्' इत्यादि भौवादिकवत् ॥ ७१५ ॥

**णिजिर् शौचे—**

७१६। णिजि-विजि-विषां नरस्य गोविन्दः कृष्ण-धातुक-मात्रे।

नेनेक्ति ॥ ७१६ ॥

७१७। न नारायणोद्धवस्य गोविन्दः कृष्णधातुक-सर्वेश्वरे।

नेनिजानि। विष्लृ व्याप्तौ—वेवेष्टि। सहज-षान्तत्वान्न णत्वम्—प्रनिवेवेष्टि। जन् जनने छान्दसः। अत्रापि स-ध्वोरिट्। कालापास्तु 'व्यतिजज्ञिषे' इत्यादिकं भाषायामपीच्छन्ति ॥ ७१७ ॥

---

७१५। जहा। कृष्णधातुक-ये परे जहातेरारामहरो भवति। ईरामेरामयोः प्राप्तयोरारामहरविधानम्। जहाहीत्यपि मतमिति। पूर्वाचार्यैरिति शेषः। अर्यत इति 'र्तिसत्सङ्गाद्यृदन्तयो'रित्यादिना गोविन्दः। रादिति 'रात्सस्यैवे'ति नियमात् अत्र सत्सङ्गान्तहरो न स्यात्, अतो 'विष्णुजनाद्दि-स्योर्हरः' इति कृतम्। ऐयरुरिति 'ईशान्तस्ये'त्यादिना गोविन्दः। आरदिति 'सर्तिशास्त्यर्तिभ्यो ङो भूतेशे कर्तरी'त्यनेन ङः, 'ऋद्वयान्तदृश्योर्गोविन्दो ङे' इत्यनेन गोविन्दः ॥

७१६। निजि। निजिर शौचे, विजिर पृथग्भावे, विषलृ व्याप्तौ इत्येतेषां कृष्णधातुकमात्रे णरे नरस्य गोविन्दो भवति। कृष्णधातुकमात्र इति किं—निनेज ॥

७१७। न नारा। नारायणश्चासौ उद्धवश्चेति नारायणोद्धवस्तस्य कृष्णधातुक-सर्वेश्वरे परे गोविन्दो न भवति। नारायणोद्धवस्येत्यत्र नारायणस्येति कृते जुहवानीत्यादावपि गोविन्दनिषेधः स्यात्। न णत्व-

डुदाञ् दाने ; डुञावितो ; ददाति। 'श्ना-नारायणयोरारामहरः' (६८७)—दत्तः, ददति ; दत्ते ; दीयते।

७१८। दामोदरस्यैत्व-नरादर्शने हौ।

देहि। अददात्। अदात् ; 'आरामादन उस्' (५५३) –अदुः, अदित ; अदायि, अदायिषाताम् ॥ ७१८ ॥

**डुधाञ् धारण-पोषणयोः—दधाति ;—**

७१९। अपेरादिहरो धाञ्-नह्योर्वा।

७२०। अवस्य तंसे।

७२१। तरतौ चेत्येके।

अपिदधाति, पिदधाति ; अवतंसः, वतंसः ; अवतरति, वतरति ॥ ७१९-७२१ ॥

---

मिति। णत्वविधानसूत्रे 'सहज-षान्तस्य' वर्जितत्वात्। जन् जनने। छान्दस इति अस्य छान्दसत्वं बहुनामसम्मतमिति ज्ञेयम्। तथाहि। ईड् जनोः सध्वोश्चेति कातन्त्रसूत्रम्। जनीशीडः सध्व इति चन्द्रसूत्रम्। आत्मने सध्वोर्जनीडीशृभ्य इति क्रमदीश्वरसूत्रम्। कालापानामप्यसम्मतमिति तु स्वयमेव वक्ष्यते। अत्रापीति। यथा ईडीशृभ्यां सध्वोरिड् विहितस्तथा अत्रापि जन्धातोरपि सध्वोरिड् भवतीति शेषः। अत्रापीत्यत्र अस्मादपीति वा पाठः ॥

७१८। दामो। हौ परे दामोदरस्य अन्तस्य स्थाने एत्वं, नरादर्शनञ्च भवति। अदादिति 'इण्-स्था-पिवती'त्यादिना सेर्महाहरः। अदितेति 'स्था-दामोदरयोरिराम' इत्यादिना आरामस्येरामः, 'वामनस्ये'-त्यादिना सेर्हरः ॥

७१९। अपे। धाञि नह्येच परे अपेरादिहरो वा भवति ॥

७२०। अवस्य। तंसे परे अवस्यादिहरो वा भवति ॥

७२१। तर। तरतौ च परे अवस्यादिहरो वा भवति इत्येके वदन्तीति शेषः ॥

७२२। धाञो नरस्य धो निर्गुणे वैष्णवे।

हरिगदापवादः। धत्तः, धत्थः ; धत्से, धद्ध्वे ॥ ७२२ ॥

७२३। श्रदित्यव्ययमुपेन्द्रवद्धाञि।

श्रद्दधाति, निश्चिनोत्यभिलषति वेत्यर्थः ॥ ७२३ ॥

**डुभृञ् धारण-पोषणयोः--**

७२४। हाङ्-माङोर्नरस्येरामः कृष्णधातुके।

७२५। भृञ आमि च।

विभर्ति। विभराञ्चकार, वभार। ओहाङ गतौ—जिहीते, जिहाते। एवं माङ माने--मिमीते, मिमाते ॥ ७२४-७२५ ॥

**इत्यदादौ जुहोत्यादिः ; अदादिश्च समाप्तः।**

---

७२२। धाञो। निर्गुणवैष्णवे परे धाञो नरस्य स्थाने धो भवति। ननु धरामस्य स्थाने धरामविधानं किमर्थं कृतमिति चेत्तत्राह–हरिगदापवाद इति। अन्यथा हरिगदा स्यात् ॥

७२३। श्रत्। अव्ययं श्रदिति धाञि उपेन्द्रवद्भवति ॥

७२४। हाङ। ओहाङ गतौ, माङ माने इत्येतयोः कृष्णधातुके परे नरस्यान्त इरामो भवति ॥

७२५। भृञ्। कृष्णधातुके आमिच परे भृञो नरस्यान्त इरामो भवति। विभराञ्चकारेति 'भी-ह्री-भृ-हुभ्य आमधोक्षजे वा,' 'द्विर्वचनञ्चे'त्यनेनाम्, द्विर्वचनञ्च। जिहीत इति 'दामोदरं विने'त्यादिना आरामस्य ईरामः ॥

॥ * ॥ इति ह्वादिः ॥ * ॥

## अथ दिवादिः

**दिवु क्रीडा-विजिगीषा-व्यवहार-द्यु ति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु—**

७२६। दिवादेः शपः श्यः।

श् इत्। शित्करणान्न स्थानिवत्त्वम्; तेन न पृथुः; 'धातो र-व-प्रागिदुतोः' (२६४) दीव्यति। एवं षिवु तन्तु-सन्ताने ॥ ७२६ ॥

**नृती गात्रविक्षेपे — नृत्यति ; —**

७२७। नृतीकृत्यादेरिड्वा से सिं विना।

नर्तिष्यति, नर्त्स्यति। त्रसी उद्वेगे — त्रस्यति। जॄष् वयोहानौ— जीर्यति। अजरत्, अजारीत्। 'सत्सङ्गाद्यृदन्तस्य' (५६०) इति 'जॄ-भ्रमु'- (४७६) इति — जजरतुः, जेरतुः ॥ ७२७ ॥

---

दिवु क्रीडेति। कान्तिरत्रेच्छा अन्यथा द्युतिशब्दोपादानमनर्थकं स्यात् ॥

७२६। दिवादेः। दिवादिगणपठितस्य धातोः शपः स्थाने श्यो भवति। शिदिति। यदि स्थानिवत्त्वमिष्टं स्यात्तदा शित्त्वमनर्थकं स्यात्, अतः स्थानिवत्त्वाभावात् पृथुत्वाभावः, अतो गोविन्दाभावे 'धातो र-व-प्रागिदुतो'रित्यादिना त्रिविक्रमः। दीव्यति ॥

७२७। नृति। सिं विना से परे नृतीकृत्यादेरुत्तरे इड्वा भवति, अशकादित्वात् नित्यमिट्प्राप्ते विभाषा। कृतीति कृती छेदने तुदादिः, कृती वेष्टने रुधादिर्द्वयोरेव ग्रहणम्। सिं विनेति किं—अनर्तीत्। जीर्यतीति 'अपृथुः कृष्णधातुको निर्गुणः' इति निर्गुणत्वात् कंसारित्वं, अतः 'ऋरामस्येर् कंसारावि'त्यनेन इर्। अजरदिति जॄ-स्तन्भु-म्रुचु-म्लुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यो ङो वा भूतेश-परपदे' इत्यनेन ङः। 'ऋद्वयान्तदृश्योर्गोविन्दः' इत्यनेन गोविन्दः। 'सत्सङ्गाद्यृदन्ते'तीति गोविन्दविधानलक्षणोल्लेखः किन्तु 'सत्सङ्गाद्यृदन्तस्ये'ति पाठ उचितः, एतद्विधस्थाने पदान्त एव इति शब्दस्य प्रयोगार्हत्वात् 'जॄ-भ्रम्वे'तीति एत्वनरादर्शनविधानलक्षणोल्लेखः लक्षणे जॄभ्रम्बिति पाठो बहुषु पुस्तकेषु दृश्यते, किन्तु लिपिकरप्रमादकृत इति ज्ञेयं, जॄ भ्रम्वेत्युल्लेखात् ॥

**शो तनूकरणे—**

### ७२८। ओरामस्य हरः श्ये।

श्यति। शायात्। एवं छो छेदने—छ्यति। षोऽन्त-कर्मणि—स्यति; सीयते। सेयात्। दोऽवखण्डने—द्यति; दीयते। देयात्।

राध्, साध् संसिद्धौ—राध्यति। अरात्सीत्। 'जॄ-भ्रमु'-(४७९) इत्यादौ 'हिंसार्थ-राधश्च वा'—अपरेधतुः, अपरराधतुः।

व्यध् ताडने; 'ग्रहि-ज्या' (६३०) इति सङ्कर्षणः—विध्यति।

पुष् पुष्टौ—पुष्यति। 'पुषादि'-(५७४) इति ङः—अपुषत् ॥७२८॥

**श्लिष् आलिङ्गने श्लिष्यति ;—**

### ७२९। श्लिष आलिङ्गनार्थात् सक् भूतेशे।

अश्लिक्षत् प्रियां कृष्णः। अर्थान्तरे तु समाश्लिषत् तुलसीं चन्दनञ्च—मिथो मिलिते इत्यर्थः; कुर्द क्रीडायामेव, इति 'एव'-कारेण धातूनामनेकार्थत्वात् ॥ ७२९ ॥

---

७२८। ओराम। स्पष्टार्थमेतत्। सीयत इति 'दामोदरे'त्यादिना ई। सेयादिति 'दामोदरादीनामि'त्यादीना एरामः। अरात्सीदिति शकादित्वादिडभावः ॥

७२९। श्लिष। भूतेशे परे आलिङ्गनार्थात् श्लिष उत्तरे सक् भवति। आलिङ्गनं प्राणिनां क्रियाविशेषः। आश्लिक्षदिति आलिङ्गितवानित्यर्थः। श्लिष्धातोरालिङ्गनार्थत्वेऽपि आलिङ्गनार्थादित्युपादाय तत्-प्रयोजनं दर्शयन् स्वयमेव प्रत्युदाहरति अर्थान्तरेत्विति समाश्लिषदिति 'पुषादित्वाद् ङः'। ननु आलिङ्गनार्थस्य श्लिष्धातोः कथं संयोगमात्रार्थता इति चेत्तत्राह—कुर्देति। एवकारेणेति यदि धातूनामनेकार्थता न स्यात् तदा एवकारो निरर्थकः स्यात्। रध हिंसायाञ्चेति, रध धातुः संराद्धौ हिंसायाञ्च वर्तते इत्यर्थः। नुमिति छेदः 'रधि-जभोर्नुम् सर्वेश्वरे' इत्यनेनेति शेषः। यस्येति। यो विष्णुर्यस्य स विष्णुस्तस्य अङ्गमिति नुमो धात्वङ्गत्वात् 'अनिरामेतामि'त्यादिना नरामहरः। अरधदित्यत्र नस्य हरमुक्त्वा भाषावृत्तिमतदर्शनेन स्वमतं द्रढहति—यथेति। आङोऽपी-

रध् हिंसायाम् -- रध्यति। नुम्, 'यस्य विष्णुस्तस्य सोऽङ्गम्' इति न्यायेन धात्वङ्गत्वान्नस्य हरः—अरधत्; यथा भाषावृत्ता-वाङोऽपीति लभेर्नुमं विधाय 'आलम्भ्यः पशुः' इति साध्यते। 'आल-भ्यते' इत्यत्रानिदित्त्वान्न-लोपः क्रियते, तस्मात् प्रक्रिया (पा ३।१।४६, ७।१।६२) चिन्त्या।

७३०। रधादेरिड्वा।

७३१। रधेर्नुम्निषेधोऽधोक्षज-वर्जितेटि।

अरत्साताम्, अरधिषाताम्। अधोक्षजे तु – ररन्धिथ, ररन्धिव; नियमवलान्नित्यमिट्। तृप् प्रीणने – तृप्यति। 'कृष्-स्पृश्-'(५३५) इति—अतृपत्, अतर्पीत्; सहजानिट्सु पाठादम् वा – अताप्र्सीत्। एवं दृप् हर्षविमोचनयोः। मुह् वैचित्त्ये – मुह्यति। अमुहत्। मोग्धा, मोढा, मोहिता॥ ७३०-७३१॥

---

तीति आङोऽपीत्यनेन लक्षणेत्यर्थः। आलम्भ्य इति आङ्पूर्वो लभिर्मा-रणार्थः। आङोऽपि 'लभेर्नुम्' हिंसायां इत्येव तत्सूत्रमत्र भाषावृत्ति-मतोत्थापनस्य आलभ्य इत्यत्रैव प्रयोजनम्। नत्वालम्भ्य इत्यत्रेति ज्ञेयम्। आलम्भ्यः पशुरित्यस्योत्थापनन्तु नुम्विधानलक्षणस्य उदाहरणदर्शनार्थ-मेव। तस्मादिति। अरधदित्यादौ नलोपो न भवतीति प्रक्रियामतम्॥

७३०। रधा। रधादेरुत्तरे इड्वा भवति॥

७३१। राध। अधोक्षजं वर्जयित्वा अन्यस्येटि परे रधेर्नुम् न भवति, अधोक्षजेटि तु परे नुम् भवत्येव। नियमेति। क्रादिभ्य एव अधोक्षजमात्रे नेडिति नियमः कृतस्तद्बलात्। 'कृष्-स्पृश्'-इतीति पाक्षिक-सिविधानलक्षणोल्लेखः। अम् वेति 'ऋरामोद्धव-सहजानिटोऽम् वा वैष्णवा-दावकपिले' इत्यनेनेति शेषः। अताप्र्सीत्, अत्राप्सीदिति 'विष्णुजनान्ता-नामि'त्यादिना वृष्णीन्द्रः। मुह् वैचित्त्ये, वैचित्त्यं व्याकुलता। मोग्धेति 'हस्य ढ इत्यादौ द्रुह-नश-स्नुह-स्निहां वा विष्णुपदान्ते वैष्णवे चे'त्यनेन हस्य घः। मोढेति घरामाभावपक्षे। मोहितेति इट्पक्षे॥

नश् अदर्शने—नश्यति—

७३२। नशोर्नेशिर्ङे वा।

अनेशत्, अनशत्। नशिषीष्ट ॥ ७३२ ॥

७३३। मस्जि-नशोर्नुम् वैष्णवे।

नङ्क्षीष्ट। नंष्टा ॥ ७३३ ॥

७३४। नशेर्न णत्वं षत्वे।

प्रनंष्टा। क्रमु पादविक्षेपे ; 'क्रमस्त्रिविक्रमः' (५२४) इत्यादि—क्राम्यति। 'शपि' इति तस्यां (पा ७।३।७६) भ्रमः ॥ ७३४ ॥

इति रधादिः।

शमु उपशमे—

७३५। शमादीनां त्रिविक्रमः श्ये।

शाम्यति। 'जनि-वध्योर्मान्तानाम्' (५२२)—अशमि। क्लमु ग्लानौ—क्लाम्यति ॥ ७३५ ॥

---

७३२। नशे। ङे परे नशेः स्थाने नेशिर्वा भवति, इराम इत् ॥

७७३। मस्जि। टुमस्ज् शुद्धावित्यस्य नश-धातोश्च वैष्णवे परे नुम् भवति। वैष्णव इति किं—ण्यत्-प्रत्ययः-कृत्, नाश्यम्। नश्यादित्यादौ तु नुमि सत्यपि कामपालपरपदस्य कपिलत्वात् 'अनिरामेतामि'-त्यादिना नस्य हरः स्यादिति तन्न प्रत्युदाहृतम् ॥

७३४। नशेः। षत्वे सति नशेर्णत्वं न भवति। षत्व इति तालव्यस्य मूर्धण्यत्वे सतीत्यर्थः। षत्वे इति किं—प्रणश्यति। शपीतीति। शिव इत्युपादानात् क्राम्यतीत्यत्रापि त्रिविक्रमो भवति, प्रक्रियायां शपीत्युक्तं, अतस्तन्मते क्राम्यतीति न भवति ॥

७३५। शमा। श्ये परे शमादीनां त्रिविक्रमो भवति। शमु उपशमे, दमु उपशमे, तमु ग्लानौ, श्रमु तपसि खेदे च, भ्रमु अनवस्थाने, क्षमु सहने, क्लमु ग्लानौ, मदी हर्षे एते अष्ट शमादयः। 'जनि-वध्योर्मान्तानामि'-तीति वृष्णीन्द्रनिषेधविधानलक्षणोल्लेखः। क्लाम्यतीत्यत्र 'ष्ठिव्वाचमुक्ल-

**असु क्षेपणे--अस्यति ;--**

७३६। अस्यतेरस्थो ङे ।

आस्थत् । निरास्थत इत्यात्मपदं वक्ष्यते (११२९) ॥ ७३६ ॥

**यसु प्रयत्ने—**

७३७। यसः श्यो वा, संवर्जोपेन्द्रात्तु नित्यम् ।

यस्यति, यसति ; संयस्यति, संयसति ; प्रयस्यति। लुभ् गार्ध्ये ; गार्ध्यमाकाङ्क्षा ; लुभ्यति। 'इषु-सह-लुभ'-(५४०) इति इड्वा—लोब्धा लोभिता ॥ ७३७ ॥

**ञिमिदा स्नेहने—**

७३८। मिदेर्गोविन्दः शिवे।

मेद्यति।

इति पुषादिः।

षुङ प्राणि-प्रसवे—सूयते। असविष्ट, असोष्ट ॥ ७३८ ॥

**दीङ् क्षये—**

---

मां त्रिविक्रमः शिवे' इत्यनेनापि त्रिविक्रमः सिध्यति, तथापि क्लमधातोः शमादिषु पाठः 'शमादेर्णिनि'रित्यनेन णिनिविधानार्थमिति ज्ञेयम्। णिनिः कृत् ।।

७३६। अस्यतेः। ङे परे अस्यतेः स्थाने अस्थो भवति। आस्थदिति 'अस्यति-वक्ति-ख्यातिभ्यो ङो भूतेशे कर्तरी'त्यनेन ङः ।।

७३७। यसः। यस उत्तरे श्यो वा भवति। संवर्जोपेन्द्रादुत्तराद्-यस उत्तरे तु श्यो नित्यं भवति। उपेन्दाभावे समुपेन्द्रे च वा भवति। अन्योपेन्द्रे तु नित्यं भवतीत्यर्थः ।।

७३८। मिदे। शिवे परे मिदेर्गोविन्दो भवति, शिव इति किं—मिद्यते, श्य इत्यकृत्वा शिव इति कृतं, हरिनामाक्षरलाभार्थम्। असविष्ट, असोष्टेति 'स्वरति-सूति-सूयती'त्यादिना वेट्' ।।

७३९। मीनाति-मिनोति-दीङामारामान्तपाठश्चतु-र्व्यूहविधिस्थाने यपि च, लीयति-लीनात्योर्वा।

दामोदरत्वाभावान्नेरामः—अदास्त ॥ ७३९ ॥

७४०। दीङो युट् कपिल-सर्वेश्वरे।

नरस्य वामनः' (४९५)—दिदीये। 'इड्-व्यावधाने' (४३३) इति अन्यागम-व्यवधाने तु न ढत्वम्—दिदीयिध्वे; 'स्यात्' इत्येके—दिदीयिढ्वे। 'सहज-हरिमित्र-ग्रहणम्' इति प्रसादकारः (पा ६।४।६३)।

लीङ श्लेषणे—लीयते। लाता, लेता ॥ ७४० ॥

**जनी प्रादुर्भावे**—

७४१। ज्ञा-जनोर्जा शिवे।

जायते; भावे—जायते, जन्यते। अजनि, अजनिष्ट। 'दीप्-जनी'-(६०१) इति इण् वा कर्त्तरि—जज्ञे। पद्‌ गतौ—पद्यते।

---

७३९। मीनाति। मीञ् हिंसायां, डुमिञ् प्रक्षेपणे, इत्येतयो र्दीङधातोश्च चतुर्व्यूहविधिस्थाने आरामान्तपाठो भवति, यपि च परे आरामान्तपाठो भवति, चतुर्व्यूहस्थाने इति गोविन्दवृष्णीन्द्रविधाने यस्मिन् परे गोविन्दवृष्णीन्द्रौ भवतः, तस्मिन् विषये इति फलितार्थः। आरामान्तपाठ इति अन्तस्य स्थाने आरामो भवतीत्यर्थः। लीय। लीङ श्लेषणे, ली श्लेषणे इत्येतयोश्चतुर्व्यूहविधिस्थाने यपिच परे आरामान्तपाठो वा भवति, दामोदरत्वाभावादिति दीङधातोर्दामोदरत्वाभावात् 'स्था-दामोदरयोरिरामः' इत्यादिना नेरामः। अदास्तेति अत्र गोविन्दविधिस्थाने आरामान्तपाठः ॥

७४०। दीङो। कपिलसर्वेश्वरे परे दीङ उत्तरे युट् भवति, उटावितौ। दिदीये इति चतुर्व्यूहविधिस्थाने इत्युपादानात् नात्रारामान्तपाठः। इडिति 'ईश्वर-हरिमित्र-हकारेभ्यः सीध्वं भूतेशाधोक्षजानां धस्य ढः', 'इड् व्यवधाने तु वे'ति ढविधानसूत्रम्। सहजेति प्रसादकारमतेऽपि दिदीयिध्व इति ॥

कर्तरि—अपादि। बुध् अवगमने—बुध्यते। अबोधि, अबुद्ध, अभूत्-सातम्। णह् बन्धने—नह्यति, नह्यते। नद्धा ॥ ७४१ ॥

इति दिवादिः।

## अथ स्वादिः

**षुञ् अभिषवे ; अभिषवः—सन्धानं, मङ्गलस्नानं वा, 'पीडनम्' इत्यन्ये ;—**

### ७४२। स्वादेः शपः श्नुः।

'उ-श्नवोर्गोविन्दः' (५६८)—सुनोति ; षत्वम्—अभिषुणोति। न गोविन्दवृष्णीन्द्रौ—सुनुतः, सुन्वन्ति, सुनोषि इत्यादि ; सुनुते, सुन्वाते इत्यादि ; सूयते। 'सु-स्तु-धूञ्भ्य इट् सौ' (५७२) असावीत्, असोष्ट। एवं धुञ कम्पने। डुमिञ् प्रक्षेपणे—'मीनाति'-

---

७४१। ज्ञा। शिवे परे ज्ञा अवबोधने इत्यस्य जन्धातोश्च स्थाने जा भवति। भावे जायते इति 'जन-खन-सनामारामो वा कंसारि-ये' इत्यनेन नरामस्य आरामः। अजनीति 'दीप्-जनी-वुद्धचति-पूरी-तायि-प्यायिभ्य इण् वा भूतेश-ते कर्तरी'त्यनेन इण्। 'जनि-वध्यो'रित्यादिना वृष्णीन्द्रनिषेधः। अजनिष्टेति इणभावपक्षे। जज्ञ इति 'गम-हन-जने'-त्यादिना उद्धवादर्शनं, 'तवर्गस्य चवर्गः'। अदीति, अपादीति 'पदस्तु-नित्यमि'त्यनेन इण्। अबोधीति 'दीप-जनी-वुध्यती'त्यादिना इण्। अबुद्ध, अभूत्सातामिति 'ऋद्वयाद्विष्णुजनान्तेशोद्धवाच्चे'त्यादिना कपिल-त्वान्न गोविन्दः। णह बन्धन इति एष उभयपदी। नद्धा इति 'हस्य ढ इत्यादौ नहो ध' इति हस्य धः॥

॥ * ॥ इति दिवादिः ॥ * ॥



७४२। स्वादेः। स्वादिगणपठितस्य धातोः शपः स्थाने श्नुर्भवति श इत्। सुनोतीति शित्करणान्न स्थानिवत्त्वमतः पृथुत्वाभावः, अतः

(७३६) इत्यात्वम्—अमासीत्। चिञ् चयने—चिनोति। अधोक्षजे—'चेः किर्वा' (५३४)—चिकाय, चिचाय।

स्तृञ आच्छादने—'ऋराम-वृभ्यः' (५७८) इति वेट्—अस्तरिष्ट, अस्तृत। स्तरिषीष्ट। वृञ् आवरणे—अवारीत्। 'ऋराम-वृभ्यः' (५७८) इति वेट् दीर्घः—अवरीष्ट, अवरिष्ट, अवृत। 'अत्यर्ति-वृ'-(५११)—ववरिथ, ववृव ॥ ७४२ ॥

**हि गतौ वृद्धौ च—हिनोति ; णत्वम्—प्रहिणोति ;—**

७४३। नरतो हेर्घिर्न त्वङि।

जिघाय ॥ ७४३ ॥

**कृवि जिघांसायाम्—**

७४४। कृविधिव्योः कृधी श्नौ।

अन्तःस्थान्तर्गणे पठितावेतौ ; कृणोति। इदित्त्वान्नुम् (४५८) कृण्वते। अकृण्वीत्। चकृण्व। कृण्विता। धिवि प्रीणने—धिनोति। दन्भु दम्भे ; दम्भः—परवञ्चना। दभ्नोति, दभ्नुतः, दभ्नुवन्ति। ददम्भ। 'श्रन्थि-ग्रन्थि'—(४५१) इत्यादिना कपिलो वा—देभतुः, ददम्भतुः ; देभिथ, ददम्भिथ। 'आदेशहीन'- ( ४७७ ) इत्यादिना

---

प्रकृतेर्न गोविन्दः। अभिषुणोतीति षत्वे कृते णत्वञ्च। स्तरिषीष्टेति इडभावपक्षे स्तृषीष्टेति। णत्वमिति, 'उपेन्द्रादित्यादौ हिनु-मीनानिपाञ्चे'त्यनेनेति शेषः ॥

७४३। नरः। नरत उत्तरस्य हेः स्थाने घिर्भवति। अङि तु सति न भवति, प्रत्युदाहरणं वक्ष्यते ॥

७४४। कृवि। श्नौ परे कृविधिव्योः स्थाने कृधी भवतः। अन्तस्थान्तर्गणे दन्त्योष्ठ्यवान्तर्गणे दभ्नोतीति 'अनिरामेतामि'त्यादिना नराम-हरः। देभतुरिति 'तृ-फलेत्यादिना एत्वं', 'नरादर्शनञ्च'। एत्वादावित्यादिपदेन नरादर्शनस्य ग्रहणम्। दम्भेरिति श्रन्थेररामस्य असंयुक्तविष्णुजन-मध्यत्वाभावात् ग्रन्थेस्तु सादेश-नराद्यक्षरत्वात् अरामस्य असंयुक्त-विष्णु-

एवैत्वादौ प्राप्तेऽपि तत्र श्रन्थेर्दम्भेश्च पृथगुपादानं नियमार्थं नलोपिनां मध्ये तयोरेवेति; तेनाधोक्षजाभे कृति 'ममथ्वान्' सेत्स्यति ॥ ७४४ ॥

**अशूङ् व्याप्तौ—अश्नुते, अश्नुवाते, अश्नुवते ;**

७४५ । अश्नोति-नरान्नुडधोक्षजे ।

आनशे ॥ ७४५ ॥

**इति स्वादिः ।**

## अथ तुदादिः

**तुद् व्यथने—**

७४६ । तुदादेः शपः शः ।

तुदति, तुदते ॥ ७४६ ॥

**भ्रस्ज् पाके ; 'ग्रहि-ज्या-'(६३०) इति सङ्कर्षणः ; —**

७४७ । सस्य जो जे ।

भृज्जति ॥ ७४७ ॥

---

जनमध्यत्वाभावाच्च पृथगुपादानस्य सार्थकत्वमस्तीति ज्ञेयम् । नियममाह नलोपिनां मध्ये तस्यैवेति दम्भेरेवेतीति तेनेति नियमेन कृते ममथ्वानित्यत्र एत्वं, नरादर्शनञ्च न स्यात्, श्रन्थेर्दम्भश्च पृथगुपादानं नियमार्थं नलोपिनां मध्ये तयोरेवेतीति पाठो बहुषु पुस्तकेषु दृश्यते, सत्वसङ्गत एवेति ॥

७४५ । अश्नोति । अधोक्षजे परे अश्नोते र्नरादुत्तरे नुड् भवति, उटावितौ । आनशे इति 'नरादेररामस्य त्रिविक्रमः' इत्यनेन त्रिविक्रमः ॥

॥ * ॥ इति स्वादिः ॥ * ॥

७४६ । तुदा । तुदादिगणपठितस्य धातोः शपः स्थाने शो भवति । श इत्, अरामशेषः ॥

७४७ । सस्य । सुगमम् ॥

७४८। भ्रस्जेर्भर्जोऽकंसारौ वा।

अभार्क्षीत्, अभ्राक्षीत्। बभर्ज, बभ्रज्ज। कंसारौ तु—भृज्यते॥ ७४८॥

मुच्लृ मोक्षणे—

७४९। मुचादेर्नुम् शे।

मुञ्चति। लुप्लृ छेदने—लुम्पति। विद्लृ लाभे—विन्दति। लिप् उपदेहे—लिम्पति। 'लिपि-शिचि'-(६३३) इत्यादि—अलिपत्, अलिपत, अलिप्त। षिच् क्षरणे; इरनुबन्धत्वं बहूनामसम्मतम्; सिञ्चति। षत्वम्—अभिषिञ्चति। असिचत्, असिचत, असिक्त। एते उभयपदिनः। कृती छेदने—कृन्तति। कर्त्स्यति, कर्तिष्यति।

इति मुचादिः।

षू प्रेरणे—सुवति। ओव्रस्चू छेदने; 'सस्य शश्चवगयोगे' (२४९)—वृश्चति। ऋच्छ गत्यादिषु—ऋच्छति। 'सत्सङ्गाद्यू-

---

७४८। भ्रस्जो। कंसारेरन्यस्मिन् परे भ्रस्जः स्थाने भर्जो वा भवति। अभार्क्षीत्, अभ्राक्षीदिति 'विष्णुजनान्तानामनिटां वृष्णीन्द्रः सौ परपदे' इत्यनेन वृष्णीन्द्रः॥

७४९। मुचा। से परे मुचादेरुत्तरे नुम् भवति। लिपीति। 'लिपि-सिचि-ह्वो ङो भूतेशे कर्तरि', 'आत्मपदे तु वे'ति लक्षणम्। कर्त्सति, कर्तिष्यतीति 'नृतिकृत्यादेरिड् वा से सिं विने'त्यनेन वेट्। मुचादय षडुक्ताः खिद परिधाते इत्ययमपि मुचादिगणे वर्तत इति ज्ञेयम्। पिश अवयवे इत्यस्यापि मुचादित्वं क्रमदीश्वरादीनां सम्मतम्। मुञ्चति लुम्पि-लिम्पी च विन्दिश्च सिञ्चि-जनेऽपीति 'नरादेररामस्य त्रिविक्रमः', 'तस्मान्नुड् द्विविष्णुजने धाता'विति पूर्वं कृतम्। ऋच्छितेत्यत्र 'लघूद्धवस्य गोविन्दः' इत्यनेन गोविन्दः कथं न भवतीत्याशङ्क्य समादधाति—उद्धवत्वाभावादिति। नन्विदं कथं सङ्गच्छातां यथात्र उद्धवत्वाभावस्तथालघुत्वाभावश्च, यत उक्तं 'सत्सङ्गात् पूर्वो वामनोऽपि गुरु'रिति उच्यते, 'लघूद्धवस्य गोविन्द' इत्यत्र 'वामनो लघु'रित्युक्तमतो वामनत्वमस्त्येवेति उद्धव-

दन्तस्य' (५६०) इति गोविन्दः, 'द्विविष्णुजने' (४७६) इति नुडिष्यते—आनर्च्छ, आनर्च्छतुः। उद्धवत्वाभावान्न गोविन्दः—ऋच्छिता। कॄ विक्षेपे; 'ऋरामस्येर्' (५७७)—किरति; कीर्यते। चकरतुः। करिता, करीता ॥ ७४९ ॥

७५०। उपात् सुट् किरतौ छेदने।

उपस्किरति ॥ ७५० ॥

७५१। अन्नर-व्यवधानेऽपि।

उपास्किरत्, उपचस्कार ॥ ७५१ ॥

७५२। उप-प्रतिभ्यां सुट् किरतौ हिंसायाम्।

उपस्किरति, हिंसापूर्वकं क्षिपतीत्यर्थः। एवं प्रतिस्किरति इत्यादि ॥ ७५२ ॥

**गॄ निगरणे ; निगरणं गलाधःकरणम् ; —**

७५३। गिरो रो लः सर्वेश्वरे वा, नित्यन्तु यङि।

गिरति, गिलति ॥ ७५३ ॥

---

त्वाभावादित्येबोक्तं अथवा यत्र यत्र लघुत्वाभावस्तत्र उद्धवत्वाभावस्य आवश्यकता नास्ति, यत्र यत्र उद्धवत्वाभाव स्तत्र लघुत्वाभावस्यावश्यकतेति मुख्यहेतुतया उद्धवत्वाभावस्यैव निर्देशः कृतः। चकरतुरिति 'सत्सङ्गाद्यृदन्तस्ये'त्यादिना गोविन्दः। करीतेति 'ॠरामवृभ्य इटस्त्रिविक्रमो वे'-त्यादिना इटस्त्रिविक्रमः ॥

७५०। उपात्। छेदनेऽर्थे किरतौ कृधातौ परे उपादुत्तरे सुट् भवति, उटावितौ। उपस्किरतीति छेदनपूर्वकं विक्षिपतीत्यर्थः ॥

७५१। अत्। अतो नरस्य च व्यवधानेऽपि सुट् भवति ॥

७५२। उप। हिंसायामर्थे किरतौ परे उप-प्रतिभ्यामुत्तरे सुट् भवति ॥

७५३। गिरो। सर्वेश्वरे परे गिरो रो लो वा भवति, यङितु परे नित्यं भवति ॥

गुफ् गुन्फ् ग्रन्थे--

७५४। गुन्फादेर्नलोपः शे वा।

गुफति, गुम्फति। नरामवैयर्थ्यादेव नलोपो न स्यादिति चेत्, रामधातुके सार्थकं स्यात्—गोफिता, गुम्फिता। स्पृश् संस्पर्शने—स्पृशति। अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्। प्रच्छ् ज्ञीप्सायाम्—पृच्छति। अप्राक्षीत्। सृज् विसर्गे; विसर्गः—सृष्टिस्त्यागो वा; सृजति। अस्राक्षीत्। टुमस्जो शुद्धौ; शुद्धिरिह स्नानम्, अवगाहे तु प्रयोगबाहुल्यम्; मज्जति। लोपविधेर्बलवत्त्वात् कृते सलोपे नुम् (७३३)—अमाङ्क्षीत्। संयुक्त-विष्णुजनमध्यत्वान्नैत्वादि--मम-

---

७५४। गुन्फा। शे परे गुन्फादेर्नलोपो वा भवति। पाक्षिक न 'अनिरामेतामि'त्यादिना नरामहरस्य नित्यत्वात् गुम्फतीत्यादिकं न सिद्ध्यतीति लोपविधानं कृतम्। अत्राशङ्कते नरामेति। समादधाति—रामधातुके इति। सार्थकमिति न। नरामाक्षरमिति शेषः। ननु गुम्फादेर्नलोपो वेति सूत्रस्य किं प्रयोजनं? उभयोरुपादानात् गुफति, गुम्फति-द्वयमिति सिद्धं स्यात् भद्रं यर्हि एतत् सूत्रं न क्रियते, तदा 'अनिरामेतामि'तिसूत्रेण नलोपो नित्यमेव सम्भवति। नन्वेतन्नहि नरामग्रहणस्य वैयर्थ्यादेव नलोपो न स्यात् श्रूयतां चेद्यदीति ब्रवीसि तदा यक्-कामपालादौ रामधातुके परे सति गुफ्यते गुफ्यादित्यादावनिरामेतामि-त्यादि-सूत्रबलात् नलोपे सति अस्य सूत्रस्य सार्थकं स्यात्, वालकल्क्यादौ परे उभयोर्गुफगुम्फोर्ग्रहणमपि सार्थकं स्यात्, गोफितेति गुफधातो रूपम्। गुम्फादेरित्यादिपदेन शुम्भ शोभार्थे, उन्भ पूरणे इत्यादेर्ग्रहणम्। "गुम्फतिस्तृम्पतिश्चैव तुम्पतिस्तुम्भतिस्तथा। रिम्फतीरुम्भतिः शुम्भिः सप्त गुम्फादयो मताः।" अस्प्राक्षीदिति कृष्-स्पृश्-मृश्-तृप्-दृप्-सृपः सिर्वा' इत्यनेन सिः, 'ऋरामोद्धव सहजानिटोऽम् वा वैष्णवादावकपिले' इत्यनेन अम्। अस्पार्क्षीदिति अमभावपक्षे। अस्पृक्षदिति सेरभावपक्षे 'ईशोद्धवादनिटो हरिगोत्रान्तात्' इत्यनेन सक्। त्यागो वेति त्यागो दानं, अस्राक्षीदिति 'सृजि-दृशोरम् कपिल-वैष्णवे' इत्यनेन अम्। शुद्धिरिहेति स्नानं विधिपूर्वकमज्जनं, अवगाहस्तु केवलमज्जनं विहारपूर्वकमज्जनञ्च।

ञ्जिथ, ममक्थ। त्सर् छद्मगतौ ; भौवादिकः ; त्सरति। तत्सरतुः। विच्छ् गतौ—विच्छायति। तुदादित्वबलात् पक्षे विकरणश्च—विच्छति। मृश् आमर्शने—मृशति। अम्राक्षीत्, अमार्क्षीत्, अमृक्षत्। इषु इच्छायाम्—इच्छति। एष्टा, एषिता॥ ७५४॥

**कुट कौटिल्ये—**

७५५। कुटादेरनृसिंहो निर्गुणः।

७५६। व्यचेस्त्वसिं विना।

अकुटीत्। उत्तम-णलि नृसिंहकार्य-वृष्णीन्द्रविध्यभावाद् गोविन्द एव—चुकोट। कुटिता॥ ७५५-७५६॥

**लिख लिखने ; मिल सङ्गे—**

७५७। लिख-मिलौ कुटादी बहुलम्।

तेन—लिखिष्यति, लेखिष्यति ; मिलिष्यति, मेलिष्यति ; लिखनं, लेखनम् ; मिलनं, मेलनम् इत्यादि। स्फुर् स्फुरणे—

---

नुमिति 'मस्जि नशो र्नुम् वैष्णवे' इत्यनेनेति शेषः। अमाङ्क्षीदिति 'सस्य ज' इत्यादौ नतु वैष्णव इति नात्र सस्य जः। तत्सरतुरिति त्सेत्यस्य द्विर्वचने कृते 'नर-विष्णुजनानामादिः शिष्यते' इति साराम-तरामस्य स्थितिः, अत्रापि संयुक्तविष्णुजनमध्यत्वान्नैत्वादि, विच्छायतीति गुपू-धूप-विच्छी'त्यादिना आयः। तुदादित्वबलादिति अन्यथा तुदादित्वं व्यर्थं स्यात्। अम्राक्षीदित्यादि अस्प्राक्षीदित्यादीत्यादिवत्। एष्टा, एषितेति 'इषु-सहे'त्यादिना वेट्॥

७५५। कुटा। कुटादेरनृसिंहो नृसिंहभिन्नो निर्गुणो भवति। नृसिंहस्य निर्गुणता न भवतीत्यर्थः॥

७५६। व्यचे। व्यच् व्याजीकरणे इत्यस्य तु असिं विना अनृसिंहो निर्गुणो भवति। असेर्निर्गुणता न भवतीत्यर्थः। नृसिंहेति नृसिंहकार्यरूपो यो वृष्णीन्द्रविधिस्तस्याभावादित्यर्थः॥

७५७। लिख। लिखमिलौ बहुलं यथा स्यात्तथा कुटादी भवतः। लेखिष्यतीत्यादौ कुटादित्वाभावः। लिखनमित्यादौ 'अनो भावे' इत्यनेन

स्फुरति। व्यच् व्याजीकरणे; 'ग्रहि-ज्या-' (६३०) इति—विचति। विव्याच, विविचतुः, विविचिथ। 'व्यचेरसिवर्जितस्य कृत्प्रत्ययस्यैव निर्गुणत्वम्' इत्येके—विव्यचिथ। असिर्वक्ष्यते (१५६०)—उरु-व्यचाः। णू स्तवने—नुवति। इटि न गोविन्दः—अनुविषाताम्। इण्वदिटि तु वृष्णीन्द्रः—अनाविषाताम्। उत्तमणलि वा—नुनाव, नुनव। इति कुटादिः; एते परपदिनः॥ ७५७॥

मृङ् प्राणत्यागे; 'ऋरामस्य रिः' (५६२)—म्रियते। अमृत। मृषीष्ट।

**७५८। म्रियतेः परपदं शिव-भूतेश-कामपालेभ्योऽन्यत्र।**

ममार। मरिष्यति। ओविजी भय-चलनयोः—विजते॥७५८॥

**७५९। विजेरिट् निर्गुणः।**

अविजिष्ट॥ ७५९॥

**इति तुदादिः।**

---

अन् प्रत्ययः कृत्। इत्येक इति तन्मते विव्यचिथेति। इटि न गोविन्द इति कुटादित्वादिति शेषः। इण्वदिटि तु वृष्णीन्द्र इति बाधकाभावादिति शेषः। नुनवेति नृसिंहस्य निर्गुणत्वाभावाद्गोविन्दः। इति कुटादिरिति उक्तेभ्योऽन्येषामपि कुटादित्वं गण एव ज्ञेयम्॥

७५८। म्रियते। शिवात् भूतेशात् कामपालाच्च अन्यस्मिन् विषये मृधातोः परपदं भवति। मरिष्यतीति 'ऋराम-हनिभ्यामि'त्यादिना इट्॥

७५९। विजेः। व्यक्तार्थमेतत्॥

॥ * ॥ इति तुदादिः॥ * ॥

# अथ रुधादिः

**रुधिर् आवरणे ; इरनुबन्धः ;—**

७६० । रुधादेः शप्खण्डी श्नम् ।

अन्त्य-सर्वेश्वरात् परं मितः स्थानम् । शराम इत्, 'श्नान्नस्य हरः' ( ७६२ ) इति विशेषणार्थः । रुणद्धि । 'श्नमस्त्योररामहरः' (६६८), 'विष्णुजनाद्विष्णुदासस्यादर्शनम्' (१२५)—रुन्धः रुन्द्धः, रुन्धन्ति ; रुणत्सि, रुन्धः रुन्द्धः, रुन्ध रुन्द्ध ; रुणध्मि, रुन्ध्वः, रुन्ध्मः ; रुन्धे ; रुध्यते । रुन्ध्यात् । अरुणत् । सिपि—अरुणत्, अरुणश्च । अरुधत्, अरौत्सीत् । शिष्लृ विशेषणे—शिनष्टि । 'हेर्धिः' (६४३)—शिण्ढि, शिण्ड्ढि ॥ ७६० ॥

---

७६० । रुधा । रुधादेरुत्तरे शप्खण्डी श्नम् भवति । शप्खण्डीति शबुत्पत्तेः पूर्वं श्नम् भवति, नतु शपः स्थाने इत्यर्थः । ननु शप्खण्डी श्नम्-विधानेन किमधिकमायातं, शपः श्नमिति कृते को दोष इति चेत्, केनाप्युच्यते तदेवं वाच्यं शप्खण्डी श्नम्-विधानं यत् तत् श्नमः प्रकृतत्व-स्पष्टीकरणार्थं 'श्नमस्त्योररामहरः' इत्यस्य अस्साहचर्यत्वज्ञापकत्वेन श्नमः प्रकृतित्वावश्यकभावत्वादिति । ननु श्नमः शित्त्वे किमपि प्रयोजनं न दृश्यते इति चेत्तत्राह—शराम इति । श्नादिति नस्येत्यस्य विशेषणं श्नादुत्तरस्येत्यर्थः । शरामे न कृते 'नमो नस्य हरः' इति सूत्रं स्यात् । तथा सति नम्धातो र्नस्य हरो भवतीति शङ्काभासः स्यात् भवत्वेतत् नान्नस्य हर इति कृते को दोष इति चेदुच्यते नान्नस्येति कृते नन्दतीत्यत्र नन्दधातोरपि परनरामस्य हरः स्यादिति शविधानस्य प्रयोजनम् । रुणध्मीत्यत्र विष्णुपदत्वाभावान्नित्यं हरिवेणुविधिः 'प्रत्यय-हरिवेनावि'त्यस्य न प्राप्तिः । रुन्ध इति 'श्नमस्त्योररामहरो निर्गुणे' इति अरामहरः, 'नवर्ज-तवर्गस्थस्य नस्य न णत्वमि'त्यनेन णत्वनिषेधः । रुन्धः, रुन्धेति 'हरि-घोषादि'त्यादिना थस्य धः । सिपि अरुणश्चेति अरुणत्, अरुणश्चेति रूप-द्वयं भवतीत्यर्थः । अरुणरिति 'दधोरुः सिपि वे'त्यनेन धस्य रत्वम् । अरुधदिति 'इरणुबन्धान् ङो वे'त्यादिना ङः । शिण्ढीति 'नस्य विष्णुचक्रं', 'विष्णुचक्रस्य हरिवेणुः', 'विष्णुजनाद्विष्णुदासस्यादर्शनम्' इत्यादिना तरामस्यादर्शनं, शिण्ड्ढीति तदभावपक्षे ॥

**तृह् हिंसायाम् —**

७६१ । तृहः श्नमो नेः पृथु-विष्णुजने ।

तृणेढि, तृण्ढः, तृहन्ति ; तृणेक्षि ॥ ७६१ ॥

**हिसि हिंसायाम् ; इदित्त्वान्नुम् ;—**

७६२ । श्नान्नस्य हरः ।

हिनस्ति ॥ ७६२ ॥

**अन्जू व्रक्षणादिषु—अनक्ति ;—**

७६३ । अञ्जेरिट् सौ ।

आञ्जीत् ॥ ७६३ ॥

**भन्जो आमर्दने—भनक्ति । अभाङ्क्षीत्—**

७६४ । भञ्जेर्नलोप इणि वा ।

अभाजि, अभञ्जि । ञिइन्धी दीप्तौ—इन्धे ॥ ७६४ ॥

**इति रुधादिः ।**

---

७६१ । तृहः । पृथु-विष्णुजने परे तृह् धातोः श्नमः स्थाने नेर्भवति । तृणेढीति 'हस्य ढः, तस्य धः, धस्य ढः, ढस्य हरः' ॥

७६२ । श्नान्नस्य । श्नादुत्तरस्य नरामस्य हरो भवति । श्नादिति श्नम एकदेशस्य श्नेत्यस्य पञ्चम्यन्तत्वेन निर्देशः । व्रक्षणादिष्विति । आदिपदेन व्यक्तिगत्योर्ग्रहणम् । व्रक्षणादिष्वित्यत्र व्यक्तादिष्विति पाठ उचितः । गणकारेर्ग्रन्थकारेण च गणे तथालिखितत्वात् ॥

७६३ । अञ्जेः । सौ परे अञ्जेरुत्तरे इड् भवति । ऊदित्त्वाद्विकल्पे प्राप्ते नित्यतार्थं लक्षणमिदम् ॥

७६४ । भञ्जे । इणि परे भञ्जे र्नलोपो वा भवति । अभञ्जीति उद्धवत्वाभावात् न वृष्णीन्द्रः, इन्ध इति 'श्नान्नस्य हरः' इति नस्य हरः, श्नमोऽरामहरः, तरामस्य धः प्रकृते धरामस्यादर्शनम् ॥

॥ * ॥ इति रुधादिः ॥ * ॥

# अथ तनादिः

**तनु विस्तारे—**

७६५। तनादेः शपोऽपवाद उः।

'उ-श्न्वोर्गोविन्दः' (५६८)—तनोति, तनुतः, तन्वन्ति ; तनुवः तन्वः, तनुमः तन्मः ; तनुते, तन्वाते, तन्वते ॥ ७६५ ॥

७६६। तनोतेरारामो वा यकि।

तायते, तन्यते। तनुयात् ॥ ७६६ ॥

७६७। तनादेः सेर्महाहरो वा त-थासोः।

७६८। कृञस्तु नित्यम्।

भूतेशस्य कृष्णधातुकत्वादिडभावः—अतत, अतनिष्ट। अतथाः, अतनिष्ठाः। षणु दाने—सनोति, सनुते। 'जन-खन-सनाम्' (६२१) इत्यादौ 'वैष्णवाद्योः कंसारि-सनोर्नित्यम्' (६२२)—असात, असनिष्ट ॥ ७६७-७६८ ॥

---

७६५। तना। तनादिगणपठिताद्धातोरुत्तरे शपोऽपवाद उर्भवति। अपवादे बाधकः। शपोऽपवादत्वेनैव तदनुकल्पत्वादस्य पृथुत्वमस्तीति न निर्गुणत्वमिति ज्ञेयम्। तनुत इति 'ईशस्ये'त्यादिना गोविन्दनिषेधः। तनुवः, तन्व इति 'असंयोगपूर्वस्य प्रत्ययोरामस्य हरो वा निर्गुण-वमो'रि'-त्यनेन पाक्षिकोरामहरविधानम्। तन्वत इति 'अरामान्यवर्णादि'त्यादिना नस्य हरः ॥

७६६। तनो। यकि परे तनोतेरन्ते आरामो वा भवति ॥

७६७। तनादेः। तथासोः परयोः तनादेः सेर्महाहरो वा भवति ॥

७६८। कृञः। तथासोः परयोः कृञस्तु सेर्महाहरो नित्यं भवति। ननु अततेत्यत्र इट् कथं न स्यादिति चेत्तत्राह—भूतेशस्येति। सेर्महाहर-विधाने कृते भूतेशस्यैव परता। ननु भवत्वेतत्, 'हरिवेण्वन्तोद्धवस्य त्रिविक्रमः' इत्यनेन त्रिविक्रमे कृते पश्चात् 'हरिवेण्वन्तसहजानिटामि'-त्यादिना नस्य हरः कस्मान्न स्यादिति चेत्तत्रोच्यते। अग्रे त्रिविक्रमे कृते पश्चाल्लोपकरणेन निमित्तनरामाभावान्नैमित्तिकत्रिविक्रमाभावः सम्भव-

**क्षिणु, क्षणु हिंसायाम्—**

७६९। नोद्धवस्य गोविन्द उ-विकरणे।

७७०। ऋरामस्य तु वा।

क्षिणोति ; क्षिणुतः। क्षणु—'ह-म-यान्त'-( ५१४ ) इति—अक्षणीत्। तृणु अदने—तृणोति, तर्णोति ॥ ७६९-७७० ॥

**डुकृञ् करणे—करोति ;—**

७७१। करोत्यरामस्य उर्निर्गुणे।

कुरुतः, कुर्वन्ति, करोषि इत्यादि। 'असंयोगपूर्वस्य' (५६९) इत्यादौ 'करोतेस्तु नित्यं ये च' (५७०)—कुर्वः, कुर्मः ; कुरुते ; क्रियते। कुर्यात्, कुर्वीत। करोतु, कुरुताम् ; हौ—कुरु। अकरोत्, अकुरुत। अकार्षीत्, अकृत। चकार, चक्रे। क्रियात्, कृषीष्ट। कर्ता ; कर्मणि—कर्ता, कारिता। करिष्यति, करिष्यते। अकरिष्यत्, अकरिष्यत ॥ ७७१ ॥

७७२। संपर्युपेभ्यः सुट् करोतौ संस्काराद्यर्थेषु।

---

त्यतः यत्र नरामो विद्यते, तत्रैव 'हरिवेण्वन्तोद्धवस्ये'त्यनेन त्रिविक्रम इति ज्ञेयम्। असातेति सेर्महाहरे कृते भूतेशस्यैव परता तस्य तु पृथुत्वाभावान्निर्गुणत्वमतः कंसारित्वम् ॥

७६९। नोद्ध। उ-विकरणे परे उद्धवस्य गोविन्दो न भवति ॥

७७०। ऋरा। उद्धवस्य ऋरामस्य तु गोविन्दो वा भवति। 'ह-म-यान्ते'तीति वृष्णीन्द्रनिषेधः इति शेषः ॥

७७१। करो। निर्गुणे परे करोतेररामस्य स्थाने उर्भवति। कृञ्-धातोररामासम्भवात् गोविन्दे कृते योऽरामः स एव गृह्यते। 'करोतेस्तु नित्यं ये चे'ति उरामहरविधानस्य लक्षणम्। अकृतेति 'कृञस्तु नित्यमि'त्यनेन सेर्महाहरः। कृषीष्टेति 'ऋद्वयादि'त्यादिना कपिलत्वम्। कारितेति इण्वदिट्पक्षे ॥

७७२। संपरि। संस्कारादिषु अर्थेषु करोतौ संपर्युपेभ्य उत्तरे सुट् भवति ॥

७७३। अन्नर-व्यवधानेऽपि।

७७४। तत्र संपरिभ्यां भूषणे समवाये च।

संस्करोति। 'इह समो मलोपः' इति भाष्यम्। ततः स-करामयोर्यथेष्टं द्वित्वं विकल्पेन, तत्र विष्णुचक्र-विष्णुचापयोरागमयोः सतोः—संस्स्करोति, संस्क्करोति; सँस्स्करोति सँस्क्करोति—इत्यादिरूपाणि भवन्ति। 'विष्णुचक्रादिद्वयं विना' इत्यपि केचित्—सस्स्करोति। 'अर्तिसत्सङ्ज्ञाद्यृदन्तयोः' (५५८) इत्यत्र सहज-सत्-सङ्ज्ञादित्वमेव गृह्यते; 'लाक्षणिक-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति न्यायेन न गोविन्दः—संस्क्रियते। एवमिडभावश्च—समस्कृषाताम्। समस्करोत्। सञ्चस्कार; अत्र प्रतिपदोक्तमात्र-ग्रहणं नेष्यते—सञ्चस्करतुः॥ ७७२-७७४॥

---

७७३। अन्न। अतो नरस्य च व्यवधानेऽपि सुट् भवति। संस्काराद्यर्थेषु संपर्युपेभ्य इति सामान्यत उक्त्वा विषेषरूपेणाह॥

७७४। तत्र। भूषणे समवाये चार्थे संपरिभ्यामुत्तरे सुट् भवति। भूषणं संस्कारः, समवायः समूहः। यथेष्टमिति इष्टमनतिक्रम्येत्यर्थः। द्वित्वविकल्पे इति सरामस्य 'विष्णुजने विष्णुजनो वा हरौ विने'त्यनेन द्वित्वविकल्पः, करामस्य तु 'शौरितः सात्वतः' इत्यनेन द्वित्वविकल्पः। इत्यादीत्यादिपदेन संस्करोति, सँस्क्करोतीत्यादीनां ग्रहणम्। केचिदिति तन्मते सस्स्करोति, सस्क्करोति इत्यादिरूपाणि भवन्ति। ननु संस्क्रियत इत्यत्र 'अर्ती'त्यादिना गोविन्दः कथं न भवतीति चेत्तत्राह—अर्तीति। एवमिडभावश्चेति अन्यथा 'ऋराम-वृ-सत्सङ्ज्ञाद्यृदन्तेभ्य इड् वा सि-काम-पालयोरात्मपदे'इत्यनेन इट् स्यात्। समस्करोदिति अद्व्यवधानेऽत्र सुट्। सञ्चस्कारेति नरव्यवधानेऽत्र सुट्। ननु यदि लाक्षणिकेत्यादिन्यायोऽङ्गीकृतस्तर्हि सञ्चस्करतुरित्यादौ 'सत्सङ्ज्ञाद्यृदन्तस्ये'त्यादिना कथं गोविन्दो भवत्विति चेत्तत्राह—अत्रेति। नेष्यत इति यत्त उक्तं मातृवत् परिभाषेति नेष्टं विरुद्धचत इति॥

७७५। ससुट्कात् कृञ इडधोक्षजे।

सञ्चस्करिथ, सञ्चस्करिव। शास्त्रीयभाषार्थः 'संस्कृत'-शब्दः, कार्यपर्यायस्तच्छब्दः, संस्कारशब्दश्चाव्युत्पन्नः। षत्वं वक्ष्यते (६३६)—परिष्करोति ॥ ७७५ ॥

७७६। उपाद्भूषण-समवाय-प्रतियत्न-विकृतीकरण-वाक्याध्याहारेषु।

तत्र सतो गुणान्तराधानम्—'प्रतियत्नः'; गम्यमानार्थस्य वाक्यस्योपादानम्—'वाक्याध्याहारः'; उपस्करोति, उपस्कुरुते ॥ ७७६ ॥

इति तनादिः।

---

७७५। ससु। सुटा वर्तमानः ससुट्कः तादृशात् कृञ उत्तरे अधोक्षजे परे इड् भवति। थलि 'ऋरामात्तु नित्यं नेडि'त्यनेन अन्यत्र क्र्यादिनियमे नाप्राप्ते विधानम्। ससुट्कादिति किं—चकर्थ, चकृव, चकृम। शास्त्रीयेति शास्त्रीयभाषार्थोऽभिधेयो यस्येति विग्रहः। कार्यपर्याय इति। कार्यं जन्यं घटपटादिपर्यायो यस्येति विग्रहः। तच्छब्दः संस्कृतशब्दः। संस्कारशब्दश्चेति अत्र संस्कारशब्दो व्याकरणादिशास्त्रपरिज्ञानजन्यज्ञानविशेषवाची, नतु भूषणवाची, तस्य व्युत्पन्नत्वात्, अव्युत्पन्न इति भूषणार्थस्य समवायार्थस्याप्रतिपन्नत्वात्। समवाये यथा—अस्माकं संस्कृतं परिष्कृतं समूह इत्यर्थः ॥

७७६। उपात्। भूषणे समवाये प्रतियत्ने विकृतीकरणे वाक्याध्याहारे च अर्थे उपादुत्तरे सुट् भवति। सत इति विद्यमानस्य वस्तुन इत्यर्थः। गम्येति गम्यमानो नत्वभिधीयमानोऽर्थो यस्य तादृशस्य वाक्यस्य क्रियान्वयावच्छिन्नपदसमूहस्य उपादानं ग्रहणम्। भूषणे—गोपीदेहमुपस्करोति, समवाये—अस्माकमुपस्कृतं समूह इत्यर्थः। प्रतियत्ने—गङ्गाजलमुपस्करोति सुवासयतीत्यर्थः। विकृतीकरणे—उपस्कृतं भुङ्क्ते, वाक्याध्याहारे—उपस्कृतमधीते ॥

॥ * ॥ इति तनादिः ॥ * ॥

## अथ क्र्यादिः

**डुक्रीञ् द्रव्यविनिमये ; विनिमयः—परिवर्तनम् ; —**

७७७। क्र्यादेः शप् श्ना।

७७८। स्तन्भ-स्तुन्भ-स्कन्भ-स्कुन्भ-स्कुभ्यः श्नुश्च।

स्कुञ् आप्लवने ; अन्ये सौत्रा बोधने ; श् इत् ; क्रीणाति ; 'दामोदरं विना श्ना-नारायणारामयोरी' (७१४) — क्रीणीतः ; 'श्ना-नारायणयोरारामहरः' ( ६८७ )—क्रीणन्ति ; क्रीणीते ; क्रीयते। एवं प्रीञ् तर्पणे - प्रीणाति। मीञ हिंसायाम्—मीनाति। 'हिनु-मीनानिपाञ्च' (४१०) इति णत्वम् – प्रमीणाति। 'मीनाति' (७३६) इति आत्वम्—अमासीत्। ममौ, मिम्यतुः ॥ ७७७-७७८ ॥

**पूञ् पवने—**

७७९। प्वादीनां वामनः शिवे।

पुनाति, पुनीते ; पूयते। गोविन्दस्थान्यरामत्वान्नैत्वादि—पुपविथ। लूञ छेदने—लुनाति। धूञ कम्पने—धुनाति। ग्रह् उपादाने ; 'ग्रहि-ज्या'-(६३०) इति सङ्कर्षणः-–गृह्णाति, गृह्णीते ; गृह्यते ॥ ७७९ ॥

७८०। विष्णुजनात् श्न आनो हौ।

गृहाण ॥ ७८० ॥

---

७७७। क्र्यादेः। क्र्यादिगणपठिताद्धातोरुत्तरस्य शपः स्थाने श्ना भवति ॥

७७८। स्तन्भ। स्तन्भ-स्तुन्भ-स्कन्भ-स्कुन्भ-स्कुभ्य उत्तरे शपः-स्थाने श्ना श्नुश्च भवति।

७७९। प्वादी। सुगमम्। गोविन्देति गोविन्दः ओरामः स्थानी-यस्य तादृशोऽरामो यत्र तस्य भावस्तत्त्वं तस्मात् ॥

७८०। विष्णु। हौ परे विष्णुजनादुत्तरस्य श्नः स्थाने आनो भवति। विष्णुजनादिति किं– क्रीणीहि ॥

७८१। ग्रहेरिटस्त्रिविक्रमोऽनधोक्षजे।

अग्रहीष्टाम्। इण्वदिटो न त्रिविक्रमः—अग्राहिषाताम्। जग्राह, जग्रहिथ। एते उभयपदिनः ॥ ७८१ ॥

**शॄ हिंसायाम्—शृणाति ;—**

७८२। शॄ-दॄ इत्येतयोर्वामनो वाधोक्षजे।

नित्यौ गोविन्द-वृष्णीन्द्रौ तु न बाधते—शशार, शश्रतुः शशरतुः, शशरिथ। दॄ विदारणे—ददार, दद्रतुः इत्यादि। ज्या वयोहानौ ; 'ग्रहि-ज्या'-( ६३० ) इति सङ्कर्षणः—जिनाति। प्वादिर्ल्वादिश्च गणः। ज्ञा अवबोधने ; 'ज्ञा-जनोर्जा' (७४१)—जानाति। ग्रन्थ सन्दर्भे—ग्रथ्नाति। अश् भोजने—अश्नाति ॥ ७८२ ॥

**कुष् निष्कर्षे ; निष्कर्षो निष्काशनम् ; कुष्णाति ;—**

७८३। निरः कुषो वेट्।

निरकुक्षत्, निरकोषीत् ॥ ७८३ ॥

---

७८१। ग्रहेः। अधोक्षजं वर्जयित्वा अन्यस्मिन् परे ग्रहेरिटस्त्रिविक्रमो भवति ॥

७८२। शॄदॄ। व्यक्तार्थमेतत्। यद्यप्यधोक्षज इति सामान्यत उक्तं, तथापि गोविन्दवृष्णीन्द्राभ्यामन्यत्रायमित्याह—नित्याविति। बामनविधाने कृतेऽपि न कृतेऽपि तौ भवतः इति तयोर्नित्यत्वम्। न बाधत इति वामन इति शेषः। शशरतुरिति। 'सत्सङ्गाद्यृदन्तस्य ऋच्छे ॠरामान्तानाञ्चे'त्यादिना गोविन्दः। प्वादिर्ल्वादिश्च गण इति तस्माद् ये उक्तास्ते ज्ञाता एव उक्तेभ्योऽन्येषामपि प्वादित्वं ल्वादित्वञ्च गण एव ज्ञेयमिति। ग्रथ्नातीति 'अनिरामेतामि'त्यादिना नरामहरः। निष्काषणं निःसारणम् ॥

७८३। निरः। निर उत्तरात् कुष उत्तरे इट् वा भवति। अशकादित्वात् नित्यमिटि प्राप्ते विभाषा। निरकुक्षदिति इडभावपक्षे सक् ॥

क्षुभ सञ्चलने—

७८४। क्षुभ्नादिषु न णत्वम्।

क्षुभ्नाति, क्षुभ्नीतः इत्यादि। उक्ते वक्ष्यमाणे च निषेधोऽयम्। तृपु तर्पणे—तृप्नोति, तृप्नुतः इत्यादि ॥ ७८४ ॥

७८५। नरान्नृतिश्च।

नरीनृत्यते, नरीनर्ति इत्यादि। परिनदनम्, दुर्नद्धः, दुर्नद्धिः, दौर्भागिनेयः, आचार्यानी, आचार्यभोगिनः। संज्ञायाम्—हरिनन्दी, हरिनगरम्, स्वर्भानुः, सूत्रनटः, दुर्नामा, नरबाहनः, त्रिनयनम्, नृनमनम्, पुनर्नवा ;—आकृतिगणोऽयम् ॥ ७८५ ॥

---

७८४। क्षुभ्ना। क्षुभ्नादिषु णत्वं न भवति। उक्ते इति। उक्ते वक्ष्यमाणे च णत्वे उक्तस्य वक्ष्यमाणस्य चेत्यर्थः ॥

७८५। नरा। नरादुत्तरो नृतिश्च क्षुभ्नादिषु ज्ञेयः। क्षुभ्नातीत्यादौ तृप्नोतीत्यादौ नरीनृत्यत इत्यादौ दौर्भागिनेय इत्यत्र आचार्यानीत्यत्र आचार्यभोगीन इत्यत्र च 'र-ष-ऋद्वयेभ्य' इत्यादिना प्राप्ते निषेधः। परिनदनमित्यत्र 'उपेन्द्रान्नोपदेशस्य णत्वमि'त्यनेन प्राप्ते निषेधः। शेषेषु वक्ष्यमाणलक्षणेन प्राप्ते निषेधः। नरीनृत्यत इति यङि। नरीनर्तीति यङ्लुकि। परिनदनमिति परिपूर्वात् णदधातोरनप्रत्ययः। दुर्नद्ध इति दुर्पूर्वात् नहधातोः क्त-प्रत्ययः। दुर्नद्धिरिति क्ति-प्रत्ययः। दौर्भागिनेय इति दुर्भगा-शब्दात् अपत्यार्थे 'कल्याण्यादेर्माधवेनेयः' इत्यनेन माधवेनेयः, 'टणिन् माधवः'। आचार्यानीति आचार्यस्य भार्या इत्यर्थे ईप्प्रत्ययेन निपातः। आचार्यभोगिन दति आचार्यभोगशब्दात् 'तस्मै हितमि'त्यर्थे 'विश्वजनात्मभोगोत्तरपदेभ्यः खरामः' इत्यनेन खः, ख ईणः भोगः शरीरम्। हरिनन्दीत्यादयः संज्ञाशब्दाः। तत्र हरिनन्दी कश्चित्। हरिनगरमपि तथा। स्वर्भानुः राहुः। सूत्रनटः कश्चित्। दुर्नामेति 'दुर्नामा दीर्घकोषिके'त्यमरः। नरबाहनः कुवेरः। नृनमनं तत् संज्ञं किञ्चित्। पुनर्नवेति 'पुनर्नवा तु शोथघ्नी'त्यमरः। आकृतिगणोऽयमिति। अतो लक्षणप्राप्तं

खव् भूति-प्राद्दुर्भावे—

७८६ । छस्य शो, वस्य ऊठ् हरिवेणौ, क्वौ, कंसारि-वैष्णवे च ।

७८७ । ज्वर-त्वर-स्रिव्वव-मवान्तु स-सर्वेश्वरस्य ।

खौनाति ; नामप्रकरण-वृष्णीन्द्रत्वात् कंसारौ न निषेधः । 'वैष्णवात्' इत्यकरणात् 'आन' एव बलवान् । कालापाश्च श्नोऽपवाद-मेव तं कुर्वन्ति, तस्माद्धौ—खवान । वृङ संभक्तौ ; आरामहरः ;—

"सहसा विदधीत न क्रिया,-मविवेकः परमापदां पदम् ।
वृणते हि विमृष्यकारिणं, गुणलुब्धाः स्वयमेव सम्पदः ॥"

इति किराते (२।३०) ; सम्यग् भजन्तीत्यर्थः ॥ ७८६-७८७ ॥

इति क्र्यादिः ।

---

णत्वं शिष्टप्रयोगे यत्र न दृश्यते, तत्रानेनैव निषेधः कर्तव्यः, अतएव श्रीघनः, चित्रभानुरित्यादावपि न णत्वम् । भूतिप्रादुर्भावे इति भूतिरैश्वर्यम् ॥

७८६ । छस्य । हरिवेणौ क्वौ कंसारि वैष्णवे च परे छस्य स्थाने शो भवति, वस्य स्थाने ऊठ् भवति ॥

७८७ । ज्वर । ज्वर रोगे, ञित्वरा सम्भ्रमे, स्रिवु गति-शोषणयोः, अव रक्षणे, मव बन्धने, इत्येतेषान्तु सर्वेश्वरसहितस्य वस्य स्थाने ऊठ् भवति । खौनातीति 'अद्वयादूठो वृष्णीन्द्रः' इत्यनेन वृष्णीन्द्रः । 'ईशस्ये'त्यादिना वृष्णीन्द्रनिशेधः कथं न भवतीति चेत्तत्राह—नामेति । ननु खवानेत्यत्र वस्य ऊठ् कथं न भवतीति चेत्तत्राह—वैष्णवादितीति । विष्णु-जनादित्यत्र वैष्णवादित्यकरणात् खवानेत्यादौ यदि आनविधानमनभीष्टं स्यात्, तदा वैष्णवादित्येव विदध्यात् । आन एव वलवानिति तस्मादूठ्-विधानात् पूर्वमेव आनो भवति, पश्चात्तु हरिवेणौ परत्वेव नास्ति । काला-पाश्चेति । श्नोबाधकम् आनमेव कुर्वन्ति । वृणते हीति । सहसा विदधीत न क्रियामविवेकः परमापदां पदमिति पूर्वार्धम् ॥

॥ * ॥ इति क्र्यादिः ॥

# अथ चुरादिः

**चुर स्तेये—**

७८८। चुरादेर्णिः।

'णिच्' पा (३।१।२५)। ण इत्; 'लघूद्धवस्य गोविन्दः' (४४५) सनाद्यन्तत्वाद् धातुत्वम्—चोरयति॥ ७८८॥

७८९। णेरुभयपदम्।

इदं चुरादौ प्रवर्तते, धातुपाठे चुरादावपि पृथक्परपद्यादिगणनात्; 'प्रवर्तते' इत्यन्ते, णेरनित्यत्वेन तद्गणन-साफल्यात्; चोरयते, चोरयति, चोरति; चोर्यते। द्विर्वचने कार्ये णौ कृतं स्थानिवत्—अचूचुरत्। चोरयामास। चोर्यात्। चोरयिता॥ ७८९॥

**कॄत संशब्दने—**

७९०। उद्धव-ॠरामस्येर्।

कीर्तयति॥ ७९०॥

---

७८८। चुरा। चुरादिगणपठिताद्धातोरुत्तरे णिर्भवति। धातुत्वमिति धातुत्वात् 'शप् कृष्णधातुके' इति शप्॥

७८९। णेरु। ण्यन्ताद्धातोरुत्तरे उभयपदं भवति। इदमिति। इदं लक्षणं चुरादौ न प्रवर्तते, तस्मात् प्रेरणाद्यर्थविहिते णौ प्रवर्तते। अप्रवृत्तौ हेतुमाह—धातुपाठ इति, परपद्यादीत्यादिपदेन आत्मपद्युभयपदिनोर्ग्रहणम्। उभयपदस्यावश्यकत्वे परपद्यादिगणनस्य वैयर्थ्यं स्यात्। अन्यसम्मतायां प्रवृत्तावपि हेतुमाह—णेरनित्यत्वेनेति। णेर्नित्यता नास्ति, अतः परपद्यादिगणस्य साफल्यम्। द्विर्वचन इति कार्ये कर्तव्ये णौ कृतं स्थानिवदिति। चु इत्यस्य द्विर्वचनम्। अचूचुरदिति ण्यन्तत्वादङ्, 'अशास्वृदित उद्धवस्य वामनः' इत्यनेन वामनः, 'तत्परस्य नर-लघोस्त्रिविक्रमो' 'धातो र-व-प्रागिदुतोस्त्रिविक्रमो र-वतो विष्णुजने' इत्यनेन त्रिविक्रमः। चोरयामासेति 'अनेकसर्वेश्वरत्वादाम्'॥

७९०। उद्धव। उद्धव-ॠरामस्य स्थाने इर् भवति॥

७९१। उद्धव-संज्ञस्य ऋद्वयस्य ऋर्वा अङ्‌परे णौ।

अचीकृतत्, अचिकीर्तत्।

अथ निर्विष्णुचापा अदन्ताः—कथ वाक्यप्रबन्धे ; 'अरामहरः' (५१६), 'अन्तहरे न गोविन्द-वृष्णीन्द्रौ' (५५६), अरामहरस्य स्थानिवत्त्वम्—पा (१।१।५७) ; यथोक्तम्,—

**अग्लोपित्वं स्थानिवत्त्वं चादन्तत्वप्रयोजनम्।**
**यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम्॥**

अग्लोपित्वं दशावतारादर्शनम्, तेन सन्निमित्तकार्याद्यभावः ; स्थानिवत्त्वेनोद्धवस्य वृष्णीन्द्र-गोविन्दाभावः ; तथार्थादीनां साराम-

---

७९१। उद्धव। अङ परो यस्मात् तादृशे णौ परे उद्धवसंज्ञस्य ऋद्वयस्य स्थाने ऋर्वा भवति। ऋरामस्य ऋरामविधानं गोविन्दवृष्णीन्द्र-बाधनार्थम्। अचीकृतदिति 'नर-ऋरामस्यारामः', 'लघुयुक्त-धात्वक्षर-परस्य नरस्य सन्निमित्तकार्यम्', 'नरारामस्येरामः सनि', तत्परस्य नर-लघोस्त्रिविक्रमः'। अचिकीर्तदित्यत्र प्रथमतः 'अङ्परे णौ' सति 'ऋराम-स्येर्' कर्तव्यः, ततः स्थानिवत्त्वं मत्वा द्विर्वचनं, ततो 'नरस्य वामनः', 'नरा-रामस्येरामः', 'यावत् सम्भवस्तावद्विधि'रित्यनेनेरामं कृत्वा पश्चाद् 'धातो र-व-प्रागिदुतोस्त्रिविक्रमो रवतो विष्णुजने' इत्यनेन त्रिविक्रमः, तथापीदं पदं कष्टेन सिद्धयति, त्रिविक्रमात् पूर्वं लघूयुक्तधात्वक्षरपरस्य नरलघुत्रिविक्रमसम्भवादतः द्विर्वचने कार्ये णौ कृतं स्थानिवदिति पारि-भाषिकमत्र नेष्टं, हि यतो विरुध्यते यदा स्थानिवत्त्वं न मन्यते, तदा कीर्तेः कीरामस्य द्वित्वं कृत्वा नरस्य वामनकरणेन न कश्चिद्दोष इत्यादिकमापा-ततः णेः परनिमित्तत्वमनेन शिष्यबुद्धिवैचित्र्यार्थयुक्तं वास्तवत्वेन 'उद्धव-ऋरामस्येर्' इत्यत्र परनिमित्ततैव नास्ति, तस्माद् द्विर्वचने कार्ये णौ कृतं स्थानिवदिति सम्भावनापि न स्यादिति की द्विर्वचनं, वामनश्च। निर्विष्णु-चापा इति कथादिवर्जनादिति शेषः। अरामहर इति 'अरामहरो राम-धातुके' इत्यनेनेति शेषः। अरामेति अरामहरस्य स्थानिवत्त्वं भवतीति तु पाणिनीयाः, यथोक्तमिति पाणिनीयैरिति शेषः। अदन्तत्वस्य प्रयोजन-

स्यैव थरामादेर्द्विर्वचनमित्यभिप्रायः; कथयति। अचकथत्। गण संख्याने—गणयति। अजगणत्; 'अजीगणत्' इति चान्द्रमतम्। स्पृह ईप्सायाम्—स्पृहयति। अपस्पृहत्॥ ७९१॥

अर्थ याच्ञायाम्—अर्थयते। अल्लोपविकल्पनात् अन्त्यारामस्य च वृष्णीन्द्रो, णाविणि च इति पाणिनिमतम् (७।२।११५)।

७९२। अर्ति-ह्री-व्ली-री-क्नुयी-क्ष्माय्यारामेभ्यः पुक् य-लोपो गोविन्दश्च णौ, दरिद्रां विना।

अर्थापयते। णाविणि च इति किम्? कृति तु गोपायकः। अङि 'सर्वेश्वरादित्वे तु' (४३६) इत्यादि, 'अशास्वृदित' (५९२) इति, लघुपरत्वात् सन्-निमित्तकार्यम् (५९३)—आर्तीथपत; 'आर्तथपत' इति काशिकादिमतम् (पा ७।३।३६)। 'अरामहरस्य द्विरुक्तौ न स्थानिवत्त्वम्' इति तु वोपदेवः, ततः सणेर्द्विर्वचने 'आर्तिथत' इति।

---

मिति विग्रहः। एते अग्लोपित्व-स्थानिवत्त्वे न स्तत्राल्लोपविकल्पन-मिति। आर्तिथदित्यत्र आञ्चिकदित्यत्र च अल्लोपस्य स्थानिवत्त्वाभावेऽपि उद्धवाभावान्न वृष्णीन्द्र इति न स्थानिवत्त्वस्य प्रयोजनम्। एवं अङ पर-णौ परे लघुयुक्तधात्वक्षरपरत्वाभावान्न सन्निमित्ततादिकार्यसम्भवोऽत-स्तन्निषेधरूपाग्लोपित्वमपि न प्रयोजनकं, तस्मादर्थादीनामग्लोपविकल्पन-मिति। कार्यादीत्यादिपदेन त्रिविक्रमादेर्ग्रहणम्। अचकथदिति दशाव-तारादर्शनात् सन्निमित्तकार्याद्यभावः। अपस्पृहदिति 'शौरिशिरस्कस्तु सात्वतः' इति पृरामस्य स्थितिः। अल्लोपेति अल्लोपविकल्पनात् पक्षेऽराम-स्थितिः, ततश्च अन्त्यारामस्यचेति पाणिनीयमतमिति इदमस्माकमपि मतमिति ज्ञेयम्॥

७९२। अर्ति। णौ परे अर्तेः ह्री लज्जायां, व्ली वरणे इत्येताभ्यां रीधातोः क्नुयी शब्दे, क्ष्मायी विधूनने इत्येताभ्यां दरिद्रां विना आरा-मान्ताच्च उत्तरे पुक् भवति, य-लोपो गोविन्दश्च भवति, उकावितौ। अर्तीति ऋ गतौ प्रापणे च भ्वादिः, ऋ गतौ ह्वादिर्द्वयोरेव ग्रहणम्। रीति री गतिरेषणयोः क्र्यादिः, रीङ श्रवणे दिवादिर्द्वयोरेव ग्रहणम्। रेषणं

अङ्क लक्षणे—अङ्कयति। 'नरामजावनुस्वार'-इत्यादेः 'अन्क' इत्येव धातोः स्वरूपम् ; ततः कस्य द्विर्वचने—आञ्चीकपत् ; पक्षे—आञ्चकत्, आञ्चिकत्। एषां सर्वेषामदन्तानां तत्र कविकल्पद्रुमे अनुसन्धेयम् ॥ ७९२ ॥

**युज संयमने**—

७९३। युजादेर्णिर्वा।

योजति, योजयति। भू प्राप्तौ—भावयते, भवते ; 'भवति' इत्यप्येके ॥ ७९३ ॥

**इति चुरादिः।**

## अथ णिप्रत्ययान्ताः

७९४। णिः प्रेरणादौ।

प्रेरणादिर्हेतुकर्तृव्यापारः। कुर्वन्तं प्रेरणादिना प्रवर्तयति ; णेरुभयपदम्' (७८९) ; डुकृञ करणे—कारयति, कारयते ; कार्यते ;

---

वृक्ध्वनिः। गोपायक इति वृष्णीन्द्राभावे अरामहरः। अङीति च्छेदः। सर्वेश्वरादित्वेत्वित्यादीति साराम-थरामस्य द्विर्वचनं, 'अशास्वृदित' इतीति वामन इति शेषः। लघुपरत्वादिति सन्निमित्तकार्यादिति शेषः। अङ्कापयतीति अल्लोपविकल्पनात् अन्त्यारामस्य वृष्णीन्द्रे कृते पुक्। कस्य साराम-करामस्य। आञ्चीकपदिति पूर्ववत्। पक्षे इति काशिकादिमते इत्यर्थः। आञ्चिकदिति वोपदेवमते ॥

७९३। युजा। युजादेरुत्तरे णिर्वा भवति। युजादिर्गण एव ज्ञेयः ॥

॥ * ॥ इति चुरादिः ॥ * ॥

७९४। णिः। प्रेरणादावर्थे धातोरुत्तरे णिर्भवति। प्रेरणादीरिति हेतुकर्तुः प्रयोजकस्य व्यापारश्चेष्टाविशेषः। प्रेरणादाविति भृत्यादेः

अचीकरत्। कारयामास। जागर्तेरिण्णलोर्गोविन्दनिषेधान्नात्रोद्धवस्य वृष्णीन्द्रः—जागरयति। लघुयुक्तधात्वक्षरपरत्वाभान्न सन्निमित्तता—अजजागरत्; 'अजीजागरत्' इति चान्द्रमतम्—'जागृगणोर्वा' इति तल्लक्षणम्। इह तु स्यात्—अचीचकासत्, अचिक्षणत्। 'उपेन्द्रादनः' (६८०) इत्यादि—प्राणिनत्॥ ७९४॥

**चोरयन्तं प्रेरयति स्म—**

७९५। णेर्णौ हरे न दशावतारादर्शनत्वं मन्तव्यम्।

तत उद्धवस्य वामनादि—अचूचुरत्। 'रभिलभोर्नुम्' (६०६)—रम्भयति। णिलोपस्यासिद्धत्वान्न नलोपः—अररम्भत्। हिनोतेरजीहयत्॥ ७९५॥

---

क्वचिदर्थे नियोजनं, प्रेरणं यथा—कारयति मालां वैष्णवं वैष्णवाचार्यः। आदिशब्देन अध्येषणादेर्ग्रहणम्। आराध्यस्य गुर्वादेः सत्कारपूर्वकनियोजनमध्येषणं, यथा—भोजयति गुरुं वैष्णवः। अचीकरदिति पूर्ववत्। ननु जागरयति इत्यत्र गोविन्दे कृते उद्धवारामस्येत्यादिना वृष्णीन्द्रः कथं न भवतीति चेत्तत्राह—जागर्तेरिति, इण्णलोर्गोविन्दनिषेधात् तयोरेव वृष्णीन्द्रः नान्यत्र, अन्यथा अजागारीत्यादावपि गोविन्दानन्तरं वृष्णीन्द्रे कृते तयोर्निषेधस्य वैयर्थ्यं स्यात्। लघुयुक्तेति नरस्येति शेषः। सन्निमित्तं यत्र तस्य भावस्तत्ता। अत्र नरे कार्यविशेषं प्रति सनो निमित्तता न भवतीत्यर्थः। अथवा सनो निमित्ततेति विग्रहः। न सन्निमित्तकार्यमिति वा पाठः। चान्द्रमतमिति क्रमदीश्वरादिभिर्धृतमिति शेषः। तल्लक्षणं क्रमदीश्वरादि लक्षणम्। अचीचकासदिति, धातोर्गुर्वक्षरयुक्तत्वेऽपि नरस्य लघुयुक्तधात्वक्षरपरत्वमस्त्येव। अचिक्षणदिति, नरस्य गुरुत्वेऽपि लघुयुक्तधात्वक्षरपरत्वमस्त्येव, अतः सन्निमित्तकार्यं लघुत्वाभावात् त्रिविक्रमाभावः। प्राणिणदिति अत्र सनेर्द्विर्वचनम्। प्रेरयति स्मेति स्मशब्दो भूतकालवचनः॥

७९५। णेर्णौ। णौ परे णेर्हरे सति दशावतारस्य अदर्शनत्वं न मन्तव्यम्। ननु अररम्भदित्यत्र 'अनिरामेतमि'त्यनेत नलोपः कस्मान्न-

७९६। घटादीनामुद्धवस्य वामनो णौ, णि-पूर्वयोर्णम्बिणोस्तु त्रिविक्रमो वा।

णमुः कृत्। घटयति। अजीघटत्। इणि—अघटि, अघाटि ॥७९६॥

ञित्वरा सम्भ्रमे—त्वरयति ;—

७९७। त्वर-स्पश-स्मृ-म्रद-प्रथ-दॄ-स्तॄ-णां नरस्य अरामोऽङ्परे णौ।

७९८। वेष्टि-चेष्टयोर्वा।

त्वरादीनां सन्निमित्तापवादः—अतत्वरत्। अत्वरि, अत्वारि। द्वितीये णावपि तद्वत्। घटादिपाठादनुद्धवस्यापि त्रिविक्रमः—अक्रान्दि, अक्रन्दि। चुरादि-णेः सहजत्वादिण्वदिट् (४२७)--अशामिषाताम्, अशमिषाताम् इति त्रिविक्रम-विकल्पनात् ; अशमयिषाता-

---

स्यादिति चेत्तत्राह—असिद्धत्वादिति। 'क्वचिदन्तरङ्गकार्ये क्रियमाणे तदनिमित्तं बहिरङ्गमसिद्धं स्यादि'ति न्यायेनासिद्धत्वम्। अत्रान्तरङ्गकार्यं नलोपो बहिरङ्गं निलोपः। अजीहयदिति नत्वङीति निषेधात्। न र्हेघिः ॥

७९६। घटा। णौ परे घटादीनामुद्धवस्य स्थाने वामनो भवति, णिपूर्वयोर्णम्बिणोस्तु परयोः उद्धवस्य त्रिविक्रमो वा भवति। अघटीति अरामोऽत्र उद्धवः। अघाटीति वामनोऽत्र उद्धवः ॥

७९७। त्वर। अङ परे णौ परे ञित्वरा सम्भ्रमे, स्पश धारणस्पर्शनयोः, स्मृ चिन्तायां, म्रद मर्दने, प्रथ प्रख्याने, दॄ विदारणे, स्तॄञ आच्छादने इत्येतेषां नरस्यान्तः अरामो भवति। स्तॄ णामिति बाहुल्यान्नुट् ॥

७९८। वेष्टि। वेष्ट वेष्टने, चेष्ट चेष्टायाम्। इत्येतयो र्नरस्यान्तः अरामो वा भवति। ननु त्वरादीनां नरस्यान्तस्य अरामस्य अरामविधाने किं प्रयोजनमिति चेत्तत्राह—त्वरादीनामिति, सन्निमित्तापवादः सन्निमित्तकार्यापवादः, अन्यथा सन्निमित्तकार्यं स्यात्। अत्वा-

मिति त्विट्पक्षे। स्पश – अपस्पशत् – एते घटादौ द्रष्टव्याः। 'अशास्वृदित' (५९२) इति निषेधात् अशशासत्। आङः शासु इच्छायामित्यस्य तु न निषेधः—आशीशसत्; अरराधत्। एजृ ऋरामेत्करणान्न वामनः, ततो मायोगे—मैजिजत्। एधतेः प्रथमं वामनस्ततो द्विर्वचनम्—मेदिधत्; तदयोगे तु—ऐजिजत्, ऐदिधत्। न-व-द-र-सत्सङ्गे —औन्दिदत्, औब्जिजत्। अड्ड् अभियोगे भौवादिकः—आड्डिडत्; एवम् आर्च्चिचत्। श्विधातोर्णिः 'भाविनि भूतवदुपचारः', 'श्वेः सङ्कर्षणो वा' (६४०) इत्यादि, केवलणौ कृतस्य स्थानिवत्त्वात् शोर्द्विर्वचनम्, अङ्परे णौ वामनस्त्रिविक्रमश्च (५९६)—अशूशवत्; पक्षे – अशिश्वयत्। स्मृ आध्याने; आध्यानम्—सोत्कण्ठस्मरणम्; अससमरत्। म्रद—अमम्रदत्। प्रथ—अपप्रथत् दॄ—अददरत्। स्मृ-प्रभृतयश्च घटादयः। स्तॄञ्—अतस्तरत्। 'वेष्टिचेष्टयोर्वा'—अववेष्टत्, अविवेष्टत्; अचचेष्टत्, अचिचेष्टत्॥ ७९७-७९८॥

---

रीति त्रिविक्रमपक्षे। उद्धवस्य त्रिविक्रमो वा भवतीत्युक्तं, तर्हि कथं अक्रान्दीत्यत्र त्रिविक्रमो भवतीति चेत् तत्राह—घटादीति। क्रन्दधातोररामस्योद्धवत्वाभावाद्वृष्णीन्द्राभावः, अतो वामनविधानस्यं प्राप्तिसम्भावनैव नास्ति, त्रिविक्रमाभावश्चेत् तर्हि घटादिषु पाठो व्यर्थः स्यादिति। सहजत्वादिति, सहजत्वं सहजसर्वेश्वरान्तत्वं, अत इण्वदिट्। अशमयिषातामिति, अनिडादावित्युक्तत्वात् न णेर्हरः। एत इति, 'त्वर-क्रन्द-शम-स्पश इत्यर्थः। निषेधादिति, न वामन इति शेषः। अरराधदिति, राधृ विलोडने भ्वादि आत्मपदी, ऋरामत्वाद्वामनाभावः। मैजिजदिति सनेर्द्विर्वचनम्। तदयोगे—माशब्दायोगे। न-व-द-र-सत्सङ्गे इति, नवदर संयोगे औन्दिददित्यादिकमुदाहरणचतुष्टयम्। औन्दिददिति, उन्दी क्लेदने रुधादिः, सत्सङ्गादि नरामं वर्जयित्वा अन्यभागस्य दीत्यस्य द्विर्वचनं, एवमुत्तरेष्वपि। औब्जिजदिति उब्ज आर्जवे तुदादिः। आर्चिचदिति—अर्च पूजायां भौवादिकः। भाविनीति भाविनि अङि सङ्कर्षणानन्तरं वृष्णीन्द्रः, तत 'औ आव्', ततः स्थानिवत्त्वम्। अशिश्वयदिति, स्थानिवत्त्वात् श्वेर्द्विर्व-

७६९। भाष-दीप-जीव-मील-पीड़-रण-भण-श्रण-ह्वे-लप-लुप-लुठादीनामुद्धवस्य वामनो वाङ्‌परे णौ।

अवभाषत् अवीभषत्। भ्राजभ्रासोर्ऋरामेत्त्वात् केवलत्वाच्च अवभ्राजत्, अविभ्रजत्। अत्रालघुपरत्वान्न सन्निमित्तकार्यम्। आटिटदित्यत्र णौ परे लघुयुक्तपरत्वाभावान्न त्रिविक्रमः। एवं मैंजिजत् इत्यादि च। 'मा भवानटिटत्' इत्यत्रापि द्विर्वचनमुद्धववामनात् पश्चादेव स्यात्। ओणृधातोर्ऋदित्करणात्तत्र मा भवानोणिणत्। तदेवम् आटिटदित्यादिसिद्धये 'नरलघोः' इत्यस्य 'विष्णुजनात्' इति विशेषणं यत्तस्यां (पा ७।४।१४) कल्पितं, तद्व्यर्थमेव स्यात्; और्णूनवत्। आर्तीथपत इत्यादौ त्रिविक्रमः (५६५) स्यादेव। 'उद्धवसंज्ञस्य' (७६१) इत्यादि—अवीवृतत्; अमीमृजत्। पक्षे गोविन्दवृष्णीन्द्रौ (३६५; ६७५)—अववर्तत, अममार्जत् ॥ ७६९ ॥

---

चनं, वामनः, नरस्य लघुत्वाभावात्त्रिविक्रमाभावः। सोत्कण्ठेति सोत्कण्ठञ्च तत्स्मरणञ्चेति विग्रहः। असस्मरदित्यादौ 'त्वर-स्पशे'त्यादिना नरस्यान्तस्यारामः। स्मृ प्रभृतय इति, चत्वार इत्यर्थः॥

७६९। भाष। अङ् परे णौ परे भाष व्यक्तायां वाचि, दीपि दीप्तौ, जीव प्राणधारणे, मील निमेषणे, पीड़ अवगाहने, रण शब्दे, भण शब्दे, श्रण दाने, ह्वेञ स्पर्द्धायां, लप व्यक्तायां वाचि, लुप छेदने, लुठ संश्लेषणे इत्यादीनामुद्धवस्य वामनो वा भवति। ह्वे इत्यत्र हेठेति क्रमदीश्वरादयः। हेठ विधायां लुठादीनामित्यादिशब्देन कणादेर्ग्रहणम्। कणादीनां वा ह्रस्वो वक्तव्य इति भाष्यम्। केवलत्वाच्चेति अनुवन्धरहितत्वं केवलत्वम्। अविभ्रजदिति केवलत्वेन। अत्रेति अवभ्राजदित्यत्र अलघुपरत्वादिति लघुयुक्तधात्वक्षरपरत्वाभावादित्यर्थः। लघुयुक्तपरत्वाभावादिति केवलटरामस्य परत्वात्। द्विर्वचनमिति उद्धववामनानन्तरमेव द्विर्वचनं भवति। ओणिणदिति, ऋरामेत्त्वात् नात्र उद्धवस्य वामनः। तदेवमिति लघुयुक्तधात्वक्षरपरस्य विष्णुजनादिनरलघोस्त्रिविक्रमो भवतीति प्रक्रियामतं, विष्णुजनादेर्धातो र्नरलघोरित्यर्थः। व्यर्थमेवेति, विशेषणं विनैव तत्सिद्धेः।

**ञिष्वप् शये--**

८०० । स्वापेः सङ्कर्षणोऽङि ।

ततो द्विर्वचनम्—असूषुपत् ॥ ८०० ॥

८०१ । शा-छा-सा-ह्वा-व्या-वे-पाभ्यो युक् णौ ।

'पा' इति पा पै च गृह्येते, रक्षणार्थस्तु न, 'सन्देहे तु न लुग्विकरणस्य ग्रहणम्' इति न्यायात्; शाययति इत्यादि । 'ह्वो नरनारायणयोः' (६३५) इति सङ्कर्षण एव, न तु युक्, अन्तरङ्गत्वात्—अजूहवत् ॥ ८०१ ॥

८०२ । सनरस्य पिवतेरङ् परे णौ पीप्यः, तिष्ठतेस्तिष्ठिपः, जिघ्रतेश्च जिघ्रिपो वा ।

अपीप्यत् इत्यादि । ऋ गतिप्रापणयोः, ऋ सृ गतौ, 'अर्ति-ह्री'

---

नरलघोरिति, विष्णुजनादीति च स्वसंज्ञानुसारेणोक्तम् । त्रिविक्रमः स्यादेवेति, लघुयुक्तधात्वक्षरपरत्वात् धातोर्विष्णुजनादित्वाभावेऽपि त्रिविक्रमो भवत्येव । उद्धबसंज्ञस्येत्यादीति, 'उद्धवसंज्ञस्य ऋद्वयस्य ऋर्वा अङ परे णावि'ति लक्षणम् । अवीवृतदिति, 'ऋरामस्य ऋः' अन्यथा गोविन्दः स्यात् । अमीमृजदित्यत्र वृष्णीन्द्रः स्यात् । ञिष्वप् शय इति, यल्लिखितं तन्न बहुप्रयोजनकमिति ज्ञेयं, पूर्वमेव लिखितत्वात् ॥

८०० । स्वापेः । अङि परे स्वापेः सङ्कर्षणो भवति, असूषुपदिति । ईश्वरहरिमित्रेत्यादिना विरिञ्चिसस्य षत्वम् ॥

८०१ । शा । णौ परे शो तनुकरणे, छो छेदने, षोऽन्तकर्मणि, ह्वेञ स्पर्द्धायां, व्येञ सम्वरणे, वेञ तन्तुसन्ताने इत्येतेभ्यः पाधातोश्च उत्तरे युक् भवति । पा पैचेति, पा पाने, पै शोषणे । रक्षणार्थस्तु नेति, पा रक्षण इति न गृह्यते; अग्रहणे हेतुमाह सन्देहेत्विति । लुग्विकरणस्येति अदादेरित्यर्थः । युगभावे हेतुमाह अन्तरङ्गत्वादिति । प्रकृत्याश्रितत्वादन्तरङ्गत्वम् । भाष दीप जीव मीलेत्यनेन उद्धवस्य वामनत्वविकल्पात् । वामनाभावपक्षे अजूहवदिति ॥

(७९२) इति—अर्पयति, ह्रेपयति। री रीङ—रेपयति। 'यलोपः' (७९२)—क्नोपयति, स्थापयति ॥ ८०२ ॥

८०३। पातेः पाल् णौः वातेः कम्पनार्थे वाज्, धूञो धून्, प्रीणातेः प्रीण्।

पालयति इत्यादि ॥ ८०३ ॥

८०४। लियो लीन्, लातेर्लाल् वा णौ स्नेहद्रावने।

लिय इति लीलीङोर्ग्रहणम्; घृतं विलीनयति। 'लीयति-लीनात्योर्वा' (७३९) इति आत्वेऽपि विलीनयति। लीनादेशा-दन्यत्र—विलापयति, विलाययति। लातेस्तु—विलालयति, विलापयति घृतम्। स्नेहेति किम्? 'लियो'—विलापयति, विलाययति; लातेस्तु—विलापयति लोहम् ॥ ८०४ ॥

---

८०२। सन। अङ परे णौ परे सनरस्य पिवतेः स्थाने पीप्यो भवति। सनरस्य तिष्ठतेः स्थाने तिष्ठिपो भवति, सनरस्य जिघ्रतेस्तु स्थाने जिघ्रिपो वा भवति। 'अर्तिदह्लीती'ति पुक् गोविन्द-श्चेति शेषः ॥

८०३। पातेः। णौ परे पा रक्षण इत्यस्य स्थाने पाल् भवति। कम्पने अर्थे वा गतिबन्धनयोः इत्यस्य स्थाने वाज् भवति। धूञ कम्पने इत्यस्य स्थाने धून् भवति। प्रीञ तर्पणे इत्यस्य स्थाने प्रीण् भवति। पातेरिति निर्देशः, पा पाने इत्यस्य निरासार्थः। वातेरिति निर्देश ओ वै शोषण इत्यस्य भ्वादेर्निरासार्थः। धातूनामनेकार्थत्वाद्वातेः कम्पनार्थतेति ज्ञेयम्। धूञ् इति सानुबन्धनिर्देशः धू विधुनने इत्यस्य तौदादिकस्य निरासार्थः। प्रीणातेरिति निर्देशः प्रीङ प्रीतावित्यस्य दिवादेर्निरासार्थः। पालयतीति, पाल रक्षणे इत्यनेन चौरादिकेनापि सिद्धयति, किन्तु पातेर-निष्टरूपं स्यादिति पालविधानं कृतम् ॥

८०४। लियो। णौ परे स्नेहस्य घृतादेर्द्रावणे अर्थे लियः स्थाने लीन् वा भवति, ला दाने इत्यस्य स्थाने लाल् वा भवति। ली लीङो-रिति ली श्लेषणे क्र्यादिः, लिङ श्लेषणे दिवादिस्तयोः। आत्वेऽपि विलीनयतीति। आत्पक्षे, विलीनयति, विलापयतीति रूपद्वयमिति

८०५। लियोरारामो णौ पूजाभिभवप्रतारनेषु, आत्मपदञ्च।

वैष्णवत्वेन लापयते, आत्मानं पूजितं करोति इत्यर्थः। कृष्णः कंसमुल्लापयते। वालकृष्णमुल्लापयते गोपी। काशिका-भाषावृत्त्यादि-सम्मते णावित्यत्रापि शितीति तु प्रक्रिया चिन्त्या ॥ ८०५ ॥

८०६। भियो भीष्-भापौ णौ प्रयोजकाद्भयं चेदात्म-पदञ्च, स्मयतेः स्मापः सभयविस्मयश्चेत्।

भीषयते भापयते कंसं हरिः, विस्मापयते च। 'प्रयोजकात्' इति किम्? गजदन्तेन भाययति, विस्माययति च तम् ॥ ८०६ ॥

**स्फायी, ओप्यायी वृद्धौ—**

---

भावः। विलाययतीति, उभाभ्यां त्यक्ते पक्षे। आत्वेऽपि विलीनयतीति किमर्थमुक्तमिति न निश्चितम्। घृतमिति, पूर्वत्र च योज्यम्। स्नेहेति किमिति, विलापयतीति ; आत्-पक्षे लोहमिति घृतमितिवत् ॥

८०५। लियो। णौ परे पूजायाम्, अभिभवे, प्रतारणे चार्थे ली ; लीङोरन्त-आरामो भवति, आत्मपदञ्च। कंसमुल्लापयते इति अभि-भवतीत्यर्थः। वालकृष्णमुल्लापयत इति प्रतारयतीत्यर्थः। णावित्युक्त्वा स्वमतस्य कल्पितत्वं वारयितुं णावित्यस्य विशेषणमाह—काशिकेति ॥

८०६। भियो। भियो चेत् यदि प्रयोजकाद्भयं भवति, तदा ञि भी भये इत्यस्य स्थाने णौ परे भीष् भापौ भवतः, आत्मपदञ्च। प्रयोजकात् सभयविस्मयो यदि भवति, तदा स्मिङ ईषद्धसने इत्यस्य स्थाने स्माप् भवति, आत्मपदञ्च। भीषयते भापयते विस्मापयते च कंसं हरिरिति— अत्र हरिः प्रयोजककर्ता, ततो भयं सभयविस्मयश्च। गजदन्तेनेति, गजोऽत्र कुवलयापीडः। तमिति, कंसमित्यर्थः। अत्र प्रयोजकात् न भयं सभयविस्मयश्च, किन्तु करणाद्गजदन्तात् ॥

८०७। स्फायः स्फार्, शदेरगतौ शात्, इणो गमिरबोधने, क्रीञः क्राप्, अधीङोऽध्याप्, जेर्जाप्, सिध्यतेः साध्—न तु पारलौकिके, दुषो दूष् चित्तकर्मत्वे तु वा णौ।

स्फारयति; शातयति, छिनत्तीत्यर्थः। इण् गतौ—गमयति; इण्वदिक्—अधिगमयति; बोधने—प्रत्याययति। साधयति अन्नम्; पारलौकिके—सेधयति परलोकम्॥ ८०७॥

८०८। रुहो रोप्, चिञश्चाप्, स्फुरः स्फार्, वेतेः प्रजने वाप् णौ वा।

रोपयति, रोहयति; चापयति, चाययति; स्फारयति, स्फोरयति। आदेशसद्भावे णौ कृतस्य स्थानिवत्त्वाद् द्विर्वचनम्—अपुस्फरत्, अपुस्फुरत्। वी प्रजनादौ—वापयति, वाययति, गर्भं ग्राहयतीत्यर्थः॥ ८०८॥

---

८०७। स्फायः। णौ परे स्फायः स्थाने स्फार् भवति; णौ पर इति सर्वत्र योज्यम्। अगतावर्थे वर्तमानस्य शद्लृ शातन इत्यस्य स्थाने शात् भवति। अबोधनेऽर्थे वर्तमानस्य इण गतावित्यस्य स्थाने गमिर्भवति। डुक्रीञ् द्रव्यविनिमये इस्यस्य स्थाने क्राप् भवति। अधिपूर्वस्य इङ अध्ययने इत्यस्य स्थाने अध्याप् भवति। जि जये इत्यस्य स्थाने जाप् भवति। षिधु संराद्धौ इत्यस्य स्थाने साध् भवति। पारलौकिकेऽर्थे वर्तमानस्य तु न भवति। सिद्ध्यतेरिति, निर्देशः षिधु गत्यां षिधु शास्त्रे माङ्गल्ये चेचि द्वयोर्निरासार्थः। दुष वैकृत्ये इत्यस्य स्थाने दूष् भवति, चित्तकर्मकत्वेतु वा भवति। शदेरिति, गतौ तु शादयति; प्रत्याययतीति बोधयतीत्यर्थः। साधयति अन्नमिति धनाकाङ्क्षयेति शेषः। दुष इति, दूषयति कृष्णानिवेदितान्नम्। चित्तकर्मकत्वेतु दूषयति चित्तं दोषयति च॥

८०८। रुहो। णौ परे रुह जन्मनि प्रादुर्भावे च इत्यस्य स्थाने रोप् वा भवति। चिञ चयने इत्यस्य स्थाने चाप् वा भवति। स्फुर स्फुरणे इत्यस्य स्थाने स्फार् वा भवति। प्रजनेऽर्थे वर्तमानस्य वी धातोः

८०९। इङो गाङ् सन्नङ्परे णौ वा।

अध्यजीगपत्, अध्यापिपत् ॥ ८०९ ॥

८१०। नरोद्वयस्य इः पवर्गहरिमित्रजरामेष्वद्वयपरेषु सनि।

८११। स्रवति-शृणोति-द्रवति-प्रवति-प्लवतिच्यवतीनां वा।

ततः सन्निमित्तकार्येण अवीभवत्, अयीयवत्। जु गतौ सौत्रः—अजीजवत्। असिस्रवत्, असुस्रवत् इत्यादि ॥ ८११ ॥

---

स्थाने वाप् वा भवति। प्रजनो गर्भग्रहणम्। आदेशेति—आदेशविद्यमानतायां आदेशे सतीत्यर्थः। द्विर्वचनमिति—स्फुर इत्यस्येति शेषः। अपुस्फुरदिति आदेशाभावपक्षे। प्रजनादावित्यादिशब्देन कान्त्यसनखादनानां ग्रहणम् ॥

८०९। इङो। सन् च अङ्च सन्नङौ, तौ परौ यस्मात्, तादृशे णौ परे इङ अध्ययने इत्यस्य स्थाने गाङ वा भवति। गाङो ङित्त्वस्य प्रयोजनं न निश्चितम्। अध्यजीगपदिति—उद्धवस्य वामनः, नरस्य सन्निमित्तकार्यादि। अध्यापिपदित्यत्र 'यावत् सम्भवस्तावत् विधि'रिति न्यायेन अधीङः अध्याप इत्यनेन अधि विश्लेष्य इङ आप् इत्येवादेशस्तस्मात् सर्वेश्वरादित्वे अन्यभागस्येति योज्यमिति ॥

८१०। नरो। सनि सति अद्वयपरेषु पवर्ग-हरिमित्र-जरामेषु परेषु नरसम्बन्धिन उद्वयस्य स्थाने इर्भवति। नरोरामस्येत्यक्त्वा नरोद्वयस्येति कृतं प्रक्रियालाघवार्थम्। अन्यथा अवीभवदित्यादौ नरस्य वामन इत्यस्यापेक्षा स्यात् ॥

८११। स्रवति। सनि सति स्रूगतौ, श्रु श्रवणे, द्रु गतौ, प्रुङ प्लुङ च्युङ गतौ इत्येतेषां नरोरामस्य स्थाने अद्वयपरेषु स्रवत्यादिषु परेषु इर्वा भवति। अद्वयपरेष्वित्युपादानात् णावेवास्य विषय इति बोद्धव्यम्। अप्राप्ते विभाषेयम्। अवीभवदिति—भू सत्तायां णिः, वृद्धिः,

८१२। रञ्जेर्नस्य हरो णौ मृगरमणे।

रजयति मृगान्; अन्यत्र—रञ्जयति कृष्णम्। एवमन्येऽपि ॥ ८१२ ॥

८१३। हन्तेस्तो नृसिंहे।

'हनो हस्य घो णिन्नयोः' (२६९)—घातयति। 'गत्यर्थस्य तु णौ तो न स्यात्' इति दुर्गः—घानयति ॥ ८१३ ॥

इति ण्यन्तप्रक्रिया।

## अथ सनन्ताः

८१४। सन् क्रियेच्छायाम्।

८१५। उद्धयग्रहगुहेभ्यो नेट् सनि, ईशसमीपाद्विष्णुजनादनिट्सन् कपिलः, ईशाच्च, मृजेर्नेति केचित्।

उद्धयग्रहणं रुस्वादीनां ग्रहणार्थम्। भवितुमिच्छति—वुभूषति; वुभूष्यते। वुभूषाञ्चकार। मुख्यत्वाद् यस्यैव क्रियाः, तस्यैवेच्छा

---

भूतेश-दिप्, अङ, स्थानिवत्त्वाद्द्विर्वचनम् ऊरामस्येरामः, उद्धवस्य वामनः, तत्परस्य नरलघोस्त्रिविक्रमः। अयीयवदिति—युमिश्रणामिश्रणयोः। असुस्त्रवदिति—नरस्य लघुत्वाभावात् त्रिविक्रमाभावः ॥

८१२। रञ्जेः। णौ परे मृगरमणे मृगक्रीडायामर्थे रञ्जरागे इत्यस्य नस्य हरो भवति। रजयति मृगानिति—क्रीडतो मृगान् प्रयुङ्क्ते इत्यर्थः। रञ्जयति कृष्णमिति—अनुरक्तं करोति सुखयतीत्यर्थः। एवमिति, एवमन्येऽपि ण्यन्तप्रयोगा ज्ञेया इति शेषः ॥

८१३। हन्ते। नृसिंहे परे हन हिंसागत्यो इत्यस्य अन्तस्तो भवति ॥

॥ * ॥ इति ण्यन्तप्रक्रिया ॥ * ॥

गम्यते, तेनान्यस्य भवनमिच्छतीत्यर्थे न स्यात्। क्रियाया इच्छा क्रियेच्छा, न तु क्रिययेच्छेति ; इच्छायाः कर्मान्तरसापेक्षत्वं स्यात्। गमनेनेच्छतीत्यत्र च न भवेत्॥ ८१४-८१५॥

८१६। उपासनेऽपि श्रुवः।

हरिं शुश्रूषते। 'उद्वय'-इति किम् ? जिजागरिषति ; गङ्गाकूलं पिपतिषति इत्याद्युपचारात्॥ ८१६॥

---

८१४। सन्। क्रियेच्छायां गम्यमानायां धातोरुत्तरे सन् भवति। क्रिया सत्तादिलक्षणो धात्वर्थः॥

८१५। उद्वय। सनि परे उद्वयान्तात् ग्रहगुहाभ्याञ्च उत्तरे इट् न भवति। मृजेरिति, मृजेरनिट् सन् कपिलो न भवतीति केचित् वदन्तीति शेषः। उद्वयग्रहणमिति—उरामेति कृतेऽपि वुभूषतीति सिद्धचति, तथाप्युद्वयग्रहणं रुस्न्वादीनां रु शब्दे स्नु प्रस्रवणे इत्यादीनां ग्रहणार्थं कृतमिति शेषः। भवितुमिच्छतीति—भवनमिच्चतीत्यर्थः, भवनमिच्छतीत्युक्तेऽपि सन् भवतीति ज्ञेयम्। वुभूषाञ्चकारेति—अनेकसर्वेश्वरत्वादाम्। मुख्यत्वादिति—मुख्यार्थत्वात् क्रियेच्छाशब्दस्यायमेव मुख्यार्थ इति हेतोर्यस्यैव क्रिया तस्यैवेच्छा गम्यते इति। तेन यस्यैव क्रिया तस्यैवेच्छा इति हेतुना अन्यस्य भवनमित्यादौ न स्यात्। क्रियाया इति, कर्मणि षष्ठी, अतः कर्मान्तरनिरपेक्षत्वम्। न तु क्रियया इच्छेतीति, तथा सति इच्छायाः कर्मान्तरसापेक्षत्वं स्यादिति। क्रियया इच्छेति विग्रहाभावात् गमनेनेच्छतीत्यादि॥

८१६। उपा। उपासनेऽर्थेऽपि श्रुव उत्तरे सन् भवति। अपिशब्दात् क्रियेच्छायामपि भवतीति ज्ञेयम्। हरिं शुश्रूषते इति उपासते इत्यर्थः। शुश्रूषत इति, ईशान्तेत्यादिना त्रिविक्रमो वक्ष्यते, आत्मपदञ्च वक्ष्यते। असिद्धरूपं न त्याज्यमिति प्रतिज्ञासिद्धचर्थं त्रिविक्रम आत्मपदञ्च वक्ष्यत इति वक्तुमुचितमिति ज्ञेयम्। जिजागरिषतीति—नरारामस्येरामः, सनीत्यनेन इरामः। उपचारादिति—अचेतनस्य कूलस्य सचेतनत्वोपचारः इच्छायाः सचेतनधर्मत्वात्॥

८१७। दीङ आ वा सनि।

दिदासते, दिदीषते ॥ ८१७ ॥

८१८। ईशान्तहन्त्योरिङादेश-गमेश्च त्रिविक्रमः सनि।

'ओष्ठ्योद्धवस्य' (७१३) इत्युर्, ततो द्विर्वचनम् (४३४), अत्र म्रियतेः शिवाभावेन परपदित्वे सनन्तस्यापि परपदित्वम्—मुमूर्षति। जुहूषति। 'स्वरति'-( ४६५ ) इत्यादि—सिस्वरिषति, सुस्वूर्षति। 'अदो घस्लृः' (६४६), 'सस्य तः' (६९०)—अत्तुमिच्छति—जिघत्सति। वृतु वर्तने, वर्तितुमिच्छति—विवृत्सति; आत्मपदे तु—विवर्तिषते। वृधु—विवृत्सति, विवर्द्धिषते ॥ ८१८ ॥

८१९। ॠरामवृभ्य इड् वा सनि।

'ॠरामस्येर्' (५७७)—तरितुमिच्छति तितीर्षति, तितरीषति, तितरिषति। चिचीषति, 'चेः किर्वा' ( ५३४ )—चिकीर्षति।

---

८१७। दीङ। सनि परे दीङ्क्षये इत्यस्यान्त आ वा भवति। कालापाः सन्याद्विधानं कुर्वन्ति, नतु पाणिनीया; अत उभयमतदर्शनात् ग्रन्थकारो विकल्पं कृतवानिति ज्ञेयम्। दिदासत इति—पूर्वधातुवत् सनः परपदादीति आत्मपदम् ॥

८१८। ईशा। सनि परे ईशान्तस्य धातो र्हनधातोरिङादेशगमेश्च त्रिविक्रमो भवति। इङादेशगमिर्वक्ष्यते। ओष्ठेचति त्रिविक्रमे कृते ऋत उर्। अत्रेति—म्रियतेः परपदं शिवभूतेश-कामपालेभ्योऽन्यत्रेत्युक्तम्। अतः आह शिवाभावेन परपदित्वमिति। तस्मिन् सति सनन्तस्यापि परपदित्वमिति पूर्वधातुवत् सनः परपदादित्युक्तत्वात्। मुमूर्षतीति, मर्तुमिच्छतीत्यर्थः। जुहूषतीति, होतुमिच्छतीत्यर्थः। सुस्वूर्षतीति, त्रिविक्रमे कृते ऋत उर्। विवृत्सतीति—'वृतादिभ्यः परपदं वा स्य-सनो'रित्यनेन परपदं, 'वृतु वृधु शृधु स्यन्दूभ्यो नेट् सरामे आत्मपदाभावे' इत्यनेन इड् निषेधः ॥

८१९। ॠराम। सनि परे ॠरामान्तात् वृङ संभक्तौ वृञ वरणे इत्येताभ्याञ्चोत्तरे इड्वा भवति। तितरीषतीति—ॠरामवृभ्य

'ओष्ठ्योद्धवस्य' (७१३) इत्युर्—वुवूर्षति, विवरीषति, विवरिषति। 'जेर्गिः' (५३४)—जिगीषति। जिघांसति ॥ ८१९ ॥

८२०। इणो गमिरबोधने सनि।

८२१। इङश्च।

जिगमिषति। बोधने तु 'सर्वेश्वरादित्वे तु' (४३६) इत्यादि, तत्र 'सन्यङोस्तु तत्सम्बन्धिनः सर्वेश्वरस्य च' (४३७) इति द्विर्वचनम्—प्रतीषिषति ; एवमिकोऽपि। इटश्च तत्सम्बन्धिसर्वेश्वरत्वात्—उन्दिदिषति। उब्ज आर्जवे—उब्जिजिषति इत्यादि ॥८२०-८२१ ॥

८२२। ईर्ष्यो यिः सन् वा द्विः।

इति चान्द्रसूत्रम् (५।१।७)। ईर्ष्यियिषति, ईर्ष्यिषिषति। इङ—आत्मपदविषयत्वाद्गमेरिट् न, अधिजिगांसते। कॄ—लाक्षणिक ऋरामत्वान्न वेट्, चिकीर्षति ॥ ८२२ ॥

---

इत्यादिना इटस्त्रिविक्रमविकल्पः। चिकीर्षतीति—चिञ् चयने, चेः कीर्त्रेति चेः किः, चेतुमिच्छतीत्यर्थः। वुवूर्षतीति—वृञ् वरणे, त्रिविक्रमे कृते उर्, ततोद्विर्वचनम्। विवरीषतीति, पूर्ववत् जिघांसतीति, नराद्धन्तेर्हस्य घ इत्यनेन हस्य घ, ईशान्तहन्त्योरित्यादिना त्रिविक्रमः॥

८२०। इनो। सनि परे अबोधनेऽर्थे वर्तमानस्य इण गतावित्यस्य स्थाने गमिर्भवति, इराम इत्॥

८२१। इङश्च। इङ अध्ययने इत्यस्यच स्थाने गमिर्भवति। जिगमिषतीति—एतुमिच्छतीत्यर्थः। द्विर्वचनमिति, अरामसहितसरामस्येति शेषः। ननु सन्यङोस्तु द्विर्वचनं सत्यं ब्रवीषि तर्ह्यत्र कस्य वा दिर्वचनं कस्य वा परनिमित्तत्वं सम्भावनीयमिति चेत् केनापुच्येत, तदैवं वाच्यं अत्राद्यन्तवदेकस्मिन्निति न्यायेन सनः सरामस्य द्विर्वचनं परनिमित्तत्वञ्चेति। प्रतिषिषतीति, 'नरारामस्येरामः सनी'ति अरामस्येरामः। एवमिकोऽपीति, यत उक्तं इण्वदिक् इति। इटश्चेति—पूर्ववर्तिनोऽपि इटः सन् सम्बन्धित्वमस्त्येवेति। उन्दिदिषतीति—उन्दीक्लेदने॥

८२२। ईर्ष्यो। ईर्ष्य ईर्षायां इत्यस्य यि द्विर्वा भवति। पक्षे

८२३। रुद-वेत्ति-मुष-ग्रहि-स्वपि-प्रच्छः क्त्वासनौ कपिलौ।

'ग्रहि-ज्या'-(६३०), 'आदौ हरिघोषत्वम्' (२६१) जिघृक्षति ॥८२३॥

८२४। य-व-र्वजितविष्णुजनान्ताच्चतुःसनोद्धवाद्-विष्णुजनादेः सेट्क्त्वासनौ कपिलौ वा।

'द्युतिष्वाप्योर्नरस्य सङ्कर्षणः' (६१०) दिद्युतिषते, दिद्योतिषते। परत्वात् चुकुटिषति, चुकोटिषति इत्यपि। य-वान्तात्तु—क्नुयी, चुक्नोयिषते; दिवु—दिदेविषति। 'विष्णुजनादेः' किम्? इषु—एषिषिषति। श्वेः सङ्कर्षणो वा' (६४०) इत्यादि—शुशावयिषति, शिश्वाययिषति ॥ ८२४ ॥

---

सन् द्विर्भवति इति सूत्रार्थः। ईर्षियिषतीति, सारामसरामस्य द्विर्वचनम्। गमेरिट् नेति, गमेरिट् सरामादिरामधातुके नात्मपदे इति लक्षणम्। अधिजिगांसत इति, ईशान्तहन्त्योरित्यादिना त्रिविक्रमः। लाक्षणिकेति, अन्यथा ॠरामवृभ्य इड्वासनीत्यनेन इड्वा स्यात्॥

८२३। रुद। रुदिर—अश्रुविमोचने विदज्ञाने इत्येताभ्यां, मुषधातोः, ग्रह उपादाने, ञिष्वपशये, प्रच्छ ज्ञीप्सायाम् इत्येतेभ्यश्च परौ क्त्वासनौ कपिलौ भवतः। मुषेति, मुष खण्डने दिवादिः; मुष स्तेये क्र्यादिर्द्वयोरपि ग्रहणम्। रुदवेत्तिमुषाणां सेट्त्वात् ई समीपादित्यादिना सनः कपिलत्वं न भवतीति अनेन विहितम्। जिघृक्षतीति—कपिलत्वाद्गोविन्दाभावश्च॥

८२४। य-व। विष्णुजनादेर्यवर्जितविष्णुजनान्ताच्चतुःसनोद्भवाद्धातोः परौ सेट्क्त्वासनौ कपिलौ वा भवतः। दिद्युतिषत इति, द्युतिष्वाप्यो र्नरस्य सङ्कर्षण इति सङ्कर्षणः। ननु कुटादेरनृसिंहो निर्गुण इति कृतं तर्हि चुकोटिषतीति भवतीति चेत्तत्राह परत्वादिति। पाक्षिककपिलविधानस्य परत्वात् कपिलविधानाभावपक्षे न निर्गुणविधानमतो गोविन्दो भवत्येव। क्नुयीति क्नुयीशब्दे। दिव्विति दिवु क्रीड़ादौ।

८२५। ऋ-पूङ्-स्मि-अन्जू-अशू-कॄ-गॄ-दृङ्-धृङ्-प्रच्छ इत्येतेभ्य इट् सनि।

ऋ गतौ प्रापणे च, ऋ सृ गतौ—अरिरिषति। चिकरिषति, जिगरिषति इत्यनयोरिटस्त्रिविक्रमत्वं नेष्टम्। क्रादयस्तौदादिका एव, प्रच्छसाहचर्यात्; अन्येषान्तु चिकीर्षति इत्यादि, कॄञ हिंसायामिति क्र्यादावस्ति॥ ८२५॥

८२६। इवन्त-ऋध-भ्रस्ज्-दन्भु-श्रि-ऊर्णु-यौति-भरति-ज्ञपि-सनि-तनि-पति-दरिद्राभ्य इड् वा सनि।

ज्ञपिश्चौरादिको हेतु ण्यन्तश्च। 'छस्य शो' (७८६) इत्यादि, दिवु, 'द्विर्वचननिमित्त-सर्वेश्वर'-इत्युक्तत्वादूठि षत्वे च कृते द्विर्व-

---

इष्विति, इषु इच्छायाम्। एषिषिषतीति—सारामसरामस्य द्विर्वचनम्। चतुःसनोद्भवादिति किम? वर्तित्वा विवर्तिषते। शुशावयिषतीति, स्थानिवत्त्वात् शोर्द्विर्वचनम्॥

८२५। ऋ-पूङ। सनिपरे ऋधातोः, पूङ पवने, स्मिङ ईषद्धसने, अन्जू म्रक्षणादिषु, अशूङ व्याप्तौ, कॄ विक्षेपे, गॄ निगरणे, दृङ आदरे, धृङ अवस्थाने, प्रच्छ ज्ञीप्सायाम् इत्येतेभ्यश्चोत्तरे इट् भवति। ऋ-स्मि-दृङ-धृङाम् एकसर्वेश्वरत्वादप्राप्ते, पूङः उद्वयेत्यादिना निषेधे प्राप्ते, अन्जू अशू इत्येतयोरूदित्वाद्विकल्पे प्राप्ते, कॄ-गॄ इत्येतयोः ॠरामवृभ्य इड्वा सनीत्यनेन विकल्पे प्राप्ते, प्रच्छः शकादित्वादप्राप्ते विधानम्। अरिरिषतीति, इटः सन्सम्बन्धिसर्वेश्वरत्वात्तत्सहितररामस्य द्विर्वचनम्। नेष्टमिति, पूर्वाचार्यैरिति शेषः। अन्यथा ॠरामवृभ्य इत्यादिना पाक्षिकत्रिविक्रमः स्यात्। क्रादय इति, चत्वार इत्यर्थः। तौदादिका एवेति, गृह्यन्ते इति शेषः। हेतुमाह प्रच्छेति। अन्येषामिति, तौदादिकानामित्यर्थः। तत्र कृधातोरतौदादिकत्वमाह कॄञ हिंसायामितीति। गॄ शब्दे इत्यपि क्र्यादावस्ति, दृङधृङोस्तु अतौदादिकत्वं न प्रसिद्धमिति ज्ञेयम्॥

८२६। इवन्त। सनि परे इवन्ता दिव-सिव प्रभृतयस्तेभ्यः, ऋधू वृद्धौ, भ्रस्ज पाके, दन्भु दम्भे, श्रिञ सेवायां, ऊर्णुञ् आच्छादने, यु

चनम्, न तु स्थानिवत्—दुद्यूषति, दिदेविषति। भ्रस्ज्—विभ्रज्जिषति, विभ्रक्षति। श्रि—'ईशान्तहन्त्यो'-(८१८) इति शिश्रीषति; गोविन्दस्य नित्यत्वात्—शिश्रयिषति। तितनिषति ॥ ८२६ ॥

८२७। तनोतेरुद्धवस्य त्रिविक्रमो वैष्णवादि सनि वा।

तितांसति, तितंसति ॥ ८२७ ॥

८२८। दम्भो धीप्स-धिप्सौ।

---

मिश्रणामिश्रणयोः, भृञ भरणे इत्येतेभ्यः, ज्ञपेः, सनधातोः, तनुविस्तारे, पतऌ गतौ, दरिद्रा दुर्गतौ इत्येतेभ्यश्च उत्तरे इड्वा भवति। यौतीति निर्देशो युञ बन्धने इत्यस्य क्र्यादेर्निरासार्थः। भरतीति निर्देशात् डुभृञधारणपोषणयोरित्यस्य जुहोत्यादे र्न ग्रहणम्। सनीति—षणु दाने तनादिः, सनसम्भक्तौ भ्वादि द्वयोरेव ग्रहणम्। चौरादिक इति—ज्ञप मारणादौ चुरादिः, अस्य घटादित्वमप्यस्तीत्यग्रे वक्ष्यते। हेतुण्यन्तश्चेति, प्रयोजकण्यन्तज्ञाधातुरित्यर्थः। मारणादिषु तस्य घटादित्वात् ज्ञपीति सिद्धम्। द्विर्वचनमिति तु सर्वेश्वर इत्युक्तत्वादिति स्थानिवत्त्वाभावे हेतुः। अत्र द्विर्वचननिमित्तस्य सर्वेश्वरता नास्ति। विभ्रज्जिषतीति, सस्य जो जे नतु वैष्णवे इत्यनेन सस्य जः। शिश्रयिषतीत्यत्र ईशान्तेत्यादिना त्रिविक्रमः कस्मान्न भवतीत्याशङ्क्य समादधाति गोविन्दस्येति त्रिविक्रमे कृते न कृतेऽपि गोविन्दो भवतीति गोविन्दस्य नित्यत्वं अतस्त्रिविक्रमाभावः। ननु किमर्थमिदमुच्यते अत्र सनः परतैव नास्ति, इटा व्यवधानात्। उच्यते सनो वैष्णवादीति विशेषणाभावात् त्रिविक्रमः स्यादतउक्तं गोविन्दस्य नित्यत्वादिति ॥

८२७। तनो। वैष्णवादि सनि परे तनोतेरुद्धवस्य त्रिविक्रमो वा भवति। तितांसतीति—अविष्णुपदान्तस्येत्यादिना नस्य विष्णुचक्रम् ॥

८२८। दम्भो। दम्भधातोः स्थाने अनिट्-सना सह धीप्सधिप्सौ निपातौ भवतः। अनिट् सनेति सर्वत्र योज्यम्। किन्तु अनिडिति विशेषणं कुत्रचित् सार्थकं कुत्रचित् निरर्थकमिति ज्ञेयम्। दन्भप्रभृतिषु इटः सम्भवात् सार्थकत्वम्। आपप्रभृतिषु तदसम्भवात् निरर्थकत्वम् ॥

८२९। ऋध ईर्त्सः।

८३०। ज्ञपेर्ज्ञीप्सः।

८३१। आप ईप्सः।

८३२। मीनाति-मिनोति-मानां मित्सः।

८३३। दामोदराणां दित्स-धित्सौ।

८३४। रभलभो रिप्सलिप्सौ।

८३५। शकः शिक्षङ्।

८३६। राधो रित्सो हिंसायाम्।

८३७। पतपदोः पित्सः।

८३८। मुचोऽकर्मकत्वे मोक्षङ् मुमुक्षङावनिट्सना सह।

दिदम्भिषति, धिप्सति, धीप्सति; अर्दिधिषति, ईर्त्सति; ज्ञपेश्चुरादित्वं घटादित्वञ्च—जिज्ञपयिषति, ज्ञीप्सति; ईप्सति; डुमिञ्, मीञ्—मित्सति, मित्सते; मा—मित्सति; माङ मेङ—मित्सते; ङित्त्वात्—शिक्षते इत्यादि; राध—प्रतिरित्सति। हिंसायां किम्? आरिरात्सति। मुच—मोक्षते वत्सः, बन्धान्निष्क्रमितुमिच्छति इत्यर्थः; एवं मुमुक्षते; सकर्मकत्वे तु—मुमुक्षति वत्सं कृष्णः, बन्धान्निष्क्रमयितुमिच्छतीत्यर्थः।

---

८२९। ऋध। ऋधः स्थाने ईर्त्सो भवति॥

८३०। ज्ञपेः। सुगमम्॥

८३१। आप। सुगमम्॥

८३२। मीना। मीञ हिंसायां, डुमिञ प्रक्षेपणे इत्येतयोर्मा-धातोश्च स्थाने मित्सो भवति। मेति मा माने अदादिः, माङमाने ह्वादिर्दिवादिश्च मेङ प्रणिदाने भ्वादिः त्रयाणामेव ग्रहणम्॥

८३३। दामो। सुगमम्॥

दरिद्रा—दिदरिद्रिषति, दिदरिद्रासति। द्वयमपीदं भाष्यमतम् (पा ६।४।११४)। वैष्णवादिसन्यप्यालोप इत्येके, किन्तु दुरुच्चारणत्वान्नोदाहरन्ति। षणु दाने—'जन-खन-सनाम्' (६२१) इत्यादि, सिषासति इत्यादयो ज्ञेयाः। भू-णि-सन्—वृष्णीन्द्रस्थानिवद्भावाद्भू र्द्विर्वचनम् (६३४), 'नरोद्वयस्य' (८१०) इतीत्वम्—विभावयिषति। यु—यियावयिषति। स्रु—सिस्रावयिषति, सुस्रावयिषति। अद्वयपरत्व एव, न त्विह—वुभूषति, सुस्रूषते॥ ८२८-८३८॥

८३९। नरात् स्तौति-ण्यन्तयोरेव षत्वं सनः षे।

८४०। न तु सह-स्वद-स्विदाम्।

---

८३४। रभ। रभलभोः स्थाने रिप्सलिप्सौ भवतः॥

८३५। शकः। सुगमम्॥

८३६। राधो। हिंसायामर्थे वर्तमानस्य राध संसिद्धावित्यस्य स्थाने रित्सो भवति॥

८३७। पत। सुगमम्॥

८३८। मुचो। मुचो अकर्मकत्वे विवक्षिते सति मुचॢ मोक्षणे इत्यस्य स्थाने मोक्षङ मुमुक्षङौ भवतः, ङ इत्। दिदम्भिषतीति, इट् पक्षे। जिज्ञपयिषतीति, घटादित्वात् उद्धवस्य वामनः। मित्सत इति—ङित्वात्, पक्षे आत्मपदम्। ङित्वादिति—आत्मपदमिति शेषः। शिक्षत इति—शिक्षतीत्येके। प्रतिरित्सतीति—हिंसामिच्छतीत्यर्थः। आरिरात्सतीति—आराधनमिच्छतीत्यर्थः। निष्क्रमितुमिति—निर्गन्तुमित्यर्थः। दिदरिद्रिषतीति—आरामहर इत्यादिना आरामहरः। द्वयमिति—पदद्वयमित्यर्थः, मतमिति—सम्मतमित्यर्थः। आलोप इति—आरामहर इत्यर्थः। दुरुच्चारणत्वात् कष्टोच्चारणत्वात्। सिषासतीति, ईश्वरहरिमित्रेत्यादिना विरिञ्चिसस्य षत्वम्। सिस्रावयिषतीति—'स्रवति-शृणोति-द्रवति-प्रवति-प्लवति-च्यवतीनां वा'इत्यनेन इत्वम्। वुभूषतीति—पवर्गस्य अद्वयपरत्वाभावात् नरोद्वयस्येत्यादिना नात्र इत्वम्। सुस्रूषतीति—स्रुधातोरद्वयपरत्वाभावात् स्रवतीत्यादिनात्र इत्वम्॥

तुष्टूषति। 'द्युतिष्वाप्योर्नरस्य सङ्कर्षणः' (६१०)—सुष्वापयिषति। नान्यत्र षत्वम्—सिचिर् क्षरणे, सिसिक्षति। नरनिमित्त एव निषेधादिह तु स्यादेव—प्रतीषिषति, परिषिषिक्षति ; पूर्वत्र 'ईश्वर हरिमित्र'-(१७०) इत्यादि प्रवर्तते ; परत्र च परिनिमित्तकमुभयोः षत्वं वक्ष्यते (६३४)। 'सनः षे' इति किम् ? तिष्ठासति। सहादेस्तु ण्यन्तत्वेऽपि न स्यात्—सिसाहयिषति इत्यादि ॥ ८३९-८४० ॥

८४१। इच्छासनन्तान्न सन्। *

स्वार्थसनन्तात् स्यादेव—जुगुप्सिषते। 'अनरस्य' (४३५) इति विशेषणान्न द्विर्वचनम् ॥ ८४१ ॥

**इति सनन्ताः।**

---

८३९। नरात्। सन्सम्बन्धिनि मूर्धन्ये षे परे नरादुत्तरस्य सस्य षत्वं भवत स्तौतिण्यन्तयोरेव भवति, नान्यस्य ॥

८४०। नतु। सह मर्षणे, स्वद आस्वादने, स्विदा गात्र प्रक्षरणे इत्येतेषां ण्यन्तत्वेऽपि षत्वं न स्यात्। तुष्टूषतीति—स्तोतुमिच्छतीत्यर्थः। सिसिक्षतीति—सिचिर् क्षरणे। नरनिमित्त इति षत्वविशेषणम्। प्रतिषिषतीति—अत्रेश्वर निमित्तकं षत्वम्। पूर्वत्र प्रतीषिषतीत्यत्र। परत्र परिजिषिक्षतीत्यत्र। तिष्ठासतीति—अत्र सन् सम्बन्धिनो मूर्धन्यस्य षस्य परत्वाभावात् षत्वे न विरोधः ॥

८४१। इच्छा। इच्छा-सनन्ताद्धातोरुत्तरे सन् न भवति। स्वार्थसनन्तात् स्यादेवेति—निषेधाभावादिति शेषः। जुगुप्सिषत इति—जुगुप्सितुमिच्छतीत्यर्थः ॥

॥ * ॥ इति सनन्ताः ॥ * ॥

---

* "शैषिकान्मतुवर्थीयात् शैशिको मतुवर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सन्निष्यते ॥"—प्रक्रियाकौमुदी।

## अथ यङन्ताः

**८४२। विष्णुजनाद्येकसर्वेश्वराद्यङ् पौनःपुन्यातिशययोः।**

'चेक्रीयित'-संज्ञोऽयमित्येके ॥ ८४२॥

**पुनःपुनरतिशयेन वा भवतीत्यर्थे भूधातोर्यङ्, 'धातोर्द्विवंचनम्' (४३४) ;—**

**८४३। नरस्य गोविन्दो यङि विष्णुरहितारामान्तस्य तु त्रिविक्रमः।**

'धातु'-संज्ञा (३६६), तिवादयः, ङित्त्वादात्मपदम्—वोभूयते, वोभूय्यते, अवोभूयिष्ट, अवोभूयि। 'मीनातिमिनोति'-(७३९) इत्यादेर्वर्णान्तविधित्वान्नरस्यारामो न स्यात्, तेन 'प्रमेमीयते' इति दुर्गः। 'विष्णुजनादि'-इति किम्? 'भृशमीक्षते, प्रेक्षते वा'। 'एकसर्वेश्वरात्' किम्? भृशं जागर्ति ॥ ८४३॥

---

८४२। विष्णु। एकः सर्वेश्वरो यस्य स एकसर्वेश्वरः, विष्णुजनादिश्चासौ एकसर्वेश्वरश्च, तादृशाद्धातोरुत्तरे पौनः पुन्येऽतिशये च गम्यमाने यङ भवति। पौनःपुन्यमतिशयश्च धातोरेवार्थः। यङा स द्योत्यत इति ज्ञेयम्॥

८४३। नरस्य। यङि सति नरस्य गोविन्दो भवति। विष्णुरहितश्चासौ अरामान्तश्च, तादृशस्य नरस्यतु त्रिविक्रमो भवति। नी प्रभृतयो विष्णवो वक्ष्यन्ते, तैरहित इत्यर्थः। वोभूयत इति—अराम हर ए-अयोरित्यादिना अरामहरः। वोभूय्यत इति—अरामहरो रामधातुक इत्यनेन अरामहरः। मीनाति-मिनोतीत्यादि लक्षणोल्लेखः; मीनाति मिनोतीत्यादिनेति वा पाठः। वर्णान्तविधित्वादिति, अरामस्येति शेषः। यत उक्तं,—'एकवर्णोविधिरन्ते प्रवर्तते' इति। अन्त इति वर्णान्ते, सर्ववर्णान्त इति यावत्। अतो नरस्यान्त आरामो न स्यादिति। प्रमेमीयत इति—अत्र नरान्तो गोविन्दविधिस्थानमित्यारामः स्यादतः समाधानं कृतम्। भृशमिति क्रियाविशेषणं, अतिशयमित्यर्थः। प्रेक्षते इति—प्रशब्दस्य प्रकर्षवाचकत्वात् पुनः पुनरीक्षते इत्यर्थः॥

८४४। न शुभ-रुच-गृणातिभ्यो यङ्।

मुहुः शोभते ॥ ८४४ ॥

८४५। सूचि-सूत्रि-मूत्रि-अटि-अर्ति-अश-ऊर्णोति-भ्यश्च यङ्।

सोसूच्यते। अश भोजने—अशाश्यते ; अशूङोऽपीत्येके ॥८४५॥

८४६। विष्णुजनात् सारामयस्य हरो रामधातुके।

८४७। क्यस्य तु वा।

सोसूच्यते, असोसूचिष्ट, सोसूचाञ्चक्रे ; ऊर्णोनूय्यते। 'अन्तहरे न गोविन्दवृष्णीन्द्रौ' (५५६)—वोभुजिता ; वेभिदिता। 'साराम'-ग्रहणान्नेह—ईर्ष्यिता ॥ ८४६-८४७ ॥

---

८४४। न शुभ। शुभ-रुच दीप्तौ, गॄ शब्दे इत्येतेभ्य उत्तरे यङ न भवति। मुहुरिति—पुनः पुनरित्यर्थः ; एवं भृशं शोभते ॥

८४५। सूचि। सूच पैशुन्ये, सूत्र अवमोचने, अवमोचनं वेष्टनं, मूत्र प्रस्रवणे एते चौरादिकाः, अट गतौ इत्येत्येभ्यः, अर्तेः अशधातोः ऊर्णोतेश्च उत्तरे यङ भवति। सूचिसूत्रिमूत्रीणां णौ कृते एकसर्वेश्वरत्वाभावात् अटचर्त्यंऽशानां विष्णुजनादित्वाभावात् ऊर्णोतेरुभयाभावादप्राप्ते विधानम्। सोसूच्यत इति—सृपऌ प्रभृतिषु अस्य पाठात् न षोपदेशत्वमतो विरिञ्चित्वाभावात् न षत्वम्। अशास्यत इति—'सन्-यङोस्तु तत्-सम्बन्धिनः सर्वेश्वरस्य चे'ति सारामस्य श्यभागस्य द्विर्वचनं, नरविष्णु-जनानामादिः शिष्यत इति सारामशरामस्य स्थितिः, ततस्त्रिविक्रमः। अशूङोऽपीत्येक इति—क्रमदीश्वरादीनां मतमिदमिति ज्ञेयम् ॥

८४६। विष्णु। रामधातुके परे विष्णुजनादूत्तरस्य सारामयस्य हरो भवति ॥

८४७। क्यस्य। विष्णुजनादुत्तरस्य क्यस्य तु हरो वा भवति। क्यस्य वक्ष्यमाणत्वादुदाहरणं वक्ष्यते। सोसूच्यत इति—यङन्ताद्यक्। वोभुजितेति—यङन्ताद्बालकल्कि-ता। ईर्ष्यितेति—ईर्ष्य ईर्ष्यायां बाल-

८४८। गत्यर्थाद्यङ् कौटिल्य एव।

कुटिलमटति—अटाटचते। नेह—भृशमटति प्राटति वा ॥८४८॥

'अति-सत्सङ्गाद्यॄदन्तयोः' (५५८)—

८४९। यरामपरो ररामो न द्विर्वचने वर्ज्यते।

अरार्यते। 'दामोदर'- (५४९) इत्यादिना ई, ततो द्विर्वचनम् (४३४)—देदीयते ॥ ८४९ ॥

८५०। ऋरामस्य री क्ययङोः।

'क्य' इति क्यङक्यनोः। कृ—चेक्रीयते ॥ ८५० ॥

८५१। लुप-सद-चर-जप-जभ-दह-दंश-गॄभ्यो भाव-गर्हायामेव यङ्।

गर्हितं लुम्पति—लोलुप्यते। सासद्यते। चरादिप्रयोगोऽग्रे (८५४, ८६१)। 'गिरो रो लः' (७५३)—जेगिल्यते। गॄ शब्दे इत्यतस्तु

---

कल्कि-ता। विष्णुजनादिति किं? वोभूय्यते। रामधातुक इति किं? पापच्यते ॥

८४८। गत्य। गत्यर्थाद्धातोरुत्तरे कौटिल्य एव गम्यमाने यङ भवति, नतु पौनःपुन्यातिशययोः। कुटिलमिति क्रियाविशेषणम्। अटाटचत इति—अशाश्यत इतिवत्। प्राटतीति—प्रेक्षत इतिवत् ॥

८४९। यराम। यरामः परो यस्मात् तादृशो ररामो द्विर्वचने न वर्ज्यते न वर्जनविषयीक्रियते। सत्सङ्गादिनवदरवर्जस्येत्युक्तमतो ररामस्य वर्जनं स्यादितीदं विहितम्। देदीयते इति—पुनःपुन भृशं वा ददातीत्यर्थः ॥

८५०। ऋरा। क्ये यङि च परे ऋरामस्य स्थाने रीर्भवति। क्यङक्यनौ वक्ष्येते। क्यन् क्यङोरति वा पाठः, क्यनः पूर्वोक्तत्वात् ॥

८५१। लुप। लुपऌ छेदने, षदऌ विशरणगत्यवसादनेषु, चर-गतौ, जप व्यक्तायां वाचि मानसेच, जभ गात्रविनामे, दह भस्मीकरणे, दन्श दंशने, गॄ निगरणे इत्येतेभ्य उत्तरे भावगर्हायामेव गम्यमानायां यङ भवति, नतु पौनःपुन्यातिशययोः। भावो धात्वर्थः। गर्हितमिति क्रिया-

यङ न प्रयुज्यते ; इह प्रोर्णोनूयते सञ्चेस्क्रीयते, निजेगिल्यते, उपपनीपद्यते इत्यादिकं तैरपि प्रयुज्यते ; अतः सोपसर्गान्न स्यादित्यन्यैरुपेक्षितम् ॥ ८५१ ॥

८५२ । कवतेर्नरस्य न चो यङि ।

कोकूयते ॥ ८५२ ॥

८५३ । वञ्चु-श्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्द-नरतो नी यङि ।

वनीवच्यते, शनीश्रस्यते इत्यादि ॥ ८५३ ॥

---

विशेषणम् । गर्हितत्वं छेदनस्य निरर्थकत्वात् दोषदुष्टत्वाच्च । एवमन्यत्रापि ज्ञेयम् । अग्र इति—वक्ष्यते इति शेषः । जेगिल्यत इति—गर्हितं गिरतीत्यर्थः । गॄ शब्दे इत्यतस्तु यङ न प्रयुज्यते इति यैः, पूर्वाचार्यैरिति शेषः । अतः गॄ इति सामान्यनिर्देशेऽपि तौदादिकस्यैव ग्रहणमिति भावः । ननु गॄ शब्द इत्यतस्तु न शुभरुचेत्यादिना यङ निषिद्ध एव तर्हि कथमिदमुच्यते तदेतच्चिन्त्यमिति चेदुच्यते । अत्र यङनिषेधनं न बहुप्रयोजनम्, किन्तु सोपसर्गात् गॄधातो र्यङ न स्यादिति केचिदाहुस्तदुक्तमन्यैरपि त्यक्तमिति प्रदर्शनार्थमिति । इहेति—यङ प्रकरणे इत्यर्थः । तैरपीति पूर्वाचार्यैरपीत्यर्थः । अत इति—अतः सोपसर्गाद्धातोरुत्तरे यङ न भवतीत्यत्र तद्वाक्यमन्यैरर्वाचीनाचार्यैरुपेक्षितं त्यक्तम् ॥

८५२ । कव । यङि परे कुङ शब्दे इत्यस्य नरस्य नरैकादेशस्य करामस्य स्थाने चो न भवति । कवतेरिति निर्देशः, कुङ शब्दे इति तौदादिकस्य कु शब्दे इत्यदादेश्च निरासार्थः । तयोश्चोकुयत इति भवति । यद्यपि शब्दे त्रयः पठ्यन्ते, तथाप्यस्ति भेदः ; भ्वादिरव्यक्तशब्दे, तुदादिर्व्यक्ते स्वरे, अदादिः शब्दमात्र इति ज्ञेयम् । अनरस्य असम्भवादेव न सम्भवतीति नरस्येति लभ्यते, तथापि नरस्येति कृतं स्पष्टतार्थम् । अनुभवलभ्यात् शाब्दोऽर्थः स्पष्टो भवति ॥

८५३ । वञ्चु । यङि सति वञ्चु गतौ, स्रन्सु ध्वन्सु भ्रन्सु अधःपतने, कस गतौ, पतॢ गतौ, पद गतौ, स्कन्दिर गतिशोषणयोरित्येतेषां

८५४। हरिवेणवन्तानां जप-जभ-दह-दंश-भञ्जाञ्च नरादरामतो विष्णुचक्रं यङि।

यंयम्यते, तंतन्यते, जंजन्यते, जंजप्यते। जभजृभि गात्रविनामे—जञ्जभ्यते ॥ ८५४ ॥

८५५। ल-व-यान्तस्य तु वा इति वक्तव्यम्।

चंचल्यते, चाचल्यते ; मंमव्यते, मामव्यते ; दंदय्यते, दादय्यते ॥ ८५५ ॥

८५६। अत्र हरिवेणु-विधिर्वा वक्तव्यः।

तन्तन्यते, जञ्जन्यते ॥ ८५६ ॥

८५७। अरामादन्यतो न।

वाभाम्यते ; 'भामो वा' इति जुमरमतम् (संक्षिप्तसारः २।५६२) ; तेतिम्यते ॥ ८५७ ॥

८५८। हिंसार्थस्य हन्तेर्घ्नी यङि।

जेघ्नीयते ; गत्यर्थस्य तु—जंघन्यते ॥ ८५८ ॥

---

नरत उत्तरे नी भवति। वनीवच्यत इति—अनिरामेतामित्यादिना उद्धव नरामहरः ॥

८५४। हरि। यङि सति हरिवेणुरन्ते येषां, तादृशानां जप-जभ-दह-दंशानां, भन्जो आमर्दने इत्यस्यच नरात् नरैकदेशात् अराम उत्तरे विष्णुचक्रं भवति। यंयम्यत इति। यमु उपरमे। तंतन्यत इति, तनु-विस्तारे। जंजन्यत इति। जनी प्रादुर्भावे ॥

८५५-५६। अत्र। यङ प्रयोगे हरिवेणुविधिर्वा वक्तव्यः ॥

८५७। आराम। वाभाम्यत इति— भाम क्रोधे, वंभाम्यत इत्यपि मतं भामोवेति तल्लक्षणम्। तेतिम्यत इति—तिमष्टिम आर्द्रभावे ॥

८५८। हिंसा। व्यक्तार्थमेतत्। जंघन्यत इति—नराद्धन्तेर्हस्य घः ॥

८५९। ऋमध्यधातु-नरतो री यङि।

जरीजृम्भते, जरीगृह्यते ॥ ८५९ ॥

८६०। यङन्तादिटो दीर्घो न।

जरीगृहिता। क्षुभ्नादित्वान्न णत्वम् ( ७८४ )—नरीनृत्यते। वरीवृश्च्यते। तृणु अदने—तरीतृण्यते; परविधेर्बलवत्त्वादत्र विष्णुचक्रं बाध्यते। 'शेतेः शय्' (७०१)—शाशय्यते॥ ८६०॥

८६१। क्लृपेश्चलीक्लृप्यः, स्वपः सोषुप्यः, व्येञो वेवीयः, वशो वावश्यः, चायश्चेकीयः, घ्रो जेघ्रीयः, ध्मो देध्मीयः, चरेश्चञ्चूर्यः, फलेः पम्फुल्य इति यङा निपाताः।

चलीक्लृप्यते, सोषुप्यते इत्यादि। 'धातो र-व'-( २६४ ) इत्यादि—चञ्चूर्यते; यलोपे तु—चञ्चुरिता ॥ ८६१ ॥

**इति यङन्ताः।**

---

८५९। ऋमध्य। यङि सति ऋर्मध्ये यस्य, तादृशधातुसम्बन्धिनो नरत उत्तरे री भवति। जरीजृम्भत इति—इरामेत्त्वान्नुम्। जरीगृह्यते इति—ग्रह उपादाने ॥

८६०। यङ। व्यक्तार्थमेतत्। जरीगृह्यते इति—'विष्णुजनात् सारामयस्य हरो रामधातुके' इत्यनेन सारामयस्य हरः। 'ग्रहेरिटस्त्रिविक्रमोऽनधोक्षजे इत्यनेन त्रिविक्रमः स्यात्। वरीवृश्चत इति, ओव्रस्चू छेदने। विष्णुचक्रं बाध्यत इति। रीविधिनेति शेषः। हरिवेण्वन्तत्वत् विष्णुचक्रं स्यात् ॥

८६१। क्लृपे। क्लृपू सामर्थे इत्यादीनां स्थाने चलीक्लृप्य प्रभृतयो यङा निपाता भवन्ति। चलीक्लृप्यत इत्यत्र ऋद्वयं लृद्वयं प्राय एकात्मकमित्यनेन प्राप्ते रीविधानाभावे लीविधानम्। सोषुप्यते वेवीयत इत्यत्रच वचि स्वपित्यादिना सङ्कर्षणाभावे सति सङ्कर्षणविधानम्। वावश्यत इत्यत्र ग्रहिज्येत्यनेन सङ्कर्षणप्राप्ते सङ्कर्षणदूरीकरणं निपातफलमन्यत्र स्पष्टमिति। चाय इति—चायृ पूजानिशामनयोः। चरेरिति—चर

## अथ चक्रपाणयः

८६२। यङो महाहरो बहुलम्।

बाहुल्यात् क्वचिद्भाषायां क्वचिच्छन्दसि च ; तथा द्विर्वचनात् पूर्वं महाहरः। नरं प्रति हरत्वं, धातुत्वं प्रति, सङ्कर्षणं प्रति, निपातं प्रति च इत्यादि ज्ञेयम् ॥ ८६२ ॥

८६३। तदन्तश्चक्रपाणिसंज्ञः।

'चर्करीत'-संज्ञश्चायमदादौ परपदिषु गण्यते। 'ब्रुवईट्' (७०६) इत्यादि, 'चक्रपाणेस्तु वा' (७०७) ; अन्तहरे न गोविन्दवृष्णीन्द्राविति निषेधश्चक्रपाणेः कृष्णधातुके न स्यात्—वोभवीति, वोभोति ; वोभूतः ; वोभुवति। वोभूयात्। वोभवीतु, वोभोतु ; वोभूताम्। अवोभवीत्, अवोभोत् ; अवोभूताम् ; 'ईशान्तस्य गोविन्दः' (६८५)—अवोभवुः। भूतेशे तु—अवोभूत्, अवोभूताम्, अवोभवुः इत्यत्र तु 'भुवो न गोविन्दः' (४२०) इत्यपि बाध्यते (६८५ मूत्रेण)। अत्र-कीय-बाहुल्यात् आम् तु वा—वोभुवाञ्चकार। धातुनिर्देशे तु चक्रपाणे-

---

गतौ। फलेरिति—ञिफला विसरणे, फलनिष्पत्तौ द्वयोरेव ग्रहणम्। य-लोपेतुः चञ्चुरितेति। त्रिविक्रम मध्ये निपाते कृतेतु चञ्चूरितेत्यनिष्टरूपं स्यादिति भावः ॥

॥ * ॥ इति यङन्ताः ॥ * ॥

---

८६२। यङो। बहुलं यथास्यात्तथा यङो महाहरो भवति। छन्दसि चेति—महाहरो भवतीति शेषः। तथेति—बाहुल्यादेवेत्यर्थः। हरत्वमिति—महाहरस्येति शेषः। इत्यादि ज्ञेयमिति। अपेक्षणीय-ञ्चेत्तदा अपरमपि भवतीति भावः ॥

८६३। तद। तदन्तो यङ-महाहरान्तश्चक्रपाणिसंज्ञो भवति। चर्करीतीति—अयं यङमहाहरान्तः। न स्यादिति—बाहुल्यादिति शेषः। वोभूयादिति—विधौ। अवोभवीदिति भूतेश्वरे। अवोभवुरिति—'सि-नारायण-वेत्तिभ्योऽन उसि'त्यनेन उसि कृते गोविन्दः। बाधत इति—'ईशान्तस्य गोविन्दोऽन उसी'ति शेषः। भुवो न गोविन्दः सिलुकीत्यस्य

रपि ग्रहणम् । 'भुवो भूव्' (४२१) ; हरत्वाद्यङ-व्यवधाने 'भूनरस्य भो' ( ४४० ) न—वौभूव। 'तद्ग्रहणं वा' इत्येके—वोभाव। तत्रापवादमाहुः—

**'सूत्रे श्तिपानुबन्धेन निर्दिष्टं यद्गणेन च ।**

**यच्चैकाज्ग्रहणं कृत्वा चत्वारि स्युर्नयङ्लुकि ।। * इति ।**

यथा श्तिपानिर्देशात् 'नराद्धन्तेर्हस्य घः' (६५५) न—जंहनीति, जंहन्ति। अत्र च घत्वमिति तस्यां (पा ८।२।६५) चिन्त्यम् । हन-हेर्जहि ( ६५१ ) इति च न स्यात् ; बाहुल्यात् जंहंहि। शेशयीति, शेशीति ; 'शीङः शेः (७००) न स्यात् । भावे—शेशीयते ; 'शेतेः शय्' ( ७०१ ) न स्यात् । चोकोटिता ; न निर्गुणत्वम् । रोरोत्ति, इट् न स्यात् । पापचिता ; अनिट्-प्रकरणे शकादिष्वप्येकाचत्वमनु-वर्तनीयम्, तत इट् स्यात् ॥ ८६३ ॥

---

पूर्वत्वाद्बाध्यता । वोभुवाञ्चकारेति—कृष्णधातुके न स्यादित्युक्तं अतोऽत्र अन्तहरे इत्यादिना गोविन्दनिषेधः । हरत्वादिति—नरं प्रति हरत्वमित्युक्त-त्वादिति शेषः । यङ व्यवधान इति—अधोक्षजस्य यङा व्यवधानम् । तद्ग्रहणमिति—धातुनिर्देशे चक्रपाणिग्रहणमित्यर्थः । वेत्येक इति—अतः पक्षेभुवो भूव् न । वोभावेति—अत्रेति । धातुनिर्देशे चक्रपाणेरपि ग्रहण-मिति यदुक्तं, तत्रापवादं बाधकं वाक्यं आहुरिति पूर्वाचार्या इति शेषः । सूत्रे इति—सूत्रे श्तिपानिर्दिष्टं यत्कार्यं, सूत्रे अनुबन्धेन निर्दिष्टं यत्कार्यं, सूत्रे गणेन निर्दिष्टं यत्कार्यं, यच्च कार्यं एकाज्ग्रहणं कृत्वा निर्दिष्टम्, एतानि चत्वारि कार्याणि यङ्लुकि न स्युरिति । निर्दिष्टत्वम् । कथितत्वम् । चत्वारि कार्याण्याह यथेति । जंहनीतीति—नरं प्रति हरत्वमित्युक्तमतो विष्णुचक्रम् । न स्यादिति—हेतुमाह बाहुल्यादिति । शीङः शे न स्यादिति—अनुबन्धेन ङरामेण निर्दिष्टत्वादिति शेषः । 'शेतेः शय्:' न स्यादिति—श्तिपानिर्देशादिति शेषः । न निर्गुणत्वमिति—इट् न स्यादिति

* श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि ।।

८६४। तन्तनेस्तसि न हरिवेणु-हरः।

८६५। हरिवेण्वन्तोद्धवस्य त्रिविक्रमः क्वौ कंसारि-वैष्णवे च।

८६६। क्त्व तु क्रमो वा।

तन्तान्त इत्यादि। जंगमीति, जङ्गन्ति ; जङ्गतः। 'उद्धवादर्शनम्' (५७५)—जंग्मति ; एकेषां पक्षे जंगमति। 'धातोर्मो नो' (२७६)—जंगन्मि, जंगन्वः। चञ्चूर्यतेरीटि वामनः निमित्तापायात् ; 'न नारायणोद्धवस्य' (७१७) इति गोविन्दनिषेधः—चञ्चूरीति। गोविन्दोऽकंसारिप्रत्ययमपेक्षत इति बहिरङ्गः, त्रिविक्रमस्तु प्रत्ययं नापेक्षत इत्यन्तरङ्गः, तेन चंचूर्ति। चंखनीति, चंखन्ति ; 'जन-खन-सनाम्' (६२१) इति चंखातः। मूर्च्छा—मोमूर्च्छीति, मोमूर्ष्टि ॥ ८६४-८६६ ॥

---

च, गणेन निर्दिष्टत्वादिति शेषः। पापचितेति—शकादिष्वपि एकाचत्वानुवर्णनं अतोऽत्र एकाचत्वाभावान्नानिटत्वम्। तत इट्स्यादिति—एकाज्-ग्रहणं कृत्वा कृत इड्निशेधः, अतस्तदभाव इति ॥

८६४। तन्त। न हरिवेणुहर इति—हरिवेण्वन्तेत्यादि सूत्रे तन्विति अनुबन्धेन उरामेण निर्दिष्टत्वादिति शेषः ॥

८६५। हरि। क्वौ कंसारि वैष्णवे च परे हरिवेण्वन्तानां धातूनां उद्धवस्य त्रिविक्रमो भवति। हरिवेणोः सद्भाव एव त्रिविक्रमो भवति, अत उद्धवस्येति कृतम् ॥

८६६। क्त्व तु। क्त्व तु परे क्रमु पादविक्षेपे इत्यस्य त्रिविक्रमो वा भवति। जंगत इति—हरिवेण्वन्तेत्यादिना हरिवेणुहरः, अतस्त्रिविक्रमाभावः। जंगमतीति—तेषां मते उद्धवादर्शनस्य पाक्षिकतेति। ईटि वामन इत्यत्र हेतुमाह निमित्तापायादिति। यरामस्य निमित्तत्वम्। चञ्चूर्यतेतीत्यत्र गोविन्दः कस्मान्नभवतीत्याशङ्क्य समादधाति। गोविन्द इति—अकंसारि-प्रत्ययं कंसारिभिन्नं प्रत्ययमित्यर्थः। चञ्चूर्तीति—तिप् प्रत्ययरूपेण

८६७। राच्छवयोर्हरः क्वौ कंसारिवैष्णवे च।

मोमूर्तः। विच्छ—वेविच्छीति, वेवेष्टि ; वेवेश्मि ; वेविछ्वः। दिवु—देदिवीति ॥ ८६७ ॥

**विष्णुजने तु गोविन्दः—**

८६८। यवयोर्हरो बले।

देदेति, ऊठ्-षत्वे देद्यूतः ; गोविन्दश्च—देद्योमि। 'उरामस्य वृष्णीन्द्रः' ( ६५६ ) इत्यादौ 'न तु नारायणस्य' ( ६५८ ) इति—योयवीति, योयोति। नोनवीति, नोनोति। तुर्वी—तोतूर्वीति, तोतोर्ति ; तोतूर्तः। ओहाक्—जाहाति, जाहीतः। श्तिपा-निर्देशान्न 'जहातेरिश्च' (७१४) ; 'जहेति' इत्याद्येके ॥ ८६८ ॥

८६९। दंशो नलोपो वा चक्रपाणौ।

दन्दशीति, दन्दंशीति इत्यादि। सोषुपीति, सोषोप्ति ; 'सास्वपीति' इत्याद्येके। टुओश्वि—शोशवीति, शेश्वयीति ॥ ८६९ ॥

---

नापेक्षा, किन्तु विष्णुजनरूपेणेति त्रिविक्रमस्य प्रत्ययानपेक्षित्वम्। मूर्च्छेति मूर्च्छा मोहसमुच्छ्राययो। मोमूर्ष्टीति—छ-शो राजेत्यादिना छस्य षः ॥

८६७। राच्छ। क्वौ कंसारिवैष्णवे च परे रादुत्तरयोश्छराम-वरामयोर्हरो भवति। वेवेश्मीति—छस्य शो, वस्य ऊठ्, हरिवेणावित्या-दिना छस्य शः। विष्णुजने तु गौविन्द इति—नारायणोद्धवस्य कृष्ण-धातुकसर्वेश्वर एव गोविन्द निषेधात् ॥

८६८। यव। बले परे यवयो र्हरोभवति। देद्यूत इति—सर्व-विधिभ्यो हरो, हरात् सर्वेश्वरादेशो विधिर्बलवानिति न्यायेन, 'उत्सर्गा-पवादयोरपवाद' इति न्यायेन च वस्य ऊठ् न तु हरः। तुर्वीति—उर्वी तुर्वी धुर्वी हिंसार्थाः। तोतूर्वीतीति—'धातोरवप्रागित्यादिना त्रिविक्रमः'। तोतूर्ति तोतूर्त इति—'यवयो र्हरो बले' इत्यनेन वस्य हरः। जाहेतीति—चक्रपाणेस्तु वेति इट्। 'अद्वयमिद्वये ए' इति एरामः। जाहीत इति—दामोदरं विनेत्यादिना ईराम। जहेतीत्याद्येक इति—तन्मते नरस्य त्रिविक्रमो न भवतीति ॥

८७०। श्या-श्वि-व्या-ज्या-ह्वां सङ्कर्षणस्य त्रिविक्रमः, वेञस्तु क्विपि।

शोशूतः ॥ ८७० ॥

८७१। ऋरामान्त-तदुद्धवयोर्नरतो रिरीरो विष्णवश्चक्रपाणौ।

महाहरत्वान्न रीरामादेश इरुरौ च। डुकृञ् करणे—'नरस्य गोविन्दः यङि' (८४३), 'नरविष्णुजनानामादिः शिष्यते' (४५४), 'विष्णुरहित-' (८४३) इति विशेषणान्नात्र त्रिविक्रमः—चरिकरीति, चरीकरीति, चर्करीति इत्यादि। ऋ गतौ—अर्यर्ति, अर्यर्ति, अरर्ति, अर्य्यरीति, अर्य्यरीति अररीति ; अर्यृतः ; अर्य्रति इत्यादि। वरि-

---

८६९। दंशो। दन्श दंशन इत्यस्य चक्रपाणौ नलोपो वा भवति। नलोप इत्यत्र न हर इति वा पाठः। नित्यं नलोप इति क्रमदीश्वरादयः। सास्वपीतीत्याद्येक इति—तन्मते सङ्कणाभावः। शोशवीतीति—सङ्कर्षणं प्रति हरत्वात् श्वेः सङ्कर्षणो वा यङधोक्षजयोरित्यनेन सङ्कर्षणः ॥

८७०। श्या-श्वि। श्येङ गतौ, टु ओ श्वि गतिवृद्धचोः, व्येञ सम्बरणे, ज्या वयोहानौ, ह्वेञ स्पर्द्धायाम् ; इत्येतेषां सङ्कर्षणस्य त्रिविक्रमो भवति। मित्रहूरित्युदाहरणमपि कृत्प्रकरणे वक्ष्यते। श्यैङ धातोः सङ्कर्षणविधानं कृत्प्रकरणे वक्ष्यते। वेञ—वेञ तन्तु सन्ताने इत्यस्य तु सङ्कर्षणस्य क्विपि परे त्रिविक्रमो भवति। ऊरित्युदाहरणं कृत्प्रकरणे वक्ष्यते ॥

८७१। ऋरा। ऋरामान्तस्य ऋरामोद्धवस्य च नरत उत्तरे चक्रपाणौ रिरीरो विष्णवो भवन्ति। न रीरामादेश इरुरौचेति—ऋरामस्येति शेषः। रीरामस्य रीः क्ययङो रित्यनेन रीरामादेशः स्यात्। वामनस्य त्रिविक्रमे कृते इरुरौ स्याताम्। नरस्य गोविन्द इति—नरं प्रति हरत्वमित्युक्तत्वात्। अर्यर्तीति—रि विष्णौ री विष्णौ च। अरर्तीति—रविष्णौ। अर्यरीति, अररीतीति—ईट्पक्षे। अर्यृतः अर्य्-

वृतीति, वरीवृतीति, वर्वति इत्यादि। कॄ विक्षेपे—'विष्णुरहिता-रामान्तस्य तु त्रिविक्रमः' (८४३)—चाकरीति। पॄ पालनपूरणयोः—पापरीति। उद्धवस्य गोविन्दस्थानीयस्य वृष्णीन्द्रस्यापि निषेधः—मरिमृजीति, मरिमार्ष्टि ॥ ८७१ ॥

८७२। न नृत्यादेरीट्।

नरिनर्ति, नरिनर्त्सि ; सर्वत्रैवेटि कार्ये रामधातुकपरत्वं ज्ञेयम्, तेन 'नृतीकृत्यादे'-(७२७) इति नेट्। वृञ् वरणे—वरिवर्ति। तृणु—ऋद्वये ररामांशसद्भावाद्रषाभ्यां टुस्तवर्गजः ; 'नवर्जतवर्गस्थस्य' (४९३) इत्यादिना भूतपूर्वस्य च मूर्धन्यस्यापायात्—तरितर्न्ति ; 'हरि-वेण्वन्तोद्धवस्य' (८६५) इत्यादि—तरितृन्तः ॥ ८७२ ॥

८७३। णटाभ्यां सः षः।

तरितर्ण्षि। घट—जाघट्षि ॥ ८७३ ॥

---

तीति—रिविष्णौ रीविष्णौ च। रविष्णौतु अर्र्हतः आरतीति। वरिवृती-तीति—वृतु वर्तने न नारायणोद्धवस्येत्यादिना गोविन्दनिषेधः। चाकरी-तीति—महाहरत्वान्न इर्। पापरीतीति—महाहरत्वान्न उर्। मरि-मृजीतीत्यत्र मृजेर्वृष्णीन्द्र इत्यनेन वृष्णीन्द्रः कस्मान्न भवतीत्याशङ्क्य समा-दधाति उद्धवस्येति। गोविन्दस्थानीयस्येति—वृष्णीन्द्रस्य विशेषणम्। गोविन्दस्य निषिद्धत्वात् गोविन्दस्थानीयस्य वृष्णीन्द्रस्यापि निषेध इति ॥

८७२। न नृ। नृत्यादेरुत्तरे इट् न भवति। ननु नरिनर्त्सीत्यत्र नृतिकृत्यादेरिड् वा से सिं विनेत्यनेन इट् कस्मान्न भवतीति चेत्तत्राह सर्वत्रैवेति। कार्ये कर्तव्ये। तृण्णिति, रषाभ्यां टुस्तवर्गज इत्यनेन भूत-पूर्वस्येति यद्वक्ष्यते तदेव दृढीकृतम्। भूतपूर्वस्येति पूर्वं भूतस्येत्यर्थः। मूर्धण्यस्येति—मूर्धण्योऽत्र टवर्गान्तः। नवर्जेत्यादि निषेधसूत्रमेव मूर्धण्या-पाये हेतुरतएवोक्तं नवर्जतवर्गस्थस्येत्यादिनेति ॥

८७३। णटा। नराम टरामाभ्यामुत्तरः सरामः षरामो भवति। घटेति—घट चेष्टायाम् ॥

८७४। तथा केवलेन सरामेण व्यवधानेऽपि षत्वमिष्यते, सरामस्य च तस्य।

पिसृ—पेपेष्षि। 'केवलेन' इति किम् ? नेनिंस्सि। 'ग्रहि-ज्या-' (६३०)—जरिगृहीति। सङ्कर्षण-ढत्व-धत्व-टवर्गत्व-गोविन्द-ढलोपाः (६३०, २९२, ४६८, २८२, ३९५, ५४२, )—जरिगर्ढि। 'न सङ्कर्षणः' इत्येके—जाग्रहीति। ढत्व-धत्व-टवर्गत्व-ढलोप-त्रिविक्रमाः (२९२, ४६८, ५००, ५४२ )—जाग्राढ़ि। आदौ सङ्कर्षणः ( ६३० ), ततो द्विर्वचनम् (४३४), रिरीरः,—जरिगृढ़ः, जरिगृहति। गृधु अभिकाङ्क्षायाम्—जरिगृधीति, जरिगर्द्धि, अजरिगृधीत्; गोविन्दः ( ३९५ )'दिस्योर्हरः' ( ५४७ ), अत्र गोविन्द-रिरीर-हरिघोषत्वम् ( ३९५, ८७१, २६१ ), हरिकमल-हरिगदे

---

८७४। तथा। व्यक्तार्थमिदम्। तस्येत्यनेन येन व्यवधाने षत्वं तदा कर्षणम्। पिसृ इति—पिसृ गतौ भ्वादिः परपदी। नेनिंस्सीति—णिसि चुम्बने, अदादिरात्मपदी। एते नृत्यादयः आकृतिगणत्वात्। सङ्कर्षणेति—टवर्गत्वं ढत्वम्। जाग्रहीतीति—ऋरामोद्धवत्वाभावात् न रिरीरो विष्णवः। जाग्राढीति इड़भावपक्षे। जरिगृढ इति—ऋरामस्य नेत्यनेन त्रिविक्रमनिषेधः। जरिगृहतीति—नारायणादन्तो नस्य हर इत्यनेन नस्य हरः। जरिगृधीतीति—न नारायणोद्धवस्येत्यादिना गोविन्द-निषेधः; गोविन्दावित्यत्र धातुपदेन धात्ववयवोऽपि गृह्यत इत्युक्तम्। हरि-कमलहरिगदे इति—अजरिगृद्धामित्यत्रापि हरिगदेति ज्ञेयम्। अजरिघर्त इत्यत्र रात्सस्यैवेति नियमात् न सत्सङ्गान्तहरः। अजरिगृधुरिति—सि नारायणेत्यादिना अन् उस्। अजरिधर्तइति—रोरभाव पक्षे। अमिति—ऋरामोद्धवसहजानिटोऽम् वा वैष्णवादाव कपिले इत्यनेनेति शेषः। अमभाव-पक्षे दरिदर्ष्टीति। किञ्चेति—स्यति-स्तोभति-स्यन्दति-स्फुरति-स्कभ्ना-तयोऽपीत्यस्यापि श्तिवन्ता ज्ञेया इत्यनेनान्वयः, श्तिपा निर्दिष्टत्वात्, चक्रपाणौ यथा सुवतेः षत्वं न भवति तथास्यति स्तोभतीत्यादिनामपि न भवतीति। सङ्कर्षणे चेति—श्यैङः सङ्कर्षणो विष्णुनिष्ठायाम् 'श्वेः सङ्क-

( २५३, ६६ )—अजरिघर्त, अजरिगृद्धाम्, अजरिगृधुः; 'दधोरुः सिपि वा' ( ६६६ ), 'रो रे लोप्यः पूर्वश्च' ( १४७ )—अजरिघाः, अजरिघर्त इत्यादि। दरिद्रशीति; अम् (५९७)—दरिद्रष्टि इत्यादि। किञ्च, षत्वे सुवत्यादिवत् स्यति-स्तोभति-स्यन्दति-स्फुरति-स्कभ्नातयोऽपि सङ्कर्षणे च श्यादयोऽपि श्तिवन्ता ज्ञेयाः। नेर्णत्वे हन्त्यादिवत् स्यति-याति-वपति-वहति-शाम्यतिचिनोनि-देग्धयः। इति चक्रपाणयो बहुलमन्येऽपि संग्राह्याः ॥ ८७४ ॥

इति चक्रपाणयः।

## अथ विभुः

८७५। नामविष्णुपदात् प्रत्ययः।

८७६। विभुरयम्।

८७७। यमिच्छति तस्मात् क्यन्।

'क्यच्' पा (३।१।८, ७।४।३३)। पुत्रमिच्छतीति क्यनि 'उक्तार्थनामप्रयोगः' इति न्यायेनेच्छतेरप्रयोगः। पुत्रं क्यन् कनावितौ;

---

र्षणो वा यङधोक्षजयो'रित्यादिना प्राप्ते सङ्कर्षणे। श्यादयोऽपीति—श्याश्वि व्याज्याह्वाः ज्ञेयाः। तर्हि कथं श्विधातोः शोशवीतीत्यादि रूपमुक्तं तदेतच्चिन्त्यमिति चेत्तत्रैवं वाच्यं शोशवीतीत्यत्र यङ विषये यत् सङ्कर्षणं तस्यैवोदाहरणं, न तु चक्रपाणौ सति प्राप्तसङ्कर्षणस्योदाहरणमिति। नेर्णत्व इति—श्तिपानिर्दिष्टत्वात् चक्रपाणौ हन्त्यादिषु परेषु यथा नेर्णत्वं न भवति; तथा स्यत्यादिष्वपि न भवतीति। चक्रेति, बहुलमिति क्रियाविशेषणम् ॥

॥ * ॥ इति चक्रपाणयः ॥ * ॥

८७५। नाम। नाम्ना सिद्धं विष्णुपदं नामविष्णुपदं, तस्मादुत्तरे प्रत्ययो भवति ॥

८७६। विभु। विभुनामा अधिकार इत्यर्थः ॥

पुनः क्यनादिना सहैकपदत्वं भविष्यति, पुनर्विष्णुभक्तिसिद्धत्वात् ; ततश्च—

८७८। अन्तरङ्गस्वादेर्महाहर एकपदत्वारम्भे।

**पुत्र-य इति स्थिते—**

८७९। अद्वयस्य ई क्यनि।

पुत्रीय ; धातुसंज्ञा, तिप्-शवादि—पुत्रीयति। एकवचनमतन्त्रम्। पुत्राविच्छति—पुत्रीयति इत्यादि। आत्मार्थैवेच्छा गम्यते। अन्यपदसापेक्षतायां न स्यात्—भ्रातुः पुत्रमिच्छति, महान्तं पुत्रमिच्छति इति ; भ्रातुष्पुत्रीयतीति तु समस्तत्वात्। 'पुत्रीयति श्रीकृष्णम्' इति तु पश्चाद्योगेन 'लक्ष्मणं सा वृषस्यन्ती' इति भट्टिवत् (४।३०)। 'उपेन्द्रारस्त्रिविक्रमः' ( ५६५ ) इत्यादि—प्रर्षभीयति,

---

८७७। यमि। व्यक्तार्थमेतत्। उक्तार्थानामिति—उक्तोऽर्थो येषामिति विग्रहः। इच्छतेरप्रयोग इति—इच्छार्थस्य क्यनैवोक्तत्वात्। पुनः क्यनादिनेति—क्यनादिना सह पुनरितित्वर्थः पुनःशब्दः, नतु पुनर्वारार्थः॥

८७८। अन्त। एकपदत्वस्यारम्भे अन्तरङ्गस्वादेर्महाहरो भवति। अन्तरङ्गेति विशेषणं किमर्थमुक्तमिति न निश्चितमिति चेत् केनाप्युच्यते, तदैवं वाच्यं, प्रकृताश्रितं प्रकृतावपि पूर्वपूर्वमन्तरङ्गमिति न्यायेन पूर्वसिद्धस्वादेरन्तरङ्गत्वादिति विशेषणमुक्तं पुनर्विष्णुभक्तिप्राप्तेरिति॥

८७९। अद्वय। क्यनि परे अद्वयस्य स्थाने ई भवति। एकेति—अतन्त्रं न नियतमित्यर्थः। आत्मार्थैवेच्छेति—इच्छा आत्मार्थैव गम्यत इति इच्छाया परार्थत्वे क्यन् न भवतीति भावः। भ्रातुः पुत्रमिच्छति, महान्तं पुत्रमिच्छतीति—अत्रापि आत्मार्था एवेच्छा, किन्त्वन्यपदसापेक्षत्वान्न क्यन्। अन्यपदसापेक्षत्वमत्र विवक्षाधीनं नत्वावश्यकमिति ज्ञेयम्। भ्रातुष्पुत्रीयतीति—भ्रातुष्पुत्रशब्दः समस्तः, 'ऋरामाद्विद्यायोनिसम्बन्ध' इत्यनेन षष्ठ्या महाहरनिषेधः। ननु पुत्रीयधातोरकर्मकत्वात् पुत्रीयति श्रीकृष्णमिति कथं भवतीति ? चेत्तत्राह पुत्रीयतीति। वृषस्यन्तीति—'अश्वस्य-

प्रार्षभीयति ; उपल्कारीयति, उपाल्कारीयति। नेह—उपऋकारीयति उपर्कारीयति। 'उपेन्द्राद्वयहरः' (४६१) इत्यादि—उपेकीयति, उपैकीयति ॥ ८७९ ॥

**एवं गामिच्छति, गो-य इति स्थिते—**

८८०। ओद्वयस्यावावौ प्रत्यय-ये।

८८१। धातुसम्बन्धिनस्तु नान्यनिमित्तस्य।

गव्यति। नावमिच्छति—नाव्यति। धातोः कृति—लव्यम्, भाव्यम्। अन्यनिमित्तत्वान्नेह—आ-ऊयते ओयते, औयत ॥८८०-८८१

८८२। युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्वे।

समासस्य परपदमुत्तरपदम्। त्वामिच्छति—त्वद्यति। मामिच्छति—मद्यति। द्वित्व-बहुत्वयोः—युष्मद्यति, अस्मद्यति। 'न

---

वृषस्यौ मैथुनेच्छायामि'ति वक्ष्यते। वृषशब्दोऽत्र शुक्लपुरुषवचनः। पुंमात्रवाचित्वेतु अर्थासङ्गतिः स्यात्। प्रर्षभीयतीति—ऋषभो वृषभो वृष इत्यमरः। नेहेति—न तु त्रिविक्रमभवस्येत्युक्तत्वात्॥

८८०। ओ। प्रत्यये परे ओद्वयस्य स्थाने अवावौ भवतः। ओद्वयस्येति—सामान्यत उक्त्वा विशेषमाह॥

८८१। धातो। अथवा प्रतिषेधसूत्रमेतत् अन्यनिमित्तस्य धातुसम्बन्धिन ओद्वयस्य तु अवावौ न भवत इत्यर्थः। अन्यनिमित्तस्येति—प्रत्ययात् अन्यन्निमित्तं यस्येति विग्रहः। नाव्यतीति नावमिच्छतीत्यर्थः। लव्यमिति—लूञ् छेदने सर्वेश्वरान्तधातोर्यदित्यनेन यत्। भाव्यमिति—भू सत्तायाम्, 'उद्वयात् ण्यदावश्यक' इत्यनेन ण्यत्। अत्रावश्यकत्वस्य गम्यत्वं वैष्णवैः शुचिभिर्भाव्यमिति। ओयत इति—आङ् पूर्व वेञ् तन्तुसन्ताने, ते, यक्, सङ्कर्षणः, त्रिविक्रमः। अत्र ओ-रामस्य आङपि निमित्तम्। औयतेति—भूतेश्वरे, अत्र औरामस्य अदागमोऽपि निमित्तम्॥

८८२। युष्म। उत्तरपदे प्रत्यये च परे एकत्वे वर्तमानयोर्युष्मदस्मदोः स्थाने त्वन्मदौ भवतः। युष्मद्यतीति—युवां युष्मान् वा इच्छतीत्यर्थः। अस्मद्यतीति—आवां अस्मान् वा इच्छतीत्यर्थः। न कुर्छुर्षु

कुर-छुर-नामधातूनाम्' ( २६४ ), चतुर इच्छति--चतुर्यति ; दिवमिच्छति—दिव्यति। एवं गिर्यति, धुर्यति। तथा च भाष्यम्—'असुपि' इत्येव, तच्चेह षष्ठ्या विपरिणम्यते, तेन सुव्धातोर्न भवतीति। वामन एव खलु काशिका-भाषावृत्ति-कातन्त्र-रसवती-सुपद्मादिषु मन्यते। प्रक्रिया-प्रसादौ ( पा ७।४।३३ ) तु चिन्त्यौ। 'ऋरामस्य री क्य-यङोः' (८५०)—कर्त्रीयति ॥ ८८२ ॥

८८३। नान्तमेव विष्णुपदं क्ये।

राजानमिच्छति—विष्णुपदत्वान्न-लोपादिः, नरामादिहरो नासिद्धस्तुगादिविधेरन्यत्र ; राजीयति। अर्हयति। कंसहभ्यामित्यत्र त्वसिद्धस्ततः पृथावपि क्विपि न तुक् ; नियमान्नेह विष्णुपदत्वम्—वाच्यति। 'विष्णुजनात्' (८४६) इत्यदौ 'क्यस्य तु वा' (८४७)—समिधिता, समिध्यिता ॥ ८८३ ॥

---

नामधातूनामिति त्रिविक्रमनिषेधविधानसूत्रम्। दिवमिति—स्वर्गमित्यर्थः। गिर्यतीति—गिरं वाचं इच्छतीत्यर्थः। धुर्यतीति—धुरं भारमिच्छतीत्यर्थः। त्रिविक्रमाभावमुक्त्वा भाष्यादिमतदर्शनेन स्वमतं द्रढ़यति, खण्डयति च, तथाच भाष्यमिति। असुपीत्येवेति—असुपीत्यनुवर्तते इत्यर्थः। ततः असुपीति, षष्ठ्या विपरिणम्यत इति—षष्ठ्यन्तत्वेन परिकल्प्यत इत्यर्थः। सुव्धातोरिति—नामधातोरित्यर्थः। वामन इति—उक्तं कर्म। प्रक्रियेति—प्रक्रिया-प्रसादमते त्रिविक्रमो भवतीति चिन्त्यत्वमुक्तम् ॥

८८३। नान्त। क्ये परे नान्तमेव विष्णुपदं भवति। नान्तस्यैव विष्णुपदत्वं मन्यते नान्यस्येत्यर्थः। न लोपादिरित्यादिशब्देन विष्णुसर्गादेर्ग्रहणम्। ननु राजीयतीत्यत्र क्वचिदन्तरङ्ग इत्यादि न्यायेन नरामहरस्य असिद्धत्वं ततएव ई विधानाभावश्च भवतु इति चेत् तत्राह नरामादीति। तुगादिविधेरन्यत्र नरामादिहरोऽसिद्धो न, भवतीति नासिद्धत्वम्। तुगादिविधौ तु असिद्धत्वमिति। अर्हयतीति—अहरिच्छतीति 'अह्नो विष्णुसर्गो विष्णुपदान्ते' इत्यनेन विष्णुसर्गः, 'अह्नो विष्णुसर्गस्य रः' इत्या-

८८४। मान्ताव्ययाभ्यां न क्यन्।

किमिच्छति, उच्चैरिच्छति ॥ ८८४ ॥

८८५। अशनाय बुभुक्षायाम्।

८८६। उदन्य पिपासायाम्।

८८७। धनायातिलोभे।

८८८। अश्वस्य-वृषस्यौ मैथुनेच्छायाम्।

८८९। क्षीरस्य-लवणस्यौ, दधिस्य-दध्यस्यौ, मधुस्य-मध्वस्यौ, पतिस्य-पत्यस्यावित्यादयो लालसायाम्।

अशनोदकादीनां क्यन्नन्ता निपाताः। वृषोऽत्र पुंमात्रो वृषभश्च; "वृषस्यन्ती तु कामुकी"— इत्यमरः (२।६।९)। दधिस्यादयस्तु दन्त्य-मध्या एव। बुभुक्षयाशनमिच्छति—अशनायति इत्यादि ॥८८५-८८९॥

---

दिना विष्णुसर्गस्य रः। तुगादिविधेरन्यत्रेति यदुक्तं तत् फलमाह कंस-हभ्यामिति। असिद्ध इति—नरामहर इति शेषः। न तुगिति—अन्यथा 'वामनात्तुक् पृथा'वित्यनेन तुक् स्यात्। वाच्यतीति—विष्णुपदत्वाभावात् न चस्य कः। समिधितेति—समित् काष्ठम् ॥

८८४। मान्ता। सुगमम् ॥

८८५। अश। बुभुक्षायां गम्यमानायाम्। अशनशब्दस्य अशनायेति क्यन्नन्तो निपातो भवति। बुभुक्षा भोजनेच्छा ॥

८८६। उदन्य। पिपासायामर्थे उदकशब्दस्य उदन्येति क्यन्नन्तो निपातो भवति। पिपासा पानेच्छा ॥

८८७। धना। अतिलोभेऽर्थे धनशब्दस्य धनायेति क्यन्नन्तो निपातः ॥

८८८। अश्वस्य। मैथुनेच्छायामर्थे अश्व-वृषशब्दयोः अश्वस्य-वृषस्यौ क्यन्नन्तौ निपातौ ॥

८८९। क्षीरस्य। लालसायामर्थे क्षीरलवणादीनां क्षीरस्यलवण-स्यादयः क्यन्नन्तानिपाताः। लालसा महानभिलाषः। अश्वशब्दः चतुष्पाद्-

८६०। काम्यश्च पूर्वक्यन्नर्थे।

उच्चारणार्थत्वाद्यभावान्न कित्। धात्वधिकार एवेटो रामधातुकत्वस्य च विधानादिड़ादिप्राप्तौ द्व्यङ्गवैकल्यम्। पुत्रकाम्यति कृष्णम्॥ ८६०॥

८६१। यमिवाचरति यस्मिन्निव च तस्मात् क्यन्।

पुत्रमिवाचरति—पुत्रीयति रामम्, पुत्रवन्मन्यत इत्यर्थः। वृन्दावने इवाचरति—वृन्दावनीयति निजोपवने, वृन्दावने यथा व्यवहरति तथेत्यर्थः॥ ८६१॥

८६२। ङौ नलोपनिषेधः क्ये।

राजनीवाचरति—राजन्यति गोपाले। एवं पथिन्यति गृहे॥८६२॥

---

जातिविशेषवचनः। पुंजातिवचन इति केचित्। वृषभश्चेति—वृषभो-बलीवर्दः। पुंमात्र इति—यदुक्तं तत्रामरं प्रमाणयति वृषस्यन्तात्विति। इत्यादीति—पिपासया उदकमिच्छति उदन्यति; अतिलोभेन धनमिच्छति धनायति। मैथुनेच्छया अश्वमिच्छति अश्वस्यति, एवं वृषष्यति। लालसया क्षीरमिच्छति क्षीरस्यति एवं लवणस्यतीत्यादयः॥

८६०। काम्यश्च। पूर्वक्यन्नर्थे काम्यश्च भवति। पूर्वक्यन्नर्थ इति—पूर्वशब्दप्रयोगात् वक्ष्यमाणक्यन्नर्थे न भवतीति। उच्चारणार्थत्वाद्य-भावादिति—करामस्येति शेषः। आदिशब्देन कपिलत्वार्थत्वस्य ग्रहणम्। पुत्रकाम्यतीत्यत्र काम्ये परे इट् कथं न भवतीति? आशङ्काभासं विधाय समादधाति धात्वधिकार एवेति। इटो रामधातुकस्य च धात्वधिकार एव विधानम्, अतोऽत्र धातुत्वाभावात् रामधातुकपरत्वाभावाच्च न इट्; एतदेवोक्तं इड़ादिप्राप्तौ द्व्यङ्गवैकल्यमिति—वैकल्यमत्राभावः। पुत्र-काम्यतीति—पुत्रमिच्छतीत्यर्थः। कृष्णमिति—पश्चाद्योगेनेति ज्ञेयम्॥

८६१। यमिवा। व्यक्तार्थमेतत्। पुत्रीयति राममिति—नन्दो यशोदा वेति शेषः। निजोपवने इति—उपवनं कृत्रिमवनम्॥

८६२। ङौ। क्ये परे ङौ सति न-लोपनिषेधो भवति। राजन्यति गोपाल इति—श्रीदामादिरिति शेषः। विहारानुसारेण कदाचित् कदाचि-

८९३। विष्णुजनादपत्यस्य यो हरः क्यव्योः।

विस्तद्धितः; गर्गस्यापत्यमित्यर्थे यरामष्टणित्तद्धितः। 'आदि-सर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे' वक्ष्यते (२०६६) इति; गार्ग्यः। ततः क्यनि यरामहरेऽरामशेषः 'अद्वयस्य ई क्यनि' (८७९)—गार्गीयति ॥ ८९३ ॥

८९४। य इवाचरति तस्मात् क्यङ्।

८९५। ओजोऽप्सरसोः सस्य च हरः।

८९६। पयसस्तु वा।

'वामनस्य' (५१३) इति सामान्यग्रहणादधातोरपि वामनस्य त्रिविक्रमः, कृष्ण इवाचरति—कृष्णायते। क्यङपि क्य इति विष्णु-पदत्वम्—श्रीदामायते ॥ ८९४-८९६ ॥

---

दियं रीतिर्भवतीति ज्ञेयम्। पथिन्यतीति—पथीवाचरतीति। ङाविति किं? राजानमिवाचरति राजीयति गोपालम् ॥

८९३। विष्णु। क्यव्योः परयोः विष्णुजनादुत्तरस्य अपत्यस्य अपत्यार्थे विहितस्य यो हरो भवति। य इति षष्ठ्यन्तम्। यरामष्टणि-दिति—'गर्गादेर्माधव-यरामः' इत्यनेनेति शेषः। गार्गीयतीति—'अद्वयस्य ई क्यनी'त्यनेन ई। विष्णुजनादिति किं? सौपर्णेयमिच्छति सौपर्णेयीयति। सौपर्णेय इति—'लक्ष्मीशुभ्रादिभ्यां माधव-ढो बहुलम्'इत्यनेन अपत्यार्थे माधवढः। टणिन्माधवढत्रयः। अपत्यस्येति किं? गव्यमिच्छति गव्यीयति। 'गव्यपयस्ये। साधुनी' इति तद्धितप्रकरणे वक्ष्यते ॥

८९४। य इवा। व्यक्तार्थमेतत् ॥

८९५। ओजो। इदमपि व्यक्तार्थम् ॥

८९६। पय। पयसस्तु सस्य हरो वा भवति। त्रिविक्रम इति—'वामनस्य त्रिविक्रमः कृत्-कृष्णधातुकेतर य-प्रत्यये' इत्यनेन। कृष्णायत इति—गोपीति शेषः। दुष्टकालिय तिष्ठाद्य कृष्णोऽहमिति चापरा। बाहुमास्फोटच कृष्णस्य लीलासर्वस्वमाददे इति विष्णुपुराणात्। विष्णु-

८९७। वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् क्यङ्मानि-नोर्णौ च।

गोपीव आचरति—गोपायते पुलिन्दः। एतादिशब्दानां लक्ष्म्या-मेण्यादयः साधयिष्यन्ते (२२९४) ; एणीवाचरति—एतायते। एवं श्येनी—श्येतायते। संज्ञापूरणिकरामोद्धवादीनां समासे (१९४६ संख्यक-सूत्रे) यो निषेधो वक्ष्यते, स इहाप्यायाति। तत्राख्यातकृतोरप्युपादा-नात्,—रुक्मिणीयते, पञ्चमीयते, गोपिकायते। ओज इति ओजायते, अप्सरायते ; पयायते, पयस्यते॥ ८९७॥

८९८। क्वचित् क्यङः क्विप्।

ततः क्यङवन्नान्तमेव विष्णुपदम् ; कपावितौ॥ ८९८॥

---

पदत्वमिति—'नान्तमेव विष्णुपदं क्ये' इत्यनेन, ततो नलोपादिरिति भावः॥

८९७। वाच्य। क्यङि मानिनि णौ च परे वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद्भवति। एणी कर्बुरवर्णा। निषेध इति—पुरुषोत्तमवत्तस्येति शेषः। स निषेधः। तत्र समासे। रुक्मिणीयत इति—रुक्मिणीति श्रीकृष्णस्य पत्नीविशेषस्य संज्ञा। पञ्चमीयत इति—पञ्चमीति 'नान्तादसंख्यादे र्मयट्' इत्यनेन तस्य पूरणेऽर्थे केशवमयट्, टित् केशवः, टित्वादीप्। गोपिकायत इति—समासेन क प्रत्ययान्तस्य निषेधो वक्ष्यते अतोऽत्रापि निषेधः। ओजायत इति—'ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये' इति नानार्थवर्गः। निम्नगारय इति नदीवेग इत्यर्थः। अप्सरायत इति—अप्सरः शब्द स्वर्वेश्यावाचकः। क्यङः सन्निहितत्वात् अन्तस्य सस्य हरः। नतु परामयुक्तसरामस्य। पयायते, पयस्यते इति—पयः क्षीरं पयोऽम्बुचेति नानार्थवर्गः॥

८९८। क्वचित्। क्वचित् क्यङः स्थाने क्विप् भवति। तत इति—क्यङः स्थाने क्विप् भवतीति। क्यङीव क्विपि नान्तमेव विष्णु-पदं भवतीति॥

८९९। केवलस्य प्रत्ययवेर्हरः।

कृष्णति गोपी। विधवति तन्मुखम्। भूरिवाचरति, गोधुगिवाचरति—भुवति, गोदुहति ; अत्र गोविन्दाभावः, सहजधात्ववस्थायां कृतस्य क्विपो यत् कंसारित्वं, तस्यान्तर्विद्यमानत्वात् ; विधवति इत्यत्र तु धात्वधिकारसामर्थ्येन नाम्नो विहितस्य कितः कंसारित्वाभावात्। भूतेशे—अविधावीत् ; 'अविधवीत्, इत्येके। नान्तस्य तु विष्णुपदत्वम्—राजति ; 'राजनति' इति कश्चित्, तत्तु दुर्गादीनामसम्मतम् ; क्यङस्थानीयस्य तदीयविप्रत्ययस्यैव लोपः क्रियते, न तु क्विप् क्रियते ; ततः पदकार्यत्वमस्त्येव, न चात्र दीर्घः। भुवाञ्चकार इति प्रत्ययान्तत्वादामिति केचित्॥ ८९९॥

९००। गल्भादेरात्मपदञ्च।

गल्भते, क्लीबते ; अत्र च विष्णुपदत्वभावात् 'अरामहर एअयोः' ( ३९७ )॥ ९००॥

---

८९९। केव। व्यक्तार्थमेतत्। कृष्णतीति—कृष्ण इवाचरतीत्यर्थः। विधवतीति—विधुरिवाचरतीति विधुश्चन्द्रः। तन्मुखं गोपीमुखम्। भूरिवेति—भूः पृथ्वी। गोधुगिवेति—'गोपो गोपालगोसंख्यागोधुगाभीरवल्लभा' इत्यमरः। गोविन्दाभाव इत्यत्र हेतुमाह सहजेति। तस्य कंसारित्वस्य विधवतीत्य एत्विति। धात्वधिकारसामर्थ्यादेव अस्य क्विपः कंसारित्वाभावः, अतो गोविन्दो भवत्येवेति। अविधावीदिति—ईशान्तस्येत्यादिना वृष्णीन्द्रः। इत्येक इति तन्मते वृष्णीन्द्राभावः। नान्तस्य तु विष्णुपदत्वमिति—पूर्वोक्तस्यैवोदाहरणदर्शनार्थमुल्लेखः। असम्मतत्वमेव विवृणोति क्यङस्थानीयस्येति—क्यङप्रतिरूपस्येत्यर्थः। तदीयेति—तेषां दुर्गादीनामयमिति तदीयः, तदीयश्चासौ आयिप्रत्ययश्चेति, तस्य लोपः क्रियते इति, दुर्गादिभिरेवेति शेषः। केचिदिति—अस्माकन्तु अनेकसर्वेश्वरत्वाभावान्नाम्॥

९००। गल्भा। गल्भादेः क्यङः स्थाने क्विप् भवति, आत्मपदञ्च। क्विप् पूर्वेणैव सिद्धयति, आत्मपदार्थं वचनम्। गल्भत इति—

९०१। भृशादिभ्यः क्यङ्, अन्तविष्णुजनहरश्चा-भूततद्भावे।

अभृशो भृशो भवति—भृशायते। शश्वत्—शश्वायते। उन्मनायते, सुमनायते, दुर्मनायते॥ ९०१॥

९०२। लोहितादेरुभयपदत्वञ्च।

लोहितायति, लोहितायते; चर्मायति, चर्मायते; 'क्विप च' इत्येके—लोहितति, चर्मति इति; प्रक्रियायामपि (पा १।३।९०)। तद्धिते तु भृशीस्यात्, लोहितीस्यात् इत्यपि॥ ९०२॥

९०३। आच्प्रत्ययान्ताच्च।

पटपटायति, पटपटायते, पटपटाति; पटपटीस्यात् इति च पूर्ववत्॥ ९०३॥

---

गल्भः प्रगल्भः, गल्भधातो र्धाष्टचार्थत्वात्। क्लीबत इति—क्लीबं नपुंसकम्। विष्णुपदत्वाभावादिति—नान्तत्वाभावादिति शेषः॥

९०१। भृशा। अभूतस्य तस्य भवनं अभूततद्भावः। तस्मिन्नर्थे भृशादिभ्य उत्तरे क्यङ भवति, अन्तविष्णुजनहरश्च। भृशायत इति—भृशशब्दोऽतिशयवचनः, ब्रह्मलिङ्गः, धर्मिवाचित्वात् पुरुषोत्तमत्वम्। शश्वदिति—'अभीक्ष्णं शश्वदनारते' इत्यव्ययवर्गः। शश्वायत इति—अशश्वत् शश्वद्भवतीति। उन्मनायत इति—उन्मनः शब्दः सोत्कण्ठवचनः। 'स्यादुत्क उन्मना' इत्यमरः। सुमनायत इति—सुमनाः शोभनचित्तः। दुर्मनायत इति—दुर्मना विमना; 'दुर्मना विमना अन्तर्मनाः' इत्यमरः॥

९०२। लोहि। अभूततद्भावेऽर्थे लोहितादेरुत्तरे क्यङ, अन्तविष्णुजनहरः, उभयपदञ्च भवति। लोहितायतीति—'लोहितो रोहितो रक्तः' इत्यमरः। चर्मायतीति—चर्मप्रसिद्धम्। इत्येक इति—तन्मते लोहितति चर्मतीति। भृशीस्यादिति—'अभूततद्भावे कृभ्वस्तियोगे वि' इति विः सर्व इत्, 'अद्वयस्य वा वीराम' इति अरामस्येरामः॥

९०४। कष्ट-सत्र-कक्ष-कृच्छ्र-गहनेभ्यो गम्यकर्मणो विशेषणेभ्यस्तादर्थ्यचतुर्थ्यन्तेभ्यः क्यङ् पापवृत्तौ क्रमणे।

कर्मात्र कृतिरुच्यते। कष्टाय कर्मणे क्रामति—कष्टायते, कष्टेन कर्मणा पापं चिकीर्षतीत्यर्थः। एवं सत्रायते इत्यादि। पापवृत्तेरन्यत्र—कष्टाय तपसे क्रामति ॥ ९०४॥

९०५। रोमन्थमुद्वर्तयति अस्मिन्नर्थे क्यङ्।

एवमुत्तरेष्वपि। रोमन्थायते गौः, उद्गीर्यमाणं चर्वयतीत्यर्थः। हनुचलन एव ; नेह—कीटो रोमन्थमुद्वर्तयति ॥ ९०५॥

---

९०३। आच्। 'आच्प्रत्ययान्ताच्च' क्यङ उभयपदञ्च भवति। पटपटायतीति—आच्प्रत्ययान्तः पटपटाशब्दः, आच् प्रत्ययस्तद्धितः। पूर्ववदिति—पटपटातीति, क्विप् पक्षे। पटपटीस्यादिति—तद्धिते इति ॥

९०४। कष्ट। गम्यकर्मणो विशेषणेभ्य स्तादर्थ्यचतुर्थ्यन्तेभ्यः कष्टादिभ्य उत्तरे पापवृत्तौ क्रमणेऽर्थे क्यङ भवति। वृत्तिश्चेष्टा। कृतिरिति—कृतिः क्रिया। कष्टायेति—कष्टनिमित्तायेत्यर्थः। कष्टेनेति—कष्टनिमित्तेन इत्यर्थः। सत्रायत इति—सत्राय कर्मणे क्रामति सत्रेण कर्मणा पापं चिकीर्षतीत्यर्थः। सत्रायेति—सत्रनिमित्ताय ; सत्रेणेति—सत्रनिमित्तेन, 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि चे'ति नानार्थवर्गः। सत्रेत्यत्र मन्त्रेति क्रमदीश्वरादयः। कक्षेति—'कक्षौ तु तृणवीरुधा'विति नानार्थवर्गः, विस्तारिणीलता वीरुत्। कृच्छ्रशब्दोऽपि कष्टवाची। गहनं वनम्। 'गहनं काननं वनमि'त्यमरः। दुष्प्रवेशस्थानञ्च, 'कलिलं गहनं समे' इत्यप्यमरः। कष्टाय तपसे क्रामतीति—कष्टेन तपसा शुभं चिकीर्षतीत्यर्थः। तप एवात्र कर्म ॥

९०५। रोमः। रोमन्थमुद्वर्तयतीत्यर्थे रोमन्थादुत्तरे क्यङ भवति। उद्गीर्यमाणमिति—आत्मनैवेति शेषः। हनुचलन एवेति—चर्वण एवेत्यर्थः। 'गण्डौ कपोलौ तत्परा हनुरि'त्यमरः। कीट इति—कीटः कोशजनकः कृमिः। रोमन्थं खादितं वस्तु उद्वर्तयति सूत्ररूपेण उद्गिरतीत्यर्थः ॥

९०६। बाष्पादिकमुद्वमति।

बाष्पायते, फेनायते, मेघायते, धूमायते ॥ ९०६ ॥

९०७। शब्दादिकं करोति।

शब्दायते, वैरायते, कलहायते, अभ्रायते, मेघायते, सुदिनायते, दुर्दिनायते, लीलायते ॥ ९०७ ॥

९०८। नम आदिभ्यः परपदञ्च।

नमस्यति, वरिवस्यति, तपस्यति ॥ ९०८ ॥

९०९। सुखादिकं वेदयते।

सुखायते। आत्मनः सुखादिवेदन एवेष्टिः ; नेह—परस्य सुखं वेदयते ॥ ९०९ ॥

९१०। चित्रात् क्यन्नात्मपदं चाश्चर्ये।

चित्रीयते हेममृगः ॥ ९१० ॥

---

९०६। बाष्पा। बाष्पादिकमुद्वमतीत्यर्थे बाष्पादेरुत्तरे क्यङ भवति। उद्वमतीति—उद्गिरतीत्यर्थः। बाष्पो नेत्राम्बु, फेणधूमौ प्रसिद्धौ ॥

९०७। शब्दा। शब्दादिकं करोतीत्यर्थे शब्दादेरुत्तरे क्यङ भवति। वैरायते इति—'वैरं विरोध विद्वेष' इत्यमरः। अभ्रायते इति—अभ्रं मेघः। दुर्दिनायत इति—मेघाच्छन्नेऽह्नि दुर्दिनमित्यमरः ॥

९०८। नमः। तत्करोतीत्यर्थे नम आदिभ्य उत्तरे क्यङ भवति, परपदञ्च। नमस्यतीति—प्रणमतीत्यर्थः। वरिवस्यतीति—शुश्रूषते इत्यर्थः। तपस्यतीति—तपः करोतीत्यर्थः ॥

९०९। सुखा। सुखादिकं वेदयत इत्यर्थे सुखादेरुत्तरे क्यङ भवति। वेदयत इति—ज्ञापयतीत्यर्थः। इष्टिरिति—इष्यत इति फलितार्थः। सुख-दुःख-करुण-कृपणास्तृप्तालीकास्रसोढ़कृच्छ्राश्च। अस्रप्रतीपसहिता एकादश वै सुखादयो गदिताः ॥

९१०। चित्रात्। आश्चर्ये अर्थे चित्रादुत्तरे क्यन् भवति, आत्मपदञ्च। चित्रीयत इति—अद्वयस्य ई क्यनीति ई ; विस्मयं जनयतीत्यर्थः ॥

६११। * अनेक-सर्वेश्वरस्य संसारहरः, पृथुमृद्वादेर्ऋ रामस्य रश्च, क्षिप्रस्य क्षेपः, दीर्घस्य द्राघः, बहुलस्य वंहः, ह्रस्वस्य ह्रसः, क्षुद्रस्य क्षोदः, गुरोर्गरः, उरोर्वरः, प्रियस्य प्रः, बहोर्भूः, णीष्ठेमेयःसु।

णौ इष्ठे इमनौ ईयसौ चेत्यर्थः ॥ ६११ ॥

६१२। * भूतो युट्, तथा प्रशस्यस्य श्रज्यौ, बृद्धस्य वर्षज्यौ, स्थिरस्य स्थः, स्फिरस्य स्फः, अन्तिकस्य नेदः, वाढ़स्य साधः, स्थूलस्य स्थवः, दूरस्य दवः, यूनो यवकनौ, तृप्रस्य त्रपः, वृन्दारकस्य वृन्दः, विन्मत्वोर्हरः, अल्पस्य तु कनो वा णीष्ठेयःसु।

णौ इष्ठेयस्वोश्चेत्यर्थः ॥ ६१२ ॥

---

६११। अनेक। णीष्ठेमेयःसु परेषु अनेकसर्वेश्वरस्य संसारहरो भवति। पृथुमृद्वादेः संसारहरो भवति। ऋरामस्य स्थाने रश्च संसारहरः सिद्धयत्येव, रविधानार्थमेतत् तेष्वेवपरेषु क्षिप्रदीर्घादीनां स्थाने क्षेपद्राघादयो भवन्ति। णीष्ठेमेयःस्विति विवृणोति णाविति। इष्टादयस्तद्धिताः॥

६१२। भूतो। णीष्ठेयःसु परेषु भूत उत्तरे युड़् भवति। तेष्वेव परेषु प्रशस्यस्य स्थाने श्रज्यौ भवतः, वृद्धस्य स्थाने वर्षज्यौ भवतः, स्थिरादीनां स्थाने स्थादयो भवन्ति; युनः स्थाने यवकणौ भवतः। तृप्रवृन्दारकयोः स्थाने त्रपवृन्दौ भवतः, विन्मत्वोर्हरो भवति, अल्पस्य तु स्थाने कणो वा भवति॥

---

* "द्राघिष्ठ-क्षेपिष्ठ,-प्रेष्ठ-वरिष्ठ-स्थविष्ठ-वंहिष्ठाः।
अस्मन्नृपतेः पुरतः, सर्वे गर्वेण रिच्यन्ते॥
वृन्दिष्ठ-क्षोदिष्ठ,-ज्येष्ठ-गरिष्ठ-ह्रसिष्ठ-साधिष्ठाः।
अस्मन्नृपतेरग्रे, विपरीताभापरीताः स्युः॥" श्री गो° चम्पु।

९१३। श्वेताश्वतरस्य श्वेतः, गालोड़ितस्य गालोड़ः, ह्वरकस्य ह्वरो णौ।

गालोड़ितं वाचां विमर्शः, ह्वरकमपवारकम् ; तदेवं स्थिते ॥९१३॥

९१४। पुच्छाण्णिङ् उत्क्षेपादौ।

संसारहरः ; णौ पदत्वाभावः ; ण्यन्तत्वाद्धातुसंज्ञा। पुच्छमुत्क्षिपति – उत्पुच्छयते : परिक्षिपति – परिपुच्छयते ; विक्षिपति— विपुच्छयते। अत्रोपेन्द्रयोगश्च पश्चादेव क्रियते, तेन उदपुच्छयत इत्यादौ मध्यत एवादागमः ॥ ९१४ ॥

९१५। भाण्डाण्णिङ् समाचयने।

९१६। चीवरादर्जने परिधाने च।

भाण्डानि समाचिनोति—संभाण्डयते ; चीवराणि अर्जयति परिदधाति वा—चीवरयते। 'सम्मार्जने च' इति कश्चित्—संचीवरयते ॥ ९१५-९१६ ॥

---

९१३। श्वेता। णौ परे श्वेताश्वतरादीनां स्थाने श्वेतादयो भवन्ति ॥

९१४। पुच्छा। उत्क्षेपादावर्थे पुच्छादुत्तरे णिङ भवति। णौ पदत्वाभाव इति—प्रयोजनाभावादिति शेषः। उत्पुच्छयत इति—पुच्छमूर्ध्वं क्षिपतीत्यर्थः। परिक्षिपति, विक्षिपतीत्यत्रापि पुच्छमिति योज्यम्। परिपुच्छयत इति—पुच्छं परितः क्षिपतीत्यर्थः। परितः सर्वतः। पुच्छो लांगुलम् ॥

९१५। भाण्डा। समाचयनेऽर्थे भाण्डादुत्तरे णिङ भवति। समाचयनं पुञ्जीकरणम् ॥

९१६। चीव। अर्जने परिधाने च अर्थे चीवरादुत्तरे णिङ भवति। अर्जनमलब्धस्य लाभः, परिधानमाच्छादनम्। भाण्डानीति— 'स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने' इति नानार्थवर्गः। अमत्रे पात्रे। चीवराणीति—चीवरं वृक्षविशेषस्य वल्कलम् ॥

९१७। अङ्गाण्णिङ् निरसने।

निरसनमत्र छेदनम्; हस्तौ निरस्यति—हस्तयते। 'णिः' इति कश्चित्—हस्तयति ॥ ९१७ ॥

९१८। व्रताण्णिस्तन्मात्रभोजन-तन्निवृत्त्योः।

विष्णुनिवेदितमवैष्णवान्नञ्च व्रतयति, विष्णुनिवेदितमात्रं भुङ्क्ते, अवैष्णवान्नञ्च न भुङ्क्ते इत्यर्थ ॥ ९१८ ॥

९१९। वस्त्राण्णिः समाच्छादने परिधाने च।

वस्त्रेण समाच्छादयति—संवस्त्रयति; वस्त्रं परिदधाति—परिवस्त्रयति ॥ ९१९ ॥

९२०। हल्यादिभ्यो ग्रहणाद्यर्थे णिः।

हलिं गृह्णाति—हलयति; कलिं—कलयति; अजहलत्, अचकलत्; हलिर्महद्धलम्। त्वचं—त्वचयति; अरामान्तोऽपि त्वचशब्दोऽस्ति; त्वचः पश्चात् संपूर्वे—संत्वचयति। एवं वर्णयति, कृतयति; एवं तूस्तानि विनिहन्ति—वितूस्तयति; तूस्तं पापं धूलिर्वा, संहता जटा वा। पाशं विमोचयति—विपाशयति। पाशं

---

९१७। अङ्गा। निरसनेऽर्थेऽङ्गवाचकादुत्तरे णिङ भवति ॥

९१८। व्रता। तन्मात्रभोजनतन्निवृत्त्योरर्थयोर्गम्यमानयोः सतो व्रतनामपदाण्णिर्भवति। तदेव तन्मात्रं, तन्मात्रे भोजनं तन्मात्रभोजनं, तन्मात्रे निवृत्तिस्तन्निवृत्तिः, तच्च साच, तयोः। पक्षप्राप्तौ नियमनमत्र व्रतं, नियमः पाक्षिके सतीति वचनात् ॥

९१९। वस्त्रा। सुगमम्।

९२०। हल्या। ग्रहणादावर्थे हल्यादिभ्य उत्तरे णि र्भवति। कलिमित्यादावपि गृह्णातीति योज्यम्। कलिः कलहे चतुर्थयुगे च। अजहलदिति—नतु दशावतारादर्शन इति सन्निमित्तकार्यनिषेधः। त्वचमिति—त्वग्देहचर्म। 'स्त्रियान्तु त्वगसृग्धरे'त्यमरः। आरामान्तोऽपीति। तस्यापि त्वचयतीति—'त्वचो विष्णुजनान्तस्य णौ सति घटादि-

संयच्छति—संपाशयति। लोमान्यनुमार्ष्टि—अनुलोमयति। रूपं पश्यति—रूपयति ॥ ९२० ॥

९२१। तृतीयान्तविशेषात् धात्वर्थविशेषे।

वीणया उपगायति—उपवीणयति। तूलैरवकुष्णाति—अवतूलयति; एवमन्यच्च। श्लोकैरुपस्तौति—उपश्लोकयति। सेनया अभिमुखं याति, षत्वम्—अभिषेणयति। वर्मणा संनह्यति—संवर्मयति। चूर्णैरवध्वंसयति—अवचूर्णयति ॥ ९२१ ॥

९२२। तेनातिक्रमणे च।

हस्तिना अतिक्रामति—अतिहस्तयति ॥ ९२२ ॥

९२३। मुण्ड-मिश्र-श्लक्ष्ण-लवण-लघु-पटु-प्रभृतिभ्यस्तत्करोत्यर्थे पृथ्यादेरन्येभ्यश्च तत्करोति तदाचष्टे इत्यर्थे णिः।

मुण्डं करोति—मुण्डयति इत्यादि। वहधातोः कृत्क्तिः—ऊढ़िः; ऊढ़िमाचष्टे करोति वा—ऊढ़यति। अङि तु द्विर्वचनं प्रति ढत्वादीनामसिद्धत्वं तद्धितकार्यान्ते वक्तव्यम्। ततश्च ढिस्थानस्य हसङ्गितीत्यस्य द्विर्वचने जाते 'नरविष्णुजनानामादिः' (४५४), 'हस्य जः'

---

त्वाद्वामनः। त्वच इति—षष्ठ्यन्तं त्वच्शब्दस्येत्यर्थः। वर्णयति कृतयतीति ग्रहणार्थे। संहता मिलिता। पाशं रज्जुम् ॥

९२१। तृती। धात्वर्थविशेषेऽर्थे तृतीयान्तविशेषादुत्तरे णि र्भवति। अवकुष्णातीति—निष्कासयतीत्यर्थः। एवमन्यच्चेति। ततः अनुतूलयतीति। वर्मणा कवचेन संनह्यत इति—सन्नद्धो भवतीत्यर्थः ॥

९२२। तेन। तेन अतिक्रमे च अर्थे णि र्भवति ॥

९२३। मुण्ड। तत्करोतीत्यर्थे मुण्डादिभ्य उत्तरे णि र्भवति। तत्करोति तदाचष्टे इत्यर्थे पृथ्वादेरुत्तरे अन्येभ्यश्च उत्तरे णि र्भवति। मुण्डं मुण्डनम्। श्लक्ष्नेति—'स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तन्वित्यमरः। अङित्विति। ढत्वादीनां ढत्व-धत्व-टवर्गत्व-ढलोपानां

(९२६), नारायण-हस्य च पुनर्ढत्वादि, तेन औजिढ़त् इति सिध्यति। क्तान्तस्योढ़शब्दस्य तु णौ दशावतारादर्शने सति सन्निमित्तकार्याभावादौजढ़दिति काशिका ( पा ३।१।२१ )। अत्रापि औजिढ़त् इत्येके। केचित्त्वसिद्धत्वं न मन्यन्ते—औड़िढ़त् ॥ ९२३ ॥

९२४। सत्यार्थवेदेभ्य आपुक् च।

सत्यापयति। 'नामधातु-ष्टचै-ष्वष्क-ष्ठिवां सत्वनत्वनिषेधः' (५३१), षष्ठं करोति तदाचष्टे वा—षष्ठयति ; एवं णरामयति। कविं—कवयति। अधिकारस्य प्राप्तस्य गोविन्दे धातुग्रहणस्यानर्थक्यान्नाम्नोऽप्यन्तस्य वृष्णीन्द्रो नृसिंहे ॥ ९२४॥

९२५। प्रकरणे त्वत्र वृष्णीन्द्रे जात एव संसारहरो वाच्यो हलिकली विना।

---

ढिस्थानस्येति ढेः स्थानमिति विग्रहः। हसङ्गं विद्यतेऽस्य हसङ्गी, हसङ्गीचासौ तिचेति विग्रहः। द्विर्वचने जाते इति—भूतेशेति नरविष्णुजनानामितीरामसहित-हरामस्य स्थितिः। ढत्वादीत्यादिशब्देन धत्वटवर्गत्वढलोपानां ग्रहणं, किन्तु नारायणहस्येत्यनेन ढत्वस्यैवान्वयः। औजिढ़दिति। संसारहरे कृते लघुयुक्तपरत्वाभावात् दशावतारादर्शनाच्च तत्परस्येत्यादिना न त्रिविक्रमः। अतएव ढस्य हर इत्यादिनापि त्रिविक्रमो न भवति, पूर्वसिद्धस्य ढत्वादेर्द्वित्वं प्रति असिद्धं मत्वा पुनस्तस्यैव सिद्धकरणादिति ज्ञेयम्। औड़िढ़दिति—ढेर्द्विर्वचने कृते हरिघोषस्य हरिगदा ॥

९२४। सत्या। तत् करोति तदाचष्ट इत्यर्थे सत्यादिभ्य उत्तरे णिर्भवति, आपुक् च। णिः सिद्धचत्येव आपुगर्थं वचनम्। नामेति—षत्वणत्वनिषेधः। अधिकारेति गोविन्द इति—'धातोरन्तस्य गोविन्दः प्रत्यये' इति गोविन्दविधानसूत्र इत्यर्थः। आनर्थक्यादिति—नामान्तस्य वृष्णीन्द्राभावे सति गोविन्दविधानसूत्रे अधिकारप्राप्तस्य धातोरनुवर्तनमकृत्वा पुनर्धातुग्रहणमनर्थकं स्यादिति। नाम्नोऽपीति अन्यस्येत्यादिना—नाम्नोऽप्यन्तस्य वृष्णीन्द्रः ॥

ततो न तु दशावतारादर्शन इति न सन्निमित्तकार्यनिषेधः। अचीकवत्। अत्र तु वृष्णीन्द्रत्वेऽपि दशावतारत्वमेवेति। राधामाख्यत्—अरराधत्। 'ह्वो' (६३५) इत्यादौ नामधातुं विनेति किम्? ह्वायकमाचष्टे स्म—अजह्वायकत्। ह्वायकयितुमिच्छति—जिह्वायकयिषति। एवं स्वापेरपि इष्यते; स्वापक इवाचरति—स्वापकायते; सिष्वापकायिषते॥ ६२५॥

६२६। नामधातु-हनो न घत्वम्।

क्यन्—जिहननीयिषति। णि, अग्निचितं—अग्निचयति। प्रत्यञ्चं—प्रत्ययति। उदञ्चं—उदयति। गोनावौ आचष्टे—गोनयति। आशिषयतीत्यादौ तु संसारहरं नेच्छन्ति। एतः कर्वुरवर्णः; स्त्रीत्वं चेदीप्प्रत्ययस्तस्य च नः, तत्र णौ चेति पुंवद्भावात् एनीं करोति—एतयति। ररामभावात् संसारहराच्च पृथ्वादेः—प्रथयति।

---

६२५। प्रक। अत्र प्रकरणे तु हलिकली विना वृष्णीन्द्रे जात एव संसारहरो वाच्यः। वृष्णीन्द्रात् पूर्वं संसारहरे कृते सन्निमित्तकार्यनिषेधः स्यात्। अचीकवदिति—ऐरामस्य हरः। अत्र त्विति—वृष्णीन्द्रत्वे आरामत्वानपगमः, अतो दशावतारत्वमेवेति। ह्व इत्यादाविति—'ह्वो नरनारायणयोः सङ्कर्षणो नामधातुं विने'ति सूत्र इत्यर्थः। आचष्टे स्मेति—स्म-शब्दो भूतकालवचनः। एवमिति—'द्युति-ष्वाप्योर्नरस्य सङ्कर्षणः' इत्यनेन स्वापे र्नामधातुत्वे प्राप्ते सङ्कर्षणो न भवतीत्यर्थः। सिष्वापकायिषत इति—स्वापकायितुमिच्छतीत्यर्थः। नन्वत्र स्वापीति रूपाभावादेव सङ्कर्षणो न भविष्यति, तथापि किमर्थमेतत् प्रत्युदाहृतमिति न निश्चितम्। स्वप्धातो र्घण् स्वापः, स्वापं करोतीति णिः, ततः सनि सिष्वापयिषतीति तु प्रत्युदाहरणं संगच्छते। अथवा स्वापक इति ण्यन्तात् णकः, णेर्हरः क्वचिदन्तरङ्गकार्ये क्रियमाणे इत्यादि-न्यायेन णेर्हरस्यासिद्धत्वात् स्वापीति रूपम्॥

६२६। नाम। व्यक्तार्थमेतत्। जिहननीयिषतीति—हननमिच्छतीति क्यन्, 'अद्वयस्य ई', ततः हननीयितुमिच्छतीति—हननेच्छामिच्छ-

**पृथुं मृदुं भृशं चैव कृशञ्च दृढ़मेव च ।**
**परिपूर्वं वृढ़ं चैव षड़िमान् रविधौ स्मरेत् ॥**

क्षिप्रादेः क्षेपयति इत्यादि। प्र-श्र-ज्य-स्थ-स्फादेशो वृष्णीन्द्रः पुगागमश्च—प्रापयति। वहोर्भूः, युट्—भूययति। प्रशस्यादेः—श्रापयति, ज्यापयति, वर्षयति इत्यादि। तृप्रः—पुरोडाशः; ररामान्तोऽयम्; त्रपयति। विन्मत्वोर्हरात् स्रग्विणः—स्रजयति। ईण्मतः—ईशयति। तथा अल्पयति, कनयति। श्वेताश्वतरादेः—श्वेतयति इत्यादि। किन्तु प्रथमस्य तेनातिक्रामतीत्यप्यर्थो ज्ञेयः ॥ ९२६ ॥

---

तीत्यर्थः। 'नराद्धन्तेर्हस्य घः' इत्यनेन घत्वं स्यात्। अग्निचितमित्यादौ करोति आचष्टे वेति ज्ञेयम्। अग्निचिच्छब्दः क्विवन्तः। प्रत्यञ्चुदञ्चावपि क्विवन्तौ। नेच्छन्तीति—पूर्वाचार्या इति शेषः। कर्वुरवर्ण इति—कर्वुरत्वं शवलत्वम्। तस्येति तरामस्येत्यर्थः। तत्रेति—एनी-शब्दे इत्यर्थः। पृथुमिति—पृथुशब्दो बृहद्वाची। परिवृढ़शब्दः प्रभुवाची; 'प्रभुः परिवृढ़ोऽधिपः' इत्यमरः। स्मरेदिति—जानीयादित्यर्थ। वृष्णीन्द्र इति—अन्त्यारामस्य च वृष्णीन्द्रो णार्वनि चेति पाणिनिमतेन। पुगागमश्चेति—आरामान्तत्वात् अर्तीत्यादिना। तृप्रः पुरोडाश इति—पुरोडाशो यज्ञविशेषस्य पिष्टकविशेषः। रराममध्योऽयमिति—अयं तृप्रशब्दः ररामध्यः, अरामान्तस्यान्तत्वात् ररामस्य मध्यता। रमध्यत्वं तु केषाञ्चिदनभिमतम्, अत उक्तः रराममध्योऽयमिति। ररामान्तोऽयमिति पाठोऽपि बहुषु पुस्तकेषु दृश्यते। किन्तु न संगच्छते अरामान्तत्वात्। अरामसहितररामेतु ररामः शब्दो न प्रयुज्यते, 'वर्णस्य स्वरूपमात्रे वाच्ये रामशब्दो देय इत्युक्तत्वात्। विन्मत्वोरिति—विन्मतू तद्धितौ। स्रग्विण इति—स्रग्विन् शब्दस्येत्यर्थः। एवं ईण्मत इति। स्रग्विन्-शब्देन मालाविशिष्ट उच्यते। ईण्मच्छब्देन ऐश्वर्य्यविशिष्ट उच्यते। ईण्मदिति—क्विवन्तादीश्शब्दान्मतुः शस्य षः, षस्य डः, डस्य णः। प्रथमस्य श्वेतयतीत्यस्य श्वेतश्चासौ अश्वतरश्च, अश्वतरः खरजातोऽश्वः ॥

९२७। कण्ड्वादिभ्यो यक् करोत्यर्थे।

कण्डूयति, असूयति, वग्लूयति, मन्तूयति। एवं सुख-दुःख-खेला-भिक्षु-भिषक्प्रभृतयः। किन्तु कण्डूयङ-असूयङ-वल्गूयङ-मन्तूयङ कण्डूयत्याद्यर्थे ; हृणीयङ-महीयङौ घृणापूजयोर्धातुविशेषा एव। कण्डुयते इत्यादि॥ ९२७॥

९२८। कण्डूयादीनां येर्द्विर्वचनम्।

कण्डूयियिषति॥ ९२८॥

९२९। नामधातूनां यथेष्टम्।

पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति, पुत्रीयिषिषति, पुपुतित्रीयियिषति पुपुतित्रीयियिषिषति कृष्णम्। सर्वेश्वरादीनान्तु सत्सङ्गादि-न-व-द-र-वर्जस्य तत्परस्यैव ज्ञेयम्। ईशिशीयिषति ईशीयियिषति, ईशीयिषिषति, ईशिशीयियिषिषति कृष्णम्। एवम् इन्दिद्रीयिषति कृष्णमित्यादि। 'सर्वेश्वरादेरन्यत्रापि न-व-द-रादि-वर्जस्य' इति प्रक्रियाकारः (पा ३।१।२७)। चन्दिद्रीयिषति इत्यादि॥ ९२९॥

**इति विभुप्रक्रिया।**

---

९२७। कण्ड्वा। करोत्यर्थे कण्ड्वादिभ्य उत्तरे यक् भवति। कण्डूयतीति—कण्डूं करोतीत्यर्थः। असूयतीत्यादौ यकि कृते वामनस्य त्रिविक्रमः। कण्डूयत्याद्यर्थ इति—कण्डूतिः, कण्डूया, आदिशब्देन असूयादेर्ग्रहणम्। घृणापूजयोरिति—घृणा जुगुप्सा। 'जुगुप्साकरुणे घृणे' इति नानार्थवर्गः। धात्विति—कण्डूयङादयः सर्वे धातुविशेषा एवेति॥

९२८। कण्डू। व्यक्तार्थमेतत्। येरिति—इट् सहितस्त यरामस्य इत्यर्थः॥

९२९। नाम। नामधातूनां यथेष्टं द्विर्वचनं भवति। यथेष्टमिति—इष्टमनतिक्रम्येत्यर्थः। पुपुत्रीयिषतीति—यमिवाचरतीति क्यन्, कृष्णं पुत्रमिवाचरितुमिच्छतीत्यर्थः। पुत्रीयिषिषतीति—सारामसस्य द्विर्वं-

# अथ उपेन्द्रविधौ कश्चिद्विशेषः

९३०।

अन्तःशब्दो णत्वविधौ धाञ्नो ङाप् किविधौ तथा।
भवेदुपेन्द्रोऽथ नैते षत्वार्थं यान्त्युपेन्द्रताम् ॥

९३१। सुः पूजायामतिस्तद्वदतिक्रान्तौ अथो अपिः।
स्तोकता-योग्यता-स्वैरानुज्ञा-गर्हा-समुच्चये ॥

अन्तरिति—अन्तर्णयति ; अन्तर्धा, अन्तर्द्धिः। अथ नैत इति—सुस्तुहि, अतिस्तुहि। अथो अपिरिति—सर्पिषोऽपि स्यात् ; अपिस्येत् पर्वतं सिंहः ; अपिसिञ्चेत् तुलसीम् ; अपिसिञ्चेत् पलाण्डुम् ; अपिसिञ्च, अपिस्तुहि ॥ ९३०-९३१ ॥

---

चनम्। तत्परस्यैवेति—सर्वेश्वरपरस्यान्यभागस्यैवेत्यर्थः, नत्वादिभागस्य। ईशिशीयिषतीति—ईशमिवाचरितुमिच्छतीत्यर्थः। इन्दिद्रीयिषतीति—इन्द्रमिवाचरितुमिच्छतीत्यर्थः। नवदरादिवर्जस्येतीति—न-व-द-रादिवर्जस्य सर्वेश्वरपरस्यान्यभागस्यैवेत्यर्थः। चन्दिद्रीयिषतीति—चन्द्रमिवाचरितुमिच्छतीत्यर्थः ॥

॥ * ॥ इति विभुप्रक्रिया ॥ * ॥

अथ। अथेति—उपेन्द्रविधौ उपेन्द्रसम्बन्धिविधाने। अधिकारस्येति समाप्त्यर्थमिति शेषः ॥

९३०। अन्तः। णत्वविधौ धाञोङाप् किविधौ च अन्तःशब्द उपेन्द्रो भवति। अथ—एते वक्ष्यमाणाः स्वत्यपयः षत्वार्थं उपेन्द्रतां न यान्ति—न प्राप्नुवन्ति, अर्थविशेषेषु तेषामनुपेन्द्रत्वमित्याह—सुरिति ॥

९३१। सुः। पूजायामर्थे सुः षत्वार्थमुपेन्द्रतां न याति। अतिक्रान्तावर्थे अतिः षत्वार्थमुपेन्द्रतां न याति। स्तोकत्वे, योग्यतायां, स्वैरानुज्ञायां, गर्हायां, समुच्चये चार्थे अपिः षत्वार्थमुपेन्दतां न याति। अन्तर्णयतीति—अन्तःशब्दस्योपेन्द्रत्वात् उपेन्द्रान्नोपदेशस्य णत्वमित्यनेन णत्वम्। अन्तर्धेति—सोपेन्द्राद्रामाच्चेत्यनेन ङाप्। अन्तर्धिरिति—धाञः

६३२। धात्वर्थमात्रवाचिनावधिपरी अपि नोपेन्द्राविति वाच्यम्।

"अधिपरी अनर्थकौ" इति हि भगवान् पाणिनिः ( १।४।९३ )। तदिदञ्च, कर्मप्रवचनीयसंज्ञाविधानमुपसर्गसंज्ञाबाधकमिति। अधिकार्थवाचित्वे तु—अधिष्यति, परिणीय॥ ६३२॥

---

कि-विधौ अन्तःशब्दस्य उपेन्द्रत्वात् सोपेन्द्रदामोदरात् किर्भावादावित्यनेन किः, आरामहरः। सुस्तुहीति—स्तवस्यातिशय एवात्र पूजा। अतिस्तुहीति—निष्पन्नेऽपि फले क्रियाप्रवृत्तिरत्रातिक्रान्तिः। स्तोकत्वायोग्यतेति पाठो बहुषु पुस्तकेषु दृश्यते, किन्तु स न संगच्छते, सिंह इत्युपादानात्, योग्यताया एव प्रतिपन्नत्वात्। जुमरे योग्यतेत्यत्र सुस्तुहि, अतिस्तुहीति उपेन्द्रत्वे सति 'उपेन्द्रात् सुवते'रित्यादिना षत्वं स्यात्। सर्पिषोऽपि स्यादिति—सर्पिषः स्तोकं स्यादित्यर्थः। सर्पि र्घृतं, स्तोकमल्पम्। अपि स्येदिति—प्रार्थने विधिः। उपेन्द्रत्वे सति 'उपेन्द्रप्रादुर्भ्यामि'त्यादिना षत्वं स्यात्। अपिस्येदिति—षोऽन्तकर्मणि भिन्द्यादित्यर्थः। सम्भावनेत्युक्तत्वाच्च सम्भावना तत्क्रियायोग्यता निश्चितिः। अपिसिञ्च तुलसीमिति—प्रैषाति-सर्गप्राप्तकालत्वेषु विधातृविष्णुकृत्यावित्यनेन विधातृ हि। अतिसर्गः कामचाराभ्यनुज्ञेति वक्ष्यते। कामचाराभ्यनुज्ञैव स्वैरानुज्ञेति। अपिसिञ्चेत् पलाण्डुमिति—प्रेषणार्थे विधिः। अत्र पलाण्डुसेचनप्रेषणेन गर्हा गम्यते। पलाण्डुरपवित्रकन्दविशेषः। अपिसिञ्च, अपिस्तुहीति प्रेषणे विधातृ हि। अपिस्येत्, अपिस्तुहीति—उपेन्द्रत्वे सति 'उपेन्द्रात् सुवते'-रित्यादिना षत्वं स्यात्, अपिसिञ्च, अपिसिञ्चेदिति—उपेन्द्रत्वे सति सिचेरपि तथा षत्वमित्यनेन षत्वं स्यात्॥

६३२। धात्वर्थ। व्यक्तार्थमेतत्। अधीति—हि यतः अनर्थकावधिपरी नोपसर्गाविति भगवान् सर्वज्ञः पाणिनिराहेति शेषः। तदिदञ्च पाणिनिराहेति शेषः। किन्तत् तत्राह कर्मेति। तस्मात् पाणिनिमते कर्मप्रवचनीयानामुपसर्गत्वाभावात् गङ्गामनुस्थित इत्यादावपि षत्वाभावः। अस्माकं मतेतु तत्र धातुयोगाभावेनोपेन्द्रत्वाभावात् षत्वाभाव इति।

**अथोपेन्द्रादपि षोपदेशस्य षत्वं क्वचिदित्यत्र विशेषः—**

६३३। उपेन्द्रात् सुवतेः षत्वं सुनोतेः सोस्तुभस्तुवाम् ।
स्था-सेनय-स्वन्ज-सन्जां सेधतेस्त्वगतौ स्मृतम् ॥

६३४। सिचेरपि तथा षत्वम् ।

६३५। सदेः प्रतिविवर्जिनः ।

६३६। उपेन्द्रात् क्रियते तद्वद्व्यवाभ्यां भोजने स्वनः ।

६३७। उपादपि मतं स्तम्भेः षत्वं यत्राङ् न दृश्यते ।
अवपूर्वस्य सामीप्ये तद्वदेवावलम्बने ॥

६३८। परेर्निविभ्यां सेवस्य सितस्य च सयस्य च ।
सिवोः सहः सुटस्तद्वद्विना सोढं षता मता ॥

---

कर्मप्रवचनीया वक्ष्यन्ते । अधिष्यतीति, परिणीयेति । क्त्वा यप्, विवाहं कृत्वेत्यर्थः ॥

६३३। उपे। उपेन्द्रादुत्तरेषां षू प्रेरणे, षुञ् अभिषवे, षोऽन्त-कर्मणि, ष्टुभ स्तम्भे, ष्टुञ् स्तुतौ, ष्ठा गतिनिवृत्तौ इत्येतेषां सेनय-स्वन्ज सन्जां च सस्य षत्वं भवति । सेधतेस्तु अगतावर्थे षत्वं स्मृतम् ॥

६३४। सिचे। उपेन्द्रादुत्तरस्य सिचेः सस्य षत्वं भवति ॥

६३५। सदेः। प्रतिविवर्जिन उपेन्द्रादुत्तरस्य सदेः सस्य षत्वं क्रियते ॥

६३६। उपे। भोजनेऽर्थे व्यवाभ्यामुत्तरस्य स्वनः सस्य षत्वं क्रियते । दन्त्यपरत्वेऽपि स्वक्कादीनां पाठात् स्वनधातोः षोपदेशत्वं नास्तीत्यप्राप्ते विधानमिदमिति ज्ञेयम् ॥

६३७। उपा। व्यवाभ्यां उपादप्युत्तरस्य स्तम्भेः सस्य षत्वं मतम् । यत्रेति—यत्र आङ न दृश्यते तत्रैव षत्वमित्यर्थः । अव—अव-पूर्वस्य स्तम्भेः सस्य सामीप्येऽवलम्बने च अर्थे षत्वं मतम् । यत्राङ न दृश्यत इति अत्रापि योज्यम् ॥

६३९। अता व्यवायेऽप्यासेवम्।

६४०। नरेण स्थादिकस्य तु षत्वं वाच्यम्।

६४१। तदा तस्य, नरस्य च तदिष्यते।

६४२। वेः स्कम्भेः।

६४३। वा परेः स्कन्देः वेस्तु निष्ठां विना भवेत्।
विपर्यन्वभिनिभ्यो वा स्यन्देरप्राणिकर्तरि॥

६४४। निर्निविपूर्वस्य स्फुरोऽपि स्याद्विभाषया।

६४५। सुविनिर्दुः पूर्वसूतिसमयोः षत्वमिष्यते।
तत्पूर्वत्वे नरस्यापि कृतसङ्कर्षणस्वपेः॥

---

६३८। परे। परेर्निविभ्याञ्च उत्तरस्य सेवस्य सस्य षता मता। सेवस्येति—सेवधातोरित्यर्थः। षता षत्वम्। परेर्निविभ्यां चोत्तरयोः सित-सयशब्दयोः सस्य षता मता। तेभ्य उत्तरस्य सिवोः सस्य षता मता। तेभ्य उत्तरस्य सोढ़ं विना सहः सस्य षता मता। तेभ्य उत्तरस्य सुटः सस्य षता मता॥

६३९। अता। सुवत्यादीनां सेवपर्यन्तानां अदागमव्यवधानेऽपि षत्वं वाच्यम्। आसेवमिति—आवैकुण्ठं संसार इतिवदव्ययीभावः॥

६४०। नरेण। यत्रैव सेवपर्यन्तस्थादीनान्तु नरव्यवधानेऽपि षत्वं वाच्यम्॥

६४१। तदा। तदा तत्समये तस्य नरस्य च तत् षत्वमिष्यते॥

६४२। वेः। वेरुत्तरस्य स्कम्भेः सस्य षत्वं भवति॥

६४३। वा। परेरुत्तरस्य स्कन्देः षस्य षत्वं वा भवति। वेरुत्तरस्य स्कन्देस्तु निष्ठां विना षत्वं वा भवति। अप्राणिकर्तरि सति विपर्यन्वभिनिभ्य उत्तरस्य स्यन्देः सस्य षत्वं वा भवति॥

६४४। निर्नि। निर्निविपूर्वस्य स्फुरोऽपि विभाषया षत्वं स्यात्। विभाषा विकल्पः॥

९४६। परेर्निविभ्याञ्च सिवोः स्तुस्वन्जोः सुट्सहोरपि।
अता व्यवाये षत्वं स्याद्विकल्पेनेति सम्मतम् ॥

९४७। न सुञः स्यसनोः षत्वम्।

९४८। न च षत्वं सिचेर्यङि।

९४९। सुस्थादिषु।

९५०। न षत्वञ्च प्रादेः सिवुसहोरङि।

९५१। नारायणे सदिस्वन्जोर्न षत्वं स्यादधोक्षजे।

उपेन्द्रात्—परिषुवति, अभिषुणोति, परिष्यति, विष्टोभते, परिष्टौति, अधिष्ठाता, अभिषेणयति, परिष्वजते, अभिषजति। षेध—निषेधति; गतौ तु—परिसेधति। सिचेः—अभिषिञ्चति।

---

९४५। सुवि। सु-वि-नि-र्दुः पूर्वयोः सूतिसमयोः षत्वमिष्यते। तेषां सु-वि-नि-र्दुरां पूर्वत्वे सति कृतसङ्कर्षणस्वपेर्नरस्यापि षत्वमिष्यते ॥

९४६। परे। परेर्निविभ्याञ्च परस्य सिवोः स्तुस्वन्जोः सुट्-सहोरपि सस्य अद्व्यवधाने षत्वं विकल्पेन स्यात्, इति पूर्वाचार्याणां सम्मतम्। स्तुस्वन्जोः अता व्यवायेऽप्यासेवमित्यनेन नित्यं प्राप्ते विकल्पार्थमत्र पाठः ॥

९४७। न सुञः। स्ये सनिच सति सुञः षत्वं न भवति ॥

९४८। न च। सिचेर्यङि सति षत्वं न भवति ॥

९४९। सुस्था। सुस्थादिषु षत्वं न भवति ॥

९५०। न। अङि सति प्रादेरुत्तरयोः सिवु-सहोः सस्य षत्वं न भवति ॥

९५१। नारा। अधोक्षजे परे सदि सन्जोर्नारायणे षत्वं न स्यात्। क्रमेणोदाहरणानि दर्श्यन्ते। परिषुवतीति। अभिषेणयतीति—सेनया अभिमुखं यातीति तृतीयान्तविशेषाद्धात्वर्थविशेष इत्यनेन णिः। परिष्वजत इति—ष्वन्ज परिष्वङ्गे। अभिषजतीति। षन्ज सङ्गे।

सदेः—निषीदति ; नेह—प्रतिसीदति। व्यवा—विष्वणति, अवष्व-णति भक्तम्। उपात्—स्तन्भु रोधने सौत्रः—उपष्टभ्नाति विष्ट-भ्नाति ; नेह—उपातस्तम्भत् ; अव—अवष्टभ्नाति सेना, अवष्ट-भ्नाति दण्डम् ; नेह—अवातस्तम्भत्। परेः—परिषेवते ; परिषितम्, विषयः—द्वाविमौ कृदन्तौ। निषीव्यति, विषहते। परिष्करोति। नेह—परिसोढ़ा, परिसोढ़ं, परिसोढ़ुम् ; क्तस्तुमुश्चायं कृत्। अता—एषां सुवतीत्यादीनां सेवपर्यन्तानामदागमव्यवधानेऽपि षत्वं भवेदि-त्यर्थः ; यथा—न्यषुवदित्यादि। नरेणेति, तत्रैव स्थादीनान्तु नर-व्यवधानेऽपि षत्वं भवेदित्यर्थः—अधितष्ठौ इत्यादि। तदेति तत्समये नरस्य च षत्वम्—अभिषिषेणयिषति इत्यादि। वे, भ्वादित्वे—विष्कम्भते ; सौत्रत्वे तु विष्कभ्नाति, विष्कभ्नोति ; स्कभ्नातेरेवेति पाणिनीयाः, कातन्त्रपरिशिष्टे (षत्वप्रकरणम् ३६) त्वविशेषेणैव। वा परेः—परिष्कन्दति, परिस्कन्दति ; विष्कन्दति, विस्कन्दति। निष्ठा कृद्विशेषः—विस्कन्नम्। वि-परि-स्यन्द—परिष्यन्दते, विष्य-

---

निषेधतीति—षिधु गत्यां निषेधं करोतीत्यर्थः। अभिषिञ्चतीति—षिच क्षरणे। निषीदतीति। षदलृ विशरणादिषु। विष्वणतीति—स्वन शब्दे भुङ्क्ते इत्यर्थः। भक्तमन्नम्। भोजन इति किं ? विस्वनति मृदङ्गः। अवष्टभ्नाति सेनेति। निकटीभवतीत्यर्थः। अवष्टभ्नाति दण्डमिति—अवलम्बते इत्यर्थः। परिषेवत इति—सेवृ सेवने। इमौ सितसयशब्दौ। निषीव्यतीति—षिवु तन्तुसन्ताने। विषहत इति—षह मर्षणे। परिष्करो-तीति—'संपर्युपेभ्यः सुट् करतौ संस्काराद्यर्थेषु' इत्यनेन सुट्। परिसोढ़ेति—बालकल्कौ, इषु-सह-लुभ-रुष, रिषेत्यनेन इड्वा। अभिषिषेणयिषतीति—अभिषेणयितुमिच्छतीत्यर्थः। विष्कभ्नाति विष्कभ्नोति। 'स्तन्भु स्तुन्भु स्कन्भु स्कुन्भु स्कुञ्भ्यः श्नुश्चे'त्यनेन श्ना, श्नुश्च। स्कभ्नातेरिति—स्कभ्नातेरेव षत्वं भवतीति पाणिनीया वदन्तीति शेषः। तन्मते विष्कम्भते विष्कभ्नो-तीत्यत्र षत्वं न भवतीति। अविशेषेणैवेति—कातन्त्रपरिशिष्टमते सर्वत्रैव षत्वं भवतीति ; अत्र कातन्त्रपरिशिष्टमतमेवास्माकमपि मतमिति। परि-

न्दते वा गङ्गा; नेह—विस्यन्दन्ते मत्स्याः। निर्नि—निःष्फुरति, निःस्फुरति। सु-वि—सूतिसमौ समासकार्ये (१६६१) वक्ष्येते; तत्पूर्वत्वे—सुषुप्यते, सुषुषुपतुः; नेह—सुस्वपिति। परे—पर्यषीव्यत्, पर्यसीव्यत् इत्यादि। न सुञः—परिसोष्यति, परिसुसूषति। स्तौतिण्यन्तयोरेवेति षत्वाभावेऽपि सार्थकता तु क्विपि प्रतिसुसूरित्यत्रैव। न च—निसेसिच्यते, सेसिच्यते। सुस्था—सुस्थः, दुःस्थः, प्रतिस्तब्धः, निस्तब्धः, परिस्थित इत्यादि। न प्रादेः—पर्यसीषिवत्, न्यसीसहत्। उपेन्द्रत एव निषिध्यते; अन्यत ईश्वरादिकृतं तु स्यादेवेति परस्य षत्वम्। नारा—निषसाद, परिषस्वजे ॥ ६३३-६५१ ॥

**इति उपेन्द्रविधिः।**

इति श्रीश्रीहरिनामामृताख्ये वैष्णवव्याकरणे आख्यात-
प्रकरणं तृतीयं समाप्तम् ॥ ३ ॥

---

ष्कन्दतीति—स्कन्दिर् गतिशोषणयोः। विस्कन्नमिति—क्त प्रत्ययः, रदाभ्यां विष्णुनिष्ठा तस्य दस्य च नोदां विनेत्यनेन तस्य दस्य च नः। स्यन्दू इति—स्यन्दू स्रवणे। निःस्फूरतीति—स्फुर स्फुरणे। सूतिसमाविति समासकार्य इति—कृत्प्रकरणोक्ते समासकार्यरुपे षत्वप्रकरणे इत्यर्थः; कृत्प्रकरण इति वा पाठः। सुषुप्यते इति—ञिष्वप शये। सुस्वपितीति—सङ्कर्षणाभावात् षत्वाभावः। इत्यादीत्यादिशब्देन पर्यष्टावीत् पर्यस्तावीत् पर्यष्वजत पर्यस्वजत पर्यष्कुरुत पर्यस्कुरुत पर्यषहत पर्यसहतेत्याद्युदाहरणानि ज्ञेयानि। परिसोष्यतीति—षुञ् अभिषवे उपेन्द्रादित्यादिना षत्वं स्यात्। सुसूषतीत्यत्र स्तौतिण्यन्तयोरेव षत्वं सनः ष इति नियमेनापि षत्वं न भवतीति सनि निषेधस्य सार्थकत्वमाह स्तौतीति। प्रतिसुसूरित्यत्र सन् सम्बन्धिनो मूर्धण्यस्य सस्य परत्वाभावात् नियमेन षत्वाभावो न स्यादिति सार्थकता। निसेसिच्यत इति—नरेण स्थादिकस्य तु षत्वं वाच्यमित्यनेन यदा नारायणस्य षत्वं स्यात् तदा तस्य नरस्य च तदिष्यत इति नरस्यापि षत्वं स्यात्। सेसिच्यत इति—ईश्वरहरिमित्रेत्यादिना षत्वं स्यात्। अयङ्तु असीषिचत् सुस्थेत्यादयः

कृत्प्रत्ययान्ताः । सुस्थ दुस्थ परिस्थितेषु उपेन्द्रादित्यादिना षत्वं स्यात् । प्रतिस्तब्ध-निस्तब्धयोः 'उपेन्द्रादपि षोपदेशस्य षत्वं क्वचिदि'त्यनेन षत्वं स्यादिति ज्ञेयम् । ननु व्यवोप-पूर्वस्यैव स्तम्भेः षत्वमुक्तम् ; अत उपेन्द्रादपीत्यादिना षत्वं न भविष्यतीति किमर्थमेतौ सुस्थादिषु पठ्येते तदेतच्चिन्त्यम् । पर्यसीषिवत् न्यसीषहदिति । 'परेर्निविभ्याञ्चे'त्यादिना विकल्पेन षत्वं स्यात् । अन्यतः नरात् । ईश्वरादिकृतं ईश्वरहरिमित्रेत्यादि-लक्षणकृतं षत्वम् । परस्य नारायणस्य । निषसाद परिषस्वजे, इति—'नरेण स्थादिकस्य तु षत्वं वाच्यमि'त्यनेन षत्वं स्यात् ॥

इति श्रील-हरेकृष्णाचार्यविरचितायां श्रीमद्गोपीचरणदासपरिशोधितायां श्रीहरिनामामृताख्यवैष्णवव्याकरणटीकायां बालतोषणी-नाम्न्यां तृतीया आख्यातप्रकरणटीका समाप्ता ॥

## तिवादि-विष्णुभक्तयः

['तिङ-विभक्तयः' इति पाणिनीयाः ; 'आख्यातम्' इति कालापाः ; एता धातोः परे योजनीयाः । धातवो भ्वाद्यदादि-ह्वादि-दिवादि-स्वादि-तुदादि-रुधादि-तनादि-क्र्यादि-चुरादयः, परपदिनः (परस्मैपदिनः), आत्मपदिनः (आत्मनेपदिनः), मिश्रपदिनः (उभयपदिनः) च, सेट अनिटश्च, सकर्मका अकर्मकाश्चेति भेदाः । ]

### कृष्णधातुकाः

( 'सार्वधातुकम्' इति पाणिनीयाः कालापाश्च )

**अच्युतः** ( वर्तमान काले )

( 'लट्' इति पाणिनीयाः, 'वर्तमाना' इति कालापाः )

परपदम्

( 'परस्मैपदम्' इति पाणिनीयाः कालापाश्च )

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | तिप् | तस् | अन्ति |
| मध्यमपुरुषः | सिप् | थस् | थ |
| उत्तमपुरुषः | मिप् | वस् | मस् |

## आत्मपदम्

( 'आत्मनेपदम्' इति पाणिनीयाः कालापाश्च )

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | ते | आते | अन्ते |
| मध्यमपुरुषः | से | आथे | ध्वे |
| उत्तमपुरुषः | ए | वहे | महे |

## **विधिः** ( विधि, उचितार्थे )

( 'विधिलिङ' इति पाणिनीयाः, 'सप्तमी' इति कालापाः )

### परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचतम् |
|---|---|---|---|
| प्रथमपुरुषः | यात् | याताम् | युस् |
| मध्यमपुरुषः | यास् | याताम् | यात |
| उत्तमपुरुषः | याम् | याव | याम |

### आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | ईत | ईयाताम् | ईरन् |
| मध्यमपुरुषः | ईथास् | ईयाथाम् | ईध्वम् |
| उत्तमपुरुषः | ईय | ईवहि | ईमहि |

## **विधाता** ( आदेश, अनुरोधार्थे )

( 'लोट्' इति पाणिनीयाः, 'पञ्चमी' इति कालापाः )

### परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनन् |
|---|---|---|---|
| प्रथमपुरुषः | तुप् | ताम् | अन्तु |
| मध्यमपुरुषः | हि | तम् | त |
| उत्तमपुरुषः | आनिप् | आवप् | आमप् |

### आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | ताम् | आताम् | अन्ताम् |
| मध्यमपुरुषः | स्व | आथाम् | ध्वम् |
| उत्तमपुरुषः | ऐप् | आवहैप् | आमहैप |

**भूतेश्वरः** ( अतीतकाले )

( 'लङ' इति पाणिनीयाः, 'ह्यस्तनी' इति कालापाः )

परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | दिप् | ताम् | अन् |
| मध्यमपुरुषः | सिप् | तम् | त |
| उत्तमपुरुषः | पम् | व | म |

आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | त | आताम् | अन्त |
| मध्यमपुरुषः | थास् | आथाम् | ध्वम् |
| उत्तमपुरुषः | इ | वहि | महि |

**भूतेशः** ( अद्यतन अतीत )

( 'लङ' इति पाणिनीयाः, 'अद्यतनी' इति कालापाः )

परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | दिप् | ताम् | अन् |
| मध्यमपुरुषः | सिप् | तम् | त |
| उत्तमपुरुषः | पम् | व | म |

आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | त | आताम् | अन्त |
| मध्यमपुरुषः | थास् | आथाम् | ध्वम् |
| उत्तमपुरुषः | इ | वहि | महि |

## रामधातुकाः

( 'आर्धधातुकम्' इति पाणिनीयाः )

**अधोक्षजः** ( परोक्ष अतीते )

( 'लिट्' इति पाणिनीयाः, 'परोक्षा' इति कालापाः )

परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | णल् | अतुस् | उस् |
| मध्यमपुरुषः | थल् | अथुस् | अ |
| उत्तमपुरुषः | णल | व | म |

आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | ए | आते | इरे |
| मध्यमपुरुषः | से | आथे | ध्वे |
| उत्तमपुरुषः | ए | वहे | महे |

**बालकल्किः** ( परोक्ष भविष्यत्काले )
( 'लुट्' इति पाणिनीयाः, 'श्वस्तनी' इति कालापाः )

परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | ता | तारौ | तारस् |
| मध्यमपुरुषः | तासि | तास्थस् | तास्थ |
| उत्तमपुरुषः | तास्मि | तास्वस् | तास्मस् |

आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | ता | तारौ | तारस् |
| मध्यमपुरुषः | तासे | तासाथे | ताध्वे |
| उत्तमपुरुषः | ताहे | तास्वहे | तास्महे |

**कामपालः** ( आशीर्वादार्थे )
( 'आशीर्लिङ' इति पाणिनीयाः, 'आशीः' इति कालापाः )

परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | यात् | यास्ताम् | यासुस् |
| मध्यमपुरुषः | यास् | यास्तम् | यास्त |
| उत्तमपुरुषः | यासम् | यास्व | यास्म |

### आत्मपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | सीष्ट | सीयास्ताम् | सीरन् |
| मध्यमपुरुषः | सीष्ठास् | सीयास्थाम् | सीध्वम् |
| उत्तमपुरूषः | सीय | सीवहि | सीमहि |

### कल्किः ( भविष्यत् काले )

( 'लृट्' इति पाणिनीयाः, 'भविष्यन्ती' इति कालापाः )

### परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | स्यति | स्यतस् | स्यन्ति |
| मध्यमपुरुगः | स्यसि | स्यथस् | स्यथ |
| उत्तमपुरुषः | स्यामि | स्यावस् | स्यामस् |

### आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | स्यते | स्येते | स्यन्ते |
| मध्यमपुरुषः | स्यसे | स्येथे | स्यध्वे |
| उत्तमपुरुषः | स्ये | स्यावहे | स्यामहे |

### अजितः ( सम्भावनार्थे )

( 'लृङ' इति पाणिनीयाः, 'क्रियातिपत्तिः' इति कालापाः )

### परपदम्

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमपुरुषः | स्यत् | स्यताम् | स्यन् |
| मध्यमपुरुषः | स्यस् | स्यतम् | स्यत |
| उत्तमपुरुषः | स्यम् | स्याव | स्याम |

### आत्मपदम्

| | | | |
|---|---|---|---|
| प्रथमपुरुषः | स्यत | स्येताम् | स्यन्त |
| मध्यमपुरुषः | स्यथास् | स्येथाम् | स्यध्वम् |
| उत्तमपुरुषः | स्ये | स्यावहि | स्यामहि |



[ चतुर्थम् ]

# अथ कारकप्रकरणम्

[ ८ ] यः कर्ता कर्म करणं सम्प्रदानमशेषतः ।
अपादानाधिकरणे तत्सम्बन्धो भवेदिह ।।

अथ विष्णुभक्त्यर्थाः ; तत्र कारकाणि च निरूप्यन्ते ।

---

हस्तामलकवत्तत्त्वं श्रीमद्भागवतस्य यः ।
दर्शयामास जीवेभ्यस्तं श्रीजीवप्रभुं भजे ।।
श्रीजीवचरणाब्जान्तमाश्रित्य परमादरात् ।
कारकं विष्णुभक्त्यर्थं व्याख्याते सुहृन्मुदे ।।

द्वितीय-तृतीय-प्रकरणयोर्विष्णुभक्तय उक्तास्तासामर्थान् परपदानि कर्तरीति आत्मपदान्येव कर्मणीति च आख्यातप्रकरणे उक्तम् । कर्त्रादिषु वाच्येषु कृत्प्रत्ययाश्च वक्ष्यन्ते । अतो विष्णुभक्त्यर्थेषु कर्त्रादिकारकाणि च आनुषङ्गिकतया उपपदविष्णुभक्तिश्च अच्युतादय उक्ता एव । तेषामर्थांश्च परपदात्मपदयोर्विषयविशेषांश्च निरूपयितुं चतुर्थं विष्णुभक्त्यर्थ-प्रकरणमारभमाणो विष्णोः कर्त्रादिरूपत्वेन कर्त्रादिनिरूपणस्य तत्सम्बन्धित्वं सूचयति—यः कर्तेति । अशेषतः अपरिच्छिन्नलीलत्वाद् यः कृष्णो महाविष्णुरूपत्वेन कर्ता भवति, विराड्रूपेण कर्म भवति, ब्रह्म-विष्णु-रुद्र-गुणावताररूपेण करणं भवति, यज्ञपुरुषरूपेण सम्प्रदानं भवति, गर्भोद-शायि-शेषरूपाभ्याम् अपादानाधिकरणे भवतः, तस्य श्रीकृष्णस्य सम्बन्धः षट्कारकरूपत्वेनान्वय इह संसारे भवेत् । व्याकरणपक्षे—यः कारक-शब्दः अशेषत उपपदविष्णुभक्त्यादिपर्यन्तव्यापकत्वाद् वक्ष्यमाणलक्षणैः कर्तृकर्मकरणसम्प्रदानापादानाधिकरणवाचको भवति, तस्य कारकस्य सम्बन्धः षट्कारकरूपत्वेनान्वय इह चतुर्थपादे भवेत् । अथोवा अशेषतः अशेषस्य विश्वस्य यः कर्तादिः सर्वं विष्णुमयं जगदित्युक्तेः विश्वमशेषं कृत्स्नमिति तस्य विष्णोः सम्बन्ध इह प्रकरणे भवेत् स्यादेव कर्त्रादे-र्निरूपयिष्यमाणत्वात् । भवेदिति—सम्भावनायां विधिः । कर्त्रादि-र्वक्ष्यते । विष्णोः कर्त्रादिरूपत्वेन कर्त्रादिशब्दा अपि तद्वाचिन एवेति । 'स्वतन्त्रं तत्प्रयोजकञ्च कर्तृ' इत्यादौ कर्त्रादिशब्दानां भगवन्नामता ।

६५२। एकद्विबहुत्वेष्वेकद्विबहुवचनानि।

कृष्णः, कृष्णौ, कृष्णाः ; भवति, भवतः, भवन्ति ॥ ६५२ ॥

६५३। युष्मदो गौरवे त्वेकत्वे द्वित्वे बहुवचनम्।

हे पितर्यूयं वदत। हे पितरौ ! यूयं पश्यत ॥ ६५३ ॥

६५४। द्विवर्जतदादिमात्राच्च।

स कुत्र तव गुरुरित्यत्राह,—'तत्र ते विराजन्ते' ॥ ६५४ ॥

---

अथच यः कर्तेत्यादिना कारकाणां संज्ञाः सम्बन्धश्च उट्टङ्कितः। विष्णुभक्त्यर्थानां कारकाणाञ्च निरूपणमारभते अथेति। विष्णुभक्तीनामर्थाः अभिधेयाः। अत्र विष्णुभक्त्यर्थेषु कारकाणि च कर्त्रादिरूपाणि निरूप्यन्ते—प्रकाश्यन्ते। चकारादुपपदविष्णुभक्तयः कालादयो निरूप्यन्ते। यद्यपि कारकाणि विष्णुभक्त्यर्था एव तथापि पृथगुपादानं सामान्यविशेषन्यायेन, यथा गामानय बलीवर्दञ्चेति। तत्र प्रथमतो विष्णुभक्त्यर्थान् निरूपयति ॥ [ ८ ]

६५२। एक। एक-द्वि-बहूनां भावः एकद्विबहुत्वं, तस्मिन् वाच्ये एकद्विबहुवचनानि एकवचनद्विवचनबहुवचनानि भवन्ति। एकद्विबहुत्वेष्विति बहुवचनं चिन्त्यम्। भावप्रत्ययान्तस्य एकवचनार्हत्वात्। एकशेषे तु सति बहुवचनं भवति, किन्तु कृष्णः कृष्णौ कृष्णा इत्यादौ प्रत्येकमेकद्विबहुवचनानि स्युः। अथवा स्वरूपमात्रे वाच्ये त्वप्रत्ययः, एकद्विबहव एकद्विबहुत्वाः, तेषु एकस्मिन् द्वयोर्बहुषु वाच्येष्वित्यर्थः। कृष्ण इत्यादीनां भवतीत्यादिभिः सह क्रमेण सम्बन्धः ॥

६५३। युष्म। गौरवेऽर्थे युष्मद उत्तरे एकत्वे द्वित्वे च बहुवचनं भवति। यूयं वदतेति—एकत्वे बहुवचनं, यूयं पश्यतेति द्वित्वे बहुवचनम्। अगौरवे तु—हे अवैष्णव ! त्वं दूरीभव ॥

६५४। द्विवर्ज। द्विशब्दस्तदादिगणे पठितस्तस्य वर्जो वर्जनं यत्र, तादृशात्तदादिमात्राच्च उत्तरे गौरवेऽर्थे एकत्वे द्वित्वे च बहुवचनं भवति। मात्रग्रहणात् स्वार्थास्वार्थयोर्भवतीति ज्ञेयम्। ननु तदादेरिति कृतेऽपि तदेव लभ्यते, नाम्नो ग्रहणेन तदन्तस्यापि ग्रहणात्, तथापि मात्रपदं स्पष्ट-

## ६५५। पूज्यवाचिभ्यस्त्वादराधिक्ये।

यथा—गुरवः समादिशन्ति इत्यादि ॥ ६५५॥

## ६५६। अस्मदस्त्वगौरवेऽपि।

अहं ब्रवीमि, आवां ब्रूवः—इत्युभयत्रापि वयं ब्रूमः। सविशेषणत्वे तु न—वैष्णवोऽहं ब्रवीमि। व्यभिचरति च—"सा बाला वयमप्रगल्भमनसः, सा स्त्री वयं कातराः।" इत्यादि ॥ ६५६ ॥

## ६५७। जात्याख्यायामेकवचने बहुवचनं वा।

संपूज्या तुलसी, संपूज्यास्तुलस्यः ; गौरयं, गाव इमे। 'जात्याख्यायाम्' इति किम्? भारद्वाजस्य प्रतिकृतिर्भारद्वाजः ; न त्वत्र

---

तार्थम्। इत्यत्र प्रश्ने, आहेति—शिष्य उत्तरमिति शेषः। उत्तरं तत्र ते इति—समयानुभूतस्तव गुरुरिदानीं कुत्र वर्तते इत्यत्र यत्र त्वयानुभूता मम गुरव इदानीं तत्रैव ते विराजन्ते इत्यन्वयः। ननु द्विशब्दस्य नित्यद्विवचनान्तत्वेन बहुवचनप्राप्तिरेव नास्ति, किं तद्वर्जनेन? उच्यते—द्वावतिक्रान्तः अतिद्विरित्यत्र गौरवे विवक्षिते बहुवचनं स्यात् ॥

६५५। पूज्य। आदरस्याधिक्यं आदराधिक्यं, तस्मिन्नर्थे पूज्यवाचिभ्य उत्तरे एकत्वे द्वित्वे बहुवचनं भवति। गुरव इति—गुरुशब्दस्याचार्यादिवाचित्वात् पूज्यवाचिता। समादिशन्तीति—आज्ञां कुर्वन्तीत्यर्थः॥

६५६। अस्म। आदराधिक्ये अगौरवे अनादरेऽपि अर्थे अस्मद उत्तरे एकत्वे द्वित्वे च बहुवचनं भवति। अहं ब्रवीमि, आवां ब्रुव इत्यत्र वयं ब्रुम इति। यदा तु आदराधिक्यागौरवयो विवक्षा न क्रियते, तदा अहं ब्रवीमि आवां ब्रुव इति भवति। सविशेषणत्वे सति तु अस्मद उत्तरे एकत्वे द्वित्वे च बहुवचनं न भवति। क्वचित् व्यभिचरति चेति निषेध इति शेषः। कोऽपि व्यभिचारलक्षणमाह—'उक्तान्यथाचारो व्यभिचारः' इति। वयमिति अहमित्यत्र ॥

६५७। जात्या। जातेराख्या उक्तिस्तस्यां सत्यां एकवचने बहुवचनं वा भवति। जात्याख्यायामिति—जातौ तात्पर्ये सतीत्यर्थः। एकवचने इति—विषयसप्तमी। एकत्वे इति वा पाठः। आख्यायामिति किमिति—

जातिराख्यायते। किं तर्हि ? प्रतिकृतिरिति। एवं जयादित्यानामपि ( काशिका १।२।५८ )। एवं फल्गुन्योः प्रोष्ठपदयोश्च द्वितारयोरपि बहुवचनं ज्ञेयं वा। कदा पूर्वाः फल्गुन्यः, पूर्वे फल्गुन्यौ वेत्यादि। तथा तिष्य एकः, पुनर्वसू द्वौ, तथापि द्वन्द्वे द्विवचनं तिष्यपुनर्वसू इत्यादि॥ ९५७॥

---

जातेरित्येवास्त्विति शेषः। भरद्वाजस्येति—भारद्वाजस्यापत्यमित्यर्थे केशवणः, वृष्णीन्द्रः, भारद्वाज, तस्य प्रतिकृतिरित्यर्थे क-प्रत्ययस्तस्य स्मरहरः, तद्यथा इवार्थे कः प्रतिकृतौ संज्ञायाञ्च इत्यनेन कः। मनुष्ये तस्य स्मरहर इत्यनेन कस्य स्मरहरः। एकवचने इति किं ? धात्रीतुलस्यौ। जातीति किं? व्यक्तिपरत्वे पूज्या तुलसी। भारद्वाजः यदि गोत्रं चरणैः सहेत्यपत्यप्रत्ययान्तत्वेन जातिवाचित्वमस्त्येव, तथापि न त्वत्र जातिराख्यायते न जातौ तात्पर्यमित्यर्थः। किन्तर्हि प्रतिकृतीति—प्रतिकृत्यर्थे विहितस्य प्रत्ययस्याख्यानमेतदिति। एवं व्यक्तार्थमेतत्। फल्गुन्यादीनां पूर्वोत्तरपूर्वत्वे द्विद्विनक्षत्रवाचित्वम्। तथा सति कदा फल्गुन्यः कदा फल्गुन्यौ इत्यादिकमुदाहरणं सङ्गतम्। अर्थस्तु कदा पूर्वोत्तराः फल्गुन्यः भविष्यन्ति कदा पूर्वोत्तरे फल्गुन्यौ भविष्यत इत्यादिकं मनोहितम्। गोस्वामिपादेन तु यदुक्तं तत्तु नास्माकं सम्यग्हृदयङ्गमं पूर्वोत्तरयोः प्रत्येकं पूर्वत्वे फल्गुन्यादेरेकैकनक्षत्रवाचित्वात्। किम्वा पूर्वेत्युपलक्षणम्। उत्तरस्यापि गुणीभूतत्वेन स्वीकृतत्वमिति—गूढ़ाभिसन्धिरिति। अथोवा पूर्वोत्तरयोरेकैकं पूर्वत्वेऽपि प्रत्येकं फल्गुन्यादेर्द्वितारकावाचित्वं उद्भूतावयवसङ्ख्यतिरोहितावयवसङ्ख्यत्वेन शास्त्रान्तरे स्वीकृतत्वादिति न कश्चिद्दोषास्पदः इति। द्वितारयोरिति किं? फल्गुन्योर्जाते गोप्यौ फल्गुन्यौ, नत्वत्र तारे उच्येते, किन्तु तत्र जाते इति। तथेति—तथेति तथापीति बहुत्वेऽपीत्यर्थः। क्वचित् द्वन्द्वसमासो व्यक्तिगणनया, क्वचित् सङ्ख्यागणनया। अत्र पुनर्व्यक्तिगणनया न सङ्ख्यागणनयेति। इत्यादीत्यादिशब्देन पुष्यपुनर्वसू इत्यपि ज्ञेयम्॥

९५८। प्रथमा नाममात्रार्थे।

यन्नाम यद्वाचि, तन्मात्रे वाच्ये नाम्नः प्रथमा विष्णुभक्तिर्भवति ; वक्ष्यमाणसम्बन्धनिरपेक्षत्वम्—तन्मात्रत्वम्। ततः स्वभावसिद्धत्वाल्लिङ्गञ्च नामविशेषार्थ एव। वाच्यलिङ्गानाञ्च तादृश एव स्वभावः। तत्र लिङ्गं विना, यथा—उच्चैः, नीचैः। लिङ्गम्—स्त्री-पुं-नपुंसकशब्दवाच्यम् ; तच्च 'संस्त्यानप्रसरौ लिङ्गम्' इति भाष्ये लक्षितम् ; तच्च संस्त्यानं संहतिः, एकीभावादपचयो लक्ष्यते ;

---

९५८। प्रथ। नाममात्रस्यार्थः नाममात्रार्थः। अर्थशब्दोऽभिधेयवचनः। नाममात्राभिधेये वाच्ये इत्यर्थः। यन्नामेति—नाम शब्दः, यद्वाचि-यस्याभिधेयस्य वाचकः, तन्मात्रे तदभिधेयमात्रे वाच्ये तस्मान्नाम्नः प्रथमा विष्णुभक्तिः स्यात्। यथा परमवृहत्तम-सर्वाकर्षक-तमालश्यामलत्विट् यशोदास्तनन्धयः कृष्णशब्दस्याभिधेय इत्यत्र वाच्यवाचकतालक्षणसम्बन्धे प्रथमैवेति। यन्नाम यद्वाचि तन्मात्रे वाच्ये इति फलितार्थकथनं नत्वक्षरार्थकथनम्। कर्मादौ द्वितीयादिविधानमेव वक्ष्यते। तथापि मात्रपदं स्पष्टतार्थं कृतम्। नामार्थमात्र इति पाठः सभ्यः। तथा सति तन्मात्रे वाच्ये इति यदुक्तं तत् सुसङ्गतं भवति, वक्ष्यमाणेत्यादिकञ्च यद्वक्ष्यते, तदपि सुसङ्गतं भवति। नहि नाममात्रं वक्ष्यमाणसम्बन्धनिरपेक्षं भवति, किन्तु नामार्थमात्रमेव। अथवा, मात्रं केवलं च तत् अर्थञ्चेति मात्रार्थं नाम्नः मात्रार्थं नाममात्रार्थमिति कृते दोषकथनं नास्तीति। ननु कृष्ण इत्यादौ पुंस्त्वाद्यपि प्रतीयते, तर्हि कथं तन्मात्रत्वमिति चेत्तत्राह वक्ष्यमाणेति—वक्ष्यमाणकर्मादिसम्बन्धे निरपेक्षत्वमपेक्षाशून्यत्वम्। वक्ष्यमाणसम्बन्धेत्यत्र श्यामरामसमासश्चिन्त्यः वक्ष्यमाणेप्यस्य व्यावर्तकत्वाभावात्। तस्मात् वक्ष्यमाणानां षष्ठ्युपयुक्तकारकोपपदविष्णुभक्तीनां सम्बन्धः वक्ष्यमाणसम्बन्धस्तस्मिन्नपेक्षाराहित्यमिति। ततो हेतोः स्वभावसिद्धत्वाल्लिङ्गञ्च नामविशेषार्थ एवेति तन्मात्रत्वाविरोधः। केषाञ्चिन्नाम्नामलिङ्गत्वमप्यस्तीति विशेषशब्दोपादानं कृतम्। एतत् प्राचीनैरप्युक्तम्। तद्यथा—"स्वार्थं द्रव्यञ्च लिङ्गञ्च सङ्ख्या कर्मादिरेव

प्रसरो विस्तारस्तस्मादुपचयः। अयमर्थः—स्तनादिचिह्नैः प्रसिद्धेषु स्त्रीपुंनपुंसकेषु अपचयोपचयद्विसाम्यरूपो यो धर्मक्रमो दृश्यते, तं क्रममवलम्ब्य बहुलमीश्वरपरिभाषितो वस्तुनो धर्मविशेषो लिङ्ग-मिति। तच्चोपचारान्नाम्नि प्रवर्तते। तदात्मकं यथा—स्त्री, पुमान्, नपुंसकं, वापी, तड़ागः, कुण्डम्। क्वचिन्नाम्नि च परिभाषितं लिङ्गं वस्तुन्युपचर्यते—सुन्दराः दाराः, सुन्दरी देवता, सुन्दरं दैवतम्।

---

च। अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमाः"। स्वार्थं—गुणादिक-विशेषणं, द्रव्यं—विशेष्यं, लिङ्गं—पुंस्त्वादि, सङ्ख्या—एकत्वादि, कर्म—क्रिया, इति पञ्च-प्रातिपदिकार्थाः। ननु सुन्दरः कृष्णः, सुन्दरी राधा, सुन्दरं गोकुलमित्यादौ एकस्य नाम्नो नानालिङ्गत्वात् कथं तन्मात्रत्वमिति चैत्तत्राह—वाच्येति। वाच्यलिङ्गानां शब्दानां तादृशे नामविशेषस्यार्थे स्वभावो वर्तते, तत् सिद्धं लिङ्गञ्च तत्रैव वर्तते। लिङ्गं विनेत्यादौ नामेति गम्यम्। उच्चैरिति नीचैरिति चाव्ययम्। ननु किन्तावल्लिङ्गं तत्राह—लिङ्गमिति। स्त्रीति—स्त्रीपुंनपुंसकशब्दानां वाच्यमिति विग्रहः। तदेव भाष्यकारमतेन स्पष्टयति—तच्चेति। तच्च लिङ्गं भाष्ये लक्षितम्, भाष्ये तस्य लक्षणं कृतमित्यर्थः। लक्षणमेवाह—संस्त्यानेति संस्त्यानञ्च प्रसरश्च तौ लिङ्गम्। लिङ्गमिति—लिगि गतौ लिङ्ग्यते ज्ञायतेऽनेनेति करणे घण्प्रत्ययः। संस्त्यानमिति—ष्ठै स्त्यै शब्दसंघातयोः भावे अनः। संस्त्यानं संहतिरिति संहतिर्मिलनं योनिरूपस्याङ्गस्येत्यर्थः। एकीभावात् शरीरे मिलनात् अपचयः संकोचः। प्रसर इति—प्रपूर्वात् सृ गतावित्य-स्मात् भावे अल्। तस्मात् विस्तारात् उपचयः असंकोचः लक्ष्यत इति शेषः। सेफरूपस्याङ्गस्येत्यर्थः। स्तनादिचिह्नैरिति—स्त्रियाश्चिह्नं स्तनादि, पुंसः श्मश्र्वादि, नपुंसकस्य स्तनश्मश्र्वाद्यवयवरूपम्। तत्तद्रूपै-श्चिह्नैः प्रसिद्धेषु व्यक्तिषु स्त्र्यादिषु। अपचयेति—अपचयरूपः उपचयरूपः। तत्र द्विसाम्येति—द्वयोरपचयोपचययोः साम्यरूप इति। तथाहि—किमपि नपुंसकं स्त्रीचिह्नधारि किमपि पुंचिह्नधारीत्येवं यो यो धर्मक्रमो दृश्यते, तं क्रममवलम्ब्य आश्रित्य लक्षीकृत्येत्यर्थः, बहुलं यथा स्यात्तथा ईश्वरेण सर्वकर्त्रा परिभाषितो निरूपितो वस्तुनः पदार्थस्य धर्म-

अथ तत्र परिमाणात्मकं यथा—खारी, द्रोणः, आढ़कम्; तत्परिमितश्च—खारी, द्रोणः, आढ़कम्। उपचारेणाभेदात् यथा,—मञ्चे स्थिता जनाः—मञ्चाः। संख्यात्मकं यथा—एकः, द्वौ, बहवः; अत्र प्रकृत्यर्थः सदृशप्रत्ययेनानूद्यते मात्रं, केवलाप्रयोगित्वात्; कृष्णौ, कृष्णाः—इत्यादौ द्वित्वाद्यर्थाधिक्येऽपि प्रथमान्तःपातात्। नारी, यादवः, दृष्टकृष्णः इत्यादौ स्त्रीप्रत्ययादिनार्थाधिक्येऽपि पुनर्नामत्वप्राप्तेः ॥ ९५८ ॥

---

विशेषः स्वभावविशेषो लिङ्गम्। 'धर्मः पुण्य-यम-न्याय-स्वभावाचार-सोमपाः' इति नानार्थवर्गः। ननु यदि वस्तुनो धर्मविशेषो लिङ्गमित्युक्तं, तदा कथं नाम्नः स्त्रीत्वादीति चेत्तत्राह—तच्चेति तल्लिङ्गं, उपचारात्—आरोपात्, तदात्मकं—लिङ्गात्मकम्। स्त्री पुमान् नपुंसकमित्येषां क्रमेण वाप्यादिभिः सम्बन्धः। वापी—दीर्घिका, तड़ागः,—पद्मयुक्तजलाशयः, कुण्डं प्रसिद्धम्। क्वचिदिति—सुन्दरा दारा इत्यादौ; दारदेवतादैवतशब्देषु लिङ्गात्मकत्वात् बहुलमीश्वरपरिभाषितं निरूपितं पुंस्त्वादिकं तत्तच्छब्दवाच्ये वस्तुनि च उपचर्यते। दारशब्दः स्त्रीवाचकः पुंलिङ्गो नित्यबहुवचनान्तश्च। देवताशब्द इन्द्रादिवाचकः स्त्रीलिङ्गः; दैवतशब्दोऽपि तद्वाचको नपुंसकलिङ्गः। अथेति—तत्र लिङ्गात्मके, परिमाणात्मकं यथोदाह्रियते। खार्यादयः परिमाणविशेषाः। यथोक्तम्—'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्। पुष्कलानि च चत्वारि आढ़कः परिकीर्तितः। चतुराढ़ा भवेद्द्रोणः खारी द्रोणचतुष्टयमि'ति। तैः खार्यादिभिः परिमितश्च तत्तल्लिङ्गात्मकं खारी द्रोणः आढ़कं स्यादिति। तत्परिमित इति—पदार्थविशेषणम्। उपचारेणेति—खार्यादिपरिमिते पदार्थे खार्यादित्वोपचार इति, 'अव्यापारे व्यापारवत्त्वारोप उपचारः' इति। यथेति—मञ्चस्थितेषु मञ्चत्वोपचार इति; मञ्चः—काष्ठादिनिर्मित उन्नतप्रदेशविशेषः। ननु कृष्णः कृष्णौ कृष्णा इत्यादौ यथा स्वादयः संख्यावाचकाः तथा एकद्वावित्यादौ न, प्रकृत्यैव संख्याया उक्तत्वादतः कथमत्र स्वादय इति चेत्तत्राह—अत्रेति। अत्र एषु एकादिषु शब्देषु प्रकृत्यर्थः एकत्वादिः, तत्सदृशप्रत्ययेन स्वादिना अनूद्यते मात्रं केवलमनुवादः क्रियत इत्यर्थः।

९५९। सम्बोधने च।

सम्बोधनमामन्त्रणं, तच्च नाम्ना नामिनः आभिमुख्यभावनम् ; तच्च हेशब्दादिद्योत्यं, क्वचित् तद्विनाभावेऽपि गम्यञ्च, तद्रूपस्यार्थाधिक्ये नाम्नः प्रथमा स्यात्। कृष्णनाम्नस्तवाभिमुख्यं भवत्वित्यर्थे—हे कृष्ण ; गम्यत्वेऽपि—कृष्ण ॥ ९५९ ॥

---

सदृशशब्दोऽसदृशप्रत्ययानां व्यावर्तकः, तेन एकावित्यादौ द्विवचनादेः संख्यावाचकत्वं विद्यत एव। अत्र प्रथमायाः वाचकत्वमन्याभिप्रायेणोक्तं, स्वमते तु प्रथमायाः द्योतकत्वम् ; उक्तान्नाममात्रार्थे द्योत्ये इति वक्ष्यमाणत्वादिति। नन्वनुवादार्थमेव कथमुक्तार्थाः स्वादयः क्रियन्ते यत उक्तं उक्तार्थानामप्रयोग इति चेत्तत्राह—केवलेति। केवलानां नाम्नां धातूनाञ्चाप्रयोगित्वात्। तथाच भाष्ये 'नापदं शास्त्रे प्रयुञ्जीते'ति, पदत्वार्थं स्वादयः क्रियन्त इति भावः। ननु यदि नामार्थमात्र एव क्रियते, तदा कथं कृष्णौ कृष्णा इत्यादौ प्रथमा, द्वित्वाद्यर्थाधिक्यात् इति चेत्तत्राह—कृष्णाविति। द्वित्वाद्यर्थाधिक्येऽपीति—प्रथमेति शेषः। अत्र हेतुः प्रथमेति। प्रथमाया अन्तर्मध्ये, पातात्, पतनात्—औजसोरिति शेषः। अन्यथा प्रथमान्तःपतनमनर्थकं स्यात्, तस्मात् द्वित्वसंख्यादेर्नामार्थमात्राविरोध इति भावः। ननु नार्यादिशब्देषु कथं प्रथमा नामार्थमात्राभिधायकत्वाभावादिति चेत्तत्राह—नारीति। अर्थाधिक्येऽपीति—प्रथमेति शेषः। तत्र हेतुः पुनरिति, नारीति—'नृ-नरयो र्नारी' ईवन्तः साधुरिति तद्धितप्रकरणे वक्ष्यते। यादव इति—'यदोरपत्यमित्यर्थे केशव-णः', 'आदिसर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे' इत्यनेन वृष्णीन्द्रः, 'उद्धयस्य गोविन्दः', 'न तु धातो र्नच स्त्रीप्रत्ययः' इत्यनेन गोविन्दः, 'ओ अव्'। दृष्टकृष्णः इति—दृष्टः कृष्णो येनेति पीताम्बरसमासः ॥

९५९। सम्बो। तच्चेति—आमन्त्रणमित्यर्थः। नाम्ना नामिनो नामवाच्यस्य आभिमुख्यभावनं—साम्मुख्यसम्पादनं भवतीति शेषः। तच्चेति—सम्बोधनमित्यार्थः। हे-शब्दादिभिर्द्योत्यं बोध्यम्। आदिशब्देन अङ्ग-ननु-प्रभृतीनां ग्रहणम्। तद्विनाभावे हे-शब्दाद्यभावेऽपि, हे-शब्दादिकं

## ९६० । सम्बन्धे तदाश्रयात् षष्ठी ।

सम्बन्धो भेदेन विवक्षितयोर्द्वयोर्योगः ; स च द्विनिष्ठ एव । तस्मिन् सम्बन्धे गम्ये यस्मादितरत्र सम्बन्धः प्रवर्तते, तस्मात् षष्ठी स्यात् ; तत्प्रवृत्तिश्च विवक्षावशात् । इतरतस्तु यथास्वं प्रथमादयः । प्रथमा त्वेकयैव षष्ठ्या द्वयोरपि सम्बन्धस्योक्तत्वेन नाममात्रार्था-विशेषात् ; यथा—कृष्णस्य भक्तः, कृष्णात् प्रवर्तमानेन सम्बन्धेन

---

गम्यं असाक्षात् प्रतीयमानम् । तद्रूपस्य सम्बोधनरूपस्य । कृष्णनाम्न इति—नाम यस्येति पीताम्बरः । आभिमुख्यं साम्मुख्यम् ॥

९६० । सम्ब । सम्बन्धं लक्षयति सम्बन्ध इति । भेदेन भिन्न-तया, विवक्षितयोर्वक्तुमिष्टयोः । द्विनिष्ठ इति । द्वयो र्निष्ठा यस्येति विग्रहः, निष्ठा—प्रवृत्तिः स्थितिरिति यावत् । यस्मादिति । भेदेन विवक्षितयो र्द्वयो र्मध्ये यस्मादितरत्र अपरस्मिन् सम्बन्धः प्रवर्तते, तस्मात् सम्बन्धाश्रयात् षष्ठी स्यादिति । तत्प्रवृत्तिः—सम्बन्धप्रवृत्तिः । इतर-तस्त्विति । यस्मान्नाम्नः षष्ठी स्यात्, तस्मादपरस्मादिति । यथास्व-मिति—यथायोग्यमित्यर्थः । ननु कथमत्र प्रथमा, सम्बन्धरूपस्यार्थस्य विद्यमानत्वेन नामार्थमात्राभिधायित्वाभावादिति चेत्तत्राह–प्रथमा त्विति । नामेति । नाममात्रार्थस्य अवशेषात्—अवशिष्टत्वात् । तत्प्रवृत्तिश्च विवक्षावशादित्युक्तं तत्फलमाह—एवमिति । श्यामोराम इति नात्र भेदो विवक्षितः, किन्तु य एव रामः स एव स्याम इति विशेषणविशेष्यभावः । ननु कथमिदं प्रत्युदाहृतं यथा—कृष्णस्य भक्त इत्यादौ सम्बन्धाश्रयात् षष्ठी इतरतस्तु प्रथमादयः सम्भवन्ति, तथात्र न, विशे णविशेष्यत्वेन द्वयोरेकविष्णुभक्तिविषयत्वात् । तथा चोक्तम्—'विशेष्यस्यैव यल्लिङ्गं विभक्तिवचने च ये । तथैव तानि कार्याणि विशेषणपदेऽपि चे'ति । अत्रोच्यते—विशेषणविशेष्ययोर्मध्ये यदा एकस्य सम्बन्धिता विवक्ष्यते, तदा षष्ठ्यपि भवति । यथा—पटस्य शुक्लो गुण इति । किन्त्वत्र तथा न विवक्षितमिति । तदाश्रयादिति किं, रामश्च । अत्र भेदो विद्यत एव किन्तु एकस्मादितरत्र सम्बन्धः प्रवर्तत इति न विवक्ष्यते । भेद्येति—भेद्यं विशेष्यं, भेदकं विशेषणं, तयोरन्योन्यं परस्परं, श्लिष्टि र्योगः, सम्बन्ध

भक्तसम्बन्ध इत्यर्थः। एवं भक्तस्य कृष्णः, तथा कृष्णस्य सौन्दर्यमित्यादि। भेदेन विवक्षितयोरिति किम् ? श्यामो रामः। अन्ये चाहुः— **भेद्यभेदकयोः श्लिष्टिः सम्बन्धोऽन्योऽन्यमिष्यते।**
**द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्सु भेदकात्॥ * इति**

इष्यत इति। भेद्यभेदकयोरित्यस्य भेदेन विवक्षितयोरिति विशेषणमनुसन्धेयम्। अतएव श्यामोराम इत्यत्र न सम्बन्धः। द्विष्ठ—उभयनिष्ठः। भेद्यस्य सम्बन्धे उक्तसम्बन्धषष्ठ्यन्यविष्णुभक्तिविषयत्वाद्भेदकादुत्तरे

* "विशिष्टबुद्धिहेतुः स्यादुपश्लेषो य उच्यते।
स सम्बन्धः स चानेकविधः स्वस्वामिकादिकः॥
नृपस्य धनमित्तादौ स्वस्वामिक उदाहृतः।
हरेर्वदनमित्यत्रावयवावयवी मतः॥
अध्यापकस्य व्याख्यानमित्यत्र वाच्यवाचकः।
गङ्गाया जलमित्यादावाधाराधेयसंज्ञकः॥
पितुस्तनय इत्यादौ योनिसम्बन्ध उच्यते।
भट्टस्य शिष्य इत्यादौ विद्यासम्बन्ध ईरितः॥
अश्वस्य घास इत्यादौ भक्ष्यभक्षक उच्यते।
वस्त्रस्य तन्तुरित्यादौ कार्यकारणमुच्यते॥
एवमन्येऽपि सम्बन्धा इष्टा व्याहृतिकोविदैः।
संयोगः समवायश्च सम्बन्धो द्विविधः स्मृतः॥
यथा राज्ञो धनं गन्धः पुष्पाणामिति केचन।
भेद्यभेदकयोः श्लेषः सम्बन्धः स चतुर्विधः॥
स्वस्वामी जन्यजनकोऽवयवावयवी तथा।
स्थान्यादेश इति प्रोक्तः सम्बन्धश्चोपचारतः॥
विप्रस्य कम्बलः पुत्रो ममेत्यादीनि केचत।
कर्मादि-विषयेऽपि स्यात् चर्मादावविवक्षिते॥
सम्बन्धस्य विवक्षायां षष्ठीत्याहुर्मनीषिणः।
उदाहृतं हि माषाणामश्नीयादिति कोविदैः॥"
(कारकोल्लासः ९६-१०४)

भेद्यस्य विष्णुभक्त्यन्तरविषयत्वादिति भावः। स च सम्बन्धश्चतुर्विधः, यतः—

**स्वस्वामी जन्यजनकोऽवयवावयवी तथा।**
**स्थान्यादेश इति प्रोक्ताः सम्बन्धाश्चोपचारतः॥**
**विष्णोर्भक्तो हरेः पुत्रः श्रीकृष्णस्य पदाम्बुजम्।**
**त्रिविक्रमोऽप्युद्धवस्य चतुर्धेयमुदाहृतिः॥ ६६०**

**अथोपपदविष्णुभक्तिं व्याप्य सम्बन्धभेदाः कथ्यन्ते—**

## ६६१। क्रियासम्बन्धविशेषि कारकम्।

क्रिया सत्त्वादिलक्षणो धात्वर्थः; तस्याः जन्यजनकान्तर्भूतक्रियायाः कर्तृत्वादिसम्बन्धविशेषो यत्र विवक्ष्यते, तत् क्रियाकारकमुच्यते;

---

षष्ठी स्यादित्यर्थः। स चेति—मुख्यत्वाच्चतुर्विध इत्युक्तम्। वस्तुतस्तु नानाविधाः सम्बन्धा भवन्ति। अत आधाराधेयादयोऽपि गृह्यन्ते, तेनान्नस्य भाजनमित्याद्यपि स्वस्वामीति। स्व आत्मीयः, स्वामी अधिपतिः, स्वस्य स्वामीति विग्रहः। जन्यजनकादिषु च एवं विग्रहो ज्ञेयः। विष्णो र्धनमित्यत्र धनस्याप्यात्मीयत्वमस्त्येवेति स्वस्वामिसम्बन्ध एव। स्वं धनमिति केचित्। तन्मते स्वस्वामिसम्बन्धस्य विष्णो र्धनमित्युदाहरणं विष्णो र्भक्त इत्यादौ तु सेव्यसेवकादिसम्बन्धान्तरं कल्पनीयम्। स्वस्वाम्यादीनां मध्ये यदा यस्य सम्बन्धित्वं विवक्ष्यते, तदा तस्मादेव षष्ठी उभयेषु सम्बन्धस्य विद्यमानत्वादिति ज्ञेयम्। ननु योगस्वरूपः सम्बन्ध इत्युक्तं, तर्हि कथं स्वस्वाम्यादीनां सम्बन्धत्वमिति चेत्तत्राह—उपचारत इति। सम्बन्धसम्बन्धिनोरभेदोपचारादित्यर्थः। विष्णोरिति—विष्णुभक्त इत्यादिषु त्रिषु क्रमेण स्वामिजनकावयविभ्यः षष्ठी। त्रिविक्रमोऽप्युद्धवस्येति—अत्र तु स्थानिनः षष्ठीति ज्ञेयम्। चतुर्धेति—क्रियाप्रकारवृत्तेः सङ्ख्याया धेत्यनेन धाप्रत्ययस्तद्धितः। उदाहृतिरुदाहरणम्। अथेति—अथानन्तरं सामान्यसम्बन्धनिरूपणानन्तरं एतदारभ्य उपपदविष्णुभक्तिं व्याप्येति। उपपदविष्णुभक्तिसमाप्तिं यावदित्यर्थः॥

६६१। क्रिया। क्रियायाः सम्बन्धः क्रियासम्बन्धः, स एव विशेषो विद्यतेऽस्य क्रियासम्बन्धविशेषि, क्रियासम्बन्धविशेषि यत् कारकमित्या-

यथा—वैष्णवो भवति। अत्र सत्तासम्बन्धविशेषी वैष्णवः कारकम्। सम्बन्धसामान्ये तु सम्बन्ध्येवेत्यर्थः ; यथा--कृष्णसम्बन्धेन पाकः, कृष्णस्य पाकः ; एवं कृष्णस्य पचतीति। कारकमित्यव्युत्पन्नं नाम। क्रियानिमित्तं लोकतः सिद्धमित्यन्ये। तस्य च कारकस्य

---

पातितो व्याख्येति। क्रिया केत्यपेक्षायां क्रियालक्षणमाह—क्रियेति। सत्तादिर्लक्षणं स्वरूपं यस्येति विग्रहः, धातूनां भुवादीनां सनन्तादीनामर्थः धात्वर्थः, सत्तादिलक्षणो धात्वर्थः क्रियोच्यत इत्यन्वयः। तस्याः सत्तादिरूपायाः। जन्यजनकान्तर्भूतक्रियायाः कर्तृत्वादीति पाठः सभ्यः। क्रियाया इत्यत्र षष्ठयन्तरूपः लिपिकारेण दूरीकृत इति। सूत्रस्थक्रियापदेन जन्यजनकान्तर्भूतक्रिया लक्ष्यते, तस्मात्तस्याः जन्यजनकान्तर्भूतक्रियायाः कर्तृत्वकर्मत्वादिसम्बन्धविशेषो यत्र विवक्ष्यते—वक्तुमिष्यते, तत्कारकमुच्यते। नन्वत्र किं जन्यं को जनकः का वा तदन्तर्भूतकिया। सत्यं। उच्यते—गुरोः सकाशात् नाममन्त्रपूर्वकपञ्चसंस्कारादिग्रहणरूपं यत् फलं तदेव जन्यं, यस्तु तद्ग्रहणे प्रथमत इन्द्रियप्रवृत्तिरूपः स जनकः, ग्रहणादिपूर्वकसमुदायविद्यमानतादिरूपा जन्यजनकान्तर्भूतक्रियेति विवेकः। 'फलव्यापारयोर्धातुराश्रयेतु तिङो मताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणमि'ति—प्राचीनोक्तत्वात्। स्यादेतत्। यदि सर्वत्र क्रियासु एवं कल्प्यते, तदा सकर्मकाकर्मकयोरभेद इति चेत्, तदैवं वाच्यं—यत्र फलव्यापारयोरेकाधारवृत्तित्वं तत्रैव अकर्मकत्वं, यत्र फलव्यापारयोर्द्विधाधारवृत्तित्वं तत्रैव सकर्मकत्वम्। वक्ष्यते च स्वयं ग्रन्थकृता अन्तर्भूतण्यर्थशुन्यत्वादकर्मकत्वं, अन्तर्भूतण्यर्थत्वात् सकर्मकत्वमिति। अत्रापि एकाधारवृत्तित्वादि परिकल्पनीयमन्यथा क्रियाविशेषणं कर्मेत्यत्र विशेष्यविशेषणता न घटते। अथवा तस्याः क्रियायाः सम्बन्धविशेषो विद्यते यत्र इति सूत्रेणानुषङ्गः कर्तव्यः। पुनः सम्बन्धविशेषविवृतिं विशेषेणाह—जन्येत्यादि। अत्रायमर्थः—जनको हि कर्तुश्चैतन्यस्य व्यापारः। व्यापारो भावनाभिधा, सैवोत्पादनं सैव क्रियेति वैयाकरणभूषणेन तल्लक्षणं चोक्तम्। एतेनैतद्योगार्थोऽपि दर्शितः। तद्यथा—भाव्यते व्याप्यते सर्वकारकाणीति भावना भू प्राप्तावित्यस्मात् 'ण्यन्तादासः श्रन्थादेश्चे'त्यनेन लक्ष्म्यां विषये

विशेषताव्यञ्जका आख्याताद्याश्च प्रत्यया भवन्ति। यत्र क्रिया-सम्बन्धो मुख्यस्तत्राख्यातादयः ; यत्र तु तत्सम्बन्धो गौणः, क्रियैव वा मुख्या, तत्र द्वितीयाद्या इति ; यथा—वैष्णवो भवति इति

---

भावेऽनः, पश्चादाविति। तजन्यत्वे सति तजन्यजनको हि व्यापारः। इत्यपि केनाप्युक्तम्। उदाहरणञ्च यथा—भ्रमिर्दण्डजन्योऽपि सन् दण्ड-जन्यं घटं जनयति इति। जन्योऽत्र इन्द्रियस्पन्दनादि र्जनको भावना, अहं विद्यमानः भवामीत्यादिः। जन्यश्च जनकश्च जन्यजनकौ, तौ अन्तर्भूतौ यस्यां सा जन्यजनकान्तर्भूता, सा चासौ क्रिया चेति जन्यजनकान्तर्भूत-क्रिया। कर्तृत्वादिसम्बन्धविशेष इति केवलसमासः। जन्यजनकान्त-र्भूतक्रियायाः कर्तृत्वादिसम्बन्धविशेषः, जन्यजनकान्तर्भूतक्रियाकर्तृत्वादि-सम्बन्धविशेषः यत्र वस्तुनि विवक्ष्यते तत्कारकमुच्यते। अत्र शक्ति-शक्तिमतोरभेदोपचारादिति-न्यायेन द्रव्यमेव कारकमुच्यते, पाचकः शेते इतिवत्। वस्तुतस्तु कारकं शक्तिः, द्रव्यं तच्छक्तिमत् इति विवेचनीयम्। क्रियाशब्दोऽत्र क्यवावन्तः, लक्ष्मीप्रत्ययसाधुः। तस्येति पाठे तस्य धात्वर्थस्य सम्बन्धी जन्यजनकरूपसम्बन्धस्य अन्तर्भूतो यः क्रियाकर्तृत्वादि-स्वरूपसम्बन्धविशेषः विवक्ष्यत इत्यर्थः। अत्र धात्वर्थस्य जन्यता, कार-कस्य तु जन्यजनकता, स यत्र, तस्यैव व्यापारत्वेन क्रिया वक्ष्यमाणत्वा-दिति। वस्तुतस्तु तस्याः सत्तादिस्वरूपसिद्धक्रियायाः सम्बन्धिजन्यजन-कान्तर्भूतसाध्यक्रियायाः कर्तृत्वादिसम्बन्धविशेष इत्यादिकं पूर्ववद्योज्य-मिति। आदिपदेन क्रियाकर्तृत्वकर्मत्वादे र्ग्रहणम्। वैष्णवो भवतीत्याद्या-ख्यातविष्णुपदानां वाहुल्यभयादुक्तत्वाच्चात्र प्रायः साधनक्रमो न लेख्यः। किञ्चिदन्यथा कथ्यते। ननु वैष्णवो भू इति कृते को दोष इति चेत्, तदैवं वाच्यं—केवलधातोः सत्तादिना सह भूतभविष्यद्वर्तमानकालान्वयित्वा-भावात् वैष्णवः तिप् इति कृतेऽपि तिवादे र्धात्वर्थशून्यकर्तृत्वादिवोधक-त्वात् वैष्णवः भू-तिप् इत्यादिकं न स्यादुभयो र्मेलकत्वाभावेन विशृङ्खल-त्वादतः उभयपोषक-शपोऽपि द्योतकत्वमिति। अत्र सत्तेति—सत्ता-रूपायाः क्रियायाः सम्बन्धविशेषः कर्तृत्वरूपस्तद्वान् सम्बन्ध्येवेति। सम्बन्ध्येवेत्यत्र नतु कारकमिति शेषः। कृष्णस्य पाक इति। कृष्णोऽत्र

कर्तर्याख्यातं, न तु तृतीया। मालां करोतीति कर्मणि द्वितीया। वैष्णवेन भूयते इति कर्तरि तृतीया न त्वाख्यातम्। कारकञ्च कर्त्रादिषड्विधम्; तच्च पुनः प्रत्येकं द्विविधम्—उक्तमनुक्तञ्च ॥ ६६१ ॥

---

सम्बन्धी नतु कारकम्। कृष्णस्य पचतीति कृष्णस्य सम्बन्धेन पचतीत्यर्थः। क्रियासम्बन्धविशेषिकारकमिति—यद्रूढ़लक्षणमुक्तं, तदेव द्रढ़यति—कारकमिति। अव्युत्पन्नं नामेति। करोतीति कारकं षट्, कारकेति णकप्रत्ययान्तेन साधु; संज्ञाशब्दानां यथाकथञ्चिद्व्युत्पत्तित्वात् नतु कर्तरि णकप्रत्ययान्तम्। क्रियायाः कर्तृत्वादिनिमित्तमिति विग्रहः। क्रिया जन्यजनकान्तर्भूतेत्यर्थः। कारकं निमित्तं हेतुरिति पर्यायः, लोकतो व्यवहारात्। यदि करोतीति कारकमिति णकप्रत्ययान्तं स्यात्, तदा कर्तृशब्देन समानार्थता स्यात्, एवं सति स्वतन्त्रस्यैव कारकपदेनाभिधानं स्यादिति। भाष्यकारस्तु करोतीति कारकमित्याह—आ विक्लित्तेर्ज्वलनक्रियां कुर्वत् काष्ठमपि, अधिश्रयणक्रियां कुर्वती स्थाल्यपि, स्वावयवविक्लित्तिं कुर्वदन्नमपि, वृक्षात् पत्रं पततीत्यत्र पततः पत्रस्य विभागं प्रत्यात्मनो निमित्ततां कुर्वाणो वृक्षोऽपि, विप्राय गां ददातीत्यत्र गोस्वीकारं कुर्वन् ब्राह्मणोऽपि कारकं भवत्येव, अतएव सर्वाण्येव कारकान्यभिधीयन्ते, तेषान्तु सर्वेषामायोजनं कुर्वन् देवदत्तो मुख्यः सन् कर्ता भवति। यदि पुनः स्वक्रियां कुर्वतां काष्ठादीनामपि मुख्यत्वं विवक्ष्यते, तदा काष्ठं पचति स्थाली, पचति ओदनः पचतीत्याद्यपि भवति, तेषां मध्ये यदा यस्य क्रियावाप्यत्वं साधकतमत्वादि-व्यापारभेदत्वापेक्षया विधीयते तदा कर्मकरणत्वादिकमिति। यथा चोक्तं— 'निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः' इति। तस्य चेति—तस्य चोक्तलक्षणलक्षितस्य क्रियासम्बन्धविशेषिणः कारकस्य विशेषतां कर्तृत्वकर्मत्वादिरूपतां व्यञ्जयन्ति—व्यक्तीकुर्वन्ति ये, ते विशेषताव्यञ्जका ज्ञापकाः। आख्यातमाद्यं येषां ते आख्याताद्याः। द्वितीयाद्या येषां ते द्वितीयाद्याः। आख्याताद्या इत्याद्यपदेन कृत्प्रत्ययस्य ग्रहणं, द्वितीयाद्या इत्याद्यपदेन तृतीयादेर्ग्रहणं, प्रथमाया वाच्यवाचकतालक्षणसम्बन्धमात्रव्यञ्जकत्वेन कर्तृत्वादिव्यञ्जकत्वाभावादिति। ननु के कुत्र विशेषता-

९६२। आख्यातादयो यत्र क्रियन्ते तदुक्तम्।

तथाहि, 'प्रकृतिप्रत्ययौ प्रत्यायार्थं सह ब्रूतः' इति न्यायेन प्रत्ययार्थस्यैव प्राधान्यात् कर्तृकर्मादिषु विहितानामाख्यातादीनां यो यत्र विहितस्तेन तदुक्तं स्यात्। अत उक्तात् नाममात्रार्थे द्योत्ये प्रथमैव, यदि बाधकान्तरं न स्यात्॥ ९६२॥

---

व्यञ्जका इति चेत्तत्राह—यत्रेति। यत्र कारके क्रियासम्बन्धो मुख्यः प्रधानं, तत्र विहिता आख्यातादयो विशेषताव्यञ्जका इति शेषः। यत्र तत्सम्बन्धः क्रियासम्बन्धो गौणो भवति, भाववाच्ये विहिता या क्रिया सा क्रियैव स्वयं मुख्या वा भवति, तत्रानुक्तकारके सति क्रियामुख्यत्वे वा सति द्वितीयाद्या विशेषताव्यञ्जका भवन्तीति। क्रमेणोदाहरति यथेति—वैष्णवो भवतीति। वैष्णवो वर्तमानसत्तानुकूलव्यापारवान् सत्ता-क्रियायाः कर्तेत्यर्थः। सम्प्रदायिगुरोः सकाशात् गृहीतपञ्चसंस्कारविष्णव-धिदैवतजनो वैष्णवः। दैवतं तावत् द्विविधं—यज्ञे पुरोडाशादिसम्प्रदानं मन्त्राराध्यञ्चेति। तत्रान्त्यं ग्राह्यमित्यत्र कर्तरि क्रियासम्बन्धो मुख्यः, अतः कर्तरि आख्यातं विशेषताव्यञ्जकं, नतु तृतीयेति कर्तुरनुक्तत्वा-भावात् नात्र तृतीया, न च तस्या विशेषताव्यञ्जकतेत्यर्थः। मालां करोतीति—अत्र कर्मणि क्रियासम्बन्धो गौणः। अतः कर्मणि द्वितीया विशेषताव्यञ्जिका, नत्वाख्यातमिति नात्र कर्मण्याख्यातम्। अत आख्या-तस्य विशेषताव्यञ्जकता नास्तीत्यर्थः। वैष्णवेन भूयत इति। अत्र क्रियैव मुख्या, अतोऽनुक्तकर्तरि तृतीया विशेषताव्यञ्जिका, नत्वाख्यात-मिति नात्र कर्तर्याख्यातं किन्तु भावे, अतः आख्यातस्य विशेषताव्यञ्ज-कता नास्तीत्यर्थः। तच्च कारकं षड्विधं भवतीत्याह—कारकञ्चेति। षड्विधमिति—षट्प्रकारमित्यर्थः। विधा विधौ प्रकारे चेति नानार्थ-वर्गः। तच्चेति षड्विधं कारकमित्यर्थः। प्रत्येकमिति—कर्तृद्विविधं, कर्म द्विविधमित्येवं क्रमेणेत्यर्थः॥

९६२। आख्या। तत्रोक्तलक्षणमाह—यत्र कारके आख्यातादयः क्रियन्ते, तैराख्यातादिभिस्तत्तत्कारकमुक्तं स्यादित्यन्वयः। सूत्रस्य वैष्णवो मालां करोतीत्याद्युदाहरणार्थं न्यायपूर्वकवृत्त्या फलितार्थमाह—प्रकृतीति।

९६३। उक्तादन्यदनुक्तम्।

यो यत्र न विहितस्तेन तदनुक्तं स्यात्। तत्र द्वितीयाद्या विधीयन्ते। यथा—वैष्णवो मालां करोतीत्यत्र कर्तर्याख्यातेन कर्ता वैष्णव उक्तः, मालारूपं कर्म पुनरनुक्तमेव। वाधकान्तरे तु यथा—वैष्णवं मालां कुर्वन्तं पश्य इत्यत्र कर्तविहितेन शतृप्रत्ययेनोक्तो वैष्णवः कर्ता पश्येत्यस्य कर्तरि विहितस्य कर्म तेनानुक्तश्चेति। तदेवं द्वितीयाद्या भागशो विधातुं कारकभेदानाह ॥ ९६३ ॥

---

प्रकृतिस्तावन्नामधातुभेदाद्द्विविधा प्रत्ययस्तावत् स्वाद्याख्यातकृत्तद्धितभेदाच्चतुर्विध इति विवेचनीयः। तत्र विष्लृ व्याप्तौ तस्मात् कर्तरि क्नु कृत्, विष्णाति व्याप्नोति सर्वानिति विष्णुः। अत्र व्याप्त्यर्थे विष्धातुः प्रकृतिः, शीलार्थः क्नु प्रत्ययः, प्रकृत्यर्थगुणीभूतत्वेन तौ च द्वौ प्रकृतिप्रत्ययौ सह युगपन्मिलित्वा प्रत्ययार्थं परस्परापेक्षिसाहित्यावश्यक-नित्यतया व्याप्तिगुणशीलकर्तारं भगवन्तं यथा व्रूतस्तद्वदिहापीति। प्रकृतिश्च प्रत्ययश्च तौ द्वौ प्रकृतिप्रत्ययौ प्रत्ययस्यार्थं सह एकदा व्रूत इति प्रत्ययार्थस्यैव प्राधान्यम्, अतः प्रत्ययेनैवोक्तं भवतीति। कर्तृकर्मादिष्विति। तेषू वाच्येषु विहितानां कृतानाम् आख्यातादीनां मध्ये य आख्यातादिर्यत्र वाच्ये विहितस्तेनाख्यातादिना तत् कर्त्राद्युक्तं स्यादित्यर्थः। अतो हेतो र्नाममात्रार्थे द्योत्ये सति उक्तान्नाम्नः प्रथमैवेति, भवतीति शेषः। यदीति—वाधकान्तरसत्त्वे प्रथमा न भवतीति ॥

९६३। उक्ता। य इति—य आख्यातादिर्यत्र वाच्ये न विहितस्तेन आख्यातादिना तत् कर्त्रादि अनुक्तं स्यात् इति। मालारूपं कर्म पुनरनुक्तमेवेति आख्यातस्य कर्मण्यविहितत्वादिति शेषः। अत्र कर्तरि उत्पादनार्थकृतिक्रियासम्बन्धमुख्यत्वेन तद्वाच्यविहिताख्यातेनोक्तो वैष्णवः कर्तेति। तत्कृतिसाध्य उत्पाद्ये कर्मणि मालारूपे तत्कृतिक्रियासम्बन्धगौणत्वेन कर्मणि वाच्ये तदाख्याताद्यविहितत्वात् अनुक्ते कर्मणि द्वितीयेत्यनेन द्वितीयेति। वाधकान्तरे तु यथारूपं दर्श्यते। कुर्वन्तमिति—डुकृञ् करणे शतृ, तस्याच्युताभावात् 'शपोऽपवाद उः', 'गोविन्दः', 'करोत्यरामस्य उर्निर्गुणे' इत्यनेन उः, 'उद्वयं वः'। ततः कुर्वच्छब्दादम्। 'अच'

९६४। स्वतन्त्रं तत्प्रयोजकञ्च कर्तृ।

यस्यैव व्यापारतया क्रिया विवक्ष्यते, तत् स्वतन्त्रं, यच्च तस्यापि प्रेरकतया तत् प्रयोजकम्। तच्च कारकं कर्तृसंज्ञं स्यात्। अर्थविशेषणत्वे तु कर्तेति पुंलिङ्गत्वम्। 'यः करोति, स कर्ता'; 'कारयति यः, स हेतुश्च' इति कालापाः (चतुष्टयवृत्तिः २२०-२२१), कृञर्थस्य धातुष्वनुगतत्वात्। किन्तु तद्द्वयमिदमुदाहरणमेव, न तु लक्षणम्। अथ स्वतन्त्रस्य केवलस्वातन्त्र्येण प्रयोजकमात्राधीनत्वेन च द्विधात्वम्। ततश्च—

**कर्ता स्वतन्त्र इत्युक्तो हेतुकर्ता प्रयोजकः।**
**प्रयोजकाधीनकर्ता प्रयोज्य इति स त्रिधा॥ ***

अथ कर्तरि परपदादिविधानात्तेनोक्ते तत्र प्रयोगं दर्शयति। तत्र चोक्तकारकसम्बन्धेन क्रियापदस्य नानारूपत्वमाह—उक्तानुरूपमेव

---

इत्यादिना नुम्। तेनानुक्तश्चेति–'प्रधानाऽप्रधानयोः प्रधाने कार्यसंप्रत्ययः' इति न्यायात् इति भावः। तदेवमिति—द्वितीयाद्या विष्णुभक्तिभगिशः पृथक् पृथक्, विधातुं कर्तुम्॥

९६४। स्वत। तत्र स्वतन्त्रलक्षणमाह–यस्यैवेति। यस्य कारकस्यैव व्यापारतयेति, साध्यतया, जन्यजनकान्तर्भूता क्रियेत्यर्थः। नन्वेवं सति वैष्णवाचार्योऽश्वेन ग्रामं गच्छतीत्यादौ कथं नाश्वस्य कर्तृत्वं क्रियायास्तद्व्यापारत्वात्? उच्यते—अत्राश्वस्य कर्तुरधीनत्वेन क्रियायां साहाय्यमात्रं विवक्ष्यते, नतु स्वातन्त्र्यम्। स्वातन्त्र्यविवक्षायां तु—अश्वो ग्रामं गच्छतीति भवत्येव। प्रयोजकलक्षणमाह यच्चेति—तस्य स्वतन्त्रस्य। अपिकारात् प्रयोजकस्य प्रेरकतया नियोगकर्तृत्वेन विवक्ष्यत इति शेषः।

---

* प्रवृत्तावप्रवृत्तौ वा कारकाणां य ईश्वरः।
अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम्॥
कर्ता च त्रिविधो ज्ञेयः कारकाणां प्रवर्तकः।
केवलो हेतुकर्ता च कर्मकर्ता तथाऽपरः॥

पुरुषवचनादिकं क्रियापदे ; यथा—उक्तत्वेन विवक्षिते नाम्नि प्रथमः पुरुषः, युष्मदि मध्यमः, अस्मद्युत्तमः, वचनानि च तद्वदिति। वर्तमाने काले तिवादयः। कर्तरि परपदादिकम्। वैष्णवो भवति, वैष्णवो वर्तमानसत्ताक्रियायाः कर्तेत्यर्थः, तदनुकूलव्यापारत्वेन तत्र स्वातन्त्र्यात्। अत्र क्रियायाः कर्तृसम्बन्धो मुख्यः, कर्तुरेव वाच्यत्वात्। एवं वैष्णवौ भवतः, वैष्णवा भवन्ति। एवं भवान् भवतीति। हे वैष्णव ! त्वं भवसि, युवां भवथः, यूयं भवथ ; अहं भवामि, आवां भवावः, वयं भवामः ; युष्मदाद्यप्रयोगेऽपि लभ्यते ; भवसीत्यादि। अस्मि इत्यव्ययमहमित्यस्य निपातोऽस्ति, तेन तद्योगेऽप्युत्तमः, यथा—'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति' इति। 'घटो भवति' इत्यादावचेतनेऽपि स्वातन्त्र्यमुपचारात्॥ ९६४ ॥

---

प्रयोजकमित्युक्ते प्रयोज्याकर्षणं भवत्येव। तथापि तत्पदं स्पष्टतार्थम्। तं प्रयोजयतीति तत्प्रयोजकमित्यर्थः। ननु विष्णुमित्रेण वैष्णवोऽन्नं पाचयतीत्यत्र ण्यन्ताभिहितायां प्रेरणक्रियायां स्वातन्त्र्येणैव कर्तृत्वे सिद्धे प्रयोजकत्वेन कर्तृत्वमनर्थकमिति न वाच्यम्, एवं सति यथा विष्णुमित्रं पक्तुं प्रयुङ्क्ते इत्यत्र नावश्यं पाकनिष्पत्तिः प्रतीयते, तथा विष्णुमित्रेण वैष्णवः पाचयतीत्यत्रापि नियमसिद्धा पाकनिष्पत्तिर्न प्रतीयेत, अपिच प्रेरणक्रियायां भूतायां पचिक्रियायां भविष्यन्त्यामपि विष्णुमित्रेण वैष्णवोऽपाचयदिति स्यात्। किञ्च यशोदया अन्नं पाचयते कृष्ण इत्यत्र पाकक्रियायां कृष्णस्य कर्तृत्वाभावे कर्तृगामिक्रियाफलस्याभावात् आत्मपदं न स्यात्। तस्माद्वैष्णवादेः प्रेरणक्रियायां स्वतन्त्रकर्तृत्वं पचिक्रियायां तु प्रयोजककर्तृत्वमिति। कारकविशेषणत्वेन कर्तृशब्दस्य ब्रह्मत्वमुक्तं वाच्यलिङ्गत्वेन पुंस्त्वमपि साधयति। अर्थेति—अर्थशब्दोऽत्राभिधेयवाची। कर्तेति—कर्तेत्यस्य पुंलिङ्गत्वमिति। यः करोतीति कर्ता। हेतुश्चेति—कर्तेत्यर्थः। कर्तेति—कृधातोः कर्तरि तृण्, तस्मात् कालापानामन्वर्थमिदं लक्षणम्। ननु तर्हि कथं वैष्णवो महाप्रसादं खादति, मथुरां गच्छतीत्यादौ कर्तृत्वं ? कृतेरभावादिति चेत्, तत्राह कृञर्थस्येति। कृधातोरर्थस्य धातुषु धात्वर्थे-

६६५। नञ्प्रयोगेऽपि कर्तृत्वादि।
वैष्णवो न भवतीत्यादौ ॥ ६६५ ॥

ष्वनुगतत्वादिति। किन्त्विति—कालापानां लक्षणे कोऽपि विरोधो नास्ति, किन्तु तेषां कालापादीनामिदं द्वयमस्माकमुदाहरणमेव पोषकमेव, नतु लक्षणमिति, स्वतन्त्रमित्यादिलक्षणस्य विराजमानत्वादिति शेषः। ननु 'स्वतन्त्रं तत् प्रयोजकञ्च कर्तृ'इत्युक्तं, तर्हि कथं प्रयोज्यस्य कर्तृत्वमिति चेत्तत्राह—अत्रेति। स्वतन्त्रस्यैव द्विधात्वं नतु प्रयोज्यः पृथक् कर्तेत्यर्थः। ततश्चेति—स्वतन्त्रस्य द्वैविध्यात्। स इति—कर्तेत्यर्थः। अथेति—कर्तरि वाच्ये, तेन परपदादिना उक्ते। तत्र कर्तरि—परपदादीत्यादिपदेन आत्मपदादेर्ग्रहणम्। तत्र चेति—तत्र कारकेषु। उक्तेति—उक्तस्य कारकस्य सम्बन्धेनेति। आह इति—प्रशस्तपण्डित इत्यर्थः। उक्ता—उक्तस्यानुरूपं सदृशं पुरुषश्च वचनञ्च तदादिकम्। तद्विवृणोति यथेति। उक्तत्वेन विवक्षिते वक्तुमिष्टे नाम्नि वाच्ये क्रियापदे प्रथमः पुरुषो भवति। उक्तत्वेन विवक्षित इति—युष्मदि अस्मदि च योज्यम्। तद्वदिति—उक्तानुरूपमेवेत्यर्थः। पुरुषवचनादिकमित्यत्रादिशब्देन बहुप्रयोजक इति ज्ञेयम्। वर्तमान इत्यादौ परपदादिकं यथा स्यात् तथा धातोरुत्तरे। तदनुकुलेति—तस्याः सत्तायाः अनुकूलः सहायो व्यापारश्चेष्टा यस्य तत्तेन। तत्र सत्तायाम्। अत्रेति—अत्रोदाहरणे। क्रियायाः कर्तृसम्बन्ध इति—कर्त्रा सह सम्बन्ध इत्यर्थः। एवं भवान् भवतीति—युष्मदर्थे भवद्योगे मध्यमो नेष्यते बुधैरिति भवच्छब्दस्य युष्मद्वाचित्वेऽपि न मध्यमः। लभ्यत इति—युष्मदादीति शेषः। अस्मीति—अहमित्यस्य निपातत्वेन अस्मद्वाचित्वं, तेन हेतुना तद्योगेऽप्यस्मीत्यस्य योगेऽपि। त्वामिति—विदुषां पण्डितानां ; समवायः समूहः। ननु घटो भवतीत्यादौ कथं घटादीनां कर्तृत्वं क्रियाव्यापारत्वाभावादिति चेत्तत्राह—घट इति। अत्र हेतुः उपचारादिति ; अचेतनत्वेनाव्यापारवत्यपि व्यापारवत्त्वोपचारादित्यर्थः॥

६६५। नञ्। 'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' इति। 'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्' इति। नञः प्रयोगो

९६६। वाच्यलिङ्गानां तुल्याधिकरणविशेषणानां विशेष्यवल्लिङ्गादि।

उत्तमो वैष्णवो भवति, उत्तमौ वैष्णवौ भवतः, वैष्णवस्त्वं भवसि। युष्मदाद्यप्रयोगेऽपि वैष्णवो भवसीत्यादि। उक्तानां पृथङ्-निर्देशे प्रत्येकं समुदायस्य वा संख्यामपेक्ष्य वचनानि स्युः ; यथा—ब्रह्मरातश्च विष्णुरातश्च भवति भवतो वा। युगपद्वचने पुरुषाणां

---

नञ् प्रयोगस्तस्मिन् सत्यपि कर्तृत्वादि स्यात्। आदिपदेन कर्मत्वकरण-त्वादेर्ग्रहणम्। वैष्णवो न भवतीत्यादौ क्रियाकर्तृत्वादिसम्बन्धाभावाद-प्राप्तमपि कर्तृत्वादिलक्षणकरणाद्भवतीत्यर्थः ॥

९६६। वाच्य। वाच्यस्य अभिधेयस्येव लिङ्गं येषाम्। तुल्यमधि-करणं वाच्यस्य येषां, तानि च तानि विशेषणानि चेति तेषां, विशेष्य-वल्लिङ्गादि स्यात्। आदिपदेन वचनादेर्ग्रहणम्। उत्तमो वैष्णवो भवतीति—यत्र वैष्णवस्तत्रैवोत्तमत्वमिति तुल्याधिकरणता। वैष्णवस्त्वं भवसीत्यनेन युष्मदो विशेष्यत्वं लभ्यत एव, तस्य विशेषणत्वेन वैष्णव इति प्रयुज्यते। वाच्यलिङ्गानामिति किं—प्रधानं राधा गतिः कृष्णः, आश्रयो वृन्दावनम्। अत्र तुल्याधिकरणत्वमस्त्येव, किन्तु न वाच्य-लिङ्गत्वमिति। तुल्याधिकरणेति किं–भक्तस्य कृष्णः। अत्र भक्तशब्दस्य वाच्यलिङ्गत्वमस्त्येव, किन्तु न तुल्याधिकरणत्वमिति। तुल्याधिकरणत्वं हि 'भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्ति'रिति। य एव कृष्णः स एव भक्त इति न, किन्तु भक्तसम्बन्धी कृष्णः। अनयोर्विशेष्यविशेषणत्वं भेद्यभेदकयोरित्यादावुक्तमेव। ननु तथापि तुल्याधिकरणेति किमर्थं? यतः षष्ठ्युत्पत्तिस्तु भेदकादित्यनेन व्यधिकरणविशेषणात् षष्ठ्येव भविष्यति। उच्यते स्पष्टतार्थमेतदिति। उक्तानां—उक्तानां कारकाणां पृथङ्-निर्देशे पृथग्योगे प्रत्येकमिति, एकमेकं प्रति प्रत्येकं, षष्ठ्यन्तमेतत् एकै-कस्येत्यर्थः। उक्तानामित्यत्र बहुवचनमनियतं तेनोक्तयोरपि। ब्रह्मरातः शुकदेवः, विष्णुरातः परीक्षितः। उक्तानुरूपमेव पुरुषवचनादिकं क्रियापदे-इत्यस्योक्तत्वात्। ब्रह्मरातविष्णुरातौ भवत इत्यत्र भवतीति च भवत्येव,

प्रथम-मध्यमोत्तमसंज्ञानां युगपद्वचने प्राप्ते तेषां मध्ये यो द्वयोर्बहूनां वा परः स एव स्यात्, वचनन्तु समुदायसंख्यापेक्षम् ; यथा—कृष्णश्च त्वञ्च भवथः, तौ च अहञ्च भवामः। वैपरीत्यनिर्देशेऽपि—अहञ्च त्वञ्च स च भवामः॥ ९६६॥

अथ भावे आत्मपदप्रथमपुरुषैकवचनम्। तेन अनुक्ते कर्तरि यथा—

## ९६७। अनुक्ते कर्तरि करणे च तृतीया।

अनुक्त इति कारकान्तरविष्णुभक्तिविधानेऽपि योज्यं, स्पष्टतार्थमेतत्, उक्ते तदभावस्य न्यायसिद्धत्वात्। वैष्णवेन भूयते, वैष्णवस्य

---

च शब्दस्यार्थद्वैविध्यस्वीकारात्। तथापि पृथगिति कृतं स्पष्टतार्थमिति ज्ञेयम्। युगपदिति—युगपदेकदा, वचने एकवचने द्विवचने बहुवचने प्राप्ते सति। य इति—पुरुष इत्यर्थः। समुदायसंख्यापेक्ष्यमिति—समुदायस्य संख्यामपेक्ष्य भवतीत्यर्थः, नतु प्रत्येकसंख्यापेक्ष्यमिति। कृष्णश्च त्वञ्च भवथ इति—अत्रैकदैव नाम्नि प्रथमपुरुषैकवचने युष्मदि मध्यमपुरुषैकवचने प्राप्ते तयोः परो मध्यम एव स्यात्, समुदायस्य द्वित्वात् तस्य द्विवचनं थस्। तौचेति–तावित्यनेन पूर्वोक्तयोर्नामयुष्मदोः परामर्षः। अत्र नाम्नि प्रथमपुरुषैकवचने प्राप्ते तेषां पर उत्तम एव स्यात्, समुदायस्य बहुत्वात्तस्य वचनं मस्। पुरुषाणां परत्वन्तु प्रथममध्यमोत्तमानामिति पाठक्रमेण ज्ञेयं नतु विवक्षाक्रमेण। एतत् सूचयितुमाह वैपरीत्येति—वैपरीत्येन व्यक्तिक्रमेण निर्देशेऽपि तेषां परः स्यादिति शेषः। पुरुषाणां युगपद्वचनप्राप्तिस्तु क्रियाकालयोरेकत्व एव सम्भवतीति। स भवति त्वं गच्छसि इत्यादौ स पचति, त्वं पक्ष्यसि इत्यादौ युगपद्वचनप्राप्तेरसम्भवः। अथेति आत्मपदेति—आत्मपदप्रथमैकवचनमेव भावे इति नियमादिति शेषः। तेनेति–-तेन आत्मपदप्रथमपुरुषैकवचनेन। अनुक्ते इति—तस्य कर्तर्यविहितत्वादिति शेषः॥

९६७। अनु। सुगमम्। कारकान्तरेति—कारकान्तरे कर्मादौ, द्वितीयादिविष्णुभक्तिविधानेऽपीति। ननु उक्तत्वात् प्रथमैवेत्युक्तमतो-

वर्तमानसत्ता क्रियेत्यर्थः। अत्र क्रियैव मुख्या, तस्या एव वाच्यत्वात्। एवं वैष्णवाभ्यां भूयते इत्यादि। कथं द्वौ वैष्णवौ भवतः इत्यत्र द्विशब्देन न द्विवचनमुक्तार्थकं स्यात्? उच्यते—द्विशब्दोऽत्रावधारणार्थमेव प्रयुज्यते, न तु द्वित्ववाचित्वमिति। इति स्वतन्त्रः कर्ता। प्रयोजकस्तु यथा—कृष्णो भावयति, भवन्तं प्रेरयतीत्यर्थः। तथा विध्यादिप्रयोगा अपि ज्ञेयाः। वैष्णवो भवेत्, वैष्णवौ भवेताम् इत्यादयः। अजितप्रयोगस्त्वेवम्। भुते—यदि कृष्णावतारो न अभविष्यत्, तदा दैत्या मुक्ता न अभविष्यन्। भविष्यति च—यदि कृष्णभक्तिरभविष्यत्तदाहं कृतार्थोऽभविस्यम् ॥ ९६७ ॥

---

ऽनुक्तएव द्वितीयादयो भवन्ति, किमनुक्त इत्यनेन इति चेत्तत्राह स्पष्टतार्थञ्चैतदिति। अन्यथा अस्पष्टता स्यादिति शेषः। अस्पष्टत्वे हेतुमाह—उक्त इति। तदभावस्य तृतीयाद्यभावस्य। न्यायसिद्धत्वादिति—न्यायलभ्याच्छाब्दोऽर्थः स्पष्टो भवतीत्युक्तमत उक्ते तदभावस्य अस्पष्टता स्यादिति भावः। कथमिति—कथं नोक्तार्थकं स्यात्; द्विशब्देनैव द्वित्वसंख्याया उक्तत्वादिति। उच्यत इति—सिद्धान्त इति शेषः। अवधारणार्थं नियमार्थं नतु तस्या द्वित्ववाचित्वं, ततश्चैषां जनानां मध्ये वैष्णवावेव भवत इत्यर्थः। स्वतन्त्रः कर्तेति—कथित इति शेषः। भावयतीति—प्रेरणार्थे णिः, कर्तर्याख्यातविधानात् प्रेरणकर्ता कृष्ण उक्तः। भवन्तमिति—शत्रन्तस्य रूपं भवन्तं जनमित्यर्थः। अत्र प्रयोजकस्य परमतेन 'सम्यक्कर्तृत्वं प्रतिपद्यते। सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्येबाधे'। यथा—एकतारं नभो दृष्ट्वा स्मर्तव्यो नारदोमुनिः। निषेधे यथा—दृष्ट्वा त्वं वैष्णवं भक्तो नाश्नीयात् पानभक्षणे। कृष्णः प्रयोज्य-वैष्णवस्य वर्तमानभवनप्रेरणक्रियायाः कर्ता प्रयोजकः। सत्ताप्रेरणानुकूलव्यापारत्वेन तत्र सत्ताप्रेरणे प्रेरकत्वात् प्रयोज्य-वैष्णवकर्मक-वर्तमानभवनप्रेरणानुकूल-व्यापारवान् कृष्णः। कृष्णावतार इति—कृष्णस्यावतार इति विग्रहः। अवतारः अवतरणम्। श्यामरामसमासस्तु न सभ्यः, कृष्णस्यावतारित्वात्। यदुक्तं श्रीमद्भागवते—'एते चांशकलाः

## ६६८। क्रिया यत्साधिका तत् कर्म।

क्रिया यस्य साधनार्थं प्रवर्तते, तत् कारकं कर्मोच्यते। साधिकेति क्रियायाः स्वातन्त्र्याभावेऽपि स्वातन्त्र्यारोपात् कर्तृत्वप्रयोगः 'साधकतमं करणम्' इतिवत्; तेन—भ्रमाद्विषं भक्षयति इत्यत्र कर्तुरनीप्सिततमस्यापि विषस्य कर्मत्वं स्यात्। 'यत् क्रियते, तत्

---

पुंसः कृष्णस्तु भगवान् स्वयमि'ति। मुक्तानां अभविष्यन्निति; अन्येषां हतारिगतिदायकत्वाभावादिति शेषः॥

६६८। क्रिया। यस्य साधिका यत्साधिकेति। साधिकेति—साध्नोतीति कर्तरि णकः। ननु क्रिया यस्य व्यापारतया विवक्ष्यते तस्य स्वातन्त्र्यमुक्तं, तर्हि कथं क्रियायाः स्वातन्त्र्यमिति चेत्तत्रा ह साधिकेतीति। दृष्टान्तमाह—साधकतममिति। करणस्य साधकतमत्वाभावेऽपि यथा साधकतमत्वमारोप्यते, तथा क्रियायाः साधकत्वाभावेऽपि साधकत्वमित्यस्मिन्नंशे दृष्टान्तः। तेनेति—एतादृशेन स्वातन्त्र्यक्रियाघटितलक्षणकरणेन हेतुनेत्यर्थः। कर्तुरनीप्सिततमस्यापि कर्मत्वं स्यादिति। साधिकेत्यकृत्वा कर्तुः समुद्दिष्टं कर्म कर्तुर्व्याप्यं कर्मेत्येवम्प्रकारेण लक्षणस्यान्यप्रकारत्वे सति अनीप्सिततमविषस्य कर्मत्वं न स्यादित्यभिप्रायः। तस्मात्तत्र लक्षणेऽपि कर्तुः क्रियया समुद्दिष्टं कर्मेति कर्तुः क्रियया व्याप्यं कर्मेति च व्याख्येयमिति। भक्षयतीति—भक्ष अदने चुरादिः। यत् क्रियते तत् कर्म इति—अत्रापि कृञर्थस्य धातुष्वनुगतत्वादिति हेतुर्निर्देश्यः। ननु साध्नोति उत्पाद्याद्यवस्थां प्रापयति या सा साधिका। साध्येत यत् तत् साध्यम्। अनयोराक्षेपेणोद्दिष्टं साधनार्थमित्युक्तं साधनमेव किमिति तत्राह—तत्रेति। या साधनार्थं प्रवर्तते तयैव क्रियया कर्तृभूतया प्रकारविशेषेण सम्पादनं निष्पादनं साधनमुच्यते। प्रकारविशेषस्य पाञ्चविध्यमाह उत्पाद्यतयेति—उत्पाद्यतयेत्यादिरूपेण प्रकारविशेषेणेत्यर्थः। क्रियया यस्योपस्थितिस्तदुत्पाद्यं, तस्य भावस्तत्ता, तयेति सर्वत्र ज्ञेयम्। तस्मात्तयैव साधिकया क्रियया उत्पाद्यतया प्रकारविशेषेण सम्पादनं साधनं उत्पादनं नाम भिद्यते, अतः क्रिया उत्पादिका उच्यते—तद्योग्यतारूपसाधनमुत्पादनं, तत्साध्यकर्मणि परिणमते इति तन्नाम उत्पाद्य-

कर्म' इति कालापाः ( चतुष्टयवृत्तिः २१९ )। तत्र साधनं तयैव क्रियया प्रकारविशेषेण सम्पादनम्—उत्पाद्यतया, विकार्यतया, संस्कार्यतया, प्राप्यतया, त्याज्यतया चेति ॥ ९६८ ॥

९६९। कर्मणि द्वितीया।

अनुक्त इत्येव। वैष्णवो मालां करोति, वैष्णवो मालाया वर्तमानकृतिक्रियायाः कर्तेत्यर्थः। अत्र क्रियायाः कर्मसम्बन्धो गौणः, कर्तूरेव वाच्यत्वात्। एवमन्नं पचति, जलं वासयति, कृष्णमन्दिरं गच्छति, स्वगृहं त्यजतीति; कृष्णं स्पृशति, पश्यति, शृणोति इत्यादिष्वपि प्राप्यता। एवं मालां करोषीत्यादि। अहं मालां

---

कर्मेति; एवमुत्तरत्रापि योज्यम्। अतः क्रिया पञ्चविधा—उत्पादिका, विकारिका, संस्कारिका, प्रापिका, त्याजिका इति। साधनमपि पञ्चविधम्—उत्पादनं, विकारणं, संस्कारणं, प्रापणं त्याजनम्। तत्साध्यं कर्मापि पञ्चविधम्—उत्पाद्यं, विकार्यं, संस्कार्यं प्राप्यं, त्याज्यमिति। क्रियात्र अन्तर्भूतण्यर्थानां धातूनामर्थस्तेषामेव वस्त्वन्तरसाधनयोग्यतास्ति, नतु सत्ताद्यर्थानां अन्तर्भूतण्यर्थशून्यानां तेषां वस्त्वन्तरसाधनासामर्थ्यं वक्ष्यते। उत्पाद्यं यथा—मालां करोति, पुत्रं प्रसूते इत्यादि। क्रियया यस्य विद्यमानस्यैव अनुच्छिद्यमानत्वेन उच्छिद्यमानत्वेन वा स्वभावादन्यथाकरणं तद्विकार्यं, यथा–अन्नं पचति, काष्ठं दहतीत्यादि। क्रियया यस्य विद्यमानस्यैव गुणान्तराधानं तत् संस्कार्यं, यथा—जलं वासयतीत्यादि। अत्र स्वभावादन्यथाकरणस्याभावात् न विकार्यता। क्रियया प्राप्तिमात्रं यत्र प्रतीयते तत् प्राप्यं, यथा—कृष्णमन्दिरं गच्छतीत्यादि; गमनेन कृष्णमन्दिरं प्राप्नोतीत्यर्थः। क्रियया यस्यापेक्षणीयत्वमात्रं प्रतीयते तत् त्याज्यं, यथा—स्वगृहं त्यजतीत्यादि ॥

९६९। कर्म। अनुक्त इत्येवेति—अनुक्त इत्यनुवर्तत इत्यर्थः। अनुक्तकर्मणि द्वितीया स्यात्। वैष्णवो मालां करोतीति वैष्णवस्य कृतिक्रिया मालायाः साधनार्थं प्रवृत्तेति मालायाः कर्मत्वम्। मालाया वर्तमानकृतिक्रियायाः कर्ता वैष्णवः। मालाकर्मक-वर्तमानकरणानुकूलव्यापारवान् वैष्णव इत्यादिकं यथायथोह्यमिति। कृष्णं स्पृशतीति—

करोमीत्यादि। भावेऽपि प्रत्यये सकर्मकस्य धातोः कर्मापेक्षा चेत्, कर्म-सन्बन्धो भवत्येव ; यथा—गम्यते मया ग्राममिति भाषावृत्तिर्भाग-वृत्तिश्च। कर्मप्रत्ययेन तस्मिन्नुक्ते तु वैष्णवेन माला क्रियते, वैष्णवस्य माला वर्तमानकृतिक्रियायाः कर्मेत्यर्थः। अत्र क्रियायाः कर्मसम्बन्धो मुख्यः, कर्मण एव वाच्यत्वात्। वैष्णवेन माले क्रियेते इत्यादि। युष्मदस्मदोरुक्तयोः—वैष्णवेन त्वं क्रियसे इत्यादि। वैष्णवेनाहं क्रिये इत्यादि। यत्र त्वेकस्यां क्रियायां कर्तृत्वमन्यस्यां कर्मत्वं, तत्रोभाभ्यां प्रत्ययाभ्यामुक्तत्वे यथा—श्रीकृष्णो भक्तान् पश्यति, भक्तैर्दृश्यते च। कर्मतुल्याधिकरणस्यापि कर्मत्वं, तदपि क्रिया साधयतीति, यथा—उत्तमां मालां करोति, ताञ्चोत्तमां करोतीति सम्बन्धः। एवमन्यत्रापि॥ ९६९ ॥

अथ क्रियाविशेषणञ्च द्विविधम्—व्यधिकरणं, तुल्याधिकरणञ्च। तत्राद्ये लक्षणात्तृतीया वक्ष्यते (१०६५)। अन्तिमे त्वाह—

---

स्पर्शेन प्राप्नोतीत्यर्थः। एवं पश्यतीत्यादावपि। भावेऽपीति। भावे प्रत्यये सत्यपि चेदित्यनन्तरं तदेति गम्यम्। सकर्मकाद्धातोर्भावे प्रत्यये सत्यपि यदि कर्मापेक्षा, तदा कर्मसम्बन्धो भवत्येवेति। अतएव, कां दिशं गन्तव्यमिति प्रयोगो दृश्यते। सकर्मकधातोः कर्माविवक्षया भावे प्रत्ययो भवतीति ज्ञेयम्। गम्यते मया ग्राममिति। भावे प्रत्यये तस्यैवोक्तत्वात् न कर्मणः उक्तत्वम्। भाषावृत्तिर्भागवृत्तिश्चेत्यनेन उक्तमतस्य बहु-सम्मतत्वं सूचितम्। कर्मेति। तस्मिन् कर्मणि। युष्मदिति। उक्तयोः सतोः—वैष्णवेन त्वं क्रियसे इति। त्वं वैष्णवस्य वर्तमानकृतिक्रियायाः कर्मेत्यर्थः। एवं सर्वत्र। श्रीकृष्ण इति। अत्र श्रीकृष्णस्य एकस्यां स्वकर्तृकायां दर्शनक्रियायां कर्तृत्वमन्यस्यां भक्तकर्तृकायां दर्शनक्रियायां कर्मत्वमिति। कर्मेति। कर्मत्वमिति भवत्येवेति शेषः। तत्र हेतुमाह—तदपीति। इति शब्दोऽत्र हेतौ वर्तते। अथेति। आद्ये व्यधिकरणे, लक्षणाच्चिह्नात् तृतीया वक्ष्यते इति। 'विशेषलक्षणात् तृतीये'त्यनेनेति शेषः। उदाहरणन्तु सुखेन भजतीति सुखं भजनस्य चिह्नम्। अन्तिमे तुल्याधिकरणे। आहुरिति पूर्वाचार्या इति शेषः॥

९७०। क्रियाविशेषणं कर्म, तच्च ब्रह्मैकवचनं सदानुक्तञ्च।

शीघ्रं मालां करोति, शीघ्रं माला क्रियते ; शीघ्रं यथा स्यात् तादृशमित्यर्थः। कर्त्रादिवाचित्वात् प्रत्ययस्य सत्तादिक्रियावाचिभू-प्रभृतिधातुरूपमन्तर्भूतं कर्म ; तस्य विशेषणं शीघ्रादिशब्दः क्वचित् क्रियते, स च तस्यालिङ्गस्य विशेषणमिति ब्रह्म ; सामान्यमित्येक-

---

९७०। क्रियेति। क्रियाया विशेषणं क्रियाविशेषणं, तत् कर्म स्यात्। तच्च क्रियाविशेषणं ब्रह्म च स्यात्। एकवचनञ्च स्यात्। एकं व्यक्तीत्येकवचनं तस्मादेकवचनं भवतीत्यर्थः। सदानुक्तञ्च स्यात्। कदाचिदपि तस्योक्तत्वं नास्तीत्यर्थः। तादृशमिति, तादृशं मालाकरण-मित्यर्थः। क्रियाविशेषणस्य कर्मत्वादिकं युक्तिसिद्धमित्याह—कर्त्रादीति। तत्र प्रथमं कर्मत्वे युक्तिमाह–प्रत्ययस्याख्यातादिरूपस्य कर्त्रादिवाचित्वात्। आदिपदेन कर्मादेर्ग्रहणम्। कारकवाचित्वादित्यर्थः। सत्तादीति ; प्रभृतिशब्द आद्यर्थः। धातुशब्देन धात्वर्थो लक्ष्यते। ततश्च, सत्तादि-क्रियावाचिनो ये भू-प्रभृतयस्तेषां धात्वर्थरूपं सत्तादिरूपं अन्तर्भूतं कर्म अस्तीति शेषः। तस्येति। तस्य धात्वर्थरूपकर्मणः। अतः कर्मणो विशेषणत्वात् शीघ्रादिशब्दानामपि कर्मत्वम्। ब्रह्मत्वे युक्तिमाह–सचेति। स च शीघ्रादिशब्दः तस्य धात्वर्थरूपकर्मणोऽलिङ्गस्य लिङ्गरहितस्य विशे-षणमिति हेतोर्ब्रह्म अलिङ्गस्याव्ययसंज्ञत्वात् 'अव्ययविशेषणं ब्रह्म'त्यनेनेति शेषः। एकवचनत्वे युक्तिमाह–सामान्यमिति। तत् कर्म सामान्यं सामा-न्यवत्, सामान्यं जातिरिति हेतोस्तस्य विशेषणं एकवचनं भवति। सामा-न्यवत् क्रिया पुनरेकरूपेति वैयाकरणाः। सामान्यवदिति जातिवदित्यर्थः। अनुक्तत्वे युक्तिमाह–मुख्येति। मुख्यकारके कर्त्रादावेव प्रत्ययस्याख्यातादे-र्विधानात् तत् कर्म अनुक्तम्, अतस्तस्य विशेषणमप्यनुक्तमिति। अयमर्थः—वैष्णवो भवतीत्यत्र प्रत्ययार्थप्राधान्यात् कर्तृविहितेनाख्यातेनैव कर्ता उच्यते। अस्य च कर्तुः सत्तारूपो धात्वर्थः कर्म, अतः कर्तृवाचिन आख्यातस्यापि तदेकं कर्म, क्रियाकर्तृत्वादिसम्बन्धस्य जन्यजनकान्तर्भूत-

वचनम् ; मुख्यकारक एव प्रत्ययविधानादनुक्तञ्चेति भावः। अत्र केवलमेकवचनमिति तस्यां भ्रमः ; सामान्यतः प्रथमायां 'याति युष्मानथो पश्यति शीघ्रं वः' इत्यादौ सपूर्वपदादित्यादिना वसाद्यादेश-विकल्पे सति दोषश्च ॥ ६७० ॥

६७१। भावकृदन्तानां क्रियायान्तु कृदन्तवदेव स्यात् तस्यैव प्राधान्यात्।

यथा—शीघ्रः पाकः, शीघ्रा पक्तिः, शीघ्रं पचनम् ॥ ६७१ ॥

---

त्वेन धात्वर्थस्य जन्यत्वात् कर्मत्वमुक्तमेव। अतएव वैष्णवो भवतीत्य-स्यार्थविवरणं कृतम्। वैष्णवो वर्तमानक्रियायाः कर्तेति, अतस्तस्य कर्मणो विशेषणस्य शीघ्रशब्दस्य कर्मत्वादिकमेव। वैष्णवः शीघ्रं भवतीति। वैष्णवः शीघ्रं मालां करोतीत्यत्र कर्तर्याख्यातेन कर्ता उच्यते, वैष्णवो वर्तमानमालाकृतिक्रियायाः कर्तेत्यर्थः। अतः कृतिक्रियाया विशेषणस्य शीघ्रशब्दस्य कर्मत्वादि। वैष्णवेन शीघ्रं माला क्रियत इत्यत्र कर्मणि विहितेनाख्यातेन कर्म उच्यते। माला वैष्णवस्य वर्तमानकृतिक्रियायाः कर्मेत्यर्थः। ततश्च कर्तुः कर्मत्वेन धात्वर्थस्य जन्यत्वात् कृतिक्रियायाः कर्मत्वम्, अतः कृतिक्रियायाः विशेषणस्य शीघ्रशब्दस्य कर्मत्वादिकं मुख्य-कारके मालारूपे कर्मणि आख्यातस्य विहितत्वान्न शीघ्रशब्दस्योक्तत्वम्। एवमन्यत्रापि। वैष्णवेन शीघ्रं भूयते इत्यत्रतु धात्वर्थस्य प्राधान्यात् तस्य विशेषणस्य कर्मत्वब्रह्मत्वादिकं सिध्यत्येव। किन्त्वत्र धात्वर्थस्य वाच्यत्वात् क्रियाविशेषणकर्मणोऽप्युक्तत्वं स्यादिति। केचित्तु सूत्रस्थ-सदानुक्तपदग्रहणादत्रापि क्रियाविशेषणस्यानुक्तत्वं मन्यन्ते, तत्तु न बहूनां सम्मतमिति। केषाञ्चिन्मते क्रियाविशेषणकर्मत्वादौ युक्तिस्तु दुर्घटा, अतएव कर्मत्वादिसिद्ध्यर्थं क्रमदीश्वरादिभिर्लक्षणं कृतमिति ज्ञेयम्। अत्रेति। केवलमेकवचनमिति, एकवचनमेव नतु कर्मादीत्यर्थः। भ्रम इति, सर्वेषाममतमित्यर्थः। दोषोऽपि भवतीत्याह—सामान्यत इति। केवलमेकवचनमिति, सामान्यवचनात् प्रथमापि स्यात्। तस्यान्तु सत्यां शीघ्रमित्यस्य प्रथमान्तत्वेन सपूर्वपदात् प्रथमान्ताद्वान्वादेशोऽपि ते विरिञ्चय इत्यनेन वसाद्यादेशानां पाक्षिकता स्यात्, सातु विरुद्धैवेति॥

किञ्च—

**क्रियमाणन्तु यत् कर्म स्वयं सिद्धं प्रतीयते ।**
**अत्यन्तसुकरत्वेन कर्मकर्तेति तद्विदुः ।।**

## ९७२ । कर्मकर्तरि कर्मवदात्मपदादि ।

तस्मिन्नात्मपद-यक्-इण्-इण्वदिट् स्यात् । हन्यते संसारः स्वयमेव वैष्णवानाम् । एवम् अघानि, घानिष्यते ; कर्तरि प्रयोगोऽयं दर्शितः । भावे तु—हन्यते संसारेण इत्येव ॥ ९७२ ॥

---

९७१ । भाव । ननु शीघ्रः पाक इत्यादौ भावकृदन्तस्य पाकादिशब्दस्य धात्वर्थवाचित्वात् तस्य विशेषणस्य कथं न कर्मतादिकमिति चेत्तत्राह—भावेति । भावविहितकृदन्तानां क्रियायां सत्यां तस्य भावकृदन्तस्यैव प्राधान्यात्, कृदभिहितो भावो द्रव्यवत् प्रकाशते इत्यस्माच्च भावकृदन्त-क्रियाविशेषणं भावकृदन्तवद् भवतीति । पाक इति—डु पचष् पाके घण्, वृष्णीन्द्रः, चस्य कः । पक्तिरिति, 'क्तिर्लक्ष्म्यां भावे' इत्यनेन क्तिः । पचनमिति भावे अन् । कर्म प्रोच्य कर्मकर्तारमप्याह—किञ्चेति । यत् कर्म कर्त्रा क्रियमाणमपि अत्यन्तसुकरत्वेन धर्मेण स्वयं सिद्धं आत्मनैव निष्पन्नं प्रतीयते प्रतीतिविषयीक्रियते, तत् कर्म कर्मकर्तेति विदुर्बुधा इति शेषः । कर्म चासौ कर्ता चेति विग्रहः । ननु क्रियमाणस्य स्वयं-सिद्धौ कथं प्रतीतिरिति चेत्तत्राह—अत्यन्तेति । कर्तुरत्यन्तसुखनिष्पाद-नीयत्वेन साध्यमानत्वात्तस्य कर्मत्वेऽपि सुखनिष्पादनीयत्वेन स्वतः सिद्धौ क्रियायां कर्तृत्वमिति, तस्मात् यस्यां क्रियायां यः कर्मासीत्तस्यामेव यस्य कर्तृत्वं विवक्ष्यते, स कर्मकर्तेति । नन्वेवमपि न सम्भवति, कर्मशक्ति-कर्तृशक्त्योः स्वभावभेदात् । उच्यते । शक्त्याधारस्यैकत्वात् कर्मकर्तृत्वं विवक्षितमित्यदोषः ।।

९७२ । कर्म । कार्यमाह—कर्मकर्तरि वाच्ये कर्मवत् आत्मपदादि स्यात्, यथा । कर्मणि आत्मपदादि क्रियते, तथेत्यर्थः । तदेवाह—तस्मिन्निति, तस्मिन् कर्मकर्तरि आत्मपदे सति । आदिपदं विवृणोति—यगि-त्यादि । हन्यते इति वैष्णवा यं संसारं घ्नन्ति स संसारः स्वयमेव

६७३। तपःकर्मकस्य तपेः कर्तरि च तद्वत्।

तप्यते तपो नारायणः, अर्जयतीत्यर्थः ॥ ६७३ ॥

६७४। अत्रेणो निषेधः।

अतप्त तपो नरः। नान्यकर्मकस्य—तपति श्रीकृष्णप्रतापो दैत्यान् ॥ ६७४ ॥

---

हन्यते इति स्वादृष्टोपनिबद्धशरीरपरिग्रहः संसार इति संसारलक्षणमिति। इण इण्वदिटश्च उदाहरणमाह—एवमिति। वैष्णवा यं संसारं अवधिषुः, तेषां स स्वयमेव अघानि। वैष्णवा यं संसारं हनिष्यन्ति तेषां स स्वयमेव घानिष्यते इत्यादि। भावे त्विति, एतेन वत्करणस्य फलं दर्शितम्। कर्मवत् कार्यं भवति, नतु कर्मतैव। यदा तु धातोः सकर्मता न भवति, तदा भावविहितं कार्यं भवतीति उचितमेव। 'अस्यास्योर्भावः कर्तृस्थः कर्तृस्था च गमेः क्रिया। कर्मस्थः पचतेर्भावः, कर्मस्था च भिदेः क्रिया'—इत्यादिपद्यानुसारेण क्रियायाः कर्तृस्थत्वे सति कर्मकर्तुः कार्यं कर्तृवद्भवति, तस्मात् तत्र कर्मवत् कार्यं न भवतीति क्रमदीश्वरादयः। ततश्च गच्छति मथुरां वैष्णवः। इयं गमनक्रिया कर्तृस्था तस्मिन्नेव तदुपलम्भात्। मथुरायाः कर्मणोऽत्यन्तसुकरत्वेन यदि तस्यां क्रियायां कर्तृत्वं विवक्ष्यते, तदा मथुरायाः कर्मकर्तृत्वे गच्छति मथुरा स्वयमेवेति भवति, नतु गम्यते। क्रियायाः कर्मस्थत्वे सति कर्मकर्तुः कार्यं कर्मवद्भवतीति विवेचनीयमिति। तव्यादौ विषये क्रियायाः कर्मस्थत्वे च कर्मकर्तुः कार्यं कर्तृवद्भवतीत्यपि क्रमदीश्वरादयः, ततश्च पक्तव्यमोदनेन स्वयमेवेति, अत्र ओदनस्य कर्तृवद्भावः, भावोत्पन्नेन तव्येनानुक्तत्वात् ओदनेनेति तृतीया ॥

६७३। तपः। तपः कर्म यस्य तादृशस्य तपेः कर्तरि च वाच्ये तद्वत् स्यात्। कर्मवत् कार्यं स्यादित्यर्थः। तप्यते इति तप सन्तापे ॥

६७४। अत्र। अत्र तपधातोरिणो निषेधो भवति। तपःकर्मकस्येति यदुक्तं तदेव दर्शयति नान्यकर्मकस्येति। तपतीति सन्तापयतीत्यर्थः। ननु तपःकर्मकस्य तपेरित्युक्तं तर्हि कथं तपते तपांसि इति चेत्,

९७५। कुषिरञ्जिभ्यां श्यः कर्मकर्तरि, कृष्णधातुके परपदन्तु वा।

कुष्यति कुष्यते वा नन्दकः, स्वयमेव रज्यति रज्यते वा वंशी॥ ९७५॥

९७६। सर्वेश्वरादिण्वा कर्मकर्तरि, दुहश्च।

अकारि, अकृत ; अदोहि, अदुग्ध॥ ९७६॥

९७७। न रुध इण्।

अरुद्ध॥ ९७७॥

---

उच्यते। यथा तपःकर्मकस्य ग्रहणेन अन्यकर्मकस्य कर्मवन्न भवति, तथा अर्जयतीति कथनेन उपार्जनार्थस्य तपेर्ग्रहणं नान्यार्थस्य इत्यर्थः। अन्यत्र तपः करोतीति यथायोग्यं वक्तव्यमिति॥

९७५। कुषि। कर्मकर्तरि वाच्ये कृष्णधातुके परे कुष—निष्कर्षे, रञ्ज—रागे इत्येताभ्यामुत्तरे श्यः स्यात्, परपदं तु वा। श इत्। निष्कर्षो—निष्कासनम्। नन्दकः—कृष्णखड्गः। रज्यतीति, वंशीत्यनन्तरं स्वयमेवेति ज्ञेयम्। कृष्णधातुके इति किं,—चुकुषे नन्दकः स्वयमेव। अत्र नित्यमेवात्मपदम्। ननु कुषिरञ्ज्योः कर्मकर्तरि कृष्णधातुके परपदं वेत्येवास्तु किमनेन 'श्य'विधानेन, कर्मवत् कार्यं यक् भवत्येव। उच्यते। परपदमेव वा भवति, नतु यक् भवतीति शङ्का स्यात्। यक् भावकर्मणोर्भवति। भावकर्मणोस्तु आत्मपदस्यैव विधानात् यकः आत्मपदविषयत्वात् तत्र तु परपदस्यापि विधीयमानत्वात् यगित्यकृत्वा श्य इति कृतमिति ज्ञेयम्। श्यस्य आख्यातोक्त-श्यस्यानुवादरूपत्वेन कृष्णधातुकत्वाद्गोविन्दाभावः, प्रयोजनभावे शिदनुबन्धत्वम्॥

९७६। सर्वे। सर्वेश्वरशब्देन सर्वेश्वरान्तो गृह्यते, कर्मकर्तरि वाच्ये सर्वेश्वरान्ताद्धातोरुत्तरे इण् वा स्यात् दुहश्च वा। नित्यं प्राप्ते विभाषार्थं वचनम्। अकृतेत्यत्र 'ऋद्वयाद्विष्णुजनान्तेशोद्धवाच्चे'त्यनेन सेः कपिलत्वं, 'वामनवैष्णवाभ्यामि'त्यनेन हरश्च॥

९७८। दुहो न यक्।

दुग्धे ॥ ९७८ ॥

९७९। स्नु-नमिभ्यामात्मपद्यकर्मकेभ्यो णेः श्रन्थि-ग्रन्थि-ब्रू-किरति-गिरति-श्रि-भूषार्थेभ्यः सनन्ताच्च न यगिणौ।

प्रस्नुते, प्रास्नोष्ट गौः; नमते, अनंस्त दण्डः; विकुरुते, व्यकृत पयः स्वयमेव—अन्तर्भूतण्यर्था इमे। एवमन्यत्रापि कारयते अकारयिष्ट इत्यादि। तच्च पूर्वोक्तं कर्म पुनस्त्रिविधम्—कर्तुरीप्सिततममनीप्सितमीप्सितञ्च; यथाह भगवान् पाणिनिः (१।४।४९-५१)—'कर्तुरीप्सिततमं कर्म', 'तथायुक्तञ्चानीप्सितम्', 'अकथितञ्च' इति। प्रथमं दर्शितम्—वैष्णवो मालां करोतीत्यादिना; मध्यमन्तु द्वेष्यमनपेक्ष्यञ्च—प्रमादेन पापं करोति विष्णुभक्तः; मथुरां गच्छन् देशान् पश्यति। तथेप्सितं यदीप्सिततमोपयोगि। अकथितत्वमपादाना-

---

९७७। नव्य। रुधिर् आवरणे इत्यस्मात् कर्मकर्तरि इण् न स्यात्॥

९७८। दुहो। कर्मकर्तरि दुहो यक् न स्यात्॥

९७९। स्नु-नमि। स्नु—प्रस्रवणे, णम—प्रह्वत्वे शब्दे च; इत्येताभ्याम्, आत्मपदिनश्च ते अकर्मकाश्चेति तेभ्यः। णेर्ण्यन्तात्। श्रन्थ—मोचने, ग्रन्थ—सन्दर्भे, क्र्यादिरस्यैव ग्रहणम्। ग्रन्थ—सन्दर्भे चुरादिर्यदा युजादित्वात् णि र्भवति, न तदा तस्यापि ग्रहणं, णौ कृति ण्यन्तत्वादेव प्रतिषेधस्य सिद्धत्वात्। श्रथि—शैथिल्ये, ग्रथि—कौटिल्ये भ्वादी, तयोरपि, मैत्रेयः ग्रहणमिति ब्रूञ्—व्यक्तायां वाचि, कॄ—विक्षेपे, गॄ—निगरणे, श्रिञ्—सेवायां, भूषा अर्थो यस्य तेभ्यः सनन्ताच्च यगिणौ न स्याताम्। कर्मवदात्मपदादि इत्युक्तमतः प्राप्तौ यगिणौ बाध्येते, आत्मपदन्तु भवत्येव। प्रस्नुत इति, अत्र यग्निषेधः। प्रास्नोष्टेति, अत्रेणो निषेधः। नमत इति, यकि निषिद्धे शवेव। विकुरुत इति, अत्र कृधातोरात्मपदित्वमकर्मकञ्चास्ति

दित्वेन पूर्वोक्तकर्मद्वयेन चाविवक्षितकारकत्वम्। तत्रैकस्यामेव क्रियायामीप्सिततममीप्सितञ्चेति कर्मद्वयं स्यात्। तथाहि धातवस्तावत्त्रिविधाः—अकर्मकाः, सकर्मकाः, द्विकर्मकाश्च। तत्रान्तर्भूतण्यर्थशून्यत्वाद्वस्त्वन्तरं साधयितुमसमर्थाः अकर्मकाः, यथा—सत्तामात्राद्यर्थाः भवत्यादयः। अन्तर्भूतण्यर्थत्वात्तत् साधयितुं समर्थाः सकर्मकाः। अतएव 'क्रियाव्याप्यं कर्म' इति सौपद्माः ( २।१।३ ); यथा—उत्पादनाद्यर्थाः करोत्यादयः। तत्रैव द्विवृत्तयो द्विकर्मकाः यथा—दुहादयो नीवहादयश्च। एते उभयमेव कर्म स्ववृत्तिविशेषाभ्यां साधयन्ति, आकर्षणविशेषपूर्वकनिष्कासनादिरूपार्थत्वात्। तत्र दुग्धादिकमीप्सिततमं मुख्यं, तदुपयोगि गवादिकमीप्सिततमं गौणम्; तेन दुहादयो नीवहादयश्च धातवो द्विकर्मकाः; तद्वृन्दं यथा—

**दुहि-याचि-रुधि-प्रच्छि-भिक्षि-चिञो**
**ब्रुवि-शासि-जि-दन्डि-बृ-मन्थि-वदः।**
**इति तूभयकर्म दुहादि भवे-**
**दथ नी-वहि-हृञ्-कृषि मुख्यमपि ॥ ***

---

स्वयमेवेति सर्वत्र ज्ञेयम्। अन्तर्भूतण्यर्था इमे इति। अन्यथा कर्मकर्तृत्वमेव न घटेतेति भावः। तथाहि स्नुधातोः प्रस्रवणार्थत्वेन गोः कर्मत्वमेव न सम्भवति, कुतः कर्मकर्तृत्वम्। नमधातोरत्र नम्रत्वार्थत्वेनाकर्मकत्वाद्दण्डस्य कर्मत्वाभावे कर्मकर्तृत्वाभावः। वि पूर्वस्य करोतेरकर्मकत्वेन पयसः कर्मत्वाभावे कर्मकर्तृत्वाभावः स्पष्ट एवेति। तस्मादन्तर्भूतण्यर्थत्वेन सकर्मकत्वात् कर्मकर्तृत्वाविरोधः। तथाहि गां प्रस्नौति, प्रस्नावयतीत्यर्थः। सा गौः स्वयमेव प्रस्नुत इति। दण्डं नमति, नमयतीत्यर्थः, स दण्डः स्वयमेव नमत इति। पयो विकुरुते विकारयति विकृतं करोतीत्यर्थः, तत् पयः स्वयमेव विकुरुते इति, विकृतं भवतीत्यर्थः। एवमन्यत्रापि। अन्तर्भूतण्यर्थत्वेन सकर्मकत्वात् अन्यत्र कर्मकर्तृत्वमिति ॥

कारयते, अकारयिष्टेति प्रेरणार्थे णिः। अत्र मालेत्यादिकः कर्मकर्ता ऊह्यः। तथाहि वैष्णवो मालां करोतीत्यत्र करोतिर्निष्पत्त्युपसर्जनीभूत-

निष्पादने वर्तते, ततश्च निष्पाद्यमानां मालां वैष्णवो निष्पादयतीत्यर्थः। यदा तु अत्यन्तसुकरत्वेन वैष्णवव्यापाराविवक्षायां करोतिर्निष्पत्तिमात्रे वर्तते, तदा कर्मणो मालाया एव कर्तृत्वात्, क्रियते माला स्वयमेव इति— यदा तस्मान्निष्पत्तिमात्र निवृत्तेः करोतेः प्रेरणे णिरुत्पद्यते—कारयति मालां वैष्णवः, निष्पद्यमानां मालां वैष्णवो निष्पादयतीत्यर्थः। तदा मालां करोति वैष्णव इत्यनेन सहास्य समानार्थता स्यात्, पूर्ववदत्यन्तसुकरत्वेन वैष्णवव्यापारेऽविवक्षिते ण्यन्तापि निष्पत्तिमात्रे वर्तते, कारयते माला स्वयमेवेति अस्य प्रयोगस्य क्रियते माला स्वयमेव इत्यनेन सह समानार्थतेति। यद्वा, विष्णुमित्रादिकः कर्मकर्ता ऊह्यः। 'कृञहृञादेर्विभाषये'त्यनेन अनिकर्तुर्विकल्पेन कर्मत्वं वक्ष्यते। ततश्च वैष्णवो विष्णुमित्रं मालां कारयति, तत्र प्रेरणे—प्रेरयति स विष्णुमित्रः स्वयमेव मालां कारयते, स्वयमेव मालाकरणे प्रेरितो भवतीत्यर्थः। इत्यादीति। एवं श्रन्थादीनामप्युदाहरणानि ज्ञेयानि इति भावः।

तच्चेति प्रसिद्धं पूर्वोक्तं 'क्रिया यत् साधिके'त्यादिना उक्तम्। आप्तुमिष्टं ईप्सितं तस्मादतिशयार्थे तमः प्रत्ययः, न ईप्सितं अनीप्सितं कर्मणस्त्रैविध्यमुक्त्वा पाणिन्युक्तमुदाहरति। यथेति भगवानिति सर्वज्ञ इत्यर्थः। कर्तुरिति। कर्तुरनीप्सितञ्च तथा कर्मत्वेन युक्तं क्रियासाध्यत्वात् तदपि कर्मेत्यर्थः। अकथितञ्च कर्मेति अत्र कर्तुरिति न योज्यं अर्थासङ्गतेः। प्रथममीप्सिततमं मालां करोतीत्यर्थमेव क्रियारम्भात् मालाकर्तुरीप्सिततमेति। मध्यममनीप्सितं द्वेष्यं द्वेषविषयीभूतम्। पापं करोतीति नात्र पापार्थं क्रियारम्भः किन्तु अनवधानतया द्वेष्यमपि पापं करोतीत्यर्थः। अनपेक्षं अपेक्षाशून्यम्। मथुरां गच्छन् देशान् पश्यतीति नात्र देशाद्वेष्या द्वेषार्हत्वाभावात्। नापीप्सिततमाः। मथुराया ईप्सिततमत्वेन देशदर्शनक्रियायाः आनुषङ्गिकत्वात्। ईप्सिततमाया मथुराया उपयोगित्वेऽपि न चेप्सिताः। एकस्यामेव क्रियायामीप्सिततमेप्सितयोर्वक्ष्यमाणत्वात् अतोऽनपेक्ष्याः। तथेति। ईप्सिततमस्य उपयोगि अनुकूलं यत् तदीप्सितमिति पाणिन्युक्तस्याकथितस्य लक्षणमाह—अकथितत्वमिति। अपादानादित्वेन पूर्वोक्तकर्मद्वयेन च अविवक्षितम् अकथितमित्यर्थः। आदिपदेन अधिकरणादेर्ग्रहणम्। कर्मद्वयमीप्सिततममनीप्सितरूपम्॥

तत्रेति। एकस्यामेवेत्युपादानात् गां दुहता दुग्धान्यवचीयन्त इत्यादौ गौरीप्सितत्वं न भवति, किन्तु ईप्सिततमत्वमेव विवक्षितम्। नात्र एकस्या एव क्रियायाः द्वे कर्मणी किन्तु भिन्नयोरिति ईप्सितत्वेतु उक्तत्वं स्यात्। नन्वेका क्रिया कथं द्वे वस्तुनी साधयत्विति चेत्तत्राह—तथाहीति। अकर्मका इति नास्ति कर्म येषामिति विग्रहः, येषामथवंस्त्वन्तरं निष्पाद्यं न भवतीत्यर्थः। स कर्मका इति कर्मणा सह वर्तमाना इति अर्थैः साध्येन वस्त्वन्तरेण सह वर्तमाना इत्यर्थः। द्विकर्मका इति द्वे कर्मणी येषामिति विग्रहः। अकर्मकादीनां लक्षणमाह—तत्रेति। तत्र तेषु त्रिविधेषु वस्त्वन्तर-साधनासामर्थ्ये हेतुमाह—अन्तर्भूतेति वस्त्वन्तरमित्यन्तरपदेन स्वसाधकतो-पयोगित्वमस्त्येवेति सूचितम्। असमर्था इत्यत्र असमर्थार्था इति पाठः सुसङ्गतः न हि धातवो वस्त्वन्तरं साधयन्ति, किन्तु धात्वर्था एव। एतच्च क्रिया यत् साधिका तत् कर्मेत्यनेनैव सूचितम्। एवं समर्था इत्यत्रापि ज्ञेयम्। सत्तेति सत्तामात्रादिरर्थो ये ामिति विग्रहः। तदिति वस्त्वन्तर-मित्यर्थः। क्रियेति क्रियाया वाप्यमिति विग्रहः वाप्यं साध्यम्। सौपद्मा इति कालापा इति वत् सुपद्मसंज्ञकव्याकरणविशेषाध्यायिन इत्यर्थः। उदिति उत्पादनादिरर्थो येषामिति विग्रहः। मालां करोतीति उत्पाद्य-मानां मालां उत्पादयतीत्यर्थः। ननु तर्हि वैष्णवो मथुरां गच्छतीत्यादौ कथं गमनादीनां सकर्मकत्वं, अन्तर्भूतण्यर्थत्वाभावात्, तथाहि मथुरां गच्छ-तीति गमनेन मथुरां प्राप्नोतीत्यर्थः। इति उच्यते मथुरां प्राप्नोतीति प्राप्तिः संयोगः, ततश्च मथुरां आत्मना सह संयोजयतीत्यर्थः। इत्येवं सर्वत्र ज्ञेयम्। तत्रेवेति सकर्मकेष्वेवेत्यर्थः। द्विवृत्तय इति द्वे वृत्ती येषा-मिति विग्रहः वृत्तिरर्थः। एत इति दुहादयो निवहादयश्चेत्यर्थः। हेतुमाह—आकर्षणेति आकर्षणविशेषपूर्वकं यन्निष्कासनं तदादिरूपा अर्था येषां तेषां भावस्तत्त्वं तस्मादिति। आकर्षणरूपा एका वृत्तिः। निष्कासनरूपा द्वितीयेत्येवं क्रमेण ज्ञेयम्। तदुपयोगीति तस्य दुग्धादिकस्योपयोगि अनु-कूलम्। तद्वृन्दमिति तेषां वृन्दमिति विग्रहः, वृन्दं गणः। दुहीति दुह—प्रपूरणे, टुयाचृ—याच्ञायां, रुधिर—आवरणे, प्रच्छ—ज्ञीप्सायां प्रछीत्यत्र छन्दोऽनुरोधात् 'द्विः सर्वेश्वरमात्राच्छः' इत्यनेन द्वि र्न भवतीति ज्ञेयम्। भिक्ष—याच्ञायां, चिञ्—चयने, ब्रुञ्—व्यक्तायां वाचि, शासु—

एषां वृत्ती यथा—दुहेराकर्षणविशेषो निष्कासनम्; याचेः स्वस्मै दाने प्रेरणं वाञ्छा च; रुधे वेष्टनमन्तःस्थापनम्; पृच्छेः स्वोपदेशे प्रेरणं जिज्ञासा; भिक्षेर्याचिवत्; चिञोऽवशेषणमादानम्। ब्रूञः श्रावणं प्रतिपादनम्; शासेश्च; जेरतिक्रमो वशीकरणम्; दण्डेर्निग्रहो ग्रहणम्; वृञो याचिवत्; मन्थेः सञ्चालनमुत्थापनम्; वदः ब्रुञवत्; नीञः संयोजनं प्रेरणम्; वहः संयोजनं धारणम्;

---

अनुशिष्टौ, जि—जये, दण्ड—दण्डनिपाते, वृञ्—वरणे, मन्थ—विलोड़ने, वद—व्यक्तायां वाचि इति इत्येवं प्रकारेण एते दुहादि ज्ञेयम्। तु पुनस्तद्दुहादि उभयकर्म भवेत्। उभयकर्मेति उभयं कर्म यस्येति विग्रहः। दुहादीति वृन्दविशेषणत्वाद्ब्रह्म। दुह्यादिषु चिञ्-जि-वृ-वद-वर्ज धातुनिर्देशे इक् प्रत्ययः कृत्। अथेति नीञ्—प्रापणे, वह—प्रापणे, हृञ्—हरणे, कृष—विलेखनाकर्षणयोः एते मुख्या यत्र तद्वृन्दमपि उभयकर्म भवेदित्यन्वयः। मुख्यशब्दोपादानादन्येषामप्यतद्वृन्दपातिता भवतीति सूचितम्।

एषां वृत्ती यथेति। निष्कासनं निःसारणं स्वस्मै आत्मने। वेष्टनमावरणं अन्तःस्थापनं, वेष्टितस्यावहिस्थापनं, जिज्ञासा ज्ञानेच्छा। याचिवदिति स्वस्मै दाने प्रेरणं वाञ्छेत्यर्थः। एवमन्यत्र च ज्ञेयम्। ननु याचिवत् इति कथमुक्तम्? याचिस्त्वविनयार्थोऽपि इति वक्ष्यति भिक्षिस्तु विनयार्थ एव। अतः समानार्थत्वाभावात्। उच्यते। न हि याचिः सर्वत्रैवाविनयार्थो गृह्यत इति, किन्तु क्वचिदिति अतएव मातरं नवनीतं याचत इत्युदाहृतमत्र याचिर्विनयार्थ एव। अवशेषणमवशिष्टीकरणम्, आदानं ग्रहणम्। शासेश्चेति श्रावणं–प्रतिपादनमित्यर्थः।

वृञ् इति यद्यपि याचिवदिति सामान्येनोक्तं, तथापि पूज्यविषयिकायां याच्ञायामेवास्य प्रयोगो ज्ञेयः, अन्यथा वृञ् ग्रहणमनर्थकं स्यात्, भिक्षिरर्थपर इति वक्ष्यति। अतः सामान्यग्रहणत्वेऽपि भिक्षार्थत्वेनैव द्विकर्मकत्वसिद्धेर्हेतोर्गोवर्धनं वरं वृणुते इत्युदाहृतम्। कृषश्चेति संयोजनमाकर्षणमित्यर्थः। कृष्णो गां दुग्धं दोग्धीति दुग्धमभीप्सिततमं तदर्थं दोहनक्रियारम्भात् गामितीप्सितम् ईप्सिततमोपयोगित्वात् उभयत्र यत्

हृञः संयोजनमाकर्षणम् ; कृषश्चेति ; एतत् क्रमेणोदाहरणानि, यथा — कृष्णो गां दुग्धं दोग्धि ; मातरं नवनीतं याचते ; गोष्ठं गा अवरुणद्धि; पितरमिन्द्रमखं पृच्छति ; यज्ञपत्नीरन्नं भिक्षते ; वृन्दावनं पुष्पाण्यवचिनोति ; पितरं गोवर्धनमखं ब्रूते ; लोकांस्तद्भक्तिं शास्ति ; दैत्यान् युद्धं जयति ; दैत्यान् प्राणान् दण्डयति ; गोवर्धनं वरं वृणुते ; दधि नवनीतं मथ्नाति ; सखी नर्म वदति ; अत्र गां दोग्धि, दुग्धं दोग्धि इत्यादिरन्वयः। दुग्धं निष्कासयन्नङ्गुलिद्वयेन स्तनेषु गामाकर्षति। एवं नवनीतं वाञ्छन् मातरं स्वस्मै तद्दाने प्रेरयति। गाः अन्तः स्थापयन् गोष्ठं वेष्टयति। इन्द्रमखं जिज्ञासमानं पितरं स्वोपदेशे प्रेरयति। अन्नमिच्छन् योग्यपत्नीः स्वस्मै तद्दाने प्रेरयति। पुष्पाण्याददानो वृन्दावनमवशेषयति। गोवर्धनमखं प्रतिपादयन् पितरं श्रावयति। तद्भक्तिं प्रतिपादयन् लोकान्

---

साध्यत्वात् 'क्रिया यत् साधिकेत्यादिना कर्मत्वम्', एवं सर्वत्र ज्ञेयम्। अन्वयार्थौ तु अत्रेत्यादिना वक्ष्येते। दुग्धं निष्कासयन् अंगुलिद्वयेन स्तनयुगमाकर्षयतीत्यर्थः। आकर्षणवृत्ति-साध्येप्सित-गोकर्मकनिष्कासन-वृत्तिसाध्येप्सिततम-दुग्ध-कर्मक-वर्तमान-दोहनानुकूल-व्यापारवान् कृष्णः।

मातरमिति नवनीतं वाञ्छन् मातरं स्वस्मै दाने प्रेरयतीत्यर्थः। स्व-दान-प्रेरणवृत्ति-साध्येप्सित—मातृकर्मक—वाञ्छावृत्ति—साध्येप्सिततम—नवनीतकर्मक-वर्तमान-याचनक्रियानुकूलव्यापरवान् कृष्णः। गोष्ठमिति गां अन्तः स्थापयन् गोष्ठं वेष्टयतीत्यर्थः। वेष्टनवृत्तिसाध्येप्सितगोष्ठकर्मकान्तःस्थापनवृत्तिसाध्येप्सिततमगोकर्मकवर्तमानरोधनक्रियानुकूलव्यापारवान् कृष्णः। पितरमिति। इन्द्रमखजिज्ञासमानः पितरं स्वोपदेशे प्रेरयतीत्यर्थः। स्वोपदेशप्रेरणवृत्तिसाध्येप्सितपितृकर्मकजिज्ञासावृत्तिसाध्येप्सिततमेन्द्रमखकर्मकवर्तमानप्रच्छनक्रियानुकूलव्यापारवान् कृष्णः। मखो यज्ञः। यज्ञेति अन्नं वाञ्छन् यज्ञपत्नीः स्वस्मै तद्दाने प्रेरयतीत्यर्थः। स्वदानप्रेरणवृत्तिसाध्येप्सितयज्ञपत्नीकर्मकवाञ्छावृत्तिसाध्येप्सिततमान्नकर्म-

श्रावयति। युद्धं वशीकुर्वन् दैत्यानतिक्रामयति। प्राणान् गृह्णन् दैत्यान् पीड़यति। वरं वाञ्छन् गोवर्धनं स्वस्मै तद्दाने प्रेरयति। नवनीत-मुत्थापयन् दधि सञ्चालयति। नर्म प्रतिपादयन् सखीः श्रावयति। इत्यादिरर्थो ज्ञेयः। भिक्षिरर्थपरस्तेन प्रार्थयत इत्यपि; याचिस्त्व-विनयार्थेऽपि; तेन, दुष्टं शतं याचते राजा। अत्र ब्रु वि-शासि-वदीनाञ्च प्रतिपाद्यमानं मखादिकमेवेप्सिततमं, तत्प्रतिपादनेन सम्पाद्यमानं पित्रादिकं त्वीप्सितमिति ज्ञेयम्। तदर्थानामपि दृश्यते—"जगाद, मारीचमुच्चैर्वचनं महार्थम्" इति भट्टिः (२।३२); "गिरामत्युदारां, द्वैपायनेनाभिदधे नरेन्द्रः" इति भारविः (३।१०)। किञ्च कर्म-प्रत्यये तु दुहादेर्गौणं कर्मोक्तं स्यान्नीवहादेस्तु मुख्यम्। यदुक्तम्—

---

कवर्तमानभिक्षाक्रियानुकूलव्यापारवान् श्रीदामा। वृन्दावनमिति। पुष्पाण्याददानः वृन्दावनमवशेषयतीत्यर्थः। अवशेषणवृत्तिसाध्येप्सित-वृन्दावनकर्मकादानवृत्ति-साध्येप्सिततम-पुष्पकर्मक-वर्तमान-चयन-क्रियानुकूल-व्यापारवान् कृष्णः। पितरमिति गोवर्धनमखं प्रतिपादयन् पितरं श्रावयतीत्यर्थः। श्रावणवृत्तिसाध्येप्सितपितृकर्मकप्रतिपादनवृत्तिसाध्येप्सिततम-गोवर्धनमखकर्मकवर्तमानवचनक्रियानुकूलव्यापारवान् कृष्णः। लोकानिति तद्भक्तिं गोवर्धनभक्तिं प्रतिपादयन् लोकान् श्रावयतीत्यर्थः। श्रावणवृत्ति-साध्येप्सितलोककर्मक-प्रतिपादनवृत्ति-साध्येप्सिततम-गोवर्धन–भक्तिकर्मक-वर्तमानशासनक्रियानुकुलव्यापारवान् कृष्णः। दैत्यानिति युद्धं वशीकुर्वन् दैत्यानतिक्रामयतीत्यर्थः। अतिक्रमवृत्तिसाध्येप्सित-दैत्यकर्मक-वशीकरण-वृत्तिसाध्येप्सिततम-युद्धकर्मकवर्तमान-जयक्रियानुकूलव्यापारवान् कृष्णः। दैत्यानिति प्राणान् गृह्णन् दैत्यान् निगृह्णातीत्यर्थः। निग्रहवृत्तिसाध्ये-प्सित-दैत्यकर्मक-ग्रहणवृत्ति-साध्येप्सिततम-प्राणकर्मक-वर्तमानदण्डनक्रियानु-कूलव्यापारवान् कृष्णः। गोवर्धनमिति। वरं वाञ्छन् गोवर्धनं स्वस्मै तद्दाने प्रेरयतीत्यर्थः। स्वदान-प्रेरणवृत्तिसाध्येप्सित–गोवर्धनकर्मकवाञ्छा-वृत्ति - साध्येप्सिततम–वरकर्मक - वर्तमान-वरणक्रियानुकूल - व्यापारवान् कृष्णः। दधीति। नवनीतमुत्थापयन्ती दधि सञ्चालयतीत्यर्थः।

**यत्राख्यातादिरुक्तं तत् स णेस्तत् कर्तृकर्मणोः ।**
**स चेत् कर्मणि दुह्यादेर्गौणे न्यादेस्तु मुख्यके ॥**

अस्यार्थः—यत्र कारके आख्यातादिः प्रत्ययः क्रियते, तत् कारकमुक्तं स्यात् ; स चाख्यातादिर्यदि णेः स्यात्, तदा तस्य णेरेव कर्तृकर्मणोः स्यात्, न तु पूर्वकर्तृकर्मणोः। स चाख्यातादिर्यदि दुह्यादेः स्यात्, तदा गौण एव कर्मणि स्यात्, न तु मुख्ये। नीवहादेर्यदि

---

सञ्चालनवृत्ति-साध्येप्सित-दधिकर्मकोत्थापनवृत्तिसाध्येप्सिततम-नवनीत-कर्मकवर्तमान-मन्थनक्रियानुकूलव्यापारवती गोरी। सखीरिति। नर्म प्रतिपादयन् सखीः श्रावयतीत्यर्थः। श्रावणवृत्तिसाध्येप्सित-सखी-कर्मक-प्रतिपादनवृत्ति-साध्येप्सिततम-नर्मकर्मक-वर्तमान-वदनक्रियानुकूल-व्यापार-वान् कृष्णः। क्रीड़ा लीला च नर्म चेत्यमरः। अत्रेति इत्यादि-रित्यादिपदेन मातरं याचते, नवनीतं याचते इत्यादिरप्यन्वयो ज्ञेयः। दुग्धमिति निष्कासयन् निःसारयन् अंगुलिद्वयेन इति युगपद्दक्षिण-वाम-करयोरंगुलितर्जनीरूपेणेत्यर्थः। स्तनेष्विति स्तनचतुष्टयेत्यर्थः। तच्चा-कर्षणमेकैकस्मिन् स्तने अंगुलिद्वयकरणकमेव ज्ञेयम्। इत्यादिरित्यादिपद-संगृहीता अर्था उक्ताः। भिक्षिरर्थपर इति अर्थधातुपरः द्विकर्मकः। अतो याच्ञार्थस्यान्यधातोरपि द्विकर्मकता। अर्थपर इति। अर्थः परो यस्येति विग्रहः। अर्थो याच्ञा परः श्रेष्ठः प्रतिपाद्य इति यावत् ततश्च याच्ञाप्रतिपादक इत्यर्थः। अर्थतात्पर्यक इति फलितार्थः। प्रार्थयत इत्यत्र अर्थः—याच्ञायां चुरादिः आत्मनेपदी। धातूनामनेकार्थत्वान्मृ-गिरपि याच्ञार्थः, अतः शङ्करं वरं मृगयते इत्यपि भवतीति ज्ञेयम्। ननु यद्येवं तर्हि याचेरुपादानेन किमिति चेत्तत्राह--याचिस्त्विति। अविनयार्थ इति अविनयपूर्वकयाच्ञार्थ इत्यर्थः। भिक्षादीनां विनयपूर्वकयाच्ञायां विषयः, याचेस्त्वविनयपूर्वकयाच्ञायामपीति शेषः। दुष्टं शतं याचते राजा इत्यत्र याचनमस्त्येव किन्तु अविनयपूर्वकमिति। ननु तथापि किं याचेर्ग्रहणेन अविनयार्थत्वेऽपि याच्ञार्थकत्वात् उच्यते, भिक्षादीनां विनय-पूर्वकयाचनार्थत्वं प्रसिद्धमेव अतस्तस्मिन् भवत्येव, अविनयपूर्वकयाचनार्थ-

स्यात्, तदा मुख्य एव स्यात्, न तु गौण इति ; यथा—कृष्णेन गौर्दुग्धं दुह्यते इति, माता नवनीतं याच्यते इत्यादि। अथ नीवहादिः—कृष्णो गा व्रजं नयति। श्रीदामानं भाण्डीरं वहति। वस्त्रं कदम्बाग्रं हरति। गोपीर्वनं कर्षति। अन्वयार्थौ पूर्ववत्।

---

त्वेतु भवेत् किं वा न भवेदिति सन्देहः स्यात्, अतः पृथग्ग्रहणमुचितमेवेति नास्ति विरोधः। अत्रेति अत्र दुहादिषु ब्रू-शासि-वदीनामिति प्रयोग इति शेषः। प्रतिपाद्यमानमिति हेतुगर्भविशेषणं प्रतिपाद्यमानत्वात् एवं ईप्सित-तमत्वमित्यर्थः। मखादिकमित्यादिपदेन तद्भक्तिनर्मणोर्ग्रहणं तत्प्रति-पादनेन मखादिकप्रतिपादने संपाद्यमानं सम्बध्यमानं पित्रादिकमिति त्वीप्सितम्। पित्रादिकमित्यादिपदेन लोकसखीनां ग्रहणम्। श्रावणकाले पित्रादिकस्य मखादिकोपयोगिताया अव्यक्तत्वात् कस्य वेप्सिततमत्वं कस्य वेप्सितत्वमित्यपि व्यक्तं न स्यादतोऽत्र ब्रू-शासि-वदीनामित्यादिक-मुक्तमिति ज्ञेयम्। अत्र निर्गलितार्थमाह—अत्र द्विकर्मकेषु मध्ये ब्रूशासि-वदीनाञ्च त्रयाणां प्रयोगे प्रतिपाद्यमानं ग्राह्यमाणं मखादिकं गोवर्धनमख-तद्भक्तिनर्मेति त्रयं ईप्सिततमं मुख्यं कर्मेत्यर्थः। तत्प्रतिपादनेन तेषां गोवर्धनमखतद्भक्तिनर्मणां प्रतिपादनेन संग्राहकतया निष्पाद्यमानं पितृ-लोकसखीति त्रयमीप्सितं गौणमित्यर्थः। तदर्थानामपीति तत्पदेनात्र ब्रूशासिवदीनां परामर्षः। दृश्यत इत्यनेन तदर्थानां द्विकर्मकताया असार्व-त्रिकत्वं सूचितम्। अतएव समानार्थानामपि ब्रू-शासि-वदीनां पृथग्ग्रहणं कृतम्। अथो वा तेषां दुहादीनामर्थ इव अर्थो येषां ते तदर्थाः तेषामपि ग्रहणमित्यपि ज्ञेयम्। जगादेति गदधातोस्तदर्थत्वात् द्विकर्मकत्वमिति। मारीचं महार्थं वचनम् उच्चैर्जगाद रघुनन्दनः। महार्थं वचनं प्रतिपादयन् सन् मारीचम् उच्चैः श्रावयामास। उच्चैः श्रावणवृत्तिसाध्येप्सितमारीच-कर्मक-प्रतिपादनवृत्ति—साध्येप्सिततम-महार्थवचनकर्मकपरोक्षभूतगदन-क्रियानुकूल-व्यापारवान् रघुनन्दनः। गिरमिति विपूर्व-धा-करोत्यर्थे अभिपूर्वस्तु भाषणे इत्यनुसारेण अभिपूर्वस्य दधातेः कथनार्थत्वेन तदर्थ-त्वात् द्विकर्मकता। नरेन्द्र इति गौणकर्मत्वात् नरेन्द्रस्योक्तत्वम्।

द्वैपायनेन व्यासेन नरेन्द्रः युधिष्ठिरः अत्युदारां गिरं अभिदधे । अत्युदारां गिरं प्रतिपादयता द्वैपायनेन नरेन्द्रः श्रावयांचक्रे । द्वैपायनकर्तृक-प्रतिपादनवृत्ति-साध्येप्सिततमात्युदारगीः कर्मक-परोक्षातीताभिधानक्रियायाः श्रावणवृत्ति-साध्येप्सितोक्तकर्म नरेन्द्र इत्यर्थः । किञ्चेति । वृत्तिद्वय-साध्यत्वेऽपि क्रियैकसाध्यत्वात् कर्मप्रत्यये सामान्याच्च गौणमुख्योभयकर्मोक्तत्वप्राप्ते एकस्यैव कर्मण उक्तत्वं स्यादिति व्यवस्थापयति कर्मप्रत्यये त्विति । कर्मणि वाच्ये प्रत्यये सति दुहादेर्धातुगणस्य गौणकर्म उक्तं स्यात् । कर्मप्रत्यये सति नीवहादेर्धातुगणस्य मुख्यकर्मोक्तं स्यात् । यदुक्तं प्राचीनैर्यत्राख्यातादिः ।

अस्यार्थ इति । णेरिति ण्यन्तादित्यर्थः । णेरेवेति ण्यन्तस्यैवेत्यर्थः । कर्तृकर्मणोरिति सप्तमी द्विवचनान्तं स्यादिति उक्तत्वमिति शेषः । एवमन्यत्र ज्ञेयम् । सचेति सुगमत्वात् कर्मणीति नोक्तमिति ज्ञेयम् । कृष्णेनेति गौणकर्मत्वात्गोरुक्तत्वम् । दुग्धं निष्कासयता कृष्णेन अगुंलि-द्वयेन स्तनेषु गौवृत्तिषु गौराकृष्यते इत्यर्थः । कृष्णकर्तृक-निष्कासनवृत्ति-साध्येप्सिततम-दुग्धकर्मक-वर्तमान–दोहनक्रियाकर्षणवृत्ति–साध्येप्सितोक्त–कर्म गौः । नवनीतमिति । नवनीतं वाञ्छयता कृष्णेन स्वस्मै दाने माता प्रेर्यत इत्यर्थः । कृष्णकर्तृक-वाञ्छा-वृत्तिसाध्येप्सिततम-नवनीत-कर्मकवर्तमान-याचनकिया-प्रेरणवृत्ति-साध्येप्सितोक्तकर्म माता। इत्यादीत्यादिपदेन उदाहरणानि यथाः—गोष्ठं गा अवरुध्यते, पिता इन्द्रमखं पृच्छ्यते, यज्ञपत्न्यः अन्नं भिक्ष्यन्ते, वृन्दावनं पुष्पाण्यवचीयते, पिता गोवर्धन-मखमुच्यते । लोकास्तद्भक्तिं शिष्यन्ते, दैत्या युद्धं जीयन्ते, दैत्याः प्राणान् दण्ड्यन्ते, गोवर्धनो वरं व्रियते, दधि नवनीतं मथ्यते, सख्यो नर्म उह्यन्ते । अथेति नीवहादीत्यादिपदेन हृञ्कृष्योर्ग्रहणं कृष्ण इति गाः प्रेरयन् व्रजं संयोजयतीत्यर्थः। श्रीदामानमिति श्रीदामानं स्कन्धे धारयन् भाण्डीरं संयोजयतीत्यर्थः। भाण्डीरमिति। वटविशेषमित्यर्थः। वस्त्रमिति वस्त्रमाकर्षन् कदम्बाग्रं संयोजयतीत्यर्यः । गोपीरिति । गोपीराकर्षन् वनं संयोजयतीत्यर्थः। अन्वयार्थौ पूर्ववदिति । तत्रान्वयो यथा—गा नयति व्रजं, नयतीति एवं सर्वत्र ज्ञेयम् । अर्थस्तूक्त एव।

अथ नीवहीत्यादौ मुख्यग्रहणात् करोत्यादयोऽपि क्वचित्। कृष्णः पुष्पाणि मालां करोति, मालामुत्पादयन् पुष्पाणि ग्रथ्नाति। गोपीर्मनो मुष्णाति, मनो हरन् गोपीर्वञ्चयतीत्यर्थः। गोपीर्हारान् गृह्णाति, हारानाच्छिन्दन् गोपीर्धर्षयतीत्यर्थः। गोप्यस्तण्डुलानोदनं पचन्ति, तानोदनं साधयन्त्यो विक्लेदयन्तीत्यर्थः। कर्मप्रत्यये–कृष्णेन गावो व्रजं नीयन्ते। श्रीदामा भाण्डीरमुह्यते इत्यादि। यदा त्वेकमेव कर्म प्रयुज्यते, तदा गौणं मुख्यं वा तदेवोक्तं स्यात्; यथा—दुग्धानि दुह्यन्ते इत्यादि।

अथ प्रेरणाद्यर्थण्यन्तप्रयोगे कर्तृकर्मविवेकः। तत्र ण्यन्तात् कर्तृ-प्रत्यये ण्यन्तकर्तैवोक्तः स्यात्, पूर्वकर्ता त्वनुक्तः; यथा—विष्णु-मित्रो वैष्णवेनान्नं पाचयति। पुनर्णौ तु तत्कर्त्तैवोक्तः, पूर्वकर्ता

---

अथेति। अथ नीवहीत्यादाविति। अथ नी-वहि-हृञ्-कृषि-मुख्यम-पीत्यत्रेत्यर्थः। करोत्यादयोऽपि इति द्विकर्मका इति शेषः।

आच्छिन्दन्निति बलादाकर्षणपूर्वकं गृह्णन्नित्यर्थः। धर्षयति प्रगल्भयति धृष्टा करोतीत्यर्थः। तानिति ओदनं साधयन्त्यः तान् तण्डुलान् विक्लेदयन्तीत्यर्थः। कृष्णेनेति मुख्यकर्मत्वात्गवामुक्तत्वम्। ननूभयोः कर्मणोः प्रयोगे दुह्यादेर्गौणस्योक्तत्वमुक्तं, नीवहादेस्तु मुख्यस्यैव। यदा एकस्यैव प्रयोगो भवति, तदा किं भवतीति चेत्तत्राह—यदात्विति। यदा कर्मणि वाच्ये एकमेव कर्म प्रयुज्यते तदा गौणं मुख्यं वा उक्तं स्यात्। अतो दुग्धानीत्यत्र मुख्यमेवोक्तं कृष्णकर्तृक-आकर्षणवृत्ति-साध्येप्सित-गोकर्मक-वर्तमान-दोहनक्रिया-निष्कासनवृत्ति-साध्येप्सिततम-कर्माणि दुग्धानीत्याक्षेपलभ्यार्थः। वस्तुतस्तु कृष्णकर्तृकवर्तमान-दोहन-क्रियाकर्माणि दुग्धानि इत्यनेनैव सिद्धति।

अथ द्विकर्मकोदाहरणान्तरं प्रेरणाद्यर्थे विहितो यो णिस्तदन्तस्य प्रयोगे सति कर्तुः कर्मणश्च विवेकः, विवेचना क्रियते।

अत्रेति ण्यन्तकर्ता प्रयोजकः, पूर्वकर्ता प्रयोज्यः, यथा—विष्णु-मित्र इति। अत्र हेतुकर्तुर्विष्णुमित्रस्य प्रेरणव्यापाररूपेण पचधातोर्णिः

त्वनुक्तः ; यथा—वैष्णवाचार्यो विष्णुमित्रेण वैष्णवेनान्नं पाचयति। ण्यन्तकर्माभावे सति पूर्वकर्मण्येव प्रत्यये तदेवोक्तं स्यात्, कर्तृमात्रं त्वनुक्तमेव ; यथा—विष्णुमित्रेण वैष्णवेनान्नं पाच्यते इत्यादि ॥९७९

**अकर्मकादिधातुषु पूर्वकर्तुः कर्मत्वमाह—**

९८०। अकर्मक-गति-ज्ञान-शब्द-भोजनवाचिनाम्।
अणिकर्ता कर्म णौ स्यात् कृञ्-हृञादेर्विभाषया॥

९८१। नी-खाद्यदि-ह्वा-शब्दाय-क्रन्दो भक्षिरहिंसने।
अयन्तृकवहिश्चैषां णौ कर्मत्वं निषिध्यते॥

तत्र कर्तृप्रत्यये अण्यन्ते—वैष्णवो भवति ; ण्यन्तेतु—वैष्णवाचार्यो वैष्णवं भावयति। अण्यन्ते—गावो वनं गच्छन्ति ; ण्यन्ते तु—कृष्णो गा वनं गमयति। एवं गोपान् गां ज्ञापयति, दर्शयति,

---

तस्मात् पाचि ण्यन्तादुत्तरे प्रयोजककर्तुर्वाच्ये तिप्प्रत्यये कृते सति स कर्त्तैवोक्तः, पूर्वकर्तातु वैष्णवोऽनुक्तः, अतस्तस्मिन् तृतीया तद्वाच्ये प्रत्ययानभिधानात् अन्नमपि पचनसाध्यं कर्म सुतरामनुक्तं स्यात्। अर्थस्तु—प्रयोज्यकर्तुर्वैष्णवस्य अन्नस्य कर्मणो वर्तमानपचनक्रियायाः प्रयोजकविष्णुमित्र इति। प्रयोज्यवैष्णवकर्तृकान्नकर्मक-वर्तमानपचनक्रिया-प्रेरणानुकूल-व्यापारवान् विष्णुमित्रः।

पुनरिति। तत्कर्ता पुनर्णिकर्ता। पूर्वपूर्वकर्ता अणिकर्ता पूर्वणिकर्ता च। प्रयोजकप्रयोज्य-विष्णुमित्रस्य प्रयोज्यवैष्णवस्य अन्नस्य कर्मणो वर्तमानपाचनक्रियायाः प्रयोजको वैष्णवाचार्यः। प्रयोजकप्रयोज्य-विष्णुमित्र–प्रयोज्य–वैष्णवकर्तृकान्नकर्मक–वर्तमान–पचनक्रियानुकूल–व्यापारवान् वैष्णवाचार्यः। ण्यन्तेति ण्यन्तस्य धातोः कर्मणोऽभावे तदेव पूर्वकर्मैव कर्तृमात्रं प्रयोजकप्रयोज्यरूपम्। विष्णुमित्रेणेति अकर्मकादिषु धातुषु पूर्वकर्तुः कर्मत्वं वक्ष्यते। अतो ण्यन्तस्य पचेः कर्तुर्न कर्मत्वम्, अतो पूर्वकर्मैवोक्तम्। प्रयोजकविष्णुमित्र-प्रयोज्य-वैष्णव-कर्तृकवर्तमानपाचनक्रियाया उक्तकर्म अन्नम्।

उपलम्भयति वा। गोपान् गीतं गापयति। अत्र जल्पविलापावप्युदाहार्यौ। एवं श्रवणस्यापि शब्दात्मकत्वात्तदन्तर्भावः। श्रावयति गोपान् गीतं, गास्तृणं भोजयति, गा जलं पाययतीत्यादि। कथम् "अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक" (कुमारसम्भवम् १।५२) इति? "अजिग्रहत्तं जनको धनुस्तत्" (भट्टिः २।४२) इति च? अत्रोपादानार्थस्य ग्रहेः प्राप्त्यात्मकत्वेन गत्यर्थ-

---

९८०-९८१। अक। अकर्मकाश्च गति-ज्ञानशब्दभोजनवाचिनश्च तेषां धातूनां प्रयोगे णौ सति अणिकर्ता कर्म स्यात्। डुकृञ्‌करणे, हृञ्‌हरणे, इत्यादेः प्रयोगे अणिकर्ता विभाषया विकल्पेन कर्म स्यात्। कृञो हृञश्च अप्राप्ते विभाषेयम्। नीखा। नीञ-प्रापणे, खादृ-भक्षने, अद-भक्षने, ह्वेञ्‌—स्पर्धायां शब्दे च शब्दायेति, क्यङन्तशब्दाय धातुः क्रदि आह्वाने रोदने च इत्येते अहिंसने अर्थे अदने भक्ष इत्येष च अयन्तृ-वहिश्च वर्तते इति शेषः। एषां प्रयोगे णौ सति अणिकर्तुः कर्मत्वं निषिद्ध्यते; अयन्तृकवहिरिति यन्ता गवादेः प्रयोजकः, नास्ति यन्ता यत्र सोऽयन्तृकः, स चासौ वहिश्चेति। नीखाद्यदिह्वाशब्दायक्रन्दां भक्षेरहिंसने। अयन्तृकस्यापि वहेर्णौ कर्मत्वं निशिद्ध्यत इति वा पाठः। नीञो वहेश्च गतिवाचित्वात् खाद्यदिभक्षीणां भोजनवाचित्वात्, ह्वेञः क्रन्दश्च शब्दवाचित्वात्, शब्दायेत्यस्य तु अकर्मकत्वात् शब्दवाचित्वात् च प्राप्ते निषेधः क्रमेणोदाहरति—वैष्णवाचार्य इति।

प्रयोज्य-वैष्णवकर्मणः वर्तमानसत्ताक्रियायाः प्रेरणकर्ता वैष्णवाचार्यः। प्रयोज्य-वैष्णवकर्मक-वर्तमान-भवनक्रिया-प्रेरणानुकूल-व्यापारवान् वैष्णवाचार्यः। एवमिति अण्यन्ते—गोपा गां जानन्ति, ण्यन्तेतु—गोपान् गां ज्ञापयति। अण्यन्ते—पश्यन्ति, ण्यन्तेतु—दर्शयति इति। अण्यन्ते—उपलभ्यन्ते,ण्यन्तेतु—उपलम्भयतीति। दर्शनस्य ज्ञानान्तर्भावात् उपलब्धेस्तु ज्ञानरूपत्वात् दृश्‌धातोरुपपूर्व-लभेश्च ज्ञानवाचित्वम्। कृष्णो गोपीं पुष्पाणि घ्रापयतीत्याद्यपि ज्ञानान्तर्भावात्। गोपानिति। अण्यन्ते—गोपा गीतं गायन्ति, ण्यन्तेतु—गोपानित्यादि। अत्रेति। अत्र शब्दार्थे जल्प—व्यक्तायां वाचि, विपूर्व-लप—व्यक्तायां वाचि। इत्येतावप्युदाहार्यौ। जल्पविलपयोः शब्दवाचित्वं स्पष्टमेव, तथापि किमर्थमेतदुक्तमिति न

त्वात् । एवं त्यागोऽपि गत्यात्मक इति—"त्याजितैः फलमुत्खातैर्भ-ग्नैश्च बहुधा द्रुमैः" इति सिध्यति । पुनर्णौ णिकर्तुर्न कर्मत्वम्—पिता कृष्णेन गा वनं गमयति इत्यादि । कृञादेस्तु—कारयति स्वभक्तिं भक्तं कृष्णः, भक्तेन वा । विकारयति वैष्णवं कृष्णप्रेमा, वैष्णवेन वेत्यपि केचित् । हारयति मुरलीं गोपी सखीं, सख्या वा ॥ ९८०-९८१ ॥

---

निश्चितम् । श्रवणस्यापीति शब्दात्मकत्वादिति शब्दमूलकत्वादित्यर्थः । शब्दमूलकत्वादिति वा पाठः । तदन्तर्भावः शब्दान्तर्भावः, श्रावयतीति, अण्यन्ते—गोपा गीतं शृण्वन्ति, ण्यन्तेतु—श्रावयतीत्यादि । गा इति, अण्यन्ते—गास्तृणं भुञ्जते, ण्यन्तेतु—गा इत्यादि । गा जलमिति । अण्यन्ते—गावो जलं पिबन्ति, ण्यन्तेतु—गा इत्यादि ।

कथमिति । अकर्मकादीनामेव अणिकर्तुः कर्मत्वमुक्तमतो ग्रहेरणि-कर्तुः कर्मत्वं न भवतीत्ययमत्र विरोधः । अयाचितारमिति । अद्रि-र्हिमालयः । अयाचितारमयाचकं, देवदेवं महादेवं, सुतां पार्वतीं, ग्राहयितुं स्वीकारयितुं न शशाक, शक्तो न वभुवेत्यर्थः । अजिग्रहदिति । अण्वन्ते-रघुनन्दनस्तद्धनुरग्रहीत्, ण्यन्ते जनकस्तन्नामा नृपस्तद्धनुस्तं रघुनन्दनं अजिग्रहत् ।

सिद्धान्तमाह—अत्रेति । उपादानार्थस्य स्वीकरणार्थस्य प्राप्तात्म-कत्वेनेति उपादानस्येति शेषः । उपादानस्य प्राप्तात्मकत्वेन तदर्थस्य ग्रहेर्गत्यर्थतेति । एतेन गौणगत्यर्थस्यापि ग्रहणं भवतीति सूचितम् । त्याजितैरिति द्रुमैरिति द्रुमैः कीदृशैः फलं त्याजितैः । अत्र त्यागस्य गत्या-त्मकत्वात् अणिकर्तृणां द्रुमाणां प्रथमं कर्मत्वमासीत् क्तप्रत्ययस्य कर्तरि विहितत्वात् अनुक्तत्वञ्च द्रुमान् फलं त्याजित इति पश्चात् क्तप्रत्ययस्य कर्मणि विहितत्वात् ण्यन्तकर्मणां तेषामुक्तत्वं द्रुमाः फलं त्याजिता इति तत्पश्चात् विवक्षावशतया तेषां द्रुमाणामेव कर्तृत्वं परार्धपद्यस्थित-प्रत्ययान्तरस्य कर्तर्यविहितत्वादनुक्तत्वञ्च त्याजितपदस्य च तद्विशेषण-त्वात्तादृश-विष्णुभक्तिभाक्त्वं फलं त्याजितैर्द्रुमैरिति वनं रज्यते इति

९८२। अभिवादि-दृशोरात्मपदे।

अभिवादयते गर्गं कृष्णं श्रीनन्दः, कृष्णेन वा। एवं दर्शयते स्वकार्यं पिता कृष्णं, कृष्णेन वा। पचत्यादीनामपि विकल्पं केचिदाहुः। श्रुदृशोर्न कर्मत्वमिति कश्चित्। कर्मप्रत्यये कर्तृवत् णेः कर्मैवोक्तं स्यात्—वैष्णवाचार्येण वैष्णवो भाव्यते। कृष्णेन गावो वनं गम्यन्ते। पुनर्णौ—पित्रा कृष्णेन गावो वनं गम्यन्ते इत्यादि। नीखाद्यदीनान्तु कर्तृप्रत्यये—कृष्णो गोपैर्गा व्रजं नाययति। एवं खाद्यदी; तथा—आह्वाययति गोपैर्गाः कृष्णः। शब्दं करोति—शब्दायते; अयमकर्मकः। शब्दार्थश्च तस्मात् णौ—शब्दाययति वंश्या कृष्णः। अयतेश्च निषेध इत्येके। ह्वा-शब्दाय-क्रन्दानां न निषेध इति कश्चित्। भक्षेः—भक्षयति नवनीतं कृष्णेन माता;

---

शेषः। उत्खातैरिति। भग्नैरिति च द्रुमाणामेव विशेषणम्। पुनरिति। पुनर्णौ सति णिकर्तुः कर्मत्वं न स्यात्। नेदं लक्षनम्। किन्तु अणिकर्ता इति यदुक्तं तदेव विवृतमिति। पितेति। कृष्णो गा वनं गमयति तञ्च पिता प्रेरयतीत्यर्थः। पुनर्णौ कृते प्रथमणिकर्तुः कृष्णस्य न कर्मत्वम्। कारयतीति अण्यन्ते–भक्तः भक्तिं करोति अत्र स्वशब्दो न योज्यः, ण्यन्तेतु–कारयतीत्यादि। विकारयतीति अण्यन्ते–वैष्णवो विकुरुते, विकृतो भवतीत्यर्थः। ण्यन्तेतु–विकारयतीत्यादि। अस्माकं मते विपूर्वस्य करोतेरकर्मत्वान्नित्यमेव कर्मत्वं भवतीति केचिदुक्तम्। हारयतीति। अण्यन्ते–सखी मुरलीं हरति, ण्यन्तेतु–हारयतीत्यादि ॥ ९८०-९८१ ॥

९८२। अभि। आत्मपदे विषये अभिवादेर्दृशेः प्रयोगे अणिकर्ता कर्म वा भवति। अभिवादेरप्राप्ते दृशो ज्ञानार्थत्वात् प्राप्ते विभाषा। कृञ्-हृञादेर्विभाषयेति यदुक्तं तस्यैव प्रपञ्चरूपं लक्षणमिदमिति ज्ञेयम्। अभिवादयत इति अभिपूर्व-वदधातुरत्र चुरादि-ण्यन्तो गृहीतः ततश्चुरादि-ण्यन्ते कृष्णो गर्गं अभिवादयति, प्रणमतीत्यर्थः। प्रेरण-ण्यन्तेतु अभिवादयते इत्यादि। "ञिद्भ्र उभयपदिभ्यो णेः कर्तृगामिक्रियाफले" इत्यनेन आत्मपदम्। एवं दर्शयत इति। अण्यन्ते–कृष्णः स्वकार्यं प्रदर्शयते

हिंसायान्तु—भक्षयति गरुड़ं दैत्यान् विष्णुः, भक्षयति यादवानां भोज्यं दैत्यान् कंस इत्यपि। वहेः—वाहयति वन्यभोजनं गोपैः कृष्णः ; सयन्तृककर्तृकत्वे तु—वाहयति शकटं वृषभान् गोपः। कर्म-प्रत्यये—कृष्णेन गोपैर्गावो व्रजं नाय्यन्ते इत्यादि। अत्र मुख्यत्वाद्-गवामेवोक्तत्वम्। उक्ता ण्यन्ताः।

---

ण्यन्तेतु-दर्शयत इत्यादि। आत्मपदं तेनैव। पचत्यादीति। पचत्यादीनां धातूनां णौ कृते सति विकल्पं यथा स्यात्तथा अणिकर्तुः कर्मत्वं भवतीति केचित् पण्डिता आहुः। श्रु-दृशोर्णौ कृते सति अणिकर्तुः कर्मत्वं न भवतीति कश्चिदाह—कर्मेति। यथा अकर्मकादि ण्यन्तात् कर्तृप्रत्यये ण्यन्तकर्त्तैवोक्तः स्यात्, नतु पूर्वकर्ता। तथा अकर्मकादि ण्यन्तात् कर्म-प्रत्यये सति ण्यन्तस्य कर्मैवोक्तं स्यात्, नतु पूर्वे कर्मेत्यर्थः। एवकारेण नतु गत्यादीनां पूर्वकर्म उक्तं स्यात्। वैष्णवाचार्येणेति। वैष्णवाचार्यस्य भावनक्रियायाः प्रयोज्यकर्म वैष्णवः। अकर्मकत्वादत्र पूर्वकर्मणोऽभावः। कृष्णेनेति। अत्र पूर्वकर्मणो वनस्य नोक्तत्वम्। कृष्णस्य वनकर्मक-वर्तमान-गमनप्रेरण-क्रियायाः प्रयोज्यकर्माणि गावः। पुनरिति। पुनर्णौ कृते सति कर्मणि वाच्ये प्रत्यये प्रथम-णिकर्तुः कर्मत्वाभात् अणिकर्तुः कर्मत्वे तदेव कर्म उक्तं स्यात्। पुनर्णौ णिकर्तुर्न कर्मत्वमित्युक्तमतो-ऽणिकर्तॄणां ण्यन्तकर्मणां गवामेवोक्तत्वम्। प्रयोजक-पितुः प्रयोजक-प्रयोज्य-कृष्णकर्तृक-वनकर्मक-वर्तमान-गमनप्रेरणक्रिया-प्रयोज्य-कर्माणि गावः। कृष्ण इति। अण्यन्ते-गोपा गा व्रजं नयन्ति, ण्यन्तेतु-कृष्ण इत्यादि। अत्र अणिकर्तॄणां गोपानां न कर्मत्वम्। एवमिति यथा—खादयति गोपैस्तानि फलानि कृष्णः एवमादयति। तथेति। अण्यन्ते गोपा गा आह्वयन्ति, ण्यन्तेतु—आह्वायतीत्यादि। अकर्मक इति क्यङैव शब्दरूपस्य कर्मण उक्तत्वादिति भावः। अयतेरिति। अय—गतावित्यस्य अणिकर्तुः कर्मत्वनिषेध इत्यर्थः। भक्षयति इति, भक्षधातुश्चुरादिः ततश्चुरादि-ण्यन्ते—कृष्णो नवनीतं भक्षयति, प्रेरण-ण्यन्तेतु—भक्षयतीत्यादि। हिंसायान्तु इति। प्राणिविषयकपीड़ोत्पादनं हिंसेति मुखनासिकाभ्यां यो वायुर्निःसरति स प्राणः, सोऽस्यास्तीति प्राणी। भक्षयतीति, चुरादि-

किञ्च—

**कालाध्वभावदेशानामन्तर्भूतक्रियान्तरैः ।**
**सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥**

( वाक्यपदीयम् )

अध्वशब्देनात्र तत्परिमाणमुच्यते। मासमास्ते, एकादशीमुपवसन्ति, व्याप्तिपूर्वकमिति ज्ञेयम्। एवं क्रोशत्रयं गोवर्धनोऽस्ति, गोदोहं तिष्ठति हरिः, माथुरान् विराजते कृष्णः। कर्मप्रत्यये—मास आस्यते, एकादश्युपोष्यते इत्यादि। अत्र णौ कृते पूर्वकर्तुः कर्मत्वमेव मन्यन्ते। मासमासयति वैष्णवं वैष्णवः। कर्मप्रत्यये तु यथेष्टमुक्तत्वं कर्मण एकस्य मासमास्यते वैष्णवः, मास आस्यते वा वैष्णवं वैष्णवेन। गतिज्ञानादीनामपि विकल्पमिति केचित्; ततः

---

ण्यन्ते—गरुड़ो दैत्यान् भक्षयतीति। भक्षयतीति चुरादि-ण्यन्ते—दैत्या यादवानां भोज्यं भक्षयन्तीति। वहेरिति अण्यन्ते—गोपा वन्यभोजनं वहन्तीति। वन्यभोजनमिति वन्यभोज्यमित्यर्थः। टणप्रत्ययस्य कर्मणि विहितत्वात्। सयन्तृकत्वेत्वित्येव पाठः वहेरिति शेषः। सयन्तृककर्तृत्वेति पाठः सर्वत्र दृश्यते, किन्तु स दुर्बोध एव। सयन्तृक-कर्तृत्वेति पाठेतु यन्त्रा सह वर्तमानः सयन्तृकः, सकर्तृकस्तस्य भावस्तत्वं, तस्मिन् वहेरिति शेषः। वाहयतीति। अण्यन्तेतु—वृषभाः शकटं वहन्तीति। नाय्यन्त इति ण्यन्तादयक्। मुख्यत्वादिति मुख्यकर्मत्वादित्यर्थः। यत उक्तं ण्यादेस्तु मुख्य इति ॥

काला। कालश्च अध्वा च भावश्च देशश्च तेषां अन्तर्भूतं क्रियान्तरं येषां तथाभूतैः सर्वैरकर्मकैर्धातुभिर्योगे कर्मत्वं जायते, कालाध्वभावदेशानामिति तद्वाचकानामित्यर्थः। अध्वशब्देनेति। तस्य अध्वनः परिमाणम्। एतत्तूपचारादिति ज्ञेयम्। अतएव क्रोशत्रयं गोवर्धनोऽस्तीत्युदाहृतम्। व्याप्तिपूर्वकमिति। ततश्च मासं व्याप्य आस्ते इत्यादिरर्थः। आसनादिपूर्विकायां प्राप्तावास्यादीनां वृत्तिरिति भाष्यं प्राप्ताविति व्याप्तावित्यर्थः। कालसंख्यायामपि कालस्योपचारात् मासचतुष्टयमधीते, वर्षशतं जीवती-

कृष्णेन गा वनं गम्यते इत्यपि। किञ्च, प्रेरणाद्यसम्भवेऽपि क्वचित्तदुपचर्य णिः क्रियते ; यथा—भिक्षा मथुरायां वासयति, दीपो गीता-

त्याद्यपि भवतीति ज्ञेयम्। क्रोशत्रयं गोवर्धनोऽस्तीत्यत्र अध्वपरिमाणसंख्यायामध्वपरिमाणस्योपचार इति ज्ञेयम्। त्रीन् क्रोशान् गोवर्धनोऽस्तीति वा पाठः। यथा धेनुद्वयं ददामीत्युक्ते द्वित्वसंख्याविशिष्ट-धेनोरेव दानं प्रतीयते, तथा क्रोशानां त्रयं क्रोशत्रयमिति धर्मप्रधानेन त्रयशब्देन कृष्णपुरुषे कृते तस्योत्तरपदार्थप्रधानत्वेऽपि त्रित्वसंख्याविशिष्ट-क्रोशं व्याप्य-गोवर्धनस्थितिः प्रतीयते इति। गोदोहमिति। गोदोहशब्दो भावे घणन्तः। माथुरानिति। मथुरा राजधानी कालदेशानित्यर्थः। सर्वैरिति पदोपादानात् सकर्मकोऽपि यदा कर्माविवक्षायामकर्मकस्तस्यापि ग्रहणार्थमतो मासोऽधीतः, रात्रिरधीता, अहरधीतमित्यादि। मासं वेदोऽधीत इत्यादौ तु धातोः सकर्मकत्वान्नास्य विषयः, किन्तु 'कालाध्वनोरत्यन्तव्याप्तौ द्वितीये'त्यनेन द्वितीया। अत्रेति। पूर्वकर्तुरणिकर्तुः कर्मत्वमेव मन्यन्त इति अन्तर्भूतक्रियान्तरत्वेन। कृतेऽपि कर्मत्वे धातोरकर्मकत्वमस्त्येव, अतोऽकर्मकेत्यादिना अणिकर्तुः कर्मत्वमेवेत्यभिप्रायः। मासमिति। अण्यन्ते—वैष्णवो मासमास्ते, ण्यन्ते—मासमासीनं वैष्णवं प्रेरयतीति मासमिति। कर्मप्रत्यये त्विति ण्यन्तात् कर्मप्रत्यये सतीत्यर्थः। यथेष्टमिति इष्टमनतिक्रम्य एकस्य कर्मण उक्तत्वं भवति। एतेन द्वयोरेवोक्तत्वं भवति। किन्तु क्रमेणेत्युक्तं वैष्णवेनेति उभयत्र योज्यम्। गतीति, एतेषामपि प्रयोगे एकस्य कर्मण उक्तत्वस्य विकल्पमिति केषाञ्चिन्मतम्। कृष्णेनेति अतएव वनस्य उक्तत्वम्। किञ्चेति। तत्प्रेरणादि। भिक्षेति। प्रेरणस्य प्राणिव्यापारविशेशत्वादत्रासम्भवः। वासयतीति वैष्णवमिति शेषः। किञ्चेति। प्रेरणादिणेरिति, प्रेरणादिविहितस्य णेः प्रयोगे इत्यर्थः। यद्वाक्यमिति, प्रयुज्यते इति शेषः। तदेवेति, नान्यविरुद्धमित्यर्थः। समस्तादपिकारादसमस्तात् कृदन्तान्नाम्न उत्तरे णौ कर्तव्ये सति प्रेरणादिणेस्तद्धातोरुत्तरे कृतस्य णेर्यद्वाक्यं भवति, तदेव प्रयुज्यते। तत्र प्रथमं पुरावृत्तमवलम्ब्य उदाहरणमाह—तत्र पुरावृत्ते यथेति—'इतिहासः

मध्यापयति। किञ्च, तदाचष्टे इत्याद्यर्थे समस्तादपि कृदन्ताण्णौ कर्तव्ये प्रेरणादिणेर्यद्वाक्यं, तदेव प्रयुज्यते ; तत्र पुरावृत्ते—सीतां हर्तुं प्रेरयतीत्यत्र यथा सीतां हारयतीति वाक्यं प्रयुज्यते, तथा सीताहरणमाचष्टे इत्यत्र तु सीतां हारयतीति प्रयोक्तव्यम्। एवं रावणवधमाचष्टे, रावणं घातयति ; रामागमनमाचष्टे, राममागमयति। कालात्यन्तसंयोगे यथा—आरात्रिविवासमाचष्टे, रात्रिं विवासयति ; आङित्यभिव्याप्तौ, तस्याप्रयोगश्च ; विवासो वासाति-

---

पुरावृत्तमित्यमरः'। सीताहरणमिति सीताया हरणमिति विग्रहः। हरणमिति हृञ्-धातोर्भावेऽनः। यद्येवमतिदेशलक्षणं न क्रियते, तदा सीताहरणमाचष्टे इत्यादौ सीताहरणयतीत्यादिकमनिष्टोदाहरणं स्यादिति। एवमिति। रावणं हन्तुं प्रेरयतीत्यत्र यथा रावणं घातयतीति प्रयुज्यते, तथा रावणवधमाचष्टे इत्यत्रापि रावणं घातयति कथम् इति प्रयोक्तव्यम्। रावणवधमिति, रावणस्य वधो रावणवधः तम्। वधशब्दो भावकृदन्तो हनधातुसिद्धः। रामागमनमिति। राममागन्तुं प्रेरयतीत्यत्र यथा राममागमयतीति, तथा राममागमनमाचष्टे इत्यत्रापीति। एवं बलिबन्धं बलिं बन्धयतीत्यपि ज्ञेयम्। कालात्यन्तसंयोगे कृदन्तान्नाम्न उत्तरे णौ कर्तव्ये सति यथा उदाह्रियते—कालेति। कालस्य अत्यन्तसंयोगः कालात्यन्तसंयोगस्तस्मिन्, अत्यन्तसंयोगोऽविच्छेद-संयोगः। आरात्रिविवासमिति। आरात्रीति आवैकुण्ठमितिवदव्ययीभाव-समाससिद्धं रात्रिमभिव्याप्येत्यर्थः। ततश्च आरात्रिविवास इति भूत-पूर्वादिवत् समासस्तम्। केवलसमासाश्च दृश्यन्ते इति समासप्रकरणे वक्ष्यते। तस्याप्रयोग इति, उक्तार्थानामप्रयोग इति न्यायेनेति शेषः। वासातिक्रम इति, वासाभाव इत्यर्थः। रात्रिं विवस्तुं प्रेरयतीत्यत्र यथा रात्रिं विवासयतीति तथा आरात्रिविवासमाचष्टे इत्यत्रापि। रात्रिमिति, रात्रिं व्याप्य इत्यर्थः। विवासशब्दो भावघणन्तः। अत्र रात्रेर्वासाति-क्रमेण सहाविच्छेदसंयोगः। अतिक्रमयतीति, लङ्घयतीत्यर्थः। रात्रिं विवासयति इत्यस्येति शेषः। आदिग्रहणादिति तदाचष्टे इत्याद्यर्थे

क्रमे वर्तते ; अन्यस्त्वाह—रात्रिमतिक्रमयतीत्यर्थः इति । आदि-ग्रहणादन्यत्रापि ; तत्राध्वमर्यादायामाश्चर्यत्वे यथा–सन्ध्यायां पुष्करात् प्रस्थितो मथुरायां सूर्योद्गमनं सम्भावयति, सूर्यमुद्गमयति । ज्योतिर्ज्ञानेऽपि—विधुना रोहिणीयोगं जानाति, रोहिण्या योजयति विधुम् । धर्मे सूत्रं करोति, धर्मं सूत्रयति ; इति तु सूत्रिक्रियासाध्यत्वाद्धर्मस्य कर्मत्वमिति । केवलकृदन्तादपि—कर्तारमाचष्टे, कारयति ; पाकं करोति, पाचयति ; वादितवन्तं प्रयोजितवान्, अवीवदद्वीणां परिवादकेन इत्यादि ॥ ९८२ ॥

---

इत्यत्रेति शेषः । अन्यत्रापीति । तदाचष्टे इत्यर्थादन्यस्मिन्नर्थेऽपीत्यर्थः । अन्यस्मिन्नर्थे अध्वमर्यादायामाश्चर्यत्वे उदाहरणमाह—तत्रेति । अध्वमर्यादायाम् अध्वसीमायाम् । पुष्करात्तीर्थविशेषात् । प्रस्थित इति, प्रस्थितो जन इत्यर्थः । सम्भावतीति, स्वयोग्यतया सूर्यमुद्गमनं निश्चिनोतीत्यर्थः । पुष्करान्मथुरा पञ्चदशदिनगम्येति प्रसिद्धिरस्ति, अतोऽध्वमर्यादायामाश्चर्यत्वम् । सूर्यमुद्गन्तुं प्रेरयतीत्यत्र यथा सूर्यमुद्गमयतीति, तथा सूर्योद्गमनं सम्भावयतीत्यत्रापीति । सूर्योद्गमनमिति, सूर्यस्य उद्गमनमिति विग्रहः ॥

ज्योतिरिति, ज्योतिषां ग्रहनक्षत्रादीनां ज्ञानं ज्योतिर्ज्ञानं, तस्मिन्नर्थे, समस्तादपि कृदन्ताण्णौ कर्तव्ये प्रेरणादिणेर्यद्वाक्यं तदेव प्रयुज्यते । विधुना चन्द्रेण, रोहिणी नक्षत्रविशेषः । विधुं रोहिण्या सह योक्तुं प्रेरयतीत्यत्र यथा रोहिण्या विधुं योजयतीति, तथा विधुना रोहिणीयोगं जानातीत्यत्रापीति । धर्मसूत्रमिति, धर्मस्य सूत्रं धर्मसूत्रं, तत् करोतीति वाक्ये कृतिक्रियायाः सूत्रमेव कर्म, यदा तु अन्तर्भूतकर्मिका सूत्रिक्रिया जाता, तदा तत्साध्यत्वात् धर्मस्यैव कर्मत्वमित्यभिप्रायः । सूत्रेत्येकदेशनिर्देशः । सूत्रीति वा पाठः । धर्मं सूत्रयितुं प्रेरयतीत्यत्र यथा धर्मं सूत्रयतीति, तथा धर्मसूत्रं करोतीत्यत्रापीति । सूत्रशब्दः सूञ् धातोः त्र-प्रत्ययसिद्धः । सूत्रेण धर्मं निश्चिनोतीति निर्गलितार्थः ।

केवलेति । केवलकृदन्तादपि णौ कर्तव्ये प्रेरणादिणेर्यद्वाक्यं तदेव

९८३। संज्ञः कर्मणि तृतीया वा।

कृष्णेन संजानीते, कृष्णं संजानीते, अवेक्षते इत्यर्थः। आत्मपदं वक्ष्यते (११९१); स्मरणार्थे तु षष्ठी वक्ष्यते (१०१३)—कृष्णस्य संजानाति ॥ ९८३ ॥

९८४। तृनादिकृति तु षष्ठेव वाच्या।

कृष्णस्य संज्ञाता ॥ ९८४ ॥

---

प्रयुज्यते। कर्तुं प्रेरयतीत्यत्र यथा कारयतीति, तथा कर्तारमाचष्टे इत्यत्रापि। कर्तारमिति, डु-कृञ्-करणे तृल्। पक्तुं प्रेरयतीत्यत्र यथा पाचयतीति तथा पाकं करोतीत्यत्रापि। पाकमिति, पच्धातोर्घञ्। वादितवन्तमिति। वीणा रागादिकम् उदितवती, ततश्च परिवादकस्तां वीणां रागादिकं वदितुं प्रेरितवान् इत्यर्थे णिः, ततः क्तवतुः, परिवादको वीणां रागादिकम् उदितवतीं वादितवान् इति। ततश्च रागादिकम् उदितवतीं वीणां वादितवन्तं परिवादकमपरः कोऽपि प्रयोजितवान् इत्यर्थे केवलकृदन्तात् क्तवत्वन्तात् णौ कर्तव्ये प्रेरणणेर्यद्वाक्यं अवीवददित्यादिकं तदेव प्रयुज्यते। प्रेरणणिवाक्ययोजना यथा—वीणा वदति, ततश्च परिवादकस्तां वदितुं प्रेरितवानित्यर्थे णिः, ततः भूतेश-दिप्, परिवादको वीणामवीवददिति। ततश्च रागादिकं वदतीं वीणां वादितवन्तं परिवादकं कोऽपि प्रैरिरदित्यर्थे पुनर्णौ अवीवदद्वीणां परिवादकेनेति। परिवादकस्य णिकर्तृत्वान्न कर्मत्वम्। प्रयोजितवानिति। स्वार्थे ण्यन्तात् क्तवतुः प्रेरितवानिति वा पाठः ॥ ९८२ ॥

९८३। संज्ञः। संपूर्वस्य ज्ञाधातोः प्रयोगे कर्मणि विषये तृतीया वा भवति। अवेक्षते, पश्यति जानाति वा। आत्मपदं वक्ष्यते इति 'संप्रतिभ्यां समुत्कण्ठापूर्वकस्मरणं विने'त्यनेन इति शेषः। षष्ठी वक्ष्यत इति 'स्मृत्यर्थदयेशां कर्म वे'त्यनेन इति शेषः। संजानातीति, समुत्कण्ठापूर्वकं स्मरतीत्यर्थः। स्मरणार्थत्वान्नात्मपदम् ॥ ९८३ ॥

९८४। तृना। संपूर्वस्य ज्ञाधातोः प्रयोगे तृनादिकृति तु सति

९८५। परिमाणाद्वीप्सायां कर्मणि वेति केचित्।

शतं शतं वत्सान् पाययति हरिः, शतेन शतेन वत्सानिति वा॥ ९८५॥

९८६। मन्यतेरनादरार्थात् कर्मोपमानाच्चतुर्थी वा, न तु काकादेः।

नावैष्णवं त्वा तृणाय मन्ये, तृणं वा, ततोऽपि निकृष्टत्वादिति॥ मनोतेर्न स्यात्—न त्वा तृणं मन्वे। 'उपमानान्निकृष्टत्व एव स्यादिति नञ् प्रयुज्यते'—एतच्च भाष्यवार्तिकचान्द्रमतम्; तेन तत्साम्येतु "हरिमप्यमंस्त तृणाय" (माघकाव्यम् १५।६१) इति; "तृणाय मन्ये जगतां प्रभुत्वम्" (रघुवंशम्) इत्यादयो न साधव इति वर्धमानमिश्राः; प्रत्युदाहरन्ति च—'सुवर्णं तृणं मन्ये' इति। तृणाय मत्वा रघुनन्दनोऽपि, वाणेन रक्षः प्रधनान्निरास्थत" इति भट्टिः (२।३६)। "मन्यकर्मण्यनादरे उपमाने विभाषाऽप्राणिषु" इत्येवापिशलसूत्रञ्च। जयादित्यादयस्तूपमानादिति च नाद्रियन्ते, प्रत्युदाहरन्ति च—

---

कर्मणि षष्ठ्येव वक्तव्या। 'कर्तृकर्मणोः षष्ठी कृद्योगे' इत्यनेन षष्ठी सिध्यत्येव, किन्तु विशषविधानात् तृतीयया पक्षे बाधिता स्यात्। अतस्तृतीयाबाधनार्थमिदं लक्षणम्। संज्ञातेति, 'णक-तृनावि'त्यनेन कर्तरि तृन्॥ ९८४॥

९८५। परि। वीप्सा। युगवत्-सजातीयानां व्याप्तिस्तस्यां गम्यमानायां परिमाणवाचकादुत्तरे कर्मणि विषये तृतीया वा स्यादिति केचित्। शतमिति। शतशब्दोऽत्र परिमाणवाची, वीप्सार्थे द्विरुक्तिः॥ ९८५॥

९८६। मन्य। मन्यतेर्दिवादिगणिमनधातोः प्रयोगे अनादरार्थात् कर्मोपमानादुत्तरे चतुर्थी वा स्यात्। पक्षे कर्म द्वितीयैव, तुल्याधिकरस्यापि कर्मत्वं, तदपि क्रियासाधयतीत्युक्तेः। ननु उपमानोपमेययोः कथं तुल्या-

"अश्मानं दृशदं मन्ये मन्ये काष्ठमुदूखलम् ।
अन्धायास्तं सुतं मन्ने यस्य माता न पश्यति ॥"
(काशिका २।३।१७)

—इति स्वरूपाख्यानं खल्वेतत् । काकादिनिषेधः किम् ? न त्वा काकं मन्ये, न त्वान्नं मन्ये, यावद्भुक्तं श्राद्धे । न त्वा नावं

---

धिकरणत्वमिति चेत्, तर्ह्येवं वाच्यं, यद्यपि उपमानोपमेययोस्तुल्याधिकरणत्वं न स्यात्, तथापि यथाकञ्चित् साधर्म्यमुपमा इत्युक्तरीत्या तद्धर्मस्य तुल्याधिकरणत्वम्, अतो धर्मधर्मिणोरभेदेन धर्मेण धर्मिणमाक्षिप्य तुल्याधिकरणत्वं विवक्षणीयमिति । कर्मेति, उपमीयते येन तदुपमानं, कर्मण उपमानं कर्मोपमानं, तस्मात् ॥

ननु । अनादरार्थात् कर्मोपमानात् काकादेरुत्तरे चतुर्थी न स्यात् । नावैष्णवमिति, तृणं यथा मन्ये तथा त्वां न मन्ये इत्यर्थः । अत्र तृणशब्दस्यानादरार्थता कर्मोपमानता च ॥

मनोतेरिति । मनु—बोधने इत्यस्य तनादिकस्य प्रयोगे चतुर्थी न स्यात् । मन्यतेरिति निर्देशादिति शेषः । ननु सूत्रे कर्मोपमानादित्येवोक्तं, तर्हि कथमुदाहरणे तृणाय मन्ये इत्युच्यत, इति चेत्तत्राह—उपमानादिति । निकृष्टत्व एवेति उपमेयस्येति शेषः । स्यादिति चतुर्थीति शेषः । नञ्-प्रयुज्यते इति, नञ्प्रयोगं विना उपमानान्निकृष्टत्वं न स्पष्टं भवतीति । भाष्येति । भाष्यवार्तिकचन्द्राणां मतमिति विग्रहः । तेनेति, तेन हेतुनेत्यर्थः । तत्साम्य इति, तस्य उपमानस्य साम्ये । तृणायेति, तृणमिवेत्यर्थः । साधव इति, शुद्धा इत्यर्थः । प्रत्युदाहरन्ति चेति । उपमानान्निकृष्टत्व एव, तेन नेह इत्युक्त्वा प्रत्युदाहरन्ति सुवर्णमित्यादि । तृणमिति, तृणमिवेत्यर्थः । अतो न चतुर्थी । तृणायेति । रघुनन्दनोऽपि रक्षो राक्षसं तृणाय मत्वा बाणेन प्रधनात् युद्धात् निरास्थत् दूरीकृतवान् । इति तु भट्टिरिति, तस्मात् भट्टिप्रयोगे उपमानान्निकृष्टत्वं न व्यक्तम् ॥

मन्य । अप्राणिषु सत्सु अनादरे मन्यकर्मणि विषये उपमाने चतुर्थी स्यादिति । मन्येति, मन्यतेरेकदेशनिर्देशः । इत्येवेत्येवकारेण उपमाना-

मन्ये, यावत्तीर्णं न नाव्यमिति। मिश्रास्तु भाष्यादिवदेव कर्मोपमाना-च्चतुर्थीं विदधाति; ततोऽर्थान्तरं कार्यम्; यथा—तृणायेति तृणादतिनिकृष्टमित्यर्थः। दृषदमिति यथा दृषदन्तरं तथैवेत्यर्थः। तथा न काकं मन्ये, ततोऽप्यतिकदर्यत्वात्। नान्नं, ततोऽपि निगरीतु

न्निकृष्टत्व एव स्यादिति न तन्मतमिति सूचितम्। आपिशलिः पण्डित-विशेषः, तस्येदमापिशलम्। जयादित्यादयस्त्विति, आदिपदेन क्रमदी-श्वरादयोऽपि। उपमानादिति चेति, उपमानान्निकृष्टत्व इति नाद्रियन्त एवेत्येवकारः उपमानादिति च नाद्रियन्त इति च शब्दस्यार्थः। प्रत्युदा-हरन्ति चेति, अनादर इति किमित्युक्त्वा प्रत्युदाहरन्तीत्यर्थः। अश्मान-मिति, अश्मानं प्रस्तरविशेषं शिलेति प्रसिद्धम्। दृशदं प्रस्तरं मन्ये, उदूखलं काष्ठविशेषं काष्ठं मन्ये। यस्य माता न पश्यति, न द्रष्टुं प्रभवति, तम् अन्धायाः सुतं मन्ये इति। यदि तैरुपमानादित्यादृतं स्यात्, तदा तन्मतेऽत्रोपमानत्वेनोपमानान्निकृष्टत्वाभावात् अनादराभावाच्च व्यंगं विकलमेव प्रत्युदाहरणं स्यादिति। स्वरूपमाख्यानं खल्वेतदित्यनेन अनादराभावः सूचितः। जयादित्यादीनां प्रत्युदाहरणान्तरमाह—काकादिनिषेधः किमिति, न त्वा काकं मन्ये इत्यादिषु अनादरो विद्यत एव। नाव्यमिति, नाव उपयुक्तं नीरं यावत्। 'नाव्यं त्रिलिंगं नौतार्ये इत्यमरः'। यद्यप्येवं तथाप्यस्माभिर्भाष्यादिमतमेवालम्बनीयमिति पुन-स्तदेव द्रढयति—मिश्रास्त्विति। मिश्रा, वर्धमानमिश्राः। आदरे बहु-वचनम्। भाष्यादिवदेवेत्यनेन उपमानान्निकृष्ट एव स्यादिति मिश्र-मतमित्यायातम्। ननु तर्हि कथं भट्टौ तृणाय मत्वेति, अश्मानं दृशदं मन्य इत्यादिकं, न त्वा काकं मन्य इत्यादिकञ्च सिद्धतीति चेत्तत्राह—तत इति। ततो भाष्यादिवच्चतुर्थीविधानाद्धेतोः नञ् प्रयुज्यत इति यदुक्तं तन्न नियतं, किन्तु उपमानान्निकृष्टत्वस्य स्पष्टतार्थं तदुक्तमिति ज्ञेयम्। तृणायेत्यत्र उपमानान्निकृष्टत्वे चतुर्थीविधानात् चतुर्थ्यैव निकृष्टत्वं द्योत्यते, अत आह—तृणादपि निकृष्टमित्यर्थ इति। यथा-दृशदन्तरमिति, अत्रोपमानान्निकृष्टत्वं विवक्षितम्। किन्तु स्वरूपाख्या-नात् न अनादर इति न चतुर्थी। काष्ठमिति, यथा काष्ठान्तरं तथैवे-

सुशक्यत्वात्। न नावं, ततोऽपि बहुपुरुषसंगिनीत्वात्। न शुकं, शिक्षितकथनेऽप्यशक्तेः। न शृगालं मन्ये, ततोऽपि भीतत्वादिति। काकान्ननौशुकशृगाला एते तु 'प्राणि'संज्ञाः प्राचीनानाम्॥ ९८६॥

**९८७। अध्ववर्जिते गत्यर्थकर्मणि चतुर्थी वा चेष्टायाम्।**

व्रजं व्रजाय वा व्रजति कृष्णः। अत्र कृति षष्ठी च न स्यादित्येके—व्रजं गन्ता, व्रजाय गन्ता। षष्ठी चेति चन्द्रगोमी। षष्ठ्येवेति भागवृत्तिः—व्रजस्य गन्ता। अध्वशब्दोऽर्थपरः, स चाध्वान्तरापेक्षा-

---

त्यर्थः। अन्धायाः सुतमिति, यथा अन्यस्या अन्धायाः सुतं तथैवेत्यर्थः। दृशदं मन्य इत्यादौ कर्मोपमानत्वं व्यक्तमेवाभूत्, उपमानान्निकृष्टत्वन्तु सादृश्यप्रतिपाद्यतया सूक्ष्मरूपेणास्तीति ज्ञेयम्। न काकमिति, कमप्य-नादृत्य कोऽपि कथयति, ततोऽपि काकादपि, नान्नमिति न काकमितिवत्। ततोऽपि अन्नादपि। निगरितुमिति, निगरणं गलाधःकरणम्। सुशकत्वात् सुशक्यत्वात्। न नावमिति। कामपि स्त्रियं प्रति कोऽपि कथयति, ततोऽपि नावोऽपि। न शुकमिति। न काकमितिवत्, एवं न शृगालमिति च एते काकादयः॥ ९८६॥

९८७। अध्व। पादविहरणादिरूपा शरीरक्रियात्र चेष्टा, तस्यां गम्यमानायां अध्ववर्जिते गत्यर्थस्य कर्मणि चतुर्थी वा स्यात्। व्रजतीति व्रज—गतौ भ्वादिः। अध्वनः वर्जितमिति विग्रहः। अत्रेति, एके जयादित्यादयः। कर्मपक्षे षष्ठी न भवतीति तेषां मतम्। यद्यपि सामान्येन कृति षष्ठी न स्यादित्युक्तं, तथापि कर्तृकृतीति विशेषो ज्ञातव्यः।

अतो भावकृति व्रजस्य गमनमिति भवति, व्रजं गमनमिति प्रयोगस्तु कुत्रापि न दृश्यते, अतः कर्तृकृति न षष्ठीति क्रमदीश्वरः। षष्ठी चेति। चन्द्रगोमी पण्डितविशेषः। तन्मते व्रजं गन्ता, व्रजाय गन्ता, व्रजस्य गन्तेति। षष्ठ्येवेति भागवृत्तिरिति। तन्मते नित्यमेव षष्ठी भवतीत्यर्थः। कृति षष्ठी वेति भागवृत्तिरिति क्रमदीश्वरेणोक्तम्। ग्रामस्य गन्ता, ग्रामाय गन्ता, वनस्य गमनं, वनाय गमनमिति उदाहृतञ्च। ग्रन्थकारेण

रहितः। तद्वर्जिते इति किम्! अध्वानं गच्छति, पन्थानं वा, आक्रम्य यातीत्यर्थः ; इहैव प्रतिषेधः। इह तु स्यात्—उत्पथेन पथे गच्छति। चेष्टायां किम्? मनसा कृष्णं गच्छति। अर्थग्रहणं किम्? प्रेयसीं गच्छति हरिरुपभुङ्क्त इत्यर्थः।

अथ कृत्प्रयोगाः। ते च तत्र स्युर्यत्र क्रियान्तराकाङ्क्षाः क्रिया। आख्यातप्रयोगास्तु निराकाङ्क्षाः, अतः कर्तृत्वादिसाधनत्वे तुल्येऽप्युक्तम्—'क्रियाप्रधानमाख्यातं, साधनप्रधानं कृत्' इति॥ ९८७॥

---

षष्ठ्येवेति भागवृत्तिरिति उक्तम्। व्रजस्य गन्तेत्युदाहृतञ्च। तस्मादत्र एकतरस्य भ्रमो विवेचनीयः। वास्तवविचारेण ग्रन्थकारयोर्मध्ये एकस्यापि न भ्रमः, किन्तु क्रमदीश्वरग्रन्थस्य जलनिमग्नत्वेन लिपिकारैर्न बोद्धुं शक्यमिति। अत्र भाषावृत्तिरिति क्रमदीश्वरेणोक्तमित्येव शुद्धम्।

अध्वेति, अर्थपर इति। अध्वपर्यायग्राहक इत्यर्थः। स चेति। स च अध्वशब्दोऽध्वान्तरापेक्षारहित इति, गृह्यत इति शेषः। स चाध्वशब्दः अध्वान्तरापेक्षारहितश्चेत्तदा चतुर्थी न भवति, अपेक्षायान्तु भवत्येव। तद्वर्जिते अध्ववर्जिते। आक्रम्येति, अध्वानं पन्थानञ्चेति शेषः। यातीति, व्रजादिकमिति शेषः। अतोऽत्राध्वनो न गम्यतेति। इहैव प्रतिशेध इति। अध्वान्तरापेक्षारहितत्वात्। इह तु स्यादिति। अध्वान्तरसापेक्षत्वात्। उत्पथेन कुत्सिताध्वना। पथे इति, पथिन्-शब्दात् चतुर्थी ङे। अत्र व्रजादिवत् पन्था एव गम्यः, अतोऽध्वान्तरापेक्षा अतश्चतुर्थीति। मनसेति। गच्छतीति, प्राप्नोतीत्यर्थः। प्रेयसीमिति, नात्र गमिर्गत्यर्थः। किन्तु धातूनामनेकार्थत्वात् उपभोगार्थः। गौण-गत्यर्थस्याग्रहणात् कुञ्जं प्रविशति, गोवर्धनशिखरमारोहतीत्यादौ च न चतुर्थीत्येके। अथेति। कृत्प्रयोगा इति कृदन्तप्रयोगा इत्यर्थः। कृतां प्रयोगा इति विग्रहः। ते च क्रियाया अन्तरं भिन्नं क्रियान्तरं, क्रियान्तरस्य आकांक्षा यासु ताः क्रियान्तराकांक्षाः, क्रिया यत्र क्रियान्तराकांक्षाः क्रिया भवन्ति, तत्रस्थले ते च प्रसिद्धाः कृत्प्रत्ययाः स्युरिति कृत्प्रयोगाः साकांक्षा

९८८। कर्तृकर्मणोः षष्ठी कृद्योगे।

अत्र कृत्सूत्रानि कानिचिदुद्देश्यानि। भावे क्तिः—कृष्णस्य कृतिः, अत्रास्तीत्यादिक्रियान्तरं गम्यम्। कर्तरि तृन्—लीलायाः कर्ता कृष्णः। व्यभिचरति च—"धार्यैरामोदमुत्तमम्" इति भट्टिः

---

ज्ञेयाः। आख्यातप्रयोगास्तु निराकांक्षा भवन्ति, स्वभावादिति शेषः। आकांक्षा प्रतीतिपर्यवसानविरहः। यद्धातोरुत्तरे कृत्प्रत्ययाः कर्तुं योग्यास्तद्धात्वर्थः यदि सवाक्यसमाप्तये धात्वन्तरार्थं मुख्यतयापेक्षते, तदा तद्धात्वर्थरूपा क्रिया क्रियान्तराकांक्षा ज्ञेया इति भावः। अतो हेतोः कर्तृत्वादिसाधनत्वे तुल्ये इति। आख्यातकृतोरिति शेषः। कर्तृत्वादीत्यत्र स्वरूपमात्रे त्व-प्रत्ययः। ततश्च कर्तृत्वादिरूपं कर्त्रादिरूपमिति। कर्तृत्वादिरूपं साधनं करणं ययोस्तयोर्भावस्तत्त्वम्। आख्यातकृतोः कर्तृत्वादिसाधनत्वे तुलेऽ विद्यमानत्वेऽपि क्रियाप्रधानमाख्यातं साधनप्रधानं कृदिति प्राचिनैरुक्तमित्यर्थः। क्रियाप्रधानं निराकांक्षा यत्र तत्, अत्र निराकांक्षत्वेन प्रधानम्। साधनं करणं प्रधानं विशेष्यं यत्र तत्, अत्र विशेष्यत्वेन प्रधानम्। तस्मात् कृतिक्रिया न प्रधानमित्यर्थः। कृच्छब्दस्य ब्रह्मत्वे युक्तिश्चिन्त्या। धातुं सर्वमित्यादौ तद्धर्मा कृत्प्रशस्यत इति ग्रन्थकारवचने पुंस्त्वमेव सिद्धतीति। किन्तु स्थानद्वयोक्तस्य प्रधानशब्दस्य विशेष्यत्वे व्याख्याने सति ब्रह्मवचनं सौष्ठवं भवतीति ज्ञेयम्॥

९८८। कर्तृ। कर्ता च कर्म च कर्तृकर्मणी, तयोः कृद्योगे षष्ठी स्यात्। अत्रेति, उद्देश्यानि मृग्याणि, अतस्तानि लेख्यानीति भावः। तत्र कानिचित् सूत्राणि कृत्सूत्रानुसारीणि कानिचित् कृत्सूत्ररूपीणीति ज्ञेयम्। सोपाधित्वान्न नारोहति परः पूर्वमिति व्यभिचरति। भावे क्तिरिति, भावे क्ति स्यात्, क इत्। सूत्रमिदं कृत्सूत्रानुसारि, क्तिर्लक्ष्मग्रां भाव इति कृत्सूत्रम्। कृष्णस्येति, कर्तरि षष्ठी। अत्रेति, गम्यं ज्ञेयम्। एवं सर्वत्रैव बोद्धव्यम्। कर्तरीति, कर्तरि वाच्ये तृन् स्यात्, न् इत्। एतदपि कृत्सूत्रानुसारि। णकतृनाविति कृत्सूत्रं, लीलाया इति, कर्मणि षष्ठी। व्यभिचरति चेति, शिष्टप्रयोगदर्शनात् षष्ठीति शेषः। धार्यै-

(६।८०), आमोदं ददद्भिरित्यर्थः। "तदर्हम्" इति पाणिनिसूत्रे (५।१।११७) च, तदर्हतीत्यर्थः। द्विकमकत्वे—दोग्धा दुग्धस्य गवाम्। प्रधान एवेति केचित्। दुहादेस्तु गौण इति युक्तम्। कृद्‌योगे इति किम् ? तद्धितयोगे तु—कृतपूर्वी सृष्टिं कृष्णः, कृतं पूर्वमनेनेत्यर्थे तद्धित-इनिः। अत्र कृतमिति भावे क्तः, सृष्टेः कर्मत्वं, कृतिक्रियासाध्यत्वात्; कर्तुरीप्सिततमत्वादित्यन्ये। कर्मणोऽनुक्तञ्च, कर्तरि तद्धितस्य विहितत्वात्, कृतश्च भावे विहितत्वात्। प्रत्ययार्थ-गुणीभूतायाः क्रियायाः सम्बन्धस्य तु सर्वत्रार्थिकत्वादेव। तदेवं

---

रिति, डुधाञ्—धारणपोषणयोः। दधाति-ददातिभ्यां णश्चेत्यनेन कर्तरि णः, युक्। पाणिनिसूत्रे चेति, षष्ठी व्यभिचरतीति शेषः। अर्हमिति, अर्ह—पूजायाम्। पचादित्वात् कर्तर्यत्। द्विकर्मकत्व इति द्विकर्मकत्वं धातोरेव भवति। किन्तु तदुपचारादत्र कृत्प्रत्ययान्तस्य बोद्धव्यम्। ततश्च कृत्प्रत्ययान्तस्य द्विकर्मकत्वे सतीत्यर्थः। अथवा द्विकर्मकत्व इति धातोरिति शेषः। द्विकर्मकधातोः प्रयोग इत्यर्थः। दोग्धेति, दुह—प्रपूरणे तृन्, गोविन्दः। दादेस्तु धातोर्घः इति हस्य घः, 'हरिघोषात्त-थो-र्धो धा-वर्जमि'त्यनेन तस्य धः, घस्य गः। तस्मादस्माकं मते कर्मद्वये एव षष्ठीति। प्रधान एवेति केचिदिति, तन्मते दोग्धा दुग्धस्य गा इति भवति। दुहादेस्त्विति, दुहादेः प्रयोगे गौणे कर्मणि यत् षष्ठी भवति, इति युक्तम् उचितमित्यर्थः। तस्मात् प्रधान एवेति यदुक्तम्, तदनुचितमिति भावः। कृतमिति। इत्यर्थे तद्धित-इनिरिति। सपूर्वपदाच्चेत्यनेनेति शेषः। भाव इति, प्रथमं कर्मणोऽविवक्षितत्वादिति शेषः। सृष्टेरिति, पश्चात् प्रयुक्तायाः सृष्टेरित्यर्थः। कर्तुरीप्सिततमत्वादित्यन्य इत्यनेन सृष्टेरीप्सिततमरूपकर्मत्वं सूचितम्। कर्मण इति। सृष्टिरूपस्य कर्मणः कर्तरि तद्धितात् कृतो भावे विहितत्वाच्चानुक्तत्वञ्च। कर्तरि तद्धितादिति, कर्तरि विहितेन तद्धितेन कर्तुरेवोक्तत्वं भवति, नतु कर्मणः इत्यभिप्रायः। तद्धितत्वादिति पाठे तु स्वरूपमात्रे त्व-प्रत्ययः। ननु सृष्टेः कर्मत्वं कृतिक्रियायाः साध्यत्वादित्यनेन कृतिक्रियायाः सृष्ट्या सह

सति कृत्प्रत्ययः क्तः गुणीभाव्यः, कर्तरि विहितस्तद्धितेनिप्रत्यय एव मुख्यस्तस्माल्लीलायाः कर्ता कृष्णः इतिवदस्य कर्मणो न योग इति विवेचनीयम् ॥ ९८८ ॥

९८९ । क्रियाविषेणस्य न षष्ठी ।

कर्तरि णकः । साधु पाचकः ॥ ९८९ ॥

९९० । कर्तृकर्मणोः प्राप्तौ कर्तरि षष्ठी वा ।

भावे घण् । गोविन्देन गवां दोहः, गोविन्दस्य वा ॥ ९९० ॥

---

सम्बन्धस्य सूचितत्वादत्र कृद्योगोऽपि घटत इति कथं नोच्यते, इति चेत्तत्राह—प्रत्ययार्थेति । प्रत्ययस्य इनेः अर्थे वाच्ये कर्तरि गुणीभूतायाः क्रियायाः कृत्यादिरूपायाः सम्बन्धस्य योगस्य, कर्मणा सहेति शेषः । सर्वत्रार्थिकत्वादेव न कृद्योग इति शेषः । सर्वत्रेति, कृतपूर्वी सृष्टिमित्यत्र भुक्तपूर्वी दधीनि, पीतपूर्वी दुग्धमित्यादौ चेत्यर्थः । आर्थिकत्वादिति, अर्थलब्धत्वादित्यर्थः । सम्बन्धस्यार्थिकत्वमेवास्ति, न तु शाब्दिकत्वमतो न कृद्योग इत्यभिप्रायः । गुणीभाव्येति, अगुणं गुणं भावयित्वेत्यर्थः । गुणशब्दोऽत्र गौणार्थः । लीलाया इति । लीलायाः कर्ता कृष्ण इत्यत्र यथा लीलायाः पश्चाद्योगः, तथात्रापि सृष्टिमित्यस्य पश्चाद्योग इति । अथोवा लीलायाः कर्ता कृष्ण इतिवदस्य इनिप्रत्ययान्तस्य सम्बन्धिनः सृष्टिरूपस्य कर्मणः कृता सहायोग इत्यपि ॥ ९८८ ॥

९८९ । क्रिया । क्रियाविशेषणस्य षष्ठी न स्यात् । क्रिया-विशेषणस्य कर्मत्वमुक्तम् अतः षष्ठी स्यात्, तन्निषेधार्थं वचनम् ।

कर्तरीति । कर्तरि वाच्ये णकः स्यात्, ण इत् । सूत्रमिदं कृत्सूत्रा-नुसारि । कृत्सूत्रन्तूक्तमेव । पाचक इति । णके कृते वृष्णीन्द्रः ॥९८९॥

९९० । कर्तृ । कर्तृकर्मणोः षष्ठ्याः प्राप्तौ कर्तरि षष्ठी वा स्यात्, कर्मणि तु नित्यमेव । भाव इति, भावे वाच्ये घण् स्यात्, घणावितौ । सूत्रमिदं कृत्सूत्ररूपि, घणिति कृत्सूत्रम् । दोह इति घणि कृते गोविन्दः ॥ ९९० ॥

९९१। लक्ष्मो-णकङापोः प्रयोगे तु कर्तरि षष्ठ्येव।

लक्ष्मयां भावे णकङापौ। रुद्रस्य जगतो भेदिका विभित्सा वा॥ ९९१॥

९९२। अच्युताभ-विष्णुनिष्ठाधोक्षजाभ-खलर्थाव्ययोरामान्ततृणां योगे न षष्ठी।

वर्तमानादौ शतृशानावच्युताभसंज्ञौ। तत्र शतृ परपदं, शान आत्मपदम्; यथा—कृष्णः क्रीड़ां कुर्वन् हसति, एवं कुर्वाणः॥९९२

---

९९१। लक्ष्मी। लक्ष्मयां विहितयोर्णकङापोः प्रयोगेतु कर्तरि षष्ठ्येव स्यात्। पूर्वसूत्रेण विकल्पेन प्राप्तायां नित्यतार्थं वचनम्।

लक्ष्यग्रामिति, भावे वाच्ये लक्ष्मयां णकङापौ भवतः। इदं सूत्रं कृत्सूत्रानुसारि। णको लक्ष्मयां भावे इति णकसूत्रम्। 'विष्णुनिष्ठासेट्कगुरुमद्विष्णुजनान्तात् प्रत्ययाच्च भावे लक्ष्मयां ङाप्' इति ङाप्सूत्रम्। रुद्रस्येति, कर्तरि षष्ठी, जगत इति, कर्मणि षष्ठी॥

भेदिकेति। भिदिर—विदारणे, णकः,गोविन्दः, ङाप्, 'प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपी'तीरामो वाच्यः, भेदनमित्यर्थः। विभित्सेति, सनन्ताद्विभित्स धातोर्ङाप्, ङ् इत्, भेदनेच्छेत्यर्थः॥ ९९१॥

९९२। अच्यु। अच्युताभश्च विष्णुनिष्ठा च अधोक्षजाभश्च खलर्थाश्च अव्ययञ्च उरामान्ताश्च तृन् च एतेषां कृत्प्रत्ययानां प्रयोगे षष्ठी न स्यात्। वर्तमानादाविति। वर्तमानादौ काले शतृशानौ भवतः, तौ अच्युताभसंज्ञौ। एतत्सूत्रं प्रायः कृत्सूत्ररूप्येव। कुर्वन्निति, डुकृङ्—करणे शतृ, ऋशावितौ, तनादेः शपोऽपवाद उरिति उः,गोविन्दः, करोत्यरामस्य उर्निर्गुणे इति अरामस्य उः, उद्वयं वः, ततः कुर्वच्छब्दात् सुँः, चतुर्भुजानुबन्धत्वान्नुम्, सोर्हरः, सत्सङ्गान्तस्य हरः। कुर्वाण इति, शानः श इत्। अत्र सूत्रे केनाप्येतदुदाह्रियते यथा—सृष्ट्वा दधि शारुकमेतदर्चकानुन्नीतवन्तं यतिभिः सुदर्शनम्। ज्ञातं हरिं जिष्णुरघानि संस्तुवन् मुदं दधानोऽर्थितमीयिवान्न कः॥ ९९२॥

## ९९३। द्विषः शतुर्वा।

कंसस्य द्विषन् कंसं वा। आख्यातस्य मुख्यत्वात्तेनानुक्ते कर्तरि तृतीयैव। 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन एतदेवोक्तं, यदि बाधकान्तरं न स्यादिति। कृष्णेन क्रीड़ां कुर्वता हस्यते। एवं कृतानुक्तेप्याख्यातेनोक्ते कर्मणि प्रथमा ; यथा ताम्बूलं भोजयता कृष्णेन गोपी वाच्यते। तथा खादिकर्मत्वनिषेधेऽपि कर्मत्वमेव—ताम्बूलं खादयतेत्यादि। कथं पश्य दृश्यते कृष्णः ? पश्येत्यस्य वाक्यार्थेनैवान्वय इति ॥ ९९३ ॥

---

९९३। द्विषः। द्विषधातोः शतुः प्रयोगे कर्मणि षष्ठी वा स्यात्। द्विषन्निति। द्विष—अप्रीतौ पूर्ववन्नुमादि। ननु कृष्णेन क्रीड़ां कुर्वता हस्यत इत्यत्र शतुः कर्तरि विहितत्वात् कथं कर्तुरनुक्तत्वमिति चेत्तत्राह—आख्यातस्येति। तेन आख्यातेन। एतदेव कथमिति चेत्तत्राह—गौण-मुख्ययोरिति। प्रसङ्गान्न्यायो निरूप्यते। विषयः, शंसयः, पूर्वपक्षः, सिद्धान्तः, सङ्गतिरिति पञ्च न्यायाङ्गानि, न्यायोऽधिकरणं विषयः विचारयोग्यवाक्यं, शंसयः कोटिद्वयं शंसन् निर्णेतुमशक्यं ज्ञानं, पूर्वपक्षः प्रकृतार्थविरोधी तर्कोपन्यासः। सिद्धान्तः तत्त्वावगतिः। सङ्गतिः साक्षात्परम्परया वा विषयस्य तत्त्वावगतिसङ्गमनम्। एतदेवोक्तं यदीती-त्यनेन। कृष्णेन क्रीड़ां कुर्वता हस्यते इत्यत्र कर्तरि विहितेन शतृप्रत्यये-नोक्तः, कृष्णः कर्ता, हस्यते इत्यस्य भावे विहितस्य च आख्यातस्य कर्ता, तेनानुक्तश्च, अतस्तृतीयैव। अत्र तृतीयाया एव बाधकान्तरत्वम्। यथेति, कर्तरि—ताम्बूलं भोजयन् कृष्णो गोपीं वाचयतीति। अत्र क्रियाद्वय एव गोपीमिति भवति, कर्मणि तु—आख्याते विहिते कृतानुक्ताया अपि गोप्या उक्तत्वमतस्तत्र प्रथमैव। तथेति। खादीति, खादेः प्रयोगे अणिकर्तुः कर्मत्वनिषेधेऽपीत्यर्थः। कर्मत्वमेवेति, आख्यातस्य मुख्यत्वा-द्वाचयतेर्योगे अणिकर्तुः कर्मत्वं स्यादिति शेषः। ताम्बूलमिति, कर्तरि—ताम्बूलं खादयन् कृष्णो गोपीं वाचयतीति, अत्र खादयन्नित्यस्य योगे गोपीमिति न भवति, किन्तु गोप्येति। तथा कर्मणि आख्याते विहिते

६६४। अतो मुगाने।

कृष्णेन क्रीड़ा क्रियमाणा विराजते। कृष्णेन क्रियमाणां क्रीड़ां पश्येति पूर्ववद्द्वितीयैव ॥ ६६४ ॥

६६५। अतीतादौ क्तक्तवतु विष्णुनिष्ठासंज्ञौ, क्तः प्रायो भावकर्मणोः, क्तवतुः कर्तर्येव।

कर्मणि—कृष्णेन क्रीड़ा कृता। कर्तरि—कृष्णः क्रीड़ां कृतवान्। विष्णुनिष्ठा विष्णुकृत्यादयश्चाख्यातवन्मुख्याः, कृदन्तरेष्वाकांक्षापुरकत्वात्। दृश्यमानेन कृष्णेन गोवर्धनो धृतः, पश्यन्तं कृष्णं दृष्टवान् ॥ ६६५ ॥

---

आख्यातस्य मुख्यत्वात् कर्मत्वमेव। अतः ताम्बूलं खादयता कृष्णेन गोपी वाच्यते इत्येव प्रयुज्यते। कथमिति। कथं पदेन पश्येत्यस्य कर्मणोऽनुपस्थितिर्भवतीत्ययमत्र विरोधः। सिद्धान्तमाह—पश्येत्यस्येति। वाक्यार्थेनैवेति, कृष्णकर्मकदर्शनरूपेण वाक्यार्थेनैवेत्यर्थः। एतेन अनेन कृष्णो दृश्यते इति पश्येत्ययमन्वयः सूचितः ॥ ६६३ ॥

६६४। अत इति। आने परे अत उत्तरे मुग्भवति। उकावितौ। सूत्रमिदं कृत्सूत्ररूपि। क्रियमाणेति, कर्मणि शानः। पूर्ववदिति, आख्यातस्य मुख्यत्वात् यथा कृष्णेन क्रीड़ामित्यादौ तृतीया, तथात्र द्वितीयैव ॥ ६६४ ॥

६६५। अतीतादाविति। अतीतादौ काले क्त-क्तवतू भवतः। तौ विष्णुनिष्टासंज्ञौ। अतीतादौ भूतादौ। आदिपदेन वर्तमानेऽपि एतत् सूत्रं कृत्सूत्रानुसारि। क्तो भूते भावकर्मणोरिति क्तसूत्रम्। क्तवतुर्भूत इति क्तवतुसूत्रम्। क्तः प्राय इति। प्रायग्रहणात् कर्तर्यपि ॥

कृष्णेन इति। अत्र कर्तरि न षष्ठी। कृष्ण इति, अत्र कर्मणि न षष्ठी। विष्णुनिष्ठेति, क्त-क्तवतू विष्णुनिष्ठासंज्ञौ। विध्याद्यर्थ इत्यादिना वक्षचमाणा ये कृत्या विष्णुकृत्यास्तदादयश्च। मुख्यत्वे हेतुमाह—कृदन्तरेष्विति। कृदन्तरेषु अन्यकृत्सु, दृश्यमानेनेति, नन्दादिभिरिति

९९६। परोक्षातीते क्वसु-कि-काना अधोक्षजाभ-संज्ञाः, अत्र क्वसु-कि परपदे, कान आत्मपदम्।

यथा—कृष्णः क्रीड़ां चकृवान्, चक्रिः, चक्राणः; कृष्णेन क्रीड़ा चक्राणा॥ ९९६॥

९९७। अकृच्छ्र-कृच्छ्रार्थे खल्, तदर्थाश्चान्ये खलर्थाः, ते च भावकर्मणोः।

कृष्णेन सा क्रीड़ा सुकरा, अकृच्छ्रेन क्रियते इत्यर्थः। अन्येन दुष्करा, कृच्छ्रेण क्रियते इत्यर्थः। कृष्णेनेषद्दानममृतम् अकृच्छ्रेण दीयते इत्यर्थः॥ ९९७॥

---

शेषः। धृत इति, धृञ्—धारणे क्तः। पश्यन्तमिति, वृन्दावन-मथुरा-सुवलादिकमिति शेषः। दृष्टवानिति, सुवलादिरिति शेषः। दृष्टवानिति, दृशिर—प्रेक्षणे क्तवतुः, शस्य षस्तरामस्य टः॥ ९९५॥

९९६। परोक्षातीत इति। परोक्षातीतकाले धातोः क्वसु-कि-काना भवन्ति, ते अधोक्षजाभसंज्ञाः, उकावितौ। अधोक्षजाभत्वात् द्विर्वचनादि। इदं सूत्रं कृत्सूत्ररूपि। कृष्ण इति, अत्र कर्मणि न षष्ठी चक्राणेति, कर्मणि कानः॥ ९९६॥

९९७। अकृच्छ्रेति। केच्छ्रं कष्टं, अकृच्छ्रार्थे कृच्छ्रार्थे च खल् भवति, खलावितौ, अरामशेषः। तदर्थाश्चेति। अन्ये अकृच्छ्रार्थाः कृच्छ्रार्थाश्च खलर्थाः। चकारेण खलोऽपि खलर्थत्वं प्रतिपादितं, तस्मात् खलः खलर्थानाञ्च योगे षष्ठी न स्यादिति। ते चेति। ते च खलर्थाः। एतत् सूत्रं कृत्सूत्रानुसारि। प्रादिव्यवहितेऽपि कृच्छ्रार्थ-दुरि खल् भाव-कर्मणोरिति, अकृच्छ्रार्थ ईषति सौ च इति, आरामादनः खलर्थ इति च कृत्सूत्रम्। कृष्णेनेति। अत्र कर्तरि न षष्ठी। सेति, असुरमारणादि-केत्यर्थः। अन्येनेति, अवतारान्तरेणेत्यर्थः। अमृतं मोक्षः। 'मुक्तिः कैवल्यनिर्वाणं श्रेयो निःश्रेयसामृतम् इत्यमरः'॥ ९९७॥

९९८। क्त्वा मान्ताश्च कृदव्ययम्।

९९९। एककर्तृकयोः क्रिययोः पूर्वकालस्थधातोः क्त्वा।

१०००। क्रियार्थत्वे तुमुः।

कृष्णः क्रीड़ां कृत्वा व्रजमाजगाम। कृष्णः क्रीड़ां कर्तुं वनं जगाम। अनयोः कर्मणः प्रत्ययान्तरेणोक्तत्वञ्च—कृष्णेन क्रीड़ा कृत्वा समाप्यते, कृष्णेन क्रीड़ा कर्तुमारभ्यते ॥ १००० ॥

१००१। क्वचित् कृत्तुल्यार्थेनाव्ययेन च।

यथा—"विषवृक्षोऽपि संवर्ध्या स्वयं छेत्तुमसाम्प्रतम्" (कुमारसम्भवम् २।५५), अयोग्यमित्यर्थः ॥ १००१ ॥

---

९९८। अव्ययलक्षणमाह क्त्विति। क्त्वा कृत्-मान्ताश्च कृत् अव्ययम्। एतदपि कृत्प्रकरणोक्तमेव ॥ ९९८ ॥

९९९। एककर्तृकयोरिति। एककर्तृकयोः क्रिययोः प्रयोगे अथवा एककर्तृकयोः क्रिययोः सत्योः पूर्वकालस्थधातोरुत्तरे क्त्वा भवति। क इत्। एतत्सूत्रं कृत्सूत्ररूपि ॥ ९९९ ॥

१०००। क्रियार्थत्व इति। क्रिया धात्वर्थः, क्रियार्थत्वे धात्वर्थार्थत्वे। यस्मात् धातोस्तुमुर्विधेयस्तस्यैव धातोरर्थो यदि प्रयोजनं स्यात्तदा तुमुर्भवति, उराम इत्। एतत्सूत्रं कृत्सूत्रानुसारि, तुमु-णकौ तत्क्रियार्थत्वे इति कृत्सूत्रम्।

कृष्ण इति, अत्र कर्मणि न षष्ठी। क्रीड़ां कृत्वेति, वनादिति शेषः। जगामेति, व्रजादिति शेषः। अनयोरिति, अनयोः क्त्वातुम्बोः। प्रत्ययान्तरेण आख्यातादिना। उक्तत्वञ्चेति, भवतीति शेषः ॥ १००० ॥

१००१। क्वचिदिति, कृतः कृदन्तविशेषस्य तुल्योऽर्थो यस्य, तथाभूतेन अव्ययेन च क्वचिदुक्तत्वं स्यात्। क्वचिदिति शिष्टप्रयोगदर्शनादिति भावः। विषवृक्षोऽपीति। अत्रासाम्प्रतमित्यनेनाव्ययेन विषवृक्षस्य

१००२। उरामान्ताः कर्तरि शीलार्थे प्रायः।

कृष्णः क्रीड़ां कारुः, करिष्णुरित्यादि ॥ १००२ ॥

१००३। शीलार्थे तृन् कर्तरि।

कृष्णः क्रीड़ां कर्ता। अच्युताभादियोगे कारकषष्ठ्या एव निषेधः। सम्बन्धविवक्षायान्तु षष्ठ्येव—क्रीड़ायाः कुर्वन्नित्यादि। किमेषामस्ति दुष्करमिति ॥ १००३ ॥

---

उक्तत्वम्। कृत्तुल्यार्थतां स्पष्टयति, अयोग्य इत्यर्थ इति। अत्रतु ग्रन्थान्तरे इत्यपि पाठोऽस्ति। कृष्णाय धूपो नम इत्यादौ अव्ययमात्रेण च नमः-शब्देन दानमात्रमुच्यते, कृष्णस्य धूपदानमित्यर्थः। कृत्तुल्यार्थताऽ-भावरूपत्वात्। अतोऽन्तस्थितेन तदर्थेनोक्तत्वं, तेन कृष्णं प्रति धूपो देय इति निर्गलितार्थः ॥ १००१ ॥

१००२। उरामान्ता इति। कर्तरि वाच्ये शीलार्थे प्रायः उरा-मान्ताः, सिद्ध्यन्तीति शेषः। नेदं सूत्रं, किन्तु कृत्सूत्रानुसारेणोक्तमेतत्। सूत्रलिखनमुचितमेव, किन्तु उरामान्तानां प्राचुर्यात् सूत्राणि न लिखि-तानीति ज्ञेयम्। कृष्ण इति, अत्र कर्मणि न षष्ठी ॥

कारुरिति। उणादयो बहुलमित्यनेन कर्तरि उण्, ण् इत्, वृष्णीन्द्रः। प्रायः-ग्रहणादस्य शीलार्थत्वाभावेऽपि न विरोधः। किन्तु क्रीड़ां कारुरिति, यदुदाहृतं तदसङ्गतमिव प्रतिभाति, कारुशब्दस्य शिल्पिवाचित्वात्। 'कारुः शिल्पीत्यमरः'। 'तक्षा च तन्त्रवायश्च नापितो रजकस्तथा। पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः' इति शास्त्रान्तरम्। अथवा कारुशब्दोऽत्र न शिल्पिनि वाचकः, किन्तु कर्तरि वाचक इति। करिष्णु-रिति, शीलार्थे बाहुल्यादिष्णुः। कृत्सूत्रे केवलस्य कृञ् धातोरिष्णुविधाना-दर्शनात्। कृष्णमलङ्करिष्णुरिति वा पाठः। अलंकृञ्-निराकृञ-प्रजन इत्यादि कृत्सुत्रम्। इत्यादीत्यादिपदेन दैत्यं जिष्णुर्नवनीतं गृध्नुः, सुखमिच्छुः शास्त्रं विन्दुरित्यादयो हरिभक्तिं चिकीर्षुरित्यादयश्च ज्ञेयाः ॥

१००३। शीलार्थ इति। कर्तरि वाच्ये शीलार्थे तृन् भवति।

१००४। उकस्यापि योगे कर्मणि न षष्ठी कर्मि विना।

१००५। उकण् कर्तरि।

दैत्यान् घातुको हरिः। कमेस्तु—गोपीनां कामुकः॥ १००४-१००५॥

१००६। आधमर्ण्य-तुमु-भविष्यदर्थणक-णिन्योर्योगे न षष्ठी।

आधमर्ण्ये—शतं दायकः, शतं दायी, शतस्य ऋणस्य प्रतिददातेत्यर्थः। तुम्बर्थे—हरिं सेवको व्रजति। भविष्यदर्थे—व्रजं गामी,

---

न् इत्। एतत्सूत्रं प्रायः कृत्सूत्ररूप्येव। तृन् इति कृत्सूत्रम्। कृत्सूत्रे शीलार्थ इति, कर्तरि इति च अधिकारलब्धम्। कृष्ण इति, अत्र कर्मणि न षष्ठी। ननु अच्युताभादियोगे षष्ठी निषिद्धा, तर्हि कथं क्रीड़ायाः कुर्वन्नित्यादि भवतीति चेत्तत्राह—अच्युताभादियोगे इति। तस्मान्नेयं कारकषष्ठी, किन्तु सम्बन्धषष्ठीति॥

किमेषामिति। इति चेति, सम्बन्धषष्ठीसिद्धमिति शेषः। दुष्कर-शब्दः खलन्तः॥ १००३॥

१००४। उक। उकस्यापि योगे कर्मणि षष्ठी न स्यात्। स च निषेधः कर्मि विना वर्जयित्वा भवति॥ १००४॥

१००५। उकण् कर्तरीति। कर्तरि वाच्ये उकण् स्यात्, ण् इत्। एतत्सूत्रं कृत्सूत्रानुसारि।

लष-हन-पत-पद-स्था-भू-वृष-कम-गम-शॄभ्यः उकण् इति कृत्सूत्रम्। दैत्यानिति, कर्मणि न षष्ठी। घातुक इति, उकणि कृते हनो हस्य घो निणणयोरिति हस्य घः। हन्तेस्तो नृसिंहे इति नस्य तः, वृष्णीन्द्रः। कामुक इति, कमु—कान्तौ उकण्, वृष्णीन्द्रः॥ १००५॥

१०६। आधः। आधमर्ण्यश्च तुमुश्च भविष्यच्च, अर्थश्च अर्थश्च अर्थश्च अर्थाः। आधमर्ण्य-तुमु-भविष्यतश्च ते अर्थाश्चेति, ते आधमर्ण्य-तुमु-भविष्यदर्थाः। तेषु विहितौ णकणिनी आधमर्ण्य-तुमुभविष्यदर्थ-

व्रजं गमी। व्यभिचरति च—पुत्रपौत्राणां दर्शको विष्णुमित्रो वर्षशतस्य पूरको जीवति ॥ १००६ ॥

१००७। वर्तमाने भावे च क्तस्य योगे कर्तरि षष्ठी वा।

वैष्णावानां ज्ञातोऽयं वैष्णवैर्वा। तृतीया तु न साधुरिति भागवृत्तिः ॥ २००७ ॥

१००८। शीलितादौ षष्ठी नेष्यते।

---

णकणिनी, तयोः। अथवा तुमुश्च भविष्यच्च तयोरर्थौ, तयोर्योगे। अधमर्णः खादकः। तस्य भाव आधमर्ण्यं तस्मिन्, तुमु-भविष्यदर्थे च विहितयोर्णकणिन्योर्योगे षष्ठी न स्यात्। यावत् सम्भवस्तावद्विधिरिति न्यायेन समुदायप्रत्येकन्यायाभ्याञ्च आधमर्ण्ये विहितयोर्णकणिन्योर्योगे तुम्बर्थे विहितस्य णकस्य योगे, भविष्यदर्थे विहितस्य णिनेर्योगे च न षष्ठी भवतीत्यर्थः। दायक इति, डुदाञ्—दाने। आधमर्ण्ये णकविधानस्य कृत्प्रकरणे विशेषलक्षणं न दृश्यते, अतः णक-तृनावित्यनेनैव णकः कर्तव्यः, युक्। दायीति, दाधातोर्णिनि-विधातस्य विशेषसूत्रं दूरे वर्ततां, सामान्यसुत्रमेव न दृश्यते, अतो बाहुल्यादेव आधमर्ण्ये णिनिर्विधेयः। प्रतिदाता—परिशोधकर्ता। सेवक इति, सेवृ—सेवने, तुमुणकौ तत्क्रियार्थत्व इति णकः, सेवितुमित्यर्थः। गामि-गमीति। 'गमिगम्यादयस्तु भविष्यति च साधवः' इति कृत्सूत्रम्। आधमर्ण्यादिकं सूत्रमेव लिखितम्, अतोऽकृत्सूत्रोल्लेखो न कृत इति ज्ञेयम्। व्यभिचरति च इति, निषेध इति शेषः। दर्शकेति, तुम्बर्थे णकः, पुत्र-पौत्रान् द्रष्टुमित्यर्थः। वर्षशतस्य पूरक इति, वर्षशतं पुरयितुञ्चेत्यर्थः ॥ १००६ ॥

१००७। वर्त। वर्तमानकाले भावे च विहितस्य क्तस्य योगे कर्तरि षष्ठी वा स्यात्। वैष्णवानामिति, वैष्णवैरयं ज्ञायत इत्यर्थः। ज्ञात इति, ज्ञा-अवबोधने। 'ञिरामेतो बुद्धीच्छापूजार्थेभ्यश्च क्तो वर्तमाने च' इति क्तः। तृतीयात्विति, तन्मते नित्यमेव षष्ठी ॥ १००७ ॥

कृष्णेन शीलितः, रक्षितः क्षान्तः। भावे—वैष्णवानां ज्ञातः, वैष्णवैर्वा ॥ १००८ ॥

१००९। अधिकरणवाचिक्तस्य योगे कर्तरि कर्मणि च षष्ठी।

अत्राधिकरणमेवोक्तम्। कृष्णस्य वृन्दावनमासितम्, भुक्तं फलानाम्, आस्यते भुज्यते यत्रेति ॥ १००९ ॥

१०१०। विष्णुकृत्यानां कर्तरि षष्ठी वा।

१०११। विध्याद्यर्थे तव्यानीय-यत्-क्यप्-ण्यत्-केलिमा विष्णुकृत्य-संज्ञाः, ते च प्रायो भावकर्मणोः।

मया सेवितव्यो हरिः, मम वा। एवं सेवनीयो हरिः ॥ १०१०-१०११ ॥

---

१००८। शीलि। व्यक्तार्थमेतत्। शीलितः, रक्षित इति, शील—समाधौ, रक्ष—पालने, वर्तमान-क्तसूत्रे चादनुक्तादपीति वर्तमाने क्तः, इट्। क्षान्त इति, क्षमुष्—सहने पूर्ववत् क्तः। हरिवेण्वन्तोद्धवस्य त्रिविक्रमः कौ कंसारिवैष्णवे च इत्यनेन त्रिविक्रमः, मस्य विष्णुचक्रं, विष्णुचक्रस्य हरिवेणुः। भाव इति, उदाह्रियते इति शेषः। ज्ञातमिति, क्तो भूते भावकर्मणोरिति क्तः ॥ १००८ ॥

१००९। अधि। व्यक्तार्थमेतत्। उक्तमिति, भवतीति शेषः। कृष्णस्य वृन्दावनमासितमिति, आस—उपवेशने। 'अकर्मक-गति-भोजनार्थभ्यः क्तोऽधिकरणे चे'त्यनेन क्तः, अधिकरणं वृन्दावनमुक्तं, कृष्णेन वृन्दावने आस्यत इत्यर्थः। अत्र कर्तरि षष्ठी। भुक्तं फलानामिति, भुज—पालनाभ्यवहारयोः क्तः, अत्रापि कृष्णस्येति योज्यम्। तत्र कर्तरि कर्मणि च षष्ठी। क्तस्याधिकरणवाचित्वं वाक्येन व्यञ्जयति, आस्यते भुज्यते यत्रेतीति, आस्यते यत्र तदासितमिति, भुज्यते यत्र तद्भुक्तमिति। भुज्यते इति प्रथमं कर्माविवक्षया भाव इति ज्ञेयम्, अन्यथा भुज्यन्त इति स्यात्। फलानामित्युपादानात् ॥ १००९ ॥

## १०१२। उभयप्राप्तौ विष्णुकृत्ये षष्ठी न।

कृष्णेन व्रजं गावो नेतव्याः ॥ १०१२ ॥

इति कृत्प्रयोगाः।

## १०१३। स्मृत्यर्थदयेशां कर्म वा।

पक्षे सम्बन्धविशेषे षष्ठ्येव; कृष्णं स्मरति, कृष्णस्य स्मरति। भक्तिं दयते कृष्णः, भक्तेर्वा, ददातीत्यर्थः। जगदीष्टे, जगतो वा; यथेष्टं विनियुङ्क्त इत्यर्थः। कर्मपक्षे एव कर्मप्रत्ययः—कृष्णः स्मर्यते; भावे तु षष्ठीमेव मन्यन्ते—कृष्णस्य स्मर्यते इत्यादि। अतएवोक्तं विस्तरेण—मातुः स्मर्यते इति सम्बन्धे षष्ठ्या भाव्यमेवेति। एवमुत्तरेष्वपि ॥ १०१३ ॥

---

१०१०। विष्णु। विष्णुकृत्यानां योगे कर्तरि षष्ठी वा स्यात्॥

१०११। विध्याद्यर्थे इति, विध्याद्यर्थे तव्यानीय-क्यप्-ण्यत्-यत्-केलिमा भवन्ति, ते विष्णुकृत्यसंज्ञाः। ते चेति, ते च तव्यादयः। एतत् सूत्रं प्रायः कृत्सूत्ररूप्येव। कृत्सूत्रे अनीयेत्यनन्तरं यदित्युक्तम्, अत्र तु ण्यदित्यनन्तरं यदिति लिखितमिति भेदः। किन्तु अत्रापि यदित्यस्य अनीय इत्यनन्तरमेव लिखनमुचितमिति ज्ञेयम्॥ १०११॥

१०१२। उभय। विष्णुकृत्ये सति उभयस्मिन् कर्तृकर्मणोः षष्ठ्याः प्राप्तौ षष्टी न स्यात्। कृष्णेनेति, अत्र कर्तरि व्रजमित्यस्मिन् गौण-कर्मणि च षष्ठी स्यात्तस्मिन्निषेधार्थं वचनम्॥ १०१२॥

१०१३। स्मृत्यर्थ। स्मृत्यर्थश्च, दयश्च, ईश् च, तेषां प्रयोगे कर्म वा स्यात्। पक्षे किं भवति इत्यपेक्षायामाह—पक्ष इति। द्वितीया-पक्षाबाधक-कर्माव्याप्तेः कारकसूत्रेण बाधस्य सम्बन्धसमानस्यानुवृत्तेः कर्मणि षष्ठ्येव, ननु द्वितीया। कर्मसाधिकानां स्मृत्यर्थादिक्रियाणाम् अकर्मकतापत्तेः। स्मरतीति, स्मृ—चिन्तायाम्। दय इति, दय—दान-गति-रक्षण-हिंसा-दानेषु भ्वादिरात्मपदी। ईष्ट इति, ईश्—ऐश्वर्ये अदादि-रात्मपदी, छशोराजेति शस्य षः, तरामस्य टः। ननु ईशधातुरकर्मकः,

१०१४। कृञः कर्म वा प्रतियत्ने।

गङ्गोदकमुपस्कुरुते, तस्य वा ॥ १०१४ ॥

१०१५। भावकर्तृकाणां रुजार्थानां कर्म वा ज्वरि-सन्तापिवर्जम्।

अवैष्णवं रुजतु रोगः, तस्य वा। अभावकर्तृकाणान्तु न—यमुना कूलं रुजति; श्लेष्मा हरिपरांमुखं रुजतु। रुजार्थानां किम्? 'एति जीवन्तमानन्दः' इति वृद्धाः। न चेह—अवैष्णवं ज्वरयतु ज्वरः, सन्तापयतु सन्तापः। अत्र भावपदं यद्धातुयोगे षष्ठी, तदर्थ-परम्; तेन पाको रुजति भिक्षुम् इत्यादौ षष्ठी न भवेत्, अनभि-धानात् ॥ १०१५ ॥

---

कथमस्य कर्म सम्भवत्विति चेत्तत्राह—यथेष्टमिति। एतेन धातूनामनेका-र्थतया अर्थान्तरवृत्तित्वात् सकर्मकत्वमिति दर्शितम्। कर्म पक्ष एवेति। तस्मात् षष्ठी पक्षे न कर्मप्रत्ययो भवति। किन्तु भावप्रत्यय इति स्वरूपाख्यानमेवैतदिति ज्ञेयम्। भावेतु षष्ठीमेव मन्यन्त इत्यस्मात् गम्यते मया ग्राममित्यादिवत्, भावे—स्मर्यते, कृष्णमित्यादि प्रयोगो न भवतीति। विस्तरेति, व्याकरणविशेषः। स्मर्यत इतीति, स्मर्यते इत्यत्रेत्यर्थः ॥ १०१३ ॥

१०१४। कृञ। सतो गुणान्तराधानं प्रतियत्नः, तस्मिन्नर्थे कृञः प्रयोगे कर्म वा स्यात्। पक्षे सम्बन्धषष्ठ्येव। उपस्कुरुत इति, उपपूर्वात् कृञः 'गन्धने तु भर्त्सने यत्नसेवयो'रित्यादिना आत्मपदम्। 'उपाद्भूषण-समवाय-प्रतियत्न-विकृतिकरण-वाक्याध्याहारेषु' इत्यनेन सुट्, सौगन्धादिना अभिरुचितं करोतीत्यर्थः। तस्य गङ्गोदकस्य ॥ १०१४ ॥

१०१५। भाव। पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपश्च समाधानं व्याख्यानं पञ्चलक्षणमित्यादिरीत्या। भावः कर्ता येषां ते भावकर्तृकास्तेषां, रुजाया अर्थ इव अर्थो येषां ते रुजार्थास्तेषाम्। ज्वरिसन्तापी वर्जयित्वा भावो धात्वर्थः स कर्ता येषां तथाभूतानां, रुजार्थानां रोगार्थानां धातूनां प्रयोगे कर्म वा स्यात्, पक्षे सम्बन्धषष्ठ्येव।

१०१६। नाथतेः कर्म वा कामनायाम्।

विष्णुभक्तिं नाथते, तस्या वा। आत्मपदं चात्र वक्ष्यते ( का० प्र० ११६७ )। याच्ञायान्तु—तां नाथति ॥ १०१६ ॥

रुजाशब्दस्य भावङावन्तत्वेन रोगवाचित्वम्। रुजतु इति, रुजो–भङ्गे तुदादिः, पीड़यत्वित्यर्थः। रोगशब्दो घणन्तः। तस्य अवैष्णवस्य हरौ पराक् अधोगतं मुखं यस्य स तं हरिपरांमुखं हरिविमुखम्। एतीति इण्–गतौ, आनन्दो जीवन्तं जनं एति, गच्छतीति। अत्र धातो-र्भावकर्तृत्वं विद्यत एव आनन्दस्य कर्तृत्वात्, किन्तु रुजार्थत्वं नास्तीति तस्माद्भावकर्तृकाणामित्यस्य स्वार्थकर्तृकाणामित्यर्थो न व्याख्येयः। तथा सति एतत् प्रत्युदाहरणं द्व्यङ्गविकलं स्यात्, गमनस्य कर्तृत्वाभावात्। अतो भावकर्तृत्वं धात्वर्थमात्रकर्तृकत्वमिति व्याख्येयम्।

अतएव पाको रुजतु भिक्षुमित्यादौ स्वसमानार्थभावकर्तुरभावत्वात् षष्ठीप्राप्त्यभावेऽपि षष्ठीप्राप्तिसम्भावनया स्वयं ग्रन्थकृतापि अनभि-धानादिति हेत्वन्तरमुपन्यस्तमिति। अवैष्णवं रुजतु आम इत्यत्रापि वक्ष्ये सम्बन्धषष्ठी भवितुमर्हति। आम इत्यस्य घणन्तस्य स्वभिन्नधात्वर्थ-कर्तृकत्वेऽपि, अम–रोगे इत्यनेन रोगार्थत्वादिति। अथवा एति इत्यस्य आनन्दयति इत्येव फलितार्थो भवति, अतएव एति जीवन्तमानन्द इत्यत्रापि स्वार्थकर्तृकत्वं घटयते, तस्मात् भावकर्तृकाणामित्यस्य स्वार्थ-कर्तृकाणामित्येवार्थो व्याख्येयः; तथा सति सर्वमनवद्यमिति। गोस्वामि-चरणानामपि अयमेवाभिप्रायः। अतएव रुजतु रोगः, ज्वरयतु ज्वरः, सन्तापयतु सन्तापः इत्येवोक्तम्। क्रमदीश्वरादीनामपि एतदेव मतम्। रुजार्थस्य स्वार्थकर्तृकत्व इति क्रमदीश्वरसूत्रम्। नचेहेति, ज्वरि-सन्तापिवर्जनादिति शेषः। ज्वरयत्विति, ज्वर–रोगे भ्वादिः। णिः प्रेरणादाविति णिः, घटादित्वाद्ध्रामनः, सन्तापयत्विति, पूर्ववण्णिः ॥१०१५

१०१६। नाथ। कामनायां विषये नाथतेः प्रयोगे कर्म वा स्यात्। नाथत इति, नाथृ–याच्ञोपतापैश्वर्याशीःषु भ्वादिः। तस्याः विष्णुभक्तेः। आत्मपदमिति। अत्र कामनायाम्। वक्ष्यत इति 'नाथेराशिषि तन्मतमि'-त्यनेन इति शेषः। तां विष्णुभक्तिम्। नाथतीति, याचते इत्यर्थः ॥१०१६

१०१७। पिष-निप्रहनोन्नाटुचज्जास्युत्क्राथ्यादीनां कर्म वा हिंसायाम्।

नट-जसु-क्रथश्चुरादौ ज्ञेयाः। तृणावर्तं पिपेष। निजघान, प्रजघान, निप्रजघान, प्रणिघान, उन्नाटयामासेत्यादि तृणावर्तस्य वा। हिंसायां किम् ? धानाः पिनष्टि॥ १०१७॥

१०१८। व्यवहृञ्-पण-दिवां कर्म वा व्यवहारे।

अत्र व्यवहृञ-पणोर्द्यूतग्लहे क्रयविक्रयलक्षणे च, दिवस्तु द्यूतग्लह एव मन्यन्ते। त्रयाणामपि द्यूतग्लह एवेति तस्यां भ्रमः। धान्यं

१०१७। पिष। पिषलृ-संचूर्णने, निप्रपूर्व-हन हिंसागत्योः, एतयोः उत्पूर्वाणां नट-जसु-क्रथां, आदिग्रहणादन्येषाञ्च प्रयोगे हिंसायां गम्यमानायां कर्म वा स्यात्। नट-जस्विति, एते चुरादौ ज्ञेयाः। अतो नट-अवस्यन्दने, जसु-हिंसायां, जसु-ताड़ने चुरादित्वाद्द्वयोरेव ग्रहणम्। एतेषामेवात्र ग्रहणम्। नटनृतावित्यस्य भ्वादेर्जसु-मोक्षणे इत्यस्य दिवादेः। क्रथ-हिंसायां इत्यस्य भ्वादेश्चाग्रहणमिति। भौवादिक-दैवादिकयोर्नट-जस्वोर्हिसार्थत्वाभावादेव चौरादिकयोरेव ग्रहणे लब्धेऽपि यत् नटजस्वित्युक्तं तत् शिशूनां झटिति प्रतिपत्त्यर्थं, धातूनामनेकार्थत्वात् तयोरपि ग्रहणं भवत्विति शंका स्यात्, तन्निरासार्थञ्चेति ज्ञेयम्। ननु यदि चुरादय एव गृह्यन्ते, तर्हि सूत्रे नटादयो ण्यन्तत्वेन कथं निर्दिष्टाः। उच्यन्ते, यत्र नाटीत्यादिरूपं तिष्ठेत् तत्रैव कर्म वा भवतीत्यभिप्रायेण ण्यन्तनिर्देशः कृतः, तेन तृणावर्तमनीनटत्। कंसमजीजसत्। कुवलयापीड़मचिक्रथत् कृष्ण इत्यादौ भूतेशे अङि द्विर्वचने वामने च कृते नाटयादिरूपाभावात् पक्षे षष्ठी न भवति। तृणावर्तमिति सर्वत्र योज्यम्। निप्रेति, प्रत्येकं समुदितं विपरीतञ्चाऽन्वेतीति सूचयितुं चत्वार्युदाहरणानि दर्शितानि। धाना इति। 'धानाभ्रष्टयवेस्त्रिषु' इत्यमरः। हिंसायां प्राणिधर्मत्वात् नात्र हिंसा॥ १०१७॥

१०१८। व्यव। व्यवहारेऽर्थे व्यवहृञ्-पण-दिवां प्रयोगे कर्म वा

व्यवहरते पणते, तस्य वा, तद्ग्लहं करोति तद्विनिमयते वेत्यर्थः। वंशीं कृष्णो दीव्यति, तस्या वा। एवं प्रदीव्यति, तां ग्लहं करोतीत्यर्थः। अन्यत्र तु—चक्रं व्यवहरति, विक्षिपतीत्यर्थः। पणायतीति कश्चित्। कृष्णं पणति, स्तौतीत्यर्थः। अत्र पणपदमेवेति वर्धमानः ॥ १०१८ ॥

---

स्यात्। यद्यपि व्यवहार इति सामान्येनोक्तं, तथापि विशेषो ज्ञेय इत्याह—अत्रेति। द्यूतेति, द्यूतविषयकपणरूपव्यवहार इत्यर्थः। क्रयेति, क्रय-विक्रय-स्वरूपव्यवहारे च इत्यर्थः। मन्यन्त इति, पूर्वाचार्या इति शेषः। त्रयाणामपीत्यत्र त्रयाणामिति वा पाठः। तस्यां प्रक्रियाकौमुद्याम्। व्यवहरत इति, व्यवपूर्व-हृञ्—हरणे भ्वादिः। ञित्वादात्मपदम्। पणत इति, पण—व्यवहारे स्तुतौ च, भ्वादिरात्मपदी, मूर्धण्यन्तादयो न व्यवहारे इति निषेधात्। 'गुपू-धूप-विच्छि-पणि-पनिभ्य आयः' इत्यनेन न आयः। तस्य धान्यस्य। ग्लहं द्यूतपणम्। तत् धान्यं विनिमयत इति विनिमयस्य परिवर्तरूपत्वेन क्रयविक्रयात्मकत्वमिति। दीव्यतीति, दिवु—क्रीड़ादिषु। तस्या वंश्याः। एवं प्रदीव्यतीत्यनेन द्यूतग्लहे सोपेन्द्रदिवोऽपि कर्म वा भवतीति सूचितम्। दिवः सोपेन्द्रत्वे षष्ठी वा भवति, अनुपेन्द्रत्वेतु षष्ठेचवेति तु क्रमदीश्वरः। अन्यत्रेति, द्यूत-ग्लहादेरन्यत्रेत्यर्थः। चक्रमिति, सुदर्शनाख्यमित्यर्थः। पणायतीति कश्चिदित्यत्रापि चक्रमिति शेषः। चक्रं स्तौतीत्यर्थः। व्यवहृञ्—पणनार्थत्वे तु चक्रस्य कर्मत्वं न सम्यक् सङ्गच्छते, तस्मादपणनार्थत्वे—पुष्पाणि व्यवहरतीति प्रत्युदाहार्यम्। हृञः ञित्वेनोभयपदित्वादत्र परपदमिति। पणधातोरात्मनेपदित्वात् पणतीत्युक्त्वा आशङ्कमानः समादधाति—अत्रेति, तस्माद्वर्धमानानुसारेणैव पणतीत्युक्तमिति भावः। ननु पणतीति कथं भवतु व्यवहारे निषेधात्। स्तुत्यर्थे आयस्यापरिहार्यत्वात्तदेतच्चिन्त्यम्। पणायतीत्यत्र लिपिकर-प्रमादात् पणतीति जातमिति न वाच्यम्, अन्यधातुत्वात् परपदमित्यनेनायान्तस्य परपदित्वेन अत्र परपदमेवेति वर्धमान इत्यस्य वैयर्थ्यात्। तस्मात् मूर्धण्यन्तादयो न व्यवहारे इत्यस्यैवात्र व्यभिचारो विवक्षणीय इति, तस्मात् व्यवहारभावेऽप्यत्र न्याय इति ॥

## १०१९। क्तस्येनन्तस्य योगे कर्मणि सप्तमी।

अधीती श्रीभागवते। कृतपूर्वी सृष्टिमित्यत्र तु न क्तस्येनन्तत्वमिति। अत्र द्वितीयैव। अत्राप्यधिकरणविवक्षायां स्यादित्यन्ये ॥१०१९

इति कर्तृकर्मणी।

## १०२०। कर्तृकर्मणोराधारोऽधिकरणम्।

क्रियया सह वा क्रियाद्वारा वा कर्तृकर्मणी यदाश्रित्य विषयीकृत्य वा वर्तेते, स आधारस्तद्रूपं कारकमधिकरणसंज्ञं स्यात्। तत्र यदालम्ब्य वर्तेते, स आश्रयः; तत्र स्थित्वा यत्र प्रवतते, स विषयः;

---

१०१९। क्तस्ये। इन् अन्तो यस्य तादृशस्य क्तस्य योगे कर्मणि सप्तमी स्यात्। अधीतीति, अधीतमनेनेत्यर्थे 'इष्टादिभ्यश्चे'त्यनेन इनिः, अधीतानुकूलव्यापारवतस्तवाधीतस्य को विषय इत्युक्ते कुत्राधीति भवान् इत्यस्य प्रत्युत्तरं श्रीभागवत इत्यादि। न क्तस्येनन्तत्वमिति, पूर्वशब्देन व्यवधानादिति शेषः। अत्रापीति, अत्रापि अधिकरणविवक्षायां सप्तमी स्यादित्यर्थः। तस्मादन्येषां मते—कृतपूर्वी सृष्टावित्यपि भवतीति ॥ १०१९ ॥

१०२०। अधिकरणविवक्षायामित्यनेनोट्टङ्कितमधिकरणलक्षणमाह—कर्त्रिति। कर्ता च कर्म च कर्तृकर्मणी, तयोः कर्तृकर्मणोराधारोऽधिकरणं स्यादित्यापातत व्यख्येति। कर्तृकर्मभ्यामाध्रियते आश्रियते स्थियते यत्र इत्यर्थे अधिकरणवाचि घञ्प्रत्यय सिद्ध आधारः, तस्मिन् सिद्धे'कर्तृकर्मणोः षष्ठी कृद्योगे' इत्यनेन कर्तृकर्मणोरित्यत्र पश्चात् षष्ठीति। वृत्तिरूपत्वेन आधारलक्षणमाह—क्रिययेति। क्रियया सह वा क्रियाद्वारा वा कर्तृकर्मणी द्वे यदाश्रित्य यदवलम्ब्य वर्तेते, यद्विषयीकृत्य यद्विषयं कृत्वा वतते स स आधारस्तत्तद्रूपं कारकम् अधिकरणसंज्ञं स्यात्। अधिकरणलक्षणे कर्तृकर्मणोरित्युक्तमत एव आधारलक्षणे कर्तृकर्मणि एव कर्तृत्वेन विवक्षिते तस्मात् कर्तृकर्मणी यदाश्रित्येत्यादिकं दृष्ट्वा कर्तृकर्मणोरित्यस्य सम्बन्धषष्ठीति वैयर्थ्यं नाशङ्कणीयम्। तस्मात् यः कर्तृकर्मणोराश्रयः, यश्च

यथेन्द्रियाणां पुरुष आश्रयः, रूपादिकं विषयः ; यथा राज्ञोऽन्तःपुरमाश्रयः, देशो विषयः। छात्रस्यासनमाश्रयः, पुस्तकं विषय इति॥ १०२०॥

१०२१। अधिकरणे सप्तमी।

१०२२। प्रसितोत्सुकाभ्यां कालवाचिनक्षत्रेण च योगे तृतीया च।

तत्र क्रियया सह आश्रये —आसने आस्ते, ललाटे तिलकं करोति कृष्णः। क्रियाद्वारा आश्रये—कृष्णे मोदते, कृष्णे सुखं लभते लोकः। अत्र लोकस्य या मोदक्रिया, या च सुखलाभक्रिया, ते द्वे

---

तयोर्विषयः स आधार, आधार एवाधिकरणमिति। क्रियया सह वा क्रियाद्वारा वा इत्यनेनाधिकरणस्य क्रिया-सम्बन्धविशेषित्वं प्रतिपादितम्। अन्यथा कारकत्वं न स्यात्। तथाहि—'कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमि'ति। तत्र आश्रयलक्षणमाह—यदालम्ब्येति, यदवलम्बनं कृत्वा वर्तते इति क्रियया सह क्रियाद्वारा वा कर्तृकर्मणीति शेषः। विषयलक्षणमाह—तत्र स्थित्वेति। तत्र आश्रये। उदाहरणं दर्शयति—यथेति। दर्शनादिक्रियया सह इन्द्रियाणां चक्षुरादीनाम्। रूपादिकमित्यादिपदेन रूप-रस-गन्ध-स्पर्श-शब्दानां ग्रहणम्। सूक्ष्मत्वेनापरितोषात् उदाहरणान्तरं दर्शयति—यथा वेति। ततोऽपि स्पष्टं दर्शयति छात्रस्येति, छात्रस्य पाठकस्य॥

१०२१। अधि। अधिकरणे सप्तमी विभक्तिः स्यात्॥

१०२२। प्रसि। प्रसितोत्सुकाभ्यां शब्दाभ्यां कालवाचिनक्षत्रेण च योगे अधिकरणे सप्तमी तृतीया च भवति। कालवाचिनक्षत्रेण अधिकरणे सप्तमीतृतीये भवन्त्यौ कालवाचिनक्षत्रादेव भवत इति लभ्यते शब्दान्तरभावादिति ज्ञेयम्। आसने आस्त इति, कर्ता कृष्णः उपवेशनक्रियया सह आसनमाश्रित्य वर्तते, आसनम् उपवेशनस्य कृष्णस्य च आश्रयः। ललाटे तिलकं करोतीति कर्म तिलकं, कृतिक्रियया सह ललाटमाश्रित्य

कृष्णमाश्रित्य जायेते इत्यर्थः। विषये—कृष्णे प्रीणाति, कृष्णे प्रीतिं करोति, तं प्रति प्रीतिं प्रवर्तयतीत्यर्थः। व्रजसुखे निपुणः कृष्णः इत्यत्र तु गम्यसत्तादिक्रियायाः सम्बन्धेन कारकत्वम्। आश्रयः पुनस्त्रिविधः—औपश्लेषिकः, सामीपिको, व्याप्त इति। उपश्लेष

---

वर्तते, अतो ललाटं कृतिक्रियायास्तिलकस्य च आश्रयः। कृष्णे मोदते इति कर्ता लोकः, मोदक्रियाद्वारा कृष्णमाश्रित्य वर्तते, अतः कृष्णो मोद-क्रियाद्वारा लोकस्याश्रयः। कृष्णे सुखं लभत इति कर्म सुखं, लाभक्रिया-द्वारा कृष्णमाश्रित्य वर्तते, अतः कृष्णलाभक्रियाद्वारा सुखस्याश्रयः। मोदत इति मुद–हर्षे भ्वादिरात्मपदी। लभत इति डुलभष्–प्राप्तौ। पूर्ववत् ते द्वे क्रिये।

विषये–कृष्णे प्रीणातीति विग्रहे स्थित्वा कर्ता लोकः, प्रीतिक्रियया सह कृष्णं विषयीकृत्य वर्तते, अतः कृष्णः प्रीतिक्रियायाः लोकस्य च विषयः। प्रीणातीति प्रीञ्–तर्पणे क्र्यादिः। कृष्णे प्रीतिं करोतीति प्रीतिः कर्म, कृतिक्रियया सह कृष्णं विषयीकृत्य वर्तते, अतः कृष्णः कृतिक्रियायाः प्रीतेश्च विषयः। तं कृष्णम्। ननु व्रजसुखे निपुणः कृष्ण इत्यत्र क्रिया-सम्बन्धाभात् कथं कारकत्वमिति चेत्तत्राह—व्रजसुख इति गम्येति। गम्या या सत्ताक्रिया तस्याः सम्बन्धेनेति।

उक्तलक्षणस्याश्रयस्य त्रैविध्यमाह—आश्रय इति। औपश्लेषिक उपश्लेषे भव इत्यर्थे माधव ठः। ठ इकः, टणिन्माधवः। एवं सामीपिक इति। व्याप्त इति कर्मणि क्तः। औपश्लेषिकस्य लक्षणं ब्रुवन् तत्रो-दाहरणं दर्शयति उपश्लेष इत्यादिना आस्त इत्यन्तेन। उपश्लिष्यतेऽसौ इत्युपश्लेषः कर्मणि घण्। तत्रेति, तत्र उपश्लेषे भव, औपश्लेशिक इत्यर्थः। आसने आस्त इति आसनस्यैकदेशः कृष्णस्याश्रय इति।

सामीपिके उदाहरणं दर्शयति, सामीपिक इति। यमुनायां घोष इत्यत्रापि गम्यसत्तायाः सम्बन्धेन कारकत्वे यमुनासमीपे घोषस्याश्रय इति। अस्माकं मते आश्रयसामीपिकत्वेनैव यमुनायां घोष इति सिद्धेऽप्येकया वृत्त्या यमनाशब्देन तत्समीप उच्यते इत्यपेक्षायामत्र परमतं दर्शयति

एकदेशस्तत्र भवे—आसने आस्ते। सामीपिके—यमुनायां घोषः। मुख्यया वृत्त्या येन नदीविशेष उच्यते, लक्षणया वृत्त्या तेन यमुना-शब्देनैव तत्सम्बन्धि तटमुच्यते। यथा गौण्या वृत्त्या पुरुषः सिंह इत्यन्ये। व्याप्ते—विष्णुः सर्वत्रास्ति। एवं विषवृक्षोऽपि।

---

मुख्ययेत्यादिना इत्यन्य इत्यन्तेन। मुख्यो लाक्षणिको गौणः शब्दः स्यादौ-पचारिक इत्यलङ्कारिकाः। 'मुख्यार्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः। व्यङ्ग्यो व्यञ्जनया ज्ञेयस्तिस्रः शब्दस्य शक्तयः'। ननु कास्ताः शक्तयः इत्यपेक्षायामभिधादयोऽत्र वक्तव्याः। यस्योच्चारणमात्रेण सहजं यत्प्रतीयते तत्र तस्य तु या वृत्तिः साभिधा, लक्षणा पुनः। अभिधा—अस्माच्छब्दादयमर्थो बोद्धव्य इति ईश्वरेच्छा शक्तिः। मुख्यार्थबाधे शक्यस्य सम्बन्धे यान्यधिर्भवेत्। रूढेः प्रयोजनाद्वापि भिद्यत अथ सा द्विधा॥ इति कौस्तुभकारः। 'मुख्यार्थबादे तद्योगे रूढ़ितोऽथ प्रयोजनात्। अन्यार्थो लक्ष्यते यस्तु लक्षणारोपिता क्रिया॥ विरतास्व-भिधाद्यासु ययार्थो बुध्यते परो। व्यञ्जना सातु विज्ञेया शब्दस्यार्था-दिकस्य च॥' इति काव्यप्रकाशकार इत्याद्युक्तरीत्या मुख्यया वृत्त्या येन यमुनाशब्देन नदीविशेष उच्यते, लक्षणया वृत्त्या तेन यमुनाशब्देन तत्सम्बन्धि तटं उच्यते। ननु भवतु लक्षणाया कीदृशी प्रवृत्तिरिति चेत् तदेवं वाच्यम्। 'घोष आभीरपल्ली स्यात्, पक्कणः शवरालयः'। 'कुठी-ग्रामकयोः पल्ली'। इत्युक्तानुसारेण जलमय्यां यमुनायां घोषस्य आभीर-ग्रामस्य वासो न सम्भवतीति लक्षणाया वृत्तेः स्वीकारः क्रियत इति भावः। अत्र दृष्टान्त यथेति। मुख्यया वृत्त्या येन पशुविशेष उच्यते, गौण्या वृत्त्या तेन सिंहशब्देनैव पुरुषः सिंहपुरुषः, प्रशस्तपुरुषः उच्यते इत्यन्ये, तस्मान्मुख्यवृत्त्यभावांशेऽयं दृष्टान्तः।

व्याप्ते उदाहरणं दर्शयति—व्याप्त इति, विष्णुः सर्वत्रास्तीति सर्वं वाप्यास्तीत्यर्थः। विष्णुः कर्ता सर्वमाश्रित्य वर्तते, अतः सर्वं विष्णो-राश्रयः, तत्सर्वं विष्णुना व्याप्तम्, अतः सर्वस्य व्यप्तत्वञ्च। सर्वशब्दो विश्ववाची। एवं विषयोऽपीति। विषयोऽप्यौपश्लेषिकादिभेदेन त्रिविध

प्रसितेति—कृष्णे कृष्णेन वा प्रसितं मनोबद्धमित्यर्थः। एवमुत्सुकम्। तथा रोहिण्यां कृष्णमभिसिञ्चेत्, रोहिण्या वा। अकालवाचित्वे तु रोहिण्यां विधुः॥ १०२२॥

---

इत्यर्थः। अत्र क्रमेणोदाहणत्रयमाह—प्रसितेत्यादिना। प्रसितमिति, सिञ्-बन्धने क्तः। कृष्णे प्रसितं मन इत्यत्रौपश्लेषिको विषयः कृष्णस्य वदननेत्रादीनां मध्ये एकस्मिन्नेकस्मिन्नवयवे मनसो विषयतया बन्धनं, नतु युगपत् सर्वावयवे इति। एवमिति, कृष्णे कृष्णेन वा उत्सुकं मन इति। 'इष्टार्थोद्युक्त उत्सुकः इत्यमरः'। किन्तु इष्ठार्थोद्युक्तार्थत्वेतु अत्र अर्थ-सुसङ्गतिर्न भवति, तस्मात् उत्सुकं सोत्कण्ठमिति। कालाक्षमत्वमौत्सुक्य-मिति। श्रीभक्तिरसामृतसिन्धुः। कालाक्षमत्वं कालयापनाय असमर्थत्व-मिति अत्र सामीपिको विषयः। कालयापनासामर्थ्यत्वेन कृष्णे उत्सुकं मन इत्यत्र कृष्णशब्देन कृष्णसमीपे निवासदर्शनाद्यर्थं मनसः सौत्कण्ठ्यं भवतीत्यर्थः।

रोहिण्यामिति। रोहिणीयुक्तः काल इत्यर्थे रोहिणीशब्दात् केशव-णः, तस्य स्मरहरः, रोहिणी तस्यां, रोहिणीनक्षत्रयुक्तकाल इत्यर्थः। अभि-पूर्वसिच्-धातुरभिषेकार्थः। अत्राभिव्याप्तो विषयो यावत् रोहिणीयुक्त-कालस्तावत् कृष्णं सिञ्चेदित्यर्थः। रोहिण्यामिति, रोहिणीनक्षत्र इत्यर्थः। मया यदुक्तं प्रकारान्तरेण प्राचीनैरेतदेवोच्यते तद्यथा—

'औपश्लेषिकवैषयिकावभिव्यापक एव च। आधारस्त्रिविधो ज्ञेयः कटाकाशतिलादिषु'॥ औपश्लेषिके यथा—आधाराधेययोरन्यत्र सिद्धयोः संयोग उपश्लेषस्तत्र भव औपश्लेषिकः—देवदत्तः कटे आस्ते।

वैषयिके यथा—विषयो ह्यन्यत्र भावो न विद्यतेऽन्यत्र भावः सत्ता यस्मात् स तत्र भवः वैषयिकः—दिवि देवाः।

अभिव्यापके यथा—आधाराधेययोस्तुल्यजन्मापृथग्देशभागानभि-व्याप्य तिष्ठतीत्यभिव्यापकः। अभिव्याप्यते इति कर्मणि णकप्रत्ययान्तो-ऽभिव्यापकः—तिलेषु तैलम्। एतत् सर्वैरुक्तं किन्तु तिलादीनां कल्कादौ तैलस्य सम्भवान्न सम्यङ्मनोरमम्। अस्माकं मते—विष्णुः सर्वत्रास्तीति सर्वसम्मतमिति॥

१०२३। अधिशीङ्स्थासामाधारः कर्म, अभि-निविशो वा।

गोवर्धनमधिशेते अधितिष्ठति अध्यास्ते हरिः। अभिनिविशते कृष्णभक्तिं कृष्णभक्तौ वा। अत्र विशेरात्मपदं वक्ष्यते ( का॰ प्र॰ ११५८) ॥ १०२३ ॥

१०२४। उपान्वध्याङ्भ्यो वस आधारः कर्म।

वृन्दावनमुपवसति हरिः। एवम् अनु अधि आङ् ॥ १०२४ ॥

१०२५। अभोजनार्थस्योपवसेर्न।

---

१०२३। अधि। अधिपूर्वाणां शीङ-स्थासां प्रयोगे आधारः कर्म स्यात्। अभि-नि-पूर्वविशः प्रयोगे आधारः कर्म वा स्यात्। गोवर्धनमिति हरिरिति च सर्वत्र योज्यम्। अधिशेत इति, शीङ्–स्वप्ने अदादिः। अधितिष्ठतीति ष्ठा–गतिनिवृत्तौ। अध्यास्त इति आस–उपवेशने अदादि-रात्मपदी। अभिनिविशत इति कृष्णभक्त इति शेषः। विश्–प्रवेशने तुदादिः। अत्रेति निपूर्वत्वे इत्यर्थः। आत्मपदं वक्ष्यत इति 'नेर्विशः' इत्यनेनेति शेषः। अधिपूर्वशीङादीनां प्रयोगे यो नाधारः, स कर्म न स्यात्। तेन वृन्दावने गोष्ठमध्यास्ते इत्यत्र गोष्ठावस्थानक्रियाया वृन्दावनमाधारः न पुनरध्यासनक्रियायास्तस्यास्तु गोष्ठमेवाधार इति।

शीङासोः साहचर्यात् स्थाधातोरप्यकर्मकस्य ग्रहणं, तेन मानसगङ्गायां नावमधितिष्ठतीत्यत्र मानसगङ्गाया न कर्मसंज्ञा, नावस्तु क्रियया साध्यत्वात् कर्मत्वमिति नावमारोहति इत्यर्थः। क्वचिदपवादविषयेऽप्यु-त्सर्गोऽभिनिविशते इति न्यायात्। अस्मिन्नेव भाष्यकारवाक्ये यस्मिन् यस्मिन्नभिनिविशते इति प्रयोगाच्च व्यभिचारः क्वचिद्भवति। तेन वृन्दावनेऽस्याधिष्ठानम्। धर्मेऽभिनिवेशः। गोवर्धनेऽध्यासनमित्यादौ कर्मत्वमेषां न दृश्यते च ॥

१०२४। उपा। उपादिभ्य उत्तरस्य वसः प्रयोगे आधारः कर्म स्यात्। उपवसतीति, वस्–निवासे ॥

कालियह्लदे उपवसन्ति। 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इति न्यायेन वस्तेर्न ग्रहणम् ॥ १०२५ ॥

**अथ अपादानम्**

## १०२६। अपायादिष्ववधिरपादानम्।

प्रभुरयम्। अपायादिषु क्रियासु साध्यासु यदवधिभूतं, तत् कारकमपादानसंज्ञं स्यात्। कर्तुः कर्मणोः वा पूर्वयोः क्रियाज्ञानयोर्विषयोऽवधिः ॥ १०२६ ॥

## १०२७। अपादाने पञ्चमी।

---

१०२५। अभोजनमर्थो यस्य तस्य वसः प्रयोगे आधारः कर्म न स्यात्। उपवसन्तीति तैर्थिका इति शेषः। लङ्घनं कुर्वन्तीत्यर्थः। मण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिरिति शास्त्रशासनात्। ननु सूत्रे वस इत्येवोक्तं तर्हि वस्–आच्छादने इत्यस्यादादेरपि ग्रहणं कथं न भवतीति चेत्तत्राह—लुग्विकरणेति। 'अदादेः शपो महाहरः' इत्यनेन शपो लुग्विधानाददादिर्लुग्विकरणः अतो भ्वादेरेव ग्रहणम्। अत्र यद्यद्ग्रन्थकारेणोदाहृतं यत्तदन्येनाप्युच्यते। श्रीशोऽधिशेतेऽहिमधिष्ठितोऽब्धिमध्यास्य घोषं मथुरामनुष्य। यो द्वारकामध्युषितो विकुण्ठमुपावसच्चावसतात् स ह्लन्नः ॥

१०२६। प्रभुरयमिति, प्रभुनामा अधिकारोऽयमित्यर्थः। अवधिभूतमवधिरूपम्। अवधिलक्षणमाह–कर्तुरिति ॥

१०२७। अपादाने पञ्चमी विष्णुभक्तिः स्यात्। अपायलक्षणमाह–अपायो विश्लेष इति। अपायनमपायः अपपूर्वादिण् गतावित्यस्मात् भावे घण्, अतो विश्लेषवाची। विश्लेष्यागः वियोग इति यावत्, सच मथुराया आगत इत्यादावागमनादिक्रियाकर्तुः साध्य एव अतएवोक्तं अपायादिषु क्रियासु साध्यास्विति। ननु यदि कर्तुः कर्मणो वा पूर्वयोः क्रियाज्ञानयोर्विषय एवावधिस्तर्हि मथुराया आगत इत्यादौ मध्यवर्तिनो देशादेः कथं नावधित्वमिति चेत्तत्राह—तत्रादिमर्यादेति। अत्र विश्लेषे आदिमर्यादा

अपायो विश्लेषः; तत्रादिमर्यादावधिः। मथुराया आगतः, रथादवतीर्णः, द्रवतो रथात् पतितः, परस्परस्मात् कृष्णचानूरावपसर्पतः॥ १०२७॥

---

आदिसामा। कृष्णो मथुराया आगत इति आङ्पूर्व-गम् क्तः, 'हरिवेण्वन्ते'त्यादिना मरामहरः। भूतागमनानुकूलव्यापारवतः कृष्णस्य कर्तुरागमनेनैव तदाद्यकलापत्यागक्रियायाः पूर्वमपायः साध्यः, तस्मिन् सति तस्यैव कर्तुः पूर्वस्याः स्थितिक्रियाया विषयो मथुरा, अतः सैवावधिः, अतएव सैवापादानकारकम्। अत्र कर्तुरागमनस्थित्योर्मध्ये साध्योऽपायः, अन्यथागमनानुपपत्तिः। मथुरापादानक-भूतागमनानुकूलव्यापारवान् कृष्णः। रथादवतीर्ण इति अवपूर्व त –प्लवनतरणयोः क्तः, 'ऋरामस्येर् कंसाराविं'त्यनेनेर्, 'धातोरव' इति त्रिविक्रमः। 'र-दाभ्यां विष्णुनिष्ठा-तस्य पूर्वदस्य च नो दां विने'त्यनेन तस्य नः, णत्वम्। अवरूढ इत्यर्थः। भूतावतरणानुकूलव्यापारवतः कृष्णस्य कर्तुरवतरणक्रियैव तदाद्यकलापत्यागक्रियाया अपायः साध्यस्तस्मिन् सति तस्यैव कर्तुः पूर्वस्याः स्थितिक्रियाया विषयो रथः, अतः सोऽवधिः। अतएव स एवापादानकारकम्। अत्र कर्तुः स्थित्यवतरणक्रिययोर्मध्ये साध्योऽपायः। अन्यथा रथावतरणक्रियानुपपत्तिः। रथापादानक-भूतावतरणानुकूलव्यापारवान् कृष्णः। शिशुपालो द्रवतो रथात् पतित इति पत्लृ–गतौ क्तः, इट्। भूतपतनानुकूलव्यापारवतः शिशुपालस्य कर्तुः पतनक्रियैव तदाद्यकलापत्यागक्रियाया अपायः साध्यः, तस्मिन् सति तस्यैव कर्तुः पूर्वस्याः स्थितिक्रियाया विषयः धावमान रथः, अतः स एवावधिः। अतएव स एवापादानकारकम्। अत्र कर्तुः स्थितिपतनक्रिययोर्मध्ये साध्योऽपायः। अन्यथा पतनक्रियानुपपत्तिः। धावमान-रथापादानक-पतनानुकूल-व्यापारवान् शिशुपालः। परस्परस्मात् कृष्णचानूरावपसर्पत इत्यत्र परस्परस्मादिति कृष्णनामत्वात् ङसेः स्मात्। कृष्णश्चानूरादपसर्पति चानूरः कृष्णादपसर्पतीत्यर्थः। असर्पत इति, सृप्लृ–गतौ, वर्तमानापसर्पणानुकूलव्यापारवतः कृष्णचानूरयोः कर्त्रोरपसर्पणक्रियैव तदाद्यकलापत्पागक्रियाया अपायः साध्यस्तस्मिन् सति तयोः

१०२८। प्रभवे तत्स्थानम्।

हिमवतो गङ्गा प्रभवति॥ १०२८॥

१०२९। जनने प्रकृतिः।

विष्णोर्जगज्जायते। प्रभवः प्रथमदर्शनम्; जननमुत्पत्तिरिति भेदः॥ १०२९॥

---

कर्त्रोः संयोगोपलक्षितयोः पूर्वस्याः स्थितिक्रियाया विषयः परस्परम्, अतस्तदेवावधिः। अतस्तदेवापादानकारकम्। अत्र कर्त्रोः स्थित्यनुसर्पणयोर्मध्ये अपायः साध्यः। अन्यथा असर्पणक्रियानुपपत्तिः। परस्परापादानकापसर्पणक्रियानुकूलव्यापारवन्तौ कृष्णचानूरौ। अत्रापेक्षया एकस्यावधिभावो विवक्षित इति। इदानीं प्राचीनमतेन त्रिविधापादानं स्पष्टीक्रियते, तत्र पाणिनिसूत्रञ्च दर्श्यते—ध्रुवमपायेऽपादानम्। अपाये यद्ध्रुवं यन्निश्चलं तदपादानम्। अपायो विश्लेषः। पूर्वदेशसंयोगध्वंसपूर्वकोत्तरदेशसंयोगरूपः। विभागजनकीभूतस्पन्दनादिक्रियानाश्रयत्वे सति विभागाश्रयत्वम् अवधित्वम्। अतोऽवधित्वेन यत् स्थिरतरं तदपादानमिति। अनेन न सर्वं निर्वाहितं, अतः सुत्रान्तरमाह—चलमचञ्चेति। 'अपाये यदुदासीनं चलम्वा यदिवाचलम्। ध्रुवमेवातदावेशात् तदपादानमिष्यते॥ निर्दिष्टविषयं किञ्चिदुपात्तविषयन्तथा। अपेक्षितक्रियञ्चैव त्रिधापादानमिष्यते॥' निर्दिष्टं यथा—वृक्षात् पर्णं पतति। उपात्तविषयं यथा—धावतः अश्वात् पतितः। अपेक्षितक्रियं यथा—अपसरतो मेषादपसरति मेषः इत्यत्र अपसरणक्रियापेक्षया एकस्यावधिभावो विवक्षितः॥

१०२८। प्रभवे। अपाये उदाहरणानि दर्शयित्वा आदिपदं विवृणोति। प्रभवे साध्ये तत्स्थानं, प्रभवस्थानम् अवधिः स्यात्। हिमवत इति अवधित्वादपादानत्वम्। ततश्च 'अपादाने पञ्चमी'त्यनेन पञ्चमी। एवं सर्वत्र ज्ञेयम्॥

१०२९। जन। जनने साध्ये प्रकृतिरवधिः स्यात्। प्रकृतिरिति, जननकर्तुरिति शेषः। प्रकृतिः कारणं, तच्च त्रिविधम्। समवायि,

१०३०। अन्तर्धौ शङ्कास्पदम्।

अवैष्णवादन्तर्धत्ते ; एते कर्तुः पुर्वस्याः स्थितिक्रियाया विषयाः ॥

असमवायि, निमित्तञ्च। तत्र, यत् समवेतं कार्यमुत्पद्यते तत् समवायि कारणम् ; यथा—घटस्य मृत्पिण्डः। जगतः पञ्चभूतानि च। समवायिकारण-प्रत्यासन्नमव्यवधानेन कार्योत्पादनाक्षममसमवायि कारणम्। यथा—पटस्य तन्तुद्वयसंयोगः। एतद्व्यतिरिक्तं कारणं निमित्तम् ; यथा—घटस्य चक्रादि। विष्णोर्जगज्जायते इति विष्णुर्निमित्तकारणम्। जायत इति दिग्दर्शनमात्रं, अतः हरिभक्तेः सुखमुत्पद्यते, विष्णोर्जगद्भवति, पुष्पेभ्यो माला स्यादित्याद्यप्युदाहरणीयम्। मातुः पुत्रो जायते इत्यत्र निमित्त-विवक्षया विष्णोर्जगज्जायत इत्यत्र चापायादिसाध्यत्वसम्भवात्, सामान्य-सूत्रेण मात्रादेरवधित्वसिद्धेऽपि मृत्पिण्डात् घटो जायते, तन्तुभ्यः पटो जायते। कस्यचिन्मते विष्णोः समवायित्वविवक्षया विष्णोर्जगज्जायत इत्यादौ तु मृत्पिण्डादीनां सामान्यसूत्रेण नावधित्वं सिध्येत्, मृत्पिण्डादौ घटादिकस्याऽव्यतिरेकत्वादत इदं सूत्रमिति। प्रभवजननयोः समानार्थत्व-माशंक्य समादधाति-प्रभव इति। प्रभव-शब्दस्य प्रथमदर्शनार्थत्वेन गङ्गा प्रभवतीत्यस्य गङ्गा प्रथमं पश्यतीत्यर्थः सिद्धः, मर्त्यलोकमिति शेषः। अथवा अन्तर्भूतण्यर्थत्वात् प्रभवतीत्यस्य प्रथमं दर्शयतीत्यर्थो व्याख्येयः ; आत्मानमिति शेषः। अणिकर्तृत्वन्तु लोकानामिति। हिमवति स्थित्वा गङ्गा स्वमात्मानं लोकान् दर्शयतीत्यत्र अपायादिसाध्यस्यासम्भवात् प्रभव इत्यस्य प्रयोजनं बोद्धव्यमिति॥

१०३०। अन्त। अन्तर्धौ साध्ये सति यत् शङ्कास्पदं शङ्कास्थानं तदवधिः स्यात्। यं दृष्ट्वा शङ्का भवति तत् शङ्कास्पदं, अन्तर्धिरन्त-र्धानम्। 'अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणमित्यमरः'। शङ्का-स्पदमिति, अन्तर्धिकर्तुरिति शेषः। अन्तर्धत्ते इति अन्तर्-पूर्वात् डुधाञ्-धातोरात्मपदम्। अन्तर्धत्ते इति दिग्दर्शनमात्रम्। अतोऽवैष्णवात् पलायते इत्याद्यप्युदाहार्यम्। संसर्गादिरूपत्वेन अवैष्णवादौ स्थितिसम्भवात् अवैष्णवे स्थितिः सम्यङ् न सम्भवेदतः सूत्रस्य प्रयोजनमिति। एत इति,

१०३१। अथासहनार्थपराजेः सोढ़ुमशक्यः।

कृष्णात् पराजयते कंसः, तं सोढुं न शक्नोतीत्यर्थः। नेह— कंसं पराजयते कृष्णः, अभिभवतीत्यर्थः ॥ १०३१ ॥

१०३२। प्रमादे जुगुप्सायाश्च तद्विषयः।

प्रमादोऽनवधानता, गर्हायाश्चित्तनिवृत्तिर्जुगुप्सा। हरिभक्ते-प्रमाद्यति, अवैष्णवमार्गाज्जुगुप्सते। एते कर्तुर्ज्ञानस्य ॥ १०३२ ॥

१०३३। अथ विरामे त्याज्यः।

---

एतेन मथुरादयोऽवैष्णवान्ता अवधयः कर्तुः पूर्वस्याः स्थितिक्रियाया विषया इत्यनेन मथुराया आगत इत्यादीनां मथुरायां तिष्ठन् तत आगत इत्याद्यर्थाः सूचिताः ॥

१०३१। अथा। असहनमर्थो यस्य तस्य पराजेः प्रयोगे सोढ़मशक्योऽवधिः स्यात्। पराजयत इति 'विपराभ्यां जे'रित्यनेनात्मपदम्। सूत्रे लिङ्गवचनमतन्त्रमिति अशक्य इत्यस्य पूरुषोत्तमत्वं न नियतं, अतएव युद्धात् पराजयते कृष्ण इत्याद्यपि भवति। एवमथ 'विरामे त्याज्यः' इत्यादिष्वपि ज्ञेयम्। नेहेति, असहनार्थत्वाभावादिति शेषः ॥

१०३२। प्रमा। प्रमादे जुगुप्सायाञ्च साध्यायां तयोः प्रमादजुगुप्सयोर्विषयोऽवधिः स्यात्। प्रमादलक्षणमाह—प्रमाद इति। जुगुप्सालक्षणमाह—गर्हाया इति। गर्हायाः कुत्सायाः। चित्तनिवृत्तिरिति, अन्तर्भूतण्यर्थत्वात् चित्तनिवर्तनेनेत्यर्थः। हरिभक्तेः प्रमाद्यतीति वैष्णवाभास इति शेषः। हरिभक्तौ असावधानो भवतीत्यर्थः। मदि—हर्षे दिवादिः। अवैष्णवमार्गाज्जुगुप्सते इति वैष्णव इति शेषः। अवैष्णवमार्गे चित्तं निवर्तयतीत्यर्थः। जुगुप्सत इति, गुप्—गोपनकुत्सनयोः निन्दायां सन्। एत इति, एते कृष्ण-हरिभक्तत्रवैष्णवमार्गरूपा अवधयः। ज्ञानस्येति, विषया इति शेषः। अत्र ज्ञानस्येत्यस्मात् पूर्वस्येति ज्ञेयम्। पूर्वयोः कियाज्ञानयोरित्युक्तत्वात्। एवमग्रेऽपि ज्ञेयम्। ततश्च कृष्णं जानन् ततः पराजयत इत्यादिकोऽर्थः ॥

अवैष्णवमार्गाद्विरमति ॥ १०३३ ॥

१०३४। भये हेतुः।

कृष्णाद्बिभेति कंसः। एतौ कर्तुर्ज्ञानक्रिययोः ॥ १०३४ ॥

१०३५। अथ वारणे रक्षितुमिष्टः।

वैष्णवपाकादवैष्णवं वारयति नदीतीरे, रक्षितुमनिष्टत्वात् तत्तीरन्तु नावधिः। रक्षेर्वारणार्थत्वे तु ततस्तं रक्षतीति च स्यात् ॥

१०३६। प्रतिग्रहे दाता।

वैष्णवादन्नं गृह्लाति ॥ १०३६ ॥

१०३७। त्राणे भयहेतुः।

---

१०३३। अथ वि। विरामे साध्ये त्याज्योऽवधिः स्यात्। विरामो विरतिः। अवैष्णवमार्गाद्विरमतीति अवैष्णवमार्गं त्यजतीत्यर्थः। विरमतीति, रम—क्रीड़ायां, 'व्याङ्परिभ्यो रमः' इत्यनेन आत्मपदनिषेधः॥

१०३४। भये। भये साध्ये हेतुरवधिः स्यात्। हेतुरिति यस्येति शेषः। बिभेतीति, ञि भी—भये जुहोत्यादिः। एताविति। एतौ अवैष्णवमार्ग-कृष्णरूपाववधी ज्ञानक्रिययोरिति शेषः। ततश्च अवैष्णवमार्गाद्विरमतीति तं जानन् तत्र तिष्ठंश्च ततो विरमतीत्यर्थः। कृष्णाद्बिभेतीति तं जानन् प्राप्नुवंश्च ततो बिभेतीत्यर्थः॥

१०३५। अथ वार। वारणे साध्ये रक्षितुमिष्टोऽवधिः स्यात्। वारयतीति, वृ—धातुश्चुरादिः। ननु कर्तुः कर्मणो वा पूर्वयोः क्रियाज्ञानयोर्विषयोऽवधिरित्युक्तं, तर्हि कथं नदीतीरस्य नावधित्वमिति चेत्तत्राह—रक्षितुमिति। पाकस्यैव रक्षितुमिष्टत्वमिति। तत्तीरं नदीतीरम्। ततो वैष्णवपाकात्। तम् अवैष्णवम्। रक्षतीति, रक्ष—पालने वारयतीत्यर्थः॥

१०३६। प्रति। प्रतिग्रहः स्वीकरणं, तस्मिन् साध्ये दाता अवधिः स्यात्। गृह्लातीति ग्रह—उपादाने क्र्यादिः॥

१०३७। त्राणे। त्राणं रक्षणं तस्मिन् साध्ये भये हेतुरवधिः स्यात्। संसारादिति, संसारो भयहेतुः। त्रायत इति, कृष्णो वैष्णवा-

संसाराद्वैष्णवं त्रायते, त्राणार्थत्वे वारयति च। एते कर्मणः क्रियायाः ॥ १०३७ ॥

१०३८। अथ शिक्षायां गुरुः।

वैष्णवाद्गीतामधीते। अशिक्षायान्त्वनभिधानम्—नटस्य गीतं शृणोति। एष कर्मणो ज्ञानस्येति ॥ १०३८ ॥

अथ सम्प्रदानम्

१०३९। प्रदेयाभिसंवध्यमानं सम्प्रदानम्।

प्रभुरयम्। प्रदेयमात्यन्तिकं देयं, तेन यदभिसंवध्यते यद्देयतया सम्पाद्यते, तत् कारकं सम्प्रदानसंज्ञं स्यात् ॥ १०३९ ॥

---

चार्यो वेति शेषः। त्रैङ्—पालने भ्वादिः। त्राणार्थत्वे वारयति चेति। वारेस्त्राणार्थत्वेतु संसाराद्वैष्णवं वारयतीति च स्यादित्यर्थः। वारयतीति त्रायते इत्यर्थः। एत इति, एते अवधयः। क्रियाया इति, विषया इति शेषः। ततश्च वैष्णवपाकादवैष्णवं वारयतीति, पाकसमीपे स्थितं गच्छन्तं वा अवैष्णवं वारयतीत्यर्थः। वैष्णवादन्नं गृह्णातीति, वैष्णवे स्थितमन्नं गृह्णातीत्यर्थः। संसाराद्वैष्णवं त्रायत इति, संसारे स्थितं वैष्णवं त्रायत इत्यर्थः ॥

१०३८। अथ शिक्षा। शिक्षायां साध्यायां गुरुरवधिः स्यात्। अधीत इति, इङ्—अध्ययनेऽदादिः। अधीत इति, दिग्दर्शनमात्रं, अतो वैष्णवाद्गीतां पठति, शृणोति, जानातीत्याद्यपि ज्ञेयम्। अशिक्षायामिति, अशिक्षायान्तु गुरुत्वस्याप्यभिधानं नास्तीति, नटस्य गीतं शृणोतीत्यत्र कर्मणो ज्ञानस्य विषयत्वेऽपि नटस्य नावधित्वमिति। शृणोतीति, श्रु—श्रवणे स्वादिः। अत्र श्रुधातुर्न शिक्षार्थः, किन्तु श्रवणेन्द्रियव्यापारार्थः। एष इति, एषोऽवधिः। ज्ञानस्येति विषय इति शेषः। ततश्च वैष्णवाद्-गीतामधीत इति, वैष्णवेन ज्ञातां गीतां ततोऽधीत इत्यर्थः।

१०३९। प्रदे। प्रदेयेनाभिसंवध्यमानं प्रदेयाभिसंवध्यमानम्। प्रभुनामाधिकारोऽयम्। प्रदेयलक्षणमाह— प्रदेयमिति। पुनर्ग्रहणेच्छा-

## १०४०। सम्प्रदाने चतुर्थी।

वैष्णवः कृष्णाय सर्वस्वं ददाति; श्रीकृष्णश्चानूराय प्रहारमदात्; कंसाय भयमदात्। प्रदेयत्वं विना तु न—रजकस्य वस्त्रं ददाति; हन्तुः पृष्ठं ददाति॥ १०४०॥

---

त्यागपूर्वकमिच्छया यद्दीयते, तदात्यन्तिकदेयमिति। तेनेति, तेन आत्यन्तिकदेयेन यत् कारकमभिसंवध्यते, अभि सर्वतोभावेन सम्बन्धविषयीक्रियते इत्यस्यार्थं स्पष्टयति—यद्देयतया सम्पाद्यते इति। तत् आत्यन्तिकं देयं यद्देयतया यत्सम्बन्धितया सम्पाद्यते सम्बन्धीक्रियते, तत् कारकं सम्प्रदानसंज्ञं स्यादित्यर्थः॥

१०४०। सम्प्र। सम्प्रदाने चतुर्थी विष्णुभक्तिः स्यात्। ददातीति, डुदाञ्—दाने जुहोत्यादिः। अदादिति भूतेशे, देयेत्यकृत्वा यत् प्रदेयेति कृतं तत्प्रयोजनमाह—प्रदेयत्वं विना त्विति। रजकस्य वस्त्रं ददातीत्यत्र वस्त्रस्य देयत्वमस्त्येव, किन्तु प्रदेयत्वं नास्ति, पुनर्ग्रहणात्। हन्तुः पृष्ठं ददातीत्यत्र पृष्ठस्य देयत्वमस्तेव, किन्तु प्रदेयत्वं नास्ति इच्छाया अभावात्। हन्तुर्हननकर्तुः। एवं राज्ञो दण्डं ददातीति। कालापाः सूत्रं न बहुमन्यन्ते, तेतु व्युत्पत्तिलभ्यत्वात् सर्वं साधयन्ति। तद्यथा—सम्यक्प्रकर्षेण दीयते यस्मै तत् सम्प्रदानमिति। 'अनुमन्त्रनिराकर्तृप्रेरकं त्यागकारणम्। व्याप्तेनाप्तं ददातेस्तु सम्प्रदानं प्रकीर्तितम्॥ सम्प्रदानं तदेव स्यात् पूजानुग्रहकाम्यया। दीयमानेन संयोगात् स्वामित्वं लभते यदि॥ अनुमन्तृ यथा—गुरवे गां ददाति। गुरुस्तु प्रार्थितः सन्ननुमन्यते। अनिराकर्तृः यथा—कृष्णायार्घं ददाति, कृष्णो हि अर्घार्थं न प्रेरयति, नानुमन्यते च, केवलं दीयमानं वस्तु न निराकरोति। प्रेरकं यथा—ब्राह्मणाय वस्त्रं ददाति, भो राजन्! मह्यं वस्त्रं देहीति राजानं प्रेरयति, ततो राजा वस्त्रं ददातीत्यर्थः। राज्ञो दण्डं ददाति, अत्र पुजानुग्रहकाम्या नास्ति। पूजा यथा—कृष्णाय धूपं ददाति। अनुग्रहो यथा—भृत्याय वस्त्रं ददाति। काम्या यथा—दास्यै मालां ददाति। 'स्व-स्वत्वे विद्यमाने हि परस्वत्वं न विद्यते। परित्याज्यं प्रदानञ्चेदौदासीन्यान्न

१०४१। रुच्यर्थैरिच्छन्।

रुचिरत्र रुचधातुः, स चानेकार्थत्वात् स्वविषयेच्छादानमाह। स च तदर्था रुच्यर्था धातवस्तैर्योगे इत्यर्थः। कृष्णाय रोचते स्वदते वा दुग्धं, स्वाद्यत्वेन सम्पद्यत इत्यर्थः। रुच्यर्थैरिति किम्? कृष्णो दुग्धमभिलषति। स्पष्टतार्थोऽयं योगः॥ १०४१॥

१०४२। स्पृहेरभीष्टम्।

कृष्णाय स्पृहयति गोपी॥ १०४२॥

---

सिध्यति।' स्वस्वत्वध्वंसपूर्वकपरस्वत्वजनकीभूत-सङ्कल्पविशेषो दानम्। एतेन त्यागजन्यस्य फलभागित्वं सम्प्रदानत्वम्॥

१०४१। रुच्यर्थः। रुच-दीप्तौ धातुनिर्देशे इक्। रुचेरर्थ इव अर्थो येषां ते रुच्यर्था इति मध्यपदलोपी पीताम्बरः। तैर्योगे इच्छन् इच्छां कुर्वन् सम्प्रदानं स्यात्। सचेति, सच रुच-धातुः। स्वेति, स्वो विषयो यस्याः सा स्वविषया, स्वविषया चासाविच्छा चेति स्वविषयेच्छा, तस्या दानमिति विग्रहः। स्व आत्मीयः स चात्र रुच्यर्थकर्त्तैव। सचेति, सच रुचिः। कृष्णाय रोचते स्वदते वा दुग्धमिति, दुग्धं कृष्णाय सम्प्रति इच्छां ददातीत्यर्थः। इच्छायाः प्रदेयत्वेन इच्छाविषयीभूतं दुग्धमपि कृष्णस्यैवेत्यभिप्रेत्य फलितार्थमाह—स्वाद्यत्वेनेति, कृष्णस्येति शेषः। अभिलषतीति वाञ्छतीत्यर्थः। ननु रुच्यर्थानां दानार्थत्वात् पूर्वेणैव सम्प्रदानं सेत्स्यति, किमनेन सूत्रेणेति चेत्तत्राह—स्पष्टतार्थ इति। यत्नलभ्या या शाब्दी प्रतीतिः स्पष्टा भवतीति। ननु स्फुरदधरसीधवे तव वदनचन्द्रमा रोचयति लोचनचकोरम्, इत्यत्र अण्यन्ते रुच्यर्थैर्योगे इच्छाकर्तृत्वात् लोचनचकोरस्य सम्प्रदानत्वं, सीधोः कर्तृत्वं सम्भवति, ण्यन्तेऽपि लोचनचकोरस्यैव सम्प्रदानत्वम्, अकर्मक-गति-ज्ञानेत्यनेन सीधोः कर्मत्वं स्यात्। तर्हि कथं सीधवे इत्यत्र सम्प्रदानचतुर्थी। सत्यम् उच्यते। सीधव इत्यत्र मया सम्प्रदानचतुर्थी न विवक्षिता, किन्तु तादर्थ्य-चतुर्थीति न कश्चिद्विरोधः॥

१०४२। स्पृहे। स्पृहेः प्रयोगे स्पृहधातुकर्त्तुरभि सर्वतोभावेनेष्टः

१०४३। धारेर्धनिकः।

विष्णुमित्राय शतं धारयते, शतं गृहीत्वा देयत्वेन स्वीकुर्वन्नास्ते इत्यर्थः ॥ १०४३ ॥

१०४४। क्रुधाद्यर्थानां यं प्रति कोपः।

कृष्णाय क्रुध्यति द्रुह्यति असूयति ईर्ष्यति कंसः। क्रोधोऽपराधासहनम्; द्रोहोऽपकारः; असूया गुणेऽपि दोषारोपणी दृष्टिः। ईर्ष्या परोत्कर्षासहनी दृष्टिः। चन्द्रगोमी तु कर्मत्वमप्याह। 'यं प्रति कोपः' इति किम्? प्रणयेन प्रियामीर्ष्यति कृष्णः, ईर्ष्यतीवेत्यर्थः ॥ १०४४ ॥

---

इच्छाविषयीभूतं सम्प्रदानं स्यात्। अतः कर्मणि क्तप्रत्ययात् कर्मबाधकमिदं सूत्रम्। स्पृहयतीति, स्पृह–ईप्सायां चुरादित्वाण्णिः। कर्मणोऽभावात् न कर्मप्रत्ययः। अतो भावे कृष्णाय स्पृह्यते गोप्येति ॥

१०४३। धारे। धारेः प्रयोगे धनिको धनस्वामी सम्प्रदानं स्यात्। षष्ठीबाधकोऽयं योगः। विष्णुमित्रायेति खादक इति शेषः। धारयत इति, धृ–धारणे चुरादिः। धृञ् च धृत्वा धृक् चेति कविकल्पद्रुमः। आत्मपदन्तु अन्येषां मते नेति ज्ञेयम्। आख्यातप्रकरणे णेरुभयपदमित्यत्र अन्यमतानुसारेण चोरयत इत्यपि लिखितम्। धारयतीति वा पाठः। धृधातुरत्र गृहीत परिशोधनार्थः, अतएवाह—शतं गृहीत्वेति ॥

१०४४। क्रुधा। क्रुध आदिर्येषां ते क्रुधादयः। तेषामर्था इव अर्था येषां तेषां धातूनां प्रयोगे यं प्रति कोपः स सम्प्रदानं स्यात्। क्रोधस्तावत् कोप एव द्रोहादयोऽपि कोपप्रभवत्वात् कोपः। अतो यं प्रति कोप इत्येवोक्तम्। क्रुध्यतीति, इति क्रुध–रोषे, द्रुह्यतीति जिघांसायां दिवादी। असूयतीति, असूशब्दात् 'कण्ड्वादिभ्यो यक् करोत्यर्थे' इत्यनेन यकि कृते असूयधातुर्निष्पद्यते। ईर्ष्यतीति, ईर्ष्या–ईर्ष्यायां भ्वादिः। क्रोधादीनां लक्षणमाह—क्रोध इति। अपराधस्य असनमिति विग्रहः। अपकारोऽमङ्गलोत्पादना तदिच्छा च। दृष्टिर्ज्ञानं, 'दृष्टिर्ज्ञानेऽक्षिण दर्शने' इति नानार्थवर्गः। असूयागुणेऽपि दोषारोप इति वा पाठः। 'असूया तु

१०४५। क्रुधद्रुहोः सोपेन्द्रयोः कर्मैव।

कंसमभिक्रुध्यति, प्रतिद्रुह्यति ॥ १०४५ ॥

१०४६। राधीक्षोर्यस्य विप्रश्नः।

शुभमशुभं वा दैवनिरूपणं विप्रश्नः। कृष्णाय राध्यति, राध्नोति वा गर्गः, विविधं पृष्टो गर्गः कृष्णार्थं दैवं पर्यालोचयतीत्यर्थः। एवमीक्षते। पुरुषोत्तमस्त्वाह (पा १।४।३९)—'किमयं करोति नेति' पृच्छतीत्यर्थः।

"संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे।
ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् ॥"
( भट्टिः ८।७६ )

इति का कीदृशी भवति इति विविध-प्रश्नेन विचार्यमित्यर्थः ॥

---

दोषारोपो-गुणेष्वपी'त्यमरः। ईर्ष्या परोत्कर्षासहनमिति वा पाठः अक्षान्तिरीर्ष्ये'त्यमरः। चन्द्रगोमी त्विति, चन्द्रगोमी पण्डितविशेषः। तन्मते कृष्णं क्रुध्यतीत्याद्यपि। प्रणयेनेति, प्रणयेन प्रेम्णा ईर्ष्यतीवेति, इव-शब्दः सादृश्यद्योतकः ॥

१०४५। क्रुध। सोपेन्द्रयोः क्रुधद्रुहोः प्रयोगे कर्मैव स्यात्। प्रतिद्रुह्यतीति प्रत्यपकरोतीत्यर्थः ॥

१०४६। राधी। राधीक्षोः प्रयोगे यस्य विप्रश्नः स सम्प्रदानं स्यात्। विप्रश्नलक्षणमाह—शुभमिति। दैवमदृष्टं, निरूपणं पर्यालोचनम्। राध्यति राध्नोतीति, राध-साध—संसिद्धौ दिवादिः स्वादिश्च, अविशेषात् द्वयोरेवात्र ग्रहणं, धातूनामनेकार्थत्वात्। राधधातूरत्र दैव-निरूपणार्थः। ततश्च कृष्णाय राध्यति, राध्नोति वा गर्गः, कृष्णस्य दैवं पर्यालोचयतीत्यर्थः। प्रश्नं विना दैवनिरूपणं न सम्भवतीत्यभिप्रायेण विविधं पृष्टो गर्गः कृष्णार्थमित्युक्तः। कृष्णार्थमिति पृष्ट इत्यनेन योज्यम्। विविधमिति क्रियाविशेषणं, विविधं नानाप्रकारं, पृष्टः प्रश्न-विषयीकृतः नन्दादिनेति शेषः। विविधं पृष्ट इति दृष्ट्वा विप्रश्नशब्दस्य विविधप्रश्नार्थत्वं नाशङ्कनीयं, किन्तु दैवनिरूपणमेव विप्रश्न इति ग्रन्थ-

१०४७। श्लाघह्नुङ्स्थाशपां ज्ञापयितुमिष्टः।

कृष्णाय श्लाघते, कृष्णं श्लाघमानस्तां श्लाघां कृष्णं ज्ञापयितुमिच्छतीत्यर्थः। आत्मश्लाघामेव कृष्णं ज्ञापयितुमिच्छतीति कश्चित्। एवं कृष्णाय ह्नुते, कृष्णं निह्नुवानस्तां निह्नुतिमित्यादि पूर्ववत्। इदमहं ह्नुवे इति कृष्णं ज्ञापयतीति कश्चित्। कृष्णाय तिष्ठते, कृष्णं प्रति स्वाभिरुचिं प्रकाशयतीत्यर्थः। कृष्णाय शपते, कृष्णं प्रति शपथं कुर्वन् सत्यमिदमिति ज्ञापयतीत्यर्थः। आभ्यामात्मपदञ्च प्रकाशनशपथयोर्वाच्यम्। "द्विषद्भ्यश्चाशपंस्तथा"इति भट्टिः(१७।४), त्वाक्रोशेऽपि दृश्यते। 'ज्ञापयितुमिष्टः' इति किम्? कृष्णं श्लाघते॥

---

कृतामभिप्रायः। एवमीक्षत इति। ततश्च कृष्णाय ईक्षते गर्गः, अर्थस्तु पूर्ववत्। पुरुषोत्तमः, पण्डितविशेषः। किमयमिति, अयं जनः किं करोति किं न करोति इतीति मनसि कृत्वेति शेषः, पृच्छतीत्यर्थः। राध्यति राध्नोतीत्यनयोः ईक्षत इत्यस्य चेति शेषः। किमिति वितर्के इत्यर्थः। इत्यनन्तरम् इति-शब्दप्रयोग उचित इति ज्ञेयम्। तस्मात् यस्य सम्बन्धे इति पृच्छति तस्य सम्प्रदानत्वमिति। ग्रन्थकृतोऽत्रापि सन्मतिर्वर्तते इति भट्टिप्रयोगं दर्शयति ईक्षितव्यमिति इत्यर्थ इति ईक्षितव्यमित्यस्येति शेषः॥

१०४७। श्लाघ। श्लाघादीनां प्रयोगे ज्ञापयितुमिष्टः सम्प्रदानं स्यात्। श्लाघत इति, श्लाघृ—स्तुतौ भ्वादिरात्मनेपदी। तां कृष्णसम्बन्धिनीम्। ह्नुत इति, ह्नुङ्—अपनयने अदादिः। निह्नुतिर्गोपनम्। इत्यादि पूर्ववदित्यनेन कृष्णमेव ज्ञापयितुमिच्छतीत्यर्थ इति लभ्यते। तिष्ठत इति, ष्ठा—गतिनिवृत्तौ। शपत इति, शप्—आक्रोशे, शपथं शपनम्। 'शपनं शपथः पुमानित्यमरः'। आभ्यामिति। तत्र स्था-धातोः 'स्थो निर्णितौ प्रकाशने प्रतिज्ञायामि'त्यनेन। शप्धातोः 'शपेस्तु शपथे तत् स्यात्' इत्यनेनेति। दृश्यत इति, सम्प्रदानमिति शेषः। अशपन्निति, आक्रोशं कृतवन्त इत्यर्थः। कृष्णं श्लाघत स्तौतीत्यर्थः॥

१०४८। प्रत्याङ्-श्रुवः प्रार्थयिता।

भक्तायाभीष्टं प्रतिश्रृणोति कृष्णः, आश्रृणोति वा ; प्रार्थयन्तं तं प्रति प्रतिज्ञां करोतीत्यर्थः। प्रार्थयितात्र प्रतिज्ञात्राचकः। 'पूर्वस्य प्रार्थनादेः कर्ता सम्प्रदानम्' इति पुरुषोत्तमः (पा १।४।४०); तेन "श्रृण्वद्भ्यः प्रतिश्रृण्वन्ति" इति भट्टिः ( ८।७७ ) ॥ १०४८॥

१०४९। अनुप्रतिगृणः प्रशस्यमानवचनः।

गीताविदेऽनुगृणाति, प्रतिगृणाति ; तां शंसन्तं प्रोत्साहयतीत्यर्थः। 'शब्देनानुगच्छति' इति तु पुरुषोत्तमः (पा १।४।४१); तेन "गृणद्भ्योऽनुगृणन्त्यन्ये" इति भट्टिः (८।७७)। श्नानिर्देशान्नेह—गीताविदमनुगिरति ॥ १०४९ ॥

१०५०। अशिष्टव्यवहारे सम्प्रयच्छतेः सम्प्रदाने तृतीया।

---

१०४८। प्रत्याङ्। प्रत्याङ्-पूर्व श्रुस्तस्येति, 'कुप्रादयो मध्यपदलोपश्चे'त्यनेन श्यामरामः मध्यपदलोपश्च। प्रत्याङ्पूर्वस्य श्रुवः प्रयोगे प्रार्थयिता सम्प्रदानं स्यात्। प्रतिपूर्व आङ्पूर्वश्च श्रुरभ्युपगमे वर्तते इत्याह—प्रार्थयन्तमिति। तं भक्तम्। प्रार्थयन्तमित्यत्र प्रार्थयमानमिति पाठः सभ्यः। चुरादौ अर्थधातोरात्मपदिषु लिखितत्वात्। यद्वा, पारायणमते चुरादि-मात्रस्यार्थधातोरुभयपदित्वमिति दुर्गमसङ्गमनी। पुरुषोत्तममतमाह—पूर्वस्येति। शृण्वद्भ्यः पूर्वं प्रार्थयमानेभ्यः प्रतिशृण्वन्ति वयमेतद्वः करिष्याम इत्यङ्गीकारं कुर्वन्ति ॥

१०४९। अनु। प्रशस्यमानं वचनमुक्तिर्यस्य स प्रशस्यमानवचनः। अनु-प्रति-पूर्वस्य गृणः, गृणातेः प्रयोगे प्रशस्यमानवचनं सम्प्रदानं स्यात्। अनुगृणातीति, गॄ—शब्दे क्र्यादिः। तां गीतां शंसन्तं कथयन्तम्। गृणद्भ्यः कथयद्भ्यः, अनुगृणन्ति शब्देनानुगच्छन्ति। अनुगिरतीति ग—निगरणे तुदादिः ॥

१०५०। अशिष्ट। अषिष्टस्य व्यवहारोऽशिष्टव्यवहारस्तस्मिन्

विष्णोर्बहिर्मुखैस्तत्प्रसादं संप्रयच्छते, तेभ्यो ददातीत्यर्थः। कथं पशुं रुद्राय ददातीत्यर्थे पशुना रुद्रं यजते ? पशुना देयेन रुद्रं प्रीणयतीति सोपानं कर्तव्यम् ॥ १०५० ॥

### अथ करणम्

१०५१। कर्तुरधीनं प्रकृष्टं सहायं करणम्, अनुक्ते कर्तरि करणे च तृतीया।

कृष्णो गा वनाद् यमुनातीरे वंशीवाद्येन आह्वयते, हस्तेनोत्तरीयं

---

गम्ये संपूर्वस्य यच्छतेः प्रयोगे सम्प्रदाने तृतीया भवति। अशिष्टः मूर्खः। तत्प्रसादं विष्णुप्रसादम्। बहिर्मुखेभ्यो विष्णुप्रसाददानम् अशिष्टव्यवहारः। संप्रयच्छत इति, दाण–दाने। 'दाणः सा चेच्चतुर्थ्यर्थे' इत्यनेन आत्मपदम्। संयच्छते स्म गोप्येष्टं, श्रीशः संयच्छते श्रियै इति कस्यचिदुदाहरणम्। अत्र श्रीशस्य गोपीं गोपीं प्रत्यभिष्टदानम् अशिष्टव्यवहारः श्रियं प्रति न। कथमिति। यजधातोर्दानार्थत्वात् पशुं रुद्राय यजते इति भवितुमर्हतीत्ययमत्र विरोधः। सिद्धान्तमाह—पशुनेति, देयेन पशुनेत्यर्थः। देयेनेत्यर्थलब्धम्। सोपानमिति, सिद्धान्तस्येति शेषः। 'आरोहणं स्यात् सोपानमित्यमरः'। पशुना रुद्रं प्रीणयतीत्यस्यापि पशुं रुद्राय ददातीत्येव फलितार्थः, अतएव पशुं रुद्राय ददातीत्यर्थ इत्युक्तम्, अन्यथा तद्विरुद्धं स्यादिति ज्ञेयम्। प्राचीनैरप्येतत्प्रकारान्तरेणोक्तम्। तद्यथा, यजतेः कर्म करणं सम्प्रदानस्य च कर्म। यजतेः कर्मसम्प्रदानयोर्युगपत् करणकर्मणी ॥

१०५१। कर्तु। कर्तुरधीनमायत्तम्। तथाच—क्रियासाधने प्रकृष्टं सहायं यत् कारकं तत् करणसंज्ञं स्यात्। ननु कर्तुः सहायं करणमित्येवास्तु लक्षणमतेन सूत्रेण सर्वत्र प्रयोगसिद्धिः स्यात्, प्रकृष्टस्य किं प्रयोजनम्? सत्यम्। यदा एतद् ब्रवीषि तदा हस्तपादादिकानान्तु चालनरूपेण सहायत्वं किं विद्यते ? अतो हेतोः प्रकृष्टमित्युक्तम्। अधीनमिति किम्? अधीनमित्युक्तं कृष्णेन सुखं लभते लोक इत्यत्र कृष्णस्य

भ्रमयति । 'कर्तुरधीनम्' इति किम् ? कृष्णप्रसादात् सुखं लभते । पञ्चमी वक्ष्यते ( का॰ प्र॰ १०८३ ) ॥ १०५१॥

विवक्षान्तररहितत्वेन सुखसिद्धौ योग्यतया हेतुतायाम् अनधीनत्वेऽपि सहायत्वांशमवलम्ब्य योऽभिव्याप्तिदोषस्तत्परिहाराय । 'अलक्ष्ये लक्षण-गमनमतिव्याप्तिः', तर्हि कर्तुरधीनं प्रकृष्टमित्येवास्तु लक्षणं, सहायमिति किं ? सहायमित्युक्तं वह्निना सिञ्चतीत्यादौ तद्दोषपरिहाराय इति ज्ञेयम् । करणं तावद्द्विविधं मुख्यं गौणञ्च । आद्यं स्वरूपभिन्नं यथा—वंशीवाद्यम्; अन्यत् स्वरूपाभिन्नं स्वरूपभूतमिति यावत्, यथा—श्रीकृष्णहस्तः । यथा प्राचीनैरुक्तम्—यद्यपि क्रियासिद्धौ बहूनि साधनानि व्याप्रियन्ते तदा तेषु मध्ये अनेनैतत् करोमीति प्रकृष्टोपकारकमन्तरङ्गं विवक्षितं यत् तत् करणम् । एतेनाऽधीनप्रकृष्टयोरपवादं वारयति । तथाचोक्तम्—कारकव्यवधानेऽपि क्रियानिष्पत्तिकारणम् । यद्वै विवक्षितं तेषु करणं तत् प्रकीर्तितम् । स्थाल्या पच्यत इत्येषां विवक्षा दृश्यते यतः ॥ यदाह—कारणं खलु सर्वत्र कर्तृव्यापारगोचरः । तिरोदधाति कर्तारं प्राधान्यं तन्निबन्धनम् ॥ ननु काष्ठैः स्थाल्यामोदनं पचतीत्यत्र काष्ठाना-मुज्ज्वलनेन स्थाल्यामोदनं पचतीति, दात्रतीव्रेण धान्यं लुनाति इति च कथं नोक्तम् ? तस्य तस्यैव करणत्वसम्भवादिति चेत्तदैवं वाच्यम् । नहि स्वव्यापारव्यवायः कारकाणां कारकतामुपहन्ति सर्वत्र तथा भावप्रसङ्गात् । नहि पाके करणभूतानां काष्ठानां ज्वलनमवान्तरव्यापारस्तेषां करणत्व-मपहन्ति । तदुक्तम्—ज्वलनाज्जायमानेऽपि पाके तत्समनन्तरम् । काष्ठानां करणत्वं यत् प्रागुक्तं तन्न हीयते, वह्निना दह्यते, काष्ठं कुद्दालेन निखन्यते । अश्वेन नीयते ग्रामो धान्यं, दात्रेण लूयते । आह्वयत इति ह्वेञ्–स्पर्धायां शब्दे च, ञित्वादात्मपदं, ह्वेञ् धातुरत्र शब्दार्थः ; अत्र स्पर्धाभावात् 'आङ्वः स्पर्धे' इत्यनेनात्मपदं न भवतीति ज्ञेयम् । उत्तरीयं वस्त्रविशेषः । 'संव्यानमुत्तरीयञ्चेत्यमरः' । भ्रमयतीति भ्रमु–अनवस्थाने, प्रेरणे णिः । लभत इति, डु-लभष्–प्राप्तौ । पञ्चमी वक्ष्यते इति । 'गुणाद्धेतोः पञ्चमी तृतीया वे'त्यनेनेति शेषः । प्रसादशब्दोऽत्र प्रसन्नता-वाचकः । 'प्रसादस्तु प्रसन्नतेत्यमरः' ॥

## १०५२। दिवः करणं कर्म वा।

अक्षान् दीव्यति कृष्णः, अक्षैर्वा। अत्र केचित् युगपदेव संज्ञाद्वयं मन्यन्ते, तेन मनसादेवीत्यत्र कर्मोपपदे प्रत्ययः सिध्यति। अक्षैर्देवयते कृष्णो राधया इत्यत्र प्रयोज्यस्य कर्मत्वं न भवतीति। अस्मन्मते तु भवत्येव; "तेनादुद्यूषयद्रामं मृगेण मृगलोचना" इति भट्टिप्रयोगः (५।४६) ॥ १०५२॥

## १०५३। परिक्रयणे करणं सम्प्रदानं वा।

शतेन शताय वा परिक्रीतः; शतेन वेतनेन नीयते काले वशीकृत इत्यर्थः ॥ १०५३ ॥

## १०५४। स्तोकाल्पकृच्छ्रकतिपयेभ्यः करणे पञ्चमी वा असत्ववचने।

स्तोकान्मुक्तः स्तोकेन वेत्यादि। सत्वं द्रव्यं, तत्र तु—स्तोकेन विषेण हतः। स्तोकात् विषादित्यपि केचित्॥ १०५४ ॥

---

१०५२। दिवः। दिवः प्रयोगे करणं कर्म वा स्यात्। पक्षे करणमेव। दीव्यतीति, दिवु—क्रीड़ादिषु। अक्षशब्दः पाशकवाचकः। युगपदेव संज्ञाद्वयं मन्यन्ते, तेन युगपत् संज्ञाद्वयमनेन मनसा दीव्यतीति या सा मनसादेवीत्यत्र कर्मोपपदे कर्मण्यण्णित्यनेन अण् प्रत्ययः सिध्यति। अक्षैर्देवयते कृष्णो राधया इत्यत्र प्रयोज्यस्य कर्मत्वं न भवति। अस्मन्मते तु भवत्येव। 'तेनादुद्यूषयद्रामं मृगेण मृगलोचना। मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनम् ॥' इति भट्टिप्रयोगात्। दिवस्तेन करणमिति कालापाः ॥

१०५३। परि। परिक्रयणेऽर्थे करणं सम्प्रदानं वा स्यात्। पक्षे करणमेव। परिक्रीत इति डु-क्रीञ्—द्रव्यविनिमये, कर्मणि क्तः, नियते नियमविषयीकृते ॥

१०५४। स्तोका। स्तोकादिभ्य उत्तरे असत्ववचने गुणवचने

१०५५। तृप्त्यर्थकरणे षष्ठी वा।

नवनीतानां तृप्तो वालगोपालः, नवनीतैर्वा ॥ १०५५ ॥

१०५६। अज्ञानार्थस्य ज्ञः करणं वा।

पक्षे सम्बन्धषष्ठ्येव। गङ्गाजलेन जानीते, तस्य वा। तद्वुद्ध्या जलान्तरे प्रवर्तत इत्यर्थः ॥ १०५६ ॥

१०५७। अपादान-सम्प्रदान-करणाधार-कर्मणाम्।
कर्तुश्चान्योऽन्यसन्देहे परमेकं प्रवर्तते ॥
(क्रमदीश्वरीय-कारिका)

---

करणे पञ्चमी वा स्यात्। स्तोकादयः शब्दाः स्वभावादेव गुणवचनाः, यदा त्वभेदोपचारात् स्तोकादिगुणवति सत्वे वर्तन्ते, तदा सत्ववाचिनो भवन्ति। मुक्त इति, मुच्लृ—मोक्षणे क्तः। तत्र द्रव्ये ॥

१०५५। तृप्त्य। तृप्तिरर्थो येषां ते तृप्त्यार्थास्तेषां करणे षष्ठी वा स्यात्। तृप्त इति, तृप—प्रीणने कर्तरि क्तः ॥

१०५६। अज्ञा। अज्ञानमर्थो यस्य तस्य ज्ञाधातोः प्रयोगे करणं वा स्यात्। पक्षे, सम्बन्धषष्ठ्येवेति अकर्मकत्वादिति भावः। जानीत इति, 'ज्ञोऽकर्मकापह्नवार्थतः' इत्यनेनात्मपदम्। तस्य गङ्गाजलस्य, तद्बुद्ध्या गङ्गाजलवुद्ध्या ॥

१०५७। अपा। षट् कारकाण्युक्त्वा तेषामन्योऽन्यसन्धेहव्यवस्थामाह—अपादानेति। परमेकं प्रवर्तत इति, परत्वमत्र स्वीयलिखनक्रमेण ज्ञेयम्। कृष्णाय निवेद्य गृह्णातीति अत्र अपादानसम्प्रदानयोरन्योऽन्यसन्देहे परत्वात् सम्प्रदानं वर्तते। शार्ङ्गेण शरान् विक्षिपतीति कृष्ण इति शेषः। शार्ङ्गेण धनुषा शरान् वाणान् संयुज्य विक्षिपति, अत्रापादानकरणयोरन्योऽन्यसन्देहे परत्वात् करणं प्रवर्तते। उपविश्येति, अत्र अपादानाधिकरणयोरन्योऽन्यसन्देहे परत्वादधिकरणम्। यमुनामिति, अत्र अपादानकर्मणोरन्योऽन्यसन्देहे परत्वात् कर्म। अस्त्येष इति, अत्र कर्मकर्त्रोरन्योऽन्यसन्देहे परत्वात् कर्तृ। पुर्वं वाक्यार्थेनैवान्वय इति यदुक्तं

कृष्णाय निवेद्य गृह्णाति ; शार्ङ्गेण शरान् विक्षिपति ; उपविश्योत्तिष्ठति कृष्णसमीपे ; यमुनां प्रविश्य निःसरति ; अस्त्येष कृष्णः पश्य । निवेद्य कृष्णाद्गृह्णाति इत्यादिके तु कृष्णाय निवेद्य इत्यर्थाद् गम्यते॥ क्व गच्छसि, क्व गतः—इत्यादौ गमनपूर्विका स्थितिर्बोध्यते ॥ १०५७ ॥

**॥ इति कारकाणि ॥**

---

तेनापि अस्त्येष कृष्णः पश्येति सिध्यतीति ज्ञेयम् । यत्र विशेषलक्षणमस्ति तत्र अन्योऽन्यसन्देहाभावः । अतः कृष्णाय श्लाघत इत्यादौ सम्प्रदानमेव कर्मबाधकम् । कृष्णायाहूय नवनीतं ददाति, वैष्णवाय पूजयित्वा सर्वस्वं दीयते । धृत्वा नन्दकेन दैत्यं लुनातीत्यादौ दानादेरेव साध्यत्वान्मुख्यत्वम्, आह्वानादेस्तु तदर्थतया गौणत्वम्, अतः कृष्णादेः सम्प्रदानत्वाद्येव । निवेद्येति, निवेद्य कृष्णाद्गृह्णातीत्यादिके प्रयोगे तु अर्थाद्गम्यत इति कृष्णादिति प्रयुक्तमेव कृष्णायेत्यर्थाल्लब्धम्, अतोऽन्योऽन्यसन्देहाभावादत्र न कोऽपि विरोध इति भावः । कृष्णाय निवेद्य इत्यत्र कृष्णाय प्रदीयेति वा पदम् । ननु क्व गच्छसीत्यादौ कर्म भवतु, कथमधिकरणमिति चेत्त्राह—क्व गच्छसीति । अयं गमिर्गमनपूर्वकस्थित्यर्थः, अतोऽधिकरणमेव । बोध्यत इति गमधातुनेति शेषः ॥

## अथ उपपद-विष्णुभक्तयः

१०५८। कृष्णप्रवचनीयैर्योगे द्वितीया।

ते चैते—

**लक्षणवीप्सेत्थम्भूतेष्वभिर्भागे परिप्रती।**
**अनुरेषु सहार्थे च हीने तूपश्च कथ्यते॥**

कर्मप्रवचनीया इति प्राञ्चः। लक्षणं चिह्नम्; वीप्सा युगपत् सजातीयानां व्याप्तिः; इत्थम्भूतं प्रकारविशेषप्राप्तिः। एतेष्वभिः कृष्णप्रवचनीयः। तत्र लक्षणे—कृष्णमभि पतति पुष्पवृष्टिः। वीप्सायाम्—गोपीं गोपीमभि क्रीड़ति कृष्णः। इत्थम्भूते—कृष्णमभि भक्तोऽसौ, भक्तत्वप्रकारविशेषं प्राप्त इत्यर्थः। लक्षणादिषु

---

१०५८। कृष्ण। अथेति उपपदसम्बन्धिन्यो विष्णुभक्तय इति विग्रहः। याः पदान्तरसम्बन्धेन क्रियन्ते ता उपपदविष्णुभक्तयः। तत्र द्वितीयामाह—कृष्णप्रवचनीयैर्योगे द्वितीया स्यात्। ते चैत इति, ते च कृष्णप्रवचनीया एते अनन्तरं वक्ष्यमाणा इत्यर्थः। लक्षणेति, लक्षणञ्च वीप्सा च इत्थम्भूतश्च तेषु। लक्षणादीणां लक्षणान्याह—लक्षणं चिह्नमित्यादि। चिह्नं ज्ञापकं हेतुरिति यावत्। युगपदेकदा। एतेष्विति, एतेषु विषयभूतेषु। कृष्णमभि पतति पुष्पवृष्टिरिति, अत्र कृष्णो लक्षणं पुष्पवृष्टिर्लक्ष्या तयोः। कृष्णं प्राप्य पततीति, प्राप्तिक्रियाजनितलक्ष्यलक्षणभावोऽभिशब्देन द्योत्यते। गोपीं गोपीमभि क्रीड़ति कृष्णः, गोपीं गोपीं व्याप्य क्रीड़तीति। आभीक्ष्ण्यवीप्सयोरिति द्विरुक्तिः। क्रीड़तीति क्रीड़—विहारे। अत्र द्विरुक्त्यैव वीप्सा द्योत्यते, अभिशब्दस्य विहारक्रियया सह गोपीनां यः सम्बन्धः स द्योत्यः। कृष्णमभि भक्तोऽसाविति। भक्तस्य जनस्य कृष्णविषया भक्तत्वप्रकारविशेषप्राप्तिः। अत्रापि कृष्णं प्राप्य भक्तत्वप्रकारविशेषप्राप्तिरिति, प्राप्तिक्रियाजनित एव कृष्णस्य भक्तप्रकारविशेषप्राप्तेश्च विषयविषयिभावः। सम्बन्धोऽभिशब्देन द्योत्यते। भागे चेति, भागे विषयभूते भागोऽंशस्तस्मिन् परिप्रती इति कृष्णप्रवचनीयाविति शेषः। कृष्णं परीत्यादि पूर्ववदिति, कृष्णं परि

भागे च परिप्रती, तत्र त्रिषु 'कृष्णं परि' इत्यादि पूर्ववत्। एवं प्रति भागे - यत् कृष्णं परि स्यात्, यत् कृष्णं प्रति स्यात्, तद्देहि। अत्र धातुयोगाभावेनोपेन्द्रत्वाभावात् षत्वाभावः। अनुर्लक्षणादिषु, चतुर्षु, सहार्थे च। अत्र चतुर्षु 'कृष्णमनु' इत्यादि पूर्ववत्। सहार्थे --कृष्णमनु गच्छन्ति गोपाः। चकाराद्धेतौ च—हरिभक्तिमनु सुखम्। अनुश्चोपश्च हीने—अन्वर्जुनं योद्धारः, उपार्जुनम् ॥१०५८॥

१०५९। अतिरतिक्रमणे।

सर्वानतिराजते कृष्णः। राधिकामधि वचनजातमित्यपि दृश्यते ॥

पतति पुष्पवृष्टिः। गोपीं गोपीं परि क्रीड़ति कृष्णः। कृष्णं परि भक्तोऽसाविति। यत् कृष्णं परि स्यात्, यत् कृष्णं प्रति स्यादिति यद्वस्तु कृष्णस्य भागः स्यात्, कृष्णं भजते इत्यर्थस्तत् कृष्णाय देहीति शेषः। अत्र भजनक्रियाजनितः स्वस्वामिभावः सम्बन्धः परिणा प्रतिना न द्योत्यते। ननु परि स्यादित्यत्र, प्रति स्यादित्यत्र च 'उपेन्द्रप्रादुर्भ्यामस्तेः सः षो य-सर्वेश्वरयोरि'त्यनेन षत्वं कथं न स्यादिति चेत्तत्राह—अत्र धातुयोगाभावेनेति। अनुरिति, सहार्थे चेति सहार्थे द्योत्ये च कृष्ण-प्रवचनीय इति शेषः। कृष्णमन्वित्यादि, पूर्ववदिति। कृष्णमनु पतति पुष्पवृष्टिरित्यादि। कृष्णमनु गच्छन्ति गोपा इति कृष्णेन सह गच्छन्ती-त्यर्थः। अत्र 'सहार्थैरप्रधाने तृतीये'त्यनेन तृतीयायां प्राप्तायां द्वितीया-विधानम्। चकारादिति, चकारात् हेतौ च द्योत्ये अनुः कृष्णप्रवचनीयः। हरिभक्तिमनु सुखमिति, हरिभक्त्या सुखमित्यर्थः। अत्र 'हेतोस्तृतीये'त्य-नेन तृतीयायां प्राप्तायां द्वितीयाविधानम्। हीन इति, हीन उत्कृष्टापेक्षः। ततश्च हीनोत्कृष्टसम्बन्धे द्योत्ये इत्यर्थः। अन्वर्जुनमिति, अर्जुनाद्धीना इत्यर्थः। एवमुपार्जुनमिति ॥

१०५९। अति। अतिक्रमणे द्योत्ये अतिः कृष्णप्रवचनीयः स्यात्। सर्वानतीति, सर्वानतिक्रम्येत्यर्थः। राजत इति, राजृ—दृप्तौ। इत्यत्रापि दृश्यत इति, तस्मात् अधेरपि कृष्णप्रवचनीयत्वं शिष्टप्रयोगे दृश्यत इति। अत्र लक्ष्यलक्षणभावः सम्बन्धः ॥

१०६०। कालाध्वनोरत्यन्तव्याप्तौ द्वितीया, अपवर्गे तु तृतीया।

तत्र गुणेन व्याप्तौ—सर्वायुर्विष्णुभक्तः; क्रियया—यामं हरिपूजकः; द्रव्येण—सर्वदिनं हरिर्नैवेद्यम्। एवं क्रोशं यमुना कुटिलेत्यादि। जन्म जन्म यदभ्यस्तमिति तत्सम्बन्धमरणपर्यन्तमित्यर्थः। अत्र तु कर्मत्वाभावात् कालाध्वभावदेशानामित्यादिवन्न तत्प्रत्ययाः। भावे तु—मासमास्यते, क्रोशं सुप्यते। फलप्राप्त्या क्रियासमाप्तिरपवर्गस्तस्मिंस्तु तृतीया—अहोरात्रैश्चतुःषष्ठ्या सर्वमध्यैष्ट माधवः॥१०६०

१०६०। काला। कालाध्वनोरत्यन्तव्याप्तौ सत्यां द्वितीया स्यात्, कालाध्वाभ्यामिति शेषः। अध्वशब्देन तत्परिमाणमुच्यते। अत्यन्तव्याप्तिरविच्छेदव्याप्तिः। कालाध्वनोरत्यन्तव्याप्तौ अपवर्गे तु गम्ये कालाध्वभ्यां तृतीया स्यात्। अत्यन्तव्याप्तिर्गुणेन क्रियया द्रव्येण च भवतीति क्रमेणोदाहरणत्रयं दर्शितम्। सर्वायुर्विष्णुभक्त इति साध्यत्वेन ज्ञानं भक्तिरिति भक्तेर्गुणत्वम्। गुणगुणिनोरभेदोपचारात् भक्तशब्दस्यापि गुणवाचकत्वम्। क्रिययेति व्याप्ताविति शेषः। एवं द्रव्येणेत्यत्रापि। यामं हरिपूजक इति, यामः प्रहरः। 'द्वौ यामप्रहरौ समावित्यमरः'। पूजात्र क्रिया। धर्मधर्मिणोरभेदोपचारात् पूजकशब्दस्यापि क्रियावाचत्वम्। क्रोशं यमुना कुटिलेत्यत्र कौटिल्यरूपेण गुणेन व्याप्तिः। जन्म जन्मेति, तदिति तस्य जन्मनः सम्बन्धिमरणपर्यन्तं कालं व्याप्य तदभ्यस्तं स्यादिति शेषः। तत्सम्बन्धं मरणपर्यन्तमिति वा। तदा तस्याभ्यस्तस्येति सुगमः। एतत्तु लक्षणयैवेति ज्ञेयम्। अतो जन्मशब्दस्यापि कालवाचित्वमिति। तत्प्रत्ययाः कर्मप्रत्ययाः। सुप्यत इति, ञि-स्वप्–शये। देशभावाभ्यामपि द्वितीयेति जुमरमतम्। तेन कुरून् सुप्यते, गोदोहनमास्यत इत्याद्यपि भवतीति ज्ञेयम्। अपवर्गलक्षणमाह—फलप्राप्त्येति। तस्मिन् अपवर्गे। अहोरात्रैरिति, चतुःषष्ठ्येति, 'विंशत्याद्याः सदैकत्वे' इत्येकत्वं चतुःषष्ठ्या सङ्ख्यया उपलक्षितैरहोरात्रैर्वा इत्यपि मतम्। अनपवर्गे तु वत्सरं व्याकरणमधीतं न चानेन ज्ञातमित्यर्थः। अत्र द्वितीयैव॥

१०६१। अभित आदिभिर्योगे द्वितीया।

अभितः कृष्णं, परितः कृष्णम्, उभयतः कृष्णं, सर्वतः कृष्णम्; समया कृष्णं, निकषा कृष्णं गोपाः—एतद्द्वयं निकटार्थे। हा कृष्ण-विमुखं, धिक् कंसं, तस्मै तस्मै च कुत्सास्तु इत्यर्थः; अत्रैवार्थे हा-शब्दयोगे क्षीरस्वामिना द्वितीया-दर्शितत्वात्। कथं 'हा रमणीनां गतः कालः?' 'हा देवि! धीरा भव'? पूर्वत्र वाक्यार्थेनैव सम्बन्धात्, उत्तरत्र सशोकसम्बोधने हाशब्दात्। कथं 'धिगास्तां मम वीर्यस्य'? तत्र तादर्थ्ये एवेष्टिः, अत्र तु सम्बन्धविवक्षा। 'धिग् जाल्म' इत्यादौ धिक्शब्देन न योगः, किन्तु प्रथमं कुत्सयित्वा पश्चात् सम्बोध्यते। उपर्युपरि सर्वं हरिः। एवमध्यधि। कथम् 'उपर्युपरि

---

१०६१। अभि। व्यक्तार्थमेतत्। अभित आदयश्चत्वार-स्तस्यन्ताः। तसिस्तद्धितः। अभित इत्यव्ययम् उभयत इत्यर्थः। परित इति चाव्ययं सर्वत इत्यर्थः। कृष्णस्य गोपा इति सर्वत्र योज्यम्। एतदिति, एतत् शेषोक्तं द्वयं शब्दद्वयम्। शब्दद्वयमिति वा पाठः। समयति, निकषेति चाव्ययम्। तस्मै कृष्णविमुखाय, तस्मै कंसाय च। हेति धिगिति चाव्ययम्। हा कृष्णविमुखं इत्यस्य तस्मै कुत्सास्त्वित्यर्थ-मुक्त्वा हेतुमाह—अत्रैवार्थ इति। कथमिति, द्वितीया कथं न भवतीत्यय-मत्र विरोधः सिद्धान्तमाह—पूर्वत्रेति। पूर्वत्र हा रमणीनां गतः काल इत्यत्र वाक्यार्थेनैव सम्बन्धादिति हाशब्दस्येति शेषः। तस्मात् हाशब्देन योगाभावात् नात्र द्वितीयेति भावः। रमणीनां गतः काल इति हा कुत्सास्तु इति निर्गलितार्थः। उत्तरत्र हा देवि! धीरा भवेत्यत्र। सशोकसम्बोधने हाशब्दादिति तस्मात् हाशब्दस्य कुत्साद्योतकत्वाभावात् न द्वितीयेति भावः। हा कष्टं, हे देवि तं धीरा भवेत्यर्थः। एवं भट्टौ हा पितः क्वासीति। कथमिति, अत्र धिक्शब्दस्य कुत्सार्थत्वेऽपि कथं द्वितीया न भवतीत्ययं विरोधः सिद्धान्तमाह—अत्रेति। अत्र धिक् कंसमित्यत्र उदाहरणे तादर्थ्ये एव द्वितीयेष्टिरिति, अतः तस्मात् इति चतुर्थ्यन्तमुक्तं तदर्थमित्यर्थः। इष्टिरिच्छा। अत्रतु सम्बन्धविवक्षेति

बुद्धीनां चरन्तीश्वरबुद्धयः' ? उपर्युपर्यादिषु सामीप्यार्थ एवेष्टिः, अत्र तु वीप्सामात्रमिति। अधोऽधो गोवर्धनं वृक्षाः। हरिभक्ति यावत् सुखम्। 'वुभुक्षितं न प्रतिभाति किञ्चित्', तस्मै न किञ्चिद्रोचते इत्यर्थः। अन्तरेण हरिं न सुखं, तं विना न सुखमित्यर्थः। अन्तरा तां मां हरिः, तव मम मध्ये हरिरित्यर्थः। षष्ठ्यपवादत्वाद्-युष्मदस्मद्भ्यामेव द्वितीया, हरेस्तु नाममात्रार्थस्यान्तरङ्गत्वात् प्रथमैव। एवमन्यत्रापि॥ १०६१॥

१०६२। सहार्थैरप्रधाने तृतीया।

सहार्थो द्विविधः। क्रियागुणद्रव्यैस्तुल्ययोगिता विद्यमानता-

---

तस्मात्तादर्थ्यविवक्षां विना न द्वितीयेति भावः। धिग् जाल्मेत्यादाविति। न योग इति जाल्मेत्यस्येति शेषः। कुत्सयित्वेति निन्दित्वेत्यर्थः। कुत्स—अवक्षेपणे चुरादिः। त्वत्कार्यं धिक् पश्चात् हे जाल्म इत्यर्थः। उपर्युपरि सर्वं हरिरिति, 'उपर्यध्यधसां सामीप्ये' इत्यनेन द्विरुक्तिः। कथमिति, बुद्धीनां उपर्युपरि ईश्वरबुद्धयश्चरन्तीति। अत्र द्वितीया भवितु-मर्हतीति विरोधः। सिद्धान्तमाह—उपर्युपर्यादिष्विति। अत्रतु वीप्सामात्र-मिति तस्मात् सामीप्यार्थभावात् न द्वितीयेति। उपर्युपरीति, 'आभीक्ष्ण्य-विप्सयोरि'त्यनेन द्विरुक्तिः, सर्वेषां बुद्धिनामुपर्युपरि अग्रे अग्रे ईश्वरबुद्धय-श्चरन्तीत्यर्थः। उपरि बुद्धिनामुपरि चरन्तीत्यन्वयेन उपर्यपरियोगाभावान्न द्वितीयेति जुमरमतम्। अधोऽध इति 'उपर्यध्यधसां सामीप्ये' इत्यनेन द्विरुक्तिः। उपर्युपरीति अधोऽध इति चाव्ययम्। हरिभक्ति यावत् सुखमिति, सुखं हरिभक्तिपर्यन्तमित्यर्थः। यावदित्यव्ययम्। वुभुक्षित-मिति अत्र प्रतिभातीत्यनेन योगे द्वितीया प्रतिभातीति, प्रतिपूर्व-भा—दीप्तौ अदादिः। अन्तरेणेति, अन्तरेति चाव्ययम्। षष्ठ्यपवादात् षष्ठीबाधकत्वात् द्वितीयाया इति शेषः। हरेरिति, पञ्चम्यन्तम्। अन्त-रङ्गत्वादिति स्वल्पाश्रितत्वादेवान्तरङ्गत्वमिति। स्वल्पाश्रितमन्तरङ्गमि-त्युक्तम्॥

१०६२। सहा। सहशब्दस्यार्थ इवार्थः येषां ते सहार्थस्तैः सहार्थै-

मात्रञ्च। आद्यो यथा—रामेण सह क्रीड़ति कृष्णः, रामेण सह सुन्दरः ; रामेण सह गोमानिति च। कृष्णस्यात्र क्रियादिसम्बन्धः साक्षादेव, रामस्य तु प्रतीयमान इति रामस्याप्राधान्यम्। किन्तु प्रथमद्वये कर्त्तृसहभावः, तृतीये तु सम्बन्धिसहभावो ज्ञेयः। एवं कर्म-सहभावेऽपि ; यथा—गानेन सह नृत्यं करोतीत्यादि। एवं समं, सार्धं, साकं, सजूः। सहार्थे गम्येऽपि—रामेण क्रीड़ति। 'अप्रधाने' इति किम्? रामेण सह कृष्णस्य गौः, गोसम्बन्धे प्राधान्यात् कृष्णान्न स्यात्। सहोभौ चरतो धर्ममिति तु द्वयोरपि प्राधान्यात्। अन्त्यो यथा—वालकृष्णेन सह दधि मथ्नाति यशोदा इत्यादि॥ १०६२

---

योगे अप्रधाने तृतीया स्यात्। सहार्थ इति, सह-शब्दस्यार्थ इत्यर्थः। तुल्ययोगितेति तुल्ययोग इत्यर्थः। आद्यः क्रियागुणद्रव्यैस्तुल्ययोगितारूपः सहार्थः। क्रियागुणद्रव्यसम्बन्धेन क्रमेणोदाहरणत्रयं रामेण सह क्रीड़ति कृष्ण इत्यादि। क्रियादीत्यादिपदेन गुणद्रव्ययोर्ग्रहणम्। रामस्याप्राधान्य-मिति. अतो रामे तृतीयेति। किन्त्विति, प्रथमद्वये रामेण सह क्रीड़ति, रामेण सह सुन्दर इति द्वये। कर्त्रा सह सहभावः, कर्त्तृसहभावः। कर्त्रा रामेण सह कृष्णस्य सहभाव इत्यर्थः। रामेण सह सुन्दर इत्यत्र कर्त्तृसह-भावो नातिवक्तव्य इति ज्ञेयम्। अत्र गुणिसहभाव इति। तृतीये रामेण सह गोमानित्यत्र सम्बन्धिना सह सहभावः सम्बन्धिसहभावः, गोसम्बन्धिना रामेण सह कृष्णस्य सहभाव इत्यर्थः। सहभाव इति, सम्बन्धे इत्यर्थः। गोमानिति गावोऽस्य सन्तीत्यर्थे 'तदस्यास्त्यस्मिन् वा मतुरि'त्यनेन सम्बन्धे मतुप्रत्ययस्तद्धितः। गानेन सहेति, अत्र नृत्यस्य क्रियासम्बन्धः साक्षादेव गानस्य तु प्रतीयमान इति गानस्याप्राधान्यम्। एवमिति ततश्च रामेण समं क्रीड़तीत्यादि॥

सहार्थ इति, सहार्थे गम्येऽपि सति सहार्थयोगेऽप्रधाने ततीया स्यात्। रामेणेति, रामेण सहेत्यर्थः। गोसम्बन्ध इति, यद्यपि विशेषणत्वात् कृष्णस्य गां प्रत्यप्राधान्यं, तथापि गोसम्बन्धे रामं प्रति प्राधान्यमेव, अतो गोसम्बन्धे प्राधान्यादित्युक्तम्। न स्यादिति तृतीयेति शेषः। सहोभाविति, सह

१०६३। तुल्यार्थैः षष्ठी च, तुलोपमाभ्यान्तु षष्ठ्येव।

रामेण तुल्यः कृष्णः, रामस्य तुल्यो वा। एवं सदृश इत्यादि। नेह—रामस्य तुला लक्ष्मणः। 'तुलोपमाशब्दाविह तुल्यार्थौ' इति भाषावृत्तिः (२।३।७२)। अर्थग्रहणाद्द्योतकत्वे तु न—कृष्ण इव प्रद्युम्नः ॥ १०६३ ॥

१०६४। येनाङ्गेन निन्दा तस्मात्तृतीया।

दन्तेन वक्रः कारूषः। अङ्गधर्मोऽत्राङ्गिन्यारोप्यते, किन्तु षष्ठी-स्थानापवादः सर्वं, तेन नेह—दन्ता वक्रा अस्य ॥ १०६४ ॥

---

एकदा। अत्र उभयोरेव क्रियासम्बन्धः साक्षाद्विवक्षितः। द्वयोरपीति, द्वयोरेवेत्यर्थः। द्वयोरेवेति वा पाठः। प्राधान्यात् तृतीया न स्यादिति शेषः। अन्त्यक्रियाद्रव्यैर्विद्यमानतामात्रम्। सह वै दशभिः पुत्रैर्भारं वहति, गर्दभीति प्राञ्च। विद्यमानेषु दशपुत्रेष्वित्यर्थः ॥

१०६३। तुल्या। तुल्यार्थैः सदृशाभिधायिभिः शब्दैर्योगे तृतीया षष्ठी च स्यात्। तुलोपमेति, व्यक्तार्थमेतत्। नेहेति, तृतीयेति शेषः। तुलेति तुल्य इत्यर्थः। ननु तुलोपमाशब्दौ धर्मवाचिनौ कथं तुल्यार्थौ भवतामिति चेत्तत्राह—तुलोपमाशब्दाविति। तुलोपमाभ्यान्तु षष्ठ्येवे-त्युक्तमतो विनाप्यर्थशब्देन अर्थग्रहणे सिद्धे यदत्रार्थशब्दोपादानं कृतं तत्प्रयोजनमाह—अर्थग्रहणादिति। कृष्ण इवेति, इवशब्दः पदान्तर-सम्बन्धेन सादृश्यद्योतकः, तस्मात् पदान्तरनिरपेक्षा एव ये तुल्यतामाहु-स्तेषामेवात्र ग्रहणमिति सूचनार्थमर्थशब्दोपादानं कृतमिति भावः। सादृश्यं गतमपनिद्रचूतगन्धैरित्यादौ गम्ये सहार्थे तृतीयेति ज्ञेयम् ॥

१०६४। येन। येन अङ्गेन निन्दा तस्मादङ्गात् तृतीया स्यात्। निन्देति अङ्गिन इति शेषः। सूत्रे भवत्यादिक्रियाध्याहारात् येनाङ्गेनेति हेतौ करणे वा तृतीया उदाहरणेतु क्रियापदाध्याहारस्यानभीष्टत्वात् हेतुत्वं करणत्वञ्च नास्तीति लक्षणारम्भः। कारूषो दन्तवक्रः। ननु

१०६५। विशेषलक्षणात्तृतीया।

विशेषप्राप्तिचिह्नादित्यर्थः। कौस्तुभेन भगवन्तमद्राक्षीत्। क्रियाविशिष्टज्ञापकत्वेऽपि—न्यक्षेण वीक्षते कृष्णम्; कार्त्स्न्येन भजति प्रियाम्; "न्यक्षं कार्त्स्न्यनिकृष्टयोः" (अमरकोषः ३।३।२२५)। सुखेन भजति। सुखं भजतीत्यादिकन्तु गुणगुणित्वविकल्पात् ॥१०६५

१०६६। प्रकृत्यादिभ्यस्तृतीया।

---

वक्रशब्दः कथं कारूषस्य विशेषणं सम्भवतु, नहि कारूषो वक्रः, किन्तु तद्दन्त एवेति चेत्तत्राह—अङ्गधर्म इति। षष्ठीति, षष्ठीस्थाने अपवाद इति विग्रहः, षष्ठीबाधकमित्यर्थः। दन्ता वक्रा यस्येत्यत्र दन्तशब्दो न षष्ठीस्थानम्, अतो न तृतीया ॥

१०६५। विशे। व्यक्तार्थमेतत्। विशेषलक्षणादित्यस्यार्थमाह—विशेषेति। सामान्यावगमे इतरेभ्यो यद्व्यवच्छिनत्ति तद्विशेषप्राप्तिचिह्नम्। कौस्तुभेन भगवन्तमद्राक्षीदिति, कौस्तुभस्य देवतान्तरेभ्यो भगवत्त्वस्य व्यवच्छेदकत्वाविशेषप्राप्तिचिह्नत्वम्। अद्राक्षीदिति, दृशिरत्रोपलब्धिवचनः। ततश्च उपलब्धवानित्यर्थः। क्रियेति, विशेषलक्षणस्य क्रियावैशिष्ट्यज्ञापकत्वेऽपि विशेषलक्षणात् तृतीया स्यादिति शेषः। क्रियाया वैशिष्ट्यं क्रियावैशिष्ट्यं, तस्य ज्ञापकं क्रियावैशिष्ट्यज्ञापकं, तस्य भावस्तत्त्वं तस्मिन् वैशिष्ट्यं वैलक्षण्यम्। न्यक्षेणेति, न्यक्षमत्र कार्त्स्न्यं तदत्र विशिष्टेक्षणक्रियाया विशेषलक्षणं वैशिष्ट्यज्ञापकमपि। कार्त्स्न्येनेति, कार्त्स्न्येन साकल्येन कार्त्स्न्यं भजनक्रियाया विशेषलक्षणं वैशिष्ट्यज्ञापकमपि। सुखेनेति, सुखं भजनक्रियाया विशेषलक्षणं वैशिष्ट्यज्ञापकमपि। ननु तर्हि कथं सुखं भजतीत्यादीति चेत्तत्राह—सुखमिति। गुणगुणित्वविकल्पादिति, सुखादिशब्दानामिति शेषः। गुणश्च गुणी च तयोर्भावो गुणगुणित्वं तस्य विकल्पात्। अयमर्थः—यदा सुखादिशब्दा गुणवचनास्तदा तृतीया, यदा तु गुणिवचनास्तदा तुल्याधिकरणक्रियाविशेषणत्वात् सुखं भजतीत्यादि ॥

१०६६। प्रकृ। इदमपि व्यक्तार्थं। प्रकृत्या स्वभावेन कृष्णः

प्रकृत्या कृष्णः, जात्या गोपालः, जनुषा करुणः, रामेणानुजः, नाम्ना अर्जुनः, आत्मना द्वितीयः, स्वभावेनोदारः, प्रकृत्यादिसम्बन्धेनेत्यर्थः। तृतीयेयं भवत्यादिक्रियया हेतुत्वं गमयतीति कश्चित्। एवं समेन चलति, विषमेण धावति ; समादौ देश इत्यर्थः। समे चलतीत्यादि च दृश्यते। कर्मणी इमे इति केचित्, क्रियाविशेषणे इति कश्चित्। प्रायेण वैष्णवः, वैष्णवताभिव्यञ्जकधर्मप्राचुर्यसम्बन्धेनेत्यर्थः। गोत्रेण गार्ग्यः, अन्वय-सम्बन्धेनेत्यर्थः। एवं भक्त्या पूर्व इत्यादि। तथा द्विःप्रसृतेन फलं क्रीणाति, द्विद्विप्रसृतं फलं क्रीणातीत्यर्थः। पञ्चकेन वत्सान् गृह्णाति कृष्णः, पञ्च पञ्च तान् गृह्णातीत्यर्थः। सतामर्थो हरिभक्त्या सैवार्थ इत्यर्थः॥ १०६६॥

---

श्यामः। जनुषा जन्मना, करुणः करुणान्वितः। उदारो महान्। 'उदारो दातृमहतोरिति नानार्थवर्गः'। तृतीयेयमिति, भवत्यादिक्रिययेति अध्याहृतयेत्यर्थः। गमयति बोधयति। तन्मते प्रकृत्या कृष्ण इत्यादिषु हेतौ तृतीयेति। समादौ देश इति, समे देशे चलति, विषमे देशे धावतीति। तस्मादधिकरणे तृतीयेति। इत्यादीत्यादिपदेन विषमे धावतीति। कर्मणी इमे इति केचिदिति। तन्मते समं चलति, विषमं धावतीति। इमे क्रियाविशेषणे इति कश्चित्, तन्मते व्यधिकरणक्रियाविशेषणत्वात् तृतीयेति। प्रायेणेत्यस्यार्थमाह—वैष्णवेति। गोत्रेण गार्ग्य इति अपत्यं पुत्रप्रभृतिकं गोत्रमिति, गोत्रशब्दो वंशवाची, अतएवाह—अन्वयसम्बन्धेनेत्यर्थ इति। अन्वयशब्दोऽपि वंशवाची। 'सन्ततिर्गोत्रजननकूलान्यभिजनान्वयावित्यमरः'। गार्ग्य इति गर्गस्यापत्यमित्यर्थे 'गर्गादेर्माधव-यरामः' इत्यनेन माधव-यः, वृष्णीन्द्रः। भक्त्या पूर्व इति भक्तिसम्बन्धेनेत्यर्थः। इत्यादिपदेन परिणत्या मधुर इत्याद्यपि। तथेति, द्विः द्विः प्रसृतं फलं क्रीणातीत्यर्थे इत्यनेन तृतीयेयं वीप्सायामिति सूचितम्। द्विःप्रसृतेनेति सविष्णुसर्गः पाठः क्वचिद्दृश्यते, सत्वसभ्य एवेति ज्ञेयम्। द्वित्रिचतुर्भ्यः सुरिति क्रियाभ्यावृत्तौ सुप्रत्ययो भवति, किन्त्वत्र क्रियाभ्यावृत्तिर्न घटत इति। प्रसृतशब्दो निकुब्जपाणिवाचकः।

### १०६७। यदर्थमन्यत्तस्माच्चतुर्थी।

'तादर्थ्ये चतुर्थी' इति प्राञ्चः। उभयत्रापि कार्यरूपात् प्रयोजनाच्चतुर्थीत्यर्थः। मालायै तुलसी, रन्धनाय यमुनोदकम्, हरिप्रीतये हरिं भजति। एवं हरिभक्तिः सुखाय कल्पते, हरेरभक्तिर्दुःखाय सम्पद्यते, तत्तद्रूपेण परिणमत इत्यर्थः। सेवायै गोविन्दं याति, सेवितुमित्यर्थः। एवं पाकाय व्रजतीत्याद्यपि। सम्बन्धविवक्षायाम्—मालायास्तुलसीत्याद्यपि। अभेदविवक्षायाम्–हरिभक्तिः सुखं कल्पते।

---

'पाणिर्निकुब्जः प्रसृतस्तौ युतावञ्जलिः पुमानित्यमरः'। पञ्चकेनेति, पञ्च परिमाणमस्येत्यर्थे कप्रत्ययस्तद्धितः, पञ्चसंख्यः अत्रापि वीप्सायां तृतीया। तान् वत्सान्। सतामिति सैव हरिभक्तिरेव। अभेदे तृतीयेयम् ॥

१०६७। यदर्थ। यदर्थमन्यत् प्रवर्तते तस्माच्चतुर्थी स्यात्। यदर्थमिति, यस्मै इदमर्थे 'इदम्बाच्यार्थशब्देन चे'त्यनेन कृष्णपुरुषः। तादर्थ्य इति, तस्मै कार्यरूपाय इदं तदर्थं, तदर्थमेव तादर्थ्यं, तस्मिन् चतुर्थीति व्याख्याते कारणरूपे निमित्ते चतुर्थी सम्भवतीति चेत्तदैवं वाच्यं, तादर्थ्ये सति कार्यरूपनिमित्ताच्चतुर्थीति। अथवा तत्कारणं परिणामित्वेनार्थं प्रयोजनं यस्य तत् तदर्थं, तस्य भावस्तादर्थ्यं, तस्मिन्नर्थे कृते कार्यरूपात् सम्भवत्येव। अस्माकं मते यत्तच्छब्दग्रहणात् एवम्बिरोधाभावेन सर्वमनवद्यमतएवोक्तम्—उभयत्रापीति। अस्माकं मते प्राचीनानां मते चेत्यर्थः। यदर्थमन्यत् तस्य प्रयोजनत्वमेव भवति, प्रयोजनन्तु कार्यरूपमतएवाह—कार्यरूपात् प्रयोजनाच्चतुर्थीत्यर्थ इति। मालायै तुलसीति तुलस्या माला प्रयोजनम्। एवं सर्वत्र ज्ञेयम्। हरिभक्तिः सुखाय कल्पत इति भेदविवक्षायां हरिभक्तिप्रयोजनं सुखमिति। एवं हरेरभक्तिर्दुःखाय सम्पद्यत इति। कल्पत इति, कृपू–सामर्थ्ये। सम्पद्यत इति, पद–गतौ। तत्तद्रूपेणेति, भक्तिः सुखरूपेण अभक्तिर्दुःखरूपेणेति। तत्तद्रूपेणेति परिणमतीति तत्तद्रूपं सत्परिणामं प्राप्नोतीत्यर्थः। पाकाय व्रजतीति व्रजनस्य प्रयोजनं पाकः। हरिभक्तिः सुखं कल्पत इति, नात्र

अत्र सम्पद्यमानात् क्लप्त्यर्थ योगे इति पृथग्लक्षणं केचिद् विदधति, तदकिञ्चित्करम्, तादर्थ्येनैवेष्टसिद्धेः। अवधिविवक्षायां पञ्चमीति कश्चित्—हरिभक्तेः सुखं कल्पते ॥ १०६७॥

१०६८। उत्पातेन ज्ञाप्याच्चतुर्थी।

शुभाशुभसूचकमाकस्मिकदर्शनमुत्पातः। वाताय कपिलिका विद्युत्, आतपाय लोहिनी विद्युत् ॥ १०६८॥

१०६९। तुमवन्तक्रियान्तरे गम्ये तत्कर्मणश्चतुर्थी।

---

भेदो विवक्षितः, किन्तु कारणमात्रम्। सम्पद्यमानादिति, परिणामात् चतुर्थीति शेषः। तदकिञ्चित्करमिति, किमपि न करोतीत्यर्थः। अतो हेतुमाह—तादर्थ्येनेति। एतद्भवतु। कथं मशकाय धूमः मशकरूपेण परिणमत इत्यर्थः स्यात्, धूमस्य मशकपरिणामित्वाभावात्। उच्यते, यदर्थमन्यदिति सूत्रेण चतुर्थीप्राप्तत्वेऽपि मशकशब्दस्य मशकाभावे लक्षणा मन्येत, अतो मशकवारणरूपेण परिणमते धूम इत्यर्थः। एवं कृष्णाय दुग्धमित्यत्र कृष्णस्य प्रयोजनत्वासम्भवात्। लक्षणया कृष्णशब्देन कृष्णतृप्तिरेवोच्यते इति ज्ञेयम् ॥

१०६८। उत्पा। उत्पातेन ज्ञाप्याद्बोध्यात् चतुर्थी स्यात्। उत्पातलक्षणमाह—शुभाशुभेति। आकस्मिकं दर्शनं यस्येति विग्रहः। ततश्च शुभाशुभसूचकं आकस्मिकदर्शनं आकस्मिकदर्शनविषयः किमपि उत्पात इत्यर्थः। उत्पातस्य शुभसूचकत्वमप्रसिद्धमिति ज्ञेयम्। वाताय कपिला विद्युदिति, कपिला विद्युत् वातं ज्ञापयतीत्यर्थः। कपिला विद्युत् उत्पातः तेन वातो ज्ञाप्यः, अतस्तस्मात् चतुर्थी। कपिला पिङ्गला, लोहिनी रक्तवर्णा। पूर्वेणैव सिद्धे लक्षणमेतत् स्पष्टार्थम्। उत्पातोऽत्र विद्युल्लतादिरूपज्ञापकः तत्क्रियाज्ञापनं ज्ञाप्यम् आतपादिकं कर्म। पुरुषोऽत्र ज्ञाता तत्क्रियाज्ञानं ज्ञेयम्। आतपादिकं कर्म। अत्र ज्ञापकत्वं विशेषण-गुणविशिष्टवैशिष्ट्येनैव नतु स्वरूपत्वेन, अन्यथा सर्वदा उत्पातस्वरूपत्वेन ज्ञापकत्वापत्तिरिति ॥

१०६९। तुमवन्त। तुमप् अन्ते यस्य तत्तुमवन्तम्। विवक्षित -

कृष्णाय गोकुलं याति, कृष्णं द्रष्टुं, सेवितुं वेत्यर्थः। कृष्ण-शब्देनात्र दर्शनादिकं लक्ष्यत इत्येके। एवं युद्धाय संनह्यते कृष्णः, युद्धं कर्तुं सन्नाहं वध्नातीत्यर्थः। पत्ये शेते लक्ष्मीः, पतिं रमयितु-मित्यर्थः। हर्यभक्त्ये निन्दति, तां त्याजयितुमित्यथः॥ १०६९॥

१०७०। नम आदिभिर्योगे चतुर्थी।

कृष्णाय नमः, तं प्रति नमस्कार इत्यर्थः। कृष्णाय स्वस्ति, तस्य मङ्गलं भूयादित्यर्थः। गोविन्दाय स्वाहा, तं प्रति समर्पयामी-त्यर्थः। एवं पितृभ्यः स्वधा, इन्द्राय वषट्; कृष्णः कंसायालं, तं प्रति समर्थः। एवं समर्थः, प्रभुः, पर्याप्तो वा कृष्णः कंसाय। प्रादी-

---

क्रियाभ्योऽन्तरं भिन्नं क्रियान्तरम्। तुमवन्तञ्च तत् क्रियान्तरञ्चेति तस्मिन् गम्ये तत्कर्मणश्चतुर्थी स्यात्। कृष्णशब्देनेति, दर्शनादिकं तद्दर्शनादिकम्। तद्दर्शनादिकमिति वा पाठः। तन्मते तादर्थ्ये चतुर्थीति। संनह्यत इति, नह–बन्धने दिवादिरुभयपदी। सन्नाहं कवचम्। पतिं वैकुण्ठनाथम्। तां हर्यभक्तिम्॥

१०७०। नम। नम आदिभिर्योगे चतुर्थी स्यात्। कृष्णाय नमः इति, स-रामान्तमव्ययं प्रणामवाचकमत आह—तं प्रति नमस्कार इत्यर्थ इति। अत्र सम्बन्धषष्ठ्यां प्राप्तायां चतुर्थीविधानम्। नम इति सान्तमव्ययं विशेष्यं प्रणाममाचष्टे, यदा तु दानवाची तन्त्रेण तदपि गृह्यते। दानार्थत्वात् सम्प्रदाने चतुर्थीति कश्चित् स भ्रमी, तस्य सम्प्रदानस्य कारकत्वात् क्रियापदापेक्षा। नास्ति अस्तीत्यादिवत् तिङन्तप्रतिरूपमव्ययमेतत्। ग्रन्थान्तरीयः पाठोऽयं न सर्वत्र, किन्तु साधुः। समर्पणार्थोऽपि नमःशब्दोऽस्ति तेन तद्योगेऽपि चतुर्थी भवति, अतः कृष्णाय पुष्पं नम इति तं प्रति समर्पयामीत्यर्थः। स्वहेति, 'स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधे'ति। पितृभ्यः स्वधेति तान् प्रति समर्पयामीत्यर्थः। एवं इन्द्राय वषडिति। कृष्णः कंसायलमिति, अलंशब्दः समर्थवाची अत आह—तं प्रति समर्थ इति। एवं समर्थ इति। अलंयोगे चतुर्थी भवति तथा समर्थप्रभुपर्याप्तयोगेऽपीति, प्रभुः

नामुर्यादीनामपि क्रिययैकार्थ्यं मन्यन्ते। पाणिनीयानान्तु (२।१।४) 'सुप्सुपेत्यनुवृत्तेस्तिङापि समासः' इति। अतः कृञि नमनार्थं समर्प्य गुणीभूतेन नमःशब्देन कृष्णं नमस्करोतीति कृञ्योगात् कर्मत्वं, कृष्णं नमतीत्यर्थः; वृन्दावनं प्रतिष्ठते, कृष्णमुरीकरोति इतिवत्। 'उपपदविष्णुभक्तेः कारकविभक्तिर्वलीयसी' इति न्यायादित्येके। नारायणाय नमः कुर्यात् इति नमः-शब्दस्यैव कर्मत्वेनागुणिभूतत्वात्। स्वम्भूवे नमस्कृत्येति तु तादर्थ्यात्। वारणार्थे त्वलं-योगे तृतीयैव— कृष्णवैमुख्येनालं, तेन न किञ्चित् प्राप्यमिति हेतुत्वकरणत्वयोरेकतरावगमात्॥ १०७०॥

---

पर्याप्तिश्च समर्थवाची। शक्तप्रोथयोगेऽपि चतुर्थीति जुमरमतम्। शक्तप्रोथावपि समर्थवाचिनौ। प्रभुशब्दस्य समर्थार्थत्वाभावात् ममायं प्रभुरिति भवतीति ज्ञेयम्। अत्र प्रभुशब्दः स्वामिवाचकः। प्रादीनामिति, कृत्प्रकरणे उर्यादिगणो वक्ष्यते। तत्र नमःक्रियया सह ऐक्यार्थ्यं एकार्थतां मन्यन्ते पण्डिता इति शेषः। तस्मात् प्रादीनामुर्यादीनाञ्च क्रियानुगतत्वे पृथगर्थता नास्तीति। पाणिनीयानान्त्विति सुप्सुपेत्यनुवृत्तेरिति पञ्चम्यन्तम् अनुवृत्तिस्तु सुरित्यस्येति ज्ञेयम्। तिङापीति, सुप् इति शेषः। तिङापि सह सुपः समास इति। तस्मात् पाणिनीयानां मतेऽपि तेषां पृथक्त्वं नास्तीति अत इति। अत ऐक्यार्थाद्धेतोः कृञि कृञ्धातौ नमनं प्रणाममर्थं समर्प्य गुणीभूतेन नमःशब्देन सह कृष्णं नमस्करोतीत्यत्र कृञ्योगात् कर्मत्वमित्यर्थः। तस्मात् नमःशब्देन साक्षाद्योगाभावात् गौणमुख्ययोरिति न्यायाच्च कृष्णान्न चतुर्थीति। कृष्णं नमस्करोतीत्यत्र ऐक्यार्थ्यफलेनार्थसमर्पणपूर्वकगुणी भवनेन कर्मत्वं प्रतिपाद्य उदाहरणान्तरं दृष्टान्तरूपेण दर्शयति। वृन्दावनं प्रतिष्ठते, कृष्णमुरीकरोतीतिवदिति तत्र उर्यादीनामैक्यार्थ्यफलमर्थसमर्पणं गुणीभवनञ्च ज्ञेयम्। प्रादीनान्तु क्रियानुगतत्वे अर्थवाचकत्वाभावादर्थसमर्पणं नास्ति, किन्तु ऐकार्थ्यं फलं गुणीभवनमेव ज्ञेयम्। वृन्दावनं प्रतिष्ठत इत्यत्र प्रशब्दः धातूनामनेकार्थत्वाद्गमनार्थो स्थाधातौ तदर्थमात्रद्योतकत्वेन गुणीभूतः। ततश्च प्रतिष्ठत इत्यस्य गच्छतीत्यर्थः।

१०७१। चतुर्थी हिताद्यर्थैः।

सर्वस्मै हिता हरिभक्तिः। हरये वलिः ॥१०७१॥

१०७२। आशिषि चतुर्थी कुशलाद्यैः।

वैष्णवाय कुशलं भूयात्। आयुष्यं भूयादित्यादि ॥ १०७२ ॥

---

अतो वृन्दावनस्य कर्मत्वम्। 'प्रस्थानं गमनं गम इत्यमरः'। कृष्णमुरीकरोतीति, अत्र उरीशब्दोऽङ्गीकारवाची स च अङ्गीकारमर्थं कृञि समर्प्य गुणीभूतः। ततश्च उरीकरोतीत्यस्य अङ्गीकरोतीत्यर्थः। अतः कृष्णस्य कर्मत्वमिति। एवं नमस्कृत्य मुनित्रयमिति ॥

उपपद। उपपदेत्यादिन्यायादिति द्वितीया विभक्तिरिति शेषः। चतुर्थी विभक्तिरत्रोपपदविभक्तिः। नमःशब्दयोगविधानात् नमस्कृतिक्रियासम्बन्धविशेषिकृष्णसम्बन्धित्वात् द्वितीयायास्तु कारविभक्तित्वम्। नारायणायेति अत्र कृतिरेव क्रिया, नतु नमस्कृतिः, कृतेस्तु नमःशब्द एव कर्म, नतु नारायणः, अतो नारायणे न द्वितीया, किन्तु नमःशब्दयोगे चतुर्थीति। ननु तर्हि कथं स्वयम्भुवे नमस्कृत्येत्यत्र चतुर्थी नमस्कृतिक्रियायाः कर्मत्वादिति चेत्तत्राह—स्वयम्भुव इति। तादर्थ्यादिति चतुर्थीति शेषः। वारणार्थे त्वेति वारणेऽर्थे अलंशब्दप्रयोगे सति तृतीयैव भवति, समर्थार्थत्वे एव चतुर्थीविधानादिति शेषः। कृष्णवैमुख्येनालमिति। तेन कृष्णवैमुख्येन किञ्चित् प्राप्यं न भवतीति तेनालमिति तस्मात् कृष्णवैमुख्यं दूरेऽस्त्वित्यर्थः। तृतीयैवेत्युक्त्वा हेतुमाह— हेतुत्वेति। तस्माद्धेतौ करणे वा तृतीयेति ॥

१०७१। चतुर्थी। हितादीनामर्थ इव अर्थो येषां ते हिताद्यर्थास्तैर्योगे चतुर्थी स्यात्। वलिरुपहारः। 'करोपहारयोः पुंसि वलिः प्राण्यङ्गजे स्त्रियामिति नानार्थवर्गः' ॥

१०७२। आशिषि। आशिषि गम्यमानायां कुशलाद्यैर्योगे चतुर्थी स्यात्। आयुष्यमिति 'तस्मै हितमि'त्यर्थे य-रामः। इत्यादीत्यादिपदेन वैष्णवाय भद्रं, शं, सुखं वा भूयादित्याद्यपि। अत्र चतुर्थी वेति जुमर-

१०७३। गम्यस्य यवन्तस्य कर्मणोऽधिकरणाच्च पञ्चमी।

यप्क्त्वादेशः। 'ल्यब्लोपे पञ्चमी' इति पाणिनीयाः। गोवर्धनात् प्रेक्षते कृष्णः, तमारुह्य, तत्रोपविश्येति वा। श्रीकृष्णमुखाब्जात् विराजते हासः' तत्र निःसृत्य इत्यर्थः ॥ १०७३ ॥

१०७४। अन्यार्थादिभिर्योगे पञ्चमी।

अन्यः कृष्णात्, भिन्नो रामात्। एवम् इतरः, प्रतियोगी; इतरोऽर्जुनात्। ऋते इत्यव्ययं वर्जनार्थे। ऋते कृष्णात्, ऋते कृष्णमित्यपि चन्द्रगोमी। आराद्दूरसमीपयोः। तत्र दूरान्तिकार्थति वक्ष्यमाणषष्ठ्यपवादः; आराद्वृन्दावनात्। आरभ्यार्थ-योगेऽपि केचित्। भवादारभ्य विष्णुभक्तः, मासात् प्रभृति दीक्षितः। दिक्-शब्दा अञ्चूत्तरपदा आदाहिप्रत्ययान्ताश्चान्यादयः। पूर्वो व्रजात्।

---

मतम्। अतो वैष्णवस्य कुशलं भूयादित्याद्यपि ज्ञेयम्। आशिषीति किम्? आयुष्यं प्राणिनां घृतम् ॥

१०७३। गम्य। व्यक्तार्थमेतत्। क्त्वादेश इति विग्रहः। प्रेक्षत इति ईक्ष–दर्शने भ्वादिरात्मपदी। तं गोवर्धनं, तत्र गोवर्धने। विराजत इति राजृ–दीप्तौ। तत्र मुखाब्जे। निःसृत्य निर्गत्य ॥

१०७४। अन्या। अन्यस्यार्थो इव अर्थो येषां ते अन्यार्थास्तदा-दिभिर्योगे पञ्चमी स्यात्। इतरः प्रतियोगीति प्रतियोगिशब्दोऽपि अन्यार्थ एव। 'इतरस्त्वन्यनीचयोरिति नानार्थवर्गः'। अन्यार्थादियोगे यतोऽन्यत्वं तस्मादेव पञ्चमी भवतीति ज्ञेयम्। अतएव सुखमेव कृष्ण-भक्तस्य इतरवदभक्तस्येत्यत्र अभक्तान्न पञ्चमी, किन्तु यतोऽन्यत्वं तस्मात् सुखादेवेति। आत्मपदं विवृणोति। ऋते इत्यव्ययं वर्जनार्थ इति अन्यादिरूपो वर्तते इति शेषः। ऋते कृष्णमित्यपीति तन्मते पञ्चमी द्वितीया च भवतीति। क्रमदीश्वरस्यापि एतदेव मतम्। फलति पुरुषाराधनमृत इति प्रयोगोऽपि क्रमदीश्वरेण दर्शितः। दूरसमी-

शब्दग्रहणात्—रामः कृष्णात् पूर्वः, प्राग्दिनकतिपयात्। 'अतस्यर्थ-योगे षष्ठी चे'ति वक्ष्यमाणापवादोऽयम्। आदाही तद्धितावदूरदूरयोः। तदन्ते चाव्यये ज्ञेये। दक्षिणा व्रजात्; दक्षिणाहि व्रजात्॥१०७४॥

---

पयोरिति वर्तत इति शेषः। तत्र आराच्छब्दयोगे। दूरेति, दूरान्तिकार्थबहिर्योगे षष्ठी पञ्चमी चेति लक्षणम्। तस्मादाराद्योगे न यष्ठीति। आरभ्येति, आरभ्येत्यर्थस्यार्थ इव अर्थो यस्य तद्योगेऽपि पञ्चमी भवति। भवात् शिवात्। प्रभृतिशब्द आरभ्यार्थः। दिक्शब्दा इति दिग्वाचकाः शब्दा इत्यर्थः। अञ्चुः उत्तरपदं येषां त इति। आत्प्रत्ययान्ता आहिप्रत्ययान्ताश्च। शब्दग्रहणादिति दिश् इत्युक्तेऽपि दिग्वाचकग्रहणे सिद्धे यच्छब्दग्रहणं तस्माद्धेतोरित्यत्र तदुद्भवोऽपि गृह्यते इत्यर्थः। राम इति पूर्वः पूर्वकालजः। एवमुत्तरादियोगेऽपि पञ्चमी। प्रागिति, प्र-पूर्वादञ्च् धातोः क्विप्, न-रामहरः. तदन्तात् प्राच्शब्दात् दिक्शब्देभ्यः 'सप्तमी-पञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरि'ति अस्तातिः। 'अञ्चतेर्महाहरः' इति तस्य महाहरः प्रागिति। ननु दिक्शब्देनैव प्राग्दिनकतिपयादित्यादौ पञ्चमी स्येत्सति, अञ्चूत्तरपदानामन्यादित्वेन किमिति चेत्तत्राह—अतस्यथति षष्टी चेत्यत्र चरामो लिपिकरप्रमादकृत इति ज्ञेयम्। प्रयोजनाभावाल्लक्षणे चरामस्यानुक्तत्वात्। अस्तातेरतस्यार्थत्वेन षष्ठी स्यात्। तद्बाधनार्थमिदं तस्मात् प्रागादियोगे न षष्ठीति। आदाही इति, तद्धितौ तद्धितप्रत्ययौ। अदूरदूरयोरिति अदूरे दूरे च अर्थे विहिताविदत्यर्थः। अत्र आत् अदूरे दूरे च आहिस्तु दूर इति। तदन्ते इति तौ आदाही अन्ते ययोस्ते। दक्षिणा व्रजादिति 'दक्षिणाददूरे आरामः' इति आरामः। दक्षिणाहि व्रजादिति, 'आहिश्च दूरे' इति आहिः। व्रजस्यादूरवर्तिन्यां दक्षिणस्यां दिशि। व्रजस्य दूरवर्तिन्यां दक्षिणस्यां दिशीत्यर्थः। आदाही अपि अतस्यार्थौ, अतः षष्ठी स्यात्। तद्बाधनार्थमन्यादित्वम् अन्यथा दिक्शब्दत्वेनैव पञ्चमी स्यात्। अञ्चूत्तरपदा दिक्शब्दा एव गृह्यन्ते, तेन कृष्णेन कृष्णस्य वा सध्र्यङ् इत्यत्र न पञ्चमी, किन्तु तुल्यार्थत्वात् तृतीयाषष्ठ्यौ॥

१०७५। पृष्टाख्याताभ्यामवधिभ्यां पञ्चमी।

कुतो भवान्? वृन्दावनात्। अत्रधिभ्यां किम्? कस्यायं शालग्रामः? मम॥ १०७५॥

१०७६। अपपरियुक्तात् पञ्चमी वर्जने।

अप वैकुण्ठात्, परि वैकुण्ठात् संसारः॥१०७६॥

१०७७। आङ्युक्तात् पञ्चमी मर्यादाभिविध्योः।

अभिविधिरभिव्याप्तिः। आ सागराद्गङ्गा, आ समस्ताद्विष्णुः॥ १०७७॥

१०७८। प्रतियुक्तात् पञ्चमी प्रतिनिधिप्रतिदानयोः।

श्रेष्ठस्य सदृशः प्रतिनिधिः। प्रतिदानं मूल्यम्। प्रद्युम्नः कृष्णात् प्रति। तुलसीपत्रात् आत्मानं प्रतियच्छति हरिः॥ १०७८॥

---

१०७५। पृष्टा। पृष्टश्च आख्यातश्च ताभ्यामवधिभ्यामुत्तरे पञ्चमी स्यात्। कुतो भवान्, वृन्दावनादिति अत्र पृष्टावधिः किम्-शब्दः, आख्यातावधिर्वृन्दावनम्। आगमनादिति क्रियाप्रयोगेतु 'अपायादिष्ववधिरपादानमि'त्यनेनैव सिध्यति, तस्मात् क्रियायाः प्रयोगे पञ्चम्यर्थमिदं सूत्रम्। कस्यायमिति पृष्टाख्यातयोः किमस्मदोरवधित्वं नास्ति॥

१०७६। अप। वर्जनेऽर्थे वर्तमानाभ्याम् अपपरियुक्तादुत्तरे पञ्चमी स्यात्। अप वैकुण्ठात् परि वैकुण्ठादिति, वैकुण्ठं वर्जयित्वेत्यर्थः॥

१०७७। आङ्। मर्यादा च अभिविधिश्च तयोर्वर्तमानेन आङा युक्तादुत्तरे पञ्चमी स्यात्। मर्यादा सीमा। आ सागराद्गङ्गेति, सागरपर्यन्तमित्यर्थः। आ समस्ताद्विष्णुरिति, समस्तमभिवाप्येत्यर्थः। मर्यादाभिविध्योरिति, विशेषणमर्थान्तरनिरासार्थं तेन आ पिङ्गल इत्यत्र न पञ्चमी, ईषत् पिङ्गल इत्यर्थः॥

१०७८। प्रति। प्रतिनिधि-प्रतिदानयोर्वर्तमानेन प्रतिना युक्तादुत्तरे पञ्चमी स्यात्। श्रेष्ठस्य सदृशः प्रतिनिधिरिति, कृष्णस्य प्रतिनिधित्वाभावान्निकृष्टसादृश्येन भवतीति ग्रन्थकृतामाशयः। सादृश्यमात्रे

१०७९। यतः कालाध्वनोर्मानं तस्मात् पञ्चमी, कालात्तु सप्तमी, अध्वनः प्रथमा च।

शयन्याः प्रबोधनी मासचतुष्टये। मथुरायाः गोवर्धनो योजनद्वयं योजनद्वये वा॥ १०७९॥

१०८०। पृथङ्नानायोगे पञ्चमी तृतीया च, विनायोगे द्वितीया च।

आद्यौ रहितार्थौ, विना त्वन्यार्थः। पृथक् कृष्णात्, पृथक् कृष्णेनेत्यादि। विना कृष्णात्, कृष्णेन, कृष्णं वा। त्रिष्वपि द्वितीयेति केचित्॥ १०८०॥

१०८१। हेतोस्तृतीया।

विवक्षान्तररहितः फलसिद्धौ योग्यो हेतुः। कृष्णेन सुखं, सुखसिद्धौ कृष्णो योग्य इत्यर्थः। एवं श्रद्धया हरिभक्तिः॥ १०८१॥

---

भवतीति जुमरमतम्। प्रद्युम्नः कृष्णात् प्रतीति कृष्णस्य सदृश इत्यर्थः। तुलसीपत्रादिति भक्ताद्गृहीतस्य तुलसीपत्रस्य आत्मानं मूल्यं यच्छति ददाति, तस्य मूल्यरूपेणात्मना परिशोधनं करोतीत्यर्थः। सम्बन्धषष्ठ्यां प्राप्तायां पञ्चमीविधानम्। यद्यपि प्रद्युम्ने आत्मनि च प्रतियोगो वर्तते तथापि कारकविभक्त्या प्रथमया द्वितीयया च पञ्चमी बाध्यते॥

१०७९। यतः। कालस्य अध्वनश्च मानं परिमाणं, तस्मात् पञ्चमी स्यात्। कालात्तु सप्तमी स्यात्। अध्वनः सप्तमी प्रथमा च स्यात्। यत इति, यदपेक्ष्येत्यर्थः। शयन्याः शयनैकादश्याः प्रबोधन्युत्थानैकादशीति॥

१०८०। पृथक्। व्यवतार्थमेतत्। विनायोगे पञ्चमी, तृतीया द्वितीया च भवति। आद्यौ पृथङ्नानाशब्दौ इत्यादीत्यादिपदेन नाना कृष्णात्, नाना कृष्णेनेति। त्रिष्वपि पृथङ्नानाविनाशब्देष्वपि विद्यमानेषु नाम्न इति शेषः। केचिदिति जुमरादय इत्यर्थः। त्रिष्वपीत्यत्र त्रिभिरपीति वा पाठः॥

१०८२। ऋणात् पञ्चमी।

परार्धादिव बद्धोऽसौ भवेद्भक्तिलवाद्धरिः। कथं शतेन बन्धितः ? हेतुकर्तृतया विवक्षितत्वात् ॥ १०८२ ॥

१०८३। गुणाद्धेतोः पञ्चमी तृतीया वा।

अवैष्णवत्वात् संसारी, अवैष्णवत्वेन वा। अव्यभिचारेण ज्ञापकश्च हेतुः। गोवर्धनोऽयं कृष्णवान् सर्वाकर्षिवेणुशब्दात्,

---

१०८१। हेतोः। हेतोस्तृतीया स्यात्। हेतुलक्षणमाह— विवक्षान्तरेति। अन्तरस्य करणादेर्विवक्षा वक्तुमिष्टा इत्यर्थे राजदन्तादित्वाद्विवक्षायाः पूर्वनिपातः, तस्माद्विवक्षान्तरं तेन विवक्षान्तरेण कारणत्वादिति विवक्षया विहितहेतुत्वेनैव विवक्षित इत्यर्थः। अनिष्पादयन्नपि फलं योग्यतामात्रेण हेतुर्भवतीति सूचयितुं योग्य इत्युक्तं तदुदाहरणम्। श्रद्धया हरिभक्तिरिति, श्रद्धा क्वाप्यकुर्वत्यपि हरिभक्तिं तत्कारणयोग्यतामात्रेण हेतुर्भवति। न वाच्यं भवतीत्यादि क्रियासम्बन्धेन कारणत्वेनैव तृतीया सिध्यतीति हेतुकरणयोर्भेदात्। तथाहि यदधीनः कर्ता स हेतुः करणन्तु कर्त्रधीनमिति ॥

१०८२। ऋणात्। हेतुरित्यनुवर्तते। ऋणाद्धेतोरुत्तरे पञ्चमी स्यात्। गृहीतमपरिशुद्धं ऋणं ऋणमुच्यते। परार्धादिवेति। हरिभक्तिलवाद्बद्धो भवेदिति, बन्धने भक्तिलवस्य ऋणस्व हेतुत्वम्, अतस्तृतीयायां प्राप्तायां पञ्चमी। लवो लेशः। बन्धनन्तु न लेशानुरूपमित्याह— परार्धादिवेति, भक्तिपरार्धादिवेत्यर्थः। परार्धशब्दः संख्याविशेषवाची। सेवां मनागपि कृतां बहुधाभ्युपैतीति शास्त्रवाक्यम्। कथमिति सिद्धान्तमाह—हेत्विति। हेतुकर्तृतया प्रयोजककर्तृतया विवक्षितत्वात् सेत्स्यतीति शेषः। बन्धितः इति ण्यन्तात् क्तः ॥

१०८३। गुणात्। गुणवाचकाद्धेतोरुत्तरे पञ्चमी तृतीया वा भवति। वाशब्दश्चार्थः पञ्चमी तृतीया चेत्यर्थः: पञ्चमी तृतीया वेत्यत्र पञ्चमी वेति वा पाठः। अवैष्णवत्वात् संसारी इति संसारित्वसिद्धौ अवैष्णवत्वं योग्यमित्यर्थः। अव्यभिचारेणेति, चकारः समुच्चयार्थः।

तच्छब्देन वा। अत्र कृष्णो नास्ति अनुपलब्धेः, अनुपलब्धया वा। द्रव्यादपि दृश्यते—'पर्वतोऽयं वह्निमान् धूमात्' इति ॥ १०८३ ॥

व्यभिचारोऽनन्यत्र ज्ञानसन्दीपनम्। अथवा उक्ताऽनन्यथारूपं नियम इति यावत्। ज्ञापक इति, अनुमेयस्येति शेषः। गोवर्धनोऽयमिति कृष्णवत्वमनुमेयम् अव्यभिचारेण तज्ज्ञापकः सर्वाकर्षिवेणुशब्दः। अतस्तस्मात् पञ्चमी। सामान्यवेणुशब्दस्य अव्यभिचारेण ज्ञापकता न घटत इति सर्वाकर्षीत्युक्तम्। तच्छब्देन सर्वाकर्षिवेणुशब्देन। अत्र कृष्णो नास्तीति अनुमेयस्य कृष्णाभावस्य अनुपलब्धिरव्यभिचारे ज्ञापिकेति। द्रव्यादपीति, द्रव्यादपि हेतोरित्यर्थः। दृश्यत इति पञ्चमीति शेषः। पर्वतोऽयमिति, धूमोऽनुमेयस्य वह्निमत्वस्य अव्यभिचारेण ज्ञापकः। वैयाकरणानामिदमेव मतम्। नैयायिकानान्त्वत्रैव व्याप्तिग्रहः। तद्यथाकथञ्चिद्दर्श्यते। व्याप्तिलक्षणं यत्र यत्र धूमस्तत्र तत्र वह्निरिति। व्याप्तिज्ञाने पक्षः साध्यो हेतुरिति त्रिविधमुन्नेयम्। तत्र तत्र व्यापकसामान्याधिकरण्यं व्याप्यसामानाधिकरण्यञ्च वर्तते स पक्षः। यत्तु व्यापकसामानाधिकरण्यं तदेव साध्यम्। तद्भिन्नभानत्वे सत्येकान्तेन तद्बोधकं यद्व्याप्यसामानाधिकरण्यं तदेव हेतुः। पर्वतोऽयं वह्निमान्, धूमादित्युदाहरणम्। अस्य तु सपक्षसत्त्व-विपक्षसत्त्वावन्वयव्यतिरेकदृष्टान्तौ। यन्नैवं तन्नैवम्। यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इत्यर्थः। तत्रान्वये दृष्टान्तो यथा—महानसः। व्यतिरेके दृष्टान्त यथा—जलह्रदः। ननु यन्नैवमित्यत्र यत्र धूमाभावस्तत्र वह्न्यभाव इति कथं न व्याख्यायते? भद्रमुच्यते, त्वदुक्तार्थे कृतेऽपि यथा जलह्रदः इत्यत्र न दोषः, किन्त्वयोगोलक इत्यत्रातिव्याप्तिः स्यात्, अत्र धूमाभावेऽपि वह्निसत्त्वादिति। नन्वेतदस्तु, निदाघे पलालपुञ्जादौ हेमन्ते जलह्रदादौ च दैवादतिवृष्टित्वेन कुज्झटिकात्वेन च धूमसदृशदृष्टत्वात् कथं तत्र तत्र सूत्रस्यातिव्याप्तिर्न स्यात्? सत्यं ब्रवीषि, समाधनं शृणु—कज्जलजनकत्वं धूमत्वमिति धूमलक्षणमतः कज्जलजनकताभावत्वेन नायं धूमस्तस्मादत्र न व्याप्तिज्ञानमिति। नन्वत्र न भवतु, वह्निसंयोगान्निःसारितेऽपि गोपालघटिकादौ धूमस्य दर्शनात् कथं न व्याप्तिरिति चेत्तदेवं वाच्यं,

१०८४। राधागोपीसंज्ञाभ्यान्तु न पञ्चमी।

श्रीकृष्णकृपया सुखं, तन्माधुर्या वा॥ १०८४॥

१०८५। हेतुशब्दप्रयोगे हेतौ षष्ठी।

कृष्णस्य हेतोर्वसति। वेति केचित्। यत्र हेतुशब्देन समासस्तत्र समस्तादेव षष्ठी—प्रेमहेतोः कृष्णं भजति॥ १०८५॥

१०८६। कृष्णनामयोगे निमित्तकारणहेत्वर्थाद्-द्वितीयावर्जं सर्वा विष्णुभक्तयः।

कृष्णो मथुरां गतः किं निमित्तं, केन निमित्तेनेत्यादि। एवमुभे निमित्ते, उभाभ्यां निमित्ताभ्यामित्यादि। कृष्णनामायोगेऽपि तृतीयादय इत्येके। कंसघातेन निमित्तेनेत्यादि॥ १०८६॥

१०८७। एनप्रत्ययान्तयोगे द्वितीयाषष्ठ्यौ।

अदूरे एनोऽपञ्चम्यास्तद्धितः। दक्षिणेन वृन्दावनमक्रूरतीर्थं, वृन्दावनस्य वा॥ १०८७॥

---

शिखावच्छेदत्वेनाखण्डधूमाभावादत्र न व्याप्तिरित्यनवद्यं सर्वमिति। तस्मात् कज्जलजनकतावच्छेदकावच्छिन्नधूमो यत्र लभ्यते तत्रैव वह्न्यनुमितिर्नान्यत्रेति निर्गलितार्थः॥

१०८४। राधा। आवन्तलक्ष्मी राधासंज्ञा, ई ऊ लक्ष्मीर्गोपीसंज्ञा, ताभ्यां गुणवाचकाभ्यान्तु पञ्चमी न स्यात्। तन्माधुर्या श्रीकृष्ण-माधुर्या श्रीकृष्णकृपामाधुर्या वा। अत्र 'हेतोस्तृतीये'त्यनेन तृतीयैव॥

१०८५। हेतु। हेतुशब्दयोगे सति हेतौ षष्ठी स्यात्। कृष्णस्य हेतोर्वसतीति वसनक्रियाया हेतुः कृष्णस्तस्मित् षष्ठी-विशेषणत्वात् हेतु-शब्देऽपि षष्ठी। वेति केचिदिति तन्मते षष्ठी तृतीया च। प्रेमहेतो-रिति प्रेमा चासौ हेतुश्चेति श्यामरामः॥

१०८६। कृष्ण। सर्वादीनि कृष्णनामानि तद्योगे सति निमित्त-कारणरूपो यो हेत्वर्थस्तस्मात् द्वितीयावर्जं सर्वा विष्णुभक्तयः भवन्ति॥

कृष्णेति। कृष्णनामभिरयोगेऽपि। कंसघातेन कंसहननेन॥

१०८८। दूरान्तिकार्थबहिर्योगे षष्ठी पञ्चमी च, दूरान्तिकार्थेभ्यो द्वितीया-तृतीया-पञ्चमी-सप्तम्यो नाममात्रार्थे।

दूरं दूरेण दूरात् दूरे वा व्रजस्य व्रजाद्वा तिष्ठन्ति पुलिन्दाः। एवमन्तिकमन्तिकादन्तिकेनान्तिके वा वसन्ति ब्राह्मणा इत्यादि। असत्ववचन एव स्यात्; अन्यत्र समानाधिकरणत्वे तु दूरो व्रजो मथुरायाः, व्रजाद्दूरा मथुरा ॥ १०८८ ॥

१०८९। आशिषि हिताद्यर्थयोगे च षष्ठीपञ्चम्यावेव।

दूरं यातु व्रजस्य दुःखं, व्रजाद्वा। अन्तिकं हितं भवतु व्रजस्य, व्रजाद्वा ॥ १०८९ ॥

---

१०८७। एन। एनप्रत्ययोऽन्ते यस्य तद्योगे द्वितीयाषष्ठ्यौ भवतः। अपञ्चम्या अपञ्चम्यन्तात्। दक्षिणेति, दक्षिणशब्दात् प्रथमान्तात् पञ्चम्यन्ताद्वा। 'अदूरे एनोऽपञ्चम्या वे'त्यनेन एनः, ततः 'अन्तरङ्गस्वादेर्महाहरः'। दक्षिणस्यामदूरवर्तिन्यां दिशि अक्रूरतीर्थमित्यर्थः ॥

१०८८। दूरा। दूरार्थेन अन्तिकार्थेन बहिःशब्देन च योगे षष्ठी पञ्चमी च स्यात्। अन्तिकशब्दो निकटवाची।

दूरान्तिकार्थेभ्यः शब्देभ्य उत्तरे द्वितीयादयः स्युः नाममात्रार्थे वाच्ये। पुलिन्दशब्दो निकृष्टजातिवाची। 'भेदाः किरातशवरपुलिन्दा म्लेच्छजातय इत्यमरः'। एवमिति, अत्रापि व्रजस्य व्रजाद्वेति योज्यम्। इत्यादीत्यादिपदेन बहिर्व्रजस्य व्रजाद्वा तिष्ठन्ति भिल्ला इति। नाममात्रार्थ इति यदुक्तं, तदेव विवृणोति असत्ववचन एव स्यात् इति। असत्ववचने धर्मवचने। अन्यत्रेति असत्ववचन इत्यर्थः। दूर इति, अत्र दूरशब्दो धर्मवचनः ॥

१०८९। आशिषि। आशिषि गम्यमानायां हिताद्यर्थयोगे च सति षष्ठीपञ्चम्यावेव भवतः। दूरान्तिकार्थयुक्तादिति शेषः। एवकारात् दूरान्तिकार्थेभ्यो नाममात्रार्थे द्वितीयादयो न भवन्तीति। दूरं

१०९०। अतस्यर्थयोगे षष्ठी।

दक्षिणतो व्रजस्य, पुरस्ताद्गोवर्धनस्य। अवधित्वविवक्षायां पञ्चमीति चन्द्रगोमी ॥ १०९० ॥

१०९१। सामान्यतो विशेषस्य निर्धारणे षष्ठी-सप्तम्यौ, विशेषतश्चेत् पञ्चम्येव।

निर्धारणं धर्मविशेषेण पृथक्करणम्। यदूनां वृष्णयः श्रेष्ठाः यदुषु वा। माथुराः श्रौघ्नेभ्य आढ्यतराः ॥ १०९१ ॥

१०९२। आयुक्तकुशलयोगे षष्ठीसप्तम्यौ तात्पर्ये।

आयुक्तः कृष्णभक्तेः कृष्णभक्तौ वा ॥ १०९२ ॥

---

यात्विति दूरशब्दोऽत्र धर्मवचनः, दूरमिति कर्म। अन्तिकमिति स्वन्तम् ॥

१०९०। अत। अतस्यर्थैर्योगे षष्ठी स्यात्। अतस्यार्था-स्तद्धित-प्रकरणे वक्ष्यन्ते। दक्षिणत इति, "दक्षिणोत्तराभ्यां (सप्तमी-पञ्चमी-प्रथमाभ्यः)अतसिः" इति अतसिः। 'अ-इद्वयस्य हरः' इत्यनेन अरामहरः। पुरस्तादिति पूर्वशब्दात् सप्तम्यन्तात्। 'दिक्शब्देभ्यो सप्तमीपञ्चमी-प्रथमाभ्यो दिग्देशकालेष्वस्तातिरि'त्यनेनास्तातिः। 'अन्तरङ्गस्वादेर्महा-हरः'। पूर्वादीनां पुर अध अव तयोरित्यनेन पूर्वस्य पुरम्। अवधित्वेति, तन्मते दक्षिणतो व्रजादित्यादि भवति ॥

१०९१। सामा। सामान्यतः सामान्यात् विशेषस्य निर्धारणे-ऽर्थे षष्ठीसप्तम्यौ भवतः। विशेषतो विशेषस्य निर्धारणं चेत्तदा पञ्चम्येव। यस्मान्निर्धारणं तस्मात् षष्ठ्यादयः। यस्मान्निर्धारणं तस्मात् प्रथमादिकारकविष्णुभक्तिः। निर्धारणलक्षणमाह—निर्धारण-मिति। यदूनामिति, अत्र सामान्येभ्यो विशेषाणां वृष्णीनां श्रेष्ठत्वरूप-धर्मविशेषेण पृथक्करणम्। माथुरा इति, विशेषेभ्यो विशेषाणां माथुराणां आढ्यतरत्वरूपधर्मविशेषेण पृथक्करणम्। आढ्यो धनी ॥

१०९२। आयुक्त। तात्पर्ये गम्यमाने आयुक्तकुशलयोगे षष्ठी-सप्तम्यौ भवतः। आयुक्त इति, तत्पर इत्यर्थः। सप्तम्यां प्राप्तायां पक्षे षष्ठ्यर्थं वचनम् ॥

१०९३। एकस्थक्रिययोर्मध्ये यः संख्यात्मकः कालः कारकयोर्मध्ये यश्चाध्वा ताभ्यां सप्तमी पञ्चमी च।

अद्य हरिं दृष्ट्वा, द्व्यहे हरिं द्रष्टा, द्व्यहाद्वा। तत्र दर्शनयोर्मध्ये द्व्यहः। इहस्थोऽयं क्रोशे क्रोशाद्वा पश्यति। अत्र कर्तृकर्मणोर्मध्ये अध्वा ॥१०९३॥

१०९४। उक्तस्य यस्य क्रियाकालोऽन्यस्य क्रियावकाशस्तस्मात् सप्तमी।

उक्तस्येति सामान्यनिर्देशात् कारकमात्रं गृह्यते। गोषु तिष्ठन्तीषु दुह्यमानासु वा गायति कृष्णः॥ १०९४॥

१०९५। अर्हानर्हयोश्च।

वैष्णवेषु भुञ्जानेषु वैष्णवा आहूयन्ते। वैष्णवेषु भुञ्जानेषु

---

१०९३। एकस्थ। एकस्मिन् स्थितयोः क्रिययोर्मध्ये यः संख्यात्मकः कालस्तस्मात् कारकयोर्मध्ये यश्च संख्यात्मकोऽध्वाः अध्वपरिमाणं तस्माच्चोत्तरे सप्तमी पञ्चमी च स्यात्। द्रष्टेति, दृश्धातोस्तृण्। द्व्यह इति, द्वयोरह्नोः समाहार इति 'राजाहःसखिभ्यः' इत्यनेन केशवारामः। 'अह्नाष्ट-खरामयोरेवे'त्यनेन संसारस्य हरः॥

१०९४। उक्त। क्रियायाः कालः क्रियाकालः। यस्य उक्तस्य कारकस्य क्रियाकालोऽन्यस्य कारकस्य क्रियावकाशः क्रियावसरस्तस्मादुक्तात् सप्तमी स्यात्। कारकमात्रं गृह्यत इति अतो गोषु दुह्यमानाष्वित्यत्र कर्मणि विहितेन शानेनोक्ताभ्यो गोभ्यः कर्मभ्यः सप्तमी। गोष्विति, अत्र गवां स्थितिक्रियाया दोहनक्रियायाश्च कालः कृष्णस्य गानक्रियाया अवकाशः॥

१०९५। अर्ह। अर्ह इति, अर्हतीति कर्तर्यत्। ययोरर्हानर्हयोः क्रियाकालोऽन्यस्य क्रियावकाशस्ताभ्यामर्हानर्हाभ्याञ्च सप्तमी स्यात्। वैष्णवेष्विति। अत्र अर्हाणां भोजनार्हाणां वैष्णवानां भोजनक्रियायाः

अवैष्णवा आहूयन्ते। उक्तस्येति किम्? गवां दोहे गायति। अन्यस्येति किम्? दुहन् गीतवान् कृष्णः। आत्मना दुह्यमानासु गोषु गायतीत्यत्र तु स्यादेव; गोरुक्तकर्मरूपाया दोहः, गानन्तु कर्तुरिति। अत्र तु सूत्रं न प्रवर्तेयम्—तुलसीमालया सह तु भुङ्क्ते, यो भुङ्क्ते स वैष्णवः ॥ १०९५ ॥

१०९६। अत्रानादरे षष्ठी च।

रुदति कुटुम्बे, रुदतः कुटुम्बस्य वा मथुरां गतः। तदनादृत्येत्यर्थः॥ १०९६ ॥

१०९७। साधुनिपुणाभ्यां योगेऽर्चायां सप्तमी।

---

कालः वैष्णवानां आह्वानक्रियाया अवकाशः। भुञ्जानेष्विति, भुजधातोः शानः रुधादित्वात् 'शप्खण्डी श्नम्'। वैष्णवेष्विति, अत्र वैष्णवा अनर्हा भोजनानर्हाः अवैष्णवाह्वानात् पूर्वस्यैव प्रपञ्चोऽयं योग इति ज्ञेयम्। गवां दोहे दोहनकाले। दुहन्निति कर्तरि शतृ। दोहनक्रियाया गमनक्रियायाश्च कर्ता कृष्णः। आत्मनेति, स्यादेवेत्युक्त्वा हेतुमाह—गोरुक्तकर्मरूपाया इति। उक्तकर्मणो दोहनक्रियायाः गानक्रियातु कर्तुः। गोरिति, गोशब्दस्येत्यर्थः। अन्यथा बहूवचनं स्यात्। गवामुक्तकर्मरूपाणामिति वा पाठः। अत्र त्विति न प्रवर्तेयम् इति विषयाभावादिति शेषः। क्रियाद्वयसद्भावे लक्षणं प्रवर्तते। यस्तुलसीमालया सह भुङ्क्ते इत्यत्र एकैव क्रिया सापि अन्यस्य न किन्तु तुलसीमालिन एव अतः सूत्रं न प्रवर्तत इति। तुलसीमालयेति, 'प्रकृत्यादिभ्यस्तृतीये'त्यनेन उपलक्षणे तृतीया। यो भुङ्क्ते स वैष्णव इत्यत्रापि एकैव क्रिया अन्योऽपि नास्ति अतस्तस्याः क्रियायाः कालस्य अन्यस्य क्रियावकाशता न घटते इति सूत्रं प्रवर्तत इति ॥

१०९६। अत्र। अनादरे अर्थेऽत्र सप्तमी षष्ठी च स्यात्। अत्रेति, यस्य उक्तस्य क्रियाकालोऽन्यस्य क्रियावकाशस्तस्मिन्नुक्त इत्यर्थः। रुदतीति, अत्र रोदनक्रियाकालो गमनक्रियावकाशः। तत् कुटुम्बम् ॥

१०९७। साधु। अर्चा पूजा तस्यां गम्यमानायां साधुशब्देन

साधः कृष्णे, निपुणः कृष्णभक्तौ । अर्चायां किम् ? कंसस्य साधवो दैत्याः ॥ १०९७ ॥

१०९८ । असाधुनानर्चायां सप्तमी ।

असाधुः कृष्णे ॥ १०९८ ॥

१०९९ । अधिकार्थेनोपेन युक्तात् सप्तमी ।

उप परार्धे हरेर्गुणाः, परार्धादधिकाः इत्यर्थः। परार्धादिति गम्ययवन्तात् पञ्चमी । किन्तु विस्तरे कर्तरि कर्मणि चाध्यारूढस्य क्तान्तस्याधिकादेशः ; ततः कर्मणि—अधिका खारी द्रोणेनेति ; कर्तरि—त्वधिकः खारीं द्रोणः। अधिकः खार्यां द्रोण इति त्वधिकरणस्यैव विवक्षेति। यद्येवं गम्ययप्पञ्चम्यपि दुर्निवारा ॥ १०९९ ॥

११०० । निमित्तात् कर्मसंयोगे सप्तमी ।

सौरभ्ये तुलसीं जिघ्रति ॥ ११०० ॥

---

निपुणशब्देन च योगे सप्तमी स्यात् । कंसस्य साधव इति नात्र पूजा गम्यते किन्तु कुत्सैव ॥

१०९८ । असाधु । अनर्चायां गम्यमानायां असाधुना योगे सप्तमी स्यात् ॥

१०९९ । अधि । अधिकार्थेनोपशब्देन युक्तादुत्तरे सप्तमी स्यात् । गम्ययवन्तत्वात् पञ्चमीति । गम्यस्य यवन्तस्य कर्मणोऽधिकरणाच्च पञ्चमीत्यनेनेति शेषः । परार्धमपेक्ष्येत्यर्थः । तस्मादस्माकं मते अधिकशब्दस्य प्रचुरार्थत्वं व्यक्तम् । विस्तरमतेन अधिकशब्दस्य प्रकारान्तरसिद्धत्वं प्रतिपादयति—किन्त्विति । अधिकादेश इति उक्त इति । विस्तरोक्तमुदाहरणमपि दर्शयति–तत इति । अधिकेति, अध्यारूढेत्यर्थः । अधिक इति अध्यारूढ इत्यर्थः । अधिकरणस्यैव विवक्षेति विस्तरोक्तमेव । यद्येवमिति यदि विवक्षाया वलवत्वमित्यर्थः । तर्हि गम्ययप्पञ्चम्यपि दुर्निवारेति तस्मात् परार्धादधिकेति यदुक्तं विस्तरमतेऽपि न विरुद्धमिति भावः ॥

११०१। ऐश्वर्यार्थेनाधिना युक्तात् सप्तमी, स्वात् स्वामिनो वा विष्णुभक्तिः।

अधि भुवि रामः, रामो भुवः स्वामीत्यर्थः। अधि रामे भूः, भूः रामस्य स्वमित्यर्थः।

---

११००। निमि। कर्मणा संयोगे सति निमित्तात् सप्तमी स्यात्। निमित्तादिति क्रियाया इति शेषः। सौरभ्ये तुलसीं जिघ्रतीति तुलसीघ्राणस्य निमित्तं सौरभ्यम्, अतस्तस्मात् सप्तमी, निमित्तस्य कर्मणा तुलस्या संयोगोऽस्ति। जिघ्रतीति, घ्रा—गन्धोपादाने। क्वचिद्व्यभिचरति चेति। कदाचित् कर्मसंयोगे निमित्तात् सप्तमी न स्यादित्यर्थः। यद्यपि कर्मसंयोगे क्रियामात्रस्य निमित्तत्वात् सप्तमीति सूत्रार्थः, तथापि चर्मणि दीपिनं हन्तीत्युदाहरणं दृष्ट्वा अत्र हन्तेः कर्मसंयोग एव इति सप्तमीति। केषाञ्चिन्मते हन्तेरभिधानात् फलाय वृक्षं छिनत्तित्यादौ न स्यात्। अयुक्ताद्वा। नहि वृक्षछेदनस्य फलं निमित्तम्। फलाय वृक्षस्य सेप्रणात् उक्तञ्च। 'हन्तेः कर्मण्युपष्टम्भात् प्राप्तमात्रे तु सप्तमीः। चतुर्थीबाधिकामाहुश्चुर्णीभागुरिवाभटाः' इति। उपष्टम्भाख्याः संयोगा दन्तकेशनखादिषु। कथं 'मुक्ताफलाय करिणं हरिणं पलाय सिंहं निहन्ति भुजविक्रमसूचनाय। का नीतिरीतिरियती रघुवंशवीर-शाखामृगे जरति यस्तववार्णमोक्षः॥' हन्तेरिति, निरुपसर्गश्रुतेः। कथं 'विल्वं यूपेषु संहन्यात् शोणिते रक्तछागलमित्यत्र केचित्तालव्यशकारं पठित्वा कल्याणार्थं बदन्ति। अथवा सुस्थदुस्थ इतिवत् सुप्रतिरूपके शब्दनिर्देशेन सिध्यति। नैमित्तिकाधिकरणतयैव सिद्धे सूत्रमिदं नित्यतार्थम्। तेनात्र सप्तमी अनित्या। युद्धाय संनह्यते इत्यपि स्यात्। एतत् प्राचीनमतमस्माकं व्यभिचारात् सर्वं सिद्धमिति॥

११०१। ऐश्व। ऐश्वर्यार्थेन अधिशब्देत युक्तादुत्तरे सप्तमी स्यात्। स्वादिति यस्य स्वामी तस्मादित्यर्थः। स्वामिनश्च वाशब्दश्चार्थः। विष्णुभक्तिरिति सप्तमी विष्णुभक्तिरित्यर्थः। विवक्षातश्चेति, कारकादी नि विवक्षातश्च भवन्ति। आदिपदेन षष्ठ्या उपपदविष्णुभक्ती-

विवक्षातश्च कारकादीनि भवन्ति, दर्शितानि तत्र तत्र। यथा च क्रिया जायते, ओदनः पचति, सिध्यतीत्यर्थः। तण्डुलः पचति, विक्लिद्यतीत्यर्थः। ओदनं पचति वैष्णवः, साधयतीत्यर्थः। तण्डुलं पचति, विक्लेदयतीत्यर्थः, तण्डुलमोदनं पचतीति द्विकर्मके व्याख्यातम्। कृष्णो वंशीवाद्येन सुखं ददाति, वंशीवाद्ये वा। व्रजं प्रविशति, व्रजे वा। गोपीभ्यः स्पृहयति गोपीर्गोपीषु गोपीनां वा। गां दुग्धं दोग्धि, गोभ्यः गवां वा। अक्षैर्दीव्यति, अक्षेषु अक्षाणां वा। गवां स्वामी, गोषु वा। एवमीश्वराधिपतिदायादसाक्षि-प्रतिभुवः। तथा व्रजस्य राजा, व्रजे वा। पञ्चकृत्वो दिनस्य दिनेन

---

नाञ्च ग्रहणम्। लक्षणैर्विना विवक्षयापि सर्वाणि सिध्यन्तीत्यर्थः। चान्द्राः कालापाश्च विवक्षयैव प्रायः सर्वं साधयन्तीति वक्ष्यते। वक्तुमिच्छा विवक्षा। विवक्षात इति तृतीयान्तात्तसिप्रत्ययः। तृतीया च हेतौ करणे वा। दर्शितानि तत्र तत्र; 'स्वतन्त्रं तत्प्रयोजकञ्च कर्तृ' 'क्रिया यत् साधिका तत्कर्मे'त्यादिषु दर्शितानि। अतो नात्र दर्श्यन्त इति। क्रियाया अकर्मकत्वादिकमपि विवक्षया भवतीत्याह—यथा चेति। यथा येन विवक्षाप्रकारेण क्रिया च जायते भवति, क्रियाया अकर्मकत्वादिकं भवतीत्यर्थः। विवक्षया क्रियया अकर्मकत्वादिकं केवलं पचधातुमवलम्ब्य दर्शयति—ओदनः पचतीत्यादि, ओदनः पचतीति ओदनस्य कर्तृत्वविवक्षया पचधातोः सिध्यर्थता, अतोऽत्र क्रियाया अकर्मकत्वम्। तण्डुलं पचतीति, तण्डुलस्य कर्तृविवक्षया धातोर्विक्लित्यर्थता, अतोऽत्रापि कर्मत्वम्। ओदनं पचति वैष्णव इति, ओदनस्य कर्मत्वे विवक्षया धातोः समाधानार्थता, अतोऽत्र सकर्मकत्वम्। तण्डुलं पचतीति, तण्डुलस्य कर्मत्वविवक्षया धातोर्विक्लेदनार्थता, अतोऽत्रापि सकर्मत्वम्। द्विकर्मके व्याख्यातमिति, तद्यथा तण्डुलमोदनं साधयन् विक्लेदयतीत्यर्थ इति। अत्र तण्डुलौदनयोः कर्मत्वविवक्षया धातोः साधनाविक्लेदनार्थता, अतो द्विकर्मत्वम्। कृष्णो वंशीवाद्येन सुखं ददाति, वंशीवाद्ये वेत्यादीनाम् इत्यादि मन्यन्त इत्यत्र समाप्तिः। एषु पूर्वोक्तानुसारेण यद्यद्भवति तत्तद्युक्तमेव, पूर्वोक्तानु-

दिने वा भुङ्क्ते। एवं द्विरह्न इत्यादि। तथा शतं दायी, शतस्य दायीत्यादि मन्यन्ते। तथाहि "मासाणामश्नीयात्" इति भाष्यम्। "न च स्निह्यति कस्यचित्" इति भट्टिः (१८।९), "प्रामाद्यद् गुणिनां हितम्" (भट्टिः १७।३९) इति च। "सा लक्ष्मीरुपकुरुते यया परेषाम्" इति किरातः (७।२८)। 'नारायणस्यानुकरोति' इत्याद्यपि बहुत्र। यत्रतु करणं वेति, कर्म वेति प्रोच्यते, पक्षे सम्बन्धो विवक्ष्यते, तत्र तु तस्य तस्यैव सम्बन्धिता, नान्यस्येति नियम्यते। ततः शुभ्रत्वेन गङ्गाजलस्य जानीते इत्यादौ शुभ्रत्वादीनां तद्विवक्षा न स्यात्, दुर्बोधत्वात्। चान्द्राः कालापाश्च विवक्षयैव प्रायः सर्वं

---

सारेण यद्यन्न भवति तत्तदपि भवति, अतएव मन्यन्त इत्युक्तम्। मन्यन्त इति अयुक्तपरमेव ज्ञेयम्। तथाहि वंशीवाद्येन सुखं ददातीति युक्तमेव वंशीवाद्ये सुखं ददातीत्यपि मन्यन्ते। व्रजं प्रविशतीति युक्तमेव, व्रजे प्रविशतीत्यपि मन्यन्ते। गोपीभ्यः स्पृहयतीत्याद्यपि मन्यन्ते। गां दुग्धं दोग्धीति युक्तमेव, गोभ्यो दुग्धं दोग्धीत्याद्यपि मन्यन्ते। अक्षैर्दीव्यतीति युक्तमेव, अक्षाणां दीव्यतीत्याद्यपि मन्यन्ते। अक्षान् दीव्यतीत्यपि पूर्वमेवोक्तम्। गवां स्वामीति युक्तमेव, गोषु स्वामीत्यपि मन्यन्ते। एवमिति यथा स्वामिशब्दयोगे षष्ठी सप्तमी च तथा ईश्वराधिपतिदायादसाक्षिप्रतिभूः क्रयणादौ विश्वसनीयः। व्रजस्य राजेति युक्तमेव, व्रजे राजेत्यपि मन्यन्ते। पञ्चकृत्व इति, 'संख्यायाः क्रियाभ्यावृत्तौ कृत्वसुः' इत्यनेन कृत्वसुः, पञ्चकृत्वो दिने भुङ्क्ते इति युक्तमेव पञ्च कृत्वा दिनस्य भुङ्क्ते इत्याद्यपि मन्यन्ते। दिने इत्यस्य आदौ लिखनमुचितमिति ज्ञेयम्। एवमिति, द्विरह्नः अह्ना अह्नि वा भुङ्क्त इति। अत्रापि द्विरह्नि भुङ्क्त इति युक्तमेव, द्विरह्नो भुङ्क्त इत्याद्यपि मन्यन्त। अत्राप्यह्नीत्यस्यादौ लिखनमुचितम्। द्विरिति, द्वित्रिचतुर्भ्यः सुरिति 'क्रियाभ्यावृत्तौ सुः'। षष्ठीनिषेधात् शतं दायीति युक्तमेव, शतस्य दायीत्यपि मन्यन्ते। इत्यादिपदेन शिष्टप्रयोगानुसारेणापरमपि ज्ञेयम्। मन्यन्त इत्युक्त्वापि महापण्डितानां वाक्यं पोषकत्वेन दर्शयति— तथा इति, माषाणामश्नीया-

साधयन्ति। तदुक्तं वर्धमानमिश्रैः—"कल्पना-प्रसवानां नास्त्यन्तः" इति। कृष्णप्रवचनीयैर्योगे तु नान्यां विवक्षां मन्यन्ते, तत्र संज्ञाकरणे प्रयत्नविशेषावगमात्; यथा—कृष्णं प्रति साधुः, साधुनिपुणाभ्यामिति न सप्तमी। गोपीं गोपीं प्रति प्रेमास्ति, नाधारसप्तमी। गाः प्रति स्वामी, सम्बन्धविषययोर्न षष्ठीसप्तम्यौ। कृष्णं प्रत्युत्सुकः, प्रसितोत्सुकाभ्यामिति न तृतीयासप्तम्यौ। कंसं प्रति हरिः क्रुद्धः, न सम्प्रदानचतुर्थीति॥ ११०१॥

**इत्युपपद-विष्णुभक्तयः।**

---

दिति। अत्र कर्मत्वस्य युक्तत्वेऽपि षष्ठी। एवं नच स्निह्यति कस्यचिदिति केन सह स्निह्यतीति भवितुमर्हति प्रामाद्यदिति। 'व्यजिघृक्षत् सुरान्नित्यं प्रामाद्यद्गुणिनां हितम्। आशङ्कत सुहृद्बन्धूनवृद्धान् बह्वमन्यत॥' इति भट्टिपद्यम्। प्रामाद्यदत्र अनवहितवानित्यर्थः। गुणिनमित्यत्र चतुर्थीति युक्ताहितयोगात्। हितमित्यत्र सप्तमीपञ्चम्यौ युक्ते। इति चेति, इति च भट्टिमित्यर्थः। सा लक्ष्मीरिति, यया लक्ष्म्या परेषामुपकुरुते सैव लक्ष्मीर्नत्वान्या। परेषामित्यत्र कर्मत्वं युक्तम्। यया सा इत्यत्र विवक्षावशादुद्देश्यविधेययोस्तृतीया प्रथमेति। सा विद्या तन्मतिर्यया; महाजनो येन गतः स पन्था इत्यादि दर्शनात्। एवं नारायणस्येत्यत्रापि नारायणं सदृशं करोतीत्यर्थः। यत्र त्विति, प्रोच्य उक्त्वा पक्षे सम्बन्धो वक्तुमिष्यते। तस्य तस्यैवेति उक्तानामेवेत्यर्थः। ततो नियमात् शुभ्रत्वेन गङ्गाजलस्य जानीते इति 'अज्ञानार्थस्य ज्ञः करणं वे'त्यनेन करणं विकल्पेन विधीयते करणाभावपक्षे सम्बन्धषष्ठी भवति। अत्र उक्तस्य गङ्गाजलस्यैव सम्बन्धिता नतु शुभ्रत्वस्य। तद्विवक्षा सम्बन्धिविवक्षा। दुर्बोधत्वादिति कारकादीनामिति शेषः। कल्पनेति, कल्पना विवक्षा तया प्रसवो उद्भवो येषां तेषामन्तः सीमा नास्ति। अतस्तदर्थं लक्षणकरणं न बहुप्रयोजनकमिति भावः। कृष्णेति, अन्यविवक्षाया अमनने हेतुमाह— अत्रेति। अवगमः ज्ञानम्। न सप्तमीति

# अथ अच्युताद्यर्था विवक्ष्यन्ते

१११०२ । वर्तमानेऽच्युतः ।

वर्तमानो बहुविधः । तत्र वचनसमकालत्वे—वैष्णवो भवति । क्रियाकालभावेषु सदातनत्वे—भगवान् विराजते । बहु-कालत्वे—स्रवति गङ्गा । तच्चरितत्वे—भगवन्तं पूजयत्ययम् ।

---

किन्तु द्वितीयैवेति । सम्प्रदानचतुर्थी ि 'क्रुधाद्यर्थानां यं प्रति कोपः' इत्यनेन सम्प्रदानं स्यात् ॥

अथ । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथोऽथ । अतोऽत्र उपपदविष्णुभक्त्यर्थनिरूपणानन्तरम् अच्युतादीनामर्था विषया विव्रियन्ते, विस्ताररूपेण कथ्यन्ते । विवक्ष्यन्ते इति पाठो ग्रन्थान्तरे ॥

११०२ । वर्त । वर्तमाने काले धातोरुत्तरे अच्युतो भवति । अच्युतस्तिवादिः । एतत् सूत्रम् आख्यातसूत्रानुरूपम् । बहुविधत्वं विवृणोति—तत्रेति । वचने कथनसमये, समस्तुल्यः कालो यस्य वर्त-मानस्य स वचनसमकालस्तस्य भावः वचनसमकालत्वं, तस्मिन् वचनसम-कालत्वे वर्तमानत्वे रूपं दर्श्यते । क्रियाकर्तृभ्यां सहैककालत्वे इति निर्गलितार्थः । वैष्णवो भवतीति यत्र काले वैष्णवस्य सत्ता क्रिया, तत्रैव तस्य कर्तृत्वमिति । एवं मथुरां गच्छति, अन्नं पचतीत्याद्यपि ॥

क्रियाकालेति, क्रियाकालभावेषु क्रियाकालद्रव्येषु सामान्येषु सदा-तनत्वे नित्यत्ववर्तमानत्वे रूपं दर्श्यते इति सर्वत्र योज्यम् । यदा त्रिकालभावेषु इति पाठोऽपि क्वचित्तदा क्रियाकालभावेषु वर्तमानभूत-भविष्यत्क्रियासु क्रियाकालभावेष्विति निर्धारणे सप्तमी । यद्वा, त्रिकालेषु भावः सत्ता येषां ते त्रिकालभावास्तेषु नित्यपदार्थेषु सदातनत्वे नित्यत्वे वर्तमानस्य क्रियाया वा इति शेषः । 'सायं चिरं प्राह्णे प्रगेऽव्ययेभ्य-स्तनट्' ।* 'शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः इत्यमरः' । भगवान्

---

* अत्र एतद्—व्याकरणोक्तसूत्रद्वयम्—'सायन्तन-चिरन्तन-प्राह्णेतन-प्रगेतनानि', 'अव्ययाद्दिवातन-दोषातन-प्रातस्तनादीनि च' ।

पौनःपुन्ये च—'त्वामेव पृच्छति हरिः सखि मद्विलोके'। तस्माद्व्यक्त्या जात्या चैकक्रियाव्याप्तत्वेन भूतभविष्यदतिरिक्ततया विवक्षितः कालो वर्तमानः ॥११०२॥

विराजतेऽत्र भगवतो विराजक्रियायाः तिपा बोध्यकालस्य च नित्यत्वमिति । बहुकालत्वे वर्तमानस्य क्रियाया वेति शेषः । तच्चरितत्व इति सा क्रिया चरितं स्वभावो यस्य स तच्चरितं तस्य भावः तच्चरितत्वं तस्मिन् तच्चरितत्वे वर्तमानत्वे । भगवन्तं पूजयतीति, पूजात्र क्रिया सैव चरितमिति । चरितं शीलं तत्तु पूजकस्य तस्मात् पूजकस्य ताच्छील्यं वर्तमानत्वम् । पौनःपुन्ये वर्तमानत्वे क्रियाया इति शेषः । तामेवेति, हे सखि ! मद्विलोके मद्दर्शने त्वां पुनः पुनः पृच्छतीत्यर्थः । सर्वसंग्राहक-वर्तमानलक्षणमाह—तस्मादिति । तस्माद्बहुविधत्वात् व्यक्ताव्यक्तरूपेण जात्या जातिरूपेण च यदेकस्यां क्रियायां तेनैव एकक्रियाव्याप्तत्वेन धमण करणेन भूतभविष्यदतिरिक्ततया रूपेण विवक्षितः वक्तुमिष्टः कालः वर्तमान इत्यर्थः । भगवान् विराजते, अस्त्याकाशं, वैष्णवो भवति, वैष्णव-स्तिष्ठतीत्यादौ व्यक्त्या एकैकक्रियाव्याप्तत्वेन विवक्षितत्वं वर्तमानत्वं व्यक्तेस्तु पृथक्त्वमिति । अन्नं पचति, मथुरां गच्छतीत्यादौ तु जात्या एकैकक्रियाव्याप्तत्वेन विवक्षितत्वं वर्तमानत्वम् । अन्यथा विक्लित्यादे-र्बल्यात् क्रियाया एकत्वानुपपत्तिः स्यात् । स्वमतमुक्त्वा पोषकत्वेन परमतमपि दर्श्यते—'यत्रारब्धा फलान्तैका क्रिया कालः स वर्तते' । यत्र काले क्रिया आरब्धा साधयितुं प्रस्तुता, एका एकरूपा निरवयवा विजातीयान्तररहिता, फलान्ता फलपर्यवशायिनी स कालो वर्तते वर्तमानाख्यां लभते । एका किं ? तण्डुलं पचन् इष्टं गच्छतीत्यत्र न वर्तमानत्वं विजातीयया अन्तरितत्वात् । ननु फलान्तेत्युक्तं, कथं नदीं सन्तरन् म्रियत इति सिध्यति ? अत्र मरणेनैव सन्तरणसमाप्तेः ; फल-पर्यवशायित्वमिति केचित् । केचित्त्वेवं वदन्ति तद्यथा—यद्यपि मत-भेदादनेकप्रकारवर्तमानस्तथापि सामान्यलक्षणमाह—'प्रारम्भापरिसमाप्ति-र्वर्तमानः' इति । यथोक्तम्—"प्रारम्भादासमाप्तिस्तु यावन्नो नश्यति क्रिया । तावद्वर्तत इत्यस्मात् वर्तमान उदाहृतः ॥ प्रवृत्तोपरतश्चैव

११०३। भूते भूतेशः।

श्रीकृष्णावतारोऽभूत् ॥ ११०३ ॥

११०४। अनद्यतनभूते भूतेश्वरः।

प्रभुरयम्। पूर्वापरनिशयोर्द्वाभ्यां यामाभ्यां सह दिवसमद्यतनकालस्तद्भिन्नोऽनद्यतनः। तस्मिन् इत्यधिक्रियते। कृष्णावतारोऽभवत् ॥ ११०४ ॥

---

वृत्ताविरत एव च। नित्यप्रवृत्तः सामीप्यो वर्तमानश्चतुर्विधः ।।" प्रवृत्तोपरतो यथा—मांसं पुरा न खादति। वृत्ताविरतो यथा—इह कुमाराः क्रीड़न्ति। नित्यप्रवृत्तो यथा—तिष्ठन्ति पर्वताः। सामीप्ये—कदा गतोऽसि एषोऽहमागच्छामि। यदा प्रारम्भग्रहणं न दीयते, तदा करिष्यमाणेऽपि घटं करोतीति प्रयोगः स्यात्। तन्निषेधार्थं प्रारम्भग्रहणम्। आपरिसमाप्तिग्रहणं किम्? यदा परिसमाप्तिर्न दीयते, तदा वैशाखादिस्थूलकाले याः पच्यादिक्रियाः प्रारब्धास्तासां तत्तन्मासस्याप्यभावे वैशाखे पचतीति प्रयोगः स्यात्। ननु यस्य कालस्य वर्तमानादिबहुविध उक्तः भूतभविष्यदादिबहुविधो वक्ष्यते च। स कालः क इत्यपेक्षायां कालोऽपि दर्श्यते। अखण्डदण्डायमानः कालः तस्य क्रियागुणद्रव्येषु विभागेषु विभागः कथ्यते। यथाचोक्तं सन्दर्भे—कालस्तु भूतभविष्यद्वर्तमानश्चिरक्षिप्रादिव्यवहारहेतुः क्षणादिपरार्धान्तश्चक्रवत् परिवर्तमानः प्रलयसर्गनिमित्तभूतो जड़ो द्रव्यविशेषः। अन्यत्र प्रभावं पौरुषं प्राहुः कालमेके यतो भयम् ।।

११०३। भूते। भूते काले धातोरुत्तरे भूतेशो भवति। एतदपि आख्यातसूत्रानुरूपम्। अनद्यतनभूतेश्वरादिविधानादद्यतनेऽस्य विषयः। भूतेशो दिवादिः। श्रीकृष्णावतारोऽभूदिति अवतीर्णं श्रीकृष्णं दृष्ट्वा तदैव कस्यचिद्वचनमन्यथा भूतेश्वरः स्यात्। यद्वा, पदसंस्कारवेलायामनद्यतनस्य विद्यमानत्वान्न भूतेश्वरः; पश्चात् श्रीकृष्णावतार इति प्रयोक्तव्यम्। एवं भट्टौ—'अभून्नृपो विबुधसखः' इति ।।

११०४। अन। अनद्यतनलक्षणमाह—पूर्वापरेति। पूर्वापर-

११०५। स्मरणोक्तौ कल्किर्न तु यत्प्रयोगे, साकांक्षे वक्तरि तु वा।

स्मरसि भ्रातर्बृहद्वने वत्स्यावः। नेह—भ्रातर्जानासीद् यद्बृहद्वने ऽवसावः अत्र तु यत्प्रयोगेऽपि वा—स्मरसि यद्वृन्दावने अवसाव वा, तत्र क्रीड़ां करिष्यावः अकुर्व वा। वासोऽत्र लक्षणं, क्रीड़ाकरणं लक्ष्यं, तयोः सम्बन्धे ह्यत्र प्रयोक्तुराकांक्षा मता॥ ११०५॥

११०६। परोक्षानद्यतनभूतेऽधोक्षजः।

कृष्णश्चिक्रीड़। हरिप्रेममत्तोऽहं किं विललाप इति परोक्षवद्भाणात्। नाहमवैष्णवमन्त्रं जजाप इत्यपरोक्षत्वेऽप्यपह्नवात्। अहन् कंसमित्यादयः आधुनिकजल्पास्त्वनद्यतनभूतमात्रविवक्षया॥ ११०६॥

निशयोर्द्वयोर्द्वाभ्यां द्वाभ्यां यामाभ्यां प्रहराभ्यां सह मध्यवर्ति-चतुर्यामदिवसमद्यतनः कालः स्यात्। 'द्वौ यामप्रहरौ समावित्यमरः'। दिवसमिति। वा तु क्लीवे दिवसवासराविति दिवसशब्दस्य व्रह्मत्वम्। 'पूर्वापर-निशा-यामौ दिनेनाद्यतनं विदुः' इति क्रमदीश्वरः। 'शेषौ गतायाः प्रहरौ निशाया आगामिनी या प्रहरौ च तस्याः। दिनस्य चत्वार इमेऽष्ट यामाः कालं बुधाश्चाद्यतनं वदन्ति॥' इति कालापाः। तद्भिन्नोऽद्यतनभिन्नः। अधिक्रियत इति अधिकारः क्रियत इत्यर्थः। भूते, अनद्यतनभूते भूतेश्वरो भवति, भूतेश्वरोऽपि दिवादिः। इदञ्च आख्यातसूत्रानुरूपम्॥

११०५। स्मरण। स्मरणस्योक्तौ सत्यामनद्यतनभूते कल्किः स्यात्। यच्छब्दप्रयोगे तु कल्किर्न स्यात्। आकांक्षया सह वर्तमानः साकांक्षः, साकांक्षे वक्तरि सति यच्छब्दप्रयोगेऽपि कल्किर्वा स्यात्। पक्षे भूतेश्वरः। बृहद्वने महावने। अत्राकांक्षां घटयति वास इति। लक्ष्यते अनेनेति लक्षणं, लक्ष्यते इदं लक्ष्यं तयोर्लक्षणलक्ष्ययोः॥

११०६। परो। अक्षाणां परः परोक्ष इन्द्रियाणामविषय इत्युक्तेः परोक्षशब्दोऽसाक्षाद्वाची। परोक्षश्चासावनद्यतनभूतश्चेति तस्मिन् अधोक्षजः स्यात्। अधोक्षजो णलादिः। 'कृतस्यास्मरणे कर्तुरत्यन्तापह्नवेऽपि

११०७। हान्तशश्वतोर्योगेऽधोक्षजस्य भूतेश्वरो वा पञ्चवर्षाभ्यन्तरप्रश्ने च।

इति हाकरोत् शश्वदकरोत् कृष्णः, चकार वा। तथा पृच्छामि त्वामागच्छत् कृष्ण आजगाम वा ॥ ११०७ ॥

११०८। पुरायोगे भूतेश्वरादित्रयमच्युतश्च।

पुरा इह कृष्णोऽक्रीड़त्, अक्रीड़ीत्, चिक्रीड़, क्रीड़ति वा ॥ ११०८

---

च। दर्शनादेरभावे च त्रिषु विद्यात् परोक्षताम् ॥' इत्युक्तानुसारेणोदाहरणत्रयमाह—चिक्रीड़ेत्यादिना। चिक्रीड़ेति, क्रीड़–विहारे। यद्यप्यस्मन्मते सर्वत्रैवाधोक्षजमात्रं भवति, तथापि काशिकामतमाश्रित्य उदाहरणद्वयमाह—हरीत्यनेन। एवं भ्रमगोपनादिषु उत्तमपुरुषो ज्ञेयः। उन्मत्तविषयेऽपि चित्तविक्षेपात् परोक्षता सम्भवत्येवेति काशिकोक्तात्। परोक्षवद्भाणादिति, अपरोक्षेऽपि परोक्षवद्भाणादनद्यतनभूतस्य परोक्षत्वम्, अतोऽधोक्षजप्राप्तौ न विरोधः। भाणात् कथनात्। भाणशब्दो भणधातुसिद्धः। भणधातुः शब्दार्थः। नाहमिति, अपह्नवात् गोपनात्। अनद्यतनस्य परोक्षवत्त्वमिति शेषः। नन्वपरोक्षाद्यतनभूते भूतेश्वरः, परोक्षानद्यतनभूतेऽधोक्षजस्तर्हि कथमहन् कंसमित्यादयः सिध्यन्त्विति चेत्तत्राह—अहन्निति आधुनिकजल्पाः। अनद्यतनेति, नात्र परोक्षाऽपरोक्षाविवक्षेति भावः। अतोऽधोक्षजाभावः ॥

११०७। हान्त। हान्तस्य शश्वतश्च योगे सति अधोक्षजस्य स्थाने भूतेश्वरो वा स्यात्। पञ्चवर्षाभ्यन्तरप्रश्ने च सति अधोक्षजस्य स्थाने भूतेश्वरो वा स्यात्। अभ्यन्तरशब्दो मध्यवाची। इति हेत्यादौ पारम्पर्योपदेशं निरन्तञ्च। 'पारम्पर्योपदेशे स्यादैतिह्यमिति हाऽव्ययमि'-त्यमरात्। हान्तग्रहणात् इत्यादियोगेऽपि ज्ञेयमिति ॥

११०८। पुरा। व्यक्तार्थमेतत्। भूतेश्वरादित्रयमिति, भूतेश्वरभूतेशाधोक्षजाः। भूतेशादित्रयमिति वा पाठः। पुरा इत्यादौ पूर्वापरयोः परविधेर्बलवत्वात् इह-योगे विकल्पाऽधोक्षजभूतेश्वरौ न, किन्तु

११०९। स्मेन योगे त्वपरोक्षे चाच्युतः।

भजति स्म कृष्णं परत्वात्; पश्यति स्म पुरा रामम् ॥ ११०९ ॥

१११०। प्रश्नस्योत्तरे ननुयोगे भूतेष्वच्युतो, नुनाभ्यां वा।

अपश्यः कृष्णम्? ननु पश्यामि। तथा नु पश्यामि, नु अपश्यम्। एवं न पश्यामीत्यादि। प्रश्नोत्तर इति किम्? नन्वकार्षीर्विष्णुमित्र। भूता निवृत्ताः ॥ १११० ॥

११११। भविष्यति।

प्रभुरयम्। कल्किः—वलिरिन्द्रो भविष्यति ॥ ११११ ॥

---

पुरा-योगे भूतेशादि-चतुष्टयमिति। अत्रोदाहरणे—पुराऽयात्, पुराऽयासीत्, पुरा ययौ, पुरा यातीति ग्रन्थान्तरे पाठ इति ॥

११०९। स्मेन। स्म-शब्देन योगे सति तु परोक्षेऽपरोक्षे च अनद्यतनभूते अच्युतो भवति। स्म-शब्दो भूतकालवाची। परत्वादिति, परत्वात् अच्युतस्यैव वलवत्वम्। अतः पुरा-योगेऽपि न भूतेश्वरादित्रयमिति ॥

१११०। प्रश्न। प्रश्नस्योत्तरे सति ननुशब्दयोगे भूतेषु अच्युतः स्यात्। भूतेष्विति अद्यतनभूते अनद्यतनभूते परोक्षभूते अपरोक्षभूते चेत्यर्थः। नुश्च नश्च ताभ्यां योगे भूतेषु अच्युत वा स्यात्। अपश्यः कृष्णमिति प्रश्नः। ननु पश्यमीत्युत्तरम् ॥

११११। भवि। भविष्यति कल्किः स्यात्। इदमपि आख्यातसूत्रानुवादरूपम्। अनद्यतने वालकल्किविधानात् अद्यतनेऽस्य विषयः। वलिरिन्द्रो भविष्यतीति पदसंस्कारवेलायामनद्यतनस्याविद्यमानत्वात् न वालकल्किः। वलिरिन्द्र इति पश्चात् प्रयोक्तव्यम्। एवं श्वः करिष्यामीत्याद्यपि।

१११२। अनद्यतने वालकल्किराशङ्कायामद्यतने च।

श्वः कृष्णं द्रष्टा परश्वो वा। तथा इयं ननु कदा गन्ता या कृष्णं वीक्ष्य रोदिति॥ १११२॥

१११३। यावत्पुराभ्यामच्युतः कदाकर्हिभ्यां कल्किश्च।

यावत् पश्यामि, पुरा पश्यामि कृष्णम्। तथा, कदा पश्यामि, द्रष्टास्मि, द्रक्ष्यामि वा। एवं कर्हि। अत्र यावदित्यव्ययमेव गृह्यते; नेह—यावदासिष्यते, तावत् द्रक्ष्यामि॥ १११३॥

---

१११२। अनद्य। अनद्यतने भविष्यति वालकल्किः स्यात्। इदमप्यनुवादरूपम्। आशङ्कायां वाच्यायां अनद्यतने अद्यतने च भविष्यति वालकल्किः स्यात्। आशङ्का संशयः। अनद्यतने विहितो वालकल्किरद्यतने न भवतीति सूत्रं कृतम्। श्वः कृष्णमिति, श्वः-शब्दो भविष्यत्कल्यवाची। 'ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तत्परेऽहनि' इत्यमरात्। इयं ननु कदा गन्तेत्यत्राशङ्का व्यक्तैव यदा त्वाशङ्का वाक्येन गम्यते, तदा वालकल्किर्न भवति। अतएव 'अवसायो भविष्यामि दुःखस्यास्य कदा न्वहम्' इति भट्टिः (६।८२)। अवसायेऽन्तदुःखावसानसमयजिज्ञासायावाक्यवाच्यत्वादत्राशङ्का वाक्यवाच्या न भवति, किन्तु दुःखनिर्विण्णस्यैव तद्वाक्यमिति आशङ्का वाक्यगम्यैव भवति॥

१११३। यावत्। यावच्छब्देन पुराशब्देन च योगे भविष्यति अच्युतः स्यात्। कदा-कर्हिभ्यां योगे भविष्यति अच्युतः स्यात्, वालकल्कि-कल्की च स्याताम्। भविष्यति विहितावपि वालकल्कि-कल्की विशेषेणाच्युतेन बाधितौ स्यातामिति वालकल्कि-कल्की चेति कृतम्। पश्यामीति द्रक्ष्यामीत्यर्थः। कदा-कर्हिभ्यां योगे भूतविहित-प्रत्ययाश्च भवन्तीति जुमरमतम्। ननु यावदित्यव्ययमनव्ययमप्यस्ति, तर्हि कस्यात्र ग्रहणमिति चेत्तत्राह—अत्रेति। नेहेति अनव्ययत्वादिह अच्युतो न भवतीत्यर्थः। यावदासिष्यते इति यावद्वस्तु स्थास्यतीत्यर्थः। आसिष्यत इति, आस—उपवेशने॥

## १११४। किं-कतर-कतमैर्लिप्सायाञ्च ते।

कृष्णदर्शनं लुब्धकामः पृच्छति,—कः कृष्णं दर्शयति, दर्शयिता, दर्शयिष्यति वा। प्रश्नोत्तरे च—तं प्रति निर्वक्ति, कस्ते कृष्णं दर्शयति, दर्शयिता, दर्शयिष्यति वा। एवं कतरकतमौ॥ १११४॥

## १११५। वाञ्छितादन्यसिद्धौ च ते।

यो दध्योदनं ददाति, स कृष्णं पश्यति। इति दातारं कृष्णदर्शन-सिद्धौ प्रोत्साहयति। पक्षे कल्किद्वयम्॥ १११५॥

## १११६। विधात्रर्थस्य लक्षणाच्च ते।

गुरुश्चेत् कृपयति, कृपयिता, कृपयिष्यति वा, अथ त्वं कृष्णं सेवस्व। विधातुरर्थोऽत्र कृष्णसेवाप्रेरणं, तस्य लक्षणं गुरुकृपा॥१११६

---

१११४। किं-कतर। लब्धुमिच्छा लिप्सा तस्यां गम्यमानायां किंकतरकतमैर्योगे भविष्यति ते अच्युतः वालकल्कि-कल्की च भवन्ति। लिप्सा प्रश्नेनैव गम्यत इत्याह—कृष्णदर्शनमिति। दर्शयतीत्यादि दृशेर्ण्यन्तस्य रूपम्॥

प्रश्न। प्रश्नस्योत्तरे किं कतरकतमैर्योगे भविष्यति ते अच्युतादयः। एवमिति, किम्-शब्दात् अतरच्प्रत्यये कृते कतरशब्दः सिध्यति। तस्मादेवातमच्प्रत्यये कृते कतमशब्दः सिध्यति। लिप्सायामिति किम्? को मथुरां गमिष्यति॥

१११५। वाञ्छि। वाञ्छितादन्यसिद्धौ गम्यमानायां च भविष्यति ते अच्युतादयो भवन्ति। यो दध्योदनमिति, वाञ्छितात् दध्योदनात् कृष्णदर्शनसिद्धिर्गम्यते। दध्योदनमिति दध्ना उपसिक्त ओदनो दध्योदनस्तम्। वाञ्छितादन्यसिद्धिः प्रोत्साहनेनैव गम्यते इत्याह—दातारमिति॥

१११६। विधा। विधातुरर्थो विधात्रर्थस्तस्य लक्षणात् ज्ञापका-च्चोत्तरे भविष्यति ते अच्युतादयः स्युः। लक्षणपदेनात्र लक्षणार्थको धातुर्लक्ष्यते। कृपयतीत्यादिना ण्यन्तस्य कृपेः रूपं कृपां करोतीत्यर्थे णिः॥

१११७। मुहूर्तोपरितनत्वे तु विधिश्चात्र।

कृपयेद्वेति। भविष्यतीति निवृत्तम् ॥ १११७ ॥

१११८। वर्तमानसामीप्ये वर्तमानवद्वा भूते भविष्यति च।

कदा त्वं कृष्णमद्राक्षीः, द्रक्ष्यसि वा? तत्राह—एष पश्यामि। पक्षे यथाप्राप्तम् ॥ १११८ ॥

१११९। आशंसायां भविष्यति वर्तमानवद्भूतवच्च वा।

क्षिप्रार्थ उपपदे कल्किः। आशंसार्थे विधिः। कृष्णश्चेदागच्छति, आगमत्, आगमिष्यति वा, सुखं पश्यामः, अद्राक्ष्म, द्रक्ष्यामो वा। तथा, कृष्णश्चेत् क्षिप्रमागमिष्यति, त्वरितं द्रक्ष्यामः। तथा कृष्णश्चेदागच्छेत्तर्ह्याशंसे त्वरितं पश्येयम् ॥ १११९ ॥

---

१११७। मुहू। विधात्रर्थस्य लक्षणस्य मुहूर्तोपरितनत्वे सति। अत्र विषये विधिश्च स्यात्। मुहूर्तोपरितनत्वे घटिकाद्वयोर्ध्वजातत्वे ॥

१११८। वर्त। सामीप्य इति समीपशब्दात् स्वार्थे तद्धितः, वर्तमानसमीप इत्यर्थः। यद्वा, वर्तमानसामीप्यं यत्र तस्मिन् वर्तमानसन्निहित इत्यर्थः। एवम्भूते भूते भविष्यति च वर्तमानवद्वा भवति, वर्तमाने यथा कार्यं भवति, तथा तयोरपि भवतीत्यर्थः। अद्राक्षीरिति भूतकालज्ञापनार्थम्। द्रक्ष्यसीति भविष्यत्कालज्ञापनार्थम्। एवं पश्यामीति युष्मदाद्यप्रयोगेऽपि लभ्यत इत्युक्तम्, अतोऽत्र अस्मदोऽप्रयोगेऽपि अस्मल्लाभ एष इति अस्मद्विशेषणम्। ततश्च एषोऽहमिदानीमद्राक्षं द्रक्ष्यामि वेत्यर्थः। इदानीमित्यर्थलब्धमिति ज्ञेयम्। पक्षे यथाप्राप्तमिति। भूतविहितो भविष्यत्विहितश्च प्रत्ययो भवतीत्यर्थः ॥

१११९। आशं। अप्राप्तस्य प्रियार्थस्य प्राप्तीच्छा आशंसा, तस्यां गम्यमानायां भविष्यति वर्तमानवत् भूतवच्च कार्यं वा भवतः, पक्षे भविष्यद्विहितः प्रत्ययो भवतीत्यर्थः। उप समीपे स्थितं पदमुपपदं तस्मिन्। क्षिप्रार्थे शीघ्रार्थे उपपदे सति आशंसायां गम्यमानायां

११२० । क्रियासातत्यसामीप्ययोर्यथाकालमनद्यतने भुतेश-कल्की ।

क्रियासातत्ये यथा—यावज्जीवं हरिमसेविष्ट, सेविष्यते वा। येयं द्वादश्यतिक्रान्ता, तस्यां हरिमपूजयत्, आगामिन्यां पूजयिष्यति च ॥ ११२० ॥

११२१ । सीमोक्ताववरस्मिन् विभागे भविष्यदनद्यतने कल्किः, कालविभागे चाहोरात्रसम्बन्धहीने परस्मिंस्तु वा ।

योऽयम् आ गोवर्धनाद्गन्तव्यः पन्थाः, तस्य यदवरं राधाकुण्डं, तत्र तदाराधनं करिष्यामः। तथा आगामिवत्सरस्य योऽवरो वैशाखस्तत्र हरिमाराधयिश्यामः। नेह—आगामिमासस्य योऽवरः

---

भविष्यति कल्किः स्यात् । क्षिप्रार्थोपपदसद्भावेऽपि आशंसार्थे उपपदे सति भविष्यति विधिः स्यात् । पूर्वसूत्रेण कल्कौ प्राप्ते विधानम् । तथा कृष्णश्चेदिति पूर्वत्र सम्भावनायां विधिः परत्रोदाहरणमिति । त्वरितं शीघ्रम् ॥

११२० । क्रिया । क्रियायाः सातत्ये सामीप्ये च गम्यमाने यथाकालं कालानतिक्रमेण अनद्यतने भूतेशकल्की भवतः । अनद्यतनभूते भूतेशो भवति । अनद्यतनभविष्यति कल्किर्भवतीत्यर्थः । यावज्जीवमिति णम्वन्तम् । आगामिन्यां द्वादश्याम् ॥

११२१ । सीमो । सीमाया उक्तौ अवरस्मिन् चरमे विभागे सति भविष्यदनद्यतने अनद्यतनभविष्यति कल्किः स्यात् । सीमोक्तौ अहोरात्र-सम्बन्धहीने अवरस्मिन् कालस्य विभागे च सति भविष्यदनद्यतने कल्किः स्यात् । सीमोक्तौ परस्मिन् कालविभागे तु सति कल्किर्वा भवति । आ गोवर्धनादिति, आङत्र सीमायां गोवर्धनपर्यन्तमित्यर्थः । तस्य पथः । अवरं पश्चात् । तत्र कुण्डे, तदाराधनं राधाराधनम् । अवरोऽन्त्यः । आराधयिष्यामि इति स्वार्थे णिः । नेहेति कल्किरिति शेषः । हायनस्य

पञ्चदशरात्रस्तत्र श्रीभागवतमध्येतास्महे। अत्र तु वा—आगामि-वर्षस्याग्रहायण्याः परस्मिन् गीतां श्रोष्यामः, श्रोतास्मः। क्षिप्रार्थ इत्यादिना नियमा उक्ताः ॥ ११२१ ॥

११२२। विधिः। तद्विषयक्रियातिपत्तौ त्वजितो भूतभविष्यतोः।

विभू इमौ ; क्रियाया अनिष्पत्तिः क्रियातिपत्तिः ॥ ११२२ ॥

११२३। हेतुतत्फलयोर्विधिस्तद्विषये कल्किश्च।

प्रभू चेमौ। तत्तन्मात्रे विधिकल्की। विधिविषयक्रियाति-

---

वत्सरस्याग्रः अग्रहायणः तेन युक्ता पौर्णमासी आग्रहायणी तस्या आग्र-हायण्या इति मार्गशीर्षस्य पौर्णमास्या इत्यर्थः। क्षिप्रार्थ इत्यादिना नियमा उक्ता इति। आशंसायां भविष्यति वर्तमानवद्भूतवच्च वे'त्यनेन अच्युतः भूतविहितप्रत्ययाः, पक्षे कल्किश्च भवति। आशंसायां क्षिप्रार्थे उपपदे कल्किरेव स्यादिति नियमः। आशंसार्थ इति, क्षिप्रार्थोपपद-सद्भावेऽपि आशंसार्थे उपपदे विधिरेव, नतु कल्किरिति नियमः। ननु क्रियासातत्येत्यादेः सीमोक्तावित्यादेश्च कथं नियमत्वं, यतः क्रियेत्यत्रा-नद्यतने भूतेशकल्क्योरप्राप्तौ सीमेत्यत्र भविष्यदनद्यतने च कल्केरप्राप्तौ तत्तत्प्राप्तिविहितत्वात् ते विधिसूत्रे एव भवतः ? उच्यते। अनद्यतन-भूते भूतेश्वरादिः प्राप्नोति, अनद्यतनभविष्यति बालकल्किः प्राप्नोति, पदसंस्कारवेलायामनद्यतनस्य अविद्यमानतया भूतेशकल्की अपि प्राप्नुतः, अतस्तेषां प्राप्तौ नियमत्वं क्रियासातत्यसामीप्ययोर्यथाकालमनद्यतने भूतेशकल्की एव भवत इति। सीमोक्तावरस्मिन् विभागे भविष्यदनद्यतने कल्किरेवेति। एवं कालेत्यादेश्च नियमत्वं ज्ञेयम्।

११२२। विधिः। विधिः स्यात्। सूत्रमिदमनुवादरूपम्। तद्वि, व्यक्तार्थमेतत्। इदमप्यनुवादरूपम्। इमौ विध्यजितौ। क्रियातिपत्तिलक्षणमाह—क्रियाया इति। सामान्यतो विधिसूत्रमुक्तं, कस्मिन्नर्थे स भवतीति विशेषसूत्रमाह ॥

पत्तौ त्वजित इत्यर्थः। कल्किश्चात्र विधिविषय एव। एवमुत्तरत्रापि। वृन्दावनं चेद्गच्छेत्, कृष्णं पश्येत्। एवं कल्किः। नेह—कृष्णं पश्यतीति नमस्कुरुते, इति-शब्देनैव हेतुतत्फलद्योतनात्। एवं कृष्णं पश्यतीति तस्मान्नमस्करोतीत्यादि। क्रियातिपत्तौ—श्रीवृन्दावनं चेदगमिष्यत्, कृष्णमद्रक्ष्यत्। हेतुतत्फलयोरित्यधिकारमात्रं विधानसूत्रमपेक्षते, तेन सम्भावनायां यो विधिर्वक्ष्यते, तमपेक्ष्येदमुदाहृतम् ॥ ११२३ ॥

**११२४। सम्भावनार्थधातूपपदे यदित्यस्य प्रयोगे तु तद्विधिरेव।**

सम्भावयामि अवकल्पयामि भवान् वृन्दावनं चेद्गच्छेत्, कृष्णं पश्येत्, द्रक्ष्यति वा। यत्प्रयोगे तु—सम्भावयामि यन्मथुरां गच्छेत्, कृष्णं पश्येदित्येव। क्रियातिपत्तावद्रक्ष्यत्। एवमुत्तरेष्वपि अजित-प्रयोगा मन्तव्याः ॥ ११२४ ॥

---

११२३। हेतु। हेतुः कारणम्। हेतुश्च तत्फलञ्च तयोर्गम्ययोर्विधिर्भवति। विधिविषये कल्किश्च भवति। इमौ विधिकल्की। तत्तन्मात्रे हेतुतत्फलमात्रे गम्ये। विधिकल्की इति भवत इति शेषः। विधिविषयेत्यनेन अजितोऽपि हेतुतत्फले। एवं कल्किरिति;—वृन्दावनं चेद्गमिष्यति कृष्णं द्रक्ष्यतीति। नेहेति विधिकल्की इति शेषः। हेतुमाह—इतिशब्देनैवेति। एवं कृष्णं पश्यति तस्मान्नमस्करोतीति। अत्र तस्मादित्यनेनैव हेतुतत्फलद्योतनं तेन न विधिकल्की। वृन्दावनं चेदगमिष्यत् कृष्णमद्रक्ष्यदिति हेतुतत्फलयोर्वृन्दावनकृष्णदर्शनयोरनिष्पत्तिर्वाक्येनैव गम्यते। हेतुतत्फलयोरितीति कर्तृभूतम्। अधिकारमात्रमिति अधिकारमात्रोक्तमित्यर्थः। विधानसूत्रमिति कर्मभूतम्। तं विधिम्। इदमिति वृन्दावनं चेद्गच्छेत् कृष्णं पश्येदित्येतदित्यर्थः। तस्मादत्र सम्भावनायां विधिरिति भावः॥

११२४। सम्भा। हेतुतत्फलयोर्गम्यमानयोः सम्भावनार्थे धातुसम्बन्धिन्युपपदे सति पूर्वोक्तेऽर्थे विधिकल्क्यजिता भवन्ति। यदित्यस्य

११२५। वाढार्थोपताप्योर्योगे विधिः, शक्ति-सम्भावने चालंशब्दाप्रयोगे तथा।

उत कृपयेत्, अपि कृपयेत् कृष्णः। तथा अपि कृष्णं वशं कुर्यात्। नेह विधिः, किन्त्वधिकारात् कल्किरेव। अलं कृष्णं वशीकरिष्यति ॥ ११२५॥

११२६। इच्छार्थाद्वर्तमाने विध्यच्युतौ।

इच्छेदिच्छति कृष्णम् ॥ ११२६ ॥

११२७। इच्छार्थधातुसत्त्वे, विधिनिमन्त्रणामन्त्राधीष्टिशंप्रश्नप्रार्थनेषु च विधिविधातारौ।

इच्छामि कृष्णं पश्येयं पश्यानि वा। विधिरज्ञातज्ञापनं

---

प्रयोगे तु तद्विधिरेव भवति, नतु कल्क्यजितौ। तद्विधिरिति स चासौ विधिश्चेति विग्रहः। सम्भावना तत्क्रियायोग्यतानिश्चयः। अवकल्पयामीति सम्भावयामीत्यर्थः। एवमिति उत्तरेषु लक्षणेषु मन्तव्या ज्ञातव्या ॥

११२५। वाढ। वाढमतिशयः तदर्थयोरुपताप्योर्योगे विधिः स्यात्। सर्वेषामपवादोऽयं योगः। कल्किरपि न भवतीति सूचयतीति सूचयितुं विधिरिति कृतम्। सम्भावने च गम्यमाने अलंशब्दस्याप्रयोगे विधिः स्यात्। उत कृपयेत्, अपि कृपयेत् कृष्ण इति अतिशयमित्यर्थः। वाढार्थेति किम् ? उत कृष्णो गमिष्यति, अपि धास्यति सुखम्। अत्र उत-शब्देन प्रश्नो गम्यते। अपिशब्देन आच्छादनं गम्यते। अपि कृष्णं वशं कुर्यादिति, अत्रापिशब्दः सम्भावनार्थः। नेह विधिरिति, अलंशब्द-प्रयोगादिति शेषः।

११२६। इच्छा। वर्तमाने काले इच्छार्थाद्धातोरुत्तरे विध्यच्युतौ भवतः। अच्युतः सिध्यत्येव। विध्यर्थसूत्रमिदम्। इच्छेदिति, इषु—इच्छायाम् ॥

११२७। इच्छार्थ। इच्छार्थस्य धातोः सत्त्वे विद्यमानत्वे विध्यादिष्वर्थेषु च विधिविधातारौ भवतः। विधिलक्षणमाह—विधिरज्ञातज्ञापनं

प्रेषणञ्च। स च पुनर्द्विविधः—दृष्टार्थादृष्टार्थतया ; यथा—स्ववृत्तिं कुर्यात्, कृष्णं भजेत्। निमत्रणम्—नियोगकरणम् ; इह भुञ्जीथाः वैष्णव। आमत्रणम्—कामाचारकरणम् ; इहासीथाः। अधीष्टिः—सत्कारपूर्विका व्यापारणा ; गुरो मां कृष्णमुपदिशेः। संप्रश्नोऽनुज्ञा-प्रार्थनम् ; किं गीतामधीयीय श्रीभागवतं वा ? प्रार्थने—लभेय हरिभक्तिम्। एवं स्ववृत्तिं करोतु इत्यादि ॥ ११२७ ॥

११२८। प्रैषातिसर्गप्राप्तकालत्वेषु विधातृविष्णुकृत्यौ।

प्रैषोऽत्र प्रेरणमात्रम्। अतिसर्गकामाचाराभ्यनुज्ञा। कृष्णं भज त्वं, कामं भज त्वं कृष्णम्। कृष्णभक्तौ कालस्ते प्राप्तः, कृष्णं भज। त्रिष्वपि कृष्णो भजनीय इत्यादि। पृथग्विधातृग्रहणं प्राप्तकालत्वे प्राप्त्यर्थम् ॥ ११२८ ॥

---

प्रेषणञ्चेति। स च विधिः। दृष्टार्थेति, दृष्टार्थतया अदृष्टार्थतया चेति। दृष्टार्थोऽदृष्टार्थश्चेत्यर्थः। अर्थशब्दः प्रयोजनवाची, दृष्टप्रयोजनकोऽदृष्ट-प्रयोजनकश्चेति। स्ववृत्तिं कुर्यादिति, अत्र विधेरज्ञातज्ञापनरूपता स्ववृत्तिकरणस्य व्यवहारमार्गसौष्ठवजनकत्वात् दृष्टार्थता च। कृष्णं भजेदिति, अत्र विधेरज्ञातज्ञापनरूपता कृष्णभजनस्य परमार्थमार्गसौष्ठव-जनकत्वाददृष्टार्थता च। प्रेषणे—त्वं पुष्पाणि चिनुयाः। निमन्त्रण-लक्षणमाह—निमन्त्रणमिति। नियोगो नियुक्तिः। नियोगकरणमत्र भोजनविषयकमेव ज्ञेयम्। अन्यथा प्रेषणनियोगकरणयोर्भेदो न स्यात्। आमन्त्रणलक्षणमाह—आमन्त्रणमिति। कामचारेण इच्छया करणमिति तस्याकरणे दोषाभावः। अधीष्टिलक्षणमाह—अधीष्ठिरिति। सत्कार आदरः, व्यापारणा नियुक्ति, अनुज्ञा आज्ञा, प्रार्थनं याच्ञा ॥

११२८। प्रैष। प्रैषश्च अतिसर्गश्च प्राप्तकालत्वञ्च तेष्वर्थेषु विधातृविष्णुकृत्यौ भवतः। अतिसर्गलक्षणमाह—अतिसर्ग इति। कामेति, कामाचारे इच्छाप्रवृत्तौ अभ्यनुज्ञेति। कृष्णं भज त्वमिति प्रैषोदाहरणम्। कृष्णभक्तौ कृष्णभजने। त्रिष्वपीति प्रैषादिष्विवत्यर्थः।

११२९। मुहूर्तस्योपरि प्रैषादिषु विधिश्च, स्म-योगे त्वधीष्टौ च विधातैव।

मुहूर्तस्योपरि कृष्णं भजेरित्यादि। तथा कृष्णं भज स्म, कृष्णं भजेरित्यादि। तथा, कृष्णं भज स्म, कृष्णमुपदिश स्म ॥ ११२९ ॥

११३०। कालसमयवेलाप्रयोगे यच्छब्देन योगे विधिः।

कालोऽयं यत् सेवेथाः कृष्णम्। एवं समयोऽयमित्यादि ॥११३०॥

११३१। अर्हशक्त्योर्विधिविष्णुकृत्यतृणः।

कृष्णो रुक्मिणीमुद्वहेत्, हरेदित्यादि ॥ ११३१ ॥

११३२। आशिषि कामपालविधातारौ।

कृष्णः कल्याणं क्रियात्, करोतु, कुरुताद्वा ॥ ११३२ ॥

---

प्रैषेऽतिसर्गे च पूर्वलक्षणेनैव विधाता प्राप्नोति। तथापि यदिह विधातृ-ग्रहणं कृतं, तत्फलमाह—पृथगिति ॥

११२९। मुहू। मुहूर्तस्योपरि प्रैषादिषु सत्सु विधातृविष्णुकृत्यौ विधिश्च भवति। स्म-शब्दयोगे तु प्रैषादौ अधीष्टौ च अर्थे विधातैव भवति। इत्यादिपदेन विधातृविष्णुकृत्यावुदाहार्यौ। कृष्णं भज स्मेति प्रैषोदाहरणम्। कृष्णमुपदिश स्मेति अधीष्टुदाहरणम् ॥

११३०। काल। कालसमयवेलानां प्रयोगे यच्छब्देन योगे सति प्रैषादावर्थे गम्यमाने विधिः स्यात् ॥

११३१। अर्ह। अर्हतीति अर्हो योग्यः, अर्हे कर्तरि शक्तौ च गम्यमानायां विधिविष्णुकृत्यतृणो भवन्ति। कृष्णो रुक्मिणीमुद्वहेदिति। कृष्ण एव रुक्मिण्युद्वहनमर्हतीति गम्यते। कृष्णो रुक्मिणीं हरेदिति कृष्णस्यैव रुक्मिणीहरणे शक्तिरस्तीति गम्यते। इत्यादीत्यादिपदेन कृष्णेन रुक्मिण्युद्वोढव्या। कृष्णेन रुक्मिणी हर्तव्या। कृष्णो रुक्मिण्या उद्वोढ़ा। कृष्णो रुक्मिण्या हर्तेति ॥

११३२। आशि। आशीरिष्टार्थस्याशंसनम्, आशंसनमिच्छा। तस्यां गम्यमानायां कामपालविधातारौ भवतः। सूत्रमिदमाख्यातसूत्रानुवादरूपम्।

११३३। माङ्योगे सर्वापवादी भूतेशः।

मा कृष्णं परित्याक्षीः। कथं मा भवतु तस्य पापं मा करिष्यति। निरनुबन्धोऽयं माशब्द इति॥ ११३३॥

११३४। मास्मयोगे भूतेश्वरश्च।

मास्म कृष्णं त्यजः, मास्म त्याक्षीः। व्यस्तेऽपीच्छन्ति केचित्—स्म करोन्मा, स्म कार्षीन्मा। पृथग्योगात् केवल-'मा'-योगे तु न स्यात्—मा कृष्णं त्याक्षीरित्येव॥ ११३४॥

११३५। कालसामान्ये।

विभुरयम्॥ ११३५॥

११३६। अपिजात्वोर्योगे गर्हायामच्युतः।

अपि भवान् अवैष्णवं श्राद्धे भोजयति? एवं जातु। तदेतत्-पर्यन्तं क्रियातिपत्तौ भाविनि च नित्यत्वेनाजितो ज्ञेयः। अथ भूते विकल्पेन भविष्यति तु नित्यत्वेन॥ ११३६॥

११३७। विधिविषयक्रियातिपत्तौ भूतेऽजितो वा।

विभुरयम्॥ ११३७॥

---

११३३। माङ। व्यक्तार्थमेतत्। कथमिति, कथं भूतेशो भवतीति विरोधः। सिद्धान्तमाह— निरनुबन्ध इति॥

११३४। मास्म। मास्मयोगे भूतेशो भूतेश्वरश्च भवति। व्यस्तेऽपीति, व्यस्ते वैपरीत्ये योगेऽपीत्यर्थः। अस्माकं मते समस्ते योगे भवति। न स्यादिति भूतेश्वर इति शेषः॥

११३५-११३६। काल। अपि। गर्हा कुत्सा, तस्यां गम्यमानायाम् अपि जात्वोर्योगे कालसामान्ये अच्युतो भवति। तदिति तस्मात्। अथेति अतःपरमित्यर्थः। नित्यत्वेनेति अजितो ज्ञेय इति शेषः॥

११३७। विधि। व्यक्तार्थमेतत्॥

११३८। कथं-योगे गर्हायां विध्यच्युतौ वा।

स कथमवैष्णवमन्त्रं जपेत्, जपति वा। पक्षे यथाविहितञ्च। कथं जपिष्यति, अजापीदित्यादि। विधिविषयेति। स कथमवैष्णवं मन्त्रमजपिष्यत्, जपेत् जपति वा। भविष्यति तु अजपिष्यदित्येव॥ ११३८॥

११३९। किंकतरकतमैर्योगे गर्हायां विधिकल्की।

को नामावैष्णवं मन्त्रं जपेत्, जपिष्यति वा। एवं कतरो नामेत्यादि। क्रियातिपत्तौ भूते अजपिष्यत्, पक्षे जपेत्, जपिष्यति वा। भविष्यति तु अजपिष्यत्। एवमुत्तरत्राप्यजितो दृश्यः॥ ३९॥

११४०। अश्रद्धामर्षयोर्विधिकल्की।

प्रभुरयम्। न श्रद्दधे कृष्णान्योऽग्रपूजां लभेत, लप्स्यते वा। एवं न मर्षयामीत्यादि। सर्वत्राश्रद्धामर्षयोर्गम्यमानत्वेऽपि प्रयोगाः ज्ञेयाः॥ ११४०॥

११४१। किंकिलास्त्यर्थयोर्योगे तु कल्किः।

---

११३८। कथं। गर्हायां गम्यमानायां कथंशब्दयोगे सति कालसामान्ये विध्यच्युतौ वा भवतः। अजितोऽनुवर्तते सोऽपि भूते विधिविषयक्रियातिपत्तौ वा भवतीति। अवैष्णवमिति अवैष्णवं मन्त्रमित्यर्थः।

११३९। किं। गर्हायां गम्यमानायां किमादियोगे कालसामान्ये विधिकल्की भवतः। अजितोऽनुवर्तते सोऽपि क्रियातिपत्तौ भूते वा भवति।

११४०। अश्र। अश्रद्धा च अमर्षश्च तयोः, अश्रद्धामर्षयोर्गम्यमानयोः कालसामान्ये विधिकल्की भवतः। अत्र क्रमव्यवस्थानेष्टेत्युदाहरण एव व्यक्तम्। न श्रद्दध इति नाभिलषामीत्यर्थः। न मर्षयामीति न सहे इत्यर्थः। सर्वत्रेति, तस्मात् न श्रद्दध इत्यस्य न मर्षयामीत्यस्य च अनुक्तत्वेऽपि कृष्णान्योऽग्रपूजां लभेत लप्स्यते वेत्यादिप्रयोगा भवन्तीति॥

११४१। किंकिल। अश्रद्धामर्षयोर्गम्यमानयोः किंकिलशब्दस्य

विध्यपवादः। नावकल्पयामि किं किल कृष्णेतरोऽग्रपूजां लप्स्यते। एवं न मर्षयामि, न प्रत्येमि अस्ति नाम कृष्णेतर इत्यादि॥ ११४१॥

११४२। यद्-यदि-यदा-जातुयोगे विधिः।

कल्क्यपवादः। न श्रद्दधे न क्षमे भवानपि कृष्णवत् यत् पूज्येत, यदि पूज्येत। एवं यदा, जातु॥ ११४२॥

११४३। यच्च-यत्रयोश्च विधिः।

कल्क्यपवादः। न श्रद्दधे न क्षमे यच्च कृष्णवदितरः पूज्येत, यत्र वा। अश्रद्धामर्षौ निवृत्तौ॥ ११४३॥

११४४। यच्च-यत्रयोगे गर्हायां विधिराश्चर्ये च।

सर्वापवादः। यच्च भवान् कृष्णपक्षं विमुञ्चेत्तदेतदन्याय्यम्। यत्रेत्यादि, तथा यच्चेत्यादि, तदेतदाश्चर्यम्॥ ११४४॥

११४५। यच्च-यत्राभ्यामन्यत्रोपपदे त्वाश्चर्याव-गतौ कल्किर्यदिं विना।

चित्रं कृष्णेतरः सर्वं वशयिष्यति। यदि-प्रयोगे तु—चित्रं

---

अस्त्यर्थस्य च योगे तु कल्किः स्यात्। नावकल्पयामीति न सम्भावयामीत्यर्थः।

११४२। यद्यदि। अश्रद्धामर्षयोर्गम्यमानयोर्यदादियोगे काल-सामान्ये विधिः स्यात्। यद्यादिसाहचर्यात् यदित्यव्ययमेव गृह्यते इति ज्ञेयम्। न श्रद्दध इति कृष्णेतरं प्रति कोऽपि कथयति॥

११४३-११४४। यच्च। अश्रद्धामर्षयोर्गम्यमानयोर्यच्च-यत्रयोश्च योगे कालसामान्ये विधिः स्यात्। आश्चर्ये च गम्यमाने यच्च-यत्र-योगे विधिः स्यात्। अन्याय्यमनुचितम्। एवं यत्रेत्यादि। तथा यच्च भवान् कृष्णपक्षं विमुञ्चेत् तदेतदाश्चर्यमिति॥

११४५। यच्च। आश्चर्यावगतौ अर्थे यदिं विना यच्च-यत्राभ्याम-न्यस्मिन्नुपपदे सति कालसामान्ये कल्किः स्यात्। चित्रम् आश्चर्यम्। वशयिष्यतीति वशं करिष्यतीत्यर्थः। स कृष्णेतरः। वशयेदिति यद्यदि-

यदि स वशयेत्। उक्तोऽजितविकल्पः। अत्र पूर्वत्र च यत्र विधिविषयत्वाभावस्तत्र क्रियातिपत्तौ नाजितस्तद्विषयत्वे तु यथोचितं ज्ञेयम्। इति कालसामान्यं निवृत्तम्॥ ११४५॥

११४६। धातुसम्बन्धे प्रत्ययाः।

द्वयोर्धात्वर्थयोर्विशेषणविशेष्यभावे सति भिन्नकाला अपि प्रत्ययाः साधवो भवन्ति। कृष्णोऽयं मथुरां गतः, श्वो भविता। मथुरायां वसन् यादवान् ददर्श। एवं वर्तमाने तद्धितमतौ—कृष्णभक्तिमानयं भविता। अत्रास्य गमनक्रिया श्वःसत्तायुक्ता भविष्यति, इत्याद्यर्थेषु लब्धेषु गमनादेर्विशेषत्वं, सत्तादेर्विशेषणत्वं सिध्यति। सोमयाजी तव पुत्रो जनिता—इत्यत्र च जनिना जननक्रियानन्तरसत्तोच्यते॥ ११४६॥

११४७। क्रियासमभिहारे कालत्रयेऽपि विधाता, तस्य हि-स्वावेव, तौ च तध्वंविषये वा।

---

यदा-जातु-योगे विधिः' इत्यनेन विधिः। अत्रेति, क्रियातिपत्ताविति क्रियातिपत्तावपीत्यर्थः। तद्विषयत्वे विधिविषयत्वे। यथोचितमिति कदाचिन्नित्यत्वेन कदाचिद्विकल्पेनेत्यर्थः। ज्ञेयमिति अजितविधानमित्यर्थः॥

११४६। धातु। धातुसम्बन्ध इत्यस्यार्थमाह—द्वयोर्धात्वर्थयोविशेषणविशेष्यभावः। कृष्णोऽयमिति गत इति भूते, भवितेति भविष्यति। मथुरायामिति वसन्निति वर्तमाने ददर्शेति भूते। वासो दर्शनयुक्त इति वासस्य विशेष्यत्वं कृष्ण भक्तिमानिति वर्तमाने, भवितेति भविष्यति। भक्तिमत्त्वं सत्तायुक्तम्। भविष्यतीति भक्तिमत्त्वस्य विशेष्यत्वं सत्तागा विशेषणत्वम्। भक्तिरस्यास्तीत्यर्थे मतुविधानात् मतुप्रत्ययस्य क्रियार्थता। अतो भक्तिमत्त्वस्य धात्वर्थवाचकता। अस्य कृष्णस्य। सोमयाजीति, जनिना जनधातुना जननक्रियायामनन्तरम् अन्तर्भूता सत्ता उच्यते। ततश्च तव पुत्रस्य सोमयजनं सत्तायुक्तं भविष्यतीति। अत्र सोमयजनस्य विशेष्यत्वं सत्ताया विशेषणत्वम्। सोमयाजीति भूते। 'करणे यजो णिनिः'इति णिनिः। जनितेति भविष्यति॥

ततः इत्येव शब्दः प्रयुज्यते। तदनन्तरं यथार्हं तद्धातुपदानुप्रयोगः। कर्तृकर्मणोः प्रयोगस्तु तत्पूर्वतस्तत्परतो वा। क्रियायाः समभिहारः पौनःपुन्यमतिशयश्च। तत्र द्विरुक्तिर्वाच्या। पश्य पश्य इत्येवायं पश्यति कृष्णम्। एवमद्राक्षीत् द्रक्ष्यति वा। सेवस्व सेवस्व इत्येवायं सेवते, एवमसेविष्ट, सेविष्यते वा। अर्थस्तु—कृष्णं मुहुर्भृशं वा पश्यतीत्यादिको ज्ञेयः। यङ्प्रत्ययस्तस्मिन्नेवार्थे विधीयमानोऽपि स्वयमेव समर्थत्वाद्द्विरुक्तिं नापेक्षत इति भेदः। युष्मदस्मदोः कर्त्रोस्तु, पश्य पश्य इत्येव त्वं पश्यसीत्यादिकमु-

---

११४७। क्रिया। क्रियासमभिहारे गम्यमाने कालत्रयेऽपि विधाता भवति। तस्य क्रियासमभिहारे विहितस्य विधातुः स्थाने हिस्वावेव भवतः। परपदिधातोर्विधातुः स्थाने हिर्भवति, आत्मपदिधातोर्विधातुस्तु स्वो भवतीति ज्ञेयम्। तौ च हि-स्वौ तध्वं-विषये वा भवतः॥

परिभाषासूत्रमेतत्। तदा तदनन्तरम् इत्येवेत्यनन्तरम्। यथार्हं यथायोग्यं तद्धातुसम्बन्धिनः पदस्य अनुप्रयोगो भवति। यस्माद्धातोर्विधाता विधीयते तत्पदेन स परामृश्यते। कर्तृकर्मणोः प्रयोगस्तु तस्मादनुप्रयुक्तात् पदात् पूर्वस्मिन् तस्मात् परस्मिन् वा भवति।

तत्र। तत्र क्रियासमभिहारे द्विरुक्तिर्वाच्या वक्तव्या। पश्य पश्येति। अत्र वर्तमाने विधाता तस्य हिः, पश्येति ततो द्विरुक्तिः, पश्य पश्येति तत इत्येव शब्दप्रयोगः यथार्हमित्युक्तम्, अतस्तदनन्तरं पश्यतीत्यस्यानुप्रयोगः तत्पूर्वतस्तत्परतो वेत्युक्तम्, अतोऽनुप्रयुक्तात् पूर्वस्मिन् कर्तुः प्रयोगः, तस्मात् परस्मिन् कर्मणः प्रयोगः। अनुप्रयुक्तात् पूर्वस्मिन् परस्मिश्च उभयोरपि प्रयोगो भवति। यथा—पश्य पश्येत्येवायं कृष्णं पश्यति, पश्य पश्येत्येव पश्यत्ययं कृष्णमिति। एवमिति, पश्य पश्यत्येवायमद्राक्षीत् कृष्णमिति। अत्र भूते विधाता, अतोऽद्राक्षीदित्यस्यानुप्रयोगः। कृष्णं मुहुर्भृशं वा अद्राक्षीदित्यर्थः। पश्य पश्येत्येवायं द्रक्ष्यति। कृष्णमिति भविष्यति विधाता, अतो द्रक्ष्यतीत्यस्यानुप्रयोगः कृष्णं मुहुर्भृशं वा द्रक्ष्यतीत्यर्थः। सेवस्वेति, अत्र विधातुः स्थाने स्वः कृष्णं मुहुर्भृशं वा सेवते इत्यर्थ इति मुहुः पुनः पुनः। अस्य विधानस्य

दाहार्यम् । तौ च त-ध्वं-विषये वा ; यथा, पश्यत पश्यत इत्येव यूयं पश्यथ कृष्णम् । पक्षे—पश्य पश्येत्यादि । तथा सेवध्वं सेवध्वमित्येव यूयं सेवध्वे कृष्णम् । पक्षे—सेवस्व सेवस्वेत्यादि ॥११४७॥

११४८ । समुच्चितक्रियावचनाद्विधात्रादिकं वा ।

कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्य इत्येवायं पश्यति, इमौ पश्यतः, इमे पश्यन्ति । अथवा कृष्णं पश्यति, रामं पश्यति, श्रीदामानं पश्यति इत्येवायं पश्यतीत्यादि । एवं युष्मदादिकर्तृषु सर्वेषु कालेषु वचनेषु चोन्नेयम् ॥ ११४८॥

---

यङ्प्रत्ययेन सह भेदमाह—यङ्प्रत्यय इति । तस्मिन्निति क्रियासमभिहारे इत्यर्थः । समर्थत्वात् वलवत्वात् । कर्त्रोरिति कर्त्रोः सतोः । पश्येति, कृष्णं मुहुर्भृशं वा पश्यसीत्यर्थः । पश्यतेति, कृष्णं मुहुर्भृशं वा पश्यथेत्यर्थः । सेवध्वमिति कृष्णं मुहुर्भृशं वा सेवध्वे इत्यर्थः ॥

११४८ । समु । समुच्चिता या क्रिया तद्वचनाद्धातोरुत्तरे कालत्रये विधात्रादिकं वा भवति । क्रियाणां समुच्चये सति वा भवतीत्यर्थः । समुच्चयो मेलनं प्रत्येकसमन्वायकं वा । आदिकमित्यनेन हिस्वादिकं गृह्यते । कृष्णं पश्येति, अत्र वर्तमाने विधाता तस्य हिः । दर्शनक्रियात्र समुच्चिता, अतो दृश्धातोः समुच्चितक्रियावचनत्वम् । कृष्णं पश्यति, रामं पश्यति, श्रीदामानं पश्यतीत्यर्थः । कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येव इमौ पश्यतः इति, कृष्णं पश्यतः, रामं पश्यतः, श्रीदामानं पश्यत इत्यर्थः । एवं इमे पश्यन्तीत्यत्रापि ज्ञेयम् । कृष्णं पश्यतीति । विधात्रादीत्युक्ते पक्षे अच्युत एव । इत्यादीत्यादिपदेन कृष्णं पश्यत, रामं पश्यत, श्रीदामानं पश्यत इत्येव इमौ पश्यत इत्यादि । एवमिति उन्नेयम् अध्याहार्यम् उदाहरणमिति शेषः । तद्यथा,—कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येव त्वं पश्यसि, युवां पश्यथः, यूयं पश्यथ । अथवा, कृष्णं पश्यसि, रामं पश्यसि श्रीदामानं पश्यसीत्येव त्वं पश्यसीत्यादि । कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येवाहं पश्यामि, आवां पश्यावः, वयं पश्यामः । अथवा, कृष्णं पश्यामि, रामं

११४६। अत्र समानार्थनानाधातुप्रयोगे सामान्य-वचनधातुरनुप्रयुज्यते।

कृष्णं पश्य, राममीक्षस्व, श्रीदामानं विलोकयेत्येवं निभालयतीत्यादि ॥ ११४६ ॥

११५०। प्रहासे मन्यत्युपपदाद्धातोरुत्तमस्य मध्यमो, मन्यतेश्च मध्यमस्योत्तमैकवचनम्।

एहि मन्ये कृष्णं द्रक्ष्यसि दृष्टोऽसौ तव पित्रेति। प्रहासे इति किम्? एहि मन्यसे, कृष्णं द्रक्ष्यामि, साधु मन्यसे। एवं मन्येथे, मन्यध्वेऽपि। एहीत्यव्ययं सम्बोधने। तदेवं वैष्णवो भवति। इत्याद्युदाहरणैर्वाक्यानि दर्शितानि ॥ ११५० ॥

**इति अच्युताद्यर्थाः।**



पश्यामि, श्रीदामानं पश्यामीत्येवाहं पश्यामीत्यादि। कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येवायम् अद्राक्षीदित्यादि। कृष्णं पश्य, रामं पश्य, श्रीदामानं पश्येत्येवायं द्रक्ष्यतीत्यादि च ॥

११४६। अत्र। अत्रेति, सामान्यवचनधातुरिति सर्वगतार्थवचनधात्वर्थान्तिरमित्यर्थः। कृष्णं पश्येति। एवं कृष्णं पश्यति, राममीक्षते, श्रीदामानं विलोकयतीत्यर्थः। निभालयतीति, भल–निरूपणे, चुरादिर्निपूर्वो दर्शने वर्तते ॥

११५०। प्रहासे। प्रहासः परिहासस्तस्मिन् गम्यमाने मन्यत्युपपदाद्धातोरुत्तरे उत्तमस्य स्थाने मध्यमो भवति, मन्यतेश्चोत्तरे मध्यमस्य स्थाने उत्तमैकवचनं भवति। मन्यतीति निर्देशो मनो–ज्ञाने इत्यस्य दैवादिकस्यैव ग्रहणार्थः। एहीति मन्यसे इत्यत्र मन्ये इति द्रक्ष्यामीत्यत्र द्रक्ष्यसीति। प्रहासं प्रतिपादयितुं प्रतिवचनमाह—दृष्टोऽसाविति। असौ कृष्णः साधू मन्यस इति प्रतिवचनम् ॥



## अथ आत्मपद-परपदप्रक्रियाविशेषौ ज्ञेयौ

११५१। भावे कर्मणि सर्वस्माद्धातोः स्यादात्मनेपदम् ।
ङिन्द्ध्र आत्मपदिभ्यश्च कर्तर्यपि विधीयते ॥

अत्रात्मनेपदं, विभुश्च। भूयते, क्रियते, कामयते, एधते ॥११५१

११५२। ञिद्ध्र उभयपदिभ्यो णेः कर्तृगामिक्रियाफले।

कुरुते, यजते, कारयते। अत्र स्वार्थमिति गम्यम्। नेह—
करोति, यजति, कारयति। अत्र परार्थमिति गम्यम् ॥ ११५२ ॥

---

११५१। भावे। भावे कर्मणि च वाच्ये सर्वस्माद्धातोरुत्तरे आत्मनेपदं स्यात्। छन्दोऽनुरोधेन आत्मनेपदमित्युक्तमिति ज्ञेयम्। एवमन्यत्रापि। परपरलक्षणेऽपि छन्दोऽस्त्येव, किन्तु मध्ये मध्ये उदाहरणं मन्दधियां सुखप्रतीत्यर्थम्। तद्यथा—'हसि-जल्पि-पठादिभ्यो गति-हिंसार्थकाच्च न'। 'हरतेर्न निषेधः स्याद् वहेरपि च कुत्रचित्'। मध्ये मध्ये उदाहरणं मतान्तरञ्च शब्दार्थमात्रान्नेति कातन्त्रविस्तर इति ॥

ङिद्ध्रः। ङिद्ध्र आत्मपदिभ्यश्च धातुभ्य उत्तरे कर्तर्यपि वाच्ये आत्मनेपदं विधीयते। धातूनामात्मपदित्वं गुण एव ज्ञेयम्। भूयत इति भावे। क्रियत इति कर्मणि। कामयत इति णिङन्तत्वेन ङित्त्वादात्मपदम्। एवं मेङ-देङ-पूङ-डीङ-शीङप्रभृतीनामपि ङित्त्वादात्मपदं ज्ञेयम्। एधत इति एध—बृद्धावित्यस्यात्मपदित्वं गण एव प्रसिद्धम् ॥

११५२। ञिद्ध्रः। कर्तरि वाच्ये ञिद्ध्र उभयपदिभ्यो णेश्च उत्तरे कर्तृगामिक्रियाफले आत्मनेपदं स्यात्। कर्तृगामीति क्रियाफले कर्तृगामिनि सतीत्यर्थः। उभयपदित्वमपि गण एव ज्ञेयम्। कुरुते इति ञित्त्वात्। यजत इति उभयपदित्वात्। कारयत इति ण्यन्तत्वात्। क्रियाफलस्य कर्तृगामित्वं प्रतिपादयितुमाह—अत्रेति ॥

११५३। शब्दान्तरद्योतिते तु तत्फले स्याद्विभाषया।

स्वार्थम्—कृष्णं यजते यजति वा। कर्तृगामीति निवृत्तम् ॥११५३

११५४। धातोः क्रियाव्यतीहारे आत्मनेपदमिष्यते।

व्यतिसिञ्चते, परस्परं सिञ्चतीत्यर्थः ॥ ११५४ ॥

११५५। हसि-जल्पि-पठादिभ्यो गतिहिंसार्थकाच्च न।

व्यतिहसन्ति, व्यतिजल्पन्तीत्यादि। 'शब्दार्थमात्रान्न' इति कातन्त्रस्तद्विस्तराख्यातचन्द्रिकासु। व्यतिगच्छन्ति, व्यतिघ्नन्ति ॥

११५६। हरतेर्न निषेधः स्याद्वहेरपि च कुत्रचित्।

संप्रहरन्ते, संविवहन्ते ॥ ११५६ ॥

११५७। परस्परेतरेतरान्योऽन्ययोगे निषेधनम्।

---

११५३। शब्दा। तत्फले कर्तृगामिक्रियाफले शब्दान्तरेण द्योतिते तु सति विभाषया विकल्पेन आत्मनेपदं स्यात्। यजत इति पूजयतीत्यर्थः ॥

११५४। धातोः। क्रियाव्यतीहारेऽर्थे गम्यमाने धातोरुत्तरे कर्तरि वाच्ये आत्मनेपदमिष्यते। व्यतीहारः परिवर्तः। आत्मनेपदमिति स्पष्टार्थं कृतमिति ज्ञेयम् ॥

११५५। हसि। हस-हसने। जल्प-पठ-व्यक्तायां वाचि। इत्यादिभ्यो गत्यर्थाद्धिंसार्थाच्च उत्तरे क्रियाव्यतीहारे आत्मनेपदं नेष्यते। शब्दार्थमात्रादिति। तद्विस्तरेति तत्पदेन कातन्त्रं परामृष्यते। एतदेव जुमरस्यापि मतम् ॥

११५६। हर। हरतेर्निषेधो न स्यात्। वहेरपि कुत्रचित् निषेधो न स्यात्। संप्रहरन्त इति परस्परं प्रहरन्तीत्यर्थः। हिंसार्थत्वात् निषेधे प्राप्ते निषेधस्य निषेधविधानम्। संविवहन्त इति कन्यां वरञ्च परस्परं प्रापयन्तीत्यर्थः। गत्यर्थत्वात् निषेधे प्राप्ते निषेधस्य निषेधविधानम् ॥

परस्परं व्यतिलुलन्तीत्यादि। क्रियाव्यतिहारो निवृत्तः, आत्मनेपदन्त्वनुवर्तते॥ ११५७॥

११५८। नेर्विशः।

निविशते॥ ११५८॥

११५९। विपराभ्यां जेः।

विजयते, पराजयते॥ ११५९॥

११६०। क्रीञः पर्यववेः परात्

परिक्रीणीते। एवम् अव वि॥ ११६०॥

११६१। आङो दाङो, न चेद्वक्त्रादिकस्य स्यात् प्रसारणम्।

आदत्त मृत्तिकां कृष्णो मुखं व्यादाच्च मायया। आदि-

---

११५७। पर। परस्परादियोगे निषेधनं निषेधो भवति, आत्मनेपदस्येति शेषः। परस्परं व्यतिलुनन्तीति परस्परं लुनन्तीत्यर्थः॥

११५८। नेः। उपेन्द्रात् नेरुत्तरस्माद्विश उत्तरे कर्तरि वाच्ये आत्मनेपदं भवति। निविशत इति विश—प्रवेशने तुदादिः॥

११५९। विपरा। विपराभ्यामुत्तरस्माज्जेरुत्तरे कर्तरि वाच्ये आत्मनेपदं स्यात्। विजयत इति जि—जये भ्वादिः॥

११६०। क्रीञः। पर्यववेः परादुत्तरस्मात् क्रीञः उत्तरे कर्तर्यात्मनेपदं स्यात्। क्रियाफलस्य कर्तृगामित्वात् भावे आत्मनेपदार्थं वचनम्। कर्तृगामित्वे तु ञित्त्वादेवात्मनेपदं सिध्यतीति। परिक्रीणीत इति डु-क्रीञ्—द्रव्यविनिमये क्र्यादिः॥

११६१। आङो। आङ उत्तरस्माद्दाञ उत्तरे कर्तर्यात्मनेपदं स्यात्। चेद्यदि वक्त्रादिकस्य प्रसारणं स्यात्तदा आत्मनेपदं न स्यात्। वक्त्रं मुखम्। आदत्त गृहीतवानित्यर्थः। मुखं व्यादाच्च माययेति निषेधोदाहरणम्। व्याददाति प्रसारितवानित्यर्थः। आदिग्रहणादिति, आस्यं मुखम्। स्यादिति निषेध इति शेषः। विपादिकां व्याददातीति

ग्रहणादास्यप्रसारणसमानक्रियायामपि स्यात्—विपादिकां व्याददाति ; नदी कूलं व्याददाति । स्वीयाङ्गकर्मकादेव निषेधः ; तेन—

अन्यच्च किञ्चिद्वदनं व्यादेहीति दिशन्निव ।
व्याददे स हरिर्वक्त्रं वकस्यामरवैरिणः ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः ; तेन—'किं व्यादत्से विहग वदनम्' इति । अप्राप्तिपक्ष एव सूत्रविधानात् 'कर्तृगामिक्रियाफले भविष्यतीति पुरुषोत्तमः' (पा १।३।२०) ॥ ११६१ ॥

११६२ । क्षान्तौ ण्यन्तागमेः ।

आगमयतेऽपराधं कृष्णः, क्षमते इत्यर्थः । कालहरणेऽपि केचित्, आगमयस्व साधुमिति उदाहरन्ति च ॥ ११६२ ॥

---

विस्तारयतीत्यर्थः । 'पादस्फोटो विपादिकेत्यमरः' । नदीति, नदी कर्त्री कूलं तटं, व्याददाति विदारयतीत्यर्थः । स्वीयाङ्गेति, स्वीयञ्च तदङ्गं चेति स्वीयाङ्गं, स्वीयाङ्गं कर्म यस्य तस्माद्दाञ एव निषेधः, आत्मनेपदस्येति शेषः । अन्यच्चेति, अन्यच्च अपरञ्च । किञ्चिद्वदनं मुखं व्यादेहीति विस्तारय इति दिशन्निव आज्ञापयन्निव स हरिरमरवैरिणो देवशत्रोर्वकस्य वकासुरस्य वक्त्रं मुखं व्याददे विदारितवान् । स्वीयाङ्गकर्मकत्वात् वदनं व्यादेहि इत्यत्र नात्मनेपदम् । स्वीयाङ्गकर्मकत्वाभावात् वकस्य वक्त्रं व्याददे इत्यत्र न आत्मनेपदनिषेधः । अकर्त्रभिप्रायार्थ इति क्रियाफलस्य कर्तृगामित्वाभावे आत्मपदार्थ इत्यर्थः । अतः क्रियाफलस्य कर्तृगामित्वाभाव एव निषेध इति । किमिति, हे विहग वदनं किं व्यादत्से विस्तारयसि । अत्र क्रियाफलस्य कर्तृगामित्वान्न निषेध इति ।

११६२ । क्षान्तौ । क्षान्तावर्थे ण्यन्तादागमेरुत्तरे कर्तर्यात्मनेपदं स्यात् । कालेति, कालहरणे गम्यमाने ण्यन्तागमेरुत्तरे आत्मनेपदं भवतीति केचित् । केचिदिति क्रमदीश्वरादय इत्यर्थः । मयतेः कालहरणे इति क्रमदीश्वरलक्षणम् । कालहरणं कालप्रतीक्षणम् । आगमयस्व साधुमिति शोधनकालप्रतीक्षणं साधुं कारयेत्यर्थः ॥

११६३। नौतेः, पृच्छेश्चाङ् यदि पूर्वतः।

आनुते, क्रोशतीत्यर्थः। आपृच्छते, अनुज्ञार्थं याचते इत्यर्थः॥

११६४। अन्वाङ्परिभ्यः क्रीड़श्च।

अनुक्रीड़ते। एवम् आ परि। अत्र सर्वत्रोपेन्द्रा एव गृह्यन्ते, न तु कृष्णप्रवचनीयादयो गौणमुख्यन्यायेन; तेन, नेह कृष्णमनुक्रीड़ति॥ ११६४॥

११६५। समोऽकूजन इष्यते।

संक्रीड़ते। कूजने तु संक्रीड़ति शकटः॥ ११६५॥

११६६। शकेः सनन्तात् पृच्छायाम्।

हरिभक्तिं शिक्षेत॥ ११६६॥

---

११६३। नौतेः। आङ यदि पूर्वतः पूर्वस्मिन् वर्तते, तदा नु–स्तुतौ, प्रच्छ–ज्ञीप्सायाम् इत्येताभ्यामुत्तरे कर्तर्यात्मनेपदं स्यात्॥

११६४। अन्वाङ। अन्वाङपरिभ्य उत्तरस्मात् क्रीड़ उत्तरे कर्तर्यात्मनेपदं स्यात्। अत्रेति, अत्र प्रकरणे सर्वत्र सत्त्वादिप्रकरणे कृष्णप्रवचनीयादय इत्यादिपदेन मधुनि विशन्ति भ्रमरा इत्यादौ 'नेर्विशः' इति न प्रवर्तते। बहुवि जयति वनमित्यादौ परा जयति सेनेत्यादौ च 'विपराभ्यां जेरि'ति न प्रवर्तते। मधुनीति सप्तम्यन्तम्। बहुवीति वनविशेषणम्। विः पक्षी। परेति सेनाविशेषणम्। कृष्णप्रवचनीयाद्य-ग्रहणे हेतुमाह—गौणेति। कृष्णमनुक्रीड़तीति कृष्णेन सह क्रीड़तीत्यर्थः।

११६५। समो। अकूजनेऽर्थे सम उत्तरस्मात् क्रीड़ उत्तरे आत्मनेपदमिष्यते। संक्रीड़त इति सकर्मकं, क्रीड़तीत्यर्थः। कूजने त्विति कूजनमव्यक्तध्वनिः। संक्रीड़तीति अव्यक्तध्वनिं करोतीत्यर्थः॥

११६६। शकेः। पृच्छायामर्थे वर्तमानात् सनन्तात् शकेरुत्तरे कर्तर्यात्मनेपदं भवति। शिक्षेतेति, 'शकः शिक्षङ' इत्यनेन सना सह शकः शिक्षङादेशः। पृच्छेदित्यर्थः। ननु ञित्त्वादात्मनेपदं सिध्यत्येव, तथापि किमर्थं लक्षणं कृतमिति न निश्चितं, पृच्छायामेव भवतीति नियमः

११६७। नाथेराशिषि तन्मतम्।

विष्णुभक्तेर्नाथते। याच्ञायान्तु—तां नाथति। यदा तु द्विक्रियता प्रेरणं वाञ्छारूपं च, तदा वाञ्छाया आशीरूपतया आत्मपदं भवत्येव॥ ११६७॥

"मार्गणैरथ तव प्रयोजनं
नाथसे किमु पतिं न भूभृतः।"

इत्यादि महाकविप्रयोगात् (किरातः १३।५९)॥ ११६७॥

११६८। हर्षे च जीविकायाञ्च, कुलायकरणेऽपि च, अपस्किरः।

चतुष्पाच्छकुनिकर्तृकत्व एव ज्ञेयम्। निपातात् सुट्।

---

न व्याख्येयः, तथा सति ङित्त्वात् शिक्षत इति आख्यातप्रकरणे यदुक्तं तद्विरुद्धं स्यात्। किञ्च, पृच्छाया अन्यत्र आत्मनेपदस्यानभीष्टत्वञ्चेत्तर्हि शिक्षङो ङिदनुबन्धत्वं च निरर्थकं स्यात्। हरिभक्तिं शिक्षेतेत्यादौ शकेरित्यादेर्विधिसूत्रत्वेन आत्मनेपदस्य सिद्धत्वात्। अथोवा आख्यातप्रकरणे आत्मपदप्रकरणस्याभावादेतत्सूत्रस्याप्याभावोऽतएतदपेक्ष्यैव तत्रात्मपदसुबोधाय ङित्त्वमिति पृथगुक्तमिति साधु॥

११६७। नाथेः। आशीः कामना तस्यामर्थे वर्तमानात् नाथेरुत्तरे आत्मनेपदं मतम्। आत्मपदित्वादात्मनेपदे सिद्धे नियमार्थं वचनं आशिष्येवेति। विष्णुभक्तेर्नाथित इति नाथृ—याच्ञादिषु 'नाथतेः कर्म वा कामनायामि'ति कर्माभावपक्षे सम्बन्धषष्ठी, विष्णुभक्तिमिच्छतीत्यर्थः। तां विष्णुभक्तिं नाथतीति याचत इत्यर्थः। मार्गणैरिति। उभो भूभृतः राज्ञः प्रेरयन्ति यदि तं पतिं न कामयसे तदा तव मार्गणैरन्वेषणैः किं न किमपीत्यर्थः। अत्र गौणे कर्मणि षष्ठी, विष्णुदुहादेर्गौणे कर्मणि युक्तमित्युक्तत्वात्॥

११६८। हर्षे। हर्षे जीविकायां कुलायकरणे च विषये अपस्किर उत्तरे कर्तर्यात्मनेपदं स्यात्। जीविका वृत्तिः। 'पेशी कोषो द्विहीनेऽण्डं

अपस्किरते ; हृष्यन्, जीविकां कुर्वन्, नीड़ं कुर्वन् वा किञ्चित् प्रक्षिपतीत्यर्थः ॥ ११६८ ॥

११६९। अनुहरतेर्गतिताच्छील्य इष्यते।

पवनमनुहरते हनुमान्। 'ताच्छील्यमात्र' इति तु भर्तृहरि-पुरुषोत्तमौ ॥ ११६९ ॥

११७०। शपेस्तु शपथे तत् स्यात्।

गुरवे शपते ॥ ११७० ॥

११७१। स्थो निर्णीतौ प्रकाशने प्रतिज्ञायाम्।

---

कुलायो नीड़मस्त्रियामित्यमरः'। चतुष्पादिति चतुष्पाच्च शकुनिश्च चतुष्पाच्छकुनी तौ कर्तारौ यत्र स चतुष्पाच्छकुनिकर्तृकः तस्य भावस्तत्त्वं तस्मिन्। चतुष्पाद्वृषभादिः शकुनिः पक्षी। निपातात् सुड़िति सुट् निपात्यत इत्यर्थः। अस्माभिर्यदुक्तं कालापाश्च प्रकारान्तरेण तदेवाह— तद्यथा। अपाच्चतुष्पाच्छकुनिषु हृष्टभक्ष्यनिवासार्थेष्वालेखने इति किर इत्यनुवर्तते। अपस्किरत इति, कॄ–विक्षेपे तुदादिर्वृषभः शकुनिश्चेति शेषः। चतुष्पात्कर्तृकत्वे अपस्किरते वृषभ इति हृष्यन् किञ्चित् प्रक्षिपतीत्यर्थः। चतुष्पाच्छकुनिकर्तृकत्वाभावादपस्किरति मनुष्य इत्यादौ न भवति। हृष्यन् किञ्चित् प्रक्षिपतीत्यर्थः ॥

११६९। अनु। गतेस्ताच्छील्यं गतिताच्छील्यं तस्मिन् गम्यमाने अनुपूर्वात् हृञ्–हरणे इत्यस्मादुत्तरे कर्तर्यात्मनेपदं इष्यते। ताच्छील्यं तत्स्वभावता। पवनमनुहरते हनुमानिति। पवनस्येव गमनमस्येत्यर्थः। पवनो वायुः सतु हनूमत्पिता ॥

११७०। शपेः। शपथेऽर्थे वर्तमानात् शप आक्रोश इत्यस्मादुत्तरे कर्तरि तदात्मनेपदं स्यात्। गुरवे शपत इति गुरुं प्रति शपथं कुर्वन् सत्यमिदमिति ज्ञापयतीत्यर्थः। 'श्लाघ-ह्नुङ-स्था-शपां ज्ञापयितुमिष्टः' इत्यनेन सम्प्रदानम्। शपथ इति किम्? अवैष्णवं शपति आक्रोशतीत्यर्थः ॥

११७१। स्थो। निर्णीतौ गम्यमानायां स्थ उत्तरे प्रकाशने

स्थ इति प्रभुश्च। वैष्णवाचार्ये विचारस्तिष्ठते ; कृष्णाय तिष्ठते गोपी ; कृष्णं परमातिष्टते, श्रेष्ठां प्रतिज्ञां करोतीत्यर्थः ॥ ११७१ ॥

११७२। प्रावसंवेश्च।

प्रतिष्ठते। एवमव-सं-वि ॥ ११७२ ॥

११७३। अथोदोऽनूर्ध्वचेष्टने।

हरिसेवायामुत्तिष्ठते, तत्रोत्सहते इत्यर्थः। अनूर्ध्वं इति किम् ? आसनादुत्तिष्ठति कृष्णः। अचेष्टामात्रेऽपि न—हरिभक्तेः सुखमुत्तिष्ठति ॥ ११७३ ॥

११७४। देवार्चासङ्गतिकृतिमैत्रीषु पथि कर्तरि।
मन्त्रस्य करणत्वे चाकर्मत्वे चोपपूर्वकात् ।।

प्रतिज्ञायाञ्च अर्थे वर्तमानात् स्थ उत्तरे च कर्तर्यात्मनेपदं स्यात्। निर्णीतिर्निर्णयः। प्रकाशनं स्वाभिरुचिप्रकटीकरणम्। प्रतिज्ञा अभ्युपगमः अङ्गीकार इति यावत्। बैष्णवाचार्ये विचारस्तिष्ठत इति। अत्र धातोरवस्थानमेवार्थः निर्णीतिस्तु गम्येति। कृष्णाय तिष्ठते गोपीति कृष्णं प्रति स्वाभिरुचिं प्रकाशयतीत्यर्थः। श्लाघेत्यादिना सम्प्रदानम्। कृष्णं परमातिष्ठत इति अङ्गीकरोतीत्यर्थः। परं सर्वपरम् आङैवायमर्थो द्योत्यते ।।

११७२। प्राव। प्र-अव-सं-वि इत्येतेभ्य उत्तरस्मात् स्थ उत्तरे कर्तर्यात्मनेपदं स्यात्। प्रतिष्ठत इति गच्छतीत्यर्थः ।।

११७३। अथो। अनूर्ध्वचेष्टनेऽर्थे वर्तमानादुद उत्तरस्मात् स्थ उत्तरे कर्तर्यात्मनेपदं स्यात्। अनूर्ध्वञ्च तच्चेष्टनञ्चेति विग्रहः। ऊर्ध्वव्यतिरिक्ते चेष्टने इत्यर्थः। हरिसेवायामुत्तिष्ठते इति अचेष्टनमनूर्ध्वमेव। आसनादुत्तिष्ठति कृष्ण इति अत्र चेष्टनमूर्ध्वम्। अचेष्टामात्रेऽपि नेति अनूर्ध्वचेष्टन इत्युक्तत्वादिति शेषः। हरिभक्तेः सुखमुत्तिष्ठतीति उत्पद्यत इत्यर्थः। उत्पत्तेरचेष्टारूपत्वादत्र धातोरचेष्टनार्थत्वम् ।।

११७४। देवा। देवार्चायां सङ्गतिकृतौ मैत्र्याञ्च अर्थे उपपूर्वकात्

भक्तो हरिमुपतिष्ठते। गङ्गा यमुनाम्, अर्जुनः कृष्णं, पन्था मथुरां, वैष्णवो मन्त्रेण कृष्णं, हरिरनुव्रते उपतिष्ठते। लिप्सायामित्येके— भिक्षुरन्नमुपतिष्ठते उपतिष्ठति वा। स्थ इति निवृत्तम्॥

११७५। समः पृच्छति-गमृच्छि-स्वृ-श्रुभ्यो वेत्तितस्तथा दृशोऽर्तेश्चाकर्मकत्वे।

अकर्मकत्वे इति प्रभुश्च। संपृच्छते, संगच्छते, समृच्छिष्यते इत्यादि। अर्तेस्तु समारत। 'अरामान्य' (आ॰ प्र॰ ४२८) इत्यादौ 'वेत्ते रुट् तु वा' (आ॰ प्र॰ ४३०)—संविद्रते, संविदते॥ ११७५॥

११७६। आङ्पूर्वात्तु यमेर्हने।

स्थ उत्तरे कर्तर्यात्मनेपदं स्यात्। पथि कर्तरि सति, मन्त्रस्य करणत्वे च सति, अकर्मकत्वे च सति, उपपूर्वकात् स्थ उत्तरे कर्तर्यात्मनेपदं स्यात्। देवार्चा देवपूजा। सङ्गतिकृतिः सङ्गमकरणम्। मैत्री मित्रता। हरिमुपतिष्ठत इति पूजयतीत्यर्थः। गङ्गा यमुनामुपतिष्ठत इति उपश्लिष्यतीत्यर्थः। अर्जुनः कृष्णमुपतिष्ठत इति कृष्णेन सह मैत्रीं करोतीत्यर्थः। पन्था मथुरामुपतिष्ठत इति गच्छतीत्यर्थः। वैष्णवो मन्त्रेण कृष्णमुपतिष्ठते इति वशीकरोतीत्यर्थः। अन्यस्य करणत्वे तु न कृष्णमुपतिष्ठति यौवनेन गोपी, वशीकरोतीत्यर्थः। हरिरनुव्रते उपतिष्ठतेऽत्र अनुगतजने कृपयतीत्यर्थः। लिप्सा, लब्धुमिच्छायां गम्यमानायां सत्यामुपपूर्वात् स्थः कर्तर्यात्मनेपदं स्यादित्येके॥

११७५। समः। प्रछ—ज्ञीप्सायां, गम्लृ—गतौ ऋच्छ—प्रापणे, स्वृ—शब्दोपतापयोः, श्रु—श्रवणे, विद्—ज्ञाने, दृशिर—प्रेक्षणे, ऋ—गत्यादावित्येभ्यो अकर्मकत्वे सति कर्तर्यात्मनेपदं स्यात्। संपृच्छते सम्यग्जानाति संगच्छते मिलतीत्यर्थः। ऋ—गतौ प्रापणे च भ्वादिः, ऋ—गतौ ह्वादिः द्वयोरपि ग्रहणविशेषात् कृष्णधातुके ऋऋच्छोः समानरूपत्वात् रामधातावुदाहरणं दर्शितम्। आरामान्येत्यादावित्याख्यातसूत्रं संविद्रते इति बहुवचनांन्तम्॥

आयच्छते, आहते स्वयमेव। सकर्मकत्वे तु—आयच्छति, आहन्ति कंसम् ॥ ११७६ ॥

११७७। उद्विभ्यां तपतेः।

उत्तपते, वितपते। सकर्मकत्वे तु—उत्तपति कंसम्। अकर्मकत्वं निवृत्तम् ॥ ११७७ ॥

११७८। स्वाङ्गकर्मकाच्च यमादितः।

**प्राण्यङ्गं मूर्तिमत् स्वाङ्गं विना द्रवविकारजे।**
**तद्वत् प्राणिप्रतिकृतेरङ्गं स्वाङ्गमितीष्यते ॥**

आयच्छते पाणिम्। विच्छिद्य पतितत्वेऽपि आयच्छते छिन्न-

---

११७६। आङः। आङ् पूर्वो यस्य तस्माद्यमेर्यमधातोर्हनेर्हनधातोश्च कर्तर्यात्मनेपदं स्यात्। हनधातोरकर्मत्वार्थं कर्मकर्तृत्वम्। ननु हिंसा कर्मस्था, अतः कर्मस्थधात्वर्थत्वात् कर्मवद्भावे कथमकर्मकत्वम्? उः—प्रधानाप्रधानयोः प्रधाने कार्यसम्पत्तय इति न्यायात् आतिदेशिककार्यमनित्यमिति-न्यायाच्च कर्मवत्त्वेऽप्यकर्मकत्वम् ॥ तपःकर्मकत्वे आत्मपदविधानं, यक् तु 'तपःकर्मकस्ये'त्यादिना कर्तरि कर्मवत् कार्यं करणीयम्। तपःकर्मकस्यात्मपदविधानादन्यत्राकर्मकत्वे आत्मपदं, तदेवाह— ॥

११७७। उद्वि। उद्विभ्यां चेति। स्वाङ्गकर्मकादनन्तरं वक्ष्यति च, अतएवात्र कंसमिति प्रत्युदाहरणे कर्म दर्शितम्। उद्विभ्यां स्वाङ्गकर्मकत्वे तपः आत्मपदं परसूत्रे भविष्यतीति ज्ञेयम्। तथाच जुमरलक्षणम्—"स्वाङ्गकर्मकाच्चोद्वितपाङ् यमहनः" इति। ननु कथमेकस्य धातोरकर्मकत्वं सकर्मकत्वञ्च? उः—कर्मणोऽविवक्षयाऽकर्मकत्वम्। तथाच जुमरः—शाब्दी ह्याकांक्षा शब्देनैव प्रपूर्यते इत्यनुक्ते कर्मणि स्थितेऽप्यकर्मकत्वमिति ॥

११७८। स्वाङ्ग। स्वकीयमङ्गं कर्म यस्य तस्मात् आङ्पूर्वाद्यमादेरात्मपदं भवति। प्राण्यङ्गमिति—द्रवं विकारजञ्च विना प्राणिनोऽङ्गं मुखादि-स्वाङ्गमिष्यते, इच्छाविषयीक्रियते इत्यर्थः। तत्र बुद्ध्यादेरपि

पाणिं वा। द्रवत्वे विकारत्वे च न—आयच्छति रक्तं, शोथं वा। अमूर्तिमत्त्वे च न—आयच्छति बुद्धिम्। प्राणिप्रतिमायामपि तु स्यादेव—आयच्छते प्रतिमा पाणिम्। एवं हनि-तपी उदाहार्यौ॥

११७९। प्रादेरूहास्यतिभ्यां वा।

समूहति, समूहते; निरस्यति, निरस्यते॥ ११७९॥

११८०। ह्वः संनिव्युपतः सदा।

संह्वयते इत्यादि॥ ११८०॥

११८१। आह्वः स्पर्धे।

कंसः श्रीकृष्णमाह्वयते॥ ११८१॥

---

प्राणिस्थत्वात्तस्य स्वाङ्गत्वं वारयितुमाह—मूर्तिमदिति। काठिन्यादि-स्पर्शविषयो मूर्तिस्तदभावाद्बुद्ध्यादेर्न स्वाङ्गत्वमिति। तथा द्रव-विकारजयोरपि प्राण्यङ्गत्वात् स्वाङ्गत्वे प्राप्ते निवारयति—विनेति। द्रवञ्च विकारजञ्च ते विनेत्यर्थः। तत्र रक्तकफादेर्द्रवात्मकत्वात् न स्वाङ्गत्वम्। विकारो धातुवैषम्यं तज्जातत्वात् शोथादेरपि न स्वाङ्गत्व-मिति। प्राण्यङ्गं यथा स्वाङ्गं, तद्वत् प्राणिप्रतिकृतेः प्रतिमाया अपि अङ्गं स्वाङ्गमिष्यते। आयच्छत इति यम्—उपरमे, पाणिं उपयमयतीत्यर्थः। ननु छिन्नं पाणिं आयच्छते इत्यत्र प्राणिस्थत्वाभावात् कथं स्वाङ्गत्वम्? न चेत् कथमात्मपदम्? अत आह—विच्छिद्य पतितत्वेऽपीत्यादि। तथाच जुमरः—'अतत्स्थं तत्र दृष्टं चेति' तदानीं तत्रातत्स्थम् अप्राणिस्थं किन्त्वादौ तत् प्राणिनि दृष्टमित्यर्थः। एवं हनितपी उदाहार्यौ इति आङ्पूर्वौ हनितपी इति। एवं सति जुमरमतं न सङ्गतं; तन्मते उद्विभ्यां तप आत्मपदं नाङः, तस्मात् उपेन्द्रस्तु प्रयोगानुसारेणोपकल्पनीयः; तेन सर्वं समञ्जसम्॥

११७९। प्रादेः। ऊह—वितर्के, असु—क्षेपणे इत्येताभ्यां प्रादेरुत्त-राभ्याम् आत्मपदं वा भवति॥

११८०। ह्वः। सुगमम्॥

११८२। गन्धने तु भर्त्सने यत्नसेवयोः।
प्रकथे चोपयोगे च साहसे तु कृञो भवेत्।

कंसः कृष्णार्थमुत्कुरुते, उदाकुरुते वा हिंसापूर्वकं सूचयतीत्यर्थः। कृष्णपक्षमुत्कुरुते, भर्त्सयतीत्यर्थः। वैष्णवो गङ्गाजलस्योपस्कुरुते, सौगन्ध्यादिनाभिरुचितं करोतीत्यर्थः। भक्तः कृष्णमुपस्कुरुते, प्रकुरुते वा, सेवते इत्यर्थः। कृष्णो गीतां प्रकुरुते, प्रकर्षेण कथयतीत्यर्थः। असंख्यं धनं प्रकुरुते, धर्माद्यर्थं विनियुङ्क्ते इत्यर्थः। गोप्यः कृष्णं प्रकुर्वते, तत्र साहसात् प्रवर्तन्ते इत्यर्थः॥ ११८२॥

११८३। पूजाचार्यकृतिज्ञानोत्क्षेपणेषु भृतौ व्यये।
नीञो विगणने कर्तृस्थिते चामूर्तकर्मणि॥

कृष्णः शास्त्रेषु नयते, स तेषु पदार्थान् सर्वसम्मानितान् कुर्वन् स्थापयतीत्यर्थः। उद्धवमुपनयते आत्मानमाचार्यीकुर्वन् तत्समीपं प्रापयतीत्यर्थः। सर्वं नयते निश्चिनोतीत्यर्थः। चक्रं दृष्टेषु

---

११८१। आह्वः। स्पर्धनं स्पर्धा तस्मिन् गम्यमाने आङ्पूर्वात् ह्वेञ-स्पर्धायामित्यस्मादात्मपदं स्यात्॥

११८२। गन्ध। गन्धने अपकारप्रयुक्त्या हिंसासूचने प्रादेः कृञ आत्मपदं स्यात्। हिंसासूचकापकारप्रयोग इत्यर्थः। एवं भर्त्सनादावर्थेऽपि कृञ आत्मपदं भवेत्। उपयोगः धर्मादिविषयविनियोगः। उपस्कुरुते, प्रकुरुते वेत्यादौ उपेन्द्रान्तरं दर्शयित्वा यद् 'वा' इति उक्तम्, एतेनैतत् सूचितम्—नत्वन्योपेन्द्रेणार्थं बोधयतीति॥

११८३। पूजा। पूजा सम्मानम्; आचार्यस्य कृतिराचार्यकृतिः; विगणनं ऋणादिशोधनं, कर्तृस्थिते चामूर्तकर्मणीति सामाणाधिकरण्यम्। एतेषु अर्थेषु वर्तमानान्नीञ आत्मपदं भवति। कृष्ण इत्यादि। सर्वसम्मानितान् कुर्वन् इत्यनेनात्मनः सम्मानितत्वं सुतरामेव सम्मानितोऽयं स्वयमपि, धातूनामनेकार्थत्वात् उपेन्द्रस्याभिन्नत्वेऽपि भिन्नार्थः सम्पद्यते, वाक्यार्थबोधकतामात्रस्य तात्पर्यात्। तद्रूपसङ्कल्परूपम् ऋणं निर्यातय-

उन्नयते, उत्क्षिपतीत्यर्थः। स कामानुपनयते, कामदान-वेतनेनात्म-समीपीकरोतीत्यर्थः। सर्वमुपनयते, धर्माद्यर्थं सर्वं विनियुङ्क्ते इत्यर्थः। सङ्कल्पं विनयते, तद्रूपमृणं निर्यातयतीत्यर्थः। क्रोधं विनयते, दूरीकरोतीत्यर्थः। पुरुषोत्तमस्त्वाह—'पूजायां शास्त्रार्थं नयते, युक्तिभिः सम्मानयतीत्यर्थः'। आचार्यकृतौ—उद्धवमुपनयते, आत्मवदाचार्यीकरोतीत्यर्थः इति ॥ ११८३ ॥

११८४। वृत्त्युत्साहस्फीततासु क्रमेः।

क्रमेरिति प्रभुश्च। हरौ बुद्धिः क्रमते, तद्भक्तस्य वर्तते, न प्रतिहन्यते इत्यर्थः। कृष्णभक्तये क्रमते, उत्साहं करोतीत्यर्थः। वैष्णवानां श्रीः क्रमते, वर्धत इत्यर्थः॥ ११८४ ॥

११८५। नोपेन्द्रतो विना परोपाभ्याम्।

हरौ बुद्धिः प्रक्रामतीत्यादि। इह तु स्यात्—पराक्रमते, उपक्रमते ॥ ११८५ ॥

११८६। तथाङ् पूर्वाज्ज्योतिरुद्गम इष्यते।

आक्रमते भानुः। उद्गमे किम्? आक्रामति गिरिं रविः, अवष्टभ्नातीत्यर्थः॥ ११८६ ॥

---

तीत्यर्थः। सङ्कल्पः कर्म मानसमित्यर्थः। "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि"ति भगवदुक्तेः। पुरुषोत्तमस्त्वाह इति स्वमतदार्ढ्याय ॥

११८४। वृत्त्युत्साह। वृत्तिरप्रतिघातः। वृत्त्युत्साहादिषु क्रमतेः कर्तर्यात्मनेपदं स्यात्। तद्भक्तस्य वर्तते इति बुद्धिरित्याकर्षणीयम्। कृष्णभक्तये कृष्णभक्तिनिमित्तम्। श्रीः सम्पत्तिर्लक्ष्मीः शोभा च ॥

११८५। नोपेन्द्रतः। परोपाभ्यां विना अन्यस्मादुपेन्द्रात् परस्मात् क्रमतेः कर्तर्यात्मनेपदं न स्यात् ॥

११८६। तथाङ। तथाङ्पूर्वात् ज्योतिः सूर्यादिस्तस्य ऊर्ध्वं गमस्तस्मिन् तथा आत्मनेपदमिष्यते। आक्रामति गिरिमित्यत्रावलम्बन-मात्रं न तूर्ध्वगमनं विवक्षितम् ॥

११८७। वेः पादविहृतौ तद्वत्।

विक्रमते त्रिविक्रमः॥ ११८७॥

११८८। आरम्भे प्रादुपात्तथा।

प्रक्रमते, उपक्रमते॥ ११८८॥

११८९। अनुपेन्द्राद्विभाषा।

क्रामति, क्रमते। क्रमिर्निवृत्तः॥ ११८९॥

११९०। ज्ञोऽकर्मकापह्नवार्थतः।

गङ्गाजलस्य जानीते। तत्त्वमपजानीते गोपते इत्यर्थः॥११९०

११९१। संप्रतिभ्यां समुत्कण्ठापूर्वकस्मरणं विना।

संजानीते जनं हरिः, भक्तायाभीष्टं प्रतिजानीते, प्रतिज्ञां करोतीत्यर्थः। उत्कण्ठापूर्वकस्मरणे तु—हरिं संजानाति भक्तो, हरेर्वा॥११९१

११९२। यत्नोपसान्त्वनज्ञानभासनेषूपमन्त्रणे विमतौ चापि वदतेः।

वदतेरिति प्रभुश्च। भक्तौ वदते वैष्णवः। हरिर्भक्तानुपवदते।

---

११८७। वेः पाद। पादविहृतिः पादविक्षेप इति स्मरणात्॥

११८८। आरम्भे। सुगमम्॥

११८९। अनु। सुगमम्॥

११९०। ज्ञोऽकर्म। अकर्मकश्चापह्नवार्थश्चेति रामकृष्णसमाससिद्धात् ज्ञः। गङ्गाजलस्य जानीते इति ज्ञोऽबोधार्थस्य करणात् गङ्गाजलात् षष्ठी (१०५६ सूत्रम्)। तत्त्वं स्वरूपे सिद्धान्ते इति। तत्त्वं स्वरूपम् अपजानीते अपह्नुते न जानातीत्यर्थः॥

११९१। संप्र। एतदारभ्य यत्र यत्र सूत्रं न व्याख्यायते, तत्र तत्र सुगममिति पदमूह्यं करणीयम्। हरेर्वेति संज्ञा वा कर्मणो हरेः षष्ठी (३२,६२ सूत्रम्)॥

११९२। यत्न। यत्नपूर्वकमुपसान्त्वनमिति वा विग्रहः। यत्नं

भक्ती हरिं वदते। भासने तु—हरिर्भक्तौ वदते, तत्र प्रकाशमानस्तां व्यनक्तीत्यर्थः। उपमन्त्रणे—हरिर्गोपीमुपवदते, रहस्युपच्छन्दयति, लोभयतीत्यर्थः, पृच्छतीति वा। तथा विवदन्ते तर्कनिष्ठाः ॥११६२॥

११६३। व्यक्तवाचां सहोक्तिषु।

संप्रवदन्ते वैष्णवाः। नेह--संप्रवदन्ति मयूराः ॥११६३॥

११६४। अनोरकर्मकात्तत्र।

अनुवदते श्रीशुकस्य सूतः ॥ ११६४॥

२१६५। विप्रलापे विभाषया।

विप्रवदन्ते विप्रवदन्ति वा स्मार्ताः। वदतिर्निवृत्तः ॥ ११६५॥

११६६ सृजेः श्रद्धावतः श्यश्च।

वैष्णवो मालां सृज्यते। श्रद्धां विना तु—सृजति इति भट्टमल्लः। 'भूतेशे तनि इण्' इति वर्धमानः—असर्जि मालां वैष्णवः॥

---

बहूद्यमम्। भक्तौ वदते वैष्णवः, तस्यां प्रयत्नं करोतीत्यर्थः। हरिर्भक्तानुपवदते, यत्नपूर्वकम् उपसान्त्वयतीत्यर्थः। भक्तो हरिं वदते, जानातीत्यर्थः। तत्र भक्तौ, तां भक्तिम्। रहसि निर्जने, उपच्छन्दयन् नानाप्रकाररहस्यवाक्यं कथयन्। विमतावुदाहरणम्—तथा विवदन्ते तर्कनिष्ठाः। विमतिर्विप्रतिपत्तिर्विरोधोक्तिररिति यावत् ।।

११६३। व्यक्त। अत्र सहशब्दस्तुल्यार्थः। संप्रवदन्ते, तुल्यव्यक्तवाचः कुर्वन्तीत्यर्थः। नेहेति व्यक्तवाचामभावात्। व्यक्तवाचो हि मनुष्याः प्रसिद्धाः ।।

११६४। अनोः। अनोरुत्तरस्मादकर्मकत्वाद्वदतेः परस्मात् कर्तर्यात्मपदं स्यात्। अनु पश्चात्। अतोऽनुवदत इत्यत्र श्रीशुको यथा वदते, तथैव तस्य पश्चात् सूतो वदते ।।

११६५। विप्र। विप्रलापो विरोधोक्तिः ।।

११६६। सृजेः। श्रद्धाविशिष्टस्य सृजेरात्मपदं श्य आगमश्च भवति। धात्वर्थः श्रद्धा तद्युक्तस्य सृजेरित्यर्थः। वैष्णव इति वैष्णवः

११९७। अवाद्ग्रः।

अवगिरते। गृणातेर्नेष्यते— अवगृणाति ॥ ११९७ ॥

११९८। अङ्गीकृतौ समः।

संगिरते ॥ ११९८ ॥

११९९। उदः सकर्मचरतेः।

कर्मोच्चरते विष्णुभक्तः, उत्क्रम्य तिष्ठतीत्यर्थः। अकर्मकत्वे तु - वंशीध्वनिरुच्चरति ॥ ११९९ ॥

१२००। तृतीयायोगतः समः।

रथेन सञ्चरते हरिः ॥ १२०० ॥

१२०१। दाणः सा चेच्चतुर्थ्यर्थे।

सेति तृतीया। विष्णुप्रसादं तद्विमुखैः संप्रयच्छते ॥ १२०१ ॥

---

सश्रद्धं यथा स्यात्तथा मालां करोतीत्यर्थः। स्वमतदार्ढ्याय श्रद्धायाः अन्यत्र परपदं भट्टमल्लस्य मतं दर्शितम्। भूतेशे। भावे कर्मणि कर्मकर्तरि इण् आदेशः, कर्तरि न प्राप्नोति अत्रापीण् वर्धमानमते ॥

११९७। अवाद्ग्रः। लक्षणे गृ—निगरणे इत्यस्य ग्रहणं, न तु गृ—शब्दे इत्यस्य ; तदेवाह—गृणातेर्नेष्यते इति ॥

११९८। अङ्गी। अङ्गीकारः प्रतिज्ञा, अहमिदं दास्यामीत्यादिरूपा ॥

११९९। उदः। उद इति श्लोकार्धैकचरणम् ॥

१२००। तृतीया। इत्येकवचनं पृथग् युग्मचरणवत्। तृतीयया युक्तात् समः परस्मादकर्मकाच्चरतेरुत्तरे कर्तर्यात्मनेपदं स्यात्। वारिपूर्णां महीं कृत्वा पश्चात् सञ्चरते गुरुरित्यत्र न चरधातो कर्म महीमिति किन्तु कृञः अतोऽकर्मत्वम्। ननु तथापि संपूर्वात् तृतीयायोगे आत्मपदविधानात् कथमात्मपदम् ? उच्यते—पश्चादिति पदं अव्ययं तृतीयान्तं ज्ञेयम् ॥

१२०१। दाणः। सेति तृतीयेति कथमिति चेत्तदैवं वाच्यम्—तृतीयायोग इत्युक्तेर्हेतोस्तृतीया लभ्यते, अतः सेति तृतीयेत्युक्तम्। ननु

१२०२। स्वीकारे तूपयच्छतेः।

रुक्मिणीमुपयच्छते। स्वीकार इति दारकर्मण्येवेति काशिकादयः। स्वीकारमात्र इति तु पुरुषोत्तमः ( पा १।३।५६ ); "उपायंसत नासवम्" इति भट्टिः (८।३३) ॥ १२०२ ॥

१२०३। अथ स्मृ-ज्ञा-पश्यतीनां सनः।

सुस्मूर्षते, जिज्ञासते, दिदृक्षते ॥ १२०३ ॥

१२०४। अनुज्ञां विना।

अनुजिज्ञासति ॥ १२०४ ॥

१२०५। तथा, प्रत्याङ्पूर्वं वर्जयित्वा श्रुव आत्मपदं सनः।

शुश्रूषते, प्रशुश्रूषते। नेह—प्रतिशुश्रूषति, आशुश्रूषति ॥

---

तथापि तृतीयायोगत इति समस्तैकपदात् कथमेकदेश आकर्षणीयः? उच्यते–'समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरि'ति न्यायात्। सेत्यनेन नित्यसापेक्षेण असमस्तेन सह समस्तस्य समस्तैकदेशस्य तृतीयेत्यस्य सङ्गतिर्मेलनं ज्ञेयम्। सा तृतीया यदि चतुर्थ्यर्थे स्यात्तदा दाण उत्तरे कर्तर्यात्मपदं स्यादित्यर्थः ॥

१२०२। स्वीका। दारेति विवाहकर्मण्येवेति स्वीकारविशेषे एव, तच्च वृत्तिकृतो नाभीष्टमिति पुरुषोत्तममतं प्रमाणं दर्शितं जुमर-मतमप्येतत् उपायंसतेति बहुवचनान्तम्। आसवं मधु भ्रमरा नोपायंसत न स्वीकृतवन्त इत्यर्थः ॥

१२०३। अथ। स्मृ–आध्याने, ज्ञा–अवबोधने, दृशिर–प्रेक्षणे, एषां सम्बन्धिनः सन आत्मपदं भवति ॥

१२०४। अनुज्ञां। अनुपूर्व-ज्ञाधातुं विना ज्ञ उत्तरवर्तिनः सनः कर्तर्यात्मपदं भवति ॥

१२०५। तथा। तथेति पृथक् कृत्वा छन्दो वाच्यम्। आत्म-पदप्रकरणेऽप्यात्मपदमिति छन्दोऽर्थम् ॥

१२०६। अयज्ञपात्रे तु युजेरजाद्यन्तादुपेन्द्रतः।

उद्युङ्क्ते, प्रयुङ्क्ते। नेह—प्रयुनक्ति यज्ञपात्रम् ॥ १२०६ ॥

१२०७। समः क्ष्णौतेः।

संक्ष्णुते ॥ १२०७ ॥

१२०८। अनवने भुनक्तेः।

भुङ्क्ते, उपभुङ्क्ते। अवने तु—भुनक्ति पृथिवीं रामः, पालयतीत्यर्थः ॥ १२०८ ॥

१२०९। अथ णेरणौ यत् कर्म णौ स कर्ता चेद्ध्रुवेदाध्यानवर्जिते।

अण्यन्ते यत् कर्म, तद्यदि ण्यन्ते कर्ता स्यात्तदा णेरात्मपदमित्यर्थः। अण्यन्ते—हरिरारोहति ताक्ष्र्यम्। ण्यन्ते तु—हरिमारोहयते ताक्ष्र्यः। एवं हरिं पश्यति यस्तं स्वयमात्मानं दर्शयते हरिः। आध्यानमुत्कण्ठापूर्वकस्मरणं, तत्र तु—स्मारयति भक्तान् हरिः ॥

---

१२०६। अयज्ञ। अच् आदौ अन्ते वा यस्य तस्मात् अर्थात् संनिर्दुररहितात्। तथाच यज्ञपात्रयोगे संनिर्दुरः प्रादेरिति। नेति यज्ञपात्रयोगे प्रत्युदाहरणम् ॥

१२०७। समः। क्ष्णु–तेजने, तस्मात् शस्त्रमित्यादि कर्म ज्ञेयम्। संक्ष्णुते शस्त्रं तीक्ष्णीकरोतीत्यर्थः ॥

१२०८। अनवने। अवनं रक्षणं पालनमिति यावत्। अनवने अपालनेऽर्थे भुनक्तेः कर्तर्यात्मपदं स्यात्। भुङ्क्तेऽन्नादिकं भक्षयतीत्यर्थः। उपभुङ्क्ते गोपीं कृष्ण उपभोगयतीत्यर्थः ॥

१२०९। अथ णेरणौ। यत् कर्म अण्यन्ते, यत् कर्म प्रेरणे णौ सति स यदि कर्ता स्यात् कर्मण उद्देशे यदिति क्लीवं, कर्तुरुद्देशे पुमान्, स इति उद्देश्यविधेयभावान्वयात्; यथा–पञ्च वृक्षा नौर्भवति भवन्ति च। आध्यानं स्मरणं, उत्कण्ठास्मरणमिति सम्मतम्। ताक्ष्र्यो गरुड़ः स चाण्यन्ते तु—कर्ता। अत्र रुहिर्न्यग्भावनार्थः। न्यग्भावनार्थे रुहधातौ

१२१०। मिथ्याशब्दोपपदतः पौनःपुन्ये कृञो णितः।

पदं मिथ्या कारयते, मुहुरशुद्धमुच्चारयतीत्यर्थः ॥ १२१० ॥

१२११। प्रलम्भे गृधिवञ्च्योर्णेः।

वालकृष्णं गर्धयते, वञ्चयते बृद्धा। 'प्रलम्भे' किम् ? अहिं वञ्चयति ॥ १२११ ॥

१२१२। कर्तृगामिफले त्वथ।

प्रभुरयम् ॥ १२१२ ॥

१२१३। अपाद्वदः।

अपवदते ॥ १२१३ ॥

---

णाविति कृते यादृगर्थः, केवलेऽपि तादृगर्थः। पचनपाचना न्यग्भवन् न्यग्भावनादिधात्वर्थः सर्वत्रैव। तथाच—"निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैव अस्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः ॥" इति, अतः तार्क्ष्यस्य कर्तृत्वे धातोरकर्मकत्वं, तस्मिन् सति अकर्मकेत्वादिना हरेः कर्मत्वम् ॥

१२१०। मिथ्या। णित इति पञ्चम्यास्तसि रूपम्। पौनःपुन्येऽर्थे वर्तमानात् मिथ्याशब्दसमीपपदात् कृञ उत्तरस्माण्णेरुत्तरे कर्तर्यात्मनेपदं स्यात्। पदमिति कर्मपदं मिथ्याशब्दस्य आत्मपदनिमित्तत्वात् तन्निमित्तोपपदस्य तिङन्तस्यापि समासः। समासे मिथ्याशब्दस्य कर्मपदस्य धातुभक्तत्वात् पदमिति कर्मान्तरं पदस्य मिथ्याकारक इत्यर्थः। तदेवाह—मुहुरित्यादि ॥

१२११। प्रलम्भे। प्रलम्भो विसम्वादस्तस्मिन्नर्थे गृधिवञ्च्योरुत्तरस्माण्णेः परस्मिन् कर्तर्यात्मनेपदं भवति। बृद्धा गोपी पौर्णमासी वा। नवनीतं दास्यामि नर्तय, नर्तिति, न ददातीति वञ्चनम्। तुभ्यं नप्त्रे नप्त्रीं समर्पयिष्यामि, सन्ध्यायां मद्गृहं याहीति गर्धसे लोभयति। गृधु–अभिकांक्षायाम् ॥

१२१२। कर्तृगामि। तु पुनरपि अथानन्तरं कर्तृगामिक्रियाफले धातोरुत्तरे कर्तर्यात्मनेपदं स्यात् ॥

१२१४। समुदाङ्भ्यो यमेरग्रन्थगौरवे।

मनः संयच्छते। हरिभक्तिमुद्यच्छते। आयच्छते। सूचनार्थादित्यादि—डदायसत। ग्रन्थगौरवे तु—गीतामुद्यच्छति भगवद्धर्मं वा॥

१२१५। ज्ञ उपेन्द्र-विनाभावात्।

कृष्णं जानीते भक्तः। उपेन्द्रे तु—प्रजानाति। अकर्तृगामिफले तु—परस्य गां जानाति। इतःपरं निषेधः स्यात् सामान्यवचने यथा—धरित्रीं दुदुहुः केचित्, स्वार्थं परार्थं च इति सामान्यवचनत्वम्॥ १२१५॥

१२१६। परानुभ्यां कृञस्तद्वत्।

पराकरोति, अनुकरोति॥१२१६॥

१२१७। क्षिपोऽभिप्रत्यतेः परात्।

अभिक्षिपति। एवं प्रति, अति॥ १२१७॥

---

१२१३। अपात्। सुगमम्॥

१२१४। समु। ग्रन्थस्य गौरवं गुरुवदानयनं स्वीकरणमिति यावत्। अग्रन्थ इत्यनेन सिद्धे गौरवपदं पूर्वसूत्रसहितछन्दोऽर्थम्। सूचनार्थादित्यादीति सेः कपिलविधानलक्षणम्॥

१२१५। ज्ञ। उपेन्द्रस्य विनाभावात् अभावात्। उपेन्द्रस्य विनाभावोऽभावो यत्र तस्माद्धातोरित्यर्थः। ज्ञोऽप्रादेरित्यर्थः। श्लोकाद्यपादत्वात् अक्षराधिक्यम्।

इतःपरं परस्मिन् दुदुहुः केचिदिति परस्परमित्यूह्यम्। तेन कर्मव्यतीहारे आत्मपदप्राप्तौ निषेधः॥

१२१६। परा। उभयपदित्वात् कर्तृगामिक्रियाफलादावात्मपदप्राप्तेस्तन्निषेधार्थं शेषसूत्रादिकं सेवादावर्थेऽपि च॥

१२१७। क्षिप। दिवादिरयं परस्मैपद्येव। तुदादेस्तु स्वरितेत्वात् प्राप्तमात्मनेपदं प्रतिसिध्यते इति जुमरटीका॥

१२१८। प्राद्वहः।

प्रवहति। परितो भट्टमल्ल आह—परिवहन्ति ॥ १२१८ ॥

१२१९। परेर्मृषः।

परिमृष्यति ॥ १२१९ ॥

१२२०। व्याङ्परिभ्यो रमः।

विरमति। एवम् आ, परि ॥ १२२० ॥

१२२१। उपात्।

विष्णुदत्तमुपरमति, उपरमयतीत्यर्थः ॥ १२२१ ॥

१२२२। विभाषा चेदकर्मकः।

उपरमति, उपरमते ; निवर्ततेत्यर्थः ॥ १२२२ ॥

१२२३। बुधेर्युधेर्नशिजनोः प्रु-द्रु-स्रूणामिङोऽपि णेः।

बोधयतीत्यादि। इङ् अध्यापयति ॥ १२२३ ॥

---

१२१८। प्रात्। स्वरितेत्वात् कर्तृगामिक्रियाफले प्राप्ते ॥

१२१९। परेः। स्वरितेत्वात् कर्तृगामिक्रियाफले प्राप्ते ॥

१२२०। व्याङ। अनुदात्तेत्वात् प्राप्ते ॥

१२२१। उपात्। उपपूर्वरमिर्विनाशे वर्तते, यथा—उपरतानि धनानि। निवर्तने च यथा—अध्ययनादुपरतः। उभयथाप्यकर्मकत्वम्। तस्माद्विभाषा चेदकर्मक इति विशेषणवलादेव विप्रमुपरमतीत्यादौ तु प्रत्युदाहरणे उपसंप्राप्तिपूर्विकायां रतौ रमिर्वर्तते इत्यवगन्तव्यमिति सर्व-सम्मतम् ; तस्मात् संप्राप्तिपूर्वत्वात् सकर्मकत्वम्। अतएवान्तर्भूत-ण्यर्थं स्वीकृत्वाह—विष्णुदत्तमुपरमति, उपरमयतीत्यर्थः। उपसंप्राप्ति-पूवकं क्रीड़तीत्यर्थः ॥

१२२२। विभाषा। पूर्वसूत्रेणैवास्यार्थकथनं द्रष्टव्यम् ॥

१२२३। बुधे। बुधादयोऽण्यन्ता एवोपात्ता। एषां साहचर्यात् सर्वेऽण्यन्ता एव ग्राह्याः। अणाविति वक्ष्यमाणात् ॥

१२२४। कम्पाहारार्थणेस्तद्वत्।

वृक्षं कम्पयति ; अन्नं भोजयति॥ १२२४॥

१२२५। अणौ ये स्युरकर्मकाः।

सचित्तकर्तृकाश्चैव तेषां णेः, सूत्रयुग्मके।

आस्ते शेते च कृष्णः। आसयति, शाययति च कृष्णं माता। अचित्तकर्तृकत्वे तु—नश्यति संसारः। नाशयते संसारं हरिः॥१२२५

१२२६। अत्ति-पिवति-दम्यादीन् विनैव स्यान्निषेधिता।

आदयते, पाययते, दमयते मनो वैष्णवः। आदिना आयासयते, आयामयते, परिमोहयते, रोचयते, नर्तयते, वादयते, वस—निवासे वासयते, धापयते। अकर्तृगामिफले—विप्रानादयति सूपकारः॥१२२६

**इति श्रीहरिनामामृताख्ये वैष्णवव्याकरणे विष्णुभक्त्यर्थप्रकरणं चतुर्थं कारकं समाप्तम्॥**



---

१२२४। कम्पा। चलनार्थभोजनार्थयोर्णेरुत्तरे तद्वत् आत्मपदं न भवतीत्यर्थः॥

१२२५। अणौ। वुधादयोऽणिङन्ता एवोपात्ता; एषां साहचर्यात् चेतनकर्तृत्वे अकर्मकाश्चाणिङन्ता एव ग्राह्या इति भाष्यादिमतं सुत्रेणोपनिबद्धम्। सूत्रयुग्मके सूत्रद्वये। कम्पाहारार्थ इति अणौ ये स्यूरिति च सूत्रद्वये॥

१२२६। अत्ति। अत्तेराहार्थत्वात् पिवतेरपि तथार्थात् दमधातोरादिपदे नायासादीनां ग्रहणं केषाञ्चित् चेतनकर्तृत्वे अकर्मकत्वात्, केषाञ्चित् आहाराद्यर्थत्वादात्मपदाप्राप्ते प्रतिप्रसवसूत्रमिदम्। आयासायामपरिमोहा रुचनृत्वदवसधेटाः दम्यादिपदग्राह्याः। कर्तृगामिक्रियाफले आत्मपदविधानात् अकर्तृगामिक्रियाफले प्रत्युदाहरणम्। विप्रानादयति सूपकार इति यद्यपि फलाकांक्षया विना कर्तु प्रवृत्त्यसम्भवस्तथापि

यत् कर्तृगामीति कृतं तत् ज्ञापयति। फलपदेनात्र प्रधानफलमभिधीयते यथा—यागक्रियायाः फलं यजमानस्य स्वर्गप्राप्तिः, पाकक्रियायाः फलं भुक्त्वा तृप्तिरिति। दक्षिणा वेतनादिकन्तु न प्रधानं फलम्। अतः क्वचित् कर्तृगामिफलं क्वचिन्नेति। अतएवाकर्तृगामिव्यावृत्त्यर्थं कर्तृगामीति विशेषणं सार्थकम्॥

इति श्रील-हरेकृष्णाचार्यविरचितायां श्रीहरिनामामृताख्यवैष्णवव्याकरण-
टीकायां वालतोषणीनाम्न्यां चतुर्थीविष्णुभक्त्यर्थप्रकरण-
कारकटीका समाप्ता॥

[ पञ्चमम् ]

# अथ कृदन्तप्रकरणम्

श्रीश्रीराधाकृष्णाभ्यां नमः

(६) धातुं सर्वमुपादाय सर्वं रूपं करोति यः।
कृत् स एवेति विस्मित्य तद्धर्मा कृत् प्रशस्यते ॥

---

श्रीश्रीराधाकृष्णाभ्यां नमः
श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक।
गोपाल रघुनाथाप्त व्रजवल्लभ पाहि माम् ॥

(६) धातुम्। नाम्न उत्तरे तद्धितप्रत्यया विधेया, नाम्नस्तु कृत्प्रत्यय-सिद्धत्वमेव स्वरूपम्, अतः कृत्प्रकरणमारभमाणः कृतो विष्णुधर्मत्वं प्रतिपद्य तत्कथनस्य शुभादृष्टजनकतां भङ्ग्या सूचयन् कृत्प्रत्ययस्य कथ्यमानत्वमाह—धातुमिति। यः कोऽप्यनिर्वचनीयः पुरुषः सर्वं धातुं पृथिव्यप्तेजोवाय्वाकाशरूपम् उपादाय गृहीत्वा सर्वं रूपं स्थावरजङ्गमात्मकं करोति उत्पादयति, स एव कृत् कर्ता इति विस्मित्य आश्चर्यं कृत्वा तद्धर्मा तदेव सर्वधातुग्रहणपूर्वकसर्वरूपकरणमेव धर्मः यस्य स कृत् प्रशस्यते प्रकर्षेण सङ्कीर्त्तते। एवम्भूतो महाविष्णुरेव भवति। अथच यः कोऽपि प्रत्ययः सर्वं धातुं शब्दयोनिरूपं भुवादिदशगणपठितं सनाद्यन्तञ्च उपादाय सर्वं रूपं नामात्मकं करोति, सोऽपि कृत्, एवम्भूतः कृत्-प्रत्ययो भवति ; इति विस्मित्य विस्मयं लब्ध्वा तद्धर्मा तत्तस्य विष्णोर्धर्म इव धर्मः यस्य स विष्णुधर्मा कृत् कृत्प्रत्ययः प्रशस्यते प्रकर्षेण कथ्यते इति। विष्णुर्धातुमुपादाय सर्वं रूपं करोति कृत्प्रत्ययोऽपि तमुपादाय तत् करोतीति कृतो विष्णुधर्मत्वम्। "श्लेष्मादि-रसरक्तादि-महाभूतानि तद्गूणाः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ॥" इति नानार्थवर्गः। रसरक्तादीत्यत्रादिपदेन त्यगसृङ्मांसमेदोऽस्थि-मज्जा-शुक्राणि धातव इत्यन्योक्तं गृहीतम्। तद्गुणा महाभूतक्षित्यादीनां गुणास्ते हि शब्दस्पर्शरूपरसगन्धाः।

१२२७। धातोः कृद् बहुलं कर्तरि।

धातोरुत्तरे कृत्प्रत्ययो बहुलं स्यात्। स च कर्तरीत्यधिक्रियते। वासुदेवोऽयम् ॥ १२२७॥

१२२८। वर्तमानादौ शतृशानावच्युताभौ फलान्तरप्रयोगे परपदात्मपदयोः।

सत् (पाः ३।२।१२७) इत्यन्ये ; ऋशावितौ ; शवादिः ; ततश्च 'भवत्' इति स्थिते नामसंज्ञायां प्रत्ययेषु विष्णुभक्तिमात्रवर्जनात् कृत्तद्धितयोरपि नामत्वं सिद्धम। ततश्च 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति-न्यायेन धात्वंशस्यापि तदन्तर्भूतत्वात् तेन मिलित्वा नामत्वं सिद्धम्। ततो वैष्णवो भवन् विराजते ; वैष्णवौ भवन्तौ

---

१२२७। धातोः। धातोरिति पञ्चम्यन्तम्। बहुलमिति क्रियाविशेषणम्। स चेति, सच कृत्प्रत्ययः कर्तरि वाच्ये भवति। इतीति एतत् सूत्रमित्यर्थः। इत्यधिक्रियते इति अधिकारसूत्रमेतदित्यर्थः॥

१२२८। वर्त। वर्तमानादौ काले धातोरुत्तरे फलान्तरप्रयोगे सति कर्तरि वाच्ये परपदात्मपदयोर्विषये शतृशानौ बहुलं भवतः ; तौ अच्युताभौ अच्युताभसंज्ञौ। फलान्तरेति फलान्तरस्य वाक्यसमापकत्वेन प्रयोगे सतीत्यर्थः। परपदात्मपदयोरिति षष्ठीद्विवचनान्तम् ; शतृप्रत्ययः परपदस्य विषये भवति, शानप्रत्यय आत्मपदस्य विषये भवति इत्यर्थः। ततश्च शतृप्रत्ययः परपदीनां शानप्रत्यय आत्मपदीनामिति शवादिरिति शिवत्वात् कृष्णधातुकत्वम्। ततश्च शप् कृष्णधातुक इति शप्। ननु मात्रालाघवमात्रेण पुत्रोत्सववत्ममननात् अत् आनावच्युताभाविति कृते अच्युताभत्वेन कृष्णधातुत्वात् शपादि सिद्धेत्, ततो भवन् गच्छन्नित्याद्यपि सिध्येत्तर्हि शतृशानौ कथमिति चेत्तदैवं समाधेयम्—भवन्नित्यादौ सिद्धेऽपि जुहोत्यादिगणे इयृच्छन्नित्यत्रादादित्वेन शपोऽभावात् नारायणस्य स्थाने 'अर्त ऋच्छ' इत्यनेन ऋच्छादेशो न स्यात्, अतः शतृशानाविति अच्युताभाविति पदं वर्तमाने भूरिप्रयोगार्थम्। नामेति प्रत्ययेष्विति प्रत्ययानां मध्ये इत्यर्थः। ततश्च कृत्तद्धि-

विराजेते ; वैष्णवा भवन्तो विराजन्ते । एवं मालां कुर्वन् विराजते, कुर्वाणः । श्रीकृष्णं भजता जितम् । कृष्णं भजतः शिवम् । सम्बोधने च—हे कुर्वन् । पा पाने—पिवन् ; भौवादिकस्यैव पिवादेशो घ्रादीनां साहचर्यात् । पा रक्षणे—पान्, पान्तौ । 'फलान्तरं' इत्यादि किम् ? वैष्णवो करोति । अकर्मकात्तदप्रयोगेऽपि क्वचित्—सन्, विद्यमानो, घटमानोऽसौ ॥ १२२८ ॥

१२२९ । अतो मुगाने ।

पचमानं वैष्णवं पश्य ॥ १२२९ ॥

---

तयोर्नामत्वात् । प्रकृतीति । प्रकृतीत्यादि-न्यायेन प्रत्ययार्थस्यैव प्राधान्यं भवति ; अतो धात्वंशस्य भुव इत्यस्यापि तदन्तभूतत्वत् प्रत्ययान्तर्भूतत्वात् तेन धात्वंशेन मिलित्वा नामत्वं सिद्धमिति कृत्प्रत्ययस्येति शेषः । कुर्वन्निति डुकृञ्-करणे, 'तनादेः शपोऽपवाद उरि'ति उः, गोविन्दः, "करोत्यरामस्य उर्निर्गुणः" इति अरामस्य उः, उद्वयं वः । ततः कुर्वच्छब्दात् सुँ, चतुर्भुजानुवन्धान्नुम्, सोर्हरः, सत्सङ्गान्तहरः । श्रीकृष्णमिति भजता जनेन जितमत्र सर्वमिति कर्मोह्य, तत्त्वनुक्तं, समापकजितस्य भावे विहितत्वात् । श्रीकृष्णं भजतः शिवमिति भजतो जनस्य शिवं मङ्गलम् । अत्र क्रियान्तरमध्याहार्यम् । सम्बोधने हेति उदाहरणं दर्श्यते इति शेषः । पिवन्निति पः पिव इत्यादिना पिवादेशः । पानित्यत्र कथं न भवतीति चेत्तत्राह—भौवादिकस्यैव पिवादेश इति हेतुमाह—घ्रादीनां साहचर्यादिति । वैष्णवः करोतीत्यत्र फलान्तरप्रयोगाभावः । अकर्मकादिति अकर्मकाद्धातोरुत्तरे तस्य फलान्तरस्य अप्रयोगेऽपि क्वचित् शतृशानौ भवतः ; बहुलमित्युपानादिति शेषः । सन्निति अस् भुवि, "श्नमस्त्योररामहरो निर्गुणे" इत्यनेन अरामहरः । विद्यमान इति विद्-सत्तायां दिवादिरात्मपदी "अतो मुगाने" इति मुक्, अतो मुगान इति सूत्रमतिनिकट एव वक्ष्यते, अतः असिद्धरूपं न त्याज्यमिति प्रतिज्ञायां न विरोधः । घटमान इति घट-चेष्टायां भुवादिरात्मपदी ।।

१२२९ । अतो । आने परे अत उत्तरे मुग् भवति । उकावितौ ।

१२३०। मायुक्ताच्छतृशानावाक्रोशे।

मा पचन्नवैष्णवो विष्णोर्नैवेद्यम्, मा पचत्वित्यर्थः ॥ १२३० ॥

१२३१। क्रियायाश्चिह्ने हेतौ च शतृशानौ।

तिष्ठन् हरिं स्तौति। हरिं भजन् मोदते ॥ १२३१ ॥

१२३२। आत्मपदस्थानीयत्वाद्बाहुल्याच्च शानकानौ भावकर्मणोश्च, भावकृद्ब्रह्मणि, उपेन्द्रात् कृन्नस्य सर्वेश्वरात् परस्य णत्वं, भा-भू-पुना-कमि-गमि-प्यायि-वेप-वर्जम्।

---

पचमानमिति डुपचष्—पाके भुवादीरुभयपदी। क्वचिन्न, मुगिति शेषः। अपि शाकं पचमानस्येति जुमरादिमतम्। अस्मन्मते कृद्बहुलत्वाद्-द्रष्टव्यमिति ॥

१२३०। मायुक्ता। आक्रोशे गम्यमाने फलान्तराप्रयोगेऽपि मा-युक्ताद्धातोरुत्तरे शतृशानौ भवतः। नैवेद्यमन्नादि ॥

१२३१। क्रिया। धात्वर्थे भिन्नायाः क्रियायाश्चिह्ने हेतौ च सति धातोरुत्तरे शतृशानौ भवतः। यस्य धातोरर्थश्चिह्नं हेतुश्च तस्माद्धातो-रुत्तरे शतृशानौ भवत इत्यर्थः। चिह्नं ज्ञापकं हेतुर्जनकः। तिष्ठन् हरिं स्तौतीति। अत्र स्थितिः स्तुतिक्रियायाश्चिह्नम्, अतः स्थाधातोः शतृप्रत्ययः। तिष्ठन्निति 'पः पिव' इत्यादिना स्थस्तिष्ठः। हरिं भजन् मोदत इत्यत्र भजनं मोदक्रियायाः हेतुरिति भजधातोः शतृप्रत्ययः। क्रियाया इति किम्। यः पठति स विष्णुदत्तः। अत्र पठनं विष्णुदत्तस्य ज्ञापकं नतु क्रियायाः। चिह्ने हेतौ चेति किम्? पचति च पठति च ॥

१२३२। आत्म। शानकानौ भावकर्मणोश्च भवतः। हेतुमाह—आत्मेति। शानकानयोरात्मपदस्थानीयत्वेऽपि प्रथमपुरुषैकवचनाभावाद्भा-ववाच्ये न सम्भवतीति अपरितुष्य हेत्वन्तरमप्याह—बाहुल्याच्चेति। कानो वक्ष्यते। शानकानौ आत्मपदस्थाने भवत इति तयोरात्मपद-स्थानीयत्वम्। भावकृद्ब्रह्मणि वर्तते। उपेन्द्रादुत्तरस्य कृत्प्रत्यय-

१२३३। णेर्वा ख्यातेश्च, नरामोद्धवादीश्वरादेरेव, विष्णुजनादेरीश्वरोद्धवाद्वा।

वैष्णवेन प्रगीयमाणं वर्तते। वैष्णवेन प्रगीयमाणो हरिः प्रीणाति। 'भा'-आदि-निषेधः (१२३२) किम्? प्रभायमानम्॥१२३३

१२३४। ण्यन्ते च न।

प्रभाप्यमानम्। 'पुना'-(१२३२) इति श्ना-निर्देशः, ततः पूञः प्रपूयमानम्; पूङस्तु णत्वमेव—प्रपवमाणम्। णेस्तु प्रगाप्यमाणः, प्रगाप्यमानो वा। एवं 'ख्या-नरामो'-(१२३३) इति

---

सम्बन्धिनो नस्य सर्वेश्वरपरभूतस्य णत्वं भवति। भा—दीप्तौ, भू—सत्तायां, पूञ—पवने, कमु—कान्तौ, गम्लृ—गतौ, ओप्यायि—वृद्धौ, टुवेपृ—चलने इत्येतान् वर्जयित्वा उपेन्द्रादुत्तरस्य सर्वेश्वरपरभूतस्य कृन्नस्य णत्वं वा भवति॥

१२३३। णेर्वा। ख्या—प्रकथने इत्यस्माद्विहितस्य कृन्नस्य णत्वं वा भवति। उपेन्द्रादुत्तरस्येत्यादि सर्वत्र योज्यमेव। नरामोद्धवाद्विहितस्य कृन्नस्य णत्वं भवत् ईश्वरादेरेव नरामोद्धवाद्भवति नान्यस्मादिति। विष्णुजनादेरीश्वरोद्धवाद्विहितस्य कृन्नस्य णत्वं वा भवति। प्रगीयमाणमिति गै—शब्दे भावे शानः,'दामोदर-मा-स्था-गापिवते'त्यादिना आरामस्य ईरामः। भावकृतो ब्रह्मत्वं णत्वम्। प्रगीयमाण इति कर्मणि शानः। सर्वेश्वरात् परस्येति किम्? प्रभग्नः। प्रभग्न इति भन्जो—आमर्दने क्तः, 'ओरामेत्वात् विष्णुनिष्ठा तस्य नः', 'अनिरामेतामि'त्यादिना नरामहरः' विष्णुनिष्ठादेः तस्य स्थानिवद्भावात् चवर्गस्य कवर्गः। प्रभायमानमिति भावे शानः॥

१२३४। ण्यन्ते। ण्यन्ते च भादौ णत्वं न भवति। प्रभाप्यमानमिति 'अर्ति-ह्री-व्ली-री-क्नुयी-क्ष्माय्यारामेभ्यः पुक् य-लोपो गोविन्दश्च णौ, दरिद्रां विने'ति पुक्। पुनेति श्नानिर्देश इति तस्मात् क्र्यादेरेव णत्वं न भवति। पूङस्त्विति पूङ—पवन इत्यस्य भूवादेस्त्वित्यर्थः। प्रपवमाण-

प्रेङ्खमाणमित्यत्रैव णत्वं, न तु प्रकम्पमानमित्यत्र। णौ कृते तु नरामोद्धवधातुत्वं न स्यात्, तत्र तु विकल्प एव—प्रेङ्ख्यमाणः, प्रेङ्ख्यमानो वा। 'उन्भ पूरणे' इत्यस्य प्रोम्भणमित्यत्रापि नित्यमिति काशिकादिमतम्। इवेरन्तस्थान्तस्य तु प्रेण्वनमित्यत्र न णत्वं, पूर्वोक्तनिमित्तत्वाभावात्। 'विष्णु'-(१२३३) इति प्रगूहमाणः, प्रगूहमानो वा ॥ १२३४ ॥

१२३५। आसः शानस्य ईनः।

आसीनः ॥ १२३५ ॥

१२३६। परपदिनश्च शानस्ताच्छील्य-वयः-शक्तिषु।

---

मिति कर्तरि शानः। णेर्वेत्यस्य उदाहरणं दर्शयति—णेस्त्विति। एवं ख्येति। तदुदाहरणं यथा—प्रख्याप्यमाणः प्रख्याप्यमानो वेति। नरामेतीति। नरामोद्धवादीश्वरादेरेवेत्यस्योल्लेखः। प्रेङ्खमाणमिति इखि—गतौ, ईश्वरादित्वादत्र णत्वम्। प्रकम्पमानमिति कपि—चलने, ईश्वरादित्वाभावादत्र न णत्वम्। णौ कृते त्विति नरामोद्धवधातुत्वं न स्यात्, किन्तु खरामोद्धवधातुत्वं स्यादिति तत्र तु विकल्प एवेति णेर्वेत्यनेनेति शेषः। उन्भ—पूरण इत्यस्य इत्यनन्तरं ण्यन्तस्येति ज्ञेयम्। अण्यन्तस्य तु अस्माकं मतेऽपि नित्यं प्रोम्भणमिति उन्भ—पूरणे तुदादिः। इवेरिति अन्तस्थान्त इति अविष्णुवर्ग्य-ररामान्त इत्यर्थः। प्रेण्वनमिति इवि—व्याप्तौ इरामेत्वान्नुम्, अनो भाव इति अनः वैष्णवपरत्वाभावात् 'अविष्णुपदान्तस्ये'-त्यादिना नस्य न विष्णुचक्रम्। अत्र ईश्वरादित्वेऽपि पूर्वोक्तनिमित्तत्वाभावात् न णत्वं यत उक्तं पूर्वोक्तनिमित्तत्वे सत्येव षत्वणत्वे इति सर्वेश्वरादेरितरव्यवधानात् पूर्वोक्तनिमित्तत्वाभावः। विष्णुजनादेरित्यादेरुदाहरणं दर्शयति—विष्ण्विति। प्रगूहमाण इति गूह—सम्बरणे भ्वादिरुभयपदी कर्तरि शानः, शप्, गोविन्दः, 'गोह ओ ऊ सर्वेश्वरे' इति ओरामस्य ऊरामः, मुक्, णत्वम् ॥

१२३५। आसः। आस—उपवेशन इत्यस्माद्विहितस्य शानस्य स्थाने ईनो भवति ॥

भक्तं भजमानः ; कवचं बिभ्राणः ; रावणं निघ्नानः ॥ १२३६ ॥

१२३७। वेत्तेः शतुर्वसुर्वा।

विदन्, विद्वान् कृष्णम्। अकर्मकत्वेऽपि—विद्वान् पण्डितः ॥१२३७

१२३८। शतृशानौ भविष्यति च, तत्पूर्वं स्यश्च।

करिष्यन्, करिष्यमाणः ॥ १२३८ ॥

१२३९। अर्हः शतृ पूज्ये।

अर्हन् ॥ १२३९ ॥

---

१२३६। पर। ताच्छील्य-वयः-शक्तिषु गम्यमानासु आत्मपदिनः परपदिनश्चोत्तरे शानो भवति। ताच्छील्यं तत्स्वभावता फलनिरपेक्षया प्रवृत्तिस्ताच्छील्यमिति च। शानस्य आत्मपदस्थानीयत्वात् परपदिनो न प्राप्नोतीति विधानम्। भक्तं भजमान इति अत्र ताच्छील्यं गम्यते, भजधातोरुभयपदित्वादात्मपदित्वं परपदित्वञ्च। कवचं बिभ्राण इति। अत्र कवचधारणेन वयो गम्यते। कवचो वर्म। बिभ्राण इति डुभृञ्—धारणपोषणयोर्जुहोत्यादिरुभयपदी, शाने कृते द्विर्वचनं, 'नरऋरामस्यारामः' इति ऋरामस्यारामः, 'हरिखड्गस्ये'त्यादिना नरस्य हरिघोषस्य हरिगदा। 'भृञ आमि चे'ति अरामस्येरामः, 'ऋद्वयं रः'। रावणं निघ्नान इति। अत्र रावणनिहननेन शक्तिर्गम्यते। निघ्नान इति, हन—हिंसागत्योः परपदी 'गम-हन-जन-खन-घसामि'त्यादिना उद्धवादर्शनं, 'हनो हस्य घो णिन्नयोरि'ति हस्य घः ॥

१२३७। वेत्तेः। विद्—ज्ञाने इत्यस्माद्विहितस्य शतृप्रत्ययस्य स्थाने वसुर्वा भवति। वेत्तेरिति निर्देशो विद्लृ—लाभ इत्यादेर्निरासार्थः अकर्मकत्वेऽपि शतुर्वसुर्भवतीति शेषः ॥

१२३८। शतृ। भविष्यति च काले धातोरुत्तरे शतृशानौ भवतः। तत्पूर्वं शतृशानाभ्यां पूर्वं स्यश्च भवति। करिष्यन्निति 'ऋराम-हनि-भ्यामिट् स्ये' इति इट् ॥

१२३९। अर्हः। पूज्ये वाच्ये अर्ह उत्तरे शतृ भवति। अर्हन्निति अर्ह—पूजायां भ्वादिः, पूज्य इत्यर्थः। पूज्य इति किम्? अवैष्णवो दुःखमर्हति ॥

१२४० । इङ्-धारिभ्यां शत्रकृच्छ्रे-कर्तरि ।

अधीयन् श्रीभागवतम् ; धारयन् वेदान् । कृच्छ्रत्वे तु— कष्टेनाधीयानः ॥ १२४० ॥

१२४१ । द्विषः शतृ शत्रौ ।

द्विषन् । अर्हदादयश्च फलान्तरं नापेक्षन्ते, रूढ़त्वात् ।

**मुख्यो लाक्ष्यणिको गौणः शब्दः स्यादौपचारिकः ।**
**रूढ़ो वा योगरूढ़ो वा यौगिकशब्द एव च ॥ १२४१ ॥**

---

१२४० । इङ । कृच्छ्रं कष्टं कष्टरहिते कर्तरि वाच्ये इङधारिभ्यामुत्तरे शतृप्रत्ययो भवति । अधीयन्निति इङ–अध्ययने । इकिङौ नित्यमधिपूर्वौ । शतृ शप् महाहरः । योगविभागेन सन्धिं निर्वर्त्य पश्चादियादेशः । ङित्वात् शतृप्रत्ययो न भवतीति विधानम् । धारयन्निति धृङ–धारणे णिः, ततः शतृ, क्रियाफलस्य कर्तृगामित्वात् शतृप्रत्ययो न भवतीति विधानम् । कृच्छ्रत्वे त्विति कर्तुरिति शेषः । कृच्छ्रशब्दोऽत्र धर्मिवचनः ॥

१२४१ । द्विषः । शत्रौ वाच्ये द्विष उत्तरे शतृप्रत्ययो भवति । द्विषन्निति द्विष–अप्रीतौ अदादिः शत्रुरित्यर्थः । शत्राविति किम् ? औषधं द्वेष्टि । अर्हदादयश्चेति द्विषच्शब्दोऽर्हदादिश्चेत्यर्थः । यद्वा, फलान्तराप्रयोगे सद्विद्यमानघटमाना भवन्तीति पूर्वमुक्तं तदभिप्रेत्याह—अर्हदादयश्च फलान्तरं नापेक्षन्त इति फलान्तरमिति क्रियान्तरमित्यर्थः । रूढ़त्वादिति रूढ़शब्दत्वादित्यर्थः। रूढ़त्वादित्युट्टङ्कितेन शब्दभेदानप्याह—मुख्येत्यनेन । मुख्य एव शब्दः स्यात्, लाक्षणिक एव शब्दः स्यादिति सर्वत्र योज्यम् । तत्रेश्वरेच्छासङ्केतितो मुख्यो यथा—घटपटादिः । लक्षणासङ्केतितो लाक्षणिको यथा—गङ्गातटादिः । गौणवृत्तिप्रतिपाद्यो गौणो यथा—अग्निमाणवकादिः । उपचारेण लक्षित औपचारिको यथा—सत्या इत्यत्र सत्यभामादिः शब्दानुकरणादिश्च । आधुनिकसङ्केतितो रूढ़ो यथा—डित्थडवित्थादिः । योगरूढ़वृत्तिप्रतिपादितो योगरूढ़ो यथा—पङ्कजादिः । यौगिकवृत्तिबोध्यो यौगिको यथा—पाचकादिः । इत्यत्र

१२४२। न नारायणाच्छतुर्नुम् कृष्णस्थाने, ब्रह्मणस्तु वा।

ददत्, ददती; जक्षत्, जक्षती; ददन्ति ददति ॥ १२४२ ॥

१२४३। शप्-श्याभ्यां शतुर्नुम् ई-प्रत्यये, शेषाद्वयात्तु वा।

चतुर्भुजानुबन्धाल्लक्ष्म्यामीप् वक्ष्यते (२२५५)। ब्रह्मण औ ई चोक्तः (२११) क्रीड़न्ती, दीव्यन्ती गोपश्रेणी, गोपकुले वा। न दृश्यते च—

गतेऽर्धरात्रे परिमन्दमन्दं
गर्जत्यसौ प्रावृषि नीलमेघः।
'अपश्यती' वत्समिवेन्दुबिम्बं
विभावरी गौरिव हुङ्करोति ।"

इति पाणिनिमुनेः काव्यम् (पातालविजयम्)

---

मुख्यरूढ़योरवान्तरभेदः अभिधासङ्केतितत्वेन तुल्यत्वात्। लाक्षणिक-गौणयोरप्यवान्तरभेदः गौणवृत्तेर्लक्षणैकदेशप्रभेदात्॥

१२४२। न नारा। नारायणादुत्तरस्य शतृप्रत्ययस्य कृष्णस्थाने परे नुम् न भवति। नारायणाद्ब्रह्मणस्तु शतुः कृष्णस्थाने परे नुम् वा भवति। ददिति डुदाञ्—दाने जुहोत्यादिः 'श्ना-नारायणयोराराममहरो निर्गुणकृष्णधातुके' इति आरामहरः। जक्षदिति जक्ष—भक्षहसनयोः अदादिः; जक्षादिरपि नारायण इति नारायणत्वम्। ददन्तीति 'ब्रह्मतो जस्शसोः शिरि'ति जस् शस् शिः॥

१२४३। शप्-श्या। ईप्रत्यये परे शप्श्याभ्यामुत्तरस्य शतृ-प्रत्ययस्य नुम् भवति। ईप्रत्यये परे शेषाद्वयात्तु उत्तरस्य शतृप्रत्ययस्य नुम् वा भवति। शेषादिति शप्श्याभ्यामन्यस्मादित्यर्थः। ईप्रत्यय इत्युक्तं स एव क इति चेत्तत्राह— चतुर्भूजानुबन्धादिति। वक्ष्यते इति तद्धितप्रकरण इति शेषः। उक्त इति नाम-विष्णुपदप्रकरण इति शेषः। तस्माद्द्वयोरेवात्र ग्रहणमिति। क्रीड़न्तीति क्रीड़—विहारे भ्वादिः। दीव्यन्तीति दिवु—क्रीड़ादिषु दिवादिः। लक्ष्मीत्वसूचनार्थं गोपश्रेणीत्युक्तं ब्रह्मत्वस्य द्विवचनान्तत्वस्य च सूचनार्थं गोपकुले इत्युक्तम्। न दृश्यते

अरामहरस्य निमित्तमरामः पूर्ववच्च। तुदती तुदन्ती, भाती भान्ती, करिष्यती करिष्यन्ती सा, ते वा। अन्यत्र तु—अदती कुर्वतो॥ १२४३ ॥

१२४४। जीर्यतेरतृ भूते च।

जरन्, जरन्तौ॥ १२४४ ॥

१२४५। परोक्षातीते क्वसु-कि-काना अधोक्षजाभसंज्ञाः परपदात्मपदयोः।

प्रायश्छान्दसा एते। उकावितौ। अधोक्षजाभत्वाद् द्विर्वचनादि॥ १२४५ ॥

---

चेति क्वचित् नुम् न दृश्यते च बाहुल्यादिति शेषः। प्रावृषि वर्षाकाले अर्धरात्रे गते सति असौ नीलमेघः परि सर्वतोभावेन मन्दं मन्दं यथा स्यात्तथा गर्जति। तद्गर्जनमुत्प्रेक्ष्यते अपश्यतीत्यनेन। गौर्यथा वत्समपश्यती सती हुङ्करोति तथैव विभावरी रात्रिर्वत्समिवेन्दुबिम्बमपश्यती सती हुङ्कारं करोतीत्यर्थः। अपश्यतीत्यत्र अपश्यन्तीति भवितुमर्हति। अरामहरस्येति अन्यथा शतुररामोत्तरता न स्यात्। तुदतीति तुद—व्यथने तुदादित्वात् शपः शः, 'अरामः हर ए-अयोरविष्णुपदान्ते' इति 'अरामहरस्य निमित्तमरामः पूर्ववच्च', ततश्च पक्षे नुम्, तुदन्तीति। भा—दीप्तौ अदादिः। सा गोपश्रेणी, ते वा गोकुले वा। अद तीति अद—भक्षणे। अत्र प्राङ्निमित्ताभावात् नुमोऽभावः॥

१२४४। जीर्य। भूते भूतकाले चकाराद्वर्तमानादौ जीर्यतेरुत्तरे अतृप्रत्ययो भवति। जरन्निति जॄ—वयोहानौ दिवादिः वृद्ध इत्यर्थः। 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपीत्यमरः'। शतृप्रत्यये जीर्यन्निति भवति॥

१२४५। परो। परोक्षातीते काले परपदात्मपदयोः क्वसु-कि-काना भवन्ति। ते अधोक्षजाभसंज्ञाः। परपदात्मपदयोरिति पूर्ववद्व्याख्येयम्। तत्र क्वसुकी परपदस्थानीयौ, कान आत्मपदस्थानीयः।

१२४६। नरे कृते ऽप्येकसर्वेश्वरादारामान्ताद् घसेश्चैवेड् वसौ, नान्येभ्यः।

एष भेजिवान् कृष्णं, भाजयाञ्चकृवान्। आदिवान् तन्नैवेद्यम्, आदयाञ्चकृवान्। वसोर्वस्य उत्वे निषेधप्राप्तेरिटोऽपायो निमित्तत्वाभावात्। भेजुषः, आदुषः। ददिवान् दरिद्रामासिवान्। मतान्तरे—ददरिद्रवान्। तन्मते अत्रे टश्च निषेधः। जक्षिवान्॥ १२४६॥

प्रायश्छान्दसा एते इति। तस्माद्भाषायामेतेषां प्रयोगप्राचुर्यं नास्तीति द्विर्वचनादीति भवतीति शेषः॥

१२४६। नरे। वसौ परे नरे कृते न कृतेऽपि एकसर्वेश्वरात् आरामान्तात् घसेश्चैव इड् भवति। नान्येभ्य इति, अन्येभ्य उत्तरे इट् न भवति नियमादिति शेषः। एकसर्वेश्वरादिति, एकः सर्वेश्वरो यस्येति विग्रहः। 'कृ-सृ-भृ-वृ-स्तु-द्रु-श्रु-स्रुभ्य एवाधोक्षजमात्रे नेड़ि'त्युक्तम्, अतोऽन्येभ्य सर्वेभ्य इट् स्यादिति नियमसूत्रं कृतम्। भेजिवानिति 'तॄ-फल-भज-त्रपां' इत्यादिना अरामस्य एत्वं नरादर्शनञ्च, अतो नरे कृतेऽप्येकसर्वेश्वरत्वं भाजयाञ्चकृवानिति ण्यन्ताद्भजधातोः क्वसुः, 'अनेकसर्वेश्वरकासिभ्यामधोक्षजे' इति 'आम्, आमः कृ-भ्वस्तयोऽनुप्रयुज्यन्ते' इति कृञोऽनुप्रयोगः। आदिवानिति अद—भक्षणे क्वसुः, द्विर्वचनं, ततो 'नरादेरामस्य त्रिविक्रमः', 'तस्मान्नुड्द्विविष्णुजने धाताावि'त्यनेन त्रिविक्रमस्तस्मिन् कृते 'दशावतारः' इत्यनेन त्रिविक्रमोऽतोऽत्रापि नरे कृतेऽप्येकसर्वेश्वरत्वम्; तन्नैवेद्यं कृष्णनैवेद्यम्। आदयाञ्चकृवानिति पूर्ववत्। वसोरिति वसोर्वस्य उत्वे सति निषेधप्राप्तेर्हेतोरिटोऽपायो निवृत्तिर्भवति। निषेधप्राप्तौ हेतुमाह—निमित्तत्वाभावादिति। उरामस्य इटि निमित्तत्वं नास्तीति। ततश्च शसि भेजुषः आदुषः इति। 'वसोर्वस्य उर्भंगवती'ति उत्वम्। ददिवानिति दाधातोः क्वसुः, आरामान्तत्वादिट्। दरिद्रामासिवानिति दरिद्रा दुर्गतो आरामान्तत्वादिट् प्राप्तौ कृतेऽप्यकृतेऽपि य इत्यनेनामो नित्यत्वात् 'अनेकसर्वेश्वरकासी'त्यनेन आम्, अतो आरामन्तत्वेऽपि नेट् अस्तेरनुप्रयोगः। इटश्चेति आराम इटश्चेत्यर्थः। वसौ

ऋ गतौ द्विर्वचनादि—

१२४७। अर्तेर्गोविन्दः क्वसौ।

आरिवान्। नान्येभ्य इट्—'वभूवान्। वसोर्वस्य उर्भगवति' (२८६), 'भुवो भूव्' (४२१),—वभूवुषः। शॄ दॄ इत्येतयोर्वामनो वेति—शश्रृवान्, शशर्वान्। जागृ—जजागर्वान्; 'जजागृवान्' इत्येके। भन्जो—वभज्वान्। अत्र छवयोः शोठौ (७८६) विकल्पयन्ति—विच्छ—विविच्छवान्, विविश्वान्। सङ्कर्षण एव —प्रपृच्छवान्। कलापमतन्तु चिन्यम्। दिव—'यवयोर्हरो वले'

---

आरामहरश्च। जक्षिवानिति घस्लृ–अदने इत्यस्य 'अदो घस्लृर्भूतेश-सनोरधोक्षजे तु वे'त्यनेन अदादेशः। घस्लृ इत्यस्य च रूपं 'गम-हन-जन-खन-घसामि'त्यादिना उद्धवादर्शनं, घस्य को वसिघस्योः षः' इति षत्वम्॥

१२४७। अर्तेः। क्वसौ परे अर्तेर्गोविन्दो भवति। गोविन्दे त्रिविक्रमः। ततश्च एकसर्वेश्वरत्वादिट्। वभूवानिति 'भू-नरस्य भोऽधोक्षजे' इति भूनरस्य भः, भस्य वः। भुवो भूविति। 'भूवो भूव् भूतेशाधोक्षजसर्वेश्वरे' इत्यस्योल्लेखः। वभूवुष इति शसि। शॄ-दॄ इत्यत्र 'वामनो वेति अधोक्षजे' इति शेषः। शशर्वानिति 'सत्सङ्गाद्यृ-दन्तस्य ऋच्छेर्ऋरामान्तानाञ्च' इत्यादिना गोविन्दः। जजागर्वानिति 'जागर्तेर्गोविन्दः'। सर्वत्रेत्यादीत्यादिना गोविन्दः। जजागृवानित्येक इति तन्मते गोविन्दो न भवतीति। भन्जो इति भन्जो–आमर्दने। वभज्वानिति 'अनिरामेतामि'त्यादिना उद्धवनरामहरः। अत्रेति अत्र क्वसौ विकल्पयन्तीति पूर्वाचार्या इति शेषः। 'छस्य शो वस्य उट् हरि-वेणौ क्वौ कंसारिवैष्णवे च' इति सूत्रम्। अत्र सूत्रे क्वाविति क्विपो रूपं तस्यैकदेश साम्येन क्वसोरपि ग्रहणमिति 'छस्य शः' इत्यनेन नित्ये शोट्-प्राप्ते विकल्पयन्तीति। विच्छतीति। विच्छ–गतौ। सङ्कर्षण एवेति तस्मात् प्रच्छधातोश्छरामस्य शोऽपि न भवतीति पूर्वाचार्यमतम्। पपृच्छवानिति 'ग्रहिज्या' इत्यादिना सङ्कर्षणः। कलापमतन्तु चिन्त्यमिति

(८६८)—दिदिवान् ; भगवति—दिदिवुषः इत्यादि ; मतान्तरे—दिद्युषः ॥ १२४७ ॥

१२४८। गम-हन-विन्द-दृश-विशिभ्य इड् वा वसौ।

जग्मिवान्, जग्मुषः। 'धातोर्मो नः' (२७६)—जगन्वान्, जग्मुषः। जघ्निवान्, जघन्वान्, जघ्नुष इत्यादि। 'विन्द' इति नुमा निर्देशः—विविद्वान्, विविदिवान् ॥ १२४८ ॥

१२४९। ईयिवस्-प्रभृतयः।

इटा त्रिविक्रमादिना चैते क्वस्वन्ता निपात्यन्ते। इन्—ईयिवान्। सोपेन्द्रत्वेऽपि—समीयिवान् ईयुषः। दासृ-सह-मिहां दास्वान्, साह्वान्, मीढ्वान् निपात्यते। रध—रेधिवान्।

---

तस्मात् कलापमते पप्रश्वानिति। तन्मते ग्रहिज्येति सूत्रे प्रच्छोऽग्रहणात् सङ्कर्षणोऽपि स्यादतः पप्रच्छ्वानित्यपि। दिविति दिवु—क्रीड़ादिषु। प्राचीनमते इट्पक्षे दुद्युवानिति भवतीति जेयम्। दिदिवुष इति 'वसोर्वस्य उत्वे' कृते निमित्तापायात् पुनर्वराम इति। दिद्युष इति 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति नेष्यत इति ॥

१२४८। गम। गम्लृ—गतौ, हन—हिंसागत्योः, विद्लृ—लाभे, दृशिर्—प्रेक्षणे, विश—प्रवेशने इत्येतेभ्य उत्तरे वसौ परे इड् वा भवति, क्वसाविति वा पाठः। जग्मिवानिति 'गम-हन-जन-खन-घसामि'त्यादिना उद्धवादर्शनं, जग्मुषः, भेजुष इतिवत्। इड़भावपक्षे जगन्वानिति। जग्मुष इति वसोर्वस्य उरामे कृते निमित्तापायान्नरामस्य मरामः उद्धवादर्शनम्। जघ्निवानिति उद्धवादर्शनं, 'हनो हस्य घः'। नुमा निर्देश इति विद्लृ धातोर्मुचादित्वात् नुम् भवतीति। श्नमा निर्देश इति पाठः क्वचिद् दृश्यते सत्वसभ्य एव।

१२४९। ईयि। वृत्तिमाह इटेति। एते ईयिवस् प्रभृतयः इटा त्रिविक्रमादिना च सह निपात्यन्ते। ईयिवानिति इन्—गतौ क्वसुः निपातादिट्। 'एतिहुवोर्यवौ कृष्णधातुक एवे'ति नियमात् नयादेशः।

अथ कानः। चक्राणः रासं कृष्णः। कर्मणि— कृष्णेन चक्राणो रासः। भावे—कृष्णेन चक्राणम्। जजागराणम्; 'जजाग्राणम्' इत्यपि केषाञ्चित् ॥ १२४९ ॥

१२५०। अनूचानः कर्तरि।

अनुवचो तिपातः ॥ १२५० ॥

१२५१। क्तवतुर्भूते।

उकावितौ। क्रीड़ितवान् कृष्णः। कृतवान् क्रीड़ाम्। क्रीड़ितवन्तौ रामकृष्णौ ॥ १२५१ ॥

१२५२। क्तो भूते भावकर्मणोः।

---

ततो द्विर्वचने कृते इयादेशः, त्रिविक्रमः। ईयुष इति शसि। प्रभृतिशब्दं विवृणोति—दासृसहमिहामिति। दास्वानिति दासृ—दाने निपाताद्द्विर्वचनाभावः। साह्वानिति सह—मर्षणे, निपाताद् द्विर्वचनाभावः त्रिविक्रमश्च आत्मपदिनः क्वसुप्रत्ययो निपातादेवेति ज्ञेयम्। मीढ्वानिति मिह—सेचने निपाताद्द्विर्वचनाभावः त्रिविक्रमश्च। रेधिवानिति रध—हिंसायाञ्च अत्र निपातान्नुमभावः। रधेर्नुम् अधोक्षजवर्जितेटीत्युक्तमतो 'रधिजभोर्नुं सर्व्वेश्वर' इत्यनेन नुम् स्यात् किर्वक्ष्यते। कानमाह, अथ कान। चक्राण इति डु कृञ्—करणे, कर्तरि कानः द्विर्वचनं 'नरऋरामस्यारामः' 'कवर्ग नरस्य चवर्गः'। जजागराणमिति 'जागर्तेर्गोविन्द' इत्यादिना गोविन्दः ॥

१२५०। अनू। वृत्तिमाह अनुवचो निपातः। अनूचान इति वच—परिभाषणे परपदिनोऽपि निपातात् कानः। 'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु य' इत्यमरः। प्रवचने वेदे ॥

१२५१। क्तवतुः। भूते काले धातोरुत्तरे क्तवतुर्भवति। क्रीड़ितवानिति 'इटो रामधातुके' इति इट् चतुर्भुजानुबन्धत्वान्नुम् 'अत्वसन्तोद्धवस्ये'त्यादिना त्रिविक्रमः ॥

१२५२। क्तो। भूते काले धातोरुत्तरे भावकर्मणोर्वाच्ययोः

स्नातं कृष्णेन। स्तुतो विष्णुर्वैष्णवैः ॥ १२५२ ॥

१२५३। अतीतादौ क्त-क्तवतू विष्णुनिष्ठासंज्ञौ। 'निष्ठा' इत्यन्ये ॥ १२५३ ॥

१२५४। क्षियस्त्रिविक्रमो विष्णुनिष्ठायां कर्तरि, आक्रौशदैन्ययोस्तु वा, तस्मात्तरामस्य नः।

क्षिधातुर्द्विविधः—अन्तर्भूत-ण्यर्थः, केवलश्च। क्षीणवान् कामं वैष्णवः ॥ १२५४ ॥

१२५५। क्तः कर्तरि च वाच्यः।

क्षीणायुर्भव, क्षीतायुर्वा। क्षीणोऽयं वैष्णवः, क्षितो वा। भावकर्मणोस्तु—क्षितं कामेन वैष्णवस्य ; क्षितः कामो वैष्णवेन ॥

---

क्तो भवति। स्नातमिति स्ना-शौचे भावे क्तः, भावकृद्ब्रह्मणीति ब्रह्मत्वम्। स्तुत इति ष्टूञ्-स्तुतौ कर्मणि क्तः ॥

१२५३। अती। अतीतादौ काले विहितौ क्त-क्तवतू विष्णुनिष्ठासंज्ञौ भवतः। संज्ञासुत्रमेतत् अतीतादावित्युपादानात् वक्ष्यमाणस्य वर्तमानक्तस्यापि विष्णुनिष्ठत्वम् ॥

१२५४। क्षियः। क्षियः कर्तरि विहितायां विष्णुनिष्ठायां परस्यां क्षियस्त्रिविक्रमो भवति। क्षिय इति। क्षि-क्षये भ्वादि, क्षि-निवासगत्योः तुदादिर्द्वयोरेव ग्रहणम्। आक्रोशे दैन्ये च गम्यमानेतु त्रिविक्रमो भवति। आक्रोशः शापः। तस्मात् त्रिविक्रमात् परस्य तरामस्य स्थाने नो भवति। क्षि-धातुरिति क्षयार्थ इत्यर्थः। अन्तर्भूतण्यर्थ इति अन्तर्भूतण्यर्थत्वात् सकर्मक इत्यर्थः। केवलश्चेति अन्यर्भूतण्यर्थशून्यत्वादकर्मकश्चेत्यर्थः। क्षीणवान् कामं वैष्णव इति अत्रान्तर्भूतण्यर्थः ॥

१२५५। क्तः। क्तः कर्तरि च वाच्यः वक्ष्यते इत्यर्थः। क्षीणायुर्भवेति 'गत्यर्थाकर्मक-श्लिष-स्थास-वस-जन-रुह-जीर्यतिभ्यः क्तः कर्तरि चे'ति क्तः। अत्राक्रोशो गम्यते। क्षीणोऽयं वैष्णव इति अत्र

१२५६। श्रिञो जागृवर्जं चतुर्भुजान्ताच्च नेट् कपिले।

श्रितः, भूतः, ऊर्णुतः, क्षुतः। जागृस्तु—जागरितः॥ १२५६॥

१२५७। र-दाभ्यां विष्णुनिष्ठा-तस्य पूर्वदस्य च नो दां विना, नुद-विनत्ति-त्रा-घ्रा-ह्री-उन्दीभ्यो वा।

शॄ—शीर्ण; भिन्नः; नुन्नः, नुत्तः; विन्नः, वित्तः; त्राणः, त्रातः; घ्राणः, घ्रातः; ह्रीणः, ह्रीतः॥ १२५७॥

---

दैन्यं गम्यते। श्रितः कामो वैष्णवेनेति अत्रान्तर्भूतण्यर्थत्वात् कर्मणि क्तः॥

१२५६। श्रिञो। कपिले परे श्रिञ सेवायामित्यस्मात् जागृवर्जं चतुर्भुजान्ताच्चोत्तरे इट् न भवति; ऊर्णुत इति ऊर्णुञ–आच्छादने। क्षुत इति टुक्षु–शब्दे। ऊ ऋरामान्तरुस्नुक्षुशीयुनुक्ष्णुश्विडीश्रिभिः। वृङ-वृञ्भ्याञ्च विनैकाचः स्वरान्ता धातवोऽनिटः। इत्युक्तमतः श्रिभू-क्षूणामिट् स्यादिति निषेधविधानम्। जागरित इति जागृ–निद्राक्षये॥

१२५७। रदाभ्याम्। रदाभ्यामुत्तरस्य विष्णुनिष्ठा-तस्य पूर्वदस्य च स्थाने नो भवति। दां विनेति दाधातोर्विष्णुनिष्टा तस्य-पूर्वदस्य च नो न भवति। दावर्जनस्य फलमग्रे वक्तव्यम्। नुद–प्रेरणे, विद-विचारे, त्रैञ्–पालने, घ्रा–गन्धोपादाने, ह्री-लज्ज्वायाम्, उन्दी–क्लेदने इत्येतेभ्य उत्तरस्य विष्णुनिष्ठातस्य नो वा भवति, पूर्वदस्य च नः। सन्नियोगशिष्टं नरामद्वयविधानं यदा विष्णुनिष्ठा-तस्य नो भवति, तदव पूर्वदस्य च नः; यत्र पुनर्दरामो नास्ति, तत्र विष्णुनिष्ठातस्य नः। नुदविनत्युन्दीनां पूर्वेण त्रा-घ्रा इत्येतयोरपि हरिमित्रेत्यादिना वक्ष्य-माणसूत्रेण प्राप्ते ह्रीत्यस्याप्राप्ते विभाषा। शीर्ग इति, शृ–हिंसायाम्, 'ऋरामस्येर् कंसाराविʼतीर्, 'धातोरवʼ इति त्रिविक्रमः। भिन्न इति, भिदिर–विदारणे, सहजानिट् तस्य दस्य च नः। नुन्न ईति सहजानिट् तस्य दस्य च नः। नुत्त इति सहजानिट्त्वान्नेट्। एवं विन्न इति च। विनत्तीति निर्देशात् विद् सत्तायामित्यस्य नित्यम्। विन्न इति च॥

१२५८। आ-ईरामानुवन्धाद्विकल्पितेटः श्वयतेरा-श्वसेर्वमेश्च नेड् विष्णुनिष्ठायाम्।

उन्नः, उत्तः। 'नवर्जस्तवर्गस्थस्य' (२७५) इत्युक्तेरत्र तु मूर्धन्यत्वम्—क्षुण्णः॥ १२५८॥

१२५९। हरिमित्रयुक्-सत्सङ्गाद्यारामान्त-ल्वादिभ्य ओरामेतश्च विष्णुनिष्ठा-तस्य नः, दुनोति-गोस्त्रिविक्रमश्च।

द्राणः, ग्लानः, लूनः॥ १२५९॥

१२६०। पूञो विनाश एव।

पूनः, नष्ट इत्यर्थः। अन्यत्र तु पूतः। ज्या—'ग्रहि-ज्या'-( ६३० ) इति सङ्कर्षणः, 'श्या-श्वि-व्या-ज्या'-( ८७० ) इति त्रिवि-

---

१२५८। आ ई। विष्णुनिष्ठायां परस्यामारामानुबन्धादीरामानुबन्धात् विकल्पित इट् यस्य तस्मात् टु ओ श्वि-गतिबृद्धचोः इत्यस्मात् आङ्पूर्वात् श्वस्—प्राणने इत्यस्मात् टु वम—उद्‌गिरणे इत्यस्माच्च उत्तरे इट् न भवति। उन्न इति 'ईरामानुबन्धत्वान्नेट्' 'अनिरामेतामि'-त्यादिना नरामहरः। मूर्धन्यत्वं णत्वम्। क्षुण्ण इति क्षुदिर्—सम्पेषणे सहजानिट् तस्य दस्य च नः, णत्वं नवर्ज-तवर्गस्थस्य नस्य न णत्वमिति सूत्रम्॥

१२५९। हरि। हरिमित्रयुक् सत्संग आदिर्येषां ते हरिमित्रयुक् सत्सङ्गादयस्ते च ते आरामान्ताश्च तेभ्यः ल्वादेः ओरामेतश्च उत्तरस्य स्थाने नो भवति। भ्वादिगणः। दुनोति, टु दु—उपतापे, गु—पुरीषोत्सर्गे इत्येतयोर्विष्णुनिष्ठातस्य स्थाने नो भवति, तयोस्त्रिविक्रमश्च। द्राण इति द्रा—कुत्सायां, ग्लान इति ग्लै—हर्षक्षये। लून इति लूञ—छेदने, 'श्रिञो जागृवर्जे'त्यादिना इड्‌निषेधः॥

१२६०। पूञो। पूञ्—पवन इत्यस्य विष्णुनिष्ठातस्य स्थाने विनाशेऽर्थे एव नो भवति, नान्यत्र। पूत इति पवित्र इत्यर्थः। ज्येति ज्या—वयहानौ, स्वादिः दु-गताविति प्रसादे भ्रम इति। प्रसादे व्याकरण-

क्रमः—जीनः। टुदु उपतापे—दूनः। 'दु गतौ' इति प्रसादे भ्रमः, अमरकोष कविकल्पद्रुमादि ( उकारान्तवर्गे तृतीयः श्लोकः)-विरोधात् गूनः। विष्णुनिष्ठादेशस्य षत्वादन्यत्र स्थानिवद्भाव इष्टः, तेन चवर्गस्य कवर्ग—भुजो भुग्नः। ओव्रश्च सङ्कर्षणः, विष्णुनिष्ठा-तस्य नः' 'स्कोः सत्सङ्गाद्योर्हरः' (२५१) 'छशो राज्-'(२५०)इत्यादिना प्राप्तं षत्वमत्र तु न स्यात्। ततश्चवर्गस्य कवर्ग, णत्वम्—वृक्णः। ओहाक्—प्रहीणः। दिवादौ षूङादयो व्रीङन्ता ओरामेतः—सूनः दूनः॥ १२६०॥

१२६१। डीङो नेट् च।

डीनः, लीनः, दीनः॥ १२६१॥

विशेषे। हेतुमाह—अमरेति। दु-गतावित्यस्य ग्रहणे सति अमरकोष-कविकल्पद्रुमादिभ्यः सह विरोधः स्यादिति। तथाहि,'सन्तापितस्तु सन्तप्तो धूपितधूपायितौ च दुनश्चे'त्यमरकोषः। दुष्ट्वोऽनुताप कविकल्पद्रुमः। टुरामौरामनरामा इतः ओरामेत्वाद्विष्णुनिष्ठा-तस्य नः नरामेत्त्वात् स्वादित्वम्। विष्णिवति, विष्णुनिष्ठाया आदेशस्य नरामस्य षत्वादन्यत्र स्थाने स्थानिवद्भावः; स्थानिवत्त्वं तरामवत्त्वम्। इष्ट इति पूर्वाचार्यैरिति शेषः। अतो वैष्णवस्य परत्वम्। ततश्च चवर्गस्य कवर्गः। भुग्न इति 'ओरामेत्वाद्विष्णुनिष्ठातस्य नः। षत्वमत्रतु न स्यादिति षत्वादन्यत्रेत्युक्त-त्वादिति शेषः। चवर्गस्य कवर्ग इति स्थानिवद्भावादिति। शेषः प्रहीन इति दामोदरेत्यादिना ईरामः। दिवादौ वर्तमानाः षूङादयो व्रीङन्ता धातव ओरामेतो भवन्ति; ओरामेत्त्वात्तेषां विष्णुनिष्ठातस्य स्थाने नो भवति। तद्गणो यथा। षूङ-दूङ-दीङाः प्रोक्ता धीङमीङौ रीङस्तथा। णीङ डीङ वृजश्चैते ओरामेतः षूङादयः। षूङ—प्राणिगर्भविमोचने, दूङ—परितापे, दीङ—क्षये, धीङ—अनादरे, मीङ—हिंसायां, रीङ—श्रवणे, लीङ—श्लेषणे, डीङ—विहायसां गतौ, व्रीङ—वरणे। एते नव षूङादयः॥

१२६१। डीङो। विष्णुनिष्ठातस्य नो भवतीति प्रतिपादितमेव इट् च न भवति; ऊ-ऋरामान्तेत्यादौ डीङोऽपि वर्जनमुक्तमत इट

१२६२। स्फायः स्फीर्वा विष्णुनिष्ठायाम्।

स्फीतः, स्फातः। उच्छी विवासे ; व्युष्टा रजनी, अतिक्रान्ते-त्यर्थः॥ १२६२॥

१२६३। श्यैङः सङ्कर्षणो द्रवकाठिन्ये हिमत्वे च, प्रतेस्त्वन्यत्र च, अभ्यवाभ्यामेव वा विष्णुनिष्ठायां, विष्णुनिष्ठा-तस्य नो, न तु हिमत्वे।

शीनं घृतम्; हिमत्वे तु—शीतं जलम्। द्रवेत्यादिभ्यामन्यत्र—संश्यानो गौः, शीतात् सङ्कुचित इत्यर्थः। प्रत्यादिभ्यस्तु—प्रतिशीनो गौर्द्रवो वा। अभिश्यानः, अभिशीनः। एवमव। एवकारात्—समवश्यानः॥ १२६३॥

---

स्यादिति निषेधविधानम्। दिवादेरोरामेत्त्वादिङ्निषेधश्च तस्यैव तेन ज्ञादेस्तु डयित इति केषाञ्चिन्मतम्; अस्माकं मतेत्विटः परसम्बन्धित्वेन कपिलत्वाद्गोविन्दो न भवति। किन्त्वातिदेशिकविधेरनित्यत्वात् टिदागमः परसम्बन्धीति क्वचिद् व्यभिचरति च तस्मादिटः परसम्बन्धित्वं खण्डयित्वा पृथक् रामधातुमननेन एवम्बिधादौ स्थाने गोविन्दोऽपि भवितुमर्हति न सर्वत्रेति॥

१२६२। स्फायः। विष्णुनिष्ठायां परस्यां स्फायी वृद्धावित्यस्य स्थाने स्फीर्वा भवति; स्फीत इति ईरामानुबन्धत्वान्नेट्। स्फात इति 'यवयोर्हरो वल' इति य लुक्॥

१२६३। श्यैङः। द्रवकाठिन्ये हिमत्वे च वाच्ये विष्णुनिष्ठायां परस्यां श्यैङ गतावित्यस्य सङ्कर्षणो भवति। हिमत्वे शितलत्वे। प्रतेरुत्तरस्य श्यैङस्तु द्रवकाठिन्ये हिमत्वे अन्यत्र च वाच्ये सङ्कर्षणो भवति। अभ्य प्रतेः। विष्णुनिष्ठायां परस्यां केवलाभ्यामभ्यवाभ्यामुत्तरस्य श्यैङः सङ्कर्षणो वा भवति। विष्णु श्यैङो विष्णुनिष्ठा-तस्य स्थाने नो भवति; हिमत्वे तु नो न भवति। शीनं घृतमिति

१२६४। दिवो विष्णुनिष्ठा-तस्य नो, न तु विजिगीषायाम्, अञ्चोऽनपादाने।

इवन्तत्वात् सनि विकल्पितेट्—द्यूनः। विजिगीषायाम्—द्यूतम्। अञ्चः समक्नः। अपादाने तु—उदक्तः कृष्णः आसनात् ॥१२६४

**ञिफला आरामानुबन्धः**

१२६५। चरफलयोरस्य उस्ते।

प्रफुलतः। 'ते' इति किम्? फलिता। फल निष्पत्तौ—फलितः। 'किति' इति तस्यां भ्रमः ॥ १२६५ ॥

---

द्रवावस्थायाः काठिन्यं गतमित्यर्थः सङ्कर्षणे कृते 'श्या-श्वि-व्या-ज्याभ्यां सङ्कर्षणस्य त्रिविक्रम' इति त्रिविक्रमः। शीतमिति शीतलमित्यर्थः। द्रवेत्यादिभ्यां द्रवकाठिन्यहिमत्वाभ्याम्। संश्यान इति अत्र सङ्कर्षणस्यैवाभावः। विष्णुनिष्ठा-तस्य नो भवत्येव। प्रतिशीनो गौरिति शीतात् संकुचित इत्यर्थः। प्रतिशीनो द्रव इति काठिन्यं गत इत्यर्थः। एवमवेति। अवश्यान अवशीन इति। समवश्यान इति अत्रावश्यं समुपेन्द्रेण मिश्रत्वमतः सङ्कर्षणाभावः ॥

१२६४। दिवो। दिव्—क्रीड़ाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु इत्यस्य विष्णुनिष्ठा-तस्य स्थाने नो भवति; विजिगीषायामर्थे वर्तमानस्य तु नो न भवति। अञ्चो। अपादानाभावे सति अञ्चो विष्णुनिष्ठा–तस्य स्थाने नो भवति। इवन्तत्वादिति। दिव धातोरिति शेषः। सनि विकल्पितेड़िति विकल्पितेट्त्वात् विष्णुनिष्ठायामिड़भावः। द्यून इति 'छस्य शो वस्य उट् हरिवेणावि'त्यादिना वस्य उट्। द्युतमिति अत्र विजिगीषा धात्वर्थः। समक्न इति अञ्चु गतिपुजनयोः गत्यर्थत्वात् 'अनिरामेतामि'त्यादिना नरामहरः सङ्गत इत्यर्थः। पूजायान्तु न लोपाभाव उक्तः। उदक्त इति अत्रापादानसद्भावः; उद्गतः इत्यर्थः। ञि फलेति ञि फला–विसरणे।

१२६५। चर। चर-गतावित्यस्य फलधातोश्च अरामस्य

१२६६। फुल्लोत्फुल्लसंफुल्लक्षीबकृषोल्लाघाः।

ञिफलादीनामेते निपाताः। प्रकरणाद्विष्णुनिष्ठोपलक्षणमिदं, तेन यथासम्भवं क्तवतावपि—फुल्लः फुल्लवान्। क्षीबृ—क्षीबः, क्षीबवान्। कृशे—कृशः, कृशवान्। लाघृङ सामर्थे—उल्लाघः, उल्लाघवान्। नान्योपेन्द्रात्—प्रफुल्तः इत्यादि। कथं 'प्रफुल्ल-पुण्डरीकाक्षं याः पश्यन्ति हरेर्मुखम्' इति ? पश्चात् समासेन॥१२६६॥

१२६७। निर्वो निर्वाणो, न तु वाते।

वा गतिगन्धनयोः। निर्वाणो वह्निर्मुनिर्वा। वाते तु—निर्वातो वातः॥ १२६७॥

---

स्थाने ते परे उर्भवति, चरधातोरुदाहरणमग्रे वक्ष्यते। प्रफुल्त इत्यारामानुबन्धान्नेट् फलितेति वालकल्कि-ता इट् अत्रेटा व्यवधानात् न तरामस्य परता॥

१२६६। फुल्लोत्। वृत्तिराह ञिफलादिनामेते निपाता इति। ननु यदि फुल्लादयो निपात्यान्ते तर्हि कथं फुल्लवानित्यादि न भवत्विति चेत्तत्राहप्रकरणादिति। विष्णुनिष्ठायाः प्रकरणात् इदं सूत्रं विष्णुनिष्ठोपलक्षणं विष्णुनिष्ठाग्राहकमित्यर्थः। तेन हेतुना यथासम्भवं सम्भवानतिकमेण क्तवतावपि ज्ञेयमिति शेषः। फुल्ल इति निपातात्। ञि फलः फुल् विष्णुनिष्ठातस्य नश्च। क्षीबृ इति क्षीबृ—पदे, क्षीब इति निपातात् तरामस्यारामः मत्तः इत्यर्थः। क्षिबवानिति क्षिबितवान् इत्येके। कृश इति कृश—तनुकरणे निपातात् तरामस्यारामः तनुरित्यर्थः। उल्लाघ इति व्याधिनिर्मुक्त इत्यर्थः। 'उल्लाघो निर्गतो गदादि'त्यमरः। नान्योपेन्द्रादिति। उत्फुल्लसंफुल्लयोः पृथक् पाठादुल्लाघेति सोपेन्द्रनिर्देशाच्चेति शेषः। इत्यादीत्यादिपदेन संलाघित इत्यादि ज्ञेयम्। कथमिति प्रफुल्लपुण्डरीकाक्षमिति मुख्यमित्यस्य विशेषणं पुण्डरीकं शुक्लपद्मम्। सिद्धान्तमाह पश्चादिति। प्रकृष्टं फुल्लं प्रफुल्लमिति 'कु-प्रादयो मध्यपदलोपश्च'। ततश्च प्रफुल्ले पुण्डरीके अक्षिणी यत्रेति पीताम्बरसमासः कर्तव्यः॥

१२६८। निर्विण्णो निर्विद्यते।

कृतमूर्धन्यो निपात्यते॥ १२६८॥

१२६९। सिनः कर्मकर्तरि बन्धे ग्रासे।

सिञ बन्धने; सिनो ग्रासः स्वयमेव॥ १२६९॥

१२७०। शुषो विष्णुनिष्ठा-तस्य कः, पचो व, क्षायो मः।

शुष्कः, पक्वः। क्षै क्षये— क्षामः॥ १२७०॥

१२७१। प्रस्तीमादयः प्र-पूर्वस्य स्त्यायो निपात्यन्ते।

---

१२६७। निर्वो। निर्वो निर्वाणो निपात्यते, वाते वाच्ये तु न; वाते वाच्ये विष्णुनिष्ठा-तस्य नो न भवतीत्यर्थः। निर्वाणो मुनिरिति मुक्तो वभूवेत्यर्थः। 'निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिल' इत्यमरः। अनभिधानात् क्तवतौ न भवतीति ज्ञेयम्। मुक्तिवाचकस्तु निर्वाणशब्दो अनप्रत्ययान्तो ब्रह्म। 'मुक्तिः कैवल्यनिर्वाणमि'त्यमरः॥

१२६८। निर्वि। निर उत्तरस्य विद्–सत्तायामित्यस्य कृतमूर्धन्यो निपात्यते, कृतमूर्धन्य इति कृतणत्व इत्यर्थः। विष्णुनिष्ठातस्य दस्य च नः सिध्यत्येव किन्तु णत्वमेव निपात्यते इत्यर्थः।

१२६९। सिनः। बन्धे ग्रासे कर्मकर्तरि सति सिनो निपात्यते। अत्र सिञ–बन्धने इत्यस्यैव ग्रहणमिति सूचयितुं बन्ध इत्युक्तम्। सिन इति निपातात् विष्णुष्ठितस्य नः वद्ध इत्यर्थः। ग्रास इति किम्? सितो वृषभः स्वयमेव। कर्मकर्तरिति किम्? सितो वैष्णवेन ग्रासः॥

१२७०। शुषो। स्तुष–शोषण इत्यस्य विष्णुनिष्ठा-तस्य स्थाने को भवति। पचो डु पचष–पाक इत्यस्य विष्णुनिष्ठातस्य स्थाने वो भवति। क्षायः क्षैधातोर्विष्णुनिष्ठा-तस्य स्थाने मो भवति। शुष्क इति सहजानिट्त्वान्नेट्। क्षामः कृशः॥

प्रस्तीमः, प्रस्तीमवान्; प्रस्तीतः, प्रस्तीतवान् ॥ १२७१ ॥

**१२७२। न ध्या-ख्या-पॄ-मदि-मूर्च्छिभ्यो नः।**

ध्यातः, ख्यातः, पूर्तः, मत्तः। 'राच्छवयोर्हरः क्वौ कंसारि-वैष्णवे च' (८६७)—मूर्तः। ऋ गतौ क्र्यादिः, 'ओष्ठयोद्भवस्य' (७१३) इति धातुविशेषणत्वात् समीर्णः ॥ १२७२ ॥

**१२७३। वित्तं भोग्ये प्रतीते च।**

वित्तं धनम्, वित्तः कृष्णः ॥ १२७३ ॥

**१२७४। भीम-भीष्मौ भयानके साधू।**

---

१२७१। प्रस्ती। प्र-पूर्वस्य स्त्यायः स्थान विष्णुनिष्ठया सह प्रस्तीमादयः निपात्यन्ते। प्र-पूर्वस्येत्यादिकं वृत्तिर्वा। प्रस्तीम इति ष्टयै स्तै शब्दसंघातयोर्निपातात् स्त्यायः स्तीर्विष्णुनिष्ठा तस्य नश्च। प्रस्तीत इति निपातात् स्त्यायः स्तीः ॥

१२७२। न ध्या। धादिभ्य उत्तरस्य विष्णुनिष्ठा-तस्य स्थाने नो न भवति। ध्यात इति ध्यैः—चिन्तायां हरिमित्रयुगित्यादिना प्राप्ते निषेधः। एवं ख्यात इत्यत्र च। ख्यात इति ख्या—प्रकथने चक्षिङा-देशश्च। पूर्त इति पॄ-पालनपूरणयोः, 'ओष्ठोद्भवस्य ऋत उर् कंसाराविʼति उर् रदाभ्यामित्यादिना प्राप्ते निषेधः। एवं मत्त इत्यत्र च, मत्त मदी—हर्षे इरामानुबन्धत्वान्नेट्। मूर्त इति मूर्च्छा मोह-समुच्छ्राययोः आमानुबन्धत्वान्नेट् रदाभ्यामित्यादिना प्राप्ते निषेधः; ओष्ठोद्भवस्येति विशेषणत्वादिति न ऋत उर् इति शेषः। ओष्ठेति ओष्ठोद्भवस्येतस्य विशेषणत्वात् धातुविशेषणत्वादित्यर्थः। विशेषणा-दिति वा पाठः। समीर्ण इति 'ऋरामस्येर् कंसाराविʼतीर् ॥

१२७३। वित्तम्। भोग्ये प्रतीते च वाच्ये वित्तं निपात्यते। वित्तं धनमिति 'द्रव्यं वित्तमिʼत्यमरः। सूत्रे लिङ्गवचनमतन्त्रमित्याह वित्तः कृष्ण इति प्रतीत इत्यर्थः। 'प्रतीते प्रथितख्यातवित्त-विज्ञात-विश्रुताʼ इत्यमरः। निपातात् 'विष्णुनिष्ठा-तस्य दस्य च नो न भवति ॥

१२७५। निरः कुष इड्‌विष्णुनिष्ठायाम्।

'निरः कुषो वेट्' (७८३) इति विकल्पितेड़यम्—निष्कुषितः॥ १२७५॥

१२७६। वसति-क्षुधिभ्यामिट् क्त्वा-विष्णुनिष्ठयोः, लुभो व्याकुलीकरणे, अञ्चेः पूजायां, क्लिशपूङ्भ्यां वा।

उषितः, क्षुधितः। कृष्णेन विलुभितानां गोपीनां केशा विलुभिताः। गार्ध्ये तु—लुब्धः। अञ्चितः। गतौ—अक्तः। क्लिशितः, क्लिष्टः॥ १२७६॥

---

१२७४। भीम। भयानके भयङ्करे वाच्ये साधु इति निपात्यते इत्यर्थः। 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकमि'त्यमरः॥

१२७५। निरः। विष्णुनिष्ठायां परस्यां निर उत्तरस्मात् कुष उत्तरे इट् स्यात्। निरः कुषो वेड़िति विकल्पितेड़यमिति विकल्पितेट्-त्वात् विष्णुनिष्ठायामिट् निषेधः स्यादिति इड् विधानमिति भावः। निष्कुषित इति कुष–निष्कर्षे ररामस्य विष्णुसर्गे कृते निर्दुर्बहिःप्रादुरा-विश्चतुरामिति विष्णुसर्गस्य षः। अत्र समासकार्येतु षसौ च वक्ष्येते इति सन्धिप्रकरणे उक्तमतोऽसिद्धरूपं न त्याज्यमिति प्रतिज्ञायां न विरोधः।

१२७६। वसति। क्त्वाविष्णुनिष्ठयोः परयोर्वसतिक्षुधिभ्यामुत्तरे इट् स्यात् लुभो। क्त्वाविष्णुनिष्ठयोः परयोः व्याकुलीकरणेऽर्थे वर्तमानात् लुभ उत्तरे इट् स्यात्। अञ्चे पूजायामर्थे वर्तमानादञ्चेरुत्तरे इट् स्यात्। क्लिश क्त्वाविष्णुनिष्ठयोः परयोः क्लिशपूङ्भ्यामुत्तरे इड् वा स्यात्। ङरामः पूङो निवृत्यर्थः। उषित इति वस–निवासे, 'वचिस्वपियजादीनामि'त्यादिना सङ्कर्षणः, 'वसिघस्योः ष' इति षत्वं, सहजानिटत्वादिट् न स्यादितीड्‌विधानम्। क्षुधित इति क्षुध–बुभुक्षायां सहजानिट्। विलुभितानामिति। लुभ्–विमोहने, व्याकुली-कृतानामित्यर्थः। विलुभिता इति विशृङ्खला भूता इत्यर्थः। 'इषु-सह-

१२७७। पूङः सेड्विष्णुनिष्ठा न कपिलः।

पवितः, पूतः॥ १२७७॥

१२७८। शीङ्-स्विदि-मिदि-क्ष्विदि-धृषः सेड्-विष्णु-निष्ठा न कपिलः।

शयितः॥ १२७८॥

लुभ-रुष-रिष इड् वा ते' इति विकल्पितेट्त्वम् अतो विष्णुनिष्ठायामिड् निषेधः स्यादितीड्विधानम्। क्त्वितु इषु-सहेत्यादिना विकल्पे प्राप्ते व्याकुलीकरणे नित्यतार्थं विधानम्। लुब्ध इति लुभ-गार्द्धे, गार्द्धमाकाङ्क्षा। अञ्चित इति अन्चु-गतिपूजनयोः 'उरामेतो वेट् क्त्वी'ति वक्ष्यते। अतो विकल्पितेट्त्वाद् विष्णुनिष्ठायामिड्निषेधः स्यादिति पूजायामिड्विधानम्। क्त्वति तु। 'पूर्वपरयोः पर-विधिर्बलवानि'त्यनेन उरामेत्वसामर्थ्याद्विकल्प एवेड् भवति, अतः पूजायाम् अङ्क्त्वेति च भवति। पूजायामङ्क्त्वेति क्रमदीश्वरन्यास-काराभ्यामप्युदाहृतम्। अतः वसतीत्यादिसूत्रचतुर्षु मध्ये पूर्वसूत्रद्वये क्त्वाविष्णुनिष्ठयोर्ग्रहणं प्रयोजनम् उत्तरद्वयेतु विष्णुनिष्ठाग्रहणं प्रयोजनं क्त्वाग्रहणन्तु जलस्थलवृष्टिवदिति। अक्त इति 'अनिरामेतामित्यादिना नरामहरः'। क्लिशितः क्लिशू-विबाधने क्रादिः, क्लिशः-उपतापे दिवादिर्वा, क्रादिः 'स्वरतिसूतिसूयति धूञ्ूदित इड् वेति विकल्पितेट-त्वाद्विष्णुनिष्ठायामप्राप्ते विभाषा। क्त्वितु उदित्वादेव विभाषा अपरिहार्यैव दिवादेस्तु विष्णुनिष्ठायां क्त्वि च नित्यं प्राप्ते विभाषा॥

१२७७। पूङः। पूङ सेड्विष्णुनिष्ठा कपिलो न भवति। पवित इति पूङ-पवने, 'श्रिञो जागृवर्जं चतुर्भूजा ताच्च नेट् कपिल' इत्यनेन निषेधे प्राप्ते विभाषा। कपिलत्वाभावाद्गोविन्दः॥

१२७८। शीङ। शीङ-स्वप्ने, ञि ष्विदा-स्नेहनमोचनयोर्भ्वादिः, ष्विदा-गात्रप्रक्षरणे दिवादिर्द्वयोरेव ग्रहणम्। ञि मिदा-स्नेहने, ञि क्ष्विदा-मोक्षणे, ञि धृषा-प्रागल्भ्ये इत्येतेषां सेड् विष्णुनिष्ठा कपिलो न भवति। शयित इति कपिलत्वाभावाद्गोविन्दः॥

१२७९। आरम्भे च विष्णुनिष्ठा, तत्र क्तस्तु कर्त्तरि च, आरामानुबन्धादिड् वा विष्णुनिष्ठायामारम्भ-भावयोः, जपि-वमोश्च।

ञिष्विदा द्युतादौ, ष्विदा पुषादौ; 'ञिष्विदा द्युतादौ पुषादौ च' इत्येके। प्रस्वेदितवान्, प्रस्वेदितः कृष्णः। स्वेदितं गोपीभिः। ञिमिदा स्नेहने—प्रमेदित इत्यादि। पक्षे—प्रस्विन्नः, स्विन्नमित्यादि।

१२८०। क्षमार्थान्मृषो विष्णुनिष्ठा न कपिलः।

मर्षितः। अक्षमार्थात्—अपमृषितं वाक्यमाह। अपमृष्टम-शुद्धमिति यावत्, धातूनामनेकार्थत्वात् ॥ १२८० ॥

---

१२७९। आर। आरम्भे च गम्यमाने विष्णुनिष्ठा भवति। अत्र क्तस्तु कर्त्तरि च भवति, अत्रेति निर्धारणे सप्तमी विष्णुनिष्ठाया-मित्यर्थः। आरम्भे भावे च विहितायां विष्णुनिष्ठायां परस्याम् आरामा-नुबन्धाद्धातोरुत्तरे इड् वा स्यात्। आ इरामानुबन्धादित्यादिना निषेधे प्राप्ते विभाषा। जपि आरम्भभावयोर्विहितायां विष्णुनिष्ठायां परस्यां जपिवमोश्च सम्बन्धे इड् वा स्यात्। जपितः जप्तः वमितः वान्त इत्युदाहरणम्। द्युताविति द्युतादिगणे वर्तत इत्यर्थः। एवं पुषा-दाविति। प्रस्वेदितवानिति प्रशब्द आरम्भद्योतकः। प्रस्वेदित इति आरम्भे कर्त्तरि क्तः। स्वेदितमिति भावे। पक्ष इति इड्भावपक्षे इत्यर्थः। प्रस्विन्न इति रदाभ्यामित्यादिना विष्णुनिष्ठा-तस्य दस्य च नः। स्विन्नमिति भावे ॥

१२८०। क्षमा। क्षमार्थान्मृषधातोरुत्तरात् विष्णुनिष्ठा कपिलो न भवति। मर्षित इति मृष—क्षमायां कपिलत्वाभावाद्गोविन्दः। अप-मृषितमिति कपिलत्वाभावाद्गोविन्दाभावः। अपमृषितमित्यस्यार्थमाह—अपमृष्टमिति। हेतुमाह—धातूनामिति ॥

१२८१। उरामोद्धवाद्भौवादिकाद्भावारम्भयोः सेड्-विष्णुनिष्ठा वा कपिलः।

द्योतितं कृष्णेन, प्रद्योतितः रामः। पक्षे —द्युतितं, प्रद्युतितः। 'सेड्' इति किम्? म्रुचु म्रुक्तः। एवं म्लुचुप्रभृतयः ॥१२८१॥

१२८२। णेर्हरो विष्णुनिष्ठायाम्।

भावितः। 'श्वयतेराश्वसेर्वमेश्च' (१२५८) इति नेट्, सङ्कर्षण-त्रिविक्रमौ—शूनः; आश्वस्तः; अत्र 'विश्वस्तः' इत्यपि केचित्। "विश्वासयुक्ते विश्वस्तस्त्रिषु, स्त्री विधवास्त्रियाम्" इति रुद्र-कोषात्। पक्षे वम—वान्तः, गुहू—गूढः। ननु 'उदितो वेट् क्त्वि' इति वक्ष्यते (१३०८), ततो नेट् 'हरिवेण्वन्त-सहजा-निटाम्' (५२६) इत्यादि वतः; ततः। नृतीकृत्यादेरीरामत्वं

---

१२८१। उरा। भौवादिकादुरामोद्धवाद्धातोरुत्तराद्भावे आरम्भे च विहिता विष्णुनिष्ठा कपिलो वा भवति। द्योतितमिति द्युत—दीप्तौ भ्वादिः उरामोद्धवः। भावे क्तः, कपिलत्वाद्भावे गोविन्दः। प्रद्योतित इति आरम्भे चेत्यादिना कर्तरि क्तः। द्युतितं प्रद्युतित इति कपिल-त्वाद्गोविन्दाभावः। म्रुक्तमिति म्रुचु—गतौ उरामेतो वेट् क्त्वीति वक्ष्यते, अतो विकल्पितेट्त्वात् विष्णुनिष्ठायामिड़भावः॥

१२८२। णेर्हरो। विष्णुनिष्ठायां परस्यां णेर्हरो भवति। भावित इति ण्यन्तात् क्तः इट् णेर्हरः। अनिडादाविति विशेषणात् णेर्हरोऽनिड़ादौ रामधातुक इत्यनेन प्राप्ते विधानम्, सङ्कर्षणत्रिविक्रमाविति 'वचिस्वपियजादीनामि'त्यादिना सङ्कर्षणः; 'श्या-श्वि-व्या-ज्या-ह्वां सङ्कर्षणस्य त्रिविक्रम' इत्यनेन त्रिविक्रमः। शून इति टुओ श्वि—गतिवृद्ध्योः ओरामेत्वाद्विष्णुनिष्ठा—तस्य नः। आश्वस्त इति श्वस—प्राणने, अत्रेति केचिदिति क्रमदीश्वरादय इत्यर्थः। व्याङ् श्वनिति क्रमदीश्वर लक्षणम्। विश्वस्त इत्यपि केचिदिति यदुक्तं तत्र हेतुमाह—विश्वासयुक्त इति। विश्वासयुक्ते विश्वस्तो वर्तते स विश्वस्तशब्द-

विकल्पितेट् (१२५८) इत्यस्यानित्यत्वे ज्ञापकम्, तेन धावु गति-शुद्ध्योः धावितः, धावितवान्; शुद्धौ तु -धौतः, धौतवान्। पत्लृ—पतितः, पतितवान्। मनु—मनितः, मनितवान्। अनेक-सर्वेश्वरत्वादिट्—संज्ञपितः, दरिद्रितः इत्यादि ॥१२८२॥

---

स्त्रिषु लिङ्गेषु वर्तते, वाच्यलिङ्गत्वात्। विधवा स्त्रियामपि वर्तते तदा स्त्री स्त्रीलिङ्गः विश्वस्तेति। वान्त इति टु वमु-उद्‌गिरणे, 'हरिवेण्वन्तोद्धवस्य त्रिविक्रमः क्वौ कंसारिवैष्णवे चे'ति उद्धवस्य त्रिविक्रमः मस्य विष्णुचक्रं विष्णुचक्रस्य हरिवेणुः। गूढ़ इति गूह—सम्बरणे। 'स्वरति-सूति-सूयति-धूञ्-ऊदित इड्वे'ति विकल्पेट्त्वमतो विष्णुनिष्ठायामिड़भावः। हस्य ढः, तस्य धः, धस्य ढः, ढस्य हरः, पूर्वस्य त्रिविक्रमश्च। वन्विति वनु—याचने; उदित इत्यत्र उरामेत इति ज्ञेयम्। हरिवैणुन्तेति अनेन हरिवेणुहरः। तत इति तनु-विस्तारे पूर्ववत्। ननु यदि विकल्पितेटो विष्णुनिष्ठायामिड़् न भवति, तर्हि कथं धावितः, धावितवान्, पतितः पतितवान् इत्यादि भवत्विति चेत्तत्राह—नृतीकृत्यादेरिति; 'नृतीकृत्यादेरिड् वा से सिं विना' इति विकल्पितेट्त्वम्, अतो नृतीं—गात्रविक्षेपे, कृती—छेदने इत्यादेर्विष्णुनिष्ठायामिड् निषेधः सिद्ध एव, अत ईरामेत्वमनर्थकम् अतोऽनित्यज्ञापकमिति। धौत इति छस्य श इत्यादिना वस्य ऊट् अद्वया-दुटो वृष्णीन्द्रः शुद्धौ तु इड् निषेध एवेति भावः। पतलृ इति—पतलृ गतौ पतित इति; 'इवन्त-ऋध-भ्रस्ज-दन्भु-श्रि-ऊर्णु-यौति-भरति-ज्ञपि-सनि-तनि-पति-दरिद्राभ्य इड् वा सनी'ति विकल्पितेट्त्वं तथापि अनित्यत्वादिट्। मन्विति मनु—बोधने, उरामेत्वाद्विकल्पितेट्त्वम्। अनेकसर्वेश्वरादिड़िति अनित्यत्वादेवेति शेषः। अनेकसर्वेश्वरत्वादिति पाठः क्वचिद्दृश्यते सत्वसभ्यः अनित्यत्वस्यैव हेतुत्वात्। संज्ञपित इति ण्यन्ताज्ज्ञपेः क्त इट् णेर्हरः इवन्तेत्यादिना विकल्पेट्त्वम्। दरिद्रित इति दरिद्रा—दुर्गतौ 'दरिद्रातेराराम‍हर' इत्यादिना आरामहरः अत्रापि इवन्तेत्यादिना विकल्पेट्त्वम्॥

१२८३। क्षुब्धादयो मन्थादौ साधवः।

क्षुभ—क्षुब्धो मन्थे। लगे—लग्नः सक्ते। म्लेच्छ—म्लिष्टमस्पष्टे। रेभृ—शब्दे, रिब्ध—स्वरे। फण गतौ—फाण्टमुदकसम्पर्काद्विभक्तरसे, ईषदुष्णे कषाये च। ञिधृषाशसोर्धृष्टविश्वस्तावविनीत एव। दृहेर्दृढः स्थूलवलिनोः। कषे कष्टं कृच्छ्रगहनयोः। सं-वि-नि-पूर्वस्यार्देः समर्ण-व्यर्ण-न्यर्णाः; अभ्यर्णस्तु

---

१२८३। क्षुब्धा। मन्थादौ वाच्ये क्षुभादीनां धातूनां विष्णुनिष्ठया सह क्षुब्धादयः साधव इत्यर्थः। साधव इति निपात्यन्ते इत्यर्थः। क्षुभिति क्षुभ—सञ्चलने, क्षुब्ध इति निपातादिड़भावः। मन्थ इति मन्थदण्डे इत्यर्थः। 'वैशाख-मन्थ-मन्थान-मन्थानो मन्थदण्डके' इत्यमरः। आदिशब्दो विबृणोति—लगे लग्नः सक्त इत्यादिना। लगे इति लगे—सङ्गे। लग्न इति निपातादिड़भावो विष्णुनिष्ठा-तस्य नश्च सक्त इति युक्त इत्यर्थः। म्लेच्छिति म्लेच्छ—अव्यक्तायां वाचि; म्लिष्टमिति निपातादिड़भाव एरामस्य इरामश्च। अस्पष्ट इति अस्पष्टवचन इत्यर्थः। अथ 'म्लिष्टमविस्पष्टमि'त्यमरः। रेभृ इति रेभृ—शब्दे; रिब्धमिति निपातादिड़भाव एरामस्य इरामश्च। फाण्टमिति निपातादिड़भावः; 'हरिवेण्वन्तोद्धवस्ये'त्यनेन त्रिविक्रमश्च टवर्गयुक्तत्वात्तरामस्य टरामः सिध्यत्येव। उदकसम्पर्कात् जलसंसर्गात् विभक्तः पृथग्भूतो रसो यस्य तादृशे ईषदुष्णे अल्पतप्ते कषाये रसविशेषे निर्यासे वा। 'निर्यासेऽपि कषायोऽस्त्री'ति नानार्थवर्गः। निर्यासः क्वाथः। फाण्टमिति पाठोऽपि दृश्यते किन्तु फाण्टशब्दस्य कषायविशेषवाचिता नास्ति। 'अनायासकृतं फाण्टमि'त्यमरः। ञि धृषा—प्रागल्भ्ये शसू—हिंसायाम् इत्येतयोः अविनीतएव वाच्ये धृष्टविश्वस्तौ साधू। अविनीतः प्रगल्भः। धृष आरामानुबन्धत्वात् शस उरामेत्वाद्विष्णुनिष्ठायामिड्निषेधे सिद्धे नियमार्थं वचनमिदम् अविनीत एवेति तेनाप्रगल्भे धर्षितो विशसित इति। दृहे। स्थुलश्च वली च तयोर्वाच्ययोर्दृन्भू हिंसायामित्यस्य दृढः साधुः। दृढ इति 'अनिरामेतामि'त्या-

निकटे। श्रा इत्यस्य श्रृतं क्षीरादिपाके। परिवृंहः परिवढोऽधिपे। ण्यन्तस्य वृत्तेर्वृत्तमध्ययने ; वृत्तं श्रीभागवतम्, अधितमित्यर्थः। घुष्टमविशब्दने ; घुष्टा रज्जुर्घृष्टेत्यर्थः। विशब्दने तु—घुषितं वाक्यम्, शब्देन प्रकटिताभिप्रायमित्यर्थः ॥१२८३॥

---

दिना नरामहरः हस्य ढः, तस्य धः, धस्य ढः, ढस्य हरः, ऋरामस्य नेति त्रिविक्रमनिषेधः। 'शक्त-स्थूलौ त्रिषु दृढावि'ति नानार्थवर्गः। उरामेत्वाद्विष्णुनिष्ठायामिड्निषेधे सिद्धे इदमपि नियमार्थं स्थूलवलिनोरेवेति तेनान्यत्र दृंहित इति। कषेः कृच्छ्रे गहने च वाच्ये कष—हिंसायामित्यस्य कष्टं साधुः। इड्भाव एव निपातफलम्। कृच्छ्रं दुःखं गहनं दुष्प्रवेशस्थानम्। 'गहनं काननं वनम्' इत्यमरः। कष्टेतु कृच्छ्रगहने' इति नानार्थवर्गः। कृच्छ्र-गहनयोरेव इड्भावः। तेनान्यत्र कषितं सुवर्णमिति। कष्टोऽग्निः, कष्टं व्याकरणमित्यादौ कारणे कार्योपचारात् कष्टशब्दप्रयोग इति ज्ञेयम्। संवि। सं-वि-नि-पूर्वस्य अर्द—गतौ याचने च इत्यस्य विष्णुनिष्ठया सह समर्णः, व्यर्णः, न्यर्णः, साधवः। इड्भाव एव निपातफलं रदाभ्यामित्यादिना विष्णुनिष्ठा-तस्य दस्य नः सिध्यत्येव। अभ्य निकटे वाच्ये अभिपूर्वस्य अर्देरभ्यर्णः साधुः। अत्रापि निपातफलमिड्भावः। 'उपकण्ठान्तिकाभ्यर्णाः' इत्यमरः। श्रा क्षीरादिपाके वाच्ये श्रा इत्यस्य शृतं साधुः। क्षीरंदुग्धम्, आदि पदेन घृतादेर्ग्रहणम्। श्रा इत्यस्येति श्रा—पाके अदादिः, श्रै—पाके भ्वादिर्द्वयोरेव ग्रहणम्। पाके 'क्षीराज्यपयसां शृतमि'त्यमरः। आज्यं घृतं, पयो जलम्। क्षीरादिपाकादन्यत्र श्राणा यवागूः। हरिमित्रयुगित्यादिना विष्णुनिष्ठा-तस्य न णत्वम्। 'यवागूरुष्णिका श्राणे'त्यमरः। परि। अधिपे वाच्ये वृहि—वृद्धावित्यस्य परिवृढः साधुः। अधिपः प्रभुः। 'परिवृढोऽधिपः' इत्यमरः। निपातादिड्भावो नरामहरश्च। अन्यत्र परिवृंहित इति। ण्यन्त। अध्ययनेऽर्थे वर्तमानस्य ण्यन्तस्य वृत्तेर्वृत्तं साधुः। वृत्तमिति वृतु—वर्तने, णेर्हरः सिध्यत्येव किन्तु गोविन्दनिवृत्तिरिड्निवृत्तिश्च तिपातफलम्। घुष्ट अविशब्दनेऽर्थे

१२८४। दान्त-शान्त-पूर्ण-च्छन्न-ज्ञप्त-दस्त-स्पष्टा णौ वा निपात्यन्ते।

पक्षे—दमितमित्यादि। तथा दसु—दासितः; स्पश—स्पाशितः॥ १२८४॥

१२८५। रुष्यम-वम-त्वर-संघुषास्वनेभ्यो वेङ् विष्णुनिष्ठायाम्।

रुष्टः, रुषितः। अम गतौ—'हरिवेण्वन्त'- (८६५) इत्यादि

---

वर्तमानस्य घुषधातोर्घुष्टं साधुः। घुषिर् धातुर्भ्वादिश्चुरादिश्च, भ्वादिः शब्दार्थः, चुरादिर्विशब्दनार्थः। विशब्दनं शब्देन स्वाभिमताविस्करणम्। सूत्रे लिङ्गवचनमतन्त्रमित्याह, घुष्टा रज्जुरिति। अत्र घुषधातुर्घर्षणार्थः। घुषितमिति चुरादित्वेऽपि णेरभावः अनित्यत्वात्। प्रकटितेति प्रकटितोऽभिप्रायः यत्रेति विग्रहः॥

१२८४। दान्त। दमु-शमु—उपशमे, पुरी—आप्यायने, छद—अपवारणे इत्येषां ज्ञपेर्दसु—उपक्षये, स्पर्श—वाधनस्पर्शनयोः इत्येतयोश्च णौ दान्तादयो वा निपात्यन्ते। ज्ञपिर्हेतुण्यन्तः। दान्त इति इड्निवृत्तिर्निपातफलम् इड्निवृत्त्यनन्तरं हरिवेण्वन्तोद्धवस्य त्रिविक्रमः। 'क्वौ कंसारिवैष्णवे चे'ति उद्धवस्य त्रिविक्रमः, मस्य विष्णुचक्रं विष्णुचक्रस्य हरिवेणुः। एवं शान्त इति पूर्ण इति इड्निवृत्त्यनन्तरं विष्णुनिष्ठा-तस्य नः। छन्न इति इड्निवृत्त्यनन्तरं विष्णुनिष्ठा-तस्य दस्य च नः। ज्ञप्त इति निपातादिड्निवृत्तिः। दस्त इति निपातादिड्निवृत्तिर्वृष्णीन्द्रनिवृत्तिश्च। एवं स्पष्ट इति। दमित इति—घटादित्वादुद्धवस्य वामनः। इत्यादीत्यादिपदेन शमितः, पूरितः, ज्ञपित इति। शमितच्छदित-ज्ञपितेषु घटादित्वाद्वामनः।

१२८५। रुष्य। विष्णुनिष्ठायां परस्यां रुष्यादिभ्य उत्तरे इड् वा भवति। रुष्ट इति रुष—रोषे। 'इषु-सह-लुभ-रुष-रिष इड् वा ते' इति विकल्पितेट्त्वम्, अतो विष्णुनिष्ठायामिड्निषेधे

दीर्घः। आन्तः, अमितः ; वान्तः, वमितः ; 'छस्य शः' इत्यादौ 'ज्वर-त्वर-स्त्रिव्वव-मवान्तु ससर्वेश्वरस्य' (७८७)—तूर्णः, त्वरितः; संघुष्टः, संघुषितः ; आस्वान्तः, आस्वनितः ॥ ८६५ ॥

१२८६। हृष्ट-हृषितौ विस्मये प्रतिघाते लोम्नो हर्षे च, अपचितापचायितौ पूजायां निपात्यन्ते।

जलकेलौ हृष्टस्य कृष्णस्य हृष्टं लोमः ; विस्मितस्य, प्रहितस्य वेत्यर्थः ; हृषितस्य इत्यादि वा। चायृ, गोपीभिरपचितः कृष्णः, अपचायितो वा ॥ १२८६ ॥

१२८७। अध्यारूढस्याधिको वा साधुः।

---

प्राप्ते विभाषा। हरीति अनेन उद्धवस्य त्रिविक्रमः। आन्त इति अत्रापि नित्यमिटि प्राप्ते विभाषा। 'ज्वरत्वरेति अनेन ससर्वेश्वरस्य वस्य उट्। तूर्ण इति ञि त्वरा सम्भ्रमे, आरामानुबन्धत्वादिड्-निषेधे प्राप्ते विभाषा। संघुष्ट इति घुषिर् धातुः, शब्दार्थो विशब्दनार्थश्च अत्रापि नित्यमिटिप्राप्ते विभाषा। आस्वान्त इति स्वन-शब्दे, उद्धवस्य त्रिविक्रमो अत्रापि नित्यमिटि प्राप्ते विभाषा ॥

१२८६। हृष्ट। विस्मये प्रतिघाते लोम्नो हर्षे च वर्तमानस्य हृष तुष्टावित्यस्य हृष्टहृषितौ साधू। हृषु अलिके इत्यस्य ग्रहणमिति केचित्, पक्षे इड्भाव एव निपातफलम्। अप पूजायामर्थे वर्तमानस्य चायृधातोरपचितापचायितौ साधू। अपचायित इति सिध्यत्येव निपातादपचित इत्यपि भवतीति। हृष्टस्येत्यर्थमाह विस्मितस्येति। प्रतिहतस्येति। स्वकर्तृकजलसेकानन्तरं गोपीकर्तृकजलसेकेन पराभूतस्येत्यर्थः। हृषितस्येत्यादि वेति जलकेलौ हृषितस्य कृष्णस्य हृषितं लोमेति वेत्यर्थः। चायृ इति चायृ-पूजानीशामनयोः। अपचीत इति पूजित इत्यर्थः।

१२८७। अध्या। अध्याङ्पूर्वस्य रुह-जनी-प्रादुर्भावे इत्यस्य रुहधातोः क्त-प्रत्ययसिद्धस्य अध्यारूढस्याधिको वा साधुः, विस्तरमते

१२८८। प्यायः पीर्विष्णुनिष्ठायाम्।

पीनं मुखम्। स्वाङ्गादन्यत्र वा—प्यानः पीनः स्वेदः। सोपेन्द्रस्य न—प्रप्यानः॥ १२८८॥

१२८९। आङ्पूर्वस्यान्धूधसोः स्यादेव।

आपीनोऽन्धुः, आपीनमूधः॥ १२८९॥

१२९०। ह्लादेर्वामनः क्ति-विष्णुनिष्ठयोः।

ह्लन्नम्॥ १२९०॥

१२९१। द्यति-स्यति-मा-स्थामिः, शाछोर्वा,

---

अध्यारूढस्याधिकादेश इति विष्णुभक्तर्यर्थप्रकरणे उक्तम्। अतो विस्तरमतानुसारेणैवैतत् सूत्रं कृतमिति ज्ञेयम्॥

१२८८। प्यायः। विष्णुनिष्ठायां परस्यां प्यायः स्थाने पीर्भवति। पीनमिति ओ प्यायी—वृद्धौ, ओरामेत्वाद्विष्णुनिष्ठा-तस्य नः। एवं पीनो बाहुरिति 'पीनपीव्नी तु स्थूलपीवरे' इत्यमरः। स्वाङ्गात्। स्वाङ्गादन्यत्र वाच्ये प्यायः स्थाने पीर्वा भवति। प्यान इति 'यवयोर्हरो बले' इति य लुक्। स्वेदो घर्मः। 'घर्मो निदाघः स्वेदः स्यादि'त्यमरः। स्वाङ्गलक्षणे विना द्रवविकारजे इत्युक्तम्। अतः स्वेदस्य द्रवरूपत्वान्न स्वाङ्गता। सोपे। सोपेन्द्रस्य प्यायः स्थाने पीर्न भवति। प्रप्यान इति य लुक्॥

१२८९। आङ। अन्धूधसोर्वाच्ययोः आङ्पूर्वस्य प्यायः स्थाने पीः स्यादेव। अन्धुः कूपः। 'पुंस्येवान्धुः प्रही कूपः' इत्यमरः। 'ऊधः स्त्रीगवीस्तनः। ऊधस्तु क्लीवमापीनमि'त्यमरः॥

१२९०। ह्लादेः। क्तिविष्णुनिष्ठयोः परयोः ह्लादेर्वामनो भवति। ह्लदमिति ह्लादी—मुदे 'ईरामानुबन्धत्वान्नेट् विष्णुनिष्ठातस्य दस्य च नः॥

१२९१। द्यति। कपिलतरामे परे द्यति-स्यति-मा-स्थामन्त

दधातेर्हिः, दामोदरस्य दो दद्, उपेन्द्रसर्वेश्वरात्त्वाराम-हरः, चतुःसनोपेन्द्रस्य च त्रिविक्रमः कपिलतरामे।

दितः, सितः, मितः, स्थितः, शितः शातः, छितः छातः ॥१२९१॥

१२९२। श्यतेः संशितं व्रते वाच्यम्।

हितः, दत्तः, प्रत्तः, नीत्तः, सूत्तः। 'सुविन्यवानुभ्य आरामहरः क्ते वा' इति केचित्—सूक्तं, सुदत्तम्। 'अपेरादि'-(७१९)इति पिनद्धम्, अपिनद्धम्। धेट—'दामोदर-मास्था-'(५४९) इतीत्वं—

---

इरामो भवति। मेति माङ—माने, मा—माने, मेङ—प्रणिधाने त्रयाणामेवात्र ग्रहणम्। शा। शो—तनुकरणे, छो—छेदने इत्येतयोः कपिलतरामे परे अन्त इरामो वा भवति। दधा। कपिलतरामे परे दधातेः स्थाने हिर्भवति। दधातेरिति निर्देशात् धेट्—पान इत्यस्य ग्रहणम्। दामो। कपिलतरामे परे दामोदरस्य दस्य स्थाने दद्भवति। दामोदरस्येत्यनेन दान-दाङ-देङां ग्रहणं, ददादेशो दरामान्तः। अतएव रदाभ्यामित्यादौ दां विनेत्युक्तुं पूर्वाचार्यैर्ददादेशस्य दान्तत्वमुक्तमतो ग्रन्थकारैरपि ददादेशस्य दान्तत्वमभिप्रेत्य दां विनेत्युक्तम्। क्रमदीश्वरादितिस्तु ददादेशस्य तान्तत्वमुक्तमतः प्रयोजनाभावात् दा-वर्जनमपि तेन कृतमिति ज्ञेयम्। उपे। उपेन्द्रसर्वेश्वरादुत्तरस्य दामोदरस्य दस्तु कपिलतरामे परे आरामहरो भवति। चतुः। कपिलतरामे परे चतुःसनान्तस्य उपेन्द्रस्य त्रिविक्रमश्च भवति। दित इति दो—अवखण्डणे, सित इति सो—अन्तकर्मणि। स्थित इति ष्ठा—गतिनिवृत्तौ ॥

१२९२। श्यतेः। संपूर्वस्य शो-तनुकरण इत्यस्य व्रते गम्ये संशितं वाच्यम्। हित इति डुधाञ—धारणपोषणयोः, दत्त इति डु दाञ्—दाने, प्रत्त इति आरामहरेकृते यादवमात्रे हरिकमलमिति दरामस्य तरामः। नीत्तः सूत्त इति आरामहरस्त्रिविक्रमश्च। सुवीति। सु-वि-नि-अव-अनु इत्येतेभ्य उत्तरस्य दामोदरस्य दः क्ते परे आरामहरो वा भवतीति केचित्। सूत्तमिति आरामहरपक्षे त्रिविक्रमः। आरामहरा-

धीतं, गीतं, पीतम्। 'जन-खन-सनाम्' (६२१) इत्यादि जातं खातं, सातम् ॥ १२९२ ॥

१२९३। अदो जग्धिः कपिल-तरामे यपि च।

इराम इत्। जग्धम् ॥ १२९३ ॥

१२९४। अन्नमोदने साधुः।

१२९५। गत्यर्थाकर्मक-श्लिष-शीङ्-स्थास-वस-जन-रुह्-जीर्यतिभ्यः क्तः कर्तरि च।

---

भावपक्षे सुदत्तमिति। अपरिति अनेन अपेरादिहरः। पिनद्धमिति नह-बन्धने, सहजानिट् नहो धः इति हस्य धः। गीतमिति गै-शब्दे, ईत्वम्। पीतमिति पा-पाने। जनेति अनेन नरास्यारामः। जातमिति जनी-प्रादुर्भावे, ईरामानुबन्धत्वान्नेट्। खातमिति खनु-अवदारणे उरामेत्त्वान्नेट्। सातमिति षनु-दाने ॥

१२९३। अदो। कपिलतरामे यपि च परे अदः स्थाने जग्धिर्भवति। जग्धमिति अद-भक्षणे सहजानिट् तरामस्य धरामे कृते 'विष्णुजनाद्विष्णुदासस्यादर्शनं सवर्गे विष्णुदासे' इति धस्य लुक् ॥

१२९४। अन्नम्। ओदने वाच्ये अन्नं साधुः। ओदने वाच्ये जग्धिर्न भवतीति भावः ॥

१२९५। गत्य। गत्यर्थादकर्मकात् श्लिषादिभ्यश्चोत्तरे कर्तरि वाच्ये क्तो भवति। कर्तरि चेति भावकर्मणोः कर्तरि चेत्यर्थः। शीङादीनामकर्मणां पुनरुपादानम् उपेन्द्रसम्बन्धेन सकर्मकत्वे क्तविधानार्थम् अकर्मकत्वेतु अकर्मकादेव क्तः सिध्यति। गत इति गमलृ-गतौ सहजानिट् हरिवेणुहरः। प्राप्त इति आपलृ-व्याप्तौ सहजानिट्। स्नात इति स्ना-शौचे अकर्मकः। आश्लिष्ट इति श्लिष-आलिङ्गने सहजानिट्। गोवर्धनमधिशयित इति शीङ्-स्वप्ने 'अधि-शीङ्स्थासामाधारः कर्मे'ति गोवर्धनस्य कर्मत्वम्। एवं वृन्दावमधिष्ठित इत्यत्र च।

मथुरां गतः, मथुरां प्राप्तः। यमुनायां स्नातोऽसौ। गोपीमाश्लिष्टः कृष्णः। गोवर्धनमधिशयितः, वृन्दावनमधिष्ठितः, गा उपासितः, तदभोजनमुपोषितः, राममनुजातः कदम्बमारूढः, कालियविषमनुजीर्णः॥ १२९५॥

१२९६। क्वचिदन्यत्रापि।

यथा—भुक्ताः, पीताः, विभक्ताः वैष्णवाः। व्यवसिताः, प्रतिपन्नाः, आश्रिता इत्यादयः। पक्षे मथुरा गता इत्यादि॥१२९६॥

---

अधिष्ठित इति ष्ठा—गतिनिवृत्तौ। 'द्यति-स्यति-मास्थामिरि'ति आरामस्येरामः, 'उपेन्द्रात् सुवतेः षत्वमि'त्यादिना षत्वम्। उपासित इति आस—उपवेशने, उपपूर्व आसधातुः सेवार्थः। तदभोजनमुपोषित इति वस—निवासे 'वचिस्वपी'त्यादिना सङ्कर्षणः। 'वसतिक्षुधिभ्यामिट् क्त्वा-विष्णुनिष्ठयोरि'तीट्। 'उपान्वध्याङ्भ्यो वस आधारः कर्मेति' कर्मत्वं, गवामभोजनकाले उषित इत्यर्थः। अनुजात इति जनी—प्रादुर्भावे 'वैष्णवाद्योः कंसारि-सनोर्नित्यमि'ति नरामस्यारामः, जननेनानुगत इत्यर्थः। आरुढ़ इति रुह—जन्मनि प्रादुर्भावे च, सहाजानिट्, हस्य ढः, तस्य धः, धस्य ढः ढस्य हरः ढे पूर्वस्य त्रिविक्रमश्च'। अनुजीर्ण इति जॄष—वयोहानौ, 'ऋरामस्येर त्रिविक्रमः'। 'श्रिञो जागृवर्जे'त्यादिना इड्निषेधः, विष्णुनिष्ठातस्य नः णत्वं, जारितवानित्यर्थः॥

१२९६। क्वचित् उक्तेभ्योऽन्यस्मिन्नपि धातौ कर्तरि च क्तो भवति। भुक्ता इति भुज—पालनाभ्यवहारयोः सहजानिट्। पीता इति पा—पाने ईत्वम्। विभक्ता इति भज—सेवायां सहजानिट्। व्यवसिता इति सोऽन्तकर्मणि 'द्यतिस्यती'त्यादिना आरामस्येरामः। प्रतिपन्ना इति पद—गतौ सहजानिट्। अत्र गत्यर्थता नास्तीति उक्तेभ्योऽन्यत्वम्। आश्रिता इति श्रिञ्—सेवायां 'श्रियः' इत्यादिना इड्निषेधः। पक्षे इति कर्मणि भावे चेत्यर्थः। सकर्मकाणां कर्मणि अकर्मकस्य भावे। इत्यादीत्यादिपदेन मथुरा प्राप्ता यमुनायां स्नातयमुना गोपी आश्लिष्टा कृष्णेन गोवर्धनोऽधिशायित इत्यादि॥

१२९७। अकर्मक-गति-भोजनार्थेभ्यः क्तोऽधिकरणे च।

कृष्णस्यासितं, गतं, भुक्तं वृन्दावनम्॥ १२९७॥

१२९८। ञिरामेतो बुद्धीच्छा-पूजार्थेभ्यश्च क्तो वर्तमाने च।

ञिक्षिदा—क्षिण्णः; ञिइन्धी—इद्धः; वैष्णवानां बुद्धः, मतः, ज्ञातः, इष्टः, वाञ्छितः, पूजितः, अर्चितः। चादनुक्तादपि—शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।

---

१२९७। अक। अकर्मकात् गत्यर्थात् भोजनार्थाच्च उचरेऽधिकरणेच वाच्ये क्तो भवति। आसितं गतं भुक्तमिति आस्यते, गम्यते, भुज्यते यत्रेति अधिकरणं वृन्दावनमुक्तम्। कृष्णस्येति अधिकरणवाचि-क्तस्य योगे 'कर्तरि कर्मणि च वाच्ये षष्ठी'ति कर्तरि षष्ठी॥

१२९८। ञिरा। ञिरामानुबन्धात् बुध्यर्थात् इच्छार्थात् पूजार्थाच्च उत्तरे वर्तमाने काले क्तो भवति। ञि-क्षिदेति ञि क्षिदा—माचने। क्षिण्ण इति आरामनुबन्धत्वान्नेट्। ञि इन्धीति ञि इन्धी—दीप्तौ। इद्ध इति उद्धवनरामहरः। वैष्णवानामिति वैष्णवैबुध्यते मन्यते ज्ञायतेऽयमित्यर्थः। 'वर्तमाने भावे च क्तस्य योगे कर्तरि षष्ठी वे'ति कर्तरि षष्ठी। बुद्ध इति बुध—अवगमने सहजानिट्। मत इति मन—ज्ञाने सहजानिट् हरिवेणुहरः। ज्ञात इति ज्ञा—अवबोधने। इष्ट इति इषु—इच्छायां विकल्पितेट्त्वान्नेट्। वाञ्छित इति वाछि—इच्छायां इष्यते वाञ्छ्यते इत्यर्थः। पूजित इति पूज पूजायां पूज्यते अर्च्यते इत्यर्थः॥

चादिति। चशब्दोपादानात् अनुक्तादपि धातोरुत्तरे वर्तमाने क्तो भवति। शीलित इति शील—समाधौ। रक्षित इति रक्ष—पालने। क्षान्त इति क्षमु—सहने उरामेत्याद्विकल्पितेट्त्वं ततो नेट् त्रिविक्रमः।

रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि।
प्रक्रान्तः शयितो गुप्तस्तृप्त इत्यादयः स्मृताः॥ १२९८॥

१२९९। अलं-खल्वोः प्रतिषेधार्थयोर्योगे क्त्वा वा भावे।

क्त्वा मान्तश्च कृदव्ययम्। अत्र यथाह पुरुषोत्तमः (भाषावृत्तिः ३।४।१८)—'तुम्बर्थ इत्यनुवर्तते, यावदव्ययकृतां विधानम्' (पा ३।४।६६), तुमर्थश्च भाव इत्युक्तम्। अलं कृत्वा, खलु कृत्वा, न कर्तव्यमित्यर्थः। भावेऽपि हि प्रत्यये सकर्मकाद्धातोः पश्चात् कर्मसम्बन्धो भवत्येव—खलूक्त्वा खलु वाचिकमिति।

---

आक्रुष्ट इति क्रुश—आह्वाने सहजानिट्। जुष्ट इति जुषी—प्रीतिसेवनयोः 'ईरामानुबन्धत्वान्नेट्'। रुष्ट रुषित इति रुष—रोषे, 'रुष्यम-वम-त्वर-संघुषास्वनेभ्यो वेट् विष्णुनिष्ठायामि'ति वेट्। अभिव्याहृत इति हृञ—हरणे। प्रक्रान्त इति क्रमु—पादविक्षेपे, उरामेत्वान्नेट् त्रिविक्रमः। शयित इति शीङ्—स्वप्ने। गुप्त इति गुपू—रक्षणे 'उरामेत्त्वाद्विकल्पितेट्त्वम् अतो नेट्। तृप्त इति तृप—प्रीणने सहजानिट्॥

१२९९। अलम्। प्रतिषेधार्थयोरलं खल्वोर्योगे भावे वाच्ये क्त्वा वा भवति। क इत्। 'क्त्वा मान्तश्च कृदव्ययं' भवति; भावे इत्युक्त्वा पुरुषोत्तमोक्तमुदाहरणरूपेण दर्शयन् तदेव द्रढ़यति, अत्र यथाह पुरुषोत्तम इति। पुरुषोत्तमोक्तमाह तुमर्थ इत्यनुवर्तते इति। एतेन भावे भवतीति सिद्धम्। ननु तुमर्थ इत्यनेन भावे भवतीति कथं लभ्यते? इति चेत्तत्राह—यदिति। यद्यस्मात् अव्ययविधाने अव्ययार्थविधाने तुमश्च भावे अर्थ इति शेषः। इत्युक्तमिति पुरुषोत्तमेनेत्यर्थः। तुमर्थ इत्यनुवर्तते इत्यनन्तरम् इति शब्दप्रयोग उचित इति ज्ञेयम्। कृत्वेति डु कृञ्—करणे। भावे हीति सकर्मकाद्धातोरुत्तरे प्रत्यये कृते सति चेद्यदि कर्मापेक्षा भवति, तदा सकर्मकस्य धातोः

तदेवमप्युदाह्रियते। 'दामोदरस्य दो दद्' (१२९१), अवैष्णवाय विष्णुनिर्माल्यमलं दत्त्वा, दत्त्वालं, खलु दत्त्वा, दत्त्वा खलु; तस्य दानं न कर्तव्यमित्यर्थः। अवैष्णवगृहे अलं भुक्त्वा वैष्णवेन, खलु भुक्त्वा वा। तत्र वैष्णवस्य भोजनेन न भवितव्यमित्यर्थः। पक्षे—तस्य दानेनालं, दानेन खल्वित्यादि ॥१२९९॥

१३००। एककर्तृकयोः क्रिययोः पूर्वकालस्थधातोः क्त्वा।

'हरिवेण्वन्त'-(५२९) इत्यादि, कृष्णं नत्वा स्तौति वैष्णवः। द्वित्वमेकत्वं वा न तन्त्रम्—नत्वा स्तुत्वा भजति। कथं 'यदयं

---

कर्मसम्बन्धो भवत्येवेति। हि-शब्दोऽत्र वाक्यालङ्कारे। अतः खलूक्त्वा खलु वाचिकमिति अवाचिकं न वक्तव्यमित्यर्थः। 'सन्देशवाग्वाचिकं स्यादि'त्यमरः। तदेति तत्तस्मात् एवमिति खलूक्त्वा खलु वाचिकमितिवदित्यर्थः। दामोदर इति 'रामोदरस्य दो ददि'त्यस्योल्लेखः। पूर्वत्र परत्र वा अलं खल्वोर्योगे सति क्त्वा वा भवतीति न नियमः। अतएव अलं दत्त्वा, दत्त्वालं, खलु दत्त्वा, दत्त्वा खल्विति। तस्येति अवैष्णवाय विष्णुनिर्माल्यस्य अदानेन भवितव्यमित्यर्थः। प्रतिषेधार्थयोरिति किम्? अलङ्कारः भावे घण्। अत्रालंशब्दो भूषणार्थः॥

१३००। एक। एककर्तृकयोः क्रिययोः प्रयोगे अथवा एककर्तृकयोः क्रिययोः सत्योः पूर्बकालस्थधातोरुत्तरे क्त्वा भवति। हरीति अनेन हरिवेणुहरः। नत्वेति नम प्रभावे शब्दे च सहजानिट्। द्वित्वमिति क्रिययोरित्यस्येत्यर्थः। एकत्वमिति पूर्बकालस्थधातोरित्यस्येत्यर्थः। न तन्त्रमिति न नियतमित्यर्थः, तेन नत्वा स्तुत्वा भजतीति। अत्र तिसृणां क्रियाणाम् एककर्तृकत्वमतः पूर्बकालस्थधातुद्वयात् क्त्वा। भजनापेक्षया स्तवस्य पूर्वत्वम्, अतः स्तुधातोः पूर्बकालस्थत्वम्। स्तुत्वेति ष्टुञ् स्तुतौ। कथमिति यद्यस्मात् गृह्णातीति चिनोतीत्यर्थः। सिद्धान्तमाह हेतुप्रयोगेणैवेति। पूर्बकालत्वप्रतीतेरिति क्त्वा

तुलसीं गृह्णाति, तस्मात् कृष्णं पूजयिष्यति' इति न क्त्वा ? हेतु प्रयोगेणैव पूर्वकालप्रतीतेः ॥ १३०० ॥

१३०१। परावरत्वे गम्ये च।

वाल्यमतिक्रम्य हरेः पौगण्डम् ; ततः परमित्यर्थः। 'क्त्वो यप् वक्ष्यते' ( १३११ ); अलब्ध्वा गिरिं गङ्गा, गिरेरवरा इत्यर्थः। 'श्रिञो जागृवर्जं' ( १२५६ ), इत्यस्य परत्वाद्विशेषत्वाच्च नित्यमिड़भावः—स्वृत्वा, धृत्वा ॥ १३०१ ॥

१३०२। तत्कालेऽपि क्त्वा क्वचित्।

मुखं प्रकाश्य हसति हरिः ॥ १३०२ ॥

---

न भवतीति शेषः। उक्तार्थानामप्रयोग इति न्यायात् न भवतीति भावः। एककर्तृकयोरिति किम् ? गते अवैष्णवे भुङ्क्ते वैष्णवः। पूर्वकालस्थेति किम् ? नमति स्तौति च ॥

१३०१। परा। परत्वे अवरत्वे च गम्ये धातोरुत्तरे क्त्वा भवति ; पूर्वसूत्रेणाप्राप्ते विधानम्। वाल्यमिति वाल्यं कौमारम् ; कौमारं पञ्चमाब्दान्तं, पौगण्डं दशमावधीति। अतिक्रम्येति क्रमु—पादविक्षेपे क्त्वा क्त्वो यप्। ततो वाल्यात् क्त्वो यप् वक्ष्यते इति ; 'क्त्वो यवनञ्पूर्वसमासे' इत्यनेनेति शेषः। अलब्ध्वेति नञ्पूर्व-लभः क्त्वा ; 'नञोऽरामशेषः सर्वेश्वरे तु नुट् च समासे' इति नञो-ऽरामशेषः। अत्र असिद्धरूपं न त्याज्यमिति प्रतिज्ञाया व्यभिचारो जात इति ज्ञेयम्। अथवा अशब्दोऽयं निषेधार्थ इति। अवरेति पश्चादित्यर्थः ; ननु स्वृत्वा धृत्वेत्यत्र 'स्वरति-सूति-सूयति-धूञूदित इड्वे'त्यनेन पक्षे इट् कथं न स्यादिति चेत्तत्राह श्रिञ इति। श्रिञो जागृवर्जेत्यस्य कपिल एव विषय इति विशेषत्वम् ॥

१३०२। तत्। क्वचित्तत्कालेऽपि क्त्वा भवति। मुखमिति काशृ—दीप्तौ दिवादिरात्मपदी क्त्वा क्त्वो यप्। अत्र प्रकाशस्य न पूर्वकालीनत्वप्रतीतिः। किन्तु यत्र काले हासस्तत्रैव मुखप्रकाश इति ॥

१३०३। व्यतिहारार्थान्मेङोऽपूर्वकालेऽपि वा क्त्वा।

पूर्वं याचते, ततोऽपमयते—अपमित्य याचते, याचित्वा अपमयते वा॥ १३०३॥

१३०४। स्कन्द-स्यन्दयोर्नरामहरो न क्त्वि।

स्कन्त्वा; स्यन्त्वा वा स्यन्दित्वा॥ १३०४॥

१३०५। सेट्क्त्वा न कपिलो मृड़-मृद-कुश-क्लिश-वद-वसो विना।

शयित्वा, मृड़ित्वा। गुधमपि पठन्ति—गुधित्वा। 'रुद-वेत्ति'- ( ८२३ ) इति कपिलः—रुदित्वा॥ १३०५॥

---

१३०३। व्यतीति। व्यतिहारः परिवर्तस्तदर्थान्मेङ् उत्तरे अपूर्व-कालेऽपि क्त्वा भवति। अपमित्येति मेङ् प्रतीदाने क्त्वा क्त्वो यप्। 'क्षियस्त्रिविक्रमो मयतेरिरामो वा यपी'ति वक्ष्यमानसूत्रेण आरामस्ये-रामः, 'वामनात्तुक् पृथावि'ति तुक् अत्रापि असिद्धरूपं न त्याज्यमिति प्रतिज्ञाव्यभिचारो जातः। अपमायेति वा पाठः। याचित्वा अपमयते वेति। अत्र एककर्तृकयोरित्यादिना याच्धातोः क्त्वा॥

१३०४। स्कन्द। क्त्वि परस्मिन् स्कन्दस्यन्दयोर्नरामहरो न भवति। स्कन्त्वेति स्कन्दिर्—गतिशोषणयोः सहजानिट्। स्यन्त्वेति स्यन्दू—श्रवणे पक्षे ऊदित्वात् स्वरतीत्यादिनेट् स्यन्दित्वेति॥

१३०५। सेट्। मृड़—सुखने तुदादिः क्र्यादिश्च, मृद—क्षोदे, कुष—निष्कर्षे, क्लिशू—विबाधने, क्र्यादिः क्लिश—उपतापे दिवादिर्द्वयो-रेव ग्रहणम्। वद—व्यक्तायां वाचि, वस—निवासे इत्येतान् विना क्त्वा कपिलो न भवति। शयित्वेति कपिलत्वाभावाद्गोविन्दः। मृड़ित्वेति कपिलत्वाद्गोविन्दाभावः। गुधमपि पठन्तीति वर्जन इति शेषः। गुधित्वेति गुध—परिवेष्टने। रुदवेत्तीति 'रुदवेत्तिमुष-ग्रहिस्वपि प्रच्छः क्त्वा-सनौ कपिला'विति सूत्रम्॥

१३०६। नरामोद्धवादेव थ-फान्तात् सेट्क्त्वा कपिलो वा, वञ्चि-लुञ्चृत्ति-तृषि-मृषि-कृशेश्च।

श्रथित्वा, श्रन्थित्वा; गुफित्वा, गुम्फित्वा; वचित्वा, वञ्चित्वा; ऋतित्वा, अर्तित्वा। कृश तनुकरणे—कृशित्वा, कर्शित्वा। नियमोऽयम्। ततो नरामोद्धवत्वाभावे तु 'य-व-वर्जित-विष्णुजनान्तात्' (८२४) इति पक्षेऽपि न कपिलः। कुथ पूतीभावे—कोथित्वा। रिफ हिंसादौ—रेफित्वा। थ-फान्तादेव नियमादन्यत्र तु सेट्क्त्वा न कपिल इति प्रवर्तते। स्रंसित्वा। इह तु 'य-व-वर्जित' (८२४) इति विकल्प एव—द्योतित्वा, द्युतित्वा।

---

१३०६। नरा। नराम उद्धवो यस्य तस्मादेव थ-फान्ताद्धातोरुत्तरे सेट्क्त्वाप्रत्ययः कपिलो वा भवति। नियमोऽयम्। वञ्चि। वञ्चु गतौ, लुञ्च अपनयने, ऋत घृणायां सौत्रा धातवः। ञितृषा पिपासायां, मृष क्षमायाम् इत्येतेभ्यः कृशेश्च उत्तरः सेट्क्त्वाप्रत्ययः कपिलो वा भवति। सेट्क्त्वा न कपिल इत्यादिना निशेधे प्राप्ते विभाषा। श्रथित्वेति श्रन्थ मोचने कपिलत्वान्नरामहरः। श्रन्थित्वेति कपिलत्वाभावान्नरामहराभावः। गुम्फित्वेति गुम्फ ग्रन्थे पूर्ववत्। वचित्वा वञ्चित्वेति धातूनामनेकार्थत्वात् प्रलम्भनमत्रार्थः। ऋतित्वेति 'आय ईयङ् कमेर्णिङ्च रामधातुके वे'ति सूत्रमस्ति, अतः ऋतेरियङ् इति पक्षे न ईयङ् कपिलत्वाद्गोविन्दाभावः, पक्षे गोविन्दः। अर्तित्वेति। एवं कृषित्वा, कर्शित्वा इति। यववर्जितेति 'य-व-वर्जितविष्णुजनान्ताच्चतुःसनोद्धवाद्विष्णुजनादेः सेट्क्त्वासनौ कपिलौ वे'ति सूत्रम्। पूतीभावे पवित्रीभवने। कोथित्वेति कपिलत्वाभावाद्गोविन्दः। एवं रेफित्वेति। स्रंसित्वेति स्रन्सु अधःपतने कपिलत्वाभावान्नरामहराभावः। विकल्प एवेति थ-फान्तत्वाभावादिति शेषः। द्योतित्वा द्युतित्वेति द्युत दीप्तौ। वसतीति अनेनेट्। 'वसति-

'वसतिक्षुधिभ्याम्' ( १२७६ ) इत्यादि—क्षोधित्वा, क्षुधित्वा इत्यादि ॥ १३०६ ॥

१३०७। जॄव्रश्चिभ्यामिट् क्त्वि।

जरित्वा। 'ऋरामवृभ्य इटस्त्रिविक्रमो वा, न तु परपदसौ कामपालाधोक्षजयोश्च' ( ५७८ ) इति जरीत्वा ; व्रश्चित्वा ॥१३०७॥

१३०८। उरामेतो वेट् क्त्वि।

शमित्वा ; 'हरिवेण्वन्तोद्धवस्य त्रिविक्रमः क्वौ कंसारि-वैष्णवे च' ( ८६५ ) 'क्त्वि तु क्रमो वा' ( ८६६ )—शान्त्वा। क्रान्त्वा, क्रन्त्वा, क्रमित्वा। 'क्लिश-पूङ्भ्यां वा' (१२७६) इति वेट्—क्लिष्ट्वा, क्लिशित्वा। पूत्वा, पवित्वा॥ १३०८॥

---

क्षुधिभ्यामि'त्यादीत्यादिपदेन लुभादिनां ग्रहणम्। क्षोधित्वेति क्षुध बुभूक्षायाम् ॥

१३०७। जॄ। क्त्वि परस्मिन् जॄव्रश्चिभ्यामुत्तरे इट् स्यात्। जरित्वेति जॄष वयोहानौ, 'श्रिञो जागृवर्जे'त्यादिना निषेधे प्राप्ते विधानम्। ऋरामेति अनेन पक्षे 'इट्स्त्रिविक्रमः' जरीत्वेति। व्रश्चित्वेति ओव्रश्चू छेदने 'उरामेत्त्वादिटि विकल्पे प्राप्ते नित्यतार्थं वचनम्। सेट् क्त्वा न कपिलो 'मृड़मृदकुषक्लिशवदवसो विने'ति कपिलत्वनिषेधः ; अतो 'ग्रहिज्ये'त्यादिना न सङ्कर्षणः। वृश्चित्वेति पाठः क्वचिद्दृश्यते सत्वपाट एव ॥

१३०८। उरा। क्त्वि परस्मिन् उरामेद्धातोरुत्तरे इड् वा भवति। शमित्वेति शमु उपशमे। शान्त्वेति इड्भावपक्षे। क्रान्त्वा क्रन्त्वेति क्रमु पादविक्षेपे 'क्त्वितु क्रमो वे'ति पाक्षिकस्त्रिविक्रमः। क्रमित्वेति इट् पक्षे। क्लिशित्वेति सेट्क्त्वा न कपिल इत्यादौ क्लिशो वर्जनमुक्तमतो न कपिलत्वनिषेधः, अतो न गोविन्दः। पवित्वेति अत्रो कपिलत्वनिषेधः, अतो गोविन्दः ॥

१३०९। जान्त-नशोरुद्धव-नरामहरो वा वैष्णवादि-क्त्व।

अक्त्वा, अङ्क्त्वा; भक्त्वा, भङ्क्त्वा; नष्ट्वा, नंष्ट्वा। 'वैष्णवादि' इति किम्? अञ्जित्वा। 'जन-खन-सनाम्' (६२१) इत्यादि–खात्वा, खनित्वा। 'द्यति-स्यति' (१२९१) इतीत्वम्—दित्वा। 'दधातेर्हिः' (१२९१)—हित्वा ॥ १३०९ ॥

१३१०। जहातेर्हिः क्त्व।

हित्वा। 'अदो जग्धिः' (१२९३)—जग्ध्वा ॥ १२१० ॥

१३११। क्त्वो यवनञ्पूर्वसमासे।

'ल्यप्' इति पाणिनिः। अन्तर्भिन्नपदत्वेऽप्येकनामत्वेन योजनं समासः ॥ १३११ ॥

---

१३०९। जान्त। वैष्णवादिक्त्वि परस्मिन् जान्तधातोर्नशधातोश्च उद्धवनरामहरो वा भवति। अक्त्वेति अन्जू व्यक्ति-म्रक्षण-गतिषु ऊदित्वाद्विकल्पितेट्। नरामहराभावपक्षे अक्त्वेति। भक्त्वेति भन्जो आमर्दने सहजानिट्। नष्ट्वेति नश अदर्शने, 'मस्जिनशोर्नुम् वैष्णवे' इति नुम्, नरामहरः, नरामहराभावपक्षे नष्ट्वेति। रधादेरिड् विकल्पितेट्त्वमतो नशित्वेति च। अन्जू धातोरिट्पक्षे अञ्जित्वेति। खात्वेति खनु अवदारणे; इट् पक्षे खनित्वेति। वैष्णवादित्वाभावान्नात्रारामः। दित्वेति दोऽवखण्डने। हित्वेति डु-धाञ् धारणपोषणयोः ॥

१३१०। जहा। क्त्वि परस्मिन् जहातेः स्थाने हिर्भवति। हित्वेति ओ-हाक् त्यागे। जहातेरिति निर्देशः ओ हां गतावित्यस्य निरासार्थः ॥

१३११। क्त्वो। समासे सति अनञ् पूर्वधातौ विहितस्य क्त्वः स्थाने यव् भवति। नञ्पूर्वात्त्विति वक्ष्यते अतो नञ् पूर्व इति समास इत्यस्य विशेषणमिति न वाच्यम। अनञ् पूर्वादिति वा पाठः। समासलक्षणमाह अन्तर्भिन्नपदत्वेऽपीति ॥

१३१२। उपेन्द्रोर्यादि-व्यन्ताजन्त-पूर्वपदानि कृदन्तेन समस्यन्ते, पूर्वपदन्त्वमन्तमेवाव्ययकृदन्तेन।

कृत्सामान्यग्रहणात् पूर्वत्रापीदमारोहति। उदाहरणानि तु ज्ञेयानि। अन्तरङ्गस्वादेर्महाहर एकपदत्वारम्भे॥ १३१२॥

१३१३। वामनात्तुक् पृथौ।

उपेन्द्रे—प्रकृत्य, पराभूय।

**उर्यादिगणः**—उरीकृत्य उररीकृत्य; उरी उररी चाङ्गिकार-विस्तारयोः। श्रदित्यादयोऽनुकरणशब्दा न चेदितिशब्दपराः। कारिका शास्त्रार्थसमाधानपद्ये। पुरोऽग्रादौ। सदसच्छब्दावादरानादरयोः। अलं भूषणे। हस्ते पाणौ चोपयमने। प्राध्वं बन्धनहेतावानुकूल्ये। जीविकोपनिषदौ तत्सादृश्ये। अदस्तत्पूर्वं यदि

---

१३१२। उपे। उपेन्द्रश्च उर्यादिश्च व्यन्तश्च आजन्तश्च पूर्वपदञ्च तानि कृदन्तेन सह समस्यन्ते। पूर्व। पूर्वपदन्तु अमन्तमेव अव्ययकृदन्तेन समस्यते। नियमोऽयम्। कृदिति इदं सूत्रं पूर्वत्रापि आहरतीति तस्मादुक्तकृत्प्रत्ययान्तेनापि अनेन समासो भवतीति। उदाहरणानि ज्ञेयानीति। तानि यथा—प्रभवन्, पराभवन्, प्रकुर्वाणः, प्रभेजिवान्, प्रचक्राणः, प्रक्रीड़ितवान्, संस्तुतः, उरीकुर्वन् इत्यादीनि। अन्तरङ्गेति अनेन स्वादेर्महाहरः॥

१३१३। वाम। पित् पृथुस्तस्मिन् परे वामनादुत्तरे तुक् भवति उकावितौ। क्रमेण उदाहरणानि दर्शयति, उपेन्द्र इत्यादिना। पराभूयेति भू सत्तायाम्। उरीकृत्य उररीकृत्येति डु कृञ् करणे। उरीति उरी उररी च अङ्गीकारविस्तारयोर्वर्तते। श्रदिति श्रदित्यादयोऽनुकरणशब्दा उर्यादयो भवन्ति चेद्यदि इतिशब्दपरा न स्युः। कारि। शास्त्रार्थस्य समाधानं यस्मात् तादृशपद्ये वर्तमानः कारिकाशब्दः उर्यादिर्भवति। पद्यं श्लोकः। उदाहरणन्तु कारिकाकृत्येति। यत्रतु कारिकाशब्दः णकप्रत्ययान्तस्तत्र कारिकां कृत्वेति भवति।

परं प्रति न ज्ञाप्यते, नोच्यते वा। अस्तमदर्शनार्थम्। एतत् सर्वं कृञि, कृञि परे सति उर्यादिः। अन्तर्हन्तौ, न तु परिग्रहे। कणेमनसी हन्तौ तृप्त्याम्। अच्छेत्याभिमुख्यवचनमभिशब्दार्थं वा गत्यर्थे, वदे च।

पुरो। अग्रादौ वर्तमानः पुरःशब्दः उर्यादिर्भवति। पुरःशब्दः सान्तोऽव्ययम्, उदाहरणन्तु पुरस्कृत्येति नमःपुरसोर्गतिसंज्ञयोः कृञीति विष्णुसर्गस्य सः। सद। अभ्यर्हितविषयः प्रीत्या सम्भ्रम आदरस्तत्र वर्तमानः सच्छब्द उर्यादिर्भवति। अनादरे वर्तमानः असच्छब्दश्च उर्यादिर्भवति ; अनादरस्तिरस्कारः। उदाहरणन्तु सत्कृत्य असत्कृत्येति ; सच्छब्दस्य आदरार्थत्वाभावेतु सत्कृत्वा काष्ठं गत इति शोभनं विद्यमानं वा कृत्वेत्यर्थः। अलम्। भूषणेऽर्थे वर्तमानोऽलंशब्द उर्यादिर्भवति। उदाहरणन्तु अलङ्कृत्येति। भूषण इति किम्? अलं भुक्त्वा न भोक्तव्यमित्यर्थः। हस्ते उपयमने वाच्ये हस्ते पाणौ च उर्यादिर्भवति ; उपयमनं विवाहः। 'विवाहोपयमौ समावि'त्यमरः। हस्ते पाणौ इत्येतौ सप्तम्यन्तौ विवाहानुकृतौ सप्तम्यन्तानुकरणसामर्थ्यात् समासे कृते न स्वादिमहाहरः। एतावव्ययौ इति केचित्। उदाहणन्तु हस्तेकृत्य, पाणौकृत्येति विवाहं कृत्वेत्यर्थः। स्वीकारमात्र इति तु क्रमदीश्वरादयः। हस्तेकृत्य महास्त्राणीति भट्टिरपि। उपयमन इति किम्? हस्ते कृत्वा परस्य माल्यं वर्तते। प्राध्वं। बन्धनहेतावानुकूल्ये वर्तमानः प्राध्वं शब्द उर्यादिर्भवति। बन्धनहेताविति बन्धनस्य हेतुरिति विग्रहः। प्राध्वमिति मरामान्तमव्ययम्। जीवि। तत्सादृश्ये विषये जीविकोपनिषदौ उर्यादी भवतः। जीविका जीवनोपायः उपनिषत् तत्त्वज्ञानहेतुर्विद्या। जीविकाशब्दोदाहरणं वक्ष्यते। उपनिषच्छब्दोदाहरणं यथा— उपनिषत्कृत्य उपनिषदमिव कृत्वेत्यर्थः। तत्सादृश्य इति किम्? जीविकां कृत्वा व्याधो गतः। अदः। अदःशब्द उर्यादिर्भवति। यदि तत्पूर्वकम् अदःपूर्वकं परं प्रति नो ज्ञाप्यते नोच्येते वा। अदःशब्दः सर्वादिगणस्थः। अस्तम्। अदर्शनार्थोऽस्तंशब्द उर्यादिर्भवति। अस्तंशब्दोऽव्ययम्। उदाहरणन्तु अस्तं कृत्येति।

तिरोऽन्तर्धिवचनं कृञि तु वा। इतः कृञि विकल्पः, कृञि परे एतेषां वक्ष्यमाणानाम् अनञ्पूर्वसमासो वा स्यात्। उपाजे अन्वाजे च सामर्थ्याधाने। साक्षात्, मिथ्या, लवणं, वशे, प्रादुर्, आविस्, नमश्च प्रसिद्धार्थाः। उरसिमनसी अन्तःकरणे। मध्ये पदे, न तु स्पर्शे। निवचने वचनाभावे इति।

---

एतत्। एतत् सर्वं कृञि कृञ्धातौ परे वर्तमानं सत् उर्यादि भवति। परिभाषासूत्रमेतत्; कृञीत्युपलक्षणं तेन पुरोऽग्रादाविति धा-धातोरपि प्रवर्तते। अतएव 'तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुरि'ति कालिदासः। अन्तः। हन्तौ हनधातौ परे अन्तःशब्द उर्यादिर्भवति। परिग्रहेऽर्थेतु सति न भवति। कणे। तृप्त्यां गम्यमानायां हन्तौ परे कणेशब्दो मनःशब्दश्च उर्यादिर्भवति। अच्छे। गत्यर्थे वद-धातौ च परे आभिमुख्यवचनम् अभिशब्दार्थं वा। अच्छेति उर्यादिर्भवति। उदाहरणन्तु अच्छगत्य, अच्छसृत्येति अभिमुखं गत्वेत्यर्थः। अच्छोद्येति च अभिमुखमुदित्वेत्यर्थः॥

तिरो। अन्तर्धिवचनस्तिरःशब्द उर्यादिर्भवति। उदाहरणन्तु तिरोभुयेति व्यवहितो भुत्वेत्यर्थः। अन्तर्धिवचनमिति किम्? तिरोभुत्वा गतः वक्रो भुत्वेत्यर्थः।

कृञि। कृञितु परे अन्तर्धिवचनस्तिरःशब्दो उर्यादिर्वा भवति। उदाहरणन्तु तिरस्कृत्य, तिरस्कृत्वा इति। तिरस्त्वगतौ च वेति विष्णुसर्गस्य सः। इतः। इतः परं कृञि परे विकल्पो भवति उर्यादित्वस्येति शेषः। उपा। सामर्थ्याधाने वर्तमाने उपाजेशब्दो अन्वाजेशब्दश्च कृञि परे उर्यादी वा भवतः। अर्थाभिव्यक्तये सामर्थ्याधान इत्युक्तं, नत्वर्थान्तरनिवृत्तये अनयोरर्थान्तराभावात्। उदाहरणन्तु उपाजेकृत्य उपाजेकृत्वा, अन्वाकृत्य अन्वाजेकृत्वेति। साक्षा। प्रसिद्धार्थाः साक्षादादयः शब्दाः कृञि परे उर्यादयो वा भवन्ति। उदाहरणन्तु साक्षात् कृत्वेत्यादि। उरसि। अन्तःकरणे वर्तमानौ उरसि मनसि शब्दौ कृञि परे उर्यादी वा भवतः। मध्य। मध्येशब्दः

एते उपेन्द्रवदाख्याते कृति च धातोः प्राक् प्रयोज्या गति-संज्ञाः।

तत्र दुर्गमोदाहरणानि—'श्रदिति'—श्रत्कृत्य, स्रित्कृत्य। नेह—श्रदिति कृत्वा। प्राध्वमिति—'प्राध्वकृत्य स्थितो रामः सर्वानुत्तरकोशलान्', आनुकूल्येन बद्धा इत्यर्थः। जीविकाकृत्य, जीविकामिव कृत्वेत्यर्थः। अदःकृत्य गच्छति। नेह—'अदः कृत्वा गच्छ त्वम्', 'अदः कृत्वा गच्छति' इति वा, परं प्रति वक्ति। अन्तर्हत्य मध्ये हत्वेत्यर्थः; नेह—अन्तर्हत्वा, परिगृह्येत्यर्थः। कणेहत्य कृष्णं पश्यति, मनोहत्य कृष्णं पश्यति, तृप्तिं याव-दित्यर्थः। उरसिकृत्य कृत्वा वा निश्चित्य इत्यर्थः। एवं मनसि। श्रुतिं मध्येकृत्य गीतां व्याचष्टे, कृत्वा वा। एवं—श्रीकृष्णस्य पदेकृत्य मनः शेते। नेह—हस्तं मध्ये पदे वा कृत्वा कृष्णं भूषयति। एवं निवचनेकृत्येति।

---

पदेशब्दश्च कृञि परे उर्यादिर्वा भवति। स्पर्शार्थेतु न भवति। निव। वचनाभावे वर्तमानो निवचनेशब्दः कृञि परे उर्यादिर्वा भवति।

एत इति। एते उर्यादयः शव्दाः। दुर्गमोदाहरणानीति दर्श्यन्ते इति शेषः। श्रदितीति सूत्रोल्लेखः। नेहेतीति शब्दपरत्वादिति शेषः। प्राध्वङ्कृत्येति। रामः श्रीरघुनन्दनः। उत्तरकोशलान् अयोध्या-वासिनः। प्राध्वकृत्येत्यस्यार्थमाह आनुकूल्येनेति। अदः कृत्वा गच्छेति। अत्र परं प्रति ज्ञापना भुता अतो नोर्यादित्वम्। अदः कृत्वा गच्छ-तीति चेति। अत्र परं प्रति उक्तिर्भूता, अतो नोर्यादित्वम् एत-देवाह परं प्रति वक्तीति। कृत्वा वा उरसि कृत्वा वा। अन्तः-करण इति किम्? अरसि कृत्वा हस्तं शेते हस्तौ वक्षसि कृत्वे-त्यर्थः। श्रुतिं स्वरं व्याचष्टे कथयति। कृत्वा मध्ये कृत्वा वा श्रीकृष्णस्येति मनः पदे कृत्वेत्यर्थः। हस्तमिति मध्ये पदे वेति श्रीकृष्णस्येति शेषः। निवचनेकृत्येत्युक्तं निवचने कृष्वेति च ज्ञेयं

अथ वाच्यौ तद्धितौ--अवैष्णवं वैष्णवं कृत्वेत्यर्थे विः, कृञनुप्रयोगः, वेर्हरः, पूर्वारामस्य ईरामः— वैष्णवीकृत्य। आच्— सत्याकृत्य। पूर्वपदं वक्ष्यते (१८९५) ॥ १३१३ ॥

१३१४। मिलित्वादेशः परवत्तुकि।

अधीत्य, प्रेत्य ॥ १३१४ ॥

**नञ्पूर्वात्तु—**

१३१५। नञोऽरामशेषः सर्वेश्वरे तु नुट् च समासे, आख्याते त्वाक्षेपे।

---

वचनं नियम्येत्यर्थः। अथेति इत्यर्थे विरिति। 'अभूत-तद्भावे कृभ्वस्तियोगे विरि'त्यनेनेति शेषः। कृभ्वस्तीनां योगं विना विप्रत्ययो न भवति। अतोऽवैष्णवं वेष्णवं कृत्वेति कृञो योग उक्तः। कृञोऽनुप्रयोग इति यदुक्तं तन्नावकलितम् अनुप्रयोगस्य प्रसङ्गाभावात्। वेर्हर इति 'केवलस्य प्रत्ययवेर्हरः' इत्यनेनेति शेषः। किन्तु तद्धित-प्रकरणे विः सर्व इदिति वक्ष्यते। अतोऽत्रापि विः सर्व इदिति पाठ उचितः। पूर्वारामस्य इराम इति 'अद्वयस्य वा वीराम' इत्य-नेनेति शेषः। सत्याकृत्येति सत्यादशपथ इत्यनेनाच् मयैतद्ग्रहीतव्य-मिति निश्चित्येत्यर्थः ॥

१३१४। मिलि। तुकि विषये मिलित्वादेशः परवद्भवति। अधीत्येति इङ् अध्ययने। मिलित्वादेशस्य ईरामस्य इरामवत्त्वम् अतस्तुक्। प्रेत्येति इन् गतौ मिलित्वादेशस्य एरामस्य इराम-वत्त्वात् तुक्। ननु अधीत्य प्रेत्येत्यादौ तुकि कृते पश्चान्मिलित्वादेशः करणीयः, किमनेन सूत्रेणेति चेत्तयोच्यते मिलित्वादेशे कृते 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति न्यायेन तुग्निवृत्तिर्भवत्वित्याशङ्का स्यात्, तन्निरासार्थं वचनम् ॥

१३१५। नञो। समासे सति नञोऽरामशेषो भवति। सर्वे-श्वरेतु परे सति नुट् च भवति। आख्यातेतु आक्षेपे गम्यमाने नञोऽरामशेषो भवति, सर्वेश्वरेतु नुट् च। अकृत्येति। नञ् इत्यनेन

अकृत्वा, अनीक्षित्वा। आख्याते — हरिमभजसि मूर्ख, अनेधि त्वम् ॥ १६१५ ॥

१३१६। हरिवेणुहरविधिर्वा यपि नान्तवर्जम्।

आगत्य आगम्य, प्रणत्य प्रणम्य। नान्तानान्तु नित्यमेव— प्रहत्य, वितत्य, संमत्य। कथं 'तृणु वितृत्य, क्षिणु विक्षित्य' इति न विकल्पः? ऋद्वये नरामांशसद्भावात् सर्वेश्वरादिव्यवधानेऽपि रषयोर्निमित्तत्वाद् 'रषाभ्यां टुस्तवर्गजः' इति हि प्रवर्तते। 'अदो जग्धिः'—प्रजग्ध्य। 'जन-खन-सनाम्' ( ६२१ ) इति प्रजाय, प्रजन्य। अन्तरङ्गत्वात् प्राग् जग्धौ प्राप्तेऽपि निमित्तापायाद्

---

समासः नञ् पूर्वत्वात् न क्त्वो यप्। अनीक्षित्वेति नञोऽरामशेषो नुट् च। हरिमभजसि अनेधित्वमिति अत्राक्षेपो गम्यते। हरिं न भजसि अतो न एधि पृथिव्यां न तिष्ठेत्यर्थः॥

१३१६। हरि। यपि परे नान्तान् धातून् वर्जयित्वा हरिवेणुहरविधिर्वा भवति। आगत्य आगम्येति गम्लृ गतौ, अत्र नित्यं प्राप्ते विभाषा। प्रणत्य प्रणम्येति, नम प्रह्वत्वेशब्दे च। मान्तानान्तु नित्यमेवेति 'हरिवेणुन्तसहजानिटामि'त्यादिनेति शेषः। प्रहत्य, वितत्य संमत्येति हन हिंसागत्योः, तनु विस्तारे, मनु ज्ञाने, सर्वत्र नरामहरस्तुक् च। कथमिति। वितृत्येति तृणु अदने, विक्षित्येति क्षिणु हिंसायाम्, अनयोस्तवर्गान्तत्वं न दृश्यते तर्हि कथं न विकल्प इत्ययमत्रविरोधः। सिद्धान्तमाह ऋद्वय इति। तृणु धातौ ऋद्वये ररामांशसद्भाभावत् 'रषाभ्यां टुस्तवर्गजः' इति प्रवर्तते। क्षिणु धातौ सर्वेश्वरादिव्यवधानेऽपि रषयोर्निमित्तत्वात् रषाभ्यां टुस्तवर्गज इति प्रवर्तते। अतष्टवर्गान्तत्वेऽपि तवर्गान्तत्वमिति नित्यमेव हरिवेणुहरः। तृणु धातौ ऋरामे ररामांशसद्भावात् टवर्गान्तस्य तवर्गान्तजातत्वम्। क्षिणु धातौ सर्वेश्वरस्य व्यवधाने षरामस्य णत्वविधौ न निमित्तत्वम्। अदो जग्धिरिति 'अदो जग्धिः कपिल तरामे यपि च' इत्यनेनेति शेषः। अस्मिन् प्रकरणे नामधातुप्रत्ययानामादेशस्य तज्जातिवद्भावः सर्वत्रैव

यवग्रहणम्, तेन 'जहातेर्हिः' ( १३१० ) इत्यादयो न स्युः—विहाय ॥ १३१६ ॥

१६१७। दामोदरादेरीरामो न यपि क्विपि च।

विधाय, निपाय। 'निपीय' इति पीङो रूपम्। 'मीनातिमिनोति'- ( ७३९ ) इत्यादि—प्रमाय, निमाय। 'दामोदरादेः' किम्? विलाय विलीय, निलीय। 'अजेर्वी' ( ४९९ ) इत्यादि—उदज्य, उद्वीय। णेर्हरः—विचार्यः ॥ १३१७ ॥

---

तद्व्यक्तिवद्भावो यत्र मंस्यते तत्रैवेत्युक्तत्वात् कृद्बाहुल्याच्च क्त्वादेशस्य यपः क्वचित् स्थानिवद्भावः, क्वचिन्नेत्यभिप्रायः तस्मात् आगत्येत्यादौ यपः स्थानिवत्त्वं विहायेत्यादौ नेति भावः। आरामपक्षे प्रजायेति, आरामाभावपक्षे प्रजन्येति। प्रजत्येति पाठः क्वचिद् दृश्यते सत्वपपाठ एव। ननु विहायेत्यत्र जहातेः स्थाने हि कथं न स्यादिति चेत्तत्राह अन्तरङ्गत्वादिति। प्रकृत्याश्रितत्वादन्तरङ्गत्वं निमित्तापायादिति नैमित्तिकस्याप्यपायः स्यादिति शेषः। अतो 'अदो जग्धिः कपिल-तरामे यपि च' इत्यस्मिन् सूत्रे यवग्रहणं कृतमिति शेषः। न स्युरिति प्रयोजनाभावादिति शेषः ॥

१३१७। दामो। यपि क्विपि च परे दामोदरादेरन्तस्य ईरामो न भवति। 'दामोदरमास्थागापिवती'त्यादिना प्राप्ते निषेधः। विधायेति डु धाञ् धारण-पोषणयोः। 'निमित्तापाये नैमित्तिकस्योप्यपायः' स्यादिति न दधातेर्हिः। निपायेति पा पाने। पीङ् इति पीङ् पाने दिवादिः। मीनातीति अनेन आरामान्तपाठः। प्रमायेति मीङ् हिंसायाम्। निमायेति डु मिञ् प्रक्षेपणे। विलायेति लीङ् श्लेषणे। लीयतिलीनात्योर्वेति आरामान्तपाठः पक्षे विलीयेति। निमायेत्यनन्तरं दामोदरादेरिति किमिति कश्चिद्दृश्यते तत्तु न संगच्छत इति ज्ञेयं, मेतीत्यनेन मामाङोर्ग्रहणत्वात्। 'दामोदर-मा-स्था-गा-पिवती'त्यादिसूत्रस्य। विलायेति प्रत्युदाहरणमितितु कश्चिदाचष्टे तन्नोचितम्। सूत्रे दामोदरादेरिति पाठस्यानुक्तत्वात् आख्यातप्रकरण एव प्रत्युदाहर-

१३१८। लघुपूर्वात् परस्य णेरय् यपि, आप्नोतेर्वा।

विगणय्य, प्रणमय्य, प्रापय्य, प्राप्य। 'परिवृढमाचष्टे' इति विगृह्य वृढशब्दादेव णिः क्रियते। संग्राम युद्धे इति चुरादिपाठात्तस्मादेव सोपेन्द्राण्णेरुत्पत्तिः, ततश्च परिशब्दस्य क्त्वान्तेन पश्चात् समासात् परिव्रढय्य इति सिद्धम्। परेर्धातुत्वाभावात्

---

स्योक्तत्वाच्च। अजेर्वीत्यादीति 'अजेर्वी घणं विना रामधातुके, वलेतु वा, यपि चे'ति सूत्रम्। उदज्येति अज गतौ क्षेपणे च पक्षे उद्वीयेति। णेर्हर इति णेर्हरोऽनिड़ादौ रामधातुके' इत्यनेनेति शेषः। विचार्येति ण्यन्ताच्चरधातोः क्त्वा॥

१३१८। लघु। यपि परे लघुपूर्वाद्धातोः परस्य णेः स्थाने अय् भवति। आप्नो। आप्नोतेरुत्तरस्य णेः स्थाने अय् वा भवति। विगणय्येति गण संख्याने, अदन्तश्चुरादिणिः अरामहरः। 'अन्तहरे न गोविन्दवृष्णीन्द्राविति वृष्णीन्द्रनिषेधेः क्त्वा क्त्वो यप् णेरय्। प्रणमय्येति नम प्रह्वत्वे शब्दे च प्रेरणे णिः वृष्णीन्द्रः, घटादित्वाद्वामनः, क्त्वा क्त्वो यप् णेरय्। प्रापय्येति आपॢ व्याप्तौ, प्रेरणे णिः। परिवृढमिति विगृह्येति वाक्यं कृत्वेत्यर्थः। अथवा परिवृढमाचष्टे इति इत्यत्र वाक्ये विगृह्य, परिविगृह्य, परिभागं कृत्वेति वृढशब्दादिति पारिशेष्यात् वृढशब्दादेवेति नतु परिवृढशब्दादित्यर्थः। णिः क्रियत इति 'मुण्डमिश्रे'त्यादिनेति शेषः। परिवृढशब्दाण्णिर्न भवति इति युक्त्या साधयति। संग्राम-युद्ध इतीति इत्यस्येत्यर्थः। तस्मादेव सोपेन्द्रादिति नान्यस्मात् सोपेन्द्रादित्यर्थः। क्त्वान्तेनेति व्रढयित्वेत्यनेनेत्यर्थः। परिव्रढय्येति णौ कृते 'अनेकसर्वेश्वरस्य संसारहरः' इति संसारहरः, पृथुमृढादेः 'ऋरामस्य रश्चे'ति ऋरामस्य रः क्त्वा। क्त्वान्तेन समासात् क्त्वो यप्, परिवृढशब्दाण्णौ सति समासाभावात् क्त्वो यप् न स्यादिति भावः। परिवृढय्येति पाठो वहुषु

'पर्यन्नढ़यत्' इत्यादि च। संग्रामयतेस्तु—असंग्रामयत्। 'लघुपूर्वात्' किम्? संप्रधाप्य, निगूह्य ॥ १३१८ ॥

१३१९। क्षियस्त्रिविक्रमो मयतेरिरामो वा यपि।

प्रक्षीय प्रक्षित्य, अपमित्य अपमाय ॥ १३१९ ॥

१३२०। वे-अव्येञ-ज्यानां न कङ्कर्षणो यपि, परि-संभ्यां व्येञो वा।

प्रवाय प्रव्याय, प्रज्याय, परिव्याय। नित्यत्वात्तुकं बाधित्वा 'श्या-श्वि-व्या-ज्या' (८७०) इति त्रिविक्रमः। परिवीय, संव्याय, संवीय ॥ १६२० ॥

---

पुस्तकेषु दृश्यते; किन्तु स लिपिकारप्रमादकृतः र-विधानस्यापरिहार्यत्वात्। परेरिति परेर्धातुत्वाभावात् परेः प्राक् नादागमः, किन्तु परत एव पर्यन्नढ़यदिति ण्यन्तान्नूतेश्वरदिप्। इत्यादि चेति सिद्धमिति शेषः। असंग्रामयदिति सोपेन्द्रस्यैव धातुत्वात् उपेन्द्रात् पूर्वमदागमः। संप्रधाप्येति डु धाञ्—धारणपोषणयोः पुक् क्त्वा क्त्वो यप् णेर्हरः लघुपूर्वत्वाभान्न अयः। निगूह्येति गूह—सम्वरणे णिः 'अर्ती'त्यादिना णिः गोविन्दः; 'गोह ओ ऊ सर्वेश्वरे' इति ओरामस्य ऊरामः क्त्वा क्त्वो यप् णेर्हरः॥

१३१९। क्षियः। यपि परे क्षि क्षये इत्यस्य त्रिविक्रमो वा भवति। अस्मिन्नेव परे मेङ—प्रतीदान इत्यस्यान्तस्य इरामो वा भवति। सूत्रे इराम इत्यत्र इरामश्चेति वा पाठः॥

१३२०। वेञ्। यपि परे वेञादीनां सङ्कर्षणो न भवति। परि। यपि परे परिसंभ्यामुत्तरस्य व्येञः सङ्कर्षणो वा भवति। प्रवायेति वेञ—तन्तुसन्ताने। प्रव्यायेति व्येञ—सम्वरणे, 'वचिस्वपी'-त्यादिना सङ्कर्षणे प्राप्ते निषेधः। प्रज्यायेति ज्या—वयोहानौ, 'ग्रहिज्ये'ति सङ्कर्षणे प्राप्ते निषेधः। त्रिविक्रम इति 'श्या-श्वि-व्या-ज्या-ह्वां सङ्कर्षणस्य त्रिविक्रमः' इत्यनेनेति शेषः॥

१३२१। क्त्वार्थे णमुश्चाभीक्ष्ण्ये।

'णमुल्' इति पाणिनिः ( ३।४।२२ )। आभीक्ष्ण्यं पौनःपुन्यम् ॥ १३२१॥

१३२२। आभीक्ष्ण्ये वीप्सादिषु च दित्वं वाच्यम्।

स्मारं स्मारं कृष्णं नमति। 'घटादीनाम्' ( ७९६ ) इत्यादौ णिपूर्वयोर्णम्विणोस्तु त्रिविक्रमो वा—गमं गमं, गामं गामं वा। 'लभेर्नुम्' ( ६०७ ) इत्यादि—लम्भं लम्भं, लाभं लाभं, प्रलम्भं प्रलम्भं, भोजं भोजं, पायं पायम्। पक्षे स्मृत्वा स्मृत्वेत्यादि ॥ १३२२॥

१३२३। अपाद्गुरो गार वा णमौ।

---

१३२१। क्त्वार्थे। आभीक्ष्ण्यविशिष्टेऽर्थे वर्तमानाद्धातोरुत्तरे क्त्वार्थे णमुश्च भवति। आभीक्ष्ण्यलक्षणमाह—आभीक्ष्ण्यं पौनःपुन्यम् इति ॥

१३२२। आभी। आभीक्ष्ण्येति वाच्यमिति वक्ष्यत इत्यर्थः। स्मारं स्मारमिति स्मृ-चिन्तायाम् 'अन्तस्य वृष्णीन्द्रो नृसिंहे' इति वृष्णीन्द्रः। आभीक्ष्ण्यवीप्सयोरित्यनेन द्विरुक्तिः पुनः पुनः स्मृत्वेत्यर्थः। गमं गममिति गमॢ—गतौ, णिः, वृष्णीन्द्रः, ण्यन्तात् णुमः, घटादित्वाद्वामनः, णेर्हरः, द्विरुक्तिः। त्रिविक्रमपक्षे गामं गाममिति। लभेरिति 'लभेर्नुम् णम्विणोर्वा, सोपेन्द्रस्य तु नित्यमिति सूत्रम्। लम्भं लम्भमिति डुलभष्—प्राप्तौ णुम्। णुमभावपक्षे लाभं लाभमिति। सोपेन्द्रस्य तु नित्यमिति प्रलम्भं प्रलम्भमित्येव। भोजं भोजमिति भुज पालनाभ्यवहारयोः। पायं पायमिति पा पाने, 'आतो युगिणि नृसिंहकृति चे'ति युक्। णमुश्चेत्युक्तमतमाह पक्षे स्मृत्वा स्मृत्वा इत्यादि ॥

१३२३। अपा। णमु परे अपादुत्तरस्य गुरोः स्थाने गार वा भवति।

अपगारम् अपगारम्, अपगोरम् अपगोरम् वा, मुहुरुद्यम्येत्यर्थः ॥ १३२३ ॥

१३२४। कृत्सूत्राद्यं सप्तम्यन्तं पूर्वपदम्।

'उपपदं' प्राञ्चः। परिभाषेयम् ॥ १३२४ ॥

१३२५। अमन्त-स्वाद्वर्थे णमुरमश्च न महाहरः।

स्वादुङ्कारं हरयेर्पयति। एवं मिष्टङ्कारं, लवणङ्कारम्। स्वादुशब्दस्तु त्रिविक्रमो नेष्यतेऽत्र। स्वादुकृत्य यवागूं भुङ्क्ते ॥ १३२५ ॥

१३२६। कृतो वाहुल्यात् क्त्वा च।

---

अपगोरम् अपगोरमिति गुरी उद्यमे। मुहुरिति पुनः पुनरित्यर्थः। पूर्वपदं वक्ष्यते इत्युक्तं तदेवाह ॥

१३२४। कृत्। कृत्सूत्राणामादिस्थितं सप्तम्यन्तं पदं पूर्वपदमुच्यते ॥

१३२५। अमन्त। अमन्त-स्वाद्वर्थे पूर्वपदे सति धातोरुत्तरे णमुर्भवति, अमश्च महाहरो न भवति। स्वादुङ्कारमिति पूर्वपदन्त्वमन्तमेवाव्ययकृदन्तेनेति समासः। अमो महाहरनिषेधात् 'अन्तरङ्गे'-त्यादिना नेह महाहरः। स्वाद्वर्थ इत्युक्तम् अत आह। एवं मिष्टङ्कारं लवणङ्कारम् इति लवणशब्दोऽपि स्वाद्वर्थः। स्वादुशब्दस्त्विवति त्रिविक्रमो नेष्यते इति णुम्-विधान इति शेषः। त्रिविक्रमस्त्रिविक्रमान्तः। स्वादुकृत्येति अस्वादुं स्वादुं कृत्वेत्यर्थे अभूततद्भावे कृभ्वस्तियोगे विरिति विः सर्व इत् अन्त्यस्य त्रिविक्रम इत्यनेन त्रिविक्रमः व्यन्तस्य क्त्वान्तेन समासः, क्त्वो यप् त्रिविक्रमान्तत्वादत्र णमुर्न भवति। अत्र क्वचित् स्वादुं कृत्वेति प्रत्युदाहरणं दृश्यते, किन्तु व्यन्त्यस्य क्त्वान्तेनावश्यमेव समासो भवतीत्येतन्न सिध्यतीति ज्ञेयम्। त्रिविक्रमान्तत्वादेव स्वाद्वीं कृत्वा इत्यत्रापि णमुर्न भवति ॥

१३२६। कृतो। व्यक्तार्थमेतत्। क्त्वा चेत्यत्र णमुं वाधित्वा

किन्तूत्सर्गसिद्धत्वात् पूर्वपदं नापेक्षत इति न समासः। स्वादुं कृत्वा॥ १३२६॥

१३२७। अभूततद्भावे पुम्वच्च।

अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते—स्वादुङ्कारम्॥ १३२७॥

१३२८। अग्रे-प्रथमं-पूर्वं-सु क्त्वा-णमू।

कृष्णम् अग्रे नत्वा, अग्रे नामं वा व्रजति। एवं प्रथमं पूर्वम्। अत्र 'अग्रे नत्वा' इत्यत्र पूर्वपदन्त्वमन्तमेवेति नियमान्न समासः। प्रथममित्यादिशब्दौ मान्ताव्ययरूपत्वादमो महाहरः, इति नामन्तौ॥ १३२८॥

---

क्त्वा चेति शेषः, किन्त्विति उत्सर्गसिद्धत्वात् सामान्यसिद्धत्वात्। नापेक्षत इति क्त्वाप्रत्यय इति शेषः। स्वादुं कृत्वेत्यसमस्तम्। अत्र यपो वाधकः क्त्वा इत्यभिप्रेत्य, स्वादुं कृत्वेति केचिदुदाहरणन्ति तत्तु न संगच्छते णमुप्रकरणत्वात्॥

१३२७। अभू। अमन्तस्वाद्वर्थे पूर्वपदे सति अभूततद्भावेऽर्थे क्त्वास्थाने णमुर्भवति, अमो महाहरश्च न भवति; स्त्री चेत् पुम्वच्च भवति। अस्वाद्वीं स्वाद्वीमिति 'उरामान्तगुणवचनात् खरु सत्सङ्गोद्धव-वर्जाद्वे'ति ईप्। स्वादुङ्कारमिति पूर्वपदमित्यादिना समासः॥

१३२८। अग्रे। अग्रे पूर्वं प्रथमं पूर्वं-सु पूर्वपदेषु सत्सु धातोरुत्तरे क्त्वार्थे क्त्वाणमू भवतः। अग्रे नत्वेति अग्रे नाममिति चासमस्तम्। एवं पूर्वं प्रथममिति। तदुदाहरणं यथा पूर्वं नत्वा पूर्वं नामं वा व्रजति, प्रथमं नत्वा प्रथमं नामं वा व्रजतीति। पूर्वं नत्वे-त्यादिकञ्चासमस्तम्। सर्वत्र समासाभावं नियमवलेन साधयति अत्रेति। अग्रे इति सप्तम्यन्तम् अतोऽमन्तत्वाभावान्न समासः। प्रथममित्यादि-शब्दावित्यत्र पूर्वमित्यादिशब्दाविति ज्ञेयम्। पूर्वमित्यस्य प्रथमोक्त-त्वात्। अमो महाहर इति 'अव्ययात् स्वादेर्महाहरः' इति अव्ययात् स्वादेर्महाहर इत्यनेनेति शेषः। इति नामान्ताविति तस्मादमन्तत्वा-भावादत्रापि न समास इति भावः॥

१३२९। कर्मणि डुकृञः खमुण्णाक्रोशे।

ख-उ-णा इतः, अम् शेषः॥ १३२९॥

१३३०। सर्वेश्वरान्त-पूर्वपदस्यानव्यस्य मुम् वामनश्च क्षिति।

उमावितौ, म-शेषः। 'उपेन्द्रोर्यादि'- ( १३१२ ) इत्यादिना समासः। अवैष्णवङ्कारमाक्रोशति। अवैष्णवोऽसीत्युक्त्वाक्रोशतीत्यर्थः। करोतिरिहोच्चारणे॥ १३३०॥

१३३१। णमुः।

विभुरयम्॥ १३३१॥

१३३२। अन्यथैवं-कथमित्थंसु डुकृञस्तत्तन्मात्रार्थे।

हरिमन्यथाकारमर्चयति, अन्यथार्चयतीत्यर्थः। एवङ्कारमित्यादि। कृञोऽर्थे तु—विधिमन्यथा कृत्वा हरिमर्चयति॥१३३२॥

---

१३२९। कर्मणि। कर्मणि पूर्वपदे सति आक्रोशे गम्यमाने डुकृञ उत्तरे खमुण् भवति। ख-उ-णा इत इति, अम् शेष इति शेषः॥

१३३०। सर्वे। खित्रि परेऽनव्ययस्य सर्वेश्वरान्तपूर्वपदस्य मुम् भवति, वामनश्च भवति। मुम् एकवर्णत्वाभावादन्तेन प्रवर्तत इतीह ज्ञेयम्, किन्तु मित्करणादन्तसर्वेश्वरात् प्रवर्तते। उमावितौ इति मरामशेषः। अवैष्णवङ्कारमिति 'अन्तस्य वृष्णीन्द्रो नृसिंहे' इति वृष्णीन्द्रः। अवैष्णवोऽसीत्युक्त्वेति फलितार्थकथनम् अवैष्णवमुक्त्वेति अक्षरार्थः। ननु अवैष्णवङ्कारमित्यस्य अवैष्णवोऽसीत्युक्त्वेत्यर्थः कथं भवत्विति चेत्तत्राह करोतिरिति। वामनोदाहरणमग्रे वक्ष्यते॥

१३३१। णमु। सुगमम्॥

१३३२। अन्य। अन्यथैवं कथमित्थंसु पूर्वपदेषु सत्सु तत्तन्मात्रार्थे वर्तमानात् डु कृञ उत्तरे णमुर्भवति। तत्तन्मात्रार्थ इति अन्यथादीनामेवार्थ इत्यर्थः। एतेन कृञो गतार्थत्वमुक्तम्। एवम्

१३३३। यथातथयोर्डुक्कृञोऽसूयाप्रतिवचने।

यथाकारं तथाकारमर्चयतु, किं तवानेन? तत्तन्मात्रार्थ एव। विधिं यथाकृत्वाऽयमर्चयतु, किं तवात्र? ॥ १३३३ ॥

१३३४। कर्मणि।

प्रभुरयम् ॥ १३३४ ॥

१३३५। दृशि-विदिभ्यां साकल्ये।

वैष्णवदर्शं प्रणमति; वैष्णववेदं भोजयति; यावतो वैष्ण-

---

एवङ्कारमित्यादीत्येव पाठः। विधिमिति विधिशास्त्रोक्तक्रमम्। अत्र कृञोऽर्थो वर्त्तते, अतो णमुर्न भवति॥

१३३३। यथा। असूयया प्रतिवचनम् असूयाप्रतिवचनं तस्मिन् गम्यमाने यथातथयोः पूर्वपदयोः सतोर्डुकृञ उत्तरे णमुर्भवति। प्रतिवचनं प्रत्युत्तरम्। अयं कथमर्चयति इति केनापि कश्चिद्दृष्टः सन् असूयया प्रतिवक्ति। यथाकारमिति यथाकारं तथाकारमर्चयत्विति यथा तथा अर्चयत्वित्यर्थः। विधिमिति अत्र कृञोऽर्थो विद्यते; अतो न णमुः। असूयाप्रतिवचन इति किम्? कथमयं भुङ्क्ते इति प्रश्ने प्रतिवक्ति यथा कृत्वा भोक्ष्यते तथा द्रक्ष्यासीति स्वरूपाख्यानमेतत्॥

१३३४। कर्मणि। सुगमम्॥

१३३५। दृशि। साकल्येऽर्थे गम्यमाने कर्मणि पूर्वपदे सति दृशिविदिभ्यामुत्तरे णमुर्भवति। वैष्णवदर्शमिति पूर्वपदन्त्वमन्तमित्यादिना समासः। नन्वर्थकथने यावतो वैष्णवानित्यादिना शसन्तनिर्देशात् पूर्वपदन्त्वमन्तमित्यनेन कथं समास इति चेत् केनाप्युच्यतेतदैवं समाधेयम्। वैष्णवमित्यादौ वैष्णवपदस्य जातिपुरस्कारणैकवचनत्वं, तस्मादेकत्वेऽपि वहुबोधकत्वाद् अर्थदर्शनाय शसन्तस्यादोषः समासस्याप्यविरोधः। अथवा तत्र अमन्तपदं कर्मोपलक्षणम्। अत्र कर्मणीत्याधिकारात् अर्थकथने वहुवचनान्तदर्शनाच्च नहि कर्मणीत्युक्ते केवलामन्तं प्राप्नोतीति सर्वं समञ्जसमिति। अमन्तमित्युपलक्षणमिति

वान् पश्यति, वेत्ति, विन्दति, विन्ते वा तावत् इति, सर्वनिवेत्यर्थः ॥ १३३५ ॥

१३३६। यावति विद्लृ-जीवाभ्याम्।

यावद्वेदं भुङ्क्ते, तत्र नाग्रहं करोतीत्यर्थः। यावज्जीवं हरिं भजति ॥ १३३६ ॥

१३३७। चर्मोदरयोः पूरेः, वृष्टिप्रमाणे ऊरामहरश्च वा, वस्त्रार्थे क्नोपेः।

चर्मपूरं तिलान् ददाति। उदरपूरं वैष्णवान् भोजयति।

---

वक्ष्यते च स्वयमेव ग्रन्थकृता। वेत्ति, विन्दति, विन्ते वेत्यनेन विद् ज्ञाने, विद्लृ लाभे, विद विचारे त्रयाणामेव ग्रहणमिति सूचितम्। सामान्यग्रहणेऽपि विद् सत्तायामित्यस्य न ग्रहणं, तस्याकर्मकत्वेन कर्मोपपदत्वाभावात्, अतएव जयादित्येनोक्तं यं यं जानाति, लभते, विचारयति वा तं तं भोजयतीति। साकल्ये इति किम्? वैष्णवं दृष्ट्वा भोजयति ॥

१३३६। यावति। कर्मणि यावति पूर्वपदे सति विद्लृ लाभे, जीव प्राणधारणे इत्येताभ्यामुत्तरे णमुर्भवति। यावज्जीवमित्यत्र यावच्छब्दस्य कालवाचित्वात् कालाध्वभावदेशानामित्यादिना कर्मत्वम् ॥

१३३७। चर्मो। कर्मोणोश्चर्मोदरयोः पूर्वपदयो सतोः पूरेरुत्तरे णमुर्भवति। पूरेरिति प्रेरणण्यन्तात् पूरि आप्यायने इत्यस्मादित्यर्थः। अण्यन्तस्याकर्मकत्वात्। वृष्टि। कर्मणि पूर्वपदे सति ण्यन्तात् पूरेरुत्तरे णमुर्भवति, उरामहरश्च वा भवति, समुदायेन चेद्वृष्टिप्रमाणमवगम्यते। वस्त्रा। वस्त्रवाचके कर्मणि पूर्वपदे सति क्नोपेरुत्तरे णमुर्भवति समुदायेन चेद्वृष्टिप्रमाणमवगम्यते। क्नोपेरिति ण्यन्तात् क्नुयि शब्दे उन्धे चेत्यस्मादित्यर्थः। चर्मपूरमिति पूरयित्वेत्यर्थः। एवमुदरपूरमिति। गोष्पदप्रमिति गोष्पदं पूरयित्वेत्यर्थः; गोष्पदं गोभिः सेविते गोष्पदप्रमाणे चेति समासादिप्रकणे वक्ष्यते।

गोष्पदप्रं वृष्टो देवः, गोष्पदपूरं चेलक्नोपं वा। वस्त्रक्नोपं वा वृष्टः। इत उपमानपर्यन्तं णम्वन्तधातवोऽनुप्रयुज्यन्ते॥ १३३७॥

१३३८। निमूल-समूलयोः कषः।

निमूलकाषं कषति, निमूलं हिनस्ति इत्यर्थः॥ १३३८॥

१३३९। शुष्कचूर्णः-रुक्षेषु पिषः।

शुष्कपेषं पिनष्टीत्यादि॥ १३३९॥

१३४०। समूले हनः, अकृते डुकृञः, जीवे ग्रहः।

समूलघातं निजघान कंसम्; अकृतकारं चकार; जीवग्राहं

---

वस्त्रक्नोपमिति। 'अर्ति ह्री व्ली री क्नुयी'त्यादिना पुक् यलोपो गोविन्दश्च वस्त्रं क्नोपयित्वेत्यर्थः। चेलक्नोपमिति चेलं वस्त्रम्। इत इति उपमानपर्यन्तमिति कर्मकर्त्रुणमान इति सूत्रं वक्ष्यते, तत्पर्यन्तमित्यर्थः। धातव इति येभ्यो णमुर्विधीयते तत्र वेत्यर्थः॥

१३३८। कर्मणोर्निमूलसमूलयोः पूर्वपदयोः सतोः कष उत्तरे णमुर्भवति। तदेवानुप्रयुज्यते। निमूलकाषं कषतीति कष हिंसायाम्। अत्र कषो गतार्थत्वं ज्ञेयम्। ततश्च निमूलं कषतीत्यर्थः। एवं समूलकाषं कषतीति॥

१३३९। शुष्क। कर्मसु शुष्कचूर्णरुक्षेषु पूर्वपदेषु सत्सु पिष उत्तरे णमुर्भवति। पिषो गतार्थत्वं ज्ञेयम्। शुष्कपेषं पिनष्टीति पिष्लृ संचूर्णने, शुष्कं पिनष्टीत्यर्थः। इत्यादीत्यादिपदेन चूर्णपेषं पिनष्टि, रुक्षपेषं पिनष्टीति। चूर्णपेषं पिनष्टीति प्रयोग ओदनं पचतीतिवत्॥

१३४०। समू। कर्मणि समूले पूर्वपदे सति हन उत्तरे णमुर्भवति। अकृ। कर्मणि अकृते पूर्वपदे सति डु कृञ उत्तरे णमुर्भवति। जीवे। कर्मणि जीवे पूर्वपदे सति ग्रह उत्तरे णमुर्भवति। हन-कृञ-ग्रहां गतार्थत्वं ज्ञेयम्। समूलघातमिति 'हन्तेस्तो नृसिंहे' इति नस्य तः, 'हन हस्य घो णिण्णयोरि'ति हस्य घः वृष्णीन्द्रः समूलं निजघानेत्यर्थः। अकृतकारं चकारेति अकृतं चकारेत्यर्थः। अकृत-

जग्राह। 'पूर्वपदन्त्वमन्तग्' ( १३१२ ) इत्यादिना समासः। 'अमन्तम्' इत्युपलक्षणमेव, तेन औशसोरपि ग्रहणम्। 'समूलघातं न्यवधीदरींश्च' इति भट्टिः कर्मणीति निवृत्तम्॥ १३४०॥

१३४१। करणे।

प्रभुरयम्॥ १३४१॥

१३४२। हनः।

चक्रेण हन्ति। चक्रघातं हन्ति॥ १३४२॥

१३४३। स्नेहद्रव्ये पिषः।

स्नेहद्रव्यमार्द्रताहेतुः। घृतपेषं पिनष्टि॥ १३४३॥

---

मिति सर्वैरिति शेषः। जीवग्राहं जग्राहेति जीवं जग्राहेत्यर्थः। समूलघातमिति 'समूलान्नग्रबधीदित्यर्थः। अरीन् शत्रून्॥

१३४१। करणे। सुगमम्॥

१३४२। हनः। करणे पूर्वपदे सति हन-उत्तरे णमुर्भवति। हनो गतार्थत्वं ज्ञेयम्। चक्रेण हन्तीत्यर्थकथनं चक्रघातं हन्तीत्युदाहरणम्। पूर्वपदस्त्वमन्तमेवेति नियम उक्तो, अतश्चक्रघातमित्यादौ केवलसूत्रेण समासो भवतीति नावकलितम्। अथवा अमन्तमित्युपलक्षणमेवेत्युक्तमतस्तेनैव समासो ज्ञेयः। यद्वा, कृद्बाहुल्यात् करणोपपद इति सूत्रकरणाच्च पूर्वपदस्त्वमन्तमिति नियमोऽत्र व्यभिचरति उपेन्द्रोर्यादीति सामान्यसूत्रमपि प्रवर्तते इति केवलसामान्येन समासः। नन्वत्र कृद्ववहुलं कथं सम्भवति, सत्यमुच्यते। यथा भाष्यादौ धर्मिणो वहुलत्वाद्धर्मस्यापि वाहुल्यमिति प्रसिद्धं तदिव कृद्बाहुल्यात् कृत्कार्यस्यापि वहुलता, अतोऽत्र कृद्बाहुल्येंन कृत्कार्यस्य वहुलत्वं स्वीकृतमिति न कश्चिद्विरोध इति। एवमुत्तरत्रापि ज्ञेयम्॥

१३४३। स्नेह। करणे स्नेहद्रव्ये पूर्वपदे सति पिषउत्तरे णमुर्भवति। पिषो गतार्थत्वं ज्ञेयम्। स्नेहद्रव्यलक्षणमाह स्नेहद्रव्यमाद्रताहेतुरिति। घृतपेषं पिनष्टीति घृतेन पिनष्टीत्यर्थः। आद्रता-

१३४४। हस्तार्थे वर्ति-ग्रहिभ्याम्।

हस्तवर्तं वर्तयति। करग्राहं गृह्णाति॥१३४४॥

१३४५। स्वे पुषः।

स्वेन पुष्णाति—स्वपोषं पुष्णाति। 'स्वे' इत्यनेनेह आत्मीय-धन-गो-ज्ञाति-मित्रादिष्वप्युदाहार्यम्। करण इति निवृत्तम् ॥१३४५॥

१३४६। चक्रे बन्धः।

---

हेतुरित्युक्तमत उदपेषं पिनष्टीत्यपि उदकेन पिनष्टीत्यर्थः। 'धिपेष-वासवाहनेष्वि'ति उदकस्य उदः॥

१३४४। हस्ता। करणे हस्तवाचके पूर्वपदे सति वर्ति-ग्रहिभ्यामुत्तरे णमुर्भवति। वर्तिग्रह्योर्गतार्थत्वं ज्ञेयम्। वर्तिर्ण्यन्तः। हस्तवर्तं वर्तयतीति हस्तेन वर्तयतीत्यर्थः। करग्राहं गृह्णातीति करेण गृह्णातीत्यर्थः॥

१३४५। स्वे। करणे स्वे पूर्वपदे सति पुष पुष्टावित्यस्मादुत्तरे णमुर्भवति, पुषो गतार्थत्वं ज्ञेयम्। स्वेन पुष्णातीत्यर्थकथनं स्वपोषं पुष्णातीत्युदाहरणम्। स्वे इत्यनेनेहेति। उदाहरणानि यथा—आत्मपोषं पुष्णाति, आत्मीयपोषं पुष्णाति, स्वीयपोषं पुष्णाति, धनपोषं पुष्णाति, गोपोषं पुष्णाति, ज्ञातिपोषं पुष्णाति, पितृपोषं पुष्णातीत्यादीनि। अर्थास्तु आत्मना पुष्णातीत्यादयः। अयमत्र भावः। स्वशब्दोऽत्र अभि-धेयपरः अतः, 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति नानार्थवर्गात् स्वशब्देन ज्ञात्यात्मात्मीयधनानि लब्धानि तत्र च ज्ञात्यादीनां स्वरूपानां पर्यायाणाञ्च ग्रहणमिति ज्ञातिशब्देन पित्रादेरपि ग्रहणं सिद्धम्, आत्मशब्देन स्वादेरपि ग्रहणं सिद्धम्, आत्मीयशब्देन स्वीयादेरपि ग्रहणं सिद्धं, धनशब्देन गवादेरपि ग्रहणं सिद्धमिति।

१३४६। चक्रे। चक्रे बन्ध इति गुप्तौ बध्नातीति च अर्थ-कथनम्। बध्नातीत्यत्र शिष्टप्रयोगानुसारेण निपातनात् नरामहरः। किम्वा बधि बन्धने इंत्यनेन तुल्यार्थस्य बधधातोर्वानुप्रयोग इति

चक्रबन्धं बद्धः; गुप्तौ बध्नाति—गुप्तिबन्धं बध्नाति इत्यादयस्तु संज्ञायां ज्ञेयाः। इह 'मयूरिकाबन्धं बद्धः, चाण्डालिकाबन्धं बद्धः' इत्युपमाने कर्मणि णमुरिति भाष्यम् ॥१३४६॥

१३४७। कर्त्रोर्जीव-पुरुषयोर्नशि-वहिभ्याम्।

जीव एव सन्नष्टः—जीवनाशं नष्टः। पुरुषः सन् वहति—पुरुषवाहं वहति। पुरुषः प्रेष्यो भूत्वा वहतीत्यर्थः। इति जयादित्यः ( काशिका ३।४।४३ ) ॥ १३४७ ॥

१३४८। ऊर्ध्वकर्तरि शुषि-पूरिभ्याम्।

ऊर्ध्वः शुष्यति— ऊर्ध्वशोषं शुष्यति। एवम् ऊर्ध्वपूरं पूर्यते। पूरी आप्यायने दिवादावात्मपदी ॥ १३४८ ॥

१३४९। कर्मकर्त्रुपमाने।

---

समाधेयम्। चक्रबन्धं बद्धः, गुप्तिबन्धं बध्नातीत्यादयो णम्वन्तप्रयोगास्तु, संज्ञायां ज्ञेयाः तस्मादेतदर्थ लक्षणकरणमप्रयोजनकमेवेतिभावः। इत्यादय इत्यादिपदेन क्रौञ्चबन्धं बद्धो, अट्टालिकाबन्धं बद्ध इत्यादिग्रहणम्। इहेति उक्तानां मध्ये मयूरिकाबन्धं बद्धः। इत्यादिद्वये उपमाने कर्मणि णमुरिति भाष्यकारमतं, भाष्यमते मयूरिकामिव बद्ध इत्याद्यर्थो ज्ञेयः। बद्ध इति कर्तरि क्तः ॥

१३४७। कर्त्रो। कर्त्रोर्जीवपुरुषयोः पूर्वपदयोः सतोर्नशिवहिभ्यामुत्तरे णमुर्भवति। अत्र क्रमो ज्ञेयः। नशिवह्योर्गतार्थत्वं ज्ञेयम्। जीव एव सन्नष्ट इत्यर्थकथनं पुरुषः सन् वहतीत्यर्थकथनम्। वहतिरत्र कर्मकरणार्थ इति जुमरमतम् ॥

१३४८। ऊर्ध्व। ऊर्ध्वे कर्तरि पूर्वपदे सति शुषिपूरिभ्यामुत्तरे णमुर्भवति। शुषिपूर्योर्गतार्थत्वं ज्ञेयम्। ऊर्ध्वः शुष्यतीत्यर्थकथनम्। ऊर्ध्व इति ऊर्ध्वः सन्नित्यर्थः। ऊर्ध्वशोषमिति शुष शोषणे। ऊर्ध्वपूरं पूर्यत इति ऊर्ध्वः सन् पूर्यत इत्यर्थः ॥

१६४९। कर्म। उपमीयते येन तदुपमानं कर्मोपमाने कत्रुपमाने च पूर्वपदे सति धातोरुत्तरे णमुर्भवति, धातोर्गतार्थत्वं ज्ञेयम्।

रत्नमिव निहितः—रत्ननिधायं निहितः कृष्णः। अज इव नष्टः—अजनाशं नष्टः कंसः। व्यवधानेऽपि दृश्यते—घृतनिधाय-मदकं निदधाति। निवृत्तोऽनुप्रयोगः ॥ १३४९ ॥

१३५०। इतो विकल्पेन समासः।

विभुरयम् ॥ १३५० ॥

१३५१। तृतीयायामुपदंशेर्द्वितीयधात्वेककर्मकाच्च हिंसार्थात्।

आमलकोपदंशं भुङ्क्ते, आमलकेनोपदंशं भुङ्क्ते भक्तम्। दण्डोपघातं, दण्डेनोपघातं वा गाः कालयति। 'एककर्मकात्' इति किम्? दण्डेनोपहत्य व्याघ्रं गा कालयति ॥ १३५१ ॥

---

रत्नमिव निहित इत्यर्थकथनम्। रत्ननिधायमिति डु धाञ् धारण-पोषणयोः, 'आतो युगिणि नृसिंहकृति चे'ति युक्। रत्नशब्दोऽत्र कर्मणः कृष्णस्य उपमानम्। अज इव नष्ट इत्यर्थकथनम् अजशब्दोऽत्र कर्तुः कंसस्योपमानम्; अजश्छागः। व्यवधानेऽपि दृश्यते इति अनुप्रयोग इति शेषः। घृतनिधायमिति घृतमिव उदकं निदधातीत्यर्थः ।।

१३५०। इतो। इतः परं विकल्पेन समासो भवति ।।

१३५१। तृती। तृतीयान्ते पूर्वपदे सति उपदंशेरुत्तरे णमु-र्भवति, विकल्पेन समासश्च। द्विती। एकं कर्म यस्य स एककर्मकः द्वितीयधात्वेककर्मकस्तस्माद्धिसार्थाद्धातोरुत्तरे तृतोयान्ते पूर्वपदे सति णमुर्भवति, विकल्पेन समासश्च। आमलकोपदंशं भुङ्क्ते इति दन्श दंशने। आमलकी वृक्षविशेषः, तस्याः फलमामलकं, तस्यात्र करणत्वमेव विवक्षितम्। समासाभावपक्षे, आमलकेनोपदंशमिति। भक्तमन्नम्। दण्डोपघातं गाः कालयतीति हनधातोः कालयतेश्च गाव एव कर्मणि, अतो द्वितीयधातुना सह हनधातोरेककर्मकता। कालधातुश्चुरादिर्विक्षे-पार्थ इत्यन्यैरुक्तं ग्रन्थकारैश्चुरादौ गणनार्थत्वेन लिखितः। समासा-भावपक्षे दण्डेनोपघातमिति। दण्डेनोपहत्येति अत्र हन्तेर्व्याघ्रः कर्मः, कालयतेर्गावः कर्माणीति न णमुः, किन्तु क्त्वैव ।।

१३५२। सप्तमी-तृतीययोरुप-पीड़ाद्रुधि-कृषि-भ्याञ्च, धातुमात्रात्तु सन्निधानगतावायामगतौ च।

पार्श्वोपपीड़ं शेते। 'हस्तरोधं दधद्धनुः' इति भट्टिः (५।३२)। पाणिकर्षं कंसं निन्ये। 'विशेषानुपादानात् पाण्युपकर्षमित्यपि' इति पुरुषोत्तमः ( भाषावृत्तिः ३।४।४९ )। 'सर्वत्रैवोपपूर्वत्वे सति' जयादित्यः ( काशिका ३।४।४९ )। पक्षे—पार्श्वे, पार्श्वेन वा उपपीड़मित्यादि। उत्तरत्र चासमासो ज्ञेयः। एवं हस्तग्राहं नृत्यति रासे। द्व्यंगुलोत्कर्षं दण्डिकां छिनत्ति॥ १३५२॥

---

१३५२। सप्त। सप्तम्यन्ते तृतीयान्ते च पूर्वपदे सति उपपूर्वात् पीड़ अवगाहन इत्यस्मात् रुधिर आवरणे, कृष विलेखनाकर्षणयो-रित्येताभ्याञ्चोत्तरे णमुर्भवति, विकल्पेन समासश्च। धातु। सन्नि-धानगतौ आयामगतौ च गम्यमानायां सप्तम्यन्ते तृतीयान्ते च पूर्वपदे सति धातुमात्रादुत्तरे णमुर्भवति, विकल्पेन समासश्च। सन्निधानं सन्निकर्षः; 'सन्निधिः सन्निकर्षणमि'त्यमरः। आयामो दैर्घ्यम्। 'दैर्घ्य-मायाम आरोहः' इत्यमरः। पार्श्वोपपीड़मिति वाहुमूले उभौ कक्षौ 'पार्श्वमस्त्री तयोरधः' इत्यमरः। रुधधातोर्महाकविप्रोक्तमुदाहरणं दर्शयति, हस्तरोधं दधद्धनुरिति। विशेषानुपादानादिति रुधिकृषिभ्या-मित्येवोक्तमतो विशेषानुपादानं सर्वत्रैवेति। तत्र जयादित्यमते गोस्वामिचरणानां सम्मतिर्नास्तीति पूर्वमेव भट्टिप्रयोगो दर्शितः। पक्ष इति समासभावपक्ष इत्यर्थः। इत्यादिरिति इत्यादिरसमासो ज्ञेय उत्तरत्र च एवं क्रमेण असमासो ज्ञेय इत्यर्थः। समासो ज्ञेय इति पाठस्त्वसभ्यः। हस्तग्राहं नृत्यति रास इति। अत्र सन्निधानगति-र्गम्यते, पक्षे हस्ते हस्तेन वा ग्राहं नृत्यति रास इति। द्यङ्गुलोत्-कर्षमिति अत्रायामस्य गतिर्गम्यते। गतिः सञ्चारः। आयामगतौ चेत्तत्र आयामे चेति वा पाठः। दण्डिकामिति लघुदण्डमित्यर्थः। द्वयोरंगुल्योः समाहार इति द्व्यंगुलम्। द्व्यंगुलत्र्यंगुले साधुनी इति तद्धितप्रकरणे वक्ष्यते। पक्षे, द्व्यंगुलेन वा उत्कर्षमिति॥

१३५३। अपादाने कर्मणि च त्वरायाम्।

शय्योत्थायं गां दोग्धि। शृङ्गग्राहं वारयति हरिः। अत्वरायाञ्च दृश्यते। 'एकवर्जम्' इति धातुविभक्तिवर्जमिति च॥१३५३॥

१३५४। जीवनाहेतौ परिक्लिश्यमाने च स्वाङ्गकर्मणि।

अक्षिनिकोचं हसति—उरःपेषं युध्यते। नेह—शिर उत्क्षिप्य पश्यति॥ १३५४॥

१३५५। कर्मणि विशि-पति-पदि-स्कन्दिभ्यो द्रव्यस्य व्याप्तिश्चेत्, क्रियायाश्च नित्यता चेत्।

---

१३५३। अपा। त्वरायां गम्यमानायाम् अपादाने कर्मणि च पूर्वपदे सति धातोरुत्तरे णमुर्भवति विकल्पेन समासश्च। शय्योत्थायमिति 'उदस्थास्तम्भोः सस्य हर' इति सस्य हरः। त्वरया मुखप्रक्षालनमपि न करोतीत्यर्थः। पक्षे शय्याया उत्थायमिति। शृङ्गग्राहमिति त्वरया दण्डग्रहणमपि न करोतीत्यर्थः। पक्षे शृङ्गं ग्राहमिति। अत्वरायाञ्चेति अत्वरायाञ्च णमुर्दृश्यते। एकवर्जमिति एकं वर्जयित्वेत्यर्थः॥

१३५४। जीव। जीवनाहेतौ परिक्लिश्यमाने च स्वाङ्गे कर्मणि पूर्वपदे सति धातोरुत्तरे णमुर्भवति, विकल्पेन समासश्च। जीवनाहेताविति जीवनस्य अहेतुरिति विग्रहः। परिक्लिश्यमाने पीड्यमाने। अक्षिनिकोचमिति कुच कौटिल्ये तुदादिः। अक्षि चक्षुः। अक्षि न जीवनस्य हेतुः। पक्षे, अक्षिणी निकोचमिति। उरःपेषं युध्यत इति, उरो वक्षः। अत्र उरसः परिक्लिश्यमानत्वम्। युध संप्रहारे, दिवादिरात्मपदी। उरःशब्दस्य ब्रह्मत्वात् पक्षेऽपि उरः पेषमिति। एवं शिरःपेषं युध्यते इति। शिर उत्क्षिप्येति शिरसो जीवनाहेतुत्वं परिक्लिश्यमानत्वञ्च नास्तीति न णमुः। शिरो मस्तकम्॥

१३५५। कर्म। कर्मणि पूर्वपदे सति विश प्रवेशने, पतॢ गतौ, स्कन्दिर गतिशोषणयोरित्येतेभ्य उत्तरे णमुर्भवति, विकल्पेन

गेहप्रवेशमास्ते। असमासे द्विरुक्तिः—गेहं गेहं प्रवेशमास्ते हरिः। एवं प्रत्यादयः ॥ १३५५ ॥

१३५६। क्रियाव्यवधाने काले कर्मण्यस्यतितृषिभ्याम्।

द्व्यहात्यासं भुङ्क्ते, द्व्यहतर्षं पिबति, द्व्यहमतिक्रम्येत्यर्थः ॥१३५६॥

१३५७। नामशब्दे कर्मण्यादिशिग्रहिभ्याम्।

नामादेशमाचष्टे। नामग्राहं स्तौति हरिम् ॥ १३५७ ॥

१३५८। उपात् किरतौ सुट् च विक्षिप्य लवने।

उपस्कारं लुनाति ॥ १३५८ ॥

---

समासश्च। चेद्यदि द्रव्यस्य व्याप्तिर्भवति यदि च क्रियायाश्च नित्यता भवति। व्याप्तिः साकल्येन सम्बन्धः। गेहप्रवेशमास्ते इति अत्र द्रव्यस्य गेहस्य व्याप्तिः प्रतीयते। क्रियाया नित्यतायामुदाहरणान्तरं ज्ञेयम्। असमास इति, असमासपक्षे द्विरुक्तिर्भवति। आभीक्ष्न्यवीप्सयोरित्यनेनैव द्विरुक्तिर्भवति, किन्तु समासपक्षे न भवतीति। व्यञ्जयितुम् असमासे द्विरुक्तिरित्युक्तम् ॥

१३५६। क्रिया। क्रियाव्यवधानं यत्र तादृशे कालवाचके कर्मणि पूर्वपदे सति असु क्षेपणे ञि तृषा पिपासायामित्येताभ्यामुत्तरे णमुर्भवति, विकल्पेन समासश्च। द्व्यहात्यासमिति पक्षे द्व्यहमत्यासमिति। द्व्यहतर्षमिति पक्षे द्व्यहं तर्षमिति। द्वयोरह्नोः समाहारमिति द्व्यहः। राजाहसखिभ्य इति केशवारामः ॥

१३५७। नाम। नामशब्दे कर्मणि पूर्वपदे सति आदिशि ग्रहिभ्यामुत्तरे णमुर्भवति विकल्पेन समासश्च। नामादेश इति दिश अतिसर्जने (दाने)। पक्षे नामान्यादेशमिति। नामग्राहमिति पक्षे नामानि ग्राहमिति ॥

१३५८। उपात्। विक्षिप्य लवने गम्यमाणे उपादुत्तरस्मात् किरतेरुत्तरे णमुर्भवति। किरतौ परे उपादुत्तरे सुट् च भवति। लवनं छेदनम्। उपस्कारं लुनाति इति कॄ विक्षेपे विक्षिप्य लुनातीत्यर्थः ॥

१३५९। क्त्वा-णमू।

प्रभुरयम् ॥ १३५९ ॥

१३६०। अव्यये करोतेरयुक्ताख्यायां, तिर्यचि क्रियासमाप्तौ।

'व्रजेश्वर ! पुत्रस्ते जातः' इति नीचैः कृत्वाचष्टे, नीचैः-कृत्य, नीचैःकारम्वा। उच्चैराख्यानमिह युक्तम्।

"आवेदयन्तः क्षितिपालमुच्चैः-
कारं मृतं रामवियोगशोकात्।" ( भट्टिः ३।४६ )

अत्र क्त्वापक्षौ च ज्ञेयौ। नीचैरिहाख्यानं युक्तम्। प्रियत्वेऽप्ययुक्तं दृश्यते, यथा—'कृष्ण ! काचित्त्वय्यनुरक्तास्ति' इत्युच्चैः-

---

१३५९। क्त्वा-णमू। सुगमम्॥

१३६०। अव्य। अयुक्ताख्यायां गम्यमानायाम् अव्यये पूर्वपदे सति करोतेरुत्तरे क्त्वा-णमू भवतः। क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च। अयुक्ताख्या अनुचिताख्यानम्। तिर्य। क्रियासमाप्तौ गम्यमानायां तिर्यचि पूर्वपदे सति करोतेरुत्तरे क्त्वा-णमू भवतः; क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च। व्रजेश्वरेति सम्बोधने, व्रजेश्वरो नन्दः। आचष्टे ब्रवीति। क्त्वान्तस्य समासपक्षे नीचैः-कृत्येति, असमासपक्षे नीचैः कृत्येति। णम्वन्तस्य समासपक्षे असमासपक्षे च नीचैःकारमिति। नीचैःशब्दोऽव्ययम्। युक्तमुचितम्। आवेदयन्त इति रामवियोगशोकान्मृतं क्षितिपालम् उच्चैःकारमावेदयन्त इत्यन्वयः। क्षितिपालं दशरथम्। समासपक्षे च उच्चैःकारमिति। अत्र क्त्वा-पक्षौ च ज्ञेयाविति। उच्चैःकृत्य, उच्चैः कृत्वेति। उच्चैःशब्दोऽप्य-व्ययम्। प्रियत्वेऽपीति। उच्चैःशब्दयोगे अप्रियत्वे अयुक्तमाख्यानं विद्यत एव प्रियत्वेऽपि अयुक्तमाख्यानं दृश्यते। कृष्णेति सम्बोधने। काचिद्गोपी। नीचैरिहाख्यानं युक्तं किन्त्वाख्यानस्य प्रियत्वमस्त्ये-वेति। प्रक्रियातु चिन्त्येति। प्रक्रियाकार उच्चैःशब्दप्रयोगे प्रियत्वे

कारमाचष्टे, उच्चैः कृत्वा, उच्चैःकृत्य वा। प्रक्रिया (पा ३।४।५९) तु चिन्त्या। तथा, तिर्यक्कृत्य गतः इत्यादि ॥ १३६० ॥

१३६१। तस्प्रत्ययान्त-स्वाङ्गे कृ-भूभ्याम्।

मुखतःकृत्य गतः इत्यादि ॥ १३६१ ॥

१३६२। नानेत्यव्यये धात्वर्थप्रत्यये चाभूत-तद्भावे।

अनाना नाना कृत्वेत्यर्थे नानाकृत्य गतः इत्यादि। तथा द्विधाकृत्येत्यादि। एवं द्वेधा, द्वैधम् ॥ १३६२ ॥

---

अयुक्तमाख्यानं न मन्यत इति। तिर्यक्कृत्य गत इति समाप्य गत इत्यर्थः। तिरोऽञ्चतीति तिरःशब्दपूर्वादञ्चतेः। क्विप्. नरामहरः। 'सहस्य सध्रिः समः समिस्तिरस्तिरिरची'त्यनेन तिरसस्तिरि इरामस्य यराम इति क्विबन्तस्तिर्यक्शब्दः। इत्यादीत्यादिपदेन तिर्यक् कृत्वा तिर्यक्कारमिति। अव्ययस्य तिर्यगित्यस्य प्रयोगोऽयं योगः प्रवर्तत इति कैश्चिदुक्तं, किन्तु दिक्शब्दत्वाभावादत्र व्याकरणेऽव्ययत्वं न सिध्यतीति ज्ञेयम्॥

१३६१। तस्। तस्प्रत्ययान्तस्वाङ्गे पूर्वपदे सति कृ-भुभ्यामुतरे क्त्वा-णमू भवतः। क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च। मुखत इति सप्तम्यन्तात् तसिप्रत्ययस्तद्धितः। इत्यादीत्यादिपदेन मुखतः कृत्वा, मुखतःकारं, मुखतोभूय, मुखतो भूत्वा, मुखतोभावमिति॥

१३६२। नाना। नानेत्यव्यये। धात्वर्थप्रत्ययान्ते च पूर्वपदे सति अभुततद्भावेऽथ कृभूभ्यामुत्तरे क्त्वा-णमू भवतः। क्त्वान्तस्य च णम्वन्तस्य च विकल्पेन समासश्च। इत्यादीत्यादिपदेन नाना कृत्वा, नानाकारं, नानाभूय, नानाभूत्वा, नानाभावमिति। द्विधाकृत्वेति क्रियाप्रकारवृत्तेः संख्याया धा इत्यनेन धाप्रत्ययः। आदिपदेन द्विधा-कृत्वा, द्विधाकारं, द्विधाभूय, द्विधाभूत्वा, द्विधाभावमिति। धात्वर्थ-प्रत्यय इत्युक्तम् अत आह। एवं द्वेधा द्वैधमिति। तदुदाहरणं—

१३६३। तूष्णीमि भुवः।

तूष्णीम्भूयास्त इत्यादि॥ १३६३॥

१३६४। अन्वच्यानुकूल्ये।

अन्वग्भूयास्त इत्यादि। उक्ता विकल्पसमासाः। क्त्वा-णमू च निवृत्तौ॥ १३६४॥

१३६५। तुमु-णकौ तत्क्रियार्थत्वे।

क्रिया—धात्वर्थः। उणावितौ। यस्माद्धातोस्तुमुणकौ क्रियेते, तस्यैव धातोरर्थो यदि प्रयोजनं, तदा तुमुणकौ भवतः। 'तुमुन्-ण्वुलौ' इति पाणिनीयाः ( ३।३।१० )। ते हि वोरकं, योरनं, झस्यान्तमादिशन्ति। द्रष्टुं सेवितुं हरिं व्रजति, दर्शकः सेवको व्रजति; दर्शनार्थं, सेवनार्थमित्यर्थः॥ १३६५॥

---

द्वेधा कृत्वेत्यादि, द्वैधं कृत्वेत्यादि। द्विधा त्रिधा स्थाने द्वेधा द्वैधमित्यादि चेति तद्धितप्रकरणे वक्ष्यते॥

१४६३। तूष्णीमि। तूष्णीमि पूर्वपदे सति भुव उत्तरे क्त्वा-णमू भवतः। क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च। भुव इति कृतं, कृञो निवृत्त्यर्थम्, अन्यथा तस्याप्यनुवृत्तिः स्यात्। आदिपदेन तूष्णीम्भूत्वा, तूष्णीम्भावमिति॥

१३६४। अन्व। आनुकूल्ये गम्यमाने अन्विति पूर्वपदे सति भुव उत्तरे क्त्वा-णमू भवतः; क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च। अन्वग्भूयेति अनुकूलो भूत्वेत्यर्थः। आदिना अन्वग्भूत्वा अन्वग्भावमिति॥

१३६५। तुमु। तत्क्रियार्थत्व इति अर्थशब्दः प्रयोजनवाची धात्वर्थस्य प्रयोजनत्वे सतीत्यर्थः। एतदेवाह यस्माद्धातोरिति। ते हीति ते हि पाणिनीयाहिः वोः स्थाने अकमादिशन्ति,ः यो स्थाने अनम् आदिशन्ति, झस्य स्थाने अन्तमादिशन्ति, अतो णक-णवुनो-रैक्यम्। द्रष्टुमिति दृशिर प्रेक्षणे, 'सृजिदृशोरमकपिलवैष्णवे' इत्यम् ऋरामस्य रः। सेवितुमिति सेवृ-सेवने॥

१३६६। इच्छार्थे शक्यादौ कालादौ च योज्ये तुमुरेव।

'योज्य' ग्रहणं पूर्वपदत्वनिरासार्थम्। द्रष्टुमिच्छति, वष्टि, वाञ्छति वा; तथा द्रष्टुं शक्नोति, धृष्णोतीत्यादि। शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-गम-सह-अर्ह-सत्तार्थः शक्यादिः।

कालादौ तु योज्ये दर्शनादिधात्वर्थो यदि कालादेः प्रयोजनं स्यात्, तदा तत्तद्धातोस्तुमुर्मन्तव्यः। कालोऽयं द्रष्टुं, समयो वेला वा। आदिशब्दान्मन्तुं मनः, द्रष्टुं चक्षुः, श्रोतुं श्रवणमित्यादि। 'वक्तुं जड़ः' इति च 'मशकार्थोऽयं धूमः' इतिवद्दृश्यते। तथा समर्थपर्याये—समर्थो भोक्तुं, पर्याप्तो भोक्तुम्, अलं भोक्तुमित्यादि च ॥ १३६६ ॥

---

१३६६। इच्छा। इच्छार्थे धातौ शक्यादौ धातौ कालादौ शब्दे च योज्ये सति धातोरुत्तरे तुमुरेव भवति। सूत्रे योज्य इत्युक्त्वा तत्फलमाह योज्यग्रहणमिति। योज्य इत्यनुक्ते इच्छार्थादीनां पूर्वपदत्वेनैव योजना स्यात् इदानीन्त्वेतेषां योग एव भवतीति। शकॢ शक्तौ, ञि धृषा प्रागल्भ्ये, ज्ञा अवबोधने, ग्लै हर्षक्षये, घट चेष्टायां, रभ राभस्ये, डु लभष प्राप्तौ, क्रमु पादविक्षेपे, गमॢ गतौ, सह मर्षणे, अर्ह पूजायां, सत्तार्थो भूप्रभृतिः। शकॢ शक्तावित्यस्य तदर्थस्य च ग्रहणमितितु जुमरमतम्। एतेन धृषादीनामपि अर्थग्रहणं ज्ञेयमिति। कालादौ योज्य इति सामान्यत उक्त्वा तत्र विशेषमाह कालादाविति। दर्शनादीति दर्शनादिश्चासौ धात्वर्थश्चेति विग्रहः। तद्धातोरिति दृश्यादिधातोरित्यर्थः। कालोऽयं द्रष्टुमिति कालस्य प्रयोजनं दर्शनमिति। मन्तुं मन इति मनसः प्रयोजनं ज्ञानमिति। द्रष्टुं चक्षुरिति चक्षुषः प्रयोजनं दर्शनमिति। श्रोतुं श्रवणमिति श्रवणस्य प्रयोजनं श्रवणमिति। श्रवणमिति कर्णेन्द्रियमित्यर्थः। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। वक्तुं जड़ इतिच मशकार्थोऽयं धूम इति वद्दृश्यते इति। मशकार्थो धूम

१३६७। कर्मण्यण् तुम्वर्थे।

कृष्णसेवो याति, कृष्णगायो याति। वाहुल्यात्— कृष्णं सेवितुमित्यादि ॥ १३६७ ॥

१३६८। प्रादिव्यवहितेऽपि कृच्छ्रार्थ-दुरि खल् भावकर्मणोः, अकृच्छ्रार्थे ईषति सौ च।

अरामशेषः ॥ १३६८ ॥

१३६९। उपेन्द्राल्लभेर्नुम् खल्-घणोर्न सुदुर्भामन्योपेन्द्र-रहिताभ्याम्।

कृच्छ्रे—दुष्प्रलम्भं दुर्लभं भवता; दुष्प्रलम्भः, दुर्लभः कृष्णो

---

इत्यत्र यथा मशकस्य प्रयोजनता नास्ति, तथात्र वचनस्य प्रयोजनता नास्तीति। तथाच मशकार्थ इति मशकवारणार्थोऽयं धूम इत्यर्थः। तदिव वक्तुमित्यत्र वचनासमर्थोऽयं जड़ इत्यर्थः। तथेति समर्थपर्याये योज्येऽपि तुमुर्भवति। आदिशब्दादेवेति शेषः॥

१३६७। कर्म। कर्मणि पूर्वपदे सति तुम्वर्थे अण् भवति। कृष्णसेव इति उपेन्द्रादित्यादिना समासः। कृष्णं सेवितुमित्यर्थः। कृष्णगाय इति 'आतो युगिणि नृसिंहकृति च, इति युक् कृष्णं गातुमित्यर्थः। वाहुल्यादिति आदिपदेन कृष्णं गातुमिति।

१३६८। प्रादि। प्रादिव्यवहितेऽपि कृच्छ्रार्थे दुरि पूर्वपदे सति भावकर्मणोर्वाच्ययोर्धातोरुत्तरे खल् भवति। कृच्छ्रं कष्टम्। अकृ। कृच्छ्रार्थे ईषति, सौ च पूर्वपदे भावकर्मणोर्वाच्ययोर्धातोरुत्तरे खल् भवति, खलावितौ॥

१३६९। उपे। खल्घणोः परयोरुपेन्द्रादुत्तरस्य लभेर्नुम् भवति। घण् वक्ष्यते। अन्योपेन्द्ररहिताभ्यां सुदुर्भ्यामुत्तरस्य लभेर्नुम् न भवति। कृच्छ्र इति उदाह्रियते इति शेषः। दुष्प्रलम्भमिति भावेऽत्र प्रशब्देन व्यवहितत्वम् अतो नुमपि। अपिशब्दादव्यवहितत्वेऽपि दुर्लभमिति।

भवता। अकृच्छ्रे—ईषत्प्रलम्भम्, ईषल्लभम्; सुप्रलम्भं, सुलभं भवता। ईषत्प्रलम्भः, ईषल्लभः; सुप्रलम्भः, सुलभः कृष्णो भक्तिमता। अन्योपेन्द्ररहिताभ्यामिति किम्? अतिसुलम्भः, अतिदुर्लम्भः। कथम् 'अतिसुलभः, अतिदुर्लभः'? पश्चादतिना समासः। अन्येति किम्? सुदुर्लभः॥ १३६९॥

१३७०। मि-मी-लियां खललोरात्वनिषेधः।

दुर्निमयः इत्यादि॥ १३७०॥

१३७१। दुरादौ कर्तृपूर्वपदाद्भुवः कर्मपूर्वपदात् डुकृञश्चाभुततद्भावे पूर्ववत् खल्।

कर्तृकर्मणी अत्र तत्तद्विशेषणे ज्ञेये। तत्र कर्तृपूर्वभुवः—

---

अत्र नुमो निषेधः। दुष्प्रलम्भो दुर्लभ इति कर्मणि कृच्छ्रेण लभ्यते इत्यर्थः। अकृच्छ्र इति उदाह्रियत इति शेषः। ईषत्प्रलम्भमिति भावेऽत्र प्रशब्देन व्यवहितत्वम्। अव्यवहितत्वे ईषल्लभमिति। एवं सुप्रलम्भं सुलभमिति। नुम्विधानसूत्रे अनव्ययस्येत्युक्तमतोऽत्र न नुम्। ईषत्प्रलम्भ इत्यादि कर्मणि अकृच्छ्रेण लभ्यते इत्यर्थः। भक्तिमता जनेन अतिसुलम्भो अतिदुर्लम्भ इति। अत्र अन्योपेन्द्र-सहितत्वात् न नुम्निषेधः। कथमिति सिद्धान्तमाह पश्चादिति। सुदुर्लभ इति अत्र अन्योपेन्द्रसहितत्वाभावान्नुम्निषेधः एव॥

१३७०। मिमी। डु मिञ प्रक्षेपणे, मीङ हिंसायां, लीङ श्लेषणे इत्येषां खलनोः परयोरात्वनिषेधः स्यात्। डु मिञ्मीङो-मिनाति, मिनुते, मीयते। दीङारामान्तपाठः, इत्यादिना लीङ्लियो-र्लीयतेर्लिनात्योर्बेत्यनेन आत्वे प्राप्ते निषेधः। अनो वक्ष्यते। दुर्निमय इति प्रादिव्यवहितेऽपीत्यादिना कर्मणि खल्॥

१३७१। दुरा। अभूततद्भावेऽर्थे दुरादौ पूर्वपदे सति कर्तृ-पूर्वपदाद्भुव उत्तरे कर्मपूर्वपदात् डु कृञ उत्तरे खल् भवति। पूर्व-वदित्यनेन कृच्छ्रार्थदुरि अकृच्छ्रार्थ ईषति सौ चेति भावकर्मणोरिति

अदुर्भक्तेन दुर्भक्तेन भूयते इत्यर्थे दुर्भक्तम्भवं भवता; पूर्वमकृच्छ्रं भक्तस्य भवतः सम्प्रति कृच्छ्रेण भक्तिरित्यर्थः। एवमनीषद्भक्तेन ईषद्भक्तेन भूयते—ईषद्भक्तम्भवम्; सुभक्तम्भवम्। कर्मपूर्वात् डुकृञः—अदुर्भक्तो दुर्भक्तः क्रियते—दुर्भक्तङ्करः; एवमीषद्भक्तङ्करः। असुभक्तः सुभक्तः क्रियते—सुभक्तङ्करो वैष्णवो भवता॥ १३७१॥

१३७२। आरामादनः खलर्थे, न तु खल्।

दुर्याणं हरिपदं भवता। दीङ्श्चारामान्तपाठात् दुरुपादानम्॥ १३७२॥

१३७३। अदरिद्रातेरिति वाच्यम्।

ईषद्दरिद्रं भवता; अकृच्छ्रेण भवतो दारिद्र्यमित्यर्थः॥१३७३॥

---

च लब्धम्। कर्तृकर्मणी इति तत्तद्विशेषणे कर्तृकर्मविशेषणे ज्ञेये इति उपचारेणेति भावः। कर्तृपूर्वभुव इति उदाहरणं दर्श्यते इति शेषः। दुर्भक्तम्भवमिति भावे 'सर्वेश्वरान्तपूर्वपदस्यानव्ययस्य मुम् वामनश्च खिति' इत्यनेन मुम्। ईषद्भक्तम्भवमिति च भावे पूर्वं कृच्छ्रभवतस्य भवतः। सम्प्रति अकृच्छ्रेण भक्तिरित्यर्थः। कर्मपूर्वं डु कृञ इति उदाहरणं दर्श्यते इति शेषः। अदुर्भक्तो अकृच्छ्रभक्तः, दुर्भक्तः, कृच्छ्रभक्तः, दुर्भक्तङ्कार इति कर्मणि। ईषद्भक्तङ्कर इति। अनीषद्भक्तः ईषद्भक्त क्रियते इत्यर्थः। अनीषद्भक्तः कृच्छ्रभक्तः, ईषद्भक्तो अकृच्छ्रभक्तः। एवम् असुभक्तः सुभक्त इति ज्ञेयम्॥

१३७२। आरा। आरामान्ताद्धातोरुत्तरे खलर्थे अनो भवति, खल्तु न भवति। कर्मण्यण् तुम्वर्थे इत्यत्र कृष्णं सेवितुमित्यादि चेत्युक्तम्। अत्रतु तथा न भवतीति सूचयितुं न तु खलिति कृतम्। दुर्याणमिति कृच्छ्रेण यायते इत्यर्थः। हरिपदं गोलोकादि। दुरुपादानमिति दीङ क्षये। मीनातीत्यादिना आरामान्तपाठः॥

१३७३। अद। दरिद्राभिन्नादारामान्तादिति वाच्यं तस्माद्दरिद्राधातोरुत्तरे अनो न भवतीत्यर्थः। ईषद्दरिद्रमिति अकृच्छ्रार्थे ईषति

१३७४। शासि-युधि-दृशि-मृषिभ्यश्चानो वा खलर्थे।

दुःशासनः, दुर्योधनः इत्यादि ॥ १३७४ ॥

१३७५। विध्याद्यर्थे तव्यानीय-यत्-क्यप्-ण्यत्-केलिमा विष्णुकृत्य-संज्ञा भावकर्मणोः।

'कृत्य' संज्ञा इति प्राञ्चः। 'प्रैषातिसर्ग' (११२८), 'अर्हशक्त्यो' ( ११३१ ) इत्यादि। तव्यानीयौ एतौ सामान्यौ। एधितव्यम्, एधनीयं वैष्णवेन। भक्तव्यो भजनीयस्त्वया कृष्णः ॥ १३७५ ॥

१६७६। सर्वेश्वरान्तधातोर्यत्।

चेया भक्तिस्त्वया हरेः ॥ १३७६ ॥

---

सौ चेत्यनेन भावे खल् 'दरिद्रातेरारामहरः' इत्यादिना आरामहरः ॥

१३७४। शासि। शासु अनुशिष्टौ, युध संप्रहारे, दृशिर प्रेक्षणे, ञि-धृषा प्रागल्भ्ये, मृष क्षमायाम् इत्येतेभ्यश्चोत्तरे खलर्थे अनो वा भवति, पक्षे खल् एव। आदिपदेन दुर्दर्शनः, दुर्धर्षणः, दुर्मर्षण इति। दुःशासः, दुर्योधः, दुर्दर्श इत्यादि च ॥

१३७५। विध्या। भावकर्मणोर्वाच्ययोर्विध्याद्यर्थे तव्यानीयादयो भवन्ति, ते विष्णुकृत्यसंज्ञाः। विध्याद्यर्थ इत्युक्त्वा तत् स्पष्टयितुं विष्णु-भक्त्यर्थप्रकरणोक्तसूत्रद्धयमाह—प्रैषातिसर्गेत्यादि, अर्हशक्त्योरित्यादीति। प्रैषातिसर्गप्राप्तकालत्वेषु विधातृविष्णुकृत्यावित्येकं सूत्रम्। अर्हशक्त्यो-र्विधिविष्णुकृत्यतृण इति द्वितीयम्। तव्यानीयाविति तत्र तव्यानीयौ दर्श्येते इत्यर्थः। एताविति एतौ तव्यानीयौ सामान्यौ तस्यात् सर्वधातुभ्य एव भवत इति भावः। एधितव्यमिति एध वृद्धौ वैष्णवे-नेत्यत्र छेदः। भक्तव्य इति भज सेवायाम् ॥

१३७६। सर्वे। भावकर्मणोर्वाच्ययोः सर्वेश्वरान्तधातोरुत्तरे यद्भवति। चेयेति चिञ् चयने ॥

१३७७। वा॒ऽसरूपोऽस्त्रियाम्।

अस्त्रियां विहितोऽसरूपो भिन्नाकारावशेष उत्सर्गापवादन्यायेन वाध्योऽपि कृद्वा स्यात्॥ १३७७॥

१३७८। क्त-अन-तुमु-खलर्थेषु तु वा॒ऽसरूपो विधिर्नेति वाच्यम्।

अतस्तव्यादयोऽपि। चेतव्या। धातुग्रहणात् प्रतिपदोक्तस्यैव ग्रहणम्; नेह—पिपक्षितव्यम्॥ १३७८॥

१३७९। प्रतिपदोक्तसर्वेश्वरान्तात्तु भूतपूर्वादपि।

दित्स्यम्, धित्स्यम्॥ १३७९॥

---

१३७७। वाऽस। असरूप इति समानं रूपं यस्येति विग्रहे समानस्य सः। असरूपं इति न सरूपोऽसरूपः; इत्यस्यार्थमाह भिन्नेति। भिन्नाकारोऽवशेषो यस्येति विग्रहः। उत्सर्गापवादन्यायेनेति —'उत्सर्गापवादयोरपवादो' वलवानिति न्यायवलवत्त्वेन उत्सर्गस्य वाध्यत्वमिति॥

१३७८। क्त। क्तप्रभृतिषु प्रत्ययेषु तु वासरूपो विधिर्न भवतीति वाच्यम्। अत इति हेतुर्निर्देशो विधिमूलक एवेति ज्ञेयम्। वाध्योऽपि कृद्वास्यादित्युक्तमतः सर्वेश्वरान्तधातोरुत्तरे यत्प्रत्ययेन वाध्यास्तव्यादयोऽपि भवन्तीति। धातुग्रहणादिति सूत्रे धातुशब्दोपादानादित्यर्थः। पिपक्षितव्यमिति सनन्तात् पचधातोस्तव्य इट् 'अरामहरो रामधातुके' इत्यरामहरो लाक्षणिकसर्वेरान्तत्वात् न यत्॥

१३७९। प्रति। भूतपूर्वात् प्रतिपदोक्तसर्वेश्वरान्तादुत्तरे पश्चात् प्रत्ययान्तरेण सर्वेश्वरान्तत्वेऽपि यद्भवति। भूतपूर्वादिति समासादिप्रकरणे केवलसमासश्च दृश्यत इत्युक्त्वा भूतः पूर्वं भूतपूर्व इति वक्ष्यते। दित्स्यमिति सनन्ताद्दित्स्यधातोर्यत्। एवं धित्स्यमिति अत्र प्रतिपदोक्तसर्वेश्वरान्तत्वस्य भूतपूर्वत्वम्॥

१३८०। आ ए यति।

देयम्, गेयम्। 'परत्वाद्दरिद्रेयम्' इति कालापाः ॥१३८०॥

१३८१। शकादिभ्यश्च यत्।

वक्ष्यमाण-ण्यदपवादोऽयम्। शक्यं, यज्यं, शस्यं, यत्यं, सह्यम् ॥ १३८१ ॥

१३८२। हनो यद्वा तस्य बधश्च।

बध्यम्। पक्षे ण्यद् वक्ष्यते ( १३९२ ) ॥ १३८२ ॥

१३८३। पबर्गान्ताद् यत्।

जप्यं, कोप्यम् ॥ १३८३ ॥

१३८४। आङो लभेर्नुम् यति, उपात् स्तुतौ।

---

१३८०। आ ए। आ इति सूत्रबलेन लुप्तषष्ठी। यति परे आरामस्य स्थाने एरामो भवति। देयमिति डु दाञ् दाने, 'सर्वेश्वरान्तधातोर्यदि'ति यत्। गै शब्दे गेयमिति। परत्वादिति दरिद्राधातोरारामहरो भवतीति। दारिद्र्यमिति सर्वसम्मतं, किन्तु परत्वादेरामोऽपि भवतीति कालापानां मतम् ॥

१३८१। शका। भावकर्मणोर्वाच्ययोः शकादिभ्यश्चोत्तरे यद्भवति। वक्ष्यमाणेति 'ऋद्वयविष्णुजनाभ्यां ण्यदि'ति वक्ष्यते तदपवादोऽयं योगः। शक्यमिति शकॢ शक्तौ। यज्यमिति यज देवपूजादौ। शस्यमिति शसु हिंसायाम्। यत्यमिति यती प्रयत्ने। सह्यमिति सह मर्षणे।

१३८२। हनो। भावकर्मणोर्वाच्ययोर्हन उत्तरे यद्वा भवति। यत्पक्षे तस्य स्थाने बधश्च ॥

१३८३। पब। भावकर्मणोर्वाच्ययोः पवर्गान्ताद्धातोरुत्तरे यद्भवति। अयमपि ण्यदपवादः। जप्यमिति जप मानसे च। कोप्पमिति कुप रोषे ॥

१३८४। आङो। यति परे आङ उत्तरस्माल्लभेरुत्तरे नुम् भवति। उपात्। स्तु गतौ गम्यमानायाम् उपादुत्तरस्माल्लभेरुत्तरे

आलम्भ्यः पशुः; यज्ञे घात्य इत्यर्थः। उपलम्भ्यो हरिः ॥१३८४॥

१३८५। अनुपेन्द्राद्गद-मद-चर-यमेभ्यो यत्।

गद्यम्। क्रथं नियम्यम्? चौरादिकणेरप्यौत्पत्तिकत्वेन प्रतिपदोक्तसर्वेश्वरान्तत्वाद्यत् ॥ १३८५ ॥

१३८६। नञ्पूर्वस्य वदेरवद्यं गर्ह्ये, वृङ्-वृञोर्वर्या प्रतिबन्धं विना स्वीकार्यायाम्।

'पतिम्वरायाम्' इत्येके। अवन्तोऽयं यत्प्रत्ययः। प्रतिबन्धे तु—वृञ् वरणे, क्यप् वक्ष्यते (१४०४), वृत्या कन्या। लक्ष्मी-

---

नुम् भवति। आलभ्य इति 'पबर्गान्ताद्यदि'ति यत्। आङ इति किम्? लभ्यः। यतीति किम्? आलब्धव्यः। उपलम्भ्यो हरि-रिति स्तुतिरत्र गम्यते, स्तुताविति किम्? उपलभ्यं पुष्पम् ॥

१५८५। अनु। व्यक्तार्थमेतत्। उपेन्द्रादिति उपेन्द्रादुत्तरेभ्य एतेभ्यो यत् न भवतीत्यर्थः। अनुपेन्द्रादित्यत्र अनुपेन्द्रेभ्य इति वा पाठः। गद्यमिति गद व्यक्तायां वाचि। एवं मद्यं चर्यम्। यम्य-मिति यमधातोः पबर्गान्तत्वेन यति सिद्धे नियमार्थमुपादानम्। अनु-पेन्द्रादित्येति। अतो नियम्यमित्यत्र ण्यदेव। कथमिति सिद्धान्तमाह चौरादिक-णेरिति। औत्पत्तिकत्वेनेति स्वतःसिद्धत्वेनेत्यर्थः। प्रतिपदक्त-सर्वेश्वरान्तत्वाद्यदिति नत्वनेनेति शेषः। नियम्यमिति घटादित्वा-द्वामनः ॥

१३८६। नञ्। गर्ह्ये अर्थे नञ्पूर्वस्य वदधातोरवद्यं साधुः। गर्ह्यं निन्द्यम्। तस्मादगर्ह्येऽर्थे नञ्पूर्वाद्वदेरुत्तरे यद्भवतीत्यर्थः। एवमन्य-त्रापि ज्ञेयम्। वृञ् प्रतिबन्धं विना स्वीकार्यायां वाच्यायां वृङ् सम्भक्तौ, वृञ् वरणे इत्येतयोर्वर्याः साधुः। प्रतिबन्धो निवारणादिरूपो विघ्नः। पतिम्वरायामित्येके इति। पतिम्वरा स्वयम्वरा। 'अथ स्वयम्वरा पतिम्वरा च वर्या:' इत्यमरः। क्यप् वक्ष्यत इति एतिस्तुशासुवृञदृजुषः क्यप्' इत्यनेनेति शेषः। वृत्येति 'वामतात्तुक् पृथावि'ति तुक्। कन्या

निर्देशः किम् ? वृङ् संभक्तौ, ण्यद्वक्ष्यते ( १३६२ ) वार्याः ऋत्विजः। व्यभिचरति च—"सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः" इत्यत्र ( भट्टिः ६।५१ ) मुख्येऽपि दृश्यते—'वृष्णिवर्यः' इत्यादौ च ॥ १३८६ ॥

१३८७। वह्यं वहनस्य करणे।

सुगमत्वादत्र धातुनिर्देशो न कृतः। एवमुत्तरत्रापि ॥१३८७॥

१३८८। पण्यं विक्रेये, अर्यः स्वामिवैश्ययोः, उपसर्या प्राप्तगर्भविसरायाम्, अजर्यः कर्तरि सङ्गमाक्षयत्वे।

---

प्रतिबन्धं विना स्वीकार्या न भवतीति न यत्। वार्या ऋत्विज इति। 'आग्नीध्राद्या धनैर्वार्या ऋत्विजो याचकाश्च ते' इत्यमरः। वार्या इति वरणीया इत्यर्थः। तस्मात् लक्ष्म्यामेव यदिति भावः। व्यभिचरति चेति—लक्ष्म्यामेव यद्भवतीति यत् प्रतिपादितं तद्व्यभिचरति च। भट्टिप्रयोगं व्यभिचारस्य स्थानरूपेण दर्शयति सुग्रीव इति,—'ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृबधः कपिः। सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रमः ॥' इति रघुनाथं प्रति जटायूक्तं पद्यम्। अन्वयार्थौ यथा। ऋष्यमूके तन्नाम्नि पर्वते सुग्रीवो नाम अनवद्योऽनिन्द्यः कपिरस्ति, असौ भवता वर्यः वरणीयः, पण्यभ्रातृबधः इति चारुविक्रम इति सुग्रीव इत्यस्य विशेषणं, पण्यो भ्रातुर्वलिनो बधो यस्येति विग्रहः। राम वर्योऽसाविति पाठान्तरे रामेति सम्बोधने। इत्यत्रेत्यत्र छेदः। मुख्येऽपीति। मुख्योऽर्थेऽपि यत् दृश्यते वृष्णिवर्य इति वृष्णिमुख्य इत्यर्थः ॥

१३८७। वह्यम्। वहनस्य करणे वाच्ये वह्यं साधुः। वहन्त्यनेनेति वह्यं शकटादि। अन्यत्र वाह्यं वहनीयमित्यर्थः। सुगमत्वादिति। 'नञ्पूर्वस्य वदेरि'त्यादौ यथा धातुनिदशः कृतः तथात्र न कृतः। अकरणे हेतुमाह सुगमत्वादिति ॥

१३८८। पण्यम् विक्रेये वाच्ये पण्यं साधुः। पण्यमिति पण व्यवहारे स्तुतौ च। 'विक्रेयं पणितव्यञ्च पण्यमि'त्यमरः। अन्यत्र

अजर्यः कृष्णसङ्गमः, न जीर्यतीत्यर्थः ॥ १३८८ ॥

१३८९। आचर्यमगुरौ।

गुरौ तु आचार्यः ॥ १३८९ ॥

१३९०। क्रय्यं क्रयार्थ-प्रसारिते।

अन्यत्र क्रेयम् ॥ १३९० ॥

१३९१। क्षय्य-जय्यौ शक्यार्थे।

अन्यत्र—क्षेयजेयौ ॥ १३९१ ॥

१३९२। ऋद्व्यविष्णुजनाभ्यां ण्यत्।

---

पाण्य स्तोतव्यमित्यर्थः। अर्यः स्वामिनि वैश्ये च वाच्ये अर्यः साधुः। अर्य इति ऋ गतौ प्रापणे च भ्वादिः। ऋ गतौ ह्वादिर्वा। 'स्यादर्यः स्वामि-वैश्ययोरि'ति नानार्थवर्गः। अन्यत्र आर्यः सान्दिपनिः, अत्र ण्यदेव। उप। प्राप्तो गर्भावसरो यया तस्यां वाच्यायाम् उपसर्या साधुः। उपसर्येति सृ गतौ, 'कन्योपसर्या प्रजने, इत्यमरः। प्रजने गर्भग्रहणे कन्या, प्राप्तकाला गौरुपसर्योच्यते इत्यर्थः गव्येवेति न नियमः, तेन उपसर्या वड़वेति। अजर्यः सङ्गमस्य अक्षयत्वे सति कर्तरि वाच्ये अजर्यं साधुः। सूत्रे लिंगवचनमतन्त्रमित्याह अजर्य इति। अजर्य इति नञ्पूर्वात् जॄष धातोर्यत्। सङ्गमाक्षयत्व इति किम्? अजरिता कम्बलः ॥

१३८९। आचर्य। अगुरौ वाचे आचर्यं साधुः। आचर्यमिति चर गतौ। गुरौ तु आचार्यः इत्यत्र ण्यत्। 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः ॥

१३९०-९१। क्रय्यम्। क्रयार्थं प्रसारिते वस्तुनि वाच्ये क्रय्यं साधुः। क्रय्यमिति डु क्रीञ द्रव्यविनिमये निपातात् यत्। एरामस्य अय् च क्रेयमिति अत्र यदेव। 'क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके' इत्यमरः ॥

१३९२। ऋद्व्य। भावकर्मणोर्वाच्ययो ऋद्व्यान्तात् विष्णुजनान्ताच्च

कार्यं, वाह्यम्। 'हनो हस्य घः' ( २६९ ), 'हन्तेस्तः' ( ८१३ ) घात्यम् ॥ १३९२ ॥

१३९३। चजोः कगौ घिण्यतोरज-वज-व्रज-कवर्गादिवर्जम्।

पाक्यं, रोग्यम्। नेह—वाज्यं, व्राज्यं, गर्ज्यम्। आजेर्वीभावात् ण्यति नोदाहरणम् ॥ १३९३ ॥

१३९४। न क-गावावश्यकार्थ-ण्यति, अवश्यमो मस्य हरो विष्णुकृत्ये, तेन तस्य समासः।

अवश्यपाच्यम्। संहितायामेव। 'अवश्यं वक्तव्यम्' इति भाष्यसंस्कृतम् ॥ १३९४ ॥

---

धातोरुत्तरे ण्यद्भवति। कार्यमिति डु कृञ करणे, 'अन्तस्य वृष्णीन्द्रो नृसिंहे' इति वृष्णीन्द्रः। वाह्यमिति वह प्रापणे ॥

१३९३। चजोः। घिति ण्यति च परे अज गतौ क्षेपणे च वज-व्रज गतौ एतान् कवर्गादिंश्च वर्जयित्वा चजोः कगौ भवतः। पाक्यमिति डु पच ष पाके। रोग्यमिति रुजो भङ्गे। गर्ज्यमिति गर्ज शब्दे कवर्गादित्वान्न जस्य गः। अजेरिति उदाहरणमिति प्रत्युदाहरणमित्यर्थः। प्रत्युदाहरणमिति वा पाठः ॥

१३९४। न क। आवश्यकेऽर्थे विहिते ण्यति परे कगौ न भवतः। अव। विष्णुकृत्यान्ते परे अवश्यमो मस्य हरो भवति। तेन। तेन विष्णुकृत्यान्तेन सह अवश्यमः समासो भवति। अवश्यपाच्यमिति विशेषानुपादानात् 'ऋद्व्यविष्णुजनाभ्यां ण्यदि'त्यनेन आवश्यकार्थे ण्यत्। संहितायामेवेति संहितायामेव अवश्यमो मस्य हरो भवति। संहिता समासः। अवश्यमिति। हि यतो अत्र समासाकरणात् न मस्य हरः ॥

१३९५। मोच्य-रोच्य-शोच्य-याच्य-त्याज्य-याज्य-वर्ज्यार्च्य-पूज्याः साधवः, प्रयोज्य-नियोज्यौ शक्यार्थे, वञ्च्याञ्च्यौ गतौ, वाच्यमपदसङ्घाते, भोज्यं भक्ष्ये निपात्यन्ते।

अन्यत्र 'प्रयोग्य इत्यादिषु यथास्वं' क-गौ॥ १३९५॥

१३९६। उद्वयाण्ण्यदावश्यके।

---

१३९५। मोच्य। मुचऌ मीक्षणे, रुच दीप्तौ, शुच शोके, टु याचृ याच्ञायां, त्यज वयोहानौ, यज देवपूजादौ, वर्ज वर्जने, पूजा पूजायाम् इत्येतेषां ण्यता सह मोच्यादयः साधवः। मोच्यादिषु चतुर्षु करामाभाव एव निपातफलम्। याज्यादिचतुर्षु गरामाभाव एव निपातफलम्। प्रयो। शक्यार्थे प्रयोज्यनियोज्यौ निपात्येते। प्रयोज्य इति प्रयोक्तु शक्य इत्यर्थः। एवं नियोज्य इति, 'नियोज्यकिङ्कर-प्रैष्यभुजिष्यपरिचारकाः' इत्यमरः। गरामाभाव एव निपातफलम्। वञ्च्या। गतावर्थे वञ्च्योऽञ्च्यश्च निपात्यते। वञ्च्य इति वञ्चु गतौ गम्य इत्यर्थः। करामाभाव एव निपातफलम्। एवमञ्च्य इति। वाच्यम्। अपदसङ्घातेऽर्थे वाच्यं निपात्यते। सङ्घातः समूहः। वाच्यमिति वच परिभाषणे वक्तव्यमित्यर्थः। करामभाव एव निपात-फलम्। भोज्यम्। भक्ष्ये वाच्ये भोज्यं तिपात्यते गरामाभावो निपातफलम्। निपात्यन्ते इति प्रयोज्यादय इति शेषः। अन्यत्रेति अन्यस्मिन्नर्थे इत्यर्थः। प्रयोग्य इत्यादिषु प्रयोग्यवङ्क्र्याङ्क्रवाक्यभोग्येषु। यथास्वं यथायोग्यम्। तेन चरामस्य कः जरामस्य ग इति। प्रयोग्य-नियोग्यौ प्रेरणीयमात्रे। वङ्क्र्यो वञ्चनीये। अङ्क्रः पूजनीये। वाक्यं पदसमूहे। तिङ् सुबन्तचयो वाक्यमित्यमरः॥

१३९६। उद्व। भावकर्मणोर्वाच्ययोः आवश्यकेऽर्थे उद्वयादुत्तरे ण्यद्भवति। पूर्वेणाप्राप्ते विधानम्। अवश्यनाव्या इति नु स्तुतौ अवश्यमो मस्य हरो विष्णुकृत्य इति मस्य हरः। भागवता भव्ताः।

'ओद्वयस्यावावौ प्रत्यय-ये' ( ८८० ) अवश्ययाव्या भागवताः, अवश्यलाव्या दैतेयाः। गम्यत्वेऽपि —वैष्णवैः शुचिर्भिर्भाव्यम् ॥ १३९६ ॥

१३९७। यु-रपि-वपि-लपि-त्रपि-चमिभ्य आसुनोतेश्च ण्यत्, दम्भेर्नस्य च हरः।

याव्यं, राप्यमित्यादि। षुञ—आसाव्यम्। 'दम्भिश्चौरादिकः' इति पाणिनीयाः। 'दम्भुः सौवादिकः' इति कालापाः—दाभ्यम् ॥ १३९७ ॥

१३९८। भज-जप-यजानमिभ्यो यद्वा।

भाग्यम्, भाज्यम्। आनाम्यम्, आनम्यम् ॥ १३९८ ॥

---

अत्र याव्या इत्यपि क्वचिद्दृश्यते तस्मिन् सति मिलनीया इत्यर्थः। अवश्यलाव्या इति लूञ छेदने। आवश्यक इति किम्? नव्यं लव्यं सर्वेश्वरान्तत्वाद्यदेव। गम्यत्वेऽपीति आवश्यकार्थस्य गम्यत्वेऽपि ण्यद्भवति। वैष्णवैरिति अत्रावश्यम्भावो गम्यते ॥

१३९७। यु-रपि। यु मिश्रणामिश्रणयोः डु वप् वीजतन्तुसन्ताने रप लप व्यक्तायां वाचि, चमु अदने इत्येतेभ्यो आङ्पूर्वात् षुञ अभिषवे इत्यस्माच्च उत्तरे भावकर्मणोर्वाच्ययोर्ण्यद्भवति। युधातोरासुनोतेश्च सर्वेश्वरान्तत्वादन्येषां पवर्गान्तत्वाद्यति प्राप्ते ण्यद्विधानम्। दम्भे। दम्भ दम्भे इत्यस्मादुत्तरे ण्यद्भवति नस्य हरश्च। सौवादिक इति स्वादिरित्यर्थः। दाभ्यमिति 'नस्य हरे कृते उद्धवारामस्य वृष्णीन्द्रो नृसिंहे' इति वृष्णीन्द्रः ॥

१३९८। भज। भज सेवायां जप मानसे च यज देवपूजादौ एतेभ्य आङ्पूर्वात् नम प्रह्वत्वे शब्दे चेत्यस्माच्च उत्तरे यद्वा भवति, पक्षे ण्यदेव। भजयजोर्विष्णुजनान्तत्वान्नित्यं ण्यति प्राप्ते विकल्पे यद्विधानम्। जपानम्योस्तु पवर्गान्तत्वाद्यति नित्यं प्राप्ते विभाषा। भाग्यमिति 'चजोः कगावि'त्यादिना जस्य गः। एवं जाप्यं जप्यं याज्यं यज्यमिति ॥

१३९९। माङः पाय्यं परिमाणे।

परामाद्यमिदम् ॥ १३९९॥

१४००। कुण्डपाय्य-सञ्चाय्यौ, ऋतौ प्रणाय्यो दुर्मतिनिष्कामयोः, सन्नियः सान्नाय्यं हविर्विशेषे, आनयतेरानाय्यो दक्षिणाग्नौ, निचिञो निकाय्यो निवासे, चित्यश्चेतव्ये वह्नौ, अग्निचित्या तच्चयने, अमापूर्ववसेरमावास्यामावश्ये तिथिविशेषे।

---

१३९९। माङः। परिमाणे वाच्ये माङ् माने इत्यस्य पाय्यं साधुः। ण्यद्विधानं मरामस्य परामविधानञ्च निपातफलम्। 'यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयमित्यमरः ॥

१४००। कुण्ड। ऋतुर्यज्ञस्तस्मिन् वाच्ये कुण्डपाय्यसञ्चाय्यौ साधू। कुण्डपाय्य इति कुण्डपूर्वस्य माङो निपातफलं पूर्ववत्। सञ्चाय्य इति संपूर्वस्य चिञः ण्यद्विधानम्, ऐरामस्य आय् च निपातफलम्। प्राणा। दुर्मतिनिष्क्रमयोर्वाच्ययोः प्राङ्पूर्वस्य नीयः प्राणाय्यः साधुः। ण्यद्विधानम्, ऐरामस्य आय् च निपातफलम्। संनि। हविर्विशेषे वाच्ये संपूर्वस्य नियः सान्नाय्यं साधुः। हविर्होतव्यं द्रव्यम्। ण्यद्विधानम्, ऐरामस्य आय् समोऽरामस्य त्रिविक्रमश्च निपातफलम्। 'सान्नाय्यं हविरि'त्यमरः। आन। दक्षिणाग्नौ वाच्ये आङ्पूर्वस्य नयतेरानाय्यः साधुः। ण्यद्विधानम् ऐरामस्य आय् च निपातफलम्। 'दक्षिणाग्निर्गार्हपत्यहवनीयौ त्रयोऽग्नयः' इत्यमरः। 'यो गार्हपत्यादानीय दक्षिणाग्नि प्रणीयते। तस्मिन्नानाय्यः' इति चामरः। निचि। निवासे वाच्ये निपूर्वचिञो निकाय्यः साधुः। ण्यद्विधानं चेः किः ऐरामस्य आय् च निपातफलम्। निकाय्यनिलयालयाः' इत्यमरः। चित्य। चेतव्ये वह्नौ वाच्ये चित्यः साधुः। ण्यद्विधानं वृष्णीन्द्राभावस्तुक् च निपातफलम्। अस्य क्यप् प्रकरणे लिखनमुचितमिति ज्ञेयं, तथा सति वृष्णीन्द्राभावात्तुकोरयत्नसाध्यता स्यात्। अग्नि।

अमा सह वसतश्चन्द्रसूर्यावस्यामिति ण्यद्यद्भ्यामाद्यन्ताभ्यां सिध्यतः ॥ १४०० ॥

१४०१ । गुपेः कुप्यम् अहेमरूप्ये धने, भिद्योद्ध्यौ नदभेदे कर्तरि ।

भिनत्ति कूलं भिद्य इति गोविन्दाभावो निपातः । उज्झति कूलम् उद्ध्य इति द-ध-मध्यत्वात् सिध्यति ॥ १४०१ ॥

१४०२ । पुष्य-सिद्ध्यौ नक्षत्रविशेषे, विपूयो मुञ्जे,

---

तच्चयने अग्निचयने वाच्ये अग्निचित्या साधुः । निपातफलं पूर्ववज्ज्ञेयं, स्त्रीत्वन्तु अभिधानात् । अस्यापि क्यप्प्रकरणे लिखनमुचितम् । अमा । तिथिविशेषे वाच्ये अमापूर्वस्य वसेः अमावास्या अमावस्या च साधुः । अमेति । अमाशब्दः सहार्थः, अत आह सहेति । इतीति इत्यर्थे इत्थर्थः । अत्र ण्यद्विधानं यद्विधानञ्च निपातफलं, स्त्रीत्वन्त्वभिधानात् ॥

१४०१ । गुपेः । हेमरुप्यव्यतिरिक्ते धने वाच्ये गुपेः कुप्यं साधुः । हेम सुवर्णम् । गुपेरिति गुप गोपनकुत्सनयोः, गुपू रक्षणे द्वयोर्ग्रहणं, गोविन्दाभावो गरामस्य करामविधानञ्च निपातफलम् । 'ताभ्यां यदन्यत् तत्कुप्यमि'त्यमरः । ताभ्यामिति हेमरूप्याभ्यामित्यर्थः । अस्यापि क्यप्प्रकरणे लिखनमुचितम् । भिद्यो । नदभेदे कर्तरि वाच्ये भिद्योद्ध्यौ साधू । गोविन्दाभावादित्यस्यापि सिध्यतीत्यनेनान्वयः । तस्माद् भिद्य इत्यत्र गोविन्दाभावो निपातफलम् । उद्ध्य इति उद्झ उत्सर्गे, झरामस्य धरामो निपातफलम्, अत उक्तं दध-मध्यत्वादिति । दधेति साराममनिर्देश उच्चारणार्थः । भिद्योद्ध्यौ नदविशेषौ ; अस्यापि क्यप्प्रकरणे लिखनमुचितम् । तथा सति भिद्य इत्यत्र गोविन्दाभावस्यायत्नसाध्यता स्यात् । कर्तरीत्यनुवर्तेऽप्यसङ्गतिर्न भवतीति ज्ञेयम् ॥

१४०२ । पुष्य । नक्षत्रविशेषे वाच्ये पुष पुष्टौ, सिधु संराद्धौ इत्येतयोः पुष्य-सिद्धौ साधू । गोविन्दाभावो निपातफलम् । 'पुष्ये तु सिध्यतिष्यौ' इत्यमरः । अस्यापि क्यप्प्रकरणे लिखनमुचितम् ।

विनीयः कल्के, जित्यो महति हले, युग्यं वाहने, दधातेर्धाय्या सामिधेन्यामृचि, परिचाय्योपचाय्यसमूह्या अग्निविशेषेषु, अञ्जेराज्यं घृते, गृह्योऽस्वैरिणि साधवः ।

विपू । मुञ्जे वाच्ये वेरुत्तरस्य पूञ पवने इत्यस्य विपूयः साधुः । वृष्णीन्द्राभावो निपातफलम् । पूङ । पवन इत्यस्य ह्वादेरयं प्रयोग इति जयादित्यजिनेन्द्रौ । अस्यापि क्यप्प्रकरणे लिखनमुचितम् । विनी । कल्के वाच्ये वेरुत्तरस्य नीञो विनीयः साधुः । कल्कस्तैलादिकल्कः । वृष्णीन्द्राभावो निपातफलम् । अस्यापि क्यप्प्रकरणे लिखनमुचितम् । जित्यो । महति हले वाच्ये जित्यः साधुः । हलं लाङ्गलम् । ण्यद्विधानं वृष्णीन्द्राभावस्तुक् च निपातफलम् । अस्यापि क्यप्प्रकरणे लिखनमुचितम् । युग्यम् । वाहने वाच्ये युजिर योगे इत्यस्य युग्यं साधुः । वाहनं करि-तुरङ्गादि । गोविन्दाभावो निपातफलम् । 'सर्वं स्याद्वाहनं यानं युग्यं पत्रञ्च धोरणमि'त्यमरः । दधा । सामिधेन्यां ऋचि वाच्यायां दधातेर्धाय्या साधुः । ण्यद्विधानं निपातफलम् । 'ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने' इत्यमरः । परि । अग्निविशेषेषु वाच्येषु परिचय्यादयः साधवः । परिचाय्य इति परिपूर्वस्य चिञः ण्यद्विधानम्, ऐरामस्य आय् च निपातफलम्, एवम् उपचाय्य इति, समूह्य इति । संपूर्वस्य वहः सङ्कर्षणः, सङ्कर्षणस्य त्रिविक्रमश्च निपातफलम् । 'समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः' इत्यमरः । अञ्जेः । घृते वाच्ये अन्ज म्रक्षणादिषु इत्यस्य आज्यं साधुः । नरामहरो गत्वाभावश्च निपातफलम् । वृष्णीन्द्रस्तु नरामहरे कृते सिध्यत्येव । 'घृतमाज्यं हविः सर्पिरि'त्यमरः । गृह्यो । अस्वैरिणि वाच्ये ग्रहेः गृह्यः साधुः । अस्वैरी अधीनः । सङ्कर्षणो गोविन्दाभावश्च निपातफलम् । अस्य क्यप्प्रकरणे लिखनमुचितम् । तथा सति सङ्कर्षण-गोविन्दाभावयोरयत्नसाध्यता स्यात् । 'अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसावि'त्यमरः । 'गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते' इत्यमरः । साधव इति पुष्यादय इति शेषः ॥

१४०३। अनुपेन्द्रे वदो यत्-क्यपौ, भुवः क्यप् भावे, हनस्तश्च।

कृष्णेनोद्यन्ते—कृष्णवद्या गीताः, कृष्णोद्याः। बाहुल्यात् कर्तरि च, 'सत्यवद्यो रघूत्तमः'। ब्रह्मणो भावः ब्रह्मभूयम्। ब्रह्मणो हननं ब्रह्महत्या, स्त्रीत्वमभिधानात्॥ १४०३॥

१४०४। एति-स्तु-शासु-वृञ-दृ-जुषः क्यप्।

'वामनात्तुक्' (१३१३)—इत्यः, स्तुत्यः। आवश्यकेऽपीष्यते—अवश्यस्तुत्यः। 'शासः शिष्' (६६२) शिष्यः; वृत्यः, आदृत्यः, जुष्यः। आङः शास्वित्यादेराख्यातदर्शितत्वान्न शिषादेशः—आशास्यम्। ईङ् गतौ—उपेयम्॥ १४०४॥

---

१४०३। अनु। अनुपेन्द्रे उपेन्द्रव्यतिरिक्ते पूर्वपदे सति भावकर्मणोर्वाच्ययोर्वद उत्तरे यत्क्यपौ भवतः। भुवः। अनुपेन्द्रे पूर्वपदे सति भावे वाच्ये भुव उत्तरे क्यप् भवति। हन। अनुपेन्द्रे पूर्वपदे सति भावे वाच्ये हन उत्तरे क्यप् भवति। हनो नरामस्य तश्च। कृष्णवद्या इति कर्मणि यत्, कृष्णोद्या इति कर्मणि क्यप्, सङ्कर्षणः उपेन्द्रेत्यादिना समासः। सत्यवद्य इति सत्यं वदतीत्यर्थः। रघूत्तमो रघुनाथः (लक्षणः)। उपेन्द्रे तु प्रवाह्यमित्यत्र ण्यदेव भवति। ब्रह्मणो भाव इत्यर्थकथनम्। उपेन्द्रे तु प्रभव्यम्। ब्रह्मणो हननमित्यर्थकथनम्। ब्रह्महत्येति स्त्रीत्वं कथमिति चेत्तत्राह स्त्रीत्वमभिधानादिति। उपेन्द्रे तु प्रघात्यः॥

१४०४। एति। इन् गतौ, ष्टुञ स्तुतौ शासु अनुशिष्टौ, वृञ वरणे, दृङ आदरे, जुषी प्रीतिसेवनयोः इत्येतेभ्य उत्तरे क्यप् भवति। वृञो ञरामः वृङ सम्भक्तावित्यस्य निरासार्थः। आवश्यकेऽपीति आवश्यकेऽर्थेऽपि स्तुधातोरुत्तरे क्यबिष्यते। अवश्यस्तुत्य इति अवश्यमो मस्य हरः। शासः शिषिति 'शासः शिष् कंसारिविष्णुजनङ्योरि'त्यनेनेति शेषः। आङः शास्वित्यादेरिति आङः शासु इच्छायामित्यात्मपदिनो न ग्रहणं धात्वन्तरतया पृथक्पाठादिति आख्याते

१४०५। शंसि-दुहि-गुहिभ्यो वा क्यप्।

शस्यं, शंस्यम्; दुह्यं, दोह्यम् ॥ १४०५ ॥

१४०६। ऋरामोद्धवादक्लृपः क्यप्।

वृतु—वृत्यम्। वृधु—वृध्यम्। क्लृपेस्तु—कल्प्यम् ॥१४०६॥

१४०७। खनः खेयं निपात्यते, पाणौ सृजेर्ण्यत् समवपूर्वाच्च।

पाणिसर्ग्या माला। समवेति संघातेनैव प्रयोगः—समवसर्ग्या रज्जुः ॥ १४०७ ॥

---

दर्शितम्। आशास्यमित्यत्रापि अनेनैव क्यप्। उपेयमिति सर्वेश्वरान्तत्वाद्गोविन्दः 'उपेन्द्राद्वयहर एओरामयोरिनेधौ विने'ति अरामहरः ॥

१४०५। शंसि। शन्सु स्तुतौ, दुह प्रपूरणे, गुहू सम्वरणे एतेभ्य उत्तरे क्यप् वा भवति, पक्षे ण्यदेव। शस्यमिति 'अनिरामेतामि'ति नरामहरः। एवं गुह्यं गोह्यमिति ॥

१४०६। ऋरा। क्लृपव्यतिरिक्तात् ऋरामोद्धवाद्धातोरुत्तरे क्यप् भवति। वृत्विति वृतु वर्तने। वृध्यमिति वृधु वृद्धौ। कल्प्यमिति क्लृपू सामर्थ्ये ण्यत्। क्लृपे ऋ लृ इति ऋरामस्य लृरामो गोविन्दश्च ॥

१४०७। खनः। खनु अवदारण इत्यस्य खेयं निपात्यते। क्यव्विधानं नरामस्य एरामविधानञ्च निपातफलम्। अरामहरस्तु 'अरामहर ए अयोरविष्णुपदान्ते' इत्यादिना सिध्यत्येव। 'खेयन्तु परिखे'त्यमरः। पाणौ। पाणौ पूर्वपदे सति सृज विसर्ग इत्यस्मादुत्तरे ण्यद्भवति। ऋरामोद्धवत्वात् क्यपि प्राप्ते ण्यद्विधानम्। सम। समवपूर्वाच्च सृजेरुत्तरे ण्यद्भवति। पाणिसर्ग्येति कर्मणि ण्यत्। 'चजोः कगावि'त्यादिना जस्य गः। पाणिना सृज्यते इत्यर्थः। सङ्घातेनैव प्रयोग इति। एतेन समुदायस्य समवेतस्य पूर्वत्वे सति सृजेर्ण्यद्भवतीति सूचितमतः संपूर्वादवपूर्वाच्च सृजेर्ण्यत् न भवति। समवसर्ग्येति समवसृज्यत इत्यर्थः ॥

१४०८। भृञः क्यप् न तु पत्न्यां, संभृञो वा, कृ-वृषिभ्याञ्च।

भृत्यः। संभृत्यः, संभार्यः। कृत्यं कार्यम्। वृष्यं वर्ष्यम्। पत्न्यान्तु—भार्या ॥ १४०८ ॥

१४०९। मृजेः क्यप् वा।

मृज्यः। गत्वम्—मार्ग्यः ॥ १४०९ ॥

१४१०। मृषोद्यादयः कर्मादौ साधवः।

मृषा उद्यते—मृषोद्यम्। रोचते—रुच्यः। कृष्टे पचति, पाकमाप्नोति—कृष्टपच्यो व्रीह्यादिः। न व्यथते—अव्यथ्यः ॥१४१०॥

---

१४०८। भृञः। डुभृञ धारणपोषणयोः इत्यस्मादुत्तरे क्यप् भवति। पत्न्यां वाच्यायान्तु भृञ उत्तरे क्यप् न भवति। संभृ। संपूर्वाद्भृञ उत्तरे क्यप् वा भवति, पक्षे ण्यदेव। कृ। डुकृञ करणे, वृषु सेचने इत्येताभ्याञ्चोत्तरे क्यप् वा भवति, पक्षे ण्यदेव। भृत्य इति वामनात्तुक्। पत्न्यान्तु भार्येति, अत्र ण्यत्। 'पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी। भार्या जाये'त्यमरः ॥

१४०९। मृजे मृजूष शुद्धावित्यस्मादुत्तरे क्यप् वा भवति, पक्षे ण्यदेव। ऋरामोद्धवत्वान्नित्यं क्यपि प्राप्ते विभाषा। मार्ग्य इति मृजेर्वृष्णीन्द्र इत्यनेन वृष्णीन्द्रः ॥

१४१०। मृषो। कर्मादौ वाच्ये मृषोद्यादयः साधवः। मृषा मिथ्या। मृषोद्यमिति कर्मणि क्यप्। अत्र यदभाव एव निपातफलम्। मृषापूर्वाद्वद उत्तरे क्यप् एव भवति नतु यदिति। रुच्य इति निपातात् कर्तरि क्यप्। कृष्ट इति। पचतीत्यर्थमाह पाकं प्राप्नोति इति। कृष्टपच्य इति निपातात् कर्तरि क्यप्। कृष्ट इति भावे क्तः कर्षण इत्यर्थः। पाकं परिपाकम्। अव्यथ्य इत्यत्रापि निपातात् कर्तरि क्यप् ॥

१४११। राजसूयादयस्तु संज्ञाशब्दाः।

१४१२। अनुपेन्द्रे ग्रहेः क्यप् वाह्यायां पक्षे च।

लक्ष्मीनिर्देशात्तस्यामेव। मथुरागृह्या सेना, ततो वाह्येत्यर्थः। कृष्णगृह्यः तत्पक्षाश्रितः इत्यर्थः॥ १४१२॥

१४१३। इज्या-व्रज्या-कृत्या भावे क्यवन्ताः साधवः, समज्यादयः संज्ञायां साधवः।

समजन्त्यस्याम्—समज्या सभा, निषद्या आपणः, निपत्या पिच्छिलभूमिः। विदन्त्यनया—विद्या; सूयते अस्यां सोमः—सूत्या; शय्यते अस्याम्—शय्या॥ १४१३॥

१४१४। इत्या भाव-करणयोः साधुः, भृत्यादयो भावे साधवः।

भरणं भृत्या। आसनम् उपवेशनम् आस्या इत्यादिः॥१४१४॥

---

१४११। राज। राजसूयादयस्तु संज्ञाशब्दा इति। संज्ञाशब्दत्वादेतेषाम् अर्थकथनं न वहुप्रयोजनकमिति अर्था नोक्ताः, किन्तु क्यवन्तत्वेनैव निपातनीया इति भावः।

१४१२। अनु। अनुपेन्द्रे पूर्वपदे सति वाह्यायां पक्षे च वाच्ये ग्रहेरुत्तरे क्यप् भवति। पक्षः पक्षाश्रितः। तस्यामेव लक्ष्म्यामेव। ततो मथुरातः। तत्पक्षाश्रितः कृष्णपक्षाश्रितः।।

१४१३। इज्या व्रज्या कृत्या भावे क्यवन्ताः साधवः। सम। समज्यादयः संज्ञायां साधवः। समजन्त्यस्यां समज्या सभा। निषद्या आपणः। निपत्या पिच्छिलभूमिः। विदन्त्यनया विद्या। सूयते अस्यां सोमः सूत्या। शय्यतेऽस्यां शय्या।।

१४१४। इत्या। इत्या भावकरणयोः साधुः। भृत्या। भृत्यादयः भावे साधवः। भरणं भृत्या। आसनम् उपवेशनम् आस्या। इत्यादीति। आपणः क्रयविक्रयस्थानम्। सोमो लताविशेषः।।

१४१५। भव्य-गेय-प्रवचनीयोपस्थानीय-जन्या-प्लाव्यापात्याः कर्तरि च।

वैष्णवो मथुरायां भव्यः, भवतीत्यर्थः इत्यादि। हरेर्गेयः, हरिं गायतीत्यर्थः। पक्षे मथुरायां भव्यमित्यादि॥ १४१५॥

१४१६। धेनुम्भव्या साधुः।

धेनुषु भवतीति॥ १४१६॥

१४१७। केलिमः कर्मकर्तरि।

भिदेलिमा माषाः। पचेलिमास्तण्डुलाः। उक्ता विष्णु-कृत्याः॥ १४१७॥

१४१८। वाहुल्यात् करणादौ च ते।

---

१४१५। भव्य। भव्यादयः कर्तरि च साधवः। भव्य इति भवतीत्यर्थः। एवं सर्वत्र ज्ञेयम्। निपातात् कर्तरि यत्। गेय इति निपातादत्रापि कर्तरि यत्। 'आ ए यति' इत्यनेन एरामः। प्रवचनीय इति निपातात् कर्तरि अनीयः। एवमुप-स्थानीय इति। जन्य इति निपातात् कर्तरि ण्यत्। जनिवध्यो-रित्यादिना वृष्णीन्द्रनिषेधः। आप्लाव्य इति प्लुङ् गत्यर्थः निपातात् ण्यत्। एवमापात्य इति॥

१४१६। धेनु। धेनुम्भव्या साधुः। धेनुम्भव्येति धेनुषु भवतीत्यर्थे निपातात् कर्तरि यत् पूर्वपदात् मुम् च॥

१४१७। केलि। कर्मकर्तरि वाच्ये धातोरुत्तरे केलिमो भवति। क इत्। भिदेलिमा इति स्वयमेव भिद्यन्ते इत्यर्थः। माषा व्रीहयः। पचेलिमा इति स्वयमेव पच्यन्ते इत्यर्थः॥

१४१८। वाहु। वाहुल्यादिति कृद्वाहुल्यात् ते विष्णुकृत्याः करणादौ वाच्ये भवन्ति। स्नानीयमिति करणे अनीयः। आम-

स्नायते येन तत्—स्नानीयमामलक्यादि। दीयते यस्मै सः—दानीयो विप्रः। आपतति यस्मात् सः—आपत्यो भृगुः। रम्यते यस्मिन् तत्—रमणीयं वृन्दावनम्। तिष्ठते निर्णीयते विवादो यत्र सः—स्थेयः॥ १४१८॥

१४१९। वास्तव्यो वासकर्तरि वृष्णीन्द्रेण साधुः।

कर्तरि प्रभुरयम्॥ १४१९॥

१४२०। णक-तृनौ।

'ण्यवुल्तृचौ' पाणिनिः (३।१।१३३)। करोतीति कारकः, कर्ता जगतः। वह—वोढ़ा। हन—घातकः॥ १४२०॥

१४२१। नामधातु-हनो न घत्वं, न च तत्वम्।

---

लक्यादीति आदिपदेन तैलादेर्ग्रहणम्। दानीय इति सम्प्रदाने अनीयः। आपत्य इति अपादाने ण्यत्। भृगुरुच्चप्रदेशः 'प्रपातस्त्वतटो भृगुरि'-त्यमरः। रमणीयमिति अधिकरणे अनीयः। तिष्ठते इति निर्णीता-वात्मपदमत आह निर्णीयत इति। अन्यैरिति शेषः। निर्णीयत इति फलितार्थकथनमेवेति ज्ञेयम्। निर्णीतो भवतीति वा पाठः। स्थेय इति अधिकरणे यत्। आ ए यतीति एरामः॥

१४१९। वास्त। वासकर्तरि वाच्ये वास्तव्यो वृष्णीन्द्रेण साधुः। कर्तरि तव्यविधानं वृष्णीन्द्रश्च निपातफलमिति भावः। वासकर्तरी-त्यत्र कर्तरीति वा पाठः॥

१४२०। णक। कर्तरि वाच्ये धातोरुत्तरे णक-तृनौ भवतः। ण्वुल्तृचौ पाणिनिरिति ते वोरकमादिशन्तीत्युक्तमतो णक-ण्वुन्लो-रैक्यम्। जगत इति कर्मणि षष्ठी। वोढ़ेति वह प्रापणे, 'सहिवहोर-रामस्य ओरामो ढलोपे' इति ओरामः। घातक इति 'हनो हस्य घो णिण्णयोरि'ति घत्वं 'हन्तेस्तो नृसिंहे' इति तत्वम्॥

१४२१। नाम। नामधातोर्हनो न घत्वं तत्वञ्च न भवति। हननीयक इति हननमिच्छतीत्यर्थे 'यमिच्छति तस्मात् क्यन्।'

हननीयकः। 'आतो युक्' ( १८० )—दायकः। एवमाख्यात-सूत्रेभ्यः—कुटिता, कोटकः, शमकः; यमेस्तु यामकः। पापचकः इत्यत्रापि अन्तहरान्न वृष्णीन्द्रः, पापच्यस्थाने पापचादेशात् तस्य स्थानिवद्भावात् न वृष्णीन्द्र इत्यन्ये। 'स्थानिवद्भावात्'—इति प्रसादेऽपि; प्रक्रिया ( पा ३।१।१३३ ) तु चिन्त्या। चक्रपाणेस्तु —पापाचकः, पापचिता; दरिद्रायकः, दरिद्रिता इत्यादि ज्ञेयम्। क्रमि-गमि-कृपि-वृत्वादीनामिट्सूत्रेषु आत्मपदेन तत्कारणं गृह्यते इति बहूनां मतम्। 'गम्यादीनां न' इति केशाञ्चित्; क्रमेस्तु

---

विष्णुभक्तिमहाहरः 'अद्वयस्य ई क्यनी'ति ईरामः। क्यन्नन्ताण्णकः। नृसिंहस्य हनः परवर्तित्वाभावादेव षत्वं तत्वञ्च न भवतीति भावः। 'आतो युगि'ति 'नृसिंहकृति चे'त्यस्योल्लेखः। कुटितेत्यादीनि आख्यात-सूत्रेभ्यः सिध्यन्तीति आख्यातसूत्रेभ्य इत्युक्तम्। कुटितेति कुट कौटिल्ये, 'कुटादेरनृसिंहोनिर्गुणः' इति इटि निर्गुणत्वमतो न गोविन्दः। कोटक इति नृसिंहत्वान्नात्र निर्गुणत्वम्। शमक इति शमु उपशमे, 'जनिबध्योर्मान्तानाञ्चाम्यमि-कमि-वमि-यमि-रमि-नमि-गमां न वृष्णीन्द्र इणि कृति चे'ति वृष्णीन्द्रनिषेधः। यमेस्तु यामक इति वर्जना-दिति शेषः। पापचक इति यङन्तात् पापच्यधातोर्णकः 'विष्णु-जनात् सारामयस्य हरो रामधातुके' इति सारामयस्य हरः। न वृष्णीन्द्र इति, अत उक्तमन्तहरेन गोविन्दवृष्णीन्द्रावि'ति। स्थानीति स्थानिवद्भावात् वृद्धिर्न भवतीति प्रसादेऽपि दृश्यते। प्रक्रियातु चिन्त्येति अत्र वृद्धिर्भवतीति प्रक्रियामतम्। चक्रपाणेस्त्विति, 'यङ् महाहरान्तश्चक्रपाणिसंज्ञः' इति। पापचक इत्यत्र यङो महाहरः कृतः, अतो वृष्णीन्द्रः। दरिद्रायक इति, 'आतो युगि'त्यादिना युक्। 'दरिद्रातेरारामहरः' इत्यादौ युको वर्जनात् न आरामहरः। दरिद्रि-तेति इटि कृते आरामहरः। क्रमीति, क्रमि-गमि-कृपि-वृत्वादीनां धातूनाम् इट्सूत्रेषु इट्सम्बन्धिसूत्रेषु आत्मपदेन आत्मपदपदेन तत्कार-णमात्मपदकारणमपि गृह्यते इति बहूनां पण्डितानां मतम्। 'गम्यादी-नामिट्सूत्रेषु आत्मपदपदेन तत्कारणं न गृह्यते' इति केशाञ्चिन्मतम्।

कर्तर्येवेट् नेष्यते—प्रक्रन्ता, उपक्रन्ता। अकर्तरि तु प्रक्रमितव्यम्। गम्यादेः खल्वपि—संजिगंसिता, संजिगमिषिता ; चिक्लृप्सिता, चिकल्पिषिता ; विवृत्सिता, विवर्तिषिता॥ १४२१॥

---

तस्मात् केषाञ्चिन्मते क्रमेरिट्सूत्रे आत्मपदेन तत्कारणं न गृह्यते इति आयातम्। तत्र स्वयमाह क्रमेस्त्विति। क्रमेस्तु कर्तर्येव इट् नेष्यते इति आत्मपदकारणसद्भाव इति शेषः। प्रक्रन्ता, उपक्रन्ता इति 'स्नुक्रमिभ्यामिड् नात्मपद एवे'ति इट्सूत्रम्। अत्र आत्मपदाभावेऽपि आत्मपदकारणयोः प्रोपयोः सद्भावात् धातोरात्मपदित्वम्, 'आत्मपदिभ्य आत्मपदानी'ति तृन्प्रत्ययस्यात्मपदत्वमतस्तस्मिन् परे कर्तरि नेट्। प्रक्रमितव्यमिति, अत्र आत्मपदकारणसद्भावेऽपि कर्तर्येवेति नियमादिट्। गम्यादेरिति, गम्यादेरिट्सूत्रेषु आत्मपदपदेन सर्वस्मिन् वाच्ये तत्कारणं खल्वपि गृह्यते। खल्वपीत्यव्ययसमुदायोऽतिनिश्चयार्थः। संजिगंसितेति संपूर्वात् सनन्तात् गमस्तृन् सनन्ताद्धातोरिट् सरामादिरामधातुके नात्मपद इति इट्सूत्रम्। अत्र आत्मपदाभावेऽपि आत्मपदकारणस्य सनः सद्भावान्नेट्। केशाञ्चिन्मते संजिगमिषितेति तन्मते आत्मपदाभावादिट्। चिकलृप्सिता, चिकल्पिषितेति सनन्तात् चिकलृप्स-धातोस्तृन् सनन्तादिट् कृपेर्नेट् सरामादिवालकल्क्योरात्मपदाभाव इति इट्सूत्रम्। अत्र आत्मपदावेऽपि आत्मपदकारणस्य सनः सद्भावात्तस्मिन् कारणे आत्मपदकार्योपचारात् न इड्निषेधः, किन्तु 'स्वरति सूती'त्यनेन उरामेत्ताद्यद्विकल्पितेट्त्वं तस्यैव व्यवस्थापकं 'कृपेर्नेट्' इति सूत्रं, तस्मात् पदद्वयं स्वमतमपि ज्ञेयम्। पूर्वधातुवत् सनः परपदादीत्युक्तमतः कृपधातुसन आत्मपदकारणत्वम्। केषाञ्चिन्मते-चिक्लृप्सितेत्येव भवतीति पृथक्त्वेन नोक्तम्। विवर्तिषितेति सनन्ताद्विवृत्सधाधोस्तृन् सनन्तादिट्, 'वृतुबृधुस्यन्दुभ्यो नेट् सरामे आत्मपदाभाव' इति इट् सूत्रम्, अत्र आत्मपदाभावेऽपि आत्मपदकारणस्य सनः सद्भावात् न इड् निषेधः। केशाञ्चिन्मते विवृत्सितेति तन्मते आत्मपदाभावादिड् निषेध एव। संजिगंसितेति चिकलृप्सितेति च

१४२२। वाहुल्यात् कर्मण्यपि णकः।

पादाभ्यां ह्रियते—पादहारकं नूपुरादि॥ १४२२॥

१४२३। नन्द्यादेरनः।

'ल्युः' पाणिनिः ( ३।१।१३४ )। नन्दनः, जनार्दनः, मधुसूदनः, मदनः, तपनः, पतनः, विरोचनः, दर्पणः, संक्रन्दनः, कङ्कर्षणः, पवनः, विभीषणः, रमणः। 'ल्युरयं संज्ञायाम्' इति काशिका ( पा ३।१।१३४ )। तत्र च 'ल्युः कर्तरि' इति पुंस्त्व-

---

प्रथममुक्तमतो विवृत्सितेत्यपि प्रथममुक्तम्। वस्तुतस्तु विवर्तिषितेति प्रथमं वक्तुमुचितमिति ज्ञेयम्॥

१४४२। वाहु। वाहुल्यादिति, वाहुल्यात् कर्मणि वाच्येऽपि णको भवति। ह्रियते इति उह्यत इत्यर्थः॥

१४२३। नन्द्या। कर्तरि वाच्ये नन्द्यादेरुत्तरे अनो भवति। नन्दिर्ण्यन्तः। ल्युः पाणिनिरिति। ते योरनमादिशन्तीत्युक्तमतोऽनल्व्योरैक्यम्। नन्दन इति टु नदि समृद्धौ, ण्यन्तादने कृते णेर्हरः नन्दयतीत्यर्थः, नन्दनः कश्चित्। जनार्दन इति, अर्द हिंसायां, जननामानमसुरमर्दितवान् जनार्दनः श्रीकृष्णः। मधुसूदन इति सूद क्षणने। क्षणनं हिंसा। मधुं सूदत इत्यर्थः। मधुरसुरविशेषः, मधुसूदनः श्रीकृष्णः। मधुशब्दस्य मकरन्दवाचित्वमप्यस्ति, अतो मधुसूदनशब्दो भ्रमरवाचकोऽपि। मदन इति मदी हर्षे णिर्वृष्णीन्द्रः घटादित्वाद्वामनः ण्यन्तादनः र्णेहरः मदयतीत्यर्थः, मदनः कन्दर्पः। तपन इति तप सन्तापे, तपतीत्यर्थः, तपनः सूर्यः। पतन इति, पतॢ गतौ, पततीत्यर्थः। विरोचन इति रुच दीप्तौ, ण्यन्तादनः विरोचयतीत्यर्थः। विरोचनः सूर्यः। दर्पण इति दृप गर्वे, दृप्यतीत्यर्थः, दर्पणो मुकुरः। संक्रन्दन इति क्रदि आह्वाने रोदने च संक्रन्दतीत्यर्थः, संक्रन्दन इन्द्रः। सङ्कर्षण इति कृष विलेखनाकर्षणयोः, सङ्कर्षतीत्यर्थः। सङ्कर्षणो बलदेवः। पवन इति पूङ पवने पवत इत्यर्थः, पवनो वायुः।

विधौ अमरः ( ३।५।१५ )। अत्र च 'नन्द्यादेर्ल्युः' इति सर्वापि तट्टीका, किन्तु 'नन्दनं वनम्' ( अमरकोषः १।१।४५ ) इत्यत्र नन्दयतीति ल्युरिति क्षीरस्वामी।

"नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम्।"

—इति नन्द्यादि प्रकरणे भट्टिः ( ६।७२ )॥ १३२३॥

## १४२४। ग्रहादेर्णिनिः।

आदेर्ण इत्; इन् इति स्थिते, 'इन्-हन्'- ( २६८ ) इत्यादि त्रिविक्रमः—ग्राही स्थायी॥ १४२४॥

## १४२५। गमि-गाम्यादयस्तु भविष्यति साधवः।

व्रजं गमी, गामी, स्थायी, प्रतिबोधी, प्रयायी, भावी इत्यादि॥ १४२५॥

---

विभीषण इति ञि भी भये, णिभियो भीषादेशो ण्यन्तादनः, र्णेहरः विभीषयते इत्यर्थः, विभीषणो रावणानुजः। रमण इति रमु क्रीड़ायां णिर्वृष्णीन्द्रो घटादित्वाद्वामनः, ण्यन्तादनः, र्णेर्हरः रमयतीत्यर्थः, रमणः पतिः। ल्युरिति अयं ल्युप्रत्ययः संज्ञायां भवतीति काशिकामतम्। तत्र चेति, तत्र संज्ञायां ल्युः कर्तरि वाच्ये भवति। ल्युप्रत्यान्तः पुंसि वर्तते इत्यमरमतम्। अत्र चेति। तट्टीका अमरटीका। तस्मात् पुंस्त्वस्य टीकासम्मतत्वमप्यायातम्। किन्त्विति। तस्मात् नन्दनं वनमित्यत्र क्षीरस्वामिना यदुक्तं तत्र भट्टौ च पुंस्त्वस्य च व्यभिचारो दृश्यते इति क्षीरस्वामी अमरटीकाकारः॥

१४२४। ग्रहा। कर्तरि वाच्ये ग्रहादेरुत्तरे णिनिर्भवति। ग्रहीति ग्रह उपादाने गृह्णातीत्यर्थः। स्थायीति 'आतो युगि'त्यादिना युक्॥

१४२५। गमि। वक्तार्थमेतत्। व्रजं गमीति निपातात् भविष्यति णिनिर्वृष्णीन्द्राभावश्च। आधमर्ण्येत्यादिना षष्ठीनिषेधः। गामीत्यादौ निपातात् भविष्यति णिनिः। स्थायीति पूर्ववत्। प्रतिबोधीति वुध अवगमने। प्रयायीति या प्रापणे युक्। भावीति भू सत्तायाम्, आदिपदेन शिष्टप्रयोगानुसारेणान्यत्रापि णिनिर्विधेयः॥

१४२६। पचादेरत्।

'अच्' पाणिनिः ( ३।१।१४३ )। पचः, देवः, मेषः, सेवः, चरः, वदः, चलः, पतः, हनः ॥ १४२६ ॥

१४२७। चरादीनामत्प्रत्ययान्तानां द्विर्वा नरस्यारामश्च।

चराचर इत्यादि ॥ १४२७ ॥

१४२८। हन्तेर्हस्य घत्वञ्च।

घनाघनः। पटविस्तारे चुरादिः; अस्य तु—पटूपटः। पक्षे पटश्च, णेरनित्यत्वात्; जुमरमते तु—पाटः, पटापटः इत्यादि ॥ १४२८ ॥

---

१४२६। पचा। कर्तरि वाच्ये पचादेरुत्तरे अत् भवति। पच इति पचतीत्यर्थः। वद इति वद व्यक्तायां वाचि। देब इति दिवु क्रीड़ादिषु। मेष इति मिष स्पर्द्धायाम्। सेव इति सेवृ सेवने। चर इति चर गतौ। वद इति वद बक्तायां वाचि। चल इति चल कम्पने। पत इति पतलृ गतौ। हन इति हन हिंसागत्याः ॥

१४२७। चरा। अत्प्रत्यान्तानां चरादीनां द्विर्वा भवति, नरस्यान्तस्य स्थाने आरामश्च भवति। चराचर इति चराचरो जङ्गमः। आदिपदेन चलाचलः। पतापतः वदावद इत्यपि भवतीति मतम् ॥

१४२८। हन्ते। अत्प्रत्ययान्तस्य हन्तेर्द्विर्वा भवति। नराम-स्यारामश्च घत्वञ्च। घत्वञ्चेति नरे नारायणे चेत्यर्थः। घनाघन इति, 'शक्रो यातुकमत्तेभो वर्षुकाब्दी घनाघनः' इति नानार्थवर्गः। पट विस्तारे चुरादिर्ज्ञेयः। अस्य अत्प्रत्ययान्तपटस्य तु पटूपट इति साधुरिति शेषः। पक्षे पटश्च। हेतुमाह णेरिति। पटूपट इति चुरादिणेरनित्यत्वात् तदभावः। अत्प्रत्ययान्तस्य द्वित्वं नरस्यान्तस्य ऊरामश्च। अत्र णेरभावो ग्रन्थकृतामभीष्टो अत एवाह पक्षे पट-श्चेति। जुमरमते पटापटः पाटश्च ॥

१४२९। रात्रिमट-रात्र्यट-तिमिङ्गिलादयः साधवः।

१४३०। ईशोद्धव-किरति-प्रीणाति-गॄ-ज्ञाभ्यः कः।

क इत्, अरामः शेषः। क्षिपः, बुधः, भूरुहः, किरः, प्रियः, गिरः, ज्ञः। वाहुल्यात् क्षेपकः, क्षेप्ता ॥ १४३० ॥

१४३१। उपेन्द्रे आरामान्तात् कः।

सुग्लः, प्रज्ञः। वाहुल्यात् गौर्हन्यते यस्मै सः—गोघ्नोऽतिथि ॥ १४३१ ॥

---

१४२९। रात्रि। व्यक्तार्थमेतत्। रात्रौ अटतीति रात्रिमटो रात्र्यटश्च। निपातादत्। रात्रिमट इत्यत्र पूर्वपदात् मुम् च। तिमिङ्गिल इति गॄ निगरणे इति तिमि गिलतीति निपातादत्, ऋरामस्य इर् पूर्वपदात् मुम् च, 'गिरो रो लः' इत्यनेन लत्वन्तु सिध्यत्येव। तिमिर्मत्स्यविशेषः, तिमिङ्गिलोऽपि मत्स्यविशेषः ॥

१४३०। ईशो कर्तरि वाच्ये ईशोद्धवात् कॄ विक्षेपे, प्रीञ तर्पणे, गॄ निगरणे, ज्ञा अवबोधने, इत्येतेभ्यश्चोत्तरे को भवति क इत्। क्षिप इति क्षिप प्रेरणे, कंसारित्वाद्गोविन्दाभावः। बुधः अवगमने। बुधो ग्रहविशेषः पण्डितश्च। भूरुह इति रुह जन्मनि प्रादुर्भावे च भूरुहो वृक्षः। किर इति 'ऋरामस्येर् कंसारावि'ति इर्। किरः पक्षी। प्रिय इति धातोश्चतुःसनस्येयुवौ सर्वेश्वरे' इति इय्। गिर इति 'ऋरामस्येर्'। ज्ञ इति आरामहरः कंसारिसर्वेश्वररामतुके इटि उसि चे'ति आरामहरः। वाहुल्यादिति वाहुल्यात् वाऽसरूपोऽस्त्रियामित्यनेन णक-तृनौ च तेन क्षेपकः क्षेप्तेति ॥

१४३१। उपे। उपेन्द्रे पूर्वपदे सति कर्तरि वाच्ये आरामान्तधातोरुत्तरे को भवति। सुग्ल इति ग्लै हर्षक्षये। अत्र भाविनि भूतवदुपचारादारामान्तपाठः। आरामहर इत्यादिना आरामहरः। गोघ्न इति वाहुल्यात् कः। 'गमहनजनखनघसामुद्धवादर्शनं कंसारिसर्वेश्वरे ङं विने'ति उद्धवादर्शनं, हस्य घत्वम्। स्वर्गेषुपशुवाग्वज्र

१४३२। धेट-पा-घ्रा-ध्मा-दृशिभ्यः शः।

श इत्, अरामः शेषः। शिवत्वात् कृष्णधातुकत्वम्। धयः, पिबः, जिघ्रः, धमः, पश्यः। धेट्संयोगात् पिबतेरेव ; पातेस्तु—पाता॥ १४३२॥

१४३३। अनुपेन्द्रे लिपि-विद्लृ-धारि-पारि-वेद्यु-देजि-चेति-साति-साहेः शः, ददाति-दधातिभ्यां णश्च, ज्वलादेर्णातौ, प्रादेस्त्वत्, भू-दु-नीभ्यश्च।

---

इत्यमरोक्तत्वात् गोशब्देनात्र वाग्जले गृह्येते। अतिथिर्ना गृहागते इत्यमरः॥

१४३२। धेट्। कर्तरि वाच्ये धेट्प्रभृतिभ्य उत्तरे शो भवति श इत्। शिवत्वात् कृष्णधातुकत्वमिति तस्मात् सर्वत्र शपि कृते अरामहरः ए अयोरविष्णुपदान्ते इति अरामहरः कर्तव्यः। धय इति धेट् पाने, शिवत्वान्नारामान्तपाठः ए अयः। पिब इति पा पाने, पः पिबः। जिघ्र इति घ्रा गन्धोपादाने, घ्रो जिघ्रः। धम इति ध्मा-शब्दाग्निसंयोगयोः, ध्मो धमः। पश्य इति दृशिर प्रेक्षणे, दृशेः पश्यः। संयोगादित्यत्र साहचर्यादिति वा पाठः। पिबतेरेवेति ग्रहण-मिति शेषः। पातेति पा रक्षणे तृन्।

१४३३। अनु। उपेन्द्राभावे सति लिप उपदेहे विदलृलाभे इत्येताभ्यां धृञ धारणे, षृ पूरणे, विद वेदनाख्याननिवासेषु विद् ज्ञाने वा उत्पूर्व एजृ कम्पने, चिती संज्ञाने। ण्यन्तेभ्यः एतेभ्यः साते-ण्यन्तात् सतृ सुखे, सह मर्षणे इत्यस्माच्च उत्तरे शो भवति। ददा। उपेन्द्राभावे सति ददातिदधातिभ्यामुत्तरे शो भवति णश्च। ज्वला। उपेन्द्राभावे सति ज्वलादेरुत्तरे णातौ भवतः। प्रा। प्रादेरुत्तरस्मात् ज्वलादेरुत्तरे अत् भवति। ज्वलादिर्गणः। भू। उपेन्द्रा-भावे। सति भूदुनीभ्यश्चोत्तरे णातौ भवतः। लिम्प इति कृष्ण-

लिम्पः, विन्दः, धारयः इत्यादि। सातिः सौत्रः, सातयः। तथा—ददः दायः, दधः धायः। तथा—ज्वालः ज्वलः, चालः चलः, प्रज्वलः प्रचलः, विपुलमित्यादि। भावः, भवः। दुनोतेरेव—दावः, दवः। नायः, नयः॥ १४३३॥

१४३४। नौ च लिपेः शः।

निलिम्पा देवाः॥ १४३४॥

१४३५। गवादौ विन्दतेः शः संज्ञायाम्।

गोविन्दः अरविन्दम्॥ १४३५॥

---

धातुकत्वात् शप् तुदादित्वात् तस्य शो अरामहरः 'मुचादेर्नुम्शे' इति नुम्। विन्द इति पूर्ववत् नुम्। धारय इति ण्यन्तात् शः शपः कृष्णधातुकत्वात् न णेर्हरः गोविन्द ए अय अरामहरः। आदिपदेन पारयः, वेदयः, उदेजयः चेतय इति। सातय इति पूर्ववत्। एवं साहय इति। दद इति शे कृते शप् जुहोत्यादेरदादित्वात् तस्य महाहरः। जुहोत्यादेः पूर्ववद्द्विर्वचनं शब्लुकीति द्विर्वचनं 'श्नानारायणयोरारामहरौ निर्गुणकृष्णधातुके' इति अरामहरः। दाय इति णे कृते युक्। एवं दधः धाय इति। ज्वालः, ज्वल इति। ज्वल दीप्तौ। चालः चल इति चल कम्पने। विपुलमिति पुल महत्त्वे। अस्य जलादित्वं कुटादित्वञ्च, अतः 'कुटादेरनृसिंहो निर्गुणः' इत्यनेन गोविन्दाभाव इति। भावःभव इति भावः पदार्थः, भवो रुद्रः। दुनोतेरेवेति ग्रहणमिति शेषः। दाव दव इति। 'दवदावौ वरण्यवन्ही' इति नानार्थवर्गः। नायः नय इति। णीञ प्रापणे॥

१४३४। नौ च। नौ पूर्वपदे सति ऌिपेरुत्तरे शो भवति। निलिम्पा इति पूर्ववत्॥

१४३५। गवा। गवादौ पूर्वपदे सति विन्दतेरुत्तरे संज्ञायां शो भवति। गोविन्द इति गां विन्दतीत्यर्थः। अरविन्दमिति अरं शीघ्रं विन्दति अर्थात् प्रकाशमित्यरविन्दं पद्मम्॥

१४३६। आरामान्ताद्व्यधादेश्च णः, आसंभ्यां स्रुवः, अवतो हृषोः, अतेरिणः।

हायः, व्याधः, श्वासः, देहः, लेहः, श्लेषः। को न स्यात्। अवश्यायः। स्रु गतौ—आस्रावः, संस्रावः। शृणोतेस्तु—'वचने-स्थित आश्रवः' इत्यमरः ( ३।१।२४ )। विपरीतस्तु भ्रमः। अव-हारः, अवसायः, अत्यायः। 'प्रत्यायः' इत्यपि दृश्यते ; 'अवतान-वितानौ' इति च॥ १४३६॥

---

१४३६। आरा। व्यक्तार्थमेतत्। आसं। कर्तरि वाच्ये आसं-भ्यामुत्तरस्मात् स्रुव उत्तरे णो भवति। अव। अवादुत्तरयोर्हृसोः सम्बन्धे णः स्यात् कर्तरि। अते। व्यक्तार्थमेतत्। हाय इति ओ हाक् त्यागे णे कृते युक्। व्याध इति व्यध ताड़ने। श्वास इति श्वस प्राणने। देह इति दिह उपचयादर्शनयोरदादिः। लेह इति लिह आस्वादने। श्लेष इति श्लिष आलिङ्गने। को न स्यादिति। परत्वादपवादत्वाच्चेति शेषः। 'उपेन्द्रे आरामान्तात्' इत्यनेन कः कथं न भवतीति शङ्का स्यादित्युक्तं को न स्यादिति। अवश्याय इति श्यैङ् गतौ अवपूर्वस्य श्यैङो व्यधादित्वं ग्रन्थ-कृतामभिप्रेतमन्यथा आरामान्तत्वे पूर्वेणैव उदाहृतं स्यात्। 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिममि'त्यमरः। स्रु गताविति दन्त्य-सरामादिः। शृणोतेस्त्विति श्रु श्रवणे इत्यस्य त्वित्यर्थः। आश्रव इति पचादित्वादत्। विपरीतस्तु भ्रम इति। आश्रावशब्दस्य तालव्य-मध्यत्वमाश्रवशब्दस्य दन्तमध्यत्वञ्च भ्रम इत्यर्थः। अथवा श्रु गताविति तालव्यादिरप्यस्ति, किन्तु श्रवणार्थश्रुवः आश्रावो गत्यर्थश्रुवस्तु आश्रव इत्येव भ्रमः। अवहार इति हृञ हरणे। अवसाय इति सोऽन्तकर्मणि युक्; अस्यापि व्यधादित्वादेव णः कर्तव्यः, न तु आरामान्तत्वात्, पृथङ्‌निर्देशस्तु सोपेन्द्रत्वात्। अत्याय इति इन् गतौ। प्रत्याय इत्यपि दृश्यते इति। तस्मात् प्रतिपूर्व इन्धातोरपि णो भवतीति। अवतानवितानाविति तनु विस्तारे। इति चेति दृश्यत इति शेषः॥

१४३७। ग्राहो जलचरे साधुः।

१४३८। नृती-खन्वोष्टकः शिल्पिनि, रन्जेश्च।

'ष्वुन्' पाणिनिः ( ३।१।१४५ )॥ १४३८॥

१४३९। गायतेस्थक-टणनौ।

नर्तकः, खनकः। तथा—गाथकः, गायनः॥ १४३९॥

१४४०। रञ्जेर्नस्य हरः असि अके अने घिणुनि च।

रजकः। अशिल्पिनि तु—नर्तिता, गाता इत्यादि॥ १४४०॥

१४४१। प्रु-सृ-लूभ्योऽकः साधुकारिणि।

---

१४३७। ग्राह। ग्राह इति ग्रह उपादाने, व्यधादित्वादेव णः स्यादिति, किन्तु जलचरवाच्य एव निपातफलम्। ग्राहो जलचरे वर्तते। 'ग्राहोऽवहारो' इत्यमरः॥

१४३८। नृती। नृती गात्रविक्षेपे, खनु अवदारणे इत्येतयो रन्ज रागे इत्यस्य च शिल्पिनि कर्तरि वाच्ये टको भवति। ट इत्। ष्वुन् पाणिनिरिति। ते वोरकमादिशन्ति॥

१४३९। गाय। गै शब्दे इत्यस्य शिल्पिनि कर्तरि वाच्ये थक-टणनौ भवतः, टणावितौ। नर्तकः शिल्पिनि विशेषः, खनकोऽपि तथा। गाथकगायनौ समानार्थौ। टित्त्वादीप् वक्ष्यते। नर्तकी, खनकी, गायनीति॥

१४४०। रञ्जे। असि अके अने घिणुनि च परे रञ्जेर्नस्य हरो भवति। रजकः प्रसिद्धः। टित्त्वादीप् रजकीति। नर्तितेति तृन्। एवं गातेति॥

१४४१। प्रु। प्रुङ गतौ, सृ गतो, लूञ छेदने, इत्येतेभ्य उत्तरे साधुकारिणि कर्तरि वाच्ये अको भवति। सरूपत्वान्नतु णक

सरूपत्वान्न तु णकः। प्रवकः, सरकः, लवकः। 'श्रवतेश्च' इति कालापाः—श्रवकः। 'द्रवतेस्तु द्रवकः' इत्यपि जुमर-मतम् ॥ १४४१ ॥

१४४२। अक आशिषि।

जीवतात्—जीवकः ॥ १४४२ ॥

१४४३। कर्मण्यण्, ह्वेञ-वेञ-माभ्यश्च।

'उपेन्द्रो' (१३१४) इत्यादिना समासः; विश्वकारः। कृष्णं शृणोति, गच्छति, पश्यतीत्यादौ बाहुल्यान्न, सापेक्षत्वेऽपि न—महान्तं घटं करोति। कृष्णह्वायः, तन्त्रवायः, विश्व-मायः ॥ १४४३ ॥

---

इति। वाऽसरूपोऽस्त्रियामित्यत्र असरूपो भिन्नाकारविशेषः इत्युक्तम्। णकारशेषस्य तु भिन्नाकारता नास्तीति णकस्य सरूपत्वमतो न णक इत्यर्थः। श्रवतेरिति। श्रु गतावित्यस्यापि अको भवतीति कालापानां मतम्। द्रवतेस्त्विति। द्रु गतावित्यस्य तु अको भवतीति जुमर-मतम्। अपिशब्दो निश्चयार्थः। इत्यपीत्यत्र इतीति वा पाठः। अस्माकं मतेतु णको भवति ॥

१४४२। अक। आशिषि गम्यमानायां धातोरुत्तरे अको भवति। जीवतादित्यर्थव्याकारेणाशीः सूचिता। यथोक्तं,—'तुह्योस्तातङाशिषि वा सर्वत्र' इति ॥

१४४३। कर्मण्यण्। कर्मणि पूर्वपदे सति कर्तरि वाच्ये धातो-रुत्तरे अण् भवति। ण इत्। ह्वेञ। कर्मणि पूर्वपदे सति कर्तरि वाच्ये ह्वेञादिभ्यश्चोत्तरे अण् भवति। कर्मण्यनुपेन्द्रादारामात् क इत्, वक्ष्यमाणसूत्रेण के प्राप्ते अण्विधानम्। विश्वकार इति विश्वं करोतीत्यर्थः। बाहुल्यान्नेति अणिति शेषः। महान्तं विशालम्। कृष्णह्वाय इति ह्वेञ स्पर्द्धायां शब्दे च अणि कृते युक्, कृष्णं ह्वयतीत्यर्थः। तन्त्रवाय इति वेञ तन्तुसन्ताने, तन्त्रं वयतीत्यर्थः।

१४४४। सत्यङ्कारादयः साधवः।

सत्यं करोति, सत्यस्य कारो वा—सत्यङ्कारः, अगदङ्कारः, अस्तुङ्कारः, लोकम्पृणः, भ्राष्ट्रे इन्धे—भ्राष्ट्रमिन्धः, अग्निमिन्धः ॥ १४४४ ॥

१४४५। कर्मण्यनुपेन्द्रादारामात् कः।

मुक्तिदः। त्रैङ् पालने—भक्तत्रः। नेह—भक्तिसम्प्रदायः ॥ १४४५ ॥

---

विश्वमाय इति मा माने, माङ माने, मीङ प्रणिदाने वा। प्रथमोऽदादिः परपदी, द्वितीयो जुहोत्यादिः, तृतीयो भ्वादिः ॥

१४४४। सत्य। व्यक्तार्थमेतत्। सत्यं करोतीत्यर्थे अण् सिध्यत्येव किन्तु पूर्वपदान्मुम् निपातफलम्। सत्यस्य कार इत्यर्थे मुमेव निपातफलम्। कारः करणम्। अगदङ्कार इति अगदं करोति अगदस्य वेति निपातफलं पूर्ववज्ज्ञेयम्। अगदोऽरोगः। अण्-पक्षे अगदङ्कारो वैद्यः। 'रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सकः' इत्यमरः। अस्तुङ्कार इति अस्त्विति अस्तुप्रतिरूपकमव्ययमभ्युपगमे वर्तते। अस्त्विति करोति अस्त्वित्यस्य कारो वेत्यर्थः। अत्रापि निपातफलं पूर्ववत्। लोकम्पृण इति। पृण प्रीणने, 'ईशोद्धवे'त्यादिना कः, लोकस्य पृण इति षष्ठी-समासः निपातात् पूर्वपदान्मुम्। भ्राष्ट्रे इन्धे इति। इन्धे परे भ्राष्ट्र-शब्दे निपातात् मुम् भवतीति ज्ञापयितुं भ्राष्ट्रे इन्ध इत्युक्तम्। भ्राष्ट्रमिन्ध इति। इन्धनमिन्धः ञि इन्धी दीप्तौ भावे घण्। भ्राष्ट्रस्य इन्धः भ्राष्ट्रमिन्धः। भ्राष्ट्रं कपालिका ( खोला इति ख्याते )। अग्निमिन्ध इति अग्नेरिन्ध इत्यर्थः। निपातान्मुम् ॥

१४४५। कर्मण्य। कर्मणि पूर्वपदे सति अनुपेन्द्रादारामान्ता-द्धातोरुत्तरे कर्तरि वाच्ये को भवति। मुक्तिद इति डु दाञ दाने, आरामहरः, मुक्तिं ददातीत्यर्थः। त्रैङ् इति। त्रैङ् पालने। भक्तत्र

१४४६ । अकर्मण्यारामात् कः, स्थो भावे तु पुंसि ।

पादपः वृन्दावनस्थः । 'दरीमुखोत्थेन समीरणेन' ( कुमारसम्भवम् १।८ ) । तथा वैष्णवानामुत्थानं—वैष्णवोत्थो वर्तते । 'गोष्ठः' इति भावे, गवां स्थानमित्यर्थः ; 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति गावस्तिष्ठन्त्यत्रेति निर्गलितार्थः, 'गोष्ठं गोस्थानकं तत्तु' इत्यमरशासनात् ( २।१।१३ ) । 'ल्युः कर्तरीमनिज् भावे कः' ( ३।५।१५ ) इत्यत्र 'भावे क-प्रत्ययान्तः पुंसि' इति हि क्षीरस्वामी । 'आखूत्थशलभोत्थादि तदुत्थानेऽस्ति, न द्वयोः' इति तु शब्दार्णवः ॥ १४४६ ॥

---

इति भवतान् त्रायते इत्यर्थः । भक्तिसम्प्रदाय इति आरामान्ताद्ध्रधादेश्च ण इति णः, भक्तिं संप्रददातीत्यर्थः ॥

१४४६ । अकर्मण्या । अकर्मणि पूर्वपदे सति आरामान्ताद्धातोरुत्तरे कर्तरि वाच्ये को भवति । स्थो । अकर्मणि पूर्वपदे सति स्थ-उत्तरे कर्तरि वाच्ये को भवति, भावे वाच्येतु पुंसि को भवति । पादप इति पा पाने, 'उपेन्द्रे'त्यादिना समासः ; पादेन पिवतीत्यर्थः । पादपो वृक्षः । एवं द्वाभ्यां पिवतीति द्विपो हस्ती । कच्छे पिवतीति कच्छपः कूर्मः । बृन्दावनस्थ इति बृन्दावने तिष्ठतीत्यर्थः । दरीति । दरीमुखादुत्तिष्ठतीति दरीमुखोत्थस्तेन । 'उदः स्थास्तम्भोः सस्य हरः' इति सस्य हरः । दरी कन्दरः । समीरणेन वायुना । वैष्णवानामुत्थानमित्यर्थकथनम् । गोष्ठ इति भाव इति । ननु यदि गोष्ठ इत्यत्र भावे कप्रत्ययो विहितस्तर्हि गोष्ठपदेन गवां स्थितिरेवोच्यते, नतु व्रज इति चेत्तत्राह कृदभिहित इति । अभिहितः कथितः । गोष्ठशब्दस्य एतादृशार्थकथने हेतुमाह गोष्ठमिति । ननु यदि अमरकोषे गोष्ठशब्दस्य ब्रह्मत्वमुक्तं तर्हि गोष्ठ इति कथं संगच्छत इति चेत्तत्राह ल्युरिति । 'ल्युः कर्तरीमनिज् भावे कः' इत्यमरोक्तमिति ज्ञेयम् । तस्मात् पुंस्त्वमविरुद्धमिति भावः । ननु तर्हि गोष्ठमिति कथं संगच्छते इति चेत्तत्राह आखूत्थेति । अस्ति वर्तते । द्वयोः स्त्रीपुंसयोर्न तस्मात्

१४४७। कर्मणि शोकापनुदः सुखदे, तुन्दपरिमृजस्त्वलसे साधुः, मूलविभुजादयश्च साधवः।

१४४८। कर्मणि प्र-पूर्वाभ्यां दा-ज्ञाभ्यां कः।

कृष्णप्रदः, भक्तिप्रज्ञः ॥ १४४८ ॥

१४४९। कर्मणि समः ख्यः कः।

कृष्णधेनुसंख्यः ॥ १४४९ ॥

---

नपुंसके वर्तते इत्यर्थः। शब्दार्णवानुसारेण ब्रह्मत्वमप्यविरुद्धमिति भावः। अत उभयमतभेदात् गोष्ठादीनां ब्रह्मत्वं पुरुषोत्तमत्वञ्चेति न कश्चिद्विरोधः। आखुरुन्दुरुः। शलभः पतङ्गः। कृत्प्रकहणे एव षत्वप्रकरणे गोष्ठं व्रज इति वक्ष्यते ॥

१४४७। कर्मणि। सुखदे वाच्ये कर्मणि पूर्वपदे सति शोकापनुदः साधुः। शोकापनुद इति नुद प्रेरणे। शोकमपनुदतीत्यर्थे क-विधानं निपातफलम्। शोकापनुदशब्देन सुखद एवोच्यते। सुखद इति किम्? शोकापनोदः। तत्र 'कर्मण्यणि'त्यनेन अण्। य उपदेशेन केवलं शोकमपनुदति नतु सुखमुत्पादयति स शोकापनोद इति। तुन्द। अलसे वाच्ये तुन्दपरिमृजः साधुः। सामर्थ्यसद्भावेऽपि क्रियानुन्मुखता आलस्यं तद्युक्तोऽलसः। तुन्दपरिमृज इति मृजूष शुद्धौ निपातात् कः। तुन्दपरिमृजशब्देन अलस एवोच्यते। अन्यत्र तुन्दं परिमार्ष्टि यः स तुन्दपरिमार्ज इत्यत्र अणेव। साधुरिति एतौ साधू इत्यर्थः। मूल। व्यक्तार्थमेतत्। मूलविभुज इति भुज कौटिल्ये निपातात् कः। मूलानि विभुजतीत्यर्थः। आदिपदेन काकगुहादयः ॥

१४४८। कर्म। कर्मणि पूर्वपदे सति प्रपूर्वाभ्यां दा-ज्ञाभ्यामुत्तरे को भवति। कृष्णप्रद इति कृष्णं प्रददातीत्यर्थः। भक्तिप्रज्ञ इति भक्तिं प्रजानातीत्यर्थः ॥

१४४९। कर्म। कर्मणि पूर्वपदे सति सम उत्तरस्मात् ख्य उत्तरे को भवति। ख्य इति चक्षिङादेशात् ख्याञः ख्या प्रकथने

१४५०। कर्मण्यनुपेन्द्रगायतेष्टक्।

कृष्णगः। टित्त्वादीप्—कृष्णगी। उपेन्द्रात्तु—कृष्णसंगायः॥ १४५०॥

१४५१। सुरा-सीध्वोः कर्मणोः पिवतेष्टक्।

सुरापः; सुरापी॥ १४५१॥

१४५२। कर्मणि हरतेरदनुत्क्षेपे वयसि च, आङस्तु ताच्छील्ये।

संसारहरः। तथा—कवचहरः समाजगाम रामः, कवचधारण-योग्यवया इत्यर्थः। तथा कृष्णोच्छिष्टाहरः, तत्स्वभाव इत्यर्थः। उत्क्षेपे तु—भारहारः॥ १४५२॥

---

इत्यस्माच्चेत्यर्थः। कृष्णधेनुसंख्य इति कृष्णधेनूः संख्यातीत्यर्थः॥

१४५०। कर्मण्य। कर्मणि पूर्वपदे सति अनुपेन्द्राद् गायतेरुत्तरे टक् भवति। टकावितौ। कृष्णग इति कृष्णं गायतीत्यर्थः। 'कर्मण्यनु-पेन्द्रादारामात्' इत्यनेनापि कृष्णग इत्यादि सिध्यति, तथापि यत् टग्विधानं कृतं तत्फलमाह—टित्त्वादीप् कृष्णगीति। 'अ-इ-द्वयस्य हरः' इत्यनेन अरामहरः। कृष्णसंगाय इति आरामान्तरत्वान्नः।

१४५१। सुरा। सुरासीध्वोः कर्मणोः पूर्वपदयोः सतोः पिवते-रुत्तरे टग् भवति। सुराप इति सुरां पिवतीत्यर्थः। सुरा मदिरा। एवं सीधुपः सीधुपी। सीधुर्मदिराविशेषः। पिवतेरिति निर्देशः पा रक्षणे इत्यस्य निरासार्थः।

१४५२। कर्म। कर्मणि पूर्वपदे सति अनुत्क्षेपेऽर्थे वर्तमानात् हरतेरुत्तरे अद्भवति, वयसि च गम्यमाने हरतेरुत्तरेऽद्भवति। आङ। आङ उत्तरस्माद्धरतेस्तु ताच्छील्ये गम्येऽद्भवति। ताच्छील्यं तत्स्व-भावता। संसारहर इति संसारं हरतीत्यर्थः। कवचहर इत्यत्र कवचधारणयोग्यत्वेन वयो गम्यते। भारहार इति। अत्र अणेव। भारमुद्धृत्य देशान्तरं प्रापयतीत्यर्थः॥

१४५३। शक्त्यादिषु कर्मसु ग्रहेरत्।

शक्तिग्रहः, लाङ्गलग्रहः। एवमङ्कुश-यष्टि-तोमर-घट-घटी-धनुःषु ॥ १४५३ ॥

१४५४। सूत्रः ह इत्यवधारणे।

सूत्रग्राहोऽन्यत्र ॥ १४५४ ॥

१४५५। कर्मण्यर्हतेरत्।

कृष्णार्हः; कृष्णार्हा ॥ १४५५ ॥

१४५६। शस्त्रे कर्मणि धृञोऽत्, न तु सूत्र-दण्डयोः।

चक्रधरः। नेह—सूत्रधारः, दण्डधारः। सूत्रनिषेधात् अशस्त्रेऽपि—भूधरः ॥ १४५६ ॥

---

१४५३। शक्त्या। शक्त्यादिषु कर्मसु पूर्वपदेषु सत्सु ग्रहेरुत्तरेऽद्भवति। शक्तिग्रह इति शक्तिं गृह्णातीत्यर्थः। एवं लाङ्गलग्रह इति। 'नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि'ति परिभाषा सर्वत्र नेष्यते इति सूचयितुं घटीति पृथगुक्तम्। शक्त्यङ्कुश-यष्टि-धनुस्तोमर-लाङ्गल-घट-घट्यः ॥

१४५४। सूत्र। अवबोधने गम्यमाने सूत्रे कर्मणि पूर्वपदे सति ग्रहेरुत्तरेऽद्भवतीत्यर्थः। सूत्रग्रह इति सूत्रं धारयतीत्यर्थः। अत्र सूत्रधारणस्य आवश्यकता गम्यते। सूत्रग्राह इत्यत्र केवलं ग्रहणं गम्यते नतु नियमेन धारणमिति ॥

१४५५। कर्म। कर्मणि पूर्वपदे सति अर्हतेरुत्तरे अद्भवति। कृष्णार्ह इति अर्ह पूजायां कृष्णमर्हतीत्यर्थः। कृष्णार्हेति लक्ष्याम् ॥

१४५६। शस्त्रे। कर्मणि पूर्वपदे सति धृञ धारणे इत्यस्मादुत्तरे अद्भवति। नतु सूत्रदण्डयोः कर्मणोः पूर्वपदयोः सतोः धृञ उत्तरेऽन्न भवति। चक्रधर इति चक्रं धरतीत्यर्थः। चक्रं शस्त्रविशेषः। सूत्रधार इत्यत्र अणेव। एवं दण्डधार इति; बाहुल्यात् दण्डधरश्च। 'कालो

१४५७। स्तम्बेरमो हस्तिनि, कर्णेजपः सूचके साधू।

१४५८। शमि धातोरत् संज्ञायाम्।

शङ्करः। शम्बरो दैत्यः॥ १४५८॥

१४५९। अधिकरणे शेतेरत्, करणे पार्श्वादौ च।

क्षीरोदशयः। तथा पार्श्वाभ्यां शेते—पार्श्वशयः; उदरशयः, पृष्ठशयः॥ १४५९॥

---

दण्डधरः' इत्यमरः। सूत्रनिषेधादिति सूत्रस्य शस्त्रवाचकत्वाभावात् सूत्रे कर्मणि पूर्वपदे सति धृञोऽद्विधानं न सम्भवति, तथापि सूत्रे यन्निषेधो विहितः तस्माद्धेतोरशस्त्रेऽपि विधिर्ज्ञेयः, अतो भूधर इति। भूधरः पर्वतः॥

१४५७। स्तम्बे। हस्तिनि वाच्ये स्तम्बेरमः साधुः। स्तम्बे रमत इत्यर्थे निपातात् विष्णुभक्तिमहाहराभावश्च। 'स्तम्बो गुच्छ-तृणादिनः' इत्यमरः। 'इभः स्तम्बेरमः पद्मी'त्यमरः। कर्णे। सूचके वाच्ये कर्णेजपः साधुः। कर्णेजप इति कर्णे जपतीत्यर्थे निपातात् विष्णुभक्तिमहाहराभावश्च। 'कर्णेजपः सूचकः स्यादि'त्यमरः। साधु इति एतौ साधू॥

१४५८। शमि। शमि पूर्वपदे सति धातोरुत्तरे संज्ञायामद्भवति। शेतेरित्यस्यानुवृत्तिशङ्कानिरासार्थं धातोरिति कृतम्। शङ्कर इति शं कल्याणं करोतीत्यर्थः। शङ्करः शिवः। शम्बर इति वृञ वरणे स्वादिः। दैत्य इति दैत्यविशेष इत्यर्थः॥

१४५९। अधि। अधिकरणे पूर्वपदे सति शेतेरुत्तरेऽद्भवति। करणे पार्श्वादौ च पूर्वपदे सति शेतेरुत्तरे अद्भवति। क्षीरोदशय इति क्षीरोदे शेते इत्यर्थः। क्षीरोदः क्षीरसमुद्रः। उदरशय इति उदरेण शेते इत्यर्थः। एवं पृष्टशय इति। 'पृष्ठन्तु चरमं तनोरि'त्यमरः।

१४६०। उत्तानादिषु च।

उत्तानः शेते—उत्तानशयः। अवमूर्द्धा शेते—अवमूर्द्धशयः॥ १४६०॥

१४६१। दिग्धसहाच्च।

दिग्धसहशयः॥ १४६१॥

१४६२। गिरौ तु गिरिशः साधुः।

१४६३। अधिकरणे भिक्षा-सेना-दायेषु च चरेष्टः।

वृन्दावने चरति—वृन्दावनचरः। भिक्षां चरति—भिक्षाचरः। सेनां चरति—सेनाचर इत्यादि। 'कथं सहचरीति ? चिन्त्यम्' इति पुरुषोत्तमः। ( भाषावृत्तिः ३।२।१६ )। कालिकविशेषपरत्वात् सह एकस्मिन् काले चरतीति चिन्तनीयम्॥ १४६३॥

१४६४। रात्रिचर-रात्रिञ्चरौ द्वावपि साधू।

---

१४६०। उत्ता। उत्तानादिषु च पूर्वपदेषु सत्सु शेतेरुत्तरे अद्भवति। उत्तान इति उत्तानः सन्नित्यर्थः। उत्तान ऊर्ध्वमुखः। अवमूर्द्धेति अवमूर्द्धा सन्नित्यर्थः। अवमूर्द्धा अधोमुखः॥

१४६१। दिग्ध। दिग्धसहाच्चोत्तरस्मात् शेतेरुत्तरे अद्भवति। दिग्धसहशय इति दिग्धेन सह शेते इत्यर्थः॥

१४६२। गिरौ। गिरौ पूर्वपदे सति तु शीङो गिरिशः साधुः। गिरिश इति गिरौ शेते इत्यर्थे निपातादत् ईरामहरश्च। गिरिशः शिवः॥

१४६३। अधि। अधिकरणे भिक्षादिषु पूर्वपदेषु सत्सु चरेरुत्तरे टो भवति। वृन्दावनचर इति चर गतौ। लक्ष्यान्तु वृन्दावनचरीति। आदिपदेन आदायचर इति॥

१४६४। रात्रि। व्यक्तार्थमेतत्। विकल्पेन मुम्विधानं निपातफलम्। द्वौ राक्षसवाचकौ॥

१४६५। पुरोऽग्रतोऽग्रेषु सरतेष्टः, पूर्वे कर्तरि च।
पुरःसरः, अग्रतःसरः, अग्रेसरः। पूर्वः सरतीति—पूर्वसरः॥ १४६५॥

१४६६। शब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र-मन्त्र-पद-वर्जं कर्मणि डुकृञष्टो हेतुताच्छील्यानुलोम्येषु।
सर्वार्थकरी हरिभक्तिः। ताच्छील्ये—व्यसनकरः। आनुलोम्ये—प्रीतिकरः। 'पितुर्वाक्यकरं रामम्' इति भट्टिः (५।८८)। नेह—शब्दकारः, श्लोककारः इत्यादि॥ १४६६॥

१४६७। आद्यन्तानन्त-बहु-नान्दी-लिपि-लिवि-भक्ति-वलि-कर्तृ-चित्र-क्षेत्र-जङ्घा-बाहु-धनुररुस्-संख्यादि-दिवादि-तदादिषु कर्मसु डुकृञष्टः, किंयत्तद्बहुष्वत्।

---

१४६५। पुरो। पुरोऽग्रतोऽग्रेषु पूर्वपदेषु सत्सु सृ गतावित्यस्मादुत्तरे टो भवति। पुरःशब्दोऽव्ययम्। अग्रत इति तस्यन्तम्। अग्र इति सप्तम्यन्तम् एतद्द्वयमप्यव्ययम्। पूर्वे। पूर्वे कर्तरि पूर्वपदे सति सरतेरुत्तरे टो भवति। पुरःसर इति पुरः सरतीत्यर्थः। कर्तरीति किम्? —पूर्वं देशं सरतीति पूर्वसारः॥

१४६६। शब्द। हेतुताच्छील्यानुलोम्येषु गम्यमानेषु शब्दादीन् वर्जयित्वा कर्मणि पूर्वपदे सति डुकृञ उत्तरे टो भवति। आनुलोम्यम् आनुकूल्यम्। सर्वार्थकरी हरिभक्तिरिति, अत्र हरिभक्तेर्हेतुत्वम्। ताच्छील्ये मालाकरो वैष्णवस्तत्स्वभाव इत्यर्थः। आनुलोम्ये वचनकरः सेवक आचार्यचित्तानुवर्तनपर इत्यर्थः। शब्दकार इत्यत्र अणेव। क्रमदीश्वरेण शास्त्रकुम्भकर्मक्रमाणामपि वर्जनं कृतमिति ज्ञेयम्॥

१४६७। आद्य। आदिप्रभृतिषु कर्मसु पूर्वपदेषु सत्सु डुकृञ उत्तरे टो भवति। संख्यावाचके कर्मणि पूर्वपदे सति डुकृञ उत्तरे

अत्रापि विकल्पस्तस्यां ( ३।२।२१ ) भ्रमः। आदिकरः, अन्तकरः, अनन्तकर इत्यादि। सङ्ख्यायाम्—एककरः, द्विकर इत्यादि। दिवादौ—दिवाकरः, निशाकरः, विभाकरः, भास्करः, प्रभाकरः। तदादौ—तत्करः, यत्कर इत्यादि। तथा—किङ्करः, किङ्कराः, 'किङ्करी' इत्यपि दृश्यते॥ १४६७॥

**१४६८। कर्मकरो भृत्ये, दृतिहरि-नाथहरी पशौ, आत्मम्भर्युदरम्भरि-कुक्षिम्भर्यादयः, स्तम्बकरि-शकृत्करी व्रीहि-वत्सयोः, फलेग्रहिरबन्ध्यवृक्षे।**

---

टो भवति। दिवादौ कर्मणि पूर्वपदे सति डुकृञ उत्तरे टो भवति। तदादौ कर्मणि च पूर्वपदे सति डुकृञ उत्तरे टो भवति। कियत्। किं-यत्त-द्बहुषु कर्मसु पूर्वपदेषु सत्सु डुकृञ उत्तरे अद्भवति। अत्र सूत्रे कियत्तदव्ययं ज्ञेयं, पूर्वत्र तदादि-ग्रहणात्। बहुशब्दस्तु पूर्वत्र संख्येयपरः, अत्र संख्यापरः ज्ञेयः, उभयत्र ग्रहणसामर्थ्यात्। अत्रापीति। अत्रेति अद्विहिते सूत्रेऽपि विकल्पः स्यादिति या आह तस्यां प्रक्रिया-कौमुद्यां भ्रमो नियमत्वादित्यर्थः। आदिकर इति आदिं करोतीत्यर्थः। दिवाकरः सूर्यः, निशाकरश्चन्द्रः। विभाकरादयस्त्रयः सूर्यवाचकाः। अद्विधानस्य फलमाह—किङ्करेति। किङ्करीत्यपि दृश्यते इति। तथाच न्यासः। इदानीं याति किङ्करीति॥

१४६८। कर्म। भृत्ये वाच्ये कर्मणि पूर्वपदे सति कृञः कर्मकरो निपात्यते। भृत्ये इत्यत्र भृताविति वा पाठः। भृतौ गम्यमानायामित्यर्थः। भृतिर्वेतनम्। 'भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि सः' इत्यमरः। ट-विधानं निपातफलम्। कर्मणि भृताविति भाषावृत्तिसूत्रम्। दृति। पशौ वाच्ये कर्मणि पूर्वपदे सति हृञ हरणे इत्यस्य दृतिहरि-नाथहरी निपात्यते। इद्विधानं निपातफलम्। दृतिहरिः श्वा। नाथहरिः सिंह इति भाषावृत्तिः। आत्म। कर्मणि पूर्वपदे सति डुभृञ धारणपोषणयोरित्यस्य आत्मम्भर्यादयो निपात्यन्ते।

'कर्मादि'-कर्मणि पूर्वपदे कृञादीनामेते निपात्यन्ते। 'स्याद-बन्ध्यः फलेग्रहिः' इत्यमरः ( २।४।६ ); 'फलेग्रहीन् हंसि वनस्पतीनाम्' इति भर्तृहरिविप्रः ( भट्टिः २।३३ ) ॥ १४६८ ॥

१४६९। स्तन-शुन्योः कर्मणोर्धेटः, नासिकादिषु धमश्च, शर्द्धे जहातेः, विधु-तिलयोस्तुदः खश्।

स्तनन्धयः 'वामनश्च' ( १३३० ) शुनिन्धयः, नासिकन्धयः, नासिकन्धमः, नाड़िन्धयः, नाड़िन्धमः। एवं मुष्टिघटीखारी-वातेषु।

---

इद्विधानं पूर्वपदान्नुम् च निपातफलम्। 'उभौ चात्मम्भरिः कुक्षिम्भरिः, स्वोदरपूरके' इत्यमरः। स्तम्ब। व्रीहौ वाच्ये कर्मणि पूर्वपदे सति कृञः स्तम्बकरिर्निपात्यते। वत्से वाच्ये शकृति कर्मणि कृञः शकृत्करिर्निपात्यते, इद्विधानं निपातफलम्। 'धान्यं व्रीहिः स्तम्बकरि'रित्यमरः। 'शकृत्करिस्तु वत्सः स्यादि'ति चामरः। फले। अबन्ध्यवृक्षे वाच्ये कर्मणि पूर्वपदे सति ग्रहधातोः फलेग्रहिर्निपात्यते। इद्विधानम् अरामस्य एत्वञ्च निपातफलम्। बन्ध्यः फलरहितो वृक्षः। सर्वेषां वृत्तिमाह कर्मेति। कृञादीनामित्यादिपदेन हृञडुभृञग्रहां ग्रहणम्। एते कर्मकरादयः। भर्तृहरिविप्रो भट्टिकारः॥

१४६९। स्तन। स्तनशुन्योः कर्मणोः पूर्वपदयोः सत्योः धेट् पाने इत्यस्मादुत्तरे खश् भवति। नासि। नासिकादिषु कर्मसु पूर्वपदेषु सत्सु धेटो धमश्चोत्तरे खश् भवति। शर्द्धे। शर्द्धे कर्मणि पूर्वपदे सति जहातेरुत्तरे खश् भवति। विधु। विधु-तिलयोः कर्मणोः पूर्वपदयोः सतोः तुद उत्तरे खश् भवति। मुमिति सर्वेश्वरान्तेत्यादिनेति शेषः। स्तनन्धय इति धेट् पाने शिवत्वात् नारामान्तपाठः। कृष्णधातुकत्वात् शप् अरामहरः। एवमन्यत्र च ज्ञेयम्। वामनश्चेति सर्वेश्वरान्तेत्यादिनेति शेषः। नासिकान्धय इति धेट् पाने मुम् वामनश्च। नासिकान्धम इति ध्मा शब्दाग्निसंयोगयोः ध्मो धमः। नाड़िन्धय इति मुम् वामनश्च। एवमिति। ततश्च मुष्टिन्धयः, मष्टिन्धम

'मुञ्जकूलास्यपुष्पेषु धेटो वा' इति केचित्—मुञ्जन्धय इत्यादि। शर्धञ्जहः, विधुन्तुदः, तिलन्तुदः॥ १४६९॥

१४७०। अरुन्तुद-जन्मेजय-कूलमुद्रुज-कूलमुद्वहा-भ्रंलिहाः।

'अरुस्' इत्यादिकर्म-पूर्वपदत्वे तुदादिधातूनामेते साधवः। 'बाहुंलिहोऽपि' इत्येके॥ १४७०॥

१४७१। मित-नख-परिमाणेषु कर्मसु पचः खश्।

---

इत्यादि। मुञ्जेति। मुञ्जकूलास्यपुष्पेषु कर्मसु पूर्वपदेषु सत्सु धेट् पाने इत्यस्मादुत्तरे खश् वा भवतीति केचिद्वदन्ति। मुञ्जन्धय इत्यादीत्यादिपदेन कूलन्धयः, आस्यन्धयः, पुष्पन्धय इति मुञ्जन्धम इत्यादि च। शर्द्धजह इति ओ-हाक त्यागे खशि कृते शप्, तस्य महाहरः, जुहोत्यादित्वाद्द्विर्वचनं 'श्नानारायणयोरारामहरो निर्गुणकृष्णधातुके' इति आरामहरः, मुम्, शर्द्धं जहातीत्यर्थः। शर्द्धः कुत्सितशब्दः। शृधु अपानशब्दे भावे घण्। विधुन्तुद इति तुद व्यथने विधुं तुदति इत्यर्थः। विधुश्चन्द्रः। विधुन्तुदो राहुः॥

१४७०। अरु। अरुन्तुद इति वृत्तिमाह अरुस् इत्यादीति। अरुन्तुद इति निपातात् खश्, अरुःशब्दस्य सलोपश्च, अरुस्तुदतीत्यर्थः। 'अरुन्तुदस्तु मर्मस्पृगि'त्यमरः। जन्मेजय इति निपातात् ण्यन्तात् एजृ कम्पने इत्यस्मात् खश् रामधातुकत्वाभावात् न णेर्हरः गोविन्दः ए अय् मुम् अरामहरश्च। अत्र जनमेजय इत्यपि दृश्यते, जनमेजयतीत्यर्थः। कूलमुद्रुज इति रुजो भङ्गे निपातात् खश् मुम्। कूलमुद्वह इति वह प्रापणे निपातात् खश्। अभ्रंलिह इति लिह आस्वादने निपातात् खश्। अभ्रं मेघः। बाहुंलिह इति च भवतीति जुमरादिमतम्॥

१४७१। मित। मित-नखपरिमाणेषु कर्मसु सत्सु पच उत्तरे खश् भवति। परिमाणं—प्रस्थादिः। मितम्पच इति मितशब्दोऽल्पार्थः

मितम्पचः, नखम्पचः, प्रस्थम्पचः, द्रोणम्पचः। 'मितार्थस्यापि' इत्येके। अल्पम्पचः। 'पान्तावल्पम्पचान्मुनीन्' इति भट्टिः ( ६।९७ ) ॥ १४७१ ॥

१४७२। असूर्यम्पश्य-ललाटन्तप-प्रियम्वद-परन्तप-वाचंयम-सर्वंसहादयश्च।

कर्मपूर्वपदत्वे दृश्यादीनामेते साधवः। सूर्यमपि न पश्यति—असूर्यम्पश्य इत्यादि। भिन्नक्रमोऽयं नञ् अन्यत्रापि दृश्यते—अपुनर्गेयाः श्लोकाः, अश्राद्धभोजीत्यादि। 'आदि-ग्रहणात् अरिन्दमः। उग्रं यथा स्यात् तथा पश्यति – उग्रम्पश्यः ॥ १४७२ ॥

---

प्रस्थम्पच इति प्रस्थशब्देन तत्परिमिततण्डुलादिकमुपचारेणाभिधीयते। एवं द्रोणम्पच इति। 'अस्त्रियामाढ़कद्रोणौ खारी बाहो निकुञ्चकः। कुड़वः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथगि'त्यमरः। मितार्थस्यापीति ग्रहणमिति शेषः। इत्येक इति क्रमदीश्वरादय इत्यर्थः। अत्र स्वसम्मतिं सूचयितुं भट्टिप्रयोगं दर्शयति—पान्ताविति ॥

१३७२। असूर्य। वृत्तिमाह कर्मपूर्वपदत्व इति। सूर्यमपि न पश्यतीत्यर्थकथनम्। असूर्यम्पश्य इति निपातात् खश्, नञः पूर्वनिपातश्च दृशः पश्य मुम्। ललाटन्तप इति तप सन्तापे निपातात् खश्। ललाटन्तपः सूर्य इति पुरुषोत्तमः। प्रियम्वद इति वद व्यक्तायां वाचि निपातात् खश्। परन्तप इति ललाटन्तप इतिवत्। वाचंयम इति यमु उपरमे निपातात् खश्। पूर्वपदाद्मुम च निपातादेव 'इषुगमि-यमां छः शिवे' इत्यपि न प्रवर्तते। वाचंयमो मुनिः। सर्वंसह इति सह मषणे निपातात् खश्। ननु असूर्यम्पश्य इत्यस्य सूर्यमपि न पश्यति इति यदर्थ कथनं कृतं तत्कथं संगच्छतामिति चेत्तत्राह—भिन्नक्रमोऽयं नञिति। भिन्नः पृथक् क्रमो यस्येति विग्रहः। अन्यत्रापीति दृश्यत इति भिन्नक्रमो नञिति शेषः। अपुनर्गेया इति पुनर्न गीयन्त इत्यर्थः। अश्राद्धभोजीति श्राद्धं न भुङ्क्ते इत्यर्थः। आदिग्रहणादिति सूत्र इति शेषः। अरिन्दम इति दमु उपशमे निपातात्

१४७३। अन्यपूर्वत्वे च।

इरया माद्यति—इरम्मदः। वशः सन् वदति—वशम्वदः इत्यादि॥ १४७३॥

१४७४। अधिकरणे च।

पाणयो ध्मायन्ते यत्र सः—पाणिन्धमः पन्थाः। नाड्यो ध्मायन्ते यत्र—नाड़िन्धमः पन्थाः। 'मणिन्धम-करन्धमौ' च केशाञ्चित्। द्विषन्तं तपति, द्विषन्तं तापयति वा द्विषन्तपः; 'द्विषत्तापः' इत्यपि केचित्॥ १४७४॥

१४७५। हृदय-मित-सुतेभ्यो गमेः खः।

---

खश्। यद्यप्ययमकर्मकस्तथापि अन्तर्भूतण्यर्थत्वात् सकर्मकता अरिं दमयतीत्यर्थः। अरिः शत्रुः। सकर्मकोऽप्ययं दृश्यते। दमित्वाप्य-रिसंघातानिति भट्टिः। उग्रम्पश्य इति निपातात् खश् दृशः पश्यः॥

१४७३। अन्य। अन्येति आदिग्रहणादिति शेषः। इरयेति। इरा पृथ्वी जलञ्च। 'इरा भूवाक्सुराप्सु स्यादि'ति नानार्थवर्गः। इरम्मद इति निपातात् खश् दिवादेः श्यस्याभावश्च मुम्-वामनौ। इरम्मदो वज्राग्निः। नात्र कर्मणः पूर्वपदत्वम्। वशम्वद इति निपातात् खश्॥

१४७४। अधि। अधिकरणे वाच्ये च खश् भवति। आदि-ग्रहणादिति शेषः। पाणिन्धम इति निपातात् खश् ध्मो धमः। नाड़िन्धम इति निपातात् खश्, ध्मो धमः मुम्-वामनौ। मणिन्धम इति। केषाञ्चिन्मते मणिन्धमकरन्धमौ च भवतः। द्विषन्तमिति। द्विषन्तं तपति तापयति वा इत्यर्थे द्विषन्तपः, द्विषत्तापश्च भवति। इत्यपि केचिदिति वदन्तीति शेषः। द्विषन्तपः इत्यत्र द्विषच्छब्दस्यान्तः लुग्-भवतीति तेषां मतम्॥

१४७५। हृदय। हृदय-मित-सुतेषु पूर्वपदेषु सत्सु गमेरुत्तरे खो भवति। हृदयङ्गममिति हृदयं गच्छतीत्यर्थः। मितङ्गमो हस्ती

हृदयङ्गमं वचनम्, मितङ्गमो हस्ती, सुतङ्गमो राजभेदः। 'हृदयङ्गममेतत्त्वां ब्रवीमि' इति भट्टिः ( ६१०९ )। 'हृदयङ्गमा वाक्' इति चुल्लिभट्टिः॥ १४७५॥

१४७६। पुरन्दर-भुजङ्गमादयो भुजग-भुगङ्गादयश्च संज्ञाशब्दाः।

१४७७। सर्वकूलाभ्र-करीषेषु कर्मसु कषः खः।

सर्वङ्कषः॥ १४७७॥

---

सुतङ्गमो राजभेद इत्येव पाठः, विपरीतस्त्वपपाठः। हृदयङ्गमिति। एतत् हृदयङ्गमं वचनं त्वां ब्रवीमीति। हृदयङ्गमा वागिति। चुल्लिभट्टिरिति चुल्लिभट्टिर्ग्रन्थविशेषः॥

१४७६। पुरः। संज्ञाशब्दाः पुरन्दरादयो भुजगादयश्च खप्रत्ययान्तत्वेन निपातनीयाः। पुरन्दर इति ण्यन्तात् दॄविदारणे इत्यस्मान्निपातात् खः पूर्वपदादमुम्, वामनश्च णेर्हरः। पुरं दारयतीत्यर्थः। पुरन्दर इन्द्रः। भुजङ्गम इति भुजेन कौटिल्येन गच्छतीत्यर्थे निपातात् खः मुम्। भुजग इति। भुजेन कौटिल्येन गच्छतीत्यर्थे निपातात् खः मुमभावः संसारहरश्च। भुजङ्ग इति निपातात् खः संसारहरश्च। 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः। पुरन्दर-भुजङ्गमादय इत्यादिपदेन भगन्दरतुरङ्गमप्लवङ्गमादयो ज्ञेयाः। भगन्दरो रोगविशेषः। तुरङ्गमोऽश्वः, तुरेण त्वरया गच्छतीत्यर्थः। प्लवङ्गमः कपिर्भेकश्च। 'कपिभेकौ प्लवङ्गमावि'ति नानार्थवर्गः। प्लवेन लम्फेन गच्छतीत्यर्थः। भुजगभुजङ्गमादय इत्यादिपदेन तुरग-तुरङ्ग-प्लवग-प्लवङ्गमादयो ज्ञेयाः। 'घोटके पीति-तुरग-तुरङ्गाश्वतुरङ्गमाः' इत्यमरः॥

१४७७। सर्व। सर्वादिषु कर्मसु पूर्वपदेषु सत्सु कष उत्तरे खो भवति। सर्वङ्कष इति कष हिंसायाम्। एवं कूलङ्कषः, अभ्रङ्कषः, करीषङ्कष इति। विशुष्कं गोमयं करीषः। 'तत्तु शुष्कं करीषोऽस्त्री'त्यमरः॥

१४७८। भयर्तिमेघेषु कर्मसु कृञः खः।

भयङ्करः, ऋतिङ्करः, मेघङ्करो वातः ॥ १४७८ ॥

१४७९। क्षेम-प्रिय-मद्रेषु कर्मसु डुकृञः खाणौ।

क्षेमङ्करः, क्षेमकारः ॥ १४७९ ॥

१४८०। वृत्र-कृत-गो-ब्रह्म-शत्रु-चौरेषु कर्मसु हन्तेष्टक्।

वृत्रघ्न इत्यादि। बाहुल्यात्—चौरघातः, नगरघातश्च। एतत्-पदद्वयेन हस्त्युच्यते ॥ १४८० ॥

१४८१। कर्मणि हन्तेष्टक् अमनुष्यकर्तृत्वे।

संसारघ्नी हरिभक्तिः, चौरघातो गजः, शस्यघातो वृषः इति

---

१४७८। भय। भयादिषु कर्मसु पूर्वपदेषु सत्सु कृञ उत्तरे खो भवति ॥

१४७९। क्षेम। क्षेम-प्रिय-मद्रेषु कर्मसु पूर्वपदेषु सत्सु कृञ उत्तरे खो भवति अण् च। क्षेमङ्कर इति क्षेमं करोतीत्यर्थः। क्षेमं मङ्गलम्। अण्-पक्षे क्षेमकार इति। प्रियङ्करः, प्रियकार, मद्रङ्करः, मद्रकार इति ॥

१४८०। वृत्र। वृत्रादिषु कर्मसु पूर्वपदेषु सत्सु हन्तेरुत्तरे टग् भवति। वृत्रघ्न इति 'गम-हन-जन-खन-घसामि'त्यादिना उद्धवादर्शनं, हस्य घत्वम्; वृत्रघ्न इन्द्रः। आदिपदेन कृतघ्नः, गोघ्नः, शत्रुघ्नः, चौरघ्न इति। चोरघात इति, अणि कृते हस्य घत्वं नस्य तत्वं, वृष्णीन्द्रः। नगरघात इत्यत्र 'कर्मणि हन्तेष्टक्, अमनुष्यकर्तृत्वे' इत्यनेन टग् भवितु-मर्हतीति बाहुल्यादित्युक्तम् ॥

१४८१। कर्मणि पूर्वपदे सति मनुष्यातिरिक्तस्य कर्तृत्वे हन्ते-रुत्तरे टग् भवति। संसारघ्नीति टित्त्वादीप्। एवं प्रलम्बघ्नो वलदेवः, प्रलम्बोऽसुरविशेषः। चौरघात इति। इति चेति बाहुल्यात् भवतीति

च। अनभिधानात् वेण्वादौ च वाच्ये टक् न स्यात्; वृषघातो वेणुः ॥ १४८१ ॥

१४८२। आशिते कर्तरि भवतेः खः करण-भावयोः।

आशितास्तृप्ता भवन्ति येन स आशितम्भवः ओदनः; ओदनेनाशितम्भवं भवति, तृप्तिर्भवतीत्यर्थः ॥१४८२॥

१४८३। विश्वम्भरादयः संज्ञाशब्दाः।

१४८४। अन्तात्यन्ताध्व-दूर-पार-सर्वानन्त-सर्व-क्षेत्रेषु कर्मसु गमेरच्।

---

शेषः। चौरघातो गज इति यत् पुनरुक्तम् एतत्प्रयोजनं नावकलितम्। अथवा पूर्वत्र सामान्यकर्तृवाच्यत्वेन प्राप्ते बाहुल्यम् अत्रतु विशेषकर्तृ-वाच्यत्वेन प्राप्ते पुनर्ग्रहणमिति। अमनुष्यकर्तृत्वे इति किम्?—रिपु-घातो राजा ॥

१४८२। आशि। आशिते कर्तरि पूर्वपदे सति करणभावयो-र्वाच्ययोर्भवतेरुत्तरे खो भवति। आशित इति अश भोजने तृप्त्यर्थ-त्वेनाकर्मकत्वात् कर्तरि क्तः बाहुल्याद्दीर्घः। तथाच भाष्यं निपात-नादुपधादीर्घ इति। भाषावृत्तौ तु आशिते भुवः करणभावयोरिति सूत्रे आङ्पूर्वादश्नातेः कर्तृनिष्ठान्ते आशितशब्द उपपदे भवतेः खच् स्यादित्युक्तम्। आशितम्भव इति करणे खः। आसितम्भवमिति आशितेन भूयते इति भावे खः ॥

१४८३। विश्व। संज्ञाशब्दा विश्वम्भरादयोऽपि खप्रत्ययान्तत्वेन निपातनीयाः। विश्वम्भर इति। विश्वं बिभर्तीत्यर्थः। विश्वम्भरो विष्णुः। आदिग्रहणात् वसुन्धरा पतिम्वरा, कष्टं सहः, धनञ्जय इत्यादि। वसुन्धरा पृथ्वी, पतिम्वरा स्वयम्वरा, कष्टं सहो मुनिः, धनञ्जयो वह्निरर्जुनश्च ॥

१४८४। अन्ता। अन्तादिषु कर्मसु पूर्वपदेषु गमेरुत्तरे अच्

'डः' पाणिनिः ( ३।२।४८ )। 'संसारस्य हरश्चिति' (१८६) —अन्तग इत्यादि ॥ १४८४ ॥

१४८५। सुदुरोर्गमेरजधिकरणे।

सुगं वृन्दावनम्। दुर्गो वदरिकाश्रमः ॥ १४८५ ॥

१४८६। ग्रामगः कर्तरि च, अगो नगश्च शैल-वृक्षयोः साधुः, कर्मणि हन्तिघ्न-कपाटघ्नौ शक्ते साधू।

'बाहुघ्नः' इति चैके। 'शक्ते' किम् ? हस्तिघातो विषप्रदः ॥ १४८६ ॥

---

भवति। आदिपदेन अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्वगः, अनन्तगः, सर्वत्रग इति। अत्र संज्ञाशब्दाः पन्नगजिह्मगादयोऽपि अच्प्रत्ययान्ताः ज्ञेयाः। पन्नगजिह्मगौ सर्पवाचकौ। पन्नं चलितं गच्छतीति पन्नग इति जुमरः। पद्भ्यां न गच्छतीति पन्नगः। पृषोदरादीति तु भाषावृत्तिः ॥

१४८५। सुदु। सुदुरोः पूर्वपदयोः सतोरधिकरणे वाच्ये गमेरुत्तरे अच् भवति। सुगमिति सुखेन गच्छत्यस्मिन्नित्यर्थः। दुर्ग इति दुःखेन गच्छत्यस्मिन्नित्यर्थः ॥

१४८६। ग्राम। कर्तरि वाच्ये उक्तेभ्योऽन्यस्मिन् च पूर्वपदे सति गमेरुत्तरे अच् भवतीत्यर्थः। ग्रामग इति ग्रामं गच्छतीत्यर्थः। अगो। व्यक्तार्थमेतत्। अग इति न गच्छतीत्यर्थे निपातादच् नञोऽरामशेषः। नग इति निपातादच् नञोऽरामशेषाभावश्च। 'शैलवृक्षौ नगावगावि'ति नानार्थवर्गः। शैलः पर्वतः। कर्म। कर्मणि पूर्वपदे शक्ते वाच्ये हस्तिघ्न-कपाटघ्नौ साधू। शक्तः समर्थः, हस्तिघ्न इति निपातात् टक्। हस्तिनं हन्तुं शक्त इत्यर्थः, सच मनुष्यो वाच्यः, अन्यथा 'कर्मणि हन्तेष्टक् अमनुष्यकर्तृत्वे' इत्यनेनैव टक् स्यात्। एवं कपाटघ्न इति। बाहुघ्न इति चेति। बाहुघ्न इति भवति इत्येके वदन्ति। हस्तिघातो विषप्रद इति विषेण हस्तिनं हन्तीत्यर्थः ॥

१४८७। करणे कर्मणि वा पाणिघ-ताड़घौ शिल्पिनि साधू।

ताड़ आघातः। 'शिल्पिनि' किम् ? ताड़घातः॥ १४८७॥

१४८८। कर्मणि राजघ-क्लेशापह-तमोपह-कुमार-घाति-शीर्षघातिनः साधवः ।

१४८९। कर्मण्याशिषि हन्तेरच् स्यादिति वक्तव्यम्।

शत्रुं वध्यात्—शत्रुहः; तिमिहः, दस्युह इत्यादि॥ १४८९॥

---

१४८७। कर। करणे कर्मणि वा पूर्वपदे सति शिल्पिनि वाच्ये पाणिघताड़घौ साधू। पाणिघ इति निपातादच् हस्य घत्वञ्च, संसारहरः; पाणिना पाणिं वा हन्तीत्यर्थः। एवं ताड़घ इति। ताड़शब्दस्यार्थमाह—ताड़ आघात इति ॥

१४८८। कर्म। कर्मणि पूर्वपदे सति राजघादयः साधवः। राजघ इति राजानं हन्तीत्यर्थे निपातादच्। क्लेशापह इति क्लेशमपहन्तीत्यर्थे निपातादच्। तमोपह इति निपातादच्, तमोऽपहन्तीत्यर्थः। कुमारघातीति कुमारं हन्तीत्यर्थे निपाताण्णिनिः, हस्य घत्वं, नस्य तत्वं, वृष्णीन्द्रः एवं शीर्षघातीति। शीर्षं शिरः। 'उत्तमाङ्गं शिरः शीर्षमि'त्यमरः। साधव इति। एते राजघादयः साधव इत्यर्थः॥

१४८९। कर्मण्या। कर्मणि पूर्वपदे सति आशिषि गम्यमानायां हन्तेरुत्तरे अच् स्यादिति वक्तव्यम्। शत्रुह इति अत्राशीर्गम्यते। शत्रुं वध्यादिति कामपालप्रयोगेण वाक्योपन्यासः, शत्रुहपदस्य तत्समानार्थतां सूचयितुं कृत इति ज्ञेयम्। तिमिह इति तिमिर्मत्स्यविशेषः। दस्युह इति। दस्युः चौरः संज्ञाशब्दः। पटहकलहादयोऽप्यच्प्रत्ययान्ताः ज्ञेयाः। पटहो वाद्यविशेषः। कलहः प्रसिद्धः॥

१४९०। लक्षणे जायापत्योष्टग् वक्तव्यः।

जायाघ्नो हस्तः, पतिघ्नी पाणिरेखा॥ १४९०॥

१४९१। आढ्य-सुभग-स्थूल-पलित-नग्नान्ध-प्रियेष्वभूततद्भाववत्सु कर्मसु डुकृञः खनट् करणे।

'ख्युन्' पाणिनिः (३।२।५६)। खटावितौ, अनः शेषः॥ १४९१॥

१४९२। तेषु कर्तृषु तादृशेषु भुवः खिष्णु-खुकणौ कर्तरि।

अनाढ्यमाढ्यं कुर्वन्ति येन तत्—आढ्यङ्करणम्; सुभगङ्करणम्॥ १४९२॥

---

१४९०। लक्ष। लक्षणे कर्तरि वाच्ये जायापत्योः पूर्वपदयोः सतोः। हन्तेरुत्तरे टक् वक्तव्यः। लक्ष्यतेऽनेनेति लक्षणं शुभाशुभ-सूचकं चिह्नं, क्वचिदुपचाराल्लक्षणयुक्तोऽपि लक्षणपदेनाभिधीयते, यथा—शुक्लगुणयुक्तः पटः, शुक्ल इत्यभिधीयते इति। जायाघ्नो हस्त इति जायाहननलक्षणयुक्तो हस्तो लक्षणपदेनाभिधीयते। पतिघ्नी पाणिरेखेति अत्र रेखैव पतिहननस्य लक्षणम्।

१४९१। आढ्य। अभूततद्भाववत्सु आढ्य-सुभग-स्थूल-पलित-नग्नान्ध-प्रियेषु कर्मसु पूर्वपदेषु सत्सु करणे वाच्ये डुकृञ उत्तरे खनट् भवति, खटावितौ। अभूततद्भाववत्स्विति मतु-प्रत्ययस्तद्धितः। ख्युन् पाणिनिरिति। योरनमादिशन्ति॥

१४९२। तेषु। तादृशेषु अभूततद्भाववत्सु आढ्यादिषु पूर्वपदेषु सत्सु कर्तरि वाच्ये भुव उत्तरे खिष्णु-खुकणौ भवतः, खणावितौ। आढ्यङ्करणमिति आढ्यो धनी। 'इभ्य आढ्यो धनी'त्यमरः। सुभगङ्करणमिति असुभगं सुभगं कुर्वन्ति येन तदिति। एवं स्थूलङ्करणं, पतिङ्करणं, नग्नङ्करणमित्यादि। 'पलितं जरसा शौक्ल्यं केशादावि'त्यमरः। नग्नो विवस्त्रः। नग्नवासा दिगम्बरः' इत्यमरः॥

## १४९३। तद्धित-विप्रत्यये तु नेति वाच्यम्।

आढ्यीकुर्वन्त्यनेनेति न तथा, किन्तु अनेन भाव्यम्—आढ्यी-करणो रसविधिः, स्थूलीकरणमन्नम्। तथा च भाष्यम् ( पा ३। २।५६ )—'ख्युनि च्वि-प्रतिषेधोऽनर्थकः, ल्युट्-ख्युनोरविशेषात्।' अनाढ्य आढ्यो भवति—आढ्यम्भविष्णुः, आढ्यम्भावुकः। सुभगम्भविष्णुः, सुभगम्भावुक इत्यादि ॥ १४९३ ॥

---

१४९३। तद्धि। तद्धित-विप्रत्यये सतितु खनट् न भवतीति वाच्यं, विप्रत्ययेनैव तदर्थस्याभिहितत्वादिति शेषः। अनेनेति। अनेन प्रयोगेणेत्यर्थः। टनेनेति वा पाठः। तमाह—आढ्यीकरण इति। अत्र 'टनः करणाधिकरणयो'रिति वक्ष्यमाणसूत्रेण टनः कर्तव्यः। स्थूली-करणमन्नमिति स्थूलीकुर्वन्त्यनेनेति करणे टनः। भाष्यकारवचनेन स्वमतं द्रढ़यति—तथाच भाष्यमिति। ख्युनिति ख्युन्प्रत्ययविषये च्विप्रत्यये सति यः प्रतिषेधस्तस्यानर्थक्यं भवतीत्यर्थः। तस्मात् प्रतिषेधं विनैव ख्युन्प्रत्ययो न भवतीति भावः। आनर्थक्ये हेतुमाह—ल्युट्ख्युनोर-विशेषादिति। टन-ल्युटोरैक्यं ज्ञेयम्। नुम्विधानसूत्रे अनव्ययस्ये-त्युक्तम्, अतः ख्युन्प्रत्यये कृतेऽपि मुम् न भवतीति अविशेषादि-त्युक्तम्। तस्मादत्र ल्युड़ेव भवतीति भाष्यमतम्। अथवा च्विविषये ख्युन् ख्युन्च्विः, राजदन्तादित्वात् ख्युनः पूर्वनिपातः। यथा मयोक्तं तथा पुनर्भाष्यमाह—ल्युट्ख्युनोरविशेषात् च्विविषये ख्युनः प्रतिषेधस्या-नर्थक्यं स्यादिति ल्युड़ेव। ननु यद्येवं तर्हि निषेधस्य किं फलम् ? तत्रैवं वाच्यम्, अभूततद्भाववत्त्वे कर्मणि पूर्वपदे सति मुमर्थं ख्युन्-प्रत्ययो विहितः अभूततद्भाववाचक-विप्रत्यये सति तत्प्रत्ययान्तस्य अव्ययत्वात् मुमोऽभावः स्यात्, यद्येवं तर्हि तन्निमित्तख्युन्प्रत्ययेन किम् ? अतः स्पष्टार्थमेव निषेध इति, किन्तु आढ्यीकरण इत्यादि-प्रयोगदर्शनात् अनेन भाव्यमित्यप्युक्तमिति। आढ्यम्भावुक इति अनाढ्य आढ्यो भवतीत्यर्थः। सुभगम्भविष्णुरिति असुभगः सुभगो भवती-त्यर्थः। आदिपदेन स्थूलम्भविष्णुः, स्थूलम्भावुक इत्यादि ॥

१४९४। समाने कर्मण्यन्यतदादिषु च कर्मोपमानेषु दृशः क-क्विप्-सकः कर्मणि समानस्य च सः।

समानो दृश्यते सदृशः। 'स्रज्-दिश्-दृश्' (२५५) इत्यादिना कः—सदृक्। सदृक्षश्छान्दस इत्येके॥ १४९४॥

१४९५। अन्यादेरिवेन सह संसारस्यारामः काद्यन्तेषु दृशादिषु, इदम ईश्, किमः कीश्, अदसोऽमूश्।

अन्य इव दृश्यते—अन्यादृशः। एवम्—तादृशः, ईदृशः, कीदृशः, अमूदृश इत्यादि॥ १४९५॥

१४९६। क्रुञ्च्-दधृष्-स्रज्-उष्णिहश्च क्विवन्ताः।

---

१४९४। समा। समाने कर्मणि पूर्वपदे सति अन्यतदादिषु कर्मोपमानेषु पूर्वपदेषु सत्सु च कर्मणि वाच्ये दृश उत्तरे क-क्विप्-सको भवन्ति। समानशब्दस्य स्थाने सश्च भवति, दृशादिष्विति शेषः। सदृश इति कंसारित्वाद्गोविन्दाभावः। छान्दस इत्येके वदन्ति। इत्येके इति पुरुषोत्तमादय इत्यर्थः॥

१४९५। अन्या। व्यक्तार्थमेतत्। इद। दृशादिषु परेषु इदमः स्थाने ईश् भवति, किमः स्थाने कीश् भवति, अदसः स्थाने अमूश् भवति। सर्वत्र इवेन सहेति ज्ञेयम्। श इत्, शित् सर्वस्येति न्यायेन शिदादेशः समुदयादेशः। अन्यादृश इति इवेन सह अरामस्यारामः। तादृश इति स इव दृश्यते इति इवेन सह संसारस्यारामः। ईदृश इति अयमिव दृश्यते इति इवेन सह इदम ईश्। कीदृश इति क इव दृश्यते इति, इवेन सह किमः कीश्। अमूदृश इति असाविव दृश्यते इति इवेन सह अदसोऽमूश्। इत्यादीत्यादिपदेन क्विप् सकोरुदाहरणानि—यादृश्, एतादृश् इत्यादीनि च ज्ञेयानि॥

१४९६। क्रुञ्च्। वृत्तिमाह क्रुञ्च-धृषिति। क्रुन्च कौटिल्याल्पीभावयोः। ञि धृषा प्रागल्भ्ये, सृज विसर्गे उत्पूर्वस्निह प्रीतौ

क्रुञ्च धृष-सृज-उत्पूर्वस्निहामेते पक्षिविशेष-धृष्ट-मालाच्छन्दो-विशेषेषु क्विवन्ता निपात्यन्ते। क्रुङ्, दधृक्॥ १४९६॥

१४९७। नाम्नि सद्लृ-सू-द्विष-द्रुह-दुह-युज-लाभार्थ-विद-भिद-छिद-जि-नी-राजिभ्यः क्विप्।

उपनिषत्, शुचिषत्। षत्वं वाच्यम् ( २००१)—प्रसूः, कृष्ण-प्रसूः, कंसद्विड़ित्यादि। मृदु यथा स्यात् तथा नयति—मृदुनीः, मृदुन्यौ॥ १४९७॥

---

एषाम्। 'क्रुङिति निपातात् क्विप् तवर्गस्य चवगश्चवर्गयोगे' इति नस्य ञरामः, सत्सञ्ज्ञान्तस्य इरः। 'चवर्गस्य कवर्गः विष्णुपदान्ते' इति ञरामस्य ङरामः। क्रुङ् वकविशेषः। दधृगिति निपातात् क्विप्, द्विर्वचनञ्च 'नरकरामस्य अरामः' धस्य दत्वं, 'सृज दृश इत्या'दिना कः, दधृक्, धृष्टः प्रगल्भः। आदिपदेन स्रक् उष्णिगिति। स्रगिति निपातात् क्विप्, सृजः स्रज् च दिश् इत्यादिना कः। स्रक् माला। उष्णिगिति निपातात् क्विप्, उदो दरामलुक् षत्वञ्च, 'स्रज दिश' इत्यादिना कः। उष्णिक् छन्दोविशेषः॥

१४९७। नाम्नि। नाम्नि पूर्वपदे सति सद्लृ विषरणगत्य-वसादेनेषु, सूङ् प्राणिगर्भविमोचने, द्विष अप्रीतौ, द्रुह जिघांसायां, दुह प्रपूरणे, युजिर् योगे युज् समाधौ द्वयोरेव ग्रहणं, विद्लृ लाभे, भिदिर विदारणे, छिदिर द्विधाकरणे, जि जये, णीञ प्रापणे, राजृ दीप्तौ इत्येतेभ्य उत्तरे कर्तरि वाच्ये क्विप् भवति। उपनिषदिति, 'सदेः प्रतिविवर्जिन उपेन्द्रात् क्रियते तद्वदि'त्यनेन षत्वम्। शुचिष-दित्यत्र षत्वविधानसूत्रं नोक्तमित्याह—षत्वं वाच्यमिति। वक्ष्यत इत्यर्थः। षत्वप्रकरणे सुषामादयश्चेति वक्ष्यते। प्रसूर्माता कृष्ण-प्रसूरिति कृष्णं प्रसूते इत्यर्थः। कृष्णप्रसूर्यशोदा। कंसद्विड़िति कंसं द्वेष्टीत्यर्थः। आदिपदेन दैत्यध्रुक्, गोधुक्, कृष्णयुक्, भक्तिवित्, वकभित्, भवबन्धच्छित्, कंसजिदिति। मृदुन्याविति 'सहजानेकसर्वे-श्वरस्ये'त्यादिना ईरामस्य यरामः। एवं विराजतीति विराड़िति॥

१४९८। अग्र-ग्रामयोः कर्मणोर्नियः क्विप् णत्वञ्च।

अग्रणीः, ग्रामणीः ॥ १४९८ ॥

१४९९। धी-प्रधीप्रभृतयः साधवः।

ध्यायते अनया—धीः। एवं जुहूः। प्रकृष्टं ध्यायति—प्रधीः। एवं द्योतते—दिद्युत्। गच्छति—जगत्। दीर्यते—ददृत्। दृन्निति हिंसार्थेऽव्ययं हिंसायां भवतीति; यद्वा दृढ़ो भवतीति ढस्य नः। दृन्भूः स्त्री सर्परुद्रयोः, तरुसर्पजातिभेदो वा। आप्यायते—आपीः ॥ १४९९ ॥

---

१४९८। अग्र। अग्रग्रामयोः कर्मणोः पूर्वपदयोः सतोर्निय उत्तरे क्विप् भवति णत्वञ्च। अग्रणीशब्दः श्रेष्ठार्थः, ग्रामणीशब्दो नानार्थः। 'ग्रामणीर्नापिते पुंसि श्रेष्ठेग्रामाधिपे त्रिषु च' इति नानार्थवर्गः ॥

१४९९। धी। व्यक्तार्थमेतत्। धीरिति ध्यै चिन्तायां, निपातात् करणे क्विप् ध्यायो धीश्च। धीर्बुद्धिः। जुहूरिति हु वह्नौ दाने निपातात् क्विप् द्विर्वचनं, नारायणस्य त्रिविक्रमश्च, 'हस्य जो नरस्ये'ति जत्वम्। 'ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः' इत्यमरः। प्रधीरिति निपातात् क्विप्, ध्यायो धीश्च। दिद्युदिति द्युत दीप्तौ, निपातात् क्विप् द्विर्वचनञ्च, 'द्युतिष्वाप्योर्नरस्य सङ्कर्षणः'। जगदिति निपातात् क्विप् द्विर्वचनञ्च, कवर्गनरस्य चवर्गः हरिवेणुहरः, तुक्। 'पिष्टपं भुवनं जगदि'त्यमरः। ददृदिति दॄ विदारणे दिवादिः निपातात् क्विप्, द्विर्वचनं, नारायणस्य वामनश्च। नरस्य वामन इति नरस्य वामनः, तुक्। अत्र दॄ भये इत्यस्य भ्वादेर्ग्रहणमिति जयादित्यः, विदारणार्थस्य क्र्यादेर्ग्रहणमिति क्रमदीश्वरः। हिंसायां भवति इत्यर्थकथनम्। एवं दृढ़ो भवतीति च। ढस्य न इति निपातादेवेति शेषः। न इत्यत्र अराम उच्चारणार्थः। यदा दृन्नित्यस्य पूर्वपदत्वं तदा दृन्भूशब्दः स्त्रीलिङ्गः सर्पे रुद्रे च वर्तते, यदातु दृढ़ इत्यस्य पूर्वपदत्वं, तदा दृन्भूशब्दः तरु-सर्पजातिभेदवाची, तरु-सर्पजातिभेद इति तरु-जातिभेदः, सर्पजातिभेदश्चेत्यर्थः।

१५००। उपेन्द्रे कर्मणि च भजेर्ण्विः।

ण इत्। प्रभाक्, कृष्णभाक् ॥ १५०० ॥

१५०१। तुरासाह्-जलासाह्-पृष्ठावाह्-परिव्राज इत्येते च साधवः।

'अनकारान्ते उपसर्गे चोपपदे वहेर्ण्विर्नास्ति' इति भाष्यम्; तेन 'भूवाह्, वारिवाह् निर्वाह् इत्यादयोऽपप्रयोगाः' इति पदचन्द्रिकायाम् ॥ १५०१ ॥

१५०२। अनो वहेरनडुह् साधुः।

---

यद्वेति यदुक्तं तदनुसारेण तरु-सर्पजातिभेदो वेत्युक्तम्। आपीरिति ओ प्यायी वृद्धौ भ्वादिरात्मपदी निपातात् क्विप् प्यायः पीश्च ।।

१५००। उपे। उपेन्द्रे कर्मणि च पूर्वपदे सति भजेरुत्तरे ण्विर्भवति। ण इत्, प्रभागिति केवलस्य प्रत्ययवेर्हरः, वृष्णीन्द्रः। एवं कृष्णभागिति ।।

१५०१। तुरा। व्यक्तार्थमेतत्। तुरं वेगं सहत इत्यर्थे निपाताण्ण्विः, तुराशब्दारामस्य त्रिविक्रमश्च वृष्णीन्द्रः, ततः सौ कृते हस्य ढः, साढ़ः षाड़िति साढ़ः षाट्। तुराषाड़िन्द्रः। जलं सहत इत्यर्थे निपाताण्ण्विः, त्रिविक्रमश्च वृष्णीन्द्रः, ततः सौ कृते जलाषाड़िति। पृष्ठं वहतीत्यर्थे वह प्रापणे, निपाताण्ण्विः वृष्णीन्द्रः, परिव्रजतीत्यर्थे व्रज गतौ निपाताण्ण्विः वृष्णीन्द्रः, परिव्राट् सन्न्रासी। अनकारान्त इति। अनकारान्ते उपसर्गे च उपपदे सति वहेरुत्तरे ण्विर्न भवतीति भाष्यमतम्। तस्मादुपसर्गभिन्नेऽकारान्ते उपपदे सति ण्विर्भवतीति। तेनेति तेन हेतुना। भुवाहादयो हान्ताः। अपप्रयोगा अशुद्धप्रयोगाः। एषु ण्विर्न प्राप्नोतीति पदचन्द्रिकायाम-पप्रयोगा इत्युक्तम् ।।

१५०२। अनो। अनो वहेरिति अनःशब्दपूर्वस्य वहधातोरित्यर्थः।

१५०३। अनन्ने कर्मण्यदः क्विप्।

तुलसीपत्रात्। नेह—अन्नादः ॥ १५०३ ॥

१५०४। क्रव्यादादयश्च साधवः।

चात् क्रव्यादपि ॥ १५०४ ॥

१५०५। नाम्न्यारामात् मनिप् क्वनिप् वनिप् विश्च।

सुष्ठु ददाति—सुदामा, श्रीदामा ; 'दामोदर-मास्था'-(५४६) इतीत्वम्—सुपीवा, हरिभक्तिदावा, विश्वपाः। प्रायच्छन्दस्येव विधिरयमिति। यथादृष्टमेवोदाहार्यम् ॥ १५०५ ॥

---

अनः शकटम्। अनो वहतीत्यर्थे तिपातात् क्विप्, सस्य डत्वञ्च, 'वचिस्वपी'त्यादिना सङ्कर्षणो। अनड्वान् वृषः ॥

१५०३। अनन्ने। अन्नव्यतिरिक्ते कर्मणि पूर्वपदे सति अद उत्तरे क्विप् भवति। तुलसीपत्रादिति तुलसीपत्रमत्तीत्यर्थः। अन्नाद इति कर्मण्यण्णिति अण्।

१५०४। क्रव्या। व्यक्तार्थमेतत्। क्रव्याद इति क्रव्यमत्तीति क्विवभाव एव निपातफलम्। कर्मण्यण्णिति अण्। क्रव्यं मांसं, क्रव्यादो राक्षसः। चादिति चशब्दोपादानात् क्विवपि तेन क्रव्यादपीति। क्रव्यात् राक्षसः। 'राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः' इत्यमरः ॥

१५०५। नाम्न्या। नाम्नि पूर्वपदे सति आरामान्ताद्धातोरुत्तरे मनिप् क्वनिप् वनिप् विश्च भवति। सुदामेति कर्तरि मनिप्। श्रीदामेति श्रियं ददातीत्यर्थः। सुपीवेति पा पाने क्वनिप्, सुष्ठु पिवतीत्यर्थः। हरिभक्तिदावेति हरिभक्तिं ददातीत्यर्थे वनिप्। विश्वपा इति विश्वं पातीति विः वेर्हरः। प्राय इति। अयं विधि. प्रायश्छन्दस्येव वर्तते इति हेतोर्यथादृष्टमेव उदाहार्यं, नतु स्वेच्छयेत्यर्थः ॥

१५०६। अन्येभ्योऽपि मनिवादयः।

सुशर्मा, देवशर्मा, सुत्वा—याज्ञिकः, धीवा—धारकः ॥१५०६॥

१५०७। हरिवेणोरारामो वनिपि।

१५०८। नेड् वन्-ति-त्रादौ भणादिवर्जम्।

ओणृ—अवावा। दैत्यवृश्चमाचष्टे इति ण्यन्तात् क्विप्—दैत्यव्। क्विप्, धातुमात्रादयं विधिः। करोति कृत्, भक्तिकृत्। ऋतौ यजति ऋत्विक्। 'क्विपि च' (१३१७) इति ईरामनिषेधात् संस्थाः। 'श्या-श्वि-व्या-ज्या'-( ८७० ) इति त्रिविक्रमः—मित्रं ह्वयते मित्रहूः। 'वेञस्तु क्विपि' ऊः, उवौ। 'हरिवेण्वन्तोद्धवस्य

१५०६। अन्ये। आरामान्तादन्येभ्योऽपि मनिवादयो भवन्ति। सुशर्मेति शॄ हिंसायां मनिपि कृते गोविन्दः। एवं देवशर्मेति। सुत्वेति सुञ अभिषवे क्वनिप्, तुक्। याज्ञिक इति याज्ञिकवाचीत्यर्थः॥

१५०७। हरि। वनिप् परे हरिवेणोः स्थाने आरामो भवति॥

१५०८। नेड्। वनि तौ त्रादौ च परे इड् न भवति। भणादिवर्जमिति भणादेस्तु भणितिः दीधितिः इड् निषेधो न भवतीत्यर्थः। ओणृ इति ओणृ अपनयने। अवावेति वनिपि कृते हरिवेणोरारामः, ओ अव्। दैत्यविति णौ कृते 'अनेकसर्वेश्वरस्य संसारहरः' इत्यनेन संसारहरः। क्विप्। धातोरुत्तरे क्विप् भवति। धातुमात्रादिति मात्रशब्दोऽत्र साकल्यार्थः। 'मात्रं कात्स्न्र्येऽवधारणे' इति नानार्थवर्गः। ऋत्विगिति वचिस्वपीत्यादिना सङ्कर्षणः। क्विपि चेति इरामनिषेधादिति, दामोदरादेरीरामो न यपि क्विपि चेति निषेधसूत्रं; श्याश्विव्येतादीति अनेन सङ्कर्षणस्य त्रिविक्रमः। मित्रहूरिति वचिस्वपीत्यादिना सङ्कर्षणः। वेञस्तु क्विपीति अनेन सङ्कर्षणस्य त्रिविक्रमः। ऊरिति वेञ तन्तुसन्ताने वचिस्वपीत्यादिना सङ्कर्षणः। उवाविति 'धातोरीदूतोरियुवौ सर्वेश्वरे बहुलमि'ति उव्। प्रशान् इति।

त्रिविक्रमः' ( ८६५ ), 'धातार्मो नः' ( २७६ )—प्रशान्। 'इन्-हन्' ( १२१ ) इति निर्देशान्न दीर्घः—कंसहनौ। 'ज्वर-त्वर'- ( ७८७ ) इत्यादि—जूः; जूरौ; तूः, तूरौ; स्रूः, स्रुवौ; ऊः, उवौ। 'अद्वयादूठो वृष्णीन्द्रः' ( २९४ )—गोपानवति गोपौः, गोपावौ ॥ १५०८ ॥

१५०९। एरामात् क्वौ वस्य हरः।

देवृ—देः, दयौ। सेवृ—सेः, सयौ। 'ए-ओ-वामनेभ्यो बुद्धस्यादर्शनम्' ( १७२ )—हे से। 'राच्छवयोर्हरः' ( ८६७ ), मूर्च्छा—मूः, मुरौ। धुर्वी हिंसायां—धूः, धुरौ ॥ १५०९ ॥

१५१०। गमादेर्हरिवेणुहरः क्वौ।

---

शमु उपशमे इन्-हन्निति निर्देशादिति इन्-हन्-पूषन्-अर्यमन् इत्येतेषामुद्धवस्य त्रिविक्रमः। सुश्योरेवेति सूत्रम्। न दीर्घ इति सुश्योः परत्वाभादिति शेषः। त्रिविक्रम इति वा पाठः। ज्वर-त्वरेत्यादीति। अनेन सर्वेश्वरस्य वस्य ऊट्। जूरिति ज्वर रोगे, जूराविल्येव पाठः। तूरिति ञि त्वरा सम्भ्रमे। स्रूरिति स्रिवु गतिशोषणयोः। स्रुवावित्युव्। ऊरिति अव रक्षणे। गोपौः कृष्णः। गोपावाविति औ आव् ॥

१५०९। एरा क्वौ सति एरामादुत्तरस्य वरामस्य हरो भवति। देवृ इति देवृ देवने। दयाविति ए अय्। सेवृ इति सेवृ सेवने। ए ओ वामनेभ्य इतीति वामनेन बुद्धस्यादर्शनम्। मूर्च्छा इति मूर्च्छा मोहसमुच्छ्राययोः। मूरिति छस्य हरे कृते निमित्तापायात् त्रिविक्रमनिवृत्तिः, तत 'इरुरन्तधातोरुद्धवस्य त्रिविक्रमो विष्णुपदान्ते' इति त्रिविक्रमः। मुराविति विष्णुपदान्त इत्युक्तम्, अतो नात्र त्रिविक्रमः। धूरिति अत्र वस्य हरः ॥

१५१०। गमा। क्वौ परे गमादेर्हरिवेणुहरो भवति। गदिति हरिवेणुहरे कृते तुक्। संयदिति यमु उपरमे। सुनदिति नम प्रह्वत्वे

गच्छति—गत्, संयत्, सुनत्। 'सुमच्च' इति क्वचित् ॥१५१०॥

१५११। उपेन्द्रस्य पूर्वपदस्य च त्रिविक्रमो नहि-वृति-वृषि-व्यधि-रुचिषु क्विवन्तेषु।

उपानत्, निवृत्, प्रावृट्, मृगावित्, मर्मावित्, नीरुक्। 'उपेन्द्रादेः' किम्? तिग्मा रुक् यस्य सः—तिग्मरुक् ॥ १५११ ॥

१५१२। कृष्णनाम-विष्वग्-देवानां संसारस्याद्रि-रचि।

लुप्तनकार-क्विवन्ताञ्चतावित्यर्थः। सर्वमञ्चति—सर्वद्र्यङ्, विष्वद्र्यङ्, देवद्र्यङ् ॥ १५१२ ॥

---

शब्दे च। धातुत्रयं गमादिः। सुमच्चेति कुचिदिति। गमादौ मन-धातोरपि ग्रहणं कुचिद्व्याकरणेऽस्तीति ॥

१५११। उपे। क्विवन्तेषु नह्यादिषु परेषु उपेन्द्रस्य पूर्वपदस्य त्रिविक्रमो भवति। उपानदिति नह बन्धने 'नहो ध इति हस्य धः उपेन्द्रस्य त्रिविक्रमः। उपानत् पादुका। नीवृदिति वृतु वर्तने। 'नीवृज्जनपदो देशः' इत्यमरः। प्रावृड़िति वृषु सेचने, प्रावृड़् वर्षाकालः। मृगाविदिति व्यध ताड़ने, ग्रहिज्येत्यादिना सङ्कर्षणः, पूर्वपदस्य त्रिविक्रमः। मृगा-विद्व्याधः। एवं मर्माविदिति। नीरुगिति रुच दीप्तौ। तिग्मा तीक्ष्मा, रुक् रुचिः। तिग्मरुगिति वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामिति वक्ष्यमाणसूत्रेण पुरुषोत्तमवत्त्यम्। कृत्सूत्राद्यं सप्तम्यन्तं पूर्वपद-मित्युक्तम्, अतो नास्य पूर्वपदत्वम् ॥

१५१२। कृष्ण। अचि परे कृष्णनामादीनां संसारस्य स्थाने अद्रिर्भवति। अचीत्यस्यार्थमाह—लुप्तनकारेति। सर्वद्र्यङिति अच-श्चतुर्भुजानुबन्धानाञ्च नुम् कृष्णस्थाने इति नुम् राधाविष्णुजनाभ्या-मिति सोर्हरः, तवर्गस्य चवर्गश्चवर्गयोगे, सत्सङ्गान्तस्य हरः। चवर्गस्य कवर्गः। एवमन्यत्र ज्ञेयम्। विष्वद्र्यङिति विष्वगञ्चती-त्यर्थः। विष्वगीत्यव्ययम्। 'समन्तस्तु परितः सर्वतो विष्वगि'त्य-

१५१३। अदसस्त्वचि अमुमुयच्, अदमुयच्, अमुद्र्यच्, अदद्र्यच् इति चत्वारीच्छन्ति।

अमुमुयङ्, अमुमुयञ्चावित्यादि ॥ १५१३ ॥

१५१४। भगवति तु मुपूर्वस्य यस्य ई सन्धि-निषेधश्च।

अमुमुईचः, अमुमुईचा। द्रिपूर्वस्य तु—अमुद्रीचः ॥ १५१४ ॥

१५१५। सहस्य सध्रिः, समः समिस्तिरसस्तिरि-रचि।

सध्र्यङ्, सम्यङ्, तिर्यङ्। आशासनम् आशीः, मित्राणि शास्ति—मित्रशीः। आशीर्वद्वाच्यः। घृतं श्च्योतति—घृतश्च्युत्।

---

पीत्यव्ययवर्गः। विष्वद्र्यङ् विष्वगञ्चतीति प्राणिवर्गः। एवं देवद्र्य-ङिति। देवानञ्चति देवद्र्यङिति प्राणिवर्गः ॥

१५१३। अदः। निपातसूत्रमेतत् व्यक्तार्थञ्च। इच्छन्तीति पूर्वाचार्या इति शेषः। आदिपदेन अदमुयङ् अदमुयञ्चावित्यादि। अमुद्र्यङ् अमुद्र्यञ्चावित्यादि, अदद्र्यङ् अदद्र्यञ्चावित्यादि च ज्ञेयम ॥

१५१४। भग। व्यक्तार्थमेतत्। अमुमुईच इति। एवम् अद-मुचः अदमुईचेति। अमुद्रीच इति अचोऽरामहरो भगवति पूर्वस्य च त्रिविक्रम इत्यनेन अरामहरे कृते 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति न्यायेन यरामस्य इरामः, ततस्त्रिविक्रमः। एवमदद्रीच इति ॥

१५१५। सह। अचि परे सहस्य स्थाने सध्रिर्भवति, समः स्थाने समिर्भवति, तिरसः स्थाने तिरिर्भवति। सध्र्यङिति। यः सहाञ्चति सध्र्यङ् स इत्यमरः। सम्यङिति समञ्चतीत्यर्थः। तिर्यङिति स तिर्यङ् यस्तिरोऽञ्चति इत्यमरः। तिरःशब्दो वक्रार्थो-ऽव्ययम्। आशासेति सजुष्-आशिष् इति निर्देशादत्र शिषादेश इति

तत्समाचष्टे इति णिः, संसारहरः क्विप्, 'यवयोर्हरो वले' (८६४), नामत्वात् स्वादयः, सरामजः शरामश्चे इति दन्त्यादित्वात् 'स्कोः सत्सङ्गाद्योर्हरः' (२५१), 'चवर्गस्य कवर्गः' (२४४)— घृतक्, घृतश्चौ ॥ १५१५ ॥

१५१६ । युष्मदस्मदोर्णिक्विवन्तयोर्युष्म-स्मौ ।

त्वां, युवां, युष्मान् वाचष्टे, एवं माम्, आवाम्, अस्मान् वा इति णौ संसारहरे क्विपि—युष्म् अस्म् इति मान्तौ साधू ॥ १५१६ ॥

१५१७ । तयो रूपाणि सु-जस्-ङे-ङस्सु प्रकृतवदेव

शेषः । 'सजुष् आशिष् इत्यनयोरिसुसन्तधातोश्च रो विष्णुपदान्ते' इति सूत्रम् । आशीरिति आङ्-शासु इच्छायां भावे क्विप्, शासः शिष्, यरामस्य ररामः, 'इरुरन्तधातोरुद्धवस्य त्रिविक्रमः' इत्यादिना त्रिविक्रमः । अत्र कंसारिविष्णुजनपरत्वाभावात् आङ्शासोरग्रहणाच्च 'शासः शिष् कंसारिविष्णुजन-ङ्योरि'त्यनेन शिष् न भवतीति सजुष् आशिष् इति निर्देशादित्युक्तम् । मित्रशीरिति कर्तरि क्विप् । अत्र कंसारिविष्णुजनस्य परत्वाभावात् शिष् न प्राप्नोतीत्याह—आशीर्वद्वाच्य इति । आशीर्वत्त्वादेव शिषादेश इति । घृतश्च्युदिति । श्च्युतिर् क्षरणे दन्त्यादिरयं 'सस्य शश्चवर्गयोगे' । संसारहर इति 'अनेकसर्वेश्वरस्य संसारहरः' इत्यनेनेति शेषः । क्विपि कृते णेर्हरः क्विपो विष्णुजनत्वस्वीकारात् यवयोर्हरो वल इत्युक्तमिति ज्ञेयम् । सरामज इति । चे परे शरामः सरामजात इत्युक्तम्, अतो दन्त्यादित्वम् ॥

१५१६ । युष्म । वृत्तिमाह त्वां युवामिति । त्वामाचष्टे इत्यत्र त्वदादेशाभावो निपातफलम् । मामाचष्टे इत्यत्र मदादेशाभावश्च निपातफलम् । 'युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्वे' इति त्वन्मद्विधानसूत्रम् ॥

१५१७ । तयो । तयोर्युष्मस्मोः प्रकृतवदेवेति । युष्मदस्मच्छब्दसिद्ध-

वाच्यानि, अन्यत्र तु क्विवन्तयोर्युषसौ त्यक्त्वा, प्रकृतयोर्व-म-पर्यन्तभागं त्यक्त्वा क्विवन्तपदशिष्टं प्रकृतपदशिष्टवत् कार्यम्, अत्र टौसुङिषु व-मौ त्यागे सारामौ ग्राह्यौ, अन्यत्र तु निररामौ।

यथा—त्वां युवां, युष्मान् वाचक्षाण आचक्षाणौ इत्यादिषु त्वं, युवां, यूयम् ; युषां, युषां, युष्मान् ; युष्या, युषाभ्यां, युषाभिः ; तुभ्यं, युषाभ्यां युषभ्यम् ; युषत्, युषाभ्यां, युषत् ; तव, युष्योः, युषाकम् ; 'युष्माम्' इत्येके। युष्यि, युष्योः, युषासु। एवमस्मदः—

प्रकृतविष्णुपदवदेवेत्यर्थः। अन्यत्र रिवति, सु-जस्-ङे-ङस्भ्योऽन्येषु प्रत्ययेषु परेषु। क्विवन्तयोरिति युष्मस्मोरित्यर्थः। युषसौ त्यक्त्वेति, युषसौ वर्जयित्वेत्यर्थः। प्रकृतयोर्वमपर्यन्तभागं त्यक्त्वेति क्विवन्तयोरवशिष्टमारभ्येति शेषः। प्रकृतयोरिति प्रकृतयोर्विष्णुपदयोरित्यर्थः। क्विवन्तपदशिष्टं क्विवन्तपदावशिष्टं प्रकृतपदशिष्टवत् प्रकृतपदावशिष्टविशिष्टं कार्यम्। प्रकृतपदशिष्टवदिति मतुप्रत्ययः। क्विवन्तयोर्युष्-अस्-भागात् यदवशिष्टमक्षरम् अर्थात् मराम औ-प्रभृति तस्य स्थाने प्रकृतपदस्य वम-पर्यन्तभागस्य त्यागात् अवशिष्टं यदामादिरूपं तद्विधीयते इति निर्गलितार्थः। अत्रेति सारामाविति। सारामौ वमावित्यर्थः। एवं निररामाविति। अत्र युष्मद उदाहरणमाह—यथेति। इत्यादिष्वित्यादिपदेन आचक्षाणा, आचक्षाणमित्यादीनां ग्रहणम्। युषामिति युष्मयुवामिति स्थिते क्विवन्तस्य युष्मः युषं त्यक्त्वा क्विवन्तावशिष्टं मराममारभ्य प्रकृतस्य युवामित्यस्य वपर्यन्तभागस्य त्यागः करणीयः। ततश्च क्विवन्तपदशिष्टस्य मस्य प्रकृतपदशिष्टेन आमा योगः कार्यः। युषामिति युष्मत्वामिति स्थिते क्विवन्तस्य युषं त्यक्त्वा मराममारभ्य प्रकृतस्य वपर्यन्तभागस्य त्यागः करणीयः। ततश्च युष आमा योगः कार्यः। एवमन्यत्र च ज्ञेयम्। क्विवन्तपदशिष्टप्रकृतपदशिष्टवदिति पाठेतु क्विवन्तपदशिष्टप्रकृतपदशिष्टयोर्यथा भवति तथा कार्यमित्यर्थः। युष्येति अत्र साराम-वरामस्य त्यागः। एवमोसि ङौच ज्ञेयम्। एवमस्मद

अहम्, असां, वयमित्यादि। कौमारास्तु टापरत्वे—युष्मा, अस्मा, चतुर्थी-भ्यसि युष्मभ्यम्, अस्मभ्यम्; सुपि—युष्मासु, अस्मासु इति मन्यन्ते; किन्त्वपाणिनीयम् ॥ १५१७ ॥

१५१८। असिः।

सर्वधातुभ्योऽसिः स्यात्। उरुव्यन्त्राः, नृचक्षाः ॥ १५१८ ॥

१५१९। अजातावनुपेन्द्रोपपदे णिनिस्ताच्छील्ये, जातावपि व्रताभीक्ष्ण्ययोश्च, कर्त्रुपमाने च।

१५२०। मन्यतेः खश्-णिनी आत्ममनने।

कृष्णसेवी। जातौ तु—विप्रसेवः। अजातौ व्रते—हरि-

---

इति। आदिपदेन, असाम् असाम् असान्। अस्या, असाभ्याम्, असाभिः, मह्यम्, असाभ्याम् असभ्यम्, असत्, असाभ्याम्, असत्, मम अस्योः असाकम्, अस्याम् इत्येके, अस्यि अस्योः असास्विति। कौमारास्त्विति। कौमाराः कालापाः।

१५१८। असि। असेरिराम इत्। उरुव्यचा इति व्यच व्याजीकरणे, उरुभ्यां विचतीत्यर्थः। 'कुटादेरनृसिंहो निर्गुणो वचेस्त्वसिं विना' इत्यनेन न सङ्कर्षणः। नृचक्षा इति चक्षिङ् व्यक्तायां वाचि ॥

१५१९। अजा। अजातौ अनुपेन्द्रोपपदे पूर्वपदे सति ताच्छील्ये गम्यमाने धातोरुत्तरे णिनिर्भवति। व्रते आभीक्ष्ण्ये च गम्यमाने अजातौ अनुपेन्द्रोपपदे पूर्वपदे सति जातावपि पूर्वपदे सति च धातोरुत्तरे णिनिर्भवति। व्रतं शास्त्रानुसारी नियमः। आभीक्ष्ण्यं पौनःपुन्यम्। अजातौ जातावपि कर्त्रुपमाने च पूर्वपदे सति धातोरुत्तरे णिनिर्भवति ॥

१५२०। मन्य। आत्मविषये मनने गम्यमाने कर्तरि वाच्ये जातावजातावपि पूर्वपदे सति मन्यतेरुत्तरे खश्णिनी भवतः। मन्यतेरिति निर्देशात्तानादिकस्य मनु बोधने इत्यस्याग्रहणम्। कृष्णसेवीति तत्स्वभाव इत्यर्थः। विप्रसेव इति, अत्र ताच्छील्यं गम्यते एव, किन्तु

निर्माल्यभोजी । अत्राभीक्ष्ण्ये—हरिनामग्राही । जातौ—तुलसीसेवी । एमवजातौ कृष्ण इव गायति—कृष्णगायी । जातौ तु—कृष्णे गोपस्नेही ।

शिवत्वात् श्यः, वैष्णवमात्मानं मन्यते—वैष्णवम्मन्यः, वैष्णवमानी । 'वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् क्यङ्-मानिनोर्णौ च' ( ८९७ ) इति—वैष्णवमानिनी । आभीक्ष्ण्ये कथं कुल्माषखादः ? बाहुल्यात् ॥ १५२० ॥

१५२१ । एकसर्वेश्वरान्तस्य द्वितीयैकवचनवत् प्रयोगः खिदन्ते ।

---

जातिवाचकस्य पूर्वपदत्वात् कर्मण्यण्णित्यण् । अजातौ व्रत इति उदाहरणं दर्श्यते इति शेषः, । एवम् आभीक्ष्ण्य इति । हरिनिर्माल्यभोजीति, हरिनिर्माल्यमेव भुङ्क्ते इत्यर्थः । अत्रेति अत्र अजातौ । हरिनामग्राहीति पुनः पुनर्हरिनाम गृह्णातीत्यर्थः । हरिनाम पुनः पुनः गृह्णतो जनस्य प्रेमलक्षणा भक्तिर्भवतीति अत्र प्रवर्तते नत्वसौ तच्छील इति । तुलसीसेवीति व्रते आभीक्ष्ण्ये च उदाहरणम् । तुलसीमेव सेवते इति, पुनः पुनः तुलसीं सेवते इत्यर्थः । कृष्णगायीति आतो युक् । कृष्णे गोपस्नेहीति स्निह प्रीतौ, कृष्णे गोप इव स्निह्यतीत्यर्थः । शिवत्वात् श्य इति शिवत्वात् कृष्णधातुकत्वम्, अतः शपि कृते दिवादित्वात् शपः श्य इति भावः । वैष्णवम्मन्य इति 'सर्वेश्वरान्ते'त्यादिना मुम् । वैष्णवमानिनीति सिद्धयर्थं सिद्धान्तमाह—वाच्यलिङ्गलक्ष्मीरिति । वैष्णवमानिनीति नान्तत्वादीप् वक्ष्यते । वैष्णवीमात्मानं मन्यते इत्यर्थः । आभीक्ष्ण्ये कथं कुलमाषखाद इति ? अत्र णिनिर्भवितुमर्हतीति विरोधः । सिद्धान्तमाह—बाहुल्यादिति । 'स्याद्यावकस्तु कुल्माषः' इत्यमरः । ( काश्मीरदेशजः कुलसी, वोरो धान्यं, काञ्जिकञ्च । अयं दन्त्यान्तोऽपि । रासः ) ॥

१५२१ । एक । खिदन्ते परे एकसर्वेश्वरस्य ईश्वरान्तस्य नाम्ना द्वितीयैकवचनवत् प्रयोगो भवति । गाम्मन्य इति गामात्मानं मन्यते

गाम्मन्यः, नावम्मन्यः, स्त्रियम्मन्यः, श्रियम्मन्यं स्त्रीकुलम्, भवम्मन्यः ॥ १५२१ ॥

१५२२। अतीते।

प्रभुरयं 'ङ्वनिप्' पर्यन्तः ॥ १५२२ ॥

१५२३। करणे यजो णिनिः।

सोमेनेष्टवान्—सोमयाजी ॥ १५२३ ॥

१५२४। कर्मणि हनो णिनिर्निन्दायाम्।

वैष्णवघाती। नेह कंसं हतवान् ॥ १५२४ ॥

१५२५। ब्रह्म-भ्रूण-वृत्रेषु कर्मसु हनः क्विप्।

ब्रह्महा। तत्राकरणान्न तुक्—ब्रह्महभ्याम्। ब्रह्मादिष्वेव हन्तेः

---

इत्यर्थः। गोशब्दस्य अमि यथा गामिति भवति तथैवात्र प्रयुज्यते इति। एवमन्यत्र च। 'स्त्रिया अम्शसोर्वा' इत्युक्तमतः स्त्रियम्मन्यः स्त्रिम्मन्य इति। श्रियम्मन्यं स्त्रीकुलमिति श्रीर्लक्ष्मीः ॥

१५२२। अतीते। सुगमम् ॥

१५२३। करणे। करणे पूर्वपदे सति अतीते काले यज उत्तरे णिनिर्भवति। सोमयाजीति उपेन्द्रेत्यादिना समासः ॥

१५२४। कर्म। कर्मणि पूर्वपदे निन्दायां गम्यमानायां हन उत्तरे अतीते णिनिर्भवति। वैष्णवघातीति वैष्णवं हतवानित्यर्थः। अत्र निन्दा गम्यते। नेहेति निन्दावगमाभावादिति शेषः ॥

१५२५। ब्रह्म। ब्रह्म-भ्रूण-वृत्रेषु कर्मसु पूर्वपदेषु सत्सु हन उत्तरे अतीते क्विप् भवति। ब्रह्महेति ब्रह्माणं हतवानित्यर्थः। ननु ब्रह्महभ्यामित्यत्र नामान्तस्येत्यादिना नस्य हरे कृते तुक् कथं न भवतीति चेत्तत्राह—तत्राकरणान्न तुक् इति। एवं भ्रूणहा वृत्रहेति। 'भ्रूणोऽर्भके स्त्रैणगर्भे' इति नानार्थवर्गः। वृत्रोऽसुरविशेषः। ननु क्विप्

क्विप्, 'वचनं नियमार्थम्' इति भाष्यम्। भूते नियमार्थकान्न कालसामान्ये, तेन वीरं हन्तीति—वीरहा। हिमहा। "यत्र तिष्ठति कंसहा" इत्यादि प्रयोगादन्यत्रापि कंसहा, मधुहा॥ १५२५॥

१५२६। सुकर्म-पाप-मन्त्र-पुण्येषु कर्मसु डुकृञः क्विप्।

सुकृत्॥ १५२६॥

१५२७। अन्यत्र च।

शास्त्रकृत्॥ १५२७॥

१५२८। सोमसुदग्निचितौ साधू।

---

सिध्यत्येव तर्हि किमर्थं लक्षणं कृतमिति चेत्तत्राह—ब्रह्मादिष्वेव हन्तेः क्विविति। स्वमतं द्रढ़यति वचनं नियमार्थमिति भाष्यमिति। ननु यदि नियमः कृतस्तर्हि वीरहा हिमहेत्यादि कथं भवत्विति चेत्तत्राह—भूते नियमार्थकान्न कालसामान्य इति वक्ष्यमाणयोगापेक्षया नियमार्थकात् इत्युक्तमिति ज्ञेयम्। तस्मात् ब्रह्मादिपूर्वपदेषु हन्तेः कालसामान्ये क्विप् न स्यादित्यर्थः। ननु तर्हि भूते कथं कंसहा इत्यादि दृश्यते इति चेत्तत्राह—यत्र तिष्ठति कंसहा इत्यादि प्रयोगाद्धेतो अन्यत्रापि ब्रह्मादिभ्योऽन्यस्मिन् पूर्वपदे सत्यपि क्विप् भवतीति, तेन भूते कंसहा, मधुहेति॥

१५२६। सुकर्म। व्यक्तार्थमेतत्। सुकृदिति सुष्ठु कृतवानित्यर्थः। एवं कर्मकृत् पापकृत् मन्त्रकृत् पुण्यकृत्। इति सुप्रभृतिष्वेव कृञः क्विप्॥

१५२७। अन्य। अन्यत्र चेति। सुप्रभृतिभ्योऽन्यत्र च क्विप् भवतीति बाहुल्यादिति शेषः। तेन भूते शास्त्रकृदिति॥

१५२८। सोम। व्यक्तार्थमेतत्। सोमं सुतवानित्यर्थे निपातात् क्विप् सोमसुदिति। अग्निं चितवानित्यर्थे निपातात् क्विप्, अग्निचिदिति। अत्रापि नियमो ज्ञेयः, सोम एव सुञः क्विविति अग्नावेव चिञः क्विविति च॥

१५२९। कर्मणि दृशेः क्वनिवेव।

श्रीकृष्णदृश्वा ॥१५२९॥

१५३०। राजयुद्ध-राजकृत्व-सहयुद्ध-सहकृत्वानः साधवः।

युधिरत्र ण्यन्तः। राजानं योधितवान्—राजयुद्धा ॥१५३०॥

१५३१। सप्तम्यन्ते जनेरच्।

वृन्दावनजः। बाहुल्यात् द्वाभ्यां जातः—द्विजः॥ १५३१॥

१५३२। समासे ङेर्न महाहरः कृति बहुलम्।

दिविष्ठः, दिविषदित्यादि—षत्वं वाच्यम्। हृदिस्पृक् ॥१५३२॥

---

१५२९। कर्म। कर्मणि पूर्वपदे सति अतीते काले दृशेरुत्तरे कृनिवेव भवति। श्रीकृष्णदृश्वा इति श्रीकृष्णं दृष्टवानित्यर्थः॥

१५३०। राज। व्यक्तार्थमेतत्। राजयुद्धेति राजानं योधितवानित्यर्थे निपातात् कृनिप्, गोविन्दनिवृत्तिश्च णेर्हरः। राजकृत्वेति राजानं कृतवानित्यर्थे निपातात् कृनिप्। सहयुद्धेति सह युद्धवानित्यर्थे निपातात् कृनिप्। सहकृत्वेति सह कृतवानित्यर्थे निपातात् कृनिप्। युधिरिति। अत्रेति राजयुद्धेत्यत्रेत्यर्थः। सहयुद्धेत्यत्रतु युधेरण्यन्तत्वमेव ज्ञेयम्॥

१५३१। सप्त। सप्तम्यन्ते पूर्वपदे सति जनेरुत्तरे अतीते काले अच् भवति। वृन्दावनज इति वृन्दावने जात इत्यर्थः। द्वाभ्यामिति तृतीयाद्विवचनान्तं पञ्चमीद्विवचनान्तं वा। द्विर्जातो द्विज इति क्रमदीश्वरः। 'दन्तविप्राण्डजा द्विजा' इति नानार्थवर्गः॥

१५३२। समा। समासे सति कृति ङेर्महाहरो बहुलं न भवति। बहुलमिति क्रियाविशेषणम्। दिविष्ठ इति दिवि तिष्ठति स्मेत्यर्थे दिवि स्थितमित्यर्थे च 'अकर्मण्यारामादि'त्यनेन स्थो भावेतु

१५३३। प्रावृट्शरत्कालदिवां जे।

प्रावृषिज इत्यादि। वर्षासुजः, अप्सुज इत्यादि॥ १५३३॥

१५३४। वर्ष-क्षर-वर-मनोभ्यो वा।

वर्षेजः, वर्षज इत्यादि। 'शरात्' इत्यपि जुमरमतम् ॥१५३४॥

१५३५। सरसो रुहे च।

सरसिजं, सरोजम्। "उद्भासीनि जलेजानि" इति भट्टिः (६।७५)। सरसिरुहम्, सरोरुहम्; शिरसिरुहः, शिरोरुहः। पङ्केरुहमित्यादौ तु नित्यम्॥ १५३५॥

---

पुंसीति वा कः। तथाच भट्टिः (४।३३)—पर्यशाप्सीद्दिविष्ठासौ सन्दर्श्य भयदं वपुरिति। दिविषदिति दिवि सीदतीत्यर्थे 'नाम्नि सदॢ' इत्यादिना क्विप्। षत्वमिति। वाच्यमिति वक्ष्यते इत्यर्थः। अम्बष्ठादय इति सुषममादयश्चेति च वक्ष्यते। हृदिस्पृगिति हृदि स्पृशतीति क्विप्॥

१५३३। प्रा। जे परे प्रावृट्शरत्कालदिवां ङेर्महाहरो न भवति। प्रावृषिज इति प्रावृषि जात इत्यर्थे 'सप्तम्यन्ते जनेरच्' इत्यनेन अच्। आदि पदेन शरदिजः, कालेजः, दिविज इति। इत्यादि चेति बाहुल्यादिति शेषः॥

१५३४। वर्ष। जे परे वर्षादिभ्य उत्तरस्य ङेर्महाहरो वा भवति। वर्षेज इति वर्षे जात इत्यर्थः। वर्षज इत्यादीत्यादिपदेन क्षरेजः क्षरजः, वरेजः वरजः, मनसिजः मनोज इति। मनसिज-मनोजौ कन्दर्पवाचकौ। शरादित्यपि जुमरमतमिति तेन शरेज शरज इति॥

१५३५। सर। जे रुहेच परे सरसो ङेर्महाहरो वा भवति। सरसिजमिति सरसि जातमित्यर्थः। सरसिजं पद्मम्। उद्भासीनीति एतेन बाहुल्यात् जे परे जलशब्दस्यापि ङेर्महाहरो वा भवतीति सूचितम्।

१५३६। अकालाच्छय-वासि-वासेषु वा।

खेशयः, खशय इत्यादि। 'अकालात्' किम्? पूर्वाह्णशयः ॥ १५३६ ॥

१५३७। विष्णुजनारामाभ्यामेव।

वारिशयः ॥ १५३७ ॥

१५३८। इनन्ते तु न।

जलशायी ॥ १५३८ ॥

---

सरसिरुमहमिति सरसि रोहतीति 'ईशोद्धव-किरति-प्रीणाति-गॄ-ज्ञाभ्यः कः'। सरसिरुहं पद्मम्। शिरसिरुहः शिरोरुह इति बाहुल्यादिति शेषः। एतौ केशवाचकौ। पङ्केरुहमित्यादौतु नित्यमिति बाहुल्यादेवेति शेषः। पङ्केरुहं पद्मम् ॥

१५३६। अका। शयवासिवासेषु परेषु अकालवाचकादुत्तरस्य ङेर्महाहरो वा भवति। खेशयः खशय इति खे शेते इत्यर्थे अधिकरणे शेरत् इत्यत्। खमाकाशम्। आदिपदेन व्रजेवासः, वृन्दावनेवासी, वृन्दावनवासीति। व्रजेवास इति व्रजे वसतीत्यर्थे घण्, वृन्दावनेवासीति णिनिः। पूर्वाह्णशय इति पूर्वाह्णे शेते इत्यर्थः ॥

१५३७। विष्णु। कृदन्तेषु परेषु विष्णुजनारामाभ्यामेवोत्तरस्य ङेर्महाहरो वा एव भवति। नियमोऽयम्। अत्र विष्णुजनारामाभ्यामित्यनेन तदन्तौ गृह्येते। वारिशय इति वारिणि शेते इत्यर्थः। अत्र प्राङ्निमित्तस्य विष्णुजनान्तत्वम् अरामान्तत्वञ्च नास्तीति ङेर्महाहर एव। इदं प्रत्युदाहरणम्, उदाहरणत्वे तु एवं, 'वार्वारि सलिलमि'त्यभिधानात् वारि जले शेते इत्यर्थः ॥

१५३८। इन। इनन्तेतु परे ङेर्महाहरनिषेधो न भवति। जलशायी णिनिः ॥

१५३९। स्थे न च क्वचित्।

समस्थः ॥ १५३९ ॥

१५४०। सु-यज्भ्यां ङ्वनिप्।

सुत्वा, यज्वा। अतीत इति निवृत्तम् ॥ १५४० ॥

१५४१। क्विप् पर्यन्तास्तच्छील-तद्धर्म-तत्साधु-कारिषु।

एष्वर्थेषु वक्ष्यमाणा ज्ञेयाः ॥ १५४१ ॥

१५४२। तृन्।

सृष्टिं कर्ता ॥ १५४२ ॥

---

१५३९। स्थे। स्थे परे क्वचित् ङेर्महाहरनिषेधो न भवति च। समस्थ इति समे तिष्ठतीत्यर्थः ॥

१५४०। सुयज्। षुञ् अभिषवे, यज् पूजादौ इत्येताभ्यामुत्तरे अतीते ङ्वनिप् भवति। सुत्वेति कंसारित्वाद्गोविन्दाभावः। 'सुत्वा त्वभिषवे कृते' इत्यमरः। अभिषवे कृते सति याज्ञिकः सुत्वा कथ्यते इत्यर्थः। अभिषवो यज्ञसम्बन्धि स्नानम्। यज्वेति 'यज्वा तु विधि-नेष्टवानि'त्यमरः ॥

१५४१। क्विप। वृत्तिमाह एष्वर्थेष्विति। एषु तच्छीलादिषु अर्थेषु वाच्येषु। तच्छीलादयः कर्तृविशेषणानि। वक्ष्यमाणा इति वक्ष्य-माणाः क्विप्पर्यन्ताः प्रत्यया इत्यर्थ. ॥

१५४२। तृन्। तच्छीलादिषु अर्थेषु धातोरुत्तरे तृन् स्यात्, न् इत्, सृष्टिं कर्तेति तत्स्वभावस्तद्धर्मस्तत्साधुकारी वेत्यर्थः। एवमन्यत्र च यथायथं ज्ञेयम्। तत्कर्तुं शीलमस्य तत्कर्तुं धर्मोऽस्य तत्करणे साधु इत्येवं वाक्यम्। 'अच्युताभ-विष्णुनिष्ठाधोक्षजाभ-खलर्थाव्ययो-रामान्ततृणां योगे न षष्ठी'निषेधः ॥

१५४३। अलंकृञ-निराकृञ-प्रजन-उत्पत-उत्पच-उन्मद-रुचि-अपत्रप-वृतु-वृधु-सह-चर इत्येभ्य इष्णुः।

कृष्णमलङ्करिष्णुः, निराकरिष्णुः, प्रजनिष्णुरित्यादि ॥१५४३॥

१५४४। भविष्णु-भ्राजिष्णू साधू।

१५४५। ण्यन्ताच्च।

कारयिष्णुः ॥ १५४५ ॥

१५४६। जिभूभ्यां स्नुक्।

जिष्णुः, भूष्णुः ॥ १५४६ ॥

१५४७। ग्ला-स्थाभ्यां स्नुः।

---

१५४३। अलम्। अलंपूर्व-डुकृञ् करणे, निराङ्पूर्व-डुकृञ्, प्रपूर्व-जनी प्रादुर्भावे, उत्पूर्व-पत्लृ गतौ, उत्पूर्व डुपचष् पाके, उत्पूर्व मदी हर्षे, रुच दीप्तौ, अपपूर्व-त्रपूष लज्जायां, वृतु वर्तने, वृधु वृद्धौ, सह मर्षणे, चर गतौ इत्येतेभ्य उत्तरे तच्छीलादिष्वर्थेषु इष्णुर्भवति। कृष्णमलङ्करिष्णुरिति 'अच्युताभे'त्यादिना षष्ठीनिषेधः। एवं निराकरिष्णुः, प्रजनिष्णुरित्यादि ॥

१५४४। भवि। व्यक्तार्थमेतत्। भविष्णुरिति भू सत्तायां, निपातादिष्णुः। भ्राजिष्णुरिति टुभ्राजृ दीप्तौ, निपातादिष्णुः॥

१५४५। ण्यन्ताच्च। तच्छीलादिष्वर्थेषु ण्यन्ताद्धातोश्चोत्तरे इष्णुर्भवति। कारयिष्णुरिति। इष्णौ तु छन्दस्येवेत्युक्तम् अस्यतु छान्दसत्वं नास्ति, तथापि कथं णेर्हरस्य निषेधो भवतीति विचार्यम्॥

१५४६। जिभू। जि जये, भू सत्तायामित्येताभ्यामुत्तरे तच्छीलादिष्वर्थेषु स्नुक् भवति। क इत्। जिष्णुरिति 'ईश्वरहरिमित्रे'त्यादिना षत्वं, कंसारित्वाद्गोविन्दाभावः॥

१५४७। ग्ला। तच्छीलादिष्वर्थेषु ग्लै हर्षक्षये, ष्ठा गति-

ग्लास्नुः, स्थास्नुः ॥ १५४७ ॥

१५४८। त्रसि-गृधि-धृषि-क्षिपिभ्य क्नुः।

'नेङ् वन्-ति-त्रादौ' ( १५०८ ) त्रस्नुरित्यादि ॥ १५४८ ॥

१५४९। शमादेर्णिनिः।

शमी, भ्रमी। अकर्मकादेव ; नेह—वनं भ्रमिता ॥ १५४९ ॥

१५५०। अनुरुधादेर्णिनिः।

अनुरोधी, आयामी, आयासी, संज्वारी, दोषी, द्रोही, दोही, आक्रीड़ी, अतिचारी, अपचारी, अनुचारी, व्यामोषी, अभ्याघाती। 'अमोषी' इत्येके ॥ १५५० ॥

---

निवृत्तावित्येताभ्यामुत्तरे स्नुर्भवति। स्थास्नुः स्थिरतरः। 'स्थास्नुः स्थिरतरः स्थेयानि'त्यमरः ।।

१५४८। त्रसि। त्रसी उद्वेगे, गृधु अभिकाङ्क्षायां, ञि-धृषा प्रागल्भ्ये, क्षिप प्रेरणे इत्येतेभ्य उत्तरे तच्छीलादिष्वर्थेषु क्नुर्भवति। क इत्। 'नेङ्-वन्-ति-त्रादावि'ति अनेन इंड़् निषेधः। आदिपदेन गृध्नुः, धृष्णुः, क्षिप्नुरिति। गृध्नुर्लुब्धः। 'निराकरिष्णुः क्षिप्नुः (क्षिप्णः) स्यादि'त्यमरः ।।

१५४९। शमा। तच्छीलादिष्वर्थेषु शमादेरुत्तरे णिनिर्भवति। शमु उपशमे, दमु उपशमे, तमु ग्लानौ, श्रमु तपसि खेदेच, भ्रमु अनवस्थाने, क्षमुष् सहने, क्लमु ग्लानौ, मदी हर्षे एते अष्ट शमादयः। शमीति 'जनिवध्योरि'त्यादिना वृष्णीन्द्रनिषेधः। एवं भ्रमीति। अकर्मकादेवेति णिनिरिति शेषः। वनं भ्रमितेति, अत्र तृन् ।।

१५५०। अनु। तच्छीलादिष्वर्थेषु अनुरुधादेरुत्तरे णिनिर्भवति। अनुरोधीति रुधिर् आवरणे, आयामीति यमु उपरमे, आयासीति यसु प्रयत्ने, संज्वारीति ज्वर रोगे, दोषीति दुष वैकृत्ये, द्रोहीति द्रुह जिघांसायाम्, दोहीति दुह प्रपूरणे, आक्रीड़ीति क्रीड़ विहारे, अतिचारी-

१५५१। परेर्दिवि-क्षिप-रट-वद-दह-मुहो णिनिः।

परिदेवी ॥ १५५१ ॥

१५५२। वेः कष-लस-कत्थ-स्रन्भो णिनिः।

कष हिंसायाम्—विकाषी, विलासी ॥ १५५२ ॥

१५५३। अप-विभ्यां लषो णिनिः।

लष कान्तौ—अपलाषी ॥ १५५३ ॥

१५५४। प्रात् सृ-द्रु-लप-मन्थ-वद-वसो णिनिः।

प्रसारी ॥ १५५४ ॥

---

अनुचारीति चर गतौ, व्यामोषीति व्याङ्पूर्व-मुष स्तेये, क्र्यादिः मुष खण्डने, दिवादिर्वा। अभ्याघातीति अभ्याङ्पूर्व-हन हिंसागत्योः। आमोषीत्येके इति तन्मते आङ्पूर्वस्य मुषो ग्रहणमिति ॥

१५५१। परे। परेरुत्तरेभ्यो दिवु क्रीड़ादिषु, क्षिप प्रेरणे, रट परिभाषणे, वद व्यक्तायां वाचि, दह भस्मीकरणे, मुह वैचित्त्ये इत्येतेभ्य उत्तरे तच्छीलादिष्वर्थेषु णिनिर्भवति। परिदेवीति। एवं परिक्षेपीति, परिराटी, परिवादी, परिदाही, परिमोहीति ॥

१५५२। वेः। तच्छीलादिष्वर्थेषु वेरुत्तरस्मात् कषादेरुत्तरे णिनिर्भवति। विलासीति लस क्रीड़ायाम्। एवं विकत्थी, विस्रम्भीति। कत्थ आत्मश्लाघायां, स्रन्भु विश्वासे। ( तालव्यातिरयमित्येके, इति गणटीका। श्रीरासः ) ॥

१५५३। अप। तच्छीलादिष्वर्थेषु अप-विभ्यामुत्तरस्मात् लष उत्तरे णिनिर्भवति। अपलाषीति। एवं विलासीति ॥

१५५४। प्रात्। प्रादुत्तरेभ्यः सृ गतौ, द्रु गतौ, लप व्यक्तायां वाचि, मन्थ विलोड़ने, वद वक्तायां वाचि, वस निवासे इत्येतेभ्य उत्तरे तेष्वर्थेषु णिनिर्भवति। प्रसारीति। एवं प्रद्रावी, प्रलापी, प्रवादी, प्रवासीति ॥

१५५५। मन्थो नलोपश्च।

प्रमाथी ॥ १५५५ ॥

१५५६। संस्पृच-विविच-रन्ज-संसृज-युज-त्यज-भज-भन्जो घिनुण्।

सम्पर्की, विवेकी। 'रन्जेर्नस्य' हरः' (१४४०)—रागी ॥ १५५६ ॥

१५५७। भन्जेर्नलोपश्च।

भागी ॥ १५५७ ॥

१५५८। निन्द-हिंसा-क्लिश-खादि-विनाशि-व्याभाषासूयेभ्यो णकः, अनेकसर्वेश्वराच्च कालापानां

---

१५५५। मन्थो। मन्थो नलोपश्च भवति। प्रमाथीति नलोपे कृते वृष्णीन्द्रः ॥

१५५६। संपृच। संपूर्व-पृची सम्पर्के, वि-पूर्व-विचिर् पृथग्-भावे, रन्ज रागे, संपूर्व-सृज विसर्गे, युज समाधौ दिवादिर्युजिर् योगे रुधादिर्द्वयोरेव ग्रहणम्। त्यज् वयोहानौ, भज सेवायां, भन्जो आमर्दने इत्येतेभ्य उत्तरे तेष्वर्थेषु घिनुण् भवति। घ्रामोरामण्रामा इतः। सम्पर्की 'चजोः कगावि'त्यादिना चस्य कः। रन्जेरिति 'रन्जेर्नस्य हरः असि अके अने घिनुणि चे'ति सूत्रम्। रागीति नस्य हरे कृते वृष्णीन्द्रः, जस्य गत्वम् ॥

१५५७। भन्जे। भन्जेर्घिनुण् सिद्ध एव न्लोपश्च भवति ॥

१५५८ निन्द। निदि कुत्सायां, हिसि हिंसायां, क्लिशू विबाधने, खादृ भक्षणे, नश अदर्शने, विपूर्वप्रेरणण्यन्तः व्याङ्पूर्व-भाषव्यक्तायां वाचि इत्येतेभ्योऽसूयधातोश्चोत्तरे तेष्वर्थेषु णको भवति। असूय इति कण्ड्वादित्वाद्यङन्तः। अनेकेति। कालापानां मते अनेकसर्वेश्वराद्धा-

परेः क्षिप-रट-वादिभ्यः, उपेन्द्राद्दिवि-क्रुशाभ्याम् ।

निन्दकः ; क्लिश—क्लेशकः ॥ १५५८ ॥

१५५९ । चलनशब्दार्थादकर्मकादनः ।

चलनः, कम्पनः, शब्दनः, रवणः ॥ १५५९ ॥

१५६० । असि उसि अने च चक्षिङः ख्याञ् नेति वाच्यम् ।

विचक्षणो विद्यानित्यर्थः, कर्मानपेक्षणात् । अकर्मकात् किम् ? पठिता गीताम् ॥ १५६० ॥

---

तोश्चेत्तरे णको भवति । परेः । परेरुत्तरेभ्यः क्षिप-रट-वादिभ्य उत्तरे तेष्वर्थेषु णको भवति । क्षिप प्रेरणे रट परिभाषणे, ण्यन्तो वदिः इत्येतेभ्य इत्यर्थः । उपे । उपेन्द्रादुत्तराभ्यां दिविक्रुशाभ्यामुत्तरे तेष्वर्थेषु णको भवति । निन्दक इति । एवं हिंसकः, क्लेशकः, खादकः, बिनाशकः, व्याभाषकः, असूयक इति । दरिद्रायक इति, परिपेक्षकः, परिराटकः, परिवादक इति, परिदेवकः, परिक्रोशक इति च । परिदेवक इति ण्यन्ताद्दिवधातोर्देवृ देवने इत्यस्माद्वा णकः ।।

१५५९ । चल । अकर्मकाच्चलनार्थात् शब्दार्थाच्च धातोरुत्तरे तेष्वर्थेषु अनो भवति । चलनं कम्पनम् । चलन इति चल कम्पने, कम्पन इति कपि चलने । शब्दन इति शब्द शब्दक्रियायां चौरादिकः । रवण इति रु शब्दे ।।

१५६० । असि । असि उसि अने च परे चक्षिङः स्थाने ख्याञ् न भवतीति वाच्यं वक्तव्यम् । विचक्षण इति शब्दार्थादनः 'चक्षिङः ख्याञ् रामधातुके' इति, ख्याञादेशः स्यादिति निषेधविधानम् । कर्मेति कर्मानपेक्षणादकर्मकत्वम्, अकर्मकत्वादन इति भावः । पठितेति तृन् ।।

१५६१। विष्णुजनाद्यात्मपदिनश्चानः।

वर्तनः अकर्मकादित्येव। वसिता पीताम्बरम् ॥ १५६१ ॥

१५६२। जु-चङ्क्रम्य-दंद्रम्य-सृ-वृषि-गृधि-ज्वल-शुच-लष-पत-पदश्चानः।

जवनः चङ्क्रमणः ॥ १५६२ ॥

१५६३। क्रोधभूषार्थेभ्यश्चानः।

क्रोधनः, कोपनः, भूषणः, मण्डनः ॥ १५६३ ॥

१५६४। यराम-सूद-दीप-दीक्षेभ्यो नानः।

आप्यायिता, क्ष्मायिता, सूदिता ॥ १५६४ ॥

---

१५६१। विष्णु। व्यक्तार्थमेतत्। वर्तन इति वृतु वर्तने वसितेति वस आच्छादने तृन्। विष्णुजनादीति किम्? एषिता ॥

१५६२। जु। एतदपि व्याक्तार्थम्। जवन इति जु सौत्रो धातुः। चङ्क्रमण इति क्रमु पादविक्षेपे इत्यस्माद्यङन्तादनः 'विष्णुजनात् साराम-यस्य हरो रामधातुके' इति साराम-यस्य हरः। एवं दंद्रमणः, सरणः, वर्षणः, ज्वलनः, शोचनः, लषणः, पतनः, पदन इति। द्रम गतौ यङन्तः, सृ गतौ, वृषु सेचने, गृधु अभिकाङ्क्षायां, ज्वल दीप्तौ, शुच शोके, लष कान्तौ, पत्लृ गतौ, पद गतौ ॥

१५६३। क्रोध। क्रोधार्थेभ्यः भूषार्थेभ्यश्चोत्तरे तेष्वर्थेषु अनो भवति। क्रोधन इति क्रुध रोषे, कोपन इति कुप रोषे, भूषण इति भूष अलङ्कारे, मण्डन इति मडि भूषायाम् ॥

१५६४। यराम। व्यक्तार्थमेतत्। आप्यायितेति ओ प्यायी वृद्धौ तृन्, क्ष्मायितेति क्ष्मायी विधूनने। सूदितेति सूद क्षणने। सर्वत्र 'विष्णुजनाद्यात्मपदिनश्चानः' इत्यनेन अने प्राप्ते निषेधः। एवं दीपिता, दीक्षितेति। दीपी दीप्तौ आत्मपदी, दीक्ष-मौण्ड्येज्योपनयन-नियम-व्रतादेशेषु आत्मपदी ॥

१५६५। लष-हन-पत-पद-स्था-भू-वृष-कम-गम-शृभ्य उकण्।

लाषुकः, घातुकः ॥ १५६५ ॥

१५६६। जल्प-भिक्ष-कुट्ट-लुण्ठ-वृङ आकट्।

'षाकन्' पाणिनिः ( ३।२।१५५ ); जल्पाकः ॥ १५६६ ॥

१५६७। स्पृहि-गृहि-पति-कृपि-दयि-निद्रा-तन्द्रा-श्रद्धा-शीभ्य आलुः।

स्पृहयालुः; ग्रह ग्रहणे—गृहयालुः; पतयालुः। एते त्रयश्चुरादावरामान्ताः। कृपालुः, दयालुः। निपूर्वो द्रा—निद्रालुः। तत्पूर्वो द्रा, नकारो निपातात्—तन्द्रालुः। श्रत्पूर्वो धा—श्रद्धालुः ॥१५६७॥

---

१५६५। लष। लष कान्तौ, हन हिंसागत्योः, पत्लृ गतौ, पद गतौ, ष्ठा गतिनिवृत्तौ, भू सत्तायां, वृषु सेचने, कमु कान्तौ, गम्लृ गतौ, शॄ हिंसायाम् इत्येतेभ्य उत्तरे तेष्वर्थेषु उकण् भवति। ण् इत्। घातुक इति हस्य घत्वं, नस्य तत्वं, वृष्णीन्द्रः। एवं पातुकः, पादुकः, स्थायुकः, वर्षुकः, भावुकः, कामुकः, गामुकः, शारुकः इति ॥

१५६६। जल्प। जल्प व्यक्तायां वाचि, भिक्ष याच्ञायां, कुट्ट सौत्रो धातुः, लुठ स्तेये, वृङ सम्भक्तौ इत्येतेभ्य उत्तरे तेष्वर्थेषु आकट् भवति। जल्पाक इति जल्पाको वाचालः। एवं भिक्षाकः कुट्टाकः, लुण्ठाकः, वराक इति।

१५६७। स्पृहि। स्पृ ह्यादिभ्य उत्तरे तेष्वर्थेषु आलुर्भवति। स्पृहयालुरिति स्पृह ईप्सायां 'णेर्नहर-आम-अन्त-आलु-आय्य-इत्नु इत्येष्वि'ति णेर्हरनिषेधः। पतयालुरिति पत गतौ। दयालुरिति दय दानगतिहिंसादानेषु च। द्रेति द्रा कुत्सायाम्। नकारो निपातादिति तरामस्येति शेषः। नराम इति वा पाठः। एवं शयालुरिति शीङ स्वप्ने,

१५६८। सृ-घस्यादिभ्यः क्मरः।

सृमरः॥ १५६८॥

१५६९। भन्ज-भास-मिदिभ्यो घुरः, भन्जेः कर्मकर्तरि च।

'अनङ्गमानभङ्गुरम्'। तथा—भङ्गुरं काष्ठम्॥ १५६९॥

१५७०। वेत्ति-भिदि-छिदिभ्यः कुरः।

विदुरः॥ १५७०॥

१५७१। भिदि-छिदिभ्यां कर्मकर्तरि च।

दोषान्धकारभिदुरं ज्ञानम्। "करीन्द्रदर्पच्छिदुरो मृगेन्द्रः।" तथा—भिदुरं काष्ठम्। छिदुरा रज्जुः॥ १५७१॥

---

कृपालुरित्ति कृपादेः लृत्वं नेष्यते इति वक्ष्यमाणलक्षणेन कृपेः लृरामाभावः, कुटादित्वाद्गोविन्दाभावश्चेति॥

१५६८। सृ। सृ गतौ, घस्लृ अदने, अद भक्षणे इत्येतेभ्य उत्तरे तेष्वर्थेषु क्मरो भवति। क् इत्। सृमर इति कंसारित्वाद्-गोविन्दाभावः। एवं घस्मर, अद्मर इति॥

१५६९। भन्ज। भन्जो आमर्दने, भासृ दीप्तौ, ञि-मिदा स्नेहने आच्छादने च इत्येतेभ्य उत्तरे तेष्वर्थेषु घुरो भवति। घ् इत्। भन्जेः। व्यक्तार्थमेतत्। अनङ्गमानभङ्गुरमिति कर्तरि घुरः। एवं भासुरो, दीप्तिशीलः। मेदुर इति। भङ्गुरं काष्ठमिति कर्मकर्तरि घुरः॥

१५७०। वेत्ति। विद ज्ञाने, भिदिर् विदारणे, छिदिर् द्विधाकरणे इत्येतेभ्य उत्तरे तेष्वर्थेषु कुरो भवति। क् इत्। विदुर इति कंसारित्वाद्गोविन्दाभावः॥

१५७१। भिदि। व्यक्तार्थमेतत्। दोषान्धकारभिदुरमिति कर्तरि कुरः। एवं करीन्द्रदर्पच्छिदुरो मृगेन्द्र इति। भिदुरं काष्ठमिति कर्मकर्तरि कुरः। एवं छिदुरा रज्जुरिति॥

१५७२। इण्-नश्-जि-सर्तिभ्यः क्वरप्।

इत्वरः। क्वरपो गौरादित्वाल्लक्ष्म्यामीप् ( २२७२ ) इत्वरी, नश्वरी ॥ १५७२॥

१५७३। यङन्तादपि क्वचित्।

'यवयोर्हरो वले' ( ८६८ ) इति यस्य हरः—यायावरः ॥१५७३॥

१५७४। गत्वरः साधुः।

१५७५। जागर्तेरूकः।

जागरूकः ॥ १५७५ ॥

१५७६। यज-जप-दन्श-वदिभ्यो यङन्तेभ्यः ऊकः।

'विष्णुजनात् साराम-यस्य हरो रामधातुके' ( ८४६ ) यायजूकः, जञ्जपूकः, दन्दशूकः, वावदूकः ॥ १५७६ ॥

---

१५७२। इन। इण् गतौ, नश् अदर्शने, जि जये, सृ गतौ इत्यतेभ्य उत्तरे तेष्वर्थेषु कृरप् भवति। क्पावितौ। इत्वर इति वामनात्तुक्। एवं नश्वरः, जित्वरः, सृत्वर इति। लक्ष्म्यामीविति 'नृसिंह-नस्नाभ्यां कृरपश्चे'त्यनेनेति शेषः ॥

१५७३। यङ। यङन्ताद्धातोरपि कृचित् कृरप् भवति। यायावर इति यङन्तात् या प्रापणे इत्यस्मात् कृरप्, आरामहरो, यरामस्य हरः ॥

१५७४। गत्वरः। व्यक्तार्थमेतत्। गत्वर इति निपातात् कृरप् हरिवेणुहरश्च ॥

१५७५। जाग। जागर्तेरुत्तरे तेष्वर्थेषु ऊको भवति। जागरूको जागरणशीलः ॥

१५७६। यज। यङन्तेभ्यो यजादिभ्य उत्तरे तेष्वर्थेषु ऊको भवति। यायजूक इति यङन्तात् यायज्यधातोरूकः। जंजपूक इति 'हरिवेण्वन्तानामि'त्यादिना नरादरामतो विष्णुचक्रम्। दन्दशूक इति दन्श दंशने, यङ् द्विर्वचनं, नरादरामतो विष्णुचक्रम्, उद्धवनरामहरः,

१५७७। नमि-कम्पि-स्मि-कमि-हिंसि-दीपादिभ्यो रः।

नम्रः ॥ १५७७ ॥

१५७८। सनन्ताशंस-भिक्षिभ्य उः।

हरिभक्तिं चिकिर्षुः ॥ १५७८ ॥

१५७९। विन्दुरिच्छुश्च साधू।

वेदनशीलो विन्दुः, ज्ञातेत्यादि ॥ १५७९ ॥

---

यङन्तादूकः साराम यस्य हरः। दन्दशूकः सर्पः। वावदूक इति वावद्य-धातोरूकः। 'वावदूकश्च वक्तरी'त्यमरः ॥

१५७७। नमि। नम प्रह्वत्वे शब्दे च, कपि चलने, स्मिङ् ईषद्धसने, कमु कान्तौ, हिसि हिंसायां, दीपी दीप्ती इत्येतेभ्य उत्तरे तेष्वर्थेषु रो भवति। नम्र इति। एवं कम्प्रः, स्मेरः, कम्रः, हिंस्रः, दीप्र इति। चन्द्रमन्द्रनीरसुरसूरगृध्रवज्रेन्द्रप्रभृतयो र-प्रत्ययान्ता अपि संज्ञा-शब्दत्वात् नोक्ता इति ज्ञेयम्। मन्द्रो गभीरध्वनिः, नीरं जलं, सुरो देवता, सूरः सूर्यः, गृध्रः पक्षिभेदः ॥

१५७८। सन। सनन्तात् आङ्पूर्व शन्सु स्तुतौ, भिक्ष याच्ञाया-मित्येताभ्याञ्चोत्तरे तेष्वर्थेषु उर्भवति। हरिभक्तिं चिकीर्षुरिति 'अच्युता-भे'त्यादिना षष्ठीनिषेधः। एवं आशंसुर्भिक्षुरिति 'आशंसुराशंसितरी'-त्यमरः ॥

१५७९। विन्दु। व्यक्तार्थमेतत्। वेदनशील इत्यर्थकथनम्। विन्दुरिति विद् ज्ञाने निपातात् उः नुम्च। विन्दुशब्दस्य वाच्यमाह ज्ञातेति। 'ज्ञाता तु विदुरो विन्दुरि'त्यमरः। विदि अवयवे इत्यस्य विन्दुरिति भवतीति धातुपारायणादावुक्तम्। अतएव, पृषन्ति 'विन्दु-पृषता' इति जलावयववाचकोऽपि विन्दुशब्दः। इच्छुरिति इषु इच्छायां निपातात् उः इषेरिच्छ च ॥

१५८० । धाञ-कृ-सृ-जनि-गमि-नमिभ्यः किः ।

अधोक्षजाभत्वाद्द्विर्वचनादि—दधिः, चक्रिः, सस्रिः, जज्ञिः, जग्मिः, नेमिः ॥ १५८० ॥

१५८१ । सासहिमुखा यङन्ताः कौ साधवः ।

सासहिः, चाचलिः, वावहिः, पापतिः ॥ १५८१ ॥

१५८२ । स्वपि-तृषि-धृषिभ्यो नजिङ् ।

इङावितौ । स्वप्नक् ॥ १५८२ ॥

---

१५८० । धाञ् । डुधाञ् धारणपोषणयोः, डुकृञ् करणे, सृ गतौ, जनी प्रादुर्भावे, गम्लृ गतौ, नम् प्रह्वत्वे शब्दे च इत्येतेभ्य उत्तरे किर्भवति । केरधोक्षजाभत्वं पूर्वमुक्तम्, अत आह—अधोक्षजाभत्वाद्द्विर्वचनादीति । दधिरिति द्विर्वचने कृते नरस्य वामनः । नरस्य हरिघोषस्य हरिगदा । आरामान्तमात्रादेव किर्भवतीति जुमरमतं, तेन तन्मते पापिरित्याद्यपि । चक्रिरिति 'नरऋरामस्यारामः', 'कवर्गनरस्य चवर्गः' । सस्रिरिति नरऋरामस्यारामः । जज्ञिरिति 'गम-हन-जन-खन-घसामि'त्यादिना उद्धवादर्शनं, 'तवर्गस्य चवर्गश्चवर्गयोगे' इति नरामस्य ञरामः । जग्मिरिति उद्धवादर्शनम् । नेमिरिति आदेशहीने-त्यादिना एत्वं, नरादर्शनञ्च ॥

१५८१ । सासहि । यङन्तात् कौ विषये सासहिमुखाः साधवः । मुखशब्द आद्यर्थः । सासहिरिति सह मर्षणे, चल कम्पने, पत्लृ गतौ, इत्येतेभ्यो यङन्तेभ्यो निपातात् किः, सारामयस्य हरः ॥

१५८२ । स्वपि । ञि-ष्वप् शये, ञि-तृषा पिपासायां, ञि-धृषा प्रागल्भ्ये इत्येतेभ्य उत्तरे तेष्वर्थेषु नजिङ् भवति । स्वप्नगिति 'स्वप्नक् शयालुर्निद्रालुरि'त्यमरः । एवं तृष्णक् धृष्णगिति । 'लुब्धोऽभिलासुकस्तृष्णगि'त्यमरः । 'धृष्टे धृष्णग्वियातश्चे'ति चामरः । ( विजात इति चवर्गमध्योऽपि इत्यमरटीका ) ॥

१५८३। शॄ-वन्दिभ्यामारुः।

शरारुः ॥ १५८३ ॥

१५८४। भीरु-भीरुक-भीलुकाः साधवः।

१५८५। स्था-ईश-भास-पिस-कसिभ्यो वरः।

स्थावरः, ईश्वरः। पिसृ कस् गतौ—पेस्वरः, विकस्वरः ॥१५८५॥

१५८६। भ्राजादिभ्यः क्विप्।

विभ्राट्, भाक्, भाः, ऊर्क्, धूः, विद्युत्, पूः, सूरित्यादयः ॥१५८६ ॥

---

१५८३। शॄ। शॄ हिंसायां, वदि अभिवादस्तुत्यो इत्येताभ्यामुत्तरे तेष्वर्थेषु आरुर्भवति। शरारुर्हिंसाशीलः। 'शरारुर्घातुको हिंस्रः' इत्यमरः। एवं वन्दारुर्वन्दनशीलः। 'वरारुरभिवादकः' इत्यमरः ॥

१५८४। भीरुः। व्यक्तार्थमेतत्। भीरुरिति ञि-भी भये, रुक्प्रत्ययः। भीरुक इति निपातात् रुकङ्प्रत्ययः। भीलुक इति निपातात् लुकङ्प्रत्ययः त्रय एव भयशीले वर्तन्ते। 'त्रस्नौ भीरु-भीरुक-भीलुकाः' इत्यमरः। भीरुः साधुरिति वा पाठः। स्वार्थिक-कप्रत्ययेन भीरुक इति, 'डलयोरलयोश्च प्राय एकत्वश्रवणादि'त्युक्तमतो भीलुक् इति च सिध्यतीति ॥

१५८५। स्थेश। ष्ठा गतिनिवृत्तौ, ईश ऐश्वर्ये, भासृ दीप्तौ इत्येतेभ्यः, गतौ पिस-कसिभ्याञ्चोत्तरे तेष्वर्थेषु वरो भवति। स्थावर-इति 'स्थावरो जङ्गमेतरः' इत्यमरः। एवं भास्वर इति। पेस्वर इति गोविन्दः। विकस्वर इति। 'विकासी तु विकस्वरः' इत्यमरः ॥

१५८६। भ्राज। भ्राजादिभ्य उत्तरे तेष्वर्थेषु क्विप् भवति। विभ्राड़िति टु-भ्राजृ दीप्तौ 'छशोराजे'त्यादिना जरामस्य षत्वं, षस्य डत्वं, डस्य टत्वम्। भागिति। भाज पृथक्करणे, भा इति भासृ दीप्तौ, ऊर्क् इति ऊर्ज वलप्राणयोर्धारणे 'रात् सस्यैवे'ति नियमात् न सत्सङ्गान्तहरः। धूरिति धुर्वी हिंसायां 'यवयोर्हरो वले'

१५८७। अन्येभ्योऽपि।

ग्रावस्तुत्, भित्, छित् ॥ १५८७ ॥

१५८८। प्रच्छादीनां त्रिविक्रमो, न च सङ्कर्षणः।

प्राट्, कटप्रूः। ज्वरति—जूः, श्रयते—श्रीः स्त्रीयाम् ॥१५८८॥

१५८९। वि-प्र-संभ्यो भुव उच् संज्ञायाम्।

विभुरित्यादि। समाप्तस्तच्छीलाद्यधिकारः ॥ १५८९ ॥

१५९०। दाप्-नी-शस्-यु-युजिर्-स्तु-तुद-सिञ-सिच्-

---

इति वस्य हरे कृते 'इरुरन्तधातोरि'त्यादिना उद्धवस्य त्रिविक्रमः। विद्युदिति द्युत दीप्तौ। पूरिति पॄ पालनपूरणयोः, ओष्ठ्योद्धवस्य ऋत उर् कंसाराविति उर् उद्धवस्य त्रिविक्रमः। सूरिति षूङ् प्राणिगर्भ-विमोचने, षू प्रेरणे वा। इत्यादय इत्यादिपदेन शिष्टप्रयोगानुसारेण अन्येऽपि क्विबन्ता ज्ञेयाः ॥

१५८७। अन्ये। उक्तेभ्योऽन्येऽपि क्विप् भवति। ग्रावस्तुदिति ष्टुञ् स्तुतौ। ग्रावा प्रस्तरः। भिदिति भिदिर् विदारणे। छिदिति छिदिर् द्विधाकरणे ॥

१५८८। प्रछा। क्विपि परे प्रच्छादीनां त्रिविक्रमो भवति सङ्कर्षणश्च न भवति। प्राड़िति प्रछ ज्ञीप्सायां क्विप् त्रिविक्रमः। 'छशोराजे'त्यादिना छस्य षत्वं, षस्य डत्वं, डस्य टत्वं, 'ग्रहिज्ये'-त्यादिना सङ्कर्षणः स्यादिति निषेधविधानम्। कटप्रूरिति प्रुङ् गतौ, जूरिति जु सौत्रो धातुः। श्रीरिति श्रिञ् सेवायाम्। स्त्रियामिति श्रीशब्दः त्रियां वर्तते इत्यर्थः ॥

१५८९। वि। विप्रसंभ्य उत्तरस्माद्भुव उत्तरे संज्ञायामुच् भवति। विभुरिति 'संसारस्य हरश्चिती'ति संसारहरः। आदिपदेन प्रभुः शम्भुश्च। विभुः प्रभुश्च ईश्वरः, शम्भुः शिवः ॥

१५९०। दाप्। दाप लवने, णीञ् प्रापणे, शसु हिंसायां, यु मिश्रणे, युजिर् योगे, ष्टुञ् स्तुतौ, तुद व्यथने, सिञ् बन्धने, सिच

शिव-मिह्-पतस्त्रः करणे, छदादिभ्यश्च, गोश्च-नाम्नि, अर्ति-लू-धू-सृ-खन-सह-चर इत्रः ।

दात्रं, नेत्रमित्यादि । तथा—छत्रं, दंष्ट्रं, नद्ध्रं, शास्त्रं, वस्त्रं, गोत्रम् । अरित्रं, लवित्रं, धू विधूनने कुटादिः—धुवित्रं, सू प्रेरणे—सवित्रमित्यादि ॥ १५९० ॥

---

क्षरणे, टु-ओ-श्वि गतिवृद्ध्योः, मिह सेचने, पत्लृ गतौ इत्येतेभ्य उत्तरे करणे वाच्ये त्रो भवति । छदा । छदादिभ्यश्चोत्तरे करणे त्रो भवति । गोश्च । नाम्नि वाच्ये गो पुरीषोत्सर्गे इत्येतस्माच्चोत्तरे त्रो भवति । अर्ति । करणे वाच्ये अर्त्यादेरुत्तरे इत्रो भवति । दाति लुनाति येनेति दात्रम् । एवमन्यत्र च ज्ञेयम् । 'दात्रं लवित्रमि'त्यमरः । नेत्रं चक्षुः । आदिपदेन शस्त्रं, योत्रं, योक्त्रं, स्तोत्रं, तोत्त्रं, श्वित्रं, मेढ्रः, पत्रमिति । शस्त्रमन्त्रम् । योत्रं योक्त्रञ्च लाङ्गलदण्डबन्धनरज्जुः । 'आबन्धो योत्रं योक्त्रमि'त्यमरः । स्तोत्रं स्तवः । तोत्त्रं प्राजनदण्डः । 'प्राजनं तोदनं तोत्त्रमि'त्यमरः । सेत्रं बन्धनद्रव्यं, सेक्त्रं सेकपात्रम् । श्वित्रं कुष्ठं, 'कुष्ठं श्वित्रे' इत्यमरः । श्वित्रमित्यत्र बाहुल्याद्गोविन्दाभावः इति ज्ञेयम् । मेढः शेफः, 'मेढ्रो मेहनसेफसी'त्यमरः । पत्रं वाहनं, पक्षपर्णञ्च । छत्त्रमिति छद अपवारणे, छत्त्रमातपत्रम् । द्रंष्ट्रमिति दन्श दंशने । नद्ध्रमिति नह बन्धने, हस्य धः । शास्त्रमिति शासु अनुशिष्टौ । वस्त्रमिति वस आच्छादने । वक्त्र-श्रोत्र-पात्र-गात्र-प्रभृतयोऽपि त्रप्रत्ययान्ता ज्ञेयाः । गोत्रमिति 'गोत्रन्तु नाम्नि' चेति नानार्थवर्गः । अरित्रमिति ऋ गतौ प्रापणे च ह्वादि ऋ गतौ ह्वादिर्वा । 'अरित्रं केनिपातकः' इत्यमरः । लवित्रमिति लूञ छेदने, लवित्रं दात्रम् । धुवित्रमिति 'कुटादेरनृसिंहो निर्गुणः, इति निर्गुणत्वम्, ऊरामेस्य उव्, धूयते येनेत्यर्थः । सवित्रमिति सूयते येनेत्यर्थः । आदिपदेन खनित्रं, सहित्रं, चरित्रमिति । खनु अवदारणे, सह मर्षणे, चर गतौ । 'खनित्रमवदारणमि'त्यमरः । पवित्र-वहित्रादयोऽपि इत्रप्रत्ययान्ता ज्ञेयाः ॥

१५६१। दंष्ट्रा नद्ध्री च साधू।

[ अथ कृदन्ते उणादयः ]

१५६२। उणादयो बहुलम्।

करोतीति कारुः। साध्नोतीति साधुः॥ १५६२॥

१५६३। सिञादेस्तुः।

सेतुः॥ १५६३॥

१५६४। अवि-तॄ-स्तॄ-तन्त्रिभ्य ईर्लक्ष्म्याम्।

अवीरित्यादि॥ १५६४॥

---

१५६१। दंष्ट्रा। व्यक्तार्थमेतत्। दंष्ट्रा दन्तः। दन्तस्य वाच्यत्वेऽपि स्त्रीत्वं निपातस्यैव फलं, नद्ध्री चर्मरज्जुः, ईप्प्रत्ययो निपातफलम्॥

१५६२। उणा। बहुलं यथा स्यात्तथा धातोरुत्तरे उणादयो भवन्ति। कारुः शिल्पी कर्ता च। साधुरुत्तमर्णो धर्मशीलश्च। वायु-पायुराहुबन्धुप्रभृतयोऽपि उण् प्रत्ययान्ता ज्ञेयाः। वायुर्वातः। पायुरपानम्। राहुर्ग्रहविशेषः। बन्धुर्ज्ञातिः, सुहृच्च। आदिपदं विवृणोति। ( सिञा इत्यादिना )॥

१५६३। सिञा। सिञादेरुत्तरे तुर्भवति। सेतुरिति सिञ् बन्धने। सेतुरालिः। 'सेतुरालौ स्त्रियां पुमानि'त्यमरः। तन्तु-धातु-ऋतु-जन्तु-हेतु-प्रभृतयोऽपि तुप्रत्ययान्ता ज्ञेयाः। तन्तुः सूत्रं, धातुर्गैरिकादि, शब्दयोनिरिन्द्रियं रक्तादिश्च। ऋतुर्वसन्तादिः। जन्तुः प्राणी। हेतुः कारणम्॥

१५६४। अवि। अव पालने, तॄ प्लवनतरणयोः, स्तॄञ् आच्छादने, तन्त्रि विस्तारणे इत्येतेभ्य उत्तरे लक्ष्म्यामीर्भवति। अवीरिति अवी रजस्वला। आदिपदेन तरीः स्तरीः तन्त्रीरिति। तरीरग्निः। स्तरी कवचो धूमः शय्या मेघश्च। तन्त्रीर्वीणादिः गुणो नाड़ी च।

१५९५। लक्षेर्मुट् च।

लक्ष्मीः ॥ १५९५ ॥

१५९६। स्त्यायतेरीवन्ता स्त्री।

१५९७। मण्डि-जि-नन्देरन्तः।

मण्डयन्तः ॥ १५९७ ॥

१५९८। स्पृह्यादेराय्यः।

स्पृहयाय्यः, गृहयाय्यः ॥ १५९८ ॥

१५९९। स्तन्यादेरित्नुः।

---

तन्द्रीप्रभृतयोऽपि ईप्रत्ययान्ता ज्ञेयाः। तन्द्र सौत्रो धातुः। तन्द्रीर्निद्रा आलस्यञ्च ॥

१५९५। लक्षे। लक्ष दर्शनाङ्कयोरित्यस्मादुत्तरे लक्ष्म्यामीर्भवति, मुट् च। लक्ष्मीः श्रीः ॥

१५९६। स्त्याय। स्त्यै शब्दसंघातयोरित्यस्य ईवन्ता स्त्री साधुरिति शेषः। स्त्री निपातादीप् स्त्यायः स्त्रश्च ईवन्तात् सोर्हरः ॥

१५९७। मण्डि। मडि भूषायां चुरादिः, जि जये, टु-नदि समृद्धौ, एतेभ्य उत्तरे अन्तो भवति। मण्डयन्त इति 'णेर्न हरः आम्-अन्त-आलु-आय्य-इत्न इत्येष्वि'ति णेर्हरनिषेधः। मण्डयन्त नटोऽलङ्कारश्च। एवं जयन्त इति ॥

१५९८। स्पृह्या। स्पृह्यादेरुत्तरे आय्यो भवति। स्पृहयाय्य इति स्पृह ईप्सायां चुरादिररामान्तः 'णेर्न हरः' इत्यादिना णेर्हरनिषेधः। स्पृहयाय्यः स्पृहयालुः। गृहयाय्य इति गृह ग्रहणे चुरादिररामान्तः। गृहयाय्यो गृहस्थः। जयाय्य इति जि जये ॥

१५९९। स्तना। स्तनादेरुत्तरे इत्नुर्भवति। स्तनयित्नुरिति स्तन शब्दे चुरादिररामान्तः णेर्हरनिषेधः। स्तनयित्नुर्मेघः। दुषयित्नुरिति

स्तनयित्नुः, दूषयित्नुः, गदयित्नुः, मदयित्नुः, । एते ण्यन्ताः । इत्यादिका उणादयः ॥ १५९९ ॥

१६०० । चक्षादेरुसिः ।

चक्षुः ॥ १६०० ॥

१६०१ । गम ओच् ।

संसारहरः—गौः । इत्यादिका उणादयः ॥ १६०१ ॥

१६०२ । घण् ।

विभुरयम् । 'घञ्' पाणिनिः ॥ १६०२ ॥

१६०३ । घणणलथुकयः पुंसि ।

घण् अल् अथु कि—एते पुंस्येव स्युः ॥ १६०३ ॥

---

दुष वैकृत्ये णिः, दुषो दूष्, ण्यन्तादित्नुः । गदयित्नुरिति गद शब्दे चुरादिररामान्तः । गदयित्नुर्वसन्तो वाग्मी कामुकश्च । मदयित्नुरिति मदी हर्षे णिः वृष्णीन्द्रः, घटादित्वाद्वामनः, ण्यन्तादित्नुः मदयित्नुर्मदिरा । एत इति एते स्तनादयः । इत्यादीत्यादिपदेन हर्षयित्नुः पोषयित्नुरित्यादि । हर्षयित्नुः सुवर्णं पोषयित्नुः कोकिलो भर्ता च ॥

१६०० । चक्षा । चक्षादेरुत्तरे उसिर्भवति । इराम इत् । चक्षुरिति चक्षिङ् व्यक्तायां वाचि, 'असि उसि अने च चक्षिङः ख्याञ् नेति वाच्यमि'ति ख्याञादेशनिषेधः । चक्षुर्लोचनम् । आदिपदेन डु-वप् वपुः शरीरम् । यज् युजुर्वेदविशेषः । धन् धनुश्चापो राशिभेदश्च । जन् जनुर्जन्मेत्यादि ॥

१६०१ । गम । गम उत्तरे ओच् भवति, च् इत् । गौरिति । गौः पशुर्भूम्यादिश्च । उणादय इत्यादिपदेन यथेष्टसिद्धिरन्येऽपि प्रत्यया ज्ञेयाः ।

१६०२ । घण् । सुगमम् ।

१६०३ । घण । वृत्तिमाह घण्णित्ति । एते पुंस्येवेति वर्तन्ते इति शेषः । अलादयो वक्ष्यन्ते ॥

१६०४। पद-रुज-विशः।

पद्यते पादः; रुजति रोगः; विशति वेशः॥ १६०४॥

१६०५। स्पर्श उपतप्तरि, सारः स्थिरे वले च, अतिसारो व्याधौ, विसारो मत्स्ये, प्रासारो वले, दारेर्दारा भार्यायां, जारेर्जार उपपतौ साधवः।

१६०६। भावे, प्रासादेः कर्तृवर्जिते च कारके संज्ञायाम्।

---

१६०४। पद। पद गतौ दिवादिरात्मपदी, रुजो भङ्गे, विश प्रवेशने तुदादिः, एतेभ्य उत्तरे कर्तरि वाच्ये घण् स्यात्। पाद इति पादश्चरणः। अत्र 'णक-तृनौ' स्यातां, तद्बाधनार्थं घण्विधानम्। रोगो व्याधिः। एवं विशतीति वेशः इतीशोद्धवत्वात् कः स्यात्तद्बाधनार्थं घण्विधानम्॥

१६०५। स्पर्श। उपतप्तरि वाच्ये स्पर्शः साधुः। स्पर्श इति स्पृश संस्पर्शने तुदादिः, निपातात् के प्राप्ते कर्तरि घण्। 'स्पर्शः स्प्रष्टोपतप्तरी'त्यमरः। सारः। स्थिरे वाच्ये सारः साधुः। स्थिरः स्थिरांशः। सार इति सृ गतौ, निपातात् णक-तृनो प्राप्तयोः कर्तरि घण्। 'सारो वले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिष्वि'ति नानार्थवर्गः। व्याधौ वाच्ये अतिसारः साधुः। व्याधिर्व्याधिविशेषः। अतिसार इति निपातात् कर्तरि घण्। विसारः। मत्स्ये वाच्ये विसारः साधुः। विसार इति निपातात् कर्तरि घण्। प्रासारः। वले वाच्ये प्रासारः साधुः। प्रासार इति निपातात् कर्तरि घण्। दारे। भार्यायां वाच्यायां ण्यन्तस्य दृधातोर्दाराः साधवः। दारा इति निपातात् कर्तरि घण्। दारशब्दो भार्यावाचकः पुंलिङ्गो नित्य-बहुवचनान्तः। 'भार्या जायाथ पुंभूम्नि दाराः स्यादि'त्यमरः। जारे। उपपतौ वाच्ये ण्यन्तस्य जृधातोर्जारः साधुः। निपातात् कर्तरि घण्। 'जारस्तूपपतिः समावि'त्यमरः। साधव इति, एते स्पर्शादयः साधव इत्यर्थः॥

१६०६। भावे। भावे कर्तृवर्जित-कारके च वाच्ये संज्ञायां

प्रभू चेमौ। यथा प्रास्यते प्रास इत्यादि; प्रासः—शस्त्रविशेषः। तथा पाकः, त्यागः, रोगः॥ १६०६॥

१६०७। क्वचिदसंज्ञायामपि।

'दाशृ' दाने, दाश्यते यस्मै स दाशः; "गुणज्ञो ब्राह्मणो दाशः" इति हि दृश्यते॥ १६०७॥

**अथ वक्ष्यमाणानि वाधकानि लक्षणानि**

१६०८। संख्यापरिमाणाख्यायाञ्च।

एकस्तण्डुलनिचायः, द्वौ सूर्पनिष्पावौ; किन्तु 'तिङोऽष्टा-

---

गम्यमानायां सत्यां प्रासादेरुत्तरे घण् स्यात्। प्रभू चेति। चशब्दादनयोर्विधिसूत्रत्वमधिकारसूत्रत्वमपि ज्ञेयम्। प्रास इति असु क्षेपणे कर्मणि घण्। प्रासोऽस्त्रविशेषः। 'प्रासस्तु कुन्तः' इत्यमरः। इत्यादीत्यादिपदेन आनायवेदापमार्गादयो ज्ञेयाः। आनायो जालम्। वेदापमार्गौ प्रसिद्धौ। पाक इति डु-पचष् पाके इत्यस्मात् भावे घण्। 'चजोः कगावि'त्यादिना चस्य कत्वं, पचनमित्यर्थः। त्याग इति त्यज हानौ, रोग इति रुज भङ्गे इत्यत्रापि भावे घण् जस्य गत्वम्। भावस्य परत्रोदाहरणं न दोषाय सूत्रद्वयस्याधिकारत्वात्॥

१६०७। कृचि। भावे कर्तृवर्जिते कारके च वाच्ये कृचिदसंज्ञायामपि धातोरुत्तरे घण् भवति। दाश्यत इत्यर्थकथनम्। दाश इति सम्प्रदाने घण् दानपात्रमित्यर्थः। अतो नास्य संज्ञाशब्दत्वम्। असंज्ञायां घण् भवतीति यदुक्तं तत्स्वेच्छामूलकं न, किन्तु शिष्टप्रयोगदर्शनमूलकमेवेत्याह—गुणज्ञ इति। हि यतः दृश्यते। अथेति। वक्ष्यमाणान् वाधकानि लक्षणानीति उच्यन्ते इति शेषः।

१६०८। संख्या। संख्या च परिमाणञ्च तयोराख्यायां सत्यां धातोरुत्तरे अलपवादः घण् भवति। आख्या उक्तिः। एकस्तण्डुलनिचाय इति निपूर्वाच्चिञः संख्यायां घण्। अत्र ईशादिति वक्ष्यमाणसूत्रेण अल् स्यात्। द्वौ सूर्पनिष्पावाविति निर्पूर्वात् पूञो घण्।

दशप्रत्ययाः, 'पञ्चोपद्रवाः', 'नैकोऽपि तव निश्चयः, इति च दृश्यते ॥ १६०८ ॥

१६०९। इङश्चाकर्त्तरि।

अधीयते अध्यायः; उप समीपे अधीयते यस्मादुपाध्यायः ॥ १६०९ ॥

---

अत्र यद्यपि संख्याख्या परिमाणाख्या च वर्त्तते तथापि परिमाणाख्यायां पृथगुदाहरणादर्शनात् परिमाणाख्योदाहरणमिदमिति ज्ञेयम्। सूर्पः परिमाणविशेषः। अत्र सूर्पशब्देन तत्परिमितं वस्तूच्यते। 'निष्पावः पवने पवः' इत्यमरः। 'निरः पुवः' इति सूत्रं वक्ष्यते। अतो निर्पूर्वस्य पूधातोस्तेनैव घण् सिध्यतीत्युदाहरणान्तरमत्रोचितं भवतीति ज्ञेयम्। किन्तु वक्ष्यमाणसूत्रेण सामान्यरूपे सिद्धेऽपि परिमाणाख्यात्वेन विशेष-प्रतिपत्त्यर्थं तदेवात्र दर्शितमिति। किन्त्विति। इति च दृश्यत इति बाहुल्यादिति शेषः। प्रत्यया इति प्रतिपूर्वादिनोऽल्। उपद्रवा इति उपपूर्वात् द्रुधातोरल्। निश्चय इति निर्पूर्वाच्चिञोऽल्। अष्टादश प्रत्यया इत्यादिषु संख्यायाः सद्भावात् घण् भवितुमर्हति, अत उक्तम्—इति च दृश्यते इति। संख्येति बहुषु पुस्तकेषु न दृश्यते, 'परिमाणा-ख्यायाञ्चे'त्येव सूत्रं दृश्यते, किन्तु तथा सति एकस्तण्डुलनिचाय इति किन्त्वित्यादिकञ्च असङ्गतं स्यात्। 'संख्यापरिमाणयोः सर्व-धातुभ्य' इति क्रमदीश्वरसूत्रम्। 'एकं निश्चयमागतमि'ति भट्टिः। किन्तु 'परिमाणादसंख्याकालविस्ताचितकम्बल्यादि'ति तद्धितप्रकरणोक्त-सूत्रे संख्यावर्जनात् संख्याशब्दानां परिमाणत्वमप्यस्तीति लक्ष्यते। अतः परिमाणाख्याञ्चेति सूत्रेऽपि सङ्गतिर्भवतीत्यपि ज्ञेयम्।

१६०९। इङ। अकर्त्तरि वाच्ये इङ अध्ययने इत्यस्माच्चोत्तरे घण् भवति। अकर्त्तरीति कर्त्तृभिन्न इत्यर्थः। अध्याय इति अधीय-तेऽस्मिन्नित्यधिकरणे अधीयतेऽयमिति कर्मणि वा घण्। उपेत्यस्यार्थं विवृणोति समीप इति ॥

१६१०। शारो वायुकर्वुरयोः, नीशारः प्रावरणे, शृणाते साधुः।

१६११। समो यु-दु-द्रुभ्यः।

संयावः। 'अत्र दुनोतेरेव ग्रहणम्' इति दुर्गः। संदावः, संद्रावः; दवतेस्तु संदवः॥ १६११॥

१६१२। अनुपेन्द्र-श्रि-नी-भूभ्यः।

श्रायः, नयनं नायः। 'प्रभावः' तु पश्चात् समासेन॥१६१२॥

१६१३। वेः क्षुः-श्रुभ्याम्।

विक्षावः॥ १६१३॥

---

१६१०। शारो। वायौ कर्बुरे च वाच्ये शॄ हिंसायामित्यस्य शारः साधुः। अल्विषये घण् प्राप्तिरेव निपातफलम्। वायुः प्रसिद्धः कर्बुरो मिश्रवर्णः। 'शारो वायौ स तु त्रिषु कर्बुरेऽथ'ति नानार्थवर्गः। नीशारः। प्रावरणे वाच्ये निपूर्वस्य शॄणातेर्नीशारः साधुः। घण् प्राप्तिस्त्रिविक्रमविधानञ्च निपातफलम्॥

१६११। समो। सम उत्तरेभ्य यु-मिश्रणामिश्रणयोः, टु-दु उपतापे, द्रु गतावित्येतेभ्य उत्तरे घण् भवति। दुनोतेरिति उत्तापार्थस्य स्वादिगणपठितस्य दुधातोरित्यर्थः। दवतेरिति गत्यर्थस्य भ्वादेर्दुधातोरित्यर्थः। संदव इति वाधकाभावे 'ईशादि'त्यनेनाल्। सम इति किम्? प्रयवः, प्रद्रवः॥

१६१२। अनु। उपेन्द्ररहितेभ्यः श्रिञ् सेवायां, नीञ् प्रापणे, भू सत्तायामित्येतेभ्य उत्तरे घण् भवति। नाय इति भावे घण् इति सूचयितुं नयनमित्युक्तम्। पश्चात् समासेनेति। अनुभाव इत्यपि पश्चात् समासेनैवेति ज्ञेयम्। अनुपेन्द्रेति किम्? प्रश्रयः, प्रणयः, प्रभवः॥

१६१३। वेः। वेरुत्तराभ्यां टु-क्षु शब्दे, श्रु श्रवणे इत्येताभ्यामुत्तरे घण् भवति। वेरिति किम्? संक्षवः, प्रतिश्रवः॥

१६१४। अवोद्ध्रां नियः।

अवनायः। अवनयोन्नयौ बाहुल्यात् ॥ १६१४ ॥

१६१५। प्रात् स्तु-द्रु-स्त्रुभ्यः।

प्रस्तावः। कथं 'स्त्रावो, गर्भस्त्रावः'? बाहुल्यात् ॥१६१५॥

१६१६। निरः पुवः, अभेर्लुवः।

निष्पावः, अभिलावः ॥ १६१६ ॥

१६१७। उन्निभ्यां ग्रः।

उद्गारः ॥ १५१७॥

१६१८। उत्कार-निकारौ धान्यक्षेपे साधू।

नेह—पुष्पाणां निकरः ॥ १६१८ ॥

---

१६१४। अवो। अवोद्ध्रामुत्तरस्मात् णीञ उत्तरे घण् भवति। बाहुल्यादिति भवत इति शेषः ॥

१६१५। प्रात्। प्रादुत्तरेभ्यः ष्टुञ् स्तुतौ, द्रु गतौ, स्रु गतौ इत्येतेभ्य उत्तरे घण् भवति। कथमिति सिद्धान्तमाह—बाहुल्यादिति शेषः।

१६१६। निरः। निर उत्तरस्मात् पूव उत्तरे घण् भवति। पूव इति पूञ् पवने क्र्यादिः, पूङ् पवने भ्वादिरविशेषादृद्वयोरेव ग्रहणम्। अभे। अभेरुत्तरस्मांत् लूञ् छेदने इत्यस्मादुत्तरे घण् भवति ॥

१६१७। उन्नि। उन्निभ्यामुत्तरस्मात् ग्र उत्तरे घण् भवति। ग्र इति गॄ निगरणे तुदादिः, गॄ शब्दे क्र्यादिर्द्वयोरेव ग्रहणम्। जयादित्यादीनामपि एतदेव मतम्। क्रमदीश्वरादयस्तु क्र्यादेर्ग्रहणं नेच्छन्ति। उन्निभ्यामिति किम्? गरः ॥

१६१८। उत्। धान्यक्षेपे अर्थे उत्कारनिकारौ साधू। धान्यक्षेपेऽर्थे उन्निभ्यामुत्तरस्य कॄ विक्षेपे इत्यस्य घण् भवतीत्यर्थः। क्षेपो विक्षेपः। 'उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकावि'त्यमरः। निकर इति 'ईशादि'त्यनेनाल् विक्षेप इत्यर्थः ॥

१६१९। समः स्तुवो यज्ञविषये।

संस्तावश्छन्दोगानाम्। अन्यत्र 'संस्तवः' ॥ १६१९ ॥

१६२०। प्रात् स्तृणातेरयज्ञे।

पुष्पप्रस्तारः। नेह—बर्हिष्प्रस्तरश्छन्दोगानाम् ॥ १६२० ॥

१६२१। वेरशब्दप्रथने।

विस्तारोऽशब्दस्य—भक्तेर्विस्तारः वेदादिशब्दस्य तु—विस्तरः ॥ १६२१ ॥

१६२२। उद्ग्राह-मुष्टिसंग्राहौ साधू।

मष्टिर्दार्ढ्यम् ॥ १६२२ ॥

---

१६१९। समः। सम उत्तरस्मात् ष्टञ् स्तुतावित्यस्मादुत्तरे यज्ञविषये घण् भवति। संस्ताव इति स्तुतिभूमिरित्यर्थः। छन्दोगानामिति याज्ञिकद्विजानामित्यर्थः। 'स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनामि'त्यमरः। संस्तव इति शूद्राणां स्तुतिभूमिरित्यर्थः ॥

१६२०। प्रात्। प्रादुत्तरस्मात् स्तृञ् आच्छादने इत्यस्मादुत्तरे अयज्ञविषये घण् भवति। वर्हिष्प्रस्तर इति षष्ठीसमासः। 'अनुत्तरपदस्थयोरिसुसोः समासे' इत्यनेन विष्णुसर्गस्य षः। बर्हिः कुशविशेषः। आसनार्थेतु विज्ञेयं कुशे बर्हिर्नपुंसकमित्याभिधानिकाः ॥

१६२१। वेर। अशब्दस्य शब्दभिन्नस्य प्रथने विस्तारे वाच्ये वेरुत्तरस्मात् स्तृणातेरुत्तरे घण् भवति। विस्तार इति स्तृञ् आच्छादने। विस्तारो 'विस्तारो विग्रहो व्यासः सच शब्दस्य विस्तरः' इत्यमरः ॥

१६२२। उद्ग्रा। व्यक्तार्थमेतत्। मुष्टिशब्दार्थमाह दार्ढ्यमिति। मुष्टिशब्दस्य परिमाणविशेषवाचित्वमप्यस्ति, किन्तु तथा सति मुष्टिसंग्राह इति 'संख्यापरिमाणाख्यायाञ्चे'त्यनेनैव सिध्यति, तस्मान्नात्र परिमाणविशेषवाचितेति भावः। 'समो मुष्टावि'ति क्रमदीश्वरलक्षणं, संग्राहो मल्लस्येति तदुदाहरणम्। 'मुष्टिबन्धस्तु संग्राहः' इत्यमरोऽपि तथाप्येतदनुसारेण कथं लक्षणं न कृतमिति न निश्चितम् ॥

१६२३। परिणायः शारीणां समन्तान्नयने, न्यायः स्थित्यनतिक्रमे साधू।

१६२४। पर्यायोऽनुपात्यये।

परीणः साधुरयम्। नेह—विपर्ययः॥ १६२४॥

१६२५। उपशाय-विशायौ पर्यायेण शयनाशयनयोः साधू।

रुक्मिण्या अद्योपशायः, सत्याया विशायः॥ १६२५॥

---

१६२३। परि। शारीणां समन्तान्नयने वाच्ये परिणायः साधुः। द्युताय रचितो द्रव्यविशेषः शारिः। परिणाय इति परिपूर्वस्य नीञो घण्, णत्वं, घण्-विधानमेव निपातफलम्। 'परिणायस्तु शारीणां समन्तान्नयने' इत्यमरः। 'परेः शारीणां सर्वतोनयने' इति क्रमदीश्वरसूत्रम्। न्यायः। स्थितिर्मर्यादा तस्या योऽनतिक्रमोऽतिक्रमाभावस्तस्मिन्नर्थे न्यायः साधुः। न्याय इति निपूर्वस्य इनो निपाताद् घण्। साधू इति एतौ परिणायन्यायौ साधू इत्यर्थः॥

१६२४। पर्या। वृत्तिमाह परीण इति। परिपूर्वस्य इण् धातोरित्यर्थः। अनुपात्यय इति अनुपात्ययेऽर्थे इत्यर्थः। उपात्ययशब्दस्य व्यतिक्रमवाचित्वादनुपात्ययशब्दस्य क्रमवाचित्वम्। विपर्यय इति व्यतिक्रम इत्यर्थः। 'आनुपूर्वी स्त्रियां वावृत् परिपाटी अनुक्रमः। पर्यायश्चातिपातस्तु स्यात् पर्यय उपात्ययः' इत्यमरः॥

१६२५। उप। पर्यायेण शयनाशयनयोर्वाच्ययोः उपशायविशायौ साधू। उपशाय इति पर्यायेण शयनम् अशयनं वेत्यर्थः। सत्याया इति सत्यभामाया इत्यर्थः। विशाय इति पर्यायेण शयनमशयनं वेत्यर्थः। किन्तु उपाशायविशायशब्दयोः पर्यायशयनवाचित्वं सार्वत्रिक-

१६२६। चेर्हस्तादाने, न तु स्तेये।

तुलसीचायः ; 'हस्तेन तुलसीचायः' इति स्पष्टार्थमेव। 'हस्तादाने' किम्? यष्ट्यग्रामलकोच्चयः। स्तेये तु तुलसीचयः ॥ १६२६ ॥

१६२७। निकायो गृहे, निचिते, राशौ च, तथा सधर्म-प्राणिनां बहुत्वे, न तु सङ्गमे साधुः।

प्राणिनां सङ्गमस्तु 'निचयः' ॥ १६२७ ॥

१६२८। अवग्राह-निग्राहावाक्रोशे साधू।

अवैष्णवस्यावग्राहो भूयात् ॥ १६२८ ॥

---

मेव पर्यायाशयनवाचित्वन्त्वप्रसिद्धमिति ज्ञेयम्। 'व्युपयोः शेतेः पर्यायः' इति भाषावृत्तिसूत्रम्। 'व्युपात् शीङः क्रमः' इति क्रमदीश्वरसूत्रम्। 'उपशायो विशायश्च पर्यायशयनार्थकावि'त्यमरः ॥

१६२६। चे। हस्तेन आदानं हस्तादानं तस्मिन् गम्ये चिञ् चयने इत्यस्मादुत्तरे घण् भवति, न तु स्तेय इति, यत्र स्तेयं चौर्यं गम्यते, तत्र न भवतीत्यर्थः। तुलसीचाय इति, हस्तेन तुलसीचयनमित्यर्थः। स्पष्टार्थमेवेति स्पष्टतार्थमेवेत्यर्थः, प्रयुज्यते इति शेषः। यष्ट्या लगुडेन आमलकोच्चय इति आमलक्याः फलमामलकं तस्योच्चयनमित्यर्थः। तुलसीचय इति तुलसीचयनमित्यर्थः ॥

१६२७। निका। गृहे निचिते राशौ च वाच्ये निकायः साधुः। तथा समानं धर्मं येषां ते सधर्माणः, सधर्माणश्च ते प्राणिनश्चेति तेषां बहुत्वे तथेति। निकायः साधुरित्यर्थः। धर्मशब्दोऽत्राचारवचनः। न तु सङ्गमे इति, सङ्गमेऽर्थे न भवति। निकाय इति निपूर्वस्य चिञो निपाताद्घण् चस्य कश्च ॥

१६२८। अव। आक्रोशे गम्यमाने अवग्राहनिग्राहौ साधू। आक्रोश इति किम्? पादस्यावग्राहः, चौरस्य निग्रहः। अत्र 'ग्रह-वृ-दृ-गम-वश-रणेभ्यः' इति वक्ष्यमाणसूत्रेणाल्।

१६२९। प्रग्राहो लिप्सुकर्तृके, परिग्राहो यज्ञाङ्ग-ग्रहणे साधू।

१६३०। उदः श्रि-यौति-नी-पू-द्रुभ्यः।

उच्छ्रायः ॥ १६३० ॥

१६३१। अवतारावस्तारौ साधू।

१६३२। विभाषा।

प्रभुरयम् ॥ १६३२ ॥

१६३३। आङो रु-प्लूभ्याम्, अवाद्ग्रहो वर्षप्रति-बन्धे, प्रात् तुलासूत्रे हयरज्जौ च, प्राद्वृणोतेराच्छा-दने, परेर्भुवोऽवज्ञाने।

---

१६२९। प्रग्रा। लब्धुमिच्छुर्लिप्सुः, कर्त्ता यत्र तादृशे आक्रोशे गम्यमाने प्रग्राहः साधुः। परि। यज्ञाङ्गग्रहणेऽर्थे परिग्राहः साधुः ॥

१६३०। उदः। व्यक्तार्थमेतत्। पू इति पूञ् पवने क्र्यादिः, पूङ् पवने भ्वादिर्द्वयोरेव ग्रहणम्। उच्छ्राय इति श्रिञ् सेवायाम्। एवं उद्यावः, उन्नायः, उत्पावः, उद्द्राव इति ॥

१६३१। अव। इदमपि व्यक्तार्थम्। अवतार इति तॄ प्लवन-तरणयोः। अवस्तार इति स्तॄञ् आच्छादने ॥

१६३२। विभाषा। अधिकारसूत्रमेतत् ॥

१६३३। आङो। आङ उत्तराभ्यां रु शब्दे, प्लुङ् गतौ इत्ये-ताभ्यामुत्तरे घण् वा भवति। 'ईशादि'त्यनेन नित्यमलि प्राप्ते विकल्पेन घण् विधानम्। अवात्। वर्षप्रतिबन्धे वाच्ये अवादुत्तरस्मात् ग्रह उत्तरे घण् वा भवति। वर्षं वृष्टिः। प्राप्तकालस्य वर्षस्य ग्रह-दोषादिना विघातो वर्षप्रतिबन्धः। प्रात्। तुलासूत्रे वाच्ये हयरज्जौ च

आरावः, आरव इत्यादि। विभाषा निवृत्ता। 'जनिवध्योर्मन्तानाञ्च' ( ५२२ ) इति न वृष्णीन्द्रः—शमः, विश्रमः। आचमादेस्तु आचामः, कामः; 'विश्राम इत्यपशब्दः' इति काशिका। केचित्तु 'चमः' 'अमः' इत्यपीच्छन्ति। 'उपेन्द्राल्लभे'-( १३६६ ) इति प्रलम्भः। नेह—सुलाभः, दुर्लभः॥ १६३३॥

१६३४। स्फुरतेः स्फारः साधुः।

---

वाच्यायां प्रादुत्तरस्माद् ग्रह उत्तरे घण् वा भवति। हयोऽश्वः। प्राद्व। आच्छादने वाच्ये प्रपूर्वात् वृञ् वरणे इत्यस्मादुत्तरे घण् वा भवति। आच्छादनशब्देनात्र आच्छादनविशेष उच्यते। प्रावृणोतेरिति निर्देशात् वृङ् सम्भक्तावित्यस्याग्रहणम्। परे अवज्ञानेऽर्थे परेरुत्तरस्माद्भुव उत्तरे घण् वा भवति। अवज्ञानमसत्कारः। आरावः आरव इति। 'आरवारावसंरावविरावाः' इत्यमरः। इत्यादीत्यादिपदेन आप्लावः आप्लवः, अवग्राहः अवग्रहः, प्रग्राहः प्रग्रहः, प्रवारः प्रवरः, परिभावः परिभव इति। 'आप्लावः आप्लवः' इत्यमरः, द्वौ स्नानवाचकौ। 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समावि'त्यमरः। तुलासूत्रेऽश्वादिरश्मौ, 'प्रग्राहः प्रग्रहोऽपि चेति' नानार्थवर्गः। प्रावरप्रवरौ वस्त्रवाचकौ। 'अनादरः परिभवः परिभावस्तिरस्क्रिया' इत्यमरः। शम इति शमु उपशमे घण्। विश्रम इति श्रमु तपसि खेदे च। आचमादेस्त्विति वृष्णीन्द्रनिषेधसूत्रे आचमादेर्वर्जनमुक्तम्, अत आचमादेर्न वृष्णीन्द्रनिषेधः, तेन आचामः काम इति। विश्राम इत्यपशब्द इति काशिकेति। 'अम-चम-विश्रमां वेत्येके' इति आख्यातप्रकरणे उक्तम्, अतस्तन्मते विश्राम इत्यपि भवति, किन्तु काशिकामते विश्राम इत्यपशब्दः। केचित्त्विति 'अम-चम-विश्रमां वे'ति येषां मतं तएव केचिदित्यस्य वाच्याः। उपेन्द्राल्लभेरितीति। 'उपेन्द्राल्लभेर्नुम् खल्घणोरि'त्यस्योल्लेखः। प्रलम्भ इति डु-लभष् प्राप्तौ। सुलाभः, दुर्लभ इति। 'न सुदुर्भ्यामन्योपेन्द्ररहिताभ्यामि'त्यनेन नुम् निषेधः॥

१६३४। स्फुर। व्यक्तार्थमेतत्। स्फार इति स्फुर स्फुरणे घण् सिध्यत्येव स्फारादेश एव निपातफलम्॥

१६३५। रन्जेर्नस्य हरो भावकरण-घणि।

रञ्जनं, तत्साधनं वा रागः। नेह—रजत्यस्मिन् 'रङ्गः' ॥ १६३५ ॥

१६३६। स्यन्देः स्यदो जवे, अवोन्देरवोदः, प्र-हिमाभ्यां श्रन्थेः प्रश्रथ-हिमश्रथौ साधू।

१६३७। उपेन्द्रस्य त्रिविक्रमो घणि बहुलं, तत्रेशस्य काशे।

नीकाशः। अनूकाशः ॥ १६३७ ॥

---

१६३५। रन्जे। भावश्च करणञ्च भावकरणे तयोर्विहिते घणि परे रन्ज राग इत्यस्य नस्य हरो भवति। तत्साधन रञ्जन-साधनम्। राग इति भावपक्षे भाव इत्यनेन घण्। करणपक्षे 'क्वचिदसंज्ञायामपी'त्यनेन उक्तसूत्रेण जस्य गत्वम्। रङ्ग इति क्वचिद-संज्ञायामपीत्यनेन अधिकरणे घण् ॥

१६३६। स्यन्दे। जवेऽर्थे स्यन्देः स्यदः साधुः। जवो वेगः। स्यद इति स्यन्दू प्रस्रवणे घण्। नलोपविधानं वृष्णीन्द्राभावश्च निपात-फलम्। अवो। अवपूर्वस्य उन्दी क्लेदने इत्यस्य अवोदः साधुः। अवोद इति नलोपविधानं गोविन्दाभावश्च निपातफलम्। प्र-हि। प्रहि-माभ्यामुत्तरस्य श्रन्थ मोचने इत्यस्य प्रश्रथहिमश्रथौ साधू। अत्रापि नलोपविधानं वृष्णीन्द्राभावश्च निपातफलम्।

१६३७। उपे। घणि सति बहुलं यथा स्यात्तथा उपेन्द्रस्य त्रिविक्रमो भवतीति सामान्यसूत्रमुक्त्वा विशेषसूत्रमाह। तत्रे। ईशस्य काशे परे त्रिविक्रमो भवति, ईशस्येति ईशान्तोपेन्द्रस्य इत्यर्थः। काशशब्दो घणन्तः। काशे परे ईशस्य त्रिविक्रमो भवतीति प्रकाश इत्यादौ न त्रिविक्रमः ॥

१६३८। प्रासादो गृहे, प्राकारः प्राचीरे।

१६३९। क्वचिद्वा।

प्रतिवेशः, प्रतीवेशः ; प्रतिहारः, प्रतीहारः ॥ १६३९ ॥

१६४०। क्वचिन्न।

प्रवाहः, प्रहारः, प्रवादः। 'अपेरादिहरः' ( ७१९ ) इत्यादि, 'अवस्य तंसे' ( ७२० )—अवतंसो, वतंसः ॥ १६४० ॥

इति घणन्ताः।

१६४१। अथ घणोऽपवादोऽल् घणर्थे।

विभुरयम् ॥ १६४१ ॥

१६४२। ईशात्।

---

१६३८। प्रासा। गृहे वाच्ये प्रासादः साधुः। गृहे वाच्ये घणन्ते सादशब्दे परे प्रोपेन्द्रस्य त्रिविक्रमो भवतीत्यर्थः। गृह इति गृहविशेषे इत्यर्थः। 'प्रासादो देवभूभुजामि'त्यमरः। अन्यत्र 'प्रसादस्तु प्रसन्नता' इत्यमरः। प्राका। प्राचीरे वाच्ये प्राकारः साधुः। अन्यत्र प्रकार इति। 'प्रकारौ भेदसादृश्ये' इति नानार्थवर्गः।

१६३९। क्वचिद्वा। बहुलमिति यदुक्तं तस्य फलमाह—क्वचिद्वेति। घणन्ते परे उपेन्द्रस्य त्रिविक्रमः क्वचिद्वा भवति। प्रतिवेशः प्रतीवेश इति वेशशब्दो घणन्तः। प्रतिहारः, प्रतीहार इति। 'द्वारि द्वाःस्थे प्रतीहारः' इति नानार्थवर्गः।

१६४०। क्वचिन्न। बहुलमित्यस्य लक्षणान्तरमप्याह—क्वचिदिति। उपेन्द्रस्य त्रिविक्रमः क्वचिन्न भवति। प्रवाह इत्यादयः। 'अपेरादिहरः' इत्यादीति 'अपेरादिहरः धाञ्नह्योर्वे'त्यनन्तरम् 'अवस्य तंसे' इति सूत्रमुक्तं, तदुदाहरणं दर्शयति—अवतंसो, वतंस इति ॥

१६४१। अथ। अधिकारसूत्रमेतत् ॥

१६४२। ईशात्। ईशादुत्तरे अल् स्यात्, ल्राम इत्।

चयनं चयः, निश्चयः, शिलोच्चयः, प्रश्रयः। 'मि-मी-लियाम्' (१३७०) इति ज्ञापकादल् च—निमयः, विनयः। दीङस्तु 'मीनाति'-(७३९)इत्यादिना आरामान्तपाठत्वाद् घणेव—उपदायः॥१६४२॥

१६४३। ग्रह-वृ-दृ-गम-वश-रणेभ्यः।

ग्रहः। बाहुल्यात् 'स्वयङ्ग्राहः'। वरः, आदरः। वृद्रोरेवेति

---

चयनमित्यर्थकथनम्। चय इति चिञ् चयने, निश्चय इति निर्पूर्व-चिञ् चयने। 'समौ निर्णयनिश्चयावि'त्यमरः। शिलोच्चय इति उच्चयनम् उच्चयः, शिलानां प्रस्तराणाम् उच्चयो यत्रेति शिलोच्चयः पर्वतः। 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः। प्रश्रय इति प्रपूर्वस्य श्रिञ् सेवायाम्। 'प्रश्रय-प्रणयौ समावि'त्यमरः। निमय इत्यादौ अल्प्रत्ययोत्पत्तेः पूर्वमेव घणि विषये कथमारामान्तपाठो न भवतीत्याशङ्क्य समादधाति मिमीलियामिति ज्ञापकादल् चेति। यद्यल्-प्रत्योत्पत्तेः पूर्वमेवारामान्तपाठः स्यात्तर्हि 'मिमीलियां खललोरात्वनिषेधः' इति सूत्रं निरर्थकं स्यात्तस्मादत्र आरामान्तपाठाभावोऽल् च भवति। दीङस्त्विति। मीनातीत्यादिनेति। 'मीनाति-मिनोति-दीङामारामान्तपाठ-श्चतुर्व्यूहविधिस्थाने यपि चे'त्यनेन सूत्रेणेत्यर्थः। आरामान्तपाठत्वादिति। आरामान्तरूपः पाठो यस्येति पीताम्बरसमासस्तदनन्तरं त्वप्रत्यय इति ज्ञेयम्, आरामान्तपाठादिति वा पाठः। आरामान्तपाठादीशान्तत्वा-भावः, अतोऽल्प्राप्तिसम्भावना नास्ति, अत उक्तं घणेवेति। उपदाय इति दीङ क्षये 'आतो युगिणि-नृसिंहकृति चे'त्यनेन युक्॥

१६४३। ग्रह। ग्रह उपादाने, वृ इति वृङ् सम्भक्तौ, वृञ् वरणे द्वयोरेव ग्रहणम्। दृङ् आदरे, गम्ॢ गतौ, वश कान्तौ, रण शब्दे इत्येतेभ्य उत्तरे अल् स्यात्। बाहुल्यात् स्वयङ्ग्राह इति, एवं ग्राह इति च ज्ञेयम्। 'ग्रहे ग्राहः' इत्यमरः। ग्राहं गतास्तत्र कथञ्चिदन्य इति भट्टवार्तिकञ्च। वर इति वरणमित्यर्थः, 'वरो वृतावि'त्यमरः। आदरः सत्कारः। वृद्रोरिति ऋरामान्तानां मध्ये वृद्रोरेव अल् भवतीति नियमस्तेन ऋरामान्तरात् अन्यऋरामान्तादल्

नियमात् न ऋरामान्तरात् हारः, कारः। दीर्घ-ॠरामात्तु कीर्यंतेऽनेनेति करः॥ १६४३॥

१६४४। उपेन्द्राददः, नेर्णश्च, अदो घस्लृर्घण्णलोः।

विघसः, निघसः, न्यादः॥ १६४४॥

१६४५। अनुपेन्द्राद्व्यधिजपिभ्यां, वा स्वनहसाभ्यां, समुपविनिभ्यश्च यमः, नेर्गद-नद-पठ-स्वनेभ्यः।

व्यधः ; स्वनः, स्वानः ; संयमः, संयामः ; 'च'कारात् यमः, यामः ; निगदः, निगादः॥ १६४५॥

---

भवति। अतो हारः, कार इति। कर इति कॄ विक्षेपे दीर्घॠरामान्ते नियमाभावात् 'ईशादि'त्यनेनाल्। करो हस्तः॥

१६४४। उपे। उपेन्द्रादुत्तरस्मात् अद भक्षणे इत्यस्मादुत्तरे अल् भवति। ने। नेरुत्तरस्मादद उत्तरे अल् भवति, णश्च पूर्वेण। अल् सिध्यत्येव णप्रत्ययार्थं वचनम्। अदो। घणि अलि च परे अदः स्थाने घस्लृर्भवति। न्याद इति णपक्षे। उपेन्द्रादिति किम्? घासः॥

१६४५। अनु। उपेन्द्ररहिताभ्यां व्यध ताड़ने, जप मानसे च इत्येताभ्यामुत्तरे अल् भवति। वा। उपेन्द्ररहिताभ्यां स्वन शब्दे, हस हसने इत्येताभ्यामुत्तरे अल् वा भवति। समु। उपेन्द्ररहितात् समुपविनिभ्यो उत्तरस्माच्च यमु उपरम इत्यस्मादुत्तरे अल् वा भवति। ने। नेरुत्तरेभ्यो गद व्यक्तायां वाचि, णद अव्यक्ते शब्दे, पठ व्यक्तायां वाचि, स्वन शब्दे इत्येतेभ्य उत्तरे अल् वा भवति। व्यध इति। 'व्यधो वेधे' इत्यमरः। व्याध इति कर्तरि वाच्ये भवति, सतु णप्रत्ययान्तः पूर्वमुक्तः। एवं जप इति जपो मन्त्रस्य सुलघूच्चारः। बाहुल्यात् जाप इति च ज्ञेयम्। शूद्रस्य वैदिकमन्त्रजापं प्रत्यनधिकारादिति न्यासः। अनुपेन्द्रादिति किम्? आव्याधः, उपजापः। स्वनः, स्वान इति। 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः। स्वाननिर्घोष-

१६४६। क्वाण-क्वण-निक्वाण-निक्वणाः, वीणा-शब्दे तु प्रक्वाणप्रक्वणादयः साधवः।

१६४७। पणः परिमाणे।

शाकस्य पणः। 'पणः' किम्? परिमिता मुष्टिः। "नराः, क्षीणपणा इव" इति भट्टिः॥ (७५८)॥ १६४७॥

---

निर्ह्लादनादनिस्वाननिस्वनाः' इत्यमरः। एवं हसो, हास इति। 'अनुक्रोशोऽप्यथो हसः हासो हास्यञ्चे'त्यमरः। अनुपेन्द्रादिति किम? प्रस्वानः, प्रहासः। संयमः, संयाम इति, 'वियामो वियमो यामो यमः संयामसंयमावि'त्यमरः। उपयमः उपयाम इति। यमो याम इति अनुपेन्द्र उदाहरणम्। न्युपेन्द्रे उदाहरणमाह—नियमः, नियाम इति। ग्रन्थान्तरे 'समुपनिभ्यश्च यमः' इति सूत्रे वीति लिपिकारप्रमादात् पतितमिति लक्ष्यते। 'यमः समुपनिविषु चे'ति भाषावृत्तिसूत्रात्, 'यमो निसंव्युपाच्चे'ति क्रमदीश्वरसूत्रात् वियामो वियमो इत्यमराच्च। निगदः निगाद इति। 'निगदो निगादः' इत्यमरः। एवं निनदो, निनादः, निपठो निपाठः, निस्वनो निस्वान इति॥

१६४६। क्वाण। क्वाणादयः साधवः। क्वणधातुः शब्दार्थः। क्वाणादयो ध्वनिमात्रवाचका वीणाध्वनिं तदितरध्वनिञ्चाहुः। वीणा। व्यक्तार्थमेतत्। 'निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि। वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः' इत्यमरः॥

१६४७। पण। परिमाणेऽर्थे पण उत्तरे अल् भवति। शाकस्य पण इति पण व्यवहारे स्तुतौ च। पणः किम्? पणस्य किमर्थमिति प्रश्ने शब्दस्यार्थमाह—परिमिता मुष्टिरिति। ततश्च शाकस्य पण इति मुष्टिपरिमितः शाक इत्यर्थः। शिष्टप्रयोगमपि दर्शयति नरा इति। 'नित्यं पणः परिमाणे' इति भाषावृत्तिसूत्रम्। मूल्यादौ वाच्ये पण उत्तरे अल् भवतीति तु जुमरमतम्, एतदपि शिष्टसम्मतमेव 'पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि चे'ति नानार्थवर्गः॥

१६४८। अनुपेन्द्रान्मदः।

विद्यामदः। बाहुल्यात् उन्मदः॥ १६४८॥

१६४९। प्रमदसम्मदौ हर्षे, समजः पशुसङ्घे, उदजः पशुसङ्घप्रेरणयोः साधवः।

अन्यत्र—समाजः, उदाजः॥ १६४९॥

१६५०। ग्लहोऽक्षस्य पणे, उपसरो गर्भाधाने साधू।

---

१६४८। अनु। अनुपेन्द्रादुत्तरस्मान्मद उत्तरे अल् भवति। विद्यामद इति मदी हर्षे। अनुपेन्द्रादिति किम्? प्रमादः॥

१६४९। प्रम। हर्षे वाच्ये प्रमदसम्मदौ साधू। अनुपेन्द्रादित्युक्तम्। अतः प्रमदसम्मदौ न सिध्यत इति निपातसूत्रं कृतम्। 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः' इत्यमरः। सम। पशुसङ्घे वाच्ये समजः साधुः। समज इति अज गतौ क्षेपणे च अल्विधानं वीभावाभावश्च निपातफलम्। 'पशूनां समजोऽन्येषां समाजः' इत्यमरः। उदजः। पशुसङ्घे प्रेरणे च वाच्ये उदजः साधुः। उदज इति अल्विधानं, वीभावाभावश्च निपातफलम्। 'उदजन्तु पशुप्रेरण-मि'त्यमरः। सूत्रे पशुप्रेरणयोरिति पाठो बहुषु पुस्तकेषु दृश्यते, स त्वसङ्गत एवेति ज्ञेयम्। समाज इति वैष्णवानामिति शेषः। 'अजेर्वीघणं विना रामधातुके' इति सूत्रे घणं विनेत्युक्तमतो वीभावाभावः। उदाज इति यादवानामिति शेषः। उद्गमनमित्यर्थः॥

१६५०। ग्लहो। अक्षस्य पणे वाच्ये ग्लहः साधुः। अक्षः पाशकः। ग्लह इति ग्रह उपादाने, अल् सिद्ध एव अर्थविशेषे ग्लहादेश एव निपातफलम्। 'पणोऽक्षषु ग्लहः' इत्यमरः। उप। गर्भाधाने वाच्ये उपसरः साधुः। उपसर इति सृ गतौ भ्वादिः। ॠ सृ गतौ ह्वादिर्द्वयोरेव ग्रहणम्। वृद्रोरेवेत्युक्तमतोऽल् न भवतीत्यर्थः। विशेषेऽल्विधानमेव निपातफलम्। 'प्रजनः स्यादुपसरः' इत्यमरः। साधू इति एतौ ग्लहोपसरौ साधू इत्यर्थः॥

१६५१। ह्वयतेर्निहवाभिहवोपहवविहवः साधवः, हव आह्वाने, आहवो युद्धे, आहावस्तु निपाने, हवो भावे, सोपेन्द्रत्वे तु प्रहावः, हनो वधश्च भावे।

चकाराद्घणणपीष्यते—घातः। सोपेन्द्रत्वे तु—प्रघातः, विघातः ॥ १६५१ ॥

१६५२। घनः काठिन्यकठिनयोः।

एते साधवः॥ १६५२ ॥

१६५३। अन्तर्घणो देशे।

णत्वेन साधुः। "तस्मिन्नन्तर्घणे देशे" इति भट्टिः (७।६३); अन्तस्थिते इत्यर्थः॥ १६५३ ॥

---

१६५१। ह्व। ह्वेञ् स्पर्धायामित्यस्य निहवादयः साधवः। निपातादल्विधानं ह्वेञो हुश्च। 'न्यभिव्युपेभ्यो ह्वेञो हुश्चे'ति क्रमदीश्वरसूत्रम्। आह्वाने वाच्ये हवः साधुः। हवो हुताावि'त्यमरः। युद्धे वाच्ये आहवः साधुः। 'संग्रामाभ्यागमाहवाः' इत्यमरः। आहावस्तु निपाने वाच्ये साधुः। निपानमुपकूपजलाशयः। 'आहावस्तु निपानं स्यादुपकूपजलाशये' इत्यमरः। हवः। भावे वाच्ये हवः साधुः। वृद्ध्रोरेवेत्युक्तमतोऽल् न स्यादिति तत्सिद्ध्यर्थं निपातसूत्रम्। हनो। भावे वाच्ये हन हिंसागत्योरित्यस्य वधघातौ साधू। घात इति सिध्यत्येव वध इत्यस्य सिद्ध्यर्थं निपातसूत्रं कृतम्। 'घातोन्माथवधा अपी'त्यमरः। सोपेन्द्रत्वे तु घणेव भवति, अत प्रघातो, विघात इति ॥

१६५२। घनः। काठिन्यकठिनयोर्वाच्ययोर्घनः साधुः। घन इति अल्, हस्य घत्वञ्च निपातफलम्। काठिन्यं गुणः तत्र दध्नोघन इति, कठिने घनं दधीति। 'घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे' इति नानार्थवर्गः। एत इति एते हवादयः॥

१६५३। अन्त। देश इति देशे वाच्ये इत्यर्थः। वृत्तिमाह णत्वेन साधुरिति। तस्मिन्निति। अन्तर्घण इत्यस्यार्थमाह–अन्तस्थित

१६५४। अयोघन-प्रघण-विघन-द्रुघणाः करणे, अयोहननी द्रुहननी च स्त्रियां, स्तम्बघन-स्तम्बघ्नौ च, निघस्तु परिमिते साधवः।

१६५५। गोचर-सञ्चर-वह-व्रज-व्यजापण-निगमादयो घान्ताः करणाधिकरणयोः संज्ञायां साधवः।

---

इत्यर्थ इति। 'तस्मिन्नन्तर्घणेऽपश्यन्नि'ति भट्टिरिति तु भाषावृत्तौ दृश्यते। अन्तर्घनशब्दोऽणत्व इति जुमरमतम्॥

१६५४। अयो। करणे वाच्ये अयोघनादयः साधवः। अयोघन इति अयो हन्यते येनेति निपातादल्, हस्य घत्वं च, अयो लौहम्। विघन इति विहन्यते येनेति पूर्ववत्। द्रुघण इति द्रुर्हन्यते येनेति द्रुघणः शस्त्रविशेषः। 'द्रुघणे मुद्गरघणावि'त्यमरः। द्रुर्वृक्षः। द्रुघनशब्दोऽणत्व इति भाषावृत्तिमतं जुमरमतञ्च। द्रुघनः कुठार इति भाषावृत्तिः। णत्वे द्रुघण इति केचिदिति च भाषावृत्तिः। अयो। व्यक्तार्थमेतत्। अयोहननीति अयो हन्यते ययेति निपातात् टनः टित्त्वादीप्। एवं द्रुहननीति। स्तम्ब। करणे वाच्ये स्तम्बघनस्तम्बघ्नौ च साधू। स्तम्बघन इति स्तम्बो हन्यते येनेनि निपातादल्, हस्य घत्वञ्च। 'स्तम्बो गुच्छस्तृणादिनः' इत्यमरः। स्तम्बघ्नो इति निपातादल्, हस्य घत्वम्, अरामहरश्च। 'स्तम्बघ्नस्तु स्तम्बघनः, स्तम्बो येन निहन्यते' इत्यमरः। स्तम्बघेति पाठो बहुषु पुस्तकेषु दृश्यते, स लिपिकरप्रमादज इति ज्ञेयम्। निघस्तु परिमिते वाच्ये साधुः। निघ इति निपातादल्, हन्तेः स्थाने घादेशश्च। 'विष्वक्समे निघः' इत्यमरः। विष्वक्सम इति समानारोहपरिणाहे इत्यर्थः। आरोहो दैर्घ्यं, परिणाहो विशालता। साधव इति एते अयोघनादयः साधव इत्यर्थः॥

१६५५। गोचर। करणे अधिकरणे च वाच्ये संज्ञायां गोचरादयो घान्ताः साधवः। गाव इति गाव इन्द्रियाणि। गोचरो विषय इति।

गावश्चरन्त्यत्र—गोचरो विषयः। प्रत्यासत्तिरत्र लक्ष्यते। सञ्चरन्त्यनेन—सञ्चर इत्यादि। अन्ये च संज्ञाशब्दा अमरकोषादौ ज्ञेयाः ॥ १६५५ ॥

**१६५६। छादेर्घः प्रायेण करणाधिकरणयोः, एकोपेन्द्रस्य छादेर्वामनो घे।**

उपच्छदः, प्रच्छदः। अनेकोपेन्द्रत्वे तु—समुपाच्छादः ॥१६५६॥

**१६५७। उरश्छदादयश्च वामनेन साधवः।**

---

विषया अमी, 'गोचरा इन्द्रियार्थाश्चे'त्यमरः। प्रत्यासत्तिरत्र लक्ष्यते इति अतश्चरन्तीत्यस्य प्रत्यासन्ना भवन्तीत्यर्थो ज्ञेयः। सञ्चर इति सञ्चरः कश्चित्। इत्यादीत्यादिपदेन वहन्त्यनेनेति वहः कश्चित्। व्रजन्त्यस्मिन्निति व्रजो गोष्ठम्। व्यजन्त्यनेनेति व्यजो व्यजनम्, अत्र वीभावाभावश्च निपातफलम्। आपणन्तेऽस्मिन्नित्यापणः, क्रयविक्रय-स्थानम्। निगच्छन्त्यनेनेति निगमो वेद इति। अन्ये चेति। उक्तेभ्यो-ऽन्ये च संज्ञाशब्दा वर्तन्ते, तेतु अमरकोषादौ ज्ञेया इति ॥

१६५६। छादे। प्रायेण करणाधिकरणयोर्वाच्ययोः छादेरुत्तरे घो भवति। करणाधिकरयोः प्रयोगप्राचुर्यमस्तीत्यभिप्रायेणेत्युक्तम्। एको। एक उपेन्द्रो यत्र तादृशस्य छादेर्घे परे वामनो भवति। प्रच्छद इति छद सम्बरणे चुरादिः, प्रच्छादयन्त्यनेनेति करणे घः, वामनः, णेर्हरः, सर्वाच्छादकवस्त्रमित्यर्थः। समुपाच्छाद इति। समु-पाच्छादयन्त्यनेनेति करणे घः, णेर्हरः। छादेर्वामनो घे इति योगो विभक्तव्यः। अत एकोपेन्द्रत्वाभावेऽपि घे परे छादेर्वामनो भवतीति ज्ञेयम्। तेन दन्तच्छदोरश्छदादयः सिध्यन्ति, दन्तान् छादयन्त्यनेनेति दन्तच्छद ओष्ठः ॥

१६५७। उर। उरश्छादयन्त्यनेनेति उरश्छदः कवचः। योग-विभागेन मया यदुक्तं तस्यैव प्रपञ्चरूपम् उरश्छदेति सूत्रं कृचित् ग्रन्थे दृश्यते ॥

१६५८। व्यवादिपूर्वाण्णः क्रियाव्यतीहारे लक्ष्म्यां, संपूर्वादिन् न क्रियाभिव्याप्तौ ब्रह्मणि, आदिसर्वेश्वरस्य वृष्णीन्द्रस्तयोः।

चकाराद्धातोस्तु यथाप्राप्तं स्यादेव, गौरादित्वादीप् (२२७२), मिथो हसनमित्यर्थे—व्यावहासी; व्यावक्रोशी, व्यावहारी, व्यात्युक्षी। बाहुल्यात् व्यवक्रुष्टिरित्यादि कलापे। सर्वतोरव इत्यर्थे संपूर्वाद्रौतेः—सांराविणम्॥ १६५८॥

१६५९। डुरामेतः क्त्रिमः क्रियानिर्वृत्ते।

करणेन निर्वृत्तम्—कृत्रिमम्। एवं पाकेन निर्वृत्तम्—पक्त्रिमम्॥ १६५९॥

---

१६५८। व्यवा। क्रियाव्यतिहारे गम्यमाने व्यवादिपूर्वाद्धातोरुत्तरे लक्ष्म्यां णो भवति। ण इत्। संपूः। क्रियाभिव्याप्तौ गम्यमानायां संपूर्वाद्धातोरुत्तरे ब्रह्मणि इन् न भवति। आदि। तयोः परयोः आदिसर्वेश्वरस्य च वृष्णीन्द्रो भवति। चशब्दोपादनस्य फलमाह—चकारादिति। धातोरिति षष्ठ्यन्तम्। यथाप्राप्तं स्यादेवेति। यस्य धातोर्वृष्णीन्द्रः प्राप्तस्तस्य वृष्णीन्द्रो भविष्यति, यस्य गोविन्दः प्राप्तस्तस्य गोविन्दो भविष्यतीत्यर्थः। गौरादित्वादीविति 'अण् केशवगौरादिभ्यः' इत्यनेनेति शेषः। मिथ इति परस्परमित्यर्थः। व्यावहासीति हस हसने, अत्र धातोर्वृष्णीन्द्रो भूतः। व्यवक्रोशीति क्रुश आह्वाने, अत्र धातोर्गोविन्दो भूतः, मिथः क्रोशनमित्यर्थः। व्यावहारीति हृञ् हरणे, मिथोव्यवहार इत्यर्थः। व्यात्युक्षीति उक्ष सेचने, मिथः सेचनमित्यर्थः। बाहुल्यादिति। बाहुल्याद्व्यवक्रुष्टिरित्यादि च भवतीति कालापा वदन्ति। रौतेरिति रु शब्दे इत्यस्मादित्यर्थः, इण् नेति शेषः। सांराविणमिति अत्रापि धातोर्वृष्णीन्द्रो भूतः॥

१६५९। डुरा। क्रियया निर्वृत्तं निष्पन्नं क्रियानिर्वृत्तं, तस्मिन्नर्थे डुरामेतो धातोरुत्तरे क्त्रिमो भवति, क् इत्। क्रिया धात्वर्थः। कृत्रिममिति डु-कृञ् करणे, कंसारित्वादगोविन्दाभावः॥

१६६०। टुरामेतोऽथुर्भावे पुंसि।

वेपथुः, श्वयथुः ॥ १६६० ॥

१६६१। यज्ञ-यत्न-विश्न-प्रश्न-स्वप्ना भावे पुंसि, याच्ञा लक्ष्म्यां न-प्रत्ययेन साधवः।

१६६२। सोपेन्द्र-दामोदरात् किर्भावादौ।

अन्तर्धिः, आदिः, आधिः ॥ १६६२ ॥

---

१६६०। टुरा। भावे वाच्ये टुरामेतो धातोरुत्तरे पुंसि अथुर्भवति। वेपथुरिति टु-वेपृ चलने। वेपथुः कम्पः। श्वयथुरिति टु-ओ-श्वि गतिवृद्ध्योः। श्वयथुः शोथः। 'घणणलथुकयः पुंसी'त्युक्तं, तथापि कथं पुंसीति कृतमिति न निश्चितम्। किंवास्यैव कथनं पूर्वत्र ग्रन्थकृता कृतमिति ॥

१६६१। यज्ञ। भावे वाच्ये पुंसि न-प्रत्ययेन यज्ञादयः साधवः। याच्ञा। भावे वाच्ये लक्ष्म्यां न-प्रत्ययेन याच्ञा साधुः। यज्ञ इति यज् देवपूजादौ निपातात् नः, तवर्गस्य चवर्गः, जे ञः सत्सङ्गे ज्ञः, यज्ञो यागः। यत्न इति यती प्रयत्ने, यत्नः प्रणिधानम्। विश्न इति विच्छ गतौ, छस्य शः। विश्नो गमनम्। प्रश्न इति प्रच्छ ज्ञीप्सायां, छस्य शः। प्रश्नः पृच्छा। स्वप्न इति ञि-ष्वप् शये। स्वप्नो निद्रा। याच्ञेति टु-याचृ याच्ञायां, तवर्गस्य चवर्गः। याच्ञा प्रार्थना ॥

१६६२। सोपे। भावादौ वाच्ये सोपेन्द्रदामोदरादुत्तरे किर्भवति। क् इत्। अन्तर्धिरिति डुधाञ् धारणपोषणयोः, 'आरामहरः कंसारि-सर्वेश्वर-रामधातुके इटि उसि चे'त्यनेन आरामहरः। 'अन्तःशब्दो णत्वविधौ धाञो ङाप् किविधौ तथा। भवेदुपेन्द्र' इत्युक्तम्, अतः सोपेन्द्रत्वम्। अन्तर्धिरन्तर्धानम्। आदिरिति आङ्पूर्व-डु-दाञ् दाने, आदिः प्रथमः। आधिरिति आङ्पूर्व-डु-धाञ्। आधिर्मानसी व्यथा ॥

१६६३। उदध्यादयश्च साधवः।

१६६४। क्तिर्लक्ष्म्यां भावे।

कृतिः। 'नेड् वन्-ति'-(१५०८) इति भूतिः। 'चरफलयोरस्य उस्ते' (१२६५)—चूर्णिः। 'ह्लादेर्वामनः क्ति-विष्णुनिष्ठयोः' (१२९०)—प्रह्लत्तिः। अविष्णुपदान्तत्वान्न टवर्गत्वनिषेधः—घट्टिः॥१६६४॥

१६६५। चायतेश्चिः क्तौ, अपचितिः पूजा, वनतेर्वतिः, दरिद्रातेर्दरिद्रातिः, कण्डूयतेः कण्डूतिः साधवः।

---

१६६३। उद। व्यक्तार्थमेतत्। उदधिरिति उदकं धीयतेऽस्मिन्निति निपातात् किः। 'धि-पेष-वास-वाहनेष्वि'त्यनेन उदकस्य उदः। उदकं जलम्। आदिपदेन अब्धि-वारिधि-जलधिप्रभृतयो ज्ञेयाः। 'परोक्षातीते कृसुकिकानाः' इत्यत्र सूत्रे कृसुकी परपदे इत्युक्तमतोऽधोक्षजाभस्य केः परपदविषयत्वात् दधिरित्यादौ कर्तर्येव तस्योदाहरणं दत्तम्। अस्य केस्तु भावादौ विहितत्वात् भावस्यैव प्रधानत्वमतोऽस्य कर्तर्यादिवाच्ये कदाचित् सम्भवात् नाधोक्षजाभत्वं, तस्मान्न द्विर्वचनादिसम्भावनापीत्यर्थः॥

१६६४। क्ति। भावे वाच्ये धातोरुत्तरे लक्ष्म्यां क्तिर्भवति। क् इत्। कृतिरिति डु-कृञ् करणे, 'नेड् वन्-ती'त्यनेन भूतिरित्यत्र इड् निषेधः। 'चरफलयोरस्य उस्ते' इति पूर्वोक्तं सूत्रं लिखितम्। चूर्णिरिति 'धातोरवप्रागिदुतोरि'त्यादिना त्रिविक्रमः। ह्लादेर्वामन इति 'ह्लादेर्वामनः क्ति-विष्णुनिष्ठयोरि'त्यस्योल्लेखः। प्रह्लत्तिरिति ह्लादी सुखे। अविष्णुपदान्तत्वादिति टवर्गस्य अविष्णुपदान्तत्वात् 'न तु विष्णुपदान्ताट्टवर्गादनामनवति-नगरीणामि'त्यनेन टवर्गत्वनिषेधः। अतस्तवर्गस्य टवर्गः, अतो घट्टिरिति। घट्टिरिति घट चेष्टायाम्॥

१६६५। चाय। क्तौ परस्यां चायृ पूजानिशामनयोरित्यस्य

'दरिद्रातेरालोपो याचोरेत्र' इति रासवताः। वकारेऽपि दृश्यते ददरिद्वानित्यत्र ॥ १६६५ ॥

१६६६। हरिवेण्वन्त-सहजानिटादीनामाशीर्विषये कर्त्तरिक्ति-र्हरिवेणुहरश्च न।

वध्यात् हन्तिः, वन्यात् वन्तिः, तन्यात् तन्तिः। भणादेस्तु

---

स्थाने चिर्भवति। अपचितिः पूजेति। 'पूजा नमस्यापचितिरि'त्यमरः। वन व्यापृतौ बन्धने प्रीतौ सम्भक्तौ चेत्यस्य भूादेर्वंतिः साधुः। वतिरिति निपाताद्धरिवेणुहरः। 'हरिवेण्वन्तसहजानिटामि'त्यादिना तु वनु याचने इत्यस्य तनादिसाहचर्यादेव तनादेर्हरिवेणुहरो भवति। दरि। व्यक्तार्थमेतत्। दरिद्रातेरिति दरिद्रा दुर्गतौ। अत्राराम-हराभावो निपातफलम्। अन्यथा 'दरिद्रातेरारामहरः' इत्यादिना आरामहरः स्यात। साधू इति एतौ साधू इत्यर्थः। दरिद्रातेरिति। याचोरेव परयोर्दरिद्रातेरालोपो भवतीति रासवता वदन्ति, रासवता इति जौमरा इतित्रत् वकारेऽपि दृश्यते इति, दरिद्रातेरालोप इति शेषः। स्थानमाह—ददरिद्वानित्यत्रेति। 'दरिद्रातेरारामहरो वैष्णवादि-सन्-युक्-टन्वर्जित-रामधातुके, भूतेशे तु वा', इति तु अस्माकं सूत्रं, तस्माद्दरिद्रातेरारामहरे प्राप्ते निपातसूत्रमिदमिति। कण्डूयतेरिति आरामहरो रामधातुके इत्यनेनारामहरे सति 'यवयोर्हरो वले' इति मन्दधियां शङ्कानिरासार्थमाह कण्डूयते कण्डूतिरिति ॥

१६६६। हरि। आशीर्विषये गम्ये कर्त्तरि वाच्ये हरिवेण्वन्तानां सहजानिटादीनाञ्च सम्बन्धे क्तिर्भवति, हरिवेणुहरश्च न भवति। अत्र हरिवेण्वन्तत्वं सहजानिट्त्वञ्च घटते। वनु याचने, तनु सूक्ष्म-करणे इत्यनयोस्तु हरिवेण्वन्तत्वं सहाजानिट्त्वं न घटते, अत एक-त्रैवोभयं लक्षणं ग्रन्थकृता कृतमिति यावत्सम्भवस्तावन्नप्रायोऽप्यत्र द्रष्टव्यः। भणादेस्त्विति 'नेड्-वन्-ति-त्रादौ भणादिवर्जमि'ति सूत्रे भणादिवर्जमित्युक्तम्, अतो भणादेरिड्भवत्येवेति। भणितिरिति भण

भणितिः, निपठितिः, निगृहीतिः, उपस्निहितिः, निकुचितिः, प्रथितिरित्यादि ॥ १६६६ ॥

१६६७। ॠरामान्तल्वादिभ्यां क्तेर्निः ग्ला-हा-ज्या-म्ला-त्वरिभ्यश्च, न तु पृणातेः।

कॄ विक्षेपे—कीर्णिः ; लूनिः, ग्लानिः। 'छस्य शः' (७८६) इत्यादौ 'ज्वर-तर-' इत्यादि तूर्णिः। पृणातेस्तु पूर्तिः ॥ १६६७॥

---

शब्दे। निपठितिरिति पठ व्यक्तायां वाचि। निगृहीतिरिति ग्रह उपादाने 'ग्रहेरिटस्त्रिविक्रमोऽनधोक्षजे' इति इटस्त्रिविक्रमः। उपस्निहितिरिति ष्णिह प्रीतौ। निकुचितिरिति कुच कौटिल्ये। प्रथितिरिति प्रथ प्रख्याने। इत्यादीत्यादिपदेन उदितिमुदितिप्रभृतयोऽपि ज्ञेयाः। उदितिरिति वद व्यक्तायां वाचि, मुदितिरिति मुद हर्षे।

१६६७। ॠरा। ॠरामान्तात् ल्वादेश्च उत्तरस्याः क्तेः स्थाने निर्भवति। ल्वादिर्गणः। ग्ला। ग्लै हर्षक्षये। हेति तु ओहाङ् गतौ, ओहाक् त्यागे द्वयोरेव ग्रहणं, ज्या वयोहानौ, म्लै गात्रविनामे, ञि त्वरा सम्भ्रमे इत्येतेभ्यश्चोत्तरस्याः क्तेः स्थाने निर्भवति। नतु। पृणातेरुत्तरस्याः क्तेः स्थाने निर्न भवति। ॠरामान्तत्वात् निः स्यादिति निषेधः कृतः। कीर्णिरिति 'ॠरामस्येर् कंसारावि'त्यनेन इर्। लूनिरिति लूञ् छेदने, ज्याधातोर्ल्वादित्वात् जीनिरिति भवति, किन्तु सङ्कर्षणे सति 'श्या-श्वि-व्या-ज्ये'ति त्रिविक्रमः। ग्लानिरिति। एवं हानिः, ज्यानिः, म्लानिरिति। ननु ज्याधातोर्जीनिरिति भवतीत्युक्तम्। तर्हि कथं ज्यानिरित्युच्यते इति चेत्तत्रोच्यते, यदा ल्वादित्वात् क्तेर्निः क्रियते, तदा सङ्कर्षणे कृते जीनिरिति भवति। यदा तु ग्लाहेत्यादिना निः क्रियते, तदा सङ्कर्षणाभावेन ज्यानिरिति। अन्यथा ग्लाहेत्यादिसूत्रे ज्याधातोरुपादानमनर्थकं स्यादिति। 'ज्वर-त्वर' इत्यादिनेति अनेन स-सर्वेश्वरस्य वस्य ऊठ्। पूर्तिरिति पॄ-पालनपूरणयोः 'ओष्ठ्योद्भवस्य ॠत उर् कंसारावि'त्यनेन उर् ॥

१६६८। सम्पदादेः क्विप्-क्ती भावे लक्ष्म्याम्।

सम्पत्, विपत्, प्रतिपत्। पक्षे—सम्पत्तिरित्यादि। आकृति-गणोऽयम्॥ १६६८॥

१६६९। ऊत्यादयः साधवः।

वेञ्—ऊतिरिति पुरुषोत्तमः। (भाषावृत्तिः ३।३।९७)। यु—यूतिः, जु—जूतिः, षो षिञ वा—सातिः, हि हन् वा—हेतिः। 'ज्वर-त्वर'-(७८७) इत्यूठ्—ऊतिः। 'जन-खन-सनाम्' (६२१) इत्यात्वम्, षणु—सातिः॥ १६६९॥

---

१६६८। सम्प। भावे वाच्ये सम्पदादेरुत्तरे लक्ष्म्यां क्विप्क्ती भवतः। इत्यादीत्यादिपदेन विपत्तिः प्रतिपत्तिरिति। आकृतिगणोऽय-मिति तस्मात् शिष्टप्रयोगानुसारेण अन्यस्मादपि धातोर्भावे क्विप्क्ती भवत इति॥

१६६९। ऊत्या। व्यक्तार्थमेतत्। वेञ् इति तन्तुसन्ताने इत्यस्य ऊतिरिति भवतीति पुरुषोत्तमो वदतीति इदमेव अस्माकमपि मतम्। ऊतिरित्यत्र त्रिविक्रम एव निपातफलम्। अवधातोः क्तौ ऊठि कृते ऊतिरिति सिध्यत्येव अतस्तदर्थं लक्षणकरणमप्रयोजनकमेवेत्यभिप्रेत्य 'वेञ्—ऊतिरि'ति पुरुषोत्तम इत्युक्तम्। यु इति यु मिश्रणामिश्रणयोः, यूरिति त्रिविक्रम एव निपातफलम्। जु इति सौत्रो धातुः, जूरित्य-त्रापि निपातफलं त्रिविक्रम एव। षो इति षो अन्तकर्मणि, षिञ् इति षिञ् बन्धने। सातिरिति षो-धातुपक्षे इरामाभाव एव निपात-फलम्, अन्यथा 'द्यति-स्यति-मा-स्थामिरि'त्यनेन इरामः स्यात्। षिञ्-धातुपक्षे तु निपातादिरामस्यारामः। हीति हि गतौ वृद्धौ च, हन् इति हन हिंसागत्योः, हेतिरिति हिधातुपक्षे गोविन्द एव निपातफलं, हन-धातुपक्षे निपातादरामस्येरामः। षण्विति षणु दाने, सातिरिति षणुधातोः क्तौ सातिरिति सिध्यत्येव, अतस्तदर्थं लक्षणकरणम-प्रयोजनकमेवेत्यभिप्रेत्य पूर्वं षो षिञ् वा सातिरित्युक्तम्॥

## १६७०। इज्यादीनां क्तिर्नेति वाच्यम्।

इज्या, व्रज्या, क्रिया, कृत्या, इच्छा, परिचर्या, चर्या, परिसर्या, मृगया, अटाट्यादयः। एते लक्ष्म्यां क्यवन्ता ज्ञेयाः। आदिग्रहणात् बाहुल्याच्च—समजन्त्यस्यां समज्या सभा; निषद्या आपणः; निपत्या पिच्छिलभूमिः; विदन्त्यनया—विद्या; सूयते

---

१६७०। इज्या। लक्ष्मीलिङ्गविषये भावे वाच्ये इज्यादीनां सम्बन्धे क्तिर्न भवतीति वाच्यम्। इजिरत्र इक्प्रत्ययान्तो ज्ञेयः। इज्या-व्रज्यादयश्च, साधवः। एते इति इज्यादयोऽष्टौ शब्दाः क्यवन्ता ज्ञेयाः। इच्छाशब्दो मृगयाशब्दश्च न क्यवन्तः, किन्तु ङावन्त इति ज्ञेयम्। एते क्यवन्ता ज्ञेया इत्युक्तिस्तु प्राचुर्यानुसारेणेति ज्ञेयम्। इज्येति यज देवपूजादौ भावे निपातात् लक्ष्म्यां क्यप्। व्रज्येति व्रज गतौ भावे लक्ष्म्यां निपातात् क्यप्। भाव इति लक्ष्म्यामिति च सर्वत्र ज्ञेयम्। क्रियेति डु-कृञ् करणे निपातात् क्यप्, तुगभावः, ऋरामस्य रिश्च। कृत्येति डु-कृञ् करणे निपातात् क्यप्। इच्छेति इषु इच्छायां निपातात् ङाप् इषेरिच्छ च। परिचर्येति चर गतौ निपातात् क्यप्, एवं चर्येति च। परिसर्येति सृ गतौ निपातात् क्यप्, तुगभावो गोविन्दश्च। मृगयेति मृग अन्वेषणे चुरादिररामान्तः, चुरादित्वात् णिः, अरामहरः। अन्तहरे गोविन्दनिषेधः, तदनन्तरं निपातात् ङाप्, णेर्हराभावस्तुगभावो गोविन्दश्च। अटाट्येति यङन्तादटाटचधातोर्निपातात् क्यप्, 'विष्णुजनात् साराम-यस्य हरो रामधातुके' इति साराम-यस्य हरः। आदिग्रहणादिति इज्याव्रज्येत्यादिसूत्र इति शेषः। समज्येति अज गतौ क्षेपणे च निपातादधिकरणे क्यप् वीभावाभावश्च। समज्या सभेति 'समज्या परिषद्गोष्ठी। सभा-समिति-संसदः' इत्यमरः। निषद्येति निषीदन्त्यस्यामिति षद्लृ विशरणगत्यवसादनेषु निपातात् क्यप्। 'सदेः प्रतिविवर्जिनः', 'उपेन्द्रात् क्रियते तद्वदि'त्यनेन षत्वम्। निपत्येति निपन्त्यस्यामिति पत्लृ गतौ निपातात् क्यप्। निपत्या पिच्छिलभूमिरिति 'निपत्या युद्धभूमिरि'ति तु जुमरमतम्। विद्येति

अस्यां सोमः—सूत्या ; शय्यतेऽस्याम्—शय्या ; भरणं भृत्या ; अयनम् एत्यनयेति वा इत्या, जागरणं जागर्या, उपवेशनम् आस्या ; इष्टि इत्यादयोऽपि दृश्यन्ते ॥ १६७० ॥

१६७१ । विष्णुनिष्ठासेट्क-गुरुमद्विष्णुजनान्तात् प्रत्ययान्ताच्च भावे लक्ष्म्यां ङाप्, न तु क्तिः ।

'आङ्' पाणिनिः ( ३।३।१०२ ) । ईहा, ऊहा, इन्दा, शिक्षा, व्यतीहा, 'व्यतीक्षा' इत्यपि । बाहुल्यान्न तु णः । चिकीर्षा, अटाटा,

---

विद् ज्ञाने निपातात् क्यप् । सोम इति उक्तं कर्मः । सूत्येति षुञ् अभिषवे निपातात् क्यप् । शय्येति शीङ् स्वप्ने निपातात् क्यप्, 'शेतेः शय् कंसारि-ये' इत्यनेन शय् । भृत्येति डु-भृञ् धारणपोषणयोः, निपातात् क्यप् । इत्येति इण गतौ भावे करणे वा, निपातात् क्यप् । जागर्येति जागृ निद्राक्षये निपातात् क्यप् । 'जागर्तेर्गोविन्दः सर्वत्रे'-त्यादिना गोविन्दः । उपवेशनमिति आसनमित्यर्थः, आसनमिति वा पाठः । आस्येति आस उपवेशने, निपातात् क्यप् । इष्टिरित्यादयोऽपि च दृश्यन्त इति, इज्यादयः क्यवन्ता, उक्ताः बाहुल्यात् इष्टिरित्यादयोऽपि च दृश्यन्त इति, यजधातोः क्तिः, सङ्कर्षणः, जस्य षत्वं, तवर्गस्य टवर्गः । 'इष्टिर्यागेच्छयोरि'ति नानार्थवर्गः ॥

१६७१ । विष्णु । इटा-सह वर्तमानः सेट्कः, विष्णुनिष्ठायां सेट्कः विष्णुनिष्ठा-सेट्कः, गुरुरस्यास्ति गुरुमान्, विष्णुनिष्ठासेट्कश्चासौ गुरुमांश्चेति विष्णुनिष्ठासेट्कगुरुमान् सचासौ विष्णुजनान्तश्च तस्मात् प्रत्ययान्ताच्चोत्तरे भावे वाच्ये लक्ष्म्यां ङाप् भवति, न तु क्तिरिति । ङापोऽपवादत्वादिति शेषः । ईहेति ईह चेष्टायाम्, ईह-धातोर्विष्णुनिष्ठासेट्कत्वं गुरुमत्त्वं विष्णुजनान्तत्वञ्चास्ति । एवं ऊहेत्यादौच । ऊहेति ऊह वितर्के । इन्देति इदि परमैश्वर्ये, 'सत्सङ्गात् पूर्वो वामनोऽपि गुरुरि'त्युक्तमतो गुरुमत्त्वम् । शिक्षेति शिक्ष विद्योपादाने । व्यतीहा व्यतीक्षेत्यपीति भवतीति शेषः । नन्वत्र व्यवादिपूर्वाण्णः

कण्डूया। 'विष्णुनिष्ठासेट्क'-इति किम् ? दीप्ति, आप्तिः, राद्धिः। गुरुमदिति किम् ? गृहीतिः। विष्णुजनादिति किम् ? शीतिः। बाहुल्यात् ऊहः राधः, ऊढ़िरित्यादयः। आशंसा, प्रशंसेत्यपि दृश्यते ॥ १६७१ ॥

१६७२। षिद्भिदादिभ्यश्च।

'त्रपुष' लज्जायाम्, षित्—त्रपा ; क्षमा ॥ १६७२ ॥

१६७३। जागृ-शुभ-जृषां गोविन्दश्च।

---

क्रियाव्यतीहारे लक्ष्म्यामि'त्यनेन णः कथं न स्यादिति चेत्तत्राह—बाहुल्यान्नतु ण इति। प्रत्ययान्तादित्यस्योदाहरणं दर्शयति चिकीर्षेत्यादि। चिकीर्षेति सनन्तान्ङाप्। अटाटेति यङन्तान्ङाप्, 'विष्णुजनात् सारामयस्य हरो रामधातुके' इत्यनेनन सारामयस्य हरः। कण्डूयेति यङन्तान्ङाप्। दीप्तिरिति दीपी दीप्तौ, गुरुमत्त्वं विष्णुजनान्तत्वञ्चास्ति, किन्तु विष्णुनिष्ठासेट्कत्वं नास्तीति न ङाप्, अतः क्तिः। आप्तिरिति आप्लृ व्याप्तौ सहजानिट्। राद्धिरिति राध, साध संसिद्धौ सहजानिट्। गृहीतिरिति ग्रह उपादाने, विष्णुनिष्ठासेट्कत्वं विष्णुजनान्तत्वञ्चास्ति, किन्तु गुरुमत्त्वं नास्ति। शीतिरिति शीङ् स्वप्ने, विष्णुनिष्ठासेट्कत्वं गुरुमत्त्वञ्चास्ति, किन्तु विष्णुजनान्तत्वं नास्ति। ऊहशब्दो राधशब्दश्च घणन्तः। आशंसेति शन्सूधातोरुरामेत्त्वाद्विष्णुनिष्ठासेट्कत्वाभावः, अत आह—आशंसा, प्रशंसेत्यपि दृश्यते इति।

१६७२। षिद्भि। ष इत् यस्य स, षित् षिच्च भिदादयश्च षिद्भिदादयस्तेभ्य उत्तरे भावे वाच्ये लक्ष्म्यां ङाप् भवति। तत्र षिद्धातोरुदाहरणं दर्शयति—षिदिति। त्रपेति त्रपूष लज्जायाम्। क्षमेति क्षमु सहने ॥

१६७३। जागृ। जागृ निद्राक्षये, शुभ दीप्तौ, जृष वयोहानौ इत्येतेषां भावे वाच्ये लक्ष्म्यां ङाप् भवति गोविन्दश्च। जागरेति

जागरा, शोभा, जरा। भिदादिः—भिदा, छिदा, तृषा, पीड़ा, चिन्ता, पूजा, कथा, अर्चा, चर्चा॥ १६७३॥

१६७४। कृपादौ लृत्वं नेष्यते।

कृपा। 'पचा' इत्यपि पुरुषोत्तमः (भाषावृत्तिः ३।३।१०४)। 'पक्तिः' इति त्वन्ये॥ १६७४॥

१६७५। गुहादयोऽधिकरणादौ साधवः।

१६७६। सोपेन्द्रारामाच्च।

---

जागर्तेर्गोविन्दः सर्वत्रेत्यादौ न तु इण्-णल-निर्गुणेष्वित्युक्तमतो गोविन्दो न स्यादिति गोविन्दविधानं कृतम्। भिदादीनामुदाहरणं दर्शयति—भिदादिरिति। भिदादय इति वा पाठः। भिदेति भिदिर् विदारणे। छिदेति छिदिर् द्विधाकरणे। तृषेति ञि-तृषा पिपासायाम्। पीड़ेति पीड़ अवगाहने चुरादिः ण्यन्तात् ङाप् णेर्हरः। एवं चिन्तादिषु च ज्ञेयम्। चिन्तेति चिति स्मृत्यां चुरादिः। पूजेति पूज पूजायां चुरादिः। कथेति कथ वाक्यप्रबन्धे चुरादिः। अर्चेति अर्च पूजायां चुरादिः। चर्चेति चर्च अध्ययने चुरादिः। पीड़ प्रभृतीनां ण्यन्तात्, 'ण्यन्तादासः श्रन्थादेश्चानो भावे लक्ष्म्यां, नतु कृतेरि'त्यनेन अनः स्यात्तन्निरासार्थमेतेषां भिदादिषु पाठः कृत इति ज्ञेयम्॥

१६७४। कृपा। कृपादाविति कृपाप्रभृतावित्यर्थः। कृपेति कृपू सामर्थ्ये भिदादित्वान्ङाप् 'कृपेरृॅलृ' इत्यनेन लृत्वं स्यात्। पचेत्यपीति पचधातोः षित्त्वात् पचेत्यपि भवतीति पुरुषोत्तमो वदति। पक्तिरिति त्वन्य इति तन्मते षित्त्वेऽपि न ङाप्, किन्तु क्तिरिति॥

१६७५। गुहा। व्यक्तार्थमेतत्। गुहेति गुहू सम्बरणे निपातात् अधिकरणे ङाप् 'देवखातविले गुहा गह्वरमि'त्यमरः। आदिग्रहणात् वपा, वसा, पृच्छा, स्पृहादयोऽपि ज्ञेयाः। वपा रन्ध्रं मेदश्च, वसा मेदः, पृच्छा प्रश्नः, स्पृहा इच्छा।

१६७६। सोपे। सोपेन्द्रारामाच्चोत्तरे भावे वाच्ये लक्ष्म्यां ङाप्

उपधा, श्रद्धा, अन्तर्द्धा, अवस्था, संस्था, व्यवस्था, आस्था। संस्थितिः, प्रस्थितिः, सङ्गीति इत्यादौ तु न, बाहुल्यात् ॥१६७६॥

१६७७। ण्यन्तादासः श्रन्थादेश्चानो भावे लक्ष्म्यां, न तु कृतेः।

'कृष्णादाप् लक्ष्म्याम्' (२२४६)—कारणा, भावना, घट्टना, मार्गणा, आसना, श्रन्थना, देवना, वन्दना, वेदना, अन्वेषणा, पर्येषणा, एषणा। परीष्टिश्च दृश्यते। कृतेस्तु कीर्तिः ॥ १६७७ ॥

---

भवति। उपधेति डु-धाञ् धारणपोषणयोः। एवं उपदेति डु-दाञ् दाने, आरामहरः। श्रद्धेति 'श्रदित्यव्ययमुपेन्द्रवद्धाञी'त्युक्तमतः सोपेन्द्रत्वम्। अन्तर्द्धेति। 'अन्तःशब्दो णत्वविधौ धाञो ङाप् किविधौ तथा। भवेदुपेन्द्रः' इत्युक्तम्। अतः सोपेन्द्रत्वम्। अवस्थेति ष्ठा गतिनिवृत्तौ। एवं व्यवस्थेत्यादि च। इत्यादौ तु नेति ङाविति शेषः। हेतुमाह—बाहुल्यादिति ॥

१६७७। ण्यन्ता। ण्यन्तात् आसधातोः श्रन्थादेश्चोत्तरे भावे वाच्ये लक्ष्म्यां अनो भवति, कृतेस्तु अनो न भवति। कृतेरित्यत्र सूत्रे वेदवद्व्यवहारात् स्पष्टज्ञापनार्थम् इर् न कृत इति। कृतेरिति ण्यन्तस्य इगन्तरूपम्। 'कृष्णादाप् लक्ष्म्यामि'ति तद्धितप्रकरणोक्तं सूत्रम्। कारणेति ण्यन्तात् कृधातोरमः। भावनेति ण्यान्ताद्भूधातोरनः। घट्टनेति घट्ट चलने भ्वादिश्चुरादिश्च ण्यन्तादनः। मार्गणेति मृजूष् शुद्धावित्यस्मात् घणन्तात् तत् करोति तदाचष्टे इत्यर्थे णिः। ततो मार्ग्यते इत्यनः। मार्गणैरथ तव प्रयोजनमित्यत्र शिष्टप्रयोगे केवलभावविहितानप्रत्ययान्तस्य दर्शनाच्च यत्नः कार्यः। अयं तावत् यत्नः। घणन्तान्मार्गात् य इवाचरतीत्यर्थे क्वचित् क्यङः क्विप् अतोऽनः मार्गणमिति पूर्वत्र यत्न उक्तः। मार्गधातुश्चेत् स्यात्तदा णकोऽपि यत्न इति। आसनेति आस उपवेशने। आस्येति च भवतीति पूर्वमेवोक्तम्। श्रन्थनेति श्रथि शैथिल्ये। देवनेति देवृ देवने। वन्दनेति वदि अभि-

१६७८। णको लक्ष्म्यां भावे, इरामो वाच्यः।

आसिका, शायिका ॥ १६७८ ॥

१६७९। प्रच्छर्दिकादयो रोगे।

१६८०। इक्-श्तिपौ धातुनिर्देशे।

पचिः पचधातुः। एवं भवतिः। कर्तृप्रयोगाभावेऽत्र शप् प्रत्ययः,

---

वन्दनस्तुत्योः। वेदनेति विद्धातोरनः। अन्वेषणेति इष गतौ। एवं पर्येषणेति एषणेति च। परीष्टिश्च दृश्यते इति तस्मात् क्तिरपि भवतीति 'परेर्वे'ति क्रमदीश्वरसूत्रम्। 'पर्येषणा परीष्टिश्चान्वेषणा च गवेषणे'त्यमरः। कीर्तिरिति कृत संशब्दने चुरादिः, 'उद्धवऋरामस्येर्' इत्यनेनेर् ण्यन्तात् क्तिः णेर्हरः। कीर्तनेति भवतीति तु जुमरमतम् ॥

१६७८। णको। भावे वाच्ये धातोरुत्तरे लक्ष्म्यां णको भवति। इराम इति वाच्य इति वक्ष्यते इत्यर्थः। आसिकेति आस उपवेशने णकः 'कृष्णादाप् लक्ष्म्यामि'त्यनेनाप्, 'प्रत्ययस्थात् कात् पूर्वस्य आरामस्येराम आपी'त्यनेन आरामस्येरामः। एवं शायिकेति ॥

१६७९। प्रच्छ। रोगे वाच्ये प्रच्छर्दिकादयः साधवः। रोग इति रोगविशेषे इत्यर्थः। प्रच्छर्दिकेति छर्द वमने चुरादिः, निपातात् णकः, आप्, आरामस्येरामः। 'प्रच्छर्दिका वमिश्च स्त्री पुमांश्च वमथुः समाः' इत्यमरः। आदिग्रहणात् विपादिका-विचर्चिका-प्रभृतयो ज्ञेयाः। विपादिका पादस्फोटः। विचर्चिका पामानामा रोगविशेषः। प्रवाहिका, ग्रहणी रुक्।

१६८०। इक्। धातोर्निर्देशो धातुनिर्देशस्तस्मिन् विषये धातोरुत्तरे इक्-श्तिपौ भवतः। इकः क इत्। श्तिपः शपावितौ। श्तिपित्यत्र कृत्प्रत्ययस्य तिपः रामधातुकत्वे कृष्णधातुकार्थं शिद्विधानम्। कृष्णधातुकत्वेऽपि निर्गुणनिरासार्थं पिद्विधानम्। अन्यथा भवतीत्यत्र शप् न स्यात् अर्तेरित्यादौ गोविन्दादिश्च न स्यादिति। भवतिरिति

'ऊहतेः' इत्यादि-ज्ञापकात्। क्वचिन्न दृश्यते च 'अर्तेर्ऋच्छः (५५५) इत्यादौ ॥ १६८० ॥

१६८१। इण् च भावे लक्ष्म्यां प्रश्नोत्तरयोः।

चाद्यथास्वमन्येऽपि। कां कारिमकार्षीः? कृष्णस्य कारिमकार्षम्। एवं कारिकां, क्रियां, कृत्यां, कृतिमिति च ॥१६८१॥

१६८२। नञ्निराक्रोशे भावे लक्ष्म्याम्।

कंसस्याजीवनिर्भूयात् ॥ १६८२ ॥

१६८३। अनो भावे।

ज्ञानं, भवनं, कीर्तनं, णत्वम्—वंहणम्। 'लिखमिलौ'

---

भूधातुरित्यर्थः। शप्प्रत्ययः कर्तरि विहिते प्रत्यये परे भवति तर्हि कथं भवतिरित्यत्र स भवत्वित्याशङ्का समादधाति, कर्तृप्रत्ययाभावेऽपि शप्प्रत्यय इति, हेतुमाह—ऊहतेरित्यादि ज्ञापकादिति। 'उपेन्द्रादूहतेर्वामनः कपिल ये' इति सूत्रे ऊहतेरित्युक्तम्। कुचिन्न दृश्यते चेति शप्प्रत्यय इति शेषः। स्थानमाह—अर्तेर्ऋच्छ इत्यादाविति ॥

१६८१। इण् च। प्रश्नोत्तरयोर्गम्यमानयोर्भावे वाच्ये लक्ष्म्यां धातोरुत्तरे इण् च भवति। ण इत्। चशब्दोपादानस्य फलमाह चादिति। यथास्वमिति स्वमनतिक्रम्येत्यर्थः। अनतिक्रमेऽव्ययीभावः, स्वशब्दोऽत्र ज्ञातिवचनः, ज्ञातित्वमत्र इंण्-प्रत्ययस्य ज्ञेयम्। यथासम्भवमित्यपि कुचित् पुस्तके दृश्यते, तदा सम्भवमनतिक्रम्येति। अन्येऽपीति भवन्तीति शेषः। ततश्च इण् भवति, अन्ये च भवन्तीति। कां कारिमकार्षीरिति अत्र प्रश्नो गम्यते। कारिमिति डु-कृञ् करणे। कृष्णस्य कारिमकार्षमिति अत्रोत्तरं गम्यते। अन्येऽपीति यदुक्तं तद्दर्शयति एवमिति ॥

१६८२। नञ। नञि पूर्वपदे सति आक्रोशे गम्यमाने भावे वाच्ये धातोरुत्तरे लक्ष्म्यां अनिर्भवति। कंसस्याजीवनिर्भूयात् इति आक्रोशो गम्यते। अजीवनिरिति जीव बल-प्राण-धारणे ॥

१६८३। अनो। भावे वाच्ये धातोरुत्तरे अनो भवति। ज्ञान-

(७५७) इत्यादि—लिखनं, लेखनम्; लिखनीयं, लेखनीयम्; नित्यं लेखनी; मिलनं, मेलनम्॥ १६८३ ॥

१६८४। टनः करणाधिकरणयोः।

दैत्यव्रश्चनं चक्रम्। व्याक्रियन्ते, व्युत्पाद्यन्ते, अर्थपर्यवसानाः क्रियन्ते शब्दा अनेनेति—व्याकरणं, शब्दानुशासनं शास्त्रम्। अधिकरणे—गोदोहनी, शयनी, रमणी॥ १६८४ ॥

---

मिति ज्ञा अवबोधने, 'भावकृद्ब्रह्मणि' इत्यनेन ब्रह्मत्वम्। भवनमिति भू सत्तायाम्। कीर्तनमिति कृत संशब्दने चुरादिः। णत्वमिति 'र-ष-ऋद्वयेभ्यो नस्य णः' इत्यादिनेति। वृंहणमिति वृहि वृद्धौ। लिखमिलावित्यादीति। 'लिख-मिलौ कुटादी बहुलमि'ति सूत्रम्। लिखनमिति लिख लेखने, कुटादित्वात् 'कुटादेरनृसिंहो निर्गुणः' इति निर्गुणत्वम्। लेखनमिति बहुलग्रहणात्, लिखनीयमिति 'विध्याद्यर्थे तव्यानीये'त्यादिना अनीयः कुटादित्वान्निर्गुणत्वम्। लेखनीयमिति बहुलग्रहणात्। नित्यं लेखनीति लिख्यते अनयति 'टनः करणाधिकरयोरि'त्यनेन टनः बहुलग्रहणात् अत्र कुटादित्वाभावः, अतो निर्गुणत्वाभावः टित्त्वादीप्। मिलनमिति कुटादित्वान्निर्गुणत्वम्॥

१६८४। टनः। करणे अधिकरणे च वाच्ये धातोरुत्तरे टनो भवति। ट इत्। दैत्यव्रश्चनमिति ओ-व्रश्चू छेदने, दैत्यान् वृश्चत्यनेनेति करणे टनः। व्याक्रियन्ते इति। इत्यास्यार्थमाह—व्युत्पाद्यन्ते इति, व्युत्पाद्यन्त इत्यस्यार्थमाह—अर्थपर्यवसानाः क्रियन्त इति। अर्थपर्यवसाना इति प्रकटितार्था इत्यर्थः, तस्मात् अनेन प्रकृतिप्रत्ययभेदेन परिकल्प्यन्ते इत्युक्तं, परमतमपि सूचितमिति। व्याकरणमिति व्याङ्पूर्व डु-कृञ् करणे, व्याकरणपदस्यार्थकथनं शब्दानुशासनं शास्त्रम्। भङ्ग्यास्य सूत्रस्योदाहणान्तरञ्च ज्ञेयम्। शब्दाननुशास्त्यनेन शब्दानुशासनं शास्त्रमपि पूर्वं दर्शितमिति। गोदोहनीति दुह पूरणे गां दोग्धि अस्यामित्यधिकरणे टनः। शयनीति शीङ स्वप्ने, 'शेतेऽस्यामि'त्यधिकरणे टनः॥

१६८५। अपादाने च।

प्रपतनः भृगुः ॥ १६८५ ॥

१६८६। उष्णङ्करण-भद्रङ्करणे।

एते करणे निपात्येते ॥ १६८६ ॥

१६८७। अजेर्वी वा टने।

प्रवयणं, प्राजनम्। कुटादित्वात्—स्फुरणम् ॥ १६८७ ॥

१६८८। दशनो दन्ते साधुः।

१६८९। ष्ठीवन-सीवने वा निपात्येते।

पक्षे—ष्ठेवनादि ॥ १६८९ ॥

---

१६८५। अपा। अपादाने वाच्ये धातोरुत्तरे टनो भवति। प्रपतन इति पत्लृ गतौ प्रपतत्यस्मादित्यपादाने टनः, भृगुरुन्नतप्रदेशः, 'प्रपातस्त्वतटो भृगुरि'त्यमरः ॥

१६८६। उष्ण। वृत्तिमाह एते इति। उष्णङ्करणमिति उष्णं करोत्यनेनेति निपातात् टनः, उष्णान्मुम् च। एवं भद्रङ्करमिति ॥

१६८७। अजे। टने परे अजेः स्थाने वी वा भवति। 'अजेर्वी घनं विना रामधातुके' इत्यनेन नित्यं प्राप्ते विभाषा। प्रवयणमिति अज गतौ क्षेपणे च, 'उपेन्द्रात् कृन्नस्य सर्वेश्वरात् परस्य णत्वमि'त्यनेन णत्वम्। प्राजनमिति वीभावाभावपक्षे। कुटादित्वादिति। कुटादित्वान्निर्गुणत्वमतः स्फुरणमिति ॥

१६८८। दश। दन्ते वाच्ये दशनः साधुः। दशन इति दन्श दंशने, निपातादनो नस्य हरश्च। 'रदना दशना दन्ताः' इत्यमरः ॥

१६८९। ष्ठीव। व्यक्तार्थमेतत्। ष्ठीवनमिति ष्ठीवु निरसने, निपाताद्भावे अनः त्रिविक्रमश्च। सीवनमिति षिवु तन्तुसन्ताने, निपातफलं पूर्ववत्। ष्ठेवनादीत्यादिपदेन सेवनमिति। 'निष्ठ्यूति-र्निष्ठेवनं निष्ठीवनमित्यभिन्नानि' इत्यमरः। 'सेवनं सीवनं स्यूति-रि'ति चामरः ॥

१६९०। टनः कर्मादौ च।

कृष्णेन भुज्यन्ते—कृष्णभोजनाः शालयः। कृष्णमाच्छादयति कृष्णाच्छादनं वासः॥ १६९०॥

अथात्र षत्वानि

१६९१। अम्बष्ठादयः।

षत्वेन साधवः। अम्बष्ठः, आम्बष्ठः, भूमिष्ठः, सव्येष्ठः, परमेष्ठी, वर्हिष्ठः, दिविष्ठः इत्यादि। 'सु-षि-नि-र्दुः-पूर्व-सूति-

---

१६९०। टनः। कर्मादौ च वाच्ये धातोरुत्तरे टनो भवति। कृष्णभोजना इति। भुज पालनाभ्यवहारयोः कर्मणि टनः। शालय इति धान्यविशेषा इत्यर्थः। 'शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी' इत्यमरः। कृष्णाच्छादनमिति छद संवरणे चुरादिः कर्तरि टनः। वासो वस्त्रम्॥

अथ। अत्र प्रकरणे षत्वानीति उच्यन्ते इति शेषः॥

१६९१। अम्ब। वृत्तिमाह—षत्वेन साधव इति। अम्बष्ठ इति अम्बायां तिष्ठतीति, अम्बायां स्थीयते इति वा वाक्ये स्थो भाव इत्यत्र तु-शब्दग्रहणात् 'अकर्मण्यारामात् कः' इति सूत्रेण कः, 'स्थो भावे तु पुंसी'त्यनेनापि कः। 'ईवापोः संज्ञायां बहुलमि'त्यनेन वामनः, निपातात् षत्वम्। वैश्यायां ब्राह्मणाज्जातोऽम्बष्ठः। आम्बष्ठ इति पृषोदरादित्वात् त्रिविक्रमः। भूमिष्ठ इति भूमौ तिष्ठतीति कः, तिपातात् षत्वम्। सव्येष्ठ इति सव्ये तिष्ठतीति कः, निपातात् षत्वम्, 'समासे ङेर्न महाहरः कृति बहुलमि'त्यनेन ङेर्महाहरनिषेधः। 'वामं शरीरं सव्यं स्यादि'त्यमरः। परमेष्ठीति परमे तिष्ठतीति, परमे पूर्वपदे तिष्ठतेर्ङिन्, आरामहरः, निपातात् षत्वं, 'समास' इत्यादिना ङेर्महाहरनिषेधः। परमेष्ठी ब्रह्मा। उणादय इत्यादिपदेन ङिन् प्रत्ययोऽपि भवतीति ज्ञेयम्। वर्हिष्ठ इति वर्हिषि तिष्ठतीति कः, निपातात् षत्वम् 'सात्वतपरत्वे लोप्यश्चे'ति विष्णुसर्गलोपः। दिविष्ठ इति दिवि तिष्ठतीति कः, निर्देशात् ङेर्महाहरनिषेधः। इत्यादीत्यादि-

समयोः' ( ९४५ ) इति—सुषुप्तं, दुःषुप्तं, विषूतिः, निषूतिः, सुषमं, दुःषमम् ॥ १६९१ ॥

१६९२। गोष्ठं व्रजे, निष्णात-नदीष्णौ कौशले, प्रतिष्णातं सूत्रे अग्निष्टुदादयो यज्ञे, विष्टारश्छन्दसि, अभिनिष्टानो विष्णुसर्गे, विष्टरो वृक्षासनयोः।

**इति श्रीश्रीहरिनामामृताख्ये वैष्णवव्याकरणे पञ्चमं कृदन्तप्रकरणं समाप्तम् ॥ ५ ॥**

---

पदेन द्विष्ठ-त्रिष्ठ-कुष्ठ-शङ्कुष्ठाङ्गुष्ठाग्निष्ठादयोऽपि ज्ञेयाः। सुवीति। सुविनिर् दुःपूर्वसूतिसमयोः षत्वमिष्यते, तत्पूर्वस्य नरस्यापि कृत-सङ्कर्षणस्वपेरिति सूत्रम्। सुषुप्तमिति ञि-ष्वप् शये सहजानिट् क्तः सङ्कर्षणः, षत्वम्। एवं सुषुप्तमिति। सूतिसमौ समासकार्यं वक्ष्येते इति गोस्वामिचरणेन यदुक्तं तद्दर्शयति विषूतिरित्यादि। सु शोभनाः समाः सम्बत्सरा यत्र तत् सुषमम्। एवं दुःषममिति ॥

१६९२। गोष्ठम्। व्रजे वाच्ये गोष्ठं षत्वेन साधुः। भाव-प्रत्ययान्तस्यापि गोष्ठशब्दस्य व्रजवाचित्वं पूर्वमेव प्रतिपादितमतोऽस्यापि व्रजवाचित्वम्। निष्णात। निष्णात-नदीष्णौ कौशले वाच्ये षत्वेन साधू। कौशल इति कुशल एव कोशलः, कुशलो निपुण इत्यर्थः। निष्णात इति निपूर्व-स्ना शौचे क्तः, निपातात् षत्वं, कुशल इत्यर्थः। नदीष्ण इति नद्यां स्नातीति 'अकर्मण्यारामात् कः' इत्यनेन कप्रत्ययः निपातात् षत्वं, नद्यां कुशल इत्यर्थः। ततो नदीष्णान् पथकान् गिरिज्ञानि'ति भट्टिः। नेः स्नातस्यैव षत्वमिति चान्द्राश्च वदन्ति, किन्तु निष्ण इति कातन्त्रपरिशिष्टे। आतिथ्य-निष्णा वनवासिमुख्या इति भट्टिप्रयोगश्च। निष्ण इति 'उपेन्द्रे आरामात् कः' इत्यनेन कः। कौशलस्य अगम्येतु निस्नातो नदीस्म इति। प्रति। सूत्रे वाच्ये प्रतिपूर्वस्य स्नः स्थाने प्रतिष्णातं साधुः। सूत्र इति किम्? प्रतिस्नातो विप्रः। अग्नि। यज्ञे विषये अग्नि-ष्टुदादयः षत्वेन साधवः। अग्निष्टुदिति अग्नौ पूर्वपदे सति ष्टुञ्

स्तुताविरयस्य क्विप्, निपातात् अग्निष्टुत्। आदिग्रहणात् अग्निष्टोम-प्रभृतयोऽपि ज्ञेयाः। विष्टा। छन्दसि वाच्ये विष्टारः षत्वेन साधुः। छन्दसीति छन्दोविशेषे इत्यर्थः। छन्दोविशेषस्तु छन्दोमञ्जर्यादावनुसन्धेयः। विष्टार इति विपूर्वस्तृङ् आच्छादने, घण्, निपातात् षत्वम्। ननु विष्टारशब्दस्य छन्दोविशेषवाचिता नास्ति, किन्तु विष्टारपङ्क्ति-शब्देन छन्दोविशेष उच्यते, तस्मात् कथं विष्टारश्छन्दसीति सूत्रं सङ्गच्छतामिति चेत्तत्रोच्यते—छन्द एकदेशे छन्दःशब्द उपचरणीयः, यथा—भीमो भीमसेन इति। अभि। विसर्गे वाच्ये अभिनिष्टानो निपातात् षत्वेन साधुः। अभिनिष्टान इति अभि-निपूर्व स्तन शब्दे घण्, निपातात् षत्वं, 'सात्वतपरत्वे लोप्यश्चे'ति विष्णुसर्गलोपः। विसर्गे वाच्ये भवतीति भागवृत्तिमतं जुमरमतञ्च वर्णे विसर्गे च वाच्ये इति तु वामनमतम्। 'अभिनिष्टानो वर्णः' इति चन्द्रसूत्रञ्च, तस्मात् वर्णेऽपि वाच्ये अभिनिष्टान इति ज्ञेयम्। तथा च माघः। वचः स्पष्टाभि-निष्टानमिदमादाय माधव इति। विसर्ग इति किम्? अभिनिस्तानो मृदङ्गस्य। विष्ट। वृक्षे आसने च वाच्ये विष्टरः षत्वेन साधुः। विष्टर इति विपूर्वस्तृञ् आच्छादने। 'ईशादि'त्यनेन अन्, निपातात् षत्वम्। 'विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमि'ति नानार्थवर्गः। वृक्षासनयोरिति किम्? वाक्यविस्तरः॥

श्रील श्रीजीवगोस्वामिचरणे स्मरणं ममास्तु॥
यामिनीतिमिरगर्भविलीना स्तम्बनिग्रहकरी जलधारा।
शाखिमूल-नदकूलशयानः किं करोति विपीने, मम रामः॥
श्रीपाटसोनामुखीग्रामे इयं टीकाभूत्॥

इति श्रील-हरेकृष्णाचार्यकृतौ चतुर्थाश्रमिक-वेदान्तभूषण-श्रीमद्गोपीचरण-दासपरिशोधितायां श्रीहरिनामामृताख्य-वैष्णवव्याकरणटीकायां बालतोषणीनाम्न्यां पञ्चमी कृत्प्रकरणटीका समाप्ता।

[ षष्ठम् ]

# अथ समास-प्रकरणम्

श्रीश्रीराधानाथाय नमः

(१०) कृष्णस्य विग्रहे भाति समासेनाखिलं पदम्।
इतीव स्मारकं वक्ष्ये समासपद-विग्रहम् ॥

---

श्रीश्रीराधाकृष्णाभ्यां नमः

(१०) कन्दर्पकोटिरम्याय स्फुरदिन्दीवरत्विषे ।
जगन्मोहनलीलाय नमो गोपेन्द्रसूनवे ॥
श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक ।
गोपाल रघुनाथाप्तव्रजवल्लभ पाहि माम् ॥

षष्ठं समासादिप्रकणमारभमाणोऽत्र वक्ष्यमाणस्य समासपदविग्रहस्य भगवत्तत्त्वविशेषस्मरणोपयोगितां श्लेषेण सूचयन् तस्य वक्ष्यमाणत्वमाह–कृष्णस्येति। समासपदस्य समस्तपदस्य विग्रहं वाक्यं वक्ष्ये अहमिति शेषः। अथच। समासेन संक्षेपेण पदानि वस्तूनि यत्रेति स समासपदः, समासपदो विग्रहो यस्येति स समासपदविग्रहः श्रीकृष्णस्तम् अहं वक्ष्ये सङ्कीर्तयिष्यामीत्यर्थः। कथम्भूतमित्यपेक्षायामाह–कृष्णस्य स्वयं भगवतो विग्रहे देहे संक्षेपेण अखिलं सर्वं पदं वस्तु श्रीवत्सादिकं लक्ष्म भाति शोभते शोभमानं सत् इति अस्य तत्त्वविशेषस्य स्मारकं स्मृतिजनकं स्यात्। इतीति षष्ठ्यन्तम्। इवेति वाक्यालङ्कारे द्योतकार्थे च। यथा कृष्णस्येत्यादि भातीति वाक्यार्थं कर्म यथा साधवः स्मरन्ति इतीव स्मारकं तदिव स्मर्तुमिति वा। यद्वा, समासपदं विग्रहं वक्ष्ये इत्युक्त्वा प्रयोजनमाह–इतीव स्मारकं इति। स्मारकमित्यत्र 'तुमु-णकौ तत्क्रियार्थत्वे' इत्यनेन णकः, अस्य तत्त्वविशेषस्य स्मरणार्थमित्यर्थः। ग्रन्थपक्षे कृष्णस्य विग्रहे कृष्णसम्बन्धिनि समासवाक्ये समासेन तत्पदेन उपलक्षितम् अखिलं सर्वं पदं भाति विराजते इतीव स्मारकं तदिव चिन्तनेन निष्पादयितुं समासपद-

(११) सबहुव्रीहि-द्विगुता-मात्रे लुब्धोऽस्मि सद्वन्द्वः।
तत्पुरुष-कर्मधारय-भक्तेर्येनाव्ययीभावः॥

१६६३। समासा बहुलम्।

वासुदेवोऽयम्। अत्र समासा वक्तव्याः। ते च बाहुल्येन ज्ञेयाः॥ १६६३॥

१६६४। तत्र श्यामराम-कर्मधारयौ, त्रिरामी-

---

विग्रहं वक्ष्ये। पदानि च विग्रहाश्च तेषां समाहारः पदविग्रहं, समासस्य पदविग्रहं समासपदविग्रहम्। कृष्णस्येत्यादि भातीति वाक्यं यथा साधवः स्मरन्ति इतीव स्मारकं तदिव समासपदं स्वानुशीलकाः स्मतुं स्मरणार्थं समर्थाः स्युरिति समासपदविग्रहमहं वक्ष्ये॥

(११) ग्रन्थकार आत्मानं संसारिणं मत्वा परमेश्वरं प्रति स्वदैन्यं निवेदयति—सबहुव्रीहीति। बहवश्च ते व्रीहयश्चेति बहुव्रीहयस्तैः सह वर्तमानः सबहुव्रीहिः। द्वौ गावौ यस्य स द्विगुः। सबहुव्रीहिश्चासौ द्विगुश्चेति सबहुव्रीहिद्विगुस्तस्य भावस्तत्ता सबहुव्रीहिद्विगुता तन्मात्रे लुब्धोऽस्मि। मम भक्तिविरोधिन्यो दुर्वासना वर्तन्ते इति भावः। 'धान्यं व्रीहिः स्तम्बकरिरि'त्यमरः। 'धान्य-मास-यव-मुद्ग-गोधुम-कोद्रवास्तिलाः। एतानि सप्त धान्यानि व्रीहिरित्युच्यते बुधैः।' पुनः कथम्भूतोऽहम्? सद्वन्दः सकलहः नानाविधोपद्रुतेन सह वर्तमान इत्यर्थः। 'द्वन्द्वं कलहयुग्मयोरि'ति नानार्थवर्गः। अतो हे पुरुषोत्तम स्वयं भगवन् मां तत् कर्म धारय येन कर्मणा भक्तेर्भगवद्भजनस्य अव्ययीभावः व्ययीभावनाभावः स्यादिति। नास्ति व्ययीभावो यस्मात् सोऽव्ययीभावः प्रेमा इति शेष। धारयेत्यस्य कारयेति फलितार्थः। भङ्ग्या बहुव्रीहिप्रभृतीनि समासानां नामानि च दर्शितानीति ज्ञेयम्॥

१६६३। समा। वृत्तिमाह—अत्रेति॥

१६६४। तत्र। तत्र प्रकरणे एतेषु समासेषु श्यामराम-कर्मधारयौ

द्विगू, कृष्णपुरुष-तत्पुरुषौ, पीताम्बर-बहुव्रीही, राम-कृष्ण-द्वन्द्वौ समानार्थौ ज्ञेयौ, अव्ययीभावस्तु षष्ठः।

१६९५। अन्तर्भिन्नपदत्वेप्येकनामत्वेन योजनं समासः।

१६९६। स च परस्परसम्बन्धार्थानां स्वाद्यन्तानाम्।

परस्परग्रहणमन्यसापेक्षतानिरासार्थम् ॥ १६९६ ॥

---

समानार्थौ ज्ञेयौ, त्रिरामी-द्विगू समानार्थौ ज्ञेयौ, एवमन्यत्र च ज्ञेयम्। अव्ययीभावस्तु षष्ठ इति। नास्ति व्ययीभावो यस्मादिति विग्रहे अव्ययीभावशब्दो भगवद्वाची भवतीति संज्ञान्तरकल्पना न कृतेति भावः।

१६९५। अन्त। समासस्य सर्वग्राहकं लक्षणमाह—अन्तर्भिन्नेति। अन्तर्मध्ये भिन्नानि पदानि यस्य सोऽन्तर्भिन्नपदः, तस्य भावस्तत्त्वं तस्मिन्। योजनं योगः। समास इति समसनमित्यर्थे संपूर्व-असु क्षेपणे घण्, समसनं पदानामेकीकरणमत उक्तम् एकनामत्वेन योजनमिति। अन्तर्भिन्नपदत्वे अन्तःपृथक्पदत्वे। अपिकारात् अन्तर्भिन्नपदत्वे च सति एकनामत्वेन एकनामरूपत्वेन योगः समास इति पर्यवसितोऽर्थः॥

१६९६। स च। स च समासः परस्परसम्बन्धोऽर्थो येषां स्वाद्यन्तानां भवति। स्वाद्यन्तानामिति प्राचुर्यपेक्षयोक्तं, किन्तु यथायोगमाख्यातान्तानामपि परस्परसम्बन्धार्थानां स ज्ञेयः, तत्रैव पीताम्बरादौ समासे तेषां समासदर्शनात् सुपः सुपा इत्यनुवृत्तेस्तिङापीति पाणिन्युक्तत्वाच्च। सम्बन्धार्थानामित्यनुक्त्वा यत् परस्परसम्बन्धार्थानामित्युक्तं, तत्फलमाह—परस्परग्रहणमिति। अन्यस्य सापेक्षत्वनिरासार्थं परस्परग्रहणमित्यर्थः॥

१६९७। समासवाक्यं विग्रहः।

१६९८। सूत्रे तृतीयान्तेन प्रथमान्तं समस्यते, तच्च पूर्वम्।

समासविधानसूत्रे तृतीयान्तेन सह प्रथमान्तं पदं समस्यते। इति सर्वत्र ज्ञेयम्। तच्च पूर्वं निपात्यम्॥ १६९८॥

**तत्र समासविशेषो यथा—**

१६९९। विशेषणं तुल्याधिकरणेन।

तुल्याधिकरणेन सह विशेषणं समस्यते। एवं सर्वत्र वृत्तिः कल्प्या॥ १६९९॥

१७००। पीताम्बरात् प्राक् समासाः कृष्णपुरुषसंज्ञाः।

तत्पुरुषा इति प्राञ्चः॥ १७००॥

---

१६९७। समा। विग्रहलक्षणमाह—समासवाक्यं विग्रह इति॥

१६९८। सूत्रे। वृत्तिमाह—समासेति। समस्यत इति एकनामत्वेन युज्यते इत्यर्थः। तच्चेति। तत् प्रथमान्तं पूर्वं निपात्यञ्च तस्य पूर्वनिपातश्च भवतीत्यर्थः॥

१६९९। विशेषणम्। तुल्याधिकरणेन सहेति। तुल्याधिकरणेन विशेष्येण सह तुल्याधिकरणं विशेषणं समस्यत इत्यर्थः। 'जातिगुणक्रियाद्वारा यस्य विशेषः कथ्यते तद्विशेष्यं, येन तस्य विशेषः कथ्यते तद्विशेषणमि'ति पूर्वमेवोक्तम्। नन्वत्र सूत्रे तुल्याधिकरणेनेत्यत्र विशेष्येणेति कथं व्याख्यायते इति चेत्तदैवं वाच्यं यद्यप्यत्र तुल्याधिकरणेनेत्यनेन विशेष्यविशेषणयोर्लाभस्तथापि विशेषणमित्युक्तत्वात् क्वचिद्विशेषणेन च विशेषणमिति वक्ष्यमाणाच्च पारिशेष्येण विशेष्य एव लभ्यते। विशेष्येणेत्युक्त्वा तुल्याधिकरणेनेति यदुक्तं तत्तु विधिसूत्रस्य सर्वत्र प्राप्त्यपेक्षयेति ज्ञेयम्॥

१७००। पीता। संज्ञासूत्रमेतत्। प्रागिति पूर्ववर्तिन इत्यर्थः॥

१७०१। तेष्वयं श्यामरामसंज्ञः।

'कर्मधारयः' इति प्राञ्चः। श्यामश्चासौ रामश्चेति, रामश्चासौ श्यामश्चेति वा विग्रहे, प्रथमान्ततया सूत्रनिर्दिष्टस्य विशेषणस्यैव पूर्वनिपाते प्राप्ते श्यामपदस्यैव पूर्वस्थितिः। च-शब्दाद्यर्थः समासेनैवोच्यते इति तदप्रयोगः, 'उक्तार्थानामप्रयोगः' इति न्यायेन ॥१७०१॥

१७०२। अन्तरङ्गस्वादेर्महाहर एकपदत्वारम्भे।

नामान्तरत्वप्राप्त्या समस्तात् पुनः स्वादयस्ततोऽवान्तरानेकपदत्वेऽप्येक-पदत्वम्। श्यामरामः—अत्र वर्णान्तररामौ व्यावर्त्य विशेषकथनात् श्यामपदस्य विशेषणत्वम्। यत्रैव श्यामत्वं, तत्रैव

---

१७०१। तेष्व। इदमपि संज्ञासूत्रम्। तेषु कृष्णपुरुषेषु कर्मधारय इत्यत्र प्राञ्च इति प्राचीनपण्डितस्य मते, प्राञ्चः पण्डिता वदन्तीति वा ङसन्तजसन्तयोः साम्यरूपत्वात्। एवं सर्वत्र ज्ञेयम्। 'सहार्थैरप्रधाने तृतीये'त्यनेन प्रथमान्तस्य प्राधान्यात् गौणमुख्यन्यायमङ्गीकृत्याह—प्रथमान्ततयेति। श्यामपदस्यैव पूर्वस्थितिरिति नतु रामपदस्येति शेषः। तदप्रयोगः चशब्दाद्यप्रयोगः। हेतुमाह—उक्तार्थानामिति ॥

१७०२। अन्त। अन्तरङ्गस्वादेर्महाहर एकपदत्वारम्भे इति आख्यातप्रकरणोक्तं सूत्रम् अत्रोक्तस्यैव तत्र सुत्रनमिति ज्ञेयम्। अन्तरङ्गस्वादेरिति। प्रकृत्याश्रितं प्रकृताविति न्यायेन समासवाक्यस्थस्वादेरेव महाहरः, नतु समस्ताद्विहितस्य स्वादेः, एतदेव स्पष्टयति नामान्तरत्वेति। समस्तस्य नामान्तरत्वप्राप्त्या अतस्तस्मात् स्वादय इत्यर्थः। अत्र समस्तः श्यामरामशब्दो नामान्तरत्वं प्राप्तोऽतस्तस्मात् पुनः स्वादयो भवन्तीति। एवमन्यत्रापि ज्ञेयम्। श्यामपदस्य विशेषणत्वं प्रतिपादयति—अत्रेति। वर्णान्तररामाविति शुक्लगौरौ बलरामभृगुरामावित्यर्थः। व्यावर्त्य निवर्त्य। रामपदस्य तुल्याधिकरणत्वं प्रतिपादयति—यत्रैवेति। तुल्याधिकरणत्वमिति विशेष्यस्य रामपदस्येति शेषः। नत्विति। कृष्णादिशब्दानामेव विशेषणत्वेऽपीत्यत्र पुरुषादिशब्दानामेव विशेष्यत्वेऽपीति

रामसंज्ञत्वमिति तुल्याधिकरणत्वम्, न तु कृष्णस्य पुरुष इत्यादौ कृष्णादिशब्दानामेव विशेषणत्वेऽपि व्यधिकरणत्वम् ; यदुक्तम्—'भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति। एवं परमपुरुषः। सन् पुरुषः—इत्यत्र शत्रन्तात् कृतहरस्य सोः पुनर्महाहरे नुमः सत्सङ्गान्तहरस्य चापाये सत्पुरुष इत्यादि। एकवैष्णवः, पुराणवैष्णवः, केवलवैष्णव इत्यादि। जगदेकवीर इत्यसाधुरिति जुमरः॥ १७०२॥

---

पाठो ज्ञेयस्ततश्च कृष्णस्य पुरुष इत्यादौ पुरुषादिशब्दानां यथा विशेष्यत्वेऽपि व्यधिकरणत्वं, तथा तु रामादिशब्दानां नेति कृष्णादिशब्दानामेव। विशेषणत्वेऽपीति पाठे तु अर्थसङ्गतिर्न भवतीति। अथवा तुल्याधिकरणपदेन पूर्वत्र विशेष्यव्याख्यानात् विशेषणस्य न तुल्याधिकरणत्वमिति मन्दधियामाशङ्कानिरासार्थं कृष्णादिशब्दानामित्युक्तं, तस्मान्नात्रासङ्गतिरिति। कृष्णस्य पुरुष इत्यादौ भेदकत्वात् कृष्णादिशब्दानां विशेषणत्वं, भेद्यत्वात् पुरुषादिशब्दानां विशेष्यत्वमिति ज्ञेयम्। यदुक्तमिति प्राचीनैरिति शेषः। भिन्नेति। प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तं मुख्यार्थः। भिन्नं प्रवृत्तिनिमित्तं ययोर्विशेषणविशेष्ययोः शब्दयोरिति विग्रहः। यद्वा, भिन्ने प्रवृत्तिनिमित्ते ये श्यामत्वरामसंज्ञत्वे तयोरिति एवम्भूतयोर्द्वयोरेकस्मिन् व्यक्तौ वृत्तिर्वर्तनं सामानाधिकरण्यमित्यर्थः। परमपुरुष इति परमश्चासौ पुरुषश्चेति पुरुषश्चासौ परमश्चेति वा विग्रहः। एवं सर्वत्र विग्रहः कल्प्यः। शत्रन्तादिति सच्छब्दादित्यर्थः। कृतहरस्येति। कृतो हरो यस्येति विग्रहः। नुम इति नुमोऽपाय इति नुम् निवृत्तावित्यर्थः। सत्सङ्गान्तहरस्यापाय इति सत्सङ्गान्तासद्भावे इत्यर्थः। इत्यादीत्यादिपदेन राजपुरुषः, पचद्वैष्णव इत्यादि च ज्ञेयम्। एकवैष्णव इति। 'एके मुख्यान्यकेवलाः' इति नानार्थवर्गः। पुराणवैष्णव इति पुराणः पुरातनः। इत्यादीत्यादिपदेन नववैष्णवः, पूर्ववैष्णवः, अपरवैष्णवः, प्रथमवैष्णवः, समानवैष्णवः, मध्यमवैष्णवः, वीरवैष्णव इत्यादि च ज्ञेयम्। एकादीनाञ्चेति जुमरलक्षणम्। एकसर्वजरत्पूर्वपुराणनवकेवलाः।

१७०३। तदेकधर्मत्वे तु न समासः।

शङ्खः पाण्डरः, लोहितस्तक्षकः, वृक्षः शिंशपा। 'स देवदारुद्रुम-वेदिकायाम्' इति तु स्यादेव, द्रुमस्य देवदारुत्वैकधर्मत्वाभावात्। करिकलभ इति तु सप्तमीसमासात्॥ १७०३॥

१७०४। समासान्तनाम्नः प्रत्यावृत्तिः।

---

मध्य-मध्यम-वीराश्च समानचरमापराः। जघन्यप्रथमौ चैकादयः पञ्चदश स्मृता इति तट्टीकाकारवचनम्। जगदेकवीर इत्यसाधुरिति जुमर इति च। जुमरमते एकवीर इति न भवति, किन्तु वीरैक इति भवति अतोऽसाधुत्वम्, एकादिगणपठितानामन्योन्यसमासे पूर्वपठितादुत्तरपठितस्यैव पूर्वनिपातो भवतीति जुमराभिप्रायः॥

१७०३। तदे। स एको धर्मो यस्य स तदेकधर्मा तस्य भावस्तत्त्वं तस्मिन्। विशेष्यस्य तदेकधर्मत्वे सति समासो न भवति। विशेषणं द्विविधं, व्यावर्तकमुपरञ्जकञ्च, तस्माद्विशेषणस्य व्यावर्तकत्वे सति समासो भवति। उपरञ्जकत्वे तु समासो न भवतीति भावः। शङ्खः पाण्डर इति शङ्खस्य पाण्डरत्वैकधर्मत्वान्न समासः। शङ्खः पाण्डर इत्यत्र पाण्डरः शङ्ख इति पाठः। एवं धवलश्चन्द्र इति च ज्ञेयम्। लोहितस्तक्षक इति तक्षकस्य लोहितत्वैकधर्मत्वान्न समासः। लोहितत्वं रक्तत्वम्। वृक्षः शिंशपा इति शिंशपाया वृक्षत्वैकधर्मत्वान्न समासः। स्यादेवेत्युक्ता हेतुमाह—द्रुमस्येति। स्यादेव समास इति शेषः। एवं वृक्षस्य शिंशपात्वैकधर्मत्वाभावात् शिंशपा वृक्ष इति भवतीति ज्ञेयम्। करिकलभ इति करिषु कलभ इति विग्रहः। 'सप्तमी शौण्डादिभि-रि'त्यनेन समासः। 'कलभः करिशावकः' इत्यमरः॥

१७०४। समा। नामान्तरत्वप्राप्त्या समस्तात् पुनः स्वादय इत्यनेन समासान्तनाम्नः नामान्तरत्वप्राप्तिनिश्चयात् पूर्वपूर्वस्मिन्नाम्नि यद्यत् कार्यं स्यात्, पुनः स्वादौ परे तत्तन्नाम्नि तत्तत् कार्यं न स्यादिति मनस्याशङ्क्य व्यवस्थापकलक्षणमाह—समासान्तनाम्न इति।

परमप्रत्यङ्, परमप्रत्यञ्चौ। कार्यार्थमक्षरविश्लेषात् सन्धिं निवर्त्यादिशः परमाहं, परमायं, परमानेन। अन्यसापेक्षत्वे श्यामो रामो महानित्यत्र न समासः। एवं विग्रहसमासयोर्विकल्पः॥ १७०४॥

१७०५। बाहुल्यात् क्वचिन्नित्यसमासः।

कृष्णसर्पः सर्पजातिविशेषः। लोहितशालिर्धान्यजातिभेदः। स्तोक-कृष्णस्तन्नामा श्रीकृष्णस्य सखा। समासेनैव तत्तत्प्रतिपत्ते-र्नित्यत्वम्॥ १७०५॥

---

समासान्तनाम्न इति समासान्तस्थितनाम्न इत्यर्थः। प्रत्यावृत्तिरिति। ननु समासान्तनाम्न इत्यत्र समासस्य अन्ते स्थितनाम समासान्तनाम तस्य इत्यर्थे सति केवलसमासस्य अन्तनाम्नः प्रत्यावृत्तिर्न तु सर्वेषां समासान्तानां, तथा सति अत्र कार्यसिद्धिः स्यात्। राजपुरुष इत्यादौ राजादिशब्दानां तत्तन्नामत्वाभावात् 'नामान्तस्य नस्ये'त्यादिना नराम-हरादिकार्यं न स्यादतः समासान्तेषु स्थितनाम्नः समासान्तनाम्न इति मध्यपदलोपिसमासः, किं वा समासो अन्ते यस्य स समासान्तः, स चासौ नामा चेति समासान्तनामा तस्य इत्यर्थः। समासान्तत्वं तावत् सर्वेषां नाम्नां सम्भवति समासे शक्तिकल्पनात्। नाम्न इत्यत्र जात्यपेक्षयैकवचनं, किन्तु सर्वेषां नाम्नां तत्तन्नामत्वेन प्रत्यावृत्तिः पूर्वत्र नामान्तरप्राप्तिर्द्वित्रिनाममिलनेन तत्तन्नामत्वन्तु प्रत्येकं नाम्ना-मिति। ततश्च परमप्रत्यङ् परमप्रत्यञ्चावित्यादौ परमप्रत्यच् शब्दात् स्वादयो नुमकार्यादीनि च भवन्तीति लब्धम्। सन्धिनिवर्त्यादिश इति भवतीति शेषः। उदाहरणत्रयमाह परमाहमित्यादि। न समास इति यदुक्तं परस्परग्रहणमन्यसापेक्षतानिरासार्थमिति। एवमिति, एवं क्रमे-णेत्यर्थः। विग्रहेति। तस्मादेको विग्रहपक्षः एकः समासपक्ष इति॥

१७०५। बाहुल्यात्। सुगमम्। नित्यसमासानां स्वपदविग्रहो नास्तीति वक्ष्यते, अतः कृष्ण एव सर्प इति यथायोग्यं कल्प्यमिति। तन्नामा स्तोककृष्णनामा। समासेनैवेति तत्तत्प्रतिपत्तेर्विग्रहताभावः, अत नित्यत्वमिति। प्रतिपत्तिर्ज्ञानम्॥

१७०६ । क्वचिन्न समासः ।

रामो जामदग्न्यः, व्यासः पाराशर्यः, अर्जुनः कार्तवीर्यः । तदेवं विशेष्येण विशेषणस्य समास उक्तः ॥ १७०६ ॥

१७०७ । क्वचिद्विशेषणेन च विशेषणं समस्यते । *

कृष्णलोहितो, धूम्रवर्णः, श्यामसुन्दरः ॥ १७०७ ॥

१७०८ । किञ्चित्वेन विभागे गम्येऽपि ।

किञ्चिदङ्गं नरः, किञ्चित् सिंहः—नरसिंहः । शुक्लकृष्णः, कृताकृतं, यातानुयातम् ॥ १७०८ ॥

१७०९ । क्रयाक्रयिकादयः ।

त्रिविक्रमेण साधवः । क्रयेषु महान् क्रयः, क्रयिका स्वल्पा

---

१७०६ । क्वचिन्न । क्वचित् समासो न भवति, बाहुल्यादिति शेषः । रामो जामदग्न्य इत्यादौ जामदग्न्यादीनां व्यावर्तकत्वमस्तीति समासः स्यादिति क्वचिन्न समास इत्युक्तम् ॥

१७०७ । क्वचि । व्यक्तार्थमेतत् । कृष्णलोहितो, धूम्रवर्ण इति । 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरः ॥

१७०८ । किञ्चि । किञ्चित्त्वेन विभागे गम्येऽपि विशेषणेन सह विशेषणं समस्यते । किञ्चिदङ्गं नर इति । अङ्गमवयवः । नरत्वमत्र नराङ्गतुल्यत्वमिति । शुक्लेति । किञ्चित् शुक्लः, किञ्चित् कृष्णः शुक्लकृष्ण इति । एवमन्यत्र च ज्ञेयम् ॥

१७०९ । क्रया । वृत्तिमाह–त्रिविक्रमेणेति । साधव इति निपात्यन्ते इत्यर्थः । क्रय इति क्रीणातेः 'ईशादि'त्यनेन अन् । क्रयिकेति क्रयशब्दात् अल्पे इत्यनेन कप्रत्ययः, ततो लक्ष्म्यामापि कृते 'प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपी'त्यनेन अरामस्येरामः ।

---

* यदा पदद्वयमेव विशेषणं तदा एकस्य विशेष्यत्वं विवक्ष्यते । इति मल्लिनाथादयः । ( श्रीरासः ) ॥

—तयोः समुदायः क्रयाक्रयिका। एवं पुटापुटिका, फलाफलिका, मानोन्मानिका ॥ १७०९ ॥

**अथ पूर्वनिपाताद्यर्थं वक्तव्यान्तराणि**

१७१०। पूर्वक्तान्तं पश्चात् क्तान्तेन।

पूर्वं स्नातः पश्चादनुलिप्तः—स्नातानुलिप्तः ॥ १७१० ॥

१७११। ईषदकृदन्तेन।

ईषत्कृष्णः। तद्धिते—ऐषत्कृष्णः। कृदन्तेन तु न—ईषत् कुर्वाणः ॥ १७११ ॥

---

तयोः क्रयक्रयिकयोः क्रयाक्रयिकेति त्रिविक्रमोऽत्र निपातफलम्। एवमिति। पुटेषु महान् पुटः पुटिका स्वल्पा तयोः समुदायः पुटापुटिकेति। फलेषु महत् फलं फलिका स्वल्पा, तयोः फलाफलिकेति। मानेषु महत् मानमुन्मानिका स्वल्पा तयोः समुदायः मानोन्मानिकेति ॥

अथेति। विशेष्यविशेषणयोर्निपातानन्तरं पूर्वनिपाताद्यर्थं वक्तव्यान्तराणि मध्यमकथनानि सूत्राणि इति उच्यन्ते इति शेषः ॥

१७१०। पूर्व। पूर्वक्तान्तं पश्चात् क्तान्तेन सह समस्यते। अनुलिप्त इति चन्दनादिनेति शेषः। स्नातानुलिप्त इति प्रथमान्ततया सूत्रनिर्दिष्टस्य पूर्वक्तान्तस्य पूर्वनिपातः। स्नातश्चासौ अनुलिप्तश्चेति विग्रहे 'क्वचिद्विशेषणेन विशेषणं समस्यते' इत्यनेन यदि श्यामरामः स्यात्तदा पूर्वनिपातानियमः स्यात्। एवं स्नातविभूषितः। स्नपितभोजितः, वद्धताड़ित इत्यादयोऽपि ज्ञेयाः ॥

१७११। ईषत्। ईषत् अकृदन्तेन सह समस्यते। ईषच्छब्दोऽव्ययम् अल्पवाची। ईषत्कृष्ण इत्यत्र ईषच्छब्दस्याव्ययत्वात् एकपदत्वं स्पष्टं न भवतीत्याह—तद्धिते ऐषत्कृष्ण इति ईषत्कृष्णशब्दात् केशवः णः, 'आदिसर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे' इत्यनेन वृष्णीन्द्रः। ईषत् कुर्वाण इति ईषदिति पृथक् पदम्। भाषावृत्तौ ईषदकृतेति सूत्रे अकृदिति गुणोपलक्षणमित्युक्तम्। ईशदगुणवचनेनेति जुमरसूत्रञ्च। अतः अकृदन्तेन गुणवचनेन सहेत्यर्थो ज्ञेयः ॥

१७१२। श्रेण्यादयः कृतादिभिरभूततद्भावे।

अश्रेणयः श्रेणयः कृताः—श्रेणिकृताः ॥ १७१२ ॥

१७१३। विशेष्यं तदर्थकुत्सनेन।

याज्ञिककितवः ; वैयाकरणखसूचिः, खसूचिनिष्प्रतिभः। तदर्थे किम् ? वैयाकरणश्चौरः। नात्र चौरत्वेन वैयाकरणत्वं कुत्स्यते, किन्तु पुरुष एव॥ १७१३ ॥

---

१७१२। श्रेण्या। अभूततद्भावेऽर्थे श्रेण्यादयः कृतादिभिः सह समस्यन्ते। श्रेणिकृता इति गाव इति शेषः। श्रेण्यादयः कृतादयश्च क्वचित् क्वचित् पुस्तके दृश्यन्ते, क्वचित् कुचित् पुस्तके न दृश्यन्ते च, अतोऽत्र लिख्यन्ते। श्रेणिः पटुर्ब्राह्मणश्च श्रमणोदकपण्डिताः। निपुणश्च पणो मुण्डो मूककुङ्कुमराशयः॥ इन्द्रकुटाध्यापकाश्च निधनं निचयो दृशत्। वदान्यश्च विशिष्टश्च कृत्रिमः पूग एव च॥ देवश्च कुसुमञ्चैव चतुर्विंशतिसंख्यकाः। पदार्थविषयौ क्वापि मृदुः कृपण एव च॥ कृतं मतं भूतमुक्तं निराकृतगते तथा। सम्भाविताव धारितकलितान्यवकलिपतम्॥ उपाकृतं चोपकृतं समाङ्पूर्वाणि त्रीणि वै। ज्ञातं ख्यातं तथा स्नातं कृतादीदं सदा भवेदिति॥ पदार्थविषयाविति। पदार्थादीनां चतुर्णां श्रेण्यादित्वं क्वापि अस्ति नतु सर्वत्र। जुमरे कुशलक्षत्रिययोरपि श्रेण्यादि वमुतम्। त्रीणीति ज्ञातमित्यादीनीत्यर्थः। ततश्च समाज्ञातं समाख्यातं समास्नातमिति।

१७१३। विशे। तस्य अर्थस्तदर्थस्तं कुत्सयतीति तदर्थकुत्सनस्तेन सह विशेष्यं समस्यते। तदर्थस्य कुत्सनं यस्मादिति वा तदर्थकुत्सनस्तेन सह समस्यते। किं वा तस्मै इदं तदर्थं तच्च तत्वेन। तत्पदेन विशेष्यस्य परामर्षः। याज्ञिककितव इति। कितवत्वेन याज्ञिकत्वं कुत्स्यते इति कितवस्य तदर्थकुत्सनत्वम्। कितवो धूर्तः। वैयाकरणखसूचिरिति। खसूचित्वेन वैयाकरणत्वं कुत्स्यते इति खसूचिस्तदर्थकुत्सनत्वम्। व्याकरणप्रसङ्गमात्रे खमाकाशं सूचयतीति निर्गलितार्थकथनार्थं प्रकारान्तरमाह—खसूचिरिति। प्रज्ञा नवनवोल्लेख-

१७१४। पापादीनि निन्द्यैः।

पापकंसः, हतचैद्यः, अणकनापितः॥ १७१४॥

१७१५। क्वचिन्निन्द्यश्च ।

चैद्यहतकः ॥ १७१५॥

१७१६। किं क्षेपे।

किंजीवो यः कृष्णं न भजति॥ १७१६॥

---

शालिनी प्रतिभा मता इति कौस्तुभालङ्कारे। निर्गता प्रतिभा यस्य सः। तदर्थेति किमिति विशेष्यं कुत्सनेनेत्येवास्त्विति शेषः। वैयाकरणश्चौर इति चौरस्य कुत्सनत्वमस्ति, किन्तु तदर्थकुत्सनत्वं नास्तीति ।।

१७१४। पापा। निन्द्यन्ते ये ते निन्द्यास्तैः सह पापादीनि समस्यन्ते। पापकंस इति कंसो निन्द्यः। हतचैद्य इति चैद्यः शिशुपालः, स तु निन्द्य एव। अणकनापित इति अणकः कुत्सितः। नापितस्य स्ववृत्त्यपरिज्ञानरूपा निन्दा वर्तते, अतस्तस्य निन्द्यत्वम्। पापकंस इत्यादौ पापादीनां कथञ्चित् तदर्थकुत्सनत्वमस्ति, अतः पूर्वसूत्रेण समासे प्राप्ते विशेषणस्य पूर्वनिपातो न स्यादतस्तस्य पूर्वं निपातार्थं सूत्रमिदम्। यदि विशेषणं तुल्याधिकरणेनेत्यनेन समासः स्यात्तदा पूर्वनिपातानियमः स्यात्, उत्तरत्र क्वचिदिति सूत्रकरणात् ।।

१७१५। क्वचि। क्वचिन्निन्द्यश्च स्वाद्यन्तेन सह समस्यते। चैद्यहतक इति। अत्र प्रथमान्ततया सूत्रनिर्दिष्टस्य निन्द्यस्य पूर्वनिपातः ।।

१७१६। किम्। क्षेप आक्षेपस्तस्मिन् गम्यमाने किं स्वाद्यन्तेन सह समस्यते। किम्शब्दो निन्दार्थोऽव्ययम्। यः कृष्णं न भजतीति क्षेपसूचनार्थमुक्तम्। कृष्णभजनं हि जीवस्य स्वधर्मस्तदकरणात्तस्य क्षेपः ।।

१७१७। कुः पापेषदर्थयोः।

कुब्राह्मणः, कदुष्णम्। कोः कद्वक्ष्यते (१९७२)। समासकार्यस्य वक्ष्यमाणत्वादेतदादिकं तत्रैव साधनीयमिति॥ १७१७॥

१७१८। उपमेयं व्याघ्रादिभिरुपमानैः।

पुरुषो व्याघ्र इव—पुरुषव्याघ्रः। पुरुषो व्याघ्र इव शूर इति तु सापेक्षत्वात्॥ १७१८॥

१७१९। उपमानमुभयस्थधर्मवचनैः।

मेघ इव श्यामः मेघश्यामः। लक्ष्म्याः पुरुषोत्तमत्वेऽपि— मृगीव चपला मृगचपला। अनुभयस्थत्वे तु कृष्ण इव प्रद्युम्नः॥१७१९॥

---

१७१७। कुः। पापेषदर्थयोर्वर्तमानः कुः स्वाद्यन्तेन सह समस्यते। कुब्राह्मण इति, अत्र पापार्थः कुशब्दः। कदुष्णमिति, अत्र ईषदर्थः कुशब्दः। कोः कद्वक्ष्यते इति, कोष्णकवोष्णकदुष्णा मन्दोष्णे इति वक्ष्यते। एतदादिकं कदुष्णादिकम्। आदिपदेन कोष्णकवोष्णयोर्ग्रहणं तत्रैव समासकार्यं एव॥

१७१८। उपमे। व्याघ्रादिभिरुपमानैः सह उपमेयं समस्यते। पुरुषो व्याघ्र इवेति विग्रहं दर्शितवान्। पुरुषो व्याघ्र इति उपमेयस्य पूर्वनिपातः। एवं पुरुषसिंहः, पुरुषकुञ्जरः, मुखपद्मं, मुखकमलं, मुखचन्द्रः, करपल्लवं, करकिशलयमित्यादि च ज्ञेयम्। सापेक्षत्वादिति। तस्मात् सापेक्षत्वादत्र समासो न भवतीति॥

१७१९। उपमा। उभयस्थधर्मवचनैः सह उपमानं समस्यते। मेघ इव श्याम इति विग्रहः, मेघश्याम इति श्यामशब्द उपमानोपमेयस्थधर्मवचनः। अत्र मेघस्योपमानत्वं कृष्णस्योपमेयत्वम्। पुरुषोत्तमत्वेऽपीत्यत्र पुरुषोत्तमवत्त्वेऽपीति वा पाठः। मृगचपलेति, 'वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामि'त्यनेन पुरुषोत्तमवत्त्वम्। चपलाशब्द उपमानोपमेयस्थधर्मवचनः। अत्र मृग्या उपमानत्वं गोप्या उपमेयत्वम्।

१७२०। पूज्यं वृन्दारकाद्यैः।

वैष्णववृन्दारकः, विप्रवृषभः, पुरुषोत्तमः ॥ १७२० ॥

१७२१। जातिः प्रशंसावचनैर्नियतलिङ्गसंख्यकैः।

गोपप्रकाण्डं, गोपमतल्लिका ॥ १७२१ ॥

१७२२। जातिर्युवत्यादिभिः।

गोयुवतिः, गोधेनुः, दधिकतिपयम्। एवं पोटास्तोक-गृष्टि-

---

अनुभयस्थत्वे त्विति, अनुभयस्थधर्मवचनत्वे त्वित्यर्थः। अनुभयस्थधर्म-वचनत्वे त्विति वा पाठः। कृष्ण इव प्रद्युम्न इति, प्रद्युम्नशब्दस्य उभयस्थधर्मवचनत्वं नास्ति ॥

१७२०। पूज्यम्। वृन्दारकाद्यैः सह पूज्यं समस्यते। वैष्णव-वृन्दारक इति वैष्णवः पूज्यो, अतस्तस्यैव पूर्वनिपातः। वृन्दारक-शब्दोऽत्र मुख्यवाची। विप्रवृषभ इत्यत्र वृषभशब्दो मुख्यवाची। एवं विप्रनागः, विप्रकुञ्जर इत्यादि च ज्ञेयम्। पुरुषोत्तम इति। अत्र पुरुषशब्दस्य ईश्वरवाचित्वेन पूज्यत्वम्। पूज्यमिति किम्? अवैष्णवो वृषभः, मूर्खत्वात् ॥

१७२१। जाति। नियतलिङ्गसंख्यकैः प्रशंसावचनैः सह जातिः समस्यते। नियतलिङ्गसंख्यकैरित्युपादानात् प्रशंसामात्रवचनानां नियत-लिङ्गानां मतल्लिकादीनां पञ्चानामेवात्र ग्रहणमिति सूचितम्। जातिरिति जातिवाचक इत्यर्थः। 'मतल्लिका-मर्चचिका प्रकाण्डमुद्घ-तल्लजौ। प्रशस्तवाचकान्यमूनी'त्यमरः। गोपप्रकाण्डं, गोपमतल्लिकेति प्रशस्तगोप इत्यर्थः। एवं गोपमर्चचिका, गोपोद्घः, गोपतल्लज इति ॥

१७२२। जाति। युवत्यादिभिः सह जातिः समस्यते। जाति-र्जातिवाचकः। गोपयुवतिरिति गोशब्दः जातिवाचकः। गोधेनुरिति धेनुर्नवप्रसूता। 'धेनुः स्यान्नवसूतिके'त्यमरः। दधिकतिपयमिति दधि-शब्दो जातिवाचकः। एवमिति। पोटा स्त्रीपुंसलक्षणधारिणी स्त्री।

वशा-वेहद्-वस्कयनी-प्रवक्तृ-श्रोत्रियाध्यापकधूर्ताः। 'उभयप्राप्तौ त्विष्टं समस्यते' इति जुमरः—वृन्दारकयुवतिः, युववृन्दारिका ॥ १७२२ ॥

१७२३। पशुजातिर्गर्भिण्या।

गोगर्भिणी ॥ १७२३ ॥

१७२४। युवा खलत्यादिभिः।

---

'पोटा स्त्रीपुंसलक्षणे'त्यमरः। स्तोकशब्दोऽल्पार्थः। गृष्टिरेकवारप्रसूता गौः। 'वशा बन्ध्ये'त्यमरः। * 'वेहद्गर्भोपघातिनी'त्यमरः। गर्भोपघातिनी गौर्वेहदित्यर्थः। वस्कयनी तरुणवत्सा गौः। 'चिरप्रसूता वस्कयनी'त्यमरः। प्रवक्तृप्रभृतयश्चत्वारः प्रसिद्धार्थाः। युवतिः, पोटा, स्तोकं, वस्कयनी, श्रोत्रियो, वशा, वेहत्। धेनु-प्रवक्तृ-कतिपयमध्यापक-गृष्टि-धूर्ताश्च। एते त्रयोदश युवत्यादयः। उभयप्राप्ताविति उभयोः प्राप्ताविष्टस्येति जुमरसूत्रम्। जुमरोक्तमुदाहरणं दर्शयति—वृन्दारकयुवतिरिति। वृन्दारिका चासौ युवतिश्चेति विग्रहे 'नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि'ति न्यायेन 'पूज्यं वृन्दारकाद्यैरि'त्यनेन श्यामरामे कृते युववृन्दारिका इति भवति। 'जातियुंवत्यादिभिरि'त्यनेन कृते वृन्दारकयुवतिरिति भवति। अत उभयोः प्राप्ताविष्टस्येतुक्तमतो जुमरमते वृन्दारकयुवतिरित्येव मतान्तरे तु युववृन्दारिकेति। वृन्दारकयुवतिरित्यत्र युववृन्दारिकेत्यत्र च 'वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरण-लक्ष्म्यामि'त्यनेन पुरुषोत्तमवत्त्वम् ॥

१७२३। पशु। गर्भिण्या सह पशुजातिः समस्यते। जातिरिति किम्? शवली गर्भिणी। शवलीशब्दो न जातिवचनः, किन्तु गुणवचनः। 'वर्णादिभेदात् संज्ञाः स्युः शवलीधवलादयः' इत्यमरः। पश्विति किम्? ब्राह्मणी गर्भिणी ॥

१७२४। युवा। खलत्यादिभिः सह युवा समस्यते। युवखलति-

---

* तालव्यान्तो वशाशब्दः करिण्यां वनितायाञ्च वर्तते। दन्त्यसान्तस्तु हृन्मेदसि। यस्याः गर्भः पतितः सा वेहत्। (श्रीरासः) ॥

युवखलतिः। 'नामग्रहणे लिङ्गविशिष्टग्रहणम्' युवपलिता, युवबलिनः। तुल्याधिकरणे पुम्बद्भावो वक्ष्यते (१६४१) ॥१७२४॥

१७२५। कुमारी श्रमणादिभिः।

कुमारश्रमणा तु प्रव्रजितोच्यते। एवमध्यापिका-तापसी-गर्भिणीभिः ॥ १७२५ ॥

१७२६। कुमारश्चाध्यापकादिभिः।

कुमाराध्यापकः। एवं पण्डितनिपुणादिभिः ॥ १७२६ ॥

१७२७। विष्णुकृत्यं तुल्यार्थश्चाजात्या।

---

रिति युवा चासौ खलतिश्चेति विग्रहः, रोगादिनिर्मूलीकृतकेशः खलतिः। युवपलितेति युवतिश्चासौ पलिता चेति विग्रहः। पलितेति पलितविशिष्टेत्यर्थः। 'पलितं जरसा शौक्ल्यं केशादावि'त्यमरः। तुल्याधिकरणे इति 'वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामि'ति सूत्रम्। युवबलिन इति युवा चासौ बलिनश्चेति विग्रहः। बलिनो बलयुक्तः। 'बलिनो बलिभः समावि'त्यमरः। नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति युवबलिनेति च ज्ञेयम्। 'युवा खलतिपलितबलिनजरतीभिरि'ति भाषावृत्तिसूत्रम्। अतो युवजरती इति च ज्ञेयम्॥

१७२५। कुमा। श्रमणादिभिः सह कुमारी समस्यते। कुमारश्रमणेति कुमारी चासौ श्रमणा चेति विग्रहः। प्रव्रजिता सन्न्यासिनी। एवमिति। अध्यापिकादयस्त्रयः प्रसिद्धार्थाः। श्रमणा कुलटा दासी तापसी बन्धकी तथा। गर्भिण्यपि प्रव्रजिता सप्त स्युः श्रमणादयः। इति जुमरमतम्॥

१७२६। कुमारश्च। अध्यापकादिभिः सह कुमारश्च समस्यते। एवं पण्डितनिपुणादिभिरिति। आदिपदेन मृदु-पटु-कुशल-कल्याण-चपलादीनां रूपाणां ग्रहणम्॥

१७२७। विष्णु। अजात्या सह विष्णुकृत्यं तुल्यार्थश्च समस्यते।

भोज्यष्णं, भोज्यलवणम्। तुल्यार्थत्वे—तुल्यश्यामः कृष्णेन, प्रद्युम्नः सदृशकृष्णः। न जातित्वे—भोज्य ओदनः। विशेषणसमासोऽपि वाध्यते ॥ १७२७ ॥

१७२८। कतरकतमौ जातिप्रश्ने।

कतरब्राह्मणः ॥ १७२८ ॥

१७२९। षष्ठ्यन्तेन।

प्रभुरयम् ॥ १७२९ ॥

१७३०। पूर्वापराधरोत्तरादीन्यवयविनैकद्रव्यत्वे।

---

अजात्येति अजातिवाचकेनेत्यर्थः। भोज्योष्णमिति भोज्यञ्च तत् उष्णञ्चेति विग्रहः। भोज्यं भक्ष्ये इति ण्यत्प्रकरणोक्तं कृत्सूत्रम्। उष्णशब्दो गुणवचनः। एवं भोज्यलवणमिति। तुल्यश्याम इति श्यामशब्दो गुणवचनः। कृष्णेनेति 'तुल्यार्थैः षष्ठी चे'त्यनेन तृतीया। सदृशकृष्ण इति कृष्णशब्दो गुणवचनः। भोज्य ओदन इति ओदनशब्दो जातिवचनः। विशेषणसमासोऽपि वाध्यते इति, तस्मात् अजात्येति विशेषणसामर्थ्यात् 'विशेषणं तुल्याधिकरणेने'त्यनेनापि समासो न भवतीति ॥

१७२८। कतर। जातिप्रश्ने सति कतरकतमौ स्वाद्यन्तेन समस्येते। 'किंयत्तद्भ्यो गुणक्रियासंज्ञाभिर्द्वयोरेकस्य निर्धारणायामतरच्' इत्यनेन अतरच्प्रत्यये कृते कतरशब्दः सिध्यति। 'बहूनां जातिप्रश्नेऽतमजकावि'त्यनेन अतमच्प्रत्यये कृते कतमशब्दः सिध्यति। कतरब्राह्मण इति। एवं कतमब्राह्मण इति च ज्ञेयम्। जातिप्रश्ने इति किम्? कतरपाठकः ॥

१७२९। षष्ठ्य। अधिकारसूत्रमेतत् ॥

१७३०। पूर्वा। एकद्रव्यत्वे वर्तमानानि पूर्वापराधरोत्तरादीनि षष्ठ्यन्तेन अवयविना सह समस्यन्ते। 'पूर्वापराधरोत्तरमेकदेशेनैकाधिकरणे' इति भाषावृत्तिसूत्रम्। पूर्वादयोऽवयविना एकद्रव्ये वर्तमानाः

पूर्वं कायस्य पूर्वकाय इत्यादि। अत्र पूर्वाह्ण-मध्याह्न-अपराह्ण-पराह्ण-सायाह्नाः। पश्चिमरात्र-मध्यरात्रादयश्च ज्ञेयाः। भिन्नद्रव्यत्वे तु—पूर्वो वैष्णवानाम्। षष्ठीसमासापवादोऽयम्; तेन कायपूर्वं इति न स्यात्॥ १७३०॥

१७३१। अर्धं समविभागे वा।

'पुंस्यर्धोऽर्धं समेंऽशके' ( अमरकोषः १।३।१०८ )। अर्धमा-

---

समस्यन्ते इति तद्वृत्तिश्च। पूर्वं कायस्येति विग्रहः। इत्यादीत्यादि-पदेन अपरकाय अधरकाय उत्तरकाय इत्यादि च ज्ञेयम्। अत्रेति। पूर्वाह्ण इति पूर्वं अह्न इति विग्रहे अनेन सूत्रेण समासः। 'राजाहः-सखिभ्यः' इत्यनेन केशवारामः। 'सर्वाव्याभ्यामेकवर्जं संख्यासंख्या-तैकदेशेभ्यश्चाहःशब्दस्याह्नः समाहारवर्जं टे' इत्यनेन अहःशब्दस्याह्नः 'रात्राह्नाहाः पुंसी'ति पुंस्त्वम्। 'अरामान्तादह्नस्ये'ति णत्वम्। एवं मध्याह्न-अपराह्ण-सायाह्ना ज्ञेयाः। सायो दिनान्तम्। दिनान्तेऽपि सायः। 'सायं सन्ध्या पितृप्रसूरि'त्यमरः। पश्चिमरात्र इति पश्चिमं रात्रेरिति विग्रहे अनेन समासः। 'वर्षा-दीर्घ-संख्यात-सर्वपुण्यैकदेशाव्ययसंख्याभ्यो रात्रेरि'त्यनेन अरामः। 'अ-इ-द्वयस्य हरः' इत्यनेन इरामहरः। 'रात्राह्नाहाः पुंसी'ति पुंस्त्वम्। एवं मध्यरात्रादयो ज्ञेयाः। भिन्नद्रव्यत्वे त्विति स्वरूपमात्रे त्वप्रत्ययः भिन्नद्रव्ये त्वित्यर्थः, भिन्नद्रव्ये त्विति वा पाठः। पूर्वो वैष्णवानामिति। अत्र अवयविनोऽनेकत्वात् न एकद्रव्ये वृत्तिः। पूर्वं वैष्णवानामिति वा पाठः। नन्वेकदेशे समुदायोपचारात् विशेषणसमासेनैव पूर्वकाय इत्यादिकं सेत्स्यति किमनेन लक्षणेन इति चेत्तत्राह—षष्ठीसमासापवादोऽयमिति। तेनेति तस्मादस्मिन् सूत्रे न कृते कायपूर्व इत्यनिष्टरूपं स्यादिति॥

१७३१। अर्धं। समविभागे गम्यमाने एकद्रव्ये वर्तमानम् अर्धं षष्ठ्यन्तेन अवयविना सह वा समस्यते। अर्धशब्दस्य ब्रह्मत्वे एवायं योगः प्रवर्तते इति सूचयितुं समभिवाग इत्युक्तम्। 'पुंस्यर्धोऽर्धं समेंऽशके इत्यमरोक्तमिति ज्ञेयम्। अर्धमामलक्या इति विग्रहः।

मलक्याः अर्धामलकी। पक्षे षष्ठीसमासः, आमलक्यर्धम्। असमत्वे —आमलक्यर्ध इत्येव। भिन्नत्वे तु—अर्धमामलकीनाम् ॥१७३१॥

१७३२। अर्धजरत्यादयोऽसमविभागेऽपि।

अर्धं जरत्याः अर्धजरती, अर्धम् उक्तस्य अर्धोक्तम्, जरत्या अर्धमिव अर्धजरतीयस्तत्कामुकः; इवार्थे—कुशाग्रादित्वात्तद्धित-ईयः ॥ १७३२ ॥

१७३३। द्वितीय-तृतीय-चतुर्थ-तुर्य-तुरीय-तलाग्रा-दयश्च वा।

---

अर्धामलकीति 'नार्धामलक्यादौ, न चेयस्याः पीताम्बरे' इत्यनेन निषेधात् 'गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामनः' इत्यनेन वामनः, 'उत्तर-पदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरि'त्यनेन उत्तरपदवल्लिङ्गम्। आम-लक्यर्धमिति। आमलक्या अर्धमिति विग्रहे 'परपदेने'त्यनेन षष्ठी-समासः। असमत्वे इति विभागस्येति शेषः। आमलक्यर्ध इत्येवेति अत्रापि षष्ठीसमास एव। अर्धमामलकीनामित्यत्र अवयविनोऽनेकत्वात् न एकद्रव्यवृत्तिः॥

१७३२। अर्ध। असमविभागेऽपि अर्धजरत्यादयो निपात्यन्ते। अर्धः जरत्या इति विग्रहः। अर्धोक्तमिति अर्ध उक्तस्येति विग्रहः। जरत्या अर्धमिवेत्यनेन समासवाक्यं तद्धितार्थश्चोक्तः। वस्तुतस्तु अर्धः जरत्या इति समासवाक्यम्। अर्धजरतीवेत्यर्थे तु तद्धित इति अर्धमि-वेति ब्रह्मत्वोपादानात् समविभागेऽत्र समास इति सूचितम्। तत्कामुकः, जरतीकामुकः। इवार्थ इति। ननु तद्धितप्रकरणे 'कुशाग्राच्छरामः' इत्येव सूत्रं वर्तते, तर्हि कुशाग्रादित्वात्तद्धित इय इति कथं सङ्गच्छताम्—तदेतच्चिन्त्यम्। 'कुशाग्रादेरीयः' इति तु व्याकरणान्तरसूत्रम्। तस्मादीय इत्यत्र लिपिकरप्रमादात् इय इत्यभूत्। अन्यथा 'अ-इद्वयस्य हरः भगवती'त्यनेन इरामहरे कृते अर्धजरतीय इति न स्यादिति॥

१७३३। द्विती। एकद्रव्ये वर्तमाना द्वितीयादयश्च षष्ठ्यन्तेन

द्वितीयं पूजायाः—द्वितीयपूजा, पूजाद्वितीयमित्यादि। तलपादं, पादतलं हरेः। हस्ताग्रम्, अग्रहस्तः। षष्ठ्यन्तेनेति निवृत्तम् ॥ १७३३ ॥

१७३४। मयूरादयो व्यंसकादिभिः।

व्यंसको धूर्तः। मयूरव्यंसकः, कम्बोजमुण्डः, यवनमुण्डः। एषां न समासान्तरम्; परमो मयूरव्यंसकः ॥ १७३४ ॥

१७३५। कुप्रादयो मध्यपदलोपश्च।

कुत्सितश्चासौ पुरुषश्च कुपुरुषः। मध्यपदलोप यथा—प्रगतो वैष्णवः प्रवैष्णवः, प्रतिकूलो नायकः प्रतिनायकः, दुर्गतः पुरुषः

---

अवयविना सह वा समस्यन्ते। द्वितीयं पूजाया इति विग्रहः पूजाद्वितीयमिति षष्ठीसमासपक्षे। इत्यादीत्यादिपदेन तृतीयपूजा पूजातृतीयं, चतुर्थपूजा पूजाचतुर्थं, तुर्यपूजा पूजातुर्यं, तुरीयपूजा पूजातुरीयमिति। तलपाद इति तलं पादस्येति विग्रहः, पादतलमिति षष्ठीसमासपक्षे। हस्ताग्रमिति हस्तस्य अग्रमिति विग्रहः। अग्रहस्त इति अग्रं हस्तस्येति विग्रहः, भिन्नद्रव्ये तु द्वितीयं पूजानां, तलं पादानाम्, अग्रं हस्तानाम् ॥

१७३४। मयू। व्यंसकादिभिः सह मयूरादयः समस्यन्ते। मयूरव्यंसक इत्यादौ यदि 'विशेषणं तुल्याधिकरणेन' इत्यनेन समासः स्यात्तदा द्वयोरेव व्यावर्तकत्वे पूर्वनिपातानियमः स्यात्, अतोऽयं विधिः। व्यंसयति छलयतीति व्यंसको धूर्त इत्यर्थः। कम्बोजमुण्ड इति कम्बोजः कम्बोजदेशोद्भवः। एषामिति एषां मयूरव्यंसकादीमां समासान्तरं न भवति बाहुल्यादि शेषः ॥

१७३५। कुः। स्वाद्यन्तेन सह कुप्रादयः समस्यन्ते मध्यपदलोपश्च भवति। कुपुरुष इति अत्र कुशब्दो न पापार्थः, किन्तु असुन्दरार्थः, यदि पापार्थत्वं स्यात्तदा 'कुः पापेषदर्थयोरि'त्यनेनैव समासः स्यात्। एवं कुभवनं, कुवसनमित्यादि च ज्ञेयम्। प्रवैष्णव इति

दुष्पुरुषः। षत्वं वाच्यम् (२०१८)—स्वर्चितो राजा सुराजा, अतिशयितो राजा अतिराजा॥ १७३५॥

१७३६। योगविभागात् मध्यपदलोपश्च।

गोवर्धननामा गिरिः गोवर्धनगिरिः। शाकाः शकसवंत्सराः, शाकेषु प्रधानरूपाः पार्थिवाः शाकपार्थिवास्ते च तत्प्रवर्तका युधिष्ठिराद्याः*॥ १७३६॥

१७३७। तुल्याधिकरणेत्यनुवृत्तेः कृष्णप्रवचनीयानां समासो न।

कृष्णं परि॥ १७३७॥

---

मध्यपदस्य गतस्य लोपः। दुर्गतो दरिद्रः। षत्वमिति वाच्यमिति वक्ष्यते इत्यर्थः। 'निर्दुर्वहिः-प्रादुराविश्चतुरामि'ति वक्ष्यमाणसूत्रेण विष्णुसर्गस्य षः। सुराजेति 'स्वतिभ्यां न तौ प्रत्ययौ प्रशंसायामि'ति निषेधात् 'राजाहःसखिभ्यः' इत्यनेन केशवारामः। एवमतिराजेति॥

१६३६। योग। योगविभागात् कुप्रादिभिन्नमपि स्वाद्यन्तं स्वाद्यन्तेन समस्यते, मध्यपदलोपश्च भवतीति भावः। गोवर्धनगिरिरिति, गिरेर्गोवर्धनत्वैकधर्मत्वाभावात् विशेषणसमासेनापि सिध्यतीति ज्ञेयं, किन्तु पूर्वनिपातनियमार्थं वचनमिदम्, अन्यथा गोवर्धनपदस्य संज्ञामननेन गिरेर्जातित्वपरिकल्पनया गिरेरपि पूर्वनिपातः स्यादिति। पार्थिवा नृपाः ते च शाकपार्थिवाश्च तत्प्रवर्तकाः शाकप्रवर्तकाः॥

१७३७। तुल्य। तुल्याधिकरणेनेत्यनुवृत्तेरिति कृष्णप्रवचनीयानां समासाभावे हेतुः॥

---

* "शाकः शक्तिः प्रधानं यस्य स शाकप्रधानः, शाकप्रधानः पार्थिवः शाकप्रार्थिवः।" इति तु मुग्धबोधटीकायां श्रीरामतर्कवागीशः। ( श्रीरासः )॥

१७३८। इवेन नित्यं समासो विष्णुभक्त्य-लोपश्च ।

मेघ इव। अत्र या इच्छा यदृच्छा; उदक् च अवाक् च उच्चावचम्; उच्चैश्च नीचैश्च उच्चनीचम्; आचितञ्च उपचितञ्च आचोपचम्; अपचितञ्च पराचितञ्च आचपराचम्; निश्चितञ्च प्रचितञ्च निश्चप्रचम्; परमकृत्वा, स्नात्वाकालकः, पीत्वास्थिरकः, भुक्त्वासुहितकः, निपत्यरोहिणी, प्रोष्यपापीयान् इत्यादयश्च बाहुल्यात् साधवः॥ १७३८॥

इति कृष्णपुरुषेषु श्यामरामः॥

१७३८। इवेन। इवेन सह नित्यं समासो भवति, विष्णु-भक्त्यलोपश्च भवति। समास इति स्वाद्यन्तस्येति शेषः। स्वाद्यन्तम् इवेन सह समस्यते इत्यर्थः। अत्र स्वाद्यन्तस्य षष्ठ्यन्तत्वेऽपि प्रथमान्त-प्रतिनिधित्वात् पूर्वनिपातो ज्ञेयः, समास इत्यत्र समस्यते इति वा पाठः, तथा सति स्वाद्यन्तमित्यर्थाद् गम्यत एव। ननु मेघ इवेत्यादौ समासस्य विष्णुभक्त्यलोपस्य च किं फलं वाक्यमेवास्त्विति चेत्तत्रोच्यते, अस्मिन् सूत्रे न कृते अग्निरिव पाश इत्यादिप्रयोगो न स्यात्, अग्निरिव पाश इति हीनोऽग्निरिवेत्यर्थे गर्ह्ये पाश इत्यनेन पाशप्रत्ययस्तद्धितः। अत्रेति अत्र श्यामरामसमासे यदृच्छेत्यादिकं प्रोष्यपापीयानित्यादयश्च बाहुल्यात् साधव इति। या इच्छेति, या इच्छा इत्यत्र यदृच्छेति निपात्यते, यदृच्छेत्यत्र उभयपदे अन्तरङ्गस्वादेर्महाहरे सति या यद् इच्छा ऋच्छा। उच्चावचमित्यत्र उभयपदे अग्भागपरित्यागः उपेन्द्रद्वयं वाक्यस्थचकारद्वयं चावशिष्टम्। उच्चनीचमित्यत्र केवलस्वादेर्महाहरः। आचपराचमित्यत्र चितभागपरित्यागः, अपस्थाने आ इति भावः। एवमन्यत्र च ज्ञेयम्। 'यदृच्छा स्वैरिते'त्यमरः। उच्चावचमिति, 'उच्चावचं नैकभेदमि'त्यमरः। परमकृत्वा, स्नात्वाकालक इत्यादी-नामेकपदत्वात् तद्धितप्रत्यये स्नात्वाकालकिरित्यादिकं स्यैत्स्यतीति ज्ञेयम्।

१७३९। दिक्संख्ये तद्धितार्थोत्तरपदसमाहारेषु।

स्वाद्यन्तेन च सहेत्यर्थाद्गम्यते। एवमुत्तरत्रापि। दिक्संख्यावाचिनी विष्णुपदे स्वाद्यन्तेन सह समस्येते, तद्धितार्थे विषये, उत्तरपदे परतः समाहारे वा वाच्ये—पूर्वस्यां शालायां भव इति वाक्ये तद्धिताण्-प्रत्ययः, उक्तार्थत्वाद्भवस्याप्रयोगः, अन्तरङ्गस्वादिमहाहरः, पूर्वपदस्य पुम्बद्भावः, आदिसर्वेश्वरस्य वृष्णीन्द्रः, अ-इद्वयस्य हरः, पुम्बद्भावादयो वक्ष्यन्ते—पौर्वशालः। अत्राप्यन्तःश्यामरामत्वमस्ति समानाधिकरणसमासादिति पाणिनीयाः। उत्तरपदे—पूर्वो गौः प्रियो यस्येति विग्रहे प्रथमं पूर्वस्य गवा समासः, 'ततो गोरतद्धितलुकि' (२१८२) इति तद्धितः, समासान्तष्टप्रत्ययः, समुदायेनान्यपदार्थत्वे पीताम्बरः, उक्तार्थत्वाद्यस्येत्यस्याप्रयोगः, पूर्वगवप्रियः॥ १७३९॥

इति दिक्कृष्णपुरुषाः॥

१७४०। संख्यापूर्वोऽसौ त्रिरामीसंज्ञः।

---

१७३९। दिक्। वृत्तिमाह—दिक्संख्यावाचिनी इति। परतः परेः। तद्धितार्थे उदाहरणं दर्शयति—पूर्वस्यामिति। शाला गृहम्। इति वाक्ये इति। इति वाक्ये प्रथमं समासस्ततोऽणप्रत्यय इति ज्ञेयम्। तद्धिताण्प्रत्ययः इति दिक् पूर्वपदादनाम्नि णरामः इत्यनेनेति शेषः। पुम्बद्भावादयो वक्ष्यन्ते इति पुम्बद्भावादिसाधका योगा वक्ष्यन्ते इत्यर्थः। अन्तः श्यामरामत्वसद्भावे हेतुमाह—समानाधिकरणसमासादिति उत्तरपद इति उदाहरणं दर्श्यते इति शेषः। गवेति गवा सहेत्यर्थः। गोरतद्धितलुकीति कृष्णपुरुषे प्रवर्तते, अत उक्तं प्रथमं पूर्वस्य गवा समास इति। समुदायेनेति अन्यपदार्थत्व इति अन्यपदस्य अर्थत्वम् इत्यर्थः। अर्थत्वं वाच्यम्। पीताम्बर इति पश्चात् पताम्बर इत्यर्थः। तस्मात् समासोऽयं दिक्कृष्णपुरुषगर्भपीताम्बराख्य इति भावः।।

१७४०। संख्या। असौ समासः संख्यापूर्वश्चेत्तदा त्रिरामीसंज्ञो भवति। तत्र तद्धितार्थ इति उदाहरणं दर्श्यते इति शेषः।

द्विगुरिति प्राञ्चः। तत्र तद्धितार्थे—दशभिरवतारैर्जयति दाशावतारिकः। उत्तरपदे—पञ्चगवप्रियः समाहारे तु संख्येयेनैव समासः ॥ १७४० ॥

१७४१। समाहारे त्रिराम्यामेकत्वं ब्रह्मत्वञ्च।

पञ्चगोप्यः समाहृता इति पञ्चानां गोपीनां समाहार इति विग्रहे पञ्चगोपि ॥ १७४१ ॥

१७४२। अरामान्ता त्रिरामी लक्ष्मीः। आवन्ता वा, त्रिराम्या ईप्।

त्रिरामी, पञ्चाध्यायी। 'एकापूपीति तु कल्पितबहुत्वात् समाहारः' इति जुमरः। रामाशब्दस्य त्रिरामी, त्रिरामम् ॥ १७४२ ॥

---

दाशावतारिक इति 'तेन दीव्यति खनति जयति जितमि'त्यनेन माधव-ठः, टणिन्माधवः ठ इकः। पञ्चगवप्रिय इति पञ्च गावः प्रिया यस्येति विग्रहे सर्वं सर्वत्रवज्ज्ञेयम्। समाहारे त्विति। समाहारे तु संख्येयेनैव सह समासो भवतीति ॥

१७४१। समा। समाहारे वाच्ये विहितायां त्रिराम्याम् एकत्वं ब्रह्मत्वञ्च भवति। समाहार इति भावे घण् समाहृतिरित्यर्थः। पञ्चगोपीति एकत्वादेकवचनं, ब्रह्मत्वात् 'ब्रह्मान्तत्रिविक्रमस्य वामनः' इत्यनेन वामनः ॥

१७४२। अरा। अरामान्ता त्रिरामी लक्ष्मीर्भवति। सदृशव्यावर्तकं विशेषविधानं भवतीति ब्रह्मत्वव्यावर्तकं लक्ष्मीत्वविधानम् एकत्वन्तु पूर्वलक्षणेनैव सिद्धमेवेति ज्ञेयम्। आव। आवन्ता त्रिरामी लक्ष्मीर्वा भवति। त्रिराम्या ईविति त्रिराम्या इति तद्धितप्रकरणोक्तसूत्रेणेति शेषः। त्रिरामीति त्रयो रामाः समाहृता इति त्रयाणां रामाणां ससाहार इति वा विग्रहः। एवं सर्वत्र विग्रहः कल्प्यः। गामानयेत्युक्ते जातेरानयनासम्भवात् यथा तदभिव्यञ्जकस्य द्रव्यस्यानयनं गम्यते, तथा पञ्चाध्यायीमानयेत्युक्ते समाहाररूपस्य धर्मस्या-

१७४३। अन्नन्ता वा नलोपस्तूभयत्र।

त्रिब्रह्मं, त्रिब्रह्मी ॥ १७४३ ॥

१७४४। पात्राद्यन्ता न।

द्विपात्रं, त्रिभुवनं, चतुर्युगम्। मुखान्ता वेति वक्तव्यम्—चतुर्मुखं, चतुर्मुखी। तथा च मुरारिः—

'धातुश्चतुर्मुखीकण्ठशृङ्गाटकविहारिणीम्।
नित्यं प्रगल्भवाचालमुपतिष्ठे सरस्वतीम् ॥'

( 'अनर्घराघव'-नाटके प्रस्तावनायामेकादश-श्लोकः )

अन्यत्र—

'धातुश्चतुर्मुखतड़ागसरागहंसीं
वाणीं भजामि भवभीतिहरां त्रिनेत्राम्।' इति ॥ §

---

नयनासम्भवात् पञ्चानामध्यायानामानयनं गम्यते इति ज्ञेयम्। ननु समाहारोऽनेकस्य विप्रकीर्णस्य भवति, तर्हि कथम् एकापूपीत्यत्र समाहारो भवत्विति चेत्तत्राह—एकापूपी इति त्विति। कल्पितबहुत्वादिति, दानभ्रमाभ्याम् एकस्यापि कल्पित-बहुत्वादित्यर्थः। एकं हि दानवस्त्वनन्ताय कल्पते। एवं भ्रमेणापि अस्य पत्रे एकं दत्तं बहूनि वा दत्तानीति बहुत्वं सम्भवति, तस्मादेकस्यापि बहुत्वकल्पनया अत्र समाहार इति। अपूपः पिष्टकः। 'पूपोऽपूपः पिष्टकः स्यादि'त्यमरः। 'आवन्ता वे'त्यस्य उदाहरणं दर्शयति—रामाशब्दस्येति। त्रिरामीति 'गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामनः' इत्यनेन वामनः, 'त्रिराम्या' इत्यनेन ईप् त्रिराममिति समाहारे त्रिराम्यामेकत्वं ब्रह्मत्वञ्चेति एकत्वं ब्रह्मत्वञ्च ॥

१७४३। अन्न। अन्नन्ता त्रिरामी लक्ष्मीर्वा भवति, नलोपस्तु उभयत्र भवति, नित्यं भवतीत्यर्थः॥

१७४४। पात्रा। पात्राद्यन्ता त्रिरामी लक्ष्मीर्न भवति। चतुर्युग-

---

§ मुखान्तेत्यादिः त्रिनेत्रामित्यन्तः पाठः क्वचिन्नास्ति। टीकायामपि न व्याख्यातः किन्तु सङ्गतत्वात् सन्निवेशितः। ( श्रीरासः )॥

सप्तर्षयः, पञ्चाम्राश्चतुर्विद्या इत्यादयस्तु संज्ञाशब्दाः। समाहाराविवक्षया श्यामरामः। चतुर्वर्णाः, द्वीन्द्रिये इत्यादयः संज्ञेतरा अपि॥ १७४४॥

इति त्रिरामीकृष्णपुरुषाः॥

१७४५। नञ्।

समस्यते, ञराम इत्। न वैष्णव इति विग्रहे 'नञोऽरामशेष' (१३१५) इति अवैष्णवः, न अवैष्णव अनवैष्णवः ॥ १७४५॥

नञ् कृष्णपुरुषोऽयम्।

मिति। एवं पञ्चगवं, द्विचन्द्रं, पञ्चराजमित्यादि च ज्ञेयम्। सप्तर्षय इत्यादौ पञ्चाम्राः के इति चेत् केनाप्युच्यते तदैवं वाच्यम्। अश्वत्थमेकं, पिचुमर्दमेकम्। द्वौ चम्पकौ त्रीनथ केशरांश्च॥ सप्ताथ तालान्नव नारिकेलान्। पञ्चाम्रवापी नरकं न पश्येत्॥ पञ्चाम्रान्-उप्तुं शीलमस्य पञ्चाम्रवापी। इत्यादयस्तु संज्ञाशब्दा इत्यनन्तरमत्रेति ज्ञेयम्। संज्ञेतरा अपीति तस्मादत्रापि समाहाराविवक्षया श्यामराम इति॥

१७४५। नञ्। वृत्तिमाह—समस्यते इति स्वाद्यन्तेन सहेति शेषः। अनवैष्णव इति 'नञोऽरामशेषः सर्वेश्वरे तु नुट् च समासे' इत्यनेन नञोऽरामशेषो नुट् च। नञ् द्विविधो भवति—पर्युदासः प्रसज्यप्रतिषेधश्च। तथाचोक्तम्—(१) 'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।' (२) 'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥ इति *।

* साहित्यदर्पणस्य टीकाकारेण श्रीरामतर्कवागीशेन अत्र यदुक्तं सारल्यकरणाय ततः किञ्चिदेव प्रयोजनीयांशमात्रमुद्ध्रियते।

१ पर्युदासः। "यत्र वाक्ये विधेः पदार्थान्तरस्य प्रधानत्वं विधेयतया मुख्यत्वं, प्रतिषेधे नञर्थे अप्रधानता उद्देश्यतावच्छेदकतया

अब्राह्मण इत्यादौ उत्तरपदार्थसदृशस्य विधेयत्वात् विधेरेव प्राधान्यं तदर्थे नञ्शब्दयोगात् प्रतिषेधे अप्रधानता। प्रतिषेधांशे तात्पर्याभावात्। अतएव उत्तरपदेन सह पर्युदासस्य परस्परव्यपेक्षालक्षणस्य सम्बन्धस्य विद्यमानत्वात् समासो भवत्येव। सादृश्यं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति। असूर्यम्पश्य इत्यादौ तु विध्यंशस्याप्राधान्यं तदर्थेतात्पर्याभावात्। प्रतिशेधे प्रधानता तदर्थे नञ्शब्दयोगात्। अतएव उत्तरपदेन सह नञः परस्परव्यपेक्षालक्षणसम्बन्धः। किन्तु क्रियया

---

अमुख्यत्वं, यत्र यदर्थे उत्तरपदेन उत्तरपदार्थेन सह सम्बन्धः, तत्र वाक्ये स नञ् पर्युदासो विज्ञेय इत्यर्थः। रात्रौ श्राद्धं न कुर्वीत इत्यादौ न रात्रौ इति प्रयोजनया रात्रौ इत्यस्य उत्तरपदत्वं उपपन्नम्। विधेर्विधेयत्वाभावे पर्युदासस्य असङ्गतिः। इति फलितार्थः"॥

२ प्रसज्यप्रतिषेधः। "यत्र वाक्ये विधेः पदार्थान्तरस्य अप्राधान्यं उद्देश्यतया अमुख्यत्वं, प्रतिषेधे नञर्थे प्रधानता विधेयतया मुख्यत्वं, यत्र यदर्थे क्रियया समभिव्याहृतपदार्थतावच्छेदकेन सह सम्बन्धः, तत्र वाक्ये असौ नञ् प्रसज्यप्रतिषेध इत्यर्थः"॥

'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः।'

अयं सन्नद्धो न नवजलधरः दृप्तनिशाचरः, इत्ययं नवजलधरत्वाभाववान् इत्यर्थः। अत्र इदम्पदार्थस्य उद्देश्यत्वं नञर्थस्य अभावस्य विधेयत्वं समभिव्याहृतपदार्थतावच्छेदकेन सह नञर्थस्य सम्बन्धः। न च विधेर्भावपदार्थस्य इति व्याख्येयम्, अभावो न जातिमान् इत्याद्यसंग्रहापत्तेः। क्रिययेति यथाश्रुतार्थविवक्षणे तु अयं न पाकवान् इत्याद्यसंग्रहेऽपि उक्तोदाहरणाद्यसंग्रहप्रसङ्गः। न च नञर्थस्य क्रियान्वयित्वाभावेन उक्तोदाहरणादौ नञः प्रसज्यप्रतिशेधत्वमेव नास्तीति वाच्यं, तत्र विधेर्विधेयत्वाभावेन पर्युदासत्वासम्भवात् तृतीयप्रकारानभिधानाच्च प्रसज्यप्रतिषेधत्वस्यैव अवश्यं वाच्यत्वात्, अतएव अव्ययीभावे गौरीचन्द्रेणोक्तम्—'धर्माभावे प्रसज्यप्रतिषेधे माभूत्, ब्राह्मणोऽयं न भवति, ब्राह्मणत्वं धर्मोऽत्र निषिध्यते इति।' इत्यलं प्रपञ्चेन। (श्रीरासः)॥

१७४६। कालाः षष्ठ्रन्तेन तत्परिमाणिजाता-
दिना।

जातस्य मासः मासजातः। जातस्य जननक्रियायाः मासः परिच्छेदहेतुः, जननादूर्ध्वमस्य मासो गत इत्यर्थः। एवं संवत्सरजातः॥ १७४६॥

१७४७। प्राप्तापन्ने द्वितीयया।

---

सहेति। अतः कृत्प्रकरणे सूर्यमपि न पश्यतीत्युक्तं भिन्नक्रमोऽयं नञ् इति चोक्तम्। नञार्थास्तु षड्विधा भवन्ति ; तथाचोक्तम्–'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥' इति॥ अत्र तत्सादृश्य-तदल्पताप्राशस्त्यानि त्रीणि पर्युदासान्तर्गतानि, अन्यानि तु प्रसज्यप्रतिषेधान्तर्गतानीति। अब्राह्मण इत्यादौ तत्सादृश्यम्, असूर्यम्पश्य इत्यादौ अभावः, अनाम-नवती-नगरीणामित्यादौ तदन्यत्वम्, अनुदरा कन्या इत्यादौ तदल्पता, अधनं चर्मधनमित्यादौ अप्राशस्त्यम्, अनाख्यानमेतदित्यादौ विरोधः, इति विरुद्धाख्यानमित्यर्थः॥

१७४६। काला। षष्ठ्रन्तेम कालपरिमाणिना जातादिना सह कालवाचिनः समस्यन्ते। कालवाचकस्य परिमाणत्वमप्यस्तीति ज्ञेयम्, अन्यथा जातादेः परिमाणित्वमेव न स्यात् ; जातस्य मास इति विग्रहः, मासो जातस्येति वा पाठः, मासस्य परिमाणत्वं प्रतिपादयति जातस्येति। मासः परिच्छेदहेतुरिति परिच्छेदहेतुत्वादेव मासस्य परिमाणत्वमिति भावः। संवत्सरजात इति संवत्सरो जातस्येति विग्रहः। जननादूर्ध्वमस्य संवत्सरो गत इत्यर्थः। एवं द्व्यहजात इत्यादि च ज्ञेयम्। तत्परिमाणिजातादिनेत्यत्र तत्परिमाणिनेति वा पाठः, 'कालाः परिमाणिने'ति भाषावृत्तिसूत्रम्॥

१७४७। प्राप्ता। प्राप्तापन्ने द्वितीयया सह समस्येते। द्वितीययेति द्वितीयान्तेनेत्यर्थः। प्राप्तसख इति 'राजाहःसखिभ्यः' इत्यनेन केशवारामः, 'अ-इंद्वयस्य हरः' इत्यनेन इरामहरः। प्राप्तजीविक

प्राप्तः सखायं प्राप्तसखः। अत्र सख्युष्टस्तद्धितः। प्राप्तजीविकः, कथं जीविकाप्राप्तः, सुखापन्नः ? 'द्वितीया श्रितादिभिः' ( १७४९ ) इति वचनात् ॥ १७४७ ॥

१७४८। गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामनः, नार्धामलक्यादौ, न चेयस्याः पीताम्बरे।

गोष्टस्तद्धितः, 'उद्वयस्य गोविन्दो' वक्ष्यते (२११६)—प्राप्तगवः, प्राप्तगोपिकः, प्राप्तक्षमः, प्राप्तकरभोरुः। अन्तस्येति किम् ?

इति 'त्रिरामी-प्राप्तापन्नालंपूर्वगतिसमासेषु वाच्यलिङ्गतैवे'त्युक्तमत 'उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरि'त्यनेन उत्तरपदवल्लिङ्गमिति। ननु उत्तरपदवल्लिङ्गत्वे सति प्राप्तजीविकेत्यादौ स्थितिक्रमेण जीविकाया एवोत्तरपदता तस्यां सत्यां, लक्ष्मीलिङ्गत्वमेव घटते, कथं पुरुषोत्तमत्वम् ? इति चेदुच्यते–यद्यप्यत्र स्थितिक्रमेण जीविकाया उत्तरपदत्वं, तथापि शक्तिग्रहे प्राप्तपदस्यैवार्थः प्रतीयतेऽतः पदक्रमं त्यक्त्वा अर्थक्रमेणैव मुख्यत्वात् प्राप्तपदस्योत्तरपदत्वं विवक्षितमिति, ततो 'गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामनः' इत्यनेन वामनः। एवं आपन्नजीविकः, आपन्नसुख इत्यादि च ज्ञेयम्। कथमिति। जीविकाप्राप्त इति जीविकां प्राप्त इति विग्रहः। सुखापन्न इति सुखमापन्न इति विग्रहः। सिद्धान्तमाह– 'द्वितीया श्रितादिभिरि'ति। वचनादिति वचनं सूत्रम्। अत्रेति प्राप्तसख इत्यत्रेत्यर्थः। टस्तद्धितो इति ट-केशवारामयोरैक्यं वक्ष्यते। अत्र सख्युष्टस्तद्धितः इत्यस्य प्राप्तसखः इत्यनन्तरं लिखनमुचितमिति ज्ञेयम्। ( मूले तथैवास्ति ) ॥

१७४८। गोरीपः व्यक्तार्थमेतत्। अन्तस्येति अप्रधानस्येति च सर्वत्र योज्यम्। नार्धा। अर्धामलक्यादौ वामनो न भवति, पीताम्बरसमासे ईयस्याश्च वामनो न भवति। गो-ष्टस्तद्धित इति 'गोरतद्धितलुकी'त्यनेनेति शेषः। प्राप्तगव इति प्राप्तो गामिति विग्रहे प्राप्तापन्ने द्वितीयये'त्यनेन समासः, ततष्टः, ततो वामने कृते 'उद्वयस्य गोविन्दो, न तु धातोर्न च स्त्रीप्रत्यये' इत्यनेन गोविन्दः। अन्तस्येति

गोपीप्रियः। अप्रधानस्येति किम् ? गोपकुमारी। श्रीधीप्रभृतयो नेवन्ताः, तेन प्राप्तश्रीरित्यादि ॥ १७४८ ॥

पूर्वपदप्रधानोऽयं द्वितीयाकृष्णपुरुषः।

**अथोत्तरपदप्रधानाः**

१७४९। द्वितीया श्रितादिभिः।

कृष्णं श्रितः कृष्णश्रितः। संसारातीतः, सत्सङ्गपतितः,

---

किम् ? गोकुलम्। अप्रधानस्येति किम् ? सुगौः। प्राप्तगोपिरिति प्राप्तो गोपीमिति विग्रहः। गोपीशब्द ईवन्तः। प्राप्तगोपिक इति प्राप्तो गोपिकामिति विग्रहः। प्राप्तक्षम इति प्राप्तः क्षमामिति विग्रहः। गोपिकाशब्दः क्षमाशब्दश्च आवन्तः। अन्तस्येति किम् ?—गोपिकाप्रियः। अप्रधानस्येति किम् ?—सुगोपिका। प्राप्तकरभोरुरिति प्राप्तः करभोरूमिति विग्रहः, करभोरूशब्द ऊङन्तः। मणिबन्धादाकणिष्ठं करस्य करभो मतः। बद्ददुरू यस्यास्ताम्। अन्तस्येति किम् ? करभोरूशोभा। अप्रधानस्येति किम् ?—व्रजकरभोरूः। गोपीप्रिय इति गोप्याः प्रिय इति विग्रहः। गोपकुमारीति गोपस्य कुमारीति विग्रहः। नेवन्ता इति तस्मात् ईवन्तत्वाभावादेव तेषां वामनो न भवति इति। प्राप्तश्रीरिति प्राप्तः श्रियमिति विग्रहः। इत्यादीत्यादिपदेन प्राप्तधीः, प्राप्तलक्ष्मीरित्यादि च ज्ञेयम्। पूर्वपदप्रधान इति पूर्वपदं प्रधानं यत्रेति विग्रहः ॥

अथ। अथेति उत्तरपदप्रधाना इति। उत्तरपदप्रधाना द्वितीयादिकृष्णपुरुषा उच्यन्ते इत्यर्थः ॥

१७४९। द्वितीया। द्वितीयान्तं विष्णुपदं श्रितादिभिः सह समस्यते। संसारातीत इति संसारमतीत इति विग्रहः। एवं सर्वत्र विग्रहो ज्ञेयः। कृष्णश्रितादिषु कर्तरि क्तः। इत्यादीत्यादिपदेन सुखप्राप्तः, सुखापन्न इत्यादि च ज्ञेयम्। व्रजगमी, व्रजगामी इति णिनिप्रकरणे 'गमिगाम्यादयस्तु भविष्यती'ति सूत्रम्। 'आधमर्ण्य-तुमु-भविष्यदर्थ-णकणिन्योर्योगे न षष्ठी'ति निषेधात् न षष्ठी। कृष्णदिदृक्षुरिति

वैकुण्ठगतः इत्यादि। तथा व्रजगमी, व्रजगामी, कृष्णदिदृक्षुः इत्यादि। आदि-ग्रहणात् खट्वारूढो, दुर्मानिनि ॥ १७४९ ॥

१७५०। कालः क्तेन।

अहःसंक्रान्तः ॥ १७५० ॥

१७५१। अत्यन्तसंयोगे च।

मुहूर्तभक्तः ॥ १७५१ ॥

---

'सनन्ताशंस-भिक्षिभ्य उरि'त्यनेन सनन्ताद्दिदृक्षधातोरुः। 'अच्युताभ-विष्णुनिष्ठाधोक्षजाभ-खलर्थाव्ययोरामान्ततृणां योगे न षष्ठी'ति निषेधात् न षष्ठी। इत्यादीत्यादिपदेन शास्त्रवुभुत्सुः, ओदनवुभुक्षुरित्यादि च ज्ञेयम्। आदिग्रहणादिति काकाक्षिगोलोकन्यायेन उभयत्र सम्बन्धेन आदिग्रहणात् दुर्मानिनि वाच्ये खट्वारूढ इति भवति। दुर्मानी निन्द्यः तस्मात् केनापि प्रकारेण निन्द्यत्वे गम्ये आरूढ़ादीनां श्रितादित्व-मिति भावः। खट्वारूढ़ो मुर्खादिः। 'खट्वायाः क्तेन क्षेपे' इति कस्य-चित् सूत्रम्। द्वितीयान्तायाः खट्वायाः क्षेपे गम्यमाने क्तान्तेन समासः स्यात्। खट्वारूढ़ः जाल्मः, खट्वाप्लुतः मूर्खः, उत्पथगामीत्यर्थः। न केवलं खट्वारोहणमात्रेण यस्य निन्दा सोऽवधीयते, किन्तु येन केनाप्यनुचिताचरणेन यस्य निन्दा सोऽत्र गृह्यते। आश्रितश्रित-विद्वांसोऽतीताभ्यस्तु वुभुत्सवः। आपन्नपतितप्राप्तगमिगामिवुभुक्षव इति गणः। दुर्मानिनीति किम्? खट्वामारूढ़ो हरिः ॥

१७५०। कालः। क्तेन सह द्वितीयान्त कालवाची समस्यते। अत्यन्तसंयोगाभावे एतत् सूत्रं प्रवर्तत इति ज्ञेयम्। अन्यथा अहः-संक्रान्त इत्यादावपि उत्तरसूत्रेणैव समासः स्यात्। अहःसंक्रान्त इति 'अह्नो विष्णुसर्गो विष्णुपदान्ते' इत्यनेन नरामस्य विष्णुसर्गः। एवं रात्रिसंक्रान्तः रात्र्यारूढ़ इत्यादि च ज्ञेयम् ॥

१७५१। अत्य। अत्यन्तसंयोगे च गम्यमाने स्वाद्यन्तेन सह द्वितीयान्तः कालवाची समस्यते। मुहूर्तभक्त इति। मुहूर्तभक्तिरिति

१७५२। तृतीया।

प्रभुरयम् ॥ १७५२ ॥

१७५३। तृतीयार्थक्तगुणवचनेनार्थादिभिश्च।

गुणमुक्त्वा यो गुणिनि वर्तते, स गुणवचनः। चक्रेण कृतः खण्डः चक्रखण्डः। अत्र तृतीयान्तार्थश्चक्राख्यमस्त्रं, तेन कृतो गुणः खण्डितत्वं, तदुक्त्वा गुणिनि खण्डिते वर्तमानः खण्ड इति। अर्थादिभिः खल्वपि—कृष्णेनार्थः कृष्णार्थः, भक्तिपूर्वः कृष्णसदृश इत्यादि। तृतीयार्थक्तेति किम्? अक्ष्णा काणः। अक्षिकाण

च कृचित्। अत्र 'कालाध्वनोरत्यन्तव्याप्तौ द्वितीये'त्यनेन मुहूर्तशब्दात् द्वितीया। मुहूर्तशब्दः कालवाची। एवं मुहूर्तसुखं वर्षभोग्य इत्यादि च ज्ञेयम् *॥

१७५२। तृतीया। अधिकारसूत्रमेतत्॥

१७५३। तृती। तृतीयार्थक्तश्चासौ गुणवचनश्चेति तेन अर्थादिभिश्च सह तृतीयान्तं विष्णुपदं समस्यते। गुणवचनस्य लक्षणमाह—गुणमुक्त्वा यो गुणिनीति। खण्डस्य कृतगुणवचनत्वं स्पष्टयति—अत्रेति। तृतीयान्तार्थ इति अर्थशब्दोऽभिधेयवाची तत्खण्डितत्वम्। अक्ष्णा काण इति नहि तृतीयान्तार्थेन चक्षुषा देवदत्तस्य काणत्वं कृतं, किन्तु अन्येन केनापीति तृतीर्थकृतत्वाभावः। गुणवचत्वन्त्वस्त्येवेति। अक्षिकाण इति भागवृत्तिरिति, भागवृत्तिमते अत्रापि समासो भवतीति। गुणवचनेनेति किम्? धनेन धनवान् द्रव्यवचनोऽयं गुणवचनः। तृतीयार्थक्तगुणेत्यत्र करणार्थतृतीयान्तस्य समासः। अर्थादिभिस्तु यस्य कस्य तृतीयान्तस्य समास इति ज्ञापनेनैव अर्थादिभिः खल्वपीति उदाहरणदर्शनार्थमेतदुक्तमिति ज्ञेयम्।

* शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः। इति मेघदूते॥

इति भागवृत्तिः। 'येनाङ्गेन निन्दा' ( १०६४ ) इति तृतीया ॥ १७५३ ॥

१७५४। कर्तृकरणे कृता।

कृष्णहतः, चक्रच्छिन्नः ॥ १७५४ ॥

१७५५। विष्णुकृत्यैस्तु निन्दास्तुत्यर्थातिशयोक्तौ।

निश्वासभेद्या दैतेयाः, पुष्पमर्द्ये पदाम्बुजे ॥ १७५५ ॥

१७५६। क्वचिदकृतापि।

---

भक्तिपूर्वा इति भक्त्या पूर्वं इति विग्रहः। इत्यादीत्यादिपदेन वैष्णवसमः, गुरुतुल्यः, एकोनः, वाक्कलहः, कार्यनिपुणः, तुलसीमिश्रः, आचारश्लक्ष्णः, मासावरः, भयविह्वलः, अस्त्रशून्यः, गमनमन्थरः, वयोज्येष्ठः, विरहकृशः, स्वेदार्द्रः, गुणाधिक इत्यादि च ज्ञेयम् ॥

१७५४। कर्तृ। कृदन्तेन सह तृतीयान्ते कर्तृकरणे समस्येते। कृष्णहत इति कृष्णेन हत इति विग्रहः, अत्र तृतीयान्तस्य कर्तृत्वम्। चक्रच्छिन्न इति चक्रेण छिन्न इति विग्रहः। अत्र तृतीयान्तस्य करणत्वम्। कर्तृकरणे इति किम्? भिक्षया उषितः हेतावत्र तृतीया ॥

१७५५। विष्णु। निन्दास्तुतिभ्यामिदं निन्दास्तुत्यर्थं तस्मै अतिशयोक्तिः निन्दास्तुत्यर्थातिशयोक्तिः तस्यामिति विग्रहः। निन्दार्थं स्तुत्यर्थञ्च अतिशयोक्तौ सत्यां विष्णुकृत्यैः सह तृतीयान्ते कर्तृकरणे समस्येते। निश्वासभेद्या इति निश्वासेन भेद्या इति विग्रहः। अत्र तृतीयान्तस्य कर्तृत्वं, निन्दार्थमतिशयोक्तिरियम्। दैतेया दैत्याः। पुष्पमर्द्ये इति पुष्पेन मर्द्ये इति विग्रहः। अत्र तृतीयान्तस्य करणत्वं, स्तुत्यर्थमतिशयोक्तिरियम्। मर्द्ये मर्दनीये। एवं काकपेया नदी, दात्रच्छेद्यः प्रस्तर इत्यादि च ज्ञेयम् ॥

१७५६। क्वचि। क्वचिदकृतापि अकृदन्तेनापि सह तृतीयान्तं

आत्मना द्वितीयः। अलुगयम्। एकेन न विंशतिः एकान्नविंशतिः इत्यादयो निपाताः ॥ १७५६ ॥

१७५७। अथ मध्यपदलोपिनः।

प्रभुरयम् ॥ १७५७ ॥

१७५८। अर्धं चतसृभिः।

अधन कृताश्चतस्रः अर्धचतस्रो मात्राः ॥ १७५८ ॥

१७५९। व्यञ्जनमन्नेन।

दध्नोपसिक्त ओदनो दध्योदनः ॥ १७५९ ॥

---

समस्यते। आत्मना द्वितीय इति 'प्रकृत्यादिभ्यस्तृतीये'त्यनेन तृतीया। अलुगयमिति अलुक्-समासोऽयमित्यर्थः। 'आत्मनस्तृतीयायाः पूरणे' इति अलुक्-सूत्रम्। एकेनेति एकेन न विंशतिरिति विग्रहः। नञ् ऊनार्थः तस्मादेकेन ऊना विंशतिरिति निर्गलितार्थः *। इत्यादय इत्यादिपदेन एकाद्नविंशतिरिति। एकान्नत्रिंशत् एकाद्नत्रिंशत्, एकान्नचत्वारिंशत् एकाद्नचत्वारिंशत्, एकान्नपञ्चाशत् एकाद्नपञ्चाशत् इत्यादयोऽपि ज्ञेयाः। एकादूनार्थनञोऽन्नाद्नौ संख्यायामिति जुमरसूत्रम् ॥

१७५७। अथ। अधिकारसूत्रमेतत् ॥

१७५८। अर्धम्। चतसृभिः सह तृतीयान्तमर्धं समस्यते। मध्यपदलोपश्च भवति। अर्धचतस्रो मात्रा इति अर्धचतस्र इत्यनेन मात्रा उच्यन्ते इत्यर्थः।

१७५९। व्यञ्ज। अन्नेन सह तृतीयान्तं व्यञ्जनं समस्यते। मध्यपदलोपश्च भवति ॥

---

* पर्युदासार्थकस्य नञः अन्तर्भूता अल्पता। ऊनार्थोऽपि अल्पतैव। एवमेव श्रीरामतर्कवागीशस्य परमतम्। ( श्रीरासः ) ॥

१७६० । संस्कारद्रव्यं भक्ष्येण ।

भक्ष्यं चर्व्यम् । गुडेन मिश्रा धाना गुडधानाः ॥ १७६० ॥

१७६१ । वाहनं यानेन ।

अश्वेन युक्तो रथः—अश्वरथः ॥ १७६१ ॥

१७६२ । पूरणद्रव्यं पात्रेण ।

गङ्गाजलेन पूर्णो घटः गङ्गाजलघटः । अन्यत्रापि—श्रिया युक्तः कृष्णः श्रीकृष्णः । तुलस्युदकमित्यादि ॥ १७६२ ॥

इति तृतीयामध्यपदलोपिनः ।

१७६३ । चतुर्थी ।

प्रभुरयम् ॥ १७६३ ॥

---

१७६० । संस्का । संस्काराय द्रव्यं संस्कारस्य द्रव्यमिति वा विग्रहः । भक्ष्येण सह तृतीयान्तं संस्कारद्रव्यं समस्यते । मध्यपदलोपश्च भवति । भक्ष्यपदेनात्र चर्व्यमेव गृह्यते इत्याह—भक्ष्यं चर्व्यमिति । गुडं धाना इति । 'धाना भृष्टयवे स्त्रियाम्' इत्यमरः । एवं गुडपिष्टका इत्यादि च ज्ञेयम् ॥

१७६१ । बाहनं । यानेन सह तृतीयान्तं बाहनं समस्यते । मध्यपदलोपश्च भवति ।

१७६२ । पूर । पात्रेण सह तृतीयान्तं पूरणद्रव्यं समस्यते । मध्यपदलोपश्च भवति । गङ्गाजलघट इति । एवं जलगर्गरी, दधिभाण्डमित्यादि च ज्ञेयम् । अन्यत्रापीति । अन्यत्रापि स्वाद्यन्तेन सह तृतीयान्तं समस्यते मध्यपदलोपश्च भवति । इत्यादीत्यादिपदेन मणिमुकुटं, कुङ्कुमवस्त्रमित्यादि च ज्ञेयम् ॥

१७६३ । चतु । अधिकारसूत्रमेतत् ॥

१७६४। प्रकृत्या।

हरिमन्दिराय इष्टकाः हरिमन्दिरेष्टकाः ॥ १७६४ ॥

१७६५। क्वचित्तदविवक्षायाञ्च।

अनन्ताय दधि अनन्तदधि ॥ १७६५ ॥

१७६६। इदम्वाच्यार्थशब्देन च।

नित्यसमासोऽयं वाच्यलिङ्गता च ; नित्यसमासानां स्वपद-विग्रहो नास्ति। कृष्णायेदं कृष्णार्थं सर्पिः। कृष्णार्थः सूपः, कृष्णार्था रसाला ॥ १७६६ ॥

१७६७। बलिहितादिभिः।

---

१७६४। प्रकृत्या। प्रकृत्या सह चतुर्थ्यन्ता विकृतिः समस्यते। विकृतिरिति अर्थाल्लब्धमिति ज्ञेयम्। हरिमन्दिरायेति। 'यदर्थमन्य-त्तस्माच्चतुर्थी' इत्यनेन चतुर्थी। अत्र हरिमन्दिरस्य विकृतित्वम् इष्टकानां प्रकृतित्वमिति। नेह रन्धनाय स्थाली ; अत्र तादर्थ्यं विद्यत एव, किन्तु स्थाल्याः प्रकृतित्वं रन्धनस्य विकृतित्वं नास्ति ॥

१७६५। क्वचि। क्वचित्तदविवक्षायाञ्च चतुर्थ्यन्तं विष्णुपदं स्वाद्यन्तेन सह समस्यते। तदविवक्षायां प्रकृत्यविवक्षायाम्। अश्वाय घासः अश्वघास इति जुमरः। अश्वघासादयः षष्ठीसमासे इति तु भाष्यम् ॥

१७६६। इदम्। इदम्वाच्यार्थशब्देन सह चतुर्थ्यन्तं विष्णुपदं समस्यते। वाच्यलिङ्गता च भवति, 'उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरि'ति वक्ष्यते। अत उक्तं वाच्यलिङ्गता चेति। स्वपद-विग्रहः समस्यमानपदवाक्यम्। कृष्णायेदमित्यर्थकथनम्। कृष्णार्थं इति कृष्णाय अयमित्यर्थः। कृष्णार्थेति कृष्णाय इयमित्यर्थः। रसाला— शर्करामरिचादिमिलितं दधि ॥

१७६७। बलि। बलिहितादिभिश्च सह चतुर्थ्यन्तं विष्णुपदं

कृष्णाय बलिः कृष्णबलिः, कृष्णाय हितं कृष्णहितम् ॥ १७६७ ॥

१७६८। कृता यथाभिधानम्।

कृष्णदेयम्। नेह—कृष्णाय दातव्यम् ॥ १७६८ ॥

१७६९। पञ्चमी।

प्रभुरयम् ॥ १७६९ ॥

१७७०। भय-भीत-भीति-भीभिरानीतादिभिश्च।

कृष्णभयं, वृन्दावनानीतं, यमुनाहृतमित्यादि ॥ १७७० ॥

१७७१। अपेतादिभिः प्रायशः।

---

समस्यते। कृष्णायेति, चतुर्थी हिताद्यर्थैः' इत्यनेन चतुर्थी। बलिरूपहारः। एवं कृष्णहितं, गोसुखमित्यादि च ज्ञेयम् ॥

१७६८। कृता। यथाभिधानं कृदन्तेन सह चतुर्थ्यन्तं विष्णुपदं समस्यते। यथाभिधानमिति, अभिधानमनतिक्रम्येत्यर्थः। कृष्णदेयमिति कृष्णाय देयमिति विग्रहः। नेहेति यथाभिधानमित्युपादानादिति शेषः ॥

१७६९। पञ्चमी। अधिकारसूत्रमेतत् ॥

१७७०। भय। भय-भीत-भीति-भीभिः आनीतादिभिश्च सह पञ्चम्यन्तं विष्णुपदं समस्यते। कृष्णभयमिति कृष्णाद्भयमिति विग्रहः। एवं कृष्णभीतः, कृष्णभीतिः, कृष्णभीरिति। बृन्दावनानीतमिति वृन्दावनादानीतमिति विग्रहः। एवं यमुनाहृतमिति। इत्यादीत्यादिपदेन व्रजनिर्गतः, वृक्षच्युतः, अधर्मजुगुप्सुः, तदन्यः, शुक्लेतर इत्यादि च ज्ञेयम् ॥

१७७१। अपे। अपेतादिभिः सह प्रायशः पञ्चम्यन्तं विष्णु-

कृष्णापेतः, भक्त्यपोढ़ः, स्वर्गपतितः। प्रायशः किम्? प्रासादात् पतित इत्यादि ॥ १७७१ ॥

१७७२। स्तोकान्तिकदूरार्थाः कृच्छ्रञ्च क्तेन।

स्तोकादागतः, अल्पान्मुक्त इत्यादि। कृच्छ्रान्निर्गतः। अलुगयम् ॥१७७२॥

१७७३। द्वित्वबहुत्वयोर्न समासः।

स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः। शतात् परा इत्यादौ परःशता इत्यादयो निपाताः ॥ १७७३ ॥

१७७४। षष्ठी।

प्रभुरयम् ॥ १७७४ ॥

---

पदं समस्यते। कृष्णापेत इति कृष्णादपेत इति विग्रहः। भक्त्यपोढ़ इति भक्तेरपोढ़ इति विग्रहः। अपोढ़ोऽपगतः। एवं स्वर्गपतित इति। प्रासादादिति प्रासादो गृहविशेषः। इत्यादीत्यादिपदेन शिष्टप्रयोगानुसारेण अन्यत्रापि समासाभावो ज्ञेयः ॥

१७७२। स्तोका। पञ्चम्यन्ताः स्तोकान्तिकदूरार्थाः पञ्चम्यन्तं कृच्छ्रञ्च क्तेन सह समस्यते। स्तोकादागत इति 'स्तोकादिभ्यः पञ्चम्याः क्ते' इत्यनेन पञ्चम्या महाहरनिषेधः। एवमल्पान्मुक्त इति। इत्यादीत्यादिपदेन अन्तिकादागतः, निकटादागतः, दूरादागत इत्यादि च ज्ञेयम्। कृच्छ्रान्निर्गत इति 'स्तोकादिभ्य' इत्यनेन पञ्चम्या महाहरनिषेधः। अलुगयमिति अलुक्समासोऽयमित्यर्थः ॥

१७७३। द्वित्व। द्वित्वबहुत्वयोर्न समास इति बाहुल्यादिति शेषः। शतात् परा इत्यादाविति। इत्यादय इत्यादिपदेन परःसहस्रं, परोऽयुतं, परोलक्षमित्यादि च ज्ञेयम्। परिमाणं शतादूर्ध्वं परःशतमुदाहृतमिति जुमरः। ब्रह्मादयो ब्रह्महिताय तप्त्वा। परःसहस्राः शरदस्तपांसीति महावीरचरितम् ॥

१७७४। षष्ठी। अधिकारसूत्रमेतत् ॥

१७७५। परपदेन।

कृष्णस्य पुरुषः कृष्णपुरुषः। तव प्रभुः—त्वत्प्रभुः। युवयोर्युष्माकं वा प्रभुः—युष्मत्प्रभुः। स्वाद्यभावान्निपाताभावः ॥ १७७५॥

१७७६। न दिव उराम उद्वयवर्जितसर्वेश्वरे।

दिवीशः। उद्वयेति किम्? द्यूर्णुत्। यदूनां वृष्णयः श्रेष्ठा इत्यत्र सापेक्षत्वान्न॥ १७७६ ॥

१७७७। तरान्तगुणेन तरलोपश्च।

सर्वेषां मध्ये कृष्णतरः सर्वकृष्णः। एवं सर्वमहान् ॥१७७७॥

---

१७७५। पर। परपदेन सह षष्ठ्यन्तं समस्यते। कृष्णपुरुष इति कृष्णस्य पुरुष इति विग्रहः। त्वत्प्रभुरिति 'युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्वे' इत्यनेन त्वदादेशः। ननु युष्मत्प्रभुरित्यत्र 'युष्मदस्मदोस्त्वमहमादयः स्वादिना सह' निपात्यन्ते इति कथं न प्रवर्तते इति चेत्तत्राह–स्वाद्यभावादिति ॥

१७७६। न दिव। उद्वयवर्जितसर्वेश्वरे परे दिवोऽन्त-उरामो न भवति 'दिव उर्विष्णुपदान्ते' इत्यनेन उरामे प्राप्ते प्रतिषेधः। दिवीश इति दिव ईश इति विग्रहः। द्यौः स्वर्गः। द्यूर्णुदिति दिवम् ऊर्णौतीति ऊर्णुञ् आच्छादने क्विप्, तुक्। यदूनामिति 'सामान्यतो विशेषस्य निर्धारणे षष्ठीसप्तम्यौ, विशेषतश्चेत् पञ्चम्येवे'त्यनेन षष्ठी। सापेक्षत्वान्नेति समास इति शेषः ॥

१७७७। तरा। तरान्तगुणेन सह षष्ठ्यन्तं विष्णुपदं समस्यते' तरलोपश्च भवति। सर्वेषामिति निर्धारणे षष्ठी इति सूचयितुं मध्य इत्युक्तम्। कृष्णतर इति, गुणप्रकर्षे तरस्तद्धितः। सर्वमहान् इति सर्वेषां महत्त्वर इति विग्रहः ॥

१७७८। सदा गुणवाचिनैव गुणेन।

मुरलीध्वनिः, कृष्णामोदः, कृष्णस्पर्शः ॥ १७७८ ॥

१७७९। एवं तद्धितभावेनापि।

वैष्णवसामर्थ्यम्। "सीमेव पद्मासनकौशलस्य इति भट्टीः (१।६)। अधिकरणैतावत्त्वे च" इति पाणिनिसूत्रञ्च (२।४।१५) ॥ १७७९ ॥

१७८०। न तु गुणिन्युपलक्षितेन।

रामस्य शुक्लः। तुलस्यास्तीव्रं धात्र्या मृदु च। संख्यया-त्विष्यते—वैष्णवशतम् ॥ १७८० ॥

---

१७७८। सदा। सदा गुणवाचिनैव गुणेन सह षष्ठ्यन्तं विष्णुपदं समस्यते। मुरलीध्वनिरिति मुरल्या ध्वनिरिति विग्रहः। गुणवाचकस्य ध्वनिशब्दस्य सदा गुणवाचितैव न।तु शुक्लादिशब्दा-नामिव गुणवाचकत्वेऽपि द्रव्यवाचिता। एवमन्यत्र च ज्ञेयम्। कृष्णा-मोद इति आमोदः, व्यापकः, परिमलः। एवं कृष्णरूपं कपित्थरस इत्यादि च ज्ञेयम् ।।

१७७९। एवं। एवं क्रमेण तद्धितभावेनापि सह षष्ठ्यन्त-विष्णुपदस्य समासो ज्ञेयः। तद्धितभावप्रत्ययान्तस्य सदा गुणवाचित्वात्। वैष्णवसामर्थ्यमिति वैष्णवस्य सामर्थ्यमिति विग्रहः। सामर्थ्यमिति समर्थस्य भाव इत्यर्थे नृसिंह-यस्तद्धितः। एवं मुनिचापल्यं द्रव्व-काठिन्यं, बुद्धिनैपुण्यमित्यादि च ज्ञेयम्। शिष्टप्रयोगं दर्शयति—सीमे-वेति। पद्मासनकौशलस्येति पद्मासनस्य कौशलमिति विग्रहः। पद्मा-सनो ब्रह्मा। अधिकरणैतावत्त्व इति अधिकरणस्यैतावत्त्वमिति विग्रहः। एतावत्त्वशब्दस्तद्धितभावप्रत्ययान्तः ।।

१७८०। न तु। गुणिन्युपलक्षितेन गुणेन सह समासो न भवति। सदा गुणवाचित्वाभावादिति शेषः। रामस्य शुक्ल इति, अत्र शुक्ल-शब्दस्य गुणवाचित्वेऽपि सदा गुणवाचित्वाभावात् न समासः। एवमन्यत्र

## १७८१। न च ततो भावप्रत्ययेन।

रामस्य शौक्ल्यम्। वस्त्रपीतिमा इत्यादिकन्तु प्रयुक्तमपि वैयाकरणैर्नात्याद्टतम्। पूरणप्रत्ययादिभिर्निषेधस्तु सव्यभिचारः। कारकोपपदषष्ठीसमासस्तु सम्बन्धविवक्षायां दुर्निवार इति तन्निषेधोऽपि नास्माभिर्विवृतः। स्वरभेद एव हि तत्र फलमिति। यथोक्तमत्र भर्तृहरिणा—

---

च ज्ञेयम्। धात्र्या इति। धात्री आमलकी। संख्यया त्विष्यत इति संख्यया तु सह समास इष्यते। संख्याया गुणवाचित्वेऽपि सदा गुणवाचित्वाभावात् समासो न स्यादत उक्तं संख्यया त्विष्यत इति। वैष्णवशतमिति वैष्णवानां शतमिति विग्रहः॥

१७८१। न चेति। ततो विहितेन भावप्रत्ययेन च सह समासो न भवति। बाहुल्यादिति शेषः। तत इति गुणिन्युपलक्षिताद्गुणात् शुक्लादेरित्यर्थः। भावप्रत्ययान्तेन शुक्लादिना च समासो न भवतीति फलितार्थः। रामस्य शौक्ल्यमिति। एवं हरेः कार्ष्ण्यम् अम्बरस्य पीतिमेवेत्यादिकञ्च ज्ञेयम्। वस्त्रेति, वैयाकरणैः पुरुषोत्तमादिभिः प्रयुक्तमपि नात्यादृतम् अस्माभिरिति शेषः। यद्वा, अन्यैर्वैयाकरणैः प्रयुक्तमपि, वैयाकरणैः पाणिनीयादिभिर्नात्यादृतमिति। नात्यादृतमित्यत्र नादृतमिति वा पाठः। न च तत इत्यादिकस्य नात्यादृतमित्यन्तस्य धात्र्या मृदुरित्यनन्तरं लिखनमुचितमित्यनुमन्यते। किंवा संख्यायामपि गुणिन्युपलक्षितगुणत्वमस्ति, अतस्तस्या अपि समासनिषेधः स्यादिति मनसि कृत्वा पुनः समाससूत्रं विधाय उदाहरणमपि दत्त्वा ततः परं न च तत इत्यादिकं लिखितमिति ज्ञेयम्। पूरणेति पूरणप्रत्ययादिभिः सह षष्ठ्यन्तस्य समासो न भवति इति निषेधो व्याकरणान्तरे वर्तते, किन्तु स तु सव्यभिचारः, तस्मात् सव्यभिचारत्वादेवास्माभिर्न विवृतः, न कृत इति भावः। भाषावृत्तौ तव्यादिभिरपि निषेध उक्तः, अतः पूरणप्रत्ययादिभिरित्युक्तम्। छात्राणां पञ्चमः, भिक्षुकानामष्टम इति भाषावृत्तिः, विप्राणां दशम इति जुमरश्च, तथापि

लौकिकव्यवहारेषु यथेष्टं चेष्टतां जनः।
वैदिकेषु तु मार्गेषु विशेषोक्तिः प्रवर्तताम् ॥१७८१॥
( वर्धमानोपाध्याय-कृते गणरत्नमहोदधौ )

१७८२। सप्तमी शौण्डादिभिः।

भक्तिशौण्डः, भक्तिप्रवीणः समरसिंह इत्यादि। ऋणेऽधमोऽधमर्णः ऋणग्रहीता। एवमुत्तमर्णः ऋणदाता। राजदन्तादित्वात् पूर्वनिपातः॥ १७८२ ॥

---

-वाङ्मात्रेण यत् सव्यभिचार इत्युक्तं न तु किञ्चिदुदाहृतं, तत्तु हठसूचकमेवेति ज्ञेयम्। हठस्तु प्राचामेव। केचिद्वदन्त्यत्र व्यभिचारः, केचिद्वदन्ति नेति। कारकेति कारकषष्ठीसमासः उपपदषष्ठीसमासश्चेत्यर्थः। सम्बन्धविवक्षायां दुर्निवार इति कारकोपपदे षष्ठीसमासे निषेधोऽपि सम्बन्धविवक्षायां तत्षष्ठीसमासस्य अनिवार्यत्वादिति भावः। अतस्तन्निषेधोऽकारकोपपदषष्ठीनिषेधोऽपि नास्माभिर्विवृत इति सूचितम्। ननु कारकोपपदषष्ठीसमास-सम्बन्धषष्ठीसमासयोर्भेदो वर्तते इति चेत्तत्राह—स्वरभेद एवेति। हि यद्यपि भेदो वर्तते तथापि स्वरभेदातिरिक्तफलाभावात् तन्निषेधविवरणं न बहुप्रयोजनकमिति भावः; स्वरभेदस्तु वैदिकैरेव ज्ञायते, अतस्तेषामेव तत्र प्रयोजनं, नत्वस्माकमिति स्वमतं भर्तृहर्युक्तपद्येन द्रढ़यति—यथोक्तमिति। यथेष्टं चेष्टतामिति विशेषोक्तेरभावादिति शेषः। तस्मात्तत्र विशेषोक्तिर्न प्रवर्ततामिति भावः। वैदिकेष्विति। वैदिकमार्गेषु ऐच्छिकव्यवस्था नोचिता तत्र विशेषोक्तिः प्रवर्तत इत्यर्थः। तस्माद्भाषायामैच्छिकव्यवस्था न विरुद्धेति भावः। 'भावः सत्वस्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः।

१७८२। सप्त। शौण्डादिभिः सह सप्तम्यन्तं विष्णुपदं समस्यते। भक्तिशौण्ड इति भक्तौ शौण्ड इति विग्रहः। गम्यसत्तादिक्रियायाः सम्बन्धेन कारकत्वमिति विष्णुभक्त्यर्थप्रकरण एवोक्तम्। शौण्डः प्रगल्भः। समरसिंह इति समरो युद्धम्। इत्यादीत्यादिपदेन अक्षधूर्तः,

१७८३। तीर्थकाकादयः पात्रेसमितादयश्च क्षेपे साधवः।

तीर्थे काक इव तीर्थकाकः, तद्वदनवस्थित इत्यर्थः। पिण्डीशूरः—भोजनमात्रसमर्थः। एवं कूपमण्डूकः, उड़ुम्बरकृमिः अल्पज्ञे। पात्रेसमितः प्रतिग्रहमात्रपरे। गोष्ठेप्रवीरः गेहेशूरः शूरम्मन्ये। एवं क्ष्वेड़िन्-नर्दिन्-विजितिन्-व्याड़-पण्डित-प्रगल्भ इत्येभिश्च। तथा उदकेविशीर्णं भस्मनिहुतं, प्रवाहेमूत्रितं अतिव्यर्थकर्मणि। गर्भेतृप्तः गर्भेसुहितः अनुचितचेष्टे; पितरिशूरः, मातरिपुरुषः सदाचार-

रणपण्डितः, कार्यनिपुणः, भक्तिकुशलः, कर्मचपलः, साधनसिद्धः, छायाशुष्कः, शाखापक्वः, साधनदक्षः, शास्त्रचतुरः, युद्धसाहसिक इत्यादि च ज्ञेयम्। उत्तमर्णं इति ऋणे उत्तम इति विग्रहः। ऋणग्रहीता, ऋणदातेति। 'उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमादि'त्यमरः। राजदन्तादित्वादिति 'राजादीनां दन्तादिभ्यः' इति सूत्रं वक्ष्यते॥

१७८३। तीर्थ। व्यक्तार्थमेतत्। क्षेप इति क्षेपे गम्यमाने, क्षेपो निन्दा। तद्वदिति तीर्थकाको यथा न चिरं स्थाता तद्वत् कर्तव्ये योऽनवस्थितः स तीर्थकाक इत्यप्युच्यते, कर्तव्यं प्रत्यनवस्थितमेवात्र क्षेपः। पिण्डीशूर इति पिण्डग्रामेव शूर इति विग्रहः, पिण्डीशूरशब्दस्य अभिधेयमाह—भोजनेति कार्याक्षम इति यावत्। कूपमण्डूक इति कूपे मण्डूक इवेति विग्रहः, मण्डूको भेकः। उड़ुम्बरकृमिरिति उड़ुम्बरे कृमिरिवेति विग्रहः। अल्पज्ञ इति एतौ अल्पज्ञे पुरुषे वर्तेते। एवं उड़ुम्बरमशकः कूपकच्छप इत्यादि च ज्ञेयम। पात्रेसमित इति पात्र एव समित इति विग्रहः। प्रतीति, प्रतिग्रहमात्रपरे पुरुषे वर्तते इत्यर्थः। शूरम्मन्य इति द्वौ शूरम्यन्ये पुरुषे वर्तेते एव इत्यर्थः। एवमिति उदाहरणानि यथा—गेहेक्ष्वेड़ी, गेहेनर्दी, गेहेविजिती, गेहेव्याड़ः, गेहेपण्डितः, गेहेगेहेप्रगल्भ इति। व्याड़ो दर्पवान्। उदाहरणान्तरमपि दर्शयति—तथेति। भस्मनिहुतमिति एवम् अन्धकारेनटितमित्यादि च ज्ञेयम्। अतिव्यर्थकर्मणीति वर्तते

भेत्तरि। कर्णेटिरिटिरा कर्णेचुरुचुरेति द्वयं चापलेनानुचितचेष्टायां साधु। टिरिटिरीति गत्यनुकरणम्; चुरुचुर्विति वाक्यानुकरणम्। तत्करोतीति तथा णौ निपातोऽयम्॥ १७८३॥

१७८४। अथ द्वितीयादिकृष्णपुरुषेष्वधोक्षजाभक्तवतुभ्यां समासो नेष्यते।

कृष्णं जगन्वान्, कृष्णं दृष्टवान्॥ १७८४॥

१७८५। अच्युताभाव्ययकृद्धग्राश्च न।

कृष्णं पश्यन्, सेवां कुर्वाणः, सुखं लब्धुं लब्ध्वा वेत्यादि। यत्र यत्र समासेन विष्णुभक्त्यर्थो गुप्तः स्यान्नातिव्यक्तश्च स्यात्तत्र तत्र च न समासः इष्टः; यथा—हेतुचिह्नसहार्थतृतीयाम्, यथा च अज्ञानार्थ-ज्ञायोगादितः षष्ठ्यां कृष्णेन सुखं, कौस्तुभेन भगवान्, कृष्णेन

---

इति शेषः। अनुचितचेष्टे इति द्वौ अनुचितचेष्टे पुरुषे वर्तेते इत्यर्थः। सदेति द्वौ सदाचारभेत्तरि पुरुषे वर्तेते इत्यर्थः। चापलेन चाञ्चल्येन अनुचितचेष्टायामिति वर्तते इति शेषः। साधु इति वा। टिरिटिरेति चुरुचुरेति च निष्पादयति—टिरिटिरीतीति तदिति। टिरिटिरीति करोतीति टिरिटिरा चुरुचुर्विति करोतीति चुरुचुरा णौ निपातोऽयमिति॥

१७८४। अत्र। कृष्णं जगन्वानित्यादौ 'द्वितीया श्रितादिभिरि'त्यनेन समासः स्यादत उक्तं समासे नेष्यत इति॥

१७८५। अच्यु। अच्युताभाव्ययकृद्धग्राञ्च नेति इष्यते इति शेषः। कृष्णं पश्यन्नित्यादावपि 'द्वितीया श्रितादिभिरि'त्यनेनैव समासः स्यात्। इत्यादीत्यादिपदेन वैष्णवस्य कृत्वेत्यादावपि न षष्ठीसमास इति ज्ञेयम्। यत्र यत्रेति। क्रमेण उदाहरणानि दर्शयितुं प्रथमतो गुप्तानतिव्यक्तयोः स्थानमाह—यथेति। यथा चेति उदाहरणानि दर्शयति—कृष्णेनेति कृष्णेन सुखमिति; अत्र 'हेतोस्तृतीया' इत्यनेन तृतीया। यद्यत्र 'तृतीयार्थकृतगुणवचनेनार्थादिभिश्चे'त्यनेन समासः स्यात्तदा तेन विष्णुभक्त्यर्थो गुप्तः स्यादिति समासः। एवं कौस्तुभेन भगवानित्यत्र

गतः, गङ्गाजलस्य ज्ञातं, वैष्णवानां मतो बुद्धः पूजितो वा, कृष्णस्यासितं, कृष्णस्यासिका, कृष्णस्य शायिकेत्यादि ॥ १७८५॥

इत्युत्तरपदप्रधाना द्वितीयादिकृष्णपुरुषाः।

१७८६। अन्यपदार्थात् प्राङ्मध्यपदाप्रयोगिणः।

प्रभुरयम्। अत्यादीनामेवातिक्रान्ताद्यर्थत्वात् ॥ १७८६ ॥

१७८७। अत्यादयो द्वितीयया।

अतिक्रान्तो गङ्गामतिगङ्गः। 'गोरीप आप' (१७४८) इत्या-

---

कृष्णेन गत इत्यत्र च ज्ञेयम्। कौस्तुभेनेति 'विशेषलक्षणात्तृतीया'। कृष्णेनेति 'सहार्थे गम्येऽपी'त्यनेन तृतीया। गङ्गाजलस्य ज्ञातमिति, गङ्गाजलबुद्ध्या जलान्तरे प्रवृत्तमित्यर्थः। 'अज्ञानार्थस्य ज्ञः करणं वे'त्यनेन षष्ठी। यद्यत्र 'परपदेने'त्यनेन समासः स्यात्तदा विष्णुभक्त्यर्थो नातिव्यक्तः स्यादिति न समासः। एवमन्यत्र च ज्ञेयम्। वैष्णवानां मत इति, 'ञिरामेतो बुद्धीच्छापूजार्थेभ्यश्च क्तो वर्तमाने च' इत्यनेन क्तः; 'वर्तमाने भावे च क्तस्य योगे कर्तरि षष्ठी वे'त्यनेन न षष्ठी, वैष्णवैर्मन्यते इत्यर्थः। एवं वैष्णवानां बुद्ध इति, वैष्णवानां पूजित इति च। कृष्णस्यासितमिति, आस उपवेशने 'अकर्मक-गति-भोजनार्थेभ्यः क्तोऽधिकरणे चे'त्यनेन अधिकरणे क्तः, 'अधिकरण-वाचिक्तस्य योगे कर्तरि कर्मणि च षष्ठी'त्यनेन कर्तरि षष्ठी। कृष्णस्यासिकेति। आस उपवेशने 'णको लक्ष्म्यां भावे' इति णकः, 'कृष्णादाप् लक्ष्म्यामि'त्याप्; 'प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपी'त्यनेन अरामस्येरामः, 'लक्ष्मी-णकङापोः प्रयोगे तु कर्तरि षष्ठ्येवे'त्यनेन कर्तरि षष्ठी ॥ कृष्णस्य शायिकेति शीङ् स्वप्ने सर्वं पूर्ववत् ॥

१७८६। अन्य। अधिकारसूत्रमेतत्। मध्यपदलोपिन इत्यनुक्त्वा यत् मध्यपदाप्रयोगिण इत्युक्तं तत्र हेतुमाह—अत्यादीनामेवेति ॥

१७८७। अत्या। अत्यादयो द्वितीयान्तेन विष्णुपदेन सह समस्यन्ते। मध्यपदाप्रयोगश्च भवति। लक्ष्म्यामिति पुनराविति लक्ष्म्यां वामने

दिना वामनत्वं, लक्ष्म्यां पुनराप् अतिगङ्गा। ईवन्तस्य अतिगोपिः, अतिप्रेयसिः। नेह वामनः—अतिश्रीः। अत्यादित्वात् अभिप्रपन्नो मुखम् अभिमुखः, आक्रम्य व्रजम् आव्रजं तं व्याप्येत्यर्थः। एवमन्येऽपि॥ १७८७॥

१७८८। अवादयस्तृतीयया।

अवक्रुष्टं वंश्या अववंशि वृन्दावनम्। अधिकरणे क्तः, कृतो बाहुल्यात्। परिणद्धं वीरुधा परिवीरुदित्यादि॥ १७८८॥

१७८९। पर्यादयश्चतुर्थ्या।

---

कृते पुनराविर्त्यर्थः। अतिगङ्गेति अतिक्रान्ता गङ्गामिति विग्रहः। अतिगोपिरिति अतिक्रान्ता गोपीमिति विग्रहः। एवमतिप्रेयसिरिति। 'न चेयस्याः पीताम्बरे' इत्युक्तम् अतोऽत्र वामनो भवत्येव। नेह वामन इति ईवन्तत्वाभावादिति शेषः। अतिश्रीरिति अतिक्रान्तः श्रियमिति विग्रहः। आदिग्रहणफलमाह—अत्यादित्वादिति। अभिमुख इति 'त्रिरामीप्राप्तापन्नालंपूर्वगतिसमासेषु वाच्यलिङ्गतैवे'ति वाच्यलिङ्गत्वम्। तं व्रजम्। एवमन्येऽपीति ज्ञेया इति शेषः। ते यथा,—प्रतिगतोऽक्षं प्रत्यक्षः, उद्गतो विद्यां उद्विद्य इत्यादयः॥

१७८८। अवा। तृतीयान्तेन विष्णुपदेन सह अवादयः समस्यन्ते। मध्यपदाप्रयोगश्च भवति। अवक्रुष्टमिति क्रुश आह्वाने। अवक्रुश्यते यत्रेत्यधिकरणे क्तः। ननु 'अकर्मकगतिभोजनार्थेभ्य अधिकरणे चे'त्युक्तं, क्रुशधातोस्तु अकर्मकत्वं गत्यर्थत्वं भोजनार्थत्वञ्च नास्ति, तर्हि कथमधिकरणे क्तो भवति, इति चेत्तत्राह—कृतो बाहुल्यादिति। वीरुधेति, 'लता प्रतानिनी वीरुदि'त्यमरः। प्रतानिनी विस्तारिणी। इत्यादीत्यादिपदेन संनद्धो वर्मणा संवर्मा, अधिगतोऽक्षेण अध्यक्षः, प्रतीतोऽक्षेण प्रत्यक्षः, सुसङ्गतो वेलया सुवेल इत्यादि च ज्ञेयम्॥

१७८९। पर्या। चतुर्थ्यन्तेन विष्णुपदेन सह पर्यादयः समस्यन्ते।

परिग्लानो हरिकीर्तनाय परिहरिकीर्तनः। अलं जातो लक्ष्म्यै अलंलक्ष्मीरित्यादि ॥ १७८९ ॥

१७९०। निरादयः पञ्चम्या।

निष्क्रान्तो मधुपुर्याः निर्मधुपुरिः, अपगतमर्थात् अपार्थम् अवैष्णवशास्त्रमित्यादि ॥ १७९० ॥

इति मध्यपदाप्रयोगिगणः पूर्वपदप्रधानाः कृष्णपुरुषाः।

१७९१। एहीहादयोऽन्यपदार्थे साधवः।

एहि इहेति यत्र कर्मणि काले वा तत् एहीहम्। एवम् एहि यवैरिति यस्यां क्रियायां तत् एहियवम्। अनयोर्ब्रह्मत्वमेव। अथ एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता। एवम् अपेहिस्वागता, एहिविघसेत्यादि। एवमेहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजेत्यादि। तथा इहद्वितीया,

---

मध्यपदाप्रयोगश्च भवति। परिहरिकीर्तन इति 'त्रिरामी'त्यादिना वाच्यलिङ्गता। अलंलक्ष्मीरिति ईवन्तत्वाभावान्न वामनः। इत्यादीत्यादिपदेन उद्‌गतो युद्धाय उद्‌युद्धः, अभिगतः श्रुताय अभिश्रुत इत्यादि च ज्ञेयम्॥

१७९०। निरा। पञ्चम्यन्तेन विष्णुपदेन सह निरादयः समस्यन्ते। मध्यपदाप्रयोगश्च भवति। पूर्वपदप्रधाना इति पूर्वपदं येष्विति विग्रहः॥

१७९१। एही। व्यक्तार्थमेतत्। एहीति आगच्छेत्यर्थः। इह एहीति यत्रोच्यते तदेहीहं कर्मेति भाषावृत्तिः। उपाध्यायसर्वस्वे यु मिश्रण इत्यस्य यवं निष्पाद्य एहियवैरिति निष्पादितं तस्मात् अत्र यवशब्दोऽन्तस्थयरामादिरिति ज्ञेयं, यवैर्मिश्रणैः। अनयोः एहि-हेहियवयोर्ब्रह्मत्वमभिधानादितिशेषः। उदाहरणान्तरमाह—अथेति। एवमिति। अपेहि स्वागतमिति यस्यां क्रियायां सा अपेहिस्वागतेति, एहिविघसेति यस्यां क्रियायां सा एहिविघसेति। इत्यादीत्यादिपदेन अपेहि-

इहपञ्चमी, आहोपुरुषिका, अहम्पूर्विका, अहम्प्रथमिका, अहमहमिका। विकृतञ्च प्रकृतञ्च यस्यां सा विचप्रचा, निश्चितञ्च प्रचितञ्च यस्यां सा निश्चप्रचा इत्यादि। तथा कृन्धि विचक्षणेति विचक्षणमिति वा यस्यां सा कृन्धिविचक्षणा। केवलद्वितीयान्तेन तु—भिन्धिलवणा, आहरवसना, आहरवनिता इत्यादि॥१७९१॥

---

प्रघस्येत्यादि च ज्ञेयम्। एवमिति। वाणिजेति सम्बोधने वणिजशब्दोऽदन्तोऽप्यस्तीति लक्ष्यते, वणिज एव वाणिजः। एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजेति तु जुमरः। 'नैगमो वाणिजो वणिगि'त्यमरश्च। इत्यादीत्यादिपदेन अपेहिवाणिजा, प्रोहवाणिजेत्यादि च ज्ञेयम्। अपरमप्युदाहरणमाह—तथेति। इह द्वितीया यस्यां इति इहद्वितीया। एवमिहपञ्चमीति। अहमेव पुरुष इति या आत्मसम्भावना सा आहोपुरुषिका। 'आहोपुरुषिका दर्पाद्या स्यात् सम्भावनात्मनि' इत्यमरः। अहं पूर्वमहं पूर्वमिति य औद्धत्यविशेषः सा अहम्पूर्विका। 'अहं पूर्वमहं पूर्वमित्यहम्पूर्विका स्त्रियामि'त्यमरः। एवसहम्प्रथमिका इति। अहमिति यः परस्परमहङ्कारः सा अहमहमिका। अहम 'अहमिका तु स्यात्, परस्परं यो भवत्यहङ्कारः' इत्यमरः। जुमरटीकाकारेण तु अहमेव पुरुषोऽत्रेति सम्भावनायाम् आहोपुरुषिका अहं पूर्वमत्रेत्याविष्क्रियायाम् अहम्पूर्विका। अहं प्रधानमत्रेत्यहङ्कृतौ अहमहमिकेत्युक्तम्। यस्यामिति यस्यां क्रियायामित्यर्थः। इत्यादीत्यादिपदेन आचितञ्च उपचितञ्च यस्यां सा आचोपचेत्यादि च ज्ञेयम्। अन्यदप्युदाहरणमाह—तथेति। विचक्षणेति सम्बोधने। केवलेति। अत्र सम्बोधणक्षाभाव इति भावः। भिन्दि लवणमिति यस्यां सा भिन्दिलवणा। आहर वसनमिति यस्यां सा आहरवसना, आहर वनितामिति यस्यां सा आहरवणिता। इत्यादीत्यादिपदेन—प्रोह कटमिति यस्यां सा प्रोहकटा। प्रोह कर्दममिति यस्यां सा प्रोहकर्दमा। पच लवणमिति यस्यां सा पचलवणा। आहर चेलमिति यस्यां सा आहरचेला। उद्धर चूड़ामिति यस्यां सा उद्धरचड़ेत्यादि च ज्ञेयम्॥

१७९२। तथाख्यातमाख्यातेन नियोजने।

यजत नमतेति यत्रोच्यते सा नियोजनक्रिया यजतनमता; उद्धरोत्सृजा, उद्धमविधमा, उत्पतनिपता॥ १७९२॥

१७९३। हिप्रत्ययान्तं कर्मणाभीक्ष्ण्यतद्वत्कर्तरि।

स्तुहि कृष्णमित्याभीक्ष्ण्यमाह यः स स्तुहिकृष्णः। एवं जहिजोहः; जोहो दासः क्षारं वा; इत्यादयो ज्ञेयाः॥१७९३॥

इत्यन्यपदार्थप्रधानः कृष्णपुरुषः।

इति कृष्ण-पुरुषप्रकरणमुद्दिष्टम्। *

१७९४। अनेकमन्यपदार्थे पीताम्बरः।

---

१७९२। तथा। नियोजने वाच्ये आख्यातेन सह आख्यातं तथा पूर्वोक्तप्रकारेण समस्यते। उद्धर उत्सृजा इति यत्रोच्यते सा नियोजनक्रिया उद्धरोत्सृजा। एवमन्यत्र च ज्ञेयम्। अश्नीत पिबतेति सततमुच्यते यस्यां क्रियायां सा अश्नीतपिबतेति जुमरः॥

१७९३। हिप्र। आभीक्ष्ण्यतद्वत्तरि वाच्ये कर्मणा सह हिप्रत्ययान्तं विष्णुपदं समस्यते। तत्पदेन हिप्रत्ययान्तकर्मणोः परामर्षः। एवमिति। जहिजोहमित्याभीक्ष्ण्यमाह यः स जहिजोहः। जहि इति 'हन्तेर्जहि' इत्यनेन सिद्धम्। जोह-शब्दस्यार्थमाह—जोहः दासः क्षारं वेति। भाषावृत्तावपि जहिजोह इति दृश्यते, उपाध्यायसर्वस्वे तु जुड़ प्रेरणे इत्यस्य अन्-प्रत्ययेन जोड़शब्दो निष्पाद्यः जहिजोड़ इति निष्पादितम्। इत्यादय इत्यादिपदेन जहिस्तम्बः, उज्जहिस्तम्ब इत्यादयोऽपि ज्ञेयाः॥

१७९४। अनेक। अन्यपदार्थ इति अन्यपदस्यार्थं इति विग्रहः। प्रभुश्चेति चशब्दोपादानेन अस्य सूत्रस्य विधित्वमधिकारत्वञ्च व्यञ्जि-

---

* जहिजोहः इत्यत्र जहिजोड़ः इति पाठान्तरम्॥

प्रभुश्चायम्। अनेकं नामपदन्तु अन्यपदार्थे अभिधेये परस्परं समस्यते ; स च पीताम्बरसंज्ञः। बहुव्रीहिरिति प्राञ्चः। अन्यपदार्थवदेव लिङ्गमस्य, अन्यपदार्थश्च यच्छब्देनेदंशब्देन चोद्देश्यः। द्वयोस्त्रयाणां चतुर्णामेव वा अभिधानम्। अत्र यष्ठ्याद्यन्यपदार्थो यथा— तत्र समासार्थेनोक्तत्वात् प्रथमा। पीतमम्बरं यस्य स पीताम्बरः ; पीतं सूक्ष्मं चाम्बरं यस्य स पीतसूक्ष्माम्बरः। एवमुज्ज्वलपीतसूक्ष्माम्बरः। प्राप्तः कृष्णो यत्तत् प्राप्तकृष्णं गोकुलम्। कृष्णः प्राप्तो येन स प्राप्तकृष्णो वैष्णवः। प्राप्तः कृष्णो यया सा प्राप्तकृष्णा भक्तिः। दत्तं सर्वस्वं यस्मै सः दत्तसर्वस्वः कृष्णः। प्राप्तो वरो यस्मात् स प्राप्तवरः कृष्णः। न्यस्तं मनो यस्मिन् स न्यस्तमनाः कृष्ण इत्यादयः ॥ १७६४ ॥

१७६५। अव्ययश्च।

नीचैर्मुखमस्य नीचैर्मुखः ॥ १७६५ ॥

---

तम्। अन्येति। अन्यपदाभिधेयवत् इत्यर्थः। अस्येति पीताम्बरसमाससिद्धस्य नाम्न इत्यर्थः, अस्मिन्निति वा पाठः। अस्मिन् समासे इत्यर्थः। अन्येति उद्देश्य इति वाच्य इत्यर्थः। तस्मात् यच्छब्द इदंशब्दश्च अन्यपदार्थवाचकत्वेन निर्दिश्यत इति भावः। उद्देश्य इत्यनन्तरमत्रेति ज्ञेयम्। द्वयोरिति द्वयोः परयोरित्यर्थः। एवं त्रयाणामित्यादौ च ज्ञेयम् ; अभिधानं कथनम्। तत्र समासार्थेनेति। तत्रेति समाससिद्धे नाम्नीत्यर्थः। पीताम्बर इति अत्र द्वयोरभिधानम्। पीतसूक्ष्माम्बर इति अत्र त्रयाणामभिधानम्। एवमिति अत्र चतुर्णामभिधानम्। प्राप्त इति कर्तरि क्तः। यदिति द्वितीयान्तम् ; प्राप्त इति कर्मणि क्तः। ययेति करणत्वात् तृतीया ॥

१७६५। अव्यय। अव्ययञ्चेति नामपदेन सह समस्यत इति शेषः। नीचैर्मुखमस्य नीचैर्मुख इति ; अत्रान्यपदार्थस्य इदंशब्देनोद्देश्यता ॥

सेवितुं कामोऽस्येति विग्रहे—

१७९६। तुमो मस्य हरः काममनसोः।

सेवितुकामः, सेवितुमनाः, अस्तिभक्तिरस्य अस्तिभक्तिर्वैष्णवः, नास्तिभक्तिरवैष्णवः।

समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिः।
बाहुल्यादिह तत्रापि समासो वा विधीयते॥

भक्ताय दत्तार्थः; अत्र दानक्रियया नित्यं सम्प्रदानमपेक्ष्यते, अतो यद्यपि गुणीभूतेन दत्तपदेन साक्षादन्वयस्याभावस्तथापि तात्पर्यतः सङ्गम्यते; यथा—कृतपूर्वी सृष्टिम्, असूर्यम्पश्य इत्यादौ। किञ्च, प्रायः समानाधिकरणानामेव पीताम्बरस्तेन नेह हृते कृष्णे न गतं येनेति, वैष्णवैर्भुक्तं यस्येति। प्रायो ग्रहणात् क्वचिद्व्य-

---

१७९६। तुमो। कामे मनसि च परे तुमो मस्य हरो भवति। सेवितुमना इति सेवितुं मनोऽस्येति विग्रहः। नास्ति भक्तिरिति नास्ति भक्तिरस्येति विग्रहः। अस्तीति नास्तीति च तिङन्तप्रतिरूपकमव्ययम्। अलिङ्गोऽव्ययसंज्ञ इत्युक्तमत आख्यातान्तस्याप्यव्ययत्वमस्त्येव किन्तु तथा सति नास्तिभक्तिरित्यत्र नञो भिन्नपदत्वात् अनस्तिभक्तिरिति स्यादतस्तिङन्तप्रतिरूपकमित्युच्यते। ननु भक्ताय दत्तार्थं इत्यादौ समस्तस्य दत्तपदस्य असमस्तेन सम्प्रदानेन सह कथमन्वयो भवतु सापेक्षत्वात् कथं वा अत्र समासो भवत्विति चेत्तत्र पद्यमाह—समस्तस्येति। सङ्गतिरिति भवतीति शेषः। सङ्गतिरन्वयः। बाहुल्यादिहेति। इह प्रकरणे उक्ताद्बाहुल्यादित्यर्थः। वा विधीयते इति तस्मादत्र विग्रहो वर्त्तते इति भावः। दत्तार्थ इति दत्तोऽर्थो येनेति विग्रहः। साक्षादन्वयस्याभाव इति सम्प्रदानस्येति शेषः। सः अन्वयः। दृष्टान्तमाह—यथेति। कृतपूर्वी सृष्टिमिति असूर्यम्पश्य इति च पूर्वमेव व्याख्यातम्; असूर्यम्पश्य इत्यत्र सूर्यपदस्य व्यवधानेनापि नञः पश्यतीत्यनेनान्वयः, इत्यांशिकः दृष्टान्त इति। प्राय इति समानमधिकरणं

धिकरणानाञ्च—यदुकुले जन्म यस्य सः यदुकुलजन्मा ; कण्ठेकालः —अलुगयम् ॥ १७९६ ॥

१७९७। न च प्रथमान्यपदार्थत्वे ।

सुच्छाये वृन्दावने यः, गते कृष्णे गतो य इत्यत्र तु अन्यपदार्थतैव नास्ति, गतस्यैव वाच्यत्वात् ॥ १७९७ ॥

१७९८। न क्तवत्वाद्यन्तस्य।

वैष्णवा भुक्तवन्तोऽस्य ; वैष्णवो जग्मिवानस्य ॥ १७९८ ॥

१७९९। क्वचिन्मध्यपदलोपः।

सिंहस्येव मुखमस्य, सिंहमुखमिव मुखमस्येति वा सिंहमुखः ॥ १७९९ ॥

---

येषामिति विग्रहः । हृते इति अक्रूरेणेति शेषः। गते इति च पाठो दृश्यते। व्यधिकरणानाञ्चेति पीताम्बरो भवतीति शेषः। कण्ठे कालोऽस्येति विग्रहः। 'सप्तमी-विष्णुनिष्ठा-विशेषणकृष्णनामसंख्यानां दण्डहस्तादिवर्जमि'त्यनेन सप्तम्यन्तस्य पूर्वनिपातः। 'स्वाङ्गादमूर्धमस्तकात् ङेरकामे' इत्यनेन ङेर्महाहरनिषेधः ; अलुक्समासोऽयमित्यर्थः॥

१७९७। न च। प्रथमान्तस्य अन्यपदार्थत्वे पीताम्बरो न भवति, बाहुल्यादिति शेषः। सुच्छाय इति शोभना छाया यस्येति विग्रहः। छाया अनातपः। अन्यपदार्थतेति अन्यपदस्य अर्थतेति विग्रहः, अर्थता वाच्यता। हेतुमाह—गतस्यैवेति॥

१७९८। न क्त। क्तवत्वाद्यन्तस्य च पीताम्बरो न भवति, बाहुल्यादिति शेषः। आदिग्रहणस्य फलमाह—वैष्णवो जग्मिवानस्येति॥

१७९९। क्वचि। पीताम्बरसमासे क्वचिन्मध्यपदलोपो भवति बाहुल्यादिति शेषः। सिंहस्येवेत्यत्र सिंहपदेन सिंहमुखे लक्षणा, अन्यथा सादृश्यं न गम्यते इति। सिंहमुख इति। एवं शास्त्रज्ञानं धनं यस्य स शास्त्रधनः, सुवर्णविकारोऽलङ्कारो यस्य स सुवर्णालङ्कारः, चन्द्रसदृशं मुखं यस्याः सा चन्द्रमुखी, इन्दुसहिता चूड़ा यस्य स इन्दुचूड़ इत्यादि च ज्ञेयम्॥

१८०० । क्वचिद्वा ।

अविद्यमानः पाप्मा यस्य सोऽपाप्मा, अविद्यमानपाप्मा । प्रपतितानि पर्णानि यस्य स प्रपर्णः, प्रपतितपर्णः ॥ १८०० ॥

१८०१ । क्वचिदाख्यातलोपः ।

पीतमम्बरमस्त्यस्य स पीताम्बरः ॥ १८०१ ॥

१८०२ । अव्ययादूराधिकासन्नाः संख्येयवाचिसंख्यया ।

दशानां पदार्थानां समीपे उपदशाः । अज् वक्ष्यते (२२११) । सामीप्यप्राधान्ये त्वव्ययीभावः । उपदशम् । एवं दशानामदूरा

---

१८०० । क्वचिद्वा । क्वचिन्मध्यपदलोपो वा भवति, बाहुल्यादिति शेषः । पाप्मा पापम् । 'अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषमि'त्यमरः ॥

१८०१ । क्वचिदा । पीताम्बरसमासे क्वचिदाख्यातलोपो भवति, बाहुल्यादिति शेषः । पीताम्बर इति आख्यातस्य अस्तीत्यस्य लोपः ॥

१८०२ । अव्य । संख्येयवाचिसंख्यया सह अव्ययादूराधिकासन्नाः समस्यन्ते, स च पीताम्बरसंज्ञः । उपदशा इति । अत्र समीपि प्राधान्यं प्रथमान्तस्यान्यपदार्थत्वाभावादन्यपदार्थस्त्वाक्षेपलभ्यस्तस्माद्दशानां पदार्थानां समीपे इमे इति निर्गलितार्थ इति । अज् वक्ष्यते इति । 'संख्येयादच्, न तु बहोरि'ति सूत्रं तद्धितप्रकरणे वक्ष्यते । सामीप्येति । सामीप्यप्राधान्ये तु 'अव्ययं सप्तम्याद्यर्थेषु नित्यमि'त्यनेन अव्ययीभावो भवति, अव्ययीभावोदाहरणमाह—उपदशमिति । दशानां समीपमिति विग्रहः । 'ब्रह्मणि तु वे'त्यनेन केशवारामः । 'नान्तस्य, न त्वनीपोरि'त्यनेनन संसारस्य हरः । अधिकदशा इति दशानामधिका इति विग्रहः । आसन्नदशा इति दशानामासन्ना इति विग्रहः । संख्याने चेति संख्येये संख्याने वर्तन्ते इत्यर्थः । 'विंशत्याद्या सदैकत्वे सर्वाः

अदूरदशाः। एवमधिकदशाः, आसन्नदशाः। अष्टादशपर्यन्ताः संख्याः संख्येये वर्तन्ते, ततः पराः संख्याः संख्याने च; यथा—एको वैष्णवो, द्वौ वैष्णवौ, त्रयो वैष्णवा इत्यादि; यथा च—ऊनविंशतिर्गवामित्यादि। ततः ऊनविंशत्यादीनां समासो वा। अचि कृते चिति तेर्हरो वक्ष्यते (२२१२)। अदूरोनविंशा गावः, अदूरोनविंशतिर्गवाम् इत्यादि॥ १८०२॥

१८०३। संख्या गुणितत्वे वार्थे च।

त्रिगुणिता दश त्रिदशाः। द्वौ वा त्रयो वा द्वित्राः। अज् वक्ष्यते (२२११)। 'न चेयस्याः पीताम्बरे' वामनत्वादि—

---

संख्येयसंख्ययोरि'त्यमरः। ऊनविंशतिशब्दस्य विंशत्यन्तत्वात् एकत्वं संख्येयसंख्यानवृत्तिश्च भवतीति। अष्टादशपर्यन्ता इत्युक्तात् इति ज्ञेयम्। इत्यादीत्यादीपदेन चत्वारो वैष्णवाः, पञ्च ब्राह्मणा इत्यादि ज्ञेयम्। ऊनविंशतिर्गवामिति अत्र संख्याने वृत्तिः। इत्यादीत्यादिपदेन विंशतिर्वैष्णवानाम्, एकविंशतिर्गोपानामित्यादि ज्ञेयम्। यदा तु संख्येये वर्तन्ते तदा ऊनविंशतिर्गाव इत्यादि च ज्ञेयम्। समासो वेति यदा संख्येये वर्तन्ते तदा समासो भवति, यदा तु संख्याने वर्तन्ते तदा न समास इत्यर्थः। अचि कृत इति। 'विंशतेस्तेर्हरश्चिति' इति सूत्रं तद्धितप्रकरणे वक्ष्यते। 'अ-इद्वयस्य हरो भगवती'त्यनेनारामहरः। अदूरोनविंशा इति ऊनविंशतेरदूरा इति विग्रहः। 'संख्येयादच्, न तु बोहरि'त्यनेन अच्, तेर्हरः। अदूरोनविंशतिरिति। अत्र संख्याने वृत्तिरिति न समासः। अदूरेति पृथक् पदम्। इत्यादीत्यादिपदेन अदूरविंशा गावः, अदूरा विंशतिर्गवामित्यादि ज्ञेयम्॥

१८०३। संख्या। गुणितत्वे वार्थे च गम्यमाने संख्येयवाचिसंख्यया सह संख्या समस्यते। स च पीताम्बरसंज्ञः। त्रिदशा इति 'संख्येयादच्, नतु बहोरि'त्यनेन अच्। द्वौ वा त्रयो वा द्वित्रा इति, अत्र वार्थः संशयो न विकल्पः यदि विकल्पार्थो वा इह आश्रीयते तदा त्रयो भवन्ति

बहु-प्रेयसी कृष्णः। तत्र ते पीताम्बरा द्विविधाः— समासपदस्य अन्यपदार्थसङ्गित्वे तद्गुणसंविज्ञानाः; तदसङ्गित्वे तु अतद्गुण-संविज्ञानाश्च; यथा—धृतकृष्णनिर्माल्यमानय, दृष्टकृष्णमानय ॥ १८०३ ॥

---

इत्यत्र बहुवचनं भवत्येव यदा द्वौ भवतस्तदा बहुवचनं न स्यात्, तदा संशयो वार्थः। संशयिते चार्थे बहुवचनं भवति, यथा भवतः कति-पुत्रा इति। उक्तञ्च भाष्ये। अविज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यमिति। अत्रापि 'संख्येयादि'त्यादिनैव अच्। एवं पञ्चसा लक्षकोटा इत्यादि ज्ञेयम्। न चेति। ईयस्याः पीताम्बरे वामनत्वादि न च भवति। अयं भावः। न चेयस्याः पीताम्बरे इति निषेधात् न वामनत्वं नेयस इति निषेधात् 'ऋराम-गोपी-सर्पिरादिभ्यः' इत्यनेन न कप् च। बहु-प्रेयसी कृष्ण इति अनियूवां पश्चात् पुंस्त्वेऽपि गोपीसंज्ञामाह—ततो बहुप्रेयसीशब्दः शसं विना पुंस्यपि गोपीशब्दवदित्युक्तम्, अतो बहु-प्रेयसीशब्दस्य पुंस्त्वेऽपि गोपीशब्दवत्ता। तत्र त इति। तत्रान्यपदार्थे अन्यपदार्थसङ्गित्व इति अन्यपदार्थे सङ्गमस्त्यस्येति अन्यपदार्थसङ्गी तस्य भावस्तत्त्वं तस्मिन्। तदसङ्गित्वे तु अन्यपदार्थासङ्गित्वे तु तस्मिन् अन्यपदार्थे न विद्यते सङ्गमस्येति तदसङ्गी तस्य भावस्तत्त्वं तस्मिन्। समासस्य समासघटकीभूतपदसमुदायस्य अन्यपदार्थसङ्गित्वे सति तद्-गुणसम्बिज्ञानाः पीताम्बराः। अन्यपदार्थसङ्गित्वे तु अतद्गुणसम्बिज्ञाना इत्यर्थः। क्रमेणोदाहरणं दर्शयति—धृतकृष्णनिर्माल्यमानयेति। अत्र समासपदस्य धृतकृष्णनिर्माल्यस्य अन्यपदार्थसङ्गित्वम्, अतः पीताम्बरस्य तद्गुणसम्बिज्ञानत्वम्। दृष्टकृष्णमानय इति। अत्र समासपदस्य अन्य-पदार्थसङ्गित्वं नास्ति, अतः पीताम्बरस्य अतद्गुणसम्बिज्ञानत्वम्। तद्गुणसम्बिज्ञाना इत्यत्र अतद्गुणसम्बिज्ञाना इत्यत्र च गुणशब्दो गुणविशेषवाची गौणवाचीति च ज्ञेयं, तथा सति तस्य समासस्य गुण-स्यार्थसङ्गस्य गुणीभावस्य वा सम्यग्बिज्ञानं यत्र ते तद्गुणसम्बिज्ञानाः। न विद्यते तस्य समासस्य गुणस्यार्थसङ्गस्य गुणीभूतस्य वा सम्बिज्ञानं यत्र ते अतद्गुणसम्बिज्ञाना इति ॥

१८०४। तत्र तत्र गृहीत्वा, तेन तेन प्रहृत्य वा युद्धं वृत्तमिति च सरूपे क्रियाव्यतीहारे पीताम्बरः, तस्मादिरामस्तद्धितः स चाव्ययम्, पूर्वपदस्य त्रिविक्रमः, ईशान्तस्य त्वारामो वा विष्णुजनादौ तस्मिन्।

केशेषु केशेषु गृहीत्वा युद्धं वृत्तं केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्य युद्धं वृत्तं दण्डादण्डि। युद्धौपाधिकत्वेऽपि—'हस्ताहस्ति व्यासज्जताम्' इति विस्तरः। मुष्टामुष्टि, मुष्टीमुष्टि; वाहा-

१८०४। तत्र। तत्र तत्र गृहीत्वा युद्धं वृत्तमित्यर्थे तेन तेन प्रहृत्य युद्धं वृत्तम् इत्यर्थे च सरूपे क्रियाव्यतीहारे गम्यमाने पीताम्बरो भवति। युद्धं वृत्तमिति युद्धमित्युक्तं, कर्मणो यदि कर्तृत्वं स्यात्तदा भिन्नकर्तृकत्वात् क्तो न स्यात्। वृत्तमिति अन्तर्भूतण्यर्थत्वात् वर्तितमित्यर्थः। सरूप इति समानरूप इत्यर्थः। तस्मादुत्तरे इरामस्तद्धितो भवति, स चाव्ययं भवति। तस्मादिति पीताम्बर-सिद्धान्नाम्न इत्यर्थः। स इति इरामान्त इत्यर्थः। पूर्वपदस्य त्रिविक्रमो भवति। ईशान्तस्य पूर्वपदस्य तु विष्णुजनादौ तस्मिन् परे आरामो वा भवति। तस्मिन्निति इरामान्ते इत्यर्थः। आरामो वा भवतीति अन्तस्य स्थाने आरामो वा भवतीत्यर्थः। केशेष्विति। अत्र परस्परकेशग्रहणरूपः सरूपः क्रियाव्यतिहारो गम्यते। केशाकेशि इति। इरामे कृते 'अ-इद्वयस्य हरः' इत्यनेन अरामहरः, पूर्वपदस्य त्रिविक्रमः अव्ययत्वात् विष्णुभक्तिमहाहरः। दण्डैश्चेति। अत्र परस्परदण्डकरणकप्रहरणरूपः सरूपः क्रियाव्यतिहारो गम्यते। दण्डादण्डीति पूर्ववत्। विस्तरमतमाह—युद्धौपाधिकत्वेऽपीति। युद्धस्य औपाधिकत्वेऽपीति पीताम्बरादिकं भवतीति। औपाधिकत्वेऽपीत्यस्य औपचारिकत्वेऽपीति फलितार्थः। तदुक्तमुदाहरणमप्याह—हस्ताहस्ति व्यासज्जेतामिति। मुष्टामुष्टि इति मुष्टिभिश्च मुष्टिभिश्च प्रहृत्य युद्धं वृत्तमित्यर्थः। अत्र इरामे कृते 'अ-इद्वयस्य हरः' इत्यनेन इरामहरः॥ पूर्वपदान्तस्य इरामस्य स्थाने आरामः।

बाहवि बाहूबाहवि । नेहात्वम्—अस्यसि । युद्धमिति किम् ? हस्तेन हस्तेन सख्यं वृत्तम् । सरूप इति किम् ? हलैश्च मुसलैश्च इत्यत्र न स्यात् ॥ १८०४ ॥

१८०५ । द्विदण्ड्यादयश्च ।

इमे चार्थविशेषेषु निपात्यन्ते । द्वाभ्यां दण्डाभ्यां प्रहरति द्विदण्डि प्रहरति, उभाहस्ति, उभयाहस्ति । एवमुभाञ्जलीत्यादि ॥ १८०५ ॥

१८०६ । खड्गकर्णदन्तैश्च तथा ।

---

आरामाभावपक्षे पूर्वपदस्य त्रिविक्रम एव मुष्टीमुष्टीति । बाहाबाहवीति बाहुषु बाहुषु गृहीत्वा युद्धं वृत्तमिति बाहुभिश्च बाहुभिश्च प्रहृत्य युद्धं वृत्तमिति वा अर्थः । अत्र इरामे कृते 'उद्वयस्य गोविन्दो' न तु धातोर्न च स्त्रीप्रत्यये इत्यनेन गोविन्दः, पूर्वपदान्तस्य उरामस्य स्थाने आरामः । आरामाभावपक्षे पूर्वपदस्य त्रिविक्रमः बाहूबाहवीति । नेहात्वमिति विष्णुजनादित्वाभावादिति शेषः । अस्यसीति । असिभिश्च असिभिश्च प्रहृत्य युद्धं वृत्तमित्यर्थः । असिः खड्गः अत्र इरामे कृते इरामहरः । हस्तेन हस्तेनेति प्रहृत्येति शेषः । हलैश्च मुशलैश्चेति प्रहृत्य युद्धं वृत्तमिति शेषः । अत्र परस्परप्रहरणरूपः क्रियाव्यतिहारो गम्यत एव, किन्तु तस्य सारूप्यं नास्तीति न समासः ॥

१८०५ । द्विद । वृत्तिमाह—इमे चेति । अर्थविशेषेषु वाच्येषु इमे द्विदण्ड्यादय इप्रत्ययान्ते निपात्यन्ते । द्वाभ्यां दण्डाभ्यामिति द्विदण्डीत्यस्यार्थकथनम् । द्विदण्डीत्यत्र पूर्वपदस्यारामत्रिविक्रमाभावो निपातफलम् । उभाहस्तीति उभाभ्यां हस्ताभ्यामित्यर्थः । प्रहरतीति शेषः । उभयाहस्तीति उभयेन हस्तेनेत्यर्थः । अत्रोभशब्दस्योभयादेशो वेति । उभाञ्जलीति उभाभ्यामञ्जलीभ्यामित्यर्थः, तर्पयतीति शेषः । इत्यादीत्यादिपदेन उभयाञ्जलीति ॥

१८०६ । खड्ग । उदाहरणानि यथा द्विखड्गि, उभाखड्गि उभया-

नेह—द्विदण्डा शाला। गणपाठात् समासान्तरेऽपि—निकुच्य-कर्णि धावति, कर्णौ निकुच्येत्यर्थः। प्रोह्यपादि हस्तिनं वाहयति ॥ १८०६ ॥

१८०७। सहशब्दस्तृतीयान्तेनैकक्रियायोगे।

रामेण सह सहरामो वर्तते गच्छति वा कृष्णः। अत्र सहस्य स-भावो वक्ष्यते ( १९५९ ), सरामः। एकक्रियायोगाभावे तु—सह शिशुना दधि मथ्नाति यशोदा, विद्यमानार्थोऽत्र सहशब्दः; शिशौ विद्यमाने सति इत्यर्थः। कथं सकर्मकः सरति, सलोमकः

---

खड्ग, उभाकर्णि उभयाकर्णि उभादन्ति इति। नेहेति क्रियाविशेषण-त्वाभावादिति शेषः। द्विदण्डेति द्वौ दण्डौ यस्यामिति विग्रहः। शाला गृहम्। गणपाठादिति द्विदण्ड्यादिगणपाठादित्यर्थः। समासान्त-त्वेऽपीति समासभिन्नेऽपि इप्रत्ययान्तेन साधुरिति शेषः। निकुच्य-कर्णीति निकुच्य कर्णाविति विग्रहे 'मयूरादयो व्यंसकादिभिरि'त्य-स्यान्तर्गणे अत्रयाच्छेत्यनेन निपातात् श्यामरामः। प्रोह्यपादीति पादौ प्रोह्येत्यर्थः। प्रोह्य पादाविति विग्रहे पूर्वोक्तसूत्रेण श्यामरामः॥

१८०७। सह। एकक्रियायोगे सति तृतीयान्तेन सह सहशब्दः समस्यते। स च पिताम्बरसंज्ञः। रामेण सहेति विग्रहः, सहरामः वर्तते गच्छति वा कृष्ण इति। अत्र एकक्रियायां कृष्णस्य रामस्य च योगः। सभावो वा वक्ष्यते इति 'पीताम्बरे वे'त्यनेनेति शेषः। विद्यमानार्थोऽत्र सहशब्द इति। ततश्च सह शिशुनेति शिशौ विद्यमाने सति इत्यर्थः। कथमिति। सहरामः वर्तत इत्यत्र यथा वर्तत इत्यनेन सहरामस्यापि योगोऽस्ति तथा सकर्मको नन्दतीत्यत्र नन्दतीत्यनेन सह कर्मणो योगो नास्ति, तर्हि कथं समासो भवत्वित्ययमत्र विरोधः। सिद्धान्तमाह—कर्मणा सहेति। वर्तत इत्यनेन सह अन्यपदार्थस्य कर्मणश्च योगोऽस्तीति समासो भवत्येव। सकर्मक इति क्वचिदाख्यातलोप इत्युक्तम्, अतोऽत्र वर्तत इत्यस्य लोपः। नन्दतीति नन्दतीत्यनेन सहेत्यर्थः। पश्चादन्वय इति

पचति ? कर्मणा सह यो वर्तते, स सकर्मकः ; सरतीति पश्चादन्वयः ॥ १८०७ ॥

१८०८। दक्षिणपूर्वादयस्तदन्तराले।

दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा विदिक्। देवतासम्बन्धे—ऐन्द्रयाम्यादयस्तु नेष्यन्ते ॥ १८०८ ॥

इति पीताम्बरः।

१८०९। इतरेतरयोग-समाहारयो रामकृष्णः।

चशब्दस्य समुच्चयान्वाचयेतरेतरयोग-समाहाररूपार्थश्चत्वारः। तेषूद्भूतावयवसंख्य इतरेतरयोगः ; तिरहितावयव-संख्यः संहति-

---

सकर्मक इत्यस्येति शेषः। पश्चादन्वय इत्यनन्तरं क्वचित् क्वचित् पुस्तके तुल्ययोगस्य प्रायिकत्वादिति भाव इति। तदनन्तरं सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानेषु दशसु पुत्रेष्वित्यर्थः। इति च दृश्यते किन्तु तदसङ्गतमेवेति ज्ञेयम्॥

१८०८। दक्षि। तदन्तराले वाच्ये दक्षिणपूर्वादयो निपात्यन्ते। तदन्तराल इति तन्मध्य इत्यर्थः। आदिग्रहणात् पश्चिमदक्षिणा उत्तरपश्चिमा पूर्वोत्तरा इति पूर्वदक्षिणेत्यादि च ज्ञेयम्। देवतेति। ऐन्द्राश्च याम्याश्च दिशोर्यदन्तरालमित्यत्र ऐन्द्रयामेति नेष्यते। ऐन्द्री पूर्वा दिक् ; यामी दक्षिणा दिक्। आदिग्रहणात् यामवारुणी, वारुणकौवेरीप्रभृतयोऽपि नेष्यन्ते॥

१८०९। इत। इतरेतरयोगसमाहारौ चशब्दस्यैवार्थाविति प्रतिपादयति चशब्दस्येति। समुच्चयान्वाचयेतरेतरयोगसमाहररूपार्थश्चत्वार इत्यत्र समुच्चयान्वाचयेतरेतरयोग-समाहाररूपाश्चत्वारोऽर्था इत्येव पाठो ज्ञेयम्। यथावत् स्थितपाठे तु रूपाः स्वरूपा एवार्थाः रूपार्था अन्वाचयादयश्च ते रूपार्थाश्चेति विग्रहः। तेषु समुच्चयादिषु। उद्भूतेति उद्भूता प्रकटीभूता अवयवसंख्या यत्रेति विग्रहः। इतरेति। इतरस्मिन्नितरस्य योग इतरेतरयोगः इत्यत्र ज्ञेय इति शेषः। तिरोहितेति। तिरोहिता अस्पष्टीभूता अवयवसंख्या यत्रेति। संहतीति। संहतिः

प्रधानः समाहारः। तयोर्गम्ययोः पदद्वयस्य पदानां वा समासो वाच्यः, स च रामकृष्णसंज्ञः। द्वन्द्व इति प्राञ्चः। तत्रेतरेतरयोगे प्रायः परवदेव लिङ्गम्। तत्र रामश्च कृष्णश्चेति विग्रहे रामकृष्ण इति द्वाविति चशब्दार्थः, रामकृष्णौ। एवं बहुत्वे—रामकृष्ण-श्रीदामानः। समुच्चये तु—रामश्च भुङ्क्ते कृष्णश्च वा, रामः कृष्णः प्रत्येकमित्यर्थः। अन्वाचये तद्वदर्थत्वेऽप्यन्तिमस्यानाग्रहविषयत्व-मिति भेदः। कृष्णमनुगच्छ बलञ्च पश्य इतिवत्। रामञ्च कृष्णञ्च पश्येत्यादौ सापेक्षत्वात् न समासः। किञ्च, द्वन्द्वात् परः पूर्वो वा श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते। रामकृष्ण-सौन्दर्यम्, अ-इ-द्वयम् ॥ १८०९ ॥

## १८१०। समाहारे ब्रह्मत्वमेकत्वञ्च।

प्रधानं यत्रेति विग्रहः। संहतिर्मिलनम्। तयोः इतरेतरयोगसमाहारयोः। चार्थे द्वन्द्व इति भाषावृत्तिसूत्रम्। तत्रेति। परवदेव लिङ्गं राम-कृष्ण-कृष्णपुरुषयोरिति वक्ष्यते। परवदिति परपदवदित्यर्थः। रामकृष्ण इति द्वाविति चशब्दार्थ इत्यनेनन उद्भूतावयवसंख्यत्वं व्यञ्जितम्। रामकृष्णश्रीदामान इति। रामश्च कृष्णश्च श्रीदामा चेति विग्रहः। आनु-षङ्गिकतया उक्तौ समुच्चयान्वाचयौ च विवृण्येति समुच्चये त्विति। रामश्च भुङ्क्त इति रामो भुङ्क्ते कृष्णश्च भुङ्क्त इत्यर्थः। रामः कृष्णश्चेति सुन्दर इति च ज्ञेयम्। रामः कृष्णः प्रत्येकमित्यनेन प्रत्येकं समन्वायकम्। समुच्चय इति समुच्चयलक्षणं ज्ञापित-मिति ज्ञेयम्। तद्वदर्थत्वेऽपि प्रत्येकं समन्वायकत्वेऽपि। अन्तिमस्येति अन्तोक्तस्येत्यर्थः। तद्वदर्थत्वादेव अन्वाचये पृथगुदाहरणं न दर्शितं, किन्तु दृष्टान्तेन स्पष्टयति कृष्णमनुगच्छेति ; अत्र अन्तिमस्य आग्रहविषत्वा-भावः। किञ्चेति उदाहरणमाह—रामकृष्णेति। रामकृष्णयोः सौन्दर्यमिति विग्रहः, रामस्य कृष्णस्य च सौन्दर्यमित्यर्थः। उदाहरणान्तरमाह—अ-इद्वयमिति अद्वयम् इद्वयञ्च इत्यर्थः॥

१८१०। समा। समाहारे सति ब्रह्मत्वमेकत्वञ्च भवति।

वक्ष्यमाणापवादोऽयं, यथा समाहारः। प्रभुरयम् ॥१८१०॥

१८११। शाखाभेदानां तद्विदाञ्चानुवादे स्थेणोर्भूतेशप्रयोगे।

प्रत्यष्ठात् कठकौथुमम्, उदगात् कठकालापम्, सा सा शाखा तद्वेत्ता वा पूर्वोक्तमेव कथयामासेत्यर्थः॥ १८११॥

१८१२। यजुर्विहित-ससोमक-यागानामक्लीवानाम्।

---

वक्ष्यमाणेति। 'उत्तरपदवल्लिङ्ग रामकृष्ण-कृष्णपुरुषयोरि'ति वक्ष्यमाणसूत्रं तदपवादोऽयं योगः। उदाहरणं दर्शयति-यथेति। अधिकारसूत्रमेतत्॥

१८११। शाखा। अनुवादे गम्यमाने स्थेणोर्भूतेशप्रयोगे सति शाखाभेदानां तद्विदाञ्च समाहारो भवति। तद्विदामिति शाखाभेदविदामित्यर्थः। प्रमाणान्तरावगतस्यार्थस्य शब्देन सङ्कीर्तनमनुवाद इत्यर्थः। शाखा वेदैकदेशः। प्रत्यष्ठात् कठकौथुममिति। कठश्च कौथुमश्चेति विग्रहः। कठशब्देन कौथुमशब्देन च शाखाभेदस्तत्तद्वेत्ता च उच्यते। कठेन प्रोक्तमधीते इत्यर्थे कलापिवैशम्पायनयोरन्तेवासिभ्यश्चेत्यनेन णिनिः, ततः 'कठचरकाभ्यां महाहरः' इत्यनेन तस्य महाहरो भवति इति कठशब्दस्य शाखाविद्वाचित्वमपि। प्रत्यष्ठादिति प्रतिपूर्वस्य स्थाधातोर्भूतेशप्रयोगः। उदगात् कठकालापमिति। उदगादिति उत्पूर्वस्य इण्धातोर्भूतेशप्रयोगः। उदाहरणद्वयस्यार्थमाह—सा सा शाखेति। अनुवादे चरणानामिति भाषवृत्तिसूत्रम्। 'स्थेणोर्लुङि शाखावाननुवादः' इति जुमरसूत्रम्। अत उभयमतदर्शनात् शाखाभेदानां तद्विदाञ्चेत्युक्तमिति ज्ञेयम्॥

१८१२। यजु। अक्लीवानां यजुर्विहित-ससोमकयागानां समाहारो भवति। यजुर्विहितेति। ससोमकाश्च ते यागाश्चेति ससोमकयागाः, यजुर्विहिताश्च ते ससोमकयागाश्चेति विग्रहः। ससोमका इति सोम-

अर्काश्वमेधम् । क्लीवे तु—राजसूयवाजपेये ॥ १८१२ ॥

१८१३ । समीपाध्ययनानाम् ।

पदकक्रमकम् ॥ १८१३ ॥

१८१४ । अप्राणीद्रव्यजातीनाम् ।

आराशस्त्रि ; तुलसीमरुवकम् । अजातित्वे— नन्दकपाञ्चजन्यौ । जातित्वेऽपि नियतद्रव्यविवक्षायां न— एतौ तुलसीमरुवकौ ।१८१४॥

---

पानोपलक्षिता इत्यर्थः । अर्काश्वमेधमिति । अर्कश्च अश्वमेधश्चेति यागविशेषस्य अर्कस्याश्वमेधस्य च यजुर्विहितत्वं ससोमकत्वञ्चास्तीति समाहारः । राजसूयवाजपेये इति । यागविशेषयोर्यजुर्विहितत्वं ससोमकत्वञ्चास्ति, किन्तु क्लीवत्वात् न समाहारः । यजुर्विहितेति किम् ? इषुवज्रौ एतौ सामवेदविहितौ । ससोमकेति किम् ? दर्शपौर्णमासौ ॥

१८१३ । समी । समीपं प्रत्यासन्नम् अध्ययनं येषां तेषां समाहारो भवति । पदकक्रमकमिति । पदमधीते वेद वा, क्रममधीते वेद वा इत्यर्थे 'क्रमादिभ्यो वुरि'त्यनेन वुः, ततः पदकश्च क्रमकश्चेति ॥

१८१४ । अप्रा । मुखनासिकाभ्यां यो वायुर्निःसरति स प्राणः सोऽस्तेषामिति प्राणिनः । न प्राणिनः अप्राणिनः । अप्राणिनश्च ते द्रव्यजातयश्चेति अप्राणिद्रव्यजातयस्तेषाम्, अप्राणिद्रव्यजातीनां समाहारो भवति । अप्राणिजातीनामिति प्राणिव्यतिरिक्तद्रव्यजातिवाचकानामित्यर्थः । आराशस्त्रीति । 'आरा चर्मप्रभेदिका' इत्यमरः । 'स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका' इति चामरः । तुलसीमरुवकमिति । मरुवको जम्बीरविशेषः । नन्दकपाञ्चजन्याविति नन्दको हरेः खड्गः, पाञ्चजन्यस्तस्य शङ्खः, संज्ञाशब्दावेतौ न तु जातिवाचिनौ । अप्राणीति किम् ? ब्राह्मणक्षत्रियौ । द्रव्येति किम् ? रूपरसगन्धस्पर्शाः । रूपादयो गुणजातिवचनाः । जातित्वेऽपीति नियतद्रव्यविवक्षायां नेति बाहुल्यादिति शेषः । एताविति । त्रीणि वदरामलकानि सन्ति इह भाण्डे इति जुमरः ॥

१८१५। नदीदेश-नगराणां भिन्नलिङ्गानाम्।

गङ्गाशोणं, शोणनर्मदं, कुरुकुरुक्षेत्रं, मथुरापाटलिपुत्रम् ॥ १८१५ ॥

१८१६। नित्यवैरिणाम्।

गरुड़नागम्। कार्यवैरे तु—देवासुराः ॥ १८१६ ॥

१८१७। कारूणाम्।

तक्षायस्कारम् ॥ १८१७ ॥

१८१८। शूद्राणामबहिष्कृतानाम्।

---

१८१५। नदी। भिन्नलिङ्गानां नदीदेशनगराणां समाहारो भवति। नदीदेशनगराणामिति ज्ञापकात्तु नदाश्च नद्यश्च नद्य इति वक्ष्यते। गङ्गाशोणमिति शोणो नदभेदः। शोणनर्मदमिति नर्मदा नदीविशेषः। कुरुश्च कुरुक्षेत्रञ्च कुरुकुरुक्षेत्रं देशोदाहरणमेतत्। मथुरा च पाटलिपुत्रश्च मथुरापाटलिपुत्रं, पाटलिपुत्रो नगरविशेषः। भिन्नलिङ्गानामिति किम् ? गङ्गायमुने, कर्णाटवरेन्द्रौ, अयोध्याकाश्यौ ॥

१८१६। नित्य। नित्यं वैरं विद्यते येषां ते नित्यवैरिणः तेषां नित्यवैरिणां समाहारो भवति। वैरं विरोधः। ततश्च नित्य-विरोधिनामित्यर्थः। गरुड़नागमिति नागः सर्पः। एवम् अश्वमहिषम्, अहिनकुलमित्यादि च ज्ञेयम्। देवासुरा इति एषां नैमित्तिको विरोध न समाहारः। एवं कुरुपाण्डवा इत्यादि च ज्ञेयम्।

१८१७। कारू। कारूणां समाहारो भवति। कारुः शिल्पी। तक्षायस्कारमिति तक्षा काष्ठतट्, अयस्कारः, कर्मकारः। तक्षायस्कार-मिति 'शूद्राणामबहिष्कृतानामि'त्यनेनापि सिध्यति, किन्तु बहिष्कृत-कारूणामपि चर्मकारादीनां समाहारार्थमेतत् सूत्रं कृतमिति ज्ञेयम् ॥

१८१८। शूद्रा। अबहिष्कृतानां शूद्राणां समाहारो भवति।

रजकतन्तुवायम् । नेह—चाण्डालमृतपाः ॥ १८१८ ॥

१८१९ । गवाश्वादीनाम् ।

गवाश्वं गवाविकम् ; अवश्चानयोर्नित्यः ; गवैड़कम्, अजाविकम्, अजैड़कं, कुब्जवामनं, पुत्रपौत्रं, दर्भशरं, भागवतीभागवतं, स्त्रीकुमारं, दासीमाणवकं, दासीदासं, शाटीप्रच्छदम्, उष्ट्रखरं, श्वचाण्डालं, मूत्रपुरीषमित्यादि ॥ १८१९ ॥

१८२० । प्राण्यङ्गानाम् ।

---

अबहिष्कृतानामिति अपतितानामित्यर्थः । 'येन भुक्ते विना पात्रं संस्कारेण न शुध्यति । स एव बहिष्कृतः शूद्रो ज्ञातव्यः कथ्यते बुधैः । इति मे यान्ति यान्ति दिवसाः समं रजकनापितैरि'ति त्वेकशेषेणेति ज्ञेयम् । मृतपो हड्डिपः ॥

१८१९ । गवा । गवाश्वादीनां समाहारो भवति । गोश्च अश्वश्च गवाश्वम् । गवाविकमिति अविको मेषः । 'अवयः शैलमेषार्काः' इति नानार्थवर्गः । अवश्चेति । अनयोरिति सप्तमीद्विवचनान्तम् । अनयोरुदाहरणयोरित्यर्थः । अवश्च नित्य इति बाहुल्यादिति शेषः । तस्माद् 'गोरोरवः सर्वेश्वरे वे'ति वक्ष्यमाणसूत्रेण नात्राव इति भावः । गवैड़कमिति । एड़का मेषः । अत्र तु अव इत्यनेन अवः । 'गोरोरवः सर्वेश्वरे वे'त्यनेन पक्षे अवे कृते गवैड़कमिति च ज्ञेयम् । अजाविकमिति । अजश्छागः, वामनः खर्वः, दर्भः कुशः, माणवकः शिशुः, प्रच्छदः सर्वाच्छादकवस्त्रम् । खरो गर्धभः, श्वा कुक्कुरः, मूत्रं प्रस्रावः, पुरीषं विष्ठा, इत्यादीत्यादिपदेन मांसशोणितमित्यादि च ज्ञेयम् । 'वृक्ष-मृग-शकुनि-तृण-धान्यविशेषाणाञ्च वा बहुत्वे' इत्यनेन विकल्पे प्राप्ते नित्यतार्थं दर्भशरमिति गवाश्वादिषु पठितमिति ज्ञेयम् । गणपाठादेव भागवतीभागवतमित्यत्र दासीदासमित्यत्र च 'लक्ष्म्या सहोक्तौ पुरुषोत्तमस्य तन्मात्रं चेद्विशेषः' इत्यनेन एकशेषो न भवतीति च ज्ञेयम् ॥

१८२० । प्राण्य । प्राण्यङ्गानां समाहारो भवति । प्राणयोगात्

पाणिपादम् ॥ १८२० ॥

१८२१। तूर्यवादकानाम्।

मार्दङ्गिकपाणविकम् ॥ १८२१ ॥

१८२२। सेनाङ्ग-क्षुद्रजन्तुफलानां बहुत्वे।

हस्तिनश्च अश्वाश्च हस्त्यश्वम्।

क्षुद्रजन्तुरनस्थिः स्यात् सहस्रेणाञ्जलिर्यतः।
यद्गोचर्मप्रमाणस्य हननान्नैव पातकम्।
अशोणितः क्षुद्रजन्तुर्नकुलावधिः कथ्यते ॥

---

अङ्गमपि प्राण्येव अतः 'अप्राणिद्रव्यजातीनामि'त्यनेनाप्राप्ते विधानम्। ननु कथं मुखनासिकाभ्यां यो निष्क्रामति वायुरिति प्रयोग इति चेत्तत्रोच्यते—मुखसहिते नासिके मुखनासिके इति समासः करणीयः। पुटद्वयभेदादत्र द्विवचनम्। मुखनासिकाभ्यामिति दधिपय आदिषु पाठादिति तु रक्षितः ॥

१८२१। तूर्य। वादकानां समाहारो भवति। तूर्येति वाद्यवादकानामित्यर्थः। मार्दङ्गिकपाणविकमिति मृदङ्गवादनं शिल्पमस्य पणववादनं शिल्पमस्य इत्यर्थः। 'तदस्य शिल्पमि'त्यनेन माधव-ठः। पणवो वाद्यविशेषः। मार्दङ्गिकपाणविकमिति 'कारूणामि'त्यनेनापि सिध्यति, किन्तु अकारूणामपि तूर्यवादकानां समाहारार्थमेतत् सूत्रं कृतमिति ज्ञेयम्। अतो मृदङ्गवादकपणववादकमिति ॥

१८२२। सेना। सेनाङ्गादीनां बहुत्वे समाहारो भवति। इष्यन्ते पृतनाङ्गानि हस्त्यश्वरथपत्तय इति कात्यायनः। 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमि'त्यमरः। अतः सेनाङ्गपदेन खरोष्ट्रशिरस्त्रादयो न गृह्यन्ते। क्षुद्रजन्तोः पाञ्चविध्यं स्मृतिवाक्येनाह—क्षुद्रजन्तुरिति। यस्य अस्थिर्न विद्यते। १ चर्म-शोणित-मांसमात्रमस्ति स क्षुद्रजन्तुः स्यात्। २ यतो यस्य सहस्रेणाञ्जलिरिति पूर्यते इति

इति स्मृतेः। दंशमशकं, वदरामलकम् ॥ १८२२ ॥

१८२३। वृक्ष-मृग-शकुनि-तृण-धान्यविशेषाणाञ्च वा बहुत्वे।

प्लक्षवटं, रुरुपृषतं, हंसचक्रवाकं, कुशकाशं, व्रीहियवम्। पक्षे—प्लक्षवटा इत्यादि ॥ १८२३ ॥

१८२४। व्यञ्जनानां वा।

दधिघृतं, दधिघृते ॥ १८२४ ॥

---

शेषः स क्षुद्रजन्तुः स्यात् ।। ३ यद्यस्य गोचर्मप्रमाणस्य हननात् पातकं नैवास्ति, स च क्षुद्रजन्तुः स्यात्। ४ अशोणित इति यस्य आत्मीयं शोणितं नास्ति स च क्षुद्रजन्तुः स्यात् ।। ५ नकुलादिश्च क्षुद्रजन्तुः स्यादिति पाञ्चविध्यम्। नकुलावधि इति सर्पोपसंग्राहकं लक्षणम् ।। शतं गावो वृषश्चैको यत्र तिष्ठन्त्ययन्त्रिताः। गोचर्ममात्रां तां भूमिं प्रवदन्ति मनीषिणः ।। इति शास्त्रान्तरम्। दंशाश्च मशकाश्च दंशमशकम्। 'दंशस्तु वनमक्षिका' इत्यमरः। बदराणि च आमलकानि च वदरामलकम्। फलोदाहरणमेतत्। बहुत्वे इति किम्? हस्त्यश्वौ, दंशमशकौ, वदरामलके ।।

१८२३। वृक्ष। वृक्षादीनाञ्च बहुत्वे समाहारो वा भवति। प्लक्षाश्च बटाश्च प्लक्षवटम् एवं सर्वत्र ज्ञेयम्। प्लक्षः पर्कटी। रुरुपृषतमिति रुरुः पृषतश्च मृगभेदः। हंसचक्रवाकमिति शकुन्युदाहरणम्। शकुनिशब्दः पक्षिवाचकः। कुशकाशमिति तृणोदाहरणम्। व्रीहियवमिति धान्यविशेषोदाहरणम्। 'माषादयः शमीधान्ये शूकधान्ये यवादयः' इत्यमरः। इत्यादीत्यादिपदेन रुरुपृषताः। हंसचक्रवाका इत्यादि च। बहुत्व इति किम्? प्लक्षवटावित्यादि ।।

१८२४। व्यञ्ज। व्यञ्जनवाचिनां समाहारो वा भवति। दधिघृतमिति अत्र 'अप्राणिद्रव्यजातीनामि'त्यनेन नित्यं समाहारः स्यादिति विकल्पविधानं कृतम् ।।

१८२५। विरोधिनामद्रव्यानां वा।

सुखदुःखं, सुखदुःखे ॥ १८२५ ॥

१८२६। न दधिपय आदीनाम्।

दधिपयसी, मधुसर्पिषी, सर्पिर्मधुनी, शुक्लकृष्णौ, ऋक्सामे, वाङ्मनसे इत्यादि। अनयोरत् तद्धितः ॥ १८२६ ॥

---

१८२५। विरो। अद्रव्याणां विरोधिनां समाहारो वा भवति। सुखदुःखमिति सुखदुःखयोर्गुणयोः सहानवस्थानलक्षणेन विरोधेन विरोधित्वम्। एवं शीतोष्णं शीतोष्णे इत्यादि च ज्ञेयम्। विरोधिनामिति किम्? कामक्रोधौ। क्रुद्धोऽपि सन् काममाचरति इति नानयोः परस्परविरोधित्वम्। अद्रव्याणामिति किम्? शीतोष्णे उदके ॥

१८२६। न दधि। दधिपय आदीनां समाहारो न भवति। दधिपयसी इति। अत्र व्यञ्जनत्वात् समाहारो वा स्यादिति निषेधविधानम्। मधुसर्पिषी सर्पिर्मधुनी इति अत्रापि व्यञ्जनत्वात् समाहारो वा स्यात्। 'धर्मार्थादिषु यथेष्टमि'त्यनेन यथेष्टं पूर्वनिपातः। शुक्लकृष्णाविति अत्र 'विरोधिनामद्रव्याणां वे'त्यनेन समाहारः स्यादिति निषेधविधानम्। ऋक्सामे, वाङ्मनसे इत्यत्र समाहारनिषेधान्न समाहारे द्वन्द्वः किन्तु इतरेतरयोग एव। समाहारे द्वन्द्वे सति 'समाहारे ब्रह्मत्वमेकत्वञ्च' इत्यनेन ब्रह्मत्वमेकत्वञ्च स्यात्। इत्ययं प्रकरणाभिप्रायः। येषां समाहारो नित्यं विहितस्तेषां समाहार एव द्वन्द्वो भवति न तु इतरेतरयोगे। येषां समाहारो विकल्पेन विहितस्तेषां समाहारे इतरेतरयोगे च द्वन्द्वो भवति। येषां समाहारो निषिद्धस्तेषाम् इतरेतरयोग एव द्वन्द्व भवति, न तु समाहारो येषांतु समाहारविषये विधिनिषेधौ नस्तः, तेषां समाहारे इतरेतरयोगे च द्वन्द्वो भवति इति। इत्यादीत्यादिपदेन स्वर्गापवर्गौ, श्रद्धामेधे, उदूखलमुषले, अध्ययनतपसी, दीक्षातपसी, आद्यवसाने इत्यादि च ज्ञेयम्। अनयोरिति अन्तिमयोरुदाहरणयोरित्यर्थः। अत् तद्धित इत्यत्र

१८२७। संख्याप्रयोगे तु न

दश मार्दङ्गिकपाणविकाः ॥ १८२७ ॥

१८२८। विभाषा समीपे।

उपदशं दन्तौष्ठम् ; उपदशा दन्तौष्ठाः ॥ १८२८ ॥

१८२९। सर्वेऽपि रामकृष्णा विभाषयैकवद्भवन्ति।

यथा 'ह्रस्वदीर्घप्लुतः' मतं इति पाणिनीयसूत्रम् ॥ १८२९ ॥

प्रसङ्गात् समासान्तरलिङ्गान्यपि निरूप्यन्ते

१८३०। उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोः।

---

टस्तद्धित इति पाठः सभ्यः, टप्रकरण एव 'धेन्वनडुह-स्त्रीपुंसादयश्चे'ति सूत्रस्य वक्ष्यमाणत्वात्। अथवा टप्रत्ययस्य अरामविशेषत्वेनैव अदित्युक्तम् ॥

१८२७। संख्या। संख्याप्रयोगे च सति समाहारो न भवति। दश मार्दङ्गिकपाणविका इत्यत्र 'तूर्यवादकानामि'त्यनेन समाहारः स्यात् इति निषेधः कृतः ॥

१८२८। विभा। समीपेऽर्थे संख्याप्रयोगे सति विकल्पेन समाहारः स्यात्। उपदशं दन्तौष्ठमिति। अत्र 'प्राण्यङ्गानामि'त्यनेन प्राप्तस्य समाहारस्य 'संख्याप्रयोगे तु ने'त्यनेन निषेधः स्यात्। अतो 'विभाषा समीपे' इति कृतम्। उपदशमिति, अत्र सामीप्यप्राधान्यात् अव्ययीभावः। 'ब्रह्मणि तु वे'त्यनेन केशवारामः। 'नान्तस्य नत्वनीपोरि'त्यनेन संसारस्य हरः। सामीप्यप्राधान्यात् एकवचनमेव। उपदशा इति। अत्र समीपिप्राधान्यात् 'अव्ययादूराधिकासन्नाः संख्येयवाचि संख्यये'त्यनेन पीताम्बरः। 'संख्येयादच्, न तु बहोरि'त्यनेन अच् संसारहरः। समीपिप्राधान्यात् बहुवचनम् ॥

१८२९। सर्वे। व्यक्तार्थमेतत्। पाणिनीयसूत्रमुदाहरणत्वेन दर्शयति—यथेति। प्रसङ्गादिति लिङ्गस्येति शेषः ॥

१८३०। उत्त। रामकृष्णे कृष्णपुरुषे च उत्तरपदवल्लिङ्गं

तत्र रामकृष्णे—राधाकृष्णाविमौ, कृष्णराधे इमे। कृष्ण-पुरुष—अर्धामलकी, कृष्णभार्या, मुखचन्द्रः॥ १८३०॥

१८३१। त्रिरामी-प्राप्तापन्नालंपूर्वगतिसमासेषु-वाच्यलिङ्गतैव।

पञ्चकपालः सूपः, प्राप्तजीविकः, आपन्नजीविकः, अलंकुमारिः, प्रतिगतोऽक्षं प्रत्यक्षः कृष्णः, निर्मधुपुरिः॥ १८३१॥

---

भवति। राधाकृष्णाविति अत्र उभयपदार्थप्रधानत्वेऽपि उत्तरपदवदेव लिङ्गम्। एवं कृष्णराधे इति अर्धामलकीति अर्धम् आमलक्या इति विग्रहे। 'अर्धं समविभागे वे'त्यनेन समासः। अत्र पूर्वपदार्थप्रधानत्वेऽपि उत्तरपदवल्लिङ्गम्। कृष्णभार्येति कृष्णस्य भार्येति विग्रहः। अत्र उत्तरपदार्थप्रधानत्वादपि उत्तरपदवल्लिङ्गं भवति, अत उदाहरणमिदं न बहुप्रयोजनकमिति ज्ञेयम्। मुखचन्द्र इति मुखं चन्द्र इवेति विग्रहे 'उपमेयं व्याघ्रादिभिरुपमानैरि'त्यनेन श्यामरामः। अत्र पूर्वपदार्थप्रधानत्वेऽपि उत्तरपदवल्लिङ्गम्॥

१८३१। त्रिरा। त्रिरामीसमासे प्राप्तापन्नालंपूर्वसमासे गतिसमासे च वाच्यलिङ्गतैव भवति, नतूत्तरपदवल्लिङ्गमिति शेषः। प्रादीनां क्रियायोग एव हि गतिसंज्ञेति पूर्वमुक्तम्। पञ्चकपालः सूप इति। पञ्चसु कपालेषु संस्कृत इति 'दिक्संख्ये तद्धितार्थोत्तरपदसमाहारेष्वि'त्यनेन त्रिरामी। 'तत्र संस्कृतं भक्ष्यं-चेदि'त्यनेन केशवणः। 'त्रिरामीतः सर्वेश्वरादिप्राग्दिव्यतीयस्य महाहरोऽनपत्ये' इत्यनेन तस्य महाहरः। अतः कपालशब्दस्य ब्रह्मत्वं ज्ञेयम्। प्राप्तजीविक इति। प्राप्तो जीविकामिति विग्रहे 'प्राप्तापन्ने द्वितीयये'त्यनेन द्वितीयाकृष्णपुरुषः। एवं आपन्नजीविक इति। अलंकुमारिरिति अलं जातः कुमार्यै इति विग्रहे 'पर्यादयश्चतुर्थ्ये'त्यनेन कृष्णपुरुषः, ईपो वामनः। प्रति गतोऽक्षमिति विग्रहः। अक्षशब्द इन्द्रियवाचकः। प्रत्यक्ष इति 'अत्यादयो द्वितीयये'त्यनेन कृष्णपुरुषः, गतिसमासोदाहरण-

१८३२। पूर्ववदश्ववड़वानाम्।

अश्ववड़वान् ॥ १८३२ ॥

१८३३। रात्राह्नाहाः पुंसि।

अहोरात्राविमौ पुण्यौ। अहोरात्रमिति तस्यां हठः। पूर्वाह्णः, द्व्यहः, एकाहः ॥ १८३३ ॥

---

मिदम्। निर्मधुपुरिति निष्क्रान्तो मधुपुर्या इति विग्रहे 'निरादयः पञ्चम्ये'त्यनेन कृष्णपुरुषः। इदमपि गतिसमासोदाहरणम् ॥

१८३२। पूर्व। अश्ववड़वयोः पूर्ववल्लिङ्गं भवति। पूर्ववदिति पूर्वपदवदित्यर्थः। अश्ववड़वाविति, अश्वश्च वड़वा चेति विग्रहः। वड़वा अश्वा। अश्ववड़वयोरिति द्विवचनमत्रातन्त्रं तेन बहुवचनेऽपि भवति। एतत्सूचयितुम् अश्ववड़वानिति चोदाहृतम् ॥

१८३३। रात्रा। रात्राह्नाहाः प्रयोगाः पुंसि वर्तन्ते। अहोरात्राविति अहश्च रात्रिश्चेति समाहारे द्वन्द्वः। टस्तद्धितः टप्रकरणे धेन्वनडुहौ स्त्रीपुंसादयश्चेति सूत्रं वक्ष्यते इरामहरः। 'अह्नो विष्णुसर्गो विष्णुपदान्ते' इत्यनेन विष्णुसर्गः। 'समाहारे ब्रह्मत्वमेकत्वञ्च' इत्यनेन ब्रह्मत्वे एकत्वे च प्राप्ते पुंस्त्वविधानात् ब्रह्मत्वाभाव एकत्वन्तु भवत्येव ततोऽहोरात्रश्चाहोरात्रश्चेति एकशेषेणाहोरात्राविति। अहोरात्राविमौ पुण्याविति भाषावृत्तौ च दृश्यते। तस्यां प्रक्रियाकौमुद्याम्। पूर्वाह्न इति पूर्वम्, अह्न इति विग्रहे 'पूर्वापराधरोत्तरादीन्यषयविनैकद्रव्यत्वे' इत्यनेन कृष्णपुरुषः। 'राजाहःसखिभ्यः' इत्यनेन केशवारामः। सर्वाव्ययाभ्यामेकवर्जम्। 'संख्यासंख्यातैकदेशेभ्यश्चाहःशब्दस्याह्नः समाहारवर्जं टे' इत्यनेन अहःशब्दस्याह्नः अरामान्तादह्नस्येति णत्वम्, अहःशब्दस्य नपुंसकत्वात् नपुंसकत्वेऽपि प्राप्ते विधानम्। द्व्यह इति द्वयोरह्नोः समाहार इति दिक्संख्ये इत्यादिना त्रिरामी। 'राजाहःसखिभ्यः' इत्यनेन केशवारामः। 'अह्नष्ट-खरामयोरेवे'त्यनेन संसारहरः। 'अरामान्ता त्रिरामी लक्ष्मीरि'त्यनेन लक्ष्मीत्वे प्राप्ते विधानम्। एकाह

१८३४। अर्धर्चादयः पुंसि च।

अर्धर्चम्, अर्धर्चः। यूथं, यूथ इत्यादि ॥ १८३४ ॥

१८३५। पुण्यसुदिनाभ्यामहो ब्रह्म, संख्याव्ययाभ्यां पथः।

पुण्याहं, सुदिनाहम्; द्विपथं, चतुष्पथम्; विपथम्, उत्पथम्,

इति एकञ्च तदहश्चेति श्यामरामः, केशवारामः, संसारहरः, अहःशब्दस्य नपुंसकत्वात् नपुंसकत्वे प्राप्ते विधानम् ॥

१८३४। अर्ध। पुंसि चेत्यत्र ब्रह्मणि चेत्येव पाठो ज्ञेयः, पूर्वस्मात् पुंसीत्यनुवर्तमानत्वात्, किम्बा पुंसीत्यनेन विहितं पुंस्त्वं ब्रह्मत्वन्तु, वाच्यत्वेन प्राप्तमपि चकारेण सूचितमिति। अर्धर्च्चादयः प्रयोगाः पुंसि ब्रह्मणि च वर्तन्ते। अर्धर्चमिति अर्धम् ऋच इति विग्रहे। 'अर्धं समविभागे वे'त्यनेन समासः। 'ऋक्पथिपूरपः' इत्यनेन अरामः समासान्तः। आदिग्रहणफलमाह—यूथं यूथः। इत्यादीति आदिपदेन गोमयं गोमयः, चषकं चषकः, शङ्खं शङ्खः, पद्मं पद्मः, दिवसं दिवसः, धर्मं धर्मः, चरणं चरणः, वर्णं वर्णः, वज्रं वज्रः, सारं सारः, सैन्धवं सैन्धवः, आढ़कम् आढ़कः, द्रोणं द्रोणः, कवचं कवचः, कर्पूरं कर्पूरः, कर्म कर्मा इत्यादि ज्ञेयम्। क्षपयत्यशुभं कर्म कर्माणं चिनुते शुभमिति भाषावृत्तिः ॥

१८३५। पुण्य। पुण्यसुदिनाभ्यां परोऽहः ब्रह्म भवति। संख्या। संख्याव्ययाभ्यां परः पथः ब्रह्म भवति। पुण्याहं सुदिनाहमिति श्यामरामः केशवारामः संसारहरः। 'रात्राह्नाहाः पुंसि' इत्यनेन पुंस्त्वे प्राप्ते ब्रह्मत्वविधानम्। सुदिनाहमित्यत्र सुदिनशब्दो मुक्तावयवार्थ-मङ्गलवाची। द्विपथमिति द्वयोः पथोः समाहार इति 'दिक् संख्ये' इत्यादिना त्रिरामी, 'ऋक्पथिपुरपः' इत्यनेन अरामः समासान्तः। 'अरामान्ता त्रिरामी लक्ष्मीरि'त्यनेन लक्ष्मीत्वे प्राप्ते ब्रह्मत्वविधानम्।

अपथम्। पीताम्बरे तु—विपथ इत्यादि। 'व्यध्वो दूरध्वो विपथः कदध्वा कापथः समाः' इति त्वमरकोषे (२।१।१७) यत् पुंस्त्वं, तत्तु काशिकाभाषावृत्तिक्षीरस्वामिनामसम्मतम्; स्वयमपि लिङ्गादि-संग्रहे 'पथः संख्याव्ययात् परः' इति नपुंसकवर्गे स्वीकृतम् ॥१८३५॥

१८३६। नञ् श्यामरामौ विना कृष्णपुरुषो ब्रह्म।

प्रभुरयम् ॥ १८३६ ॥

१८३७। उपज्ञोपक्रमौ तयोरादेराख्या चेत्।

उपज्ञोपक्रमान्तौ कृष्णपुरुषौ ब्रह्मलिङ्गौ स्यातामित्यर्थः। कर्म-

---

एवं चतुष्पथमिति। 'शृङ्गाटकचतुष्पथे' इत्यमरः। विपथमिति विरुद्धः पन्थाः इति विग्रहे 'कुप्रादयो मध्यपदलोपश्च' इत्यनेन श्यामरामः। पथिशब्दस्य पुरुषोत्तमत्वात् पुंस्त्वे ब्रह्मत्वविधानम्। एवमुत्पथमिति। अपथमिति न पन्थाः इति विग्रहे नञ् इत्यनेन समासः। नञ् कृष्णपुरुषाच्च न, पथस्तु वे'त्यनेन अरामः समासान्तः। अरामाभाव-पक्षे अपन्था इति ज्ञेयम्। निर्देशात् नात्र ब्रह्मत्वम्। 'अपन्थास्त्व-पथं तुल्ये' इत्यमरः। पीताम्बरे तु विपथ इत्यादि। इति तस्मात् 'संख्याव्ययाभ्यां पथः' इति कृष्णपुरुषे प्रवर्तते इति भावः। विपथ इति विरुद्धः पन्थाः यस्मिन्निति विग्रहः, 'ऋक्पथिपुरपः' इत्यनेन अरामः समासान्तः। इत्यादीत्यादिपदेन उत्पथः अपथः इति काशिका-भाषावृत्ति-क्षीरस्वामिनामसम्मतमिति व्यध्वादीनां 'कुप्रादयो मध्य-पदलोपश्चे'त्यनेन कृष्णपुरुषसमासादिति शेषः। स्वयमपि इति अमर-सिंहेनापीत्यर्थः ॥

१८३६। नञ्। अधिकारसूत्रमेतत् ॥

१८३७। उप। सूत्रार्थमाह उपज्ञोपक्रमान्ताविति। उपज्ञान्त उपक्रमान्तश्चेत्यर्थः। तयोरिति चेद्यति तयोरुपज्ञोपक्रमयोरादेराख्या कथनं भवतीत्यर्थः। उपज्ञेति उपज्ञायते इति 'सोपेन्द्राराम-च्चे'त्यनेन कर्मणि ङाप् कृतो बाहुल्यात्। उपक्रम इति उपक्रम्यते इति कर्मणि घण्।

साधनाविमौ श्रीभागवतोपज्ञे कृष्णतद्भक्तौ; श्रीभागवतादेव एतौ प्रथमं ज्ञातावित्यर्थः। एवम् उपज्ञायते इत्युपज्ञा। सर्वज्ञस्योपज्ञा सर्वज्ञोपज्ञं वेदः; सर्वज्ञेनादावुपज्ञायते इत्यर्थः। श्रीकृष्णोपक्रमं भक्तकृपा; श्रीकृष्णेनैव प्रथमं सा प्रारब्धेत्यर्थः॥ १८३७॥

१८३८। छाया छायावतां बाहुल्ये।

तुलसीनां छाया तुलसीच्छायम्। नेह—तुलस्याश्छाया तुलसीच्छाया॥ १८३८॥

१८३९। राजशब्दं राजविशेषनाम च विनेश्वरवाचकात् रक्षःपिशाचादिवाचकाच्च सभा।

सभात्र शाला। ईश्वरसभम्, इनसभं, नृपतिसभम्। नेह—

---

एतदेवाह–कर्मसाधनाविमाविति। इमौ उपज्ञोपक्रमौ श्रीभागवतोपज्ञम् इति ब्रह्मत्वाद् 'ब्रह्मान्तत्रिविक्रमस्य वामनः' इत्यनेन वामनः। कृष्णतद्भक्तौ कृष्ण कृष्णभक्तौ एतौ कृष्णतद्भक्तौ। आद्योपज्ञे धर्माधर्मौ मनूपज्ञं लोकवृत्तमिति भाषावृत्तिः। एवम् उपज्ञायत इत्युपज्ञा, सर्वज्ञोपज्ञं वेद इति 'जुमरोक्तमुदाहरणम्। सर्वज्ञेनादावुपज्ञायते इत्यर्थः। सा भक्तकृपा। 'आढ्योपक्रमं दानं ब्रह्मणोपक्रमं प्रतिग्रहः' इति भाषावृत्तिः। उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने इति नपुंसकवर्गः। 'उपज्ञा ज्ञानमाद्यं स्यात् ज्ञात्वारम्भ उपक्रमः' इत्यमरः॥

१८३८। छाया। छायावतां बाहुल्ये सति छायान्तकृष्णपुरुषो ब्रह्म भवति। बाहुल्यं प्राचुर्यम्। नेहिति बाहुल्याभावादिति शेषः॥

१८३९। राज। व्यक्तार्थमेतत्। ईश्वरवाचकादिति राजवाचकादित्यर्थः। सभात्र शालेति। 'शाला सभे'त्यमरः। इश्वरसभमिति ईश्वरस्य सभेति विग्रहः। इनसभमिति इनशब्दो राजवाचकः। 'इनः सूर्ये प्रभावि'ति नानार्थवर्गः। नृपतिसभेति च भवतीति जुमरमतम्। तथाच कीचकवधे। नृपतिसभामगमन्न वेपमाना इति। नृपतिशब्दस्य गजपतिशब्दवत् राजविशेषवाचित्वमप्यस्तीति। नृपति-

राजसभा, युधिष्ठिरसभा। रक्ष आदेः—रक्षसभं, पिशाचसभम्। नेह—मनुष्यसभा, देवसभा॥ १८३९॥

१८४०। अशालार्था च।

गोपीनां सभा समूहः गोपीसभम्॥ १८४०॥

१८४१। संघातार्थे सर्वतः सभा इति वक्तव्यम्।

राज्ञां सभा राजसभम्; श्रीसभम्॥ १८४१॥

१८४२। सेनासुराच्छायाशालानिशा वा।

कृष्णस्य सेना कृष्णसेनमित्यादि; पक्षे कृष्णसेनेत्यादि॥१८४२॥

इति रामकृष्णनिर्णयस्तदादिलिङ्गनिर्णयश्च।

१८४३। अव्ययीभावः।

प्रभुरयम्॥ १८४३॥

---

सभेति च भवतीति भाषावृत्तिमतम्। नेहेति राजशब्दस्य राजविशेषनाम्नश्च वर्जनादिति शेषः। राजसभेति राज्ञः सभेति विग्रहः। पिशाचसभमिति। एवं भुतसभमित्यादि च ज्ञेयम्। दासीसभं, नृपसभं, रक्षःसभमिमादिशः इत्यमरः। मनुष्यसभा, देवसभेति मनुष्यशब्दस्य देवशब्दस्य च राजवाचकत्वं रक्षःपिशाचादि वाचकत्वञ्च नास्तीति न ब्रह्मत्वम्॥

१८४०। अशा। एतदपि व्यक्तार्थम्। अशालार्थेत्यस्य समूहार्थेति फलितार्थः। स्त्रीसभमिति स्त्रीणां सभेति विग्रहः॥

१८४१। संघा। व्यक्तार्थम्॥

१८४२। सेना। एतच्च व्यक्तार्थम्। इत्यादीत्यादिपदेन यवसुरं, धात्रीच्छायं, गोशालं, गोनिशमिति। आदिपदेन यवसुरा धात्रीच्छायेत्यादि। तदादिलिङ्गनिर्णयः रामकृष्णादिलिङ्गनिर्णयः॥

१८४३। अव्य। अधिकारसूत्रमिदम्। अनव्ययम् अव्ययं भूयते इत्यव्ययीभावः॥

१८४४। तस्याव्ययत्वं ब्रह्मत्वञ्च।

१८४५। अव्ययं सप्तम्याद्यर्थेषु नित्यम्।

नामपदेन नित्यमव्ययं समस्यत इति ज्ञेयम्। हरिमधिकृत्य प्रवृत्तेति विग्रहे हरिमधीति स्थिते--सूत्रे तृतीयान्तेनेत्यादिषु प्रथमान्तस्य पूर्वनिपातात् अधिहरि कथा प्रवर्तते। आदिगणनात् समीपादिषु॥ १८४५॥ -

तत्र समीपे कृष्णस्य समीपमिति विग्रहे—

१८४६। अरामान्तादव्ययीभावान्न स्वादेर्महाहरः किन्त्वम्, स च पञ्चमीवर्जम्।

---

१८४४। तस्य। तस्य अव्ययीभावस्य अव्ययत्वं ब्रह्मत्वञ्च भवति॥

१८४५। अव्ययम्। वृत्तिमाह–नामपदेनेति। सप्तम्याद्यर्थेष्विति सप्तम्याद्यर्थेषु गम्यमानेष्वित्यर्थः। नित्यसमासानां स्वपदविग्रहो नास्तीति। हरिमधिकृत्य प्रवृत्तेति पदान्तरेण विग्रहं दर्शितवान्। एवमन्यत्र च ज्ञेयम्। अधिहरीति अव्ययीभावस्य अव्ययत्वात् 'स्वादेर्महाहरः' इत्यनेन विष्णुभक्तिर्महाहरः। तस्य ब्रह्मत्वाच्च अधिहरीत्यत्र कथाया विशेषणत्वेन प्राप्ते ईपः स्थाने वामनः। 'ब्रह्मान्तत्रिविक्रमे'त्यनेनेति। एवं सर्वत्र ज्ञेयम्। आदिग्रहणस्य फलमाह–आदिग्रहणादिति। तत्र समीप इति उदाहरणं दर्श्यत इति शेषः। गृहस्योपरि तिष्ठति उपरि शिरसश्च घट इत्यादौ सामीप्यस्याविवक्षितत्वाद् अव्ययीभावाभावो द्विरुक्त्यभावश्च ज्ञेयः। उपर्यध्यधसां सामीप्य इति द्विरुक्तिसूत्रम्।

१८४६। अरा। अरामान्तादव्ययीभावादुत्तरस्य स्वादेर्महाहरो न भवति। किन्तु तस्य स्थाने अम् भवति, स च अम् पञ्चमी-

उपकृष्णम् ; पञ्चम्यास्तु उपकृष्णात् ॥ १८४६ ॥

१८४७। तृतीयासप्तम्योस्तु वा।

उपकृष्णेन, उपकृष्णम् ; उपकृष्णे, उपकृष्णम्। एवं समृद्ध्याद्यर्थेषु ; तत्र समृद्धौ—माथुराणां समृद्धिः सुमाथुरम्। अत्र तु सप्तम्यां नित्यमम्‌भावः ॥ १८४७ ॥

१८४८। सम्प्रत्युपयोगाभावे।

अन्नस्य सम्प्रत्युपयोगाभावः अत्यन्नम् एकादश्याम् ॥ १८४८ ॥

१८४९। अतिक्रमे।

संसारस्यातिक्रमः अतिसंसारम् ॥ १८४९ ॥

१८५०। अभावे।

संसारस्याभावः निःसंसारम् ॥ १८५० ॥

---

वर्जं भवति, तस्मात् पञ्चम्याः स्थाने अम् न भवतीत्यर्थः। अव्ययीभावस्याव्ययत्वाद् 'अव्ययात् स्वादेर्महाहरः' इत्यनेन स्वादेर्महाहरः स्यादिति स्वादिमहाहरो निषिद्धः ॥

१८४७। तृती। व्यक्तार्थमेतत्। तस्मादरामान्तादव्ययीभावात् तृतीयाया सप्तम्याश्च स्थाने अम् वा भवतीत्यर्थः। एवं समृद्ध्याद्यर्थेष्विति। अव्ययीभावो ज्ञेय इति शेषः। तत्र समृद्धाविति उदाहरणं दर्श्यत इति शेषः। एवमग्रेऽपि ज्ञेयम्। मथुराणामिति मथुरावासिनामित्यर्थः। अत्रेति सुमाथुरमित्यत्रेत्यर्थः। सप्तम्यां नित्यमम्भाव इति बाहुल्यादिति शेषः ॥

१८४८। सम्प्रत्यु। उपयोगो भोगः। अतिक्रम इति अतिक्रमः प्रध्वंसाभावः। अत्यन्नमित्यत्र सम्प्रति भोगाभावो गम्यते ॥

१८४९। अति। अतिसंसारमित्यत्र प्रध्वंसाभावो गम्यते ॥

१८५०। अभा। निःसंसारमित्यत्र तु अत्यन्ताभावो गम्यते इति भेदः ॥

१८५१। ऋद्धिविगमे।

अवैष्णवानामृद्धेर्विगमः दुरवैष्णवम्॥ १८५१॥

१८५२। ख्यातौ।

हरेस्तन्नाम्नो वा ख्यातिः इतिहरि, तद्धरि॥ १८५२॥

१८५३। पश्चाद्योग्ययोः।

कृष्णस्य पश्चाद्योग्यो वा अनुकृष्णं प्रद्युम्नः॥ १८५३॥

१८५४। सादृश्ये।

सहस्य सभावो वाच्यः (१९६२)। हरेः सादृश्यं सहरि प्रद्युम्ने॥ १८५४॥

१८५५। सम्पत्तौ।

शर्मणः सम्पत्तिः सशर्म वैष्णवानाम्॥ १८५५॥

---

१८५१। ऋद्धि। ऋद्धिविगम इति ऋद्धेर्वृद्धेर्विगमोऽभावः। निःसंसारमित्यत्र संसारस्याभावो गम्यते। दुरवैष्णवमित्यत्र तु न अवैष्णवानाम् अभावो गम्यते, किन्तु तदीयाया ऋद्धेरिति महान् भेदः। एवं भिक्षाया ऋद्धेर्विगमः दुर्भिक्षमिति ज्ञेयम्॥

१८५२। ख्यातौ। तन्नाम्नो हरिनाम्नः। उद्धरीति क्वचित् पुस्तके दृश्यते, तत्तु न सङ्गतं प्राचीनानामसम्मतत्वात्, किन्तु तद्धरीत्येव पाठः। तदित्यव्ययमिति पाणिनिः। तद्विक्रमादित्यमिति भाषावृत्युदाहरणे॥

१८५३। पश्चा। भाष्यवृत्यादौ योग्यतायामित्युक्तम्। सहस्येति। वाच्य इति वक्ष्यते इत्यर्थः॥

१८५४। सादृश्ये। सहरीति अव्ययीभावे च काल इति सहस्य सः॥

१८५५। सम्पत्तौ। शर्मणः सुखस्य। सशर्मेति सहस्य सः॥

१८५६। यौगपद्ये।

चक्रेण सहैककालं सचक्रं शार्ङ्गं निधेहि॥ १८५६॥

१८५७। साकल्ये।

सपत्रमत्ति विष्णुनैवेद्यम्॥ १८५७॥

१८५८। अन्तार्थे।

सद्वादशस्कन्धमधीते॥ १८५८॥

१८५९। अनतिक्रमे।

शक्तिमनतिक्रम्य यथाशक्ति। एवमन्येऽपि॥ १८५९॥

१८६०। अनुक्रमे।

अनुज्येष्ठं प्रवेशय; ज्येष्ठं ज्येष्ठमनुक्रमेण इत्यर्थः॥१८६०॥

---

१८५६। यौगपद्ये। शार्ङ्गं हरिधनुः॥

१८५७। साकल्ये। सपत्रमत्तीति पत्रेण सह साकल्यं पत्रस्थिस्य साकल्यं वेति पत्रमपि न त्यजतीत्यर्थः॥

१८५८। अन्तार्थे। सद्वादशस्कन्धमिति द्वादशस्कन्धेन सहान्तम्, अन्तपर्यन्तमित्यर्थः। सतद्धितमधीत इति भाषावृत्त्युदाहरणम्। सद्वादशस्कन्धमधीत इति साकल्येऽपि सिध्यतीति। अन्तार्थे सालोकमधीत इत्युदाहरणं ज्ञेयम्। आलोकान्तमधीत इत्यर्थः। अत्राध्ययनस्य साकल्यं न गम्यते। यतोऽसाकल्येऽप्यध्ययने आलोकान्तेनाध्ययनसमाप्तिर्भवति॥

१८५९। अनतिक्रमे। एवमिति यथाशब्दस्य अनतिक्रमे यथाशक्तीत्युदाहृतम्, अर्थान्तरे तु अन्येऽपि प्रयोगा ज्ञेया इत्यर्थः। ते यथा—ये ये वृद्धा यथावृद्धं, ये ये तथाभूता यथातथमित्यादयः॥

१८६०। अनुक्रमे। अनुज्येष्ठमिति अनुनैवानुक्रम्यस्य द्योतितत्वाद् आनुपूर्वे चे'त्यनेन द्विरुक्तिरिति ज्ञेयम्। वीप्सायामपि अव्ययीभावो भवतीति ज्ञेयम्। वीप्सायां—प्रतिदिनं ददातीति भाषावृत्तेः। वीप्सायामिति जुमरसूत्राच्च॥

१८६१। तथा यावदियत्तायाम्।

समस्यते। यावत्पात्रं वैष्णवानामन्त्रयस्व ॥ १८६१ ॥

१८६२। स्वाद्यन्तं प्रतिना लेशार्थे।

न सुखप्रति संसारे। न दुःखप्रति विष्णुभक्तौ। तत्र तत्र तत्तल्लेशोऽपि नास्ति इत्यर्थः ॥ १८६२ ॥

१८६३। अक्ष-शलाका-संख्याः परिणा द्युत-व्यवहारे।

अक्षपरि, शलाकापरि; एकेनाक्षेण शलाकया वा उत्तानम् अवाग्वा पतितेन न तथा जयो वृत्तो यथा सर्वोत्तानादिपातेनेत्यर्थः। एवमेकपरि, द्विपरि ॥ १८६३ ॥

इत्यव्ययीभावेषु नित्यसमासाः।

---

१८६१। तथा। सूत्रान्तराणि वक्तुमारभते तथेति। वृत्तिमाह—समस्यते इति। यावदित्यव्यम्। इयत्ता इयदेवेति निश्चयः तस्यां गम्यमानायामित्यर्थः। यावत्पात्रमिति। पात्रशब्दोऽत्र योग्यवाची भाजनवाची वा। 'योग्यभाजनयोः पात्रमि'ति नानार्थवर्गः। इयत्तायामिति किम्? यावद्दत्तं तावद्भुक्तम्। अत्र यावदिति पृथक् पदम् ॥

१८६२। स्वाद्य। लेशार्थे वर्तमानेन प्रतिना सह स्वाद्यन्तं समस्यते। तत्र तत्रेति संसारे सुखलेशोऽपि नास्ति, विष्णुभक्तौ दुःखलेशोऽपि नास्ति इति। लेशार्थ इति किम्? कृष्णं प्रति पतति पुष्पवृष्टिः। अत्र लक्षणे प्रतिशब्दो वर्तते। 'कृष्णप्रवचनीयैर्योगे द्वितीया' इत्यनेन द्वितीया ॥

१८६३। अक्ष। द्युतव्यवहारे गम्यमाने अक्ष-शलाका-संख्याः परिणा सह समस्यन्ते। अक्षपरीत्यस्य शलाकापरीत्यस्य च अर्थमाह—एकेनेति। एकया शलाकया वेत्यर्थः। पतितेनेति प्रथमोक्तस्य अक्षेणेत्यस्य विषेणम्; शलाकयेत्यस्य तु पतितयेति विशेषणं ज्ञेयम्।

अथ विभाषिताः

१८६४। अनुर्यस्य समोपमाह यस्य च दैर्घं तेन।

अनुवृन्दावनं यमुना, तत्समीपेत्यर्थः। अनुयमुनं वृन्दावनं, तद्वद्दीर्घमित्यर्थः। पक्षे—वृन्दावनमनु यमुनेत्यादि। लक्षणाद्यन्तर्भावादनयोर्द्वितीयैव॥ १८६४॥

१८६५। अभिप्रती लक्षणेनाभिमुख्ये।

---

सर्वोत्तानादिपातेनेति अयम्भावः। पञ्चका नाम द्युतं पञ्चभिरक्षैः शलाकाभिर्वा भवति ; तत्र यदा पञ्च उत्तानाः पतन्ति अवाञ्चो वा तदा पातयितुर्यथा जयो भवति, तथा अन्यथा पाते न भवतीति। अक्षशलाकयोरेकत्वे वर्तमानयोरेवायं समासो भवतीति ज्ञेयम्। एवमिति। एवं त्रिपरि चतुष्परीति ज्ञेयम्। एकपरीत्यादावपि एकादिशब्दैरक्ष एवाभिधीयते इति ज्ञेयम्। अक्षशलाकैकद्वित्रिचतुरां परिणा कितवपराजय इति जुमरसूत्रम्॥

१८६४। अनु। अनुर्यस्य समीपमाह—यस्य दैर्घ्यमाह—तेन सह समस्यते अनुरिति शेषः। तत्समीपा वृन्दावनसमीपा। समीपशब्दोऽत्र धर्मिवचनः। यथा ग्रामस्य समीपो वृक्ष इति। अनुयमुनमिति अव्ययीभावस्य ब्रह्मत्वाद् 'ब्रह्मान्तत्रिविक्रमस्य वामनः' इत्यनेन वामनः। अनुवनं चौराः तत्समोपा इत्यर्थः। अनुगङ्गं वाराणसी गङ्गावदयातेति भाषावृत्तिः। अथ विभाषिता इत्युक्तमत आह पक्षे इति। इत्यादीत्यादिपदेन यमुनामनु वृन्दावनमिति। लक्षणाद्यन्तर्भावादिति समीपदैर्घ्ययोरिति शेषः। अनयोर्वृन्दावनयमुनयोः। यद्वा, अनयोः समीपदैर्घ्ययोर्लक्षणाद्यन्तर्भावादिति हेतोस्ताभ्यां योगे अनयोर्द्वितीयैवेति 'कृष्णप्रवचनीयैर्योगे द्वितीये'त्यनेनेति शेषः। द्वितीयैव भवति न तु समास इत्येव शब्दाभिप्रायः॥

१८६५। अभि। आभिमुख्ये वर्तमानौ अभिप्रती लक्षणेन सह समस्यते। अभिहरीति अत्र हरिर्लक्षणं तेन वैष्णवस्य यानं लक्ष्यते

हरिमाभिमुख्येन अभिहरि वैष्णवो याति। लक्षणेति किम् ? भ्रान्त्या हरिमभियाति चेत्तदा न स्यात् ॥ १८६५ ॥

१८६६। अप-परि-वहिरञ्चन्ताः पञ्चम्या, आङ् तु मर्यादाभिविध्योः।

अपमाथुरं परिव्रजं, तांस्तं वर्जयित्वेत्यर्थः। वहिर्गोष्ठं प्राग्वृन्दावनम्। तथा आवैकुन्ठं संसारः। आवैकुन्ठं व्यासकीर्तिः। पक्षे—अप माथुरेभ्यः ॥ १८६६ ॥

१८६७। पारे मध्ये इत्येतौ षष्ठ्या।

---

तयोर्लक्ष्यलक्षणसम्बन्धोऽभिना द्योत्यते 'कृष्णप्रवचनीयैर्योगे द्वितीये'त्यनेन द्वितीया। एष अभिशब्दः शब्दशक्तिस्वभावाद्यथा लक्ष्यलक्षणसम्बन्धं द्योतयति तथा आभिमुख्यमपि अतएव हरिमाभिमुख्येनेत्युक्तम्। एवं प्रतिहरीति। पक्षे अभिहरिं प्रतिहरिं वैष्णवो यातीति। भ्रान्त्येति। अत्र हरेर्लक्षणत्वं नास्ति, अतो हरिमिति 'कर्मणि द्वितीये'त्यनेन द्वितीया। आभिमुख्यं पुनर्विद्यत एव तदा न स्यादिति समास इति शेषः। लक्षणेन किम् ? दिङ्मोहात् श्रुघ्नं प्रति गत इति भाषावृत्तिः। श्रुघ्नान्मथुरां चलितो दिक्मोहात् श्रुघ्नमेव प्रतिगत इत्यर्थः। आभिमुख्य इति किम् ? यमुनामभिवसति। अत्राभिना लक्ष्यलक्षण-सम्बन्धो द्योत्यते नत्वाभिमुख्यम् ॥

१८६६। अप। व्यक्तार्थमेतत्। पञ्चम्येति पञ्चम्यन्तेन सहेत्यर्थः। अपमाथुरं, परिव्रजम् इति। 'अपपरियुक्तात् पञ्चमी' वर्जने, इत्यनेन पञ्चमी। तान् माथुरान्; तं व्रजम्। वहिर्गोष्ठ-मिति 'दूरान्तिकार्थवहिर्योगे षष्ठी शञ्चमीचे'त्यनेन पञ्चमी। प्राग्वृन्दावनमिति 'अन्यर्थादिभिर्योगे पञ्चमी'त्यनेन पञ्चमी। आवैकुण्ठ-मिति 'आङ्युक्तात् पञ्चमी मर्यादाभिविध्योरि'त्यनेन पञ्चमी। अप माथुरेभ्य इति। एवं परिव्रजात्, वहिर्गोष्ठादित्यादि ॥

१८६७। पारे। पारे मध्ये इत्येतौ षष्ठ्यन्तेन सह समस्यते।

यमुनायाः पारे पारेयमुनम् । एवं मध्येयमुनम् । सप्तम्य-लुग्निर्देशात्—एवमग्रेवणमन्तर्वणमित्यपि णत्वं तु वाच्यम् ( २००५ ) ॥ १८६७ ॥

इति पूर्वपदप्रधानाव्ययीभावः ।

१८६८ । संख्या विद्यायोनिसम्बन्धिना समाहारे ।

द्वौ मुनि द्विमुनि व्याकरणस्य । एकविंशतिभारद्वाजं तद्वंशस्य । अभेदविवक्षायां द्विमुनि व्याकरणमित्यपि स्यात् ॥ १८६८ ॥

---

अथ विभाषिता इत्युक्तम् । अतो यमुनायाः पारे इति विग्रहं दर्शितवान् । पारेयमुनमिति 'ब्रह्मान्तत्रिविक्रमस्य वामनः' इत्यनेन वामनः । मध्येयमुनमिति यमुनाया मध्ये इति विग्रहे । ननु विष्णुभक्तिमहाहरः, कथं न भवतीति चेत्तत्राह—सप्तम्यलुगिति हेतुमाह—निर्देशादिति सप्तम्यन्तनिर्देशादित्यर्थः । पारे मध्ये षष्ठ्या वेति तु भाषावृत्तिसूत्र जुमरसूत्रञ्च, पारेश्मशानं, मध्येगङ्गम् । पक्षे षष्ठीतत्पुरुषः श्मशानपारं, गङ्गामध्यमिति भाषावृत्त्युदाहरणानि । पारं गङ्गायाः पारेगङ्गम् अव्ययीभावे निपातात् एत्वम् । पुनर्वा वचनात् षष्ठीसमासः गङ्गापारम् । एवं मध्यं गङ्गाया मध्येगङ्गं, गङ्गामध्यमिति जुमरोदारणानि । एवमग्रेवणमन्तर्वणमित्यपीति बाहुल्यादिति शेषः । वनस्य अग्रे अग्रेवणं बाहुल्यादत्राव्ययीभावः । 'राजादीनां दन्तादिभ्यः' इत्यनेन सप्तम्यन्तस्य पूर्वनिपातः । अग्रेप्रभृतिभ्य एव वनस्य संज्ञायामित्यनेन णत्वम् । अत्रापि अग्रेप्रभृतिभ्य इति निर्देशात् सप्तम्यलुक् । वनस्य अन्तो अन्तर्वणम् अत्रापि बाहुल्यात् अव्ययीभाव एव राजादीनामित्यादिना पूर्वनिपातः । 'प्रनिरन्तःशरकार्शाम्रखदिरेक्षुप्लक्षपीयूक्षाभ्यो वनस्यासंज्ञायाञ्चे'त्यनेन णत्वम् । णत्वन्त्विति वाच्यमिति वक्ष्यते इत्यर्थः ॥

१८६८ । संख्या । समाहारे गम्यमाने विद्यासम्बन्धिना योनिसम्बन्धिना च सह संख्या समस्यते । द्वौ मुनीति विग्रहः, इत्यत्र समाहृताविति गम्यते । एवमुत्तरत्रापि ज्ञेयम् । मुनी पाणिनिकात्यायनौ

१८६९। नदीभिश्च समाहारे।

अस्य कृष्णपुरुषत्वं वाच्यम्; ततोऽज्वक्ष्यते (२१५९)। सप्तगोदावरं, द्वियमुनम्॥ १८६९॥

इति समाहारप्रधानाव्ययीभावाः।

---

द्विमुनीति। अत्र विद्यासम्बन्धिना सङ्ख्यायाः समासः। व्याकरणस्येति सम्बन्धषष्ठी। एकविंशतिभारद्वाजमिति एकविंशतिर्भारद्वाजा इति विग्रहः। भारद्वाजशब्दो गोत्रप्रत्ययान्तः; 'पौत्रप्रभृत्यपत्यं गोत्रम्'। तद्वंशस्येति स चासौ वंशश्चेति विग्रहः। द्विमुनिव्याकरणमिति, अत्र विद्याविद्यावतोरभेदविवक्षया सामानाधिकरण्यम्, द्वौ मुनी समाहृता वत्रेति निर्गलितार्थः। जयादित्यस्यापि एतदेव मतम्। द्विमुनि व्याकरणं त्रिमुनिरागम इत्यादौ तु अन्यपदार्थप्रधानत्वाद्बहुव्रीहिरिति तु जुमरः॥

१८६९। नदी। समाहारे वाच्ये नदीभिश्च सह सङ्ख्या समस्यते। अस्य कृष्णपुरुषत्वञ्च वाच्यमिति, तत इति च अप्रयोजकमेवेति ज्ञेयम्। यतः 'सङ्ख्यातो नदीगोदावरीभ्याम्'इति सूत्रं सर्वत्र समासे प्रवर्तते। अज् वक्ष्यते इति अत्र च अरामो वक्ष्यते इत्येव पाठो ज्ञेयः। अरामप्रकरण एव सूत्रस्य वक्ष्यमाणत्वात्। सप्तगोदावरमिति सप्तानां गोदावरीणां समाहार इति विग्रहः। अरामे समासान्ते कृते इरामहरः। एवं द्वियमुनमिति भाषावृत्तौ अव्ययीभावप्रकरणे अन्यपदार्थे च संज्ञायामिति सूत्रम्। उन्मत्तगङ्गं नामदेश इति तदुदाहरणमपि दृश्यते। जुमरे च, नित्यं नदीभिरन्यपदार्थे संज्ञायामिति सूत्रम्। उन्मत्तगङ्गं, लोहितगङ्गमित्यादीन्युदाहरणानि च दृश्यन्ते। तथापि गोस्वामीचरणैः सूत्रमेतत् कथं नोक्तमिति नावकलितम्। किम्बा केनचिदेतद्दत्तं गोस्वामिपादेन तु न दत्तमित्यनुमीयते। 'तिष्ठद्गुप्रभृतीनि कालविशेषादावि'त्यनेनैव उन्मत्तगङ्गमित्यादिकं सेत्स्यति इति न वाच्यं तथा सति, तिष्ठद्ग्वादीनामन्यसमासाभावात्। परमोन्मत्तगङ्गमित्यादिकं न स्यात्॥

१८७०। तिष्ठद्गुप्रभृतीनि कालविशेषादौ।

अव्ययीभावे निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु। एवं वहद्गु। आयन्ति गावो यस्मिन् आयतीगवम्। तथा खलेयवं, संस्कृतयवं, संह्रियमाणयवं, खलेवुषम् इत्यादि। तथा शोभना समा संवत्सरोऽस्मिन् सुषमम्। एवं विनिर्दुरायतीपाप-पुण्यान्युदाहार्याणि ; विषममित्यादि। तथा समा भूमिरत्र काले क्रियायां वा समंभूमि। एवं समंपदाति। प्रक्रान्तमहोऽत्र प्राह्णम् ; प्रगता रथा अत्र प्ररथम्। एवं प्रमृगम्। प्रकृता दक्षिणात्र प्रदक्षिणं कालः क्रिया वा। तिष्टद्गवादीनां नान्यः समासः। परमं तिष्ठद्गु।

---

१८७०। तिष्ठ। वृत्तिमाह–अव्ययीभावेनेति। कालेति कालविशेषादौ वाच्ये इत्यर्थः। काल इति कालविशेषे इत्यर्थः, स कालविशेषः। एवमिति वहन्ति गावो यस्मिन् काले स वहद्गु। आयान्तीत्येव पाठः। यस्मिति यस्मिन् काले इत्यर्थः। आयतीगवमिति आयन्ति गावोऽस्मिन्निति इन् गतावित्यस्मात् शतृरिति तु जुमरटीकाकारः। उदाहरणान्तरमाह–तथेति। खले यवा यस्मिन् काले स खलेयवम्। एवं संहृतयवमिति। संह्रियमाणा यवा यस्मिन् काले स संह्रियमाणयवं खले वुषा यस्मिन् काले स खलेवुषम्। इत्यादीत्यादिपदेन लूयमानयवं, पूयमानयवमित्यादि ज्ञेयम्। उदाहरणान्तरमप्याह–तथेति। शोभनत्वं समस्य सुषममिति तु जुमरः। विषममिति विरुद्धाः समाः सम्बत्सरोऽस्मिन्निति बिग्रहः। इत्यादीत्यादिपदेन निःषमं, दुःषमम्, आयतीसमः, पापसमं, पुण्यसममिति। आयतीसममिति आयती समा यस्मिन्निति विग्रहः। अपरमप्युदाहरणमाह–तथेति। समा समाना। समत्वं भूमेः सभूमि समं भूमि इति तु जुमरः। समंपदातीति समाः पदातयो यत्र काले क्रियायां वेति विग्रहः। प्राह्णमिति प्रगतत्वमह्नः प्राह्णमिति तु जुमरः। प्रमृगमिति प्रगता मृगा यत्रेति विग्रहः। तिष्ठद्गवादीनां नान्यसमास इति बाहुल्यादिति शेषः। परममिति, अत्र श्यामरामाभावः। अव्ययीभावस्तु स्यादेवेति नान्यसमास इत्युक्तत्वादिति

अव्ययीभावस्तु स्यादेव ; 'आतिष्ठद्गु जपन् सन्ध्याम्' इति भट्टिः (४।१४) ॥ १८७० ॥

इत्यन्यपदार्थप्रधाना अव्ययीभावाः समाप्ताः ।

१८७१ । समाससाङ्कर्ये तु ।

कमले इव लोचने यस्य स कमललोचनः, कमललोचनश्चासौ कृष्णश्च कमललोचनकृष्ण इति पीताम्बरगर्भश्यामरामः । शारदञ्च तत् सरसिजञ्च शारदसरसिजं, शारदसरसिजे इव नयने यस्य सः शारदसरसिजनयन इति श्यामरामगर्भपीताम्बरः ॥ १८७१ ॥

इति समासविशेषाः ।

१८७२ । केवलसमासाश्च दृश्यन्ते ।

---

शेषः । शिष्टप्रयोगं दर्शयति, आतिष्ठद्ग्विति । अत्र 'अपपरिवहिरञ्चन्ताः पञ्चम्या आङ् तु मर्यादाभिविध्योरि'त्यनेन पुनरव्ययीभाव इति अव्ययीभावसमासोऽपि न भवतीति केचिद्वदन्ति तन्मते आतिष्ठद्ग्विति असमस्तमेव अव्ययात् स्वादेर्महाहर इति पञ्चम्या महाहरः, किन्तु आखलेयवमित्यादावपि पुनरव्ययीभावार्थम् अव्ययीभावस्तु स्यादेवेत्युक्तमिति ज्ञेयम् ।।

१८७१ । समा । क्रमेण समासानामुदाहरणानि दर्शयित्वा समाससाङ्कर्योदाहरणमपि दर्शयति समासेति । समाससाङ्कर्ये तु समासा दर्श्यन्ते—कमललोचनः कृष्ण इत्यन्वयः । समाससाङ्कर्यं विग्रहेन स्पष्टयति, कमले इवेति । नन्वयं कीदृक् श्यामराम इति चेत्तत्राह—पीताम्बरगर्भश्यामराम इति । समाससाङ्कर्ये अपरमप्युदाहरणं दर्शयितुं प्रथमतो विग्रहं दर्शयति शारदञ्चेति उदाहरणमाह—शारदसरसिजनयन इति । नन्वयं कीदृक् पीताम्बर इति चेत्तत्राह—श्यामरामगर्भपीताम्बर इति । एवमन्यानि च समाससाङ्कर्योदाहरणानि ज्ञेयानि ।।

१८७२ । केव । केवलसमासाश्च दृश्यन्त इत्युक्ता भाषावृत्तौ

भूतः पूर्वः भूतपूर्वः, विस्पष्टपटुः, तत्प्रथमः, पुनर्नवः, अध्व-गन्तव्य इत्यादयो भाषावृत्तौ (२।४।७१) ॥ १८७२ ॥

१८७३। अथ समासकार्यविशेषाः।

वासुदेवोऽयम् ॥ १८७३ ॥

१८७४। पूर्वनिपातः।

विभुरयम् ॥ १८७४ ॥

१८७५। राजादीनां दन्तादिभ्यः।

पूर्वनिपातः स्यात्। दन्तानां राजा राजदन्तः। राजविद्या, राजगुह्यम्, अन्तर्वणम्, अधोभुवनं, सपत्नीमाता, ऋणे अधमः अधमर्णः। एवमुत्तमर्ण इत्यादि ॥ १८७५ ॥

---

दृष्टान् केवलसमासप्रयोगान् दर्शयति, भूतः पूर्व इति। भूतः पूर्व इत्यर्थकथनमेव न तु विग्रहः इति ज्ञेयम्। भूतपूर्वादीनां विग्रहो नास्ति, अतः केवलेत्युक्तम्। भूतपूर्वादयः पूर्वोक्तविधिभिर्न सिध्यन्ति, अतः दृश्यन्त इत्युक्तम् ॥

१८७३। अथ। अधिकारसूत्रमेतत् ॥

१८७४। तत्र। एतदप्यधिकारसूत्रम् ॥

१८७५। राजा। वृत्तिमाह—पूर्वनिपातः स्यादिति। राजदन्त इति 'परपदेने'त्यनेन कृष्णपुरुषः। सूत्रे तृतीयान्तेन प्रथमान्तं समस्यते। तच्च पूर्वमित्यनेन षष्ठ्यन्तस्य पूर्वनिपातः स्यादत एतत्सूत्रं कृतम्। एवमन्यत्र ज्ञेयम्। राजविद्येति विद्यानां राजेति विग्रहः। यद्यप्यत्र राजपदस्य प्राधान्यं तथापि 'उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयो-रि'त्यनेनोत्तरपदवल्लिङ्गम्। अतोऽत्र 'गोरीप आपः' इत्यनेन न वामन इति। राजगुह्यमिति गुह्यानां राजेति विग्रहः। अन्तर्वणमिति वन-स्यान्तरिति विग्रहः। अधोभुवनमिति भुवनस्य अध इति विग्रहः। सपत्नीमातेति मातुः सपत्नीति विग्रहः। अधमण इति। 'सप्तमी

१८७६ । रामकृष्णे ।

प्रभुरयम् ॥ १८७६ ॥

१८७७ । हरिसंज्ञस्य, सर्वेश्वराद्यरामान्तस्य, अल्प-सर्वेश्वरस्य, लघ्वक्षरस्य, पूजितस्य च, स्वगणे तु यथोत्तरम् ।

हरिसंज्ञादेः पूर्वनिपातः स्यात्; तत्र स्वगणे यथोत्तरं स्यात् । सिन्धुशैलम्, अगतरु, धरासनम्, कुशकाशम्, मातापितरौ; अत्र

शौण्डादिभिरि'त्यनेन कृष्णपुरुषः सप्तम्यन्तस्य पूर्वनिपातः स्यात्, अत एतत्सूत्रं कृतम् । इत्यादीत्यादिपदेन वनस्य अग्रे अग्रेवणं, रात्रीणां गणः गणरात्रम्; अन्तरं गृहं गृहान्तम्, अन्तरशब्दोऽन्यार्थः । श्वो भावि दिनं तस्मात् परं परश्व इत्यादि ज्ञेयम् । गृहान्तरमित्यत्र श्यामरामसमासो ज्ञेयः । अन्यार्थदृष्ट्या पञ्चमीकृष्णपुरुषे कृते पूर्वोक्त-सूत्रेण पञ्चम्यन्तस्य पूर्वनिपातसिद्धेः । गणरात्रमिति गणशब्दस्य संख्यावाचकत्वात् 'वर्षादीर्घसंख्यातसर्वपुण्यैकदेशाव्ययसंख्याभ्यो रात्रे-रि'त्यनेन अरामसमासान्तः ब्रह्मत्वमभिधानात् । 'गणरात्रं निशावह्वा' इत्यमरः ॥

१८७६ । राम । अधिकारसूत्रमेतत् ॥

१८७७ । हरि । वृत्तिमाह—हरिसंज्ञादेरिति इरामोरामान्तो हरि-संज्ञः । यथोत्तरं स्यादिति पूर्वनिपात इति शेषः । सिन्धुशैलमिति सिन्धुश्च शैलश्च इति विग्रहः । 'अप्राणिद्रव्यजातीनामि'त्यनेन समा-हारः । अत्र हरिसंज्ञस्य सिन्धोरेव पूर्वनिपातः । एवं कविनटौ दुन्दुभिमृदङ्गमित्यादि च ज्ञेयम् । कमण्डलुकृष्णाजिनमिति भाषावृत्तिः । अगतर्विति । अत्र तरुशब्दस्य हरिसंज्ञत्वेऽपि स्वगणे तु यथोत्तर-मित्युक्तत्वात् सर्वेश्वराद्यरामान्तस्य अगशब्दस्यैव पूर्वनिपातः । एवं इन्द्रवायु इत्यादि ज्ञेयम् । धरासनमिति धराश्च आसनाश्चेति विग्रहः । 'वृक्षमृगशकुनितृणधान्यविशेषाणाञ्च वा बहुत्वे' इत्यनेन समाहारः ।

सख्युर्हरित्वं न मतम्, तेन हितसखायावित्यपि। व्यभिचरति च—नरनारायणौ, उलूखलमुषले, भार्यापती, जायापती ॥१८७७॥

१८७८। अनेकप्राप्तावेकस्य नियमो नान्यस्य।

हरिगुरुहराः, गुरुहरिहराः, हरिहरगुरवः ॥ १८७८ ॥

---

अत्र आसनशब्दस्य सर्वेश्वराद्यरामान्तत्वेऽपि अल्पसर्वेश्वरस्य धराशब्दस्यैव पूर्वनिपातः। कुशकाशमिति कुशाश्च काशाश्चेति विग्रहः, वृक्षमृगेत्यादिना समाहारः। अत्र लघ्वक्षरस्य कुशस्यैव पूर्वनिपातः। काशकुशावलम्बनमित्यसाधुरिति जुमरः। मातापितराविति माता च पिता चेति विग्रहः। 'ऋरामस्याराम-ऋरामान्तपुत्रयोर्विद्यायोनिसम्बन्धे' इत्यनेन ऋरामस्यारामः। अत्र पितृशब्दस्य लघ्वक्षरत्वेऽपि पूजितत्वात्, मातृशब्दस्य पूर्वनिपातः। पितुर्माता सहस्रेण गौरवेणातिरिच्यते, गर्भधारणपोषाभ्यां तेन माता गरीयसी। इत्यादि स्मृतेर्मातुः पूजितत्वम्। एवं युधिष्ठिरार्जुनौ सनातनरूपावित्यादि च ज्ञेयम्। अत्रेति न हरित्वं मतमिति पूर्वाचार्यैरिति शेषः। हितसखायाविति हितश्च सखा चेति विग्रहः। उक्तमतस्य सर्वसम्मतत्वं नास्तीति सूचयितुम् इत्युपीत्युक्तम्। ततश्च सखिहिताविति च ज्ञेयम्। व्यभिचरति चेति पूर्वनिपातः इति शेषः। नरनारायणाविति, अत्र पूजितत्वात् नारायणस्यैव पूर्वनिपातः स्यात्। अत उक्तं व्यभिचरति चेति। उदूखलमुषले इत्यत्र अल्पसर्वेश्वरत्वात् मुषलस्यैव पूर्वनिपातः स्यात्। भार्यापती इति, अत्र हरिसंज्ञत्वात् लघ्वक्षरत्वात् पूजितत्वाच्च पतिशब्दस्यैव पूर्वनिपातः स्यात्। एवं जायापती इति। एवं धूमाग्नी, लक्षणहेतु, समुद्राभ्रे, स्नातकराजानौ, प्रतिष्ठालिप्से इत्यादावपि व्यभिचारो ज्ञेयः ॥

१८७८। अने। व्यक्तार्थमेतत्। नान्यस्येति एकस्येवेत्युक्तत्वात् अन्यस्य नियमो न भवतीत्यर्थः। हरिगुरुहरा इति, अत्र सर्वेषामेव पूजितत्वात् सर्वेषामेव पूर्वनिपाते प्राप्ते एकस्य हरेरेव नियमो गुरुहरयोस्त्वनियमो, अतो हरिहरगुरव इति च। 'हरिरेव सदाराध्यः

१८७९। धर्मार्थादिषु यथेष्टम्।

धर्मार्थौ, कामार्थौ, शब्दार्थौ, अन्तादी, मधुसर्पिषी, गुणवृद्धी, इन्द्राग्नी इत्यादि। तथा अर्थधर्मावित्यादि॥ १८७९॥

१८८०। ऋतु-नक्षत्र-संख्यावर्णानां क्रमेण।

हेमन्तशिशिरवसन्ताः, पुष्याश्लेषामघाः, पञ्चषट्। विप्रक्षत्र-विट्शूद्राः ; अनेकेष्वनियमो न स्यात्॥ १८८०॥

---

सर्वेश्वरः' इत्यादि पद्मपुराणवचनात् हरेः पूजितत्वं प्रसिद्धमेव। 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचित्। न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुरि'त्येकादशस्कन्धोक्तश्रीमुखवचनात् गुरोरपि पूजितत्वं व्यक्तमेव। 'मद्भक्तपूजाभ्यधिका' इति श्रीभागवतोक्तश्रीमुखवचनाद् 'वैष्णवानां यथा शम्भुरि'ति दृष्टान्तेन प्रसिद्धस्य हरस्यापि पूजितत्वं शास्त्रसिद्ध-मेवेति ज्ञेयम्॥

१८७९। धर्मा। रामकृष्णसमासे धर्मार्थादिषु यथेष्टं पूर्व-निपातः स्यात्। धर्मार्थादिषूभयमिति भाषावृत्तिः। धर्मार्थाविति धर्मश्च अर्थश्चेति विग्रहः। एवं सर्वत्र विग्रहः कल्प्यः। इत्यादी-त्यादिपदेन अर्कचन्द्रौ, अग्निसमीरणौ, आकाशवायू, वृद्धिक्षयौ, लघु-दीर्घौ, गतिहिंसे इत्यादि च ज्ञेयम्। तथेति इत्यादीत्यादिपदेन अर्थ-शब्दौ अर्थकामावित्यादि चन्द्रार्कौ, समीरणाग्नी इत्यादि च ज्ञेयम्॥

१८८०। ऋतु। रामकृष्णसमासे ऋतुप्रभृतीनां पूर्वनिपातः स्यात्। व्यतिक्रमनिरासार्थं क्रमेणेत्युक्तम्। ऋतुप्रभृतीनां चतुर्णां क्रमेण चत्वारि उदाहरणानि दर्शयति—हेमन्तेति। यदुक्तम्—हेमन्तो मार्गपौषाभ्यां, शिशिरो माघफाल्गुनौ। वसन्तश्चैत्रवैशाखौ, ग्रीष्मो ज्यैष्ठशुची पुनः। वर्षा श्रावणभाद्राभ्यां, शरदाश्विनकार्तिकौ। क्षत्रः क्षत्रियः। ननु विप्रक्षत्रविट्शूद्रा इति 'अनेकप्राप्तावेकस्य नियमः' इत्यनेनापि सिध्य-तीति चेत्तत्राह—अनेकेष्वनियमो न स्यादिति यद्यत्र अनेकप्राप्तावित्यादि-सूत्रं प्रवर्तते, तदा अनेकेषु अनियमः स्यात्। इदानीन्तु अनेकेषु

१८८१। संख्यायामल्पीयसश्च।

एकञ्च दश च एकादश॥ १८८१॥

१८८२। पीताम्बरे।

प्रभुरयम्॥ १८८२॥

१८८३। सप्तमी-विष्णुनिष्ठा-विशेषण-कृष्णनाम-संख्यानां दण्डहस्तादिवर्जम्।

पूर्वनिपातः स्यात्। कण्ठेकालः, उरसिलोमा—द्वयमप्यलुक्। कृतहरिभक्तिः, कृत्तिवासाः, तथा सर्वकृष्णः, सप्तरक्तः। नेह—

---

अनियमो न स्यान्न भवतीत्यर्थः। ऋतुवाचकस्य नक्षत्रवाचकस्य समानाक्षरत्वे क्रमेण पूर्वनिपातो भवतीति तु भाषावृत्तिमतं जुमरादिमतञ्च अतस्तत्तन्मते ग्रीष्मवसन्तौ चित्राश्विन्यावित्यादिकमपि ज्ञेयम्॥

१८८१। संख्या। रामकृष्णसमासे संख्यायामल्पीयसश्च पूर्वनिपातः स्यात्। एकञ्च दश चेति विग्रहः। एकादशेति। अत्र अल्पीयस एकस्यैव पूर्वनिपातः। षोड़शैकादशौ च निपाताविति वक्ष्यते। एवं द्वादश इत्यादिकञ्च ज्ञेयम् द्विशब्दस्य संसारस्यारामो वक्ष्यते॥

१८८२। पीता। अधिकारसूत्रमेतत्॥

१८८३। सप्तमी। वृत्तिमाह—पूर्वेति। कण्ठेकाल इति कण्ठे कालो यस्येति विग्रहः। अत्र सप्तम्यन्तस्य पूर्वनिपातः। 'स्वाङ्गादमुर्द्धमस्तकात् ङेरकामे' इत्यनेन ङेर्महाहरनिषेधः। उरसिलोमेति उरसि लोमान्यस्येति विग्रहः। अत्रापि सप्तम्यन्तस्य पूर्वनिपातः। 'स्वाङ्गादि'-त्यादिना ङेर्महाहरनिषेधः। कृतहरिभक्तिरिति कृता हरिभक्तिर्येनेति विग्रहः। अत्र क्तप्रत्ययान्तस्य पूर्वनिपातः। ,वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामि'त्यनेन पुरुषोत्तमवत्त्वम्। ननु कृतहरिभक्तिरित्यादौ कृतादिशब्दानां विशेषणत्वादेव पूर्वनिपातो भविष्यति, किं विष्णुनिष्ठाग्रहणेन इति चेत्तत्रोच्यते—धृतसूक्ष्मवसन इत्यत्र धृत-

दण्डहस्तः, चक्रपाणिः। आदिना—गडुकण्ठः, अरुःशिराः, दुहितृगर्भा इत्यादि॥ १८८३॥

१८८४। जाति-काल-सुखादिभ्यः क्तस्य परनिपातः।

ना जग्धोऽनेन नृजग्धः, सारङ्गजग्धी, जातो मासोऽस्य मासजातः, सुखहीनः, कृच्छ्रजातः॥ १८८४॥

---

सूक्ष्मयोर्विशेषणत्वेऽपि षष्ठ्यन्तरयैव पूर्वनिपातार्थं विष्णुनिष्ठेत्युक्तम्। विशेषणोदाहरणमाह—कृत्तिवासा इति कृत्तिर्वासो यस्येति विग्रहः। कृत्तिश्चर्मः, कृत्तिवासाः शिवः। कृष्णमित्रा गोपाः, कुलालकर्तृको घटः, साधनपरा वैष्णवाः, घृतोत्तरः सूपः इत्यादौ यथा अप्रधानत्वादेव कृष्णादिशब्दानां विशेषणत्वं तथा कृत्तिवासा इत्यत्रापि कृत्तिशब्दस्य विशेषणत्वम् अवगन्तव्यम्। सर्वनामोदाहरणमाह—सर्वकृष्ण इति सर्वः कृष्णो यस्येति विग्रहः। कृष्णः श्यामः। अत्र कृष्णशब्दस्य गुणवचनत्वाद्विशेषणत्वं सर्वशब्दस्य तु विशेष्यत्वं यदा तु कृष्णनाम्नां विशेषणत्वं भवति, तदा विशेषणत्वेनैव पूर्वनिपातः सिध्यति। संख्योदाहरणमाह—सप्तरक्त इति सप्त रक्तानि स्येति विग्रहः। सप्तेति नेत्रान्त-पाद-कर-तालु-अधरौष्ठ-जिह्वा-नखानि इत्यर्थः। रक्तानि रक्तिमयुक्तानि सप्तरक्तः श्रीकृष्णः। अत्र सप्तशब्दस्य विशेष्यत्वम्। दण्डहस्त इति दण्डो हस्ते यस्येति विग्रहः। अत्र सप्तम्यन्तस्य पूर्वनिपातः स्यात्। अत उक्तं दण्डहस्तादिवर्जमिति। चक्रपाणिरिति चक्रं पाणौ यस्येति विग्रहः। एवं शूलपाणिः, कमण्डलुपाणिः, दुहितृगर्भा, पद्महस्त इत्यादि च ज्ञेयम्॥

१८८४। जाति। व्यक्तार्थमेतत्। पूर्वसूत्रेण पूर्वनिपाते प्राप्ते परनिपातविधानम्। ना पुरुषः नृजग्धो राक्षसादिः। सारङ्गजग्धीति सारङ्गो जग्धोऽनयेति विग्रहः। 'जातेर्वा नत्वाच्छादनादि'त्यनेन ईप्। सारङ्गश्चातको मृगश्च। मास जात इति अत्र कालात् क्तस्य पर-

१८८५। आहिताग्न्यादिषु वा।

अग्न्याहितः, अस्युद्यतः, पुत्रजातः, दन्तजातः, श्मश्रुजातः, घृतपीतः, भार्योढ़ः, प्रियगूढ़ः इत्यादि ; पक्षे आहिताग्निः इत्यादि ॥ १८८५ ॥

इति पूर्वपरनिपाताः।

१८८६। एकस्य शेषो रामकृष्णे।

प्रभुरयम् ॥ १८८६ ॥

१८८७। तुल्यशब्दानां भिन्नार्थानामपि एकस्य शेषः स्यात्।

---

निपातः। सुखहीन इति हीनं सुखमस्येति विग्रहः। कृच्छ्रजात इति जातं कृच्छ्रं यस्येति विग्रहः ॥

१८८५। आहि। आहिताग्न्यादिषु परनिपातो वा भवति। आहितादीनां पूर्वनिपाते प्राप्ते विकल्पार्थं वचनम्। अग्न्याहित इति आहितोऽग्निर्येनेति विग्रहः। अस्युद्यत इति उद्यतोऽसिर्येनेति विग्रहः। असिः खड्गः। पुत्रजात इति जातः पुत्रोऽस्येति विग्रहः। एवं दन्तजात इति। श्मश्रुजात इति जातं श्मश्रुर्यस्येति विग्रहः। 'तनूरुहं लोम रोम तद्वृद्धौ श्मश्रु पुंमुखे' इत्यमरः। घृतपीत इति पीतं घृतं येनेति विग्रहः। भार्योढ़ इति ऊढ़ा भार्या येनेति विग्रहः। प्रियगूढ़ इति प्रियः गूढ़ः, प्रियगुड़ इत्यपि गुड़ः प्रियो यस्येति विग्रहः। इत्यादीत्यादिपदेन तैलपीतः, भार्यागतः, अर्थगत इति च ज्ञेयम्। पक्ष इति। इत्यादीत्यादिपदेन उद्यतासिः, जातपुत्र इत्यादि, पीततैल इत्यादि च ज्ञेयम् ॥

१८८६। एकस्य। अधिकारसूत्रमेतत् ॥

१८८७। तुल्य। वृत्तिमाह–एकस्य शेषः स्यादिति। एकस्य शेषः स्यादित्युक्ते अपरस्य निवृत्तिः स्यादित्यायातम्। तुल्येति एकार्थानां

गोपी च गोपी च गोप्यौ। सर्वत्रावशिष्ट एव लुप्तस्य शक्त्यारोपो दृश्यते, यथा व्यतिसे इत्यादौ। तद्वदिहापीति गोपीशब्देन द्वयमुच्यते। द्वौ च द्वौ च इत्यादौ न अनभिधानात्। भिन्नार्थानामपि— कृष्णो वासुदेवः, कृष्णश्चार्जुनः तौ कृष्णौ। एवं रामाः ॥ १८८७ ॥

१८८८। समानार्थानाञ्च भिन्नरूपाणां क्वचित्।

वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ ॥ १८८८ ॥

---

भिन्नार्थानामपि तुल्यशब्दानामित्यर्थः। ननु गोप्याविस्यत्र एकेन गोपीशब्देन कथं गोपीद्वयमुच्यते इति चेत्तत्राह—सर्वत्रावशिष्ट एवेति। यथेति। यथा येन प्रकारेण व्यतिसे इत्यादौ एक-सेप्रत्ययेन क्रियाव्यतिहारशक्त्यारोपात् प्रकृतिप्रत्ययद्वयार्थं परस्परभवनमुच्यते इह स्थलेऽपि तद्वद्गोपीशब्देन द्वयमप्युच्यते इति ज्ञेयम्। व्यतिसे इति धातोः क्रियाव्यतिहारे आत्मनेपदमिष्यते इत्यात्मनेपदम्। 'श्नमस्त्योररामहरो निर्गुणे' इत्यनेन अस्तेररामहरः। 'अस्तेः सलोपः से'इत्यनेन सलोपः। अत्रावशिष्टे प्रत्यय एव प्रकृतिशक्त्यारोपः; एवं गोपश्च गोपश्च गोपौ, वृक्षश्च वृक्षश्च वृक्षौ, वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इत्यादि ज्ञेयम्। इत्यादौ नेति एकस्य शेषः समासश्च इति शेषः। हेतुमाह—अनभिधानादिति। भिन्नार्थानामपीति उदाहरणं दर्श्यते इति शेषः। रामा इति रामो दाशरथिः, रामो बलदेवः, रामो जामदग्न्यस्ते रामाः। एवम् अक्षः पाशकः, अक्षो विभीतकः, अक्षो रथावयवस्ते अक्षाः। माषो व्रीहिः, माषो मूर्खः, माषो माषकस्ते माषाः। पादश्चरणः, पादश्चतुर्थो भागः, पादः प्रत्यन्तपर्वतस्ते पादाः। इत्यादि च ज्ञेयम् ॥

१८८८। समा। रामकृष्णसमासे क्वचिद्भिन्नरूपाणां समानार्थानाञ्च एकस्य शेषः स्यात्। वक्रेति वक्रकुटिलशब्दयोः समानार्थत्वेन वक्रदण्डकुटिलदण्डशब्दयोः समानार्थत्वम्। जुमरमते कुटिलदण्डाविति च भवतीति ज्ञेयम् ॥

१८८९। लक्ष्म्या सहोक्तौ पुरुषोत्तमस्य तन्मात्रञ्चे-द्विशेषः।

गोपश्च गोपश्च गोपाः। नदीदेशनगराणामिति। ज्ञापकात्तु—नदाश्च नद्यश्चः नद्यः॥ १८८९॥

१८९०। यूना सहोक्त वृद्धस्य लक्ष्मीश्च पुरु-षोत्तमवत्।

---

१८८९। लक्ष्म्या। रामकृष्णसमासे लक्ष्म्या सहोक्तौ सत्याम् एकस्य पुरुषोत्तमस्य शेषः स्यात्। लक्ष्या निवृत्तिः स्याच्चेद्यदि तन्मात्रं विशेषो भवति। तन्मात्रं लक्ष्मीपुरुषोत्तममात्रं विशेषो भेदः। तदितराविशेषवत्त्वे सति तद्विशेषवत्त्वं, तन्मात्रविशेषवत्त्वमिति केचित्। गोपा इति। अत्र तन्मात्रभेदः। अन्यत् सर्वं समानम्। एवं ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। पटुश्च पट्वी च पटू। गौश्चायं गौश्चेयं गावाविमौ, गोमांश्च गोमती च गोमन्तौ इत्यादि ज्ञेयम्। तन्मात्रञ्चे-द्विशेष इति किम्? कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ। अत्र जाति-रूपकृतोऽपि भेदो वर्तते। नदीदेश इति ज्ञापकात्त्विति, 'नदीदेशनग-राणामि'ति ज्ञापकात् पुरुषोत्तमेन सहोक्तौ लक्ष्या अपि एकशेष इत्य-भिप्रायः। अन्यथा पुरुषोत्तमस्य शेषे सति नदा इति स्यादिति। ननु 'नदीदेशे'त्यनेन अत्र समाहारविहितः कथमत्रैकशेषः कस्मिन्नंशे वा नदीदेशेत्यस्य ज्ञापकत्वमिति ज्ञायते, भद्रमुच्यते—अत्र यथा नदीति सूत्रविधानात् समाहारो विहितस्तत्रापि 'तुल्यशब्दानामि'त्यनेनैकशेषः सिद्धः, तस्मिन् सिद्धे च सति 'लक्ष्म्या सहोक्तावि'त्यनेन पुरुषोत्तम-स्यैकशेषे प्राप्ते तद्व्यभिचाराय तत्र गङ्गाशोणं शोणनर्मदमित्यादौ परिवृत्तित्वेन यः पूर्वपरनिपातो दर्शितः, स एवात्र ज्ञापकत्वेनोत्थापित इति, किन्तु नदीदेशादीनां यत्र भिन्नरूपभिन्नलिङ्गत्वं तत्रैव समाहारः, यत्र तु न रूपभिन्नलिङ्गत्वं तत्रैकशेष इत्यपि बोद्धव्यमिति॥

१८९०। यूना। वृत्तिमाह—तन्मात्रञ्चेदिति। रामकृष्णसमासे

तन्मात्रश्चेद्विशेषः। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। गार्गी च गार्ग्यायणश्च गार्ग्यौ; भ्यामि—गार्ग्याभ्याम्। तथा भ्रातृस्वसारौ भ्रातरौ, पुत्रदुहितरौ पुत्रौ, मातापितरौ पितरौ, श्वश्रूश्वशुरौ श्वशुरौ इत्यादि ज्ञेयम् ॥ १८९० ॥

---

यूना सहाक्तौ सत्याम् एकस्य वृद्धस्य शेषः स्यात्। यूनो निवृत्तिः स्यात् लक्ष्मीश्च पुरुषोत्तमवद्भवति, यदि युववृद्धत्वमात्रं विशेषः स्यात्तदा अपत्यमन्तर्हितं वृद्धमुच्यते इति भाषावृत्तिः। अपत्यमन्तर्हितमिति पौत्रप्रभृत्यपत्यमित्यर्थः। गार्ग्यश्चेति। गार्ग्य इति गर्गस्य गोत्रमित्यर्थे 'गर्गादेर्माधव-यरामः' इत्यनेन माधवयरामः। पौत्रप्रभृत्यपत्यं गोत्रमिति तद्धितप्रकणे वक्ष्यते। गार्ग्यायण इति गर्गस्य युवापत्यमित्यर्थे 'गोत्रप्रत्ययान्तात् फरामः' इत्यनेन फरामः। फ आयनः। गार्ग्याविति। अत्र वृद्धस्य गार्ग्यस्य शेषः। यूनो गार्ग्यायणस्य निवृत्तिः। युव-गोत्रतद्धितान्त इति जुमरसूत्रम्। अतो भाषावृत्तिमते पितामहस्य वृद्धत्वं जुमरमते पितुर्वृद्धत्वम् अस्माकं मते तु वृद्धस्यानियमात् युवापत्यात् पूर्वं सर्वे वृद्धाः इति गर्गश्च गार्ग्यायणश्च गर्गौ, गार्गिश्च गार्ग्यायणश्च गार्गी इत्यादिकमपि स्यात्। गार्गी चेति। गार्गीति गार्ग्यशब्दात् ईप् 'विष्णुजनात्तद्धितयस्य हरो भगवत्यारामं विने'त्यनेन यस्य हरः। गार्ग्याविति। अत्रापि वृद्धस्य शेषः यूनो निवृत्तिः। लक्ष्म्याः पुरुषोत्तमवत्त्वञ्च। स्त्रीपुंवच्चेति भाषावृत्तिसूत्रं जुमरसूत्रञ्च। ननु गार्ग्याविति। पुरुषोत्तमवत्त्वं विनापि सिध्यति इति। किं पुरुषोत्तमवत्त्वेन इति चेत्तत्राह–भ्यामीति। गार्ग्याभ्यामिति पुरुषोत्तमवत्त्वेन कृते गार्गीभ्यामित्यनिष्टरूपं स्यात्। तन्मात्रञ्चेद्विशेष इति। किं गार्ग्यश्च वात्स्यायनश्च गार्ग्यवात्स्यायनौ। अत्र जातिरूपकृतोऽपि भेदः। तथा गार्गी च वात्स्यायनश्च गार्गीवात्स्यायनौ। तथेति भ्राता च स्वसा चेत्यत्र भ्रातृस्वसाराविति च ज्ञेयम्। भ्रातरावित्येव भवति। इति तु भाषावृत्तिमतं जुमरमतञ्च। स्वसा भगिनी। 'भ्रातृभगिन्यौ भ्रातरावुभावि'त्यमर। पुत्रश्च दुहिता चेत्यत्र पुत्रदुहितराविति पुत्राविति च ज्ञेयम्। पुत्रावित्येव भवतीति तु भाषावृत्तिमतं जुमरमतञ्च।

१८९१। अन्यैः सहोक्तौ तदादेस्तदादिभिस्तु-परपरस्य।

स च वैष्णवश्च तौ, यश्च कश्च कौ, स च त्वञ्च युवाम्, स च त्वञ्च अहञ्च वयम्॥ १८९१॥

१८९२। अतरुणेऽनेकशफ-ग्राम्यपशुसङ्घे लक्ष्म्याः।

गाव इमाः, अजा इमाः। अग्राम्यपशुसङ्घे तु—इमा रुरवश्च, इमे रुरवश्च रुरव इमे। असङ्घे तु—गौश्चायं गौश्चेयं गावाविमौ। एकशफत्वे तु—अश्वा इमे। तरुणे तु—वत्सा इमे॥ १८९२॥

---

दुहिता कन्या। 'पुत्रौ पुत्रश्च दुहिता चे'त्यमरः। माता च पिता चेत्यत्र मातापितराविति च ज्ञेयम्। भाषावृत्तिजुमरयोरप्येतदेव मतम्। 'मातापितरौ पितरावि'त्यमरः। श्वश्रूश्च श्वशुरश्चेत्यत्र श्वश्रुश्वशुराविति श्वशुराविति च ज्ञेयम्। भाषावृत्तिजुमरयोरपि एतदेव मतम्। 'श्वश्रूश्वशुरौ श्वशुरावि'त्यमरः॥

१८९१। अन्यैः। रामकृष्णसमासे अन्यैः सहोक्तौ सत्यां तदादेः शेषः स्यात्। अन्येषां निवृत्तिः स्यात्। तदादिभिस्तु सहोक्तौ सत्यां परपरस्य तदादेः शेषः स्यात्। पूर्वपूर्वस्य निवृत्तिः स्यात्। परत्वमत्र गणपाठापेक्षमिति ज्ञेयम्। तदादीनां यद्यत्परं तत्तच्छिष्यत इत्येके इति भाषावृत्तिः। ताविति। अत्र तच्छब्दस्य शेषः वैष्णवस्य निवृत्तिः। एवमन्यत्र ज्ञेयम्॥

१८९२। अतरु। व्यक्तार्थमेतत्। अनेकेति। ग्राम्यश्चासौ पशुसङ्घश्चेति ग्राम्यपशुसङ्घः। अनेकं शफं खुरो यस्य सोऽनेकशफः अनेकशफश्चासौ ग्राम्यपशुसङ्घश्चेति विग्रहः। तस्मिन् रामकृष्णे सति लक्ष्म्याः शेषः। 'शफं क्लीवे खुरः पुमानि'त्यमरः। गाव इति। इमा गावश्च इमे गावश्च गाव इमाः इत्यत्र लक्ष्म्याः शेषः। इमा अजाश्च, इमे अजाश्च अजा इमा इति। अश्वा इमे इति। इमे अश्वाश्च इमा अश्वाच अश्वा इमे इत्यत्र 'लक्ष्म्या सहोक्तौ पुरुषोत्तमस्य तन्मात्रञ्चे-

१८९३। समरूपाणां ब्रह्मणा सहोक्तौ ब्रह्मणः, तत्रैकत्वञ्च वा।

श्यामः कृष्णः, श्यामा यमुना, श्यामं वृन्दावनं तानि श्यामानि। तदिदं श्यामं वा ॥ १८९३ ॥

इत्येकशेषः।

१८९४। पूर्वपदान्महाहरनिषेधः।

विभुरयम् ॥ १८९४ ॥

१८९५। समासे सर्वादिपदं पूर्वपदं, सर्वान्तपदमुत्तरपदम्।

१८९६। ओजोऽञ्जःसहोऽम्भस्तमसस्तृतीयायाः।

---

द्विशेषः' इत्यनेन पुरुषोत्तमस्य शेषः। एवं गर्दभा इमे इति। इमे वत्साश्च इमा वत्साश्च वत्सा इमे। अत्रापि पुरुषोत्तमस्य शेषः। ग्राम्येति किम्? इमे रुरवश्च इमा रुरवश्च इमे रुरवः। असङ्घत्वे तु गौश्चायं गौश्चेयं गावाविमौ ॥

१८९३। समरू। एतदपि व्यक्तार्थम्। ब्रह्मणा सहोक्ताविति अब्रह्मण इति शेषः। ब्राह्मणेत्यत्र अब्राह्मणेति वा पाठः। 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामि'ति भाषावृत्तिसूत्रम्। 'क्लीवाक्लीवयोः क्लीवं सचैकवद्वे'ति जुमरसूत्रञ्च। तत्र ब्रह्मणि एकत्वञ्च वा भवति। समरूपाणामिति किम्? सितश्च धवलश्च शुक्लञ्च तानि सितधवलशुक्लानि ॥

१८९४। पूर्वं। अधिकारसूत्रमेतत् ॥

१८९५। समा। पूर्वपदस्य लक्षणमाह—समास इति, समासे सर्वादिपदं पूर्वपदमुच्यते। आनुषङ्गिकतया उत्तरपदस्यापि लक्षणमाह—सर्वान्तेति। सर्वान्तपदमुत्तरपदमुच्यते।

१८९६। ओजो। पूर्वपदादोजःप्रभृतेरुत्तरस्यास्तृतीयाया महाहर-

ओजसाकृतमित्यादि। तपसश्चेत्येके, 'तपसाप्तसिद्धिम्' इति व्योषकाव्ये ( काश्मीरिक-श्रीभट्टभीमविरचिते रावणार्जुनीयकाव्ये १६।२ )। पूर्वपदादेव। 'ओजसो मध्यपदत्वे तु महौजःकृतम्' इति भाषावृत्तिः ( ६।३।३ ) ॥ १८९६ ॥

१८९७। आत्मनस्तृतीयायाः पूरणे।

आत्मनापञ्चमः ॥ १८९७ ॥

१८९८। मनस आज्ञायिनि।

---

निषेधो भवति। ओजसाकृतमिति, ओजसा कृतमिति विग्रहे 'कर्तृकरणे कृते'त्यनेन कृष्णपुरुषः। ओजो बलम्। ओजसाकृतमित्यस्यैकपदत्वाद् ओजसाकृतस्येदम् ओजसा कृतमिति तद्धितप्रत्ययेन सेत्स्यति इति ज्ञेयम्। इत्यादीत्यादिपदेन अञ्जसानिष्पादितम् ; सहसाकृतम्, अम्भसाप्लुतं, तमसापिहितमिति, अञ्जसःवं तत्त्वेन निष्पादितमित्यर्थः। सहो बलम्, अम्भो जलं, तमोऽन्धकारः। तपसश्चेति तपसश्च तृतीयाया महाहरनिषेधो भवतीति एके वदन्ति, एतस्य मतस्य शिष्टसम्मतत्वञ्च व्यञ्जयति तपसाप्रसिद्धमितीति, किन्तु तपक्लृशाभ्यामुपपत्तिममैच्छत्तपःकृशतरैरङ्गैरित्यादिमहाकविप्रयोगदर्शनादेतस्य सर्वसम्मतत्वं नास्तीति गम्यते। महौजःकृतमिति महौजसा कृतमिति विग्रहः, अत्र ओजसः सर्वादिपदत्वाभावात् पूर्वपदत्वाभावः' अतो महाहरो भवत्येब। तथाच उदन्वदम्भःपरिवीतमूर्तिरिति माघः ॥

१८९७। आत्म। व्यक्तार्थमेतत्। पूरण इति पूरणप्रत्ययान्ते परे इत्यर्थः। आत्मनापञ्चम इति 'प्रकृत्यादिभ्यस्तृतीया' इत्यनेन तृतीया 'नान्तादसंख्यादेर्मचि'त्यनेन पूरणेऽर्थे पञ्चशब्दान्मच् 'क्वचिदकृतापी'त्यनेन कृष्णपुरुषः। जनार्दनश्चात्मचतुर्थ एवेत्यत्र आत्मा चतुर्थोऽस्येति बहुव्रीहिरिति जुमरः ॥

१८९८। मन। आज्ञायिनि परे मनस उत्तरस्यास्तृतीयाया महाहर-

मनसाज्ञायी। मनसादेव्यादयस्तु संज्ञाः ॥ १८९८ ॥

१८९९। पुंसानुज-जनुषान्धौ।

साधू ॥ १८९९ ।

१९००। स्तोकादिभ्यः पञ्चम्याः क्ते।

स्तोकान्मुक्तः, कृच्छ्रान्मुक्तः ॥ १९०० ॥

१९०१। ब्राह्मणाच्छंसी ऋत्विग्भेदे।

साधुः ॥ १९०१ ॥

---

निषेधो भवति। मनसाज्ञायीति मनसा आज्ञातुं शीलमस्येति 'अजातावनुपेन्द्रोपपदे णिनिस्ताच्छील्ये' इत्यादिना णिनिः। 'उपेन्द्रोर्यादिव्यन्ताजन्त-पूर्वपदानि कृदन्तेन समस्यन्ते' इति समासः। मनसादेव्यादयस्त्विति। संज्ञा इति संज्ञाशब्दा इत्यर्थः। तस्मादेतदर्थं सूत्रकरणं सबहुप्रयोजनकमिति भावः। 'मनसो नाम्नी'ति जुमरसूत्रम्। मनसादेवी, मनसागुप्ता, मनसासङ्गतेति तदुदाहरणानि ॥

१८९९। पुंसा। व्यक्तार्थमेतत्। पुंसानुज इति 'प्रकृत्यादिभ्यस्तृतीया' इत्यनेन तृतीया। 'क्वचिदकृतापि' इत्यनेन कृष्णपुरुषः तृतीयामहाहरनिषेध एव निपातफलम्। जनुषान्ध इति जनुर्जन्म तेनान्धः 'प्रकृत्यादिभ्यः' इत्यादिना तृतीया 'क्वचिदि'त्यादिना कृष्णपुरुषः निपातफलं पूर्ववत् ॥

१९००। स्तोका। क्तान्ते परे पूर्वपदेभ्यः स्तोकादिभ्यः उत्तरस्याः पञ्चम्या महाहरनिषेधो भवति। स्तोकान्मुक्त इति 'स्तोकाल्पकृच्छ्रकतिपयेभ्यः करणे पञ्चमी'। 'स्तोकान्तिकदूरार्थाः कृच्छ्रञ्च क्तेने'त्यनेन कृष्णपुरुषः। एवं कृच्छ्रान्मुक्त इति; आदिग्रहणात् अल्पान्मुक्तः, अन्तिकान्मुक्त इत्यादि च ज्ञेयम्। क्त इति किम्? कृच्छ्रभयम् ॥

१९०१। ब्राह्म। वृत्तिमाह—साधुरिति निपात्यते इत्यर्थः।

१९०२। अपः सुपो योनि-मति-येषु।

अप्सुयोनिरग्निः, अप्सुमतिः। यस्तद्धितः, गोविन्दो वक्ष्यते (२१२६), ओद्वयस्यावावौ' (८८०) अप्सव्यः॥ १९०२॥

१९०३। अन्तेगुरु-मध्येगुरू।

साधू॥ १९०३॥

१९०४। त्वचिसारादयः संज्ञायाम्।

---

ब्राह्मणाच्छंसीति ब्राह्मणो वेदैकदेशः, तत उद्धृत्य शंसितुं शीलमस्येति णिनिः 'उपेन्द्रे'त्यादिना समासः निपातात् पञ्चम्या महाहरनिशेधः। ब्राह्मणाच्छंसी ऋत्विग्विशेषः ब्राह्मणाद्गृहीत्वा शंसति। 'ब्राह्मणाच्छंसी ऋत्विग्भेद' इति ऽमरः॥

१९०२। अपः। योनिमतियेषु परेषु अप उत्तरस्य सुपो महाहरनिषेधो भवति। अप्सुयोनिरिति शौण्डादेराकृतिगणत्वात् महाहरनिषेधविधानसामर्थ्याद्वा कृष्णपुरुषः। एवं अप्सुमतिरिति सूत्रमिदं कृष्णपुरुष एव प्रवर्तत इति ज्ञेयम्। अतः पीताम्बरे तु अव्योनिः अम्मतिरिति। गोविन्दो वक्ष्यते इति। 'उद्वयस्य गोविन्दो, न तु धातोर्न च स्त्रीप्रत्यये' इति गोविन्दसूत्रम्। ओद्वयस्यावावाविति तु 'ओद्वयस्यावावौ प्रत्यये' इति तद्धितप्रकरणोक्तसूत्रस्योल्लेखः। अप्सव्य इति अप्सु भव इत्यर्थे दिगादिभ्यः यरामः इति यस्तद्धितः। सुपो महाहरनिषेधः॥

१९०३। अन्ते। वृत्तिमाह—साधू इति। अन्तेगुरुः इति शौण्डादेराकृतिगणत्वात् महाहरनिषेधसामर्थ्याद्वा कृष्णपुरुषः। एवं मध्येगुरिति सूत्रमिदं कृष्णपुरुष एव प्रवर्तत इति ज्ञेयम्। अतो अन्तेगुरुरस्य मध्ये गुरुरस्येति पीताम्बरे तु अन्तगुरुः मध्यगुरुरिति भवति। सोऽन्तगुरुरिति क्वापि न मध्यगुरुर्गण एक इति च छन्दःशास्त्रम्॥

१९०४। त्वचि। वृत्तिमाह साधव इति। त्वचिसार इति सप्तमी

साधवः ॥ १६०४ ॥

१६०५ । विष्णुजनारामान्तात् ।

प्रभुरयम् ॥ १६०५ ॥

१६०६ । स्वाङ्गादमूर्धमस्तकात् ङेरकामे ।

उरसि लोमान्यस्य उरसिलोमा । एवं कण्ठेकालः । नेह—अङ्गुलित्राणः, मूर्धशिखः, मस्तकमणिः, मुखकामः ॥ १६०६ ॥

१६०७ । अस्वाङ्गादपि बन्धे वा ।

---

शौण्डादिभि'रिति कृष्णपुरुषः । निपातात् ङेर्महाहरनिषेधः । त्वचिसारः वंशः । तक्सार इति तु पीताम्बरसमासेनेति ज्ञेयम् । 'वंशे तक्सारकर्मारत्वचिसारतृणध्वजा' इत्यमरः । आदिग्रहणाद् गविष्ठिरयुधिष्ठिरप्रभृतयोऽपि ज्ञेयाः । गविष्ठिरः कश्चित् । युधिष्ठिरः प्रसिद्धः ।।

१६०५ । विष्णु । अधिकारसूत्रमेतत् ।

१६०६ । स्वाङ्गा । अकामे परे विष्णुजनारामान्तात् अमूर्धमस्तकात् पूर्वपदात् स्वाङ्गादुत्तरस्य ङेर्महाहरनिषेधो भवति । उरसिलोमेति 'सप्तमी विष्णुनिष्ठे'त्यादिना सप्तम्यन्तस्य पूर्वनिपातः । अत्र स्वाङ्गस्य विष्णुजनान्तत्वम् । कण्ठेकाल इति अत्र स्वाङ्गस्य आरामान्तत्वम् । अङ्गुलित्राण इति अङ्गुलौ त्राणं यस्येति विग्रहः । अत्र स्वाङ्गस्य विष्णुजनारामान्तत्वं नास्ति, अतो ङेर्महाहरः । एवं जङ्घावलिरिति च ज्ञेयम् । मूर्धशिख इति मूर्धनि शिखा यस्येति विग्रहः । अत्र विष्णुजनान्तत्वेऽपि मुर्धवर्जनान्न महाहरनिषेधः । मस्तकमणिरिति मस्तके मणिर्यस्येति विग्रहः । अत्रारामान्तत्वेऽपि मस्तकवर्जनात् न महाहरनिषेधः । मुखकाम इति मुखे कामो यस्येति विग्रहः । अकाम इत्युक्तम्, अतोऽत्र न महाहरनिषेधः ।।

१६०७ । अस्वा । बन्धे परे विष्णुजनारामान्तात् स्वाङ्गात्

हस्तेबन्धो, हस्तबन्धः ; चक्रेबन्धः, चक्रबन्धः ; विष्णुजना-रामान्तादेव। नेह—गुप्तिबन्धः॥ १९०७॥

१९०८। हलादौ प्राच्यकरनाम्नि।

हले हले द्विपदिका हलेद्विपदिका, हलद्विपदिका। वामनमते तु नित्यम्। पूर्वदेशकरनाम्नि वाच्ये हलादौ पूर्वपदे सति, तस्मात् हलादेर्ङेर्महाहरो वा भवतीति ज्ञेयम्॥ १९०८॥

१९०९। कालान् ङेर्वा तर-तम-काल-तनेषु।

विधिवलात् सप्तम्यन्तात्तरतमौ तनश्च। एते तद्धिताः पूर्वाह्णे-तरे गायति हरिः। एवं पूर्वाह्णेतमे पूर्वाह्णेकाले कृतं पूर्वाह्णे-

---

अस्वाङ्गादप्युत्तरस्य ङेर्महाहरनिषेधो वा भवति। हस्तेबन्धो हस्तबन्ध इति हस्ते बन्धो यस्येति विग्रहः। अत्र पूर्वसूत्रेण नित्यं महाहरनिषेधः स्यात् विकल्पेन निषेधविधानम्। चक्रेबन्धश्चक्रबन्ध इति। चक्रे बन्धो यस्येति विग्रहः। अत्र महाहरनिषेधो न स्यादिति विकल्पेन महा-हरनिषेधविधानम्। एवम् उरसिबन्ध उरोबन्ध इत्यादि ज्ञेयम्। गुप्तिबन्ध इति गुप्तौ बन्धो यस्येति विग्रहः। 'गुप्तिः क्षितिव्युदा-सेऽपी'ति नानार्थवर्गः। क्षितिव्युदासे भूगर्ते। एवं काराबन्ध इति च ज्ञेयम्॥

१९०८। हला। पूर्वदिग्भवकरनाम्नि परे हलादौ पूर्वपदे सति तस्मात् हलादेर्ङेर्महाहरो भवतीति। हले हले द्विपदिका इति विग्रहे शौण्डादित्वात् सप्तमीकृष्णपुरुषः। द्विपदिका करविशेषा दशगण्डि-कोपरि चतुःपणाः। वामनेति वामनो ग्रन्थविशेषः। तन्मते तु नित्यं हलपूर्वपदाद्वर्तमानस्य ङेर्महाहरनिषेधः स्यात्॥

१९०९। कालान्। तरतमकालतनेषु परेषु कालादुत्तरस्य ङेर्महा-हरनिषेधो वा भवति। पूर्वाह्णेतर इत्यादौ सप्तम्यन्तात् तरादि-विधानस्य सूत्रं नास्ति, अत आह—विधिवलादिति। तद्धितप्रकरणे पूर्वाह्णेतनापराह्णेतने वे'ति निपातसूत्रं वक्ष्यते। तथापि तनश्चेति

तनी हरिगाथा। पक्षे—पूर्वाह्णतर इत्यादि। विष्णुजनारामान्तादेव। नेह—रात्रितरायां जागर्ति॥ १९०९॥

१९१०। अकालाद्वास-वासि-शयेषु।

खेवासः, खवासः॥ १९१०॥

१९११। षष्ठ्याः।

प्रभुरयम्॥ १९११॥

१९१२। संज्ञाभर्त्सनयोः।

दिवोदासः, चौरस्यकुलं, देवानां प्रियश्छागः॥ १९१२॥

---

कथमत्रोक्तमिति नावकलितम्। अथवा विधिवलादित्युक्तेन पाठकानां वक्ष्यमाणानुसन्धानं न स्यादेव अतस्तत्स्मरणाय तनश्चेत्यप्युक्तम्। किम्वा विधिवलात् सप्तम्यन्तात्तरतमावित्युक्ता वक्ष्यमाणस्यानुस्मरणाय तनश्चेति पृथगुक्तम्। अन्यथा तरतमतना इत्युक्तं स्यादिति। एत इति एते तरतमतनास्तद्धितप्रत्ययाः। पूर्वाह्णेतरे इति एतत् पूर्वाह्णे एतत् पूर्वाह्णे इत्यनयोर्मध्ये अतिशयेन पूर्वाह्णे इत्यर्थे सप्तम्यन्तात्तरः। सप्तम्या महाहरनिषेधः। एवं पूर्वाह्णेतमे इति गायति हरिरिति शेषः। पूर्वाह्णे काले कृतमिति पूर्वाह्णे मुहूर्तादिलक्षणः कालः पूर्वाह्णेकाल इति सप्तमीकृष्णपुरुषः तस्मिन् कृतम्। पूर्वाह्णेतनीति पूर्वाह्णे जाता इत्यर्थः। तनप्रत्ययस्य केशवत्वात् ईप्। इत्यादीत्यादिपदेन पूर्वाह्णतमे पूर्वाह्णकाले पूर्वाह्णतनी इति। रात्रितरायामिति अत्र ङेर्महाहरनिषेधाभावः॥

१९१०। अकालात्। व्यक्तार्थमेतत्॥

१९११। षष्ठ्याः। अधिकारसूत्रमेतत्॥

१९१२। संज्ञा। संज्ञायां विषये भर्त्सने च गम्यमाने उत्तरपदे परे पूर्वपदात् षष्ठ्या महाहरनिषेधो भवति। दिवोदासो नृपतिविशेषः। एवं शुनःशेफ, शुनःपुच्छः, शुनोलाङ्गूल इति। वाचस्पति-दिवस्पति-प्रभृतयोऽपि ज्ञेयाः। शुनःशेफादयः ऋषिविशेषाः। वाचस्पतिर्बृहस्पतिः।

१९१३। पुत्रे वा।

दास्याःपुत्रः, दासीपुत्रः ॥ १९१३ ॥

१९१४। वाचोयुक्ति-दिशोदण्ड-पश्यतोहराः।

साधवः ॥ १९१४ ॥

१९१५। अदस आयन-कुलिकादिषु।

तद्धितप्रयोगोऽयम्। आमुष्यायणः। भावे—आमुष्यकुलिका, आमुष्यपुत्रिका, अमुष्यपुत्रता ॥ १९१५ ॥

---

दिवस्पतिरिन्द्रः। चौरस्य कुलमित्यत्र भर्त्सनं गम्यते, स्वरूपाख्याने तु चौरकुलमित्येव भवति। एवं दास्याः पतिरिति देवानां प्रिय इति। अत्रापि भर्त्सनं गम्यते॥

१९१३। पुत्रे वा। भर्त्सने गम्ये पुत्रे परे षष्ठ्या महाहरनिषेधो वा भवतीत्यर्थः॥

१९१४। वाचो। वृत्तिमाह—साधव इति। षष्ठ्या महाहरनिषेधो निपातफलम्। पश्यतोहर इत्यत्रानादरे षष्ठी, पश्यन्तमनादृत्य हरतीत्यर्थः। पश्यतोहरः स्वर्णकारः॥

१९१५। अद। आयनकुलिकादिषु परेषु अदसः षष्ठ्या महाहरनिषेधो भवति, आमुष्यायण इति। अमुष्य गोत्रमित्यर्थे आमुष्येत्यस्य 'षष्ठ्या लुक् चे'त्यनेन माधव फः टणिन्माधवफः आयनः 'आदिसर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे' इत्यनेन वृष्णीन्द्रः आमुष्यायणः प्रशस्तकुलजन्मा। तद्धितप्रकरणोक्तसूत्रे अमुष्य इत्यस्य षष्ठान्तत्वेन निर्देशात् षष्ठ्यलुक् चेत्युक्तत्वाच्च आमुष्यायणः इत्यत्र षष्ठ्या महाहरनिषेधः सिध्यत्येव, तत् कथमत्रायनेत्युक्तं तदेतच्चिन्त्यम्। आमुष्यकुलिकेति अमुष्य कुलस्य भाव इत्यर्थे 'रामकृष्णान्मनोज्ञादेश्चे'त्यनेन नृसिंह-वुः। 'आदिसर्वेश्वरस्य वृष्णीन्द्रः'। 'लक्ष्म्यामाप्।' 'प्रत्ययस्थात् कात् पूर्वस्यारामस्येरामः आपी'त्यनेन अरामस्येरामः। आमुष्यकुलिका प्रख्यात-

१९१६। ऋरामाद्विद्या-योनिसम्बन्धे, स्वसृपत्योस्तु वा।

होतुःशिष्यः, पितुःपुत्रः ; तथा मातुःस्वसा, मातृष्वसा ; दुहितुःपतिः, दुहितृपतिः। उभयोरेव तत्सम्बन्धे स्यात्। नेह—होतृधनं, पितृधनम् ॥ १९१६ ॥

इत्यलुक्समासाः।

---

कुलता। आमुष्यपुत्रिकेति अमुष्य पुत्रस्य भावः इत्यर्थे सर्वं पूर्ववत्। आमुष्यपुत्रिका, प्रख्यातपितृकता। अमुष्यपुत्रतेति अमुष्यपुत्रस्य भावः इत्यर्थे ताप्रत्ययस्तद्धितः ॥

१९१६। ऋरामाद्विद्या। विद्यासम्बन्धे योनिसम्बन्धे च सति गम्यमाने ऋरामादुत्तरस्याः षष्ठ्या महाहरनिषेधो भवति। विद्यायोनिसम्बन्धे गम्यमाने स्वसृपत्योस्तु परयोः ऋरामादुत्तरस्याः षष्ठ्या महाहरनिषेधो वा भवति। होतुःशिष्य इति, अत्र उभयोरेव विद्यासम्बन्धो गम्यते। पितुःपुत्र इति, अत्रोभयोरेव योनिसम्बन्धो गम्यते। ऋरामादिति किम्? मातुलपुत्रः। ननु अमरकोषे पितामहः, पितृपितेति कथं भवतीति चेत्तत्रोच्यते–पितृसम्बन्धिपिता पितृपिता इति मध्यपदलोपी श्यामरामः। अथवा पित्रे पिता पितृपितेति 'क्वचित्तदविवक्षायाञ्चेत्यनेन चतुर्थीकृष्णपुरुषः। यद्वा, सूत्रमिदमेकवचन एव प्रवर्तते इति ज्ञेयम्। ततश्च पितॄणां पिता पितृपितेति आदराधिक्ये बहुवचनम्। मातुःस्वसा मातृष्वसेति षत्वप्रकरणे 'सुषामादयश्चे'ति निपातसूत्रं वर्तते। तत्र 'अलुकि वे'त्युक्तमतोऽलुक्। पक्षे विकल्पेन षत्वं, लुक्पक्षे तु नित्यमिति। ऋरामादिति किम्? आचार्यस्वसा, मातुलस्वसा उभयोरेवेति तत्सम्बन्धे विद्यायोनिसम्बन्धे स्यादिति महाहरनिषेध इति शेषः। होतृधनं, पितृधनमिति, अत्र उत्तरपदे विद्यासम्बन्धो योनिसम्बन्धश्च न गम्यते, अतो न महाहरनिषेधः ॥

१९१७। रामकृष्णे।

प्रभुरयम् ॥ १९१७ ॥

१९१८। ऋरामस्याराम ऋरामान्तपुत्रयोर्विद्या-योनिसम्बन्धे।

होतापोतारौ, मातापितरौ, मातापुत्रौ ॥ १९१८ ॥

१९१९। इन्द्रादेररामस्याराम उत्तरपदे यज्ञ-प्रसिद्धयुग्मत्वे।

इन्द्रावृहस्पती, मित्रावरुणौ ॥ १९१९ ॥

---

१९१७। राम। अधिकारसूत्रमेतत् ॥

१९१८। ऋरामस्या। विद्यासम्बन्धे योनिसम्बन्धे च गम्यमाने ऋरामान्ते पुत्रे च परे रामकृष्णसमासे ऋरामस्य स्थाने आरामो भवति। होतापोतारौ होता च पोता चेति विग्रहः। अत्र विद्यासम्बन्धो गम्यते। होत्रादय ऋत्विग्विशेषास्तेषां विद्यायाः सम्बन्धः, ते च कात्यायनसूत्रे दर्शिताः। तद्यथा—ब्रह्मोद्गातृप्रतिहोतृ-अध्वर्युब्राह्मणा-च्छंशि-प्रश्रोतृ-श्रोतृ-मैत्रावरुणि-प्रतिष्णातृ-पोतृप्रतिहन्तृ-आच्छावक-अग्रेस्तृ-अग्नीधृ-ब्राह्मण्य-ग्रावस्तुत्-उन्नेतृ-उन्नेस्तृन्-वृणोतीति। मातापितराविति माता च पिता चेति विग्रहः। अत्र योनिसम्बन्धो गम्यते। माता-पुत्राविति पिता च पुत्रश्चेति विग्रहः। अत्रापि योनिसम्बन्धो गम्यते। पुत्रवाचकशब्दे परे ऋरामस्यारामो भवतीति केचित्; तन्मते दुहितात्मजा-विति तथा च पुत्रौ तु दुहितात्मजाविति ॥

१९१९। इन्द्रा। रामकृष्णसमासे यज्ञप्रसिद्धयुग्मत्वे सति उत्तर-पदे परे इन्द्रादेरामस्यारामो भवति। यज्ञप्रसिद्धयुग्मत्वे इति पूर्वोत्तर-पदयोरिति शेषः। इन्द्रावृहस्पती इति इन्द्रश्च वृहस्पतिश्चेति विग्रहः। यज्ञे अनयोः सहदानमुक्तम्। एवं मित्रावरुणाविति। मित्रः सूर्यः। इत्याद्यीत्यादिपदेन इन्द्रासोमौ, इन्द्रावरुणौ, सूर्याचन्द्रमसौ इत्यादि च ज्ञेयम्। यज्ञप्रसिद्धयुग्मत्वाभावे तु ब्रह्मप्रजापती स्कन्धविशाखावित्यादि ॥

१९२०। अग्नीषोमावग्नीवरुणौ च।

त्रिविक्रम-षत्वाभ्यां साधू॥ १९२०॥

१९२१। वृष्णीन्द्रे त्रिविक्रमाभावः।

ततः षत्वाभावश्च। 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिः' इति न्यायेन—आग्निसोमम्॥ १९२१॥

१९२२। आग्नावैष्णव्यादयश्च।

साधवः। आग्नावैष्णवी क्रिया; आग्नावैष्णवं हविः; आग्नेन्द्रो यागः; द्यावाधरण्यौ, द्यावाभूमी, दिवस्पृथिव्यौ, द्यावापृथिव्यौ;

---

१९२०। अग्नी। वृत्तिमाह—साधू इति। अग्नीषोमाविति अग्निश्च सोमश्चेति विग्रहः। अत्र त्रिविक्रमविधानं षत्वञ्च निपातफलम्। अग्निवरुणाविति अग्निश्च वरुणश्चेति विग्रहः। अत्र त्रिविक्रमविधानमेव निपातफलम्। 'अग्नेरीत् सोमवरुणयोरि'ति जुमरसूत्रम्॥

१९२१। वृष्णी। वृष्णीन्द्रे सति त्रिविक्रमाभावो भवति, त्रिविक्रमो न तिष्ठतीत्यर्थः। आग्निसोममिति अग्निसोमौ देवते अस्य इत्यर्थे 'सास्य देवते'त्यनेन केशव-णः। 'आदिसर्वेश्वरस्य वृष्णीन्द्रः', वृष्णीन्द्रसद्भावात् त्रिविक्रमाभावः। 'देवताद्वन्द्वे चे'त्यत्र सूक्तहविषोरेवाभिधानमित्युक्तमतो नात्र उभयोः पदयोर्वृष्णीन्द्रः, सूक्तहविषोस्तु आग्निसोममिति। जुमरे आग्निसोममिति न भवति, किन्त्वाग्नीषोममिति। आग्निसोममित्यषत्वमिति च जुमरमतम्। एवमाग्निवारुणमिति॥

१९२२। आग्ना। वृत्तिमाह—साधव इति। आग्नावैष्णवी क्रियेति अग्निश्च विष्णुश्च अग्नाविष्णू तौ देवते अस्या इत्यर्थे केशव-णः, 'उद्वयस्य गोविन्दः' इत्यादिना गोविन्दः, उभयोः पदयोर्वृष्णीन्द्रः केशवत्वादीप्। अत्र इरामस्यारामविधानम्। उभयपदवृष्णीन्द्रश्च निपातफलम्। आग्नावैष्णवं हविरिति देवताद्वन्द्वे चेत्यनेन उभयोः पदयोर्वृष्णीन्द्रः। अत्र इरामस्यारामविधानमेव निपातफलम्। आग्नेन्द्रो

उषसानक्तम्, उषसासूर्यम्, मातरपितराविन्यादि, मातापितराविति। पूवण। अदन्तत्वान्निपातस्य 'मातरपितराभ्याम्' इति भाष्यम् (पा ६।३।३२-३३)। मातरपितृभ्यामित्यन्ये। कुशलवौ, कुशीलवौ वा ॥ १९२२॥

१९२३। जायाया: पत्यौ जम्भावो दम्भावश्च वा।

जम्पती, दम्पती, जायापती ॥ १९२३॥

रामकृष्ण इति निवृत्तम्।

१९२४। त्रिविक्रमः।

प्रभुरयम् ॥ १९२४॥

---

याग इति। अग्निश्च इन्द्रश्च अग्न्येन्द्रौ तौ देवते अस्येत्यर्थे केशवण:। अत्रापि इरामस्यारामविधानमेव निपातफलम्। द्यावाधरण्याविति द्यौश्च धरणी चेति विग्रहः। अत्र निपातात् दिवो द्यावादेशः। एवं द्यावाभूमी इति। दिवस्पृथिव्याविति। द्यौश्च पृथिवी चेति विग्रहः। अत्र निपातफलं दिवसादेशः। द्यावापृथिव्याविति। अत्र द्यावादेशो निपातफलम्। उषसानक्तमिति उषश्च नक्तञ्चेति विग्रहः। अत्र निपाताद् उषस उषसादेशः। उषः प्रभातम्। उषसासूर्यमिति उषश्च सूर्यश्चेति समाहारे रामकृष्णः। अत्रापि निपातात् उषस उषसादेशः। मातरपितराविति माता च पिता चेति विग्रहः। अत्र निपातात् मातुर्मातरादेशः। 'मातुर्मातरश्च पितरी'ति जुमरसूत्रम्। 'मातापितरौ पितरौ मातरपितरौ च ताविं'त्यमरः। पूर्वेणेति सिद्धमिति शेषः। पूर्वेणेति पूर्वोक्तसूत्रेणेत्यर्थः। अदन्तत्वादिति। पूर्वोत्तरपदयोः ऋंकारस्यारादेश इति भाष्यम्। अत उक्तम् अदन्तत्वान्निपातस्येति। जुमरेऽपि 'पितुश्च पितर इति क्षपणकः' इत्युक्तम्। कुशश्च लवश्चेति विग्रहे कुशलवाविति सिध्यत्येव, पक्षे कुशीलवाविल्यपि भवतीति सूत्रार्थः ॥

१९२३। जाया। व्यक्तार्थमेतत्। जम्पती इति जाया च पतिश्चेति विग्रहः। एवं दम्पती इति। 'दम्पती जम्पती जायापती भार्यापती च ताविं'त्यमरः ॥

१९२४। त्रिवि। अधिकारसूत्रमेतत् ॥

१९२५। लक्षणस्य कर्णे, न तु रिष्टाष्ट-पञ्च-भिन्न-च्छिन्न-च्छिद्र-स्रव-स्वस्तिकादीनाम् ।

लक्षणमिह कृत्तिमं गृह्यते। दात्राकृती कर्णौ यस्य स दात्राकर्णः। द्व्यङ्गुलाकर्णः। नेह—रिष्टकर्णः ॥ १९२५ ॥

१९२६। कोटरावणादयः संज्ञायाम्।

कोटरावणं, मिश्रकावणं, सिध्रकावणं, पुरगावणं, शारिकावणम्, किंशुलुकागिरिरित्यादि ॥ १९२६ ॥

---

१९२५। लक्ष। वर्णशब्दे परे लक्षणस्य त्रिविक्रमो भवति, लक्षणं चिह्नम्। न तु। कर्णे परे रिष्टादीनान्तु त्रिविक्रमो न भवति। एतेषां लक्षणत्वात् त्रिविक्रमः स्यादिति निषेधविधानम्। लक्षणमिह कृत्रिमं गृह्यते इति। पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं यत् दात्राकारादि क्रियते तदिह लक्षणं गृह्यते। नान्यत् श्यामत्वमहत्त्वदीर्घशृङ्गत्वादीत्यर्थः। दात्राकृती इति। दात्राकृतिरिव आकृतिर्ययोरिति विग्रहः, 'क्वचिन्मध्यपदलोपः' इत्युक्तम्, अत आकृतिरिवेत्यस्य लोपः। ययोरिति सप्तमीद्विवचनान्तम्। दात्राकर्ण इति। अत्र आकृतिपदस्य लोपः। दात्रमिव कर्णे चिह्नं यस्य स दात्राकर्णो गौरिति जुमरः। द्वयोरङ्गुल्योः समाहार इति। 'संख्याव्ययाभ्यामङ्गुलेरि'त्यनेन अरामः समासान्तः। ततश्च द्व्यङ्गुलाकृती कर्णौ यस्येति विग्रहः। लक्षणस्येति किम्? शोभनकर्णः। रिष्टकर्ण इति। एवम् अष्टकर्णः, पञ्चकर्णः, भिन्नकर्णः, छिन्नकर्णः, छिद्रकर्णः, स्रवकर्णः, स्वस्तिककर्ण इति।

१९२६। कोट। संज्ञायां कोटरावणादयस्त्रिविक्रमेण निपात्यन्ते। कोटरावणमिति कोटराणां वनमिति षष्ठीसमासः। कोटरैर्युक्तं वनमिति तृतीयामध्यपदलोपी समासो वा। 'अग्रेप्रभृतिभ्यः एव वनस्य संज्ञायामि'त्यनेन णत्वम्। एवं मिश्रकावणमित्यादि। 'कोटरादेर्वनः' इति जुमरसूत्रम्। कोटरामिश्रकासिध्रकाशारिकापुरगाश्च पञ्चामी। किशु-

१९२७। ईशान्तस्य वहे, न तु पीलोः।

ऋषीवहं, कपीवहम्। नेह—पीलुवहम्॥ १९२७॥

१९२८। शुनो दन्त-दंष्ट्रा-कर्णेषु, पद-पुच्छयोर्वा।

श्वादन्त इत्यादि। तथा श्वापदं, श्वपदम्॥ १९२८॥

१९२९। अष्टनः संज्ञायाम्।

अष्टावक्र ऋषिः; अष्टापदम् सुवर्णम्॥ १९२९॥

१९३०। विश्वस्य वसुराटोः।

---

लुकागिरिरिति च षष्ठीसमासः। इत्यादीत्यादिपदेन अञ्जनागिरिः, भञ्जनागिरिः, कुक्कुटागिरिरिति। 'किंशुलुकादेर्गिराविति' जुमरसूत्रम्। कशुलुकाञ्जनलोहितभञ्जनकुक्कुटाश्च पञ्चैव॥

१९२७। ईशा। वहशब्द परे ईशान्तस्य त्रिविक्रमो भवति, पीलोस्तु न भवति। ऋषीवहमिति षष्ठीसमासः। वहशब्दोऽत्प्रत्ययान्तः 'पचादेरदि'ति अत्सूत्रम्। एवं कपीवहमिति। पीलुवहमिति। 'द्रुम-प्रभेदमातङ्गकाण्डपुष्पाणि पीलव.' इति नानार्थवर्गः। पील्वादेस्त्रि-विक्रमो न भवतीति जुमरमतम्। अतस्तन्मते चारुवहं, दारुवहमि-त्यादि च ज्ञेयम्॥

१९२८। शुनो। दन्तादिषु परेषु शुनस्त्रिविक्रमो भवति। पदपुच्छयोः परयोः शुनस्त्रिविक्रमो वा भवति। श्वादन्त इति शुनो दन्त इति विग्रहः। इत्यादीत्यादिपदेन श्वादंष्ट्रा, अश्वाकर्ण इति। जुमरमते श्वाकूर्च इति च भवति। वराहेऽपि त्रिविक्रमो भवति इत्येके वदन्ति। अतस्तन्मते श्वावराहाविति। श्वापदं श्वपदमिति शुनः पदमिति विग्रहः। एवं श्वापुच्छः श्वपुच्छ इति ज्ञेयम्॥

१९२९। अष्ट। संज्ञायां विषये अष्टनस्त्रिविक्रमो भवति। अष्टावक्र इति अष्टौ वक्राण्यस्येति पीताम्बरः। एवं अष्टापदमिति॥

१९३०। विश्व। वसुराटोः परयोः विश्वस्य त्रिविक्रमो भवति।

विश्वावसुः ; विश्वाराट्, विश्वाराट्सु । टान्तनिर्देशान्नेह—विश्वराड्, विश्वराजौ ॥ १९३० ॥

१९३१ । विश्वानरो नाम्नि, विश्वामित्र ऋषौ ।

साधू ॥ १९३१ ॥

उक्तस्त्रिविक्रमः ।

१९३२ । अथ वामनः ।

प्रभुरयम् ॥ १९३२ ॥

१९३३ । ईशस्य वोत्तरपदे ईवव्ययसेयुवो विना ।

विश्वनिभक्तः, विश्वनीभक्तः ; गोपवधुरमणः, गोपवधूरमणः ; ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः ; ईवादेस्तु गोपीनाथः, कृष्णीभूतं, श्रीकुलं, भ्रूकुलम् ॥ १९३३ ॥

---

विश्वावसुरिति विश्वं वसु अस्येति पीताम्बरः । विश्वाराड़िति विश्वस्मिन् राजते इति क्विप्, 'छ-शो राजि'त्यादिना जस्य षत्वं, ततः षस्य डत्वं, डस्य टत्वम् । नेहेति त्रिविक्रम इति शेषः ॥

१९३१ । विश्वा । नाम्नि विषये विश्वानरः साधुः । विश्वानर इति विश्वे नरा यस्येति विग्रहः । विश्वानरः कश्चित् । अनाम्नि तु विश्वनरो राजा । ऋषौ वाच्ये विश्वामित्रः साधुः । विश्वामित्र इति विश्वं मित्रं यस्येति विग्रहः । ऋषाविति किम् ? विश्वमित्रो ब्राह्मणः । साधू इति एतौ विश्वानर-विश्वामित्रौ साधू इत्यर्थः ॥

१९३२ । अथ । अधिकारसूत्रमेतत् ॥

१९३३ । ईश । उत्तरपदे परे ईवव्ययसेयवो विना ईशस्य वामनो वा भवति । विश्वनिभक्तः विश्वन्यो भक्त इति विग्रहः । गोपेति गोपवध्वा रमण इति विग्रहः । ब्रह्मेति ब्रह्मबन्ध्वाः पुत्र इति विग्रहः । तथा च भारविः—परिणतजम्बुफलोपभोगतुष्टेति । ईशस्येति किम् ? राधाहस्तः । गोपीनाथ इति गोप्या नाथ इति विग्रहः । गोपीशब्दः ईवन्तः । कृष्णीभूतम् इति अकृष्णं कृष्णं भूतमित्यर्थे

१९३४। ईवापो संज्ञायां बहुलम्।

रोहिणिपुत्रः, रोहिणीपुत्रः; वैदेहिपुत्रः, वैदेहीपुत्रः; शिलवहं, शिलावहं नाम नगरम्; क्वचिन्नैव—नान्दीघोषः। क्वचिदसंज्ञायाञ्च—मन्दुरजः कलज्ञः क्वचिदन्यथा च—'भ्रकुंसश्च, भ्रुकुंसश्च, भ्रूकुंसश्चेति नर्तकः'। एवं भ्रकुटिर्भ्रुकुटिर्भ्रूकुटि-रित्यादि॥ १९३४।

---

'अभूततद्भावे कृभ्वस्तियोगे विरि'ति विः। विः सर्व इत् 'अद्वयस्य वा विरामः' इत्यनेन अरामस्य इरामो अव्ययत्वान्नात्र वामनः। श्रीकुलं, भ्रूकुलमिति षष्ठीसमासः॥

१९३४। ईवा। संज्ञायां विषये बहुलं यथा स्यात्तथा ईप्, आपश्च वामनो भवति। रोहिणिपुत्रः रोहिण्याः पुत्र इति विग्रहः। बहुलमित्युक्तमतो रोहिणीपुत्र इति च। वैदेहिपुत्र इति वैदेह्याः पुत्र इति विग्रहः। बहुलग्रहणात् वैदेहीपुत्र इति च। शिलवहमिति शिलां वहतीति 'पचादेरत्' इत्यनेन अत्। बहुलमित्यस्य अपरं फलमाह—कृचिन्नैवेति। कृचिद्वामनो नैव भवतीति। नान्दीघोष इति नान्द्या घोष इति विग्रहः। बहुलमित्यस्य फलान्तरमप्याह—कृचिदिति। कृचिद-संज्ञायाञ्च वामनो भवति। मन्दुरज इति मन्दुरायां जात इति 'सप्तम्यन्ते जनेरच्' इत्यनेन अच् उपेन्द्रेत्यादिना समासः। 'वाजि-शाला तु मन्दुरे'त्यमरः। कलज्ञ इति कलां जानातीति 'कर्मण्यनुपेन्द्रा-दारामात् कः' इत्यनेन कः, उपेन्द्रेत्यादिना समासः। बहुलग्रहणस्य अन्यदपि फलमाह—कृचिदन्यथा चेति। कृचिदन्यप्रकारश्च भवति। भ्रकुंस इति भ्रुवौ कुंसयतीति 'पचादेरत्' इत्यनेन अत्। अत्र ऊरामस्य अरामः। भ्रुकुंस इति, अत्र वामनः। भ्रूकुंस इति अत्र ऊरामस्यैव स्थितिः। नर्तका इति प्रमादपाठः नर्तक इति ज्ञेयम्। 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः। स्त्रीवेशधारी पुरुषः ···।' इत्यमरात्। भ्रकुटिरिति भ्रुवोः कुटिरिति विग्रहः। कुटिः कौटिल्यम्। अत्र ऊरामस्यारामः। भ्रुकुटिरित्यत्र तु वामनः। भ्रूकुटिरित्यत्र ऊरामस्यैव

१९३५। इष्टकेषीका-मालानां चित-तूल-भारिषु।

इष्टकचितम्, इषीकतूलं, मालभारी। एवं पक्वेष्टकचित-मित्यादि ॥ १९३५ ॥

१९३६। उक्तपुरुषोत्तमस्येवन्तस्यानेकसर्वेश्वरस्य ब्रुव-मतं-हत-गोत्रेषु।

ब्रुवो निन्द्यः; ब्राह्मणिब्रुवा; वैष्णविमता; वैष्णविहता; गोपिगोत्रा। नेह—तुलसीमता ॥ १९३६ ॥

---

स्थितिः। 'भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियः' इत्यमरः। अमरकोषे तु भ्रकुंसभ्रूकुटिशब्दौ दीर्घान्तपूर्वपदावसाधू इति जुमरः ॥

१९३५। इष्ट। चिततूलभारिषु परे इष्टकेषीका-मालानां वामनो भवति। इष्टकचितमिति इष्टकाभिश्चितमिति विग्रहः। 'कर्तृ-करणे कृते'त्यनेन कृष्णपुरुषः। * इषीकतूलमिति इषीकायास्तूल-मिति विग्रहः। इषीका—शरशलाका, काशशलाका, वीरणशलाका च। मालभारीति 'अजातावनुपेन्द्रोपपदे णिनिस्ताच्छील्ये, जातावपि व्रता-भीक्ष्ण्ययोश्च, कर्त्रुपमाने चे'त्यनेन व्रते आभीक्ष्ण्ये वा णिनिः, उपेन्द्रे-त्यादिना समासः। एवमिति पक्वेष्टकाभिश्चितमिति विग्रहः। इत्या-दीत्यादिपदेन मुञ्जेषीककृततूलम्। मल्लिकामालभारीति च। मल्लिका-मालभारिण्यः सर्वाङ्गीनार्द्रचन्दना इति दण्डी। पक्वेष्टकचितमित्यादि-सिद्ध्यर्थं जुमरे 'तदन्तस्य चे'ति पृथक् सूत्रं कृतम्।

१९३६। उक्त। व्यक्तार्थमेतत्। ब्राह्मणिब्रुवेति ब्राह्मणि चासौ ब्रुवा चेति विग्रहः। वैष्णविमतेति वैष्णवी चासौ मता चेति विग्रहः। एवं वैष्णविहतेति गोपिगोत्रेति च। गोपीगोत्रमिव गोत्रमस्या इति विग्रहः। तुलसीमतेति श्यामरामः, तुलसीशब्दस्य उक्तपुरुषोत्तमत्वं नास्तीति न वामनः। ईवन्तस्येति किम्? भीरुमता। अनेकसर्वेश्वरस्येति किम्? वीमता ॥

---

* इषिकाशब्दस्य ह्रस्वादिदीर्घादिश्चेति।

१९३७। अनीवन्तगोप्या एकसर्वेश्वरेवन्तस्य च ब्रुवादिषु वा।

गोपवामोरुमता, गोपवामोरूमता ; स्त्रिमता, स्त्रीमता ; एवं हतादौ॥ १९३७॥

१९३८। कृद्गोप्या निषेधः।

लक्ष्मीमता॥ १९३८॥

१९३९। चतुर्भुजानुबन्धगोप्याः पुरुषोत्तमवत्त्वञ्च वा।

विदुषिमता, विदुषीमता, विद्वन्मतेत्यादि॥ १९३९॥

उक्तो वामनः।

१९४०। अथ पुरुषोत्तमवत्।

प्रभुरयम्॥ १९४०॥

१९४१। वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यां, न तूङ् न च पूरणीप्रियादिषु।

---

१९३७। अनी। एतदपि व्यक्तार्थम्। अप्राप्ते विभाषेयम्। गोपेति गोपवामोरूशब्द ऊङ्प्रत्ययान्तः। स्त्रिमतेति स्त्रीशब्द ईवन्तः॥

१९३८। कृद्गोप्या। ब्रुवादिषु कृद्गोप्या वामननिषेधो भवति। 'अनीवन्ते'त्यादिना विकल्पेन प्राप्ते निषेधः। लक्ष्मीमतेति लक्ष्मीशब्द ईप्रत्ययान्तः, ईप्रत्ययः कृत्।

१९३९। चतु। चतुर्भुजानुबन्धगोप्या वामनः पुरुषोत्तमवत्त्वञ्च वा भवति। विदुषीमतेति श्यामरामः। अत्र न वामनः नापि पुरुषोत्तमवत्त्वम्। विदुषिमतेति वामनपक्षे, विद्वन्मतेति पुरुषोत्तमवत्त्वपक्षे। 'ध्वंसु-श्रंसु-वस्वनडुहां दो विष्णुपदान्ते' इत्यनेन सरामस्य दः॥

१९४०। अथ। अधिकारसूत्रमेतत्॥

१९४१। वाच्य। ऊङस्तु पुरुषोत्तमवन्न भवति, पूरणीप्रियादिषु

पुरुषोत्तमवत् स्यात्। तत्र श्यामरामे—उत्तरगोपी। पीताम्बरे—वैष्णवभार्यः। सन्निहितस्यैव स्यात्—मृद्वीपट्वौ भार्ये यस्य स मृद्वीपटुभार्यः। वाच्यलिङ्गेति किम्? वनमालाशोभः। तुल्याधिकरणेति किम्? कल्याणीमाता, गोपीनां सखी गोपीसखी। लक्ष्म्यामिति किम्? गोपीजनः। 'न तूङ्' किम्? गोपवरोरूरमणीकः। न च पूरण्यादिषु—कृष्णा पञ्चमी रात्रिर्यासां रात्रीणां ताः कृष्णापञ्चमा रात्रयः। तुल्यार्थान्यपदार्थत्व एव निषेधः; समासान्तोऽत्-प्रत्ययश्च। अन्यत्र तु न तौ, किन्तु कप्-प्रत्ययः—कृष्णा पञ्चमी रात्रिर्यत्र पक्षे स कृष्णपञ्चमीकः पक्षः। प्रियादौ—कृष्णा श्यामवर्णा प्रिया यस्य स कृष्णाप्रियः।

---

परेषु पुरुषोत्तमवन्न भवति। विधिसूत्रस्य वृत्तिमाह—पुरुषोत्तमवत् स्यादिति। तुल्येति। तुल्याधिकरणलक्ष्म्यां परस्यामित्यर्थः। अत्र श्यामराम इति उदाहरणं दर्श्यते इति शेषः। एवं पीताम्बर इति। वैष्णवभार्यः इति। वैष्णवी भार्या यस्येति विग्रहः। सन्निहितस्यैव निकटवर्तिन एव स्यादिति पुरुषोत्तमवत्त्वं इति शेषः। सन्निहितैव स्यादिति वा पाठः। सन्निहितैव वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् स्यादित्यर्थः। मृद्वीपट्वाविति मृद्वी च पट्वी च इति विग्रहः। मृद्वीपटुभार्य इति अत्र पट्वीशब्दस्यैव पुरुषोत्तमवत्त्वं न तु मृद्वीशब्दस्य। वनमालाशोभ इति वनमाला शोभा यस्येति विग्रहः। वनमालाशब्दस्य वाच्यलिङ्गत्वं नास्तीति न पुरुषोत्तमवत्त्वम्। तुल्यार्थेति किम्—तुल्याधिकरणलक्ष्म्यामिति किमित्यर्थः। कल्याणीमातेति कल्याण्याः मातेति विग्रहः। अत्र मातृशब्दस्य लक्ष्मीत्वमस्त्येव, किन्तु तुल्याधिकरणत्वं नास्तीति न पुरुषोत्तमवत्त्वम्। गोपीजन इति श्यामरामः। अत्र जनशब्दस्य तुल्याधिकरणत्वमस्ति, किन्तु लक्ष्मीत्वं नास्तीति न पुरुषोत्तमवत्त्वम्। गोपेति गोपवरोरूः रमणी यस्येति विग्रहः। 'ऋराम-गोपी-सर्पिरादिभ्यः' इत्यनेन कप्। कृष्णेति पञ्चमीत्यस्य विशेष्यमाह—रात्रिरिति। कृष्णा पञ्चमी यासामित्येव विग्रहः। कृष्णापञ्चमा इति पञ्चम्यत्र पूरणी,

प्रियादयस्तु—

प्रिया कान्ता दृढ़ा भक्तिर्वामिना दुहिता क्षमा।
सुभगा दुर्भगा तद्वद्विदुषी चपलादयः॥ १९४१॥

१९४२। श्लिष्ट-प्रियादिषु च पुरुषोत्तमवत्।

पूर्वनिषेधापवादोऽयम्। श्लिष्टप्रियः, विमुक्तकान्तः, दृढभक्तिः, प्रियदुहिता॥ १९४२॥

---

अतो न पुरुषोत्तमवत्त्वं, 'लक्ष्मीपूरणप्रत्ययात् प्रमाणीशब्दाच्च' इत्यनेन अरामान्तः। तुल्यार्थेति। तुल्यार्थः समानाभिधेयोऽन्यपदार्थो यस्याः सा तुल्यार्थान्यपदार्था तस्याभावस्तत्त्वं तस्मिन्। तुल्यार्थान्यपदार्थत्व एवेति पूरण्या इति शेषः। निषेध इति पुरुषोत्तमवत्त्वस्येति शेषः। अन्यत्र त्विति तुल्यार्थान्यपदार्थत्वाभावे त्वित्यर्थः। तौ निषेधात् प्रत्ययौ। कृष्णापञ्चमा रात्रय इत्यत्र पूरणी तुल्यार्थान्यपदार्था अतो निषेधात् प्रत्ययौ। कृष्णपञ्चमीकः पक्ष इत्यत्र तु पूरणी तुल्यार्थान्यपदार्था अतो निषेधात् प्रत्ययौ, किन्तु 'ऋराम-गोपी-सर्पिरादिभ्यः' इत्यनेन कप्। कृष्णाप्रिय इति 'गोरीप आप' इत्यादिना वामनः। प्रियादयस्त्विति। प्रियादयस्तु एते—प्रियाकान्तादृढ़ादयः। चपलादय इत्यादीत्यादिपदेन मनोज्ञा कल्याणी सचिवा स्वसा समानां ग्रहणम्। जुमरादौ विदुषी क्षमा च न दृश्यते॥

१९४२। श्लिष्ट। वृत्तिमाह—पुरुषोत्तमवदिति स्यादिति शेषः। श्लिष्टप्रियादिषु प्रयोगेषु उत्तरपदे परे पुरुषोत्तमवत् स्यादित्यर्थः। पूर्वेति पूर्वोक्तस्य निषेधस्य अपवादो वाधकोऽयं योग इति। पूर्वनिषेधापवाद इत्यत्र निषेधापवाद इति वा पाठः। श्लिष्टप्रिय इति श्लिष्टा प्रिया येनेति विग्रहः। विमुक्तकान्त इति विमुक्ता कान्ता येनेति विग्रहः। दृढ़ेति दृढ़ा भक्तिरस्येति विग्रहः। प्रियेति प्रिया दुहिता यस्येति विग्रहः। श्लिष्टप्रियादिषु 'न तूङो न च पूरणीप्रियादिष्वि'त्यनेन निषेधः स्यात्॥

१९४३। कृष्णनाम वृत्तिमात्रे।

वृत्तिमात्रमेकपदत्वं, तत्र पुंवत्। सर्वासां प्रियः सर्वप्रियः। एवम् अन्यतनयः, तन्मुखम्, एकक्षीरम्। 'न कृष्णनाम द्वन्द्वे' (३२७) इति कृष्णनामत्व-निषेधात् कथं 'दक्षिणोत्तरपूर्वाणां, पूर्वदक्षिणपश्चिमाः'? तत्र न पुंवद्भाववर्जं कार्यमिति कातन्त्र-विस्तरः। भवतीप्रसादादित्यत्र व्यभिचारोऽपीष्यते॥ १९४३॥

१९४४। कुक्कुट्यादयोऽण्डादिषु।

कुक्कुट्या अण्डं कुक्कुटाण्डम्। एवं मृगपदं, मृगक्षीरं, काक-शावकः॥ १९४४॥

१९४५। प्राप्तापन्ने अपि।

---

१९४३। कृष्ण। वृत्तिमाह—वृत्तीति। अत्र पुंवदिति स्यादिति शेषः। पुंवदित्यत्र पुरुषोत्तमवदिति वा पाठः। अन्यतनय इति अन्यस्या-स्तनय इति विग्रहः। तन्मुखमिति तस्या मुखमिति विग्रहः। एकेति एकस्याः क्षीरमिति विग्रहः। न कृष्णनामेति। दक्षिणेति। दक्षिणा च उत्तरा च पूर्वा चेति विग्रहः। पूर्वेति पूर्वा च दक्षिणा च पश्चिमा चेति विग्रहः। कथं पुंवद्भावो भवत्वित्ययमत्र विरोधः। पूर्वदक्षिण-पश्चिमा इत्यमरकोषोक्तमिति ज्ञेयम्। सिद्धान्तमाह—तत्रेति। तत्र द्वन्द्वे पुंवद्भावं वर्जयित्वा कार्यं कृष्णनामकार्यं न स्यात्। पुंवद्विषये तत्कार्यं भवतीति कातन्त्रविस्तरः। अतो पुंवद्भावो भवत्येवेति न कश्चिद्विरोधः। भवतीप्रसादादिति भवत्याः प्रसाद इति विग्रहः। व्यभिचार इति पुरुषोत्तमवत्त्वस्येति शेषः।

१९४४। कुक्कुट्या। अण्डादिषु परेषु कुक्कुट्यादयः पुरुषोत्तम-वद्भवन्ति। मृगपदमिति मृग्याः पदमिति विग्रहः। एवं मृगक्षीर-मिति। काकशावक इति काक्याः शावक इति विग्रहः। शावकः शिशुः। (छागदुग्धम्)॥

१९४५। प्राप्ता। प्राप्तापन्ने अपि परपदे पुरुषोत्तमवद्भवतः।

प्राप्ता गोपिकां प्राप्तगोपिका। एवम् आपन्नगोपिका। अपि-शब्दात् द्वितीया भिक्षायाः द्वितीयभिक्षा इत्याद्यपि ॥ १९४५ ॥

१९४६। न संज्ञा-पूरण्यौ णकस्तद्धितकरामोद्धवश्च।

आख्यातकृत्तद्धितेषु च निषेधोऽयम्। एवमुत्तरत्र—दत्ता भार्या यस्य स दत्ताभार्यः। योगरूढ़िरेषा दत्तेति। एवं गुप्ताभार्यः। दत्तायते तद्धित (२१४९ तम सूत्रे) तु वक्ष्यमाणविधेर्निषेधः। एवं दत्ताकल्पा,

---

प्राप्तगोपिकेति 'प्राप्तापन्ने द्वितीयये'त्यनेन कृष्णपुरुषः। आपन्नगोपि-केति आपन्ना गोपिकामिति विग्रहः। द्वितीयभिक्षेति, 'द्वितीय-तृतीय-चतुर्थ-तुर्य-तुरीय-तलाग्रादयश्च वे'त्यनेन कृष्णपुरुषः। इत्यादीत्यादिपदेन शिष्टप्रयोगानुसारेण अन्यत्रापि पुरुषोत्तमवत्त्वं ज्ञेयम्॥

१९४६। न संज्ञा। संज्ञादयः पुरुषोत्तमवन्न भवति। आख्यात-कृत्तद्धितेषु चेत्यत्र च-शब्दात् तुल्याधिकरणलक्ष्म्याम् आख्यातकृत्तद्धि-तेष्वपि परेष्वित्यर्थः। आख्यातकृदित्यत्र आख्याततद्धितयोश्च इत्येव पाठो ज्ञेयः। यतः कृत्प्रकरणे कृदन्ते परे पुरुषोत्तमवत्त्वस्य विधिसूत्रं न दृश्यत इति। किन्त्वाख्यात-प्रकरणे नामधातुगणे 'वाच्यलिङ्गलक्ष्मीः पुरुषोमवत् क्यङ्-मानिनोर्णौ चे'त्यत्र सूत्रे मानिन् दृश्यते स तु कृदिति गोस्वामिपादेनात्र कृदिति गृहीतमिति। एवमुत्तरत्रेति तस्माद्वक्ष्यमाणनिषेधोऽपि तुल्याधिकरणलक्ष्म्याम् आख्यातकृत्तद्धितेषु प्रवर्तत इति भावः। योगरूढ़िरिति। दत्तेति एकस्याः एव नाम सा केनापि दत्ता चेति योगरूढ़ित्वम्। एवमिति गुप्ता भार्या यस्येति विग्रहः। गुप्तेत्येकस्या नाम सा केनापि लुक्कायिता च। कृदन्ते उदाहरणमत्र ग्रन्थकृता न दत्तम्। तत्तु दत्तामानिनीति ज्ञेयम्। दत्तायत इति दत्तेवाचरति इति दत्तशब्दात् क्यङ्, 'व्याच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् क्यङ्-मानिनीर्णौ चे'त्यनेन विहितस्यापि पुरुषोत्तमवत्त्वस्य निषेधः। दत्तायत इति पुरुषोत्तमवत्त्वे कृतेऽपि भवति। निषेधस्य प्रयो-जनन्तु रुक्मिणीयते, पञ्चमीयत इत्यादौ विद्यत एवेति ज्ञेयम्। तद्धिते ष्विति तद्धितप्रकरणे 'वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत्रादिषु, न तूङ्'

दत्तापाशा। एवं पञ्चमीभार्य इत्यादि। णकः—गोपिकाभार्यः। तद्धितः—मुद्रिकाभार्यः। णकस्तद्धित इति किम्? जल्पाकभार्यः॥ १९४६॥

१९४७। न वृष्णीन्द्रहेतु-तद्धित-लक्ष्मीररक्तविकारयोः।

यादवीभार्यः, माथुरीमानिनी। वृष्णीन्द्रेति किम्? मध्यमभार्यः। अरक्तविकारयोरिति किम्? कौङ्कुमपटीकः; हैममुद्रिकः; लौहेशो रथः॥ १९४७॥

---

सूत्रं वक्ष्यते, तस्यापि निषेधोऽयम्। त्र-तसौ, तरतमौ, चरट्जातीयौ, कल्पदेश्यदेशीया, रूपपाशौ—त्रादय इति वक्ष्यते। गोपिकाभार्य इति गोपिका भार्या यस्येति विग्रहः। अत्र पूरण्याः पुरुषोत्तमवत्वनिषेधः, इत्यादीत्यादिपदेन षष्ठीभार्यः, सप्तमीभार्यः, पञ्चमीयत इत्यादि ज्ञेयम्। गोपिकाभार्य इति गोपिका भार्या यस्येति विग्रहः। गोपिकेति गुप गोपने 'णकतृणावि'त्यनेन णकः। लक्ष्म्यामपि कृते अरामस्य इरामः। मद्रिका भार्या यस्येति विग्रहः। मद्रिकेति मद्रशब्दात् कप्रत्ययस्तद्धितः, लक्ष्म्यामपि कृते अरामस्य इरामः। णकस्तद्धित इति किमिति करामोद्धव इत्येवास्त्विति शेषः। जल्पाकभार्य इति जल्पाकी भार्या यस्येति विग्रहः। जल्पाकीति 'जल्प-भिक्ष-कुट्ट-लुण्ठ-वृङ आकट्' इत्यनेन आकट् टित्त्वादीप्।

१९४७। न वृष्णी। वृष्णीन्द्रहेतुस्तद्धितोऽन्तो यस्यास्तथाभूता लक्ष्मीः पुरुषोत्तमवन्न भवति। अरक्तविकारयोरिति रक्ते विकारे चार्थे यदा वृष्णीन्द्रहेतुस्तद्धितः क्रियते, तदा निषेधो न भवतीत्यर्थः। यादवीभार्य इति यादवी भार्या यस्येति विग्रहः। यादवीति यदुशब्दात् केशवणस्तद्धितः, आदिसर्वेश्वरस्य वृष्णीन्द्रः, उरामस्य गोविन्दः। केशवत्वादीप्। माथुरीमानिनीति आत्मानं माथुरीं मन्यते इति 'मन्यतेः खश्-णिनी आत्ममनने' इत्यनेन णिनी। माथुरीति मथुरायां भवा इत्यर्थे केशवणस्तद्धितः। मध्येति मध्ये भवा मध्यमा सा भार्या यस्येति

१९४८। न जाति-स्वाङ्गाभ्यामीप्।

गोपीभार्यः, सुकेशीभार्यः। गोपीयते॥ १९४८॥

१९४९। मानिनि न निषेधः।

ब्राह्मणमानिनी, सुकेशमानिनी॥ १९४९॥

१९५०। अनूङो न ते निषेधाः श्यामरामे, जातीय-देशीययोश्च।

---

विग्रहः। अत्र वृष्णीन्द्रलक्ष्यीत्वाभावात् पुंवद्भावः। निषेधोऽयम् आख्याते च प्रवर्त्तते, अतो यादवीयते, माथुरीयते इत्याद्यपि। कौङ्कुमपटीक इति कौङ्कुमी पटी यस्येति विग्रहः। कौङ्कुमीति कुङ्कुमेन रक्ता इत्यर्थे 'तेन रक्तं रागादि'त्यनेन केशव-णः। लौहेश इति लौही ईशा यत्रेति विग्रहः। लौहीति लोहस्य विकार इत्यर्थे 'तस्य विकारः' इत्यनेन केशव-णः, ईशात्र रथावयवविशेषः। वृष्णीन्द्रहेत्विति किम्? वैयाकरणभार्यः वैयाकरणी भार्या यस्येति विग्रहः। वैयाकरणीति व्याकरणमधीते वेद वा इत्यर्थे 'तदधीते वेद वा' इत्यनेन केशव-णः। 'वृष्णीन्द्रस्थान-चतुःसनादेश-विष्णुपदान्तयोर्द्वारादिस्थयोश्च वृष्णीन्द्रं निषिध्य यवरामयोरैयौवौ, न तु स्वागतादेरि'त्यनेन यरामस्य ऐय॥

१९४८। न जाति। व्यक्तार्थमेतत्। गोपीभार्य इति गोपी भार्या यस्येति विग्रहः। गोपीति जातिवाचकाद्गोपशब्दादीप्। सुकेशीभार्य इति सुकेशी भार्या यस्येति विग्रहः। सुकेशीति 'स्वाङ्गाद्वे'त्यनेन ईप्। गोपीयते इति निषेधोऽयम् आख्याते च प्रवर्त्तते। अतोऽत्रापि पुरुषोत्तमवत्त्वस्य निषेधः॥

१९४९। मानि। एतदपि व्यक्तार्थम्। ब्राह्मणमानिनीति आत्मानं ब्राह्मणीं मन्यते इति णिनिः। सुकेशमानिनी आत्मानं सुकेशीं मन्यते इति णिनिः॥

१९५०। अनू। श्यामरामसमासे ते पूर्वोक्ता निषेधा अनूङो न

कृष्णपञ्चमी, कृष्णप्रिया, दत्तभार्या, पञ्चमभार्या, गोपकभार्या, मद्रकभार्या, यादवभार्या, गोपभार्या, सुकेशभार्या, जातीय-देशीयौ तद्धितौ ; कृष्णजातीयेत्यादि, कृष्णदेशीयेत्यादि। ऊङ्स्तु निषेध एव। गोपवरोरूरमणी॥ १९५०॥

इति पुंवद्भावः।

१९५१। गोत्रयाप ईः पुत्रपत्योः कृष्णपुरुषे, न च वामनः, पीताम्बरे तु बन्धौ, मातृक-मातृ-मातेषु वा।

---

भवन्ति। अनूङ इति उङ्-भिन्नस्येत्यर्थः। जाती। जातीयदेशीययोश्च परयोस्ते निषेधा न भवन्ति। कृष्णपञ्चम्यादिषु श्यामरामः कर्तव्यः। कृष्णपञ्चम्याद्युदाहरणद्वये 'न तूङ् न च पूरणीप्रियादिष्वि'त्यनेन निषेधे प्राप्ते निषेधविधानम्। दत्तभार्यादिचतुर्षु 'न संज्ञापूरण्यावि'-त्यादिना निषेधे प्राप्ते निषेधविधानम्। यादवभार्या इत्यत्र 'न वृष्णीन्द्र-हेतु-तद्धितान्ते'त्यादिना निषेधे प्राप्ते निषेधविधानम्। गोपभार्याद्युदा-हरणद्वयेन 'न जाती'त्यादिना निषेधे प्राप्ते निषेधविधानम्। अनङ इत्यत्र जातीयेति दत्ता 'प्रकारवतीत्यर्थे प्रकारवति जातीयः' इत्यनेन जातीय-स्तद्धितः। अत्र 'न संज्ञा-पूरण्यावि'त्यादिना निषेधे प्राप्ते निषेध-विधानम्। कृष्णजातीयेत्यादि इति पाठो बहुषु पुस्तकेषु दृश्यते, न तु दत्तजातीयेति। यद्येवं तदा कृष्णेति गुणवाचिका किन्त्वत्रापि संज्ञैवेति ज्ञेयम्। कृष्णात्र यमुना द्रौपदी वा। इत्यादीत्यादिपदेन गोपकजातीया, यादवजातीया इत्यादि। दत्तदेशीयेति 'ईषदसमाप्तौ कल्प-देश्य-देशीया' इत्यनेन देशीयस्तद्धितः। अत्रापि 'न संज्ञे'त्यादिना निषेधे प्राप्ते निषेधविधानम्। कृष्णदेशीयेत्यादि इत्यत्रापि संज्ञैव नत्वन्येति। आदिपदेन गोपदेशीयेत्यादि। गोपवरोरूरमणीति श्याम-राम।

१९५१। गोत्र। कृष्णपुरुषसमासे पुत्रपत्योः परयोर्गोत्रयापः स्थाने ईर्भवति न च वामनः। पीता। पीताम्बरसमासे तु बन्धौ परे गोत्र-

कारीषगन्ध्यायाः पुत्रः कारीषगन्धीपुत्रः। एवं कारीषगन्धीपतिः। कृष्णपुरुषे किम्? कारीषगन्ध्यापतिर्ग्रामः। तथा कारीषगन्धीबन्धुः। हे कारीषगन्धीमातृक, हे कारीषगन्ध्यामातृकेत्यादि। मातृपक्षे—कप्रत्ययाभावस्तु निर्देशवलादेव ॥ १९५१ ॥

यापः स्थाने ईर्भवति, न च वामनः। मातृ। पीताम्बरसमासे 'मातृकमातृमातेषु परेषु गोत्रयापः स्थाने ईर्वा भवति, न च वामनः। कारीषगन्ध्या इति अणप्रत्ययान्तात् कारीषगन्धशब्दात् 'गोरूपोत्तमाभ्यामनार्षाभ्यां गोत्रविहिताणिन्प्रत्ययाभ्यां याप्' इत्यनेन याप्। कारीषगन्धीपुत्र इति, ईरामे कृते 'ईशस्य वोत्तरपदे ईवव्ययसेयुवो विने'त्यनेन वामनः स्यादिति तन्निरासार्थं निषेधविधानम्। एवं कारीषगन्धीपतिरिति। कारीषेति कारीषगन्ध्याः पतिर्यत्रेति विग्रहः। तथेति कारीषगन्ध्या बन्धुर्यत्रेति विग्रहः। हे कारीषगन्धीमातृकेति कारीषगन्ध्या माता यस्येति विग्रहः। 'ऋराम-गोपी-सर्पिरादिभ्यः इत्यनेन कप्। इत्यादीत्यादिपदेन हे कारीषगन्धीमातः! हे कारीषगन्ध्यामातरिति, हे कारीषगन्धीमातः! हे कारीषगन्ध्यामातेति। कारीषगन्धी मातरित्यादौ मातृपक्षे कप्-प्रत्ययाभावस्तु सूत्रे मातृनिदशसामर्थ्यात् न केवलमयमेव हेतुः, किन्तु समासान्तप्रत्ययस्यानित्यत्वाच्च। कारीषगन्धीमातेत्यत्र तु बुद्धे तु मातृकस्य मातादेशो वाच्यः। पूज्यपुत्रे वाच्ये मातृकस्य मातादेशः।

* "चैतन्याख्यं जगन्नाथं नित्यानन्दं जगद्गुरुम्।
नत्वादौ तत्प्रसादेन सर्वसिद्धिं लभामहे ॥ १ ॥
गुरुं हरिं रूपसनातनौ च श्रीभट्टयुग्मं रघुनाथदासम्।
श्रीजीवदेवं परमादरेण निपत्य भूमौ शिरसा नमामि ॥ २ ॥
हरिनामामृतं वन्दे शब्दशासनवारिधिम्।
यस्य नन्दर्शनात् स्पर्शादधमोऽप्युत्तमो भवेत् ॥ ३ ॥

* एतत्पर्यन्तं श्रीहरेकृष्णाचार्यकृता टीका समाप्ता। इतःपरं श्रीगोपीचरणदासवेदान्तभूषणकृता। अतोऽत्र पृथङ्मङ्गलाचरणं ज्ञातव्यम् ॥

१९५२। महतः संसारस्याराम एकाधिकरण-जातीययोः, घास-करविशिष्टेषु च, पुरुषोत्तमवच्च।

महांश्चासौ पुरुषश्च महापुरुषः; महादेवः; महान् भुजोऽस्य

---

सर्वान् जीवयते यो हि वैष्णवांश्च विशेषतः।
भक्तिशास्त्रविभागेन स जीवः कथ्यते बुधैः॥ ४॥
हरते या हरेश्चित्तं हरा सा राधिकोच्यते।
तस्या इर्व्रजकन्दर्पः कृष्ण इत्यभिधीयते॥ ५॥
तस्मिन् कृष्णं मनःसत्वं नित्यं यस्य स उच्यते।
हरेकृष्णाभिधश्चास्मिन् स्वर्णमुख्यां * प्रतिष्ठितः॥ ६॥
परोपकारी शुद्धात्मा ग्रन्थपूर्णं विना किल।
संसारविषयं हित्वा पितुः शापाद्व्रजं गतः॥ ७॥
तस्य कीर्तिं हरेर्नाम्नोऽमृतस्य शब्दशासने।
वालानां तोषणीं नाम्ना टीकां वै स्वप्रयत्नतः॥ ८॥
बह्वायासात् समाहृत्य क्रमं कृत्वा विशुध्य च।
भ्रातरं श्रीलगोविन्ददासाख्यं स्वं समन्वयात्॥ ९॥
पाठयामास कात्‌स्न्येन श्रीगोपीचरणाख्यया।
सार्धं दासो वराकोऽपि स्ववाक्शुध्यर्थिको मुदा॥ १०॥"

ततः परमभागवताग्रगण्य श्रीमन्महामहोपाध्यायावलिनिषेविताङ्घ्र्यब्ज-श्रीमज्जीवगोस्वामिप्रभृतिगुरूणां चरणरजांस्यवलम्ब्यावशिष्टव्याख्याना-योद्यममिममाधुनिकोऽपि करोमि तत्प्रसादादयं पूर्णश्चेत्तदा तेषामेव महिमप्राबल्यं न चेत्तदा मम किं सामर्थ्यमिति॥

१९५२। महतः। एकाधिकरणे जातीये च परस्मिन् महतः संसारस्य स्थाने अरामो भवति। एकं तुल्यमधिकरणं यस्येति विग्रहः। घास। घासश्च करश्च विशिष्टश्च ते घासकरविशिष्टास्तेषु महतः संसारस्यारामः स्यात्, लक्ष्मीश्चेत् पुरुषोत्तमवच्च पुरुषोत्तमवत्त्वे च संसार-

---

* सानामुखीग्रामे।

महाभुजः; महाजातीयः; महती प्रिया यस्येत्यादौ नेष्यते, लिङ्ग-विशिष्टग्रहणस्य प्रायिकत्वादिति जुमरः; महतीप्रियः ॥ १९५२ ॥

१९५३। अभूततद्भावे व्यभिचारः।

महद्भूतो विधुः। घासादौ—महतो महत्या वा घासः महाघासः ॥ १९५३ ॥

१९५४। द्व्यष्टनोः संसारस्यारामो दशादौ प्राक्

---

स्यारामः स्यादिति। महादेव इति महांश्चासौ देवश्चेति विग्रहः। महान् भुजोऽस्येति पीताम्बरेऽपि एकाधिकरणसम्भवात् महाभुज इति। महाजातीय इति। महतो महत्या वा प्रकारः महाजातीयः। जातीया-दावसामानाधिकरण्येऽपि महतस्तत्योराकारः पृथग्विधानादित्यके। महती प्रिया यस्येत्यादौ नेष्यते आराम इति शेषः। हेतुमाह—लिङ्गेति। नाम्नो ग्रहणे लिङ्गविशिष्टग्रहणस्य प्रायिकत्वात्। बाहुल्या-दिति जुमर आह, गोस्वामिपादानामप्येतदेव मतं, जुमरमतेनैवोदा-हरणदर्शनात्। महती प्रिया यस्येति विग्रहः। 'गोरीप' इत्यनेन वामन इति ॥

१९५३। अभू। अभूततद्भावे एकाधिकरणादौ व्यभिचारः उक्तान्यथाचारः। सूत्रद्वयस्यानुवर्तनात् महतः संसारस्यारामे प्राप्ते प्रकारान्तरेण निषेधविधानम्। अमहान् महान् भूत इत्यर्थे अभूत-तद्भावे विः कृभ्वस्त्यनुप्रयोगश्च केवलप्रत्ययवेर्हरः। महद्भूतो विधु-रिति विधुश्चन्द्रः कृष्णो वा। 'विधुः श्रीवत्सलाञ्छनः' इत्यमरात्। कृष्णस्य महद्भूतत्वं कस्यचित् कस्मिंश्चित् कार्ये दर्शनापेक्षया विधोस्तु पूर्णमास्यामिति भेदः। अमहती महतीभूता महद्भूता ब्राह्मणी-त्यत्रापि न स्यात् व्यभिचारात्। एकाधिकरणेति किम्? महतो महत्या वा पुत्रः महत्पुत्रः महतीपुत्र इत्यादौ न स्यात्। घासादाविति रूपं दर्श्यते इति शेषः। महतो महत्या वा घास इति महाघासः। एवं महाकरः महाविशिष्ट इति। घासादाविति किम्? महत्सर्गः ॥

१९५४। द्व्यष्ट। शतात् प्राक् पूर्वस्मिन् दशादौ परे द्व्यष्टनोः

शतात्, त्रिस्त्रयस्, नवतिपर्यन्त-चत्वारिंशदादिषु तु वा, न तु पीताम्बराशीत्योः।

द्वादश, अष्टादश, त्रयोदश, द्वाविंशतिरित्यादि ; तथा द्वाचत्वारिंशत्, द्विचत्वारिंशदित्यादि। नेह– द्विशतं, द्विदशाः, द्व्यशीतिरित्यादि॥ १९५४ ॥

---

संसारस्यारामो भवतीति शेषः। त्रिस्त्र। शतात् प्राक् तस्मिन्नेव परे त्रिशब्दस्य त्रयस् स्यात्। नव। नवतिपर्यन्ता सीमा येषां चत्वारिंशदादिर्येषां ते च ते च ते। नवतिपर्यन्तचत्वारिंशदादिषु परेषु द्व्यष्टनोः संसारस्यारामस्त्रेस्त्रश्च वा स्यात्। न तु। 'यावत् सम्भवस्तावद्विधिरि'ति न्यायेन पीताम्बरे समासे शतात् प्राक् दशाद्यादिषु परेषु द्व्यादीनां विहितं कार्यं न स्यात्। अशीतीति परस्याञ्च अशीत्यादिदशाद्यन्तःपातात् पीताम्बरसमासेऽशीति ग्रहणं विनैव तस्यां निषेधः सिध्येत्, तथाप्यशीतिपृथगग्रहणमेतज्ज्ञापयति अशीत्यां परस्यां पीताम्बरे समासान्तरेऽपि निषेधः स्यादिति। दशादावित्यादिपदेन विंशतित्रिंशच्छब्दयोर्ग्रहणम्। अन्यथा तृतीयसूत्रे नवतिपर्यन्तचत्वारिंशदादिषु विकल्पविधानमनर्थकं स्यात्, द्वैकादश इत्यादिप्रयोगदर्शनाच्च। न तु पीताम्बरेत्यत्र प्राप्तौ निषेधादयं विधिः समासमात्र एव लभ्यते। अशीत्यां निषेधस्तु नवत्यन्तःपातात् प्राप्तेरिति। द्वादश इति द्वौ च दश चेति दशभ्योऽधिकौ द्वाविति द्वाभ्यां गुणिता दश इति वा विग्रहः। 'संख्यायामल्पीयसश्च' इत्यनेन पूर्वनिपातः। एवं अष्टादश, त्रयोदश। द्वाविंशतिरित्यादीत्यादिपदेन अष्टाविंशतिः, त्रयोविंशतिः, द्वात्रिंशत्, त्रयस्त्रिंशदिति। तथेति द्वाचत्वारिंशत् द्विचत्वारिंशदित्यादीत्यादिपदेन अष्टाचत्वारिंशत् अष्टचत्वारिंशत्, त्रयश्चत्वारिंशत् त्रिचत्वारिंशत्। एवं द्वापञ्चाशत् द्विपञ्चाशत्, अष्टापञ्चाशत् अष्टपञ्चाशत्, त्रयःपञ्चाशत् त्रिपञ्चाशदिति। तथा द्वाषष्टिः द्विषष्टि, अष्टाषष्टि अष्टषष्टिः, त्रयःषष्टिः त्रिषष्टिरिति। द्वासप्ततिः द्विसप्तति, अष्टासप्ततिः अष्टसप्ततिः, त्रयःसप्ततिः त्रिसप्ततिरिति। एवं द्वानवतिः द्विनवतिः,

१९५५। संज्ञायाञ्च नेष्यते।

द्वाविंशतिः कश्चित् ॥ १९५५ ॥

१९५६। षोड़शैकादश च निपात्यौ।

१९५७। अष्टन आ कपाले हविषि, गवि तु युक्ते।

---

अष्टानवतिः अष्टनवतिः, त्रयोनवतिः त्रिनवतिरिति। नेह द्विशतं त्रिशतम् इति शतात् प्राक् दशादीनां ग्रहणादिति शेषः। द्विदशा इति द्वाभ्यां गुणिता दश इति पीताम्बरेणाच्-प्रत्ययान्तः। द्व्यशीतिरिति द्वाभ्यां गुणिता अशीतिरिति पीताम्बरे द्वाभ्यामधिका अशीतिरिति समासान्तरेऽपि। द्व्याशीतिरित्यादीत्यादिपदेन पूर्ववत् अष्टाशीतिरित्यादयो ज्ञेयाः ॥

१९५५। संज्ञा। संज्ञायां वाच्ये शतात् प्राक् दशाद्यादौ परे द्व्यादीनां यत् कार्यं विहितं तन्नेष्यते। द्वाभ्यामधिका विंशतिर्यत्रेति विग्रहः। संज्ञा-शब्दानां यथा कथञ्चिद्व्युत्पत्तित्वात्। कश्चिदिति व्यक्तिविशेषः ॥

१९५६। षोड़। षोड़शैकादश च द्वौ निपात्यौ निपात्येयाताम्। षोड़शैकादश इति द्वावपि बहुवचनान्तौ। सूत्रे वेदवद्व्यवहारत्वात् निर्देशे द्वयोरेकत्वमव्ययत्वञ्च, तस्मात् 'स्वादेर्महाहरः' इति। ननु यद्यनयोरव्ययत्वं तर्हि 'अव्ययविशेषणं ब्रह्मे'त्यनेन निपात्यावित्यत्र कथं न ब्रह्मत्वम् ?–सत्यम्। सूत्रे वेदवद्व्यवहारादेवाव्ययत्वं वास्तवस्तु न, तस्मात् तयोः पुरुषोत्तमत्वज्ञापनाय विशेषणस्यास्य नारायणत्वमिति। षट् च दश च एकश्च दश च इति विग्रहः। षोड़श इत्यत्र 'अन्तरङ्ग-स्वादेर्महाहरः' इत्यनेन स्वादेर्महाहरे सति निपातनत्वात् सत्वापाये विष्णुसर्गस्य 'आदरामगोपालयोरि'त्यनेन उरामः। दशशब्दस्य दस्य डत्वं निपातफलं बहुत्वात् 'सनान्त-संख्ये'त्यनेन जस्शसोर्महाहरः। एकादशेत्यत्र एकशब्दस्य संसारस्यारामो निपातफलमिति ॥

१९५७। अष्ट। हविषि वाच्ये कपाले परे युक्ते तु वाच्ये

अष्टसु कपालेषु संस्कृतम् अष्टाकपालं हविः; अष्टौ गावो युक्ता यत्र तत् अष्टागवं ब्राह्मणशकटम् ॥ १९५७ ॥

१९५८। सहस्य सः।

विभुरयम् ॥ १९५८ ॥

१९५९। पीताम्बरे वा।

प्रभुर्विधिश्चायम्। सकृष्णः, सहकृष्णः ॥ १९५९ ॥

---

गवि परे अष्टनः संसारस्यारामः। अष्टावित्यपि विग्रहः। अष्टागवमित्यत्र 'गोरतद्धितलुकी'ति समासान्तष्टस्तद्धितः। ब्राह्मणशकटस्याष्टगोयुक्तत्वं प्रसिद्धमन्यथा ब्राह्मणस्य गोघ्नत्वं स्यात्॥

१९५८। सह। अधिकारसूत्रमेतत्। अस्य विभुत्वेन तदवान्तरसजातीयविजातीयानेकाधिकारव्यापित्वात् परत्राव्ययीभावेऽपि सहस्य सादेशः स्यात्।

१९५९। पीता। एतदप्यधिकारसूत्रम्। अस्य केवलैकाधिकारव्यापित्वात् पीताम्बरे सहस्य सादेश एव नान्यत्र। नन्वत्र प्रभुश्चायमित्येव लक्षणमस्तु, विधीति किमर्थमिति चेत् केनाप्युच्यते तदैवं वाच्यम्। प्रभुर्विधिश्चायमित्यत्र प्रभुश्चायमिति पाठेऽस्य सूत्रस्य विधित्वाभावे सकृष्ण इति उदाहरणद्वयं न सिध्येत्, विध्यन्तराभावात्। नन्वेकस्य द्विविधत्वं कथमिति वाच्यम्। न च यथा कर्ममीमांसायां संयोगपृथक्त्वन्यायेन खादीरे पशुं बध्नीयात्, खादीरं यूपं कुर्वीत, भूतिकाम इत्यत्रैकस्यैव खादीरस्य नित्यत्वकाम्यत्वे। एकस्योभयलिङ्गत्वे संयोगपृथक्त्वमिति लिङ्गं हि चिह्नं फलश्रुत्यभावे नित्यत्वं फलश्रुत्यान्तु काम्यत्वम्। यथैकस्य एव सन्ध्योपासनाया नित्यत्वं काम्यत्वञ्च। तद्वदिहापि एकस्यैव प्रभुत्वं विभुत्वञ्चेति। विधिपक्षे एवं व्याख्येयम्। पीताम्बरे समासे सति उत्तरपदे परे सहस्य सो वा स्यात्, सहकृष्ण इति कृष्णेन सह वर्तमान इति विग्रहः॥

१९६०। आशिषि गोवत्स-हलेष्वेव।

स्वस्ति सगवे सहगवे इत्यादि। नेह—स्वस्ति सहकृष्णाय ॥ १९६० ॥

१९६१। नित्यं ग्रन्थान्ताधिकानुमेयेषु।

साङ्गं श्रीभागवतमध्यैष्ट, अन्तपर्यन्तमित्यर्थः। सद्रोणा खारी, द्रोणादधिकेत्यर्थः। सविष्णुभक्तिर्वैष्णवसङ्गः; वैष्णवसङ्गात् सा भवेदित्यनुमीयते ॥ १९६१ ॥

---

१९६०। आशि। पीताम्बरे समासे आशिषि गम्यमाने गवादिषु परेषु एव सहस्य सो वा स्यात्। गवा सह वर्तते यस्तस्मै स्वस्ति मङ्गलं भूयादिति आशीर्गम्यते इत्यादीत्यादिपदेन स्वस्ति सवत्साय, स्वस्ति सहवत्साय, स्वस्ति सहलाय, स्वस्ति सहहलाय इति। नेह गवादिपरत्वाभावादिति शेषः। सहकृष्णाय श्रीनन्दायेत्यर्थः॥

१९६१। नित्यम्। ग्रन्थान्तश्च अधिकश्च अनुमेयश्च तेषु वाच्येषु उत्तरपदे परे नित्यं सहस्य सः स्यात्। पीताम्बर इत्यधिकाराल्लभ्यते। साङ्गमिति अङ्गेन सह वर्तमानं साङ्गमिति विग्रहः। साङ्गमन्तपर्यन्तं श्रीभागवतमधीतवानित्यर्थः। द्रोणेन सहाधिका इति विग्रहे सद्रोणा खारीति द्रोणादधिकेति निर्गलितार्थः। विष्णुभक्त्या सह वर्तमान इति विग्रहः। अनुमेयार्थस्तु स्वयं ग्रन्थकृता व्याख्यात एव वैष्णवेत्यनेन। अत्र सूत्रे अस्मन्मते संज्ञाथ न दृश्यते, अन्यमते तु दृश्यते। तद्यथा—'संज्ञाधिकानुमेयग्रन्थसमाप्तिषु नित्यमि'ति कस्यचित् सूत्रम् एष्वर्थेषु सहस्य सो नित्यं स्यात्, हे इति तट्टीका हेति बहुव्रीहाविरयर्थः। तत्र संज्ञायां अश्वत्थेन सह वर्तते यत्तत् साश्वत्थं नक्षत्रचक्रम्। एवं सपलाशं, सशिंशपं स्थलम्। अन्यार्थेषु यथा—सकाकलीको द्रोणः काकल्या अधिक इत्यर्थः। काकली परिमाणविशेषः। साग्निः कपोतः। गृहे कपोतपातात्तु भाव्यग्निरनुमीयते

१९६२। अव्ययीभावे चाकाले।

सचक्रं निधेहि शङ्खम्। अकाले किम्? सहापराह्णम् ॥१९६२॥

इति सहस्य सः।

१९६३। समानस्य सः।

प्रभुरयम् ॥ १९६३॥

१९६४। ज्योतिर्गण-जनपद-रात्रि-नाभि-बन्धु-गन्ध-पिण्ड-लोहित-कुक्षि-वेणी-पत्नी-पक्षेषु।

सज्योतिरित्यादि ॥ १९६४ ॥

---

इत्यग्निरनुमेयः। एवं सपिशाचा वात्या। साङ्गान् वेदानधीते अङ्गानां समाप्तिं यावदित्यर्थः। एतानि तदुदाहरणानि ॥

१९६२। अव्य। अव्ययीभावे समासे अकाले वाच्ये उत्तरपदे परे सहस्य सः स्यात्। चक्रेण सहैककालं यत् किमपि तन्निधेहीत्यथ सचक्रं शङ्खमित्यर्थः। अकालेति अपराह्णेन सहैककालमित्यर्थे सहापराह्णं दिवसमित्यर्थः। इह काल एव वाच्यः। अतो न स्यादिति ॥

१९६३। समा। यथास्वं समानस्य सः स्यात्। एतदधिकारसूत्रम् ॥

१९६४। ज्योति। ज्योतिश्च गणश्च जनपदश्च रात्रिश्च नाभिश्च बन्धुश्च गन्धश्च पिण्डञ्च लोहितश्च कुक्षिश्च वेणी च पत्नी च पक्षश्च एषु त्रयोदशसु परेषु समानस्य सः स्यात्। सज्योतिरिति समानं ज्योतिर्यस्येति विग्रहः। समानञ्च तत् ज्योतिश्चेति वा विग्रहः। एवं इत्यादीत्यादिपदेन सगणः, सजनपदः, सरात्रिः, सनाभिः, सबन्धुः, सगन्धः, सपिण्डः, सलोहितः, सकुक्षिः, सवेणी, सपत्नी, सपक्ष इति। जनपदशब्दस्य योगविभागात् सजनः, सपद इत्यपि ज्ञेयम्। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रि,-वस्तुषु' इत्यमरः। सपत्नीति समानः पतिरस्या इति वाक्ये पतिशब्दादीप् तस्मिन् परत्युः पत्नभावश्च वक्ष्यते।

१९६५। सब्रह्मचारी वेदाध्ययनार्थं समानव्रत-चारिणि।

साधुः॥ १९६५॥

१९६६। सतीर्थ्यः समानगुरुकुलवासिनि।

साधुः॥ १९६६॥

१९६७। विभाषा रूप-गोत्र-नाम-स्थान-वर्ण-धर्म-वयो-वचनोदर्यगर्भ-जातीयेषु।

सरूपः, समानरूप इत्यादि। विस्तरादिसम्मतं प्रयुक्तञ्चेदम् ॥ १९६७॥

---

१९६५। सब्रह्म। व्यक्तार्थमेतत्। ब्रह्म वेदः तदध्ययनार्थं यदुक्तं तदपि ब्रह्म। वेदाध्ययनार्थं समानं ब्रह्म व्रतं चरितुं शीलमस्येति विग्रहे सब्रह्मचारी। यद्वा, ब्रह्म व्रतं चरतीति ब्रह्मचारी ग्रहादित्वाण्णिनिः। ततः समान एव ब्रह्मचारी सब्रह्मचारी तस्यैव वेदाख्यस्य ब्रह्मणः सदृशं व्रतं चरतीत्यर्थः॥

१९६६। सती। एतदपि व्यक्तार्थम्। समानस्तीर्थो गुरुकुल-वासो यस्येति विग्रहे सतीर्थ्यः। समाने गुरुकुले वसतीत्यर्थः। समानस्तीर्थो गुरुर्यस्येति वा सतीर्थ्यः। 'तीर्थमृषिजुष्टजले गुरावि'-त्यमरात्। एकगुरुः सतीर्थ्यः स्यादिति कोषान्तराच्च। समाने तीर्थे गुरौ वसतीत्यर्थे ( सतीर्थाद् यो वासिनि, इति ये कृते ) सतीर्थ्यः एकगुरुः। समानतीर्थशब्दादिति केचित्॥

१९६७। विभा। रूपादिष्वेकादशसु परेषु विभाषा विकल्पेन समानस्य सः स्यात्। समानं रूपं यस्येति समानञ्च तत् रूपञ्चेति वा सरूपेत्यादिद्वयम्। एवमित्यादीत्यादिपदेन सगोत्रः, सनामा, सस्थानः, सवर्णः सधर्मः, सवयाः, सवचनः, सोदर्यः, सगर्भः, सजातीय इति। पक्षे समानगोत्र इत्यादयश्च। सोदर्य इति समाने उदरे शयिता

१९६८। अन्यस्यान्यत् कारकशब्दे।

१९६९। अषष्ठी-तृतीयास्थस्य तु आशीः आशा आस्था आस्थित उत्सुक ऊति राग इत्येषु च।

१९७०। अर्थे तु वा।

अन्यत्कारकः, अन्यदाशीः इत्यादि। तथा अन्यदर्थः, अन्यार्थः। नेह—अन्यस्य अन्येन वा आशीः अन्याशीः॥१९७०॥

१९७१। कृष्णपुरुषे।

प्रभुरयम्॥ १९७१॥

---

इत्यर्थे यः। अत्रोदर्यशब्देनोदरशब्दोऽपि गृह्यते सोदरप्रयोगदर्शनात्। समानार्थ-सहशब्दस्य सादेश उदरे परे इति कस्यचिन्मतम्। तथाच—'त्वं सोदरस्यातिमदोद्धतस्ये'ति भट्टिः। ग्रन्थकृता स्वयमेव विस्तरादिमतञ्चोक्तमिति॥

१९६८। अन्य। सुगमम्।

१९६९। अषष्ठी। इत्येषु आशीरादिषु परेषु षष्ठीतृतीयाभ्यामन्यत्र स्थितस्य पुनरन्यस्यान्यत् स्यात्॥

१९७०। अर्थे। अर्थे तु परस्मिन्नन्यस्यान्यद्वा। अप्राप्ते विकल्पोऽयम्। मध्यषष्ठितृतीयस्थवर्जनात् सूत्रत्रयं प्रायः समासमात्रे प्रवर्तते। अन्यदिति अन्यस्य कारक इति अन्यश्चासौ कारकश्चेति वा न नियमः। अन्यदेति अन्यस्मै अन्यस्माद्वा आशीरिति विग्रहः। एवमित्यादीत्यादिपदात् अन्यस्मिन् अन्यस्माद्वा आशा अन्यदाशा; अन्यस्मात् अन्यस्मिन् वा आस्था अन्यदास्था। तथा अन्यदास्थितः, अन्यदुत्सुकः, अन्यदूति, अन्यद्राग इति। ऊतिर्लीला। तथेति अन्यस्मै अयमिति नित्यसमासे सपदविग्रहाभावः। नेहेति अषष्ठीत्युक्तादिति शेषः॥

१९७१। कृष्ण। अयं विधिरधिकारः॥

१९७२। कोः कत् सर्वेश्वर-त्रि-वद-रथेषु।

कदन्नं, कत्रयः, कद्वदः, कद्रथः ॥ १९७२ ॥

१९७३। कोः का पथ्यक्षयोरीषदर्थे च।

कापथं, काक्षम ; अनयोस्तद्धितोऽद्वाच्यः ( २१६० ) ईषदर्थे — काम्लम् ॥ १९७३ ॥

---

१९७२। को.। सर्वेश्वरश्च त्रयश्च वदश्च रथश्च ते, कृष्ण-पुरुषे एतेषु परेषु कोः कत् स्यात्। परसूत्रे ईषदर्थे चेति विशेषणात् कुरयमव्ययो न च पृथिवीवाचकस्तथापि शब्दानुकरणान्नाशात् षष्ठ्या महाहरः। यदुक्तमन्यैः—'सम्भवव्यभिचारे हि विशेषणमनर्थवदि'ति। अनीषदर्थोऽयं योग इति। कदन्नमिति कुत्सितञ्च तदन्नञ्चेति विग्रहे 'कुप्रादयो मध्यपदलोपश्चे'त्यनेन श्यामरामः एवं कत्रय इत्यादयः। कद्वद इति वदः पचाद्यदन्तः ॥

१९७३। कोः का। पन्थाश्च अक्षश्च तौ अनयोः परयोरी-षदर्थेऽन्यस्मिन् परे कोः का स्यात्। कापथमिति कुत्सितश्चासौ पन्थाश्चेति। एवं काक्षं अक्षशब्दोऽयमिन्द्रियवचनोऽत्र गृह्यते। 'अक्षः पाशकमिन्द्रियः' इत्यमरशासनात्। अनयोरिति तद्धितोऽद्वाच्यः वक्ष्यते इत्यर्थः। 'ऋक्पथिपूरपः' इत्यादिनेति शेषः। 'संख्याव्ययाभ्यां पथः' इत्यनेन ब्रह्मत्वम्। 'पथः संख्याव्ययात् परः' इति लिङ्गादिसंग्रहः। अस्मन्मते पथि परे कोः कादेशे विकल्पो न भवेत्, कस्यचिन्मते तु विकल्पः स्यादेव। 'कोः का वा पथिपुरुषयोरि'ति सूत्रम्। कोः का स्याद्वा पथिपुरुषयोरिति तत्सूत्रार्थः। कापथं कुपथमिति तदुदा-हरणञ्चेति। कापथ इति तु ईषदर्थे वर्तमानस्य कुशब्दस्य पथिशब्द-सदृशार्थ-पथशब्दे कादेशो भवतीति। परे तु कापथमिति नित्यमाहु-रिति तेनैवोक्तञ्च। अतोऽन्येऽपि कुपथमित्यसाधुः। पथिशब्देन सह समासे नित्यं कादेशादिति न सत्कुर्वन्ति पथिशब्दसमानार्थेन पथशब्देन समासे क्लीवत्वाभाव इति सत्कुर्वन्ति च। ईषेति प्रयोगो दृश्यते इति

१९७४। कापुरुष-कुपुरुषौ।

साधू॥ १९७४॥

१९७५। कोष्ण-कवोष्ण-कदुष्णा मन्दोष्णे साधवः।

शेषः। ईषदर्थे चेति पृथग्विधानं पथ्यक्षयोरनुवर्तमानार्थम्। अतएव काम्लमित्युदाहृतम्। कु ईषच्च तदम्लञ्चेति विग्रहः। एवं काजलं, कालवणं, कावादः, काकार इत्यादि। अत्रैव ईषद्वादो यत्र कावादः। ईषदाकारोऽस्येति काकार इत्यादौ तु अचि कदादेशो वाध्यते। अपेक्षितविधित्वात् परत्वाच्चेत्यनेन प्रकारेण कृष्णपुरुषाधिकारं व्यभिचारयित्वा बहुव्रीहावपि कश्चित् कोः कादेशं करोति स्वमतपरिपोषणाय। 'देवाकानिनि कावादे वाहिका स्वस्वकाहि वा। काकारे भभरे काकानिस्वभव्यव्यभस्वनी'ति भारविञ्चोत्थापयति ( १५२५ )॥ एतदभिप्रेत्य अन्योऽपि ईषदर्थे कृष्णपुरुष एव पथ्यक्षानुवर्तनाभावं मनसि कृत्य कु ईषदक्षोऽस्येति वाक्ये काक्षो विप्र इत्यत्र समासान्तरे कृतेऽपि अक्षपरता विद्यत एवेति कादेशं करोति। एतन्मतं परे न बहुमन्यन्ते ईषदाकारो यस्येत्यन्तरमस्तीत्यध्याहारात् तत्पुरुषत्वं कृत्वा अर्श आदित्वाददित्याह तन्निरर्थकत्वात्। भारविटीकाकृतस्तु—कं मदजलमाकिरति काकारः। एवं कस्य मस्तकस्यावादः स्थैर्यं यत्रेति कावाद इत्याहुरिति भङ्ग्या तट्टिकाकारमतेनैव दूषयन्ति चेति॥

१९७४। कापुरुष। वृत्तिमाह—साधू इति निपात्येते इत्यर्थः। अनीषदर्थेऽपि पुरुषे परे कोः का वा निपात्यते इति निर्गलितोऽर्थः। विग्रहस्तु पूर्ववत्। ईषदर्थे कोः पुरुषे परे कादेशो वेति भागवृत्तिः। तन्मते कु ईषच्चासौ पुरुषश्चेति कापुरुषः कुपुरुष इति॥

१९७५। कोष्ण। अत्रापि साधव इति वृत्तिः। कृष्णपुरुषे मन्दोष्णे वाच्ये कोष्णादयः साधवो निपात्यन्ते इत्यर्थः। अर्थात् उष्णे परे कोः का कवः कत् आदेशाः भवन्तीत्यर्थः। ईषदर्थे कोः कत्कवः काः स्युरग्न्युष्णयोः परयोरिति केचित्। तन्मते कदग्निरित्यादयोऽपि। परे तु अग्निशब्दे परे काकवादेशौ नाहुः। कदुष्णमित्यादौ अनीष-

१६७६। हृदयस्य हृल्लेख-लासयोर्यणोश्च।

लेख इत्यणन्तो गृह्यते। हृल्लेखः, हृल्लासः, हृद्यं, हार्दम्। घणि तु—हृदयलेखः ॥ १६७६ ॥

१६७७। शोक-रोगयोर्वा।

हृच्छोकः, हृदयशोक इत्यादि ॥ १६७७ ॥

१६७८। नासिकाया नस् य-तसि-क्षुद्रेषु, न तु वर्ण-नगरयोः।

---

दर्थेऽपि कोरुष्णे शब्दे परे कत्कवकादेश इत्यन्ये। कोः कत् कुले जाताविति वक्तव्यम्। तृणशब्दे परे कोः कद्भवति। कत्तृणं नाम जातिः। जाताविति किम्? कुत्सितानि तृणानि कुतृणानि ॥

१६७६। हृद। कृष्णपुरुषे लेख-नासयोः परयोः तद्धितयाणोश्च परयोर्हृदयस्य हृद्भवति। इत्यणन्तु इति कर्मण्यनिति। हृदयं लिखतीत्यर्थे कर्मण्यन्, ततः 'कर्तृकर्मणोः षष्ठी'त्यनेन षष्ठी, पश्चात् षष्ठीकृष्णपुरुषः। दतौ परवर्णावि'त्यनेन तरामस्य लरामः। लस्यते लासः घणन्तः, ततो हृदयस्य लास इति विग्रहे पूर्ववत्। हृद्यमिति हृदयात् तत्प्रिय इत्याद्यर्थे यत्। हार्दमिति हृदयस्येदमित्याद्यर्थे 'तस्येदमि'त्यनेन केशवणः। घणि त्विति घणन्ते त्वित्यर्थः। हृदयलेख इति लेखः पचाद्यदन्तः लेखधातोर्बहुलकुटादित्वादुभयत्र गोविन्दः। हृदयसमानार्थात् हृच्छब्दात् हृल्लेखादयः सिध्यन्त्येव, हृदयशब्दाल्लेखादौ परे हृदयलेखादिप्रयोगनिरासार्थमिदं सूत्रम् ॥

१६७७। शोक। शोकरोगयोः परयोर्हृदयस्य हृदादेशो वा स्यात्। हृच्छोक इति हृदयस्य शोकः हृदये शोकः इति वा विग्रहः। इत्यादीत्यादिपदात् हृद्रोगः, हृदयरोग इति। किञ्च, शोकरोगयोरेव परयोर्हृदयस्य हृद्वा स्यात्, इति न वाच्यं, यतोऽत्रैव वा शोकशल्यस्यङ्रोगेष्विति पाणिनिसूत्रात्। हृच्छल्यं हृदयशल्यमित्यादिप्रयोगदर्शनाच्च। स्यङ् अत्र यरामः ॥

१६७८। नासि। य-तसि क्षुद्रेषु परेषु नासिकाया नसादेशः

नस्यं, नस्तः, नःक्षुद्रः। नेह—नासिक्यमक्षरं नगरं वा ॥ १९७८ ॥

१९७९। पादस्य गादिषु पद्ग-पदाजि-पदाति-पदोपहताः, पद्धिम-पत्काषि-पद्धति-पद्याश्च पद्घोष-पन्मिश्र-पच्छब्द-पन्निष्कास्तु वा।

साधवः ॥ १९७९ ॥

---

वर्णनगरयोर्वाच्ययोरेषु परेषु नासिकाया नस् न तु स्यात्, नस्यमिति नासिकायां भवः नासिकामर्हतीत्याद्यर्थे यरामान्तम्। नस्त इति नासिकाया इति पञ्चम्यास्तस्। नःक्षुद्र इति नासिकायाः क्षुद्रः नासिकायां वा क्षुद्र इति विग्रहः। नेहेति नासिकायां भव इत्यर्थे नासिक्यमक्षरं नगरं वेति स्वयमेव दर्शितमिति ॥

१९७९। पाद। ग आदिर्येषां ते गादयः तेषु परेषु सत्सु कृष्णपुरुषसमासे निपातनात्। पादशब्दस्य पद्पदाभ्यामादेशाभ्यां सह एते पद्गादयश्चत्वारो यथेष्टं साधवो भवन्ति। तथा हिमादिषु परेषु पादस्य पद्धिमादयश्चत्वारः। पद्घो। घोषादिषु परेषु पादस्य पदादेशेन पद्घोषादयस्तु चत्वारो वा साधवो भवन्ति। साधव इति वृत्तिः। पूर्वसूत्रेण नित्ये प्राप्ते विकल्पार्थमिदम्। एते सर्वे गादेरन्तर्गणाः। पद्ग इति पादाभ्यां गच्छतीति गाते वा इति वाक्ये 'गम अजि'त्यनेन अच् 'संसारस्य हरश्चिती'ति अजन्तः गः। गाङ् गतावित्यस्माच्च 'अकर्मण्यारामात् कः' इत्यनेन कप्रत्ययान्तो गः। ततः 'उपेन्द्रोर्यादी'त्यनेन समासः। सोऽपि कृष्णपुरुष एव 'कर्तृकरणे कृते'त्युक्तत्वात्। एवमुत्तरत्रापि यथायोग्यम्। पदाजिरिति पादाभ्यां अजतीति अज गतौ क्षेपणे च, इण् च भावे, कृत्प्रकरणे इत्युक्तं स इण् कृद्बाहुल्यात् अत्रैव निपातनाद्वा अस्माद्धातोः कर्तर्यपि स्यादजेर्वीनिषेधश्च। उद्धवारामस्येति वृष्णीन्द्रः। एवं पादाभ्यामततीति अत सातत्यगमने इत्यस्मादिण्। अत्रैव स्रादेदिणित्युपपदे इण् बाहुल्यादजेर्वी न भव-

१९८०। उदकस्योदः।

प्रभुरयम्॥ १९८०॥

१९८१। धि-पेष-वास-वाहनेषु।

उदधिः; उदपेषं पिनष्टि॥ १९८१॥

---

तीत्यन्ये। पादेनोपहतः पादोपहतः इत्यत्र पादस्य अदन्तः पदादेशः अन्यथायं प्रयोगो न सिध्येत्। पदसमानार्थपच्छब्देनापि पद्गपदाजि-पदातीत्यादिसिद्धौ पाद्गपादाजिप्रभृतीनां निरासार्थमिदं सूत्रम्। 'पदाति-पत्ति-पद्गः' इत्याद्यमरः। पदोपहतेत्यत्रादन्तपदादेशफलदर्श-नात् यथायोग्यं पद्ग इत्यादिकमपि ज्ञेयम्। पद्धिममिति पादयोर्हिम-मिति षष्ठीकृष्णपुरुषः। पत्काषीति पादाभ्यां कषतीति कष हिंसाया-मित्यस्मात् णिनिस्तच्छीलादावित्यनेन णिनिः। पद्धतिरिति पादाभ्यां हतिरिति विग्रहे 'कर्तृकरणे कृते'त्यनेन वत्यन्तत्वेन हतिशब्देन समासः। पद्य इति पादाभ्यां यातीति 'अकर्मण्यारामादि'त्यनेन कः। 'आरामहरः कंसारी'त्यनेन आरामहरः। अतदर्थे यतीति लक्षणेन अतदर्थे यति परे पादस्य ह्रस्वो भवति, स्वयं तद्विदधातीति पद्याः सशर्करा इत्यन्ये तन्मते तद्धितान्तोऽयं प्रयोगः। पादाभ्यां घोषति, पादाभ्यां मिश्रयति, पादाभ्यां शब्दयतीत्यादौ वाक्ये पद्घोषादित्रयः पचाद्यदन्ताः। पादाभ्यां निष्कासयतीति कै शब्दे 'अकर्मण्यारामे'त्यनेन कप्रत्ययान्तः पन्निष्क इति। एवं पादघोषादयः। पादस्य परपदौ गादिषु इति तद्धितेऽपि पद्गादयः सिध्यन्त्येव, तथापि गणदर्शनोदाहरणदर्शनाभ्यां ग्रन्थबाहु-ल्यभयादेव न कृतमिति॥

१९८०। अधिकारोऽयं, कृष्णपुरुषस्तु पूर्वतोऽनुवर्तते॥

१९८१। धि। कृष्णपुरुषसमासे धि-पेष-वास-वाहनेषु परेषु उदकस्योदो भवति। उदकं दधातीति उदधिः समुद्रः। 'इक्श्तिपौ धातुनिर्देशे' इत्य-नेन यद्यपि इक् धातुनिर्देश एवं बिहितस्तथाप्यत्र संज्ञात्वप्रतीतेः कर्तर्यपि स स्यात् संज्ञाशब्दानां यथाकथञ्चित् व्युत्पत्तिरवात्। एतत्तु छात्राणां

१६८२ । मन्थौदन-शक्तु-विन्दु-वज्र-भार-हार-विविध-वीरुध-गाहेषु वा ।

उदमन्थः, उदकमन्थः । १६८२ ॥

१६८३ । तत्पूर्येकविष्णुजनादौ च वा ।

---

व्युत्पत्तिवैचित्र्यार्थं वक्रोक्त्या मयोक्तं, वास्तुवस्तु 'उदध्यादयः संज्ञायां साधवः' इत्यनेन किप्रत्ययान्त उदधिरिति । उदधिरिति उदकं धीयतेऽस्मिन्निति स्रादेरिण् इति इण् । तत्रैवोक्तम् । आङ्पूर्वड्डुधाञ् धारणपोषणयोराल्लुबिति । तत्राङ्पूर्वं इत्युपलक्षणं प्रादिपूर्वे कर्मपूर्वे च भवतीति तेन विधिः, शरधिः, वालधिरित्यादीत्यन्ये । तन्मते कृष्णपुरुषनियमाभावात् । उदकेन पिनष्टीति उदपेषं पिनष्टि । 'स्नेहद्रव्ये पिषः' इत्यनेन णमुर्णम्बन्तोऽनुप्रयोगश्च । एवम् उदकस्य वासः उदवासः, उदकस्य वाहनः उदवाहनः ॥

१६८२ । मन्थौ । मन्थश्च ओदनश्च शक्तुश्च विन्दुश्च वज्रश्च भारश्च हारश्च विविधश्च वीरुधश्च गाहश्च ते । कृष्णपुरुषे मन्थेत्यादिषु परेषु उदकस्योदो वा स्यात् मथ्यते अनेनासौ मथ्यते इति वा मन्थोऽदन्तः । उदमन्थ इति । उदकेन मन्थः 'कर्तृकरणे कृते'त्यनेन समासः । उदकेन युक्त ओदनः उदौदनः, उदकेन मिश्रः शक्तुः उदशक्तुः इत्यत्रः 'संस्कारद्रव्यं भक्षेणे'त्यनेन कृष्णपुरुषः । द्रवद्रव्ययुक्तः शक्तुरुच्यते । शकधातोः 'सिङ्गादेस्तुरि'त्यनेन तुप्रत्ययान्तः । तथा, उदकस्य विन्दुः उदविन्दुः । 'विन्दुरिच्छुश्च साधुः' इत्यनेनोण्प्रत्ययान्तो विन्दुः । उदकस्य वज्रः उदवज्रः, वज्रः कुलिशम् । उदकं बिभर्ति उदकं हरतीति उदभारोदहारौ कर्मण्यणन्तौ । उदकस्य विविधः, उदकस्य वीरुध इति उदविविधोदवीरुधौ षष्ठीकृष्णपुरुषसिद्धौ । वीरुध इति 'ईशोद्धवकिरतिगिरती'त्यनेन कप्रत्ययान्तः । उदवीरुध इत्यत्र उदवीवाधा इति कश्चित् । उदकं गाहते उदगाहः अणन्तः इति । पक्षे उदकौदन इत्यादयः ॥

१६८३ । तत्पू । तेन पूर्यः तत्पूर्यः, एकविष्णुजन आदिर्यस्य स

उदकुम्भः, उदककुम्भः। अपूर्यत्वे तु—उदकगिरिः। एकेति किम्? उदकस्थाली॥ १६८३॥

१६८४। उदमेघ-क्षीरोदादयः।

साधवः॥ १६८४॥

१६८५। पश्चाच्छब्दस्य पश्चभावोऽर्धे।

---

एकविष्णुजनादिः, तत्पूर्वश्चासौ एकविष्णुजनादिश्चेति, तत्पूर्वैकविष्णुजनादिः तस्मिन् परे उदकस्य उद इत्ययमादेशो वा स्यात्। अत्रैक-शब्दः उत्तरपदस्थादिसत्सङ्ख्यादिव्यावर्तकः। पूर्यं ञ्चाधिकरणभूतं विशिष्टमेव लोकप्रसिद्धं कुम्भादिग्राह्यम्। उदकेन पूर्णः कुम्भः उदकुम्भः, उदककुम्भः। एवम् उदघटः, उदकघटः; उदकलसः, उदककलसः; उदपात्रं उदकपात्रमित्यादयोऽत्र यथासम्भवमूह्याः। अपूर्यत्वेति रूपं दर्श्यते इति शेषः। उदकेन युक्तो व्याप्तो वा गिरित्यर्थः। उदकस्य स्थालीति विग्रहे॥

१६८४। उद। उदमेघः क्षीरोदश्च आदिर्येषां ते उदमेघक्षीरोदादयः। एते उदमेघक्षीरोदादय उदकस्य उदादेशेन संज्ञायां साधवो निपात्यन्ते। साधवः साधू साधुरित्यादयस्तु प्रायः सर्वत्रैव वृत्तयो ज्ञेयाः। उदकस्य मेघ उदमेघ इत्यत्र मेघे परे उदकस्य उदादेशो निपातफलं पूर्वसूत्रादप्राप्तेः। क्षीरेति। क्षीरमिवोदकमिति। उपमानमुभयस्थधर्मवचनैरिति कृष्णपुरुषे, क्षीरमिवोदकमस्येति पीताम्बरेऽपि क्षीरोदः साधुः। क्षीरोद क्षीरसमुद्रः। कृष्णपुरुषे पूर्वपूर्वसूत्रेणोत्तरपद एव परे उदकस्योदविधानमतः क्षीरोदेत्यत्रोत्तरपदस्य तदादेशो न प्राप्नोतीति सूत्रमिदम्। अथवा संज्ञायां विषये उत्तरस्य पदस्य स्थाने सामान्येनैवोदादेशो भवतीति सूचनार्थं क्षीरोदादय इति निपातितम्। आदिपदेन उदबलाहकः, उदवाह इत्यादयः। लवणोदः, सुधोदः, मुण्डोद इत्यादयश्च यथायथमूह्याः॥

१६८५। पश्चा। सुगमम्। पश्चाच्छब्दस्य पश्चेति कृतेऽपि

पश्चार्धः ॥ १९८५ ॥

१९८६ । मांस्पचन-मांस्पाकौ वा ।

निपातौ । पक्षे—मांसपचनं, मांसपाकः ॥ १९८६ ॥

१९८७ । समो मस्य हरो वा ततहितयोः ।

सततं, सन्ततम् ; सहितं, संहितम् । सातत्यमित्यत्र तु नित्यम् ॥ १९८७ ॥

१९८८ । अद्वयस्य हर एवेऽनवधारणे ।

'अनवधारणे' इति काश्मीरिकमतम् । अतः 'एव इवार्थे' इति

---

प्रयोगः सिध्यत्येव, किन्तु पश्चाच्छब्दस्य प-इत्यादेशे इति मन्दधियामाशङ्का स्यात्, तन्निरासार्थं भावपदमुपन्यस्तम् । पश्चात् पश्चिमस्यार्ध इति विग्रहे पश्चार्धः ॥

१९८६ । मांस्प । पच्यते इति अन-णकप्रत्ययान्तौ पचनपाकौ । मांसस्य पचनं मांसस्य पाक इति वाक्ये पचनपाकयोः परयोर्मांसशब्दस्य संसारहरेणैव मांसपचनमांसपाकौ वा निपातौ निपात्येते । पक्षे इति निपाताभावपक्षे इत्यर्थः । उदाहरणद्वयन्तु स्वयमेव दर्शितम् ॥

१९८७ । समो । ततञ्च हितञ्च ते ततहिते, एतयोः परयोः सम्शब्दस्य मस्य हरो वा भवति । सततमित्यादिचतुर्षु 'उपेन्द्रोर्यादिव्यन्ताजन्ते'त्यनेन समासः । ततमिति तनु विस्तारे इत्यस्माद्भावे क्तः । हितमिति हि गतावित्यस्माद प स एव क्तः । सातत्यमिति सततस्य भाव इत्यर्थे इत्यत्र तु नित्यं समो मस्य हर इति शेषः । एतद्विधिवाक्यं न सूत्रमिति वाशब्दस्य व्यवस्थार्थत्वात् सातत्यमित्यत्र नित्यमित्येके ॥

१९८८ । अद्व । अनवधारणे नियमाभावार्थे वर्तमान एव शब्दे परे आरामस्य च हरो भवति । अथवा न विद्यते अवधारणं नियमो

कातन्त्रपरिशिष्टम् ( सन्धिप्रकरणम् १७ )। 'अनियमार्थ एव' इति पदचन्द्रिका। एकार्थञ्च सर्वमन्तव्यम्, 'एवौपम्येऽवधारणे' इति विश्वप्रकाशात् ( २।६३ ) तथैव तात्पर्यात्। कृष्णनाम एव कृष्ण-नामेव रामनाम, तदुपममित्यर्थः। 'अर्थवद्ग्रहणे नानर्थकस्य' इति न्यायान्नेह—अथ एवेत्याह अथैवेत्याह; एवेतिशब्दमनुकृतवानि-त्यर्थः। अवधारणे तु कृष्णनामैव परमम्; ममैव कृष्णः॥ १९८८॥

१९८९। औपम्ये तु नियोगेऽप्यद्वयहरः स्यात्।

राधा एव राधेव कृष्णं भज। अतः 'एवेचानियोगे' (६।१।९४)

---

यत्र तदनवधारणं तस्मिन्नेवे परे। अनेति अनवधारणे एवे अद्वयस्य लोपः स्यादिति काश्मीरकस्य ग्रन्थकारविशेषस्य मतम्। अत इति एवार्थे एवे, अतः अद्वयस्य लुक् भवतीति कातन्त्रपरिशिष्टं कलाप-परिशेषकारमतमिति। अनीति। अनियमार्थे एवे परेऽद्वयस्य लोप इति पदचन्द्रिकाख्य-स्वारस्वतटीकाकृदाह। एकार्थञ्चेति सर्वैर्मन्तव्य-मित्यत्र हेतुमाह—एवाविति। विश्वप्रकाशाच्च तथैव प्रकारेण तात्पर्यात् गोस्वामिचरणैरेतैरेव स्वमतं स्थापितमिति। कृष्णनाम एवेति केवल-समासवाक्यं दर्शितं कृष्णनाम इवेत्यर्थः। तदुपममिति तत्तुल्यमि-त्यर्थः। एवं कृष्णेव प्रद्युम्नः रामेव लवः, राधेव ललिता, ललितेव विशाखा, सव्येव पद्मा इत्यादयः। अर्थवदित्यादौ अनर्थकस्येत्यत्र न ग्रहणमिति शेषः। अथ एवेत्याह—इति वाक्ये अथैवेत्याहेति। अत्र न एवे परे अथशब्दस्यारामहरः, इवार्थाभावात्। अत्र प्रकारान्तरेण स्वयमेव हेतुमाह—एवेतीत्यनेन। शब्दमनुकृतवानिति शब्दानुकरणं कृत-वानित्यर्थः। तत् शब्दानुकरणमत्र वाक्यालङ्कार एव। अथ इत्याह इत्यर्थः। अवधारणे त्विति रूपं दर्श्यते—कृष्णनामेति परमं श्रेष्ठम्। ममेति कृष्ण इतिसर्वस्वमिति शेषः॥

१९८९। औप। उपमायां भव औपम्यं तस्मिन् उपमायां प्रवर्तमाने तु एवे परे नियोगे प्रेरणे अपिशब्दादनियोगे चाप्रेरणे अद्वयस्य हरो भवति। राधा एवेति विग्रहः, पूर्ववत् राधेवेति राधा यथा कृष्णं भजति

इति वार्तिकेऽप्यनियोगपदस्यानवधारण एव तात्पर्यं मन्यन्ते ॥१९८९॥

१९९०। ओत्वोष्ठयोस्तु वा।

श्यामोतुः, श्यामौतुः; कृष्णोष्ठं, कृष्णौष्ठम्। अनयोस्तु समास एव; नेह—तवौष्ठम् ॥ १९९० ॥

१९९१। ऋण-प्र-वसन-वत्सर-वत्सतर-दश-कम्बलानां मिलित्वा वृष्णीन्द्र ऋणे।

---

तथैव त्वमपि भजेत्यर्थः। अत्र विधातृ-हिप्रत्ययान्तो भजप्रयोगो नियोगं बोधयतीति। ननूपमानोपमेययोः क्रियायां पुरुषभिन्नस्य दोषत्वमलङ्कारे प्रोक्तं, तथापि गोस्वामिपादेन कथमेवमुक्तमिति चेत्तदेवं वाच्यं नाममध्यमोत्तमपुरुषवैषम्यादिदोषत्वं यदलङ्कारादावुक्तं तत्तु काव्यमधिकृत्यैवात्र विचार इत्युक्तदिशा पद्यपरं न तु वाक्यपरमिति लक्ष्यते, अतो ग्रन्थबाहुल्यभयादत्र नो विचारितमिति। अतः एवे चेति अनियोगे च एवे परे अतोऽद्वयस्य लोप इत्यर्थः। चानियोगे इत्यस्मादुत्तरे इति वार्तिकसूत्रमिति पूर[ण]ीयम्। अत्र स्थितेतिशब्दस्तु हेतौ। किम्बा एक एवेतिशब्दः काकाक्षिगोलकन्यायेनोभयत्रान्वयात् इति वार्तिकसूत्रमित्युक्ता हेतावपि वर्तते तस्मादेवं व्याखेयम्। अत्र एवेचानियोगे इति वार्तिकसूत्रमिति हेतोर्वार्तिकेऽपि मतेऽनियोगपदस्य सर्वे पण्डिता अनवधारणेऽर्थे एव तात्पर्यं मन्यन्ते इति समुदायार्थः॥

१९९०। ओत्वो। ओतुश्च ओष्ठञ्च ओत्वष्ठे अनयोस्तु परयो हरो भवति। श्यामश्चासौ ओतुश्चेति कृष्णञ्च तदोष्ठञ्चेति इति वाक्ये श्यामेत्यादिद्वयम्। 'ओतुर्विड़ालो मार्जारः' इत्यमरः। अनयोस्त्विति। यद्यपि सूत्रे सामान्यतः ओत्वोष्ठयोरित्युक्तं, तथापि कृष्णपुरुषाधिकारादनयोस्तु परयोः समासे एवाद्वयहरः तेन नेहेति शेषः। अत्र समास एवेति नियमात् अन्यत्र क्वचिदसमासेऽपि किञ्चित् कार्यं स्यात्, तेन तथैवेत्याह—सुपुंस्कृष्णभजनमित्यादि स्यात्॥

१९९१। ऋण। ऋणञ्च प्रच वसनञ्च वत्सरश्च वत्सतरश्च

ऋणार्णं, प्रार्णं, वसनार्णं, वत्सरार्णं, वत्सतरार्णम् । 'वत्सतर-मनादृत्य वत्सरश्चान्द्रकाशिकादौ पठ्यते, तदिहासम्मतं, पतञ्जलि-शाकटायनादीनां वत्सतरस्यैवेष्टत्वात्, तथा तरप्रत्ययोऽत्र भाष्या-दावुक्तः' (कातन्त्र-परिशिष्टे सन्धिप्रकरणम् ८) ॥ १९९१॥

१९९२ । अद्वयस्य मिलित्वा वृष्णीन्द्रः ऋते तृतीया-समासे ।

कृष्णेन ऋतः कृष्णार्तः ; अश्वेन ऋतः अश्वार्तः इति ॥१९९२॥

१९९३ । गोरऽरामे वा सन्धिः ।

---

दशच कम्बलश्च ते ऋणप्रवसनवत्सरवत्सतरदशकम्बलास्तेषाम् । अत्रा-वयवसम्बन्धे षष्ठी तेन एतेषां वृष्णीन्द्रयोग्यावयवं परेण मिलित्वा वृष्णीन्द्रं जनयति, अतएव ऋणे परे तेन सह मिलित्वा ऋणादीनाम-रामो वृष्णीद्रः स्यात् । सन्धिप्रकरणोक्तसूत्रेणाप्राप्ते इदं सूत्रम् । तत्रैवोक्तञ्च अद्यैव हलीशा प्राच्छेति ऋणार्णमित्यादयस्ताख्यातः समासयोर्वक्ष्यन्ते दुर्गमत्वादिति । ऋणार्णमिति ऋणस्य ऋणमित्यर्थे । प्रार्णमिति प्रगत ऋणात् प्रकृष्टञ्च तत् ऋणञ्चेति वा । वसनार्ण-मिति वसनस्य ऋणमिति । वत्सरार्णमिति वत्सरेण देयं ऋणमित्यर्थः । वत्सतरार्णमिति वत्सतरस्य ऋणमिति । एवं दशानां ऋणं दशार्णं कम्बलानां ऋणं कम्बलार्णम् । वत्सतरः अप्राप्ततुः गौरिति । वत्स-तरमिति । चान्द्रकाशिकादाविति ग्रन्थे इति शेषः । पठ्यते इति चान्द्रा-दिकृद्भिरिति शेषः । तदिति चान्द्रादिमतम् । हेतुमाह—पतञ्जलीति । तथेति । अत्र वत्से तरप्रत्ययो भाष्यादावप्युक्त इत्यर्थः । तस्मात् सर्वेषामेतदेव मतमिति निश्चितम् ॥

१९९२ । अद्व । तृतीयासमासे सति ऋते परे तेन सह मिलित्वा अद्वयस्य वृष्णीन्द्रो भवति । विग्रहोदाहरणन्तु स्वयमेव दत्तम् । इति-शब्दोऽत्राद्यर्थः । तेन शीतेन ऋतः शीतार्तः इत्यादि यथायोग्य-मूह्यम् ॥

१९९३ । गोर । अरामे परे गोशब्दस्य सम्बन्धी सन्धिर्वा स्यात्

गो अग्रं गोऽग्रम् ॥ १९९३॥

१९९४। गोरोरवः सर्वेश्वरे वा।

गवेशः, गवीशः। गवाग्रमित्यपि। वस्य हरे ग ईशः। गामञ्चति गवाङ् * गवाञ्चौ ; शसि 'कार्यार्थमक्षरम्' इत्यादि न्यायेन पुनर्विश्लेषात्, गव अच् इति स्थिते अचोऽरामहरो नैमित्तिकापायश्च—गोचः। उत्तरपद इत्येव ; पञ्चगवप्रियः॥ १९९४॥

अर्थादरामे परे 'एओभ्यामि'त्यनेन प्राप्तसन्धिर्गोशब्दाद्वा स्यात्। गो अग्रमित्यादौ गोरग्रमिति वाक्यम्॥

१९९४। गोरो। सर्वेश्वरे परे गोरोरामस्य अवो वा स्यात्। अव इत्यरामान्तनिर्देशः सन्धिष्णुसर्गदर्शनात्। विष्णुजनान्तस्तु पूर्वेणैव सिध्येत्, तदर्थं लक्षणमनर्थकमिति। गवामीश इति वाक्ये गवेत्यादिद्वयम्। इत्यपीति सर्वेश्वरे वेति सर्वेश्वरग्रहणादिति शेषः। वस्येति 'अयादीनां यवयोर्वा' इत्यनेन वस्य हरे सतीति शेषः। गामञ्चति गच्छतीति गोशब्दादञ्चधातोः क्विप्। गवाच् ततः प्रथमैकवचनं सु 'अचश्चतुर्भुजानुबन्धे'त्यनेन नुम्। 'तवर्गस्य चवर्गः' सोऽहरः। सत्सङ्गान्तहरः, चवर्गस्य कवर्गश्च। गवाङ्। एवमरामे सन्धिविकल्पात् गो अङ् गोऽङित्यपि। शसीति शसि सति 'कार्यार्थमक्षरमित्यत्र विश्लेषयेन्मेलयेच्चेत्यूह्यम्' इत्यादीत्यादिपदेन 'यावत् सम्भवस्तावद्विधिरि'त्यस्यापि ग्रहणम्। पुनर्विश्लेषादिति सन्धिं निवर्त्य पुनरक्षरविश्लेषादिति। 'अचोऽरामहरो भगवती'त्यनेन अरामहरस्तस्मिन् हरे सति 'निमित्तापाये नैमित्तिकस्याप्यपायश्चे'ति। तथाहि, शसि कार्यार्थमक्षरं विश्लेषये-

* गवाच्-शब्दस्य रूपाणि क्लिबेऽर्चागतिभेदतः। असन्धावङ्पूर्वरूपैर्नवाधिकशतं मतम्। स्वमुसुपसु नवषड् भादौ षट्के स्युस्त्रीणि जस्शसोः। चत्वारि शेषे दशके रूपाणीति विभावय। इति प्राचीनमतम्। गवाच्-शब्दस्य रूपाणि एकाशीतिरुदीरिता। इत्यपि कस्यचिन्मतम्। ( श्रीरामः ) ॥

१९९५। गवाक्षो गृहरन्ध्रे, गवेन्द्रो गवेशे।

अत्रेन साधू॥ १९९५॥

१९९६। गव्यूतिः क्रोशयुग्मे।

साधुः। अन्यत्र—गोयूतिः॥ १९९६॥

---

न्मेलयेच्चेति न्यायेन च सन्धिं निवर्त्य पुनररामविश्लेषात् गव अच् इति स्थिते सत्यचोऽरामहरो भगवतीत्यरामहरे निमित्तापाये नैमित्तिकस्याप्यपायाच्च गोषः इति। शसीत्युपलक्षणं टादावपि, गोचा गोचे इत्यादयः। गोव इत्यादौ पक्षत्रये समानं अरामहरस्वादिति। उत्तरपद इत्येवेति पूर्वस्यैव विवरणं नेदं सूत्रम्। उत्तरपदे परे उत्तरपदस्थादिसर्वेश्वरे एव गोरोररामान्तवादेशो नान्यसर्वेश्वरे, तेन नेहेति भावः। पञ्चगवप्रिय इति पञ्च गावः प्रिया यस्येति टप्रत्ययान्तः सिद्धः पूर्वमेवोक्तः॥

१९९५। गवा। गृहरन्ध्रे वातायने वाच्ये अक्षे परे गोशब्दस्यावादेशेन नित्यमेव गवाक्षः साधुः। किञ्च, 'अक्ष्णोऽप्राण्यङ्गे' इत्यनेनाक्षिशब्दात् समासान्ताराम इति वक्ष्यते। गवे। गवेशे गोस्वामिनि वाच्ये इन्द्रे परे गोशब्दस्यावादेशेन नित्यं गवेन्द्र इत्यपि साधुः। अतएव वृत्तावत्रेन साधु इति द्विवचनान्तम्। गवाक्ष इति गोः अक्षीति षष्ठीकृष्णपुरुषः। अनेत्रार्थादक्षण इति टस्तद्धितः, किन्तु गवाक्ष इति निपातनात् प्राण्यङ्गे वाच्ये अक्षे परे गोरोरामस्यारामान्तावादेशो न स्यात्। अपि तु 'गोररामे वे'त्यनेन विकल्पः सन्धिः स्यादिति गो अक्षः गोक्ष इत्येव। अत्राक्षमिन्द्रियवचनं, किम्बा गोरिवाक्षिणी यस्येति स्वाङ्गाभ्यामक्षिसक्थिभ्यामिति पीताम्बरे टः। यदा त्वक्षशब्दः शकटादौ वर्तते, तदा गो अक्षः गोऽक्षः गवाक्ष इति यथायोग्यं विकल्पः स्यात्।

१९९६। गव्यु। क्रोशयुगे क्रोशद्वये वाच्ये गवां यूतिरिति वाक्ये युतिशब्दे परे गोरवा सह गव्यूतिः साधुः स्यात्। यूतिरिति

१९९७। अक्षौहिणी सेनासंख्याविशेषे।

• मिलित्वा। वृष्णीन्द्रेण साधुः॥ १९९७॥

१९९८। शकन्ध्वादयश्च।

अरामहरेण साधवः। शकस्य अन्धुः शकन्धुः कूपः। सीमानमन्तति वध्नाति सीमन्तः केशविन्यासरेखायाम्; अन्यत्र सीमान्तः। कुलान्यटति कुलटा, रूढ्या भिक्षुकी असती चोच्यते। भाष्ये

---

यु मिश्रणामिश्रणयोरित्यस्य 'ऊत्यादयः साधवः' इत्यनेन क्तिप्रत्ययान्तः साधुः। क्रोशयुगेऽमिश्रणार्थो ज्ञेय इति। अन्यत्रेति। गोयुतिः गवा मिलनमित्यर्थः॥

१९९७। अक्षौ सेनानां संख्याया विशेषे वाच्ये ऊहिनीशब्दे परे अक्षारामेण सह मिलित्वा ऊरामस्य वृष्णीन्द्रेणाक्षौहिणी साधुः। मिलित्वेति वृत्तावुक्तत्वात्। अक्षाणामूहनमिति ऊह वितर्के तस्माद्भावे घण्। सोऽस्यामस्तीति णिनिः, अक्षानूहितुं शीलमस्येति शीलार्थे वा णिनिः, तस्माल्लक्ष्म्यामीप् कुचिद्भिन्नपदेऽपि णत्वमिति णत्वम्। अक्षौहिणीसंख्या त्वमरादौ ज्ञेयेति॥

१९९८। शक। शकन्धुरादिर्येषां ते शकन्ध्वादयः। अन्धादौ परे शकादीनामरामहरेण शकन्ध्वादयः साधवो भवन्ति। शकस्येति राजविशेषस्येत्यर्थः। अन्ध्वर्थः स्वयमेवोक्तः कूप इति। शकस्य अन्धुः कूप इत्यनन्तरं शकन्धुरिति वा पाठः। अन्धुशब्दस्यैव कूपार्थसम्भवत्वात्। सीमानमित्याद्यर्थप्रदर्शनं न तु सूत्रं शकन्ध्वादय इत्यत्रादिशब्दग्रहणात्। अन्ततीति अति बन्धने इरामेद्धातोर्नुमिति नुम्। अन्यत् स्पष्टम्। सीमान्त इति सीम्नोऽन्त इत्यर्थे ग्रामस्य सीमान्त इति। कुलानीति नानागोत्राणि भिक्षार्थं अभिसारार्थम्बा अटतीति पचाद्यदन्ता कुलटा। रूढ्येति रूढ्या वृत्त्या कुलटाशब्देनेति शेषः। कुलटा भिक्षुकी दासीत्यनुशासनात्। भाष्य इति। अस्माभिर्यदुदाहृतमेतदेव भाष्यग्रन्थे भाष्यकृद्भिरुदाहृतम्। आकृतिगणत्वं भवतीति हेतुः बहु-

(पा ६।१।९४) एतदेवोदाहृतम्। आकृतिगणत्वमिति नोक्तम्। अन्ये तूदाहरन्ति—शुद्धोदनः, समनन्तरं, समशनम्, अर्धशनं, हलीशा, लाङ्गलीशा ॥ १९९८ ॥

१९९९। पुत्रतरामस्य न द्वित्वं हत-जग्धयोरादिनि पुत्रादिनि चाक्रोशे।

पुत्रहती, पुत्रजग्धी, पुत्रादिनी, पुत्रपुत्रादिनी ॥ १९९९ ॥

---

विधमुदाहरणं नोक्तम्। किम्बा भाष्ये एतदेव उदाहृतम् आकृतिगणत्वं भवतीति नोक्तमिति तन्मते आकृतिगणत्वं न भवतीति लक्ष्यते। अन्ये तु चान्द्रादयो यथासम्भवमुदाहरणन्ति, तन्मते बहूदाहरणेन आकृतिगणत्वं सूचितम्। शुद्धोदन इति शुद्धश्चासावोदनश्चेति वाक्ये। एवं समञ्च तदनन्तरञ्चेति। समञ्च तदशनञ्चेति। अर्धञ्च तदशनञ्चेति। हलस्य ईशा लाङ्गलस्य ईशा इति। 'ईशोद्धवकिरती'-त्यनेन कप्रत्ययान्तादीशधातोर्लक्ष्म्यामाप्। 'ईशा लाङ्गलपद्धतिरि'त्यमरः। हलीषा लाङ्गलीषा चेति मूर्धण्यान्तं केचित पठन्ति, तन्मते ईष गतिहिंसादनेष्वित्यस्य 'गुर्वादिहनन्ताददीगादेरि'ति स्त्रियामादित्यादन्तरूपम्। एवं संज्ञाशब्दानां यथाकथञ्चिद्व्युत्पत्तित्वात् शिष्टप्रयोगानुसारेण कर्कश्चासाबन्धुश्चेत्यादौ वाक्ये कर्कन्धूरित्यादयोऽपि यथायोग्यमूह्याः। सङ्गतमशनेनेति तत्पुरुषे सङ्गतमशनं यस्मिन् काले इति बहुव्रीहौ च। तथा सङ्गतमनन्तरमत्रेत्यादौ समशनं समन्तरमित्यन्ये ॥

१९९९। पुत्र। आक्रोशेऽर्थे गम्यमाने हतजग्धयोः परयोः आदिनि पुत्रादिनि च परे पुत्रशब्दस्य तरामस्य द्वित्वं न भवति। 'विष्णुजने विष्णुजनौ वे'त्यनेन विकल्पे द्वित्वे प्राप्ते निषेधविधानम्। पुत्रहतीत्यादौ पुत्रो हतो यया पुत्र जग्धो यया पुत्रम् अत्तुं शीलमस्याः, इत्यादीनि वाक्यानीति। पुत्रपुत्रादिनीत्यत्र पुत्रतरामस्य पुत्रादिनि न स्यात्, परत्र आदिनि न स्यात्। उभयत्र न द्वित्वम्। आक्रोशादन्यत्र तु पुत्रो हतो यस्याः पुत्रो जग्धो यस्याः केनापीत्यार्थाद्गम्यते न तु तया।

२००० । भीरुष्ठान-गविष्ठिर-युधिष्ठिरादयः संज्ञायाम् ।

एते षत्वेन साधवः ॥ २००० ॥

२००१ । सुषामादयश्च ।

सुषामा, दुःषामा, सुषन्धिः, दुःषन्धिः, अङ्गुलिषङ्गः ।

---

एवमन्यस्याः पुत्रमत्तु शीलं यस्या इत्यादिवाक्यं यथायोग्यं कल्पनीयम् । एवम्भूते सति पुत्रजग्ध्यादीनां द्वित्वं स्यात् ॥

२००० । भीरु । सञ्ज्ञायां वाच्ये भीरुष्ठानादयस्त्रयः षत्वेन साधवः स्युः । वृत्तौ षत्वेनेत्युपलक्षणं तेन यथासम्भवमन्येनापि साधव इति । भीरुस्थान इति स्थीयतेऽत्रेति । 'टनः करणाधिकरणयोरि'त्यनेन टनप्रत्ययान्तः स्थान इति । ततः भीरोः स्थान इति षष्ठीकृष्णपुरुषः षत्वम् । षत्वे सति षात् परस्य टवर्गयुक्तस्येत्यनेन थस्य ठत्वम् । गविष्ठिर इति गवि सर्गादौ स्थीयते इति वाक्ये निपातात् स्थाधातोरिरक् षत्वञ्च । 'समासे ङेर्न महाहरः कृति-वहुलमि'त्यनेन सप्तम्या न महाहरः । इरकः क इत् । 'आरामहरः कंसारिसर्वेश्वरे' इत्यनेनारामहरः । षत्वे थस्य ठत्वं पूर्ववत् । एवं युधि युद्धे स्थीयते इति युधिष्ठिरः इति । भीरुष्ठानः कश्चित् । परिष्ठिरो महादेवः । युधिष्ठिरः प्रसिद्धः । कस्यचिन्मते गविष्ठिरादौ मदादेरिर इति औनादिक इरः ॥

२००१ । सुषा । संज्ञायां सुषामादयश्च षत्वेन साधवो भवन्ति । सु शोभनः सामा वेदो यस्य स सुषामा कश्चित् । दुर्गतः सामा यस्मात् स दुःषामा कश्चित् । षोऽन्तकर्मणीत्यस्य मनन्तः सामन् इति । सु शोभनश्चासौ सन्धिश्चेति सु शोभनः सन्धिर्यत्र इति वा सुसन्धिरिति । 'सोपेन्द्रदामोदरात् किर्भावादावि'त्यनेन कि-प्रत्ययान्तः सन्धिः । एवं दुर्गतः सन्धिर्यस्मात् स दुःषन्धिरिति । अङ्गुलेः सङ्ग इति । अङ्गुलिषु सङ्गोऽस्येति वा विग्रहे अङ्गुलिषङ्ग इति । सञ्जनं सङ्ग इति सन्‌जधातोर्भावघणन्तः । दुन्दुभीनां सेवनं दुन्दुभिषु

दुन्दुभिषेवणं, हरिषेणः, दिविषत् इत्यादि। तथा पितृष्वसा, मातृष्वसा ॥ २००१ ॥

२००२। अलुकि वा।

मातुःष्वसा, पितुःष्वसा ; मातुःस्वसा, पितुःस्वसा। तथा रोहिणिषेण इत्यादि ॥ २००२ ॥

२००३। पूर्वपदान्नस्य णः।

प्रभुरयम् ॥ २००३ ॥

---

सेवनं वा दुन्दुभिषेवणमिति, सेवृ सेवने इत्यस्य अनन्तरूपम्। हरिः सेना यस्य स हरिषेण इति षत्वे कृते णत्वञ्च। दिवि सर्गे सीदतीति दिविषद् इति क्विबन्तः। इत्यादीत्यादिपदेन अग्नीनां स्तोम इति अग्निष्टोमः। दिवि स्थीयते इति दिविष्ठ इत्यादयोऽपि शिष्टप्रयोगानुसारेण ज्ञेयाः। नौषेचिका प्रतिष्ठिका गौरिषक्थ इत्यादयश्च चान्द्रादौ जयादित्यादौच दृश्यन्ते। नौषेचिकेति सिचिर क्षरणे इत्यस्मात् पचादेरदित्यत्। प्रतिष्ठिकेति स्ना शौचे इत्यस्मात् 'उपेन्द्र आरामात् कः' इत्यनेन कः। तदनन्तरं नौषेचप्रतिष्ठयोरल्पार्थे कः। लक्ष्म्यामाप् आपि सति 'प्रत्ययस्थात् कादि'त्यनेन पूर्वारामस्येरामः। अल्पार्थे कप्रत्ययार्थं एष प्रयासः। 'णको लक्ष्म्यां भावे' इत्यनेनापि एतौ सिध्यत इति। गौरीषक्थ इति गौरी सक्थीव सक्थि अस्येति 'स्वाङ्गाभ्यामक्षिसक्तिभ्यामि'त्यनेन पीताम्बरे टः। 'अ-इद्वयस्य हरः' इत्यनेन अरामहरः। तद्धितस्य बाहुल्यात् पूर्वपदान्तस्य वामनः। तद्धितेस्त्रातोः संज्ञायां बहुलमिति पूर्वपदस्य ह्रस्वत्वमित्यन्ये। तथेति पितुःस्वसा मातुःस्वसा इति वाक्ये ॥

२००२। अलु। स्वसृपत्योस्तु वेत्यनेन षष्ठ्या अलुकि सति षत्वं वा स्यात्। तथेति रोहिणी रक्तवर्णा सेना यस्येति निपातात् षत्वं पूर्वपदस्य वामनश्च। इत्यादीत्यादिपदेन यथास्वमन्येऽप्यूह्याः ॥

२००३। पूर्व। पूर्वपदादुत्तरस्य नस्य यथास्वं णत्वं स्यात्। अधिकारोऽयम् ॥

२००४। संज्ञायां, न तु गात्।

नारायणः। प्रत्ययमात्रस्य भिन्नपदत्वाभावात् पूर्वपदान्तर्भाव एव ; लक्ष्मणः। संज्ञायां किम् ? दीर्घनयना। न तु गात्—ऋगयनम्। पूर्वोक्तनिमित्तत्वे सत्येव ; नेह—अर्धनसः॥ २००४॥

---

२००४। संज्ञा। संज्ञायां वाच्यायां पूर्वपदादुत्तरस्य नस्य णत्वं स्यात्, गात् पूर्वपदात्तु न। नस्येत्युत्तरपदस्यान्त्यस्य वा नियमः। अतएवाधिकारसूत्रे उत्तरपदस्य नस्येति नोक्तम्। नारमयनमाश्रयोऽस्येति विग्रहे नृणां नराणां नारीनां वा वृन्दं नारम्। अय गतौ इन् गतौ इत्यनयोः 'टनः करणाधिकरणयोरि'त्यनेन अयनमिति। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः। इति पौराणिकादिव्युत्पत्तौ यदा नारायणः साध्यते तदानेन णत्वम्। यदा तु नरशब्दात् गर्गादेरायण इति केनापि साध्यते, तदा अनेन रष-ऋद्वयेभ्य इत्यनेन वा णत्वम्। एवम् रामायण, उत्तरायण इत्यादयः। प्रत्ययमात्रेति अधिकारसूत्रे पूर्वपदग्रहणात् पूर्वपदान्तर्भाव इत्यनन्तरं वाच्य इति शेषः। गत्यन्तराभावात्। तथाच, प्रत्ययमात्रस्य प्रकृत्येकपदत्वेन भिन्नपदत्वस्याभावात् पूर्वपदान्तर्भावः। पूर्वपदगुणीभूतो वाच्य एव अन्यथा विरोधापत्तेः। अथवा प्रकृतिप्रत्यययोरवयवभेदपरिकल्पनया प्रत्ययमात्रस्य भिन्नपदत्वस्य आ ईषद्भावात् पूर्वपदान्तर्भाव एवेति। भिन्नपदत्वाभावादिति क्वचित् पुस्तके दृश्यते तदपि नासङ्गतम्। यत एवं आङ्पूर्व भा दीप्तावित्यस्मात् उपेन्द्र आरामात् कप्रत्ययान्तः आभः सदृशार्थः। तथा च, प्रत्ययमात्रस्यावयवकल्पनया भिन्नपदत्वाभावात्। पूर्वेत्यादिपूर्ववत्। लक्ष्मण इति लक्ष्म चिह्न इत्यस्मात् नन्दादेरनस्तस्मिन्परे मुट् च। एवमाग्रहायणीत्यादयोऽपि। संज्ञायामिति किम् ? किमर्थं संज्ञा यर्हि न स्यात्तर्हि किं स्यादिति दीर्घे नयने यस्या इत्यत्र संज्ञा नास्ति, अतो न णत्वम्। नत्विति गवर्जनादिति शेषः। ऋग् अयनमस्येति। पूर्वेति पूर्वोक्तनिमित्तत्वं तावत् रष-ऋद्वयेभ्य इति तस्मिन् विद्यमाने

२००५। अग्रे-प्रभृतिभ्य एव वनस्य संज्ञायाम्।

अग्रेवणं, सारिकावणम्। एवं पुरगा-मिश्रका-सिध्रका-कोटराभ्यः। नेह—भद्रवनम्॥ २००५॥

२००६। प्र-निरन्तः-शर-कार्श्याम्र-खदिरेक्षु-प्लक्ष-पीयूक्षाभ्यो वनस्य संज्ञायाञ्च।

---

एव षत्वणत्वे भवत इति पूर्वोक्तं सूचितमिति। तथाप्यत्र यत्र कुत्रचिद् यल्लक्षणान्तरं तत्तु किञ्चिद्वैलक्षण्यमङ्गीकृत्यैवेति ज्ञेयम्। अतएव येन नाव्यवधानं सम्भवति तेन व्यवधानेऽपीति न्यायेन गव्यवधानेनापि णत्वे प्राप्ते न तु गादिति निषेधितम्। नेहेति पूर्वोक्तनिमित्तत्वाभावादिति शेषः। अर्धा नासिका यस्य स अर्धनसः कश्चित्। अत्र संज्ञात्वमस्त्यतएव 'कालायस-महानसादयश्च संज्ञायां' साधव इत्यनेनाप्रत्ययान्तः सिद्ध इति।

२००५। अग्रे। संज्ञायां वाच्यायां अग्रे-प्रभृतिरादिर्येषां ते अग्रे प्रभृतयस्तेभ्य एवोत्तरस्य वनस्य नस्य णत्वं स्यात्। वनस्य अग्रे इति विग्रहे राजदन्तादित्वाद् अग्रे इत्यस्य पूर्वनिपातः। पारे मध्ये इत्येतौ षष्ठ्या, इत्यत्र एवमित्यनेनातिदेशात् ङेर्न महाहरः। राजदन्तादित्वात् वनशब्दस्य परनिपातः। गोहलन्ता दन्तानां संज्ञायां सप्तम्या इति सप्तम्या लुगित्याहाजिनेन्द्रः। संज्ञाशब्दानां यथा कथञ्चिद्व्युत्पत्तिरिति। अग्रं वनमिति समासे वाक्यं कृत्वा निपातादेकारः। एतदर्थमेव सूत्रे अग्रे इत्येकारनिर्देश इति जुमरठीकाकृत्। सारीति सारिकाणां वनं सारिकैर्युक्तं वा वनमिति। एवमित्यत्र पुरगेत्यादौ 'कोटरावणादयः संज्ञायामि'त्यनेन विहितो यस्त्रिविक्रमः स एव निर्दिष्टः। वाक्योदाहरणन्तु पूर्वं दर्शितमेवेति। नेहेति अग्रादित्वाभावादिह णत्वं नेत्यर्थः। भद्राणां वनमिति वाक्ये॥

२००६। प्रनि। संज्ञायां चशब्दादसंज्ञायामपि प्रनिरादिभ्यो दशसङ्ख्केभ्य उत्तरस्य वनस्य नस्य णत्वं स्यात्। परत्र वृक्षौषधिभ्य

प्रवणमित्यादि। कार्श्यंवणमिति तालव्यव्यवधानेऽपि ॥२००६॥

२००७। वृक्षौषधिभ्यो वनस्य वा, न तु त्र्यधिकसर्वेश्वरात् तिमिरादेश्च।

धात्रीवणं, धात्रीवनम्; धात्रिकावणं, धात्रिकावनम्; दूर्वावणं, दूर्वावनम्। नेह—देवदारुवनं, तिमिरवनम्, इरिकावनं, हरिद्रावनं, भद्रिकावनम्॥ २००७॥

---

इत्यनेन विकल्पे प्राप्ते नित्यतार्थोऽयं योगः। प्रगतं वनं निर्गतं वनमिति विग्रहे 'कुप्रादयो मध्यपदलोपश्च' इत्यनेन कृष्णपुरुषः। प्रगतो वनात् निष्क्रान्तो वनादिति 'निरादयः पञ्चम्या' इत्यनेनै वा कृष्णपुरुषः। एवमेव प्रकारेण यथैव प्रवणं तथैव निर्वणमिति श्यामरामेण अव्ययीभावेन वा अन्तर्वणमिति। शराणां वनं शरैर्युक्तं वा वनमिति षष्ठीकृष्णपुरुष-तृतीयामध्यपदलोपिकृष्णपुरुषाभ्यां शरवणम्। एवं कार्श्यवनमिति तालव्यव्यवधानेऽपीति सूत्रे तालव्यनिर्देशात्। इत्यादीत्यादिपदादेवमाम्रवणं खदिरवणम् इक्षुवणं प्लक्षवणं पीपूलवणमिति च॥

२००७। वृक्षौ। वृक्षाश्च ओषधयश्च ते वृक्षौषधयः तेभ्यः। त्रिभ्योऽधिकाः सर्वेश्वरा यत्र स त्र्यधिकसर्वेश्वरः तस्मात्। तिमिर आदिर्यस्य स तिमिरादिः तस्मात्। संज्ञायामसंज्ञायाञ्च विषये वृक्षौषधिभ्यो वनस्य नस्य णत्वं स्यात्। त्र्यधिकसर्वेश्वरात् तिमिरादेश्च उत्तरस्य न तु स्यात्। वृक्षाः शाखापल्लवयुक्ताः ओषधयश्च फलपाकान्ता इति भेदः। धात्रीणां धात्रीभिर्युक्तं वा वनमित्येवं वाक्यन्तु पूर्ववत्। धात्रीवणप्रभृतीनि वृक्षोदाहरणानि। एवं जम्बीरवणं, खदीरवणं, खर्जूरवणमित्यादयश्च। दुर्वावणमिति ओषध्युदाहरणम्। एवं रम्भावणं, कोद्रवणमित्यादयः। नेहेति देवदारुवनादिद्वयं वृक्षोदाहरणम्। इरिकावनादित्रयमोषधेः। प्रथमं त्र्यधिकसर्वेश्वरस्य पराणि तु तिमिरादेः॥

२००८। अरामान्तादह्नस्य।

पूर्वाह्णः। अह्नस्येत्यरामान्तनिर्देशः किम् ? दीर्घाह्नी प्रावृट् ॥ २००८ ॥

२००९। त्रि-चतुर्भ्यां हायनस्य वयसि।

त्रिहायणो वत्सः ; त्रिहायणी गौः ; चतुर्हायणः, चतुर्हायणी। वयसि किम् ? त्रिहायनं गृहम् ॥ २००९ ॥

२०१०। परादेरयनस्य अन्तरस्त्वदेशे।

परायणं, पारायणम् ; अन्तरयणम् ; देशे तु अन्तरयना माथुराः ॥ २०१०

२०११। आहित-वोढ़व्याद्वाहनस्य।

---

२००८। अरा। अरामान्तात् पूर्वपदादुत्तरस्य अह्नशब्दस्य नस्य णत्वं स्यात्। अह्नस्येति कृतसमासान्त-टप्रत्ययसहितस्य ग्रहणम्। पूर्वाह्ण इति अह्नः पूर्वमित्यर्थे। तथा प्राह्णः प्रकृष्टमहरिति। एवं पराह्ण इति च। किं किमर्थं, दीर्घं अहो यस्यां सा ॥

२००९। त्रि-चतु। वयसि गम्ये त्रिचतुर्भ्यामुत्तरस्य हायनस्य णत्वं स्यात्। त्रीणि हायनानि अस्येति अत्र वयो गम्यते। एवं त्रिहायण्यादिषु। गृहस्य वयःप्रतीतेरभावान्नेह ॥

२०१०। परा। पर आदिर्यस्य तस्मात् अयनस्य नस्य णो भवति। आदेशे वाच्ये त्वन्तरः परस्य। परायणमित्यादि नारायणादिवत् साधनीयम्। संज्ञायां न तु गात् इत्यनेन परायणादौ सिद्धेऽपि यदत्र सूत्रं तदेतज्ज्ञापयति तत् संज्ञायामेतदसंज्ञायामिति। अतएव यत्र यत्र संज्ञा गम्यते, तत्र तत्र तत्सूत्रस्य विषयः, यत्र यत्र संज्ञा न गम्यते तत्र तत्रास्य विषय इति भेदः। अन्तरयणमिति किमपि। देशे त्विति णत्वं नेति शेषः। अन्तर्मध्ये अयनं येषां ते ॥

२०११। आहि। आहितः स्थापितः वोढ़व्यः यत्र स आहित-

उह्यते येन स वाहनः ; औणादिकष्टनण् ; रामवाहणो रथः । नेह—रामसम्बन्धी वाहनः रामवाहनः ॥ २०११ ॥

२०१२ । पानस्य देशे भावकरणयोस्तु वा ।

क्षीरपाणाः माथुराः । क्षीरपाणं क्षीरपानं वा कृष्णस्य । क्षीरपाणी क्षीरपानी वा पात्री ॥ २०१२ ॥

२०१३ । प्रादेर्नसः ।

'नासिकाया नस्' वक्ष्यते (२२२५) प्रणसं ; दुर्णसम् ॥२०१३॥

---

वोढव्यस्तस्माद्वाहनस्य नस्य णत्वं भवति । उह्यते इत्यनेन स्वयमेव करणे वाच्ये औणादिकटनण् सिद्धो वाहन उक्तः । रामस्य वाहन इति विग्रहः । रथोऽत्र वाहनः, किन्तु यदा तदुपरि रामस्थितस्तदैवायं प्रयोगः । रामवाहन इत्यत्र तु रामस्य सम्बन्धमात्रमुपलभ्यते नरामो वर्तते इति ॥

२०१२ । पान । पूर्वपदादित्यनुवर्तते देशे वाच्ये पूर्वपदादुत्तरस्य पानस्य णत्वं नित्यं स्यात् । भावकरणयोस्तु वाच्ययोस्तस्मात् पानस्य नस्य णो वा स्यात् । क्षीरस्य पानं येषु ते । माथुरा इति मथुरामध्यवर्तिनो देशाः । माथुरायां भवा मथुरास्तेऽस्यां सन्तीत्यनेन विहितप्रत्ययस्य स्मरहरस्तस्मिन् कृते पूर्वेषां लिङ्गवचनयोः प्रत्यावृत्तिरतो बहुवचनं वाच्या तु मथुरैव इति वा । स्मरहरो वक्ष्यते । पीयते इति पानं क्षीरस्य पानमिति भावप्राधान्यम् । एवं विषपानमित्यादि । क्षीरं पीयतेऽनयेति 'टनः करणाधिकरणयोरि'त्यनेन टनः टित्त्वा'त्लक्ष्म्यामीप्' । पात्रीति अल्पं पात्रमित्यल्पार्थादीप् ॥

२०१३ । प्रादे । प्रादेरुत्तरस्य नसो नस्य णः स्यात् । नस इति भावी यो नसादेशस्तस्यैव षष्ठ्यन्तरूपम् । ननु किमर्थमेतदुच्यते भवता 'निशानासिकयोर्निश्नसावादेशौ यदुषु वे'त्यनेन यो नसादेशस्तस्य रूपे सति को दोष इति चेदुच्यते, 'निशानासिकयोरि'त्यनेन सादेशस्य वैकल्यात् यदा नासिकास्थितिस्तदापि णत्वं सम्भवेत् । नैवं

२०१४। गिरिनद्यादिषु वा।

गिरिणदी, गिरिनदी ; एवं वक्रणदी, वक्रनदी ; वक्रनितम्बः गिरिणितम्बः ; गिरिणद्धः, माषोणः णत्वेन साधवः ॥ २०१४ ॥

२०१५। नामान्तविष्णुभक्त्योर्वा, न तु युवादेः, एकसर्वेश्वरे कवर्गवति चोत्तरपदे सति नित्यम्।

पूर्वमप्यारोहत्ययम्। हरिभाविणौ, हरिभाविनौ ; नुम् चात्र

---

'प्रादेर्नासिकाया नस् चे'त्यनेन तद्धिते नित्यं नसादेशस्य वक्ष्यमाणत्वात् प्रादेर्नासिकास्थितिसम्भावनैव नास्ति, कथं णत्वस्यावकाशः, सत्यं, यद्येवं तथापि 'गौरवकल्पनाया लघुकल्पना गरीयसी'ति न्यायेन भाव्यादेशस्यैव गरीयस्त्वमिति। प्रणसमिति। प्रगता प्रकृष्टा वा नासिका यत्रेति वाक्ये। 'प्रादेर्नासिकाया नस् च' इत्यनेन अराम-स्तस्मिन् परे नसादेशश्च। दुर्णसमिति दुष्टा वा नासिका यत्रेति पूर्ववत्। अत्र द्वये मुखमेव विशेष्यम्। एवं परणसं निर्णसं परिणसमिति ॥

२०१४। गिरि। गिरिनद्यादिषु प्रयोगेषु गिरिणदीति णत्वेन वा साधुः। एवं वक्रनद्यादयः पञ्च णत्वेन साधवो वा भवन्ति। गिरिनदीत्यादिषु गिरेर्नदी वक्रश्चासौ नदी चेति। वक्रः नितम्बोऽस्य गिरिरिव नितम्बोऽस्य गिरिणा नद्धः माषेण ऊन इत्येते यथाक्रमं विग्रहा ज्ञेयाः। यथा णत्वपक्षे स्वयमुदाहरणानि दर्शितानि। एवम-णत्वपक्षेऽपि ज्ञेयानि ॥

२०१५। नामा। पूर्वपदादुत्तरयोर्नामान्तविष्णुभक्त्योर्नस्य णो वा स्यात्। युवादेरुत्तरयोर्युवादेः सम्बन्धिनोस्तयोर्नस्य णत्वं वा न स्यात्। एक। एकः सर्वेश्वरो यस्य स एकसर्वेश्वरस्तस्मिन् कवर्गः विद्यतेऽस्य कवर्गवत्। तस्मिन् पूर्वपदादुत्तरस्मिन्नेवम्भूते उत्तरपदेविद्यमाने उत्तर-पदस्थयोर्नामान्तविष्णुभक्त्योर्नस्य नित्यं णत्वं भवति। विष्णुभक्तिपदेनात्र

नामान्तः ; हरिभव्याणि, हरिभव्यानि, हरिभावेण, हरिभावेन। अत्र तु नित्यं वृत्रहणौ। हरियोग्याणि, हरियोग्येण। समासावस्थायां यन्नामान्तत्वं, तदिह गृह्यते, तेन हरेर्भगिनी हरिभगिनीत्यत्र न। हरिभगोऽस्यामस्तीति हरिभगिणीत्यत्र तु स्यादेव, 'र-ष-ऋद्वयेभ्यः' ( १७३ ) इत्यनेनैव। विष्णुसर्गस्य सर्वेश्वरधर्मत्वात्-

---

विष्णुभक्तेर्नरामः लक्षणया विष्णुभक्तेर्जातिश्च नरामो गृह्यते, अन्यथा स्वादिविष्णुभक्तौ नरामस्याविद्यमानत्वात् कस्य णत्वं भवेत्, तिबादि-विष्णुभक्तौ तु आनिप इत्यस्य नरामो विद्यत एव अतस्तत्र स्यादिति न कश्चिद्विरोधः। ननु, 'नारोहति परः पूर्वम्, असिद्धरूपं न त्याज्यमि'त्याद्युक्तम्। तर्हि कथं निरवोचत् पूर्वमपीति भद्रमुच्यते,— 'गङ्गास्रोतोवदेवास्य भवेद्विधिरि'त्यनेन यत्रोपाधिर्विद्यते, तत्र परः पूर्वं नारोहति, यत्र पुनरुपाधिर्विद्यते, तत्र परोऽपि पूर्वमारोहतीत्यर्थः। दृष्ट्या यो निर्णेतुमशक्यः स एवोपाधिरत उपाधेर्विद्यमानत्वेनायं विधिः परोऽपि पूर्वं ग्रन्थमारोहति व्याप्नोति सर्वसंग्राहकत्वात्। अथोवा, 'असिद्धरूपं न त्याज्यं प्रतिज्ञेयं कृदन्तिका'। तच्च कृत्पर्यन्तं ज्ञेयम्, न समासतद्धितयोरिति यदुक्तं तज्ज्ञापकमन्यदपि ज्ञापयति तद्यथा असिद्धरूपं न त्याज्यमिति प्रतिज्ञाया यथा समासतद्धित-योर्व्यभिचारस्तथा नारोहति परः पूर्वमित्यस्यापि व्यभिचारः। एवं साधनानुक्रमार्थञ्च नाधिकारेण सूत्र्यते इत्यस्य च। अतएवायं परोऽपि पूर्वमारोहति। किञ्च, तदानीं छात्राणामध्यायनाद्यभावात् सन्ध्यादौ झटिति वुद्धेः प्रवेशकता नास्ति, भिन्ना प्रक्रिया कड़चाप्रभृतिरन्वे-षणीया चेति साध्यानां पदानामनुक्रमार्थमनुक्रमायाधिकारे सूत्रणम्। इदानीन्तु तेषां सन्ध्यादिपञ्चपादाध्ययनसंस्कारवलात् सर्वत्रैव वुद्धिः प्रवर्तते। तस्मात् प्राचां मतदर्शनाय च समासतद्धितयोः क्वचित् क्वचित् साधनानामनुक्रमार्थं सूत्रकरणेऽपि न दोष इति। हरिभाविणा-विति हरिं भावयितुं शीलमस्येति णिन्यन्तं सौ अत्र नान्तत्वाभावात् द्विवचने दर्शितम्। नुमो विष्णुत्वेन प्रकृतिप्रत्यययोरनुपघातित्वात् क्वचित् प्रकृतिभाक्त्वञ्च। अत्र पुनः सहायत्वेन नुमो नामान्तत्वमेव

द्व्यवधानेऽपि, यथा—उरसा कायति उरःकः, तेन उरःकेण। तदेकोद्भवत्वाज्जिह्वामूलीयस्यापि तद्रूपत्वम्; उर×केण; एवमुरःपेण, उर⌣पेण। हन्तेरत् पूर्वस्येति वाच्यम्। नेह—असुरघ्न शत्रुघ्नः। 'घादेशे प्रतिषेधो वाच्यः' इति भाष्यम्; 'हो घि हनः' इति कातन्त्रपरिशिष्टे (णत्वप्रकरणम् ३२) निषेधसूत्रञ्च। युवादेस्तु—आभीरयूना, हरिपक्षेन, अग्रगामिनौ, शास्त्रवाक्यानि, छात्र-

---

गृह्यते इत्याह नुम् चेति। हरौ भवन्ति यानि तानि हरिभव्याणीति कर्त्तरि यत्प्रत्ययान्तम्। हरेर्भावोऽभिप्रायः तेन कृष्णाट्टा इत्यनेनात्र विष्णुभक्तिजनराम इति नित्यमेकसर्वेश्वरत्वात्। वृत्रं हतवानित्यर्थे पूर्वंषद्द्विवचनान्तम्। हरेर्योग्यानीति विग्रहः। समासावस्थायामित्यादिकं स्पष्टम्। इत्यत्र णत्वमिति शेषः। इत्यत्र तु णत्वं स्यादेव समासावस्थायां तद्धितणिनेनर्न्तित्वात्। इत्यनेनैव सूत्रेण सर्वेश्वरादिकस्य व्यवधानत्वेन स्वीकरणात्। सर्वेश्वरविष्णुजनसंज्ञयोर्मध्यपाठत्वेन विष्णुसर्गस्योभयधर्मत्वेऽप्यत्र सर्वेश्वरधर्मत्वात् तस्य विष्णुसर्गस्य व्यवधाने निश्चितं णत्वं स्यात्। उरःक इति। कै गै शब्दे इति कै धातोः कप्रत्ययान्तम्। तदेति स बिष्णुसर्ग एक उद्भव उत्पत्तिस्थानं यस्य स तदेकोद्भवस्तस्य भावस्तस्मात्। तद्रूपत्वं सर्वेश्वरत्वमित्यर्थः। एवमित्यतिदेशेन उपध्मानीयस्य तद्रूपत्वमिति सूचितम्। उरःपेणेत्यादिद्वयं उरसा पिवतीति पा पाने इत्यस्य कप्रत्ययान्तरूपम्। अनेकसर्वेश्वर इति विशेषणात् असुरघ्न इत्यादावपि णत्वं भवतु एकसर्वेश्वरस्य सत्त्वादित्यत आह हन्तेरिति। यद्यपि सामान्यत एकसर्वेश्वर इत्युक्तं, तथापि हन्तेर्हनधातोऽत् पूर्वस्यैव नस्य णत्वमिति वाच्यं नत्वदन्तस्य। असुरं हन्तीति हन्तेष्टक् 'गम-हन-जन-खन-घसामुद्धवादर्शनमि'त्यनेनारामहरः। 'हनो हस्य घो णिन्नयोरि'त्यनेन हस्य घः। एवं शत्रुघ्नः वैरघ्नः, पापघ्नः इत्यादयोऽपि ज्ञेयाः। स्वमतदृढ़ीकरणाय भाष्यमतमाह घादेश इति। प्रतिषेधो वाच्य इति णत्वस्येति शेषः। भाष्यमतमुक्त्वा मतान्तरमप्याह हो घेति। हनधातोर्हकारस्य घे सति णत्वं न स्यादिति तत्सूत्रार्थः। इति कातन्त्रपरिष्टे तदाख्यग्रन्थे निषेधसूत्रञ्च

गामिना ; 'आङोऽन्येन विष्णुपदेन व्यवधानेन णत्वं न (४१३) इति— हरियागयोगेन। तद्धिते तु न निषेधः— हरिवाङ्मयेण ॥२०१५॥

इति षत्वणत्वे।

२०१६। पुमः सरामो हरिकमल-हरिखड्गयोर्यदवेतरपरयोः, स च विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा, तत्र कखपफेषु विष्णुसर्ग-निषेधश्च।

---

वर्तते इति। युवादेस्त्रिंशति रूपं दर्श्यते। आभीरस्य युवाभीरयुवा तेन टा 'श्वन्-युवन्-मघवन् इत्येतेषां वस्य उः' इत्यनेन वस्य उः। ततस्त्रिविक्रमः। हरेः पक्षः सहायः तेन। अग्रं गमिष्यतः इति गमिगाम्यादयो भविष्यतीति अग्रगामिनौ णिन्यन्तौ। शास्त्रस्य शास्त्राणां वा वाक्यानि। छात्रं गमिष्यतीति पूर्ववत् तेन आङोऽन्येनेति पूर्वोक्तं सूचितम्। हरेर्यागस्य योगस्तेन। ननु आङोऽन्येनेति सूचितं, तर्हि यत्र यत्राङोऽन्यव्यवधानं, तत्र तत्र णत्वं भवतु इत्यत्राह तद्धित इति, इत्यपि वक्तव्यलक्षणम्। तद्धिते तु स निषेधो न स्यात्। हरेर्वाचः प्राचुर्यमिति हरेर्वाचो विकार इति हरिं वाक्प्राचुर्येण स्तुतमिति वा हरिवाङ्मयं तेन। इति षत्वणत्वे दर्शिते इत्यर्थः॥

२०१६। पुमः। हरिकमलञ्च हरिखड्गश्च तौ हरिकमल-हरिखड्गौ तयोः यादवेभ्य इतरो भिन्नः परो ययोस्तौ यादवेतरपरौ तयोः। ननु पुंस्कृष्ण इत्याद्युदाहरणे पुंस्शब्दस्य रूपमित्यवगम्यते। तच्छब्दस्य तु पुंस इति षष्ठ्यन्तं न सम्भवति तथापि कथं पुम् इति चेत्तदैवं वाच्यम्। भाविनि भूतवदुपचाराङ्गीकारेण, समासादनन्तरमन्तरङ्गत्वादेर्महाहरे सत्यन्तर्भिन्नपदत्वेऽप्येकेत्यनेन विष्णुपदत्वात् सत्सङ्गान्तहरे कृते पुंसो यदवशिष्टं पुमिति तस्येदं षष्ठ्यन्तम्। ननु पुंसः सत्सङ्गान्तहरे सविष्णुचक्रं पुं सिध्येत् नतु पुम् तर्हि कथमुच्यते भवता यदवशिष्टपुमिति सत्यं श्रूयताम्। 'विष्णुपदान्तस्य नस्य मस्य च विष्णुचक्रं वैष्णवे इत्युक्तमतोऽन्तहरे वैष्णवपरत्वाभावात् तन्निमित्तस्य विष्णु-

पुंस्कृष्णः, पुंश्चतुर्भुजः, पुंष्टिट्टिभः, पुंस्तारकः, पुंस्परमः; पक्षे—पुँस्कृष्ण इत्यादि। यादवपरत्वे तु—पुंक्षीरम्। यदा तु सुपुंस् इत्यनुकृत्य यादवपरता, तदा शब्दानुकरणे यादवे सलोपो वा—सुपुंकृष्णभजनं, सुपुंस्कृष्णभजनं वा ॥ २०१६ ॥

---

चक्रस्याप्यभाव इति पुं सिद्धम्। यद्येवं तथाप्येकदेशविकृतमनन्यवदिति न्यायेन पुंस इति ज्ञेयम्। किन्त्वेवं व्याख्येयम्—यादवेतरपरभूतयोर्हरिकमलहरिखड्गयोः परयोः सतोः पुंसः सत्सङ्गान्तहरे मरामस्य सरामः। नन्वेवं कष्टकल्पनया किं, पुंस इति कृते को दोष उच्यते। यदि पुम इत्यकृत्वा पुंस इति कृतं स्यात्, तदात्र निर्देशसामर्थ्येन समासे सत्सङ्गान्तहरो न स्यात्, पुंसः सस्य स इति प्रतीतेः। अनेन यदा सत्सङ्गान्तहरो न भवेत्, तदापि पुंस्कृष्ण इत्यादि सिध्येत्, किन्त्वेदृष्ट्वा सर्वत्रैव समासे तद्धरो न स्यादिति मन्दधियामाशङ्का भवेत् तन्निरासार्थेयं कल्पनेति समासाधिकल्पः। स च। विष्णुचक्रं पूर्वे यस्य स बिष्णुचक्रपूर्वः। बिष्णुचापः पूर्वे यस्य स विष्णुचापपूर्वः। स च विहितः सरामः। एवमेवं पूर्वं स्यात्। पूर्वस्यैव प्रपञ्चोऽयं न तु पृथक्। नेयं वृत्तिः सूत्रे विष्णुचक्रविष्णुचापयोरश्रवणात्। अस्य वृत्तितापि घटयितुं शक्यते। 'सूत्रस्थितानां वर्णानामर्थानाञ्च प्रतीतये। विशुद्धा चाधिका व्याख्या वृत्तिरिष्टा मनीषिभिरि'त्युक्तदिशा। तत्र। ननु तत्रेति द्विवचनान्तं बहुवचनान्तं वा यद्याद्यं तर्हि द्वयोर्मध्ये बहूनां निर्धारणमसङ्गतं यद्यन्तं तदपि दुर्घटं पूर्वत्र हरिकमलहरिखड्गयोरित्युक्तत्वात्। कथमत्र समाधेयम्? भो शृणु। पूर्वत्र सूत्रे गणसंख्यया द्विवचनान्तम्। अत्र पुनः 'कचटतपा हरिकमलानि', खछठथफा हरिखड्गानी'त्युक्तेन बहुवचनान्तमिति न कश्चिद्विरोधः। तत्र तेषु हरिकमलहरिखड्गेषु मध्ये कखपफेषु विहितसरामस्य विष्णुसर्गस्य निषेधश्च स्यात्। पुंश्चासौ कृष्णश्चेति विग्रहः। एवं पुंश्चतुर्भुजादिद्वयम्। किन्त्वत्र सरामस्य विष्णुसर्गे कृते, पश्चाच्छषौ। टिट्टिभ इति पक्षिविशेषः। गां टिटीति नीचोक्तिः। पुं मां सम्भा-

२०१७। विष्णुसर्गस्य स, ईश्वरात्तु षः, कखपफेषु, तौ स्थानिवच्च।

प्रभुरयम् ॥ २०१७॥

२०१८। निर्दुर्वहिः-प्रादुराविश्चतुराम्।

वयतीति णकः। किम्बा तरतीति तारकः। पश्चात् पूर्ववत् श्याम-रामादिः। पुमांश्चासौ परमश्चेति पुमान् परमो यस्येति वा। इत्यादी-त्यादिपदेन पुंश्चतुर्भुजः पुंष्टिट्टिभः पुंस्तारकः पुंस्परम इति। यादवेति रूपं यथा। पुंसः क्षीरमिति विग्रहे। 'कषसंयोगे क्षः' इत्युक्तत्वात् हरि-कमलस्य ष-रूपयादवपरतात्र ज्ञेया। यदा पुनः सुपुंस इत्यनुकृत्य अनुकरणं कृत्वा तदुत्तरे यादवस्य परता भवेत् तदा शब्दानुकरण-भूते यादवे परे सति सुपुंसशब्दस्य सस्य लोपो वा स्यात्। पारि-भाषिकेयम्। अनुकरणं तावद्विविधम्—अव्यक्तानुकरणं शब्दानुकर-णञ्चेति अतोऽत्र शब्दानुकरण इत्युक्तेन सर्वत्र सुपुंस् इत्यव्यक्तानुकरणं प्रतीयते। सुपुँस्कृष्णेत्यादौ सुपुंस्कृष्णभजनमिति न षष्ठीकृष्णपुरुषनिष्पन्नं तद्यदि स्यात्तदा नित्यं सत्सङ्गान्तहरः स्यात्। न ह्यत्र सुपुंस्शब्दः शोभनपुरुषमभिधत्ते तं यद्यभिदध्यात् तदा सुपुमानित्येव रूपं स्यात्। नहि सुपुंसिति कृष्णभजनस्य विशेषणं तद्यदि स्यात्तदा सुपमिति ब्रह्मलिङ्गं भवेत्। न तु तत् किञ्चिदपि। अतोऽर्थनिश्चयाभावात् यथा 'पटत् पटदि'त्यादिकं तद्रूपं सत् तन्मात्रं बोधयित्वा अव्यक्तानुकरणं भवेत् तद्वदिहापीति, किन्तु सुपुंसित्येकं पदम्। कृष्णभजनमप्यत्र न कृष्णसेवावाचकं, किन्तु तत्सदृशशब्दाकारमात्रमिति शब्दानुकरणम्। अतएव कृ-यादवे परे पूर्वस्य सुपुंसः सस्य पाक्षिकहरत्वं दिङ्मात्र-मुदाहृतम्। एवम्भुतेषु यादवेषु चान्यत्राप्येवं ज्ञेयमिति॥

२०१७। विष्णु। अधिकारोऽयम्। ईश्वरात्तु ष इति यथासङ्ख्य-निर्देशात् अद्वयात् स इत्यर्थाल्लभ्यते इति कखपफेषु परेषु॥

२०१८। निर्दु। निर्दुर्वहिःप्रादुराविश्चतुरां विष्णुसर्गस्य षः

निष्कृष्णः, दुष्कर्मा ; स्थानिवत्त्वाड्डत्वाभावः तथा निष्पान-मित्यादौ णत्वाभावश्च ॥ २०१८ ॥

२०१९ । ईश्वरारामाभ्यां, पाशकल्पकेष्वनव्ययस्य ।

पाशादयस्तद्धिताः । ज्योतिष्पाशः, यशस्कल्पः, सर्पिष्कम् । अव्ययस्य तु—स्वःपाशः, उच्चैःकल्पम् ॥ २०१९ ॥

---

स्यात् स स्थानिवच्च । निर्गतः कृष्णादिति वाक्ये दुर्गतः कर्मण इति वाक्ये च 'निरादयः पञ्चम्या' इत्यनेन कृष्णपुरुषसमासः । स्थानिवत्वफलं स्वयमुक्तं स्थानिवच्चेति । यदि स्थानिवत्वं न कृतं तदा निष्कृष्ण इत्यादौ षत्वे कृते षस्य ड इति ड स्यात् । एवं निष्पानमित्यादौ 'रषऋद्वयेभ्यः' इत्यनेन निमित्तत्वात् पव्यव-धानेऽपि णत्वं स्यात् । एवं वहिष्कर्ता, प्रादुष्कर्ता, आविष्कारः, चतुष्कलम् ॥

२०१९ । ईश । ईश्वरश्च आरामश्च तौ ईश्वरारामौ ताभ्याम् । पाशादयस्तद्धिता इति वृत्तित्वेनोक्ताः । तेन पाशादयः प्रत्यया गृह्यन्ते न तु शब्दा इति पाशकल्पकेषु प्रत्ययेषु परेषु । अनव्ययस्य नाम्नः सम्बन्धिभ्यामीश्वरारामाभ्यामुत्तरस्य विष्णुसर्गस्य षसौ भवतस्तौ स्थानिवच्च । ज्योतिषः मनागित्याद्यर्थे मनागूणनिन्दादौ पाशः । एवं यशसः सदृशः यशस्कल्पः । सर्पिषोऽल्लमित्यल्पादावर्थे क-प्रत्ययान्तं सर्पिष्कमिति तद्धितप्रत्ययानां वहून्यर्थानि सम्भवन्ति तानि विवृत्य वक्ष्यन्ते । अव्ययस्य त्विति रूपं दर्श्यत इति शेषः । स्वः सर्गस्य सदृशः स्वःपाशः इति । उच्चः उच्चैप्रदेशस्य मनाक् उच्चैःकल्पमिति । यद्यप्य-नव्ययस्येत्युक्तम्, तथापि 'लाक्षणिक-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि'ति न्यायेन स्वतःसिद्धस्याव्ययस्य वर्जनं नत्वव्ययीभावसमासेन विहितस्याव्ययस्य तेन उपसर्पिष्पाशः इत्यादौ षसौ स्यातामेव । अव्ययीभावस्यानव्ययत्वात् उपपयस्पाश इत्यादौ न विसर्ग इत्येके । पाशादयस्तद्धिता इति किम् ? निर्गतः पाशात् निःपाश इत्यादि । पाशोऽत्र बन्धनरज्जुः । तेन षरामो न स्यात् ॥

२०२०। काम्ये तु नररामजविष्णुसर्गं विना।

पयस्काम्यति, सर्पिष्काम्यति। अतएव 'सजुष्' (२८३) इत्यादौ इसुसन्तधातोरित्यत्र धातुग्रहणं कृतम्—हविष्काम्यति।

---

२०२०। कामो। नश्च रश्च नरौ रामश्च रामश्च रामौ नरौच तौ रामौ चेति नररामौ ताभ्यां जातः नररामजः स चासौ विष्णुसर्गश्चेति नररामजविष्णुसर्गस्तं विना काम्यप्रत्यये परे अनव्ययस्य ईश्वराभ्यामुत्तरस्य विष्णुसर्गस्य षसौ तौ स्थानिवच्च। पय इच्छति पयस्काम्यति। एवं सर्पिष्काम्यति। अत इति। अतएव नररामजविष्णुसर्गवर्जनादेवेत्यर्थः। धातोरित्यत्र धातुग्रहणं कृतमित्युक्तमतोऽनेनैतदेव ज्ञापितम्। 'इसुसन्तधातोरि'त्यत्र यदि धातुग्रहणं न कृतं स्यात्तदापि सुपीः सुपूरित्यादि सिध्येत्, किन्तु सर्पिर्यजुरित्यादीनामपि इसुसन्तत्वात् ररामः स्यात् तत्र धातुग्रहणात्तु न स्यादिति। किञ्च, सजुष्-आशिष् इत्यत्र रविधानं न कृत्वा सजुष् आशिष् इत्यनयोरिसुसन्तधातोश्चोद्धवस्य त्रिविक्रम इत्येवं सूत्रयित्वा त्रिविक्रमं विधाय पश्चात् सजुष् आशिष् इति द्वयस्य विष्णुपदान्तत्वात् निमित्तत्वनिवृत्तेरित्यनेन षत्वं निवर्त्य 'सररामयोर्विष्णुसर्गः' इत्यनेन विष्णुसर्गं विधाय सजूरादिद्वयं साधयेत् स्म। इसुसन्तधातोस्तु पूर्ववत्त्रिविक्रमः, पश्चात् विष्णुसर्गे कृते सुपीरादि सिध्येत्। तथापि तेषां यद्ररामविधानं तदपि ज्ञापकम्। तस्मात् तेषामनव्ययत्वेऽपि ररामजविष्णुसर्गत्वादनेन यत् कार्यं विहितं तन्न स्यादिति। किञ्च, यतएवेत्यादौ धातुग्रहणं कृतमित्युक्त्वापि सजूःकाम्यति, आशीःकाम्यतीत्यादिकं न दत्त्वा यद्धविष्काम्यतीति दत्तं तत्फलन्त्वेवमनुसन्धेयम्। 'सजूष् आशिष्' इत्यनेन यत्र रविधानं तत्रैव 'इरुरन्तधातोरि'त्यनेनोद्धवस्य त्रिविक्रम इति। किम्बा, सजुष् आशिष् इत्यादौ धातुग्रहणं कृतमतएव तत्र नास्य विषय इत्युदाहरणान्तरदर्शनाय हविष्काम्यतीत्येव दत्तम्। काम्यादीत्यादिपदेन वक्ष्यमाणकारकृत्वादीनां घणक्त्वान्तानां पाशादीनां वा ग्रहणम्। अत्र काम्यादिग्रहणादिदं प्रकरणं सषविधानप्रकरणं पूर्वत्राप्याख्यातादि-

काम्यादिग्रहणात् प्रकरणमिदं पूर्वत्राप्यारोहति ; निष्करोति इत्यादौ स्यात्। नेह—अहःकाम्यति, गीःकाम्यति, सुपूःकाम्यति ॥२०२०॥

२०२१। असन्तस्य कृ-कमि-कंस-कुशी-पाश-कर्णी-कुम्भ-पात्रेष्वनुत्तर-पदस्थस्यानव्ययस्य समासे।

---

त्वप्यारोहति प्रवर्तते इत्यर्थः। तेन हेतुना निष्करोतीत्यादौ स्यात्। षत्वादिकमिति शेषः। निष्करोतीति 'निर्दुर्बहिरि'त्यनेन षत्वं नत्वनेन। अनव्ययस्येत्यनुवर्तनात्। पूर्वपरसूत्रयोरनव्ययस्य धृतत्वादत्राप्यनव्ययस्यैव ग्रहणम्। तेन अधःकाम्यतीत्यादौ न स्यात्। नेहेति अहरिच्छति अहःकाम्यति। एतद्व्यावृत्त्यर्थं सूत्रे नरराजेत्युक्तम्। नन्वत्र ररामजविशेषणमेवास्तु नरामजेत्यर्थकं यतो 'अह्नो विष्णुसर्गो विष्णुपदान्ते' इत्यनेन नस्य विष्णुसर्गं विधाय 'पश्चादह्नो विष्णुसर्गस्य रो रात्रिरूपरथान्तरादन्येष्वि'त्यनेन ररामः करणीयः। ततो ररामस्य विष्णुसर्गे कृते ररामजत्वेनैवेदं सिध्येदिति वाच्यं नैवं यथा अहरादीनां पत्यादाविति वक्ष्यमाणे पक्षे रविधानबलात् अहर्पतिरित्यादौ विष्णुसर्गो न स्यात्। तद्वदिहापि रविधानसामर्थ्यात् विष्णुसर्गो न स्यादतो ररामजविष्णुसर्गाभावादिदं न सिध्येत्। तस्मान्नरामजेत्यपि नानार्थकमिति। गिरं वाचं काम्यतीति गीःकाम्यति। शोभना पूः सुपूः तां काम्यतीति सुपूः काम्यति काम्यादिग्रहणादित्यनेन काम्यप्रत्यय इति सूचितम्। तेन पयःकाम्येत पयःकाम्यमित्यादौ न स्यात्। 'ऋद्वयविष्णुजनाभ्यामि'-त्यनेनात्र ण्यत्प्रत्ययान्तं काम्यं न प्रत्यय इति ज्ञेयम्॥

२०२१। अस्। अस् अन्ते यस्य स असन्तस्तस्य कृश्च कमिश्च कुशीच पाशश्च कर्णीच कुम्भश्च पात्रञ्च तानि कृकमिकुशीकर्णीकुम्भपाणि तेषु नोत्तरपदे स्थीयतेऽनुत्तरपदस्थस्तस्य। न अव्ययोऽनव्ययस्तस्य। समासे सति कृकम्यादिषु परेष्वनुत्तरपदस्थस्यासन्तस्य विष्णुसर्गस्य स स्यात्, स च स्थानिवत्। वेधसः ब्रह्मणः कृति वेधस्कृतिरिति वक्यन्तम्। वेधस्कृतीति कश्चिन्न पुस्तके निर्विष्णुसर्गान्तं दृश्यते

वेधस्कृतिः, विष्टरश्रवस्कामः, अम्भस्कुम्भः, अम्भस्कुम्भीत्यपि। उत्तरपदस्थत्वे तु– परमवेधःकृतिः ॥ २०२१ ॥

तत्त्, एवं साधीयं, वेधसः कृतमस्यास्तीति वेधस्कृति णिन्यन्तं ब्रह्मलिङ्गम्। कृ इति सामान्यनिर्देशात् अयः करोतीति कर्मण्यणन्तः अयस्कार इत्यपि अय गतावित्यस्य सर्वधातुभ्योऽसीत्यनेनासन्तत्वात्। विष्टरे अश्वत्थतरौ श्रूयते इति श्रुधातोरस्, विष्टरश्रवा विष्णुस्तं कमते इति कर्मण्यनन्तः विष्टरश्रवस्कामः। सरामस्य स्थानिवत्त्वात् विष्णुसर्गत्वे अद्वयधानेऽपि विष्टरश्रवस्कामेणेत्यत्र णत्वं स्यात्। अत्र कमीत्यण्यन्तनिर्देशात् यदा रामधातुके कमेनिङ् वा स्यात्। तदा विष्टरश्रवःकामयिता इत्यादौ न स्यात्। यद्यपि बालकल्किता-तृणन्तयोः कामयिता स्यात्तथाप्यत्र समासानुरोधात् तृणन्तो ज्ञेयः। एवमयसः कंस इति विग्रहे अयस्कंसः इति कंसः षष्ठीपलात्मकः परिमाणविशेषः। ननु कमेरेव औनादिक सप्रत्ययान्तेन कंसो व्युत्पादितः तस्मादत्र कमिग्रहणेन कंसोऽपि न लभ्यते किं कंसग्रहणेन? उच्यते। कमिग्रहणेनैव कंसग्रहणे सिद्धेऽपि यत् पृथक् कंसग्रहणं तदेतज्ज्ञापयति औणादिका व्युत्पन्ना अव्युत्पन्नाश्चेति। यदा व्युत्पन्नस्तस्मिन्नसन्तः विष्णुसर्गस्य सः, यदात्वव्युत्पन्नस्तस्मिन्नेति। एवमयसः कुशी अयस्कुशी, अयसः पाशः अयस्पाशः, अय इव कर्णौ यस्याः सा अयस्कर्णी। कुशी लोहविकारे इत्यनेन तद्धितपादे ईप्रत्ययसिद्धा कुशी वक्ष्यते। कुशा वल्गा इति न लोहविकार इत्यभिप्रायः। तत्र हि कुशाल्लोहविकार इति ईप्रत्ययो भवति। तत्परेऽकस्कादित्वादयःकुशीति केचित्। तत्त्वस्माकं ग्रन्थकारस्य नाभीष्टमत्रैव कुशीशब्दोपादानात्। पाशोऽत्र बन्धनरज्जुः शब्दसाहचर्यात् प्रत्ययस्तु पूर्वमेवोक्तः। 'नासिकोदरौष्ठजङ्घा-दन्तकर्णपुच्छशृङ्गाङ्गगात्रान्त्रनेत्रकण्ठेभ्यो न निषेधः' इत्यनेन प्राकरणिकविकल्पे ईप्रत्ययान्ता कर्णी ज्ञेयाः। कर्णीति लक्ष्मीलिङ्गनिर्देशाल्लिङ्ग-विशिष्टस्य ग्रहणस्य प्रायिकत्वेन च शिष्टप्रयोगानुसारात् पुरुषोत्तमे तु अयःकर्ण इति न विष्णुसर्गस्य सः। अम्भसा पूर्णः कुम्भः अम्भस्कुम्भ इति 'नाम्नो ग्रहणे लिङ्गविशिष्टस्य ग्रहणमि'ति न्यायेन अम्भस्कुम्भी-

२०२२। नमः-पुरसोर्गतिसंज्ञयोः कृञि।

नमस्कृत्य, नमस्कारः, नमस्कुरु॥ २०२२॥

१०२३। तिरसस्त्वगतौ च वा।

त्यप्युक्तम्। उत्तरेति। परमश्चासौ वेधाश्चेति परमवेधास्तस्य कृतिः। असन्तस्येति किम्?—ज्योतिः कामः। अनव्ययस्येति किम्?—स्वःकामः॥

२०२२। नमः। नमश्च पुरश्च नमःपुरसौ तयोः। गतिः संज्ञा ययोस्तौ गतिसंज्ञौ तयोः। कृञि परे गतिसंज्ञयोर्नमः पुरसो-विष्णुसर्गस्य स भवति। नमस्कृत्येति। नमः पूर्वात् कृञः क्त्वा इति स्थिते साक्षान्मिस्था लबणं वशे प्रादुराविस् नमश्च प्रसिद्धार्था इत्यनेन नमःशब्दस्योदित्वम्। एते उपेन्द्रवदाख्याते कृति च धातोः प्राक् प्रयोज्याः गतिसंज्ञा इत्यनेन गतिसंज्ञत्वञ्च। तत 'उपेन्द्रोर्यादिव्यन्ते'-त्यनेन नित्यसमासः। 'क्त्वो यवनञ्पूर्वसमासे' इत्यनेन क्त्वा यप्, 'वामनात् तुक् पृथावि'त्यनेन तुक्। नमः करोतीत्यर्थे कर्मण्यणित्यनेन अण्। अत्राप्युपेन्द्रोर्यादीत्यनेन समासः। एवं नमस्कुरु हिप्रत्ययान्तं त्वमि-त्यर्थाल्लभ्यते। किञ्च, इतः कृञि विकल्प इत्यनेन नमःशब्दस्य कृञि पाक्षिकोर्यादित्वात्। योगात् द्वितीयेत्युक्तं नारायणाय नमः कुर्यादित्यत्र नमःशब्दस्य कर्मत्वेनागुणीभूतत्वात् तद्योगे चतुर्थीत्यपि भङ्ग्या दर्शितं समासाभावपक्षे नमस्कर्ता इत्यादिकं शास्त्रान्तर-सिद्धं न, किन्तु भिन्नपदत्वे रूपभेदोऽर्थभेदोऽपि नास्ति, स्वरभेद एव केवलं फलमेतावता विशेषः प्रयासोऽत्र परिहृत इति। तथा पुरस्कृत्य, पुरस्कारः, पुरस्कुर्वित्यादयः। 'पुरोऽग्रादावि'त्यादिना पुरः-शब्दस्योर्यादित्वादिकं पूर्ववत्। किन्त्वस्य इतः कृञि विकल्प इत्यस्मात् प्राग्दर्शितत्वेन वैकल्पिकोर्यादित्वं नेति पुरः कृत्वेत्यादिकं न भवेदेव॥

२०२३। तिर। कृञि परे अगतौ गतौ च संज्ञायां वर्तमानस्य तिरसो विष्णुसर्गः स वा भवति। तिरोऽन्तर्द्धिवचनमित्यनेनास्योर्या-

तिरस्कृत्य, तिरःकृत्य। 'केचित् गतिग्रहणं नानुवर्तयन्ति' इति भाषावृत्तौ ( ८।३।४२ ) नित्यं तु तिरस्कारः साधुः ॥२०२३॥

२०२४। द्वि-त्रि-चतुरां वारार्थवृत्तीनां वा।

द्विष्कृत्वा, द्विःकृत्वा; त्रिष्कृत्वा, त्रिःकृत्वा; चतुष्कृत्वा, चतुःकृत्वा; अत्र वारार्थे तद्धितः सुः। द्विष्कृष्णं पश्य, द्विःकृष्णं पश्य; द्विष्पूजय, द्विःपूजय; चतुष्पठ, चतुःपठ। अवारार्थे चतुष्पार्श्वमिति नित्यं पूर्वेण ॥ २०२४ ॥

---

दित्वेन गतिसंज्ञत्वम्। गतिसंज्ञायां तिरस्कृत्येत्यादिद्वयं अन्पर्धाय तिष्ठतीत्यर्थः। गतौ तु तिरस्कृत्येत्यादिद्वयं समासाभावेऽप्यत्र पाक्षिकः सः। पराभूय गत इत्यर्थः। केचिदिति केचित् पण्डिता गतिग्रहणमत्र नानुवर्तयन्तीत्यनेन तन्मते तिरस्कृत्य इत्यादिद्वयं सूचितम्। भाषावृत्तौ तु नित्यं तिरस्कारः साधुरित्युक्तमत उभयमतप्रदर्शनेन ग्रन्थकृता सूत्रे गतौ चेत्युक्तमिति ॥

२०२४। द्विस्त्रि। वारार्थे वृत्तिर्वर्तनं येषां ते वारार्थवृत्तयस्तेषाम्। सिंहावलोकिताधिकारेणात्र कखपफा अनुवर्तन्ते विशेषग्रहणाभावात्। कखपफेषु परेषु वारार्थवृत्तीनां द्विस्त्रिश्चतुःशब्दानां विष्णुसर्गस्य सो वा स्यात्। द्विप्रकारं कृत्वा इत्यादौ वाक्ये द्विष्कृत्वादयः षट्। अत्रेति। अत्र द्विस्त्रिचतुषुं वारार्थे क्रियाप्रकारगणने तद्धितः सुप्रत्यय इत्यर्थः। द्विस्त्रिश्चतुरिति पदानां क्रियावारगणनबोधकेन सुप्रत्ययेनैव कृत्वार्थे लब्धे कृत्वेति ग्रहणं स्पष्टतार्थम्। द्विष्कृत्वा त्रिष्कृत्वेत्यादौ प्रथमं सुं ततो द्विरादीनां कर्मत्वादमो महाहरः, 'क्तामान्तश्च कृदव्ययमि'त्यनेन कृत्वेत्यस्याव्ययत्वात् सोर्महाहरः। इत्यव्ययस्य पूर्वेषामपि पदत्वं लभ्यते। 'नापदं शास्त्रे प्रयुञ्जीते'ति वचनात् तस्मात् 'सररामयोरि'त्यनेन सोर्विष्णुसर्गं विधाय मूर्धण्य-षरामः कार्यः। पक्षे विष्णुसर्गस्य स्थितिश्च। चतुष्कृत्वेत्यत्र चतुरित्यस्मात् पूर्वं सुः पश्चात् 'रात् सस्यैव सत्सङ्गान्तहरविधि-

२०२५। इसुसोः क्रियापेक्षायां वा।

सर्पिष्कुरु, सर्पिःकुरु; यजुष्पठ यजुःपठ। इसुसोरत्रौणादिकयोरेव, तेन नेह—पितुःकृतिः, मुहुःपक्तिः। क्रियापेक्षायामिति परस्थितायाः कखपफादिक्रियायाः सम्बन्धे सतीत्यर्थः। तस्यामिति किम्? स्थापय सर्पिः पिवोदकम्॥ २०२५॥

---

रि'त्युक्त्वा 'सत्सङ्गान्तस्य हरः' इत्यनेन तस्य हरश्च ततो ररामस्य विष्णुसर्गस्तस्य षश्च, पक्षे विष्णुसर्गस्यैव स्थितिः। विशेषविहितमपि षत्वं न हि विष्णुसर्गं बाधते, सूत्रे विकल्पस्य वैयर्थ्यापातात्। अत्रारार्थे चेत्यत्र नित्यं पूर्वेणेति 'निर्दुर्वहिरादिश्चतुरामि'त्यनेनेति शेषः। चतुष्पार्श्वमिति चत्वारि पार्श्वान्यस्येति पीताम्बरे चतुर्णां पार्श्वमिति षष्ठीकृष्णपुरुषे चतुर्णां पार्श्वानां समाहार इति त्रिराम्याञ्च, किन्तु पात्राद्यन्ताद्यन्तर्भावादस्य ब्रह्मत्वं, न लक्ष्मीता॥

२०२५। इसु। क्रियाया अपेक्षा क्रियापेक्षा तस्यां सत्यां कखपफेषु परेषु इसुसन्तयोर्विष्णुसर्गः षत्वमापद्यते वा। वैष्णवाचार्यो वैष्णवं नियुङ्क्ते सर्पिष्कुर्विति इत्यादिना कृष्णसेवार्थं सर्पिर्निष्पादयेत्यर्थः। एवं यजुष्पठेत्यादि। इस्विति। अत्र सूत्रे औणादिकयोरेवेसुसन्तयोर्ग्रहणमित्यर्थः। तेन हेतुभूते, नेह स्थाने न स्यादौणादिकत्वाभावात्। पितुः कृतिः क्रियत्यर्थः। मुह वैचित्त्य इत्यस्मात् 'चक्षादेरुसि'रित्यनेन उस्प्रत्ययेन सिद्धत्वेऽप्यव्ययवर्गे पाठादस्याव्ययत्वं तेनात्रापि न मुहुर्वारं वारं पक्तिः पाकक्रियेत्यर्थः। अपेक्षाहि कस्मैचित् कार्यायैकं प्रतीक्ष्यान्यस्य वर्तनं सा च परस्परं संवध्नाति। तत्त्वन्यत्रान्यदिह पुनः कारकक्रिययोरेवेत्याह क्रियापेक्षेति सूत्रस्यैव फलितार्थेन वृत्तिकथनमिदम्। न तु कथान्तरमिति। तस्यां क्रियापेक्षायामिति किं किमर्थं, यदा क्रियापेक्षा न स्यात् तदा न स्यादित्यापेक्षार्थः। स्थापय सर्पिः पिवोदकमित्यत्र भो वैष्णव सर्पिः स्थापय उदकं पिवेति परस्परसम्बन्धः। न तु सर्पिः पिव उदकं स्थापय इति। यतो लोके घृतस्थापनप्रयत्नं विना कोऽप्युदकस्थापनयत्नं न करोतीति

२०२६। अनुत्तरपदस्थयोरिसुसोः समासे, अधः-शिरसोः पदे।

सर्पिष्कुण्डं, यजुष्पाठः, अधस्पदं, शिरस्पदम्। उत्तर-पदस्थत्वे तु—महासर्पिःकुण्डं, परमसर्पिःकुरु। परमाधः-पदम्॥ २०२६॥

प्रसिद्धेः। यदि कश्चिद्दयालुः कमपि भृत्यं क्लेशितं दृष्ट्वा उदकं स्थापय, सर्पिः पिवेति ब्रूयात्तदा सर्पिष्पिवेत्यपि स्यात्। तिष्ठतु सर्पिः पिव त्वमुदकमिति। सर्पिरिति कर्तृपदम्। तिष्ठत्विति क्रियापदमपेक्षते पिवेति क्रियापदं उदकमिति कर्मपदमपेक्षते न तु सर्पिः पिवेत्यनयोः परस्परापेक्षास्तीत्युत्तरसूत्रेणापि विकल्पो न भवतीत्येके॥

२०२६। अनु। न उत्तरपदे स्थीयते अनुत्तरपदस्थौ तयोः समासे सत्यनुत्तरपदस्थितयोरिसुसन्तयोः कखपफेषु विष्णुसर्गस्य षत्वं स्यात्। अधः। अनुत्तरपदस्थयोरधःशिरःशब्दयोस्तु पदे परे सत्वं भवति। सर्पिषः कुण्डं यजुषः पाठः इति विग्रहे। अधःस्थितं पादमिति विग्रहे पदस्य अधः इति वा विग्रहे राजदन्तादित्वात् अधस्पदमिति। शिरसि पदमिति विग्रहे शिरश्च पदञ्च तयोः समाहार इति विग्रहे 'प्राण्यङ्गानामित्यनेन समाहारे वा शिरस्पदमिति। उत्तरेति। अनुत्तर-पदस्थेति ग्रहणादुत्तरपदस्थत्वे तु न स्यादित्यर्थः। महासर्पिः कुण्डमित्या-दित्रये पूर्वपूर्वपदे श्यामरामसमासानन्तरं पश्चात् पूर्ववद्वाक्यं योज्यम्। एवं परमशिरः पदमित्यपि। ननु यद्यप्यनेन महासर्पिः कुण्डं परम-सर्पिः कुर्वित्यादौ षत्वं न स्यात्तथापि इसुसोः क्रियापेक्षायामिति पूर्वसूत्रेण कथं पाक्षिकषत्वं न स्यात्? उच्यते। समासे ह्येकार्थी भावलक्षणः सम्बन्धो न तु परस्परापेक्षा सा हि क्रियाकारकयोरेव भवति। समासार्थे वाक्ये च इह पुनर्नास्तीति भवता यदुक्तं तन्न स्यात्। तथाहि, समासे विशेषणं स्वार्थं परित्यज्य विशेष्यार्थम-भिधत्ते अतएकार्थी भावलक्षणः सम्बन्धोऽत्र न परस्परापेक्षा। नन्वेवं सति जहत्स्वार्थलक्षणा वृत्तिः स्वीकार्येति चेत् सापि न घटते। नहि

२०२७। कस्क आदिषु च।

कस्कः, कौतस्कुतः, भास्करः, अहस्करः, तमस्काण्डं, मेदस्पिण्डः, वाचस्पतिः, अयस्कील इत्यादि ॥ २०२७ ॥

उक्तौ षसौ।

---

विष्णुदूतं पश्येत्युक्ते दूतमात्रे प्रतीतिः कस्यापि जायते विशेषणमात्रोपयोगिनोऽर्थस्यापरित्यागात्। विष्णुशब्दस्तु जहदपि स्वार्थं नात्यन्तं जहाति। किन्तु यः प्रधानार्थविरोधी स्वार्थस्तं जहातीति। तथा शिल्पकारो राजकर्मणि वर्तमानः प्रधानार्थविरोधि शिल्पकर्म जहाति न तु हिक्किकतहसितकण्डयितानि तथा विष्णुशब्दोऽपि विशेष्यार्थे विरोधिनमन्यसम्बन्धार्थं जहाति न विशेषणभावम्। अथवा वाक्ये दृष्टस्योपसर्जनीभूतार्थस्य वृत्तौ स एवायमित्यवगमात् तदर्थावगमो भवति। यथा मल्लिकासम्पुटश्चम्पकसम्पुट इति। तस्मात् तद्द्वयपनीतेऽपि तत्तत्पुटे तत्र तत्र तदर्थावगमस्तद्वदिहापि। अतएव महासर्पिः कुण्डमित्यादौ एकार्थीभावसम्बन्धो न परस्परापेक्षारूपः। यद्यपि स च परस्परसम्बन्धार्थानामित्यनेन समासलक्षणोक्तेन परस्परसम्बन्धोऽङ्गीक्रियते तथाप्यत्र क्रियापेक्षाभावात् पाक्षिकषत्वं न स्यात्। यतोऽत्र क्रियापेक्षा नास्ति, कुतः क्रियापेक्षा परमसर्पिः कुरु इत्यत्र क्रियापेक्षा घटते, किन्तु सुप्सुपेत्यनुवृत्तेस्तिङापीत्यनेन यस्तिङ्समासो विहितस्तेन वाध्यतेऽतोऽत्रापि न पाक्षिकषत्वम्। किंवात्र क्रियापेक्षायामपि तामनादृत्य उत्तरपदस्थसमासाभावाभ्यां द्व्यङ्गवैकल्यं प्रत्युदाहरणमुपन्यस्तवानिति ॥

२०२७। कस्कः। कस्क आदिर्येषां ते कस्कादयः तेषु। कस्क आदिषु प्रयोगेषु यथायोग्यं सषौ भवतः। सूत्रे कस्क इत्यादिना सह समासेऽप्यन्तरङ्गत्वादेर्महाहराभावः। कस्कपदे समासप्रतीति अन्यथा कामादिषु चेत्येवं स्यात्। कः इति प्रश्ने। 'किमः को विष्णुभक्ताविʼत्यनेन प्रथमान्तः क इति तरायां याबद्बोधः इत्यनेन द्विरुक्तौ कस्क इति। 'पञ्चम्यास्तस् तद्धितःʼ इत्यनेन तद्धितनिपातः कुतः।

## २०२८। अहरादीनां पत्यादौ रो वा।

अहर्पति, अहःपतिः ; धूर्पतिः, धूःपतिः ; गीर्पतिः, गीःपतिः। कस्क आदित्वात्—गीष्पतिः, स्वःपततिः, स्वर्पतति ॥ २०२८ ॥

---

वदादित्वादव्ययञ्च ततो वीप्सायां द्विरुक्तिः, स्वार्थे केशवणः, पूर्वपदस्य वृष्णीन्द्रः। केशवणरामे संसारहरश्च वक्ष्यते। 'सररामयोरि'-त्यनेन सोर्विष्णुसर्ग इति। कौतस्कुतः। भासृ दीप्तौ भासते इति क्विप् भास् तां करोतीति वाक्ये आद्यन्तानन्तेत्यादिषु गणेषु कर्मसु डुकृञष्ट इत्यनेन कृत्प्रकरणोक्त टप्रत्ययान्त भास्कर इति। एवम् अहः दिवसं करोतीति अहस्करः। 'भास्कराहस्करव्रध्नप्रभाकरविभाकराः' इत्यमरः। तमसां काण्डं समूहः इति तमस्काण्डम्। मेदसः मांसविशेषस्य पिण्ड इति वाक्ये। वाचां वाण्याः पतिरिति वाक्ये 'विष्णुजनारामान्तादि'त्यादिना षष्ठ्या अलुक्। अयसः लोहस्य कीलः शङ्कुरिति वाक्ये। इत्यादीत्यादिपदेन पूर्वोक्तैः सूत्रैर्यन्न सिध्येत् तत्तदनेनैव साधनीयमिति ॥

२०२८। अह। अहरादिर्येषां ते अहरादयस्तेषां पत्यादौ परस्मिन् अहरादीनां शब्दानां विष्णसर्गस्य रो वा स्यात्। अह्नो दिवसस्य पतिरिति विग्रहे अहर्पतिरित्यादिद्वयम्। नन्वहर्पत्यादौ 'सररामयोरि'त्यनेन ररामस्य विष्णुसर्गः कथं न स्यात्? मैवम्। यदि ररामस्य विष्णुसर्ग भवेत् तदा ररामविधानमनर्थकं स्यादतोऽत्र ररामविधानादहर्पत्यादौ पुनाररामस्य विष्णुसर्गो न स्यात्। धूर्वीधातोः क्विवन्तः धूः। धुरां भाराणां पतिरिति विग्रहे धूर्पतिरित्यादिद्वयम्। किन्तु 'इरुरन्तधातोरि'त्यनेन उरामस्य त्रिविक्रमः। एवं गिरां वाचां पतिरिति वाक्ये गीर्पतिरित्यादिद्वयम्। कस्क आदित्वात्। कस्क आदेराकृतिगणत्वाद्गीष्पतिरित्यपि स्यात्। गीष्पतिर्धिषणो गुरुरित्यभिधानादौ दृश्यते च। स्वः स्वर्गात् पतति स्वःपतति इति द्वयम् ॥

२०२९। उषर्बुधोऽग्नौ निपात्यते, नार्पतादयश्च वृष्णीन्द्रे ।

नृपतेरिदं नार्पतम्; नार्कटं, नार्कपालं; नार्पतमिति जुमरः ॥ २०२९ ॥

२०३०। उत्तरपदस्य पीताम्बरे ।

विभुरयम् ॥ २०३० ॥

२०३१। जायाया जानिः ।

रुक्मिणीजानिः ॥ २०३१ ॥

---

२०२९। उषः। अग्नौ वाच्ये उषर्बुध इति ररामेण सह निपात्यते। संज्ञाशब्दानां यथाकथञ्चिद् व्युत्पत्तित्वादुषसः प्रातःकालस्य बुध इति विग्रहो ज्ञेयः। बुधः कप्रत्ययान्तः। नार्प। नार्पतमादिर्येषां ते नार्पतादयः। वृष्णीन्द्रे कृते सति ररामस्य विष्णुसर्गाभावेन नार्पतादयश्च निपात्यन्ते। चकारोऽत्रानुक्तसमुच्चये तेन यथास्वमन्येऽप्युदाहर्तव्याः। नृणां नराणां पतिः नृपतिः। तस्येदमित्यनेन केशवणः। वाक्योदाहरणं स्वयं दर्शितमिति। आत्मोदाहरणं दत्त्वा जुमरोदाहरणत्रयमाह—नार्कटमित्यनेन। नुः करोरिदं नार्कटम्। तथा नुः कपालस्येदं नार्कपालं, नार्पतन्तु पूर्ववत्। किन्त्विदं क्वचित् पुस्तके न दृश्यते च तदपि नासङ्गतं सूत्रस्थादिपदात् सर्वसिद्धेः ॥

२०३०। उत्तर। पीताम्बरे समासे सत्युत्तरपदस्य यथास्वमादेशो भवति। उत्तरपदस्येति पूर्वपदमपेक्ष्यते। अतः पूर्वपदादुत्तरस्येति योज्यम्। विभुनामाविकारोऽयम् ॥

२०३१। जाया। पीताम्बरे पूर्वपदादुत्तरस्य जायाया जानिः स्यात्। रुक्मिणीजाया यस्य सः। एवं देवीजाया यस्य सः देवजानिः। देवीशब्दस्य 'वाच्यलिङ्गलक्ष्मीस्तुल्याधी'त्यनेन पुरुषोत्तमवत्त्वम्। तथा मायाजानिः, दत्तजानिरित्यादयोऽपि ॥

२०३२। धनुषो धन्वन्, संज्ञायान्तु वा।

दृढ़धन्वा ; शार्ङ्गधन्वा, शार्ङ्गधनुः। धनुरुदन्तः पुंलिङ्गोऽप्यस्ति, तेन—

'स्वयमतनुः कुसुमधनुस्त्रिभुवनविजयी कथं मदनः।
यदि सरसिरुहनयना न किरति नयनाञ्चलान्दोलनम्॥'

संज्ञात्वमपि नास्तीति॥ २०३२॥

---

२०३२। धनु। पीताम्बरे सति पूर्वपदादुत्तरस्य धनुशब्दस्य धन्वन् स्यात्। संज्ञा। पीताम्बरे संज्ञायां विषये पूर्वपदादुत्तरस्य धनुषो धन्वन् वा स्यात्। पूर्वस्मान्नित्ये प्राप्ते विकल्पार्थोऽयं योगः। दृढं धनुर्यस्य इति दृढ़धन्वन्, 'नान्तधातुवर्जिते'त्यनेन त्रिविक्रमः। 'राधाविष्णुजनाभ्यामि'त्यनेन सोर्हरः। एवं ऋजुधन्वा, वक्रधन्वा इत्यादयः। चक्रमिव धनुरस्येति वाक्ये चक्रधन्वा आकर्षणे कुण्डलीभूतत्वात् चक्रवदिति। शृङ्गेण निर्मितं शार्ङ्गं तद्धनुर्यस्य स शार्ङ्गधन्वा शार्ङ्गधनुः शार्ङ्गधन्वा श्रीकृष्ण इति प्रसिद्धेरत्र संज्ञात्वम्। तथा पुष्पधन्वा पुष्पधनुः। धनुरुषन्तं ब्रह्मलिङ्गमिति प्रसिद्धमित्यत आह—धनुरुदन्त इति। धनुरुदन्त पुंलिङ्गमित्युक्त्वा तत्पोषकं पद्यमाह—तेनेत्यादिना। यदि सरसिजनयना वराङ्गना नयनाञ्चलान्दोलं नयनप्रान्तचाञ्चल्यं न विकिरति न क्षिपति तदा स्वयमतनुः तनुहीनः कुसुमधनुः सन्मदनः कथं त्रिभुवनविजयी भवेदित्यर्थः। अत्र कन्दर्पस्य तनुरहितत्वेन पुष्पस्य कोमलत्वात्तन्निर्मित धनुस्त्वेन च दुर्बलत्वं सूचितमतः सरसिजनयनाञ्चलान्दोलविक्षेपेण तस्य त्रिभुवनविजये समर्थता। पुष्पधन्वा रतिपतिरित्यादिना पुष्पधन्वन्-शब्दस्यैव संज्ञात्वं न कुसुमधनोरित्यस्य विशेषतस्तस्मिन् पद्ये मदन इत्यस्य विशेषस्य दर्शनात् कुसुमधनुरित्यस्य विशेषणत्वमेव निर्धारितमित्यत आह संज्ञात्वमपि नास्तीति। यद्यत्र संज्ञात्वं स्यात्तदा संज्ञायां धन्वनादेशस्य वैकल्प्यात् पक्षे उसन्तधनुषोऽपि कुसुमधनुरिति स्यात् तन्नास्तीति। ननु पुष्पकुसुमयोरेकपर्यायत्वेन यथा पुष्पधन्वा संज्ञायां वर्तमानः कन्दर्पवाची तथा कुसुम-

२०३३। प्रसंभ्यां जानुनो ज्ञुः।

प्रगते जानुनी यस्य स प्रज्ञुः; संहते जानुनी यस्य स संज्ञुः ॥२०३३॥

२०३४। ऊर्ध्वात्तु वा।

ऊर्ध्वज्ञुः, ऊर्ध्वजानुः ॥ २०३४॥

२०३५। सुसंख्याभ्यां दन्तस्य दतृर्वयसि।

सुदन् कुमारः; सुदती कुमारी; द्विदन् वत्सः। वयसि किम्? द्विदन्तो गजः ॥ २०३५॥

---

धनुरपि तद्वाची मदनशब्दस्तु यौगिकवृत्त्या जनमादकत्वेन बिशेषणमिति। कुचोद्यं कृत्वा यद्यपि केचिद्वचुस्तथापि प्रथमायाः सौ परएव धनुषः कुसुमधनुरिति सिध्येत्, औप्रभृतौ तु कुसुमधनुरिति न सिध्येत्, तत् साधूक्तं धनुरुदन्त इति ॥

२०३३। प्रसं। सूत्रे वेदवद्व्यवहाराच्छब्दानुकरण-कृत्वा प्रसंभ्यामित्युक्तमन्यथाद्वयोरव्ययत्वात् स्वादेर्महाहरः स्यात्। पीताम्बरे सति प्रसंशब्दाभ्यामुत्तरस्य जानुनो ज्ञुरादेशो भवति। वाक्योदाहरणं स्वयमेव दर्शितम्। प्रगते नष्टे इत्यर्थः। संहते मिलिते इत्यर्थः। 'प्रसंभ्यां जानुनोज्ञुज्ञावि'ति जुमरसूत्रम्। प्रसम् इत्येताभ्यामुत्तरस्य जानुशब्दस्य स्थाने वहुव्रीहौ ज्ञुज्ञ इत्येतावादेशौ भवत इत्यर्थः। तट्टीकाकारस्तु प्रज्ञ इत्युक्त्वा परमतमप्याह अकारान्तोऽयमादेशो बहुभिः कृतः, उकारान्तोऽपि कैश्चित्। तथाच मनुनागप्रयोगः ऊर्ध्वज्ञुरिति। मतद्वयाङ्गीकारादिहादेशद्वयविधानमिति। एवमूर्ध्वशब्दादपि तन्मते ज्ञज्ञू भवतः, किन्तु ज्ञज्ञुविधानादूर्ध्वज्ञ इत्यपिसिध्येत्। विकल्पाभावादत्रोर्ध्वजानुरिति न सिध्येदेवेति ज्ञेयम् ॥

२०३४। ऊर्ध्वा। पीताम्बरे समासे ऊर्ध्वादुत्तरस्य जानुनस्तु ज्ञुर्बा स्यात्। अप्राप्ते विभाषेयम्। ऊर्ध्वं गते जानुनी यस्येति विग्रहे ऊर्ध्वज्ञुरित्यादिद्वयम् ॥

२०३५। सुसं। वयसि गम्यमाने पीताम्बरे सुसंख्याभ्यामुत्तरस्य दन्तस्य दतृर्भवति। दतृरिति शब्दनिर्देशात् दतेति न स्यात्। सुदन्निति

२०३६। अग्रान्त-शुद्ध-शुभ्र-श्यावारक-वृष-वराहाहि-गर्दभ-शिखरेभ्यो दन्दस्य दतृर्वा।

कुशाग्रदन्, कुशाग्रदन्तः; शुद्धदन्, शुद्धदन्तः॥ २०३६॥

२०३७। संख्यासूपमानेभ्यः पादस्यान्तहरः।

---

शोभना दन्ता अस्येति सुदतृ इत्यस्य ऋराम इत्, सु अचश्चतुर्भुजानुबन्धानाञ्चेत्यनेन नुम्। राधाविष्णुजनाभ्यामित्यनेन सोर्हरः, सत्सङ्गान्तस्य हर इति तरामहरः। वयः प्रतीतयेऽत्र कुमार इति विशेष्य दर्शितम्। शोभना दन्ता अस्याः सुदतीति ऋरामानुबन्धादीप् वक्ष्यते। अत्रापि कुमारीति पूर्ववत्। द्वौ दन्तौ यस्य स द्विदन् वत्स इति गोवत्सः। वयसीति किम्? यर्हि वयसीति न स्यात् तर्हि न स्यात्। द्वौ दन्तौ यस्य स द्विदन्तो गज इत्यत्र गजस्य स्वभावद्विदन्तत्वात् दन्तस्य दत्रादेशो न स्यात्। नहि दन्तेनास्य वयो गम्यते अपितु वयसि चिह्नान्तरमनुसन्धेयम्॥

२०३६। अग्र। अग्रान्तश्च शुद्धश्च शुभ्रश्च श्यावश्च अरकश्च वृषश्च वराहश्च अहिश्च गर्दभश्च शिखरश्च ते तेभ्यः। पीताम्बरे वयस्यवयसि च गम्ये अग्रान्तादिभ्यो दशशब्देभ्यः परस्य दन्तस्य दतृर्वा स्यात्। कुशाग्रमिव दन्त अस्येति विग्रहे कुशाग्रदन्नित्यादिद्वयम् शुद्धा दन्ता अस्येति शुद्धदन्नित्यपि द्वयम्। एवं शुभ्रदन् श्यावदन्, अरकदन्। श्यावः स्वभावतः कृष्णवर्णः। अरकः द्रव्यविशेषः। तथा वृषदन्त इव दन्तो यस्य स वृषदन्। वराहदन्त इव दन्तो यस्य स वराहदन्। गर्दभदन्त इव दन्तो यस्य स गर्दभदन्। शिखर इव दन्तो यस्य स शिखरदन् इति वृषददादयश्चत्वार उपमानपूर्वाः। शिखर इति पर्वताग्रम्। पक्षे शुभ्रदन्त इत्यादयः। लक्ष्म्यान्तु कुशाग्रदतीत्यादयोऽपि॥

२०३७। संख्या। संख्या च सु च उपमानञ्च तानि संख्यासूपमानानि तेभ्यः। पीताम्बरे सति संख्यासूपमानेभ्यः परस्य पाद-

द्विपात्, सुपात्, सिंहपात् ॥ २०३७ ॥

२०३८ । न हस्त्यादेः ।

हस्तिपादः, कण्डोलपादः ॥ २०३८ ॥

२०३९ । कुम्भपद्यादयः ।

साधवः । कुम्भपदी, शतपदी, गोधापदीत्यादि ॥ २०३९ ॥

---

स्यान्तहरो भवति । द्वौ पादौ यस्येति द्विपात् । शोभनौ पादौ यस्येति सुपात् । सिंहपादाविव पादौ यस्येति सिंहपात् । द्विपादित्यादौ सोऽहरे कृते विष्णुदासस्य हरिकमलं वेत्यनेन दरामस्य तरामः । एवमेकपात्, त्रिपात्, चतुष्पात्, पञ्चपात्, षट्पात्, सप्तपादित्यादयः । तथाश्वपात् गोपादित्यादयोऽपि । पादान्ताच्चेति स्त्रियामीप्रत्ययो नास्ति, समासकृताल्लोपस्य पादस्तत्र ग्रहणात् गूढ़पात् सर्पी येत्वकारलोपं कुर्वन्ति तैर्गूढ़पदीव्यावृत्तये यत्नः करणीय इति जुमरटीकाकृत् । पदगतौ पादयतीति ण्यन्तात् पादयतेः क्विप्, णेर्लुक् पात् । गूढ़ः पाद् यस्येति गूढ़पाद्भुजङ्ग इति दुर्गसिंहः । गूढ़पादित्यत्र लक्षणाभावात् पृषोदरादित्वात् अकारलोपं पाणिनीयाश्चान्द्राश्च वदन्तीति । 'कुण्डली गूढ़पाच्चक्षुःश्रवाः काकोदरः फणी'त्यमरश्च ॥

२०३८ । न हस्त्य । पीताम्बरे समासे उपमानाद्धस्त्यादेरुत्तरस्य पादस्यान्तहरो न स्यात् । पूर्वेण प्राप्ते प्रतिषेधोऽयमिति । हस्तिनः पादा इव पादौ यस्येति वाक्ये । कण्डोल इव पादौ यस्येति विग्रहे । सूत्रस्थादिपदं प्रसिद्धगणविशेषग्राहकं तद्यथा—'हस्ती महांश्च गणिका कटोलः कण्डोलस्तथा । गण्डोलः कुशलश्चैव दास्यष्टौ हस्तिकादयः ॥

२०३९ । कुम्भ । कुम्भपदी आदिर्येषां ते कुम्भपद्यादयः । पीताम्बरसमासे कुम्भपद्यादयश्च ईप्प्रत्ययान्ताः साधवो भवन्ति । कुम्भविव पादौ यस्याः सा कुम्भपदी । शतं पादा यस्याः सा शतपदी । गोधाया पादाविव पादौ यस्याः सा गोधापदी । इत्यादीत्यादिपदेनान्येऽप्यूह्याः । कुम्भादिगणो यथा—'कुम्भाष्टौ शतजालौ हि

२०४०। पूर्णादिः ककुदस्य ककुदवस्थायाम्।

पूर्णककुत्, अजातककुत्। अवस्थायां किम्? श्वेतककुदः॥ २०४०॥

२०४१। त्रिककुत् गिरौ।

साधुः॥ २०४१॥

२०४२। उद्विभ्यां काकुदस्य काकुदवस्थायां, पूर्णाद्वा।

---

मणिसूत्रं शितिस्तथा। सूत्रं द्रोणः कुणिः कृष्णकुशलश्च ततः परः॥ विनिरर्द्धशक्रत् शूच्यः शूकरश्च तदुत्तरः। दास्यैकगोधा कुम्भाद्या एकविंशतिसंख्यकाः॥ गोधा स्वर्णगोधिका॥

२०४०। पूर्णा। पीताम्बरे समासे अवस्थायां गम्यमानायां पूर्णादिः पूर्वपदादुत्तरस्य ककुदस्य ककुद्भवति। कालादिकृतो वयोविशेषः धर्मविशेषश्चावस्था तस्याम्। पूर्णं ककुदं स्कन्धाग्रं यस्येति पूर्णककुत् युवा वृषः। अजातं ककुत् यस्येति अजातककुत् तरुणः गौः। एवं स्थूलककुद्बलवान् यष्टिककुत् मध्यमः। नातिस्थूलो नातिबलवानित्यर्थः। पीताम्बरे इति किम्? पूर्णञ्च तत्ककुदञ्चेति पूर्णककुदमिति। अत्रापि तारुण्यादिकं गम्यते एव। ककुच्छब्देनापि पूर्णककुदित्यादौ सिद्धेऽप्यस्मिन् सूत्रे यत् ककुच्छब्दस्य ग्रहणमिदं तत्पीताम्बरादन्यत्र पूर्णककुदाद्यरामान्त प्रयोगाभावनिरासार्थम्। अवस्थायामिति किमवस्था यर्हि न स्यात्। श्वेतं ककुदं यस्येति॥

२०४१। त्रिक। गिरौ वाच्ये त्रिशब्दात् ककुदस्यारामहरेण त्रिककुत् साधुर्निपात्यत इत्यर्थः। त्रीणि ककुदानि यस्येति त्रिककुदो नाम पूर्वविशेषः। अवस्थात्र न गम्यते इतोऽप्राप्ते विधानम्। अत्र शृङ्गमेव ककुदाकारत्वात् ककुदमिव ककुदमिति। गिराविति किम्? त्रिककुदं क्षेत्रम्॥

२०४२। उद्वि। अवस्थायां गम्यमानायामुद्विभ्यामुत्तरस्य काकुदस्य

उत्काकुत्, विकाकुत्; पूर्णकाकुत्, पूर्णकाकुदो वा; काकुदं तालु ॥ २०४२॥

२०४३। सुहृन्मित्रे दुर्हृच्छत्रौ।

साधू ॥ २०४३ ॥

२०४४। युष्मदो गौणस्य त्वद्-युवद्-युष्मद एकत्वादिषु, अस्मदो मदावदस्मदः।

गौणस्येति कृष्णपुरुषेऽपि गृह्यते, ततः अतित्वत्, अतियुवदित्यादि। नाम्नः स्वादौ रूपाणि दर्शितान्येव ॥ २०४४॥

---

काकुत् स्यात्। पूर्णात्। पूर्णादुत्तरस्य काकुदस्यावस्थायां काकुद्वा स्यात्। उद्गतं काकुदं यस्येति विग्रहे। विगतं काकुदं यस्येति विग्रहे। पूर्णं काकुदं यस्येति वाक्ये। पूर्णकाकुत् पूर्णकाकुदो वा। काकुदं तालिवति जिह्वाया ऊर्ध्वभागः ।।

२०४३। सुहृत्। मित्रे वाच्ये सुहृत् साधुः। शत्रौ वाच्ये दुर्हृत् साधुः। सु शोभनं हृदयमस्येति सुहृत्। दुष्टं हृदयमस्येति दुर्हृत्।

२०४४। युष्म। एकत्वादिषु एकत्वदित्वबहुत्वेषु वषयेषु गौणस्य युष्मदः स्थाने यथासंख्यं त्वद् युवद् युष्मद् इत्यादेशा भवन्ति। गौणस्यादस्मदस्तु मदावदस्मद इत्येते आदेशा भवन्ति। विभुरित्यधिकारोऽत्रानुवर्तते। अतो यस्मिन् कस्मिन् समासेऽपि गौणत्वे सत्येते यथासम्भवमनयोरादेशाः, किन्तु पीताम्बरे एव गौणस्य सर्वत्र सम्भवः कृष्णपुरुषे तु क्वचिदाह गौणस्येति। विभुरित्यधिकारसामर्थ्यात् गौणस्येति पदं कृष्णपुरुषे पीताम्बरेऽपि गृह्यते। ततो हेतोः त्वामतिक्रान्त इत्यर्थे अतित्वद् युवामतिक्रान्त इत्यर्थे अतियुवद् युष्मानतिक्रान्त इत्यर्थे अतियुष्मद्। एवं मामतिक्रान्त इत्यर्थे अतिमद् आवामतिक्रान्त इत्यर्थे अत्यावत् अस्मानतिक्रान्त इत्यर्थे अत्यस्मद्। तथा पीताम्बरे परमस्त्वं यत्र स परमत्वद् परमौ युवां यत्र स परमयुवद् परमा यूयं यत्र

२०४५। द्व्यन्तर्भ्योमप ईपः, अद्वयान्तादन्यतः प्रादेश्च।

द्वयोर्गता आपोऽस्मिन् द्वीपः। एवम् अन्तरीपः, दुरीपः, अन्वीपः। अद्वयान्तात्तु—प्रापं, परापम् ॥ २०४५ ॥

---

सपरमयुष्मद्। एवं श्रेष्ठोऽहमत्र श्रेष्ठमद्। श्रेष्ठावावामत्र श्रेष्ठावद् श्रेष्ठा वयमत्र श्रेष्ठास्मद्। इत्यादीत्यादिपदेन एतेषां ग्रहणम्। स्वादौ परे इत्यादिनाम्नो रूपाणि दर्शितान्येवेत्यर्थः। यद्यपि ग्रन्थकारेणैतदुक्तं, तथापि यथाकथञ्चिन्मया दर्श्यते तेषां सर्वेषां त्वमहमादय एव सुजस्ङेङस्सु इत्यनेन त्वां युवां युष्मानतिक्रान्त इत्याद्यर्थे अतित्वम्, अतित्वम्, अतित्वम्। एवमतियुयमित्यादि तथा माम्, आवाम्, अस्मानतिक्रान्त इत्याद्यर्थे अत्यहम्, अत्यहम्, अत्यहमित्यादि। एवं परमत्वं श्रेष्ठाहमित्यादि। अन्यत्र वमपर्यन्तवर्जमक्षराणि प्रकृतपदवत् कार्याणीत्यनेन अतित्वाम्, अतिमाम् अतित्वया अतिमया इत्यादि ।।

२०४५। द्व्यन्त। पीताम्बरे द्व्यन्तर्भ्योभुत्तरस्याप्शब्दस्य ईप् इत्ययमादेशः स्यात्। अद्व। अद्वयान्तादन्यतो भिन्नात् प्रादेश्च परस्यापः ईप् इत्ययमादेशो भवति। द्वयोरिति विग्रहो दर्शितः। द्वीप इत्यादौ अप ईप इत्यादेशे कृतेऽपि 'एकदेशविकृतमनन्यवदि'ति न्यायात् 'ऋक्पथिपुरपः' इत्यनेन समासान्तारामः। एवमिति अन्तर्मध्ये गता आपो यस्मिन्निति अन्तरीपः। दुर्गता आपोऽस्मिन्निति दुरीपः। अनुगता आपो अस्मिन्निति अन्वीपः। तथा सु शोभना आपोऽस्मिन्नित्यादौ स्वीपः निरीपः परीप इत्यादयोऽपि। ननु यद्येवं स्वीप इत्यादिकं सिद्धं तर्हि सुवन्तपादे स्वप् स्वपी स्वाम्पीति कथमुक्तं भद्रम्। समासस्य बाहुल्यात् समासकार्यस्यापि बाहुल्यमस्माद्धेतोः स्वप् स्वपी स्वाम्पीत्यादावप ईपादेशो न स्यात्। एवं समासान्तरारामप्रत्ययस्यातित्यत्वात् सोऽपि न स्यात्। अद्वयान्तात्त्विति रूपं दर्श्यते इति शेषः। प्रापमिति प्रगता आपोऽत्रेति विग्रहे। परापमिति परा आपोऽत्रेति विग्रहे। एवं समागता आपोऽत्रेति समापमित्यादौ। सर्वत्रैव ऋक्-

२०४६ अनूपो देशे ।

साधुः । "जलप्रायमनूपं स्यात्" अमरकोषः (भूमिवर्गे) ॥ २०४६ ॥

इत्युत्तरपदादेशाः ।

अथ सुटा निपाताः

२०४७ । अपरस्पराः क्रियासातत्ये, गोष्पदं गोभिः सेविते गोपदप्रमाणे च, प्रतिष्कशो वार्तावह-पुरुषे सहाये

---

पथिपुरप इत्यनेनात्-प्रत्ययः अप्शब्दं प्रति क्रियानुगतत्वाभावात् अनकारान्तादुपसर्गादित्यत्र उपसर्गग्रहणं प्राद्युपलक्षणार्थम् । समापमिति समाङ्पूर्वस्याप्शब्दस्य रूपं संज्ञात्वमस्य लोकप्रसिद्धैव ज्ञेयम् । अत-एवाह समापं नाम देवयजनमिति । तस्मात् समापो नाम्नीति चान्द्रलक्षणमनर्थकमित्यन्ये ॥

२०४६ । अनु । देशे वाच्ये अनूप इति साधुः । अर्थात् देशे वाच्ये अनोरुत्तरस्य अप् इत्यस्य उप इत्यादेशः स्यादिति निर्गलितार्थः । स्वमतमुक्त्वा अर्थप्रदर्शनार्थममरमुत्थापयति, जलप्रायमिति—जलप्रायं जलप्राचुर्यमित्यर्थः । इत्येवमुत्तरपदानामादेशा दर्शिता ।।*।।

अथेति अथानन्तरं सुटा सह निपाता दर्श्यन्ते ॥

२०४७ । अप । सततस्य भावः सातत्यं नैरन्तर्यं क्रियायाः सातत्यम् अस्मिन्नर्थे सुटागमेन अपरस्परा इति निपात्यन्ते । अपरे च परे चेति राम-कृष्ण-समासवाक्ये परस्पराः साधवो वर्तन्ते । अपरे च परे च साधवो नित्यं वर्तन्ते इत्यर्थः । वर्तमानक्रियायाः सातत्यमत्राधीयते । क्रियासातत्यमिति किम् ? अपरपराः प्रार्थिनो गच्छन्ति अपरे च गच्छन्तीत्यर्थः । 'न कृष्णनामद्वन्द्वे जसि तु वे'त्यनेन विकल्पकृष्णनामत्वात् 'कृष्णनाम कृष्णतो जसः शिरि'ति पक्षे शिर्न स्यात् । गोष्प । गोकर्तृकसेविते गोबिन्दप्रमाणे च वाच्ये सुट्षत्वाभ्यां गोष्पदमिति निपात्यते । गोष्पदं राष्ट्रं गोभिः सेवितं पदमित्यर्थः । पदं व्यवसितित्राणेत्यनेन पदशब्दस्य स्थानवाचत्वात् राष्ट्रमिति विशेष्य-

पुरोयायिनि च, पारस्कर-प्रभृतीनि संज्ञायामिति, इत-

पदम् । गावोऽस्मिन् राष्ट्रे प्रपद्यन्ते इति निर्गलितार्थः । आ विद्यमानं गोष्पदमस्मिन्निति पीताम्बरवाक्ये अत्यन्तासम्भवेऽपि गोष्पदं सिध्यति । गोष्पदमात्रं कुण्डं गोपदप्रमाणमित्यर्थः । अतएव वृष्टिप्रमाणे उरामहरश्च वेति सूत्रेण गोष्पदप्रं वृष्टो देवो गोष्पदपुरं वेत्यत्र गोष्पदशब्देन वृष्टिप्रमाणमुच्यते । प्रति । वार्तावहपुरुषे दूतादौ सहाये सख्यादौ पुरोयायिनि अग्रगामिनि च वाच्ये सुट्षत्वाभ्यां सह प्रतिष्कश इति निपात्यते । प्रतिष्कशः वार्तावहपुरुषादिः । प्रतिपूर्व कश ताड़ने सौत्रस्तालव्यान्त इत्यसौ पचाद्यदन्तोऽत्र गृह्यते न तु कस गतिशातनयोरिति दन्त्यान्तो भ्वादिगणपठितः । वार्तावहपुरुषेत्यादिकम् । प्रतिगतः कशामिति 'अत्यादयो द्वितीयया' इत्यनेन प्रतिकशोऽश्वः इत्येव । 'अश्वादेस्ताड़नी कशाः' इत्यमरः । पारस्क । पारस्करः प्रभृतिरादिर्येषां तानि पारस्करप्रभृतीनि । इति हेतौ प्रकरणे प्रकारादिसमाप्तिष्वित्यनेन संज्ञायामित्यस्मिन्निति शब्दः प्रकारार्थे गृह्यते । संज्ञायां प्रकारे पारस्करप्रभृतीनि सुटा सह निपात्यन्ते । प्रकारो भेदः । पारं करोतीति वाक्ये । 'आद्यन्तानन्तबहुनान्दीलिपिलिविभक्तिबलिकर्तृचित्रक्षेत्रजङ्घावाहूरूरस्संख्यादिवादितदादिषु कर्मसु डुकृञष्टः ।' इत्यत्र सूत्रे दिवादीत्यादिपदग्रहणात् कृधातोः ट-प्रत्ययः पारस्करः कश्चित् । एवं मस्करो वेणावित्यपि सुटा निपात्यते । मस्करशब्दो जलजन्तुविशेषवाचकोऽपि सुट्निपातत्वेन वेणुं व्यक्ति । परिव्राजके वाच्ये मस्करीति सुड़िन्भ्यां निपात्यते । कश्चिदेवमाह—माङ्युपपदे करोतेः करणेऽल्प्रत्ययेन सह माङो ह्रस्वत्वं सुट्च निपात्यते मा क्रियते प्रसिद्धते येन स मस्करो वेणुः । वेणुग्रहणञ्च दिङ्मात्रप्रदर्शनार्थमन्यत्रापि भवति । मस्करो दण्डः परिव्राजके तथैव इन् निपात्यते । पारस्करप्रभृतीनीत्यत्र प्रभृत्युपादानात् शिष्टप्रयोगानुसारेणान्यानि कानिचित् दर्श्यन्ते । आश्चर्यमद्भुते वाच्ये इष्यते, आङ्पूर्वचरधातुरित्यस्य कृदन्तपादे 'आचर्यमगुरावि'त्यनेन यत्प्रत्ययान्तं निपातितमत्र पुनर्गुरोरन्यत्र

रेतरान्योन्यपरस्परा ब्रह्मैकवचनान्ताः कर्मव्यतीहारे।

सुटा निपात्यमिति भेदः। अद्भुते इति किम् ? आचर्यं कर्णशोभनमिति कश्चित्, स्थाने प्राप्तत्वे चास्पदमिष्यते। आङ्पूर्वात् पद गत्यावित्यस्मात् पचादेरत् निपातनात् सुट्। धन्याकेऽभिधेये कुस्तुम्बुरु चेतीष्यते। संज्ञाशब्दानां यथा कथञ्चित् व्युत्पत्तित्वात् कुत्सितश्चासौ तुम्बुरुश्चेति व्युत्पत्तिमात्रेण कुस्तुम्बुरुरिति सुटा निपात्यन्ते। कुस्तुम्बुरु च धन्याक इत्यमरोक्तात्। कस्तुम्बुरु इति धन्याकाख्यौषधिविशेषस्य वृक्षस्तत्फलमपि कुस्तुम्बुरु। यथा पिलुशब्दस्य वृक्षे पुरुषोत्तमत्वं फले तु ब्रह्मत्वं तथायमपि वृक्षे पुरुषोत्तमः फले ब्रह्म। यदा तु तुम्बरोः कुत्सा गम्यते तदा कुतुम्बुरुरिति भवति। प्रस्कण्वहरिश्चन्द्रौ च ऋषौ सुटा निपात्येते। प्रगतं कथं पापमस्येति प्रस्कण्वः। हरिरिव चन्द्रो हरिश्चन्द्र इत्यत्रापि संज्ञात्वात् यथाकथञ्चिद्व्युत्पत्तिः। ऋषाविति प्रगतं कथमस्मादिति प्रकथो देशः। हरिश्चन्द्रो मानवकः। प्रायश्चित्तं पापापनयने निपात्यते। प्राय इति तपःपुण्यं चित्तं निश्चयः पापमपनयति येन तत् प्रायश्चित्तमिति धातुपारायणम्। प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्चते। तपो निश्चयसंयुक्तं प्रायश्चित्तं विदुर्बुधाः॥' चित्तमिति चिती संज्ञाने भावे क्तः। वनस्पतिरिति महावृक्षे निपात्यते। वनस्य पतिरिति विग्रहे पत्यौ परे वनशब्दात् सुट् निपातनात्। रथास्येति नद्यां सुट्षत्वाभ्यां निपात्यम्। रथमायातीति 'कर्मण्यनुपेन्द्रादारामात् कः'-इति कप्रत्ययः। 'आरामहरः' इत्यनेनारामहरः। अतो लक्ष्म्यामाप्। परिमाणगुहयोः किष्कुकिष्किन्धे यथासंख्यं निपात्यते। किंशब्दः कुत्सायाम्। तस्मात् कौ पृथिव्यां सुट् किंशब्दस्य मरामहरः। षत्वञ्च निपातफलम्। किष्कुर्हस्तो वितस्तिर्वा। 'किष्कुर्हस्ते वितस्तौ चे'त्यमरः। किं किं दधातीति डु-धाञ-धारणपोषणयोरित्यस्मात् 'कर्मण्यनुपेन्द्रे'त्यनेन कः आरामहरः। तत-आप्-सुट्-महर-षत्व-निपातानि। 'विष्णुचक्रस्य हरिवेणुरिति परकिं विष्णुचक्रस्य हरिवेणुः। किष्किन्धा गुहा। शतात्

अन्योन्यं वैष्णवा न स्पर्धन्ते, किन्तु नमन्ति। अन्योन्येन वैष्णवैर्न स्पर्ध्यते, किन्तु नम्यते। अन्योन्यस्मै, अन्योन्यस्मात्,

---

परा इत्यादौ परःशता इत्यादयो निपाताः। इति पञ्चमीकृष्णपुरुषे ऽक्तम्। अतएव परस्शतं परस्सहस्रमित्यादयोऽप्यत्र ज्ञेयाः, किन्तु राजदन्तादित्वात् परशब्दस्य पूर्वनिपातः। परोलक्षं परःकोटीति च रूपरत्नाकर आह। अप्रत्यक्षे परोक्षमित्यपि निपात्यते। अक्षात् परमिति परोक्षं निपातात् सुट्। यत् परमाण्वादिकं प्रत्यक्षं न भवति, परोक्षशब्देन अभिधीयते। पञ्चमीकृष्णपुरुषः पूर्वनिपातश्च पूर्ववत्। अक्षि अक्षि परि परोक्षमिति। अव्ययं सप्तम्याद्यर्थेषु नित्यमित्यनेनाव्ययीभावे परेः परस्मात् अक्षिशब्दात् समासान्तष्टप्रत्ययः परे परश्च। एवम्भूतपरोक्षशब्दः समासपादसाधनीयः। तेन प्रत्यक्षमेवाक्ष्णो यन्न गृहीतं परोक्षशब्देन तदभिधीयतेऽयन्तु न तथाविध इति भेदः। तस्माद्यदर्थो यत्र गृहीतस्तस्मिन् तदार्थाभिधायक इति सर्वत्र। 'टिदागमः परसम्बन्धी'त्यनेन सुटः परभाक्तत्वेन सर्वत्र विष्णुसर्गाभावः। कदाचित्तु निपातत्वाद्विष्णुसर्गोऽपि, अतएव परोलक्षं परोक्षमित्यत्र अन्योन्यमित्यादौ वक्ष्यमाणे च विष्णुसर्गः। इतरेत। कर्मक्रिययोरेकपर्यायपाठत्वात् कर्मव्यतिहार इति पदेन क्रियाव्यतिहार इत्युच्यते। तेन क्रियाव्यतिहारे गम्यमाने इतरेतरानान्योन्यपरस्परास्त्रयो ब्रह्मलिङ्गस्यैकवचनान्ताः सुटा सह निपात्यन्ते। निपातत्वादेकशेषं विधाय पश्चाद्द्वित्वञ्चेति। कर्मव्यतिहारे सर्वनामद्विर्भवति समासवच्च। सर्वनाम इति सामान्याभिधानेऽपि त्रयाणां ग्रहणमित्यन्ये। परिशिष्टेषु कर्मव्यतिहाराभिधाशक्त्यसम्भवात् विपर्ययेण क्रियाप्रवर्तनं कर्मव्यतिहार इत्यप्याहुः। सप्तविभक्तिष्वेवामीषां द्विवचनबहुवचनयोरभाव इति वृद्धाः। अतएव शाकटायनेनोक्तं इमे परस्पादयः शब्दा कर्म्यव्यतिहारैकत्वविषया इति प्रथमाया अप्यभावमपरे वदन्तीति प्रदर्शनार्थं ग्रन्थकारोऽपि अन्योन्यं वैष्णवान् स्पर्धन्ते किन्तु नमन्तीत्यादावन्तर्भूतण्यर्थविवक्षया द्वितीयान्तादिकमेवोदाहरति स्म। किन्त्वत्र धातुद्वयस्याकर्मकत्वात्

अन्योन्यस्य, अन्योन्यस्मिन् वा साधवः। एवं परस्परम्, इतरेतरञ्च ॥ २०४७ ॥

२०४८। लक्ष्मीब्रह्मणोरमादीनामाम् वा।

---

प्रथमान्तमपि सम्भवतीति अन्योन्येन वैष्णवैरित्यत्र न स्पर्ध्यते नम्यते इत्यनयोर्भावप्रत्यययोऽकर्मकत्वात्। अन्योन्यम् अन्योन्येनेत्यत्रैकवचननियमादेकवचनम्। वैष्णवा वैष्णवैरित्यनयोर्विशेष्ययोनियमाभावाद्बहुवचनं, 'बहूनां विशेषणत्वेऽप्येकत्वमि'त्यनेन विशेष्यविशेषणभावः। ग्रन्थकारस्यैतदुदाहरणमवलम्ब परत्रापि विशेष्यस्य यथासम्भवं बहुवचनमिति। अन्योन्यस्मै। कर्मव्यतिहारे अन्योन्यस्मै इत्यादयश्चत्वारः ब्रह्मैकवचनान्ताः साधवो वा भवन्ति। अन्योन्यस्मै वैष्णवेभ्यो वैष्णवाः प्रसादं प्रयच्छन्ति। अन्योन्याभ्यां वैष्णवाभ्यां अन्योन्येभ्यो वैष्णवेभ्यो वा। अन्योन्यस्मात् वैष्णवेभ्यो वैष्णवाः प्रसादं गृह्णन्ति। अन्योन्याभ्यां वैष्णवाभ्यां अन्योन्येभ्यो वैष्णवेभ्यो वा। अन्योन्ययोर्वैष्णवयोः अन्योन्येषु वैष्णवेषु वैष्णवा इति वा। अन्योन्यतः पथि वताविभितामिभोष्ट्री। इति माघे ५।५। अन्योन्यस्य वैष्णवानां स्तवादिकं वैष्णवाः कुर्वन्ति। अन्योन्ययोः वैष्णवयोः अन्योन्येषां वैष्णवानां स्तवादिकं वा। अन्योन्यस्मिन् वैष्णवेषु वैष्णवाः शिष्यायन्ते। अन्योन्ययोर्वैष्णवयोः अन्योन्येषु वैष्णवेषु वैष्णवा इति वा। एवमित्यातिदेशे लक्षणम्। तस्मात् परस्परस्मै, परस्परस्मात्, परस्परस्य, परस्परस्मिन्निति। एवमितरेतरस्मै, इतरेतरस्मात्, इतरेतरस्य, इतरेतरस्मिन्निति च। परस्परस्मै वैष्णवेभ्यो वैष्णवाः प्रसादं प्रयच्छन्ति। परस्पराभ्यां वैष्णवाभ्यां परस्परेभ्यो वैष्णवेभ्यो वैष्णवा इति वा। इतरेतरस्मै वैष्णवेभ्यो वैष्णवाः प्रसादं प्रयच्छन्ति, इतरेतराभ्यां वैष्णवाभ्यां इतरेतरेभ्यो वैष्णवेभ्यो वैष्णवा इति वा। एवमन्योन्येऽप्युदाहरणानि पूर्ववत्। इतरेत्यत्र यद्यपि सुट् न निपातफलं किन्तु ब्रह्मैकवचनमेव तथापि तस्य कर्मव्यतिहारबोधकत्वेन निपातफलत्वमिति ॥

२०४८। लक्ष्मी। विशेषणत्वेन वर्तमानयोर्निपातसिद्धयोर्लक्ष्मी-

अन्योन्याम्, अन्योन्यं वा वैष्णव्यौ नमतः, वैष्णवकुले वा। एवमन्योन्यामन्योन्येन वेत्यादि। निपातोऽयं समासे सत्येव, तं विना तु द्वित्वमात्रम्—अन्यमन्यमिमे वैष्णवा नमन्तीत्यादि ॥ २०४८ ॥

२०४९। पृषोदरादयः।

निपातेन साधवः। पृषदुदरमस्य पृषोदरः, पृषद्वानित्यर्थः।

---

ब्रह्मणोरमादीनां स्थाने आम् वा स्यात्। अन्योन्यामन्योन्यं वेत्यत्र वैष्णव्योर्विशेषणत्वेन लक्ष्मीत्वं कुलयोर्विशेषणत्वेन ब्रह्मत्वमिति लक्ष्म्यां ब्रह्मणि च आम् विकल्पः। वैष्णवकुले इत्यस्यापि नमत इत्यनेनान्वयः। द्वितीयायामत्राम्। यदा आम् न स्यात्, तदा प्रधानार्थद्वा समास इति विकल्पेन तुक् इत्यन्ये। तन्मते अन्योन्यत् वैष्णव्यौ नमत इत्यपि, किन्तु यः स्वमोस्तुकं नेच्छति तन्मते अन्योन्यमिति तैरेवोक्तमिति च। एवमन्योन्यामन्योन्येनेत्यत्र न स्पर्द्धते किन्तु नम्यते इति शेषः। इत्यादीत्यादिपदेन अन्योन्यामन्योन्यस्मै अन्योन्यामन्योन्यस्मादित्यादयोऽपि। स्त्रियामपि पुम्वदित्येक इति तन्मतेऽन्योन्यं पुत्रानिमे ब्राह्मण्यौ भोजयतः। पक्षेऽन्योन्यस्य पुत्रानिति वा। निपातोऽयमिति। समासे सत्येवायं निपातः तं समासं विना तु द्वित्वमात्रमिति यदुक्तं तत्तु आभीक्ष्ण्यवीप्सयोरित्यनेन। किन्त्वधिकारसूत्रात् सर्वस्येत्यनुवर्तनात् कुचिन्नाम्नां कुचित् पदानामपीति पूर्वत्र अन्योन्येभ्य इत्यादावेकशेषादनन्तरं नाम्नो द्वित्वमुक्तमित्यादीनान्तु पदस्याप्याह—अन्यमन्यमिम इति ॥

२०४९। पृषो। पृषोदर आदिर्येषां ते पृषोदरादयः। एते वक्ष्यमाणाः पृषोदरादयः यथेष्टं निपातेन साधवो भवन्ति। अयं योगस्तु यथासम्भवं संज्ञायामसंज्ञायाञ्च। यद्यत् सूत्रेणानुत्पन्नं तत्सर्वं निपातनात् साधु इति पाणिनीयैरप्युक्तम्। पृषदुदरमित्यनेन विग्रहोदाहरणे स्वयमेव दर्शिते। पृषोदर इत्यत्र पृषच्छब्दस्य तरामहरो निपातफलम्। पृषत् विपुलम्। पृषद्वानिति यदुक्तं तत्तु पीताम्बरे-

मह्यां रौति मयूरः; व्रुवन्तः सीदन्त्यस्यां वृषी; मनस ईषा मनीषा; पतन्नञ्जलिर्यस्य पतञ्जलिः; संराजते सम्राट्; तत् करोति तस्करश्चौरे; वृहतां पतिर्वृहस्पतिर्देवगुरौ; वारिवाहो वलाहकः; पूर्यते गलति च पुद्गलः; रतेस्तननमस्मात् रत्नम्; वाहितं पापमनेन ब्राह्मणः; कौ जीर्यति कुञ्जरः; हिनस्ति

---

णैव प्रतीयते। मह्यां रौतीति विग्रहे रु शब्दे इत्यस्मात् प्रत्ययेन सह ऊरः मह्याः मयच् निपातफलम्। संज्ञात्वमत्र गम्यते नहि यो यो मह्यां रौति सोऽभिधीयते। मयूरः शिखी। व्रुवन्तः सन्तः सीदन्त्यस्यामिति निपातनात् व्रुवः वृ सदेरीप्प्रत्ययान्तषीति वृषी। 'व्रतिनामासनं वृषी'त्यमरः। मनस ईषा इति वाक्ये 'विष्णुनिष्ठा-सेट्क-गुरुमद्'ित्यनेन ईषधातोर्ङाप् मनसोऽस्हरो निपातफलम्। मनीषा वुद्धिः। पतन्नञ्जलिर्यस्येति विग्रहे पतच्छब्दस्याद्धागहरो निपात-फलम्। पतञ्जलिमुनिः। संराजते इति राजृ दीप्तावित्यस्मात् क्विप् निपातात् संशब्दस्य विष्णुचक्रस्य मः। सम्राट् राजा। तत् चौर्यं करोतीति कृधातोष्टः तच्छब्दस्य तरामस्य स निपातफलम्। वृहतां देवानां पतिर्ज्ञानोपदेशेन पालक इति वृहस्पतिर्देवगुरुः। वृहत्तरामस्य स निपातत्वात्। वृहच्छब्देन महदुच्यते। नहि देवेभ्योऽन्ये महान्तः सन्ति वृहच्छब्देनात्र देवाः प्रतीयन्ते। 'वृहस्पतिः सुराचार्यो गीष्प-तिरि'त्यमरः। वारि वहतीति वह प्रापणे इत्यस्मात् 'कर्मण्यणि'त्य-नेनाण् प्रत्ययान्तः वारिवाहः। मेघवाच्योऽत्र निपातफलं नान्यत्। यतोऽन्यस्मिन् घटादौ वारिवाहके सत्यपि ग्रन्थकृता वलाहक इत्युक्तम्। पूर्यते गलति चेति पुद्गलो देहः। पुरी आप्यायने इत्यस्य पुद् क्षरणार्थस्य गलधातोररामान्तगलश्च निपालफलम्। रतेः रागस्य तननं विस्तार इति रत्नं मणिः। निपातनादत्र रतेस्तिहरस्तन-धातोस्तञ्चेति। वाहितं पापमनेनेति ण्यन्तवहधातोः 'टनः करणा-धिकरणयोरि'ति टनः वारामे ररागमो हरामे मरामागमश्च निपात-फलम्। कौ पृथिव्यां जीर्यतीति जृष वयोहानौ इत्यस्य क्विवन्तस्या-

सिंहः ; केन जलेन उभ्यते पूर्यते कुम्भः ; आगच्छन्त्यत्र अङ्गनम् ; प्राङ्गणन्तु मूर्धन्यान्तम् ; जीवतीति जीमूतः ; शवानां शयनं श्मशानम् ; षट् दन्ता अस्य षोड्तृ—षोड्न्, षोड्न्तौ । तृतीयं पिष्टपं त्रिपिष्टपम् ; द्विगुणा त्रिगुणा वेदिः—द्विस्तावा त्रिस्तावा ; वेदितोऽन्यत्र—द्विस्तावती रज्जुः । गवामिन्द्रो गोविन्दः ; केशिनं

---

रामान्तजरादेशस्तस्मिन् परे कुशब्दात् जरामागमश्च निपातफलम् । कुञ्जरो हस्ती । हिनस्तीति हिसि हिंसायामित्यस्मात् पचादेरत् । इरामेद्धातोर्नुमिति नुम् निपातसामर्थ्यात् वर्णविपर्ययेण इरामस्य सरामो हरामश्च । सिंहो मृगेन्द्रः । केनेत्यन्न उभ्यते इति उम्भ पूरणे इत्यस्मात् करणे घण् उम्भस्तस्मिन् परे निपातात् कस्याराम-हरः । कुम्भः कलसः । जना आगच्छन्त्यत्रेति वाक्ये अधिकरणे आङ्-पूर्वाद्गमेर्घण् गमो मस्य नः आरामस्य वामनः तस्मात् मुम् च निपातफलम् । अङ्गनं प्रसिद्धम् । मूर्धन्यान्तमिति प्रनिमित्तेन यथा-सम्भवव्यवधानात् णत्वम् । जीवतीति वाक्ये जीव बलप्राणधारणयो-रित्यस्मात् कर्तरि क्तः, तस्मिन् परे इड्भावो वस्य मूच् निपात-फलम् । जीवधातुरत्रान्तर्भूतण्यर्थः । तेन जीवयति जनान् जलदाने-नेति जीमूतो मेघः । शवानां शयनमिति विग्रहे शवशब्दस्य श्म शयनशब्दस्य शानञ्च निपातफलम् । शयनशब्दस्याधिकरणटणान्तत्वेन तदादेशस्याप्यधिकरणवाचित्वं श्मशानम् । शवानां शयनस्थानमित्यर्थः । षट् दन्ता अस्येति विग्रहे षट्शब्दस्य षोड् दन्तशब्दस्यातृ च निपात-त्वात् । षोड्निति । अचश्चतुर्भुजानुबन्धानाञ्चेत्यनेन नुम् सत्सञ्ज्ञान्तस्य हरः इति सत्सञ्ज्ञान्तहरः । शतुरपि अतृभागावशिष्टत्वात् तत्सदृशरूप-प्रदर्शनार्थं षोड्न्ताविति द्विवचनान्तमुपन्यस्तम् । तृतीयं पिष्टपं पिठकाकारमिति विग्रहे निपातनात् तृतीयस्य त्रिभावः । त्रिपिष्टपं सर्गः । द्विगुणा वेदिरिति वाक्ये द्विपूर्वायास्तावत्याः समासान्तारामः तावत्याः तीहरः द्विशब्दात् सुट् च निपातफलम् । 'उक्तार्थानाम-प्रयोगः' इति न्यायेन गुणशब्दस्याप्रयोगः । वेद्या विशेषणत्वेन अजादि-त्वाल्लक्ष्म्यामाप् द्विस्तावा वेदिरित्यर्थः । त्रिस्तावेति । त्रिगुणा वेदि-

हतवान् केशवः; अक्षस्य अधो जात इव अधोक्षजः; मन्दमभियाति, मुक्तिं ददातीति वा मुकुन्दः। आकृतिगणोऽयम्। अत्र चाहुः—

**वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।**

**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥२०४६॥**

इति समासकार्याणि।

रिति वाक्ये समासान्तारामादिकं पूर्ववत्। द्विस्तावतीति द्वितावतीशब्दान्न समासान्तरामो वेदिवाच्यताभावात् समासान्तविधेरनित्यत्वाच्च, किन्तु द्विशब्दात् प्रकारार्थे सुट् भवत्येव। गवामिन्द्रमिति विग्रहे निपातनात् गोशब्दात् ररामागम इन्द्रस्य ररामहरश्च। स्वर्गेषुपशुवागित्यनेन गोशब्दस्य नानार्थत्वात् गोविन्दशब्देन स्वर्गादीनामीश्वरः कृष्ण उच्यते। केशिनं केशिनामानं दैत्यं हतवानिति केशिनः केशः, हतवानित्यस्य वश्च निपातः, द्वौ मिलित्वा केशव इति श्रीकृष्णमभिधत्ते। अक्षस्य रथावयवस्याधो जात इव न तु जात इति विग्रहे अधःशब्दस्याव्ययत्वादधिकरणे जनेरच् इत्यनेन प्रथमतो जरूपं निष्पाद्य पश्चान्निपातसामर्थ्यादधःशब्दस्य पूर्वनिपातः, अक्षेण सह जयोगश्चेति अधोक्षजः प्रसिद्धः। अधःकृतमधक्षजमिन्द्रियजं ज्ञानं येनेति मध्यपदलोपिपीताम्बरेणाप्यत्र सिद्धो योऽधोक्षजशब्दः सोऽपीमं वक्तीति। मन्दमभिजाति मुक्तिं ददातीति वा विग्रहे मुकुन्दः। पूर्वत्र मन्दस्य मकुरभियातेर्नरामयुक्तारामान्त-दश्च निपातफलम्। परत्र मुक्तेर्मुकुर्ददातेस्तु कप्रत्ययान्त-दस्तत्पूर्वं मुम् च निपातफलमिति। आकृतीति। आकृत्या सादृश्या गण्यतेऽसौ आकृतिगणः। अस्याकृतिगणत्वात् शिष्टप्रयोगानुसारेण ऊह्यान्युदाहरणान्तराणि तेषां विवरणेन किमिति। अत्रेति। अत्र आकृतिगणे चाहुः प्राचीना इति शेषः। वर्णागम इति। तत् निपातनं पञ्चविधं पञ्चप्रकारं निरुक्तं निरूपणम् उच्यते, वृद्धैरिति शेषः। सामान्यत उक्त्वा विशेषमाह—वर्णेति। कश्चिन्निपातो वर्णागमः कश्चित् वर्णविपर्ययश्च वर्णविकारनाशौ अपरौ च द्वौ निपातौ तदर्थातिशयेन धात्वर्थातिशयेन धातोर्योगश्चापरो निपात इत्यर्थः।

अथ द्विरुक्तिप्रकरणम्

२०५०। सर्वस्य द्विरुक्तिः।

प्रभुरयम् ॥ २०५० ॥

वर्णानां मध्ये पोषकत्वेन वर्णानामागमनं वर्णागमः यथावत् स्थितानां वर्णानां व्यतिक्रमेण न्यासो वर्णविपर्ययः। वर्णानां स्वरूपादन्यथाभावो वर्णविकारः। वर्णानामदर्शनं वर्णनाशः। धातूनामनेकार्थत्वात् तेषु नानार्थेषु केनचित् तदर्थातिशयेन धातोर्योगः धात्वर्थेनान्वय इत्यर्थः। एवं पञ्चविधानां मध्ये कुचिन्निपाते एकविधत्वं कुचिद्द्विविधत्वं कुचित्त्रिविधत्वादिकमिति न नियमः। तत्र पृषोदर इत्यत्र पृषच्छब्दे तरामहरेण वर्णनाशः। मयूर इत्यत्र वर्णविकारः पूर्वं दर्शितः। सिंह इत्यत्र वर्णविपर्ययः। ब्राह्मण इत्यत्र वर्णागमः। अङ्गमित्यत्र गमधातोर्गत्यर्थत्वेऽपि आङ्पूर्वत्वेनागमनार्थत्वात् तदर्थातिशयेन योगः। एवमन्येषु यथायोग्यमनुसन्धेयमिति। उक्तञ्च वृद्धैः–वर्णागमो गवेशादौ, सिंहे वर्णविपर्ययः। षोड़शादौ विकारः स्यात्, वर्णनाशः पृषोदरे ॥ वर्णविकारनाशाभ्यां धातोरतिशयेन यः। योगः स कथ्यते प्राज्ञैर्मयूरजीमूतादिषु ॥ इति समासकार्याणि दर्शितानि ॥

अथेति। इति समासेत्यनेन समासकार्यसमापनात्। अथ द्विरुक्तिप्रकरणमिति। द्विरुक्तिप्रकरणे समासादिकं नापेक्षणीयमिति लभ्यते, अतएव ग्रन्थकारः परत्र ग्रन्थे एकस्य पीताम्बरवत्वञ्चेत्यत्र श्यामरामवदुत्तरेष्विवत्यत्र चातिदेशं स्वीकरिष्यति अन्यथादेशेन किम् ॥

२०५०। सर्वं। अधिकारोऽयम्। यथायोगं सर्वस्य द्विरुक्तिः स्यात्। सर्वस्येत्यनेन धातूनां धातुविष्णुपदानां नामविष्णुपदानाञ्च ग्रहणम्। तत्र धातूनां यङ्यङ्लुग्विषययोरेव नान्यत्र तत्रैव पौनःपुन्यश्रवणात्, यद्यपि तत्र यङि परे यङ्लुग्विषये द्विरुक्तिस्तथाप्याभीक्ष्ण्यापेक्षयैव अत उक्तार्थानामप्रयोग इत्यनेन यङ्यङ्लुक्सिद्धानां पुनर्न द्विरुक्तिरिति कारकपादे प्रकारान्तरेण ग्रन्थकृतोक्तञ्चेति ॥

२०५१। आभीक्ष्ण्यवीप्सयोः।

भजति भजति; नत्वा नत्वा स्तौति, नामं नामं वा। वीप्सायाम्—गृहे गृहे वैष्णवाः; वैष्णवो वैष्णवो रमणीयः। इह

---

२०५१। आभी। अभीक्ष्णस्य निरन्तरस्य भाव आभीक्ष्ण्यम्। व्याप्तुमिच्छा वीप्सा। आभीक्ष्ण्यवीप्सयोरर्थयोः सर्वस्य द्विरुक्तिर्भवति। अत्राभीक्ष्ण्ये प्रथमं दर्शयति भजतीत्यादिना। आभीक्ष्ण्यं पौनःपुन्यं तच्च साध्यस्वरूपायाः क्रियायाः सम्भवतीति तस्या एव धर्मः। न तु सिद्धरूपयोः क्रियाद्रव्ययोः सिद्धरूपक्रियायाः भावघणाद्यभिहितत्वात् सिद्धरूपद्रव्यस्य तु सुबन्तैरभिधानात्। सा च क्रियातिवादिना कृता च प्रायेणाभिधीयते। यां क्रियां प्रधानभूतां नैरन्तर्येण कर्ता भूयोभूयः करोति तस्यामाभिक्ष्ण्यं काप्यविच्छेदप्रधानं नैरन्तर्यं यथा पुनः पुनर्भजतीति, भजति भजति। कुत्राप्यन्यक्षणान्तरिते गौणम्। नैरन्तर्यं यथा पुनः पुनः नत्वा स्तौतीति नत्वा नत्वा स्तौतीति नामं नामं स्तौतीति वा। 'क्त्वार्थे णमुश्चाभीक्ष्ण्ये' इत्यनेन क्त्वा णमुश्चेति। स्तवलक्षणेन पुनः पुनर्नमनमन्तरितमतोऽत्र गौणं नैरन्तर्यम् एतदिति दिङ्मात्रं यथासम्भवमन्यदप्यह्यम्। ननु यद्येवं तर्हि कथं गृहप्रवेशमास्ते इत्यत्र द्रव्यस्य व्याप्तौ हरिनामग्राहीत्यत्राभीक्ष्ण्ये च द्विरुक्तिर्न स्यात्। समासेनैव तत्तदुक्तत्वादिति। यदा तु समासो न स्यात्, तदा यथासम्भवं द्विरुक्तिः स्यादेव, तत्तु ग्रन्थकृता कृदन्तपादे स्वयमेवोक्तमिति। तद्यथा—गृहं गृहं प्रवेशमास्ते हरिरिति। वीप्सायामिति रूपं दर्श्यते इति शेषः। वीप्सा युगपत् सजातीयानां व्याप्तिरिति यदुक्तम्। तच्चेतरेतरयोगमाप्तानां पृथक्संख्यायुक्तानां सकलानां सिद्धरूपाणां पदार्थानां द्रव्येण गुणेन क्रियया युगपद्व्याप्त्याभिधानमिति शेषः प्रतिपत्त्या गृह्यते। द्रव्यगुणक्रियाभिः पदार्थान् व्याप्तुमिच्छेति निर्गलितोऽर्थः। गृहे गृहे वैष्णवा इत्यत्रान्योन्ययोगमप्राप्ताः पृथक्संख्यायुक्ताः सर्वे एव गृहाः सिद्धरूपाः वैष्णवैर्द्रव्यैर्युगपद्व्याप्त्याभिहिता इति वीप्सायां द्विरुक्तिः। वैष्णवो वैष्णवो रमणीय इत्यत्र पूर्ववत्

सत्तमं सत्तममानयेति जातप्रकर्षस्य द्विरुक्तिरिष्यते। किञ्च आख्यातस्य द्विरुक्तिरेव प्राक्, ततः प्रकर्षार्थस्तद्धितः; भजति भजतितराम्। क्वचिद्वृत्तावुक्तार्थाद्द्विरुक्तिर्निवर्तते। द्वौ द्वौ पादौ ददाति—द्विपदिकां ददाति; द्विपदिकां देहि; द्वौ द्वौ देहि—

---

सर्वे वैष्णवा रमणीयगुणेन युगपद्व्याप्ताभिहिता इति द्विरुक्तिः। इह सत्तममित्यत्र जातप्रकर्षस्य इति यदुक्तम्। तत्त्वेवमनुसन्धेयम्। जातः प्रकर्षो यस्य स जातप्रकर्षस्तस्य। अयं सन् अयं सन् अयं सन्नित्येषां मध्ये अतिशयेनायं सन्निति वाक्ये बहूनां मध्ये एकस्यातिशयत्वेन निर्धारणे तमस्तेन सच्छब्दस्य प्रकर्ष उच्यते। इति प्रकर्षस्य सत्तमस्य पश्चाद्द्विरुक्तिः। इह सत्तमं सत्तममानयेत्यत्र सर्वे जातप्रकर्षाः सत्तमा आनयनक्रियया युगपद्व्याप्त्या कथिताः। किञ्च, अत्र गृहे गायति, अत्र गृहे गायतीत्यत्र क्रमेण वीप्साभिधानं, न तु युगपदिति न द्विरुक्तिः। अत्र वने तुलसीधात्र्यश्वत्था रम्याः। अत्र वनेऽश्वत्था रम्या इत्यादावन्योन्ययोगं प्राप्तानां तुलस्यादीनामेव रामकृष्णे रामकृष्णैकशेषे चाभिधानं, किन्तु कतिपयानां तुलस्यादीनां रम्यत्वेऽयं प्रयोगः क्रियते न तु सकलानामिति वीप्साभावात् द्विरुक्तिर्न स्यात्। यदा तु कृतैकशेषाणां बहूनामश्वत्थानामेव साकल्यं विवक्ष्यते, तदा द्विरुक्तिर्भवेदेव। यथा अश्वत्था अश्वत्थाः कमनीया इति। यदा एकस्मिन्नेव गृहे भुक्तम् एकवारं पीतं तदाभीक्ष्ण्यवीप्सयोरभावात् द्विर्न स्यादिति। यदा गृहद्वये गीतं वारद्वयं भुक्तं, तदा गृहे गृहे इति भुक्तं भुक्तमिति च यावदर्थं शब्दप्रयोगात् सिध्येत्। बहुत्वविषये आभीक्ष्ण्ये वीप्सायाञ्च द्विरुक्तिरेव भवति न तु पदोक्तिरिति नियमाय सूत्रम्। अतएव जातेरेकत्वाज्जातिशब्दानां न द्विरुक्तिर्गौः व्रीहिरित्यादौ। ननु यदि बहव एव पदार्था द्वाभ्यां पदाभ्यामभिधीयते, तदा एकद्विबहुत्वेष्वेकद्विबहुवचनानीत्यनेन बहुत्वाद्बहुवचनं प्राप्नोति, कथं गृहे गृहे इत्यादावेकवचनान्तमुदाहार्यम्? नैददस्ति। एकवचनान्तेन पदेन द्विरुक्ते नहि बहवोऽर्था अभिधीयन्ते तस्मिन् बहुत्वविष्णुभक्त्यन्तत्वेन बहुवचनप्राप्तिरिति स्ववचो व्याहतमिदं कुचोद्यं परिहृतमिति।

द्विशो देहि। सप्त सप्त पर्णान्यस्य—सप्तपर्णः ; कुलं कुलमटति —कुलटा। क्वचिदुक्तार्थस्यापि प्रयोगः—एकैकशो देहि ॥२०५१॥

२०५२। परेर्वर्जने वा, न तु समासे।

परि परि माथुरेभ्यः, परि माथुरेभ्यः। नेह—परित्रिगर्तम् ॥ २०५२॥

---

किन्स्विति। अपरं वक्ष्यते इत्यर्थः। प्रकर्षार्थतद्धितात् प्राक् पूर्वमेवाख्यातस्याख्यातान्तस्य द्विरुक्तिर्भवेत्। ततः कृतद्विरुक्तेः प्रकर्षार्थस्तद्धितो भवेत्। तत्प्रकारो यथा—अयं भजति अयं भजतीत्यनयोर्मध्येऽयमतिशयेन पुनः पुनर्भजति भजतितरामित्यत्र आख्यातात् तरां तमाञ्च वक्ष्यते। क्वचिदिति क्वचिद्वृत्तौ वर्तमानविशेषे 'उक्तार्थानामप्रयोगः' इति न्यायेनोक्तार्थत्वात् द्विरुक्तिर्निवर्तते, द्विरुक्तिनिवृत्तिर्भवतीत्यर्थः। यथा—द्वौ पादौ करविशेषौ ददातीति वाक्ये द्विपदिकां ददातीति। प्राच्यकरनाम्निः द्विशब्दस्य पादशब्दस्य च तद्धितार्थे समासं कृत्वा इत्यनेनाकप्रत्ययः, पादस्य पदादेशो लक्ष्मीत्वात्तस्मादाप् इति तद्धिते वक्ष्यते। संख्यादेराभीक्ष्ण्ये एव द्वौ द्वौ पादौ देहीत्यर्थे द्विशो देहीत्यत्र वारार्थे शस् वक्ष्यते। अत्रोदाहरणत्रयेषु क्रियाया युगपद्व्याप्तिरभिहिता सा तु अक्शस्भ्यामुक्तार्था। सप्तेति। पर्णानि पत्राणि। सप्तपर्णो वृक्षविशेषः। कुलटा रूढ्या भिक्षुक्यसतीति पूर्वमुक्तम्। अत्रोदाहरणद्वये या वीप्साभिहिता सा समासेनैवोक्तार्थेति पूर्वस्मिन्नत्रापि न द्विरुक्तिः। शिष्टाचारात् क्वचिद्वृत्तावुक्तार्थस्यापि प्रयोग इत्याह—क्वचिदिति। एकमेकं प्रकारं देहीत्यर्थे एकैकशो देहीत्यत्र शस्प्रत्ययेन वीप्साया उक्तत्वेऽपि द्विरुक्तिः ॥

२०५२। परे। वर्जनार्थे वर्तमानस्य परेर्द्विरुक्तिर्वा स्यात्। समासे सति न तु स्यात्। उदाहरणद्वयं स्पष्टम्। माथुरान् वर्जयित्वा इत्यर्थः। 'अपपरियुक्तात् पञ्चमीत्यनेनात्र पञ्चमी। नेहेति समासादिति शेषः। त्रयाणां गर्तानां समाहारः त्रिगर्तम्। तद्वर्जयित्वा परिगर्तमित्यत्र 'अपपरिवहिरञ्चन्ताः पञ्चम्या' इत्यनेन समासस्तेन वर्जनार्थोक्तत्वात् न

२०५३। उपर्यध्यधसां सामीप्ये।

उपर्युपरि, अध्यधि, अधोऽधो गोवर्धनम्। सामीप्ये किम्? सर्वस्योपरि कृष्णः॥ २०५३॥

२०५४। वाक्यादेरामन्त्रितस्यासूया-सम्मति-कोप-कुत्सन-भर्त्सनेषु।

तत्रासूयायाम्—वैष्णव वैष्णव वृथा ध्यायसि। सम्मतौ—वैष्णव वैष्णव शोभतां खल्वपि। एवं कोपादौ॥ २०५४॥

---

द्विरुक्तिरिति। अवर्जनार्थे तु गङ्गां परिवसति यमुनां परिवसतीत्यत्र 'लक्षणवीप्सेत्थम्भूते'त्यनेन कृष्णप्रवचनीयैर्योगे द्वितीयेति॥

२०५३। उप। सामीप्ये विवक्षितेऽर्थे वर्तमानानामुपर्यध्यधसां द्विरुक्तिर्भवति। सामीप्यं प्रत्यासन्नं तच्च देशकृतं कालकृतं वा गृह्यते। उपर्युपर्यादित्रयाणां गोवर्धनेनान्वयः। अभित आदिभिर्योगे द्वितीयेत्यनेनात्र द्वितीया। गोवर्धनस्य सामीप्ये मानसगङ्गादयो वर्तन्त इत्यर्थः। अत्र देशकृतं सामीप्यमिति। उपर्युपरि दुःखमिति कालकृतं सामीप्यमूह्यम्। सामीप्ये किम्? किमर्थं यर्हि न स्यात् तर्हि न स्यात्। सर्वस्योपरि कृष्ण इति सर्वस्य मूर्ध्नि कृष्णो वर्तते इत्यर्थः॥

२०५४। वाक्यादे। असूयासम्मतिकोपकुत्सनभर्त्सनेषु गम्यमानेषु वाक्यादेर्वाक्यादिस्थितस्यामन्त्रितपदस्य द्विरुक्तिर्भवति। यस्मिन् वाक्ये प्रयुज्यमाने असूयादिर्गम्यते तद्वाक्यादिस्थितस्य सम्बोधनस्येत्यर्थाद्गम्यते। अत्रासूयायामिति परस्य गुणोत्कर्षासहनी दृष्टिरसूया तस्यां रूपं दर्शयत इत्यर्थः। हे वैष्णव त्वं वृथा ध्यायसि स्मरसीत्यर्थः। अत्र कोऽपि कं प्रति गुणोत्कर्षमसहमानो वक्तीत्यसूया गम्यतेऽतोऽत्र वाक्यादिस्थस्य वैष्णवस्य द्विरुक्तिः। सम्मतावुदाह्रीयते इत्याह—सम्मताविति। परगुणाविष्करणं सम्मतिः तस्याम्। शोभतां खल्वपीति हे वैष्णव खल्वपि भवान् शोभतां शोभमानो भवेति निर्गलितोऽर्थः। अत्र कोऽपि कस्य गुणाविर्भावं करोतीति सम्मतिरतोऽत्र सम्बोधनपदस्य द्विर्वचनम्।

२०५५। एकस्य पीताम्बरवत्त्वञ्च।

ततः सुप्लोपः पुम्वच्च ; एकैकशः।

"एकैकशो विनिघ्नन्ति विषया विषसन्निभाः।"

एकैकमक्षरं जयति ( जपति वा )। एकैकयाहुत्या जुहोति ॥ २०५५ ॥

---

वैष्णव वैष्णवेत्यत्र वैष्णव वैष्णवशोभनं खल्वसीति पाठः क्वचित् पुस्तके दृश्यते सोऽपि साधुः प्रत्युत स्पष्टश्च। एवं कोपादाविति कोपादावेवमूह्यमिति। तद्यथा—कोपः परोपद्रवासहनं क्रोध इत्यर्थः। काशीराज काशीराज क्षणमाहवे स्थिरो भव मापसर। काशीराजं प्रति द्वारकावासिश्रीकृष्णस्य क्रोधोक्तिरियमिति द्विरुक्तिः। कुत्सनं निन्दा। केशि केशि कु गतन्ते पादघातशौटीर्यम्। दुःशासन दुःशासन कु ते द्रौपदीकेशवसनाकर्षणेन शौटीरमिति केचित्। भर्त्सनं कोप-कुत्सनाभ्यां कदुत्तरमुत्पादनम्। रे रे वकासुरा ( प्लुतस्वरः ) बकासुर क्षणं तिष्ठ त्वां हनिष्यामीति आम्रेडितस्य संसारः भर्त्सने पर्याये-णेत्यनेनात्र महापुरुषः ॥

२०५५। एक। एकशब्दस्य द्विरुक्तिः पीताम्बरत्वञ्च भवति। अत्र पीताम्बरत्वस्वीकारेण प्रायः समानाधिकरणानामेव पीताम्बर इत्युक्त-दिशा समानाधिकरणत्वं सूचितम्। ततो हेतोः सुप्लोपः स्त्रीत्वञ्चेत् पुम्वच्च। सुप्पदेनात्र प्रत्याहारो गृह्यते तेन स्वादिहरः। लक्ष्म्या पुरुषोत्तमवच्चेत्यर्थः। एक एकः प्रकार एकैकश इति। स्वमतपरिपोषाय परपद्यमुत्थापयति—एकैकश इति। भक्तिपथे प्रवर्तमानजनानां विषसन्निभा बिषसदृशा विषया एकैकशः एकैकप्रकारा विनिघ्नन्ति नश्यन्तीत्यर्थः। अत्रैकशःशब्दस्य शस्प्रत्ययेनोक्तार्थस्य च क्वचिदुक्तार्थस्यापीत्यनेन वीप्सया द्विरुक्तिरिति एकैकश इति दर्शितम्। हन हिंसागत्योरिति धातू-नामनेकार्थत्वात् विभिपूर्वस्य हनो नाशार्थत्वेनाकर्मकत्वात् विनिघ्नन्ती-त्यस्याकर्मकत्वविबक्षया विषया इति कर्तृपदं तद्विशेषणस्य पुरुषोत्तमत्वे पुम्बत्त्वस्य फलमत्र नास्ति, तत्फलन्तु परत्रेति। एकैकमिति वेदस्यै-

२०५६। पीड़ायाञ्च तद्वत्।

गतगता, नष्टनष्टा ॥ २०५६ ॥

२०५७। श्यामरामवदुत्तरेषु।

प्रभुरयम् ॥ २०५७ ॥

२०५८। सादृश्ये गुणस्य क्रियायाश्च।

---

कैकमक्षरं जयति सर्वोत्कर्षेण वर्तता वेदाक्षरस्य तथैव सामर्थ्यात्। जयतीत्यत्र जपतीति पाठे, एकैकमक्षरमिति कर्मपदं वेदस्यैकाक्षर-जपस्यापि महाफलकत्वमित्येव जपतीति। एकैकयेति। प्रथमतो द्वित्वं ततः स्वादिहरः पूर्वस्य पुम्वञ्च ततस्तृतीया एकैकया आहुत्या देवान् जुहोतीत्यर्थः। आहुत्या विशेषणत्वेनात्र पुम्वत्। फलं स्पष्टम् ॥

२०५६। पीड़ा। पीड़ा गुणविशेषः सा चात्र प्रयोक्तृसम्बन्धा तस्मात् प्रयोक्तुः पीड़ायां गम्यमानायां तद्वत् पीड़ाबोधकस्य पदस्य द्विरुक्तिर्भवति। पीताम्बरत्वञ्चेति ततः सुप्लोपः पुम्वञ्च। गत-गतेत्यनेन पीड़ा गम्यते तया च मरणं लक्ष्यते। तेन गमनक्रियया पीड्यमानो मरणाभावेऽप्येवमाह। नष्टनष्टेत्यस्याप्येवमेवार्थः तस्मात् अदर्शनक्रियया पीड्यमानो मरणभावोऽप्येवमाह—किन्तु पीड़ाबोधकत्वेन पीड़ाया विशेषणत्वात् लक्ष्मीतेति। ननु यद्येवं पीड़ायां गम्यायां द्विः स्यात् तदा, हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन् वेतसगूढ़ं प्रभवं सः। शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं, तापादन्तः-शल्य इवासीत् क्षितिपोऽपि। इत्यत्र पीड़ाबोधकस्य कथं न द्विरुक्ति-रिति चेत्तदैवं वाच्यं हाशब्देनैव पीड़ाया उक्तत्वादिति ॥

२०५७। श्याम। उत्तरेषु वक्ष्यमाणेषु द्विरुक्तिप्रयोगेषु श्याम-रामवत् कार्यं भवति ॥

२०५८। सादृ। गुणस्येत्यनेन गुणवाचको गुणयुक्तश्चोच्यते।

पटुपटुः, पटुतोऽन्यूनगुण इत्यर्थः; एवं मन्दमन्दमभियाति मुकुन्दः; पटुपट्वी; पण्डितपण्डिता। श्यामरामवत्त्वान्निषेधविषयेऽपि पुम्वत्—कालककालिका। इदञ्च द्विर्वचनं गुणविशिष्टद्रव्यवृत्तेर्गुणमात्रवृत्तेश्चेष्यते—श्यामश्यामोऽयम्, श्यामः श्यामोऽस्य वर्णः। क्रियाया यथा—"भ्रमरैर्भीतभीतेन गोपीवृन्देन खेलितम्" ॥२०५८॥

---

सादृश्ये वर्तमानस्य गुणस्य तस्मिन् वर्तमानायाः क्रियायाश्च द्विरुक्तिः स्यात्। श्यामरामवच्च। पटुरिवेत्यर्थे पटुपटुरिति। अन्यूनगुणस्तत्तुल्यगुण इत्यर्थः। इत्यनेन गुणविशिष्टः सूचितः। स्वादिमहाहर एवात्र श्यामवत्त्वस्य फलम्। एवमुत्तरत्रापि। एवमिति। मन्दादन्यूनं यथा स्यात्तथा मुकुन्दो यातीत्यर्थः। केवलमान्द्यगुणस्यात्र द्विर्वचनम्। पट्वीव पटुपट्वी। पट्व्रा अन्यूनगुणा इत्यर्थः। श्यामरामवत्त्वात् 'अन्तरङ्गस्वादेर्महाहरः' इत्यनेन स्वादिमहाहरः। 'वाच्यलिङ्गलक्ष्मी'त्यनेन पुम्वच्च। एवं पण्डिता इव पण्डितपण्डितेति। पण्डा वेदोज्ज्वला बुद्धिः सा अस्या जाता इति तारकादेरितः ततो लक्ष्म्यामाप्। श्यामेति। 'न संज्ञापुरण्यावि'त्यादिना पुम्वत्त्वनिषेधेऽपि अनूङो नेति निषेधा इति श्यामरामे निषेधखण्डनात् निषेधविषयेऽपि श्यामरामवत्त्वात् पुम्वदित्यर्थः। कालिकेव कालककालिकेति पूर्ववत्। इदञ्चेति गुणमुक्ता यो गुणिनि वर्तते स गुणविशिष्टद्रव्यवृत्तिस्तस्य। यो गुणमात्रे वर्तते स गुणमात्रवृत्तिस्तस्य चेदं द्विर्वचनमिष्यते। श्यामेत्यत्र गुणविशिष्टस्य द्विर्वचनम्। श्याम इवायमित्यर्थः। श्यामेति। श्यामसदृशोऽस्य वर्ण इत्यर्थः। क्रियाया यथा रूपं दर्श्यते इति शेषः। भ्रमरैरिति भीतभीतः तेन। अमीभिर्भ्रमरैर्दर्श्यत इति मनसिकृत्य भ्रमरैः कर्तृभिर्भीतभीतेन भीततुल्येन समूहेन खेलितं क्रीड़ितमित्यर्थः। भीत इत्यत्र कर्मणि क्त इति भीतस्य क्रियात्वम्। यद्यकर्मविहितक्तप्रत्ययेन गोपीवृन्द उक्तस्तथापि खेलितमिति भाव-क्तप्रत्ययान्तस्यानुक्तः कर्ता इत्यनुक्तकर्तरि तृतीया। उक्तान्नाममात्रार्थे द्योत्ये प्रथमैव बाधकान्तरं न स्यादित्युक्तत्वात्॥

२०५९। अकृच्छ्रे प्रियसुखयोर्वा।

प्रियप्रियेण, सुखसुखेन वा भजति हरिम्। पक्षे—प्रियेण सुखेन च ॥ २०५९ ॥

श्यामरामवत्त्वं निवृत्तम्।

२०६०। आनुपूर्व्ये च।

मूले मूले स्थूला शुण्डा। ज्येष्ठं ज्येष्ठं वैष्णवमानय ॥२०६०॥

२०६१। आधिक्ये तु।

---

२०५९। अकृ। अकृच्छ्रमप्रयासः। अकृच्छ्रे प्रयासव्यतिरिक्ते वर्तमानयोर्गुणरूपयोः प्रियसुखयोर्द्विरुक्तिर्वा स्यात् श्यामरामवच्च। अकृच्छ्रेण हरिं भजतीत्यर्थे प्रियप्रियेणेति चत्वार्युदाहरणानि। विशेषलक्षणात् तृतीयेत्यनेन प्रियसुखाभ्यां तृतीया व्यधिकरणक्रियाविशेषणत्वात् प्रियः सुखञ्चात्र हरिभजनस्य चिह्नम्। तेनाकृच्छ्रेण यथा स्यात्तथा हरिं भजतीति पर्यवसितोऽर्थः। अकृच्छ्र इति किम्? प्रियाः गोप्य इत्यत्र प्रियशब्दोऽभिलषितार्थं वक्ति नाकृच्छ्रगुणमिति। श्यामेति। अत्र श्यामरामवत्त्वनिर्वर्तनात् परत्र स्वादिहरः पुम्वच्च न भवतीति सूचितम्॥

२०६०। आनु। आनुपूर्व्योऽनुक्रमस्तस्मिन् वर्तमानस्य पदस्य द्विरुक्तिर्भवति। मूले मूले स्थूला शुण्डेति अनुक्रमेण पुष्टा शुण्डेत्यर्थः। एवमग्रेऽग्रे सूक्ष्मा शुण्डेत्यपि। ज्येष्ठं ज्येष्ठं वैष्णवमानयेति प्रथमं सर्वज्येष्ठं पश्चात्ततः कनीयांसमितरेभ्यो ज्येष्ठमित्यनुक्रमेण सर्वान् वैष्णवानानयेत्यर्थः। गृहे गृहे गायतीत्यत्र यथा सर्वेष्वेव गृहवाच्यत्वमस्ति न तथा ज्येष्ठं ज्येष्ठं वैष्णवमानयेत्यत्र स सर्वकनीयसि ज्येष्ठत्वाभावात्। यतोऽपेक्षाकृतं ज्येष्ठमिति पूर्वसूत्रेणाप्राप्ते विधानम्॥

२०६१। आधि। आधिक्यमतिशयितं तस्मिन्नर्थे वर्तमानस्य

अहो भाग्यं भाग्यम्। "अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्" (श्रीमद्भागवतम् १०।१४।३२) इत्यपि ; भाग्यस्याधिक्यमत्र द्विर्वचने प्रतीयते ॥ २०६१॥

२०६२। चापले यावद्बोधम्।

कृष्णः कृष्णः कृष्णः पश्य पश्य पश्य ॥ २०६२॥

२०६३। आचि बहुलम्।

आच् तद्धितः, पटपटा भवति। बहुलं किम् ? मन्त्राकरोति ॥ २०६३ ॥

२०६४। पूर्वप्रथमयोरतिशये।

---

तु पदस्य द्विरुक्तिर्भवति। अहो आश्चर्यं भाग्यं भाग्यमिति भाग्यस्यातिशयत्वमित्यर्थः। अहो भाग्यमित्यस्य 'यन्मित्रं परमानन्दं पूर्णं ब्रह्मसनातनमि'ति परपादो द्रष्टव्य इति। अत्र द्विर्वचने भाग्यस्याधिक्यं प्रतीयते इत्यन्वयः ॥

२०६२। चाप। यावद्बोधमिति बोधमनतिक्रम्य इत्यव्ययीभावसिद्धम्। चापलं चाञ्चल्यं तस्मिन् गम्ये यावद्बोधं जायते, तावत् चापलबोधकस्य पदस्य द्विर्भवति। कृष्ण इत्यादित्रयस्य पश्येत्यादित्रयेण यथासंख्यमन्वयः। त्वरायां यावद्बोधमित्यन्ये। त्वरायां द्योत्यायां यावद्भिः सोऽर्थो बुध्यते, तावद्द्विरुक्तिर्भवतीति तत्सूत्रार्थः। उदाहरणं तुल्यम् ॥

२०६३। आचि। आचि प्रत्यये सति आच्प्रत्ययान्तपदस्य बहुलं यथा स्यात्तथा द्विरुक्तिर्भवति। आच् तद्धितो वक्ष्यते इति शेषः। पटत् पटत् भवतीत्यर्थे पटपटा भवति। कृभ्वस्तियोगे द्विरुक्तौ पटत्शब्दादच् नरस्य तलोपो वक्ष्यते, संसारस्य हरश्चिति संसारहरः। अमन्त्रं मन्त्रं करोतीति मन्त्राकरोतीति ॥

२०६४। पूर्व। अतिशये वर्तमानयोः पूर्वप्रथमयोर्द्विरुक्तिः

पूर्वा पूर्वा तुलसी स्निग्धा। पूर्वतरा पूर्वतमेत्याद्यपि ॥२०६४॥

२०६५। यथास्वे यथायथं, द्वन्द्वं कलहयुग्मादौ। साधू। द्वौ द्वौ द्वन्द्वम् ॥२०६५॥

**इति श्रीश्रीहरिनामामृताख्ये वैष्णवव्याकरणे समासादि-प्रकरणं षष्ठं समाप्तम् ॥ ६ ॥**

---

स्यात्। पूर्वेति। अतिशयस्निग्धा पूर्वा तुलसीत्यर्थः। पूर्वतरा तुलसी स्निग्धा पूर्वतमा तुलसी स्निग्धा इत्याद्यपि भवति। किन्त्वत्र तर-तमप्रत्ययाभ्यामुक्तत्वात् ॥

२०६५। यथा। स्वे स्वार्थे यथाशब्दस्य द्विरुक्त्या यथायथ-मिति साधुः। द्वन्द्व। कलहयुग्मादौ वाच्ये द्वन्द्वं साधुः। द्वन्द्वमिति सामान्यनिर्देशात् ब्रह्म। द्वौ द्वाविति द्वन्द्वं निपातनात् द्वौ द्वौ स्थाने द्वन्द्व इति। 'द्वन्द्वं कलहयुग्मयोरि'त्यमरः। ॐ तत्सत् ॥

राधामुकुन्दचरणाब्जसुधासमुद्रे मग्नेन सम्प्रति मया महदाश्रयेण।
श्रीजीवचन्द्रहृदयाहितसम्बलेन पूर्णीकृता भवति षष्ठसमासटीका ॥

इति श्रीलहरेकृष्णाचार्यविरचितायां वेदान्तभूषणेन श्रीमद्-गोपीचरणदासनाम्ना परिशोधितायामवशिष्टकृताञ्च श्रीहरिनामा-मृताख्यवैष्णवव्याकरणटीकायां बालतोषणीनाम्न्यां षष्ठी समासप्रकरण-व्याख्या समाप्ता ॥

[ सप्तमम् ]

# अथ तद्धित-प्रकरणम्

श्रीश्रीराधाकृष्णाभ्यां नमः

(१२) अर्धर्चादिप्रयोगाश्च यन्निमित्तमिहोदिताः।
इयं मे तद्धितव्याख्या तद्धितत्वाय कल्पताम् ॥

---

श्रीश्रीकृष्णचैतन्यचन्द्राय नमः। ॐ तत्सत्।

[ १२ ] अर्धर्चाद्यान् यमुद्दिश्य गायन्ति पण्डिता इह।
तदर्थास्तद्धिताः सर्वे तद्व्याख्याश्च भवन्ति हि ॥

अथो अखिलवेदाङ्गपुराणोपपुराणेतिहासवेदान्तोपनिषदध्यापकपरम-कारुणिक-भागवताग्रगण्य-प्राणिनिकायजीवातुक-श्रीमज्जीवगोस्वामिनामा ग्रन्थकारः सन्धिप्रकरणटीकोक्तक्रमशःप्राप्ततद्धितपादमारभमाण एतत्-पादीयप्रयोगाणां भगवत्परतां भङ्ग्याध्यापनशीलकहितपरताञ्च प्रति-पादयन्नाह—अर्धर्चादीति। इह सप्तमपादे यन्निमित्तं लक्षणया यस्य सन्तोषार्थं मे मया अर्धर्चादय एव प्रयोगा उदिताः कथितुमारब्धाः इयं मे मम च सम्बन्धिनी मत्कर्तृका वा तद्धितव्याख्या तद्धितैरूप-लक्षितव्याख्या तद्धितत्वाय कल्पतां तद्धारितत्वेन परिणमतामित्यन्वयः। उदिता इत्यारम्भे क्तः। आरम्भार्थ-क्तस्य वर्तमानप्रयोगित्वाद्वर्तमाने भावे च क्तस्य योगे कर्तरि षष्ठी वेत्यनेन मे इतस्मिन् कर्तरि षष्ठी। पक्षे सम्बन्धषष्ठी च। प्रयोगाश्चेत्यत्र प्रयोजनाभावत्वात् पुनरर्थत्वेन मे इति सम्बन्धषष्ठ्यन्तेन सम्बन्धः। न केवलं तद्धितानां व्याख्या तद्धितत्वेन कल्पते अपि तु तद्धितास्तद्व्याख्या च, अतएव तद्धितोपलक्षिता तद्धितसहितेत्यर्थः। ममोक्ततद्धितव्याख्या सर्वेषां निर-पेक्षहितकारिणस्तस्य हितत्वेन परिणाम कल्पना नोचितेति तद्धारित-त्वेन तस्मिन् समर्पितत्वेनेत्यर्थः। तद्धितत्वायेत्यत्र च डु धाञ् धारण-पोषणयोरित्यस्माद्भावे क्तः। दधातेर्हिरित्यनेन हिः। तस्मादनेन

अथ तद्धितकार्याणि

२०६६। आदिसर्वेश्वरस्य वृष्णिन्द्रो नृसिंहे।

भगवत्यर्पितत्वेन ग्रन्थकृता परममङ्गलमाचरितम्। एवं सर्वोऽयं ग्रन्थो मङ्गलरूप इति च विज्ञापितमिति। एवं मत्कृतमङ्गलाचरणस्यापि। व्याकरणपक्षे तु। इह तद्धितपादे यन्निमित्तं येभ्यश्छात्रेभ्यो निमित्तम् अर्धर्चादितद्धितप्रयोगा मयोदिताः कथयितुं प्रस्तुताः मम इयं तद्धित-व्याख्या च तद्धितत्वाय तेषां छात्राणां नानार्थबोधकद्वारा परमपारि-तोषिकत्वेन कल्पतां समर्था भवतु पोषणरूपधात्वर्थस्य परितोषफल-त्वात्। अर्धर्चेति ऋचः अर्धमर्धर्चः स एव आदिर्येषां तेऽर्धर्चादयः ते च प्रयोगाश्चेति अर्धर्चादिप्रयोगा इति प्रथमतोऽर्धर्चेत्यत्र वेदाक्षरस्य ऋचः प्रदर्शनादस्मिन् ग्रन्थे वेदाक्षरस्यैव प्राधान्यम्। अतएव तदादि-प्रयोगानुशीलकानां वेदार्थानुशीलनफलवत्त्वात् हरिनामभिर्वैष्णवानां काल-क्षेपणमुचितमित्यस्य न व्यभिचारः। संज्ञाशब्दानां यथाकथञ्चिदि-त्युक्तदिशा तस्मै हितस्तद्धित इति संज्ञाशब्दस्य व्याख्या। अर्थ-विवरणमिति किं बाहुल्येन॥

अथ। इदानीन्तनानां विविधोपद्रवाभिभूतानां मन्दबुद्ध्यलसानां सन्ध्यादिषट्पादाध्ययनक्लेशक्लेशिताणां छात्रानां मध्ये कस्यचित् समस्त-तद्धितपाठो भवेत् कस्यचिन्न भवेदिति। किम्वा सन्ध्यादिषट्पादा-ध्ययनाहितसंस्कारेण सूक्ष्मधियां तेषां सुलभबुद्ध्या तद्धिते प्रवृत्तिर्न स्यादिति च मनसिकृत्य समग्रतद्धितफलरूपाणि तत्कार्याणि दर्शयन्नाह-अथेति। अथ स्यान्मङ्गलप्रश्नकार्यारम्भेष्वथो अथ इति विश्वात्। 'ॐकारश्चाथशब्दश्च द्वाविमौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनि-र्जातौ तस्मान्माङ्गलिकावुभावि'ति माध्विभाष्याच्च। अथ शब्दस्या-नन्तर्यमङ्गलार्थौ युगपत् स्वीकृत्याथशब्दं प्रयुञ्जीत। अथानन्तरं परममङ्गलरूपाणि तद्धितकार्याणि दर्श्यन्त इत्यर्थः॥

२०६६। आदि। नृसिंहे परस्मिन् आदिस्थस्य सर्वेश्वरस्य वृष्णीन्द्रो भवति। अस्य सजातीयविजातीयानेकाधिकारव्यापित्वादाह-

विभुरयम्। गर्ग-यण्—'अ-इद्वयस्य हरो' ( २११४ ) वक्ष्यते —गार्ग्यः। दक्ष-इण्—दाक्षिः। उपगु-अण्—'उद्वयस्य गोविन्दो' ( २११६ ) वक्ष्यते—औपगवः॥ २०६६॥

२०६७। प्रलयादीनां यादेरीयश्च।

अण्—प्रालेयं, कैकेयः॥ २०६७॥

---

विभुरिति। तेन दीव्यतीत्यतः प्रागर्थेषु अपत्याद्यर्थेषु यः केशवणो वक्ष्यते, तद्बाधकाश्च ये प्रत्ययास्तानाह—गर्ग यणित्यादिना। 'गर्गादेर्माधव-यराम' इत्यनेन यो माधव-यरामो वक्ष्यते, स एव गर्ग यणित्यनेनोक्तः। तद्धिते कार्यस्य प्रत्ययविधायकानि सूत्राणि स्वयं ग्रन्थकृता पश्चात् विवृत्य वक्ष्यन्तेऽतस्तेषामत्र प्रदर्शनं पिष्टपेषणमात्रमिति यथासम्भवं क्वचित् कानिचिद्दर्श्यन्ते। किञ्च, तद्धितप्रत्ययानां बहुलार्थत्वात् बहूनि वाक्यानि सम्भवन्ति। तेषां मध्ये कुत्रापि किमपि कुत्रापि किमप्यच्युते इति बोद्धव्यम्। अइ-द्वेति वक्ष्यते इति 'अ-इद्वयस्य हरो भगवती'त्यनेनेति शेषः। अस्य सूत्रस्य प्रायः सर्वत्र विषय इति सर्वत्रेदं योज्यम्। गर्गस्य गोत्रापत्यं पुमानित्यर्थे गार्ग्य इति। अरामबाह्वादिभ्यामिर्नृसिंह इर्वक्ष्यते, स एव दक्ष इण् इत्यनेनोच्यते। दक्षस्यापत्यं पुमानित्यर्थे दाक्षिः। उपगु अणिति केशवण इति वक्ष्यते च अयमेवाण इति। गोविन्द इत्यस्मादुत्तरत्र न च धातोर्नच स्त्रीप्रत्यय इति शेषः। उपगुरित्येकस्य नाम तस्यापत्यं पुमानित्यर्थे उपगोः केशवणस्तस्मिन् गोविन्दस्येत्येवम् ऊपगव इति॥

२०६७। प्रल। य आदिर्यस्य स यादिस्तस्या तद्गुणसम्विज्ञानपीताम्बरेणात्र यरामस्तदन्तश्च गृह्यते। प्रलयादीनां सम्बन्धे केशवणस्तस्मिन् परे तेषां यादिवर्णस्य ईयश्च भवति। यादेरित्यत्र यस्य इयश्चेति कृतेऽपि प्रयोगः सिध्यत्येव तथापि यदेवं कृतं तद्वैचित्र्यार्थम्। प्रलयस्येदं प्रालेयं, केकयस्यायं केकये भवो वा कैकेय इति। 'जनपद-सनामभ्यः क्षत्रियेभ्योऽपत्ये तज्जनपदनामभ्यस्तु राजनि' इत्यर्थे प्राग्दीव्यतीयकेशवणः॥

२०६८। देविका-शिंशपा-दीर्घसत्र-श्रेयसामारामः।

एषामारामः; एषामारामरूप एव वृष्णीन्द्रः; अण्—दाविकं, शांशपं, दार्घसत्रं, श्रायसम्॥२०६८॥

२०६९। वृष्णीन्द्रस्थान-चतुःसनादेश-विष्णुपदान्तयोर्द्वारादिस्थयोश्च वृष्णीन्द्रं निषिध्य यवरामयोरैयौवौ, न तु स्वागतादेः।

वृष्णीन्द्र-स्थानीयश्चतुःसनस्तस्यादेशयोर्विष्णुपदान्तयोस्तथा द्वारादिगणस्थयोश्च यवयोर्वृष्णीन्द्रं निषिध्य यथासंख्यमैयौवौ भवतः। अणि वैयाकरणः। इणि सौवश्विः। 'वृष्णीन्द्रं निषिध्य' इति

---

२०६८। देवि। नृसिंहे परे देविकादिचतुर्णामादिसर्वेश्वरस्यारामो भवति। वृत्तिमाह—एषामिति। देविकाया इदं देविकायां भवो वा दाविकम्। एवं शांशपादिः॥

२०६९। वृष्णीन्द्र। वृष्णीन्द्रस्य स्थानं वृष्णीन्द्रस्थानञ्च तच्चतुःसनश्चेति वृष्णीन्द्रस्थानचतुःसनः। आदेशश्च आदेशश्च आदेशौ विष्णुपदान्तश्च विष्णुपदान्तश्च विष्णुपदान्तौ आदेशौ च तौ विष्णुपदान्तौ चेति आदेश-विष्णुपदान्तौ वृष्णीन्द्रस्थानचतुःसनस्य आदेशविष्णुपदान्तौ वृष्णीन्द्रस्थानचतुःसनादेशविष्णुपदान्तौ तरोर्यरामयोः। द्वार आदिर्यस्य स द्वारादिस्तस्मिन् स्थीयेते इति द्वारादिस्थौ तयोश्च यवरामयोः। स्वागत आदिर्यस्य स स्वागतादिस्तस्य स्वागतादेरिति। वृत्तिमाह—वृष्णीन्द्रस्थेति। भवत इत्यस्मात् स्वागतादेर्यवरामयोस्तु नेति द्रष्टव्यम्। सूत्रे वृष्णीन्द्रस्थानेत्युक्तत्वात् वृष्णीन्द्रहेतौ प्रत्यये इत्यर्थाद्गम्यते। अतएव ग्रन्थकृता यद्यपि कृतावपि परनिमित्तं न दत्तं, तथापि नृसिंहे परे इति ज्ञेयम्। अणीति रूपं दर्श्यते इति शेषः। एवमुत्तत्रापि। व्याकरणमधीते वेद वेति व्याकरणस्य वा इत्यत्र यरामस्यैयादेशे वैयाकरणमिति। स्वश्वस्यापत्यं पुमानिति सौवश्विरिति। इति किं किमर्थं?—यदा वृष्णीन्द्रः स्यात्तदा सौवाश्विरिति स्यात्। स्यादिति

किम् ? 'सौवाश्विः' इति स्यात्। वृष्णीन्द्रस्थानेति किम् ? दाध्यश्विः, माध्वश्विः। विष्णुपदान्तयोरिति किम् ? इम्-शत्रन्तस्य यतश्छात्रा इत्यणि याताः। द्वारादिस्थयोः खल्वपि; टिकण्—दौवारिकः। द्वार-श्वन्-श्वस्-स्वरादिर्द्वारादिः ॥ २०६९ ॥

२०७०। न्यग्रोधश्च केवलोऽत्र।

नैयग्रोधम्। नेह—न्याग्रोधमूला वैष्णवाः ॥ २०७० ॥

---

सम्भावनायां विधिः, तेन सौवाश्विरिति न सिद्धप्रयोगः किन्त्वाक्षेपार्थः। अन्यथा वृष्णीन्द्रे सति ऐयौवादेशलक्षणाभावात् कथमेवं प्रयोगो भवेत् ? दधिनामाश्वो यस्य तस्य दध्यश्वस्य अपत्यं पुमान् दध्यश्वस्यायं वेति दाध्यश्विः। एवं मध्वश्वस्य इत्याद्यर्थे माध्वश्विः। अत्र यवौ विद्येते एव, किन्त्वनयोः वृष्णीन्द्रस्थानीयचतुःसनादेशत्वाभावात् नैयौवौ। इन् गताविति इन्धातोः शत्रन्तस्य रूपं यथा सर्वे गत्यर्था ज्ञानार्थाश्चेत्यनेन यतो गच्छतो ज्ञानिनश्च वा छात्रा इत्यर्थेऽणि सति याता इति। अत्र वृष्णीन्द्रस्थानीयचतुःसनादेशत्वमस्त्येव, किन्तु न विष्णुपदान्तत्वमतो नैय्। खल्वपीत्यनेन वृष्णीन्द्रस्थानचतुःसनादेशत्वादिविशेषणाभावेऽपि। द्वारादिगणस्थयोर्यरामयोर्नित्यमैयौवादेशौ भवत इति सूचितम्। टिकण्णिति माधवस्य प्रतिरूपकं ठस्त्विक इति बक्ष्यते च। द्वारे नियुक्त इत्यर्थे द्वौवारिक इत्यत्र तत्र नियुक्त इत्यनेन माधवठः। द्वारादिगणमाह—द्वारेति। शुनि नियुक्तः शौवनिकः। एवं शौवसिकः। स्वरे नियुक्तः स्वरेण कृतो वा सौरसिक इत्युदाहरणानि ॥

२०७०। न्यग्र। अत्र द्वारादौ केवलो न्यग्रधो वटस्तस्य विकारोऽवयवो वा फलमित्यर्थे नैयग्रोधमिति। अत्र न्यग्रोधस्य विकारोऽवयवो वा फलमिति महाहरविषये प्लक्षादित्वात् केशव-णः। 'न्यग्रोधो बहुपाद् वटः' इत्यमरः। नेहेति। सूत्रे केवलशब्दोपादानादिति शेषः। न्यग्रोधस्य मूलं न्यग्रोधमूलं तत्र स्थिता अमी इत्यर्थे न्यग्रोधमूला इति केशवणान्तम् ॥

२०७१। श्वापदो वा।

श्वापदं, शौवापदम्। स्वागतादेस्तु—स्वागतिकः, व्यवहारिकः। इणि—व्याड़िः॥ २०७१॥

२०७२। न श्वपूर्वस्येरामे।

इण्—श्वादंष्ट्रिः, श्वाभस्त्रिः, श्वागणिकः॥ २०७२॥

२०७३। उत्तरपदस्य।

प्रभुरयम्। 'आदिसर्वेश्वरस्य' इति विभुरनुवर्तते एव॥ २०७३॥

२०७४। गुरुलघ्वादेः।

---

२०७१। श्वा। श्वापदो द्वारादिर्वा भवति। श्वापदादिद्वयम्। तस्येदमिति केशवणः। स्वागतादेः रूपं दर्श्यते—शोभनमागतं स्वागतं तदर्हतीति स्वागतिकः। तथा व्यवहारिकमिति च अत्र तदर्हतीत्यर्थे माधवठः। किञ्चानयोर्वृष्णीन्द्रस्थानचतुःसनादेशत्वं विष्णुपदान्तत्वञ्चास्त्येव इति सूत्रे निषेधविधानम्। एवमन्यत्रापि यथायोग्यमनुसन्धेयमिति। व्याड़स्यापत्यं पुमानिति व्याड़िः। अरामबाह्वेत्यनेनात्र इर्नृसिंहः। व्याड़िः पण्डितविशेषः॥

२०७२। न श्व। श्वा पूर्वो यस्य स श्वपूर्वस्तस्य न औवादेशः। इरामे कृते सति। द्वारादित्वात् प्राप्ते निषेधोऽयम्। श्वदंष्ट्रेण निर्मितः श्वादंष्ट्रिः। श्वभस्त्रया कृतः श्वाभस्त्रिः। अत्रापि द्वयं अरामबाह्वेत्यनेन नृसिंह इः। श्वगणे नियुक्त इत्यर्थे माधवठे श्वागणिक इति॥

२०७३। उत्तर। उत्तरपदस्य यथास्वं कार्यं स्यात्। पूर्वाधिकारमपि सूचयति—आदिसर्वेश्वरस्येति॥

२०७४। गुरु। नृसिंहे परे सति गुरुलघ्वादेरुत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रो भवति। परत्रोभयपदस्य वृष्णीन्द्रो वक्ष्यते, तत्रत्यैः सूत्रैः

गुरुलाघवं, पितृपैतामहं, वातपैत्तिकं, वातश्लैष्मिकम्,. एक-पौरुष्यमित्यादि ॥ २०७४ ॥

२०७५। अवयावादृतोः।

पूर्ववर्षासु भवः—पूर्ववार्षिकः, वर्षाणां पूर्वभागे जात इत्यर्थः। एवम्—अपरशारदम्। 'अवयवात्' किम्? पूर्वासु गतासु वर्षासु भवः—पौर्ववर्षिकः ॥ २०७५ ॥

---

पूर्वपदस्यादौ प्राप्तो वृष्णीन्द्रोऽप्येतैः सूत्रैर्बाध्यते। गुरुलघ्वोरिदं गुरु-लाघवम्। पितृपितामहयोरिदं पितृपैतामहमित्यत्र द्वये तस्येदमित्यनेन केशवणः। वातपित्तयोः शमनं कोपनं वेत्यर्थे वातपैत्तिकम्। एवं वातश्लैष्मिकम्। वातपित्तश्लेष्मसन्निपातेभ्यः शमनकोपनयोरित्यनेनात्र माधवठः। एकपुरुषस्य भावः एकपौरुष्यमित्यत्र भावे नृसिंह-यः। इत्या-दिपदेन, परस्यार्थः परार्थः संहतस्य परार्थः संहतः परार्थो येन वा इति संहतपरार्थस्तस्य भाव इति संहतपारार्थ्यमित्यादयोऽपि यथास्वमूह्याः ॥

२०७५। भव। नृसिंहे परे अवयववाचकादुत्तरस्य ऋतुवाच-कोत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रो भवति। ऋतोरिति नेदं स्वरूप-ग्रहणं यतः स्वरूपे अवयवं न सम्भवति। यच्चावयवं वर्णात्मकं ऋरूपं तु रूपञ्च न तद्व्यभिचारित्वात्। एवमवयवादित्यपि न स्वरूप-ग्रहणं तथा सति अवयवार्तवमित्यस्यैव युक्तत्वादित्यत उ यथैवा-सामञ्जस्यं तस्मादवयववाचकं ऋतुवाचकमित्येव सङ्गतम्। भङ्ग्या-तदेव वर्षाणां पूर्वभागे जात इत्यर्थकथनेन वक्ष्यते। वाक्योदाहरण-मर्थकथनञ्च स्वयमेवोक्तम्। किन्त्वत्र वर्षाभ्यो माधवठः। वर्षाशब्दः नित्यबहुवचनान्त इत्यप्यत्र बहुवचनान्तप्रयोगेण दर्शितमिति। एवमित्य-नेन अपरशरदि भव इत्यादि पूर्ववत्। किञ्चात्र केशवणः। अवयवात् किं किमर्थं?—यर्हि न स्यात्तर्हि न स्यात्। पूर्वास्वित्यनेन श्याम-रामसमासोऽप्यत्र दर्शितः। ततः समासनिष्पन्नान्माधवठः। गतास्विति न समासार्थं किन्त्ववयवनिरासार्थम्। पौर्ववर्षिक इत्यत्र पूर्वपदस्यैवादि-सर्वेश्वरस्य वृष्णीन्द्रो नोत्तरपदस्येति ॥

२०७६। सुसर्वार्धेभ्यो देशनाम्नः।

सुशौरसेनकः सर्वशौरसेनकः, अर्धशौरसेनकः ॥ २०७६ ॥

२०७७। दिशस्त्वमद्राणाम्।

पूर्वशौरसेनकः। मद्राणान्तु—पौर्वमद्रः ॥ २०७७ ॥

२०७८। संख्यातः संवत्सर-संख्ययोः।

द्विसाम्वत्सरिकः। संख्यायाः—त्रिसाप्ततिकः ॥ २०७८ ॥

२०७९। संख्यायाः वर्षस्याभाविनि।

द्विवार्षिकः, पञ्चवार्षिकः। 'अभाविनि' किम्? द्विवर्षे भविष्यति—द्वैवर्षिकम् ॥ २०७९ ॥

---

२०७६। सुस। नृसिंहे परे सुसर्वार्धेभ्यः परस्य देशनाम्न उत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रो भवति। सुशूरसेनेसु जातादिरित्यर्थे सुशौरसेनक इति। एवं सर्वशूरसेनेषु जातादिरिति, अर्धशूरसेनेषु जातादिरिति ॥

२०७७। दिश। नृसिंहे दिशः दिग्वाचकादुत्तरेषां मद्रभिन्नानां देशनाम्नामादिसर्वेश्वरस्य वृष्णीन्द्रो भवेत्। पूर्वशूरसेनेषु जातादिरिति पूर्ववत् एवमुत्तरशौरसेनकादय इत्यत्र द्रष्टव्याः। सुशौरसेनकादिषु 'आदि-वृष्णीन्द्रादपि बहुवचनविषयाज्जनपदाद्वुर्नृसिंहः' इत्यनेन नृसिंहवुः। मद्राणान्तु रूपं यथा—पूर्वमद्रेषु भवः पौर्वमद्र इत्यत्र केशवणः पूर्वपदस्य वृष्णीन्द्रश्च ॥

२०७८। संख्यातः। संख्यावाचकादुत्तरयोः संवत्सरसंख्यावाचकयोरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति नृसिंहे परे। द्विसाम्वत्सरिक इत्यत्र द्वाभ्यां संवत्सराभ्यां निर्वृत्त इत्यर्थे द्वौ संवत्सराधीष्ट इत्यर्थे च कालान्माधव-ठः। त्रिसाप्ततिक इति तिस्रः सप्ततयः परिमाणमस्येत्यर्थे माधवठः ॥

२०७९। संख्यायाः। अभविष्यदर्थे नृसिंहे परे संख्यावाचकात् परस्य वर्षशब्दस्य वृष्णीन्द्रो भवति। द्वौ वर्षावधीष्ट इत्यर्थे पञ्चवर्षा

२०८० । संख्यायाः परिमाणस्याशाणस्य ।

द्विनैष्किकम् । शाणस्य तु—द्वैशाणम् ॥ २०८० ॥

२०८१ । प्रोष्ठपदा-भद्रपदयोर्जातार्थे ।

प्रोष्ठपादो वालः, भाद्रपादः । भवार्थे तु—प्रौष्ठपदो मेघः ॥ २०८१ ॥

---

अधीष्ट इत्यर्थे द्विवार्षिकादिद्वयम् । 'वर्षात् ख-माधवठावि'त्यनेनात्र माधवठः । द्वैवर्षिकमित्यत्र पूर्वस्यैव वृष्णीन्द्रः ।।

२०८० । संख्यायाः परि । संख्यावाचिनः परस्य शाणवर्जितस्य परिमाणस्यादि-र्वेश्वरस्य वृष्णीन्द्रो भवति नृसिंहे । द्वौ निष्कौ परिमाणमस्येति द्विनैष्किकम् । निष्कस्तु तोलकद्वयम् । तदस्य परिमाणमित्यनेनात्र माधव-ठः । द्वौ शाणौ परिमाणमस्येति । द्वैशाणमित्यत्र द्वित्रिपूर्बाभ्यां शाणशताभ्यां केशवणश्च वेत्यनेन केशवणः, पूर्वपदस्य वृष्णीन्द्रश्च । शाणो मासचतुष्टयम् । ( शाणस्तु निकषः कषः । इत्यमरः । त्रयं स्वर्णादीनां सदसद्बोधने प्रस्तरे कष्टीति ख्याते इति तट्टीका ) ।।

२०८१ । प्रोष्ठ । नृसिंहे परे जातार्थे प्रोष्ठपदाभद्रपदयोः सम्बन्धि-नोत्तरुत्तरपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति । प्रोष्ठपाद इति प्रोष्ठ-पदा नाम नक्षत्रविशेषः । सामीप्यसम्बन्धात् प्रोष्ठपदाशब्देन तत्शब्देन तत्समीपवर्ती चन्द्रोऽभिधीयते । तस्माच्छब्दात् तद्युक्ते काले वाच्ये 'नक्षत्रेण युक्तः काल' इत्यनेन विहितो यः केशवणः स तु महाहरः । स्मरहरः कालाविशेषे प्रागुक्तनक्षत्रप्रत्ययस्यैवेति वर्त्म इति विधि-वाक्येन महाहरस्यैव स्मरहरसंज्ञा वक्ष्यते । ततश्च प्रोष्ठपदानक्षत्र-युक्ते काले जात इत्यर्थे 'ऋतुनक्षत्राभ्याञ्चे'त्यनेन केशवण इति । एवं भद्रपदे जात भाद्रपाद इति । भद्रपदशब्दस्तारकाविशेषाणां तिरोहिता-वयवभेदं समुदायमाचष्टे । अत एकत्ववृत्तिः स्वभावात् पुंलिङ्ग इति च रक्षितः । प्रोष्ठपदासु भवः इत्यर्थे प्रोष्ठपद इत्यत्र पूर्वपदस्यैव

२०८२। उभयोः पदयोः।

प्रभुरयम् ॥ २०८२ ॥

२०८३। हृद्भगसिन्ध्वन्तानाम्।

सौहार्दं, सौभाग्यं, सौरसैन्धवम्। हृदिति प्रतिपदोक्तग्रहणाद्धृदयादेशस्य सौहृद्यमित्येके ते। खलु कृचित्तद्धितेऽपि हृदाद्यादेशं मन्यन्ते ॥ २०८३ ॥

---

वृष्णीन्द्रः। प्रोष्ठपदाशब्दस्तारकाविशेषाणामुद्रिक्तावयवभेदं समुदायं वक्ति, अतो बहुत्ववृत्तिः स्वभावाल्लक्ष्मीलिङ्गः ॥

२०८२। उभ। उभयोः पदयोर्यथास्वं वृष्णीन्द्रो भवति नृसिंहे। अधिकारोऽयम्। आदिसर्वेश्वरस्येति विभुरप्यत्रानुवर्तते ॥

२०८३। हृद्भ। हृद्भगसिन्धवः अन्ते येषां ते हृद्भगसिन्ध्वन्तास्तेषां हृद्भगसिन्ध्वन्तानामुभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रः स्यान्नृसिंहे। द्वन्द्वात् परः पूर्वो वेत्युक्तादन्तशब्देन सह सर्वेषामन्वयः। तेन कृदन्तस्येत्यादि योज्यम्। सुहृदः इदं सौहार्दम्। 'सुहृन्मित्रे' इत्यनेन शोभनं हृदयमस्येति पीताम्बरे निपातात् सुहृच्छब्दात् तस्येदमित्यनेन केशवणः। तथा सुहृदयशब्दादपि सुहृदयस्य भाव इत्यर्थे केशवणे कृते 'हृदयस्य हृल्लेखलासयोर्याणोश्चे'त्यनेन हृदादेशे च कृते सौहार्दमिति च। हृदयसमानार्थो यो हृच्छब्दस्तदन्तस्याप्येवं भवति। हृदिति सामान्यग्रहणात्। सुभगस्य भाव इत्यर्थे सौभाग्यमित्यत्र ब्राह्मणादेराकृतिगणत्वात् नृसिंह-यः। सुरसिन्धोरिदमित्यर्थे सौरसैन्धवमिति। तस्येदमित्यनेनात्र केशवणः। सौहृद्यमित्येके इत्यत्र आहुरिति शेषः। ये एवं वदन्ति ते खल्वेव कृचित् तद्धितेऽपि परे हृदयादीनां हृदाद्यादेशं मन्यन्ते इत्यनेन तेषामयमभिप्रायः सूचितः। 'सुहृन्मित्रे' इत्यनेन सुहृदादेशस्य निपातत्वात् पूर्वोत्तरपदविभागो नास्तीति उभयपदस्य वृष्णीन्द्राभावात् सौहृद्यमिति। अतएव तन्मते हृदयसदृशार्थहृच्छब्दान्तस्यैव सौहार्दं सौहार्द्यमित्यादि। न हृदयादेशहृच्छब्दान्तस्येति। एतत्तु बहूनां

२०८४। अनुशतादीनाञ्च।

आनुशातिकम्, आनुसांवत्सरिकः ॥ २०८४ ॥

२०८५। एवम् इहलोक-परलोक-सर्वभूमि-पुष्कर-सद्-अधिदेव-अधिभूत-अध्यात्म-अनुहोड़-अवहोड़ादीनाम्।

---

मतमिति ग्रन्थकृता इत्येक इत्युक्तम्। यतः सर्वे पण्डिताः सामान्यं सुहृदं गृह्णन्ति, यदि तन्मतमेव मतं स्यात्तदा प्रोष्ठपदाभद्रपदयोः पूर्वोत्तरपदविभागाभावात् प्रोष्ठपादः भद्रपाद इत्यत्रोत्तरपदे वृष्णीन्द्रो न स्यात्। यद्येवं तर्ह्यस्माकं मते सौहृद्यमिति कथं सिध्येत्? उच्यते—तद्धितस्य बाहुल्यात् तद्धितकार्यस्यापि बाहुल्यं तेन, क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिरित्युक्तानुसारेण नात्रोत्तरपदस्य वृष्णीन्द्र इति सर्वं समञ्जसम्॥

२०८४। अनु। अनुशतमादिर्येषां ते अनुशतादयस्तेषामनुशतादीनां नृसिंहे परे पूर्वपदस्योत्तरपदस्य चादिसर्वेश्वरस्य वृष्णीन्द्रो भवति। आनुशातिकमिति शतेन क्रीत इत्यर्थे 'शताट्ठरामायरामवशतात्मके' इत्यनेन शतात् ठरामः शतिकः, पश्चात् अनुगतः शतिको येन सोऽनुशतिकः। तस्मात् 'तस्येदमि'त्यनेन केशवणः। आनुसम्वत्सरिकमिति तत्र कार्यं तस्मै दीयते तेन निर्वृत्त इत्याद्यर्थे कालान्माधवठ इति ठः॥

२०८५। एवं अतिदेशोऽयम्। नृसिंहे परे इहलोकादीनामुभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति। इहलोके भव इत्यर्थे 'लोकोत्तरपदादि'त्यनेन माधवठः ऐहलौकिकः। एवं पारलौकिकः। सर्वभूमिर्विषयोऽस्येत्यर्थे सोऽस्य विषयः' इत्यनेन केशवणः। तदर्थं योगात् पातावित्यर्थे वा केशवणः सार्वभौम इति। पुष्करसदोऽपत्यं पुमानित्यर्थे बाह्वादित्वात् नृसिंह-इः पौष्करसादिरिति। देवमधिकृत्य इति विग्रहे सप्तम्याद्यर्थे नित्यमव्ययमित्यनेन प्रथमतोऽव्ययीभावस्ततस्तस्मिन् भव इत्यर्थे अध्यात्मादेरित्यनेन माधवठः। आधिदैविकः एवमाधिभौतिकः आध्यात्मिक इति। आनुहोड़ेन तरतीत्यर्थे तेन तरतीति माधवठः। आनुहौड़िकम्,

२०८६। देवताद्वन्द्वे च।

सौर्याचान्द्रमसं सूक्तं, हविर्वा। सूक्तहविषोरेवाभिधानम्; नेह—ब्राह्मविशाखो देशः। नेन्द्रस्य परस्य—सौमेन्द्रश्चरुः॥ २०८६॥

२०८७। न च त्रिविक्रमाद्वरुणस्य।

---

एवमावहौड़िकमिति। आदिशब्दात् आभिगामिक इत्यादयोऽपूह्याः। केशाञ्चिदयमनुहोड़ादिर्गणः। स यथा—अनुहोड़-चतुर्विद्यानुहरद्वध्योग-कुरुकताभिगमाः। अनुसम्वत्सर-पुष्करसदस्यहत्य-प्रयोगाश्च। कुरुपञ्चा-लानुशतिक-सूत्रनड़ाः सर्वलोकपरलोकौ। इहलोक-सर्वपुरुषाधिभूत-शत-कुम्भ-राजपुरुषाश्च। असिहत्योदकशुद्धोऽङ्गारवेणुस्तथास्यहेतिश्च। अधिदेव-सर्वभूमी इत्यनुहोड़ादयोऽपरे ज्ञेयाः॥

२०८६। देव। सूक्तहविषोरिति वृत्तित्वेन दर्शनादेवं व्याख्येयम्। सूक्तहविषोर्वाच्ययोर्यो देवताद्वन्द्वो भवति, नृसिंहे परे तस्मिन् देवता-द्वन्द्वे उभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रो भवति। सूर्याचन्द्रमसौ देवते अस्येत्यर्थे 'सास्य देवता' इत्यनेन केशवणः सौर्याचान्द्रमसमिति। सूक्तमिति। आग्निमारुतीमनड्वाहामालभेत इत्यादिमन्त्रम्। हविर्घृत-मिति। नेहेति सूक्तहविषोरभावादिति शेषः। ब्रह्मविशाखयोरयमित्यर्थे 'तस्येदमि'त्यनेन केशवणः ब्राह्मविशाख इति। अत्र देशवाच्यत्वादुत्तर-पदस्य न वृष्णीन्द्रः। देवताद्वन्द्वे सति नृसिंहे परस्य परभूत-स्येन्द्रशब्दस्यादिसर्वेश्वरस्य वृष्णीन्द्रो न भवति। सौमेन्द्रौ देवते अस्ये-त्यर्थे सास्येत्यनेन केशवणः। सौमेन्द्र इति चरुर्यज्ञपायसम्। एवमाग्ना-वैष्णवादयस्त्रिविक्रमेण साधव इत्यनेन निपातसिद्धादाग्नेन्द्रशब्दात् केश-वणः। आग्नेन्द्र इति च। ननु 'अद्वयमिद्वये ए' इत्यनेन इन्द्रस्ये-रामेण सह—पूर्वारामस्य एरामे कृते पूर्वपदान्तस्थितत्वाद्वृष्णीन्द्रसम्भावनैव नास्ति किमनेन विधानेन सत्यं, 'विषयापेक्षकः कुचिदि'त्यनेन सन्धे-र्विषयापेक्षकत्वं यदुक्तं तस्यैव ज्ञापकमिदं तस्मात् प्रथमतः सन्धिर्न स्यादतो वृष्णीन्द्रे प्राप्ते निषेधविधानमिति॥

२०८७। न च। त्रिविक्रमादुत्तरस्य वरुणशब्दस्यादिसर्वेश्वरस्य

ऐन्द्रावरुणम् । 'त्रिविक्रमात्' किम् ? आग्निवारुणम् ॥ २०८७ ॥

२०८८ । प्राच्यनगरान्तस्य ।

उभयपदवृद्धिः । पौण्ड्रनागरः, सौह्मनागरः ॥ २०८८ ॥

२०८९ । जङ्गल-धेनु-बलजान्तस्य विभासितमुत्तरम् ।

कौरुजाङ्गलः, वैश्वधैनवः, सौवर्णवालजः । पक्षे—कौरुजङ्गल इत्यादिः ॥ २०८९ ॥

---

वृष्णीन्द्रो न स्यान्नृसिंहे परे ऐन्द्रावरुणमिति सास्य देवतेत्यर्थे आग्नावैष्णवादय इति निपातनिष्पन्नात् इन्द्रावरुणशब्दात् केशवणः । आग्निवारुणमिति आग्नावैष्णवगणाभावात् अग्नेरिरामो न स्यात्, किन्तु 'देवताद्वन्द्वे चे'त्यनेन पूर्ववत् केशवणान्तम् ॥

२०८८ । प्राच्य । प्राचि भवः प्राच्यः । नगरः अन्ते यस्य स नगरान्तः । स चासौ स चेति प्राच्यनगरान्तस्तस्य । वृत्तिमाह उभयेति । उभयपदयोर्वृद्धिरुभयपदवृद्धिः प्राचीनमतेनात्र वृद्धिरित्युक्तम् । पुण्ड्रश्चासौ नगरश्चेति पुण्ड्रस्य नगर इति वा पुण्ड्रनगरः । तस्यायं तस्मिन् भवो वा इत्याद्यर्थे केशवणः–पौण्ड्रनागरः । पुण्ड्रोऽत्र देशविशेषः स प्राग्दिग्भवः नगरान्तश्चेति । एवं सौह्मनागरः । प्राच्ये देशे वाच्ये नगरान्तस्येत्येके ॥

२०८९ । जङ्ग । जङ्गलधेनुवनजा इत्येते अन्ते यस्य तस्य नृसिंहे विभाषितं यथा स्यात्तथा उत्तरमुत्तरपदं वृष्णीन्द्रो भवति, अर्थात् नृसिंहे परे जङ्गलधेनुवलजान्तस्य विकल्पेनोत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रः स्यात्, पूर्वपदस्य तु नित्यमिति निर्गलितोऽर्थः । कुरुजङ्गलः कुरुक्षेत्रं तत्र भव इत्यर्थे केशवणः कौरुजाङ्गल इति । विश्वा धेनुर्यस्य स विश्वधेनुस्तस्यापत्यं पुमानित्यर्थे केशवणः । 'उद्वयस्य गोविन्दः' इत्यनेन गोविन्दः वैश्वधैनव इति । सुवर्णेन निर्मितो वलज इत्यर्थे 'तेन निर्मितः' इत्यनेन केशवणः । सौवर्णवालज इति । वलजः सौधः । इत्यादीत्यादिपदेन वैश्वधेनवः, सौवर्णवलज इति ॥

२०९०। अर्धात् परिमाणस्य पूर्वस्य तु वा।

आर्धद्रौणिकम्, अर्धद्रौणिकम्॥ २०९०॥

२०९१। नार्धात् परिमानस्थस्यारामस्य पूर्वस्य तु वा।

आर्धप्रस्थिकम्, अर्धप्रस्थिकम्॥ २०९१॥

२०९२। नञः शुचीश्वर-क्षेत्रज्ञ-कुशल-निपुणादीनां पूर्वस्य तु वा।

---

२०९०। अर्धात्। नृसिंहे अर्धादुत्तरस्य परिमाणवाचकस्यादिसर्वेश्वरस्य वृष्णीन्द्रो भवति, पूर्वपदस्यादिसर्वेश्वरस्य तु विकल्पः। अर्धद्रोणः परिमाणमस्य अर्धद्रोणेन क्रीतं वा इत्याद्यर्थे, 'अर्धं समविभागे वा' इति कृष्णपुरुषसिद्धात् अर्धद्रोणात् माधवठः। आर्धद्रौणिकमित्यादिद्वयम्॥

२०९१। नार्धात्। अर्धशब्दादुत्तरस्य परिमाणवाचकस्थस्यारामस्य नृसिंहे वृष्णीन्द्रो न स्यात् पूर्वस्यादिसर्वेश्वरस्य तु स्यात्। आर्धप्रस्थिकमित्यादिद्वयं पूर्ववन्माधवठान्तम्। सूत्रेऽरामस्येत्युक्तत्वात् आरामादिर्न गृह्यते तस्मादर्धखार्यां भवा इत्यर्धखारीत्यत्र पूर्वसूत्रेणोत्तरपदस्य वृष्णीन्द्रो भवत्येव पूर्वपदस्य तु विकल्पः। एवं सति अर्धखारी भार्या यस्य सोऽर्धखारीभार्य इत्यत्र 'न वृष्णीन्द्रहेतुतद्धितान्तलक्ष्मीररक्तविकारयोरित्यनेन तुल्याधिकरणलक्ष्म्यां परे पूर्वस्य पुम्वद्भावनिषेध एव वृष्णीन्द्रहेतुतद्धितान्तत्वात्, अन्यथा यद्यनेन उत्तरपदस्य वृष्णीन्द्रनिषेधः स्यात्तदा पूर्वपदस्यापि वृष्णीन्द्रनिषेधपक्षे वृष्णीन्द्रहेतुतद्धितान्तत्वाभावात् पुम्वद्भावः स्यात् यथा—वैयाकरणभार्य इत्यादौ॥

२०९२। नञः। वृत्तिमाह—उत्तरस्येति। नञ उत्तरेषां शुच्यादिपञ्चानामादिसर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे पूर्वस्य तु नञो वा स्यात्।

उत्तरपदस्य वृद्धिरेव—आशौचम्, अशौचम्; आकौशलम्, अकौशलम्; आनैपुणम्, अनैपुणम्। अनीश्वराक्षेत्रज्ञौ तत्पुरुषावेव ब्राह्मणादित्वाद्भाव-षणन्तौ—आनैश्वर्यम्, अनैश्वर्यम् ॥ २०९२ ॥

२०९३। नञो यथातथ-यथापुरयोः पर्यायेण।

अयाथातथ्यम्, आयाथातथ्यम् ॥ २०९३ ॥

वृष्णीन्द्रो निवृत्तः।

---

पूर्वस्येत्यनेनात्र नञ् गृह्यते। अन्यथा पूर्वसूत्रात् पूर्वस्य तु इत्यनुवर्तने सति पुनरत्र पूर्वस्येति ग्रहणमनर्थकं स्यात्। अशौचमिति अशुचेरिदमित्यर्थे तस्येदमित्यनेन केशवणः। एवमकुशलस्येदमनिपुणस्येदमिति। अनीश्वरेति तत्पुरुषावेव तत्पुरुषसिद्धावेव ब्राह्मणादित्वात् ब्राह्मणादिगणपठितत्वात्, तेन न ईश्वरः अनीश्वरस्तस्य भाव इत्यर्थे आनैश्वर्यादिद्वयमिति। तथा अक्षेत्रज्ञस्य भावः, आक्षैत्रज्ञम् अक्षेत्रज्ञम्। अनयोरेवकारेण तत्पुरुषेऽवधारणात् अशुच्यादीनां पीताम्बरसिद्धानामपि आशौच्यमित्यादिकं स्यात्। न विद्यते शुचिर्यस्य सोऽशुचिस्तस्येदमित्यादौ तु पूर्ववत्। 'भावे तु त्वतापौ ब्रह्मलक्ष्म्यामि'त्यनेन अशुचित्वमशुचिता इत्यादि स्यात् ॥

२०९३। नञो। नृसिंहे परे नञः परयोर्यथातथ-यथापुरयोरादिसर्वेश्वरस्य नञश्च पर्यायेण क्रमेण वृष्णीन्द्रो भवति। यर्हि यथातथयथापुर इत्येतयोर्वृष्णीन्द्रस्तदा नञो न भवति, यर्हि च नञो वृष्णीन्द्रो भवति तदा यथातथ-यथापुरशब्दयोर्नेति पर्यायार्थः। अयथातथमित्यस्य भावः। अयाथातथ्यमित्यादिद्वयम्। तथा अयाथापुर्यम् आयथापुर्यमिति च। यथातथा-यथापुराशब्दौ यादृच्छादिगणपाठात् कृतकृष्णपुरुषसमासौ ततो नञ्कृष्णपुरुषसिद्धौ। तथाचोक्तं भाष्ये,—अयथातथाभावः अयाथातथ्यमित्यादिः। अस्मिन् पक्षेतु यथातथादिद्वयोर्वामनदर्शनोच्चारणं सूत्रे वेदवद्व्यवहारात्। यद्वा, अनतिक्रमे इत्यनेनाव्ययीभावनिष्पन्नावेतौ त्वनतिक्रमार्थमत्र दुष्पष्टमिति वृद्धोक्तानुसारेण यथातथमिति सत्यव ; यथापुरमिति पुरातनवचनमिति स्वीकार्यम्। अव्ययीभाव-

२०९४। संसारस्य हरो भगवति।

प्रभुरयम् ॥ २०९२ ॥

२०९५। नान्तस्य, न त्वनीपोः।

आग्निशर्मिः। नेह—सामनः, सुप्रेम्नी ॥ २०९५॥

---

स्याव्ययत्वं ब्रह्मत्वञ्चेत्यनेन वामनदर्शनोच्चारणमविरुद्धम्। पुनर्न यथातथमित्यनेन नञ् कृष्णपुरुषसिद्धाभ्यां ताभ्यां ब्राह्मणादेराकृतिगणत्वात् भावे नृसिंह-यः। ननु भावविहितनृसिंह-यान्ताभ्यां याथातथ्य-याथापुर्याभ्यां पश्चान्नञ् समासे कृते अयाथातथ्यमयाथापुर्यमिति। तथा अयथातथा अयथापुराशब्दाभ्यां भावविहितनृसिंह-ये कृते आयथातथ्यमायथापुर्यमिति सिध्यत्येव किं सूत्रेण। भद्रम्। तदेतत् कृतं स्पष्टार्थम्। इति वृष्णीन्द्रप्रकरणं समाप्तम्॥

२०९४। संसा। भगवति भगवत्संज्ञके परे यथास्वं नाम्नः संसारस्य हरो भवति। अन्त्यसर्वेश्वरादिवर्णाः संसारसंज्ञा इत्युक्तमित्यन्तभवसर्वेश्वरसहितो यावदन्त्यविष्णुजनवर्णः संसारसंज्ञस्तस्य हरो भवतीत्यर्थः। अकृष्णस्थानसर्वेश्वरो भगवदित्यप्युक्तं नामाधिकारसाम्यात् यद्यप्यनेन कृष्णस्थानाद्भिन्नस्य स्वादेस्तद्धितस्य च सर्वेश्वरस्य भगवत्संज्ञत्वं लभ्यते। तथापि यश्चेत्युक्तेन स्वादेरेवाकृष्णस्थानसर्वेश्वरस्य भगवत्संज्ञत्वं न तद्धितस्येति मन्दधियामाशङ्का स्यात्। तन्निरासार्थो यश्चेत्यत्र उक्तसमुच्चयचकार इति। ननु यद्येवं तर्हि शसादौ राजशब्दस्य संसारहरः कथं न स्यात् तत्राकरणात्। केवलैकाधिकारव्यापित्वात् प्रभुनामायमधिकारः॥

२०९५। नान्त। भगवति परे नान्तस्य संसारहरो भवति। अनीपोस्तु परयोर्नतु भवति। अग्निशर्मणोऽपत्यं पुमानित्यर्थे बाह्वादित्वात् नृसिंह-इरिति अग्निशर्मिः। नेहेति, अनीपोर्वर्जनादिति शेषः। साम्ना कृत इति साम्नोऽयमिति वा केशवणः। सामनो यागादिरिति। किञ्च, 'षन्-हन्-धृतराज्ञामि'त्यनेनानोऽरामहरनियमो वक्ष्यते, तेनात्र

२०९६। अह्नष्ट-खरामयोरेव।

द्व्यहः। 'ख ईनः' ; द्व्यहीनः। नियमान्नेह—आह्निकम् ॥२०९६॥

२०९७। इनो नानपत्याणि, न चेपि, न च गाथि-विदथि-केशि-गणि-पणि-सत्सङ्गादीनाम्।

---

व-म-सत्सङ्गहीनस्येत्यनेनारामहरो न स्यात्। सुप्रेम्नः स्त्रीति शोभनः प्रेमाऽस्या वेति गौरादित्वादीप् सुप्रेम्नीति व-म-सत्सङ्गहीनस्येत्यनेनानोऽरामहरः ॥

२०९६। अह्नः। ट-खरामयोरेव परयोरहन्शब्दस्य संसारहरो भवति नान्यस्मिन्। द्वयोरह्नोः समाहार इत्यर्थे 'राजाहःसखिभ्यः' इत्यनेन टः द्व्यह इति। द्व्यहीन इति द्वयोरह्नोर्भूतो भावी वा इत्यर्थे खो वक्ष्यते तस्य ईनश्च। आह्निकमिति अह्ना निर्वृत्तमित्यर्थे माधवठः ॥

२०९७। इनो। न अपत्यम् अनपत्यम् अनपत्यञ्च तत् अण् चेति अनपत्याण् तस्मिन्। अपत्याणि अनपत्यभिन्नाणि ईपि च परे इन इनन्तस्य संसारहरो न भवति। अनपत्याणि ईपि च पुनर्गाथ्यादीनामीनन्तानां संसारहरप्रतिषेधो न भवति। तथाहि, नान्तस्येत्यत्र यौ विधिनिषेधौ विहितौ तयोरेव नियमोऽयं इनन्तस्यापि नान्तत्वात् सामान्याणि परे प्राप्त-निषेधनमनपत्याणि नियमनं ज्ञेयमपत्याणस्तु भगवत्सञ्ज्ञत्वात् नान्तस्येनैन तस्मिन् इनः संसारहरः स्यात्। तथानपत्याणि इनः संसारहरनिषेधादपत्याणि नान्तस्येति संसारहरः स्यात्। तथैवेपि च परे सामान्यस्यानः साहचर्यात् पूर्वसूत्रात् प्राप्तनिषेधेऽपि इनन्तस्य संसारहरः स्यादितित्याशङ्कानिरासार्थं पुनरीपि चेत्यपि कृतं तेन ईपि च इनः संसारहरो न स्यात्। एवं सति गाथ्यादीनामपीनन्तत्वात् एतादृशविधानं स्यादित्यत आह न च गाथीति। अनपत्याणि ईपि च इनो विहितो यो विशेषः प्रतिषेधः स तु गाथिप्रभृतीनां न स्यादिति नियमप्रतिषेधस्यावखण्डनेन पारिशेष्यात् नत्वनीपोरित्यनेन विहितः सामान्यप्रतिषेधोऽपि गाथ्यादीन्

मैधाविनं कर्मः, मेधाविनी ; गाथिनः पुत्रः ; एवं पाणिनः ; स्राग्विणः। इह तु स्यात्—मैधावः पुत्रः ॥ २०९७ ॥

२०९८। मनश्च न तयोर्न च वर्मणः।

प्रति प्राप्नोति। अतएव गाथिविदथ्यादीनामपत्याणि ईपि च परे संसारहरो न स्यादित्यवधारितमिति। किञ्च, सत्सङ्गादीनामित्यत्र सामान्यसत्सङ्गादेर्न ग्रहणम्। गाथ्यादिसाहचर्यात्तु इनन्तसत्सङ्गादेर्ग्रहणमन्यथा नत्वनीपोरिति पूर्वसूत्रेणैव निषेधप्राप्तेऽत्र ग्रहणमनर्थकं स्यात्। ननु यदि गाथ्यादीनां पूर्वसूत्रेणैव संसारहरस्य निषेधः सिद्धस्तर्हि इनोऽपत्याणि इस्येव लक्षणं क्रियतां किमनेन वृहदुद्यमेन ? तथा सति अपत्याणि परे इनः संसारहरः स्यात्। नत्वनीपोरित्यनुवर्तनात्तु अपत्यभिन्नाणीपोः परयोरिनो नान्तत्वात सुतरां संसारहरो न स्यात्। सत्यम् उच्यते। भवदुक्तलक्षणेन यथा अपत्याणि इनः संसारहरो नत्वनीपोरित्यनेन निषेधप्राप्तश्च, तथा गाथ्यादीनामपीनन्तत्वादपत्याणि संसारहरः पूर्वसूत्रेण निषेधश्च तथा सत्यनिष्टमासञ्जेत तदेतत् साधुकृतमिति। मेधा विद्यतेऽस्य मेधावी तस्येदमित्यर्थे केशवणः मैधाविनमित्यत्र अनपत्याण् प्रत्ययान्न संसारहरः। मेधाविनः स्त्रीत्यर्थे गौरादित्वादीप् मेधाविनीति। न चेपीत्यनेनात्र संसारहराभावः। गाथिनोऽपत्यं पुमानिति गाथिनः इत्यत्र नत्वनीपोरित्यनेन संसारहरनिषेध इति। पणयतीति ग्रहादेर्णिनिः पणी तस्यापत्यं पुमान् इति पाणिनः। स्रग्विद्यतेऽस्येत्यर्थे मत्वर्थीयविन् तस्यापत्यं पुमानिति स्राग्विण इति। तथा वैदथिनः कैशिनः गाथिन इति। एवं गाथिन इदं गाथिनं कर्म तथा गाथिनः स्त्री गाथिनीत्यादि। इह तु स्यादिति अनपत्याणि निषेधादिति शेषः। मेधाविनोऽपत्यं पुमानिति केशवणः। मैधाव इति नान्तस्य इत्यनेन भगवति संसारहरः ॥

२०९८। मनश्च। पूर्ववदयमपि नियमः। तयोरनपत्याणि ईपि च परे मनश्च मनन्तस्य च संसारहरो न भवति। अपत्याणि तु नान्तस्येत्यनेन पूर्ववत् संसारहरो भवति, पुनस्तयोर्वर्मणः संसारहर-

वैष्णुशर्मणं कुलम्; सुसाम्नी; वैष्णुवर्मणः पुत्रः। इह तु स्यात्—वैष्णुशर्मः पुत्रः ॥ २०९८ ॥

२०९९। सब्रह्मचार्यादिः समूहाद्यणि च, न त्वीपि।

संसारहर इत्येव। साब्रह्मचारम्। नेह—सब्रह्मचारिणी। सब्रह्मचारिन्, पीठसर्पिन्, कलापिन्, कुथुमिन्, तैत्तिलिन्, जाज्वलिन्, लाङ्गलिन्, शिलालिन्, शिखण्डिन्, शूकरसद्मन्, सुपर्वन्, इति गणः। 'न त्वीपि' इति किम्? सुपर्वणी ॥ २०९९ ॥

---

निषेधो न भवतीति नियमप्रतिषेधस्य निवर्तनात् पूर्ववन्नत्वनीपोरिति वर्मणं प्रति सामान्यनिषेधोऽध्यायाति। विष्णुशर्मणः कुलमित्यर्थे तस्येदमित्यनेन केशवणः। वैष्णुशर्मणमिति। अत्रानपत्याणि संसारहरो न स्यात्। शोभनं साम यस्य सा सुसामा तस्य स्त्री सुसाम्नीति। विष्णुवर्मणोऽपत्यं पुमानिति केशवणः वैष्णुवर्मणः इति नत्वनीपोरित्यनेनात्र संसारहरो न स्यात्। विष्णुशर्मणोऽपत्यं पुमानिति वैष्णुशर्मः, तथा सुसाम्नोऽपत्यं पुमानिति सौसामः। इत्यत्र तु नान्तस्येत्यनेन संसारहर इति ॥

२०९९। स ब्रह्म। समूहाद्यणि अपत्याणि च सब्रह्मचार्यादिः संसारहरो भवति ईपि तु न। सब्रह्मचार्यादेरिनन्तत्वात् इनो नानपत्याणीत्यनेनापत्याणि परे सूचितो यः संसारहरः चशब्देनात्र स एव विहित इति। समूहादीत्यत्रादिपदेनानपत्याणि चात्र संसारहर इत्यपि सूचितम्। अतएवात्राणमात्रे संसारहर इति प्रतीयते। पूर्वपूर्वसूत्रेऽणः साहचर्यादीपि संसारहरप्राप्त इति नत्वीपीति कृतमिति। उक्तञ्चान्यैः। सब्रह्मचारिण इमे साब्रह्मचारा एवं पैठसर्पा इति। वृत्तिमाह—संसारेति। उदाहरणमाह—साब्रेति। सब्रह्मचारिणः समूहादिरित्यर्थे केशवणः। साब्रह्मचारमिति सामान्यात् ब्रह्मलिङ्गं, किन्तु साब्रह्मचारं कर्म साब्रह्मचारः पुत्रः समूहश्चेति। सब्रह्मचारी समानव्रतचारिणीति समासपादे उक्तं, सब्रह्मचारिणः स्त्री सब्रह्मचारिणीति। सब्रह्मचार्यादि-

२१००। शुनः सङ्कोच-विकारयोरेव।

शौवः सङ्कोचः, शौवं मांसम् ॥ २१०० ॥

२१०१। अश्मनो विकारे वा।

आश्मः, आश्मनः। तस्येदमणि आश्मन एव ॥ २१०१ ॥

२१०२। चार्मः कोषे।

साधुः। अन्यत्र चार्मणः ॥ २१०२ ॥

२१०३। औक्षमनपत्ये।

साधुः। अपत्ये तु—औक्ष्णो वत्सः ॥ २१०३ ॥

२१०४। आत्माध्वनोरखरामे।

---

गणमाह—सब्रह्मचारिन्निति। सब्रह्मचार्यादय एकादश सब्रह्मचार्यादिगण इति ॥

२१००। शुनः। सङ्कोचविकारयोर्विहितेऽणि परे श्वन्शब्दस्य संसारहरो भवति। विधिप्राप्तौ नियमः निषेधप्राप्तो वाधकश्चायमिति। शुनः सङ्कोचो विकारो वा शौव इत्यादिः। वृष्णीन्द्रस्थानचतुःसनेत्यनेन शुनो द्वारादित्वादौ व इति ॥

२१०१। अश्म। विकारेऽर्थे बिहितेऽणि परेऽश्मनः संसारहरो भवति। अश्मनो विकार इत्यर्थे तस्य विकार इत्यनेन केशवणान्तं आश्म इत्यादिद्वयम्। तस्येदमित्यर्थेऽणि सति ॥

२१०२। चार्म। कोषे वाच्ये चर्मणः कोष इति केशवणेन सह चार्म इति साधुः। अन्यत्र चर्मणा परिवृतो रथश्चार्मण इति ॥

२१०३। औक्ष। तस्येदमित्यादिना अनपत्येऽर्थे विहिताणा सह औक्षमिति साधुः। उभयत्र संसारहरो निपातफलमिति। अक्ष्णोऽपत्यं पुमानिति औक्ष्ण इह तु 'व-म-सत्सङ्गहीनस्ये'त्यनेनानोऽरामहरः ॥

२१०४। आत्म। अखरामे खरामवर्जिते परे आत्मनोऽध्वनश्च

प्रत्यात्मम् ; प्राध्वम् । नेह—आत्मनीनः, अध्वनीनः ॥२१०४॥

२१०५। अनो ये तु भावकर्मणोरेव।

राज्ञो भावः कर्म वा—राज्यम् । नेह—राज्ञोऽपत्यं राजन्यः । 'न तु ये' ( २३६ ) इति निषेधादनोऽरामहराभावश्च ; अध्वानमलं गामी—अध्वन्यः ॥ २१०५ ॥

२१०६। यूनो, न तु भावविहितेऽणि वुरामे च।

यौवः । नेह—यौवनं, यौवनकम् । वुरामस्त्वक उच्यते ॥२१०६॥

२१०७। ब्राह्मो न तु जातौ।

---

संसारहरो । प्रत्यात्ममिति आत्मानं प्रतीत्यनेनाव्ययीभावे सति अनन्ताद्वक्ष्यते, नान्तस्येत्यनेन संसारहरः। प्राध्वमिति प्रगतमध्वानमिति वाक्ये । 'प्रादेरध्वन' इत्यनेनात्राराम इति संसारहरः पूर्ववत् । आत्मनीन इति तस्मै हित इत्यर्थे 'विश्वजनात्मभोगोत्तरपदेभ्यः खरामः' इति । ख ईनः । अध्वनीन इति अध्वनो जातादिरित्यर्थे खरामः ।।

२१०५ । अनो । अपत्यादिवाच्ये भगवति परेऽनोऽनन्तस्य संसारहरो भवन् नान्तस्येत्यनेनैव भवति । भावकर्मणोस्तु वाच्ययोर्विहिते येऽनोऽनन्तस्य संसारहर एव भवति । वाक्योदाहरणादिकं स्वयमेव दत्तम् । राजन्य इति 'राजक्षत्राभ्यां यघरामौ जात्यां, मनोः ष्यषणाविति यः । न तु ये इति व-म-सत्सङ्गहीनस्यानोऽरामहरो भगवति, न तु ये इत्येवं । अध्वन्य इत्यत्रापि 'न संसारहरो भावकर्मणोर्ये' नियमात् ।।

२१०६ । यूनो । भगवति यूनः संसारहरो भवति । भाववाच्ये विहितेऽणि वुरामे च परे यूनः संसारहरो न तु भवति । यूनोऽपत्यं पुमानिति यूनोऽयमिति वा केशवणः यौव इति । यूनो भाव इत्यर्थेऽणकौ यौवनमित्यादिद्वयम् ।

२१०७ । ब्राह्मो । अजातौ वाच्येऽणा सह संसारहरेण ब्राह्म

तस्यान्तु ब्राह्मणः ॥ २१०७ ॥

२१०८। कार्मः कर्मशीले।

अन्यत्र कार्मणः ॥ २१०८ ॥

२१०९। आथर्वणिकादयश्च।

साधवः। अत्राथर्वन्नुक्थादौ—आथर्वणिकः ; जिह्माशिन् शुभ्रादौ —जैह्माशिनेयः ; दण्डिन् हस्तिन् नड़ादौ—दाण्डिनायनः, हास्तिनायनः ; वासिन् तिकादौ—वासिनायनिः। भ्रुणहन्, धीवन्, भावे—भ्रौणहत्यं, धैवत्यम्। एते च तत्तत्प्रत्ययार्थं पठिष्यन्ते ॥ २१०९ ॥

---

इति साधुः। जातौ वाच्ये तु न। ब्रह्मणोऽपत्यं पुमान् ब्राह्म इति, ब्रह्मणो जातिर्ब्राह्मण इति ॥

२१०८। कार्म। कर्मशीले वाच्ये अणा सह कार्म इति साधुः। कर्मणा निर्वृत्तः कार्मण इति ॥

२१०९। आथ। -यथासम्भवार्थे यथाविहितप्रत्ययेनाथर्वणिकादयश्च साधवो भवन्ति। अत्र एषु मध्येऽथर्वन्नुक्थादौ गणे गृह्यते, तेनाथर्बणमधीते वेद वा इत्यर्थे उक्थादित्वान्माधवठः। आथर्वणिक इति। जिह्माशिन् शुभ्रादौ गृह्यते, तस्मात् जिह्माशिनोऽपत्यं पुमानित्यर्थे शुभ्रादित्वान्माधव-ढः जैह्माशिनेय इति। दण्डिन् हस्तिन्नड़ादौ गणे पठ्यते इति दण्डिनो जातादिरित्यर्थे नड़ादित्वान्नृसिंहफः। फ आयनः। दण्डिनायनः। एवं हस्तिनायनः इति। वासिन् तिकादौ गृह्यते, तेन तस्यापत्यं पुमानित्यर्थे तिकादित्वात् फिस्तस्यायनिः वासिनायनिरिति। अत्र सर्वेषु संसारहराभावो निपातनादिति ज्ञेयम्। भ्रूणेति। भ्रूघ्नो भावः घ्निनो भाव इत्यर्थे नृसिंहयस्तस्मिन् परे संसारहराभावो नस्य तश्च निपातफलम्। पठिष्यन्ते पश्चादिति शेषः ॥

२११०। शिरसः शीर्षोऽणि।

स्थौलशीर्षम् ॥ २११० ॥

२१११। शिरसः शीर्षन् ये, केशे तु वा।

शिरसि भवः शीर्षण्यः। केशे तु शिरस्यश्च ॥ २१११ ॥

२११२। अन्तिकस्य कादेर्हरस्तसि वा, तादेश्च तमे।

अन्तितः, अन्तिकतः, अन्तिमः, अन्तितमः, अन्तिकतमः ॥ २११२ ॥

२११३। अव्ययस्यारादादिवर्जम्।

---

२११०। शिरसः। अणि परे शिरसः शीर्ष इत्ययमादेशो भवति। स्थूलं शिरो यस्य स्थूलशिरास्तस्येदमिति केशवणः। शीर्षादेशः अ-इद्वयस्येत्यरामहरः। स्थौलशीर्षमिति ॥

२१११। शिर। अकेशे वाच्ये ये परे शिरसः शीर्षन् इत्ययमादेशो भवति, केशे वाच्ये तु परे वा। शीर्षण्यः मस्तकमणिप्रभृतिः। अनो येतु भावेत्यनेन नियमात् नात्र संसारहरः। केशेत्विति शीर्षण्यः शिरस्यश्चेति। यद्यप्यधिकारसूत्रे सामान्यतः संसारस्येत्युक्तं, तथापि विधानसूत्रेणान्तस्यैव विधिनिषेधात् शिरस्य इत्यत्र न संसारहरः। एवमन्यत्रापि ॥

२११२। अन्ति। तसि परे अन्तिकस्य कादेः कादिवर्णस्य हरो वा भवति। तमे परे त्वन्तिकस्य तादेः कादेश्च हरो वा भवति। कादेस्तादेश्चेत्यत्र तद्गुणसम्विज्ञानपीताम्बरो ज्ञेयस्तेन क-सहितस्य तादिसहितस्य च वर्णस्य हरो भवति। अन्तिकादिति पञ्चम्यास्तस्। अयमन्तिकः अयमन्तिकः अयमन्तिक इत्येतेषां मध्येऽतिशयेनायमन्तिक इत्यर्थे तमो वक्ष्यते।

२११३। अव्य। आरादादि वर्जयित्वाव्ययस्य संसारहरो भगवति।

संसारहरः। सायम्प्रातिकः, पौनःपुनिकः। नेह—आरातीयः, शाश्वतः, शाश्वतिकः ॥ २११३ ॥

संसारहरो निवृत्तः।

## २११४। अ-इद्वयस्य हरः।

'भगवति' इत्यनुवर्तते। 'विष्णुजनात्' ( २१२० ) इति यस्य हरो वक्ष्यते। गार्ग्यः, गार्गी। वलेरयम्—वालेय इत्यादि। एवम् अस्यापत्यम्—इः॥ २११४॥

## २११५। लक्ष्मीप्रत्ययस्य महाहरस्तद्धितमहाहरे।

आमलक्याः फलम्—आमलकम्। तद्धितेति किम्? गार्ग्याः कुलम्—गार्गीकुलम्। महाहरेति किम्? गार्गीत्वम्। 'तद्धित-

---

सायं प्रातर्निर्वृत्ते इत्यर्थे माधवठः। सायम्प्रातिक इति। पुनः पुनर्भव इत्यर्थे आरादिवेत्यर्थे कुशाग्रादित्वादीयः। शश्वद्भव इत्यर्थे केशवण-माधवठौ—शाश्वतः, शाश्वतिकः। इति संसारहरप्रकरणं दर्शितम् ॥

२११४। अ-इ। अश्च इश्च अ-इ तयोर्द्वयम् अ इद्वयं तस्य हरो भवति भगवति परे। एतदेवाह—भगवतीति। हरो वक्ष्यते इति 'विष्णुजनात्तद्धितयस्ये'त्यनेनेति शेषः। गार्ग्य इति गार्गस्य गोत्रापत्यं पुमानिति गर्गादेर्माधवयरामः। एवं गर्गस्य गोत्रापत्यं स्त्रीति गार्ग्य-शब्दादीप्, अ-इद्वयस्येत्यरामहरः ततो यहरः गार्गीति। वलेरयमिति तस्येदमित्यर्थे माधवढस्तस्यैयः। इरिति। एकाक्षरकोषादौ अशब्दो विष्णुवाचीति प्रसिद्धम्, अरामबाह्वादीत्यनेन इर्नृसिंहस्तस्मिन्नरामहरः ॥

२११५। लक्ष्मी। तद्धितमहाहरे सति लक्ष्मीप्रत्ययस्य महाहरो भवति। आमलकमिति फलार्थस्तद्धितहरो वक्ष्यते, तस्मिन् हरे इप्-प्रत्ययहरस्तस्मिंश्च सति 'निमित्तापाये नैमित्तिकस्ये'त्यनेनारामहरापाय इति। गार्गीकुलमित्यत्रान्तरङ्गत्वादेर्महाहरो न तद्धितस्य तेन न स्त्री-

महाहरे' इति परसप्तमी ; तस्मात् अवन्ती, कुन्ती, कुरुरित्यत्र कुर्वादिर्ण्यस्य, 'अवन्तिकुन्ति-' ( २३७९ ) इत्यादिना महाहरस्तु लक्ष्मीप्रत्ययात् पूर्व इति न तस्य महाहरः ॥ २११५ ॥

२११६ । उद्धयस्य गोविन्दो, न तु धातोर्न च स्त्री-प्रत्यये ।

माधवः, वाभ्रव्यः । धातोस्तु 'सुधी-भुवोरियुवौ' ( १९९ ) इत्युव्—स्वायम्भुवम् । 'वर्षापुनर्दृन्'-( २०० ) इति—पौनर्भ्वम् । एवं खालप्वम् । कथं पौनर्भवम् ? 'पुनर्भव'-शब्दोऽप्यस्ति ॥२११६॥

२११७ । उद्धयस्य हरो ढरामे, न तु कद्रुपाण्ड्वोः ।

'ढरामः एयः' ; कामण्डलेयः । नेह—काद्रवेयः ॥ २११७ ॥

---

प्रत्ययमहाहर इति । गार्ग्या भाव इत्यर्थे 'त्वतापौ ब्रह्मलक्ष्म्यामि'-त्यनेन त्वम् । तस्मादिति इत्यत्र इत्यादौ । 'अवन्ति-कुन्ती'त्यादिना सूत्रेण कुर्वादिर्ण्यस्य महाहरस्तु लक्ष्मीप्रत्ययात् पूर्वं प्रागिति हेतोस्तस्य लक्ष्मीप्रत्ययस्य न महाहर इत्यन्वयः ॥

२११६ । उद्ध । प्रत्यये परे उद्धयस्य गोविन्दो भवति । धातो-रुद्धयस्य न तु भवति । स्त्रीप्रत्यये सति उद्धयस्य च न भवतीत्यर्थः । माधव इति । मधोरपत्यं पुमानिति केशवणः । एवं बभ्रोरपत्य-मित्यर्थे माधवयः वाभ्रव्य इति । विपुले नकुले 'विष्णौ बभ्रुर्ना पिङ्गले त्रिषु' इत्यमरः । स्वयम्भुव इदमित्यर्थेऽण् स्वायम्भुवमिति । दृन्निती-त्यनेन पुनर्भवमित्यत्र भुवः व एव पूर्ववदत्राण् । यद्येवं तर्हि कथं पौनर्भवमिति सिद्धान्तमाह—पुनर्भवेति ॥

२११७ । उद्धयस्य । ढरामे परे उद्धयस्य हरो भवति । कद्रू-पाण्ड्वोरुद्धयस्य तस्मिन् हरो न तु भवति । कामण्डलेय इत्यत्र कमण्डलो-रयमित्यर्थे माधवढः । कद्र्वा अपत्यं पुमानिति नृसिंहढः । काद्रवेय इत्यत्र उद्धयेत्यनेन गोविन्दः ।

२११८। जनपद-पाण्डोश्च नृसिंहये।

पाण्ड्यः ॥ २११८ ॥

२११९। सारवैक्ष्वाकहिरण्मयानि।

साधूनि। सरय्वा इदम्—सारवम्। इक्ष्वाकोरपत्यम्—ऐक्ष्वाकः। हिरण्यस्य मयटि हिरण्मयम् ॥ २११९ ॥

२१२०। विष्णुजनात्तद्धितयस्य हरो भगवत्यारामं विना, तिष्यपुष्ययोर्नक्षत्राणि, सूर्यागस्त्ययोरीपि छे च, मत्स्यस्येपि, न राजन्यस्य वुरामे, मनुष्यस्येपि च।

---

२११८। जन। नृसिंहये परे जनपदपाण्डोर्देशनामपाण्डोश्चो-द्वयस्य हरो भवति। पाण्डौ भव इत्यर्थे नृसिंहयः ॥

२११९। सार। सरय्वादित्रयाणां यथासम्भवं सारवादीनि त्रीणि यथावत् प्रत्ययेन साधूनि। सारवमित्यत्र ऊरामस्याव: अययोर्हरश्च निपातनात्। ऐक्ष्वाक इत्यत्रोरामहरो निपातफलम्। हिरण्यस्य प्राचुर्यं विकारो वेति मयटि सति हिरण्मयं निपातनादत्र हिरण्यस्य यरामहरः। अस्य यरामस्य तद्धितत्वाभावात् परसूत्रेणाप्राप्तेऽनेन हरविधानम्। प्रसङ्गात् यरामहरप्रकरणमाह—विष्णित्यादिना ॥

२१२०। विष्णु। आरामं विना भगवति परे विष्णुजनात् परस्य तद्धित-यस्य हरो भवति। यस्येति सारामनिर्देशेन 'अ-इद्वयस्ये'-त्यनेनारामहरे कृते पश्चाद्यरामहर इति प्रक्रियागौरवं वारितम्। तिष्य। नक्षत्रविहितानि परे तिष्यपुष्ययोर्यस्य हरो भवति। सूर्या। ईपि छे च परे सूर्यागस्त्ययोर्यस्य हरो भवति। मत्स्य। ईपि परे मत्स्यस्य यस्य हरो भवति। न राज। वुरामे परे राजन्यस्य यस्य हरो न भवति। मनु। वुरामे ईपि च परे मनुष्यस्य यस्य हरो न भवति। आद्यसूत्रे भगवतीति ग्रहणात् सर्वत्रैव यस्य हरे प्राप्ते सूत्रपञ्चकेषु

गार्गी। विष्णुजनादिति किम्? कैकेयी। तद्धिते किम्? वैद्यस्य भार्या—वैद्यी। 'आराम विना' किम्? गार्ग्यायणः। तिष्येति—तैषः, पौषः। सूर्येति—सूर्यस्य भार्या सूरी। एवम् अगस्ती। सूर्याददेवता-भार्यायामीप् वक्ष्यते (२२८८)—सूरीयः। नामधेयत्वाच्छैषिकश्छः; 'छ ईयः'; अगस्तीयः। कथं 'सौरी, आगस्ती, सौरीयम्, आगस्तीयम्'? सूर्यादिरणन्ताच्छेपौ; अराम-हरः; ततः सूर्यस्यैव यरामोऽयमिति तस्यापि हरः। मत्स्येति—मत्सी; नेह—"मात्स्यो न्यायः प्रवर्तते" (कामन्दकीयनीतिसारः २।४०)। न राजेति—राजन्यकम्। मनुष्येति—मानुष्यकं मानुष्यी॥ २१२०॥

---

नियम इति। गर्गस्य गोत्रापत्यं स्त्री गार्गीति। कैकयदेशे भवः कैकेयस्तस्य भार्या कैकेयीति। वैद्यीति नात्र तद्धितयः किन्त्वौणादिक एव। गार्ग्यायण इति गर्गस्य गार्ग्यस्य वा युवापत्यं पुमानित्यर्थे नृसिंहफः तस्यायनः। तिष्ययुक्ता पौर्णमासी यत्र समासे स तैषः। एवं पुष्ययुक्ता पौर्णमासी यत्र स पौष इति। उदाहरणान्त-राणि वक्ष्यन्ते। सूर्येतीत्यादि सुगमम्। सूर्ये जातादिरिति सूरीय इति। नामधेयत्वादिति नामधेयाद्वा इत्यनेनेति शेषः। पूर्वपक्षयति कथमिति। सिद्धान्तमाह—सूर्यादिरिति। सूर्यस्यापत्यं सूर्यस्यायमित्याद्यर्थे अणन्तादिव सूर्यादेरुत्तरे छेपौ भवतः। तत्पश्चात् अ-इद्वयस्येत्यनेनारामहर एवमनोऽरामे हरे सति निमित्तापाये नैमित्तिकस्येत्यनेन सौर्य ईपित्यादि स्थिते ततः सूर्यस्यैवेत्यत्र सूर्या-देरेवायं यराम इति तस्यापि महाहरः। ननु यद्येवं निमित्तापाये पुनररान्तमासूर्येति तर्हि वृष्णीन्द्रस्याप्यपाये पुनः सूरीत्यादि कथं न स्यात्? उच्यते—सूत्रे प्रत्ययरूपान्निमित्तादिति न्यायेनात्र केशवणस्य हरत्वं न महाहरत्वं यतोऽत्र सूत्रे प्राप्ते भगवतीत्यनेन प्रत्ययरूप-निमित्तत्वम्। तेन अणः स्थानिवत्वान्न वृष्णीन्द्रस्यापायः। अतएवाणा व्यवधानेन सूर्यादेर्यस्य हराप्राप्ते शिष्टप्रयोगसिद्ध्यर्थं, तस्यापि हर

२१२१। ईराम एवानपत्य-यस्य हरः।

तेन साङ्काश्यकः ॥ २१२१ ॥

२१२२। षन्-हन्-धृतराज्ञामेवानन्तानामण्यराम-हरः।

औक्ष्णः, वार्त्रघ्नः, धार्तराज्ञः। नेह—सामनः ॥ २१२२ ॥

२१२३। अद्वय-माभ्यां तदुद्धवाभ्यां विष्णुदासाच्च मतोर्मो वो, न तु यवादेः।

---

इत्युक्तमिति। मत्सीति मत्स्यस्य भार्येत्यर्थे मत्स्येन कृत इत्यर्थे केशवणः मात्स्य इति। राजन्यकमिति राजन्यस्येदमित्यर्थे 'राजन्यादिभ्यो वुर्नृसिंहः'। एवं मानुष्यकम्। मनुष्यस्य भार्या मानुष्यीति ॥

२१२१। ईरा। 'विष्णुजनात्तद्धिते'त्यनेन प्राप्त-यरामहरं नियमयति—ईराम इति। ईराम एव परेऽणप्रत्ययस्य हरो भवति नान्यस्मिन्। सङ्काशस्य भावः साङ्काश्यं तस्येदमित्यर्थे 'राजन्यादिभ्यः' इत्यनेन वुर्नृसिंहः साङ्काश्यक इति। शैषिक-छे तु सङ्काशीय इति। 'नान्तस्य नत्वनीपोंरि'त्यनेन सत्सङ्गहराभावे सति 'व-म-सत्सङ्ग-हीनस्ये'त्यनेन प्राप्तो योऽणोऽरामहरस्तं नियमयति—षन् हनिति ॥

२१२२। षन्। अणि परे अनन्तानां मध्ये षन्-हन्-धृत-राज्ञामेवाणोऽरामहरो भवति नान्येषामिति। उक्ष्णोऽपत्यं पुमानिति औक्ष्णः। एवं वृत्रघ्नो धृतराज्ञोऽपत्यं पुमानित्यर्थे वार्त्रघ्न इत्यादि-द्वयम्। साम्नोऽयमित्यर्थे सामन इति पूर्वमेव दर्शितम्।

२१२३। अद्वय। अद्वयञ्च मश्च तौ अद्वयमौ ताभ्यां, तौ अद्वयमौ उद्धवौ ययोस्तौ तदुद्धवौ ताभ्याम्, अद्वयमाभ्यां तदुद्धवाभ्यां विष्णुदासाच्च परस्य मतु-प्रत्ययस्य मरामस्य वरामो भवति, यवादेरुत्तरस्य तु न भवति। गुणोऽस्यास्तीत्यर्थे सोऽस्यास्तीत्यनेन गुणशब्दात् मतुस्तस्य मस्य वः गुणवान्। एवमुत्तरत्रापि। मालावानित्यारामान्त-

गुणवान्, मालावान्, किम्वान्, पयस्वान्, भास्वान्, लक्ष्मीवान्, कुमुद्वान्। नेह—बुद्धिमान्, न तु यवादेः—यवमान्, ऊर्मिमान्, भूमिमान्, कृमिमान्। 'तसाभ्यां मत्वर्थीया' इति गरुत्मान्, हरित्मान्, विदुष्मान्—एते यवादिषु ज्ञेयाः ॥ २१२३ ॥

---

स्योदाहरणम्। तथा क्रमेण किम्वानिति मरामान्तस्य। पयस्वानित्यद्वय-म-द्वयोद्भवस्य लक्ष्मीवानिति मरामोद्भवस्य। कुमुद्वानिति विष्णुदासाच्चेत्यस्य। यवादेस्तु प्राप्ते निषेध इति सूचयति—नेहेति। यवमानित्यत्राद्वयान्तात् प्राप्ते निषेधः। ऊर्मिमानित्यादौ मरामोद्भवत्वेन प्राप्ते निषेध इति। विष्णुदासाच्चेत्यनेन प्राप्ते निषेधस्योदाहरणं दर्शयति—तसाभ्यामित्यनेन। तसाभ्यां मत्वर्थीयाः प्रत्ययादिवदिति वक्ष्यते, इति मत्वर्थीयानां यादिवत्वं ज्ञेयम्। 'पूर्वस्य विष्णुपदवत्वं स्वादितद्धितयोरयसर्वेश्वराद्योरि'त्यनेन पूर्वस्य विष्णुपदवत्वविषये यादिसर्वेश्वराद्योः स्वादितद्धितयोर्वर्जनात् यादिवत्वेन तेषु मत्वर्थीयेषु परेषु पूर्वस्य विष्णुपदत्वाभाव इति। तेन गरुत्मानित्यादीनां तरामसरामयोः स्थाने 'विष्णुदासो विष्णुपदान्ते' इत्यादिना दरामादयो न स्युरिति। यथा गरुत् पक्षमस्त्यस्येत्यर्थे गरुच्छब्दात् मतुः। अस्य यवादित्वात् विष्णुदासाच्चेत्यनेन मतोर्मो वो न स्यात्। यादिवत्वात् मतौ परे 'विष्णुदासो विष्णुपदान्ते' इत्यनेन तरामस्य दरामोऽपि न स्यात्। 'नित्यं हरिवेणुविधिः प्रत्ययहरिवेणावि'त्यनेन नरामश्च न स्यात्? गरुत्मानिति। एवं हरित्मान्। विद्वानस्त्यस्येति विदुष्मानित्यत्रतु 'ध्वंसु श्रंसु वस्वनडुहामि'त्यनेन सरामस्य प्राप्तदरामाभावः। मतोर्मरामस्य वरामाभावश्च पूर्ववत्। ननु मत्वर्थीयानां यादिवत्वात् तद्धिते यश्चेत्यनेन प्राप्तभगवत्सञ्ज्ञके मतौ विदुषो वस्य उः कथं न स्यात्? उच्यते—मत्वर्थीया यादिवदित्यनेनातिदेशात् आतिदेशिकं कार्यं क्वचिद्व्यभिचरति च, अतएव मत्वर्थीयानां यादिवत्वं नतु यरामत्वमेवेति मत्वादीनां भगवत्संज्ञत्वाभावादत्र मतौ परे 'वसोर्वस्ये'त्यनेन विद्वस्शब्दस्य वस्य उर्न स्यादिति। एते यवादयः विद्वसन्ता यवादिषु ज्ञेया इति एभ्यो मतोर्मो वा न स्यादिति भावः॥

२१२४। मरुत्वान् ककुद्वान्।

साधू। एवं ककुद्वती॥ २१२४॥

---

२१२४। मरु। यथासम्भवं मरुत्वान् ककुद्वानिति द्वौ साधू भवतः। एवं ककुद्वती च साधुर्भवतीत्यर्थः। मरुत ऊनपञ्चाशत् वायवोऽस्य सन्तीत्यर्थे मरुच्छब्दान्मतुः। विष्णुदासाच्चेति मतोर्मोव इति मरुत्वान् इन्द्रः। ककुदं तालु अस्यास्तीत्यर्थे ककुदशब्दान्मतुः। ककुदस्य ककुदवस्थायामित्यनेनावस्थायां गम्यमानायां ककुदस्य ककुत् इति तान्तादेशे कृते मतोर्यादिवत्वात् पूर्वस्य विष्णुपदत्वाभावे तरामस्य दरामो न स्यादिति मतौ तरामस्य दरामभावार्थं निपात्यते। एवं ककुदमस्त्यस्या इति ककुद्वती। ननु यद्येवं तर्हि ककुद्वानित्येव निपात्यतां किं मरुत्वानिति निपातेन विष्णुदासाच्चेत्यनेन यादिवत्वादित्यनेन च पूर्ववत् सिद्धत्वात्, मैवम्। यथा ककुद्वानित्यत्र तरामस्य दरामस्तद्वन्मरुत्वानित्यत्रापि स्यादिति मन्दधियामाशङ्का स्यात्। तन्निरासार्थमेतदपि निपात्यते इति सर्वमनवद्यम। एतद्वाग्विलाशमात्रं वस्तुतस्तु स्पष्टतार्थमिदम्। एतदुपलक्षणं शिष्टप्रयोगानुसारेण यथासम्भवमन्यदपूह्यम्। किञ्चात्रैवोभयनिपातनार्थं ककुदस्य ककुदिति तान्तमादेशनीयम्। समासकार्ये तु दान्तमन्यथा औप्रभृतौ पूर्णककुदौ इत्यादिर्न स्यादिति। मरुत्वान् ककुद्वानित्यत्र मरुत्मान् ककुद्मान् साधू। एवं ककुद्मतीति च पाठः कृचित् पुस्तके दृश्यते। तथा सति विष्णुदासाच्चेत्यनेन प्राप्तो यो मतोर्वरामस्तदभावो निपातफलम्। तथा ककुद्मानित्यत्र 'ककुदस्य ककुदवस्थायामि'त्यनेन ककुदस्य तान्तादेशे तरामस्य दरामश्च निपातफलम्। किन्त्वेतन्न बहुसम्मतमिति। ननु ककुदस्य तान्तादेशे कृते, एवं मरुत्वानित्यादौ च 'नित्यं हरिवेणुविधिः प्रत्ययहरिवेणावि'त्यनेन हरिवेणुः कथं न स्यादिति वाच्यं न च हरिवेणौ हरिवेणुर्वेत्यस्यायं नियमः, अतोऽस्यापि विष्णुपदान्तविषयत्वात् प्रवृत्तिर्न स्यात्॥

२१२५। अहीवत्यादयः संज्ञायाम्।

साधवः। अहीवती, कपीवती, मुनीवती, मणीवती ॥२१२५॥

२१२६। अष्ठीवदादयश्च।

अष्ठीवान्; 'अस्थि'शब्दस्य 'अष्ठी'भावः। अष्ठीवान्नाम ग्रामः। चक्रीवान्; 'चक्रशब्दस्य 'चक्री'भावः। चक्रीवान् गर्दभः। कक्षीवान् इत्यादिः ॥ २१२६ ॥

२१२७। चतुर्भुजान्तादिसन्तात्तान्ताद्दोषश्च ठस्यः, कः, न तु शश्वदादेः।

नैषादकर्षुकः, पैत्रिकः, सार्पिष्कः, धानुष्कः, औदश्वित्कः; दोर्भ्यां तरति—दौष्कः। शश्वदादेस्तु—शाश्वतिकः॥ २१२७ ॥

२१२८। भ्वादेशादिमेयसोस्त्वादिहरः।

---

२१२५। अही। संज्ञायां वाच्ये मतोर्वरामादेशेन तथा पूर्वपदान्तत्रिविक्रमेण च सहाहीवत्वादयः प्रयोगाः साधवो भवन्ति। अहिरस्त्यस्या इति, मुनिरस्त्यस्या इति, मणिरस्त्यस्या इति, एते संज्ञाविशेषाः॥

२१२६। अष्ठी। तथा अष्ठीवदादयश्च साधवो भवन्ति। अस्थ्यस्येत्यर्थे अष्ठीवानिति साधनप्रकारस्तु स्वयमेवोक्त इति। चक्रमस्यास्ति चक्रीवानिति। कक्षमस्यास्तीति कक्षीवान् पूर्ववत्। इत्यादीत्यादिपदेन यथासम्भवमूह्यम्॥

२१२७। चतु। चतुर्भुजान्तादिभ्यः परस्य ठस्य को भवति। शश्वदादेरुत्तरस्य तु ठस्य को न भवति। निषादकर्ष्वा जितः निषादकर्षूमर्हतीति वा निषादकर्षुक इति ऊरामस्य वामनो वक्ष्यते। पितुरागतः पैतृक इति। सर्पिषा संस्कृतः संसृष्टो वा सार्पिष्क इति। धनुषोऽयं धानुष्क इति। उदश्विता संसृष्टः औदश्वित्कः। शश्वत् अर्हति शाश्वतिकः इति॥

२१२८। भ्वादे। भ्वादेशात् बहोर्भूरुपादेशादुत्तरयोरिमेयसो-

'वहोर्भूः' ( ९११ ), भूमा—भूयान्। 'भूतो युट् (९१२) इष्ठेः—भूयिष्ठः ॥ २१२८ ॥

२१२९। ऋरामस्य रो ये।

पित्र्यम् ॥ २१२९ ॥

२१३०। अनन्तस्य वामनः के, न तु कपि, आपः कपि वा।

ज्ञका, गोपिका, वधुका, ग्रामणिकः, नैषादकर्षुकः। आपः—बहुरमकः, बहुरमाकः ॥ २१३० ॥

---

रादेर्हरो भवति। वहोर्भाव इत्यर्थे 'पृथ्वादिभ्य इमनिर्वे'त्यनेन इमन्। 'क्षिप्रस्य क्षेपः' इत्यनेन वहोर्भूर्णीष्ठेमेयःसु। 'तत् करोति तदाचष्टे' इत्यर्थे णिरित्युक्तम्। गुणप्रकर्षे इष्टेयसू वक्ष्येते। भूमा इति 'नान्तधातुर्वजिते'ति त्रिविक्रमः। 'राधाविष्णुजनाभ्यामि'ति सोर्हरः। 'नामान्तस्ये'ति नस्य हरः। अयं बहूनां प्रकर्ष इत्यर्थे ईयसुः। 'भूतो युट्, तथा प्रशस्यस्य श्रज्यावि'त्यनेन णीष्ठेयःसु भूतो युट्। भूयेयसु इति स्थिते युटः टित्वात् 'ठिदागमः परसम्बन्धी'त्यनेन परसम्बन्धित्वात् भवादेशादित्यनेन युटा सह ईयस ईरामस्य हरः। अचश्चतुर्भुजानुबन्धानाञ्चे'ति नुम्, नान्तधातुर्वजितसत्सङ्गेति त्रिविक्रमः, सोर्हरः। सत्सङ्गान्तस्येति सहरः भूयानिति। ननु यदीयसौ परे युटः स्थितिरेव नास्ति, तर्हि भूतो युड़ित्यत्र ईयसुग्रहणेन किम्? मैवं, यद्यपि 'भूतोयुड़ि'त्यत्रेयसो प्रयोजनं नास्ति, तथापि प्रशस्यस्य श्र-ज्यावित्यादौ प्रयोजनमिति नेयसुग्रहणमनर्थकम्। भूत इति यद्यपि णीष्ठेयःसु भूतो युट् तथाप्यत्र इष्ठे एव युटः प्रयोजनादिष्ठे इति स्पष्टार्थमुक्तम्। अयं बहूनां श्रेष्ठ इत्यर्थे भूयिष्ठ इति ॥

२१२९। ऋरा। ये परे ऋरामस्य रो भवति। पितुरागतमित्यर्थे पितुर्यरामश्चेत्यनेन यः। चकारात् माधवठः। इति पैत्र्यं पैत्रिकञ्च ॥

२१३०। अन। के परे अनन्तस्य अनन्तसङ्गस्य वामनो भवति, कपि परे तु न। कपि परे आपो वामनो वा स्यात् के पुनर्नित्यं

२१३१। तर-तम-कल्प-चेलेषु ब्रुवादिष्विव वामनः।

ततो ब्राह्मणिब्रुवेत्यादिवद् ब्राह्मणितरेत्याद्युदाहरणीयम् ॥२१३१॥

२१३२। सर्वाव्ययाभ्यामेकवर्जं संख्यासंख्यातैक-देशेभ्यश्चाहःशब्दस्याह्नः समाहारवर्जं टे।

---

स्यात्। ज्ञकेति। जानातीति वाक्ये 'ईशोद्धवकिरतिगिरती'त्यनेन क-प्रत्ययान्तः ज्ञः तस्माल्लक्ष्म्यामाप् ततो ज्ञा एवेति वाक्ये स्वार्थे कस्त-स्मादप्याप्। गोप्येव गोपिका वधुरेव वधूकेति उभाभ्यां स्वार्थिक-प्रत्ययान्तत्वादाप्। केवललक्ष्मीप्रत्ययान्तस्यानन्तस्येत्याशङ्कानिरासार्थ-मुदाहरणान्तरमाह—ग्रामणिक इति। ग्रामं नयतीति अग्रामणीस्ततो ग्रामणीरेवेति ग्रामणिकः। ज्ञादिचतुर्भोऽज्ञातादिष्वर्थेषु क इत्येके। निषादं कर्षतीति कृषादेरूङित्यौणादिक ऊङ् निषादकर्षूकस्ततस्तदर्ह-तीति माधवठः। चतुर्भुजान्तादिति ठस्य कः नैषादकर्षुक इति। कपि तु—प्रियग्रामणीक इत्यादिः। बह्वः रमा यस्येति पीताम्बरे कप् बहुरमक इत्यादिद्वयम्। अनन्तस्येति किम्? गोका, नोका इति ॥

२१३१। तर। ब्रुवादिषु परेषु उक्तपुरुषोत्तमस्यैवन्तस्यानेक-सर्वेश्वरस्य यथा वामनो भवति तथैव तरतमकल्पचेलेषु परेष्वपि, तथाविधस्योक्तपुरुषोत्तमस्य वामनो भवति। ततो हेतोरन्यत् स्पष्टम्। इयं ब्राह्मणी, इयं ब्राह्मणी इत्यनयोर्मध्ये प्रकर्षेयं ब्राह्मणीति ब्राह्मणितरा, एवं वैष्णवितरेत्यादि ॥

२१३२। सर्वा। टे परे सर्वाव्ययाभ्यामुत्तरस्याहःशब्दस्याह्न इत्यय-मादेशो भवति। समाहारं वर्जयित्वा टे तु परेऽहःशब्दस्याह्नादेशो भवन्, एकं वर्जयित्वा संख्यासंख्यातैकदेशेभ्यः परस्यैव भवति। 'अह्लष्ट-खरामयोरेवे'त्यनेन संसारहरे प्राप्ते पुनर्नियमोऽयम्। एकवर्जं समाहारवर्जमित्यनयोः परत्रैवान्वयः। संख्यायाः समाहारत्वात् यावत् सम्भवस्तावन्न्यायेन। सङ्ख्या गणनमात्रं सङ्ख्यातस्तु गणित इति भेदः।

सर्वाह्णः, निरह्णः। द्वयोरह्नोर्भवः, भवार्थप्रत्ययस्य लुक्, द्व्यह्नः, संख्याताह्नः, पूर्वाह्णः। एकवर्जमिति किम्? एकाहः। समाहारवर्जमिति किम्? द्व्यहः॥ २१३२॥

## २१३३। संख्या-वि-सायेभ्योऽह्नस्याहन् वा ङौ।

सर्वाह्ण इति सर्वेषामहः सर्वञ्च तदहश्चेति वा विग्रहे समासः स्वादिहरः 'राजाहःसखिभ्यः' इति टस्तस्मिन्नह्नादेश इति। 'रात्राह्नाहाः पुंसी'त्यनेन पुंलिङ्गतेति। 'अरामान्तादह्नस्ये'त्यनेन णत्वम्। निरह्ण इति निर्गतोऽह्न इति विग्रहे, 'निरादयः पञ्चम्या' इत्यनेन समासे सति पूर्ववत् टप्रत्ययः। अन्तरङ्गत्वादेर्महाहर इति सर्वत्रैव समासान्तप्रत्यये सति योज्यम्। निरह्णा रात्रिरिति रक्षितः तन्मतेऽत्र पुंलिङ्गता व्यभिचरतीति। द्वयोरह्नोर्भव इति विग्रहे 'त्रिरामीतः सर्वेश्वरादिप्राग्दीव्यतीयस्य महाहरोऽनपत्ये' इत्यनेन भवार्थप्रत्ययस्य नृसिंहठस्य लुक् महाहर इत्यर्थः। यथा पञ्चगवप्रिय इत्यत्रोत्तरपदे परे तद्धितालुकि विषये गोष्टस्तद्धित इति टस्तद्वद्भवार्थप्रत्ययस्य महाहरार्थमनपत्यप्रत्ययान्तराकाङ्क्षायां 'राजाहःसखिभ्यः' इत्यनेन विहितो यष्टः सोऽत्र वर्ततेऽतस्तस्मिंष्टे अहःशब्दस्याह्नादेशः। द्व्यह्न इति। समाहारस्तावद्द्विविधः—समाहारवाच्ये तद्धितार्थे विषये चेत्युक्तम्। अतोऽत्रेयं व्यवस्था स्वीकार्या। यत्र समाहारवाच्ये समाहारे सति टो भवति, तत्र तस्मिन् टेऽह्नः संसारहरो भवति, यत्र त्वन्यार्थे वाच्ये समाहारे समासान्तरे च सति टो भवति, तत्र तस्मिंष्टेऽहःशब्दस्याह्नादेशो भवतीति। अत्र भवार्थ एव वाच्यो न समाहार इति टेऽह्नादेशः। सङ्ख्याताह्न इति सङ्ख्यातञ्च तदहश्चेति विग्रहे पूर्ववत् टप्रत्ययः पुरुषोत्तमश्च। पूर्वाह्ण इति अह्नः पूर्वमिति। 'पूर्वापराधरोत्तरादीन्यवयविने'त्यनेन समासः। पूर्ववत् टपुरुषोत्तमौ। किमिति एकं यर्हि स्यात्तर्हि किं स्यात्? एकाह इति श्यामरामे। 'अह्नष्ट-खरामयोरेवे'त्यनेन संसारहरः। द्वयोरह्नोः समाहारः द्व्यह इति पूर्वमेवोक्तम्॥

२१३३। सङ्ख्या। ङौ परे सङ्ख्यावाचकात् विशब्दात् सायाच्च

द्व्यह्ने, द्व्यहनि ; व्यह्ने, व्यहनि ; 'ईङ्ग्रोस्तु वा' ( २१६ ) —द्व्यह्नि। एवं सायादपि ॥ २१३३ ॥

२१३४। प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपि, न तु स्वाद्यन्तादापि, क्षिपकादेश्च न।

णकः—कारिका, पाचिका। प्रकारार्थे कः—जटिलिका। प्रत्ययस्थादिति किम् ? शक्नोतीति शका। न त्विति —बहुपरिव्राजका काशी। स्वाद्यन्तत्वमत्र भूतपूर्वां गतिमाश्रित्य। बहुशर्मिका विष्णुभक्तिः इत्यत्र तु केवलाद्वक्ष्यमाण-कवन्तादेवापो, न तु स्वाद्यन्तादितीरामः स्यादेव ॥ २१३४ ॥

परस्याह्नस्याहन् वा स्यात्। व्यह्न इति विगतमह इति विग्रहे 'कुप्रादयो मध्यपदलोपश्चे'ति समासः। ईङ्ग्रोस्तु वेति 'व-म-सत्सङ्गहीनस्यानोऽरामहरो भगवति, ईङ्ग्रोस्तु वे'त्यनेन पक्षेऽरामहरः। द्व्यह्नि एवं व्यह्नि। एवं सायादपीत्यनेन सायमिति मान्तमव्ययं प्रसिद्धमस्तीति सर्वसम्मतं तस्मादन्यमरामान्तमप्यस्तीति सूचितम्। एतत्-सायेभ्य इत्यनेन सूत्रेऽपि दर्शितम्। तेन सायञ्च तदहश्चेति सायाह्नस्तस्मिन् सायाह्ने सायाहनि सायाह्नि चेति। अन्ये तु सायमह्न इति विग्रहे मान्ताव्ययस्यापि शेषो वृद्धादित्यनेन मलोपं कृत्वा सायाह्न इति साधयन्तीति ॥

२१३४। प्रत्य। आपि परे प्रत्ययस्थात् प्रत्ययस्थितात् करामात् पूर्वस्यारामस्येरामो भवति। न तु। स्वादिरन्ते यस्य स स्वाद्यन्तस्तस्मात् प्रत्यस्थात् कात् पूर्वस्यारामस्येराम आपि तु न स्यात्। क्षिप। आपि परे क्षिपकादेश्च प्रत्ययस्थात् कात् पूर्वस्यारामस्येरामो न भवति। णक इति, 'णको लक्ष्म्यां भावे' इत्यनेन 'णकतृणौ कर्तरी'त्यनेन वा णको भवतीति। क्रियते करोतीति वा कारकः पश्चादाप् कारिकेति शास्त्रसमाधानपद्यं, तथा पच्यते पचतीति वा पाचकः पश्चादाप् पाचिकेति प्रकारार्थे कस्तद्धित इत्यर्थः। जटा विद्यतेऽस्य जटिलस्तस्य प्रकारा इत्यर्थे क आप् जटिलिका। शक्नोतीति शक्लृ शक्तौ पचा-

२१३५। ममक-नरकयोश्च वक्तव्यम्।

ममेयमित्यण्; ममकादेशः अजादिपाठात्; मामिका। नरान् कायति—नरिका; कै शब्दे। नरान् कामयत इति, डप्रत्ययादिति च वर्धमानः॥ २१३५॥

२१३६। त्यणत्ययोश्च।

वक्ष्यमाणविकल्पापवादः। दाक्षिणात्यिका, इहत्यिका। क्षिप-

देरत् शकस्तत आप् शका। अत्र प्रकृतेः क इत्यापि पूर्वस्यारामस्य नेराम इति। परिव्रजतीति णकः परिव्राजकः सन्न्यासी बहवः परिव्राजकाः यस्यां सा बहुपरिव्राजका काशीति। स्वाद्यन्तत्वमिति। स्वादेर्भूतपूर्वामतीतपूर्वां गतिं प्राप्तिमाश्रित्यात्र स्वाद्यन्तत्वं गृहीतं, तेन बहवः परिव्राजका यस्यामिति विग्रहे पूर्वप्राप्तोऽन्तरङ्गस्वादिहरं कृत्वा पश्चात्तस्मादाप् इति तस्मिन्नापि कस्य प्रत्ययस्थत्वेऽपि पूर्वस्यारामस्येरामो न स्यादिति भावः। बहुशर्मीति बहूनि शर्माणि सुखाणि यस्यां सा बहुशर्मिका विष्णुभक्तिरित्यत्र तु पीताम्बरे यः कप् प्रत्ययो वक्ष्यते, तस्मात् केवलात् कप् प्रत्ययादाप् न स्वाद्यन्तादिति हेतोरापीरामः स्यादेवेति ज्ञेयम्॥

२१३५। मम। आपि परे ममक-नरकयोश्च कात् पूर्वस्यारामस्येरामः स्यादिति वक्तव्यम्। मम इयमित्यर्थे तस्येदमिति केशवणस्तस्मिन् सति ममकादेशे च कृते अजादिगणपाठादाप् मामिकेति। नरान् कायति शब्दयतीति 'कर्मण्यनुपेन्द्रादि'त्यनेन कः तत आप्, नरिकेति। अत्रोभयत्रापि प्रकृतेः करामत्वादप्राप्ते विधानम्। वर्धमानमतमाह—नरान् कामेति। डप्रत्ययात् डप्रत्ययान्तादाप् इति शेषः। एतन्मते कामयते इति स्वार्थणिङन्तप्रयोगेण कमधातोर्डः संसारस्य हरो डिति नरकस्तस्मादाप् नरिका॥

२१३६। त्यण। आपि परे त्यणत्ययोश्च कात् पूर्वस्य अनन्तस्य वामन इत्यनेन विहितस्यारामस्येरामः स्यात्। वक्ष्येति। अपवाद

कादेस्तु—क्षिपका, ध्रुवका, चटका, उपत्यका, अधित्यका, देवदत्तका ॥ २१३६ ॥

२१३७। उत्तरपदलोपे च न।

देवदत्तैव—देवका ॥ २१३७ ॥

२१३८। तारका नक्षत्रे।

अन्यत्र तारिका ॥ २१३८ ॥

२१३९। अष्टका पितृदैवत्ये काले च।

अन्यत्र अष्टिका खारी ॥ २१३९ ॥

---

इत्यस्मादयमिति शेषः। दक्षिणस्यां भवा इत्यर्थे 'दक्षिणापश्चात्पुरोभ्यो नृसिंहस्त्यः' इति त्यण् दाक्षिणात्या सैवेति कः दाक्षिणात्यिकेति। इह भवा इति 'अमाविक्वेहतसित्रेभ्यस्त्यरामः' इहत्याः ततः स्वार्थे, कः, पूर्वस्य वामन इहत्यिका। क्षिपकादेस्तु रूपं दर्श्यते इति शेषः। क्षिपति या सा क्षिपा सैव क्षिपका। एवं ध्रुवैव ध्रुवका क्षिप प्रेरणे ध्रुगतिस्थैर्ययो-रित्येताभ्यामदन्ताभ्यां क आप्। तथा चटैव उपत्यैव अधित्यैव देवदत्तैवेति ॥

२१३७। उत्त। उत्तरपदस्य लोपे सति प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपि न स्यात्। देवदत्तैवेत्यर्थे क उत्तरपदलोपश्च देवकेति ॥

२१३८। तार। तारैवेत्यर्थे नक्षत्रे वाच्ये तारका इति निपात्यते। अस्मिन्नेव वाच्ये तरतेर्णकः तारका उपचारात् कणी-नियाकाञ्चेत्येके। नक्षत्रादन्यत्र वाच्ये तारयतीति तारा भगवती सैव तारका ॥

२१३९। अष्ट। पितृदैवत्ये कार्ये काले च अष्टका इति साधुः। अष्टका श्राद्धविशेषकालविशेषश्चेति। अशूङ् व्याप्तौ इण्दशोस्तक इति अशधातोस्तकः। 'छशराजे'त्यनेन ष इत्यन्ये। अन्यत्रेति स्पष्टम् ॥

२१४०। वर्णका प्रावरणविशेषे।

अन्यत्र वर्णिका। साधवः॥ २१४०॥

२१४१। यत्तददसाञ्च।

यका, सका, असकौ, यकाभ्यां, तकाभ्याम्, अमुकाभ्याम् ॥ २१४१॥

२१४२। आशिषि।

जीवतात्, जीवका, नन्दका। क्षिपकादिराकृतिगणः ॥२१४२॥

२१४३। सूतकादीनां वा।

सूतका, सूतिका; वर्तका, वर्तिका—शकुनिः। पुत्रका,

---

२१४०। वर्ण। प्रावरणविशेषे वाच्ये वर्णका इति साधुः। वर्णका चन्द्रातपादिः। वर्ण वर्णस्तुतिक्रियाविस्तारगुणवचनेष्विति चौरादिकः ततो णक इति केचिदपि। अन्यत्रेति वर्णिका शास्त्रस्य टीकाव्याख्यात्रीति। साधव इति तारकादय इत्यर्थः॥

२१४१। यत्त। आपि परे यत्तददसाञ्च कात् पूर्वस्यारामस्येरामो न भवति क्षिपकादित्वात्। कतमा भवतीनां ब्राह्मणीत्यर्थे 'बहूनां जातिप्रश्नेऽतमजकावि'त्यनेनाक्। भाविनि भूतवदुपचारात् स्वादिपरताङ्गीकारेणैव 'तदादिसप्तानामि'त्यादिना यथासम्भवं कार्यं विधाय पश्चादाप् यका सकेत्यादयः॥

२१४२। आशि। आशिषि च गम्ये आपि परे कात् पूर्वस्यारामस्येरामो न स्यात् क्षिपकादित्वात्। जीवतादिति जीवका नन्दतादिति नन्दका उभयत्रापि णकान्तादाप्। क्षिपकादिराकृतिगण इत्यन्येऽपि द्रष्टव्याः॥

२१४३। सूत। आपि परे सूतकादीनां कात् पूर्वस्यारामस्येरामो वा भवति। सूतकेति सूतेवेति सूतकादिद्वयम्। वर्तत इति

पुत्रिका ; सत्पुत्रका, सत्पुत्रिका ; वृन्दारका, वृन्दारिका ॥२१४३॥

२१४४। यकपूर्वस्यापश्च वा।

इत्यका, इत्यिका ; चटकका, चटकिका। आप इति किम् ? शशकायते क्विप्, ततः कः—शशकिका नित्यम् ॥ २१४४ ॥

२१४५। धात्वन्तयकपूर्वस्यापो नित्यम्।

सुनायिका। सुष्ठु पच्यते सुपाकिका यवागूः ॥ २१४५ ॥

---

णक आप् वर्तकादिद्वयम्। शकुनिरिति पक्षिविशेषः। अन्यत्र वर्तिका काशिकासूत्रस्य व्याख्या। क्षुद्रा पुत्रा इति निन्द्यार्थे कस्तस्मादाप् पुत्रकेत्यादिद्वयम्। सन् साधुः पुत्रो यस्या इति प्रशस्यार्थे कः सत्पुत्रकेति द्वयम्। प्रशस्तार्थ-कप्रत्ययेन वृन्दारकेति द्वयम्॥

२१४४। यक। यश्च कश्चेति यकौ तौ पूर्वौ यस्य स यकपूर्वः तस्य आपश्च सम्बन्धिनोऽरामस्येरामो वा स्यादापि परे। इत्येवेत्यर्थे कः। 'अनन्तस्य वामनः' इत्यनेनापो वामन इत्यकादिद्वयम्। तथा चटकैवेति चटककादिद्वयम्। इति किं किमर्थम् ? शशक इवाचरतीति क्यङ्। शशकायतेः क्विविति शशकायते इति वाक्ये क्विप्। 'अरामहरो रामधातुके' इत्यरामहरः। 'यवयोर्हरो वले' इति यरामहरः। पश्चात् कापौ शशकिकेति नित्यं पूर्वेणैव सिद्धम्।

२१४५। धात्व। धात्वन्तौ यकौ पूर्वौ यस्य तादृशस्यापो विहितारामस्य आपि नित्यमिरामो भवति। नाययति या सा नाया इत्यत्र कर्तरि ण्यन्तनीधातोः पचादेरत् तस्मादाप्। नाया इति। पच्यते इति 'भावे' इत्यनेन घण् पाका इत्यत्राजादिगणपाठादाप्। ततः शोभना नाया यस्याः शोभना पाका यस्या इति पीताम्बरे 'असमासान्तविधेवा' इत्यनेन पाक्षिकः कप् तस्मिंश्च पूर्वस्य वामने कृते सुनायिका सुपाकिका इति। नीङ् प्रापणे ऋदृङादेर्ङ इति ङः पचेर्घण् ततो बहुव्रीहिः। अकृतसमासान्ताद्वेति क इति जुमरटीकाकृत्, तन्मते सुनायिका इति॥

२१४६। द्वेश्रषयोश्च वा।

द्वके, द्विके ; एषका, एषिका। नञ्पूर्वयोस्तु समासे सति जातस्वादित्वान्न—अद्वके, अनेषका ॥ २१४६ ॥

२१४७। भस्त्राजाज्ञास्वानां जातस्वादीनामपि वा।

भस्त्रका, भस्त्रिका ; अजका, अजिका ; ज्ञका, ज्ञिका ; स्वका, स्विका ; अभस्त्रकेत्यादि च ॥ २१४७ ॥

२१४८। स्वभावलक्ष्मीतः कपूर्वस्यापो वामनश्च वा आपि।

रमाका, रमिका, रमका। एवम् अरमाका इत्यादि। स्वभावेति किम् ? शोभवनिका। तथा अविद्यमाना रमा यस्याः

---

२१४६। द्वेष। आपि प्रत्ययस्थात् कात् पूर्वस्य द्वेश्रषयोश्चारामस्येरामो भवति। कृष्णनामत्वात् प्रशंसादावर्थेऽन्त्यसर्वेश्वरात् पूर्वमक्, ततो भाविनि भूतमङ्गीकारेणैव स्वादौ यथाविहितं कार्यं कृत्वा, तत आपञ्च विधाय द्वके द्विके इत्यादयः। स्वार्थिकाः क्वचित् प्रकृतितो लिङ्गवचनान्यतिक्रम्य वर्तन्ते, इति द्विशब्दादेकवचनमिति केचिदिति तन्मते द्वका द्विका इत्यपि। चान्द्रास्तु द्विवचनमेवेच्छन्तीति नञिति स्पष्टम्। नेति 'न तु स्वान्ध्यन्तादापी'त्यनेन पूर्वरामस्येरामो न स्यादित्यर्थः। न द्वके अद्वके। न एषका अनेषकेति ॥

२१४७। भस्त्रा। जातस्वादीनामजातस्वादिनामपि भस्त्राजाज्ञास्वानां प्रत्ययस्थात् कात् पूर्वस्य कृतवामनस्येराम आपि वा स्यात्। भस्त्रेव भस्त्रका भस्त्रिका। एवमजकादयः। न विद्यते भस्त्रका यस्या इत्यभस्त्रकेत्यादि चेति जातस्वादेरुदाहरणमित्यादीत्यादिनान्यदूह्यम् ॥

२१४८। स्वभा। स्वभावलक्ष्मीतो विहितो यः कस्तत्पूर्वस्यापो वामनस्तद्विधस्याप इरामश्च वा भवति आपि परे। रमैव रमाका रमका एवमिति नास्ति रमा यस्या इति अरमाकेत्यादि। स्वभावेति किं किमर्थम् ? स्वभावलक्ष्मीतः यहि न स्यात्तर्हि किं स्यात्।

सा, अल्पत्वादौ को वाच्यः ( ३११४ )—अरमिका, बहुरमिका, अतिरमिका ॥ २१४८ ॥

इरामो निवृत्तः।

२१४९। वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् त्रादिषु, न तूङ्।

त्र-तसी, तरतमौ, चरट्जातीयौ, कल्पदेश्यदेशीया, रूपपाशौ —त्रादयः। सर्वस्याम्—सर्वत्र। तस्यास्ततः। एवं वैष्णवतरा, वैष्णवतमा, वैष्णवचरी, वैष्णवजातीया, वैष्णवकल्पा, वैष्णवदेश्या, वैष्णवदेशीया, वैष्णवरूपा, वैष्णवपाशा ॥ २१४९ ॥

---

शोभवनैव शोभवनिका इत्यत्र 'अनन्तस्ये'त्यनेन वामनस्ततः 'प्रत्ययस्थात् कादि'त्यनेन पूर्ववदिरामः। तथेति सुगमम्। अल्पत्वादावर्थे को बक्तव्य इति केशवणात् कप्रत्ययान्तादाप् न स्वाद्यन्तादिति पूर्वारामस्येरामः। एवमतिक्रान्ता रमा यया सा अतिरमिका ॥

२१४९। वाच्य। त्रादिषु परेषु वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद्भवति। ऊङ्वाच्यलिङ्गलक्ष्मीस्तु न। त्रादिगणं स्वयमाह–त्रतसीति। त्रादयः पाकान्ता एकादश त्रादयः। सर्वत्रेति 'सप्तम्यास्त्रस्तद्धितः' इति। तत इति 'पञ्चम्यास्तसिरि'ति तस्। एकवचनमत्रातन्त्रं तेन सर्वयोः सर्वासु इति द्विवचनबहुवचनयोरपि सर्वत्रेति। तथा ताभ्यां ताभ्य इत्यत्रापि तत इति। एवमिति पुरुषोत्तमवद्दर्श्यते इति शेषः। वैष्णव्योरियं प्रकर्षेति प्रशंसायां तरस्तरस्तत आप् वैष्णवतरेति। एवमुत्तरत्रापि पश्चादाप् सर्वत्र। वैष्णवीनामियं श्रेष्ठा वैष्णवतमेति। वैष्णवीपूर्वा इति भूतपूर्वार्थे चरट् टित्त्वादीप् वैष्णवचरीति। एवमर्नर्पितचरीं चिरादित्यत्रादत्तपूर्वामिति। वैष्णव्याः प्रकारा इत्यर्थे प्रकारवति जातीय इत्यनेन जातीयः वैष्णवजातीयेति। वैष्णव्या ईषदसमाप्तिरित्यर्थे ईषदसमाप्ताविव्यनेन कल्पदेश्यदेशीया इति वैष्णवकल्पादित्रयमिति। वैष्णव्याः प्रशंसा इति प्रशंसायां रुपः वैष्णवरूपेति। वैष्णव्या निन्दा इति गर्हायां पाशः वैष्णवपाशेति ॥

২১৫০। বহ্বল্পার্থা শসি।

বহ্বীভ্যো দেহি—বহুশো দেহি। এবমল্পশঃ॥ ২১৫০॥

২১৫১। গুণবচনী ত্বতাপোঃ।

পট্ব্যা ভাবঃ—পটুত্বং, পটুতা। গুণবচনীতি কিম্? কঠীত্বম্। কথং 'ব্যভিচারিত্বং যুক্তীনাম্' ইতি? সামান্যোপক্রমেণ। কাতন্ত্রবিস্তরে তু বিশেষঃ। গুণগ্রহণেঽত্র জাতিসংজ্ঞয়োর্নিবৃত্তিঃ

---

২১৫০। বহ্ব। শসি পরে বহ্বর্থা অল্পার্থা চ বাচ্যলিঙ্গলক্ষ্মীঃ পুরুষোত্তমবদ্ভবতি। বহ্বীঃ প্রকারা দেহীতি প্রকারার্থে শস্ বহুশো দেহীতি। এবমন্যাঃ প্রকারা দেহীতি অল্পশো দেহীতি॥

২১৫১। গুণ। ত্বতাপোঃ পরয়োর্গুণবচনী বাচ্যলিঙ্গলক্ষ্মীঃ পুরুষোত্তমবৎ স্যাৎ। বাক্যোদাহরণে দর্শয়তি—পট্ব্যেতি। 'ত্বতাপো ব্রহ্মলক্ষ্ম্যোরি'ত্যনেন সর্বত্রৈব ত্বতাপো বক্ষ্যেতে। অস্মাচ্ছব্দাদ্ভবত ইতি ভাবলক্ষণমপি বক্ষ্যতে। কিমিতি কিমর্থমিত্যর্থঃ। কঠ্যা ভাবঃ কঠীত্বমিতি কঠ্যত্র জাতিবচনী ন গুণবচনীতি ন পুরুষোত্তমবত্ত্বমিতি। কথমিতি। ননু যদি গুণবচন্যা এব পুরুষোত্তমবত্ত্বং যুক্তীনামিত্যত্র ব্যভিচারিত্বমিত্যস্মিন্ কথং পুরুষোত্তমবত্ত্বমিত্যাক্ষেপার্থঃ। সিদ্ধান্তমাহ—সামান্যেতি। সামান্যং জ্ঞাত্বা আরম্ভেণেত্যর্থঃ। তথাহি, যথাকথঞ্চিদ্রূপেণ যা গুণং ব্যক্তি তদ্রূপা গুণবচন্যেবাত্র গৃহ্যতে, ন তু পটুশুক্লাদিবিশেষগুণবচনীতি। কিঞ্চ, যুক্তয়ো ব্যাভিচারিণ্য ইতি প্রথমতো বিশষ্যবিশেষণবোধকালে ব্যভিচারিণীত্যত্র বিশেষণে ব্যভিচারধর্মবিশিষ্টতা প্রতীযতে। অতএব ব্যভিচারিণীনাং ভাবো ব্যভিচারিত্বমিতি পুরুষোত্তমবত্ত্বম্। এবং সর্বত্রৈব পূর্বং বিশেষ্যবিশেষণভাবং কল্পয়িত্বা বিশেষণে ভাবপ্রত্যয়ং বিধায় চ পশ্চাৎ গুণগুণিসম্বন্ধবিবক্ষয়া বিশেষ্যে ষষ্ঠী যদি বাধকান্তরং ন স্যাৎ, ভাবপ্রত্যয়ান্তে তু যথাস্বং প্রথমাদয় ইতি। স্বমতমুক্ত্বা পোষকত্বেন পরমতমপ্যাহ—কাতন্ত্রেতি। কাতন্ত্রবিস্তরঃ কলাপপরিশিষ্টস্তস্মিংস্তু বিশেষো দৃশ্যতে ইত্যর্থঃ। তদেবাহ—গুণগ্রহণ ইতি। অত্র গুণগ্রহণে জাতিসংজ্ঞয়োর্নিবৃত্তি-

क्रियते, न तु पटुशुक्लादि-विशेषप्रतिपत्तिः ; तेन, पाचिकायाः पाचकत्वं, मद्रिकायाः मद्रकत्वम्, अनुकूलिकायाः अनुकूलकत्वम्, आक्षिक्याः आक्षिकत्वं, द्वितीयायाः द्वितीयत्वं पञ्चम्याः पञ्चमत्वं, माथुर्याः माथुरत्वं, श्रौघ्न्याः श्रौघ्नत्वं, चन्द्रमुख्याः चन्द्रमुखत्वम्। दृश्यते च—"कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन" ( शिशुपालवधम् ११।३३ ) ; "कन्याश्रियामनुपभोगनिरर्थकत्वम्" ( शिशुपालवधम् ५।२८ ) ; "वभौ बहुच्छत्रतया

---

र्निवर्तनं क्रियते। अर्थात् कातन्त्रविस्तरकृता पटुशुक्लादिविशेषस्य प्रतिपत्तिः प्रतिग्रहस्तु न क्रियते इत्यर्थः। तेन जातिसंज्ञानिवर्तनपूर्वकविशेषग्रहाभावेण। पाचिकाया भावः पाचकत्वमिति। अत्र या पचति सैव पाचिकेति न जातिसंज्ञे इति पुम्वत्त्वम्। एवं मद्रिकाया इत्यादावपि षष्ठ्यन्तात् भाव इति पदं दत्त्वा वाक्यं विधाय पश्चात् त्वतापाविति। यथा पाचकत्वमित्यादयस्तथा पाचकादयोऽपि ज्ञेयाः। दृश्यते चेति। प्राचीनानामप्येतन्मतं दृश्यते इत्यर्थः। अथात्र स्वमतपरिशेषार्थमुत्थापितानां पद्यघटितप्राचीनोदाहरणानां यथाकथञ्चिदन्वितमात्रं क्रियते समुदायव्याख्यानामभावेन वास्तवार्थग्रहाभावात्। क्वचित् पद्यपादं क्वचित् पद्यार्धं क्वचित् समग्रपद्यमपि वर्तते, किन्तु समग्रपद्यं विना तत्तत्प्रकरणं विना च यथार्थप्रतीतिर्न स्यादिति तदर्थं तत्तत्प्रकरणमनुसन्धेयं बुभुत्सा चेत्। कामिनीति। वल्लभस्य प्रियस्यावलोकनेन दर्शनेन कामिनीनां युवतीनां मण्डनश्रीर्भूषणशोभा सफलत्वं व्रजति प्राप्नोत्येवेत्यन्वयः। अत्र मण्डनश्रीः फलेन सह वर्तमाना तस्याः भावः सफलत्वमिति। अत्रापि मण्डनश्रियाः सफलत्वं धर्म इति गुणगुणिसम्बन्धे गुणिनि षष्ठ्यां प्राप्तायामपि कर्तृत्वविवक्षया प्रथमेति। कश्चित् खेदितः कन्यां दृष्ट्वाह—कन्येति। कन्यायाः श्रियामिदानीमुपभोगाभावेनैव निरर्थकत्वं स्यात्। अत्र कन्याश्रीर्निरर्थका तस्या भावो निरर्थकत्वं किन्त्वधिकरणविवक्षया गुणिनि सप्तमीति। वभाविति ! बहुच्छत्रतयोपलक्षिता पताकिनी बभौ विराजते। पताकिन्यत्र

पताकिनी" ( शिशुपालवधम् १२।३३ ) ; "व्याकोशकोकनदतां दधते नलिन्यः" ( शिशुपालवधम् ४।४६ ) ; "इयेष सा कर्तुमबन्ध्यरूपताम्" ( कुमारसम्भवम् ५।२ ) ; "सा मुमोच रतिदुःखशीलताम्" ( कुमारसम्भवम् ८।१३ ) "यदङ्गनारूप-सरूपतायाः" ( शिशुपालवधम् ३।४२ ) ; निरीक्ष्य मेने शरदः कृतार्थता" ( किरातार्जुनीयम् ४।९ ) ; "वपुरन्वलिप्त परिरम्भसुखव्यवधानभीरुकतया नववधूः" ( शिशुपालवधम् ९।५१ ) ; भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः" ( शाकुन्तलम् ४।१८ ) "शिष्यतां

---

बहुच्छत्रा तस्या भावो बहुच्छत्रता तया 'विशेषलक्षणात् तृतीये'त्यनेनात्र गुणे तृतीयाविधानात् गुणिनि प्रथमेति । व्याकोषेति । नलिन्यः कमलानि व्याकोषकोकनदतां दधते धारयन्तीत्यर्थः । नलिन्यो व्याकोषेण विकाशेन कोकनदा रक्तवर्णास्तासां भावः, व्याकोषकोकनदता ताम् । अत्र गुणिनि कर्तृविवक्षया प्रथमेति । इयेषेति । सा नायिका अबन्ध्यरुपतां कर्तुमियेष इष्टवतीत्यन्वयः । सा अबन्ध्यरूपा तस्या भावोऽबन्ध्यरूपता ताम् । अत्रापि गुणिनि पूर्ववत् प्रथमेति । सेति । सा बाला तदानीं रतिदुःखशीलतां मुमोच जहावित्यर्थः । सा रतिदुःखशीला तस्या भाव इत्यादिः पूर्ववत् । यदिति यत् यस्मादङ्गना नायिका शरदः कृतार्थतां निरीक्ष्य आत्मनोऽपि शरदो रूपसमानरूपतायाः कृतार्थता मेने, तस्मात् शरत् सर्वाङ्गनाभिः प्रार्थ्या इत्यन्वयः । रूपस्य समानं रूपं यस्याः सा रूपसरूपा तस्या भावः रूपसरूपता तस्या रूपसरूपतायाः । शरत् कृतार्था तस्या भावः कृतार्थता तां धर्मधर्मिसम्बन्धेऽत्र षष्ठीति । वपुरिति नववधूर्नवोढ़ा परिरम्भसुखव्यवधानाय भीलुकतया वपुरनुलिप्ता वपुष्यनुलेपनविशिष्टा वर्तते इत्यर्थः । नववधूर्हि परिरम्भणसुखस्य व्यवधानार्थं भयशीलेति लोकप्रसिद्धम् । नववधूः परिरम्भसुखव्यवधानभीलुकाता तस्या भावः परिरम्भसुखव्यवधानभीलुकता तया इत्यत्र 'विशेषलक्षणात् तृतीये'ति गुणिनि कर्तरि प्रथमेति । भर्तुरिति । काचित् भर्त्रा विप्रकृतापि

निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया” (कुमारसम्भवम् ८।१७); “वद्धकोपविकृतावपि रामा चारुतामभिमतामुपनिन्ये” ( किरातार्जुनीयम् ९।६४ ); “धृष्टता रहसि भर्तृषु ताभिः” ( शिशुपालवधम् १०।७१ ); “क्षीवतामुपगतास्वनुवेलम्” (शिशुपालवधम् १०।३४) इति। जातिसंज्ञयोस्तु व्यावृत्तिः। कठीत्वं, गार्गीत्वं, दत्तात्वम्। त्वतापोरिति किम् ? पट्वीमयम्। अनूङित्येव ; पङ्गूत्वम् ॥२१५१॥

---

धिष्टीकृतापि रोषणतया भर्तुः प्रतीपङ्गमो मास्म भूत्। भर्तुः शत्रुतां प्राप्ता नाभूदित्यन्वयः। प्रतीपङ्गम इति विशेणत्वेऽपि केचिच्छब्दाः स्वलिङ्गं न त्यजन्तीत्यनेन पुंलिङ्गत्वं न त्यजति, विप्रकृता रोषणा तस्या भावः रोषणता तयेति पूर्ववत्तृतीयादि। शिष्यतामिति। वद्धकोपेन विकृतौ विकारपन्नायामपि रहसि निर्जने निधुवनोपदेशिनः शृङ्गारोपदेष्टुः शिवस्य शिष्यतां प्रपन्नया प्राप्तया रामा पार्वती चारुतां मनोहरतामभिमतामुपनिन्ये उपजगामेत्यन्वयः। शिष्यायाः भावः शिष्यता ताम्। तथा चार्व्या भावः चारुता तामिति। शिष्यतामिति रामाया धर्मः। चारुतामित्यभिमताया इति पूर्वत्र गुणिनि कर्तरि प्रथमा परत्र गुणिनि तु कर्मणि द्वितीया इति। किञ्च, प्रपन्नया इत्यस्य समानाधिकरणविशेषणत्वे सम्भवे सत्यपि वक्तृवैचित्र्यात् विशेषलक्षणात्तृतीयेति। धृष्टेति। अनुवेलमनुक्षणं भर्तृषु क्षीवतां मत्ततामुपगतेषु ताभिरपि धृष्टता नीतेत्यन्वयः। ता धृष्टास्तासां भावः धृष्टतेति गुणिन्यन्तक्तकर्तरि तृतीयेति यथासम्भवं व्याख्यातमिति। इत्येवं सर्वेषां मतेऽपि जातिसंज्ञाव्यावृत्तिरित्याह—जातीति। कठ्या भाव इति कठीत्वम्। कठीति चरणजातिः। गार्ग्या भाव इति गार्गीत्वम्। गार्गीति गोत्रजातिरिति। दत्ताया भावः दत्तात्वमित्यत्र संज्ञात्वम्। किमिति किमर्थम् ? पट्व्या भाव इति। पट्वीमयमिति भावे मयटि न पुम्वत्त्वम्। अनूङिति त्वतापोः परयोरपि अनूङ् वाच्यलिङ्गलक्ष्मीरेव पुरुषोत्तमवत् त्रादय इत्यादिशब्दग्रहणात्। तेन पङ्ग्वा भावः पङ्गूत्वमिति ॥

२१५२। भगवति, न तु ढरामे।

हस्तिनीनां समूहः—हास्तिकम् ॥ २१५२ ॥

२१५३। भवत्याष्ठच्छरामयोः।

भवत्याश्छात्राः—भावत्काः, भवदीयाः ॥ २१५३ ॥

२१५४। तिथटि च दृश्यते।

बह्वीनां पूरणी—बहुतिथी ॥ २१५४ ॥

निवृत्तं पुरुषोत्तमवत्।

२१५५। वामनात् सस्य षस्त्वादौ, न त्वाख्यातात्।

यजुष्ट्वम्। वामनात् किम्? गीस्त्वं, धस्त्वम्। आख्यातात्तु—भेजुस्तराम् ॥ २१५५ ॥

---

२१५२। भग। भगवति परे वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवद्भवति, ढरामे तु न। हास्तिकमिति समूहार्थे नृसिंहठः। ठ इकः। तस्मिन् पुम्वत्त्वे सति 'नान्तस्ये'त्यनेन ससारहरः। ढरामे तु हास्तिनेयः पुम्वद्भावादत्र 'अ-इद्वयस्ये'त्यनेनेरामहर इति ॥

२१५३। भव। ठछरामयोः परयोः भवत्या इत्यस्याः पुम्वत्त्वं स्यात्। भवत्याश्छात्रा इत्यर्थे भवतीशब्दात् ठछरामौ भावत्का इत्यत्र भवत्याः पुम्वद्भावे कृते 'चतुर्भुजान्तादि'त्यनेन तान्तात् ठस्य कः। भवदीया इत्यत्र तु छ ईयः ॥

२१५४। तिथ। तिथटि च परे वाच्यलिङ्गलक्ष्म्याः पुरुषोत्तमवत्त्वं दृश्यते। बहुतिथीत्यत्र पुरणार्थे तिथट् इति टित्त्वादीप् ॥

२१५५। वाम। त्व आदिर्यस्य स त्वादिस्तस्मिन् परे वामनादुत्तरस्य सस्य षत्वं स्यात्। आख्याताद्वामनात्तु न स्यात्। यजुषः भाव इति त्वप्रत्ययः 'अन्तरङ्गस्वादेर्महाहरः' विष्णुपदान्तत्वात् षत्वापायः, विष्णुसर्गस्तस्य षत्वं-यजुष्ट्वम्। किमिति वामनात् यहि न

२१५६। पुंस्त्वमित्यादौ षत्वनिषेधो वाच्यः।

पुंस्त्वं, पुंस्ता॥ २१५६॥

उक्तानि तद्धितकार्याणि।

२१५७। अथ तद्धिताः।

वासुदेवोऽयम्॥ २१५७॥

२२५८। तत्र समासान्ताः।

महाविभुरयम्॥ २१५८॥

२१५९। अरामः।

प्रभुरयम्॥ २१५९॥

---

स्यात् तर्हि किं स्यात्? गीस्त्वं धूस्त्वमित्यत्र 'इरुरन्तधातोरुद्धवस्ये'त्यनेन त्रिविक्रमः। अतिप्रकर्षेण इमे भेजुरिति भेजुस्तरामिति॥

२१५६। पुंस्त्व। पुंस्त्वमित्यादावुदाहरणे षत्वस्य निषेधो वाच्यः वक्तव्य इति। 'पुमः सरामो हरिकमले'त्यनेन पुमः सरामादेशस्य विरिञ्चित्वात् षत्वे प्राप्तेऽयं विधिः। पुंसो भाव इति त्वतापौ 'सत्सङ्गान्तस्य हरो विष्णुपदान्ते' इत्यनेन सत्सङ्गान्तहरे कृते पुमः मस्य सरामः स च विष्णुचक्रपूर्व इति विष्णुचक्रादिपूर्वश्च। पुंस्त्वं पुंस्ता तथा पुंस्त्वं पुंस्तेति च। इति तद्धितकार्याणि समापितानि॥

२१५७। अथ। अथानन्तरं तद्धितकार्यानन्तरं तद्धिताः प्रत्यया दर्श्यन्ते। अस्य स्वजातीयविजातीयानेकाधिकारव्यापित्वात् वासुदेवतेत्याह—वासुदेवेति॥

२१५८। तत्र। तत्र तद्धितेषु मध्ये समासान्तास्तद्धिता दर्श्यन्ते। अस्य तु वासुदेवान्तरत्वादाह—महाविभुरिति॥

२१५९। अरा। समासान्तेषु मध्येऽरामः समासान्तो दर्श्यते। अस्यैकाधिकारव्यापित्वात् प्रभुनामतेत्याह—प्रभुरिति॥

२१६०। ऋक्पथिपुरपः।

अरामः समासान्तः स्यात्। अर्धमृचः, पुंस्त्वम्—अर्धर्चः। 'नान्तस्य' (२०९५) इति संसारहरः—मथुरापथः। पुरः कृष्णपुरुषे ब्रह्मण्यभिधानम्—यदुपुरम्। त्रिराम्यान्तु—द्विपुरी, त्रिपुरी। अपः—विमलापं सरः॥ २१६०॥

---

२१६०। ऋक्। वृत्तिमाह-अराम इति। ऋक् च पन्थाश्च पूश्च आपश्चेति विग्रहे सर्वेऽपि रामकृष्णा विभाषयैकवद्भवतीति ऋक्पथिपुरप इत्येकवचनान्तम्। समासमात्रे ऋक्पथिपुरप उत्तरस्मात् समासान्तोऽरामः स्यात्। अर्धमृच इति विग्रहे 'अर्धं समविभागे'त्यनेन कृष्णपुरुषसमासे सत्यत् 'अर्धर्चादयः पुंसि चे'त्यनेन विहितं यत् पुंस्त्वं तदेवोक्तं पुंस्त्वमिति। अर्धर्च इति अर्धर्चमित्यपि सूत्रस्थ चशब्दात् मथुरायाः पन्था इति विग्रहे मथुरापथ इति। पुर इति कृष्णपुरुषे समासे पुर इत्यस्य ब्रह्मणि ब्रह्मलिङ्गेऽभिधानं, तेन यदूनां पूः इति वाक्ये यदूपुरमिति। यद्यप्यरामान्तपुरशब्देनैव यदुपुरमिति सिध्यत्येव, तथापि विष्णुजनान्ते न समासे यदुपूररित्यादि स्यात्, तन्निरासार्थं सूत्रे पुरो ग्रहणम्। त्रिराम्यान्त्विति रूपं दर्श्यते इति शेषः। द्वे पूरौ समाहृते इति द्वयोः पुरोः समाहार इति वा द्वीपुरीति। तथा तिस्रः पुरः इत्यादि त्रिपुरीति। ननु पुरः कृष्णपुरुष इति ब्रह्मण्यभिधानात् समासप्रकणेऽरामान्ता त्रिरामीलक्ष्मीरित्यत्र प्रतिपदोक्ता रामान्तत्रिराम्या ग्रहणाच्च द्विपुरीत्यादौ ब्रह्मत्वे प्राप्ते द्विपुरी त्रिपुरीति कथं सिध्यतु इति चेत् केनाप्युच्यते तदैवं वाच्यं, यतः पुरः कृष्णपुरुष इति ब्रह्मण्यभिहितमतएव कृष्णपुरुषेषु मध्ये त्रिराम्याः पृथक् सङ्गत्वेन विशेषत्वात् लाक्षणिकारामान्तत्वेऽपि द्विपुरी त्रिपुरीत्यादावीप् स्यात्। शिष्टप्रयोगानुरोधादन्यत्र तु ब्रह्मत्वमेव तेन चतुष्पथमित्यादिकं स्यादिति सर्वमनवद्यम्। अप इति रूपं दर्श्यते इति शेषः। सूत्रस्यास्य कृष्णपुरुष एव विषय इत्याशङ्कानिरासार्थं पीताम्बरे तु विमलापमित्यादुदाहरति। विमला आपो यत्र तद्विमलापमिति पीताम्बरप्रतीत्यर्थं सर इति विशेष्यमपि दत्तमिति॥

२१६१। अनृचो माणवके, वह्वृचश्चरणविशेषे।

साधू। न त्वन्यत्र—अनृक्कं साम; वह्वृक्कं सूक्तम्; त्रिपुरन्तु क्वचित्। 'वह्वपानि सरांसि'। कथं 'वह्वाम्पि'? समासान्तविधेरनित्यत्वात्। गङ्गाप इत्यादिकं पुंस्येकवचनं चेति पद्मनाभः॥ २१६१॥

२१६२। अनक्षस्य धुरः।

---

२१६१। अनृ। मानवके वाच्ये समासान्तारामेण सह नञ् पूर्वादृचोऽनृच इत्ययं साधुः। चरणविशेषे वाच्ये समासान्तारामेण सह बहुपूर्वादृचो वह्वृच इत्ययमपि साधुः। अतएव वृत्तौ साधु इत्ययमपि साधुः। अतएव वृत्तौ साधू इत्युक्तम्। न विद्यते ऋग् यस्य सोऽनृच इति। मानवक इत्युपनयने प्रवर्तमानवालस्य संज्ञा वटुरिति प्रसिद्धिः। वह्व। वह्वग ऋचो यस्य स वह्वृच इति, चरणविशेष इति जातिविशेष इत्यर्थः। चरणं वेदशाखा इत्यन्ये। मानवकचरणाभ्यामन्यत्र वाच्ये नेत्याह—नत्विति। 'नास्ति ऋक् यस्येति असमासान्तविधेर्वेति कप् अनृक्कमिति। सामेति वेदः। तथा वह्वग ऋचो यस्येति वह्वृक्कमिति। सूक्तमिति। वेदोक्तमन्त्रविशेषः। त्रिपुरमिति। क्वचिन्मते तिस्रः पुरः समाहृता इत्यादिवाक्ये त्रिपुरमिति तु दृश्यते इति शेषः। वह्वग: आपः येषु सरःसु तानि बह्वपानीति। कथमिति। ननु यदि ऋक्पथीत्यनेन समासान्तारामस्तर्हि बह्वाम्पीति कथं सिध्येदित्याक्षेपार्थः। सिद्धान्तमाह—समासान्तेति। गङ्गाया आप इति वाक्येऽरामे कृतेऽत्र षष्ठीकृष्णपुरुषस्योत्तरप्राधान्यात् अप्शब्दस्य नित्यवहुवचनान्तत्वेन गङ्गापा इत्येव भवितुमर्हतीति पुंस्त्वादित्वाय पद्मनाभमतमाह—गङ्गाप इति। गङ्गाप इत्यादिकमुदाहरणं पुंसि पुंलिङ्गे वर्तमानं सदेकवचनञ्च भवतीति पद्मनाभ आहेत्यर्थः॥

२१६२। अन। अनक्षस्य सम्बन्धिनो धुर उत्तरे समासान्ता-

द्विधुरं, कृष्णधुरा। अक्षस्य तु अक्षधूः ॥ २१६२ ॥

२१६३। प्रत्यन्ववेभ्यः सामलोमभ्याम्।

प्रतिसामं, प्रतिलोमम् ॥ २१६३ ॥

२१६४। संख्यातो नदीगोदावरीभ्याम्।

द्विनदं, सप्तगोदावरम् ॥ २१६४ ॥

२१६५। संख्याकृष्णपाण्डूदग्भ्यो भूमेः।

---

रामो भवति अक्षस्य सम्बन्धिनो नेत्यर्थः। द्वयोर्धुरोः समाहार इति द्वे धुरौ यत्र कुले इति वा द्विधुरमिति। कृष्णस्य धूरिति कृष्णधुरेति। धूःशब्दस्य लक्ष्मीत्वात् समासान्तारामप्रत्ययेऽपि लक्ष्मीता अतोऽत्राप्। अक्षस्यत्विति अक्षसम्बन्धिनो रूपं दर्श्यत इत्यर्थः। अक्षस्य धूरिति अक्षधूः नात्रारामः धूरोऽक्षसम्बन्धित्वात्। नाक्षावयवधुर इति जुमरः। अक्षावयवाचिनोऽत्र भवतीति तट्टीकाकृच्च। अतएव तन्मते धूःशब्देनैवाक्षावयवोऽभिधायते इति दृढ़धूरक्ष इति पीताम्बरेऽपि अत्र स्यात्। चक्रसम्बन्धिकाष्ठविशेषः शकटावयवोऽक्ष इति रक्षितः ॥

२१६३। प्रत्य। समासमात्रे प्रत्यन्ववेभ्य उत्तराभ्यां सामलोमभ्यामुत्तरे समासान्तारामो भवति। प्रतिसाममिति साम साम प्रतीत्यव्ययीभावे प्रतिगतं सामेति 'अत्यादयो द्वितीयये'त्यनेन कृष्णपुरुषे प्रतिगतं साम यत्रेति मध्यपदलोपिपीताम्बरे च प्रतिपूर्वसाम्नोऽत्-प्रत्ययः। नान्तस्येत्यनेन संसारहर इति। एवं प्रतिलोममिति ॥

२१६४। सङ्ख्या। सख्यातः सङ्ख्यायाः उत्तराभ्यां नदीगोदावरीभ्यां समासान्तारामः स्यात्। द्वयोर्नद्योः समाहार इत्यादिवाक्ये दिकसङ्ख्ये तद्धितार्थेत्यनेन समाहारेऽत्प्रत्ययः। अ-इद्वयस्येति ईरामहरः द्विनदमिति। एवं सप्तानां गोदावरीणां समाहार इति सप्तगोदावरमिति ॥

२१६५। संख्या। समासमात्रे संख्यावाचकात् कृष्णपाण्डूदक-

दशभूमो देशः ; कृष्णभूमः, पाण्डुभूमः, उदग्भूमः ॥२१६५॥

२१६६। अक्ष्णोऽप्राण्यङ्गे ।

गवाक्षः पुंसि। प्राण्यङ्गे तु—गवाक्षि॥ २१६६॥

२१६७। ब्रह्म-राज-हस्ति-पल्येभ्यो वर्चसः ।

ब्रह्मवर्चसम्॥ २१६७॥

२१६८। अवसमन्धेभ्यस्तमसः ।

---

शब्देभ्यः परस्याः भूमेरुत्तरे समासान्तारामो भवति। दश भूमयो यत्र स दशभूमो देशविशेष इति। कृष्णा भूमिरस्येति कृष्णभूम इति कृष्णा चासौ भूमिश्चेति कर्मधारये कृष्णभूमा इत्येके। कर्मधारयस्योभयपदप्राधान्यात् कृष्णभूमा इत्यावन्तेति। अस्माकमप्येतद्भवतीति ज्ञेयम्। पाण्डुर्भूमिरस्येति पाण्डुभूम इति श्यामरामेतु पाण्डूभूमा इति। उदीची भूमिरस्येति उदग्भूमः। श्यामरामे पूर्ववदुदग्भूमा इति॥

२१६६। अक्ष्णो। प्राणिनोऽङ्गं प्राण्यङ्गं न प्राण्यङ्गं अप्राण्यङ्गं तस्मिन् वाच्येऽक्षिशब्दात् समासान्तारामः स्यात्। गोरक्षीति अत् अ-इद्वयस्येतीरामहरः, ततोऽक्षे परे गरोरव इत्यनेनारामान्तावादेशे कृते गवाक्ष इति। एतदेव समासकार्यं उक्तं गवाक्षो गृहरन्ध्रे इत्यनेन। पुंसीति गवाक्षः पुंसि वर्ततेऽभिधानादिति शेषः। प्राण्यङ्गे त्विति रूपं यथा। गवामक्षि गवाक्षीति। अत्रापि गोशब्दस्यावादेशः किन्त्वक्षिशब्दस्य स्वभावब्रह्मत्वात् समासान्तत्वेऽपि ब्रह्मता॥

२१६७। ब्रह्म। ब्रह्मराजहस्तिपण्येभ्यः परस्मात् वर्चस उत्तरे समासान्तारामो भवति। ब्रह्मणो वर्च इति वाक्ये ब्रह्मवर्चसमिति, एवं राज्ञो वर्च इति वाक्ये राजवर्चसमिति। तथा हस्तिवर्चसं, पण्यवर्चसमिति। वर्चस्तेज इति यत्र पलालरज्ज्वा व्रीहिं वेष्टयित्वा स्थापयन्ति। तत् पण्यमिति धातुपारायणम्॥

२१६८। अव। अवसमन्धेभ्य उत्तरस्मात् तमःशब्दात् समा-

अवतमसम्; "क्षीणेऽवतमसं तमः" (अमरकोषः १।७।३)॥२१६८॥

२१६९। निःश्वोभ्यां श्रेयसः।

निःश्रेयसं, श्वःश्रेयसम्—शिवं, भद्रमिति ॥ २१६९ ॥

२१७०। श्वसो वसीयसः।

श्वोवसीयसम् ॥ २१७० ॥

२१७१। अन्ववतप्तेभ्यो रहसः।

अनुरहसम् ॥ २१७१ ॥

---

सान्तारामो भवति। अव हीनं तमसा, अव हीनं तम इति वा 'कुप्रादयो मध्यपदलोपश्चे'ति समासेऽवतमसमिति। अमरमतेनैवार्थं दर्शयति क्षीण इति। तथा सन्ततं तमसा सन्ततं तम इति वा सन्तमसमिति। अन्धं करोतीति तत् करोतीति तदाचष्टे इत्यन्धशब्दाण्णिः पश्चादन्धयतेः पचादित्वादत् णेर्हरः, ततः अन्धञ्च तत् तमश्चेति श्यामरामेऽन्धतमसममिति यत्तमोऽन्धं करोति तदिहोच्यते। अरामान्तस्तमसशब्दोऽप्यस्ति तेनैवावतमसादिसिद्धेऽपि सूत्रमिदमवतम इत्यादिनिरासार्थम्। तमादेरस इत्यसप्रत्ययान्तेन तमसशब्देन सन्तमसादिसिद्धौ लक्षणमिदं सन्तम इत्यादिरूपनिवृत्त्यर्थमित्यन्येनाप्युक्तम् ॥

२१६९। निःश्वो। निःश्वोभ्यामुत्तरस्मात् तमसः समासान्तामरामः स्यात्। निर्गतं श्रेयस इति 'निरादयः पञ्चम्या' इत्यनेन समासः निश्रेयसमिति। स्वःपूर्वस्यामरमतेनैवोदाहरणमाह—स्वःश्रेयसमिति। स्वः स्वर्गस्य श्रेय इति षष्ठीकृष्णपुरुषः। भद्रमित्यत्रामर इति शेषः ॥

२१७०। श्वसो। श्वःशब्दादुत्तरस्माद्वर्षीयसः समासान्तारामो भवति। श्वो भविष्यत् कल्यञ्च तत् वर्षीयः श्रेष्ठञ्चेति श्वोवर्षीयसमिति ॥

२१७१। अन्व। अनु अव तप्त इत्येतेभ्य उत्तरस्मात् रह इत्यस्मात् समासान्तारामो भवति। अनुगतं रहसा अनुगतं रह इति

२१७२। प्रादेरध्वनः।

प्रगतोऽध्वानम्—प्राध्वः; दुरध्वः ॥ २१७२ ॥

इति सामान्यसमासान्ताः।

२१७३। जातमहद्वृद्धेभ्य उक्षणः श्यामरामे।

जातोक्षः ॥ २१७३ ॥

२१७४। द्वित्रिभ्यामायुषस्त्रिराम्याम्।

द्व्यायुषं, त्र्यायुषम् ॥ २१७४ ॥

---

वा पूर्ववत् समासः अनुरहसमिति। तथा अवहीनं रहसा अवहीनं रह इति वा अवरहसमिति। अवहीनं निन्दितं रहोऽत्रेति बहुव्रीहौ अवरहसमित्यन्ये। तप्तञ्चे तदहश्चेति श्यामरामे तप्तरहसमिति। अत्यन्तं यद्रहो न केनापि ज्ञायते तत् तप्तरहसं तप्तमिव तप्तमिति। सर्वत्रैवात्र रहःशब्दोऽप्रकाशवचनः। रहस्तत्त्वे रहो गुहे इति मेदिनीकोषात् ॥

२१७२। प्रादे। प्रादेरुत्तरस्मादध्वन उत्तरः समासान्तारामः स्यात्। प्रगतोऽध्वानमिति वाक्ये 'अत्यादयो द्वितीयये'त्यनेन मध्यपदलोपी द्वितीयाकृष्णपुरुषः। नान्तस्येत्यनेन संसारहरः प्राध्व इति। एवं दुर्गतोऽध्वानं दुरध्व इति, तथा व्यध्वादयोऽपि ज्ञेयाः। प्रादेरिति किं? परमाध्वा। इत्येवं सामान्यसमासान्ताः प्रत्यया दर्शिताः ॥

२१७३। जात। श्यामरामसमासे जातमहद्वृद्ध इत्येतेभ्य उत्तरस्मात् उक्षन् शब्दात् समासान्तारामो भवति। जातश्चासौ उक्षा चेति जातोक्ष इति। एवं महांश्चासौ उक्षा चेति। महतः 'संसारस्यारामः' इत्यनेनारामः, महोक्ष इति। तथा वृद्धश्चासौ उक्षा चेति वृद्धोक्ष इति। 'वृद्धोक्षस्तु जरदगवः' इत्यमरः। श्यामराम इति किम्? जात उक्षा यस्येति जातोक्षा इत्यादिः ॥

२१७४। द्वित्रि। त्रिराम्यां समासे द्वित्रि इत्येताभ्यामुत्तरस्मादायुःशब्दात् समासान्तारामः स्यात्। द्वे आयुषी समाहृते द्वयो-

२१७५। कृष्णपुरुषे।

प्रभुरयम् ॥ २१७५ ॥

२१७६। संख्याव्ययाभ्यामङ्गुलेः।

अराम इत्यनुवर्तते। द्वे अङ्गुली प्रमाणमस्येति तद्धितार्थे त्रिरामी, तद्धितश्च मात्रट् ( २९४९ ), तस्य लुक् ( २९५० ) च वक्ष्यते। द्व्यङ्गुलम्; निर्गतमङ्गुलिभ्यः—निरङ्गुलम् ॥ २१७६ ॥

---

रायुषोः समाहारो वेति त्रिरामी, समासे सति 'अरामान्ता त्रिरामी'-त्यनेन लक्ष्मीत्वमत्र न स्यात्, 'त्रिराम्या ईवि'त्यनेन ईप् इति च न स्यात् पात्राद्यन्तादेराकृतिगणत्वात् लाक्षणिकारामान्तत्वाच्च। एवं त्रीणि आयूंषि समाहृतानीत्यादि वाक्ये त्र्यायुषमिति च त्रिराम्यामिति किं? द्वयोरायुः द्व्यायुरिति ॥

२१७५। कृष्ण। कृष्णपुरुषे समासे सति यथास्वं कार्यं स्यात्। अधिकारोऽयम् ॥

२१७६। सङ्ख्या। कृष्णपुरुषे सङ्ख्यावाचकात् अव्ययाच्च परस्मादङ्गुलिशब्दादुत्तरे समासान्तारामो भवति। पूर्वस्मादरामोऽनुवर्तत इति वृत्तिस्वेनाह अराम इति। द्वे इति द्वे अङ्गुली प्रमाणमस्येति विग्रहे तद्धितार्थे विषये त्रिरामी स्यात्। ततस्तस्याः तद्धितश्च मात्रड़िति मात्रट् परिमाण इति मात्रट् वक्ष्यते। 'प्रमाणवाचिभ्यो महाहरश्च' इत्यनेन तस्य मात्रट् प्रत्ययस्य लुक्च वक्ष्यते। 'अ-ङ्द्वयस्य' इत्यनेन इरामहरः। द्व्यङ्गुलमिति। द्व्यङ्गुलं क्षेत्रमित्यन्ये। तथा द्वे अङ्गुले प्रमाणमस्याः द्व्यङ्गुला भूमिरित्यपि, किन्तु टित्त्वाभावादत्रेप् न स्यात्। निर्गतमङ्गुलिभ्य इति विग्रहे 'निरादयः पञ्चम्या' इत्यनेन समासे निरङ्गुलमिति। ननु यद्यत्र कृष्णपुरुषसमासेऽरामप्रत्ययस्तदा भूमेरप्यर्धमङ्गुलमित्यत्र समासाभावे कथमराम इति चेत् केनाप्युच्यते तदैवं वाच्यं, यवमानवचनोऽङ्गलशब्दोऽप्यस्ति तस्यैवेदं नत्वरप्रत्ययान्ताङ्गुलिशब्दस्येति सत्यं यद्येवं तर्ह्यङ्गुलशब्देन द्व्यङ्गुलमित्याद्यपि सिद्धं किं सूत्रेण तदेतत् कृतं द्व्यङ्गुलीत्यादि निरासार्थम् ॥

२१७७। पुरुषादायुषः।

पुरुषायुषम् ॥ २१७७ ॥

२१७८। वर्षा-दीर्घ-संख्यात-सर्व-पुण्यैकदेशाव्यय-संख्याभ्यो रात्रेः।

वर्षारात्रः, एकदेशादयस्तद्विशेषाः, पूर्वरात्रः, नीरात्रः, पञ्चरात्रः। रात्राह्लाहाः पुंस्येव ॥ २१७८ ॥

अरामो निवृत्तः।

२१७९। टित् केशव-संज्ञः।

अथ केशवारामः। प्रभुरयम्। अयमेव 'ट' इत्युक्तः ॥२१७९॥

---

२१७७। पुरु। कृष्णपुरुषे पुरुषशब्दादुत्तरस्मादायुष उत्तरे समासान्तारामो भवति। पुरुषायुषमिति पुरुषस्यायुरिति वाक्ये ॥

२१७८। वर्षा। कृष्णपुरुषे सति वर्षाशब्दात् दीर्घशब्दात् सङ्ख्याशब्दात् सर्वशब्दात् पुण्यशब्दात् एकदेशवाचकात् अव्ययात् सङ्ख्यावाचकाच्च परस्या रात्रेरुत्तरे समासान्तारामो भवति। वर्षारात्र इति वर्षाणां रात्रिरिति। दीर्घा चासौ रात्रिश्चेति दीर्घरात्र इति। तथा सङ्ख्यातरात्रः, सर्वरात्रः, पुण्यरात्र इति च। तद्विशेषा इति तद्भेदा इत्यर्थः; तदिति रात्रिः। पूर्वरात्र इति रात्रेः पूर्वमिति विग्रहे पूर्वापराधरोत्तरादीन्यवयविनेति समासे। नीरात्र इति निर्गतो रात्रिभ्य इति 'निरादयः पञ्चम्या' इति समासे, किन्तु 'रो रे लोप्यः पूर्वस्ये'त्यनेन निरस्त्रिविक्रमः। पञ्चरात्र इति पञ्चानां रात्रिरिति विग्रहे 'रात्राह्लादयः पुंसी'त्यनेन एते पुंस्येव वर्तन्ते। निवृत्त इति समाप्त इत्यर्थः ॥

२१७९। टित्। ट इत् यस्य स टित् टित्प्रत्ययः केशवसञ्ज्ञो भवति। अथ। अथानन्तरं सामान्यसमासान्तारामस्य दर्शनानन्तरं समासान्तः केशवारामो दर्श्यते। केवलैकाधिकारव्यापित्वात् प्रभुनामायमधिकारः। इत्युक्त इत्यस्मात् समासादाविति शेषः ॥

२१८० । राजाहःसखिभ्यः ।

केशवारामः स्यात् । यदुराजः; राजानमतिक्रान्ता—अति-राजी ॥ २१८० ॥

२१८१ । न तु राज्ञ्याः ।

यदुराज्ञी—'अह्नष्टख'-( २०९६ ) इति द्व्यहः, कृष्णसखः, अतिसखी ॥ २१८१ ॥

२१८२ । गोरतद्धितलुकि ।

केशवारामः स्यात् । पञ्चगवम् । स्त्रीगवी । तद्धितलुकि तु पञ्चभिर्गोभिः क्रीतः—पञ्चगुः पटः ॥ २१८२ ॥

---

२१८० । राजा । राजाहःसखिभ्य उत्तरः समासान्तकेशवारामो भवति । यदुराज इति यदूनां राजेति विग्रहे 'नान्तस्येति' संसारहरः । अतिराजीति 'अण् केशवगौरादिभ्यः' इत्यनेन लक्ष्म्यामीप् ॥

२१८१ । न तु । राज्ञ्या उत्तरे समासान्तकेशवारामो न तु स्यात् । 'नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि'ति न्यायात् 'राजाहः' इत्यनेन राज्ञ्या अपि प्राप्ते प्रतिषेधोऽयम् । यदूनां यदुषु वा राज्ञी यदुराज्ञीति । द्व्यह इति द्वयोरह्नोः समाहार इत्युक्तम् । कृष्णसख इति कृष्णस्य सखेति । अतिसखीति अतिक्रान्ता सखायमिति पूर्ववत् ॥

२१८२ । गोर । अतद्धितलुकि तद्धितानुगतभावे गोशब्दात् समासान्तकेशवारामो भवति । पञ्चगवमिति पञ्चानां गवां समाहार इत्यादिवाक्ये, 'समाहारे ब्रह्मत्वमेकत्वञ्चे'त्यनेन ब्रह्मत्वात् । 'ब्रह्मान्त-त्रिविक्रमस्य वामनः' इति वामने कृते 'उद्धयस्य गोविन्दः' इत्यनेन गोविन्दः, 'ओ अव्, किन्तु गोरोरवः सर्वेभ्य इत्येवे केते ततः 'अ-इद्धयस्ये'त्यरामहर इति च । स्त्रीगवीति स्त्री चासौ गौश्चेति विग्रहे । एवं दारस्य दाराणां वा गौरिति दारगवो दारगवीत्यादि च दार-शब्दः स्त्रीवाचक एकद्विवचनान्तो नित्यं बहुवचनान्तोऽप्यस्तीत्यन्ये च ।

## २१८३। ग्रामकौटाभ्यां तक्षणः।

केशवारामः स्यात्। ग्रामतक्षः, कौटतक्षः—स्वतन्त्रः॥२१८३॥

## २१८४। अतिगोष्ठाभ्यां शुनः।

अतिश्वः, गोष्ठश्वः॥ २१८४॥

## २१८५। मृगपूर्वोत्तरेभ्यः सक्थ्नः।

मृगसक्थम्॥ २१८५॥

## २१८६। उपमानाभ्यां ताभ्यामप्राणिनि।

---

तद्धितलुकित्विति रूपं दर्श्यते इति शेषः। क्रीड़ इत्यस्माद्विग्रह इति शेषः। पञ्चगुरित्यत्र अभ्यर्धपूर्वात् त्रिराम्याभ्यार्हीं यस्य महाहर इति तद्धितमहाहरः 'गोरीप आप ऊङश्चे'त्यनेन बामन इति॥

२१८३। ग्राम। ग्रामकौटाभ्यामुत्तरस्मात् तक्षन्शब्दात् केशवारामो भवन् समासान्तः स्यात्। तक्षा शिल्पकारी सूत्रधारादिः। ग्रामतक्ष इति ग्रामस्य तक्षेति। कुट्यां भवः कौटः स चासौ तक्षा चेति कौटतक्ष इति। स्वतन्त्र इत्यनेन स्वगृहस्थः शिल्पकारीति सूचितम्। कौटतक्षः स्वतन्त्रकर्मजीवी न कस्यचित् प्रतिबन्ध इत्यन्ये॥

२१८४। अति। अतिगोष्ठाभ्यामुत्तरस्मात् श्वन्शब्दात् समासान्त-केशवारामो भवति। अतिक्रान्तः श्वानमिति वाक्ये अतिश्वो वराह इति। गोष्ठस्य श्वा गोष्ठश्व इति॥

२१८५। मृग। मृग-पूर्व-उत्तर इत्येतेभ्य उत्तरस्मात् सक्थि-शब्दात् समासान्तकेशवारामो भवति। मृगसक्थमिति मृगस्य सक्थीति विग्रहे 'अ-इद्वयस्येत्यनेनेरामहरः' सक्थ्नः पूर्वमिति विग्रहे पूर्वसक्थमिति 'पूर्वापराधरे'त्यनेनात्रावयविसमासः। पूर्वञ्च तत् सक्थि चेति श्याम-रामो बा। एवमुत्तरसक्थमिति॥

२१८६। उप। अप्राणिनि बिषये उपमानरूपाभ्यां ताभ्यां

फलकः श्वेव—फलकश्वः ; फलकसक्थम् ॥ २१८६ ॥

२१८७। उरसः प्रधानार्थात्।

हस्त्युरसं, गवोरसम् ॥ २१८७ ॥

२१८८। कुमहद्भ्यां ब्रह्मणो वा।

कुब्रह्मः, कुब्रह्मा ॥ २१८८ ॥

२१८९। काशिब्रह्मादयो देशे।

साधवः ॥ २१८९ ॥

कृष्णपुरुषो निवृत्तः।

---

श्वसक्थिभ्यां परस्मात् समासान्तकेशवारामः स्यात्। फलकः श्वेवेति विग्रहे 'उपमेयं व्याघ्रादिभिरि'त्यनेन समासः; फलकश्व इति। एवं फलकः सक्थीव फलकसक्थमिति। फलकश्चर्मनिर्मितो वर्तुलाकारः ढाल इति प्राकृतोक्तः। उपमानेति किम्, न श्वा अश्वा लोष्टः॥

२१८७। उर। प्रधानार्थादुरःशब्दात् समासान्तकेशवारामो भवति। हस्त्युरसमिति हस्तिन उर इति विग्रहे। गवोरसमिति गोरुर इति विग्रहे 'गोरोरवः' इत्यनेनात्र गोरवादेशः।

२१८८। कुम। कुमहद्भ्यामुत्तरस्यात् ब्रह्मणः परः समासान्तकेशवारामो भवति। कु। कुत्सितश्चासौ ब्रह्मा चेति विग्रहे कुब्रह्म इति द्वयम्। 'कुः पापेषदर्थयोरि'त्यनेनात्र समासः, कुप्रादय इत्यनेन वा। ब्रह्मात्र ब्राह्मणः॥

२१८९। काशि। काशिब्रह्म आदिर्येषां ते काशिब्रह्मादयः। देशे विषये समासान्तकेशवारामान्ताः काशि ब्रह्मादयः प्रयोगाः साधवो भवन्ति। अर्थात् देशनाम्नः परस्मात् ब्रह्मशब्दात् परः समासान्तकेशवारामो भवतीति निर्गलितोऽर्थः। काश्यां ब्रह्मा काशिब्रह्म इति 'सप्तमी शौण्डादिभिरि'त्यनेनात्र समासः, निपातनात् काशिशब्दस्येरामस्य वामनश्च। आदिशब्दात् सुराष्ट्रब्रह्म इत्यादयोऽपि ज्ञेयाः। देशे इति

२१९०। त्रिराम्याम्।

प्रभुरयम् ॥ २१९० ॥

२१९१। नावः।

केशवाराम इत्येव स्यात्। द्विनावं, द्विनावप्रियः; द्विनावरूप्यं काष्ठम् ॥ २१९१ ॥

२१९२। अर्धपूर्वाच्च।

अयन्तु श्यामरामः। अर्धनावी, अर्धनावञ्च; ब्रह्मत्वं लोकात्। पंस्त्वमपीति जुमरः—अर्धनावः ॥ २१९२॥

---

किम् ? देवस्य ब्रह्मा देवब्रह्मा नारद इत्यादिः। निवृत्त इति समाप्त इत्यर्थः ॥

२१९०। त्रिरा। त्रिराम्यां समासे यथास्वं कार्यं स्यात्। अधिकारोऽयम्।

२१९१। नावः। त्रिराम्यां नावः नौशब्दात् समासान्तकेशवारामो भवति। केवलसमासान्तारामोऽप्यनुर्तितुं शक्नोति तन्निरासार्थमेवकारेण सह वृत्तिमाह—केशवेति। द्विनावमिति द्वे नावौ समाहृते द्वयोर्नावोः समाहार इति वा विग्रहे समाहारवाच्येऽत्र त्रिरामी पूर्ववदत्र ब्रह्मत्वं न लक्ष्मीतेति। द्विनावप्रिय इति द्वे नावौ प्रिये यस्येति। अत्रोत्तरपदे त्रिरामी समुदायेनान्यपदार्थत्वात् पीताम्बरः। द्विनावरूप्यमिति द्वाभ्यां नौभ्यामागतमिति तद्धितार्थेऽत्र त्रिरामी। तद्धितश्च रूप्यः स तु तत आगत इत्यर्थे 'हेतोर्मानिवनाम्नश्च रूप्यो वे'त्यनेन वक्ष्यते। ततोऽत्र द्विनावहेतुकमागतं यत् तत् कथनार्थं काष्ठमिति विशेष्यमपि दर्शितम् ॥

२१९२। अर्ध। अर्धं पूर्वं यस्य सोऽर्धपूर्वस्तस्मात् अर्धपूर्वाच्च नौशब्दात् समासान्तकेशवारामो भवति। 'अर्धं समविभागे वे'त्यनेन यः समासः श्यामरामान्तःपातः स तु श्यामराम एवेत्याह—अयन्त्विति। अर्धनावीति अर्धं नाव इति विग्रहे टित्त्वान्न लक्ष्म्यामीप्। 'नार्धामलक्या-

२१९३। खार्या वा।

द्विखारं, द्विखारि॥ २१९३॥

२१९४। द्व्यञ्जल-त्र्यञ्जले।

साधुनी। त्रिराम्यामित्येव। द्वयोरञ्जलिः द्व्यञ्जलिः॥२१९४॥

२१९५। नावादेर्न तद्धितमहाहरे।

पञ्चभिर्नौभिः क्रीतः पटः—पञ्चनौरित्यादि॥ २१९५॥

त्रिरामी निवृत्ता।

२१९६। रामकृष्णे।

प्रभुरयम्॥ २१९६॥

---

दयः' इत्यनेन न वामनः। अर्धनावञ्चेति भवतीति शेषः। किन्त्वत्र ब्रह्मत्वं लोकाल्लोकव्यवहारात् ऽमर इत्याहेति शेषः। अर्धाद्नौराजादिः स्यात् स च त्रिषु लिङ्गेषु वर्तत इति तन्मते अर्धनाव इति च॥

२१९३। खार्या। त्रिराम्यां समासे खार्या उत्तरे समासान्त-केशवारामो वा भवति। द्विखारमिति द्वयोः खार्योः समाहार इति विग्रहे पूर्ववदत्र ब्रह्मत्वम्। तथा द्विखारीति 'ब्रह्मान्ते'त्यनेनात्र वामनः॥

२१९४। द्व्यञ्ज। द्वयोरञ्जल्योः समाहारः त्रयाणामञ्जलीनां समाहार इत्यादि विग्रहे। द्व्यञ्जलत्र्यञ्जले द्वे केशवारामान्तत्वेन साधूनी भवतः। वृत्तिमाह—त्रिराम्यामिति। वृत्तावेवकारात् द्वयो-रञ्जलिरिति विग्रहे द्व्यञ्जलिरित्यत्र केशवारामो न स्यादिति। 'पाणिर्निकुब्जः प्रसृतस्तौ युतावञ्जलिः पुमानि'त्यमरः॥

२१९५। नावा। तद्धितमहाहरे सति नावादेरुत्तरे समासान्त-केशवारामो न भवति। पञ्चभिर्नौभिः क्रीतः पट इति विग्रहे तद्धितार्थे त्रिराम्यां सत्यां 'अध्यर्धपूर्वात् त्रिराम्याश्चार्हीयस्ये'त्यनेन ठस्य महाहरो वक्ष्यते। पञ्चनौरित्यत्रादिशब्दात् अर्धनौः द्विखारि द्व्यञ्जलि त्र्यञ्जलि चेति। निवृत्तेति समाप्तेत्यर्थः॥

२१९६। राम। रामकृष्णे समासे यथास्वं कार्यं स्यात्। अयमधिकारः॥

२१९७। ह-ष-द-चवर्गेभ्यः समाहारे।

केशवारामः स्यात्। कंसकंसद्रुहं, केशिकेशिद्विषम्, भक्ति-सम्बिदं, लक्ष्मीवाचम्॥ २१९७॥

२१९८। धेन्वनडुह-स्त्रीपुंसादयश्च।

साधवः। आदिग्रहणात्—ऋग्यजुषम्, ऋक्सामे, अक्षिभ्रुवम्, दारगवम्, उर्वष्ठीवं, पदष्ठीवं, नक्तन्दिवम्, अहोरात्रौ, रात्रिन्दि-वम्। अहर्दिवन्तु प्रतिदिनमित्यर्थः॥ २१९८॥

रामकृष्णो निवृत्तः।

---

२१९७। ह-ष। रामकृष्णसमाहारे ह-ष-द-चवर्गेभ्यो ह-ष-द-च-वर्गान्तेभ्यः समासान्तकेशवारामो भवति। कंसश्च कंसध्रुक्च तयोः समाहार इति विग्रहे 'नित्यवैरिणामि'त्यनेन समासः। कंसकंसद्रुहमिति समाहारे ब्रह्मत्वमेकत्वञ्चेति ब्रह्मत्वम्। एवं केशी च केशिद्विट्च तयोः समाहारः केशिकेशिद्विषं तथा भक्तिश्च सम्वित् ज्ञानञ्च तयोः समाहारः भक्तिसम्विदमिति। लक्ष्मीश्च वाक्च तयोः समाहारः लक्ष्मीवाचमिति॥

२१९८। धेन्व। धेन्वनडुह-स्त्रीपुंसावादी येषां ते धेन्वनडुह-स्त्रीपुंसादयः रामकृष्णसमासे समासान्तकेशवारामान्ता धेन्वडुह-स्त्री-पुंसादयः प्रयोगाः साधवो भवन्ति, निपात्यन्ते इत्यर्थः। धेनुश्च अनड्वांश्च धेन्वनडुहाविति। तथा स्त्री च पुमांश्च स्त्रीपुंसाविति। सूत्रे चादि-ग्रहन्योऽपि प्रयोगा दर्श्यन्ते। किञ्च, न केवलमिदमितरेतरे प्रवर्तते निपातसामर्थ्यात् समाहारेऽपीति। ऋक्च यजुश्च तयोः समाहार इति विरोधिनामद्रव्याणां वेति समाहारे ऋग्यजुषमिति। एतदितरेतरेऽपि साधयितुं शक्यते सर्वेऽपि रामकृष्णा विभाषयैकवद् भवतीत्युक्तेः। यजुःशब्दस्य ब्रह्मलिङ्गत्वेन उत्तरपदवल्लिङ्गमिति प्राप्तेश्च। ऋक्सामे इति ऋक् च साम चेति विग्रहे। पूर्ववत् समाहारे प्राप्तेऽपि 'न दधिपय आदीनामि'त्यनेनात्र न समाहार इति। एवं वाङ्मनसे इत्यत्र बोद्धव्यं समासप्रकरणे एकत्रैवोक्तत्वात्। अक्षिभ्रुवमिति 'प्राण्यङ्गानामि'त्यनेन

समाहारः। दारगवमिति गवाश्वादेराकृतिगणत्वात् समाहारः। उर्वष्ठीवमिति यद्यपि अष्ठीवच्छब्दो ग्रामवाची तथाप्येकदेशोऽस्तीति प्रतीतेः। 'प्राण्यङ्गानामि'त्यनेन समाहारः। यथात्वष्टीवच्छब्दो जानुवाची तदाऽनेन समाहारोऽयत्नसिद्ध एव 'जानूरुपर्वाष्ठीवदस्त्रियामि'त्यमरः। निपातसामर्थ्यादष्ठीवतः संसारहरश्चेति। एवं पदष्ठीवमित्यपि। किञ्च, पादशब्दस्य पदित्यादेशोऽष्ठीवतोऽङ्घ्रागहरः निपातफलम्। नक्तन्दिवमित्यादित्रयाणां 'विरोधिनामद्रव्याणामि'त्यनेन समाहारः। अ-इद्वयस्येति अ-इरामयोर्हरः सर्वत्रेति। नक्तमिति मान्तमव्ययं दिवेत्यारामान्तमव्ययमित्यनयो रात्रिदिवसवाचित्वाद्विरोधित्वम्। अहोरात्राविति 'न दधिपय आदी'ति समाहाराभावः। रात्रेरिरामहरः, आदरामगोपालयोरित्यह्नो विष्णुसर्गस्योराम इति रात्राह्नादय इति पुरुषोत्तमता अहोरात्राविभौ पुण्याविति हि दृश्यते। रात्रिन्दिवमिति सर्वं पूर्ववत् किन्त्वत्र निपातनाद्रात्रिशब्दान्मुगागमोऽपीति। अहर्दिवन्त्विति अहश्च दिवा चेतीतरेतररामकृष्णः। 'अह्नो विष्णुसर्गस्य रः' इति रः सर्वेऽपि रामकृष्णा इत्येकवत्। दिवाशब्दस्याव्ययत्वात् शिष्टव्यवहाराद्वा ब्रह्मत्वञ्चेति। नन्वेवं भवतु समानार्थानाञ्च भिन्नरूपाणां क्वचिदित्येकशेषः कथं न स्यात्, सत्यं भवितुमर्ह ति, किन्तु समानार्थाञ्चेति क्वचिद्ग्रहणादत्र न स्यात्। स्वाभिप्रेतार्थमाह—प्रतिदिनमिति। प्रकारान्तरेणैतदन्यैरप्युक्तम्। तद्यथा—अहर्दिवमिति अहनि च दिवा च स्वभावात् सप्तम्यर्थवृत्तौ दिवाव्ययम्। नक्तन्दिवमिति नक्तं च दिवा च अत्रापि द्वे आधारप्रधाने सप्तम्यर्थवृत्ते अव्यये यद्यप्याधेयसापेक्षत्वेनागमकत्वात् द्वन्द्वोऽत्र न प्राप्नोति, तथापि द्वन्द्वेऽद्विधानसामर्थ्यादेव भवति। प्लक्षन्यग्रधयोरस्तीति समासव्युत्पत्तिकालेनाधेयापेक्षेति समासस्तत्र सुकर एव। नन्वहर्दिवमिति प्रयोगः कथम् अर्थावगत्यर्थो हि प्रयोगः पर्यायाणाञ्चैकेनैवार्थस्य लब्धत्वात्, द्वितीयप्रयोगो नास्तीति अहःपर्यायश्च दिवाशब्दस्तत् कथमुभयशब्दप्रयोगोऽस्मिन्निति चोद्य आह—प्रतिदिनमित्यर्थः। वीप्सात्रार्थ इति भावः। वीप्सार्थद्योतनार्थञ्च उक्तार्थस्यापि क्वचित् प्रयोगो दृश्यते, वीप्सार्थे च द्वन्द्वोऽद्विधानसामर्थ्यादेवावगन्तव्य इति। रामकृष्णाधिकारः समाप्तः॥

२१९९। अव्ययोभावे ।

प्रभुरयम् ॥ २१९९ ॥

२२०० शरदादेः ।

केशवारामः स्यात् । उपशरदम्, उपविपाशम्, उपदिवम्, उपदृशम्, उपदिशम्, प्रतिदृशम्, प्रतिदिशं, उपचतुरम् ॥ २२०० ॥

२२०१ । प्रतेरुरसः सप्तम्यर्थे ।

उरसि वर्तते—प्रत्युरसम् ॥ २२०१ ॥

२२०२ । समनुप्रतिभ्योऽक्षणः ।

---

२१९९ । अव्य । अव्ययीभावे समासे यथास्वं कार्यं स्यात् । अधिकारोऽयं ॥

२२०० । शर । अव्ययीभावे शरदादेत्तरे समासान्तकेशवारामो भवति । केशवारामः पूर्वतोऽनुवर्त्तत इति सूचवन् वृत्तिस्त्वेनाह केशवेति । उपशरदमिति शरदः समीपमिति अव्ययं सप्तम्याद्यर्थेषु नित्यमित्यनेन समीपेऽव्ययीभावः । उपविपाशमिति । विपाशा नदीविमेषः तस्याः समीपमिति पूर्वपदव्ययीभावः । अ-इद्वयस्येत्यारामहरः । उपदिवमिति दिवः स्वर्गस्य समीपमिति पूर्ववत् । उपदृशमिति दृशः नेत्रस्य समीपमिति । उपदिशमिति दिशः पूर्वादेः समीपमिति । प्रतिदृशमिति वीप्सायां दृशं दृशं लक्षीकृत्येत्यर्थः । एवं प्रतिदिशमित्यपि । उपचतुरमिति चतुर्णां समीपमिति ॥

२२०१ । प्रते । अव्ययीभावे विषये सप्तम्यर्थे बर्तमानादुरसः परः समादान्तकेशवारामः स्यात् । उरसि वर्तत इति विग्रहे अव्ययं सप्तम्याद्यर्थेष्वित्यव्ययीभावः प्रत्युत्तरसमिति । तप्तम्यर्थ इति किं ? यदा तु उरः उरः प्रतिप्रत्यूरः तदा वीप्सायामव्ययीभावः, किन्तु न केशवारामः ॥

२२०२ । सम । अव्ययीभावे समनुप्रतिभ्य उत्तरस्मादक्षणः परः

समक्षम्, अन्वक्षं, प्रत्यक्षम्—कृताव्ययीभावे निपात्यन्ते। अक्ष्णः परम्—परोक्षम्॥ २२०२॥

२२०३। नदी-गिरि-पौर्णमास्याग्रहायणीभ्यो वा।

उपनदम्, उपनदी॥ २२०३॥

२२०४। उपशुनोपजरस-सरजसानि, अनुगव-मायामे।

साधूनि॥ २२०४॥

---

समासान्तकेशवारामो भवति। समक्षमिति अक्ष्णोः साक्षादिति विग्रहः। यद्यप्यत्राव्ययीभावविधायकं सूत्रं न दृश्यते, तथाप्यनेन केशवाराम-विधानात् संशब्दस्य साक्षादर्थत्वेन साक्षाच्छब्दस्य तु समीपार्थत्वेन 'अव्ययं सप्तम्ये'त्यनेन समीपे अव्ययीभावः करणीय इति। अन्वक्षमिति अक्ष्णोः समीपमिति अनुर्यस्य समीपमाहेत्यनेनात्राव्ययीभावः। प्रत्यक्षमिति अक्षिणी आभिमुख्येनेति। 'अभिप्रतिलक्षणेनाभिमुख्ये' इत्यनेनात्राव्ययी-भावः। ननु यद्येवं तर्हि कथं प्रत्यक्षो घट इति उच्यते, प्रतिगतोऽ-क्षिणी इति विग्रहे 'अत्यादयो द्वितीयये'त्यनेनात्र मध्यपदलोपी द्वितीया-कृष्णपुरुष इति। लक्षणाभावात् समाधानपूर्वकं परोक्षमिति साधयति कृताव्ययीति। अक्ष्णोऽक्ष्णोर्वा परमविषय इति कृताव्ययीभावे प्रत्यक्ष-मिति निपात्यते इत्यन्वयः॥

२२०३। नदी। अव्ययीभावे नदी-गिरि-पौर्णमासी आग्रहायणी इत्येतेभ्यः समासान्तकेशवारामो वा स्यात्। उपनदमिति नद्याः समीप-मिति पूर्ववत् समीपेऽव्ययीभावः। उपनदीति अव्ययीभावस्याव्ययत्व-ब्रह्मत्वाभ्यां 'ब्रह्मान्तत्रिविक्रमस्य वामनः' इति वामनः। एवं उपगिरं उपगिरि, उपपौर्णमासं उपपौर्णमासि, उपाग्रहायणं उपाग्रहायणीति॥

२२०४। उप। अव्ययीभावे समासान्तकेशवारामेण सह उप-शुनोपजरस-सरजसानि त्रीणि। आयामेऽर्थे अनुगवञ्च साधूनि भवन्ति।

२२०५। अनश्च।

उपशार्ङ्गधन्वम् ॥ २२०५ ॥

२२०६। ब्रह्मणि तु वा।

उपकर्मम्, उपकर्म ॥ २२०६ ॥

२२०७। विष्णुदासाद्वा।

उपमुरभिदम्, उपमुरभित् ॥ २२०७ ॥

अव्ययीभावो निवृत्तः।

२२०८। स्वतिभ्यां न तौ प्रत्ययौ प्रशंसायां, किमस्तु क्षेपे।

---

शुनः समीपमिति उपशुनमिति समीपेऽव्ययीभावः। 'श्वन् युवन् मघवन्नित्येषामि'त्यनेन वस्य उर्भगवति। 'नान्तस्ये'त्यनेन प्राप्तसंसारहराभावोऽत्र साधोः फलम्। तथा जरायाः समीपमिति उपजरसमिति। 'जराया जरस् वे'त्यनेन जरसादेशे विकल्पे प्राप्ते नित्यं जरसादेशो निपातफलम्। रजसा साकल्यमिति सरजसमिति केशवाराम एवात्र निपातफलं सहस्य सभावस्तूक्त इति ॥

२२०५। अन। अव्ययीभावे अनश्चानन्तात् समासान्तकेशवारामो भवति। उपशार्ङ्गधन्वमिति शार्ङ्गधन्वनः समीपमिति पूर्ववदव्ययीभावः। नान्तस्येति संसारहरः पीताम्बरे धनुषो धन्वन्नित्युक्तं तस्यैवेदम् ॥

२२०६। ब्रह्म। अव्ययीभावे ब्रह्मलिङ्गे वर्तमानादनस्तु समासान्तकेशवारामो वा स्यात्। कर्मणः समीपमिति उपकर्ममित्यादिद्वयम् ॥

२२०७। विष्णु। अव्ययीभावे विष्णुदासात् परः समासान्तकेशवारामो वा स्यात्। मुरभिदः समीपमिति उपमुरभिदमित्यादिद्वयम्। निवृत्त इति पूर्ववत् ॥

२२०८। स्वति। प्रशंसायां गम्यमानायां स्वतिभ्यामुत्तरेभ्यः

तौ पूर्वोक्तावरामकेशवारामौ। शोभना ऋक् स्वृक्। एवमतृग्क्, सुराजा, अतिराजा, किंपूः, किंराजा ॥ २२०८ ॥

२२०९। नञ्कृष्णपुरुषाच्च न, पथस्तु वा।

अनृक्, अराजा; अपथम्, अपन्थाः ॥ २२०९ ॥

२२१०। पीताम्बरे।

विभुरयम् ॥ २२१० ॥

२२११। सङ्ख्ये यादच्, न तु बहोः।

उपदशाः ॥ २२११ ॥

---

पूर्वोक्तनामभ्यः तौ पूर्वोक्तौ प्रत्ययौ न भवतः। किम्। क्षेपे आक्षेपे गम्ये किम्शब्दादुत्तरेभ्यो नामभ्यस्तु तौ न भवतः। पूर्वोक्ताविस्य-स्मात्समासान्ताविति योज्यम्। शोभनेति श्यामरामविग्रहो दर्शितः। स्वृगित्यत्र 'ऋक्पथी'त्यनेन प्राप्तारामो न स्यात्। अतृग्गिति अतिक्रान्तः ऋचमिति। सुराजेति शोभनो राजेति। अत्र 'राजाहःसखी'ति प्राप्त-केशवारामो न स्यात्, एवमतिक्रान्तो राजानमतिराजेत्यत्रापि। किं-पूरिति किम्? कुत्सिता चासौ पूश्चेति। एवं किंराजेति। किमिति कुत्सितार्थं मान्तमव्ययम् ॥

२२०९। नञ्। नञ्कृष्णपुरुषाच्च तौ न भवतः। नञ्कृष्ण-पुरुषात् पथस्य वा भवतः। अनृगिति न ऋगिति अत्रापि प्राप्ते पूर्ववन्निषेधः। एवमराजेति। न पन्था इत्यपथमित्यादिद्वयं, किन्तु 'सङ्ख्याव्ययाभ्यां पथः' इत्यनेनापथमित्यत्र ब्रह्मत्वम्। अपन्था इत्यत्र तु 'पथ्यादिनामिरामस्ये'त्यनेन पथिशब्दस्येरामस्यारामः थात् पूर्वं नुक् चेति ॥

२२१०। पीता। पीताम्बरे यथास्वं कार्यं स्यात्। अधिका-रोऽयम् ॥

२२११। सङ्ख्ये। पीताम्बरे सङ्ख्येयशब्दादच् भवति। पीताम्बरे बहुशब्दादच् नतु भवति। दशानां पदार्थानां समीपे इमे इति विग्रहे

२२१२। विंशतेस्तिहरश्चिति।

आसन्नविंशाः, द्वित्राः, पञ्चषाः, लक्षकोटाः ; बहोस्तु—उपबहवः ॥ २२१२ ॥

२२१३। अव्ययादिसङ्ख्यान्तात् कृष्णपुरुषादच्।

त्रिंशतो निर्गतः—निस्त्रिंशः ; निश्चत्वारिंशः ॥ २२१३ ॥

२२१४। स्वाङ्गाभ्यामक्षिसक्थिभ्याम्।

मण्डूकप्लुत्या केशवाराम एव। कमलाक्षः, कमलाक्षी, दीर्घ-

---

उपदशा इति। 'अव्ययादूराधिकासन्नाः सङ्ख्येयवाचिसङ्ख्ये'त्यनेनात्र पीताम्बरः। अष्टादशपर्यन्ताः सङ्ख्याः सङ्ख्ये वर्तन्ते ततः पराः सङ्ख्याः सङ्ख्याने चेत्युक्तम् ॥

२२१२। विंश। चिति परे विंशतेस्तिहरो भवति। आसन्नविंशा इति विंशतेरासन्ना इमे इति। द्वित्रा इति द्वौ वा त्रयो वेति विग्रहे। 'सङ्ख्यागुणितत्वेवार्थे चे'त्यनेनात्र पीताम्बर इति। एवमुत्तरत्रापि। पञ्चषा इति पञ्च वा षड् वा इति लक्षं वा कोटयो वा लक्षकोटा इति। बहोस्त्विति रूपं दृश्यते इति शेषः। उपबहव इति बहूनां समीपे इति। 'उद्वयस्य गोविन्दः' इति गोविन्दः ॥

२२१३। अव्य। अव्ययादिश्चासौ सङ्ख्यान्तश्चेति तस्मात् कृष्णपुरुषादित्यनेन कृष्णपुरुषान्तो गृह्यते। तेन पीताम्बरेऽव्ययादिसङ्ख्यान्तात् कृष्णपुरुषसमासान्तादुत्तरोऽच् भवति। पीताम्बरस्य विष्वाधिकारत्वात् तस्मादन्यस्मिन् समासेऽपि प्रत्ययो भवतीति भङ्ग्या दर्शयन् वाक्यं दर्शयति त्रिंशेति। निस्त्रिंशः खड्गः। एवं चत्वारिंशतो निर्गतः निश्चत्वारिंश इति उभयत्रैवात्र 'निरादयः पञ्चम्या' इति समासः।

२२१४। स्वाङ्गा। स्वाङ्गवाचकाभ्यामक्षिसक्थिभ्यां परः पीताम्बरे समासान्तकेशवारामो भवति। सूत्रे प्रत्ययनिर्देशाभावात् अच्प्रत्यय एवानुवर्तितुमर्हतीति तद्वारणार्थं न्यायघटितवृत्तिमाह—मण्डूकेति। 'मण्डूकप्लुत्या' इत्यसमासान्नायेनेति पूरणीयम्। तथाहि, मण्डूको भेको

सक्थः। अस्वाङ्गत्वे तु—दीर्घसक्थि शकटम्। स्थूलाक्षिः इक्षुः। अद्रवं मूर्तिमदविकारजं प्राण्यङ्गम्—'स्वाङ्गम्' ॥ २२१४ ॥

२२१५। अङ्गुलेर्दारुणि।

द्व्यङ्गुलं दारु ॥ २२१५ ॥

२२१६। द्वित्रिभ्यां मूर्ध्नः।

द्विमूर्धः ॥ २२१६ ॥

केशवारामो निवृत्तः।

---

यथा प्लुत्या लम्फेनो प्रवेशनस्थानात् किञ्चिद्देशं परित्यज्य स्थानान्तरे पतति तद्वदत्रापि केशवारामः पूर्वस्मादनुवर्तते इत्यर्थः। कमलाक्ष इति कमले इवाक्षिणी यस्येति 'ब-इद्वयस्ये'तीरामहरः। एवं कमले इवाक्षिणी यस्या इति कमलाक्षीति टित्त्वादीप्। दीर्घसक्थ इति दीर्घं सक्थि यस्येति पूर्ववदिरामहरः। अस्वाङ्गत्वे सति तु रूपं दर्श्यते—दीर्घसक्थीति दीर्घं सक्थि यस्येति। स्थूलान्यक्षीणि यस्येति स्थूलाक्षिरिति। अत्र सक्थ्यक्षिशब्दौ न स्वाङ्गवाचकौ भवतः, किन्तु ताभ्यां शकटस्य कश्चिदवयवस्तथा इक्षोरपि अक्षिसादृश्यात् कश्चिदवयवोऽभिधीयते इति साङ्गत्वाभावादत्र न केशवारामः। पीताम्बराभावत्वे तु परमञ्च तत् सक्थि चेति श्यामरामे परमसक्थीति तथा परमाक्षि चेति। कारकपादोक्तस्वाङ्गव्यवस्थापिकया ज्ञापितस्वाङ्गस्यात्रापि ग्रहणमिति सूचयन् तत्कारिकाफलभूतमाहाद्रवमिति ॥

२२१५। अङ्गु। दारुणि वाच्ये पीताम्बरेऽङ्गुलिशब्दात् केशवारामो भवन् समासान्तो भवति। द्वे अङ्गुली इवाङ्गुली यस्य तत् द्व्यङ्गुलं दार्विति। अङ्गुलिसदृशावयवं धान्यानां चालनकाष्ठमुच्यते। दारुणि वाच्यै मुख्याभिरङ्गुलिभिः सम्बन्धो न भवतीति अङ्गुलिसादृश्यादङ्गुलिसदृशेषु दार्वयवेषु वर्तमानोऽङ्गुलिशब्दोऽत्राश्रयते। तथा पञ्चाङ्गुलयो यस्य तत् पञ्चाङ्गुलमित्यप्यन्ये ॥

२२१६। द्वित्रि। पीताम्बरे द्वित्रिभ्यामुत्तरस्मात् मूर्ध्नः समा-

२२१७। अरामः।

प्रभुरयम् ॥ २२१७ ॥

२२१८। नञ्-सु-दुर्भ्यो हलि-सक्थिभ्यां वा।

अहलः, अहलिः; असक्थः, असक्थिः ॥ २२१८ ॥

२२१९। लक्ष्मीपूरणप्रत्ययात् प्रमाणीशब्दाच्च।

---

सान्तकेशवारामो भवति। द्विमूर्ध इति द्वौ मूर्धानौ यस्येति। निवृत्त इति समाप्त इति ॥

२२१७। अरामः। यथास्वं नाम्नोऽरामः स्यात्। अरामः इति समासान्ताराम इत्यर्थः। अन्तरालाधिकारोऽयं पीताम्बरस्त्वनुवर्तते ॥

२२१८। नञ्। नञ्सुदुर्भ्यो हलि-सक्थिभ्यामुत्तरे समासान्तारामो वा भवति पीताम्बरे। नास्ति हलिर्यस्येति अहल इति द्वयम्। तथा नास्ति सक्थि यस्येति असक्थ इति द्वयम्। एवं सुहल इति द्वयम्। तथा सुसक्थ इति द्वयम्। तथा दुर्हल इति द्वयं, दुःसक्थ इति द्वयञ्च। एतदेव जयादित्यादीनामपि मतम्। अत्रैव दुःषक्त इत्यपि जुमरः। जुमरटीकाकारस्तु तत्सूत्रमेवं व्याख्यायते। तद्यथा—'नञ् सु दुर्' इत्येतेभ्यो यथाक्रमं हलि सक्थि सक्ति इत्येतेभ्यो बहुव्रीहौ वा अद्भवतीति। अतएव तन्मते अहलः अहलिः सुसक्थः सुसक्थिः, दुःषक्तः दुःषक्तिरित्येवोदाहरणम्। किञ्च, दुःषक्त इति-द्वये सञ्ज परिष्वङ्गे क्तिः स्थादेर्द्विरङ् व्यवायेऽपीति षत्वं, दन्त्यादिरपि क्वापि दृश्यते, तदा स च समवाये इत्यस्य रूपमिति यदुक्तं तत्तु नावकलितं बहुव्रीहौ पदद्वयसमासत्वेनैव दुःषक्तादिद्वये दुरव्ययस्य धातुना योगाभावेनोपसर्गत्वाभावात्। हलहलि-सक्थसक्थि-सक्तसक्ति-शब्दानामेव रूपद्वयसिद्धौ समासान्तविधानमेकस्मिन्नेवार्थे प्रयोगद्वयसिद्ध्यर्थमिति यदुक्तं तत्त्वस्माकमप्यभीष्टम् ॥

२२१९। लक्ष्मी। लक्ष्मीरूपः पूरणप्रत्ययः लक्ष्मीपूरणप्रत्यय-

कृष्णापञ्चमा रात्रयः; वैष्णवीप्रमाणाः शक्तयः ॥ २२१९॥

२२२०। नाभेः संज्ञायाम्।

पद्मनाभः; उर्णनाभिरित्येके ॥ २२२० ॥

२२२१। गोधूलः कालभेदे।

गोधूलिरित्यसाधुरिति पशपतिः ॥ २२२१ ॥

---

स्तस्मात् प्रमाणीशब्दाच्च समासान्तारामो भवति पीताम्बरे। कृष्णा पञ्चमी यासां रात्रीणां ता रात्रयः कृष्णापञ्चमा इति, 'वाच्यलिङ्ग-लक्ष्मीरि'त्यत्र नतूङ् न च पूरणीप्रियादिष्विति निषेधात् पूर्वपदस्यात्र पुरुषोत्तमवन्न भवति। किञ्च, लक्ष्मीपूरणप्रत्ययादित्यत्र पूरणप्रत्यया-दिति कृतेऽपि प्रयोगसिद्धेः यत् लक्ष्मीति कृतं तदेतत् ज्ञापकं, यदा पीताम्बरेऽपि लक्ष्मीर्वाच्या तदैव लक्ष्मीरूपपूरणप्रत्ययान्तात् समासान्ता-रामः यदा तु पुरुषोत्तमो वाच्यस्तदा 'ऋरामगोपी सर्पिरि'ति वक्ष्य-माणेन कप्। एतदेव समासे तुल्यार्थान्यपदार्थत्वे इत्यनेन विवृतम्। वैष्णवी प्रमाणी यासु ताः शक्तयः वैष्णवीप्रमाणा इति 'न वृष्णीन्द्र-हेतुतद्धितान्ते'त्यनेनात्र न पुम्वत् ॥

२२२०। नाभेः। संज्ञायां वाच्यायां पीताम्बरे नाभेरुत्तरतः समासान्तारामो भवति। पद्मनाभ इति पद्मं नाभौ यस्य पद्ममिव नाभिर्यस्येति वा विग्रहः। उर्णनाभ इति उर्णास्तन्तवो नाभौ यस्येति विग्रहः। उर्णनाभिरिति तन्मतेऽत्र समासान्तान्न भवति ॥

२२२१। गोधूलः। कालविशेषे वाच्ये पीताम्बरे समासान्ता-रामेण सार्धं गोरुत्तरस्य धूलेः गोधूलः साधुः। गवा धूलिर्यत्र स गोधूलः सन्ध्यायाः प्राक्काल इत्यर्थः। केशाञ्चिदभीष्टं गोधूलिं पशुपतिमतेनैव दूषयति—गोधूलिरिति। पशुपतिः शिवः सत्वत्र न सम्भवति यतो माहेशे कस्यापि मतं नोत्थापयति न दूषयति च, तत् पूर्वं व्याकरणानामभावत्वात्, अतएव पशुपतिः कश्चित् पण्डित इति ॥

२२२२। नक्षत्रेभ्यो नेतुः।

मृगो मृगशिरो नेता यासां ताः—मगनेत्रा रात्रयः॥ २२२२॥

२२२३। त्रि-नञ्-सु-व्युपेभ्यश्चतुरः।

त्रिगुणिताश्चत्वारो यस्मिन—त्रिचतुरः; अचतुरः॥ २२२३॥

२२२४। अन्तर्वहिभ्र्यां लोम्नः।

अन्तर्लोमः, वहिर्लोमः॥ २२२४॥

२२२५। प्रादेर्नासिकाया नस् च।

प्रणसम्, उन्नसं मुखम्॥ २२२५॥

---

२२२२। नक्ष। पीताम्बरे नक्षत्रवाचिभ्यो नेतृशब्दात् समासान्तारामो भवति। मृग इति स्पष्टम्। नेता नायक इत्यर्थः। एवं पुष्पनेत्रादयोऽपि॥

२२२३। त्रि-नञ्। त्रि-नञ् सु-वि-उप इत्येतेभ्य उत्तरस्माच्चतुःशब्दात् समासान्तारामः स्यात् पीताम्बरे। त्रिचतुर इत्यत्र 'सङ्ख्यागुणितार्थे वार्थे चे'त्यनेन पीताम्बरः। अतएव त्रयो वा चत्वारो वेत्यपि विग्रहः। अचतुर इति न सन्ति चत्वारो यस्मिन्निति बिग्रहः। न चत्वारो यस्य विषयीभवन्तीत्यर्थः। एवं शोभनाश्चत्वारो यस्मिन् सुचतुर इति विगताश्चत्वारो यस्मिन् विचतुर इति। विविधं यस्य चत्वारो विषयीभवन्तीत्यर्थः। उपगताश्चत्वारो यस्मिन् चतुर्णां समीपेऽयम् इति वा उपचतुर इति॥

२२२४। अन्त। पीताम्बरेऽन्तशब्दात् वहिस्शब्दाच्च परस्माल्लोम्नः समासान्तारामो भवति। अन्तर्लोम इति अन्तर्वक्षसि लोमान्यस्येति। वहिर्लोम इति वहिः सर्वाङ्गे लोमान्यस्येति॥

२२२५। प्रादे। पीताम्बरे प्रादेरुत्तरस्या नासिकायाः परे समासान्तारामः स्यात्। तस्मिन् परे नासिकाया नस् च। प्रणसमिति

२२२६। स्थूलेतरात् संज्ञायाम्।

द्रुणसः, गोनसः। नेह—स्थूलनासिकः ॥ २२२६ ॥

२२२७। कालायस-महानसादयश्च संज्ञायाम्।

साधवः। खरादिपूर्वाया नासायाः खरणसः, खरणसो,

---

प्रगता नासिका यत्रेति। 'प्रादेर्नसः' इत्यनेनात्र णत्वम्। उन्नसमिति उत्कृष्टा नासिका यत्रेति ॥

२२२६। स्थूले। संज्ञायां गम्यमानायां पीताम्बरे स्थूलेतरात् परस्या नासिकायाः समासान्तारामो भवति। तस्मिंस्तस्या नस् च। द्रुर्वृक्ष इव नासिका यस्य स द्रुणस इति समुदायेनात्र संज्ञा गम्यते, 'संज्ञायां न तु गादि'त्यनेन पूर्वपदान्नस्य णत्वम्। गोर्नासिकेव नासिका यस्य स गोनस इति। स्थूला नासिका यस्येति स्थूलनासिको वराह इति नात्रारामः किन्तु 'गोरीप आपः' इति वामनः ॥

२२२७। काला। पीताम्बरे संज्ञायां कालायस-महानसादयश्च प्रयोगा अरामान्तत्वेन साधवो भवन्ति। कालमयो यस्येति कालायसः कश्चित्। महती नासिका यस्येति महानसः पाकस्थानम्। एवं वार्ध्रीणस् इत्यादयोऽपि। वृद्धा नासिका यस्येति वृद्धस्य वार्ध्रीभावः साधोः फलम्। णत्वञ्च द्रुणसवत्। एवं निपातत्वेन यथासम्भवं शिष्टप्रयोगानुसारेण कार्यं परिकल्पनीयम्। वार्ध्रीणस इति वृधुधातोः स्फायादेर इति रः गुणः तस्य विकार इति टण् वार्ध्रीव नासिकास्येति वृद्धरर्थतद्धितेत्यादिना पुम्वन्निषेध इत्यन्ये। खर आदिर्यस्य स खरादिः स पूर्वो यस्याः सा खरादिपूर्वा तस्याः। पीताम्बरे समासान्तारामेण सार्धं खरादिपूर्वाया नासायाः स्थाने खरणसादयस्त्रयः। खरण आदयस्त्रयश्च वा निपात्यन्ते। वाशब्दो व्यवस्थार्थो विकल्पार्थश्चेति उभयसामञ्जस्यात्। खरादीत्यत्रादिपदेन खुरशब्दविशब्दयोर्ग्रहणं नान्येषाम्। विग्रा इत्यत्र क्वचित् पुस्तके विग्रा इति नरामसत्सङ्गश्च पाठो दृश्यते निपातवलात् सोऽपि भवितुमर्हति, किन्तु

विनस इत्येते ; खरणाः, खुरणाः, विग्रा इत्येते वा निपात्यन्ते ॥ २२२७ ॥

२२२८ । सुप्रातादयश्च ।

साधवः । शोभनं प्रातरस्य—सुप्रातः । एवं सुश्वः, सुदिवः ।

---

पाठीनमतेनानैक्यात् न बहुप्रयोजनक इति । खरणस इति खरा तीक्ष्णा नासा यस्येति खरस्य नासेव नासा यस्येति वा मध्यपद-लोपी पीताम्बरः । खरशब्दात् नासायाः समासान्तारामस्तस्या नस् च निपातात् संज्ञायां न तु गादिति पूर्वपदाण्णत्वञ्च । अस्मन्मते सूत्रेऽस्मिन् नासाय ग्रहणमन्येषान्तु नासिकाया इति । एवं खुर इव नासा अस्येति खुरणस इति पूर्वबत् सर्वम् । तथा विगता नासा अस्येति विनस इति च पूर्ववत् । खरणा इति पूर्ववद्विग्रहसमासौ । एवं खुरणा इत्यपि । किन्त्वत्र द्वये निपातसामर्थ्यात् समासान्तारामस्तस्मिन् नसादेशो नसादेशे च सत्यरामहरश्च । पूर्ववदत्रापि णत्वञ्च । 'अत्व-सन्तोद्धवस्य त्रिविक्रमः' इति त्रिविक्रमः । 'राधाविष्णुजनाश्यामि'ति सोर्हरः, 'सररामयोरि'ति विष्णुसर्गः । विग्रा इत्यत्रापि पूर्ववद्विग्रहादि सर्वं, किन्तु नासाया ग्रस् इत्यादेश एव विशेष इति । किञ्च, खरखुराभ्यां प्रत्ययलुग्वेति वेः ख्रश्चेति जुमरसूत्रद्वयम् । तन्मते खर-खुराभ्यां वेश्च नासिकाया अत्प्रत्ययस्तस्मिंस्तु नसादेशः । पक्षे क्षरादि-द्वाभ्यां तस्या नसादेशे कृते अत्प्रत्ययस्य लुक् च भवति । वेस्तूत्तरस्याः ख्रादेशश्च भवतीति सर्वं तुल्यं विख्र इत्येव विशेषः । वेग्र इति भाष्यमिति जयादित्य इत्युभयमतदर्शनात् विग्र इत्यरामान्तोऽपि तन्मत इति । विग्र इत्युदाहरणे नसादेशं वाधित्वा ग्रादेश एव नित्यं भवतीति चान्द्रमतं न बहुसम्मतम् । विनसा हतवान्धवा इति भट्टिप्रयोगात् ( ५।८ ) । विनसा सूर्पणखेति ॥

२२२८ । सुप्रा । पीताम्बरे समासान्तारामेण सह सुप्रातादयश्च प्रयोगाः साधवो भवन्ति । सुप्रात इति समासान्तारामः प्रातःशब्दस्य संसारहरश्च निपातफलम् । सुश्व इति शोभनं श्वः भविष्यत् कल्यः

शारिरिव कुक्षिरस्य—शारिकुक्षः। चतस्रोऽश्रयोऽस्य—चतुरश्रः। एणीपदः ॥ २२२८ ॥

अरामो निवृत्तः।

२२२९। नञ्-सु-दुर्भ्यः प्रजाया असिरल्पाच्च मेधायाः।

अप्रजाः, सुप्रजाः; अल्पमेधाः, अमेधाः ॥ २२२९ ॥

---

यस्येति पूर्ववदरामसंसारहरौ निपातफलम्। सुदिव इति शोभनं दिवा यस्येति निपातादरामः 'अ-इद्वयस्ये'त्यारामहरः। दिवाशब्दः स्वभावादधिकरणार्थाव्ययं, तेन शोभनं दिवा अस्येत्यत्र शोभनमिति कर्मणो विशेषणं, शोभनं दिवा काले कर्मास्येति निर्गलितोऽर्थः। शारिरिवेति। शारिरिति इण्प्रत्ययान्तः पक्षिविशेषः। शारिकुक्षः कश्चित् पूर्ववदरामादिः। चतस्र इत्यत्र अश्रय इत्यस्मात् परं कोटय इति प्रयोक्तव्यम्। अश्रिरिति नञ्पूर्व श्रा पाके इकस्तिप्धातुनिर्देश इतीक् चतुःशब्दस्य विशेषणत्वात् बहुवचनान्तः प्रयोगः। चतुरश्रोऽस्त्रविशेषः। एण्याः पादाविव पादावस्येति एणीपद इति। अत्रापि निपातत्वादरामः पादशब्दस्य पदादेशश्च। चशब्दस्यानुक्तसमुच्चयादेवं प्रकारेण अजश्छागस्तस्य पादाविव पादावस्य अजपद इति। प्रोष्ठपदभद्रपदावन्यैः पठितौ तावप्यत्र ज्ञेयौ। प्रोष्ठा गौः तद्वत् पादावस्य प्रोष्ठपद इति भद्रौ पादावस्य भद्रपद इति च पादसमानार्थेन पदशब्देनैषां सिद्धिरिति चान्द्रादयः। अरामो निवृत्तः पीताम्बरस्त्वनुवर्तत एव॥

२२२९। नञ्। नञ् सु दुरित्येतेभ्यः प्रजाया अल्पाच्चेत्युक्तसमुच्चयार्थचशब्दात् नञादिभ्यः अन्यशब्दाच्च परस्या मेधायाश्चासिः स्यात् पीताम्बरे। अप्रजा इति न सन्ति प्रजाः यस्येति। अव्ययञ्चेति पीताम्बरः। नञोऽरामः शेषः। असेरिराम इत्। 'अ-इद्वयस्ये'त्यारामहरः। 'अत्वसन्तोद्धवस्ये'ति त्रिविक्रमः सोर्हरः। एवं शोभनाः सुस्थिता वा प्रजा अस्य इति। एवं दुष्टाः प्रजा अस्य दुष्प्रजा इति।

२२३०। सूत्-पूति-सुरभिपूर्वाद्गन्धादिरामः, अल्पार्थात्, उपमानपूर्वाच्च।

सुगन्धि पुष्पम् ; उद्गन्धि । अल्पार्थादिः—घृतगन्धि भोजनम् ; पद्मगन्धि हरेर्मुखम् ; समवेतत्व एवैष्यते ; नेह—सुगन्धो गन्धवाहः ; "भग्नवालसहकारसुगन्धौ" इति माघे ( १०।३ ) ॥ २२३० ॥

---

अल्प मेधा अस्य अल्पमेधा इति। नास्ति मेधा यस्य अमेधा इति। तथा सुमेधा दुर्मेधा इतिद्वयमपि। मन्दाल्पाभ्यां मेधाया इति चन्द्रो वर्धमानश्चेति तन्मते मन्दमेधा इत्यपि। अतएवास्मन्मतेऽल्पाच्चेत्यल्पशब्देनाल्पार्थो लक्ष्यते। श्रोत्रियस्यैव ते राजन् मन्दकस्याल्पमेधसः। अनुवाकहता बुद्धिर्नैषा सूक्ष्मोपदर्शिनीति शिष्टप्रयोगा जयादित्यादिना दर्शितः ॥

२२३०। सूत् । सु उत् पूति सुरभि इति पूर्वो यस्य स सूत्पूतिसुरभिपूर्वस्तस्मात् गुणवाचिनो गन्धशब्दात् पर इरामः स्यात् पीताम्बरे। अल्पा। अल्पः अर्थो यस्य सोऽल्पार्थः, उपमानं पूर्वं यस्य स उपमानपूर्वस्तस्मात् तस्माच्च गुणवचनाद्गन्धशब्दात् पीताम्बरे इरामः स्यात्। किम्वा 'यावत् सम्भवस्तावद्विधिरि'ति न्यायेनाल्पार्थात् परस्माद्गन्धादिरामः स्यात्। अल्पार्थोऽत्र गम्यो न वाच्य इति गन्धे तत्पूर्वपदे च विवक्षावशात् सोऽर्थः कल्पनीय इति। सुगन्धीति शोभनो गन्धो यस्येति। उद्गतो गन्धो यस्य तदुद्गन्धीति अस्यापि पुष्पं विशेष्यम्। एवं पूतिगन्धिरिति सुरभिगन्धिरिति च। अल्पार्थादिरिति रूपं दर्श्यते इति शेषः। घृतस्य गन्धो यत्र तद्घृतगन्धीति। प्रायोग्रहणात् कुचिद्व्यधिकरणानाञ्चेति समासः। अल्पघृतस्य गन्धो यत्र घृतस्याल्पगन्धो वा यत्रेत्यर्थः। पद्मस्य गन्ध इव गन्धो यत्र तत् पद्मगन्धि कचिन्मध्यपदलोपश्चेति पीताम्बरः। पद्मस्य यादृशो गन्धस्तादृशो गन्धो हरेर्मुखेऽस्तीत्याह—हरेर्मुखमिति। गन्धशब्दस्य गुणवाचीति विशेषाभिनिवेशः सर्वेषामेव सम्मत इति सुगन्धा विपणिरित्यत्र सुगन्धीति न स्यात्। 'विपणिः पण्यवीथिके'त्यमरः।

गन्धशब्दोऽत्र गन्धद्रव्य वाची न गुणवाचीति विपणेः। सम्बन्धे विद्यमानत्वेऽप्यस्मादिप्रत्ययो न भवति। स्वाभाविकगुणसमवायिनो वाच्यतायामेव गन्धादिरामो न सांसर्गिकगुणसमवायिनो वाच्यतायामिति भङ्ग्या सूचयन्नाह समेति। समवेतत्वमपृथग्देशोद्भवत्वमिति तस्मिन् सत्येव गन्धादिप्रत्यय इष्यते नतु पृथग्देशोद्भवत्वे इत्यर्थः। तेन नेह, सुगन्धो गन्धवाह इति पृथिव्या एव गन्धगुणित्वात्। गन्धवाहः समीरस्तु न गन्धवान् किन्त्वरविन्दसङ्गवत्त्वात्। संयुक्तसमवायेन सुगन्ध इति विशेषणं तस्मादयं गन्धशब्दोऽरविन्दसम्बन्धी सन्नरविन्दमाचष्टे इति नात्र सुगन्धिरिति। भग्नवालसहकारसुगन्धाविति माघोदाहरणे तु सुगन्धावित्यस्य मधुनीति विशेष्यं द्रष्टव्यम्। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। भग्नवालसहकार इव शोभनो गन्धो यत्रेत्युमानपूर्बाच्चेत्यनेन इरामः। किम्वा शोभनो गन्धो यत्रेति सूत्पूतीत्यनेन प्रथमत इप्रत्ययान्तः सुगन्धिः, पश्चात् भग्नवालसहकारस्य सुगन्धिर्भग्नवालसहकारसुगन्धिस्तस्मिन्। गुणवाच्येवात्र गन्धशब्दः। तथाच पूर्ववाक्यानुसारेण सहकारसंक्रमणादन्यत् यस्य कस्यापि मधुगुणवत् परवाक्यानुसारेण तु सहकारस्यैव मधुगुणवदिति। ननु यद्येवं तर्हि मधुनो विशेषणत्वे सुगन्धावित्यत्र सुगन्धिनीति कथं न स्यादिति चेत्तदैवं वाच्यं—पुरुषोत्तमतार्हमीशाम्तं ब्रह्मपुरुषोत्तमवद्वेति टादिसर्वेश्वरे ब्रह्मत्वस्य वैकल्पात्, पक्षे पुरुषोत्तमवत्त्वेऽपि न दोष इति। एतस्यैव दृष्टान्तत्वेन भट्टवार्तिकेनापि सिद्धान्तकारिका दर्शिता। तद्यथा, तिलाश्चम्पकसम्पर्कात् प्राप्नुवन्त्यधिवासताम्। रसालगन्धास्तद्गन्धं सर्वेषां क्रमिका गुणाः। रसालस्याम्रमुकुलस्य गन्धाः यत्र ते तिलाः तद्गन्धं रसालगन्धं प्राप्नुवन्तीत्यन्वयः। रसालगन्धादिति वा पाठः, तथा सति रसालसम्पर्कादित्यर्थः। सांक्रामिकाः सांसर्गिका इत्यर्थः। ये वैशेषिकादयो न गुणसंक्रान्तिं मन्यन्ते तन्मते भग्नवालसहकारसुगन्ध इति भवति। अतएव गन्धाद्वेति चान्द्राः। दुर्गन्धिरिति तु दुष्टः गन्धः यस्येति विग्रहे पूतिपर्यायत्वात् उपमानकल्पनाद्वा दुःशब्दात् परस्मादपि गन्धशब्दादिप्रत्ययेन सिद्धमिति ज्ञेयम्॥

२२३१। धर्मात् केवलादनिः।

वैष्णवधर्मा। केवलात् किम्? तदन्तत्वे तु नेष्यते। परमो वैष्णवधर्मोऽस्य—परमवैष्णवधर्मः। 'साक्षात्-कृतो धर्मो यैस्ते—साक्षात्कृतधर्माणो मुनयः' इति भाष्यम्। जयादित्यस्त्वत्र (काशिका ५।४।१२४) न मन्यते॥ २२३१॥

२२३२। सुहरित-तृण-सोमेभ्यो जम्भादनिर्वा।

जम्भो भोजनं, दन्तभेदश्च; सुजम्भा, सुजम्भः॥ २२३२॥

---

२२३१। धर्मात्। पीताम्बरे केवलात् शब्दान्तरसंयोगरहितात् धर्मात् धर्मशब्दात् परोऽनिः स्यात्, इराम इत्। वैष्णवो विष्णुसम्बन्धी धर्मो यस्येति वैष्णवधर्मन् 'सु नान्ते'ति त्रिविक्रमः सोर्हरः 'नामान्तस्ये'ति नहरः। वैष्णवधर्मा इति केवलात् किं किमर्थं तदन्तत्वे तु समासान्तरान्तत्वेतु नेष्यतेऽनिरिति शेषः। परम इति विग्रहदर्शनं, वैष्णव इति वैष्णवश्चासौ धर्मश्चेति श्यामरामसमासान्ताद्धर्मात्, पश्चात् पीताम्बरेऽप्यनिर्न स्यात्। समासान्तरान्न स्यात्, एकवाक्ये बहुपदान्तादपि स्यादिति भाष्यमतेनैव दर्शयति साक्षादित्यादिः। जयादित्यः पण्डितस्तत्रानिं न मन्यते इति यत् तत्त्वकिञ्चित्करं नहि प्रत्यक्षा स्मृतिर्बाधनीया भवति। अनुपालितकुलधर्म इत्येके। प्रथमं कुलस्य धर्मः कुलधर्मस्ततः अनुपालितः कुलधर्मो येनेति पीताम्बरे पूर्ववदनिर्न स्यात्। अनुपालितं कुलं येन सोऽनुपालितकुलः स एव धर्मोऽस्येति अनुपालितकुलधर्मा इत्यत्र चन्द्रवर्धमानादयो विकल्पेनानमिच्छन्ति। एवं वदन्ति च अनुपालितकुल इत्ययं समासान्तो न धर्मशब्द इत्यन्।

२२३२। सुह। सु-हरित-तृण-सोम इत्येतेभ्य उत्तरस्मात् भोजने दन्तभेदे च वर्तमानात् जम्भात् पीताम्बरेऽनिर्वा भवति। प्रकारान्तरेण वृत्तिमाह जम्भ इति। शोभनो जम्भो भोजनं दन्तभेदो वा यस्येति सुजम्भेतिद्वयम्। एवं हरितो जम्भो भोजनं दन्तभेदो वा यस्येति हरितजम्भेतिद्वयम्। तथा तृणजम्भा सोमजम्भेत्यादयश्चत्वारः। एभ्योऽन्य-

२२३३। दक्षिणेर्मा व्याधव्रणितदक्षिणाङ्गे।

साधुः ॥ २२३३ ॥

२२३४। कप।

प्रभुरयम् ॥ २२३४ ॥

२२३५। ऋराम-गोपी-सर्पिरादिभ्यः।

ऋरामात्—नन्दपितृकः; गोपीसंज्ञत्वात्—सगोपीकः, सगोप-

---

तस्तु पतितजम्भ इत्येव। जम्भो भोजनं दन्तभेदश्चेत्यर्थोपदर्शनं स्पष्टतार्थं नत्वर्थान्चरनिरासार्थं तदितरासम्भवात्। दन्तेऽर्थे जम्भ-स्त्रिलिङ्ग इति वर्धमानो नत्वन्ये॥

२२३३। दक्षि। व्याधेन व्रणितं दक्षिणाङ्गं यस्य तस्मिन् वाच्ये पीताम्बरेऽनिप्रत्ययेन सह दक्षिणेर्मा साधुर्भवति। अर्थाद्दक्षिणात् पर-स्मादिर्मशब्दादनिर्भवतीति। इर्मः व्रणः स तु व्याधकृतोऽत्र गृह्यते, दक्षिण-शब्देन तु दक्षिणाङ्गं गृह्यत इत्यभिप्रायः। तथा च दक्षिण इर्मो यस्येति दक्षिणेर्मा मृगो गौर्वा विशेषाग्रहणात्। जुमरटीकाकृत्तु व्याध-व्रणितदक्षिणाङ्गे मृगवाच्येऽनं विधाय दक्षिणेर्मा मृग इति साध्नोति। पश्चात् मृग इति किम् इत्युक्त्वा दक्षिणेर्मो वराह इति प्रत्युदाहृत्य दक्षिणेर्मो गौरिति साधनार्थं, मृग इत्युपलक्षणं व्याधव्रणितदक्षिणाङ्गेऽ-न्यस्मिन्नपि भवति वदति च। अतएव तन्मतीयमेतत् प्रत्युदाहरण-सिद्ध्यर्थञ्चास्यन्मते तद्धितवहुलमास्थेयम्। व्याधव्रणितदक्षिणाङ्ग इति किं स्वयं जाते व्रणेतु दक्षिणेर्मो मृग इत्येव॥

२२३४। कप्। समासान्तान्नाम्नो यथास्वं कप् भवति। अधिकारोऽयमवान्तरः पीताम्बरोऽनुवर्तत एव॥

२२३५। ऋरा। सर्पिः आदि यस्य स सर्पिरादिः ऋरामश्च गोपी च सर्पिरादिश्च ते ऋरामगोपीसर्पिरादयः तेभ्यः ऋरामगोपी-सर्पिरादिभ्यः पीताम्बरे कप् भवति। ऋराम इति ऋरामान्तो गृह्यते,

वधूकः। प्रियसर्पिष्कः, श्रीवत्सोरस्कः, मुक्तोपानत्कः। एवं दधि-मधु-शालयः ॥ २२३५ ॥

२२३६। वृद्धे तु मातृकस्य मातादेशो वाच्यः पूज्यपुत्रे वाच्ये।

हे यशोदामात कृष्ण ; नेह—'हे क्षितिमातृक नरकासुर' ॥२२३६॥

ऋरामादिति कप्प्रत्ययो दर्श्यते इति शेषः। नन्दपितृक इति नन्दः पिता यस्येति अनेकमन्यपदार्थ इति पीताम्बरः। गोपीशब्देनात्र गोपी-संज्ञा गृह्यते, न गोपजातिवाचको गोपीशब्द इत्याह—गोपीति। सगोपीको इति गोप्या सह वर्तमान इति सहशब्दस्तृतीयान्तेनैकक्रियायोग इत्य-नेनात्र पीताम्बरः। एवं गोपवध्वा सह वर्तमानः सगोपवधूक इति गोपीसंज्ञाग्रहणात् बहुकुमारीक इति। यस्तु वीणावाचकः अनन्ता-दीप्सिद्धस्तन्त्रीशब्दः तस्मादपि बहुतन्त्रीक इति। ईप्सिद्धात्। स्त्री-शब्दादपि बहुस्त्रीक इति च। अस्ततन्त्रीक इत्येके ते त्वेवं साधयन्ति तं, पूर्वात्रातेर्त्रूनादेरिति इप्रत्ययान्तस्तन्त्रिशब्दः तत इदन्तादक्त्यर्था-दिति ई। अस्ता तन्त्री येन सोऽस्ततन्त्रीक इति। प्रियं सर्पि-र्यस्येति प्रियसर्पिष्क इति। श्रीवत्सः श्वेतरोमावलिः उरसि यस्य स श्रीवत्सोरस्क इति। 'ईश्वरारामाभ्यां पाशकल्पकेष्वनव्यस्ये'ति यथा-क्रममनयोः षत्वौ। मुक्ता उपानत् येनेति मुक्तोपानत्क इति। 'पूर्वस्य विष्णुपदवत्त्वं स्वादितद्धितयोरि'त्यनेन पूर्वस्य विष्णुपदवत्त्वम्। 'स्वादि-तद्धितयोरि'त्यनेन पूर्वस्य विष्णुपदवत्त्वात् 'हस्य ढः नहो धः' इत्यनेन हस्य ध् पश्चात् 'यादवमात्रे हरिकमलमि'ति वरामः। एवमिति। यथा सर्पिरादिरित्यत्रादिशब्दात् उरूपानहोर्ग्रहणम्। एवं दध्यादीनामपि। रूपं यथा। प्रियदधिकः प्रियमधुकः प्रियशालिक इति ॥

२२३६। वृद्धे। पूज्यपुत्रे वाच्ये वृद्धे तु परे मातृकस्य मात इत्ययमादेशो वाच्यो वक्तव्यो भवति। यशोदा माता यस्येति हे तथाविधः। मात इत्यरामान्तादेशात् एओ वामनेत्यनेन वृद्धस्यादर्शनम्।

२२३७। नञोऽर्थात्।

अनर्थकम् ॥ २२३७ ॥

२२३८। इनो लक्ष्म्याम्।

ध्यातशार्ङ्गिका, बहुवाग्मिका वैष्णवश्रेणी। प्रियदध्नेति चिन्त्यम्। केवलपूर्वत्व एव स्यात्। नेह यथा—'प्लवङ्गनख-

नेहेति मातादेश इति अपूज्यपुत्रवाच्यत्वात्। क्षितिर्माता यस्य हे तथाविधः। पूर्वत्र कृष्ण इति विश्वपूज्यः सर्वेश्वरत्वात्, अयन्तु न तथाविधः प्रत्युत निन्द्य एवासुरजातित्वात् ॥

२२३७। नञो पीताम्बरे नञ उत्तरस्मादर्थशब्दात् कप् भवति। नास्त्यर्थो यस्येति अनर्थकमिति, नञोऽरामः शेषः सर्वेश्वरे तु लुट् चेति सामान्यब्रह्मत्वम् ॥

२२३८। इनो। लक्ष्म्यामभिधेयायामिनन्तात् पीताम्बरे कप् भवति। ध्यातः शार्ङ्गी यया सा ध्यातशार्ङ्गिकेति पूर्वस्य विष्णुपदत्वात् नामान्तस्येति न-हरः। बहवो वाग्मिनो वाग्जल्पा यस्यां सा बहुवाग्मिकेति पूर्ववन्नरामहरः। उभयोरपि वाच्यपदं वैष्णवात्त्वणीति। वाग्मिन्नित्यग्रे साध्यते। लक्ष्म्यामिति किम्? ध्यातशार्ङ्गी वैष्णव इत्यादिः। चिन्त्यमिति दुष्टं भाव्यञ्चेति, दुष्टत्वे सर्पिरादीत्यादिपदेन दधिग्रहणात् कवेव प्राप्णोतीति प्रियदध्नेत्याशिष्टं प्रियदधिकेनेत्येव साधुः। भाव्ये तु प्रियञ्च तत् दधि चेति श्यामरामे प्रियदध्नेति भवितुमर्हदपि न पीताम्बराधिकारात् तस्मात् समासान्तविधेरनित्यत्वात् कदाचित् कप् न भवतीति। केवलेति। एके मुख्यान्यकेवला इत्युक्तदिशा केवलमेकं पूर्वं येषां ते केवलपूर्वास्तेषां भावः। केवलपूर्वत्वं तस्मिन् सत्येव ऋरामादिभ्यः कप् स्यादिह तु न स्यादनेकपूर्वत्वात्। यथेति प्राचीनैरुक्तमिति शेषः प्लवेन लम्फेन गच्छतीति पुरन्दरभुजङ्गमादयो भुजगभुजङ्गादयश्च संज्ञाशब्दा इत्यनेन खप्रत्ययान्तनिपातात् प्लवङ्गा वानरास्तेषां नखानां कोटिभिरग्रैः क्षतं

कोटिभिः क्षतदृढ़ोरसो राक्षसाः' इति। कथं 'प्रियतिसा'? प्रत्ययाश्रितत्वेन वहिरङ्गस्य तिसृभावस्य कपं प्रत्यसिद्धत्वात् ॥ २२३८ ॥

२२३९। लक्ष्मीः पुमान् पयो नौरनड्वान् इत्येभ्य एकवचनान्तेभ्यः, द्विवचनान्तादिभ्यस्तु वा।

सुलक्ष्मीकः, हंसानडुत्कः; द्विलक्ष्मीः, द्विलक्ष्मीकः; बहुलक्ष्मीः, बहुलक्ष्मीकः ॥ २२३९ ॥

---

दृढ़मुरो येषां ते क्षतदृढ़ोरसः। 'समस्तस्याऽसमस्तेन नित्यापेक्षेण सङ्गतिरि'त्युक्तप्रकारेणैवात्रान्वय इति। प्लवङ्गनखकोटिभिः क्षतदृढ़ोरसो राक्षसाः सुरित्यर्थः। न केवलं दृढ़मेवात्र पूर्वपदं, किन्तु क्षतमपीति कप् न स्यादिति भावः। ननु प्रियाः तिस्रो यस्येति विग्रहे प्रियतिसेति कथं सिध्यतु, ऋरामसम्भवादस्मिन् कप् कस्मान्न स्यादित्याशङ्कायां सिद्धान्तमाह—प्रत्ययेति। प्रकृत्याश्रितं प्रकृतावपि पूर्वपूर्वमन्तरङ्गं प्रकृतेर्वहिराश्रितं वहिरङ्गमिति न्यायात्, प्रत्ययाश्रितत्वेन हेतुना तिसृभावस्य बहिरङ्गत्वे प्राप्ते क्वचिदन्तरङ्गे कार्ये क्रियमाणे तदनिमित्तमिति न्यायेन वहिरङ्गस्य तिसृभावस्य प्रकृत्याश्रितं कपं प्रत्यसिद्धत्वात् कप् न स्यादिति भावः। अतएव लक्ष्मीस्थयोरिति विशेषणात् पश्चात् पुंस्त्वेऽपि तिस्रादेशेन सौ प्रियतिसा इति स्यात् ॥

२२३९। लक्ष्मी। पीताम्बरे एकवचनान्तेभ्यो लक्ष्म्यादिपञ्चभ्यः कब्भवति। द्वि। द्विवचनान्त आदिर्येषां ते द्विवनान्तादयः। एतद्विधेभ्यो लक्ष्म्यादिभ्यस्तु पीताम्बरे कब् बा स्यात्। अत्रापिपदेन बहुवचनान्तानामपि ग्रहणम्। लक्ष्मीशब्दस्य स्त्रीत्वेऽपि गोपीसंज्ञत्वाभावादत्र ग्रहणम्। सुलक्ष्मीक इति शोभना लक्ष्मीः सम्पत्तिः शोभा बा यस्येति। हंसानडुत्क इति हंस इवानड्वान् यस्येति। 'श्रंसुध्वंसुक्स्वनडुहां द' इति दः। यादवमात्रेति तः। एवं सुपुंष्कः पीतपयष्कः लब्धनौक इति। किन्च, नुमा सर्वोऽप्यनुस्वारो लक्षत इत्युक्तदिशा सुपुंष्क

२२४०। चितेस्त्रिविक्रमश्च।

एकचितीकः, द्विचितीकः ॥ २२४० ॥

२२४१। असमासान्तविधेर्वा, न तूङि कार्ये।

बहुरमाकः, बहुरमः; दृष्टशार्ङ्गी, दृष्टशार्ङ्गिकः। समासान्तविधेस्तु—कमलाक्षः। न तूङि कार्ये—वामोरूः। कृते तु 'गोपी' संज्ञत्वात् कप्—प्रियगोपवामोरूकः ॥ २२४१ ॥

---

इत्यत्र विष्णुचक्रव्यवायेऽपि षत्वं सस्य विरिञ्चित्वात्। एते सर्वेऽप्येकवचनान्तानाम्। द्विवचनान्तादीनां यथा, द्वे लक्ष्म्यौ यस्येति द्विलक्ष्मीरिति द्वयम्। बह्व्यः लक्ष्म्यौ यस्येति बहुलक्ष्मीरिति द्वयम्। एवं बहुपुंष्कः बहुपुमानित्याद्वयौ यथायोग्यमूह्याः। अन्यैस्तु एते पूर्वेषाञ्च कतिचित्। एवं पाठान्ते तद्यथा। उरः सर्पिरुपानत् स्त्री दधिशालिमधूनि च। उरःप्रभृतयो ज्ञेया नौरनड्वान् पुमान् पयः। लक्ष्मीश्चापि समुद्दिष्टाः पञ्च नावादयो गणे ॥

२२४०। चितेः। पीताम्बरे चितेः कप् तस्मिन् परे चितेस्त्रिविक्रमश्च भवति। सम्भवात् स चान्ते प्रवर्तते। एका चितिर्यस्य स एकचितीक इति अत्रैकवचनमतन्त्रमिति सूचयति द्विचितीक इति। एवं बहूचितीक इत्यपि। चितिर्ज्ञानम् ॥

२२४१। अस। नास्ति समासान्तो विधिर्यत्र सोऽसमासान्तविधिस्तस्मात्। विधिपदेनात्र विधेयप्रत्ययो लक्ष्यते, विधेर्विधानार्थानुपलब्धेः। तेन पीताम्बरे सत्यसमासान्तविधेरसमासान्तप्रत्ययान्नाम्नः कव् वा भवति। न तु। ऊङि कार्ये कर्तव्ये त्वसमासान्तविधेर्नाम्नः कप् न स्यात्। बह्व्यो रमा यस्येति विग्रहे। आपः कपि वेत्यनेन बिकल्पवामनविधानात्। बहुरमाक इति द्वयम्। कप्प्रत्ययाभावपक्षे तु गोरीप आप इत्यनेन वामनविधानात् बहूरम इत्यपि। दृष्टः सार्ङ्गी येनेति दृष्टशार्ङ्गीति द्वयम्। शिष्टप्रयोगानुसारेणान्यदप्यूह्यम्। समासान्तविधेस्त्विवति रूपं दर्श्यते इत्यर्थः। कमले इव अक्षिणी यस्येति

२२४२। न दक्षिणपूर्वादिषु।

दक्षिणपूर्वा ॥ २२४२ ॥

२२४३। न साङ्गाभ्यां नाड़ीतन्त्रीभ्याम्।

बहुनाड़िः कायः ; बहुतन्त्री ग्रीवा। अस्वाङ्गे—बहुतन्त्रीका वीणा ॥ २२४३ ॥

---

कसलाक्ष इति 'स्वाङ्गाभ्यामक्षिसक्थि'त्यनेनात्र समासान्ताराम इति पूर्वोक्तं ज्ञेयम्। नतूङि कार्य इति ऊङि कार्ये रूपं यथेति शेषः। वामावूरू यस्याः सा वामोरूः गोपिका। कृतेष्विति ऊङि कृते तु 'ई ऊरामान्ता लक्ष्मीर्गोपी'त्यनेन गोपीसंज्ञत्वात्, पश्चात् कप् भवेदेव। प्रिया गोपी वामोरूर्यस्येति प्रियगोपवामोरूक इति 'वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणे'त्यनेन प्रियागोप्योः पुरुषोत्तमत्वम्। किम्वा गोपस्य वामरूः गोपवामोरूस्ततः पूर्ववत् प्रियया सह पीताम्बर इति ॥

२२४२। न दक्षि। पीताम्बरे दक्षिणपूर्वादिषु प्रयोगेषु कप् न स्यात्। 'असमासान्तविधेर्वे'त्यनेन विकल्पे प्राप्ते प्रतिषेधोऽयम्। दक्षिणपूर्वेति दक्षिणस्याश्च पूर्वस्याश्च तयोरन्तरालदिगिति विग्रहे। 'दक्षिणपूर्बादयस्तदन्तरालः' इत्यनेन समासः। तथोत्तरपूर्वा इत्यादयोऽपि ॥

२२४३। न स्वाङ्गा। स्वाङ्गाभ्यां स्वाङ्गवाचिभ्यां नाड़ी तन्त्री इत्येताभ्यामुत्तरः पीताम्बरे कप् न स्यात्। ऋरामगोपीत्यनेन प्राप्ते प्रतिषेधोऽयम् बहुनाड़िरिति बह्व्यो नाड्यो यस्येति 'गोरीप आपः' इत्यनेनात्र वामनः। बहुतन्त्रीति बह्व्यस्तन्त्र्यो यस्यामिति उणादेरीप्रत्ययेन सिद्धात् तन्त्रीशब्दात् श्रीयं लक्ष्मीयमित्यनुसारेण ईप् वक्ष्यते। तेन गोपीसंज्ञत्वात् प्राप्तकप् न स्यात्। किञ्च, गोरीप आप इति वामने कृते ग्रीवाया वाच्यत्वात् इरामादक्त्यर्थादित्यनेन पुनरीप्। तन्त्रीशब्दोऽत्र धमनिवचनः। अस्वाङ्ग इति रूपं दर्श्यते इति शेषः। बहुतन्त्रिक इति पूर्ववद्विग्रहः। 'ऋरामगोपी'त्यनेनात्र कप्। तन्त्री

२२४४। न संज्ञायाम्।

कृष्णो देवोऽस्य—कृष्णदेवः ॥ २२४४ ॥

२२४५। निष्प्रवाणिर्नवपटे।

साधुः ॥ २२४५ ॥

२२४६। नेयसः।

बहुप्रेयान्, बहुप्रेयसी कृष्णः ॥ २२४६ ॥

२२४७। न भ्रातुः स्तुतौ।

---

वीणायामिति तु तन्त्रयतेरणत्वादीपि सिद्धेत्युक्तात् तन्त्रीशब्दोऽत्र वीणाया गुणवाचीति। तथा बहुनाड़िक इति च। नाड़ीशब्दोऽत्र दिनस्य त्रिशद्भागवाचीति विशेषः ॥

२२४४। न सं। संज्ञायां वाच्यायां पीताम्बरे नाम्नः कप् न स्यात्। कृष्णदेवः कश्चित्। संज्ञाशब्दानां यथाकथञ्चिद्व्युत्पत्तिरिति विग्रहं दर्शितवान्। एवं विश्वदेवः, विश्वयशा इत्यादिः। अत्रा-समासान्तविधेर्वेत्यनेन प्राप्ते निषेधः ॥

२२४५। निष्प्र। पीताम्बरे नवपटे वाच्ये कवभावेन निष्प्र-वाणिरित्ययं साधुः। निर्गता प्रवाणी यस्य स निष्प्रवाणिरिति। यस्यां शलाकायां वस्त्रं युज्यते सा प्रवाणी। वेञ् धातोरधिकरण-वाचिटण्सिद्धा। अत्राप्यसमासान्तेत्यनेन प्राप्ते निषेधः ॥

२२४६। नेय। ईयस उत्तरे पीताम्बरे कप् न स्यात्। बहवः प्रेयांसो यस्येति बहुप्रेयानिति। 'नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि'ति सूचयन् दर्शयति—बहुप्रेयसीति। बह्व्यः प्रेयस्यो यस्येति विग्रहे न चेयस्याः पीताम्बरे इति वामनो न स्यात्। किञ्चाली युवां पश्चात् पुंस्त्वेऽपीत्यादिना शसं विना गोपीवदिति देशात् सोऽहंरोऽपि स्यात् ॥

२२४७। न भ्रातुः। स्तुतिरत्र प्रशंसा तस्यां गम्यमानायां

सुभ्राता रामः ॥ २२४७ ॥

उक्ताः समासान्ताः ।

**अथ लक्ष्मीप्रकरणम् ।**

## २२४८ । नाम्नो लक्ष्म्याम् ।

महाविभुरयम् । लक्ष्मीप्रकरणमिदं न प्राचीनास्तद्धिते पठन्ति, वयन्तु नाममयप्रत्ययसादृश्यात् पठितवन्तः ॥ २२४८ ॥

---

भ्रातुः कप् न स्यात् पीताम्बरे । 'ऋरामे'त्यनेन प्राप्ते निषेधोऽयम् । शोभनो भ्राता यस्येति सुभ्राता इति । स्तुतिरत्र भ्रातृवाच्यस्यैवेति राम इति विशेष्यम् । उक्ताः समासान्ता इति समासान्ताः समाप्ताः इति निर्गलितोऽर्थः प्रकरणसमाप्तेः ॥

२२४८ । नाम्नो । लक्ष्म्यां लक्ष्मीलिङ्गविषये नाम्न उत्तरे यथास्वं वक्ष्यमाणा आवीवावूङ् च भवति । वासुदेवावान्तर-सजातीयविजातीया-नेकाधिकारिव्यापित्वात्, महाविभुनामायमधिकारः पादसमाप्तिं यावत् । यद्यपि धातूनां तिबादीनाञ्च लक्ष्म्यां वर्त्तमानाभावात् पारिशेष्यान्नाम्नः एव आवादयो लभ्यन्ते, तथापि नाम्न इति स्पष्टार्थं ग्रन्थकृता कृतं न्यायलभ्यार्थाद्धि शब्दोपेतार्थस्यातिस्पष्टत्वात् । किञ्च, टिदादि-निबन्धनद्वारा येभ्यः प्रत्ययोत्पत्तिस्तेषामतिदुर्लभत्वात्, पारिभाषिकमपीदं एकस्योभयलिङ्गत्वे इति समासटीकायामुक्तत्वात् । यद्यपीदं प्रकरणं प्राचीनैरत्र न पठ्यते, तथाप्युपयुक्तत्वादस्माभिः पठनीयमित्याह—लक्ष्मीति । यद्यपीदं लक्ष्मीप्रकरणं तद्धिते कचिद्वृद्धा न पठन्ति, तथाप्यविगीतशिष्टाचारत्वेन नामप्रकारकप्रत्ययसादृश्याद्वयन्त्वत्र पठित-वन्त इत्यर्थः । किञ्च, 'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावे नपुंसकमि'त्युक्तदिशा यदपि संस्थान-विशेषव्यञ्जं स्तनवसनश्मश्र्वादिकं लक्ष्मीत्यादिव्यञ्जकं लोकप्रसिद्ध-मस्ति, तदपि न सर्वत्र प्रवर्तत इति वृद्धोपदेशपरम्परामङ्गीकृत्य यथायोग्यं लक्ष्मीप्रत्यया दर्श्यन्ते । यतस्तनाद्यभावेऽपि खट्वावास्यादीनां

२२४९। कृष्णादाप्।

'टाप्' पाणिनिः ( ४।१।४ )। रमयतीति पचाद्यच्—रमा। एवं राधा, परमा, ईशा ॥ २२४९ ॥

२२५०। पाद ईप् वा।

---

लक्ष्मीत्वं, योषिद्वाचकस्य दारशब्दस्य पुरुषोत्तमत्वम्, आकाशगोकुलादीनां ब्रह्मत्वम्, अशन्यादीनां द्विलिङ्गता, तटशब्दस्य त्रिलिङ्गा च भवति। यद्यपि लक्ष्म्यामिति प्रकृतिविशेषणं प्रत्ययविशेषणञ्च सम्भवति, तथापि नाम्न इत्यस्य सन्निधौ लक्ष्म्यामिति दर्शयतो ग्रन्थकृतः स्वकृत्या विशेषणमेवाभिप्रेतम्। अतएव लक्ष्म्यां वर्तमानस्य नाम्नः प्रत्ययो लक्ष्मीत्वद्योतक एवेति ॥

२२४९। कृष्णा। लक्ष्म्यां कृष्णात् कृष्णसंज्ञकात् आप् भवति। नाम्न इत्यस्याधिकारत्वेन विधायकत्वाभावाद्विधिरयम्। अरामान्तकृष्णसंज्ञ इत्युक्तम्। टाविति पाणिनीयानां मते टाप् भवति। आ इति कृतेऽपि प्रयोगः सिध्यत्येव, तथापि आविति यत् कृतं तत्फलन्तु 'आरामहरो यदुसर्वेश्वरो' इत्यनेनैव दर्शितम्। रमाशब्दस्य साध्यार्थं वाक्यं स्वयं दर्शयति—रमयतीति। तत आप्, अ इद्वयस्येत्यरामहरः। रमा लक्ष्मी 'राधाविष्णुजनाभ्यामि'ति सोर्हरः। एवमिति राध-साध संसिद्धौ राध्नोतीति पचाद्यत् पश्चादाप् राधा कृष्णप्रेयसीनां मुख्या, कृष्णप्रियावलीमुख्या गान्धर्वा राधिका सखीत्युक्तेः। परं परमेश्वरं मातीति मा माने इत्यस्मात् 'कर्मण्यनुपेन्द्रादारामात् कः', इति क, 'आरामहरः कंसारी'त्यनेनारामहरः। पश्चादाप् परमा लक्ष्मीः शोभा वा। ईष्टे इति ईश ऐश्वर्ये 'ईशोद्धवकिरती'त्यनेन कः, ततः आप् ईशा परमेश्वरी। एवं रामा, श्यामा, यमुना, गङ्गा, पद्मा, दुर्गा प्रभृतयः। 'कृष्णादि'त्यनेन सोमपाप्रभृतिभ्य आप् न स्यात् ॥

२२५०। पाद। लक्ष्म्यां पाद इत्यस्मात् ईप् वा स्यात्। 'सङ्ख्याव्ययाभ्यां पादस्यान्तहरः' इत्येनान्तहरपाच्छब्दस्यैवात्र ग्रहणम्।

'पाच्छब्दस्य' ( २६० ) इति भगवति ग्रहणाद्वामनः— द्विपदी, द्विपात् ॥ २२५० ॥

२२५१ । द्विपदा ऋचि, त्रिपदा गायत्र्याम् ।

साधू ॥ २२५१ ॥

२२५२ । गिरादेराप् वा ।

गिरा, गीः ; दिशा, दिक् ; क्षुधा, क्षुत् ; तृषा, तृट् ; उष्णिहा, उष्णीक् इत्यादयः ॥ २२५२ ॥

२२५३ । अन आप् वा पीताम्बरे, मनस्त्वन्यत्रापि वा ।

माथुरयज्वे, माथुरयज्वानौ पुर्यौ ; सुपटिमे, सुपटिमानौ ;

---

ननु सूत्रे पाच्छब्दो गृहीतः, तर्हुदाहरणे कथं वामन इत्याह—पाच्छेति । पाच्छब्दस्य वामनो भवतीत्यत्र भगवतीत्यस्य ग्रहणादत्र वामनः । द्वौ पादौ यस्या इति द्विपदी पक्षे द्विपात् । उभयत्रापि 'राधाविष्णुजनाभ्यामि'त्यनेन सोर्हरः । कस्यचिन्मते द्विपदा इत्यपि ॥

२२५१ । द्वि । ऋचि वाच्ये द्वौ पादावस्या इति आपा सह द्विपदा इयं साधुः । तथा गायत्र्यां वाच्ये त्रयः पादा अस्या इत्यापा सह त्रिपदा इयमपि साधुः ॥

२२५२ । गिरा । लक्ष्म्यां गिरादेराप् वा स्यात् । गॄ निगरणे, दिश अतिसर्जने, क्षुध बुभुक्षायां, ञि तृषा पिपासायाम्, उत्पूर्वः ष्णिह प्रीतौ इत्येतेभ्यः 'सम्पदादेः क्विप्क्तौ' इत्यनेन क्विप्, ततः पाक्षिक आप् गिरादयः पक्षे गीरादयश्च उष्णिहा इति तत्रैव निपातसिद्धम् । अत्र केवलमाप् ॥

२२५३ । अन । लक्ष्म्यां पीताम्बरे अनोऽन्तात् आप् वा स्यात् । मनः मनन्तात्तु पीताम्बरेऽन्यत्राप्याप् वा स्यात् । मथुरायां भवः माथुरः । यज देवपूजादावित्यस्मात् वनिप् यज्वा माथुरो यज्वा ययोरिति

अतिपटिमे, अतिपटिमानौ गोप्यौ ; सीमे, सीमानौ ॥ २२५३ ॥

२२५४। ईप्।

विभुरयम्। 'ङीप्, ङीष्, ङीन्' पाणिनि ( ४।१।५, ४।१।२५, ४।१।७३ ) ॥ २२५४ ॥

२२५५। ऋरामाच्चतुर्भुजानुबन्धान्नरामादञ्चतेर्वाहश्च मन्मातृ-पञ्चादिवर्जम्।

कर्त्री, भगवती, भवती, अतिभगवती, विदुषी, रुक्मिणी, प्राची, कृष्णौही ॥ २२५५ ॥

---

माथुरयज्वे इति नान्तस्येति संहारहरः। एकवचने रूपभेदाभावाद्द्विवचनान्तमुपन्यस्तं राधाब्रह्मभ्यामितीरामः। 'अद्वयमिद्वय' इत्येरामः पक्षे माथुरयज्वानाविति नान्तेति त्रिविक्रमः। एवमुत्तरत्रापि। पुर्याविति काञ्च्यवन्त्यौ पटोर्भावः पटिमेति ततः शोभनं पटिमा ययोरिति सुपटिमे इतिद्वयं पूर्ववत्। अतिक्रान्ते पटिमानमिति अतिपटिमे इतिद्वयम्। चतुर्णामपि विशेष्यं गोप्याविति। अन्यत्रेति यदुक्तं तस्यान्यदप्युदाहरणं सीमे इतिद्वयं स्वार्थेऽत्राप्॥

२२५४। ईप्। नाम्नो लक्ष्म्यामीप् यथास्वं स्यात्। महाविभोरवान्तरत्वादयं विभुनामा। ङीरिति पाणिनीयानां मते ङीप् ङीष् ङीनिति त्रयो दृश्यन्ते, ते तु भार्या जात्यपत्याद्यर्थापेक्षयेत्यभिप्रेयते। अधिकन्तु तत्र विचार्यम्। ग्रन्थकृता तु स्वमते एकेनैव ईपा सर्वसिद्धेऽपि शिष्यहितार्थं प्राचीनमतं प्रदर्शितमिति॥

२२५५। ऋरा। मातृ पञ्चानावादी येषां ते मातृपञ्चादयः। मन्च मातृपञ्चादयश्च मन्मातृपञ्चादयस्तान् वर्जयित्वेति अत्वरायाञ्चेति णमु, मन्मातृपञ्चादिवर्जम्। मनं मातृपञ्चादींश्च वर्जयित्वा ऋरामान्तात् चतुर्भुजानुबन्धात् नरामान्तात् अञ्चतेः वाहश्चोत्तरः लक्ष्म्यामीप् भवति। अञ्चतेः पृथगुपादानेन धात्ववस्थायां चतुर्भुजानुबन्धस्याग्रहणमिति ज्ञाप्यते, एतदेव वक्ष्यते च। करोति येति कृधातोः शतृ

२२५६। युनो युवतिः।

साधुः। मनन्तादेस्तु—सीमा। मात्रादिः—माता, दुहिता, स्वसा, ननन्दा, याता, तिस्रः, चतस्रः। पञ्चादिर्नान्तसंख्या—पञ्च, सप्त, नव गोप्यः। तदन्तत्वेऽपि न—अतिसीमा, अतिमाता काचित्। प्रियपञ्चानः पाण्डवप्रजाः। ङि-साहचर्याद् 'ईङ्गोस्तु

तत ईप् कर्त्रीति। भगः षड़ैश्वर्योऽस्त्यस्या इति मतुः। 'अद्वयमाभ्यामि'त्यनेन मतोर्म व इति वः तत ईप् भगवती। भूधातोः उणादेरवतुच्। भवतुरिति कश्चित्। 'संसारहरश्चिती'ति संसाहरः, ईप् भवतीति। अतिक्रान्तो भगवान् यया सातिभगवती। वेत्तीति 'वेत्तेः शतुर्वसुव'त्यनेन वसु ईप्। वसोर्वस्य उरिति, उः षत्वं विदुषीति। रुक्म अस्त्यस्या इति रुक्मिणी। प्राञ्चतीति क्विप्, न लोपः, ईप् प्राचीति। कृष्णं बहतीति 'तुराषाह' इत्यनेन विप्रत्ययान्तं कृष्णवाह इति साधुः तत ईप्। 'वाहो वा ऊट् भगवती'ति ऊट्। 'अद्वयादूटो वृष्णीन्द्रः' इति वृष्णीन्द्रः कृष्णौहीति नौः काचिद्गोपी वा॥

२२५६। यूनो। लक्ष्म्यामीपा सह यूनो यूवतिरियं साधुः। ईपो वामनः नरामस्य तरामः, वस्योरामाभावश्च निपातफलम्। मन्पदेनात्र मनन्तो गृह्यते, भङ्गेत्रति सूचयान्नाह—मनन्तादेस्त्वति मनन्तादेस्तु रूपं दर्श्यते इति शेषः। मनन्तादेः प्राप्ते वर्जनमित्यनुसन्धेयम्। सीमेति सोऽन्तःकर्मणि चतुर्भुजेत्यारामान्तः पाठः। तत औणादिकः कृनिप् दामोदरमास्थेति ईरामः सीञ बन्धने इत्यस्माद्वा स एव कृनिप् सीमन्। 'नान्तधातुर्वजिते'ति त्रिविक्रमः, नान्तात् प्राप्तेऽत्र वर्जनम्। मातेति माङ् माने तृन् 'ऋरामसखिभ्यामि'ति सोराच। एवं दुह प्रपूरणे तृन् इट् दुहितेति। स्वसा ननन्दा इति द्वावुणादिसिद्धौ संज्ञाशब्दौ। स्वस् प्राणने, नदि आह्लादे यङ्लुगन्त इत्येताभ्यामुणादयो बहुलमिति ऋप्रत्ययः बहुलवचनात् ननन्दृ इत्यत्र नारायणारामस्य त्रिविक्रमः; स्वसृशब्दः कर्तृवत्। एवं ननन्दृ यातेति या प्रापणे तृन्। तिस्र इति चतस्र इति लक्ष्मीस्थयोस्त्रिचतुरोस्तिसृ-

वा' ( २३६ ) इत्यत्र विष्णुभक्तिरेव गृह्यते, तोत नित्यमेवारामहरः; राज्ञी, शुनी। 'अनञ्पूर्वस्य' ( २७४ ) इत्यादौ सुं विनेति प्रत्ययमात्रं गृह्यते—अर्वती। 'अञ्चति'ग्रहणाद्धातोश्चतुर्भुजानुबन्धान्न—हिमालय-स्रत् गङ्गा ॥ २२५६ ॥

२२५७। वनो नश्च रः, पीताम्बरे तु वा।

---

चतनृविष्णुभक्ताविति तिसृचतस्रोः रः सर्वेश्वरे' इति तिस्राद्यादेशः। एभ्य ऋरामान्तत्वात् प्राप्ते वर्जनम्। मात्रादिर्गणोऽयम्। पञ्चादीत्यादिना नान्तसङ्ख्या गृह्यते इत्याह—पञ्चादिरिति। पञ्चेत्यादिषु त्रिषु सनान्तसङ्ख्यातः कतेश्चेति जस्शसोर्महाहरः। त्रयाणां विशेष्यं गोप्य इति। वर्णेन विधौ तदन्तस्य कार्यं नाम्ना तु क्वचिदित्युक्तत्वात्। नाम्नि वर्जनात् तदन्तत्वेऽपि तद्वर्जनमायातीत्याह—तदन्तत्व इति 'तदन्तत्वेऽपि समासान्तत्वेऽपि एभ्य ईप् न स्यादित्यर्थः'। अतिसीमेति अतिक्रान्ता सीमानमिति 'अत्यादयो द्वितीयये'ति द्वितीयाकृष्णपुरुषः। अतिक्रान्तः सीमा यया इति पीताम्बरो वा। एवमतिमामेति। प्रियपञ्चाल इति प्रियाः पञ्च यासां ता इति। ङिसेति। ङिसाहचर्यात् ङिसहपाठादीङ्योस्तु वेत्यत्र सूत्रे विष्णुभक्तिरेव गृह्यते इति 'राधाब्रह्मभ्यामि'त्यनेन विहितो य ईप्रत्ययस्तस्मिन्नेव 'वम-सत्-सङ्गहीनस्यानोऽरामहरो वा' भवति। अतएव ईपि नित्यमरामहरो भवतीति भावः। राज्ञः स्त्री राज्ञीति, शुनः स्त्री शुनीति। सुं विनेति 'न अनञ् पूर्वस्यार्वनोऽर्वतृ सुं विने'त्यत्र प्रत्ययमात्रं गृह्यते इति ईपि चार्वनोऽर्वतृभावः। अर्वनः स्त्री अर्वतीति घोटकी। सूत्रे चतुर्भुजानुबन्धादिति कृत्वा यदञ्चतीति गृहीतं ज्ञापकत्वेन तत्फलं दर्शयति—अञ्चतीति। सूत्रेऽञ्चतिग्रहणाद्धेतोर्धातोश्चतुर्भुजानुबन्धादीप् न स्यादित्यर्थः। हिमालयस्रदिति हिमालयात् स्रंसते इति स्रंसु अधःपतने इत्यस्मात् सम्पदादेः क्विप्॥

२२५७। वनो। असमासे समासेऽपि वनो वनन्तादीप्, तस्मिन् वनी नश्च नरामस्य च रो भवति। पीताम्बरे समासे तु वन ईप्

धीवरी, कृष्णदृश्वरी, बहुकृष्णदृश्वरी, बहुकृष्णदृश्वा मथुरा ॥ २२५७ ॥

२२५८। गोपालपूर्वस्य तु न तौ।

भीष्मयुध्वा शिखण्डिनी। कथम् 'अतिशुनी'? सार्थकनिरर्थकयोः सार्थकस्यैव ग्रहणम्' इति न्यायेन प्रत्ययस्यैव वनो ग्रहणात् ॥ २२५८ ॥

२२५९। पीताम्बरे।

प्रभुरयम् ॥ २२५९ ॥

---

वा भवति, तस्मिन् वनो नश्च रो भवति। वन इत्यत्र सम्बन्धसामान्ये षष्ठेव तस्याः सकाशात् यथायथं पञ्चम्यर्थोऽपि प्रतीयते। धीवरीति डु धाञ् धारणपोषणयोरित्यस्मात् क्वनिप्। 'दामोदरमास्थे'ति ईरामः धीवन्, तत ईप्। कृष्णदृश्वरीति कृष्णं दृष्टवतीति दृशधातोः क्वनिप् तत ईप्। बहवः कृष्णदृश्वानो यस्यामिति बहुकृष्णदृश्वरीतिद्वयम् ॥

२२५८। गोपा। गोपालः पूर्वो यस्य सगोपालपूर्वस्तस्य वनस्तौ ईप्ररामौ न भवतः। भीष्मं योधितवतीति युधधातोः क्वविप्। नान्तेति त्रिविक्रमः भीष्मयुध्वेति। ध-गोपालपूर्वत्वादत्रेप् न स्यादीपि परे नरामस्य ररामश्च न स्यात्। शिखण्डिनीति भीष्मस्य युद्धनिवर्तनार्थं कश्चित् स्त्रीवेशधारीति महाभारते प्रसिद्धम्। ननु श्वन्शब्दस्यापि वन इत्यवयवेदर्शनात् अतिक्रान्ता श्वानमिति वाक्येऽतिशुनीति कथं भवत्वित्याक्षेपे सिद्धान्तमाह—सार्थकेति। अर्थेन सह वर्तमानः सार्थकः, निर्गतोऽर्थान्निरर्थकः तयोर्मध्ये सार्थकस्यैव ग्रहणमिति न्यायेन प्रत्ययरूपस्यैव वनो ग्रहणाद्धेतोः श्वन्शब्दस्य वन्रूपावयवत्वेऽपि ऋरामादित्यत्र 'नरामादि'त्यनेन ईप् स्यात्, नरामस्य ररामस्तु न स्यात् ॥

२२५९। पीता। पीताम्बरे समासे लक्ष्म्यां नाम्न ईप् यथास्वं स्यात्। एकाधिकारव्यापित्वात् प्रभुनामायम् ॥

२२६०। ऊधसः सो नश्च।

कुण्डोध्नी, चतुरूध्नी ॥ २२६० ॥

२२६१। सङ्ख्यातो दाम्नो हायनात्तु वयसि।

द्विदाम्नी त्रिहायणी गौः ॥ २२६१ ॥

२२६२। अन उद्धवहरयोग्याद्वा नैवान्यस्मात्।

कृष्णराज्ञी, कृष्णराज्ञ्यौ ; पक्षे तु 'अन आप् वा' ( २२५३ ) इत्याप् ; पक्षे तस्याप्यप्राप्तिः। कृष्णराजा, कृष्णराजे, कृष्ण-

---

२२६०। ऊध। पीताम्बरे लक्ष्म्यामूधःशब्दादीप् स्यात्। तस्मिन् सत्यूधसः सरामो नरामश्च स्यात्। सो नश्चेत्युभयत्राप्यराम उच्चारणार्थः। कुण्डोध्नीति कुण्डमिवोधोऽस्या इति ईप्-नौ, ततो 'व-म-सत्सङ्गहीनस्यानोऽरामहरः' इत्यनेनारामहरः। चतुरूध्नीति चत्वारि ऊधांसि अस्या इति सर्वं पूर्ववत् ॥

२२६१। सङ्ख्या। पीताम्बरे लक्ष्म्यां सङ्ख्यातः सङ्ख्यावाचकादुत्तरस्माद्दाम्न उत्तर इप् भवति। वयसि गम्यमाने तु सङ्ख्यातः परस्माद्धायनादीप् भवति। द्विदाम्नीति द्वे दाम्नी यस्या इति। सङ्ख्येति किम् ? उद्दामा। त्रिहायणीति त्रीणि हायनानि यस्या इति ॥

२२६२। अनः। उद्धवहरस्य योग्यम् उद्धवहरयोग्यं तस्मात् पीताम्बरे लक्ष्म्यामुद्धवहरयोग्यात् अनोऽनन्तादीप् वा स्यात्। अन्यस्मादुद्धवहरानर्हादन ईप् नैव स्यात्। यद्यप्युद्धवहरयोग्यादित्यनेनैवान्यस्मान्न स्यात्, तथाप्यन्यस्मादिति स्पष्टार्थम्। 'नरामादि'त्यनेन नित्यप्राप्ते विकल्पार्थमिदम्। कृष्णो राजा यस्यामिति कृष्णराज्ञी द्वारका। 'व-म-सत्सङ्गे'त्यरामहरः। कृष्णो राजा यत्र कुलद्वये इति विग्रहे ब्रह्मलिङ्गस्य द्विवचनेऽपि ईबभावेन कृष्णराज्ञीति भवितुमर्हतीत्याशङ्कानिरासार्थं कृष्णः राजा ययोरिति कृष्णराज्ञ्याविति द्विवचनान्तुपन्यस्तं, किन्तु वाच्यपदमत्र द्वारकामथुरे इति। पक्ष इति ईव-

राजानौ। नेह—सुपर्वाणो गोप्यः, 'अन आप् वा' (२२५३) इति; पक्षे—सुपर्वाः। पीताम्बर एव नियमात्—अतिपर्वणी हरिभक्तिः ॥ २२६२ ॥

२२६३। स्वाङ्गपूर्वात् क्तान्तात्, न तु जातादेः।

ऊरुभिन्नी, शङ्खभिन्नी, केशविलूनी, कर्णच्छिन्नी। पाणिगृहीती तु भार्यायामेव; पाणिगृहीतान्यत्र। जातादेस्तु—दन्तजाता,

---

भावपक्षे तु 'अन आप् वे'तीत्यनेनाप्। विकल्पत्वात् पक्षे तस्यापि आपोऽप्यप्राप्तिः। कृष्णराजा इति पूर्ववद्विग्रहसमासौ आप्, 'नान्तस्य नत्वनीपोरि'ति संसारहरः। आपोऽभावेऽपि कृष्णराजेति भवितुमर्हतीत्यपरितुष्यन् कृष्णराजे इति द्विवचनान्तं दर्शितम्। प्रथमैकवचने आवन्तनान्तयोरभेदरूपत्वात्। अभावपक्षे कृष्णराजानावित्यपि द्विवचनान्तं दर्शितम्। नेहेति उद्धवहरयोग्याभावादिति शेषः। सुपर्वेति शोभनानि पर्वाणि प्रतिपत्प्रभृतीनि यासां ता इति विग्रहः। 'अन आप् वे'ति आप् वा स्यात् तत्राविशेषेणैवानो ग्रहणात्। सुपर्वा इत्यत्रापि गोप्य एव विशेष्यम्। पीताम्बर इत्यस्मात् पीताम्बराधिकारत्वेनेति याज्यम्। अतिक्रान्ता पर्व इति 'अत्यादयो द्वितीयये'ति समासस्ततो नरामादितीप् अतिपर्वणीति ॥

२२६३। स्वाङ्ग। स्वाङ्गं पूर्वं यस्य तस्मात् पीताम्बरे स्वाङ्गपूर्वात् क्तान्तात् लक्ष्म्यामीप् भवति। स्वाङ्गपूर्वात् जातादिक्तान्तात्तु न भवति। पूर्वोक्तं स्वाङ्गमत्रापि ज्ञेयम्। ऊरुर्भिन्नो यस्या ऊरुर्भिन्नो अस्या इति वा विग्रहः। शङ्खभिन्नीति शङ्खं भिन्नं यस्या इति। शङ्खशब्दोऽत्र मस्तकास्थिवाचको गृह्यते न। कम्बुपर्यायकः सूत्रे स्वाङ्गेत्युक्तत्वात्। केशविलूनीति केशा विलूना अस्या इति। कर्णच्छिन्नीति कर्णश्छिन्नोऽस्याः कर्णौ छिन्नावस्या वेति। एषु भिदिर् छिदिर् द्वैधकरणे, लूङ छेदने इत्येतेभ्यः क्तः रदाभ्यामित्यादिना क्त-तस्य न इति। यद्यप्यनेनैव पाणिगृहीतीति सिध्येत्, तथापि शिष्टाचारानुरोधात् पाणिर्गृहीतो यस्या इति वाक्ये भार्यायां वाच्याया-

दन्तकृता, दन्तमिता ; सुखादित्वात् क्तस्य परनिपातः ॥ २२६३ ॥

२२६४। जातेर्वा, न त्वाच्छादनात्।

सारङ्गजग्धी, सारङ्गजग्धा ; पलाण्डुभक्षिती, पलाण्डुभक्षिता ; सुरापीती, सुरापीता। जातेरिति किम् ? मासजाता। आच्छादनात्तु—वस्त्रच्छन्ना। अजातादेरित्येव—वृक्षजाता ॥ २२६४ ॥

पीताम्बरो निवृत्तः।

---

मेव पाणिगृहीती स्यादित्याह—पाणीति। सख्यवृत्तादिना भार्याभिन्नाया अपि पाणिग्रहणं सम्भवतीत्याह—पाणिगृहीतेति। जातादेस्त्विवति रूपं दर्श्यते इति शेषः। दन्तजातादिषु दन्ता जाता अस्याः, दन्ताः कृता अस्याः, दन्ता मिता अस्या इत्यादि विग्रहो ज्ञेयः। एवं दन्तनता इत्यादयोऽपि यथायथमूह्याः। दुःखादित्वादिति जातिकालसुखादिभ्यः क्तस्येत्यत्र सुखादिभ्य इत्यादिपदेन सुखादेराकृतिगणत्वात् उर्वादीनामपि सुखादित्वमित्यस्मादेभ्यः क्तस्य परनिपातः, अन्यथा क्तस्य पूर्वनिपातः स्यात् ॥

२२६४। जातेः। पीताम्बरे लक्ष्म्यां जातेरुत्तरस्मात् क्तान्तात् पर ईप् वा स्यात्। आच्छादनवाचिजातेस्तु परस्मात् क्तान्तान्न स्यात्। सारङ्गो जग्धो ययेति ईप् अ-इद्वयस्येत्यरामहरः, सारङ्गजग्धीति पक्षे 'कृष्णादाप्' इत्याप् सारङ्गजग्धेति। सारङ्गश्चातके मृगे इति नानार्थवर्गात् जातित्वं प्रसिद्धम्। एवं पलाण्डुर्भक्षितो ययेति पलाण्डुभक्षितीति द्वयम्। पलाण्डुर्निन्द्यकन्दजातिविशेषः, पेयाज इति नीचोक्तिः। तथा सुरा पीता ययेति सुरापीति द्वयम्। किमिति किमर्थं, जातेरुत्तरो यर्हि न स्यात्तर्हि न स्यात्। मासो जातोऽस्या मासजातेति। आच्छादनात्त्विवति उदाह्रियत इत्यर्थः। वस्त्रं छन्नं यस्याः वस्त्रं छन्नं ययेति वा वस्त्रच्छन्नेति। वस्त्रस्याच्छादनजातिवाचकत्वादत्र क्तान्तादीप् न स्यात्। 'जातेर्वे'त्यत्र विशेषग्रहणाभावात् क्तान्तमात्रात् पाक्षिकेऽपि प्राप्ते भङ्ग्या वृत्तित्वेन नियमयति-अजातेति। जातेरुत्तरस्मादजातादेरेव क्तान्तादीप् वा स्यादित्यर्थः। तेन

२२६५। परार्थमात्रे ।

प्रभुरयम्। समासे गुणीभूतम्—'परार्थम्' ॥ २२६५ ॥

२२६६। स्वाङ्गाद्वा, न तु सत्सङ्गोद्भवबहुसर्वेश्वर-क्रोड़ादिभ्यो, न च सह-नञ्विद्यमानपूर्वेभ्यः।

अतिकेशी, अतिकेशा ; कृष्णकेशी, कृष्णकेशा ; सुमुखी, सुमुखा ; बहुकेशी, बहुकेशा ; प्रयागवेणी। प्राणित्वोपचारात्—सुमुखी प्रतिमा। नेह—सुस्कन्धा, सुजघना, सुक्रोड़ा। खुर-भग-

---

वृक्षो जातो यस्या इति विग्रहे वृक्षस्य जातित्वेऽपि वृक्षजाता इत्येव। सारङ्गादीनामपि सुखादित्वमस्तीति एतेभ्योऽपि क्तस्य परनिपातः। पीताम्बराधिकारः समाप्तः ॥

२२६५। परः। परः अन्यः अर्थः यत्र तत् परार्थमेव परार्थमात्रं तस्मिन् यथास्वं प्रत्ययः स्यात्। अयमपि प्रभुनामाधिकारः। समास इति यस्मिन् कस्मिन् समासे सति केनापि यस्यार्थं गुणीभूतमप्रधानीभूतं तत् परार्थमित्यर्थः ॥

२२६६। स्वाङ्गा। परार्थमात्रे स्वाङ्गात् स्वाङ्गवाचकाच्छब्दाल्लक्ष्म्यामीप् वा भवति। सत्सङ्गोद्भवात् बहुसर्वेश्वरात् क्रोड़ादिभ्यस्तु स्वाङ्गेभ्य ईप् न भवति। सह नञ्विद्यमान-पूर्वेभ्यश्च स्वाङ्गेभ्य ईप् न भवति। प्राप्ते निषेधोऽयम्। स्वाङ्गमत्र पूर्वोक्तं ग्राह्यम्। अतिक्रान्ता केशानिति 'अत्यादयो द्वितीयये'ति समासः। 'गोरीप आप्' इति वामनः, ईप् 'अद्वयस्ये'त्यरामहरः अतिकेशीति, पक्षे 'कृष्णादाप्' लक्ष्म्यामित्याप् अतिकेशेति। कृष्णाः श्यामवर्णाः केशा अस्या इति कृष्णकेशीति द्वयम्। शोभनं मुखं यस्या इति सुमुखीति द्वयम्। बहवः केशा अस्या इति बहुकेशीति द्वयम्। प्रयागे वेणी यस्याः सा प्रयागवेणीति, पक्षे प्रयागवेणिरिति। प्रतिकृतेः प्राणित्वाभावेन प्राण्यङ्गस्वाङ्गमित्यस्यागमनात् तत्प्रवेशाय प्रकारमाह—प्राणित्वेति।

गुद-गलादयः क्रोड़ादयः। सकेशा, अकेशा, विद्यमानकेशा। अस्वाङ्गात्तु—सुज्ञाना, सुशोणिता, सुशोथा॥ २२६६॥

२२६७। नासिकोदरौष्ठ-जङ्घा-दन्त-कर्ण-पुच्छ-शृङ्गाङ्ग-गात्रान्त्र-नेत्र-कण्ठेभ्यो न निषेधः।

तुङ्गनासिकी, तुङ्गनासिका॥ २२६७॥

२२६८। पुंस् शब्दात् पाण्डवे नित्यं, कपं विना।

---

नेहेति सत्सङ्गोद्धवादित्वात् शोभनः स्कन्धो यस्या इत्यादि विग्रहे सुस्कन्धाद्यास्त्रयः, किन्तु सुजघनेति बहुसर्वेश्वरस्योदाहरणम्। सुक्रोड़ेति स्पष्टम्। क्रोड़ादिगणं दर्शयति—खुरेति। रूपन्तु सुखुरा, सुभगा, सुगुदा, सुगणा एवं क्षुद्रस्कन्धा, मध्यमस्कन्धा इत्यादयोऽपि यथायथं ज्ञेयाः। सहादिपूर्वाणां प्रयोगान् दर्शयति—सकेशेत्यादिना। केशैः सह वर्तमाना सकेशेति, न विद्यन्ते केशा यस्या इत्यकेशा, विद्यमानाः केशा यस्या इति विद्यमानकेशा। अस्वाङ्गात्त्विबति ईप् न स्यादिति शेषः। अस्वाङ्गत्वमेषाममूर्तिमत्त्वात् द्रवत्वात् विकारजत्वाच्च। शोभनं ज्ञानं यस्या इत्यादित्रयम्। शोथो विकारजो द्रवविशेषः॥

२२६७। नासि। परार्थमात्रे लक्ष्म्याः नासिका-उदर-ओष्ठ-जङ्घा-दन्त-कर्ण-पुच्छ-शृङ्ग-अङ्ग-गात्र-अन्त्र-नेत्र-कण्ठः इत्येतेभ्यस्त्रयोदश-सङ्ख्यकेभ्यो वैकल्प्येपो निषेधो न स्यात्। नासिकोदरयोर्बहुसर्वेश्वरत्वेन प्रतिषेधे प्राप्ते तत्खण्डनमन्येषान्तु सत्सङ्गोद्धवत्वेन। तुङ्गा नासिका यस्या इति तुङ्गनासिकीति द्वयम्। एवं तुङ्गोदरी तुङ्गोदरा, पृषोदरी पृषोदरा, विम्बोष्ठी विम्बोष्ठा, ह्रस्वजङ्घी ह्रस्वजङ्घा, श्यावदन्ती श्यावदन्ता, छिन्नपुच्छी छिन्नपुच्छा, वक्रशृङ्गी वक्रशृङ्गा, विशुद्धगात्री विशुद्धगात्रा, पद्मनेत्री पद्मनेत्रा, शुष्ककण्ठी शुष्ककण्ठा इत्येते। एवं क्षुद्रनासिकी छिन्ननासिकीत्यादयः। क्षुद्रनासिकेत्यादयश्च यथासम्भवं पूर्वपदं कल्पयित्वा साधनीयः॥

२२६८। पुंस। परार्थमात्रे पाण्डवे विषये कपं विना पुंस्-

प्रियपुंसी, प्रियपुंस्यौ। एवमतिपुंसी। यदुषु तु—प्रियपुंस इत्यादिः। कपि—प्रियपुंस्का ॥ २२६८ ॥

२२६९। कवर-मणि-विष-शरेभ्यः पुच्छात्।

कवरपुच्छी ॥ २२६९ ॥

२२७०। उपमानात् पक्षपुच्छाभ्याम्।

गरुड़पक्षी श्वपुच्छी ॥ २२७० ॥

परार्थो निवृत्तः।

---

शब्दात् लक्ष्म्यां नित्यमीप् स्यात्। प्रियः पुमान् यस्या इति प्रियपुंसीति, ब्रह्मणो द्विवचनप्रतीतिनिवृत्त्यर्थं प्रियपुंस्यावित्यप्युदाहृतम्। एवमिति। एवम्प्रकारेण अतिक्रान्ता पुमांसमित्यतिपुंसीति। पाण्डवविषये ईब्विधानादन्यत्र न स्यादित्याह—यदुषु त्विति। कपि सति प्रियपुंस्केति आवेव ॥

२२६९। कवर। परार्थमात्रे कवर-मणि-विष-शर इत्येतेभ्यः परस्मात् पुच्छात् लक्ष्म्यामीप् स्यात्। कवरः कर्वुरः पुच्छो यस्याः कवरः पुच्छे यस्या इति वा कवरपुच्छीति। मणियुक्तो पुच्छो यस्या इति मणिः पुच्छे यस्या इति वा। क्वचिन्मध्यलोपः प्रायोग्रहणात् क्वचिद्व्यधिकरणानाञ्चेत्येताभ्यां समासः मणिपुच्छीति च। एवं विषपुच्छी शरपुच्छीति च। विषोऽत्र पद्ममृणालखण्डो लताविशेषखण्डो वा ॥

२२७०। उप। परार्थमात्रे उपमानादुत्तराभ्यां पक्षपुच्छाभ्यां लक्ष्म्यामीप् स्यात्। गरुड़पक्षीति गरुड़पक्ष इव पक्षो यस्या इति। एवं मयूरपुच्छी उलूकपुच्छीत्यादयोऽपि। अत्रापि पूर्ववन्मध्यपदलोपी पीताम्बरः। परार्थाधिकारेऽपि केचित् केवलबहुव्रीहावेतान् साधयन्तीति यत् तत्तु गोस्वामिपादानां नाभिमतं, पीताम्बरेणैतेषां सिद्धत्वेऽपि परार्थमात्राधिकारकरणादित्यभिप्रेयते। परार्थसमाप्तिमाह—परार्थ इति।

२२७१ । स्वार्थे ।

प्रभुरयम् ॥ २२७१ ॥

२२७२ । अण्-केशवगौरादिभ्यः ।

ईप् स्यात् । अण्—सृष्टिकारी, यादवी । केशवात्—वृन्दावनचरी, गायनी, वैनतेयी, शाक्तिकी । 'पठिता गीता' इत्यत्र तु कृतेटः क्तस्य केशवत्वाभावः, तस्यैव तत्संज्ञत्वात् । गर्गस्य स्त्र्यपत्यं गार्ग्य ईप् इति स्थिते यलोपः गार्गी, वात्सी ॥ २२७२ ॥

---

२२७१ । स्वा । स्वस्यार्थः स्वार्थः तस्मिन् लक्ष्म्यां विषये नाम्नो यथास्वमीप् स्यात् । अयमपि प्रभुनामा ॥

२२७२ । अण् । अण्च केशवश्च गौरादिश्च तेऽण्केशवगौरादयस्तेभ्यः । अण्केशवेति कृत्तद्धितयोरनियमात् अणन्तात् केशवान्ताद्गौरादेश्चोत्तरो लक्ष्मीविषयके स्वार्थे ईप् भवति । अणिति अणन्तो यथोदाह्रियते सृष्टिकारीति । सृष्टिं करोतीति कर्मण्यणित्यण्, ईप् । यादवीति यदोरपत्यं स्त्रीति, तेन दीव्यतीत्यतः प्रागर्थे केशवण इति णः । अस्य टित्त्वेऽप्यणं सप्राधान्यस्वीकारादनन्तादीप् । केशवादिति ईप् दर्श्यते इति शेषः । वृन्दावनचरीति 'अधिकरणे भिक्षा-सेने'त्यनेन अधिकरणपूर्वात् चरेष्टः, टित्त्वात् केशवत्वेनास्मादीप् । गायनीति 'गायतेस्थक-टनणावि'ति टनण् अतोऽस्मात् टित्त्वादीप् । तर्हि कथं गाथकी भार्यार्थत्वात् । वैनतेयीति विनताया अपत्यं स्त्रीति 'लक्ष्मी-शुभ्रादिभ्यामि'त्यनेन शुभ्रादित्वात् माधव-ढः, ढ एय ईप् । शाक्तिकीति शक्तिः प्रहरणमस्या इति 'शक्तियष्टिभ्यां ठीर्माधवः' इति ठीः, ठीस्त्वीक् ईप् । पठिता गीता इत्यत्र तु कृत इट् यस्य तथाविधस्य केशवत्वाभावो भवति । तस्यैव इट् एव । तत्सञ्ज्ञात् केशवसञ्ज्ञत्वात् । अतएवान्तकेशवत्वाभावादीप् न स्यादिति शेषः । गर्गस्येति गार्ग्य इति, 'गर्गादेर्माधव-य' इति यो वक्ष्यते । यलोप इति 'विष्णुजनात्तद्धितस्य हरः' इत्यनेन गार्गीति । एवं वात्सीति च ॥

२२७३। गार्गी-प्रभृतेर्गार्ग्यायण्यादयो वा।

गार्ग्यायणी, वात्सायनी ॥ २२७३

२२७४। माधव्यायन्यादयो नित्यम्।

गौरादेः—गौरी, कुमारी, किशोरी, तरुणी, वर्करी, कलभी, वधूटी, चिरण्टी। अचरमवयस्काः सर्वे गौरादयः। तथा सखी

---

२२७३। गार्गी। गार्गीप्रभृतेः स्थाने गार्ग्यायण्यादयः प्रयोगा ईवन्ता यन्प्रत्ययान्ताः वा निपात्यन्ते। निपातसामर्थ्यात् 'अ-इद्वयस्ये'त्यनेन गार्ग्या ईरामहरो न स्यात्। गार्ग्यायणी वात्स्यायनीत्यादिः। पक्षे—गार्गी वात्सीत्यादयोऽपि तिष्ठन्ति। नन्विदं न सूत्रं किन्तु वक्ष्यमाणस्यैव सूचनं साधुनिपातादि प्रयोगाभावात्। वक्ष्यमाणप्रकारस्त्वेवम्। 'इयाभ्यां नृसिंहाभ्यां गोत्रप्रत्ययाभ्यां फरामः' इति फस्तस्यायनः। 'गोत्रं प्रशंसायां युवा वे'त्यनेन गोत्रस्यैव विकल्पयुवातिदेशेन पुरुषोत्तमे यद्रूपं दर्शयिष्यते तस्यैव लक्ष्मीत्वाय इदमत्रोक्तम्। तेन या गार्गी सैव गार्ग्यायणी, एवं वात्स्यायन्यपि, किन्तु विष्णुजनात्तद्धितेत्यत्र 'भगवत्यारामं विने'त्यनेनारामवर्जनात् यस्य हरो न स्यात्। मैवम्। तथा सति गार्गीप्रभृतेरित्यनुक्त्वा गार्ग्यप्रभृतेरित्युक्तं स्यात्। साधुनिपातादिप्रयोगाभावस्तु न दोषः, आचार्याणां वक्रोक्तिः शिष्याणां हितायेति शिष्टाचारात्। अतएव साधुनिपातादयोऽत्र परिकल्पनीयाः॥

२२७४। माध। माधवीप्रभृतेर्माधव्यायन्यादयस्तु प्रयोगा ईवन्तायनप्रत्ययान्ता नित्यं यथा स्यात्तथा निपात्यन्ते। पूर्वत्र सूत्रे गार्ग्यादेर्यरामसद्भावेन कष्टकल्पना सम्भवति। अत्र तु मध्वादेर्यरामाभावात् कष्टकल्पनाया नावकाश इति सूत्रद्वयं निपातमेवेति निश्चीयते। मधोस्त्रप्रपत्यमित्यादौ वाक्ये माधव्यायन्यादयः। माधव्या ईरामहराभावः पूर्ववत्। एते युवप्रत्ययान्तसदृशाः। अस्मिन् विषये माधवीप्रभृतयस्तु तद्धितबाहुल्यात्। अनेन निपातेन विरोधप्राप्तेर्मयैतदुक्त-

इत्यादि। अशिश्वी—शिशुना विना। वर्षाभ्वी, पुत्री, कल्माषी, शवली, पिशङ्गी, सारङ्गी, पाण्डरी, मातामही, पितामही, तन्वी, हयी, गवयी, शुनी, चौरी, अनडुही। 'अनड्वाही' इत्येके। तथा नागी स्थूलायां, काली कृष्णायां, नीली वड़वौषध्योः, नीली नीला

---

मन्यत्र तु बहुलं विनैव ज्ञेयाः। गौरेति यथायोग्यं गौरादेरूपाणि दर्श्यन्ते। स्वार्थप्रत्ययानां वाक्यासङ्गतेर्वाक्यं विनैव गौर्यादयश्चिरण्टयन्ता अष्ट प्रयोगा दर्शिताः। अष्टवर्षा भवेद्गौरीत्युक्तदिशा गौरादेरसाधारणलक्षणमाह–अचरमेति। सर्वेऽचरमवयस्का नव्यवयस्का गौरादयः स्युरित्यर्थः। तथेति तथा पूर्वोक्तप्रकारेण गौरादेराकृतिगणत्वात् सखिशब्दादीप् सखीत्यादि। सह खेन वर्तते या सापि सखीति न्यासकारसम्मतम्। एकेषां मतेनैव कानिचिदुदाहरणानि दर्शयति–अशिश्वीति। अशिश्व्याद्या अनड्वाह्यन्ताः सप्तदश गौरादित्वेन ईबन्ता भवन्तीत्यन्ये पण्डिता वदन्तीत्यर्थः। शिशुना विना शिशुराहित्ये न विद्यते शिशुर्यस्या इति व्युत्पत्त्या नवीनावस्थाप्रतीतेरशिशु-शब्दादीप्। 'उद्धयस्य गोविन्दः' इत्यत्र स्त्रीप्रत्ययवर्जनान्नात्र गोविन्दः अशिश्वीति। वर्षाभ्वीति संज्ञा। 'वर्षाभ्वी कमठी दुली'त्यमरशासनात्। एतन्मते पुत्रशब्दोऽत्र दुहितृवचन इतीप् पुत्रीति, ये तु दुहितृवचनं नेच्छन्ति तन्मते पुत्रान्न लक्ष्मीप्रत्यय इति। शवल्यादयश्चत्वारः प्रत्येकं गुणविशेषयुक्ताः। मातामह्यादयस्तु प्रसिद्धाः। इदानीमर्थविशेषेषु तु वर्तमानाः कतिचित् गौरादित्वेन ईप्सिद्धा इत्याह–तथेति। नागी। स्थूलायां वाच्यायां तथा गौरादित्वेन नागशब्दादीप् नागीति। एतदादीनि गौरादेः प्रपञ्चलक्षणानि। तथाशब्दस्य तु सर्वत्रैवान्वयः। नागशब्दोऽयं यदा स्थौल्यगुणमभिधाय तद्वति द्रव्ये वर्तते तदा नागीति। नागस्येव गुणयोगात् स्थौल्यवत्यभिधीयत इत्यन्ये। यदा तु दैर्घ्ये गुणे वर्तमानो नागशब्दो द्रव्ये वर्तते तदा नागा इत्येव। यदा त्वयं नागशब्दो जातिवाची तदास्माद् 'अरामान्तजातेरि'त्यनेन ईप् स्यात्।

च संज्ञायां, कुण्डी पात्रे, स्थली अकृत्रिमा भूमिः, भाजी श्राणायां, कुशी लौहविकारे, कामुकी मैथुनेच्छौ, गोणी आवपने, कवरी

काली। कृष्णायां वाच्यायां तथा गौरादित्वेन कालशब्दादीप् कालीति। अत्रापि वर्णः प्रवृत्तिनिमित्तमित्ययं कृष्णवर्णमुक्त्वा तद्विशिष्टायां वर्तते। यदृच्छाशब्दे तु काला इति। नीली। वड़वौषध्योर्वाच्ययोस्तथा गौरादित्वेन नीलशब्दादीप् नीलीति। वड़वा घोटकी ओषधिः प्रसिद्धा आभ्यामन्यत्र नीला शाटी। संज्ञायां वाच्यायां तथा गौरादित्वेन नीलशब्दादीप् नीलीति पक्षे नीला च। ग्रन्थकृतां स्वारस्यादत्र नीलशब्दः पाक्षिकगौरादिको लक्ष्यते, नीली नीला च काचिद्विशेषौषधिः। कुण्डी। पात्रे वाच्ये तथा गौरादित्वेन कुण्डशब्दादीप् कुण्डीति। अन्यत्र कुण्डा जारजा। 'अमृते जारजः कुण्डो, मृते भर्तरि गोलकः' इत्यमरात्। यदा त्वयं कुण्ड़शब्दो देवनिर्माणजलह्रदवाची तदा कुण्डं ब्रह्मेति। स्थली। पुरुषव्यापारेण अनभिनिवृत्ता या सा भूमिरकृत्रिमा तस्यां वाच्यायां तथा गौरादित्वेन स्थलशब्दादीप् स्थलीति कृत्रिमायान्तु स्थला इति। देवस्थली चाल्पत्वविवक्षायामित्येके। भाजी। श्राणायां पक्वायां वाच्यायां तथा गौरादित्वेन भाजशब्दादीप् भाजीति। भज बिश्राणे चुरादिण्यन्तः पचाद्यत् णेर्हरः भाज इत्यस्मादत्रेप्, न तु सेवनार्थंघणन्तभाजशब्दात्। यदि सेवणार्थभजधातुर्ण्यन्तादन्तस्तदा भाजा इति। कुशी। लौहविकारे वाच्ये तथा गौरादित्वेन कुशशब्दादीप् कुशीति। यद्यपि सामान्येन लौहविकार इत्युक्तम्, तथापि लाङ्गलाग्रवर्तिलौहविकारोऽत्र ग्रहणीयो नान्यः। कुशी फले इति लौकिकव्यबहारात्। काष्ठादिनिर्मिततदाकृतौ तु कुशा इति। कामु। मैथुनविषयेच्छौ वाच्यायां तथा गौरादित्वेन कामुकशब्ददीप् कामुकीति। अन्यविषयेच्छौ तु कामुका इति। गोणी। यत्र धान्यादिकं निक्षिप्य नीयते तत् पात्रविशेष आवपनं तस्मिन् वाच्ये तथा गौरादित्वेन गोणशब्दादीप् गोणीति। अन्यत्र तु गोणा इदं यादृच्छिकं नाम। कवरी। केशवेशे वाच्ये तथा गौरादित्वेन कवरशब्दादीप् कवरीति।

केशवेशे इत्यादि । गौरादिराकृतिगणः । अस्वार्थे तु—प्राप्त-वृन्दावनचरा इत्यादि ॥ २२७४ ॥

---

अन्या कवरा कर्बुरेत्यर्थः । तथा च । व्याकीर्णमाल्यकवरां कबरीं तरुण्या इति माघः ।५।१९ । तत्र नागकालस्थलभाजकुशगुणकवराणां स्थूलादिभ्योऽन्यत्र स्त्रियां वृत्तिरेवाप्रसिद्धा तदेषामुपाधिवचनमनर्थ-मात्रफलमेवातिदृश्यत इति विनीतः । नागकालस्थलभाजकुशगुण-कवराणां व्यावृत्तौ यदृच्छाशब्दत्वं द्रष्टव्यमिति तु केशवः । इत्यादीत्यादिपदेन कटी श्रोण्याम्, रेवती रोहिणीनक्षत्रे इत्यादयोऽपि शिष्टप्रयोगानुसारेण ज्ञेयाः । एताभ्यामन्यत्र तु कटा रेवता रोहिणा इति । इत्येवं कियदुक्त्वा गौरादेरपरिमितत्वाद्ग्रन्थबाहुल्यभिया सर्वसंग्राहकोपायमाह—गौरादिरिति । आकृत्या सादृश्या गण्यतेऽसा-वित्याकृतिगणः । अतएव यत्र यत्रेवन्तलक्ष्मीर्दृश्यते प्रकारान्तरेण साधयितुं न शक्यते च, तत्र तत्रेममुपजीव्य साधनीयेति । यद्यप्या-कृतिगणग्राह्यत्वाद्गोस्वामिचरणैरन्तर्गणो नोदितस्तथापि शास्त्रान्तरात् कांश्चिदुद्धृत्य योजयामि । ( मुग्धबोध-कारक-श्रीरामतर्कवागीशटीकातः संगृहीतः ) ॥

"नदमददेहं तरदरचौरं देवगरौ पुरतटनटचेलम् ।
अनडुत्कोलमहद्बृहदृष्यं गवय मुकयमत्स्यमनुष्यम् ॥
देहलगडुलं मण्डपमण्डं निष्कलवकुलं पुष्कलपिण्डम् (क) ।
गाह पृथु प्लव शठ भष सूचं केकयपृथिवं भोटपिशङ्गम् ॥

---

(क) बकुलस्थले विकलेति, काकलसन्दमित्यत्र माकन्दमिति, तनुनेत्यत्र तलनेति, शल्लकेत्यादौ नामनि केवलभेषजपापमिति च पाठान्तरम् । तथा भिक्षुकवर्गमित्यनन्तरम् एवमधिकपाठोऽस्माभिः पठितो यथा—कीखी, गीघी, टीठी, डीढास्तीथी, प्रीद्वी, त्रीची, पीष्यः । प्तादी च दीर्घजिह्वश्च भागधेय-रजस्वलौ । मामकार्यकृतौ शृङ्गः मातङ्ग-जश्च सुमङ्गलः । अथ भौलिङ्गिरालम्बि भौरिक्यौन्दाहमालयः ।

२२७५। नृसिंह-नस्नाभ्यां क्वरपश्च।
ईप् स्यात्। स्त्रैणी, पौंस्नी, इत्वरी॥ २२७५॥
२२७६। सदृशादिभ्यश्च।

पाण्डरगौरं पुत्रानन्दं शस्कुलकुवलद्रोणतर्करम्।
कन्दरकदरामलकाम्बूषं वदरो धातकवल्लकपूपम्॥
नाटमठाढ़कमालतसूपं पिप्पलवेतसकल्ललविल्वम्।
आरटमारटपटसुष्कन्दं द्रोणपुणौ कलकाकिणपात्रम्॥
वृषशशकाकलकदलकवाटं कोषातक-पुटमतसवराटम्।
शल्लकः मण्डलकूटमृनाटं सूर्ध्वहरीतकगुर्द्धसृपाटम्॥
शृङ्गविभीतकमाकलसन्दं वयसि किशोरस्तरुणचिरिण्टम्।
वर्कर तनुन कुमार वधूटं शल्लककेसलभेषजपापम्॥
सारङ्गावरभोगसमानं रेचकदेवकभिक्षुकवर्गम्।
कुरलसृपाटं पुनरासन्धं गौरादिकगणे कविभिर्गीतम्॥"

अस्वार्थे त्विति रूपं दर्श्यते। प्राप्तो वृन्दावनचरो ययेति, प्राप्तवृन्दावनचरा। इत्यादीत्यादिपदेन प्राप्तयामुनैत्यादयोऽपि॥

२२७५। नृसिंह। नृसिंहनस्नाभ्यां क्वरवन्ताच्च लक्ष्म्यामीप् स्यात्। स्त्रिया जिता स्त्रैणीति पुंसा जिता पौंस्नीति स्त्रीपुम्भ्यां नृसिंहनस्नाविति वक्ष्यते। इत्वरीति 'इण-णश-जि-सर्तिभ्यः' इत्यनेन इण् गतावित्यस्मात् क्वरप् 'वामनात्तुगि'ति तुक्, ईप्। एवं नश्वरीत्यादि॥

२२७६। सदृ। सदृशादिभ्यो लक्ष्म्यामीव्भवति। 'समाने कर्म-

अयस्तूणोद्गाहमानिभौलिकिः श्रीणिरोगयोः। कटाश्मरो विषाद्यादिपुच्छः। प्रोक्तोऽग्रहायणः। सुर्मं सौधर्म सीधाम मातामह-पितामहाः। युथाधिकारलवणं कुण्डलाटवमातलम्। उपमाणात् पक्षपुच्छावृक्षे रोहिणरेवतौ। इति॥

सदृशी, यादृशी ॥ २२७६ ॥

२२७७ । शोण-चण्ड-उपाध्याय-विशालाराल-विकट-विशङ्कट-कृपण-पुराण-उदार-कल्याणादिर्वा गौरादिः ।

शोणी, शोणेत्यादिः ॥ २२७७ ॥

२२७८ । करणपूर्वात् क्रीतात् ।

वस्त्रक्रीती । 'कृतसमास एवेष्यते' इति वामनः । आवन्तेन तु समासे—धनक्रीतेत्यादि ॥ २२७८ ॥

---

ण्यन्यतदादिषु च कर्मोपमानेषु दृशः' इत्यनेन दृशधातोः कत्क्विवादिः । समानः दृश्यतेऽसौ सदृशी, य इव दृश्यतेऽसौ यादृशीत्यादिः । एतेऽपि गौराद्यन्तर्गणाः ॥

२२७७ । शोण । शोणादिर्गौरादिर्वा भवतीति पक्षेऽस्मादीप् स्यात् । शोणेत्यजादित्वादाप् । इत्यादीत्यादिपदेन चण्डी चण्डा, उपाध्यायी उपाध्याया, विशाली विशाला, अराली अराला, विकटी विकटा, विशङ्कटी विशङ्कटा, कृपणी कृपणा, पुराणी पुराणा, उदारी उदारा, कल्याणी कल्याणेति । सूत्रस्थादिपदादन्येऽप्यूह्याः ॥

२२७८ । कर । करणपूर्वात् क्रीतात् नाम्नो लक्ष्म्यामीप् स्यात् । विशेषेप्-प्रत्ययस्यायं विषयस्तेन । वस्त्रेण क्रीत इति विग्रहे 'कर्तृकरणे कृते'त्यनेन प्रथमतः समासस्ततः समासनिष्पन्नात् करणपूर्वात् क्रीताद्वृद्धिस्थ-लक्ष्मीवाच्यतायामीप् वस्त्रक्रीतीति । एतत्स्वाभिमतपरिपोषाय वामन-मतमुत्थापयति कृतेति । कृतसमासे प्राङ्निष्पन्नसमासे सत्येवेष्यते करण-पूर्वक्रीतादीविति वामन आह । अश्वक्रीतीति अलुग्विषये मनसा-क्रीतीति च जुमरः । ननु धनेन क्रीतेति विग्रहे धनक्रीतीति कथं न स्यात्, 'नाम्नो ग्रहणे लिङ्गविशिष्टस्य ग्रहणमि'ति न्यायेन करण-पूर्वक्रीतस्य सम्भवादिति प्रश्ने समादधाति आवन्त इति, आवन्तेन सह करणस्य समासे सति धनक्रीतेत्यादि न तु धनक्रीतीत्यादिः । आवन्त-

२२७९। करणपूर्वात् क्तादल्पाख्यायाम्।

चन्दनलिप्ती हरितनुः, अल्पचन्दनलिप्तेत्यर्थः ॥ २२७९ ॥

२२८०। प्रायेणाल्पत्वविवक्षायाम्।

अल्पं छत्रम्—छत्री। एवं पात्री, मृणाली, घटी, दण्डीत्यादि ॥ २२८० ॥

---

त्वेनैव लक्ष्मीत्वप्रतीतेः। किञ्चायमभिप्रायः। करणादिति पञ्चम्यन्त-निर्देशेनापि करणपूर्वादिति लब्धे यत् करणपूर्वादिति कृतं तत् पूर्व-शब्दस्यात्रावयववाचित्वसूचनार्थम्। तेनायमर्थो भवति। करणमेव पूर्वावयव यस्येति करणपूर्व एतादृशात् क्रीतादिति पुरुषोत्तमनिर्देशो धनक्रीतेत्यादौ करणपूर्वावयवत्वेऽप्यावन्तादीपं वारयति। करणपूर्वा-वयवेति विशेषव्याख्यानेन कृतसमासक्रीतादीविति च विज्ञापितम्। करणपूर्वादिति किम्? सुक्रीतेति। एवं धनसुक्रीतेति च सुव्यवधानेन केवलकरणपूर्वावयवत्वाभावात्॥

२२७९। कर। करणस्याल्पत्वविवक्षायां सत्यां करणपूर्वात् क्तान्ता-ल्लक्ष्म्यामीप् स्यात्। अत्रापि करणपूर्वादिति पूर्ववत्। किञ्च, करण-पूर्वादिति पूर्वसूत्रादनुवर्तितुं शक्येऽपि यत् करणपूर्वादिति कृतं तज्-ज्ञापयति शास्त्रेऽस्मिन् यत्र यत्राधिकारो नास्ति, तत्र तत्र पूर्वसूत्रात् प्रायो नानुवर्तते इति पुनः पुनर्ग्रहणं, यत्र यत्राधिकाराभावेऽपि कदाचिदनुवर्तते तत्र तत्र तु स्वयं ग्रन्थकृतोक्तं वक्ष्यते चेति ज्ञेयम्। चन्दनेन लिप्त इति विग्रहे पूर्ववत् कृतसमासान्तात् क्तान्तादीप् चन्दनलिप्तीति। लिप उपदेहे क्तः लिप्तः। स्वयमर्थमाह—अल्पेति। अल्पेन चन्दनेन लिप्तेत्यर्थः। आवन्तेन त्विति पूर्वोक्तदिशा भङ्ग्या अल्पेति प्रत्युदाहरणञ्च दर्शितम्। अल्पाख्यायामिति किम्? चन्दनानु-लिप्ता हरितनुरिति। करणेन सहाल्पाख्याया योगाभावे तु हरितनो-रल्पता स्यात्, सा च न घटते सम्भवाभावात्॥

२२८०। प्राये। प्रायेण बाहुल्येन लक्ष्म्यामल्पत्वविवक्षायां नाम्न

२२८१। त्रिराम्याः।

प्रभुश्चायम्; त्रिरामी, पञ्चाध्यायी, त्रिफली। धात्र्यादिके तु त्रिफलैव॥ २२८१॥

२२८२। परिमाणादसंख्याकालविस्ताचित-कम्बल्यात्तद्धितमहाहरे, काण्डादक्षेत्रे, पुरुषाद्वा।

क्रीतार्थे तद्धितलुक्। द्व्याढ़की। 'परिमाणात्' किम्? पञ्चाश्वा। असंख्यादेः किम्? द्विशता, द्विवर्षा, द्विविस्ता इत्यादि;

---

ईव्भवति। अल्पमिति अल्पं पात्रं पात्री, अल्पं मृणालं मृणाली, अल्पो घटो घटी, अल्पं दण्डं दण्डी। ईत्यादीत्यादिपदेन अल्पं पत्रं पत्रीत्यादि च। ( सुवनी सम्प्रवदत्पिकापि का इति नैषधे )॥

२२८१। त्रिरा। त्रिराम्या लक्ष्म्यामीव्भवति। प्रभुश्चायमित्यत्र चशब्दस्य समुच्चयार्थत्वात्। अयमधिकारो विधिश्चेत्यर्थः। एकस्योभयलिङ्गत्वे संयोगपृथक्त्विमित्युक्तमत्र स्मर्तव्यम्। त्रिरामीति। त्रयाणां रामाणां समाहार इति त्रयो रामाः समाहृता इति वा विग्रहे 'दिक्संख्ये तद्धिते'त्यनेन समाहारः। 'अरामान्ता त्रिरामीरि'त्यनेन लक्ष्मीत्वेऽस्य विधिसूत्रत्वांशेन ईप्। एवं पञ्चानामध्यायानां समाहारः पञ्चाध्यायीति। त्रयाणां फलानां समाहारः त्रिफलीति। यदा रामाशब्दादीनां समाहारस्तदा आवन्ता वेत्यनेन पाक्षिकलक्ष्मीत्वात् त्रिरामीत्रिराममित्यादि। धात्रेरति। संज्ञाशब्दानां यथाकथञ्चिदित्युक्तानुसारेण त्रिरामीसमासे कृतेऽपि संज्ञाशब्दात् त्रिफलेत्यत्र धात्र्यादिके वाच्ये 'अजादेराप्' इत्यनेनावेव त्रिफलेति ओषधिविशेषस्य संज्ञा प्रसिद्धा॥

२२८२। परि। त्रिराम्यां तद्धितमहाहरे सति सङ्ख्याकालविस्ताचितकम्बल्यवर्जितात् परिमाणवाचकाल्लक्ष्म्यामीप्। अक्षत्रे वाच्ये काण्डपरिमाणाच्च ईप् स्यात्। पुरुषपरिमाणात्तु ईव्वा स्यात्। परिशब्दः सर्वतोभावे वर्तते। परिमीयते येन तत् परिमाणमाढ़कादिः।

विस्ताचितौ—हेमपरिमाणभेदौ । कम्बल्यम् — ऊर्णापलशतम् ; द्विकम्बल्या । काण्डात्—षोड़शहस्तप्रमाणवाचि काण्डम् ; द्वे काण्डे परिमाणे यस्याः द्विकाण्डी तुलसी । क्षेत्रे तु—द्विकाण्डा भूमिः । पुरुषात्—द्विपुरुषी, द्विपुरुषा धात्री ॥ २२८२ ॥

त्रिरामी निवृत्ता ।

२२८३ । प्रधानस्य सपूर्वस्य पत्युर्नश्च वा, पीताम्बरे च ।

---

क्रीतार्थे इति 'अध्यर्धपूर्वात् त्रिराम्याश्चार्हीयस्य महाहरो-संज्ञाया-मि'त्यनेनात्र तद्धितलुक् । द्वाभ्यामाढ़काभ्यां क्रीतेति तद्धितार्थे त्रिरामी कृतार्थठस्य महाहर ईप् । द्व्याढ़कीति । 'संख्यायाः परिमाणस्याशाण-स्ये'त्यत्र शाणनिषेधेन ज्ञापितमुन्मानपि परिमाणग्रहणे न गृह्यते तेन द्वे पले परिमाणमस्या द्विपलीत्याद्यपि । परिमाणेति परिमाणं यर्हि न स्यात् तर्हि किं स्यात् ? पञ्चाश्वेति पञ्चभिरश्वैः क्रीतेति पूर्ववत् तद्धितार्थे त्रिरामी-ठप्रत्ययस्य हरश्च किन्त्वश्वशब्दस्य परिमाण-वाचकत्वाभावादीप् न स्यात् । अजादित्वात्तु आप् भवेदेवेति । असंख्येति संख्यादिर्यर्हि स्यात्तर्हि किं स्यात् ? द्वाभ्यां शताभ्यां क्रीतेति पूर्ववद्द्विशतेति । द्वयोर्वर्षयोर्जातादि द्विवर्षेति द्वौ विस्तौ परिमाणमस्या द्विविस्ता । इत्यादीत्यादिपदात् द्व्याचितेति । विस्ता-दित्रयाणां परिमाणत्वं प्रतिपादयति—विस्तेति । हेमेति सुवर्णम् । ऊर्णेति मेषादिलोमः । द्वाभ्यां कम्बलाभ्यां क्रीतेति द्विकम्बल्या पूर्ववत् । विस्तं तोलकद्वयमिति कश्चित् । काण्डादिति रूपं दर्श्यते—द्वे काण्डे इत्यनेन विग्रहः षोड़शेत्यनेन प्रमाणवाचित्वञ्च दर्शितम् । द्वे काण्डे प्रमाणमस्या इति मात्रट्प्रत्ययस्य महाहरः द्विकाण्डीति । क्षेत्रे त्विति क्षेत्रे वाच्ये तु पूर्ववद्विग्रहे द्विकाण्डेति । पुरुषादिति रूपं दर्श्यते । पुरुषशब्दोऽत्र पुरुषप्रमाणवाची न तु पुंजातिवाचीति । द्वौ पुरुषौ प्रमाण-मस्या इति पूर्ववन्मात्रट्महाहरः द्विपुरुषीति द्वयम् । अधिकारं निवर्तयति—त्रिरामीति ॥

२२८३ । प्रधा । प्रधानस्य मुख्यस्य सपूर्वस्य पूर्वपदेन सह

सम्पदां पतिः—सम्पत्पत्नी, सम्पत्पतिर्वा लक्ष्मीः। अप्रधाने तु पतिमतिक्रान्ता—अतिपतिः ॥ २२८३ ॥

२२८४। अथ पीताम्बरे।

कृष्णः पतिरस्याः— कृष्णपत्नी, कृष्णपतिः ॥ २२८४ ॥

२२८५। सपत्न्यादयः पीताम्बरे।

समानः पतिरस्याः—सपत्नी। एकपत्नी, वीरपत्नी, भ्रातृ-पत्नी, पुत्रपत्नी, दासपत्नी, शिशुपत्नी ॥ २२८५ ॥

---

वर्तमानस्य पत्युः पतिशब्दस्य सम्बन्धे लक्ष्म्यामीत्र्वा भवति। तस्मिन्नीपि पत्युरिरामस्य नश्च वा एकवर्णत्वादन्ते प्राप्तेः षष्ठी-प्रत्ययस्य सम्बन्धसामान्यबोधकत्वात् पञ्चम्यर्थोऽपि सम्भवति, तथा सति प्रधानादिरूपात् पतिशब्दाल्लक्ष्म्यामीव्वा स्यात्, तथाभूतस्य पत्युर्नश्च वेत्यर्थः ॥

२२८४। अथ पीता। पीताम्बरे च समासे सपूर्वपदात् पत्यु-र्लक्ष्म्यामीप् वा स्यात्, तस्मिन् नश्च वा। सम्पदां पतिरित्यादि-वाक्योदाहरणं सुष्पष्टम् ॥

२२८५। सप। एतदादिचतुर्णां सूत्राणां ईवन्ताः साधव इत्य-नेनान्वयः। पीताम्बरे लक्ष्म्यां सपत्न्यादयः प्रयोगा ईवन्ताः साधवो भवन्ति। समानः पतिरस्या इत्यत्र अनया सार्धमस्या इत्यर्थाद्-गम्यते। सपत्नीति ईप् पत्युरिरामस्य नरामश्च निपातफलम्। एवमुत्तरत्रापि समानस्य स-भावश्चोक्तः। एकः पतिरस्याः वीरः पतिरस्याः भ्राता पतिरस्याः दासः पतिरस्याः शिशुः पतिरस्या इत्यादि विग्रहेषु यथाक्रममेकपत्न्यादयो ज्ञेयाः। अत्र सपिण्डपत्नीत्यपि कश्चिदुदाहरति। एतावतैव सपत्न्यादिर्नान्यस्तेन बहवो वीरपतयोऽस्या इति बहुवीरपतयोऽस्या इति बहुवीरपतिर्द्वारकेत्यत्र न स्यात्। एकेन पत्या ऊढायामेकपत्नीति। अनूढायान्तु एकपतिर्नगरीत्यादि ॥

२२८६। पत्नी भार्यायां यज्ञयोगे, व्यूढ़ायामित्येके, पतिवत्नी सधवायाम्, अन्तर्वत्नी गर्भिण्याम्।

ईवन्ताः, साधवः ॥ २२८६ ॥

२२८७। तस्य भार्येत्यर्थे।

ईप् स्यात्। प्रभुश्चायम्। माधवस्य भार्या—माधवी। क्षत्रियी, वैद्यी, गणकी, शूद्री ॥ २२८७ ॥

२३८८। सूर्यादेराप्।

---

२२८६। पत्नी। यज्ञयोगे सति भार्यायां वाच्यायाम् ईपा सह पत्युः पत्नीति साधुः। व्यूढ़ायामित्येक इत्यनेन पत्या व्यूढ़ा इति वाक्ये पत्नीति सूचितम्। ऊढ़ा च सम्बन्धिशब्दा तेन येनोढ़ा तस्य पत्नीत्यभिधीयत इति तदुक्तेः। पति। सधवायां वाच्यायां पतिवत्नीति साधुः। पतिरस्त्यस्या इति विग्रहे निपातसामर्थ्यात् पति-शब्दान्मतोर्मो वः तरामान्नरामागम ईप् च स्यात्। सधवायां किम्? पतिमती पुरीति। अन्त। गर्भिण्यां वाच्यायां पूर्वान्मतोर्नरामेप्-प्रत्ययाभ्यामन्तर्वत्नीति साधुः। अन्तरस्त्यस्या इति वाक्यम्। किन्त्वत्रान्तःशब्देनान्तस्थगर्भमुच्यते, तस्मादन्तर्वत्नी गर्भिणीति सुसङ्गतम्। गर्भिण्यामिति किम्? अन्तर्वती शालेति। तदस्त्यस्मिन्निति मतुः अद्वयमाभ्यां तदुद्भवाभ्यामिति मतोर्मो वश्च भवति ॥

२२८७। तस्य। तस्य भार्येत्यर्थे नाम्न ईप् स्यात्। प्रभु-नामायमधिकारः चशब्दाद्विविनामापि। मधोरपत्यं माधवस्तस्य भार्येति माधवीति। क्षत्रियस्य भार्या क्षत्रियीति, वैद्यस्य भार्या वैद्यीति, गणकस्य भार्या गणकीति, शूद्रस्य भार्या शूद्रीति ॥

२२८८। सूर्या। तस्य भार्येत्यर्थे सूर्यादेरुत्तरस्मादाप् स्यात्। सूर्यस्य भार्या सूर्येति छायानाम्नी। सूर्यादेरादिपदादुदाहरणान्तरमाह—

सूर्या, गोपालिका। सूर्या देवतायामेव, अन्या सूरी। ज्येष्ठा, कनिष्ठा, मध्यमा॥ २२८८॥

२२८९। क्वचिद्वा।

ईश्वरी, ईश्वरा॥ २२८९॥

२२९०। अग्नायीवृषाकपाय्यादयः साधवः; मनायी, मनावी, मनुः, इन्द्राण्यादयश्च।

एते ईवन्ता भार्यार्थे साधवः। मनोर्भार्या मनाय्यादयः।

---

गोपालिकेति। गां पालयतीति गोकर्मपूर्वात् पा रक्षणे इत्यस्मात् णौ 'पातेः पाल् णावि'त्यनेन पालि ण्यन्तात् णको गोपालकः तस्य भार्येत्यर्थे 'प्रत्ययस्थात् कादि'त्यनेन पूर्वारामस्येरामः गोपालिका गोपस्त्री। किम्बा स्वर्गेषु पशुवाग्वज्रे'त्यनेन गोशब्दस्य नानार्थत्वात् गोशब्दोऽत्र सूर्यकिरणमभिधत्ते तथा सति, गोपालिका छायादेवीत्यनुमीयते यतोऽत्रैव सूर्या देवतायामेवोक्तं तस्मात् सूर्यादेरादिपदस्य ज्येष्ठेत्यादिना विवरणाच्च। यद्यपि सूत्रे नियमस्य प्रतीतिर्नास्ति तथापि सूर्याद्देवतायामीव् वक्ष्यते इति पूर्वोक्तं झटित्यवगमार्थं वृत्तित्वेन नियममाह—सूर्या देवतेति। अन्येति सूर्यस्यान्या भार्या सूरी माणुषीत्यर्थः। ज्येष्ठस्य भार्या, कनिष्ठस्य भार्या, मध्यमस्य भार्येत्याद्यर्थे यथाक्रमं ज्येष्ठादित्रयम्॥

२२८९। कृचि। तस्य भार्येत्यर्थे नाम्न उत्तरः कृचिदीप् वा स्यात्। 'स्था-ईश-भासे'त्यनेन ईशधातोर्वर ईश्वरस्ततः ईश्वरस्य भार्येत्यर्थे ईश्वरी पक्षे अजादित्वादाप् ईश्वरेति॥

२२९०। अग्ना। तस्य भार्येत्यर्थे अग्नायी वृषाकपाय्यादयः प्रयोगाः साधवो भवन्ति। तथा मनाय्यादय इन्द्राण्यादयः साधवोभवन्ति। सूत्रत्रयस्य वृत्तिमाह—एत इति। अग्नेर्भार्येति ईप् निपातादीपि परेऽग्निशब्दादायच्, 'संसारस्य हरश्चिती'ति संसारहरः अग्नायीति। वर्षति

इन्द्राण्यादिषु वरुण-भव-सर्व-रुद्र-मृडाचार्याणां वरुणान्यादयो ज्ञेयाः। आचार्यानी—क्षुभ्नादित्वान्न णत्वम् ॥ २२९० ॥

### २२९१। उपाध्यायानी-मातुलान्यौ वा।

ईवन्ते साधू ॥ २२९१॥

भार्यार्थो निवृत्तः।

### २२९२। अर्याणी-क्षत्रियाण्यौ वा जातौ।

ईवन्ते साधू। पक्षे अजादित्वात्—अर्या, क्षत्रिया। भार्यायान्तु अर्यी ॥ २२९२ ॥

---

कामान् आकलयति क्लेशानित्यर्थे धातोस्तदर्थातिशयेन योग इति निरुक्तेन पृषोदरादित्वात् इक् वृषाकपिः। 'हरविष्णूर्वृषाकपिरि'त्यमरः। ततो वृषाकपेर्भार्येत्यर्थे पूर्ववदीवायचौ। वृषाकपायी लक्ष्मीः पार्वती वा, आदिपदात् कुसितायी, कुसीदायी, पूतक्रतायीति। मध्यमसूत्रस्य विग्रहोदाहरणे दर्शयति—मनोरिति। मनोर्भार्येत्यर्थे निपातवलात् सनुशब्दादीप् तत्पूर्वमायचावचौ। पक्षे ईवादीनामभावश्चेति मनाय्यादयस्त्रयः। इन्द्राण्यादीनां गणदर्शनपूर्वकोदाहरणान्याह—इन्द्राण्यादिष्विति। इन्द्रस्य भार्येत्यर्थे इन्द्रशब्दादीप् तत्पूर्वं निपातादान् इन्द्राणीति। एवं वरुणान्यादय इत्यत्रादिपदात् भवानी सर्वाणी रुद्राणी मृडाणीति। आचार्यानीत्यत्र प्राप्तणत्वं वारयति—क्षुभ्नादित्वादिति ॥

२२९१। उपा। तस्य भार्येत्यर्थे उपाध्यायानीमातुलान्यौ ईवन्ते साधू वा भवतः। पक्षे उपाध्याया मातुलेति अजादित्वादाप्, यदातु उपेत्याधीयते अस्यामित्यधिकरणविहितघणन्तादीप् तदा उपाध्यायीति। मातुलेत्यत्र मातुलीति कश्चित्। तथा उपाध्याया मातुलेत्यसाधू उपाध्यायी मातुलीत्येवेति केचित्। अधिकारं निवर्तयति—भार्येति ॥

२२९२। अर्या। जातावर्थेऽर्याणीक्षत्रियाण्याबीवन्ते साधू वा भवतः। अर्यस्य जातिरित्यर्थे अर्याणी एवं क्षत्रियाणीति। ईवभाव-

२२९३। हिमान्यरण्यान्यौ, महत्त्वे, यवनानी यवनलिपौ, यवानी दुष्टयवे।

ईवन्ताः साधवः॥ २२९३॥

२२९४। अवृद्धायामसिक्नी असिता, वृद्धायां पलिक्नी पलिता, श्येन्यादयो वा।

---

पक्षमाह–पक्ष इति। अर्या वैश्यजातिः। 'जात्यर्थे निपातात् भार्यार्थे तु न स्यादित्याह–भार्यायान्त्विति।

२२९३। हिमा। लक्ष्म्यां विषये महत्त्वे वर्तमानयोर्हिमारण्ययोरानीव्भ्यां सह हिमानी अरण्यानीति द्वे साधू भवतः। महत्त्वमत्र बहुत्वमित्यवगतं, हिमानी हिमसंहतिरित्यस्मात् महारण्यमरण्यानीत्यस्माच्च। महत्त्वे वर्तमानयोरेवानयोर्लक्ष्मीत्वं नान्यत्रेत्यपि बोद्धव्यम्। यव। यवनलिपौ वाच्ये यवनस्यानीव्भ्यां सह यवनानी साधुः। यवनदेशोद्भवा यवनास्तेषां लिपिरित्यर्थे निपातसामर्थ्यात् 'तस्येदमि'त्यनेन केशवणविषये आनीपौ तेन यावनानीति न स्यात्। यवनलिपाविति किं यावनी भाषा। यवनशब्दो यदा लिप्यामभेदोपचाराद्वर्तते, तदा यवनानी भेदे तु टणा यावनी लिपिरित्यन्ये वदन्ति। यवा। लक्ष्म्यां विषये दुष्टयवे वाच्ये यवस्यानीव्भ्यां सार्धं यवानी साधुः। अस्याप्यस्मिन्नर्थे लक्ष्मीत्वं नान्यत्र। यवानी जात्यन्तमुच्यते दुष्टत्वन्तु यवजातेरभावोऽतस्तदाकारानुकृतिमात्रमिति केचित्। हिमानीप्रभृतीनां वृत्तिमाह–ईवन्ता इति॥

२२९४। अवृ। अवृद्धायां वाच्यायां लक्ष्म्यामीवाव्भ्यां सहासितस्य असिक्नी असिता द्वे साधू भवतः। असितशब्दादीप् तस्मिन् तरामस्य क्नभावः पक्षे असितादाप्च निपातफलम्। वृद्धा। वृद्धायां लक्ष्म्यां पलितशब्दस्य पूर्ववत् पलिक्नी पलिता द्वे साधू भवतः। अत्रापि पलितशब्दादीप् तस्य क्नः पक्षे आप् च निपातफलम्। असिक्नी पलिक्नीति छान्दसमेतत् न तु भाषामिति। केषाञ्चिन्मत-

साधवः। श्येनी, श्येता; एणी, एता; लोहिनी, लोहिता; हरिणी, हरिता। तत्तद्वर्णा ॥ २२९४॥

२२९५। इरामादक्त्यर्थाद्वा ईप्।

रात्री, रात्रिः; धूली, धूलिः; भूमी, भूमिः; यवती, युवतिः; पद्धती, पद्धतिः; अङ्गुली, अङ्गुलिः; यष्टी, यष्टिः;

---

मिति गोयीचन्द्रः। (संक्षिप्तसारटीकाकृत्) शेन्या। लक्ष्म्यां श्येतादीनामीवाव्भ्यां सह श्येन्यादयः साधवो वा भवन्ति, पक्षे श्येतादयोश्च। साधव इत्यनेन अवृद्धायामित्यादीनामन्वयः। तत्तद्वर्णेति। श्येनादीनामन्ते ग्रन्थकृता स्वयमेवोक्तं तस्मादेवमत्र वाक्यानि द्रष्टव्यानि यथा। श्येतवर्णेति श्येतशब्दादीप् तस्मिन् श्येततरामस्य नरामश्च निपातात्। तेन श्येनीति द्वयम् एवं एतद्वर्णेति एणीति द्वयं, लोहितवर्णेति लोहिनीति द्वयं, हरितवर्णेति हरिणीति द्वयञ्च। एतः कर्वुरवर्ण इत्याख्यातपदे उक्तम्। श्येतादीनां चतुर्णामेवात्र ग्रहणं नान्येषां शवलप्रभृतिगुणवाचिनां गौरादिगणपठितत्वात्। एतदेव सर्वेषां मतं नान्यत् यथोक्तमन्यैः। वर्णवाचिनस्तकारोपान्ता स्त्रियामी तकारश्च नः। वानुवृत्तिर्जयादित्यचन्द्रप्रभृतिभिरुक्ता वाचस्पत्यादिकृतकोषे च एण्येत्यादौ विकल्पो दृश्यते, किन्तु भाष्येऽनुदाहृतत्वात् भागवृत्तिकृता नित्यमुक्तञ्चेति अभेदः॥

२२९५। इरा। क्तेरर्थ इव अर्थो यस्य स क्त्यर्थः, न विद्यते क्त्यर्थो यत्र सोऽक्त्यर्थस्तस्मात्। लक्ष्म्यामेवाक्त्यर्थात् इरामात् इरामान्तादीप् वा स्यात्। अर्थान्तराभावात् स्वार्थे एव प्रत्ययस्तेन रात्रिरेव रात्री रात्रिरिति। रात्रेस्त्रिरिति रा धातोरौणादिकस्त्रिप्रत्ययो रात्रिरित्यस्यैव रात्रीति द्वयमित्यन्ये। धूलीरेव धूलीति द्वयम्। एवं भूमीति द्वयञ्च। यूनो युवतिरित्यस्य युवतीति द्वयञ्च तथा यद्यपि इतिशब्दः क्त्यन्तस्तथापि 'पादस्य गादिष्वि'त्यनेन पद्धतेः निपातसिद्धत्वात् समस्तनामत्वे क्त्यर्थत्वाभावत्वादेव पद्धतीति द्वयञ्च

शक्ती, शक्तिः—शस्त्रे। 'श्रीयं लक्ष्मीयमित्यपि' इति दुर्घटवृत्तौ। पाणिनीया दीर्घमपि गृह्णन्ति। 'अक्त्यर्थात्' इति किम्? पङ्क्तिः, हानिः, अकरणिः। लक्ष्मीविहितादेव; अतिथिर्वैष्णवी ॥२२९५॥

पूर्ववत्। अङ्गुलीति द्वयन्तु पूर्ववदयत्नसाध्यम्। यज् देवपूजासङ्गतिकरणदानेषु इत्यस्मात् शक्लृ शक्तावित्यस्माच्च 'इक्श्तिपौ धातुनिर्देशे' इति तिप् क्वचिन्न दृश्यते चेत्यनेन शवभावश्च 'छशो राज्-यज-भ्राजि'त्यनेन यस्ततो यष्टादयश्चत्वारश्चेति। शस्त्र इत्यनेन शस्त्र-वाचकस्य शक्तिशब्दस्यैवात्र ग्रहणं न वलवाचकस्येति सूचितम्। इरामादित्युपलक्षणं तेनाक्त्यर्थस्त्रिविक्रमेरामोऽप्यत्र गृह्यते इति स्वाभिप्रेतं परमतेन स्पष्टयति श्रीयमित्यादिना। श्रिञ् सेवायां श्रयतीति क्विप्, 'प्रच्छादीनां त्रिविक्रम' इत्यनेन त्रिविक्रमः श्रीरिति पश्चादाप् श्रीति ईप्प्रत्ययान्तत्वाद्विष्णुसर्गाभावज्ञापनार्थमियमित्युपन्यस्तम्। अन्यथा श्रीरियमित्येव स्यात्। लक्ष दर्शनाङ्कयोरित्यस्मात् 'लक्षेर्मुट् चे'त्यनेन ईप्रत्ययो मुट् च लक्ष्मीरिति तत ईप् लक्ष्मीति पूर्ववदत्रापीयमिति इत्यपि दुर्घटवृत्ताविति दृश्यते इति शेषः। दुर्घटवृत्तिमतमुक्त्वा पाणिनीयमतमप्याह—पाणीति। अपीत्यस्मादुत्तरस्मिन्नत्रेति प्रयोक्तव्यम्। एवम् अवीयं तन्त्रीयमित्यादयश्च। अक्त्यर्थादित्यनेन तद्गुणसम्बिज्ञानपीताम्बरसामर्थात् क्तिप्रत्ययान्तेन क्त्यर्थप्रत्ययान्तेन च वर्जितेरामस्य ग्रहणफलं व्यावृत्तिमुखेन दर्शयति—अक्त्यर्थादिति। किमिति किमर्थं क्त्यर्थो यर्हि स्यात्तर्हि किं स्यात्। पङ्क्तिरिति पचि विस्तारे इत्यस्मात् 'क्तिर्लक्ष्म्यां भावे' इति क्तिः। एवं पक्तिभक्ति-शक्तिप्रभृतयः। हानिरिति ग्ला हा ज्या म्ला त्वरिभ्यश्चेति क्तेर्निरिति निः। एवं ग्लानि, म्लानि, लूनिप्रभृतयश्च। श्रीहरेकृष्णाचार्येण तु ल्वादित्वात् क्तेर्नि पक्षे सङ्कर्षणं विधाय जीनिरित्युक्तं ग्ला हेति सूत्रं ज्ञापकं कृत्वा सङ्कर्षणाभावपक्षे ज्यानिरिति च यदुक्तं तद्द्वयन्तु वर्णानां तद्व्यक्तिवद्भावो यत्र मंस्यते तत्रैवेति न्यायेन सिद्धिमिति तत्तदप्यत्रोदाहार्यम्। अकरणिरिति 'नञ्यनिराक्रोशे भावे लक्ष्म्यामि'त्यनिः। तथा 'इण् च भावे लक्ष्म्यामि'त्यनेन इण्-प्रत्ययान्त कां

२२९६। मुनेर्वा।

मुनी, मुनिः॥ २२९६॥

२२९७। उरामान्तगुणवचनात् खरु-सत्सङ्गोद्धव-वर्जाद्वा।

---

कार्यादीनां ग्रहणं, तेन कां कारिः कृष्णस्य कारिरित्यादयश्च। यद्यप्य-क्त्यर्थादिषि सामान्येनोक्तं, तथापि भावविहितक्तेस्तद्रूपक्त्यर्थस्य चोपलक्षकं, तेन वध्यात् हन्तिः तन्यात् तन्तिरित्यादावाशिषि विषये हरिवेण्वन्तसहजानिठादीनामित्यनेन कर्तरि विहिताक्तत्वात्। हन्ती हन्तिः तन्ती तन्तिरित्यादिः स्यात्। जुमरटीकाकृता तु प्रत्यु-दाहृतौ म्लानिरित्यपपाठ इत्युक्ता परमतं दर्शितं तद्यथा—यदि म्लानिरिति पदं साधु स्यात्, तदा मा गान् म्लानिं मृणाली-मृदुरिति ह्रस्वपाठे प्रसिद्धेऽक्लिष्टेऽपि मा गान् म्लानीमिति दीर्घपाठं व्यवस्थाय तत्साधनार्थं कथं यत्न आस्थीयते म्लानस्य भावो म्लानीति। क्तान्तात् म्लानशब्दात् तद्भावे तात्वमित्यनुवृत्तौ मित्रादेर्वा स्त्रियामिति टण् टित्वादीप्रत्यय इत्येवम्। किन्त्वेतन्मतान्तरप्रदर्शनमात्रं न बहुल-सम्मतम्। यदि म्लानिरित्यसाधु स्यात्, तदा सर्वज्ञचूड़ामणिगोस्वामिपादेन तु ग्ला-हा-ज्येति सूत्रे म्लाधातुर्न गृहीतः स्यात्। यद्यपीरामादित्यत्र विशेषग्रहाभावस्तथाप्यक्त्यर्थेति विशेषणे पर्युदासन्यासदृशप्रतिपत्ति-र्विशेषग्रह इत्याह—लक्ष्मीति। लक्ष्म्यां विहितो य इरामस्तस्मादेवेप् स्यात् नान्यस्मात्। तेन अतिथिरित्यत्र पाक्षिक ईप् न स्यात्। अतिथिना गृहागते इत्यमरशासनेन पुंस्त्वात्, किन्तु वैष्णव्या विशेषणत्वाल्लक्ष्मी-त्वप्रतीतिरिति प्राप्तिसम्भावना॥

२२९६। मुने। लक्ष्म्यां विषये मुनिशब्दादीप् वा स्यात्। लक्ष्मीविहितइरामाभावादप्राप्ते विधानम्। मुनिरेव मुनीति द्वयम्। अत्रा-रोपितलक्ष्मीत्वात् मुनिशब्देन मुनित्वजातिरुच्यते मननशीला स्त्री वा॥

२२९७। उरा। उरामः अन्ते यस्य स उरामान्तः गुणं वक्तीति

मृद्वी, मृदुः; गुर्वी, गुरुः; बह्वी, बहुः; लघ्वी, लघुः;

नन्दादेरनः गुणवचनः स चासौ स चेति उरामान्तगुणवचनस्तस्मात्। खरुश्च सत्सङ्ग उद्भवो यस्य स च खरुसत्सङ्गोद्भवौ तयोर्वर्जः वर्जनं यत्र स खरुसत्सङ्गोद्भववर्जस्तस्मात्। वर्जोऽत्राऽन्प्रत्ययान्तः। खरुसत्सङ्गोद्भववर्जादुरामान्तगुणवचनाल्लक्ष्म्यामीव् वा स्यात्। ग्रन्थकृताहि द्रव्यलक्षणमुक्त्वा गुणस्तदाश्रयीति सुवन्तपादे गुणलक्षणमुक्तम्। गुणमुक्त्वा यो गुणिनि वर्तते स गुणवचन इति समासपादे गुणवचनलक्षणञ्चोक्तम्। प्रसङ्गात् तत्तदेवात्र बिचार्यते। यः पूर्वं गुणमभिधाय पश्चात् तद्योगादभेदोपचाराद्वा तद्वति द्रव्ये वर्तते सगुणवचन इह गृह्यते नान्यस्तेन गोविन्दलक्षणे प्राचीनमते गुणश्चेति यो गुणः उक्तः सोऽप्यत्र न सम्भवति। 'उद्वयस्य गोविन्दो न च धातोर्नच स्त्रीप्रत्यये' इत्यनेनोरामस्य गुणसंज्ञाया निषेधात्। लोके च यदप्रधाने गुणपदाभिधानं दृश्यते। यथावयवमात्रगुणभूता अप्रधानभूता इति तदप्यत्र न गृह्यते, तस्य व्यभिचारित्वात्। तेन बचनपदोपादानात् चारुजानुरित्यादौ न स्यात्। अतएव द्रव्याश्रयी यो गुणस्तद्वचनस्यैवात्र ग्रहणमिति निश्चीयते। यथा वृद्धोक्तं क्रमदीश्वरेण चोत्थापितम्—"सत्वे निविशतेऽपैति पृथक्जातिषु दृश्यते। उत्पादनीयो नित्यश्च सोऽसत्वप्रकृतिगुणः॥" इतीहाभिप्रेतमिति। अस्यार्थः—सर्वेषां वाक्यानां व्यवच्छेदफलकत्वात् सत्वे एवेत्यवधारणं द्रष्टव्यम्। सत्वं हि द्रव्यं तत्रैव निविशते तदाश्रयति। अपैति ततः सत्वादेवावगच्छति। तथाहि, आम्रे फले श्यामता पूर्वं स्थिता पक्वे रक्ततायां यातायामपैति। पृथग्जातिषु दृश्यते, नानाजातिष्ववलोक्यते। पृथग्जातिशब्दादुत्तरो जात्यन्ताज्जातिव्यञ्जकद्रव्यवचनादीय इतीयप्रत्ययो न भवति। श्लोकवार्तिककारप्रयोगादीयविधेरनित्यत्वात्। तथाहि, श्यामता आम्रे तृणे गवि च दृश्यते। एते न जातेर्गुणत्वं निरस्तं, यतोऽलङ्कारे जातौ शक्तिवादिमते सत्ता गुणे द्रव्ये कर्मणि च वर्तते, नासौ जातिर्द्रव्यादपैति च जन्मनः प्रभृत्याविनाशमाधारद्रव्यापरित्यागात्। न च जातिः पृथग्जातिषु दृश्यते,

तन्वी, तनुः। अगुणवचनादेस्तु—आखुः, खरुः, कद्रुः॥ २२६७॥

२२६८। अरामान्तजातेर्नित्यलक्ष्मीवैश्यादिवर्जम्।

न हि गोत्वमश्वजातौ विद्यते नाप्यश्वत्वं गोजातौ। एवं जातौ निरस्तायां कर्मणस्तु स्यादेव यतः सक्रियं द्रव्यं यदा भवति, तदा कर्म सत्व एव निविशति, यदाक्रियं द्रव्यं भवति, तदा ततोऽपैति च नानाजातिषु तद्दृश्यते चेत्यतः प्राप्तं कर्मणो गुणत्वमपाकर्तुमाह—उत्पादनीयो नित्यश्चेति। तथाहि, घटादावग्निसंयोगेन रक्ततोत्पद्यते नित्ये च द्रव्ये आकाशादौ महत्त्वादिर्नित्य एवास्ति। एवम्प्रकारद्वयं गुणे वर्तते न तु कर्मणि यतस्तदुत्पद्यत एव नतु नित्यरूपं भवति। एवं द्रव्यमपि गुणः स्यात् तत्राप्येते धर्मा विद्यन्ते। तथाहि, द्रव्यमप्यारम्भकेऽवयवभूते द्रव्ये निविशते अपैति च। ततस्तत् यथा शरीरं हस्तपादादिष्ववयवेषु समवैति तद्विनाशेन विनाशात्ततोऽपैति। पृथग्जातिषु दृश्यते हस्तादिद्रव्याणां नानाजातिषु दर्शनात् द्रव्ये च प्रकारद्वयमस्ति, घटादिरुत्पादनीया आकाशादिर्नित्यः। अत आह—असत्वप्रकृतिर्गुण इति। प्रकृतिः स्वभावः, सत्वं प्रकृतिर्यस्य स सत्वप्रकृतिः न सत्वप्रकृतिरसत्वप्रकृतिः यथोक्तैर्धर्मैर्युक्तो यो द्रव्यस्वभावो न भवति। सगुण इति स्थितः। अतएव मृद्वादीनां गुणवचनपूर्वकद्रव्ययुक्तेति तेनात्रापि स्वार्थे पाक्षिक ईप्। मृदुरेवेति मृद्वी मृदुरित्यादयः तनुरित्यन्ता दश। मृद्वादयोऽत्र गुणमुक्त्वा तद्वतीषु स्त्रीषु वर्तन्ते इति न विस्मर्तव्यम्। एवं पट्वी पटुरित्यादयोऽपि यथायोग्यमूह्याः। अगुणवचनादेस्त्विति रूपं दर्श्यते इति शेषः। आखुः द्रव्यवचनोऽयं शब्दो न गुणमभिधाय प्रवृत्त इति नेप्। एवमुन्दुरुप्रभृतयः। खरु-सत्सङ्गोद्धववर्जादिति किम्? —खरुस्तीक्ष्णः, कद्रुः पिङ्गलः एतौ शब्दौ गुणविशेषमुक्त्वा तद्वत्योर्नायिकयोर्वर्तते इति प्राप्तौ वर्जनम्। एवं पाण्डुवभ्रुप्रभृतयोऽपि ज्ञेयाः। उरामान्तेति किम्?—शीता सिता कृष्णा इत्यादयः॥

२२६८। अरा। अरामान्ता चासौ जातिश्चेति अरामान्तजाति-

आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह ॥ इति ॥
( महाभाष्यम् )

अयमर्थ उदाहरणानि च—आकृत्या आकारमात्रेण गृह्यते याः, सा

---

स्तस्याः। नित्या चासौ लक्ष्मीश्चेति नित्यलक्ष्मीः, वैश्य आदिर्येषां ते वैश्यादयः। नित्यलक्ष्मीश्च वैश्यादयश्च नित्यलक्ष्मीवैश्यादयस्तान् वर्जयित्वा नित्यलक्ष्मीवैश्यादिवर्जम्। नित्यलक्ष्मीवैश्यादीन् वर्जयित्वा अरामान्तजातिवचनादुत्तरो लक्ष्मामीप् भवति। ननु जातिः केति प्रश्नावसरे नित्यमेकमनेकव्यक्तिसमवेतमिति यत्तत् सामान्यं जातिं प्रत्यायितुमशक्नुवन् वृद्धोक्तजातिसंग्राहकपारिभाषिकलक्षणचतुष्टयमाह—आकृतीति। पद्यस्थसूत्रचतुष्टयार्थोदाहरणानि दर्शयितुमुपक्रमते—अयमर्थ इति। अस्य पद्यस्यायमर्थ इमान्युदाहरणानि चेत्यर्थः। अत्र प्रथमं प्रथमसूत्रं विवृणोति—आकृत्येति। आकृत्या आकारमात्रेण विषाणपुच्छादिसंस्थानेनैव गृह्यते उपादीयते या सा जातिः स्यात्। गृह्यते येति वाक्ये 'टनः कर्मादौ चे'त्यनेन कर्मणि टनः। अथ केशवेप इति वक्ष्यमाणकेशवेपोऽपवादस्य किङ्करा तत्करेत्युदाहरणं दत्त्वा यदित्यादिपदं तत्रस्थादिपदेनाकृतिग्रहणेत्यस्य च ग्रहणाज्जाति-विशेषणत्वेप्यस्मादीप् न स्यात्। अथोवा फलितार्थमेतदक्षरार्थन्त्वेवम्। आक्रियते व्यज्यतेऽनयेत्याकृतिः संस्थानं गृह्यते प्रत्ययविषयीक्रियतेऽने-नेति ग्रहणं ज्ञानोपकरणम् अनेनेति करणसामान्यव्युत्पन्नत्वादस्य ग्रहणशब्दस्य स्त्रीलिङ्गता, नास्तीत्याकृतिसमर्थत्वेऽपि टित्त्वादीप्-प्रत्ययो न भवति। आकृतिः ग्रहणं बोधसाधनं यस्याः सा आकृतिग्रहणा जातिः संस्थानव्यङ्ग्रेति यावत्। अतएवाह—यथेति हरिणत्वजातिः हरिणी महिषत्वजातिः महिषीत्यादयः। एतेन मृग-महिषयोस्तथा गोसिंहमयूरशूकरकुमारादिषु च शृङ्गपुच्छगलकम्बलादि-संस्थानव्यङ्ग्रत्वादाकृतिग्रहणोपदेशव्यङ्ग्रा हरिणत्वादिलक्षणा जातिरुक्ता गुणक्रियालक्षणा च प्रत्युक्ता संस्थानव्यङ्ग्रत्वाभावात्। नहि गुणक्रिय-

जातिः ; यथा—हरिणी, महिषी। तथा लिङ्गानां मध्ये सर्वं लिङ्गं न भजते, किन्तु पुंस्त्वं स्त्रीत्वमेव या भजते, सा च जातिः ; यथा—ब्राह्मणी, देवी। तथा गोत्रप्रत्ययान्तश्च जातिः ; यथा—

---

योरन्वितयोरव्याकारविशेषव्यङ्ग्यतास्ति तयोराश्रयमात्रोपलब्धावुपलब्धित्वादिति। नन्वेवं सति ब्राह्मणत्वादिरूपा तु न संस्थानव्यङ्ग्या तदधिष्ठानस्य वृषलत्वाद्यधिष्ठानेनापि समानरूपत्वेन संस्थानसाम्यात्। अतो द्वितीयलक्षणमुक्तं लिङ्गानाञ्च न सर्वभागिति। तदेव व्याचष्टे तथेति। लिङ्गानां पुंस्त्रीनपुंसकानां मध्ये या सर्वं लिङ्गं न भजते किन्तु पुंस्त्वं स्त्रीत्वञ्च भजते सा च जातिर्भवतीत्यन्वयः। ब्राह्मणत्वादिजातिर्हि पुंस्त्रिययोरेव वर्तते न नपुंसके इत्यसर्वभाग्वति। तथाच सर्व भवतीति क्विपि समासे च कृते समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरित्युक्तदिशा लिङ्गानामिति पदेनापेक्षणीयेन सह पश्चात् सङ्गतिरिति न समासविरोधः। नेति नञ्निषेधार्थाव्ययं वाद्वयसम्भवात्, यर्हि नञ् तदा समासाभावः। तदा त्वव्ययं तदा समासासमासयोस्तुल्यं उदाहरणमाह—यथेति। ब्राह्मणत्वजातिः ब्राह्मणी देवत्वजातिर्देवीति। एवं वृषलीचण्डालीप्रभृतयः। अत्रैव कुमारीप्रभृतिरित्यन्ये। ते तु सकृदाख्यातनिर्ग्राह्येति पृथक् सूत्रं विधाय एवं व्याख्यां कुर्वन्ति तद्यथा। ननु कुमारवृषलादीनां कथं जातिवाचित्वं तथाविधसंस्थानव्यङ्ग्यत्वाभावात्। तदेव कथं युवसंस्थानेन ब्राह्मणसंस्थानेन च कुमारसंस्थानस्य वृषलसंस्थानस्य चाभिन्नत्वात् सत्यम्, अतएवाह—सकृदाख्येति। कुमारत्वादिजातिरत्रोपदेशव्यङ्ग्येति। यथा संस्थानेनाक्रियते व्यज्यते इति संस्थानमाकृतिस्तथोपदेशेनाप्याक्रियते व्यज्यते इत्युपदेश एवाकृतिरेतद्व्यङ्ग्या जातिरत्रेति भवत्यत्राप्याकृतिग्रहणा जातिरित्युक्त्वा एतदुपसंग्राहकं लिङ्गानाञ्च न सर्वभागिति। चशब्दस्योक्तसमुच्चयादित्युक्तञ्च तथाहि, यत उपदेशव्यङ्ग्यत्वे सति संस्थानव्यङ्ग्यत्वाभावादाकृतिग्रहणा जातिरिति लक्षणेनासंगृहीतं कुमारादीनां जातित्वं लिङ्गानाञ्च न सर्वभागित्यनेन तु संगृहीतं तस्मा-

नाड़ायनी, चारायणी। तथा वेदशाखाध्यायी च जातिः; यथा—

---

दुपसंग्राहकमिति स्थितम्। ननु यद्येवं मतान्तरेणापि कुमारादीनामादिपदात् ब्राह्मणादीनां जातित्वमसर्वलिङ्गभाक्त्वात् सिद्धं, तदा देवदत्तादिशब्दोऽपि असर्वलिङ्गभाक्त्वात् जातिशब्दः स्यात्, सत्यमेतन्नेदं स्वतन्त्रलक्षणम्। अपितूपदेशापेक्षमित्यसर्वलिङ्गभाक्षु हरिणादिषु ब्राह्मणादिषु च जातेरुपदेशव्यङ्ग्यतापीत्यापीत्याह–सकृदाख्यातनिर्ग्राह्येति। ननु देवदत्तादि शब्दोऽप्युपदेशमपेक्षत एव नह्यनुपदिष्टो देवदत्तादिशब्दं प्रयुङ्क्ते यदि प्रयुङ्क्त तदयुक्तमुपदेशार्थापरिज्ञानात्। मैवम्। उपदेशो हि एकस्यां व्यक्तावेकदा कृतोऽनेकव्यक्तिषु तत्तत्प्रत्ययनिमित्तं भवन् सकलव्यक्तिव्यापक इहाप्युपगम्यते नोपदेशमात्रम्। न चैकद्रव्यसमवायिनो देवदत्तादिशब्दस्यैकस्यां व्यक्ताव्युपदिष्टस्य व्यक्तान्तरान्ययित्वमस्तीति न देवदत्तादेर्जातित्वम्। ननु भवतु एतत्, यदि द्वे लक्षणे एकमेव लक्षणं तदा पद्यस्य लक्षणत्रयात्मकत्वे सति लक्षणचतुष्टयमिति कथमुक्तं, सत्यं, यद्यप्यनेन व्याख्यानेनैकं सूत्रं तथापि गौणमुख्यव्यवस्थया लक्षणचतुष्टयमिति नासङ्गतं तच्चैवम्। यदा आकृतिग्रहणेत्यस्य मुख्यत्वं तदा लिङ्गानाञ्च न सर्वभाक् सकृदाख्यातनिर्ग्राह्येत्यनयोर्गौणत्वेन विशेषणत्वं, यदा तु लिङ्गानाञ्चेत्यस्य मुख्यत्वं तदाकृतिग्रहणेति सकृदिति द्वयोर्गौणत्वेन विशेषणत्वमिति। तथाहि, उपदेशव्यङ्ग्यत्वे सत्यसर्वलिङ्गभाक्त्वे च आकृतिग्रहणा जातिः। एवं तादृशावयवसंस्थानव्यङ्ग्यत्वाभावेऽप्यूर्ध्वपुण्ड्रोपवीतादिसंस्थानव्यङ्ग्यत्वे सत्युपदेशव्यङ्ग्यत्वे त्वसर्वलिङ्गभाग्जातिरित्यर्थः। यद्यपि नाड़ायनत्वादिजातिर्हरिणादिषु हरिणत्वादिति वदन्ति, तथापि संस्थानव्यङ्ग्यत्वं नास्ति, तदाश्रयस्य जात्यन्तराश्रयेणापि सदृशत्वात्। नाप्यसर्वलिङ्गभाक्त्वं नाड़ायनी स्त्री नाड़ायनः पुमान् नाड़ायनं कुलमिति सर्वलिङ्गदर्शनात्। अतः पूर्वसूत्राभ्यामसंग्रहात् पृथक् तृतीयलक्षणमाह–गोत्रञ्चेति। तदेवावतारयति–तयेति। योगोऽत्र प्रत्ययान्तः स चापि जातिः स्यादित्यर्थः। पौत्रप्रभृत्यपत्यं गोत्रमिति वक्ष्यते। नड़स्य गोत्रापत्यं चरस्य गोत्रा-

कठी, बह्वृची। सा च सा च सकृदप्याख्यातेन कथनेन निर्ग्राह्या

---

पत्यमित्यर्थे नड़ादेर्माधव-फ इति फस्तस्यायनः। नाड़ायनी चारायणीति, एवं गार्गी, वात्सीत्यादयः। एवं पूर्वसूत्रैरसंग्रहात् कठादीनामपि जातित्वं न स्यादिति चतुर्थलक्षणमाह–चरणैः सहेति। चरणमपि जातिरित्यर्थः। एतदेव भङ्ग्या व्याकरोति–तथेति। चरणं वेदशाखा वेदैकदेश इति यावत्। अतएव कठादिप्रोक्ततत्तद्रूपवेदशाखाध्यायी च जातिः स्यादित्यर्थः। कठादिशब्दोऽध्ययनक्रियाविशेषमाचक्षाणो यदा तदध्ययनसम्बन्धात् तदध्येतृपुरुषेषु वर्तते। तदायं चरणशब्द इति क्रियैवास्य प्रवृत्तिनिमित्तमिति चरणशब्दः क्रियाशब्दो जातिरतोऽस्य जातित्वप्रसिद्ध्यै चरणैरित्यप्युक्तम्। कठेन प्रोक्तं बह्वृचेन प्रोक्त-मधीते इत्यर्थे कठचरकाभ्यां महाहर इति प्रोक्तप्रत्ययकेशव-णस्य महाहरः। प्रोक्तप्रत्ययान्ताच्चेत्यध्यनार्थकेशव-णस्यापि महाहरः। कठी बह्वृची एवं कालापीत्यादयः। सर्वत्र जातावुपदेशापेक्षत्वेन सकृदाख्यातनिर्ग्राह्येत्यस्य लक्षणचतुष्टये विशेषणत्वं सूचयन्निदानीं सर्वलक्षणार्थमुपसंहरति सा–चेति। सा च सा च सर्वजातिः सकृदेकवार-मप्याख्यातेन कथनेनोपदिष्टेन निर्ग्राह्या निश्चयेन ग्राह्या सर्वत्र ज्ञेया भवतीत्यर्थः। एतेन जातेरेकत्वं नित्यत्वं प्रत्येकपरिसमाप्तित्वञ्च स्वरूपं दर्शितवान्। तथाहि, हरिणादावेकस्मिन् सकृदाख्याता जाति-र्देशान्तरवर्तिन्यप्यल्पे महत्यपि काले धवलेऽपि हरिणाद्यन्तरे निश्चयेन ग्राह्या भवति। तस्मादेका नित्या प्रत्येकपरिसमाप्ता च सा यदि ह्येका न स्यात्तदा सकृदाख्याता पिण्डान्तरे न गृह्यते, यदि च नित्या न स्यात्तदा पिण्डविनाशेन च जातेर्विनाशात् पिण्डान्तरे जातिर्नोपलभ्येत, यदि प्रत्येकपरिसमाप्ता न स्यात्तदा यत्राख्याता तस्मिन्नपि पिण्डेसर्वात्मना न गृह्येत, किं पुनः पिण्डान्तरे अंशेन हि गृ परिसमाप्तौ सत्यामंश एव ह्येत न जातिर्न हि जात्यंशो जातिर्भवति, अनेकत्वप्रसङ्गात्। प्रसङ्गतः सर्ववर्णाचार्यधृतवृद्धोक्तमतान्तरमपि दर्श्यते–'प्रागुत्पत्तिविना-शाभ्यां सत्त्वस्य युगपद्गुणैः। असर्वलिङ्गां बह्वार्थां तां जातिं कवयो

सर्वत्र ज्ञेया भवतीति। नेह—वलाका, वैश्या, क्षत्रिया। प्रायो यरामोद्भवो वैश्यादिः॥ २२९८॥

विदुः ॥" सत्वं द्रव्यं गुणानामजात्यात्मकत्वं प्रतिपादयितुं गुणैरिति विशेषणे तृतीया दर्शिता अनेकद्रव्याश्रयोऽर्थो भवतीति बहुवचनम्। अयमर्थः–गुणाः खलूपजननापायधर्माणः सत्येवार्थे उत्पद्यन्ते विपद्यन्ते च। तेनोत्पत्तिविपत्तिधर्मकैरनेकैर्गुणैर्युगपद्विशिष्टो गवादिरर्थो भवति। तस्य चैवं विधस्यार्थस्य यद्रूपान्तरमुत्पत्तिविनाशाभ्यां प्राक् नोत्पद्यते न च विनश्यति। केवलमुत्पत्तेः प्रभृत्याविनाशमनुगच्छति तत्सामान्यात्मकं रूपं हरिणत्वादिलक्षणं जातिरित्यर्थः। प्रादुर्भावविनाशाभ्यामिति पाठे त्वयमर्थः। प्रादुर्भाव उत्पत्तिर्विनाशोऽनभिव्यक्तिः। द्रव्यस्य प्रादुर्भावेण विनाशे च गुणैः सह यः सम्बन्धः सा जातिः। एतेन द्रव्यस्योत्पत्तौ उत्पद्यते नाशे च नश्यतीति सूचितम्। तेन द्रव्यस्य क्रियायाश्च जातित्वं निरस्तं, नहि द्रव्यं क्रिया वा द्रव्यस्योत्पत्तौ उत्पद्यते नाशे च नश्यतीति नियमोऽस्ति। नन्वेवं गुणानामपि जातित्वं स्यात्, गुणा अपि द्रव्यस्योत्पत्तौ उत्पद्यन्ते नाशे नश्यन्तीति। अतो व्याख्यातं गुणैः सह युगपत् सम्बर्ध्यते इति, यदा द्रव्ये गुणाः सम्बध्यन्ते तदैव जातिरपि। एतेनैव गुणेभ्यो जातेः पृथक्त्वं सूचितम्, एतदेव पाठान्तरीयव्याख्यानम्। किञ्च, यद्वत् हरिणत्वादिजातिर्द्रव्यस्योत्पत्तेः प्रभृत्याविनाशमनुवर्तते। तद्वत् ब्राह्मणत्वादिजातिर्न यतो द्रव्यस्योत्पत्तौ केवलं प्रवर्तते, कदाचिद्द्रव्यनाशात् प्रागप्यपैति च। ब्राह्मणो हि तपःश्रुतियोनिसम्बन्धाद्भवति। यथोक्तम्–तपः श्रुतिश्च योनिश्च एतद्ब्राह्मणकारणमिति। न च तदर्हजातस्यैतत्त्रयमुत्पत्तेः प्रभृत्युपपद्यते, तथा सत्यपि तस्मिन् पिण्डे विमार्गगामिनि क्रियाभ्रंशात् ब्राह्मणत्वस्य भ्रंश इति हरिणत्वादिवन्नाशमनुवर्तते, अतो लक्षणान्तरमाह–असर्वलिङ्गमिति। यस्यामपि सर्वलिङ्गं न वर्तते, किन्तु एकं द्वे वा लिङ्गे भवतः जातिः। यथा–ब्राह्मणत्वादिः। अत्र तु मते गोत्रचरणलक्षणाप्यसर्वलिङ्गभाक्त्वाज्जातिः। यदाह–शाकटायनः। गोत्रचरणमतिलिङ्गत्वाज्जातिरिति। एवं सति देवदत्तादेरपि जातित्वं

२२९९। इरामान्तान्नृजातेः।

अवन्ती, कुन्ती, दाक्षी ॥ २२९९ ॥

२३००। नृनरयोर्नारी।

ईवन्ता साधुः ॥ २३०० ॥

ईप् निवृत्तः।

---

स्यात्, अतस्तन्निरसितुमाह—बह्वार्थामिति । अनेकव्यक्त्याधारामित्यर्थः। न चैवं देवदत्तादेरिति। तथा कुमारादीनामपि न जातित्वम्। न हि कुमारत्वमुत्पत्तेः प्रभृत्याविनाशमनुवर्तते। तिष्ठत्येव हि देवदत्तादि-केऽर्थे तद्विनश्यति तन्नाशे वयोऽन्तरञ्चोत्पद्यते इति द्रव्यस्योत्पत्ति-विनाशाभ्यां प्राक् न कुमारत्वाद्यस्तीत्यजातित्वं पूर्वलक्षणे तु कुमारत्व-वृद्धत्वादेराकृत्या ग्रहणमस्तीति अतएव कुमारादीनां जातित्वाभाव-पक्षमाश्रित्याचरमवयस्के गौरादित्वात् कुमारीताद्युदाहृतम्। जातित्व-पक्षे तु कुमारवादीत्यसाधु इति कश्चित्, 'अजातावनुपेन्द्रः' इति णिनि-विधानसूत्रात्। नेहेति, ईप्प्रत्यय इह न स्यात्। नित्यलक्ष्मीवैश्यादि-वर्जनादिति भावः। वलाकात्वजातिर्वलाकेति वलाका वकपङ्क्तिः। नित्यलक्ष्मीत्वादत्रेप् न स्यात्। वैश्यत्वजातिर्वैश्येति क्षत्रियत्वजातिः क्षत्रियेति। वैश्यादिवर्जनादत्रेप् न स्यात्। वैश्यादिगणग्राहकप्रकारमाह—प्राय इति। प्रायः शब्दोपादानात् कश्चित् कश्चिद्यरामोद्भवो वैश्यादिर्न स्यात्। तेन गार्ग्यप्रभृतीनां वर्जनं स्यात् ॥

२२९९। इरा। इरामान्तात् नृजातेरुत्तरो लक्ष्म्यामीप् स्यात्। अवन्तेर्जातिरवन्ती एवं कुन्ती दाक्षी एते त्रयो मनुष्यजातिभेदाः ॥

२३००। नृन। लक्ष्म्यां जातावर्थे नृनरयोरीप्प्रत्ययान्ता नारी साधुः। 'ऋरामगोपी'त्यनेन 'अरामान्तजातेरि'त्यनेन च ईप्प्रत्ययः सिध्य-त्येव, किन्तु नृशब्दस्य यदा नारी तदा ऋरामस्य वृष्णीन्द्रो निपात-फलम्। नरशब्दस्य यदा नारी तदा नरामसम्बन्धिनोऽरामस्य वृष्णीन्द्रो निपातफलमिति। ईप्प्रकरणं निवर्तयति ईविति ॥

२३०१। ऊङ्।

प्रभुरयम् ॥ २३०१ ॥

२३०२। उपमानपूर्वादूरोरूङ्, सहित-संहित-वामादि-पूर्वाच्च।

करभोरूः, सहितोरूः ॥ २३०२ ॥

२३०३। अयरामोद्धवादुरामान्तान्नृजातौ।

ब्रह्मबन्धूः, कुरूः, भीरूः। 'भीरुः' इति केचित्। नेह—अध्वर्युर्ब्रह्मजातिः ॥ २३०३ ॥

---

२३०१। ऊङ्। लक्ष्म्यां नाम्नः यथायोग्यमूङ् भवति। प्रभुनामायमधिकारः ॥

२३०२। उप। उपमानपूर्वादूरोरुत्तरो लक्ष्म्यामूङ् स्यात्। सहि। सहितसंहितवामादिपूर्वाच्चोरुशब्दाल्लक्ष्म्यामूङ् भवति। चरामोऽत्र उक्तसमुच्चयार्थः। करभाविव ऊरू यस्या सा करभोरूरिति। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः।' इत्यमरः। कलभः करिशावक इत्यनुशासनात्तु यदि डलयोः प्राय एकत्वश्रवणादिन्युक्तदिशा करभशब्देन कलभ उच्यते तदा न सम्भवति। नहि हस्तिशावकसदृशः कस्याः अप्यूरुरस्ति अतएव करभशब्दः कलभशुण्डे लाक्षणिकस्तथा सत्यनेनापि करभोरूर्भवितुमर्हति। सहितावूरू यस्याः सा सहितोरूरिति। एवं संहितोरूः, वामोरूः। आदिपदात् खञ्जोरूः, ह्रस्वोरूरित्यादयः ॥

२३०३। अ-य। नास्ति यराम उद्धवो यस्य सोऽयरामोद्धवस्तस्मात्। नृजातौ वाच्यायां लक्ष्म्यामयरामोद्धवादुरामान्तादूङ् भवति। ब्रह्मबन्धुर्निन्दितब्राह्मणः स तु मनुष्यजातिरेव तथा कुरूः, भीरूः। भीरुरिति केचिदिति तन्मतेऽत्रोङ् न स्यादिति सूचितम्। नेहेति यरामोद्धवादिति शेषः। ब्रह्मजातिरपि नृजातिरित्यध्वर्युरित्यत्र निषेधः। अध्वर्युर्याज्ञिकविशेषः ॥

२३०४। अप्राणिजातेरुरामाद्रज्ज्वादिवर्जम्।

अलाबूः, कर्कन्धूः। नेह—रज्जुः, हनुः॥ २३०४॥

२३०५। कद्रू-पङ्गू-श्वश्र्वादयः।

ऊङन्ताः साधवः॥ २३०५॥

ऊङ् निवृत्तः।

२३०६। अजादेराप्।

पूर्वस्यापवादोऽयम्। तत्र जातीपः—अजा, अश्वा, एड़का, कोकिला, क्रुञ्चा, चटकेत्यादि; अथ केशवेपः—किङ्करा, तत्करा इत्यादि। भार्यावय ईपः—मुग्धा, ज्येष्ठा, कनिष्ठा, मध्या,

---

२३०४। अप्रा। लक्ष्म्यां रज्ज्वादीन् वर्जयित्वा अप्राणिजातेरुरामान्तान्नाम्न ऊङ् भवति। अलाबूः तुम्बी, कर्कन्धूर्बदरी। नेहेति वर्जनादिति शेषः। रज्जुर्गवादिबन्धनी, हनुर्मनुष्याद्यङ्गविशेषः॥

२३०५। कद्रू। कद्रूश्च पङ्गूश्च श्वश्रूश्च ता आदयो येषां ते कद्रूपङ्गूश्वश्र्वादयः। लक्ष्म्यां कद्रूपङ्गूश्वश्र्वादयः प्रयोगा ऊङन्ताः साधवो भवन्ति। एते तत्तद्गुणयुक्ताः। आदिपदात् पाण्डूप्रभृतिश्च। ऊङन्तं निवर्तयति—ऊङिति॥

२३०६। अजा। लक्ष्म्यामजादेरुत्तर आप् स्यात्। पूर्वेति। येन केनापि ईप्प्राप्तस्य पूर्वस्यायं विधिरपवाद इति ज्ञेयम्। तत्र पूर्वेषु मध्ये जातीपोऽपवाद उच्यते। अजत्वजातिः अजेति। 'अरामान्तजाते'रित्यनेन प्राप्तेरत्र निषेधः। एवमश्वादयः पञ्च। आदिशब्दात् यथासम्भवमन्येऽपि। अथानन्तरं केशवेपोऽपवाद उच्यते किङ्करेति। 'कियत्तत्बहुष्वदि'त्यनेनात्र टप्रत्ययापवादोऽत्प्रत्ययस्तेन केशवेपोऽप्वादोऽपि सिद्धः। एवं तत्करा। इत्यादीत्यादिपदेन यत्करा बहुकरेत्यादयः। भार्या च वयश्च भार्यावयसी तयोरीपोऽपवादो दर्श्यते। मुग्धस्य भार्या मुग्धा। एवं ज्येष्ठादयः षट्। आदिपदात् यथा-

मध्यमा, गोपालिका, पशुपालिका इत्यादि। वयसि—कन्या, बाला, होड़ा, पाका, वत्सका, मन्दा, विनता इत्यादि। अजादिराकृतिगणः॥ २३०६॥

२३०७। शूद्रादमहत्पूर्वात्।

शूद्रा। नेह—महाशूद्री। ततोऽत्र प्रकरणे तदन्तविधिरिष्यते; महाजा। कथं 'पञ्चाजी'? विशेषविधेः॥ २३०७॥

२३०८। त्रिप्रभृतीनामन्त्यमुत्तमं, तत्समीपमुपोत्तमं, गुरूपोत्तमाभ्यामनार्षाभ्यां गोत्रविहिताणिण्प्रत्ययान्ताभ्यां याप्, क्रौड्प्रभृतेश्च।

---

योग्यमन्येऽपि। वयसीति वयसीपोऽपवादो यथा—कन्या बालेत्यादौ गौरादित्वात् प्राप्तेऽपवादः। होड़ा पाकेत्यादौ तु वयसि गम्ये स्वार्थे प्राप्तेऽपवादः। अजादेरपरिमितत्वादाह—अजादिरिति॥

२३०७। शूद्रा। महच्छब्दः पूर्वो यस्मात् स महत्पूर्वः न महत्पूर्वः अमहत्पूर्वस्तस्मात्। अत्र महच्छब्दस्यानुकरणत्वात् महतः संसारस्यारामः' इत्यनेन संसारस्यारामो न स्यात्। जातौ वाच्यायां लक्ष्म्याममहत्पूर्वात् शूद्रादाप् भवति। शूद्रत्वजातिः शूद्रा। नेहेति महत्पूर्वत्वात्। महाशूद्रीति महाशूद्रशब्दोऽत्राभीरजातिवाची। किन्तु वैश्यो यदा गोभिरुपजीवति तदा स एवाभीरजातिः। 'अरामान्तजातेरि'त्यनेनात्रेप्। 'महतः संसारे'त्यनेन महत आरामः। जातेरन्यत्र तु शूद्री। अत इति। अत उक्तात् महत्पूर्वशूद्रवर्जनादत्र प्रकरणे, तदिति तदन्तात् महदन्तादन्यस्मात् विधिरिति विशेषविधिरिष्यते इत्यर्थः। तेन महाजेति। ननु कथं पञ्चाजीति। अजादेरावत्र कथं न स्यात्? सिद्धान्तमाह—विशेषेति। त्रिराम्या विशेषविधित्वादित्यर्थः॥

२३०८। त्रिप्र। त्रीणि प्रभृतीनि आदीनि येषां तानि

अण्—कारीषगन्ध्या। इण्—वाराह्या, क्रौड्या, नाड्या, 'अनार्षाभ्यां' किम् ? वाशिष्ठी ॥ २३०८ ॥

त्रिप्रभृतीनि तेषाम्। त्रिप्रभृतीनां वर्णानामन्त्यमन्तभववर्णमुत्तमसंज्ञं तत्समीपमुत्तमनिकटस्थमुपोत्तमसंज्ञं स्यात्। यावादिप्रत्ययविधिसूत्रापेक्षितं संज्ञासूत्रमेतत्। गुरू। गुरूपोत्तमाभ्यामनार्षाभ्याम् ऋषिवंश्यरहिताभ्यां गोत्रार्थविहिताणिण्प्रत्ययान्ताभ्यां नामभ्यां लक्ष्म्यां याप् स्यात्। गोत्रप्रत्ययान्तस्य जातित्वात् प्राप्तेपोऽपवादनार्थमिदम्। क्रौड़ि। क्रौड़िप्रभृतेश्च गोत्रविहिताणिण्प्रत्ययान्ताल्लक्ष्म्यां याप् स्यात्। उत्तमादिसंज्ञत्वाभावादिदम्। अणिति केशव-णः। करीषः शुष्कगोमयस्तद्गन्ध इव गन्धो यस्य स करीषगन्धस्तस्य गोत्रापत्यं स्त्रीति विदादेः केशव-णः। कारीषगन्ध इत्यस्मात् याप् 'अ-इद्वयस्ये'त्यरामहरः, कारीषगन्ध्येति उत्तमसंज्ञायां त्रिप्रभृतीनान्त्यमिति यत् तत्तु द्विप्रभृतीनामन्त्यनिरासार्थं न चतुःपञ्चादीनां तेनात्र चतुर्णामन्त्योदरामस्याराम उत्तमस्तत्समीपो गरामस्याराम उपोत्तमः स तु 'सत्सङ्गात् पूर्वो वामनोऽपी'त्यनेन गुरुश्च। तेनैतत् ज्ञापितं, यो द्विप्रभृप्रतीनामन्त्यः स नोत्तममस्तत्समीप उपोत्तमोऽपि न स्यादिति। वाराह्येति वराहस्य 'गोत्रापत्यं स्त्री'ति 'अरामबाह्वादिभ्यामि'ति नृसिंह इः। यत्र तु विशेषविधानं नास्ति तत्र सामान्यमेवेति वक्ष्यमाणत्वात्। अत्र त्रयाणामन्त्य इराम उत्तमस्तत्समीपो ररामस्याराम उपोत्तमो गुरुश्चेति याप्। एवं दैवदत्त्या याज्ञदत्त्या प्रभृतयः। गोत्रविहितादन्यत्र कारीषगन्धी वाराहीति। क्रोड़स्य गोत्रापत्यं स्त्रीति पूर्ववदरामबाह्वादिभ्यामिर्नृसिंहस्ततस्त्रिप्रभृतित्वाभावादुत्तमादेरभावेऽपि विधानवलात् याप् क्रौड्येति। नड़स्य गोत्रापत्यं स्त्रीति 'नड़ादेर्माधव-फः' इत्यनेन फे प्राप्तेऽपि द्रोणादेर्माधव-फो वेत्यत्र द्रोणादेरन्तर्गणत्वात् पक्षे इर्नृसिंहः नाड़िस्तस्माद्याप् नाड्येति। क्रौड़िप्रभृतेश्चेत्यत्र प्रभृतिपदात् नाड़ि, व्याड़ि, आपिशलि, आपक्षिति, सौधातकि, चौपयत, चैकयत, शैकयत, वैड्कयत, भौकिरि भौकिलि, ( भौरिकि, भौलिकि, इत्यपि पाठः दृश्यते। ) शालास्थलि

२३०९। भोज्या क्षत्रियजातौ, दैवयज्ञ्याप्रभृतयो वा। यावन्ताः साधवः ॥ २३०९ ॥

पूर्णो लक्ष्म्यधिकारः।

२३१०। इतः प्रत्ययपरिभाषा।

परिभाषेयमापरिसमाप्तेः। किञ्च, प्रत्यये—ख ईनः, घ इयः, छ ईयः, ठ इकः, ठीस्त्वीकः, ढ एयः, ढक एयकः, फ आयनः, फिस्त्वायनिः, वुरकः। प्रत्यये कर्तव्ये ईनादीनां पाणिनीयवत् खादिस्थानीयता ज्ञेया। अत्र वर्णस्वरूपे रामः; यथा—खराम ईनः इत्यादिः ॥ २३१० ॥

---

कापिष्ठलीत्येते त्रयोदश। क्रौडयादयः यङिणन्तास्तत्राद्येषु त्रिषु द्व्यक्षरत्वात् शेषेषु गुरूपोत्तमत्वाभावादप्राप्ते विधानम्। चौपयताद्याश्चत्वारोऽणन्ताः शेषा इणन्तास्तेष्वपि गुरूपोत्तमत्वाभावादप्राप्ते विधानम्। अनार्षाभ्यां किं किमर्थं यद्यार्षौ स्यातां तर्हि किं स्यात्। वशिष्ठस्य गोत्रापत्यं स्त्री वाशिष्ठी तथा वैश्वामित्री ॥

२३०९। भोज्या। क्षत्रियजातौ वाच्यायां भोज्येति यावन्ता साधुः। दैव। दैवयज्ञ्याप्रभृतयो गोत्रजातौ यावन्ताः साधवो वा भवन्ति। देवयज्ञस्य गोत्रापत्यं स्त्री दैवयज्ञ्या इत्यादि नित्यप्राप्तेऽत्र विभाषा। सूत्रस्थप्रभृतिपदात् शौचवृक्षि शाट्यमुग्रि काष्ठेवृद्धिश्च ज्ञेयः। लक्ष्म्यधिकारं समाप्तयति पूर्ण इति।

२३१०। इतः। इतःपरं प्रत्ययानां परिभाषा दर्श्यते। परीति समाप्तिपर्यन्तेयं परिभाषा इत्यर्थः। इदानीं परिभाषालक्षणमाह—किञ्चेत्यादिना। प्रत्य। प्रत्यये कर्तव्ये खादीनां दशानां यथासंख्यमीनादयो दशादेशा भवन्ति। प्रकारान्तरेण वृत्तिं प्रदर्शयति—प्रत्यय इति। प्रत्यये कर्तव्ये सति पाणिनीयानां यथा वोरकं योरनमित्यत्राकादीनां ण्वादिस्थानीयता तद्वदीनादीनां खादिस्थानीयता इत्यन्वयः। अत्रेति खरामादिष्वित्यर्थः। राम इति द्रष्टव्य इति शेषः। तत्प्र-

२३११। टित् केशवः, टणिन्माधव इति।

२३१२। तेन दीव्यतीत्यतः प्रागर्थेषु केशव-णः।

अयमेव 'अण्' इत्युक्तः। तत्र 'तस्यापत्यम्' (२३२३) इत्यादि-सूत्रै रर्था दर्शयिष्यन्ते। ततश्च मधोरपत्यमित्याद्यर्थे मधुशब्दात् षष्ठ्यन्तात् केशव-णे कृते उक्तार्थस्यापत्यपदस्याप्रयोगः, ततः अन्त-रङ्गत्स्वादेर्महाहरः, तथापि पूर्वस्य विष्णुपदत्वमिति य-सर्वेश्वरयो-र्विष्णुपदत्वाभावः, किन्तु तद्धिते यश्चेति 'भगवत्'संज्ञैव, ण इत्, आदिसर्वेश्वरस्य वृष्णीन्द्रः—माधवः, पक्षे वाक्यं समासश्च सर्वत्र,

---

कारं दर्शयति। इत्यादीत्यादिपदेन घराम इयः, छराम ईय इत्यादयः। अपरविशेषमाह—किञ्चेति॥

२३११। टित्। ट इत् यस्य स टित्, टित्प्रत्ययः केशवसंज्ञो भवति। ठणि। टणावितौ यस्य स टणित्। टणित्प्रत्ययो माधव-संज्ञो भवतीति द्वयं संज्ञासूत्रम्॥

२३१२। तेन। तेन दीव्यतीत्यतोऽर्थात् प्रागर्थेषु पूर्वेष्वर्थेषु नाम्नः केशवणो भवति। पारिभाषिकविधिसूत्रमेतत्। समासकार्या-दावणिति यदुक्तं तदेव स्मारयति अयमेवेति। तत्रेति। तेन दीव्य-तीत्यतः प्रागर्थेषु मध्ये वाक्यस्थकतिचित्पदानामुक्तार्थत्वेनायोग इति प्रकारं कथयति—ततश्चेति। च पुनस्ततो हेतोरिति योज्यम्। तत इति ततोऽनन्तरम्। तथापीति स्वादेर्महाहरेऽपीत्यर्थः। इतीत्यस्मात् परस्मिन् स्वादितद्धियोरित्युक्तत्वादिति योज्यम्। य-सर्वेश्वरयोरित्य-स्मात्। परयोरिति योज्यम्। विष्णुपदत्वाभाव इत्यत्र पूर्वस्य विष्णु-पदत्वाभाव इति विन्यस्य पूर्वस्य विष्णुपदेत्यत्र अय-सर्वेश्वरयो-रित्युक्तादिति हेतुर्द्रष्टव्यः। किन्त्विति अपरं वक्ष्यते इत्यर्थः। तद्धिते यश्च इति हेतोर्य-सर्वेश्वरयोर्भगवत्संज्ञे वेत्यर्थः। पूर्वोक्तवृष्णीन्द्रलक्षणं सूचयति—आदीति। उद्वयस्य गोविन्द इति गोविन्दः। माधव इति। पक्षे इति तद्धितबाहुल्यात्, पक्षे सर्वत्र वाक्यं समासश्च वर्तते,

यथा—मधोरपत्यं, मध्वपत्यमित्यादि। वृत्रघ्नोऽपत्यादिः वार्त्रघ्न इत्यत्र 'हन्तेस्तो नृसिंहे' ( ८१३ ) इति न स्यात्, केवल-हन्-धातोः स्वीकारात्॥ २३१२॥

२३१३। दित्यदित्यादित्ययमेभ्यो ण्यरामः, पत्युत्तर-पदाच्चागणपत्यादेः।

दितेरपत्यादिः दैत्यः। अदितेरादित्यः। एवं यादुपत्यः, वार्हस्पत्यः। गणपत्यादेस्तु—गानपतम्, आश्वपतम्, पाशुपत-मित्यादिः॥ २३१३॥

---

तदेव दर्शयति—मधोरिति क्रमेण। उदाहरणान्तरमाह—वृत्रेति। अपत्या-दिरित्यादिपदेन गोत्रयुवापत्ययोर्ग्रहणम्। ननु वार्त्रघ्न 'हन्तेस्तो नृसिंहे' इति तः कथं न स्यादित्यत आह—वार्त्रेति। वार्त्रघ्न इत्युदाहरणन्तु धान्यपलालन्यायेन सिद्धं, किन्तु 'व-म सत्सङ्गे'त्यनेनारामहरः, 'हनो हस्य घः' इत्यनेन घश्चेति॥

२३१३। दित्य। तस्यापत्यादित्यादिरित्यर्थे दित्यादित्यादित्य-यमेभ्यो ण्यरामः स्यात्। पत्यु। अगणपत्यादेर्गणपत्यादिव्यतिरिक्तात् पत्युत्तरपदाच्च ण्यरामः स्यात्। दितिर्दानवमाता तस्या अपत्यादि-रित्यर्थे दितिशब्दात् ण्यः, णराम इत्। 'आदिसर्वेश्वरे'ति वृष्णीन्द्रः। 'अ-इद्वयस्ये'तीरामहरः दैत्य इति। एवमदितिर्देवमाता तस्या अप-त्यादिः। आदित्य इति। आदित्यः सूर्यस्तस्यापत्यादिरित्यादित्यशब्दात् ण्यः, 'विष्णुजनात् तद्धितयस्ये'ति यरामहरः आदित्य इति। अरा-मान्तात्वादस्मात् नृसिंह-इ-प्राप्तेऽत्र ग्रहणम्। एवं यमो धर्मराज-स्तस्यापत्यादिर्याम्य इति। उत्तरसूत्रस्योदाहरणं दर्शयति—एवमिति। यदुपतेरपत्यादिर्यादुपत्यः, वृहस्पतेरपत्यादिर्वार्हस्पत्यः। एवं गार्हपत्य-प्रभृतयः। वर्जनोदाहरणद्वारा अपत्यादेरन्यार्थमपि दर्शयति—गणपत्यादे-स्त्विति गणपतिर्गणेशस्तस्यापत्यादेरभावात्, तस्येदमिति वाक्ये तेन दीव्यतीत्यतः केशव-णः—गाणपतमिति एवमाश्वपतमिति द्वयम्। इत्या-दीत्यादिपदेन यथासम्भवमन्येऽप्यूह्याः॥

२३१४। त्थाम्नस्त्वरामः।

अश्वत्थामः॥ २३१४॥

२३१५। पृथिव्या णरामो वा।

पार्थिवः, पार्थिवा, पार्थिवी॥ २३१५॥

२३१६। देवान्नृसिंह-यो वा।

दैवः, दैव्यः॥ २३१६॥

२३१७। वहिषो वाह्य-वाहीकौ साधू।

जातेरीप्, वाहिकी॥ २३१७॥

२३१८। त्रिरामोतः सर्वेश्वरादि-प्राग्दीव्यतीयस्य महाहरोऽनपत्ये।

---

२३१४। त्थाम्नः। तस्यापत्यादिरित्यर्थे त्थाम्नः इत्यस्मात्तु भरामो भवति। त्थाम्नशब्दवाची। केशव-णवाधनार्थमिदम्। अश्वत्थाम इति अश्वत्थाम्नोऽपत्यादिः 'नान्तस्ये'ति संसारहरः॥

२३१५। पृथि। तस्यापत्यादावर्थे तृथिव्या णरामो वा स्यात्, पक्षेऽधिकारात् केशव-णश्च। पृथिव्या अपत्यादिरिति णः इत् अस्यापि नृसिंहत्वात् वृष्णीन्द्रः। 'उद्वयस्ये'ति गोविन्दः, पार्थिवः। लक्ष्मीत्वे णपक्षे 'कृष्णादाप्' पार्थिवा। केशवणपक्षे तु 'अनकैशवे'त्यनेन ईप् प्रार्थिवीति॥

२३१६। देवा। तस्यापत्यादावर्थे देबात् नृसिहयो वा स्यात्, पक्षे केशवणश्च। देवस्यापत्यादिः दैव इति द्वयम्॥

२३१७। वहिः। वहिःशब्दः नीचजातिवाचकस्तस्यापत्यादिरित्यर्थे नृसिह-य-ठीभ्यां सह वहिषः स्थाने वाह्यवाहीकौ साधू भवतः। उभयत्रापि संसारहर उभौ प्रत्ययौ च निपातात्। जातेरिति वाहकजातित्वादीप् वाहीकीति॥

२३१८। त्रिरा। सर्वेश्वर आदिर्यस्य स सर्वेश्वरादि दीव्यतेः

पञ्चसु कपालेषु संस्कृत इत्यर्थे केशव-णः—पञ्चकपालः पुरोडाशः ॥ २३१८ ॥

२३१९। धान्यानां भवने क्षेत्र इत्यतः प्रागग्नि-कलिभ्यां माधव-ढः।

आग्नेयः, आग्नेयी ॥ २३१९ ॥

२३२०। स्त्रीपुंसाभ्यां नृसिंह-न-स्नौ, भावे च वा।

स्त्रैणं, पौंस्नम् ; भावे स्त्रैणं, स्त्रीत्वम् ; पौंस्नं, पुंस्त्वम् ; त्वो वक्ष्यते (२८९६)। भवनात् प्रागेव, स्त्रीवत्, पुम्वत् ॥२३२०॥

---

प्राक् प्राग्दीव्यतिस्तस्मिन् भवः प्राग्दीव्यतीयः सर्वेश्वरादिश्चासौ प्राग्दीव्यतीयश्चेति सर्वेश्वरादिप्राग्दीव्यतीयस्तस्य। त्रिरामीतः परस्मादनपत्यार्थे विहितस्य सर्वेश्वरादिप्राग्दीव्यतीयस्य महाहरो भवति। तद्धितार्थत्रिराम्या वाक्यं दर्शयति—पञ्चेति। तत्र संस्कृत इत्यर्थे तेन दीव्यतीत्यतः प्रागित्यनेन केशव-णः। अनेन तु तस्य महाहरश्च। पञ्चकपाल इति पुरोडाशो यज्ञापूपः ॥

२३१९। धान्या। धान्यानां भवने क्षेत्रे इत्यतः इत्यस्मात् प्रागिति प्रागर्थेषु अग्निकलिभ्यामुत्तरो माधवढो भवति। पारिभाषिकोऽयम्। अग्नेरपत्यं पुमानित्याद्यर्थेषु आग्नेय इति अग्नेरपत्यं स्त्रीत्याद्यर्थे आग्नेयीति। एवं कालेयः कालेयीति ॥

२३२०। स्त्री पुं। धान्यानामित्यतः प्रागर्थेषु स्त्रीपुंसाभ्यामुत्तरस्मिन् यथासंख्यं नृसिंहन-स्नौ भवतः। भावे। भावे वाच्ये स्त्रीपुंसाभ्यां नृसिंहन-स्नौ पुनर्वा भवतः। स्त्रिया इदं स्त्रैणमिति, पुंस इदं पौंस्नमिति सर्वेश्वरविष्णुजनयोरन्तरालपाठात् विष्णुचक्रस्य सर्वेश्वरत्वं विष्णुजनत्वञ्च तेन विष्णुजनत्वादत्र 'सत्सङ्गान्तस्य' इत्यनेन सरामहरः। भाव इति रूपं दर्श्यत इति शेषः। स्त्रिया-भावः स्त्रैणमिति द्वयम्। तथा पुंसो भावः पौंस्नमिति। पुंस्त्व-

२३२१। गोः सर्वेश्वरादिप्रत्ययप्रसङ्गे यरामः।

'ओद्वयस्यावावौ प्रत्यय-ये' ( ८८० )—गव्यम् ॥ २३२१ ॥

इतः प्राग्दीव्यतीया अर्था दर्श्यन्ते।

२३२२। अधिकारसूत्रे प्रथमनिर्दिष्टविष्णुभक्त्यन्तात् प्रत्ययः।

परिभाषेयम् ॥ २३२२ ॥

२३२३। तस्यापत्यम्।

विभुरयम्। अत्रार्थे षष्ठ्यन्तान्नाम्नो यथाविहितं स्युः।

---

मित्यत्र तु सत्सङ्गान्तहरे कृते पुमः सरामो 'हरिकमलहरिखड्गयो-रि'त्यादिना विष्णुचक्रपूर्वः सरामः। त्वो वक्ष्यते इति 'त्वतावौ ब्रह्म-लक्ष्म्योरि'त्यनेन भावे त्वो वक्ष्यते इत्यर्थः। अयमपि योगो धान्यानां भवने क्षेत्र इत्यतः प्रागर्थेष्वेवेत्यवधारयति भवनादिति। तेन स्त्री इव स्त्रीवत् पुमानिव पुम्वदित्यत्र तौ न भवतः। धान्यानां भवन इत्यतः परार्थत्वात् ॥

२३२१। गोः। सर्वेश्वरादिप्रत्ययानां प्रसङ्गे प्रस्तावे गोशब्दात् यरामः स्यात्। 'ओद्वयस्ये'त्यनेनात्र औरामस्याव इति सूचयति ओद्वय-स्येति। गोरिदं गव्यं दुग्धादि। इत इति इतः परमिति योज्यम्। शेषः सुगमः ॥

२३२२। अधि। अधिकारसूत्रे प्रथमं निर्दिष्टो यो विष्णु-भक्त्यन्तस्तस्मान्नाम्नः प्रत्ययः स्यादित्यर्थः। अनियमे नियमकारित्वा-दियं परिभाषा ॥

२३२३। तस्य। तस्यापत्यमित्यर्थे नाम्नो यथास्वं प्रत्ययाः स्युः। अयमधिकारो विभुनामा। सूत्रार्थं स्वयं विवृणोति—अत्रार्थ इति। यथाविहितमित्यस्मात् प्रत्यय इति द्रष्टव्यम्। यथाविहितं विहित-मनतिक्रम्येत्यर्थः। यद्यपि अत्रार्थ इत्युक्तं तथापि अत्र वाच्ये इति

मधोरपत्यं माधवः; एवं दैत्यः, आदित्यः, स्त्रैण इत्यादिः ॥ २३२३ ॥

२३२४। अरामवाह्वादिभ्यामिर्नृसिंहः, दशरथादेर्वा।

गर्गस्यापत्यं गार्गिः,; वाहविः, दाशरथिः; "प्रदीयतां

---

निर्गलितार्थः। मधोरपत्यमित्यस्मात् पुमानिति योज्यं वाच्यस्य पुरुषोत्तमत्वात्। तेन दीव्यतीत्यतः 'प्रागि'त्यनेन केशव-णो विशेषविधेरभावात्। माधव इति। एवं मधोरपत्यं क्लीवं माधवं, मधोरपत्यं स्त्री माधवीति। एवमिति एवम्प्रकारेण दितेरपत्यं पुमान् दैत्यः, अदितेरपत्यं पुमान् आदित्यः 'दित्यदित्यादि'त्येत्यनेनात्र ण्यरामः। स्त्रिया अपत्यं पुमान् स्त्रैणः 'स्त्रीपुंसाभ्यामि'त्यनेनात्र नृसिह-णः। इत्यादीत्यादिपदेन यादुपत्यः, अश्वत्थामः, पार्थिवः, दैवः। इत्यादयो यथासम्भवमूह्याः॥

२३२४। अरा। तस्यापत्यमित्यर्थेऽरामबाह्वाभ्यां नृसिंह-इर्भवति। दश। अस्मिन्नर्थे दशरथादेर्नृसिंह-इर्वा भवति। गर्गस्यापत्यं पुमान् गार्गिरिति। एवं दाक्षिप्रभृतयः। बाहुः कश्चित् तस्यापत्यं पुमान् बाहविरिति, उद्वयस्येति, उद्वयस्येति गोविन्दः। बाह्वादिर्यथा–बाहु, उपबाहु, उपबाकु, निबाकु, शिबाकु, वटाकु, धेनु, उपविन्दु, कृष्ण, राम, बेद, युधिष्ठिर, अर्जुन, प्रद्युम्न, गद, शाम्ब, अजीगर्त, इन्द्र, धूर्तक, चूड़ा, जङ्घा, वलाका, वृकला, मूषिका, धुरका, ध्रुवका, नगला, भगला, शकला, सुमित्रा, दुर्मित्रा, पुष्करसद, अन्तर, हत, उदञ्च, अनड्वाह, शर्मन्, देवशर्मन्, कुनामन्, पञ्चन्, सप्तन्, अष्टन्, शङ्खभेदिन्, खरनर्दिन्, नगरनर्दिन्, प्राकारनर्दिन्, मासशराविन्नित्यादिः। बाह्वादौ बाहुप्रभृतिषण्णामरामान्तत्वाभावादप्राप्ते विधानम्। कृष्णादिशाम्बान्तानामरामान्तत्वेऽपि ऋष्यन्धकवृष्णीत्यनेन केशवणप्राप्ते विधानम्। अजीगर्त्तादिपञ्चानामरामन्तत्वेऽप्यनादिवृष्णीन्द्रेभ्य इत्यनेन केशवणप्राप्ते विधानम्। चूड़ादीनामप्यनेन केशवणप्राप्ते विधानम्।

दाशरथाय मैथिली" ( रामायणम्, युद्धकाण्डम्, लङ्काकाण्डम् वा ६।२२,२३ ; महानाटकम् ६।३४ )। सौमित्रिः, सौमित्रश्च। अत्र 'वर्णग्रहणे सन्निपातन्यायाप्रवृत्तिः' तस्मादरामहरः—गार्गिः ॥२३२४॥

---

पुष्करसदादीनां विष्णुजनान्तत्वादप्राप्ते विधानमिति। चाटाकवि कार्ष्णि आजीगर्ति चौड़ि पौष्करसदि शार्मि शाङ्खभेदिरित्यादीन्युदाहरणानि दिङ्मात्राणि। दशरथादिस्त्वाकृतिगणः। दशरथस्यापत्यं दाशरथिरिति। पक्षे, तेन दीव्यतीत्यतः प्रागित्यनेन केशव-ण इत्यस्योदाहरणन्तु भट्टग्र- दाहणेन दर्शयति—प्रदीयतामिति। श्लोकस्यायं चतुर्थः पादः पूर्वपाद- त्रयन्त्वेवम्—"भजस्व धर्मं कुलकीर्तिवर्धनं, त्यजस्व कोपं कुलकीर्ति- नाशनम्। प्रसीद जीवेम सवान्धवा वयं ...।" रावणं प्रति कुम्भ- कर्णस्य प्रार्थनमिदम्। एवं सुमित्राया अपत्यं पुमान् सौमित्रिरिति। बाह्वादित्वादस्मात् नित्यमिरामे प्राप्ते विकल्पार्थो दशरथादौ पाठः। पक्षेऽनादिवृष्णीन्द्रेभ्य इत्यनेन केशवणः सौमित्रश्चेति केचित्तु दशरथा- वेंति पृथक् सूत्रं न कुर्वन्ति, तन्मतेऽरामान्तत्वादेव दाशरथिप्रभृतिः। दाशरथादिस्तु 'तस्येदमि'त्यनेन भवतीति। नन्वरामान्तान्नृसिंह-इस्ततोऽ- नन्तरं 'अ-इद्वयस्ये'त्यनेनारामहरे कृते 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायादिरामस्यापायः कस्मान्न स्यादित्यत्र सिद्धान्तमाह—वर्णेति। 'यं दृष्ट्वा यस्योत्पत्ति स तस्य सन्निपातः' इति यत् सन्निपातलक्षण- मुक्तम्। मतभेदात्तस्य द्विविधव्याख्यानं सम्भवति, तद्यथा,—यं जनकं दृष्ट्वा यस्य जन्यस्योत्पत्तिर्भवति स तस्य जन्यस्य सम्बन्धे सन्निपातः स्वयं सन्निपातोऽपि तद्विघाताय निमित्तं न स्यात्। मतान्तरे तु यं जनकं दृष्ट्वा यस्य जन्यस्योत्पत्तिः, स जन्यस्तस्य सन्निपातः स्वयं सन्निपातलक्षणविधिः सन् जनकविघाताय निमित्तं न स्यात्। तथा च, पूर्वव्याख्याने स्वीकृते आप्रवृत्तिरित्यारामप्रश्लेषः कार्यः। पर- व्याख्यानेऽङ्गीकृते त्वप्रवृत्तिरित्यरामप्रश्लेषः तथा सति, वर्णग्रहणे विषये सन्निपातन्यायस्य आ सम्यक्प्रवृत्तिस्तस्माद्धेतोररामहरः सन् इराम- विघाताय न स्यादिति गार्गिः सिद्धः। एतदुपलक्षणमन्यदपि ज्ञेयम्।

२३२५। व्यासादेरकिण्, स च चित्।

वृष्णीन्द्रस्थानचतुःसनादेशयोरित्यादिः ; व्यासस्यापत्य वयासकिः, सुधातुः—सौधातकिः। वरट-चण्डाल-निषाद-विम्बादयश्च व्यासादयः॥ २३२५॥

२३२६। विश्रवसो वैश्रवणः।

अपत्ये साधुः॥ २३२६॥

२३२७। लोमान्तादरामो बहुत्वे।

उडुलोम्नः पुत्रा औडुलोमाः। बहुत्वे किम्? उडुलोम्नः पुत्रः औडुलोमिः, बाह्वादित्वात्॥ २३२७॥

---

मतान्तरव्याख्यानात्तु, वर्णग्रहणे विषये सन्निपातस्य प्रवृत्तिर्न स्यात्। तत इरामेऽरामहरः स्यात्॥

२३२५। व्यासा। तस्यापत्यमित्यर्थे व्यासादेरुत्तरोऽकिण् स्यात्, स चाकिण् चिच्च स्यात्। ऐयादेशलक्षणं सूचयति—वृष्णीन्द्रेति। व्यासस्यापत्यं पुमान् चित्करणात् 'संसारस्य हरश्चिती'ति संसारहरः, वैयासकिरिति। सुधातुरित्यपत्यं पुमानिति शेषः सौधातकिरिति। एवं वारटकिः, चाण्डालकिः, नैषादकिः, वैम्बिकिः। वरट इत्यत्र वरुड़ इति कश्चित्। विम्बादय इत्यादिपदेनाकृतिगणः सूचितः॥

२३२६। विश्र। तस्यापत्यमित्यर्थे विश्रवसः केशवणेन वैश्रवणः साधुः स्यात्। निपातनादत्र विश्रवसः सरामो नरामः पश्चात् 'र-ष-ऋद्वयतेभ्यः' इत्यनेन णत्वं, वैश्रवणः रावणः। वृत्तिमाह—अपत्य इति। 'विश्रवसो वैश्रवण-वरणौ' चेति जुमरः। तन्मते केशवणे विश्रवसः स्थाने विश्रवणवरणावादेशौ भवतः॥

२३२७। लोमा। बहुत्वे विषये तस्यापत्यमित्यर्थे लोमान्तान्नाम्नोऽरामो भवति। शिष्याणां व्युत्पत्तिवैचित्र्यार्थं प्रकारान्तरेण वाक्यं दर्शयति—उडुलोम्नः पुत्रा इति। अत्र पुत्रशब्देनैव तस्या-

२३२८। शिवादेः केशव-णः, ऋष्यन्धकवृष्णि-कुरुभ्यश्च, अनादिवृष्णीन्द्रेभ्यो नदीमानुषीनामभ्यश्च।

आ-ऐ-औरामा यस्यादिसवश्वराः, स आदि वृष्णीन्द्रसंज्ञः, तद् यदादयश्च। 'वृद्ध'संज्ञा इत्यन्ये। शैवः, यास्कः, पौत्रः, दौहित्रः, नानान्द्रः। ऋषिभ्यः—वाशिष्ठः ; अन्धकेभ्यः— श्वाफल्कः ; वृष्णिभ्यः

---

पत्यानि पुमांस इति प्रतीयते। उडुलोम्न इत्यत्र नान्तस्येति संसारहरः। बहुत्वे किमिति। किमर्थं बहुत्वं यहि न स्यात्तर्हि किं स्यात्। औडुलोमिरिति नृसिंहेरामान्तं तदिरामप्राप्तौ हेतुमाह—बाह्वादित्वादिति॥

२३२८। शिवा। तस्यापत्यमित्यर्थे शिवादेरुत्तरः केशवणो भवति। ऋष्य। ऋषयश्च अन्धकाश्च वृष्णयश्च कुरवश्च ते ऋष्यन्धकवृष्णिकुरवस्तेभ्यः। ऋषयः स्वसिद्धा वशिष्ठादयः। अन्धकादयः यदुवंशविशेषाः। कुरवस्तु कुरुवंश्याः। तस्यापत्यमित्यर्थे ऋष्यन्धकवृष्णिकुरुभ्यश्च केशवणो भवति। अना। नास्त्यादिवृष्णीन्द्रो येषां तेऽनादिवृष्णीन्द्रास्तेभ्यः। नदी मानुषी चेति नाम संज्ञा येषां ते नदीमानुषीनामानस्तेभ्यः। तस्यापत्यमित्यर्थे नदीमानुषीनामभ्यश्च केशवणो भवति। यस्य शब्दस्यादिसर्वेश्वरा आ ऐ औ इति त्रयो रामा वर्णा भवन्ति स आदिवृष्णीन्द्रसंज्ञः स्यात्। तद्यदावादी येषां ते तद्यदादयश्चादिवृष्णीन्द्रसंज्ञाः स्युः। एते वृद्धसंज्ञा भवन्तीत्यन्ये पण्डिता वदन्ति। प्रथमतः शिवादेरुदाहरणमाह—शैव इति। शिवस्यापत्यं पुमान् शैवः, यास्कः। एवं पुत्रस्यापत्यं पुमान् दुहितुरपत्यं पुमान् ननान्दुरपत्यं पुमानित्येतेषु पौत्रादयः शिवादिरप्याकृतिगणस्तेन यस्कादयस्तेभ्योऽन्ये च संगृह्यन्ते। यथा—शिव, यस्क, पुत्र, दुहितृ, ननन्द, तक्षन्, गङ्गा, विपाशा, ऋञ्चा, कोकिला, प्रोष्ठ, वतण्ड, पिष्ट, मयूर, खदूरक, वर्ण, खर्जुरक, भूरि, सन्धि, मुनि, कुठार, अनभिम्लान, ककुत्स्थ, सुपिष्ट, ऋष्टिषेण, यक्षभूमि, इला, इड़ा, सपत्नी,

—वासुदेवः ; कुरुभ्यः—नाकुलः । कथं कार्ष्णिः, प्राद्युम्निः, आर्जुनिः ? बाह्वादिपाठात् । अनादिति—यामुनः, ऐरावतः । मानुषीतः—गौतमः, रौहिणः । अनादिवृष्णीन्द्रेति किम् ? कौशिकेयः, कौशल्येयः ॥ २३२८ ॥

---

जरत्कारु, प्रौष्ठिक, चण्ड, कुम्भ, कहोड़, ककुभ, बोध, पीबर, तृण, कर्ण, क्षीरह्रद, जलह्रद, परिषिक, गोभिल, जटिलक, वधिरक, मञ्जीरक, वृश्चिक, खञ्जारक, खञ्जाल, रेख, आलेख, वर्तन, पेटक, तृक्षाक, नभाक, ऊर्णनाभ, उकिथा, लोहितिका, आर्य, श्येता, नक्ष, त्वक्ष, अयस्थूण, कलन्धन, विरूपाक्ष इति पञ्चषष्टिसंख्यकः । अस्मिन् गणे कतिचिदरामान्तेभ्यः कतिचिदन्येभ्योऽपि इरामबाह्वादिभ्यामिति नृसिंह-इप्राप्ते तन्निरासार्थः । कतिचिद्भ्यः प्रत्यान्तरे प्राप्ते तद्बाधनार्थश्चायं गणः । अत्र पाठात् ताक्ष्णः कुर्वादित्वात्तु ताक्षण्यः । अत्र पाठात् गाङ्गः शुभ्रादित्वात्तु गाङ्गेयः तिकादित्वात् गाङ्गायनिश्च । अत्र पाठात् वैपाशः लड़ादित्वाद्वैपाशायनः । ऋषिभ्य इति प्रत्ययं दर्श्यत इति शेषः । वशिष्ठस्यापत्यं पुमान् वाशिष्ठः, एवं वैश्वामित्रश्च्यावनप्रभृतयः । अन्धकेभ्य इति प्रत्यय उदाह्रियते—श्वफल्कस्यापत्यं पुमान् श्वाफल्क एवमौग्रसेन इत्यादिः । वृष्णिभ्य इति पूर्ववत् । वसुदेवस्यापत्यं पुमान् वासुदेवः, एवं वैष्वक्सेन इत्यादिः । कुरुभ्य इत्यपि पूर्ववत् । नकुलस्यापत्यं पुमान् नाकुलः, एवं भैमसेन इत्यादिः । अयमपि योगोऽरामान्तत्वात् प्राप्तनृसिंहेरामबाधनार्थः । ननु यद्येवं तर्हि कृष्णस्यापत्यं पुमानित्यादिवाक्ये कार्ष्णिरित्यादित्रयं कथं सिध्यतीत्यत्र सिद्धान्तमाह—बाह्वादिपाठादिति बाह्वादिगणपठितत्वादित्यर्थः । अनादीति तत्रानादिवृष्णीन्द्रनदीतः प्रथमं दर्श्ययति—यामुन इति यमुनाया अपत्यं पुमानिति । एवमैरावत इरावत्या अपत्यं पुमानिति । मानुषीत इति मानुषीतः प्रत्यये रूपं यथा—गौतमस्यापत्यं पुमान् गौतमः, रोहिण्या अपत्यं पुमान् रौहिण इति । व्यावर्तयति—अनादीति । कौशिकाया अपत्यं पुमानिति

२३२९। कन्यायाः केशव-णः, कनीनादेशश्च।

कानीनो व्यासादिः॥ २३२९॥

२३३०। संख्यादिपूर्वाया मातुः केशव-णः, उरादेशश्च।

द्वैमातुरः वलदेवः। षाण्मातुरः, सांमातुरः, भाद्रमातुरः॥२३३०॥

२३३१। लक्ष्मीशुभ्रादिभ्यां माधव-ढो बहुलम्।

रौहिणेयः, सौपर्णेयः॥ २३३१॥

---

कौशिकेयः। कौशल्याया अपत्यं पुमान् कौशल्येयः। एवं चान्द्रभागेयः, वासवदत्तेयः। अत्र 'लक्ष्मीशुभ्रादिभ्यामि'त्यनेन माधव-ढः॥

२३२९। कन्या। तस्यापत्यमित्यर्थे कन्याया उत्तरः केशवणस्तस्मिन् सति कनीनादेशश्च भवति। कन्याया अपत्यं पुमान् कानीनः व्यासादिः प्रसिद्धः॥

२३३०। सङ्ख्या। सङ्ख्यादिः पूर्वो यस्यास्तस्याः तस्यापत्यमित्यर्थे सङ्ख्यादिपूर्वाया मातुरुत्तरः केशव-णस्तस्मिन्मातुर्ऋंरामस्योरादेशश्च भवति। उरादेशश्चेत्यत्र उरादेशश्चेति क्वचित् पुस्तके दृश्यते। द्वयोर्मात्रोरपत्यं पुमानिति तद्धितार्थे त्रिरामी द्वैमातुर इति। एवं षण्णां मातॄणामपत्यं पुमानिति षान्मातुरः कार्तिकेयः। संमातुरपत्यं पुमानिति पूर्वं प्रादिसमासस्ततः केशवणः सांमातुर इति। भद्रमातुरपत्यं पुमानिति पूर्वश्यामरामसिद्धात् केशवणः भाद्रमातुरः॥

२३३१। लक्ष्मी। तस्यापत्यमित्यर्थे लक्ष्म्याः शुभ्रादेश्च बहुलं यथा स्यात्तथा माधवढो भवति। रोहिण्या अपत्यं पुमान् रोहिणेयः बुधः। सुपर्णाया अपत्यं पुमान् सौपर्णेयः गरुड़ः। एवं शलाका, शाला, कुमारिका, कुवेरिका, गन्धपिङ्गला, खरोन्मत्ता, विधवा, विकसा, रुक्मिणी, गङ्गा, गोधा, किशोरिका, अनवीत्यादयः यथासम्भवम्॥

## २३३२। वड़वाया वृषे।

वाड़वेयो वृषः॥ २३३२॥

## २३३३। बाहुल्यात् क्वचित् मानुषीनाम्नीतश्च।

रौहिणेयो रामः। क्रौञ्चः, कोकिलः। शुभ्रादेः खल्वपि—शुभ्रस्यापत्यं शौभ्रेयः, आत्रेयः, कौन्तेयः, वार्ष्णेयः। 'उद्वयस्य हरः' ( २११७ )—मार्कण्डेयः॥ २३३३॥

---

२३३२। वड़। तस्यापत्यमित्यर्थे वृषे वाच्ये वड़वाशब्दादुत्तरो माधवढः स्यात्। वड़वाया लक्ष्मीत्वात् माधवढो भवत्येव वृषवाच्यार्थमिदम्। वड़वाया अपत्यं पुमान् वाड़वेयः वृषः। वृषादन्यत्रापत्ये तु वाड़व इति भवति। अपत्ये विहितस्तद्धितोऽपकृष्टशुक्ले विधीयते, तेनापत्ये वाड़व इत्यन्ये। यद्यपि सूत्रे बहुलमिति सामान्येन कृतं, तथापि लक्ष्म्या एव तत्प्राप्तिरिति सूचयति॥

२३३३। बाहुल्यात्। यद्यप्यनादिवृष्णीन्द्रेभ्य इत्यनेन केशवणो विहितस्तथापि बाहुल्याद्धेतोर्मानुषीनाम्नीतश्च कृचिन्माधवढो भवति। तेन रौहिणेयो राम इत्यपि भवति। क्रुञ्चा वकी तस्या अपत्यं पुमान् क्रौञ्चः। कोकिलाया अपत्यं पुमान् कोकिल इत्यत्र तु लक्ष्मीत्वेऽपि माधवढो न भवति। किञ्च, शिवाद्यन्तर्गणात् केशवण एव बहुलक्षणे कृचिदन्यदेवेत्युक्तत्वात्। शुभ्रादौ बहुलं न प्रवर्तत इति स्वाभिप्रेतं स्पष्टयति–शुभ्रादेरिति। खल्वपीत्यवधारणद्वयमतिशयनिश्चयार्थम्। शुभ्रः कश्चित् तस्यापत्यं पुमान् शौभ्रेयः। एवमत्रेरपत्यं पुमान् कुन्तेरपत्यं पुमान् वृष्णेरपत्यं पुमानिति क्रमादात्रेयादित्रयम्। मृकण्डोरपत्यं पुमानिति उद्वयस्य हरो ढरामे न तु कद्रुपाण्डोरित्युरामहरः। कामण्डलेयः। शुभ्रादेराकृतिगणत्वादन्येऽपि सन्तीति यथासम्भवमेतेऽन्ये च दर्श्यन्ते। शुभ्र अत्रि कुन्ति वृष्णि मृकण्डु कमण्डलु विष्णुपुर ब्रह्मकृत शतद्वार शताहार खलु अजवस्ति विश्वक्रन्धि विमातृ दिश शालूक शाकम्बि कृकलास प्रवाहण भरत

२३३४। ऊङन्तात्।

कामण्डलेयः ॥ २३३४ ॥

२३३५। दित्यदिती वा, भ्रुवो भ्रुव् च।

दैतेयो दैत्यः, आदितेयः आदित्यः। भ्रौवेयः। गङ्गाया गाङ्गेयो, गाङ्गो, गाङ्गायनिः। शुभ्रादिपाठेन माधवत्वात् गाङ्गेयी ॥ २३३५ ॥

---

भारत मयूर कर्पूर अन्यतर आनीच सुदन्त सुदक्ष सुनामन् कद्रु पाण्डु तुद आकाशायन जिह्मासिन् परिधि वायुदत्त शकल शरल खडूर अशोक अन्तदृष्टिन् हरितिन् वलिर्वधिन् विश्वचित् वीज अश्व अश्विन् श्वन् अजिरित्यादिः। येऽरामान्तास्तेभ्योऽरामबाह्वादिभ्यामित्यनेनारामान्तत्वान्नृसिंहेरामे प्राप्ते शेषेभ्यो विधानान्तराभावात् केशवणे प्राप्तेऽत्रायं गणो गृहीतः ॥

२३३४। ऊङ। तस्यापत्यमित्यर्थे ऊङन्तान्नाम्नः उत्तरो माधवढो भवति। ऊङन्तस्य लक्ष्मीत्वात् पूर्वेण माधवढे प्राप्तेऽपि स्पष्टतार्थमिदं वचनम्। गणस्था ये वामनोरामास्ते यद्युङन्तास्तदा तेषां ग्रहणार्थञ्च। अतएव गणे ये मृकण्ड्वादयस्तेषामन्येषाञ्चात्र ग्रहणम्। कमण्डल्वा अपत्यं पुमान् कामण्डलेयः। एवं शैतिवाहेय, जाम्बेय, शालाकाभ्रेय, लैखाभ्रेयादिः ॥

२३३५। दित्य। तस्यापत्यमित्यर्थे दित्यदिती शुभ्रादी वा भवतः। भ्रुवो। तस्यापत्यमित्यर्थे भ्रुवो माधवो ढो भवति तस्य भ्रुवादेशश्च। भ्रमु सञ्चलने औणादिक ऊङ् अन्त्यलोपश्चेत्यन्ये। अतएव ऊङन्तत्वान्माधवढे प्राप्तेऽपि भ्रुवादेशार्थं वचनम्। अन्यथा उद्वयस्येति उरामहरः स्यात्। दित्या अपत्यं पुमान् दैतेयः, 'पक्षे दित्यदित्यादित्ययमेभ्यः' इत्यनेन ण्यरामः दैत्यः। एवं आदितेयादिद्वयम्। भ्रुवोऽपत्यं पुमान् भ्रौवेय इति। अत्रोवादेशे कृते पश्चाद्वृष्णीन्द्रः। गङ्गाया इति अपत्यं पुमानिति शेषः। गाङ्गेय इति लक्ष्मीत्वात्, गाङ्ग इति

२३३६। इरामान्ताद्द्विसर्वेश्वरान्माधव-ढः, एन्नॄ-सिंहात्तु न।

विधेरपत्यं वैधेयः। एन्नॄसिंहात्तु—कार्ष्णायनो वक्ष्यते (२३६७) ॥ २३३६ ॥

२३३७। कल्याण्यादेर्माधवेनेयः।

काल्याणिनेयः। 'हृद्भगसिन्ध्वन्तानाम्' (२०८३) इत्युभयपदवृद्धिः—सौभागिनेयः, दौर्भागिनेयः। एवं बन्धकी-रजकी-ज्येष्ठा-मध्यमा-कनिष्ठाभ्यश्च ॥ २३३७ ॥

---

शिवादित्वात्, गाङ्गायनिरिति तिकादित्वात्। केशवत्वाल्लक्ष्म्यामीप्स्यादित्याह—शुभ्रादीति। माधवत्वादित्यनेनैव केशवत्वादिति सूचितं, टणिन्माधव इत्युक्तत्वात् ॥

२३३६। इरा। तस्यापत्यमित्यर्थे द्विसर्वेश्वरादिरामान्तान्माधव-ढो भवति। एन्नॄ। तस्यापत्यमित्यर्थे नृसिंहात् एः इरामात्तु माधव-ढो न भवति। विधिर्ब्रह्मा तस्यापत्यं पुमान् वैधेय इति। एवं नैधेयः कापेय इत्यादिः। एन्नॄसिंहात्तु रूपं दर्श्यते—कार्ष्णायन इति कृष्णस्यापत्यं पुमान् कार्ष्णिस्तस्यापत्यं पुमानिति 'इयाभ्यामि'त्यनेन फरामो वक्ष्यते इत्यतो वक्ष्यते इत्युक्तम्। न तु कार्ष्णायनपदं वक्ष्यते इति ज्ञेयम् ॥

२३३७। कल्या। तस्यापत्यमित्यर्थे कल्याण्यादेरुत्तरो माधवरूप इनेयः स्यात्। लक्ष्मीत्वात् माधव-ढरामे प्राप्ते तद्बाधनार्थमिदम्। काल्याणिनेय इति कल्याण्या अपत्यं पुमानिति 'अ-इद्वयस्येति ईरामहरः', आदिसर्वेश्वरस्येति वृष्णीन्द्रः। उभयपदवृष्णीन्द्रसूत्रं सूचयति-हृद्भगेति। सौभागिनेय इति सुभगाया अपत्यं पुमानिति, तथा दौर्भागिनेयः। आदिपदग्रहणफलमुक्त्वा पुनरप्यतिदिशति—एवमिति। एवमुक्तेन बन्धक्यादिन्यश्च माधवेनेयो भवति। बन्धक्या अपत्यं पुमानित्यादौ वाक्ये बान्धकिनेयः, राजकिनेयः, ज्यैष्ठिनेयः, माध्यमिनेयः, कानिष्ठिनेयः ॥

२३३८। परस्त्रियाः पारस्त्रैणेय-पारशवौ।

माधवेनेय-केशवणाभ्यां साधू॥ २३३८॥

२३३९। चटकादेरण् लक्ष्म्यान्तु महाहरः।

'नाम्नो ग्रहणे लिङ्गविशिष्टग्रहणात्' चटकाया अपि चाटकेरः, चटका॥ २३३९॥

२३४०। गोधाया गौधार-गौधेर-गौधेयाः।

---

२३३८। पर। अस्यापत्यमित्यर्थे परस्त्रियाः स्थाने पारस्त्रैणेय-पारशवौ साधू भवतः। स्वयं वृत्तिमाह—माधवैनेय इति। परस्त्रिया अपत्यं पुमानिति विग्रहे निपातसामर्थ्यात् परस्त्रीशब्दान्माधवैनेयो भवति। एवं केशवणश्च केशवणे परे परस्त्रियः परशुरादेशः पश्चादादिसर्वेश्वरस्येति वृष्णीन्द्रः। अ-इद्वयस्येतीरामहरः। परश्वादेशपक्षे उद्वयस्येति गोविन्दः। किञ्चात्र परस्त्रीशब्दो यौगिको रूढ़श्च। तत्र यौगिकपक्षे परेणोढ़ा स्त्री परस्त्री अस्या अपत्ये पारस्त्रैणेयः। रूढ़िपक्षे तु परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या। अतो ब्राह्मणोढ़ायाः शूद्राया अपत्ये पारशव इति।

२३३९। चट। तस्यापत्यमित्यर्थे चटकात् एरण् स्यात्, लक्ष्म्यान्तु वाच्यायामेव णो महाहरश्च। ननु चटकस्यापत्यं पुमानिति चाठकेरो भवतु, कथं चटकायाश्चाटकेर इत्यत्र निर्वक्तिनामविशिष्टग्रहणादिति। विशिष्टपदेनात्र लिङ्गविशिष्ट आक्षिप्यते। तथाच विशिष्टस्य ग्रहणं विशिष्टग्रहणं नाम्ना विशिष्टग्रहणं नामविशिष्टग्रहणं तस्मात्। तथाहि, नाम्ना लिङ्गविशिष्टस्य ग्रहणात् चटकाया अपि चाटकेरः स्यात्। नाम्नो ग्रहणे लिङ्गविशिष्टग्रहणादिति पाठश्चेत्तदा सुगमः। लक्ष्म्यान्त्विति यदुक्तं तदुदाहरणं चटकेति। अत्रापि चटकस्य चटकाया वापत्यं स्त्रीति योज्यं, किन्तु चटकप्रकृतिपक्षे कृष्णादावित्याप्॥

२३४०। गोधा। गोधाया अपत्यं पुमानित्याद्यर्थे आरणे-

साधवः । स्त्रियां माधवत्वात् गौधेयी ॥ २३४० ॥

२३४१ । क्षुद्राभ्यो वा ।

अङ्गहीना अनियतपुंस्काश्च क्षुद्राः । काणेयः, काणेरः; दासेयः, दासेरः । कुलटा—पुंश्चली, भिक्षुकी च; कौलटेयः, कौलटेरः । भिक्षुक्याः सतीत्वे तु कुलटाया माधवेनेयो वा—कौलटिनेय, कौलटेयः ॥ २३४१ ॥

२३४२ । स्वसुश्छरामः ।

स्वस्रीयः ॥ २३४२ ॥

---

रणमाधवढैर्यथासङ्ख्यं गौधारगौधेरगौधेयाः साधवो भवन्ति । स्त्रियां वाच्यायां सत्यां माधवत्वात् गौधेयीत्यपि ॥

२३४१ । क्षुद्रा । तस्यापत्यमित्यर्थे क्षुद्राभ्य एरण् वा स्यात् । पक्षे 'लक्ष्मीशुभ्रादिभ्यामित्य'नेन लक्ष्मीत्वान्माधवढः । ननु क्षुद्राः का इत्यपेक्षायां क्षुद्रापरिचायकलक्षणमाह–अङ्गेति । अङ्गहीनाः क्षुद्राः स्युरनियतपुंस्काश्च क्षुद्राः स्युः । अत्राङ्गहीनाया यथा काणाया अपत्यं पुमान् काणेयः काणेरश्च । अनियतपुंस्काया यथा–दास्या अपत्यं पुमान् दासेयादिद्वयम् । तत्र सूत्रे यौगिकक्षुद्राया अपि ग्रहणमिति निगमयति–कुलटेति । कुलटा पुंश्चली भिक्षुकी च भवति । भिक्षुकीत्वे असती सती च भवति । यदा भिक्षुक्यसती तदा पुंश्चलीसमानार्था । अतएवानयोः समानार्था कुलटा दुराचारत्वात् क्षुद्रा । अन्यैरुक्तञ्च । दुःशीलवाचिका क्षुद्रा । इत्यतः कुलटायाः अपत्यं पुमान् कौलटेयः कौलटेरश्च । भिक्षुक्याः सतीत्वे तु सतीभिक्षुक्यर्थकुलटाया दुराचारस्वाभावेन क्षुद्रत्वाभावाल्लक्षणमपेक्ष्यते इति सूत्रं करोति कुलटेति । तस्यापत्यमित्यर्थे कुलटाया माधवेनेयो वा भवति । पक्षेऽत्रापि लक्ष्मीत्वान्माधवढः । कौलटिनेय इतिद्वये वाक्यं पूर्ववत् ॥

२३४२ । स्वसुः । तस्यापत्यमित्यर्थे स्वसृशब्दात् छरामः स्यात्, छ ईयः । स्वस्रीय इति स्वसुरपत्यं पुमानित्यर्थः ॥

२३४३। भ्रात्रीयो भ्रातृजे, भ्रातृव्यस्तु शत्रौ च।

साधू ॥ २३४३ ॥

२३४४। पितृमातृपूर्वायाः स्वसुः पैतृस्वस्रीय-पैतृष्वसेयादयः।

साधवः। माधवत्वात् पैतृष्वसेयी ॥ २३४४ ॥

२३४५। श्वशुराद्यरामः।

श्वशुर्यः ॥ २३४५ ॥

२३४६। रेवत्यादेर्माधव-ठः।

अयमेव टिकण्णित्युक्तः; रैवतिकः ॥ २३४६ ॥

---

२३४३। भ्रातृ। तस्यापत्यमित्यर्थे भ्रातृजे वाच्ये छप्रत्ययेन सह भ्रातुर्भ्रात्रीयः साधुः। पुनः शत्रौ भ्रातृजे च वाच्ये यप्रत्ययेन सह भ्रातुर्भ्रातृव्यः साधुः। यप्रत्ययो वरामागमश्चात्र निपातफलम् ॥

२३४४। पितृ। तस्यापत्यमित्यर्थे पितृमातृपूर्वायाः स्वसुर्नृसिंह-छमाधवढाभ्यां सह पैतृष्वस्रीयपैतृष्वसेयादयः साधवो भवन्ति। निपात-वलात् ढपक्षेऽत्र स्वसुः ऋरामहरश्च। लक्ष्मीत्वे वाच्ये ईप् भवतीत्याह—माधवत्वादिति। पितृष्वसुरपत्यं स्त्री पैतृष्वसेयीति। एवं मातृष्वस्रीयः मातृष्वसेयः मातृष्वसेयीति च ॥

२३४५। श्वशु। तस्यापत्यमित्यर्थे शब्दादुत्तरो यो भवति। श्वशुरस्यापत्यं पुमानिति अ-इद्वयस्येत्यरामहरः श्वशुर्य इति ॥

२३४६। रेव। तस्यापत्यमित्यर्थे रेवत्यादेरुत्तरो माधवठो भवति। पूर्वोक्तं स्मारयति—अयमिति। रैवतिक इति रेवत्या अपत्यं पुमानिति वाक्ये। सूत्रस्थादिशब्दात् अश्वपाल, द्वारपाल, मणिपाल, वृकवञ्चिन्, ब्रह्मग्राह, कण्ठग्राह, चण्डग्राह, कुक्कुटाक्ष इत्यष्टानां ग्रहणम्। अश्व-पाली, द्वारपाली, मणिपालीति त्रयं स्त्रीलिङ्गमिति तु जयादित्यः।

२३४७। कुर्वादिभ्यो ण्यरामः।

कुरुरयं मुनिवचनः। कौरव्यः कौरव्या। पितुरपत्यं पैत्र्यः॥ २३४७॥

---

'रेवत्यादौ द्वारपालशब्दः पठ्यते' इति भाष्यवचनं दृष्ट्वा 'द्वारपालादीनाञ्च' इति न्यासः। रेवतीशब्दात् यद्यश्वपालादित्रयाणाञ्च लक्ष्मीत्वं तदा तेभ्योऽपि 'लक्ष्मीशुभ्रादिभ्यामि'त्यनेन लक्ष्मीत्वात् माधवढे प्राप्ते एतत्त्रयाणां लक्ष्मीत्वं न चेत्तदा एभ्यः शेषेभ्यश्च 'अरामबाह्वादिभ्यामि'त्यनेनारामान्तत्वादिरामनृसिंहे प्राप्ते वृकवञ्चिचन्-शब्दात्तु विधानान्तराभावात् केशवणे प्राप्ते इदं विधानम्॥

२३४७। कुर्वा। तस्यापत्यमित्यर्थे कुर्वादिभ्य उत्तरो ण्यरामो भवति। ननु 'ऋष्यन्धके'त्यनेन कुरुशब्दादस्मिन्नर्थे केशवणो विहितः पुनरत्र कुरुशब्दः कथमुपादीयते इत्यत्र समादधाति—कुरुरिति। अयं कुरुशब्दो मुनिवचन इत्यर्थः। अनेन सतु क्षत्रियवचन इति सूचितम्। कुरोरपत्यं पुमानिति 'उद्धयस्य गोविन्दो न चे'त्यनेन गोविन्दः। 'ओद्धयस्यावावावि'त्यनेनाव् कौरव्यः। कुरोरपत्यं स्त्रीति कौरव्या। पितुरिति वाक्यं दर्शितम्। किन्त्वत्रापि पुमानिति योज्यम्। 'ऋरामस्य रो ये' इति रः पैत्र्य इति। कुर्वादिर्यथा—कुरु, पितृ गर्द्धभ, शकल, तक्षन्, मङ्गूष, अविरामक, रथकार, चपाट्टक, कवि, मति, मति, वाच्, पितृमत्, इन्द्रजालि, धान्वजि, दास, उष्णीष, गणिका, कैशोरि, कापिञ्जलादि, कुट, शलाका, सुर, एरका, शुभ्र, दर्भ, भर्व्, पूर्णाय, श्यावलाय, श्यावरथ, श्यावपुत्र, सत्यङ्कार, वड़भीकार, पथिकारिन्, इन, पिण्डी, मूढ़, शकम्भू, भर्तृ इत्येकोनचत्वारिंशत्सङ्ख्यकः। अत्र नापितमपि कश्चित् पठति। उत्तरसूत्रे कारुत्वेन रथकारवड़भीकारयोर्वैकल्पिकण्यरामे प्राप्ते नित्यतार्थमत्र ग्रहणम्। जातिविशेषवाचको रथकारशब्दोऽत्र गृह्यते। शिल्पबचनात्तु कारुत्वेनैव प्राप्तेरिति कश्चित्। शकम्भुशब्दोऽत्र शके भवतीति क्विन्तः गणपाठसामर्थ्यान्मध्ये मुमागमः॥

२३४८। सेनान्त-कारु-लक्षणेभ्यो नृसिंहावियौ।

हारिषेणिः, हरिषेण्यः ; तान्त्रवायिः, तान्त्रवाय्यः ; लाक्षणिः, लाक्षण्यः ॥ २३४८ ॥

२३४९। तिकादेर्नृसिंह-फिः।

तैकायनिः, कौरव्यायनिः, चान्द्रमासायनिः ॥ २३४९ ॥

२३५०। कोशल-कर्मार-छाग-वृषेभ्यो युडागमश्च।

कौशल्यायनिः ॥ २३५० ॥

---

२३४८। सेना। तस्यापत्यमित्यर्थे सेनान्तकारुलक्षणेभ्यो नृसिंह-भूतावियौ भवतः। हरिषेणास्यपत्यं पुमानिति हारिषेणिरिति द्वयम् एवं विष्वक्सेनादिः। कारुः शिल्पी तन्त्रवायादिस्तत्र तन्त्रवायस्यापत्यं पुमानिति तान्त्रवायिरिति द्वयम्। लक्षणस्यापत्यं पुमान् लाक्षणिरिति द्वयम् ॥

२३४९। तिका। तिकादेरुक्तरस्यापत्यमित्यर्थे नृसिंह-फिर्भवति। फिस्त्वायनिरित्युक्तं तिकस्यापत्यं चान्द्रमसस्यापत्यं पुमानिति यथा-क्रमकौरव्यायणिरिति द्वयम्। तिक, कौरव्य, चान्द्रमस, कितव, संज्ञा, वाण शिखा, शाटय़, सैन्धव, यमुन्द, कुन्द, रूप्य, ग्राम्य, कुरु, देव, रथ, तैतितन, औरस, लाङ्कट, गौकक्ष्य, भौरिकि, भौलिकि, चौपयत, चैकयत, शैकयत, वैङ्कयत, क्षैतयत, ध्वाजयत, उरस्, अमित्र, गङ्गा, वरेण्या, बन्धा, अबन्धा, वज्यका, खलाका, लोमका, सुयामन, उदन्य, यज्ञेति, चत्वारिंशत् तिकादिः। जनपदसनामप्रकरणे कुर्वादेर्ण्यराम इति योऽन्यो वक्ष्यते, तदन्तः कौरव्यशब्दोऽत्र गृह्यते। कुरुशब्दस्तु केवलराजवाचक-स्तस्मात् कुरोः कौरवायणिरिति ॥

२३५०। कोशल। तस्यापत्यमित्यर्थे कोशलकर्मारछागबृषेभ्यो नृसिंहः फिस्तस्मिन्नेभ्यो युडागमश्च भवति। अत्र दगुमपि कश्चित् पठति। जनपदसनामप्रसङ्गे कुर्वादेर्ण्यराम इत्यत्र कुर्वादिगणे यः कौशलः

२३५१। पुत्रान्तादादिवृष्णीन्द्रान्नृसिंह-फिर्वा कुक् च वा।

गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः, गार्गीपुत्रिः॥ २३५१॥

२३५२। राजक्षत्राभ्यां यघरामौ जात्यां, मनोः ष्यषणौ।

राजन्यः, क्षत्रियः, मनुष्यः, मानुषः। जातौ किम्? राजनः, क्षात्रिः। मानवस्तु पुत्रे जातौ च साधुः॥ २३५२॥

---

पठ्यते। शिष्टाचारेण सह समावेशार्थः स एवात्रापि गृहीतस्तेन कोशलस्यापत्यं पुमान् कौशल्यायनिरिति, अन्यथा कौशल्य इत्येव स्यात्। भट्टिकाव्ये हि कौशल्यायनिवल्लभामिति कौशल्यायनिशब्दो रामवचनो दृश्यते च। कर्मारस्यापत्यं पुमान् कार्मार्यायनिः। एवं छग्यायणिः। वार्ष्यायणिः। क्वचिन्मते दागव्यायनिरिति॥

२३५१। पुत्रा। आदिवृष्णीन्द्रात् पुत्रान्ताच्छब्दात् नृसिंह-फिर्वा भवति, तस्मिन् कुक् च वा तस्यापत्यमित्यर्थे। गार्ग्याः पुत्रः गार्गीपुत्रस्तस्यापत्यं पुमानिति गार्गीपुत्रकायणिः कुगभावपक्षे गार्गीपुत्रायणिः। उभयाभावपक्षे अरामबाह्वादिभ्यामिति नृसिंह-इः, गार्गीपुत्रिरिति॥

२३५२। राज। जात्यां वाच्यायां राजक्षत्रशब्दाभ्यां यथासङ्ख्यं यघरामौ भवतः। मनुशब्दात्तु ष्यषणौ भवतः। यद्यपि जात्यामित्युक्तं तथाप्यपत्यरूपजातिर्बोद्धव्या। अन्यथा राज्ञोऽपत्यं राजन्य इति तद्धितकार्यं यदुक्तं तदनर्थकं स्यात्। तेन राज्ञो जात्यपत्यं पुमान् राजन्य इति। अणो येतु भावकर्मणोरेवेति नियमान्नात्र संसारहरः। क्षत्रस्य जात्यपत्यं पुमान् क्षत्रिय इति। मनोर्जात्यपत्यं पुमान् मनुष्यः मानुषश्च। जाताविति किं किमर्थम्। अन्यापत्ये तु राज्ञोऽपत्यं वैश्यः शूद्रो वेति विधानान्तराभावात् केशवणः, नान्तस्य नत्वनीपोरिति संसार-

२३५३। कुलस्य कुल्य-कौलेय-कुलीनाः।

सपूर्वत्वे यदुकुलीन इति ख एव ; महाकुलस्य माहाकुल-माहाकुलीन-महाकुलीनाः, दुष्कुलस्य दुष्कुलेय-दुष्कुलीनौ—एते साधवः। माहाकुल-दौष्कुलेययोर्लक्ष्म्यां माहाकुली, दौष्कुलेयी॥२३५३॥

२३५४। द्विसर्वेश्वरात् केशव-णान्तात् फिरामः।

हौत्रायणिः, कार्ष्णायनिः, यास्कायनिः॥ २३५४॥

---

हरनिषेधः। राजन इति। क्षत्रस्यान्यापत्यं पुमान् क्षात्रिरिति। अरामान्तत्वादत्र नृसिंह-इः। मान। पुत्रे जातौ च वाच्ये केशवणप्रत्ययेन सह मनोः स्थाने मानवस्तु साधुर्भवति॥

२३५३। कुल। विभ्वाधिकारसामर्थ्यात् तस्यापत्यमित्यनुवर्तत एव तेन तस्यापत्यमित्यर्थे कुलस्य स्थाने य-माधवढ-खप्रत्ययैः सह क्रमेण कुल्य-कौलेयकुलीनाः साधवो भवन्ति। मनोऽभिप्रेतं ग्रन्थकृत् स्वयमाह—सेति। पूर्वपदेन सह वर्तमानत्वे सति यदुकुलीन इत्यत्र खप्रत्यय एव। अत्रास्यापत्ये बहुप्रत्यय-पूर्वात् कुलात् यनृसिंह-ढकौ वक्तव्यौ। ईषदसमाप्तं कुलं बहुकुलं तस्यापत्यं पुमान् बहुकुल्यः बहुकुलेयकः। माहा। तस्यापत्यमित्यर्थे केशव-ण-नृसिंहख-केवल-खैः सह महाकुलस्य यथाक्रमं माहाकुलमाहाकुलीनमहाकुलीनाः साधवो भवन्ति। दुष्कु। तस्यापत्यमित्यर्थे माधव-ढ-खरामाभ्यां सह दुष्कुलस्य दौष्कुलेय-दुष्कुलीनौ साधू भवतः। कुलस्येत्यादिसूत्रत्रयस्य एकत्रैव वृत्तिमाह—एते इति। माहेति केशवत्वाल्लक्ष्म्यां विषये महाकुलदौष्कुलेययोः स्थाने माहाकुली दौष्कुलेयी भवतः॥

२३५४। द्विसर्वे। तस्यापत्यमित्यर्थे केशवणान्तात् द्विसर्वेश्वराद्उत्तरः फिर्भवति। होतुरपत्यं पुमानिति केशव-णः हौत्रस्तस्यापत्यं पुमानिति फिः आयनिः हौत्रायणि एवं कार्त्रायणिः। तद्धित-बाहुल्यात कृद्विदुःसर्गोऽभिनिविशते, तेन यद्यप्यपत्यार्थे बाह्वादित्वात्

२३५५। गोत्रे।

प्रभुरयम्। पौत्रप्रभृत्यपत्यम् गोत्रम् ॥ २३५५ ॥

२३५६। विदादेः केशव-णः।

वैदः, और्वः। एवं कश्यप-कुशिक-भरद्वाजादिभ्यः। अनन्तरापत्ये तु वैदिः ॥ २३५६ ॥

---

कार्ष्णिरित्येव भवितुमर्हति, तथापि ऋष्यन्धकेत्यनेन वृष्णिवंशश्यत्वादपत्यार्थे कार्ष्ण इति च। ततः कार्ष्णस्यापत्यं पुमान् कार्ष्णायनिरिति। तस्यापत्यमिति शिवादित्वात् केशव-णः यास्कस्तस्यापत्यं पुमान् यास्कायनिरिति। केशवणान्तस्यारामान्तत्वादपत्यार्थे इरामनृसिंहे प्राप्ते विधानम्। अत्रापत्यस्यापत्यकथनेन गोत्रमुल्लिखितं तेनाव्यवहितं गोत्रमधिकरोति ॥

२३५५। गोत्रे। गोत्रापत्ये वाच्ये नाम्नो यथास्वं प्रत्ययाः स्युः। प्रभुनामायमधिकार एकाधिकारव्यापित्वात्। गोत्रलक्षणं दर्शयति—पौत्रेति। पौत्राद्यपत्यं गोत्रं स्यात् ॥

२३५६। विदा। गोत्रापत्ये वाच्ये विदादेरुत्तरः केशवणो भवति। वैद इति विदस्य गोत्रापत्यं पुमानित्यर्थे विदस्य पौत्रप्रभृत्यपत्यं पुमानित्यर्थे वा। एवमुत्तरत्रापि। और्व इति उर्वस्य गोत्रापत्यं पुमानिति वाक्ये। विदादेरित्यत्रादिग्रहणफलं वक्ति एवमिति। कश्यप-कुशिक-भरद्वाजादिभ्य इत्यत्रादिपदगृहीतगणो यथा—किलात, किन्दर्भ, विश्वानर, ऋष्टिषेण, ऋतभाग, हर्यश्व, प्रियक, अयस्तम्भ, अपस्तम्भ, कुठ, वार, शरद्वत्, शुलक, धेनु, गोपवन, शिन्ध, विन्दु, भामज, अश्व, अवभार, अवस्तार, श्यामाक, हरित, श्यापर्ण, किन्दास, वयक्ष, अकन्धु, वध्योग, विष्व, वृद्ध, प्रतिरोध, रथीतर, रथन्तर, गविष्ठिर, मठर, निषाद, सृदाकु, पृदाकु, पूर्णभू, पुत्रः, दुहितृ, ननन्दृ इति द्वाचत्वारिंशच्च। अत्र ऋषिभ्यः पौत्रादौ अनृषिभ्यस्त्वनन्तरापत्य एवेत्यन्ये। स्वमतेऽत्र प्रकारान्तरमाह—अनन्तरेति। अनन्त-

२३५७। गर्गादेर्माधव-यरामः।

गार्ग्यः, वात्स्यः। एवं व्याघ्रपादगस्त्य-मुद्गल-पराशर-जमदग्न्यादिभ्यः। कथं रामो जामदग्न्यः, व्यासः पाराशर्यः? गोत्ररक्षकत्वेनोपचारात्। अन्यथा जामदग्न्यः, पाराशर इत्येव ॥२३५७॥

२३५८। नडादेर्माधव-फः।

---

रापत्ये तु केवलापत्ये तु वैदिरित्यादि स्यात्। अत्रारामाबाह्वादिभ्यामित्यनेन नृसिंह-इरिति भावः ॥

२३५७। गर्गा। गोत्रापत्ये वाच्ये गर्गादेः परो माधव-यरामो भवति। गर्गस्य गोत्रापत्यं पुमान् गार्ग्य इति। वत्सस्य गोत्रापत्यं पुमान् वात्स्य इति। व्याघ्रपादादिपञ्च च गर्गादिर्भवतीत्याह—एवमिति। जमदग्न्यादिभ्य इत्यादिपदसंगृहीतगणो यथा—आकृति, संस्कृति, ओज, वेदभू, वीरा, योग, पुलस्ति, विलस्ति, रेभ, अग्निवेश, शङ्ख, शट, अवट, धूम, वर्मिन्, घनञ्जय, तृक्ष, वृश्वावसु, जरमाण, लीहित, संशित, वभ्रु, मण्डु, मक्षु, मन्तु, बोध, शम्भु, नतु, गुहन, जिगीषु, इन्द्र, तन्तु, मनायी, मनु, कथक, तक्ष, तण्ड, वतण्ड, कपि, कत, कुरुकत, शकल, देवहु, इन्द्रहु, कण्व, गोकक्ष, कुण्डिली, अनड्वाह, यज्ञवल्क, पर्णवल्क, जाति, विषोहित, वृषगण, रहोगण, शण्डिल, मुषल, जतूकर्ण, मन्त्रित, अश्वरथ, शर्कराक्ष, पूतिमास, स्थूरा, अवरक, पिङ्गल, कृष्ण, गोनन्द, उलूक, तितिक्ष, तिषज, तिष्णुज, भण्डिल, कुम्भ, चिकत, एकनू, पिप्नु, वृहदग्नि, सुलोभिल, कोटि इत्येकोनाशीतिसंख्यकः। ननु यद्येवं तर्हि केवलापत्ये रामो जामदग्न्यः व्यासः पाराशर्य इति द्वयं कथं स्यादित्याक्षेपे सिद्धान्तमाह—गोत्रेति। गोत्ररक्षकत्वरूपेणोपचाराद्धेतोरत्र द्वये गोत्रापत्यसिद्धत्वात्। गर्गादेर्यरामान्तत्वेन जामदग्न्यादिद्वयं सिद्धमेवेति नासमञ्जसम्। अन्यथेति गोत्ररक्षकत्वरूपेणोपचारत्वाभावेऽपत्यविहितकेशवणान्तत्वेन जामदग्नः पाराशर इत्येव स्यात् ॥

२३५८। नड़ा। गोत्रापत्ये वाच्ये नरादेरुत्तरो माधव-फः

नाड़ायनः, द्वैपायनः, ब्राह्मणायनः ॥ २३५८ ॥

२३५९ । अमुष्येत्यस्य षष्ठ्यलुक् च ।

आमुष्यायणः—प्रशस्तकुलजन्मा ॥ २३५९ ॥

२३६० । कुञ्जादेर्माधवायन्यो, बहुत्वे तु माधवायनः ।

---

स्यात् । फ आयनः । नड़स्य गोत्रापत्यं पुमान् नाड़ायन इति । द्विपस्येत्यादि द्वैपायनो व्यास इति—ब्राह्मणस्येत्यादि ब्राह्मणायन इत्यादि । नड़ादिर्यथा । नड़, द्वीप, ब्राह्मण, अश्व, अश्मन्, शङ्ख, विद, पुट, रोहिण, खरूप, खर्जुर, भड़िल, भड़ल, भण्डिल, भड़ित, प्रहृत, वामोद, क्षत्र, अनुग्रीव, काश, काण, कोशल, गोलाक्ष, अर्क, श्वन्, वल, पद, चक्र, कुल, श्रविष्ठा, धरित्रीन्, गोमिन्, शगम्, धूम, धूम्र, वाग्मिन्, विश्वानर, कट, जल, खड़, ग्रीष्म, वीक्ष, अर्ह, विशस्व, विशाल, गिरि, चपल, चुप, दासक, वैण्य, व्याप्य, आनडुह्य, अर्जुन, शूद्रक, सुमनस्, औजस्, हंस, आतप, किर, खिव, खादिर, चर, मुञ्ज, इड़िक, इतिश, उपक, नमक, सप्तन्, वाजव्यतिक, प्राण, नर, सायक, दास, मित्र, पिङ्गल, पिञ्जर, किङ्कर, कातर, काखन, काश्य, काव्य, अज, अमित्र, निगु, चित्र, कुमार, लोह, दुर्ग, स्तम्भ, शिंशपा, अग्र, तृण, शकट, शलभ, मिमत, ऋच्, जन, इन्ध, जलन्धर, युगन्धर, हंसक, दण्डिन्, हस्तिन्, पञ्चन्, चमस, सुहृत्, स्थिरक, चरक, वदर, अश्वल, खरप, कामुक, ब्रह्मदत्त, उडुम्बर, शोण, अलोह, मण्डप, इति सप्तदशाधिकशतसंख्यकः ॥

२३५९ । अमु । गोत्रापत्ये वाच्येऽदसोऽमुष्येत्यस्य सम्बन्धे माधवफो भवति, तादृशि फे षष्ठ्या अलुक् च भवति । अमुष्य गोत्रापत्यं पुमान् आमुष्यायण इति संज्ञां विनापि सहसा प्रतीतेः प्रशस्तेत्युक्तम् ॥

२३६० । कुञ्जा । पौत्रप्रभृत्यपत्ये वाच्ये कुञ्जादेरुत्तरो माध-

कौञ्जायन्यः, कौञ्जायन्यौ, कौञ्जायनाः। लक्ष्म्याम्—कौञ्जायनी ॥ २३६० ॥

२३६१। शारद्वतायनादयो भार्गवादिषु।

साधवः ॥ २३६१ ॥

२३६२। द्रोणादेर्माधव-फो वा।

द्रौणायनः, द्रौणिः ॥ २३६२ ॥

२३६३। मूलप्रकृतेरेव गोत्रप्रत्ययः।

---

वायन्यो भवति। बहुत्वे विषये तु माधवायनः। बहुत्व इति पश्चान्निर्देशात् पूर्वत्रैकत्वद्वित्वयोरिति लभ्यते। कुञ्जस्य गोत्रापत्य पुमान् पुमांसौ पुमांस इति क्रमेण कौञ्जायन्य इत्यादित्रयम्। माधवायन्यायनौ क्वचित् पुस्तके मूर्धन्यौ क्वचित्तु दन्त्याविति न निश्चिन्मः। लक्ष्म्यां कौञ्जायनीतीप् माधवत्वेनैव केशवत्वासिद्धेः विष्णुजनात्तद्धितेति यहरः। कुञ्जादयश्चतुर्दश यथा–कुञ्ज ब्रध्न शङ्ख भस्मन् रोमन् गण शठ शोक शुण्डा शुभ्र विपाश स्कुन्द हनुस्तम्भ स्कम्भेति ॥

२३६१। शार। गोत्रापत्यार्थे विषये माधव-फेन सार्धं शरद्वतादीनां शारद्वतायनादयः साधवो भवन्ति भार्गवादिषु वाच्येषु। शरद्वतो गोत्रापत्यं पुमान् शारद्वतायनः भार्गवः। एवं शौनकायनः वात्स्यः। दाभ्रायणः आग्रायण इति। अत्र क्रौष्टायनः शालङ्कायनश्चेति जुमरः ॥

२३६२। द्रौण। गोत्रापत्ये वाच्ये द्रोणादेः परो माधवफो वा भवति। वाशब्दोपादानात् पक्षेऽरामबाह्वादिभ्यामित्यनेन नृसिंह-इः। द्रोणस्य गोत्रापत्यं पुमान् द्रौणायनः द्रौणिः। आदिपदात् पार्वतायणः पार्वतिः जैवन्तायनः जैवन्तिरिति। पौत्रोपचारात् द्रौणायनोऽश्वत्थामेत्यपि ॥

२३६३। मूल। मूलप्रकृतेरुत्तर एव गोत्रापत्ययो भवति गोत्रापत्ये वाच्ये। अनियमे नियमकारित्वादियं परिभाषा। विशेषसामा-

परिभाषेयम्। यत्र तु विशेषविधानं नास्ति, तत्र सामान्यमेव। ततो मधुशब्दादेव प्रत्ययात् मधोर्माधवस्य वा पौत्रादिः सर्व एव माधवः। दक्षस्य दाक्षेर्वा दाक्षिः। विशेषे तु विशेष एव--वैदः, गार्ग्यः॥ २३६३॥

उक्तं गोत्रम्।

२३६४। पित्रादौ जीवति पौत्रादेरपत्यं युवसंज्ञं, ज्येष्ठभ्रातरि जीवति कनिष्ठश्च, अन्यस्मिन् सपिण्ड-ज्येष्ठे तु वा।

यदि जीवन् स्यात्॥ २३६४॥

---

न्याभ्यां विधिवाक्यमवतारयति-यत्रेति। तत उक्ताद्धेतोर्मधुशब्दादेव प्रत्ययात् रूपं दर्श्यते इति शेषः। मधोरित्यादिवाक्ये सर्व एव माधव इति। एवं दक्षस्येत्यत्र च दाक्षिरिति 'अरामवाह्वादी'त्यनेन नृसिंहेरामान्तम्। विशेषे त्विति विशेषविधानप्राप्ते तु विशेषप्रत्यय एव स्यात्। विदस्येत्यादिवाक्ये विदादेः केशव-णः वैद इति। एवं गार्ग्य इति गर्गादेर्माधव-यरानः। तथा स्त्रैणः पौंस्न इत्यादि। गोत्राधिकारं समापयति-गोत्रमिति॥

२३६४। पित्रा। पित्रादौ जीवति सति पौत्रादेरपत्यं यत्तद्-युवसंज्ञं स्यात्। पित्रादावित्यादिपदेन पितामहादेर्ग्रहणं सूचितम्। ज्येष्ठ। ज्येष्ठे भ्रातरि जीवति सति कनिष्ठश्च युवसंज्ञो भवति। अन्य। समानं पिण्डं यस्य स सपिण्डः स चासौ ज्येष्ठश्चेति सपिण्ड-ज्येष्ठस्तस्मिन्। सप्तपुरुषावधिः सपिण्ड इत्यन्ये। पित्रादौ मृतेऽपि भ्रातुरन्यस्मिन् सपिण्डज्येष्ठे तु जीवति सति यदि पौत्रादिर्जीवन् स्यात्तदा स युवसञ्ज्ञो वा स्यात्। अनेन पितृव्ये पितामह-भ्रातरि प्रपितामहभ्रातरि वा अत्यन्तवृद्धे जीवति सति प्रपौत्रादिर्जीवन् सन् युवसं[illegible]ो वेति सूचितम्। सूत्रेणैवार्थसिद्धिस्तु यथा स्यात् क्रियते तथा। इत्यनेन भङ्ग्या यत्र सूत्रेणार्थसिद्धिर्न स्यात्तत्र वृत्तिरपि क्रियत इत्युक्तत्वादन्तिमसूत्रस्य काठिन्ये वृत्तिमाह-यदीति॥

२३६५। गोत्रं प्रशंसायां युवा वा, युवा च कुत्सायां गोत्रं वा।

स भगवान् गार्ग्यायणो गार्ग्यो वा। एवं गार्ग्यायणो जाल्मः, गार्ग्यो वा ॥ २३६५ ॥

२३६६। यः पितरि जीवति स्वतन्त्रः, लक्ष्म्यान्तु न युवसंज्ञा।

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः। मधोर्माधवस्य वा युवापत्यं माधविः। नेह—मधोर्माधवस्य वा स्त्र्यपत्यं माधवी ॥ २३६६ ॥

उक्तं युवापत्यम्।

---

२३६५। गोत्रम्। प्रशंसायां गम्यमानायां गोत्रं युवसञ्ज्ञं वा स्यात्। निन्दायामपीति कश्चित्। युवा। कुत्सायां गम्यमानायां युवा च गोत्रसञ्ज्ञो वा स्यात्। प्रथमतो गोत्रमितिद्वयस्योदाहरणानि दर्शयति स इति। स गर्गस्य पौत्रो भगवानिति प्रशंसात्वे। गार्ग्य-शब्दात् 'इयाभ्यां नृसिंहे'त्यनेन फरामः गार्ग्यायण इति पक्षे गोत्र-स्यैव स्थितत्वाद्गार्ग्य इति च। एवमिति एवम्प्रकारेण। स प्रपौत्रः। जाल्म इति कुत्सात्वे। यो गार्ग्यायणः स एव पक्षे गार्ग्यो वेति ॥

२३६६। यः। पितरि जीवति यः स्वतन्त्रः सोऽपि युवसञ्ज्ञो भवति। लक्ष्म्या। लक्ष्म्यां वाच्यायान्तु प्राप्ता युवसञ्ज्ञा न स्यात्। सर्वत्रैव प्रतिषेधोऽयम्। पारिभाषिकविधिवाक्यमाह—यून्यपत्य इति। पित्रादावित्यनेन विहितयुवापत्यस्य वाक्योदाहरणे वक्ति मधोरिति। युवापत्यमित्यस्मात् पुमानिति पूरणीयम्। मधौ माधवे वा जीवति माधवशब्दात् 'अरामबाह्वादिभ्यामितीनृसिंहः' माधविरिति। गार्ग्यायण-प्रभृतिः। यद्यपि ज्येष्ठेत्यादिकानामुदाहरणानि ग्रन्थकृता न दत्तानि तथापि व्यक्तार्थं मयोदाह्रियन्ते। माधवस्य द्वौ पुत्रौ तयोर्ज्येष्ठे भ्रातरि जीवति पित्रादौ मृतेऽपि कनीयान् युवत्वात् माधविः।

**यश्च गोत्रादेव विधीयते, स यूनि बोद्धव्य ; यथा—**

२३६७। इयाभ्यां नृसिंहाभ्यां गोत्रप्रत्ययाभ्यां फरामः, हरितादेश्च तादृशात्।

दक्षस्य दाक्षेर्वा युवापत्यं दाक्षायणः, गार्ग्यायणः। हरितादिरयं विदाद्यन्तर्गणः। हरितस्य हारितस्य वा हारितायणः ॥२३६७॥

२३६८। मिमत-फाण्टाकृतिभ्यां णरामश्च सौवीरे।

मैमतः, मैमतायनः। एवं सौवीरगोत्रादन्येऽपि विधयः सन्ति ॥ २३६८ ॥

---

अन्यस्मिन् सपिण्डज्येष्ठे पितृव्ये पितामहभ्रातरि प्रपितामहभ्रातरि वातिशयवृद्धे जीवति माधविः पूर्ववत्। पितरि जीवति पितामहादौ मृतेऽपि स्वतन्त्रः पुत्रो माधविः। एष्वपि गार्ग्यायणादयः स्मर्तव्या। लक्ष्म्यामित्यस्य वाक्योदाहरणे दर्शयति—मधोरिति। युवापत्यं समापयति—उक्तमिति। युवापत्यं समाप्यापि अन्यत्र सुबोधाय विधिवाक्यमाह—यश्चेति। इदानीं युवापत्यविषये सर्वेषामुपलक्षणं विधिसूत्रमेकमवतारयति—यथेति ॥

२३६७। इया। यून्यपत्ये विवक्षिते गोत्रप्रत्ययाभ्यां नृसिंहाभ्यामियाभ्यामुत्तरः फरामो भवति। प्रसङ्गादन्यदप्याह—हरीति। तादृशान्नृसिंहगोत्रप्रत्ययान्ताद्धरितादेश्च फरामः स्यात्। वाक्योदाहरणे स्पष्टे। हरितादिरयमित्यनेन विदाद्यन्तर्गणप्रतिपादनात् विदादेः केशवणान्तत्वात् फराम इति सूचितम्। अत्रापि वाक्यप्रयोगौ स्पष्टाविति ॥

२३६८। मिम। सौवीररूपे गोत्रापत्ये विहितप्रत्ययान्ताभ्यां मिमतफाण्टाकृतिभ्यामुत्तरो णरामो भवति, चशब्दात् पूर्वोक्तः फरामोऽपि यून्यपत्ये विवक्षिते। गोत्रप्रत्ययान्ताद्युवप्रत्यय इत्युक्तमत एवात्रापि मिमतफाण्टाकृतिभ्यां हरिताद्यन्तर्गणत्वात् केशवणस्ततः परं मैमतात् गोत्रप्रत्ययान्तात् फाण्टाकृताच्च तादृशादुत्तरो युवप्रत्यय इति बोद्धव्यम्। तेन मिमतस्य युवापत्यं पुमानिति मैमतः मैमतायन इति।

२३६९ । गोत्रलक्ष्म्या ण-माधव-ठौ बहुलं कुत्सायाम् ।

गार्ग्याः कुत्सितमपत्यं युवा—गार्गः, गार्गिकः ॥ २३६९ ॥

२३७० । आदिवृष्णीन्द्राद्गोत्रान्नृसिंह-फिर्वा ।

माथुरायणिः, माथुरिः ; तादायनिः, तादः ॥ २३७० ॥

इति केवलापत्यानि ।

२३७१ । जनपद-सनामभ्यः क्षत्रियेभ्योऽपत्ये तज्जनपदनामभ्यस्तु राजनि ।

---

तथा फाण्टाकृतस्य युवापत्यं पुमानिति फाण्टाकृतः फाण्टाकृतायन इति । पुनरपि सूत्रस्थ-चशब्दस्य फलान्तरमाह—एवमिति । विषय इति प्रत्ययाः । अतएव चन्द्रजयादित्यादयोऽपि मैमतायनिः फाण्टाकृतायनिरित्युदाहरन्ति । असौवीर-गोत्रात् युवापत्ये तु नड़ादिपठनीयत्वात् केवलं मैमतायनः फाण्टाकृतायन इति ॥

२३६९ । गोत्र । कुत्सायां गम्यमानायां युवापत्ये वाच्ये गोत्रलक्ष्म्या उत्तरस्मिन् ण-माधवठौ भवतः । वाक्योदाहरणे दर्शयति—गार्ग्या इति ॥

२३७० । आदि । युवापत्ये वाच्ये गोत्रादिवृष्णीन्द्रान्नृसिंह-फिर्वा स्यात्, पक्षे यथासम्भवं प्रत्ययाः स्युः । माथुरस्य युवापत्यं पुमान् माथुरायणिरिति । माथुरित्यत्र तु अरामबाह्वादिभ्यामिति नृसिंह-इः विधानान्तराभावात् । आ ऐ औरामा यस्येत्यनेन तद्यदादीनामादिवृष्णीन्द्रसञ्ज्ञत्वेऽपि सूत्रे गोत्रादित्युक्तेर्हरितादिगणपाठाद् गोत्रप्रत्ययकेशवणः कर्तव्यस्ततः परं तादस्य युवापत्यं पुमान् तादायनिः पक्षे तद्धितबाहुल्यान्नृसिंहेरामं वाधित्वा केशवणः ताद इति । एवं यामुन्दायनिरित्यादि यथायथमूह्यम् । शुद्धापत्यत्रयं समापयति इतीति ॥

२३७१ । जन । जनपदवृत्तिशब्दो जनपद उच्यते, क्षत्रियवृत्ति-

प्रभुरयम् ॥ २३७१ ॥

२३७२। कुर्वादेर्ण्यरामः, नरामादेश्च।

कुरोरपत्यं कौरव्यः, कुरुदेशस्य राजा च। एवं निषधनाम्नः क्षत्रियस्य अपत्यं, निषधदेशस्य राजा च नैषध्यः। कथं माघे (१३।१६)—'परिरेभिरे कुकुरकौरवस्त्रियः'? तथा संरक्ष्यन्तां कौरवाः; तस्येदमिति विवक्षायाम्। इरामान्त-कुरु-कोशल्यादि-वृष्णीन्द्राः कुर्वादयः ॥ २३७२ ॥

---

शब्दस्तु क्षत्रिय इति, जनपदस्य समानं नाम येषां क्षत्रियवृत्तीनां ते जनपदसनामानस्तेभ्यः। तत् क्षत्रियसमानं जनपदनाम येषां जनपदवृत्तीनां तेभ्यः। जनपदसमाननामभ्यः क्षत्रियेभ्यस्तदपत्ये वाच्ये क्षत्रियसमानजनपदनामभ्यस्तु तद्राजनि वाच्ये यथास्वं प्रत्ययाः स्युः। एकाधिकारव्यापित्वात् प्रभुनामायमधिकारः ॥

२३७२। कुर्वा। तदपत्ये तद्राजनि च वाच्ये तत्तन्नाम्नः कुर्वादेः परो ण्यरामः स्यात्। नरा। तदपत्ये तद्राजनि च वाच्ये तत्तन्नाम्नो नरामादेश्चोत्तरो ण्यरामः स्यात्। वाक्योदाहरणे दर्शयति—कुरोरिति। एवमिति निषधस्यापत्यं पुमान् निषधस्य राजा च नैषध्यः। एवं नैकार्यो नैरक्य इत्यादि। यद्येवं कुरोः कौरव्यस्तदा माघादौ कौरवो दृश्यते कथमिति पूर्वपक्षयति। अत्र सिद्धान्तमाह—तस्येदमिति। एतदुपजीव्यमाघादिस्थपद्ये एवं सङ्गति कार्या। कुकुरश्च कुरुश्च तयोरिमा इत्यर्थे केशवगः, गुरुलघ्वादेरित्यनेनोत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रस्ततः टित्त्वाल्लक्ष्म्यामीप् कुकुरकौरव्यः पश्चात् श्यामरामः, कुकुरकौरवस्त्रियः, परिरेभिरे परस्परमालिङ्गितवत्य इत्यर्थः। किम्वात्र कुकुरेति सम्बोधनं पदम्। तथैव कौरवाः कुरुसम्बन्धिनो जना रक्ष्यन्तामिति पुंलिङ्गसूचनम्। अयं कुर्वादिः पूर्वोक्तकुर्वादेरन्य इति प्रतिपादयति—इरामेति। इरामान्ताः कुरुकोशलौ आदिवृष्णीन्द्राश्च कुर्वादयो भवन्ति। कुरुकोशलावित्यत्र अजादं जुमरः पठतीति ज्ञेयम् ॥

२३७३। पाण्डोर्यरामनृसिंहः।

पाण्ड्रः। भारतपाण्डुस्तु न जनपदसनामा, तस्यापत्यन्तु पाण्डवः ॥ २३७३ ॥

२३७४। पञ्चालादेः केशव-णः।

पाञ्चालः पुत्रो राजा च। पञ्चाल-इक्ष्वाकु-विदेह-शूरसेन-शाल्वेय-गान्धारि-कलिङ्ग-मगध-शूरमसादिर्द्विसर्वेश्वरश्च पञ्चालादिः ॥२३७४॥

२३७५। युगन्धरादेर्नृसिंह-इः।

यौगन्धरिः पुत्रो राजा च। युगन्धर उडुम्बर प्रत्यग्रथादिरयम् ॥ २३७५ ॥

---

२३७३। पाण्डोः। तदपत्ये तद्राजनि च वाच्ये तत्तन्नाम्नः पाण्डोर्नृसिंहयरामो भवति। पाण्डोरपत्यं पुमान् राजा च पाण्ड्र इति जनपदपाण्डोश्चेत्यनेनात्र उरामहरः। अस्मादन्यपाण्डोस्त्वपत्ये तेन दीव्यतीत्यतः प्रागर्थे ईत्यनेन केशवण इत्याह—भारतेति। एवं ब्राह्मण-पाण्डोरपि पुत्रः पाण्डव इति ॥

२३७४। पञ्चा। तदपत्ये तद्राजनि वाच्ये तत्तन्नामपञ्चालादेः केशवणो भवति। पञ्चाल इत्यस्य वाक्यं प्रकारान्तरेणाह—पुत्र इति। पञ्चालादिगणं निर्दिशति—पञ्चालेति। पञ्चालादिशूरमसान्तो नवसङ्ख्यको द्विसर्वेश्वरश्च पञ्चालादिः स्यात्। शूरमसेत्यत्रादिपदाद्यथासम्भवमन्येऽप्यत्रोह्याः। आदिवृष्णीन्द्रत्वेन कुर्वादेर्ण्यरामे प्राप्ते तद्बाधनार्थं शाल्वेय-गान्धार्योरत्र ग्रहणम् ॥

२३७५। युग। तदपत्यराज्ञोर्वाच्ययोस्तत्तन्नामयुगन्धरादेर्नृसिंह-इर्भवति। यौगन्धरिरित्यत्रापि पूर्ववद्वाक्यं पुत्रो राजा चेत्युक्तम्। युगेति। युगन्धर उडुम्बरप्रत्यग्रथादिरयं युगन्धरादिः स्यात्। प्रत्यग्रथादिग्रहणात् तिल-खल-मद्रकार-भूलिङ्ग-शरदण्ड-कालकूट-अश्वकेति च ज्ञेयम् ॥

२३७६। महाहरः।

प्रभुरयम् ॥ २३७६ ॥

२३७७। कम्बोजादे राजापत्ययोः।

कम्बोजः पुत्रो राजा च। चोलः, शकः, केरलः ॥ २३७७ ॥

२३७८। बहुषु लक्ष्मीं विना।

कुरवः, पञ्चालाः। स्वार्थे बहुत्वमेष्यते, नेह—प्रियकौरव्याः। लक्ष्म्यान्तु—पाञ्चाल्यः ॥ २३७८ ॥

२३७९। अवन्ति-कुन्ति-कुरु-शूरसेनादेर्लक्ष्म्याम्।

---

२३७६। महा। तत्तद्राजापत्ययोर्वाच्ययोस्तत्तन्नामजनपदक्षत्रियेभ्यो यथायोग्यं प्रत्ययानां महाहरः स्यात्। अयमपि प्रभुनामाधिकारः ॥

२३७७। कम्बो। तद्राजापत्ययोर्वाच्ययोस्तत्तन्नामकम्बोजादेरुत्तरस्मिन् शूरमसादित्वेन पञ्चालादेः प्राप्तकेशवणस्य महाहरो भवति। कम्बोज इत्यादि स्पष्टम्। त्रयमेव कम्बोजादीत्यादिना गृहीतमित्याह—चोल इति ॥

२३७८। बहु। लक्ष्मीं विना बहुषु तद्राजापत्येषु वाच्येषु तत्तन्नामजनपदक्षत्रियेभ्यो विहितप्रत्ययस्य महाहरः स्यात्। कुरोः राजानोऽपत्यानि पुमांसश्चेति कुर्वादेर्ण्यरामस्य महाहरस्ततो जस् कुरव इति। एवं पञ्चालाश्च। किन्त्वत्र पञ्चालादेः केशवणस्य महाहरः। यद्यपि बहुष्विति सामान्येनोक्तं तथाप्यस्य स्वार्थविषय इति स्वाभिप्रतमाह—स्वार्थ इति। स्वार्थे एव बहुत्वमिष्यते नास्वार्थ इत्यर्थस्तेन, नेह, प्रियः कौरव्यो येषां ते प्रियकौरव्याः। बहुत्वमत्रान्यपदार्थस्य न कौरव्यस्येति। लक्ष्म्यान्त्विति रूपं दर्श्यते इति शेषः। पाञ्चाल्य इति पञ्चालस्यापत्यानि स्त्रिय राज्ञ्यो वा इत्यर्थः ॥

२३७९। अव। लक्ष्म्यां विषये तदपत्ये तद्राजनि च वाच्ये

अवन्ती, कुन्ती, कुरूः, शूरसेनी, मद्री ॥ २३७९ ॥

२३८० । केकयाद्वा ।

कैकेयी, केकैयी ॥ २३८० ॥

उक्ते राजापत्ये ।

अत्र 'तद्राज'-संज्ञा पाणिनीयानाम् । महाहरस्त्वनुवर्त्तते ।

२३८१ । यस्कादिभ्यः स्वार्थबहुत्वे बहुलं, लक्ष्म्यान्तु न ।

बहुत्व इति प्रभुश्च । यस्काः अयस्थूलाः ॥ २३८१ ॥

---

तत्तन्नाम्नावन्ति-कुन्ति-कुरु-शूरसेनादेरुत्तरस्य विहितप्रत्ययस्य महाहरो भवति । तत्रावन्त्यादित्रिभ्यः । कुर्वादेर्ण्यस्य शूरसेनादेस्तु पञ्चालादेः केशवणस्य महाहरः । अवन्तेरपत्यं स्त्री राज्ञी वा अवन्तीति इरामादवत्यर्थादित्यनेनात्र ईप् । एवं कुन्तीति । कुरूरित्यत्र तु 'अयरामोद्धवादुरामान्नृजाताविʼत्यनेन ऊङ् । शूरसेनीत्यत्र चाणकेशवगौरादिभ्य इत्यनेन ईप् । शूरसेनादेरादिगृहीतस्योदाहरणं मद्रीति । एवमन्यानि तूह्यानि ॥

२३८० । केक । तदपत्ये तद्राजनि च वाच्ये लक्ष्म्यां विषये तत्तन्नामकेकयात् शूरमसादित्वेन पञ्चालादेः केशवणस्य महाहरो वा स्यात् । केकयस्यापत्यं स्त्री राज्ञी वेति कैकेयीति द्वयम् । तत्तद्राजापत्ये समापयति—उक्ते इति । स्वमतमुक्त्वा शिष्यहितार्थं प्राचीनानां सङ्केतमाह—अत्रेति । पाणिनीयानां मतेऽत्र तद्राजापत्ययोस्तद्राजसंज्ञा स्यादित्यर्थः । महाहरनिवृत्तिशङ्कां निराकरोति—महाहरेति ॥

२३८१ । यस्का । स्वार्थबहुत्वे विषयेऽपत्ये वाच्ये यस्कादिभ्य उत्तरे बहुलं यथा स्यात्तथा शिवादेः केशवणस्य महाहरो भवति । लक्ष्म्यां विषये तु महाहरो न भवति । बहुत्व इति प्रभुनामाधिकारः चशब्दाद् विधिश्च । महाहरेऽत्रापत्यमात्रं गृह्यते न विशेष

२३८२। गर्गादेः।

गर्गाः, वत्साः ॥ २३८२ ॥

२३८३। आगस्त्यस्यागस्तिश्च।

अगस्तयः ॥ २३८३ ॥

२३८४। कौण्डिन्यस्य कुण्डिनश्च।

कुण्डिनाः ॥ २३८४ ॥

---

इति यथासम्भवमपत्ये गोत्रे चास्य प्रवृत्तिः। यस्का इति यस्कस्यापत्यानि पुमांस इति वाक्ये। एवमयस्थूलाः इत्यादि। लक्ष्म्यान्तु यास्क इत्यादि ॥

२३८२। गर्गा। गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषये गर्गादिर्माधवस्य महाहरो भवति। गर्गस्य गोत्रापत्यानि पुमांस इत्यर्थे गर्गा इति। एवं वत्सा इत्यादि। लक्ष्म्यान्तु गार्ग्यं इत्यादि ॥

२३८३। आग। गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषये आगस्त्यस्य सम्बन्धिनो माधव-यरामस्य महाहरः स्यात्, तस्मिन् सति तस्यागस्तिश्च स्यात्। अगस्त्यस्य गोत्रापत्यानि पुमांसः अगस्तय इति। लक्ष्म्यान्तु आगस्त्य इति ॥

२३८४। कोण्डि। गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषये कौण्डिन्यस्य सम्बन्धिनो माधव-यरामस्य महाहरः स्यात्, तस्मिन् सति तस्य कुण्डिनश्च भवति। कुण्डिन्याः गोत्रापत्यानि पुमांसः कुण्डिना इति, लक्ष्म्यान्तु कौण्डिन्य इति। अत्रादेशे तवर्गान्तहरिवेणुरूपमादेशादन्यत्र तु हरिमित्रे न रूपमिति ज्ञेयम्। किञ्च, अगस्त्यस्य कौण्डिन्यस्येति च कृतं तदेतज्ज्ञापकं तस्मात् महाहरविषये एवागस्त्यस्यागस्तिरित्यादेशः कौण्डिन्यस्य कुण्डिन इत्यादेशश्च स्यात्। एतेनैतद्द्वयं गर्गादिरन्तर्गण इत्यपि सूचितम्। किञ्च, सूत्रद्वयमेतत्

२३८५। विदादेरगोपवनादेः।

विदाः, उर्वा। नेह—गौपवनाः॥ २३८५॥

२३८६। अत्रि-भृगु-कुत्स-वशिष्ठ-गोतमाङ्गिरोभ्यः।

अत्रयः, भृगवः॥ २३८६॥

२३८७। नृसिंहेरामस्य बहुसर्वेश्वरात् प्राच्य-भरतेषु।

प्राच्ये—पुष्करसदाः। भरते—युधिष्ठिराः, अर्जुनाः। एव-

---

गर्गादेरित्यस्मात् सकाशाद्विशेषग्राहकमन्यथा गर्गादेरित्यनेन माधवयरामे हरे सति अगस्त्याः कुण्डिना इति चानिष्टरूपं स्यात्॥

२३८५। विदा। गोत्रापत्ये वाच्ये लक्ष्मीं विना बहुत्वे विषयेऽगोपवनादेरन्यस्मात् विदादेरुत्तरस्मिन् विहितकेशवणस्य महाहरो भवति। विदस्य गोत्रापत्यानि पुमांसः विदा इति। एवं उर्वा इत्यादि। लक्ष्म्यान्तु वैद्य इत्यादि। विदादेरन्तर्गणत्वाद्गोपवनादेर्महाहरप्राप्ते वर्जनादिह न भवतीत्याह—नेहेति, गौपवना इति। वाक्यमत्र पूर्ववत्। एवं शैग्रवाः, वैन्दवा इत्यादि॥

२३८६। अत्रि। प्रकरणेऽत्रापत्यमात्रस्वीकारेण लक्ष्मीं विना बहुत्वे विषये तस्यापत्यमित्यपत्ये वाच्येऽत्र्यादिषड्भ्यः पर ऋष्यन्धकेत्यनेन ऋषित्वात् केशवणस्य महाहरो भवति। अत्रेरपत्याणि पुमांसः अत्रय इति। ऋषित्वात् शुभ्रादित्वाच्चात्र केशवणमाधव-ढयोर्महाहरो ज्ञेयः। एतस्मादन्यत्र तु केशवणस्यैव। भृगोरपत्यानि पुमांसः भृगव इति। एवं कुत्साः वशिष्ठा गोतमाः अङ्गिरस इति। लक्ष्म्यान्तु आत्रः आत्रेय्य इत्यादि॥

२३८७। नृसिं। प्राचि भवाः प्राच्याः, भरता इति भरतवंश्याः, प्राच्याश्च भरताश्च प्राच्यभरतास्तेषु। लक्ष्मीं विना बहुत्वे विषयेऽपत्यरूपेषु प्राच्यभरतेषु वाच्येषु बहुसर्वेश्वरादुत्तरस्य नृसिंहे-

मन्येऽपि ज्ञेया: । बहुत्वस्य परार्थत्वे प्रिययास्का:, प्रियगार्ग्या: ॥२३८

२३८८ । नृसिह-य-केशवणयोरेकत्वे द्वित्वे च महाहरो वा वाच्यः षष्ठीकृष्णपुरुषे ।

गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलं, गार्ग्यकुलम् । एवं वैदकुलं विदकुलम् ॥ २३८८ ॥

२३८९ । प्राग्दीव्यतीयसर्वेश्वरादौ कर्तव्ये न महाहरः, बहुत्वेऽपि युवप्रत्ययं विना न महाहरः, माधव-फे नृसिह-फिरामे च यूनि वा ।

---

रामस्य महाहरो भवति। 'अरामबाह्वादिभ्यामि'त्यनेनात्र सर्वस्माद्विहितस्य बाह्वादेर्नृसिंहेरामस्य महाहरो ज्ञेयः। तत्र प्राच्य इति प्राच्यवंश्ये रूप दर्श्यते। एकवचनमत्र जात्यपेक्षया। पुष्करसदस्यापत्यानि पुमांसः पुष्करसदा इति। भरत इति पूर्ववत्। युधिष्ठिरस्यापत्यानि पुमांसः युधिष्ठिरा इति। एवमर्जुना इति। लक्ष्यन्तु पौष्करसद्य इत्यादयः। एवमिति एवम्प्रकारेण शिष्टप्रयोगाननतिक्रम्य अन्येऽपि उपका इत्यादयोऽपि ज्ञेयाः। बहुत्वेति अत्रापि बहुत्वस्य स्वार्थे एव ग्रहणं न परार्थे, तेन प्रियो यास्को येषां ते प्रिययास्का इति, एवं प्रियगार्ग्या इत्यादयः॥

२३८८। नृसि। षष्ठीकृष्णपुरुषे सति एकत्वे द्वित्वे च विषये नृसिंहयकेशवणयोर्महाहरो वा वाच्यः। गार्गेत्यनेन वाक्योदाहरणं स्पष्टं दर्शितम्। एवमिति वैदस्य वैदयोर्वा कुलमिति द्वयम्। इदानीं व्यवस्थापकानि विधिसूत्राण्याह—प्राग्दीव्येत्यादिना॥

२३८९। प्राग्दो। दीव्यतेः प्राग्दीव्यतिस्तस्मिन् भवः प्राग्दीव्यतीयः सर्वेश्वर आदिर्यस्य स सर्वेश्वरादिः स चासौ स चेति प्राग्दीव्यतीयसर्वेश्वरस्तस्मिन्। बहुत्वादौ विषये यस्मिन् कस्मिन्

गर्गाणां छात्रा गार्गीयाः, आत्रेयीयाः। असर्वेश्वरादित्वे तु—गर्गेभ्य आगतं गर्गरूप्यम्। बहुत्वेऽपीति। फण्टाकृतस्यापत्यं फाण्टाकृतिः, तस्यापत्यं युवा फाण्टाकृतो णप्रत्ययान्तः; ततस्तस्य छात्रा इत्यर्थे प्राग्दीव्यतीये कर्तव्ये णरामस्य महाहर-

---

प्रसिद्धे वक्ष्यमाणे चार्थे सर्वेश्वरादौ प्राग्दीव्यतीये कर्तव्ये सति बहुत्वेऽपत्यमात्रार्थे कृतप्रत्ययानां विहितो यो महाहरः स न स्यात्। बहु। बहुत्वादौ पूर्ववद्यस्मिन्नित्यादावर्थे प्राग्दीव्यतीयसर्वेश्वरादौ कर्तव्ये सति बहुत्वे अपिकारादेकत्वे द्वित्वे च युवप्रत्ययं विना अपत्यार्थे विहितप्रत्ययानां महाहरो न स्यात्, युवप्रत्ययस्य तु स्यात्। माध। पूर्ववद्बहुत्वादौ यस्मिन्नित्यादावर्थे प्राग्दीव्यतीयसर्वेश्वरादौ कर्तव्ये सति बहुत्वेऽपि यून्यपत्ये वाच्ये माधव-फे नृसिंह-फिरामे च कृते तयोः फफ्योर्महाहरो वा भवति। एतदग्रे व्यक्तीभविष्यति। प्रथमसूत्रस्योदाहरणमवतारयति—गर्गेति। गर्गाणां छात्रा इत्यर्थे 'आदिवृष्णीन्द्राच्छरामः' इत्यनेन प्रसिद्धत्वाज्जातादौ वक्ष्यमाणेन लक्षणेन मः छः, छ-ईय इत्येवं प्राग्दीव्यतीयछरामस्य सर्वेश्वरादित्वे सिद्धे गर्गशब्दात् गोत्रापत्ये विहितस्य माधव-यरामस्य बहुत्वविषये प्राप्तमहाहरो न स्यात्। 'विष्णुजनात्तद्धितस्ये'त्यनेन यरामहरस्तु स्यात्। अतएव वृष्णीन्द्रापायाभावात् गार्गीया इति। एवमत्रीणां छात्रा इत्यर्थे छरामे सति, अपत्यार्थेऽत्रिशब्दात् शुभ्रादित्वेन विहितमाधवढरामस्य बहुत्वे महाहरो न स्यात्, तेन आत्रेयीया इति। सर्वेश्वरादाविति किमर्थमित्याह—असेति। सर्वेश्वरादित्वाभावे त्वेषां विषयो न स्यादिति रूपं दर्श्यत इत्यभिप्रायः। गर्गेभ्य आगतमित्यर्थे तत आगतमित्यनेन वक्ष्यमाणरूप्यप्रत्यये प्राग्दीव्यतीये सति पूर्ववदस्य सर्वेश्वरादित्वाभावात् महाहरनिषेधो न स्यात्, अतो गर्गरूप्यमिति। आगतमित्येकवचनेन कर्तव्यप्राग्दीव्यतीयस्य बहुत्वे नियमराहित्यं सूचितम्। अतएव सूत्रव्याख्याने बहुत्वादाविति मयोक्तम्। मध्यमसूत्रस्य वाक्योदाहरणे स्वयं विवृत्य दर्शयति—बहुत्वेऽपीत्यादिना। फण्टाकृतस्यापत्यमिति गोत्रापत्यं ज्ञेयम्।

स्ततो 'नृसिंहेरामात्' ( २५०३ ) केशवणो वक्ष्यते—फाण्टाकृताः। माधवफ-नृसिंहफिरामयोस्तु वा महाहरः; गार्ग्यायणस्य छात्राः गार्गीयाः, गार्ग्यायणीयाः। यास्कायनेः—यास्कीयाः, यास्कायनीयाः। नित्यन्तु आत्रेयीयाः ॥ २३८९ ॥

---

सारस्यात् सारस्यन्तु यश्च गोत्रादेव विधीयते स यूनि बोद्धव्य इत्युक्तरीत्या पश्चादत्र युवप्रत्ययविधानेन लब्धम्। मूलप्रकृतेरेव गोत्र-प्रत्यय इत्युक्तदिशा फण्टाकृतशब्दात् विधानान्तराभावेन 'अरामबाह्वा-दिभ्यामि'त्यनेन बाह्वादित्वात् नृसिंह-इः फाण्टाकृतिस्ततस्तस्य फाण्टा-कृतेरपत्यं युवेत्यर्थे फाण्टाकृत इति 'मिमतफाण्टाकृतिभ्यामि'त्यनेन णरामान्तः। ततस्तदनन्तरं तस्य फाण्टाकृतस्य छात्रा इत्यर्थे प्राग्-दीव्यतीये सर्वेश्वरादौ कर्तव्ये युवप्रत्ययं विनेत्यनेन निषेधखण्डनात् युवप्रत्यय-णरामस्य महाहरस्ततः परं पूर्वोक्तगोत्रप्रत्ययनृसिंहेरामात् केशवण इति छरामापवादककेशवणो वक्ष्यत इति नृसिंहेरामाद्गोत्रा-दित्यनेनेति शेषः। इदमपि सूत्रं प्रसिद्धार्थाङ्गिकारेण जातावेव ज्ञेय-मित्येवं फाण्टाकृता इति। इदानीमन्तिमसूत्रस्य दुष्पष्टत्वाद्वृत्तिं करोति—माधव-फेति। गार्ग्यायणस्य छात्रा इत्यर्थे आदिवृष्णीन्द्रादित्यनेन प्राग्-दीव्यतीयछरामे सति 'इयाभ्यां नृसिंहाभ्यामि'त्यनेन विहितयुवप्रत्यय-फरामस्य महाहरो वा स्यात्। तेन गार्गीया इति द्वयम्। किन्त्वत्र फरामहरपक्षे 'विष्णुजनात्तद्धितयस्य हरो भगवत्याराम विने'त्यनेन यरामहरः। यास्कायनेरित्यत्र छात्रा इति पूर्ववत् योज्यं, प्राग्दीव्यतीय छरामे सति 'आदिवृष्णीन्द्राद्गोत्रान्नृसिंह-फिर्वे'त्यनेन केशवणरामान्तात् विहितफेर्महाहरो वा स्यात्। तेन यास्कीया इति द्वयम्। यदा तु विकल्पत्वात् नृसिंहफेरभावस्तदा 'अरामबाह्वादिभ्यामि'त्यनेन नृसिंहे-रामः। एतद्युवप्रत्यस्य पुनः प्राग्दीव्यतीये छे महाहरो नित्यं स्यात् विकल्पत्वाभावात्। अतोऽस्मिन् पक्षे नित्यं यास्कीया इति। एत-देव स्पष्टयन् भङ्ग्योदाहरणान्तरमाह—नित्यन्तु आत्रेयीया इति। अन्य-थेदमत्रानर्थकं स्यात् पूर्वोदाहृतत्वात्॥

२३९०। पैलादिभ्यो युवप्रत्ययस्य महाहरः।

पिला वा शिवादिः। तस्या युवविहितफेर्महाहरः, पैलः—पिता पुत्रश्च। आदिना वैदः पिता पुत्रश्च। एवं सात्यकिरित्यादि। अन्यत्र न दाक्षिः पिताः, दाक्षायणः पुत्रः। एवमार्जुनिः, आर्जुनायनः; आसुरिः, आसुरायणः॥ २३९०॥

२३९१। तैकायन्यादेः केशवारामस्य महाहरः।

तैकायनिः—पिता पुत्रश्च॥ २३९१॥

---

२३९०। पैल। बहुत्वेऽपीत्यनेन युवप्रत्ययहरविषये बहुत्वं व्यभिचारितं तस्मादत्रापि बहुत्वैकत्वेषु युवापत्ये वाच्ये पैलादिभ्यो युवप्रत्ययस्य महाहरो भवति। पिलादिशब्दस्य गणग्रहणेनैव प्रत्ययप्राप्तिं सूचयन्नाह—पिलेति। अतः शिवादित्वादपत्ये गोत्रे च केशवणः स्यात्। ततश्च तस्याः पिलाया उत्तरस्मिन् यो गोत्रार्थकेशवणस्तस्मादादिवृष्णीन्द्रादगोत्रादित्यनेन युवविहितफेर्महाहर इत्याक्षेपाल्लभ्यते, अतएवैकपैलरूपशब्देन पिता पुत्रश्चोच्यते। एवमुत्तरत्रापि। पैलादीत्यत्रादिशब्देन अन्यदपि संगृह्यते इत्याह—आदिनेति। विदस्य युवापत्यं पुमानिति गोत्रार्थात् विदादेः केशवणरामादुत्तरस्य युवविहितफेर्महाहरः। वैद इत्यादि पूर्ववत्। एवमिति। सत्यकस्य युवापत्यं पुमानिति गोत्रापत्यार्थेऽरामान्तत्वाद्यो नृसिंह इस्तस्मादियाभ्यामित्यनेन विहितयुवप्रत्ययफरामस्यात्र महाहरः। सात्यकिः पिता पुत्रश्चेति। इत्यादीत्यादिपदेन शिष्टप्रयोगानुसारादन्यान्यप्यूह्यानीति ज्ञापितम्। अन्यत्रेति एतेभ्योऽन्यत्र न स्यादित्यत्र गोत्रापत्ये नृसिंह-इरतोऽयं पितरं व्यक्ति। दाक्षायण इत्यत्र युवापत्ये फरामोऽतोऽयं पुत्रं वक्तीति भेदः। एवमार्जुनिप्रभृतयः। किञ्च, आर्जुनिरित्यादिषु बाह्वादित्वान्नृसिंह-इर्गोत्रे विधानान्तराभावात्॥

२३९१। तैका। गोत्रप्रत्ययान्तात् तैकायन्यादेः परस्य युवप्रत्ययकेशवारामस्य महाहरो भवति। तैकायनिरिति तिकस्य गोत्रापत्यं

२३९२। ण्यार्षक्षत्रियेभ्यो नृसिंहेरामस्य महाहरः।

ण्यात् कौरव्यः—पिता पुत्रश्च। तिकादिपाठात् कौरव्यायणिः। आर्षात्—वाशिष्ठः पिता पुत्रश्च। क्षत्रियात्—श्वाफल्कः पिता पुत्रश्च ॥ २३९२ ॥

अपत्यं पूर्णम्।

२३९३। तेन रक्तं रागात्।

प्रभुश्चायम्। तेन रक्तमित्यर्थे तृतीयान्ताद्रञ्जनद्रव्यवाचिनो यथाविहित-प्राग्दीव्यतीय-प्रत्ययः स्यात्। तत्र सामान्यतः केशवण एव। कुङ्कुमेन रक्तं कौङ्कुमं कृष्णस्य वस्त्रम्। विशेषतस्तु अग्निना

---

पुमानिति गोत्रापत्येऽपि तिकादेर्नृसिंहफिर्विध्यन्तराभावात्। अतोऽस्मात् युवापत्ये अनेन केशवारामं विधाय तस्य महाहरश्च कृतस्तेनायं पितरं पुत्रञ्च वक्ति ॥

२३९२। ण्यार्ष। ण्यश्च आर्षश्च क्षत्रियश्च ते ण्यार्षक्षत्रियास्तेभ्यः। गोत्रार्थेभ्यो ण्यार्यक्षत्रियेभ्यो युबप्रत्ययस्य नृसिंहेरामस्य महाहरः स्यात्। तत्र ण्यादिति ण्यप्रत्ययान्तं लक्षीकृत्योदाह्रियत इत्यर्थः। कुरोर्युवापत्यमित्यर्थे गोत्ररूपात् कौरव्यादरामवह्वादिभ्यामित्यनेन विहितनृसिंहेरामस्य महाहरः। अतः कौरव्य इत्यनेन पिता पुत्रश्चोच्यते। तिकादीति। कौरव्यस्य तिकादिपाठाद्धेतोस्तिकादेर्नृसिंहफिरिति फिप्रत्ययेन कौरव्यायणिरित्यपि। आर्षादिति लक्षीकृत्येति पूर्ववत्। वाशिष्ठ इति वशिष्ठस्य युवापत्यमिति ऋष्यन्धकेत्यनेन कृतकेशवणान्ताद्वाशिष्ठात्। अरामान्तत्वेन विहितनृसिंहेरामयुवप्रत्ययस्य महाहरस्तेनानेन पिता पुत्रश्चोच्यत इति। क्षत्रियादित्यत्रापि पूर्ववदिति। श्वाफल्क इति वाशिष्ठवत्। सर्वमपत्यं समापयति अपत्यमिति ॥

२३९३। तेन। तेन रक्तमित्यर्थे रागान्नाम्नो यथाविहितं प्रत्ययाः स्युः। एकाधिकारव्यापित्वात् प्रभुनामायमधिकारः चशब्दाद्विधिरपि। अधिकारसूत्रं स्वयं व्याचष्टे तेनेति। रञ्जनेति। येन द्रव्येण वस्त्रा-

रक्तो घट आग्नेयः। आदित्येनादित्य पत्रम्। रक्तमिति कर्मविहित-कृदन्तस्य प्रतिनिधिस्तद्धितोऽयमपि कर्मण्येव, ततोऽत्र वस्त्रादेः कर्मण उक्तत्वम्; एवमन्यत्रापि॥ २३९३॥

२३९४। लाक्षारोचनाभ्यां माधव-ठः।

लाक्षिकं, रौचनिकम्॥ २३९४॥

२३९५। शकल-कर्दमाभ्यां वा।

शाकलिकः, शाकलः॥ २३९५॥

२३९६। पीतात् करामः।

पीतकम्॥ २३९६॥

---

दिकं वर्णान्तरं क्रियते तद्रञ्जनद्रव्यं तद्वाचिनः शब्दादिति। तत्रेति स्पष्टं, वाक्योदाहरणे ददाति कुङ्कुमेनेति। विशेषस्त्विति विशेष-विधानात्तु विशेषरूपाणि स्युः। तानि यथेति। आग्नेय इति 'अग्नि-कलिभ्यामि'त्यनेन माधवढ इति। आदित्येनेति रक्तमिति शेषः। आदित्यमिति 'दित्यदित्यादित्य-यमेभ्यः' इत्यनेन ण्यरामः। विष्णुजनात्त-द्धितेति यहरः। आख्यातादयो यत्र क्रियन्ते तेन तदुक्तं स्यादि-त्युक्तदिशा यथा आख्यातकृत्समासैः कर्तृभिः कर्मादीनामुक्तत्वं तद्व-त्तद्धितेनापीत्याह—रक्तमित्याद्येवमन्तेन॥

२३९४। लाक्षा। तेन रक्तमित्यर्थे लाक्षारोचनाभ्यां रञ्जन-द्रव्याभ्यामुत्तरो माधवठो भवति। लाक्षाया रक्तं लाक्षिकमिति रोचना गोरचना तया रक्तं रौचनिकमिति द्वयं वस्त्रम्॥

२३९५। शक। तेन रक्तमित्यर्थे शकलकर्दमाभ्यां रञ्जन-द्रव्याभ्यामुत्तरो माधवठो वा स्यात्, पक्षे सामान्यात् केशवणः। शकलेन रक्तः पटादिः शाकलिकः शाकलश्च। एवं कार्दमिकः कार्दम इति॥

२३९६। पीता। तेन रक्तमित्यर्थे पीताद्रञ्जनद्रव्यादुत्तरः करामः स्यात्। पीतेन रक्तं पीतकं वस्त्रम्॥

२३९७। नील्या अरामः।

नीलम् ॥ २३९७ ॥

रक्तं निवृत्तम्।

२३९८। सास्य देवता।

प्रभुश्चायम्। एवमुत्तरत्रापि। सर्वत्रार्थमात्रनिर्देशे प्रभुत्वादिकं ज्ञेयम्, अस्मिन्नर्थे पूर्ववद्यथाविहितं स्यात्। विष्णुर्देवतास्य वैष्णवः पुरुषः, वैष्णवं हविः, वैष्णवी ऋक्। एवमादित्यः, आग्नेयः। यागे पुरोडाशादिसम्प्रदानं मन्त्राद्याराध्यं च देवतामाहुः ॥ २३९८ ॥

२३९९। शुक्रादेर्घरामादयः।

---

२३९७। नील्या। तेन रक्तमित्यर्थे नील्या रञ्जनद्रव्याद रामो भवति। नील्या रक्तं नीलमिति। एते विशेषा एभ्योऽन्यत्र तु कौसुम्भप्रभृतयः। इति रक्तं समाप्तम् ॥

२३९८। सास्य। अस्य सा देवतेत्यर्थे यथायोग्यं नाम्नः प्रत्ययाः स्युः। अयमपि प्रभुनामा विधिश्च। इदानीमितः परं नानाविधार्थे प्रत्ययानां वक्ष्यमाणत्वान्मुहुर्मुहुरधिकाराणां प्रवृत्तेरलसबुद्ध्या एकत्रैवात्र सङ्केतयति—एवमित्यादिना। सूत्रं विवृणोति—अस्मिन्निति। वाक्योदाहरणे दर्शयति—विष्णुरिति। वैष्णव इत्यादित्रिषु सामान्यात् केशवणः। वैष्णवीत्यत्र तु ऋचो विशेषणत्वात् टित्त्वनिबन्धन ईप्। एवमित्यादिद्वये तु विशेषात् ण्यमाधढ़ाविति। असाधारणलक्षणेन देवताद्वैविध्यं प्रतिपादयति—याग इति। यागे विषये पुरोडाशादीनां मन्त्रादिभिराराध्यञ्च देवतामाहुः पण्डिता इति शेषः ॥

२३९९। शुक्रा। सास्य देवतेत्यर्थे शुक्रादेरुत्तरस्मिन् यथास्वं घरामादयो भवन्ति। शुक्रो देवतास्येति घ इयः। अ-इद्वयस्येत्य-

शुक्रियं सौम्यं हविः, सौमी ऋगित्यादि। 'ऋरामस्य रो ये' ( २१२९ )—पित्र्यम्। कः प्रजापतिदवतास्य—कायम्; शतरुद्रीयं, शतरुद्रियम्; माहेन्द्रं, माहेन्द्रीयम्, महेन्द्रियम्; वायव्यम्, ऋतव्यम्, उषस्यं, द्यावापृथिवीयं, सुनासीरीयं, मरुत्वतीयम्, अग्नीषोमीयं, गृहमेधीयम्। पक्षे द्यावापृथिव्यं, सुनासीर्यमित्यादयः॥ २३९९॥

---

रामहरः। शुक्रियं हविः। एवमुत्तरत्रापि। सोमो देवतास्य सौम्यमित्यत्र माधवयो बोद्धव्यस्तेन सौमीत्यत्र ऋग्वाचित्वेन टित्त्वादीप्, तस्मिन् 'विष्णुजनात्तद्धितयस्ये'त्यनेन यहरः। ररामविधानं ऋरामस्येति। पिता देवतास्य पित्र्यं कव्यम्। क इति वाक्ये कशब्दात् आयः कायं ब्रह्मोद्देश्यं हविः। कायमित्यत्र कादैच्चेति जुमरसूत्रमिति, तन्मते कशब्दात् केशवणस्तत्पूर्वमैजागमश्च। शतरुद्रो देवतास्य शतरुद्रीयमित्यत्र छरामः, शतरुद्रियमित्यत्र तु घरामः। महेन्द्रो देवतास्येति माहेन्द्रमित्यादिषु त्रिषु यथाक्रमं केशवण-छ-घरामाः। वायुर्देवतास्य वायव्यमित्यत्र ऋतुर्देवतास्य ऋतव्यमित्यत्र च यरामः, उद्धयस्येति गोविन्दः। 'ओद्वस्यावावौ प्रत्यय ये' इत्यनेनाव्। ऊषः प्रातर्देवतास्य उषस्यमित्यत्रापि यरामः। द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयमित्यत्र छरामः। द्यावापृथिवीति समासकार्ये पृथिव्यां परे दिव्शब्दस्य द्यावादेशेन साधितम्। एवं द्यावापृथ्वीयम्। सुनासीर इन्द्रः स देवतास्य छः सुनासीरीयमिति। शुनो वायुः सीर आदित्यः इन्द्रादेररामस्याराम उत्तरपदे इत्यनेन समासकार्ये यः शुनासीरः सिद्धस्तस्य शुनासीरीयमित्यन्ये। इतः कारणात् तालव्यादिरप्ययम्। इन्द्रादेरित्यनेन दन्त्यादिसुनासीरोऽपि साधनीयः सङ्गतत्वात्। मरुत्वान् देवतास्य मरुत्वतीयमिति। अग्नीषोमौ देवते अस्य अग्नीषोमीयमिति। गृहमेधो देवतास्य गृहमेधीयमिति। अतएवास्तोस्पतीयमित्यपि कश्चित्। द्यावापृथिव्यादिषु पक्षे यरामश्च भवतीत्याह—पक्ष इति। पैङ्गाक्षीपुत्रतार्णविन्दवाभ्यामीय इति जयादित्यादयः।

२४००। कालवाचिभ्यो भवार्थवत्।

मासिकं, वासन्तं, प्राावृषेण्यम्। भवार्था वक्ष्यन्ते ( २५६५ ) ॥ २४०० ॥

देवता निवृत्ता।

२४०१। तस्य समूहो ब्रह्मणि।

अत्रार्थे क्लीबे यथाविहितं स्यात्। देवानां समूहो दैवं भिक्षाणां भैक्षं, युवतीनां यौवतम्। अत्र 'भगवति, न तु ढरामे' ( २१५२ ) इत्यस्य न प्राप्तिं मन्यन्ते, ततो न पुंवद्भाव इति

तेन पैङ्गाक्षीपुत्रो देवतास्य पैङ्गाक्षीपुत्रीयः। एवं तार्णवीय इति। अपांनपादपोनपाद्भ्यां घच्छरामौ तयोः पातः प्तृश्चेति वक्तव्यन्। अपांनपाद्देवतास्य अपांनप्त्रियः अपांनप्त्रीय इति। एवं अपोनप्त्रियः अपोनप्त्रीय इति च ॥

२४००। काल। सास्य देवतास्येत्यर्थे कालवाचिशब्देभ्यो भवार्थे ये प्रत्यया वक्ष्यन्ते तेऽत्रापि स्युः। किञ्च, भवार्थस्य जातादेरन्तःपातित्वाज्जातादौ ये वक्ष्यन्ते त एवेत्यर्थः। मासो देवतास्य मासिकमिति कालान्माधवठः। वसन्तो देवतास्य वासन्तमिति ऋतुनक्षत्राभ्याञ्चेति केशवणः। प्रावृट् देवतास्य प्रावृषेण्य इत्येन्यप्रत्ययान्तः साधुरिति। भवार्थानां वक्ष्यमाणत्वमाह–भवाथति। प्रोष्ठपदमहाराजाभ्यां माधवठ इति वक्तव्यम्। तेन प्रोष्ठपदो देवतास्य प्रौष्ठपदिक इति। एवं माहाराजिकश्चेति। तर्हि कथं महाराजिक इति महती राजिर्यस्येति पीताम्बरे कप्रत्ययात्। इति देवतार्थाः समाप्ताः ॥

२४०१। तस्य। अत्रार्थ इति विवरणम्। तथा च, तस्य समूह इत्यर्थे नाम्नो यथाविहितं प्रत्ययो भवन् ब्रह्मणि वर्तत इत्यर्थः। अत्रापि प्रभुश्चेति ज्ञेयं, सर्वत्रार्थमात्रनिर्देशे पभुत्वादिकमित्युक्तत्वात्। यत्तु प्रागुक्तं सामान्यतः केशवणो विशेषतस्तु विशेष इति तदपि न विस्मर्तव्यम्। तेन दीव्यतीतः प्रागर्थे केशवणस्याधिकारात्। किञ्च, सन्निहितत्वाद् यस्य समूह उच्यते, तस्मादेव प्रत्ययोत्पत्तिः। यदा तु सम्बन्धषष्ठ्या

काशिका ( ४।२।३८ )। पुम्वद्भावे यौवनमिति तु भागवृत्तिः। आदित्यम्, स्त्रैणम्, आग्नेयम् ॥ २४०१ ॥

२४०२। गोत्रादुक्षादेश्च वुर्नृसिंहः।

यादवकं, गार्गकम्, औक्षकम्, औष्ट्रकम्, औरभ्रकं, राजकं, राजन्यकं, राजपुत्रकं, वात्सकं, मानुष्यकम्, आजकं, वार्धकञ्च ॥२४०२

२४०३। केदारान्नृसिंह-यश्च।

---

सिद्धं देवानामित्यादि पदं समूह इत्यनेन सम्बन्धते, तदा देवानां समूह इत्यादिवाक्ये दैवमित्यादि। तद्धितस्य बाहुल्यात् पक्षे वाक्यं समासश्च पूर्ववदिति। एवं भिक्षाणां समूहः भैक्षं, युवतीनां समूहः यौवतम्। किञ्च, यूनो युवतिरित्यनेन निपातनात् युवतीत्यस्य वाच्यलिङ्गत्वसम्भवाद्भगवति नतु ढरामे इत्यनेन प्राप्तपुम्वद्भावं प्राचीनमतेनैव वारयति अत्रेति। भागवृत्तिमते तु पुम्वद्भावो भवतीत्याह—पुम्वद्भाव इति। एवं काशिका-भागवृत्त्योर्मतभेदमवलोक्य युवतेः पुम्वद्विकल्पश्चेति जुमरः। तथा च भाष्यम्। स्वरूपमभिनेपथ्यं कलाकुशलयौवनम्। यस्य पुण्यकृतः प्रैष्यं सफलं तस्य यौवनमिति। यस्य पुण्यकृज्जनस्य स्वानुरूपं साफल्य-भूषायुक्तं कलानिपुणं युवतिवृन्दं प्रैष्यमाज्ञाकारि तस्य यौवनं युवत्वं सफलमिति भाष्यपद्यार्थः। अत्रैव सासान्याधिकारे नृ काक क्षेत्र करीष अङ्गार सहस्र पद्धति दक्षिणा वर्मन् अथर्वन् गर्भिणी अर्हन्नित्यादयोऽपि ज्ञेयाः। विशेषे उदाहरणत्रयमाह—आदित्यमित्यादि आदित्यानां समूह इत्यादिवाक्ये यथाक्रमं ण्य-नृसिंहण-माधवढरामाः स्युः।

२४०२। गोत्रा। तस्य समूह इत्यर्थे गोत्रात् गोत्रप्रत्ययान्ता-दुक्षादेश्चोत्तरो नृसिंहो वुर्भवति। वुः अकः। यदूनां समूहः यादवकं 'प्राग्दीव्यतीयसर्वेश्वरावि'त्यनेनात्र गोत्रप्रत्ययमहाहरो न स्यात्। गर्गाणां समूहः गार्गकं विष्णुजनादिति यहरः। उक्ष्णां समूहः औक्षकमिति नान्तस्येति संसारहरः। एवं सूत्रस्थादिपदात् औष्ट्रकादयो नव॥

२३०३। केदा। तस्य समूह इत्यर्थे केदारादुत्तरो नृसिंह-यः

कैदार्यं, कैदारकम्, कैदारिकं चेष्यते। गणिकाया गाणिक्यं, कवचिनः कावचिकं साधुनी ॥ २४०३ ॥

२४०४। ब्राह्मण-मानव-वाड़व-पृष्ठेभ्यो यरामः।

ब्राह्मण्यम् ॥ २४०४ ॥

२४०५। ग्राम - गज - जन - बन्धु - सहायेभ्यस्ताप् लक्ष्म्याम्।

ग्रामता ॥ २४०५ ॥

२४०६। अह्नः खरामः क्रतुविषये।

क्रतौ अह्नां समूहः अहीनः पुंस्ययम्; अन्यत्र आह्नम्।

---

चकारान्नृसिंहबुरपि भवति। केदाराणि क्षेत्राणि तेषां समूहः कैदार्यं कैदारकमिति। कैदारिकमिति चेष्यत इति माधवठेन कैश्चिदिति शेषः। गणि तस्य समूह इत्यर्थे यथासङ्ख्यं नृसिहय-माधवठाभ्यां सह गणिकाया गाणिक्यं कवचिनः कावचिकमिति द्वे साधुनी भवतः॥

२४०४। ब्राह्म। तस्य समूह इत्यर्थे ब्राह्मणमानववाड़व-पृष्ठेभ्यो यरामः स्यात्। ब्राह्मणानां समूहः ब्राह्मण्यमिति। एवं मानव्यं वाड़व्यं पृष्ठ्यमिति। स्तोत्रार्थपृष्ठात् क्रतावित्येके। पृष्ठ्य षड़हो याग इति क्रमदीश्वरः॥

२४०५। ग्राम। तस्य समूह इत्यर्थे ग्रामादिषड़्भ्यस्ताप् स्यात्। ग्रामाणां समूहः ग्रामतेति आवन्तत्वाल्लक्ष्म्यां वर्तते। एवं गजता जनता बन्धुता सहायता॥

२४०६। अह्नः। क्रतुविषये तस्य समूह इत्यर्थेऽहन्-शब्दात् खरामो भवति। लिङ्गसूचनपूर्वकवाक्योदाहरणे आह—क्रताविति। क्रतुविषयादन्यत्र तु आह्नमित्यत्र केशवण एव सामान्यात्। किञ्च,

पर्शूनां पार्श्वं, केशस्य कैशिकं, कैश्यम्; अश्वस्याश्वीयमाश्वञ्च साधूनि ॥ २४०६ ॥

२४०७। पाश्यादयश्च लक्ष्म्यां यावन्तादयश्च।

साधवः। पाश्या, तृण्या, धूम्या, वात्या, याम्या खल्या, वन्या, रथ्या, गव्या, त्राप्, गोत्रा। कड्या आप् रथकड्या ॥२४०७॥

---

अह्लष्टखरामयोरेवेति नियमान्नात्र संसारहरः। 'व-म-सत्सङ्गहीनस्ये'-त्यनेन त्वरामहरः। पर्शु। तस्य समूह इत्यर्थे यद्यत्प्रत्ययेन इष्ट-सिद्धं भवति, तत्तत्प्रत्ययेन सार्धं पर्शुप्रभृतीनां कार्यिणां पार्श्वप्रभृतीनि साधूनि भवन्ति। न ह्येकस्य समूहः सम्भवतीति केशस्येत्यत्र अश्वस्येत्यत्र च जात्यपेक्षयैकवचनम्। तथाच, पर्शूनां पृष्ठास्थ्नां समूह इति निपातात् चूण् चणावितौ संसारहरश्चेति आदिसर्वेश्वर-स्येति वृष्णीन्द्रः पार्श्वम्। केशानां समूह इति निपातान्माधवठ नृसिंहयौ कैशिकं कैश्यमिति। अश्वानां समूह इति निपातनात् छरामकेशवणौ अश्वीयं आश्वमिति। अस्मिन्नधिकारे अनुदात्तादेरि-त्यनेन केशवणं विधाय दाण्डिनां समूहः दाण्डं वन्दिनां समूहः वान्दमिति यज्जुमरादिभिरुदाहृतं तत्त्वस्माकं सब्रह्मचार्यादिः समूहाद्यणि चेत्यनेन सब्रह्मचार्यादेरन्तर्गणत्वात् सिद्धम्। एवं खण्डिकादेश्चेत्य-नेनापि खण्डिकानां समूहः खाण्डिकं शूनां समूहः शौवं तथा यौगं वारत्रं हारिद्रं वाड़वं हालवन्दं भैक्षुकं शौकं औलूकं आह्लमिति च यदुदाहृतं तदप्यस्माकमौत्सर्गिककेशवणरामेण सिद्धमिति सूत्रकरणं नावश्यकमिति ॥

२५०७। पाश्या। वृत्तिमाह—यावेति। याप् अन्ते येषां ते यावन्ताः, ते आदिर्येषां ते यावन्तादयः। तस्य समूह इत्यर्थे यावान्तादयः सन्तः पाश्यादयश्च भवन्तो लक्ष्म्यां वर्तन्ते। वृत्तौ यावाद्यन्ता इति पाठश्चेत् तदा व्याख्याने कष्टाभावः। किम्वा योग-विभागात् यावन्तादयश्चेति पृथक् सूत्रं साधव इत्येतन्मात्रं वृत्तिः।

२४०८। इनीवन्ताश्च।

खलिनी, उलुकिनी, पद्मिनी ॥ २४०८॥

२४०९। चरणेभ्यो धर्मवत्।

काठकं, छान्दोग्यम्, आथर्वणम् ॥ २४०९ ॥

२४१०। अचितु-हस्ति-धेनुभ्यो नृसिंह-ठः।

---

तथा सति तस्य समूह इत्यर्थे पाश्यादयश्च यावन्तादयश्च साधवः सन्तः लक्ष्म्यां वर्तन्ते। पाशानां समूहः पाश्येति। एवं तृण्यादि-गव्यान्ताः। एते सर्वे यावन्तादेरादिपदेन त्राप् कड्त्रापोर्ग्रहणमित्याह—त्रावित्यादि। यावन्तादयश्चेत्यस्य वृत्तित्वपक्षे चशब्दस्य प्रयोजनाभावा-दनुक्तसमुच्चयार्थाङ्गीकारेण रथकड्त्रत्यस्मात् परत्र हल्या अङ्गार्या नड्त्रा पिटक्या पोट्रा गण्या इति षट्कमुदाहार्यम्। यावन्तेत्यस्यापि सूत्रत्वप्रक्षे तु परचकारस्योक्तसमुच्चयार्थत्वात् पूर्वचकारस्यानुक्तसमुच्च-यार्थत्वेन वन्येत्यस्मात् परस्मिन्नेव हल्यादिषट्कमुदाहार्यम्। अन्यथा चकारद्वयमनर्थकम् ॥

२४०८। इनी। इन् च ईप् च इनीपौ तावन्ते येषां ते इनी-वन्ताः। तस्य समूह इत्यर्थे इनीवन्ताश्च साधवो भवन्ति। खलानां समूहः खलिनी। तथा उलुकिनी पद्मिनी। एवमत्र कुन्दुमिनी नलिनी कुमुदिनीत्याद्यप्युदाहार्यम् ॥

२४०९। चर। तस्य समूह इत्यर्थे चरणेभ्यो धर्मवत् प्रत्ययाः स्युः। कठानां समूहः काठकमित्यत्र गोत्रचरणाभ्यां वुर्नृसिंह इति वुः। छान्दोग्यमित्यत्र छन्दोगौक्थिक यज्ञिक बह्वृच नटेभ्यो ण्यराम इति ण्यः। आथर्वणमित्यत्र आथर्वणिकस्येकलोपश्चेति केशवण इक-लोपश्च ॥

२४१०। अचि। तस्य समूह इत्यर्थे अचि तु हस्तिधेनुभ्यो नृसिंह-ठः

आपूपिकं, हास्तिकम्। चतुर्भुजान्तादिति—धैनुकम् ॥२४१०॥

उक्तं समूहे।

२४११। तदधीते वेद वा।

अत्रार्थे यथाविहितं स्यात्। व्याकरणमधीते वेद वा वैयाकरणः, ज्यौतिषः, छान्दसः ॥ २४११ ॥

---

स्यात्। अपूपानां समूहः आपूपिकम्। तथा हास्तिकम्। चतुर्भुजान्तादितीत्यनेन ठस्य कः, धेनुकमिति। प्रकरणमुपसंहरति उक्तमिति समूहेऽर्थे उदाहरणमुक्तमित्यर्थः ॥

२४११। तद। वृत्तिमाह—अत्रेति। अत्रार्थे तदधीते नाम्नो यथाविहितं प्रत्ययः स्यादित्यर्थः। अयमपि प्रभुश्च एवमुत्तरत्रापीत्युक्तत्वात्। किञ्च, अधीत इति कर्तरि विहिताच्युत-ते सिद्धम्। वेत्तिप्रभृतीनां वेदादयो न वेत्यनेन निपातनाद्वेदेत्यपि कर्तरि विहित-तिप् सिद्धम्। अतस्तत्तत्क्रियाकर्तैव प्रत्ययवाच्यः। यत्तु तच्छब्द-वाच्यं तस्मात् प्रत्ययः। अधिकारसूत्रे प्रथमनिर्दिष्टविष्णुभक्त्यन्तादित्युक्तेः। वाक्यद्वयस्य पृथक्करणात् तदध्ययनकर्तरि तद्वेदनकर्तरि च प्रत्ययो वाच्यः। नतु युगपत् तदध्ययनवेदनकर्तर्येव। वाक्यभेदेऽप्येकयोगकरणादध्यनसाहचर्याच्च यस्य वेदनमध्ययनञ्च सम्भवति तस्मादेव प्रत्ययः। अस्मादेव महापुरुषादेर्वाचकान्मुख्यात् सङ्कर्षणादिशब्दान्न प्रत्ययः। यतः सङ्कर्षणादेर्वेदनमेव सम्भवति नत्वध्यनम्। यद्युपचारात् सङ्कर्षणादिर्ग्रन्थे वर्तते तदा तदादेरध्ययनं वेदनञ्च सम्भवतीति गौणादपि प्रत्ययः स्यात् तेन सङ्कर्षणादिशब्देन तत्प्रतिपादकग्रन्थ उच्यते यदा तदा तमधीते वेद वेति सङ्कर्षण इत्यादि। वैयाकरण इति सामान्यतः केशवणः वृष्णीन्द्रस्थानचतुःसनादेशेत्यनेन ऐयादेशः। ज्योतिरधीते वेद वेति ज्यौतिषः विष्णुपदान्तत्वाभावादत्र न ऐयादेशः। छन्दोऽधीते वेद वेति छान्दस इति। एवमुत्सर्गसिद्धत्वात् यथासम्भवमन्येऽपि केशवणान्ता उदाहार्याः ॥

२४१२। क्रतुविशेषादुक्थ-यज्ञ-लोकायत-न्याय-न्यासेभ्यो लक्षण-कल्पसूत्रान्ताच्चाकल्पपूर्वात् माधवठः।

आग्निष्टोमिकः, औक्थिकः इत्यादि। तथा गौलक्षणिकः, प्राथमकल्पिकः, ब्राह्मसूत्रिकः। नेह—काल्पसूत्रः॥ २४१२॥

२४१३। विद्यान्ताच्च, न त्वङ्गक्षत्रधर्मत्रिपूर्वात्,

---

२४१२। क्रतु। तदधीते वेद वेत्यर्थे क्रतुविशेषात् उक्थादि-पञ्चभ्यश्च अकल्पपूर्वाल्लक्षणकल्पसूत्रान्ताच्च परो माधवठो भवति। अग्निष्टोममधीते वेद वेति आग्निष्टोमिक इति अग्निष्टुदादयो यज्ञे इत्यनेनात्र षत्वम्। अग्निष्टोम इति क्रतुविशेषस्तस्य कर्मस्वरूपत्वा-दध्ययनं न सम्भवति वेदनन्तु सम्भवत्येव तस्मात्तत्सहचरितग्रन्था-ध्यनद्वारेण तदध्ययनं तद्वेदनञ्च वक्तव्यम्। क्रतुविशेषादिति पृथङ्-निर्देशात् क्रतुविशेषमात्रवाचकस्यात्र ग्रहणं, तेन ज्यौतिष्टोमिक इत्यादिरपि। उक्थादेरुदाहरणमौक्थिक इति। उक्थमधीते वेद वेत्यर्थः पूर्ववत्। उपचारादत्रोक्थशब्द औक्थिक्यार्थ इति जुमरः। यद्यप्युक्थ-शब्दः सामविशेषमेवाभिधत्ते तथाप्यत्रौक्थिक्यार्थः। औक्थिक्यस्तु उक्थाख्यसाम्नो लक्षणग्रन्थः प्रतिपादितस्तस्मात् सामवाचके उक्थ-शब्दे नायं प्रत्ययोऽनभिधानादित्यभिप्राय इति तट्टीकाकृच्च। साम-विशेषवाचकस्याप्युक्थस्याध्ययनं वेदनञ्च सम्भवतीत्यस्माकं ग्रन्थ-कृता तु विशेषो न कृतस्तेनोभयत्रापि प्रत्ययः। इत्यादीत्यादिपदेन याज्ञिकः लौकायतिकः नैयायिकः नैयासिक इति। लक्षणान्तादेरुदाहरणं दर्श्यते—तथेति। गवां लक्षणं गौलक्षणं तदधीते वेद वेति गौलक्षणिकः। एवं प्राथमकल्पिकः ब्राह्मसूत्रिक इति। नेहेति कल्पपूर्वत्वादिति शेषः। यद्यपि काल्पसूत्र इत्येव प्रत्युदाहृतं तथापि अकल्पपूर्वादित्यस्य लक्षणान्त-कल्पान्तयोरपि विशेषणत्वात् काल्पलक्षणः काल्पकल्प इति चोदाहार्यम्। किम्वा अकल्पपूर्वादित्यस्य लक्षणान्तादेर्विशेषणत्वेऽपि शिष्टाचारात् काल्पसूत्र इत्येव प्रत्युदाहृतो नान्याविति॥

२४१३। विद्या। तदधीते वेद वेत्यर्थे विद्यान्ताच्च

आख्यानाख्यायिकेतिहासपुराणेभ्यश्च, वसन्तादिभ्यश्च ।

विद्यान्तात्—वैष्णवविद्यिकः । नेह—आङ्गविद्यः ; चातुर्विद्य इति तु कुशलार्थे । आख्यानेति—यावक्रीतिकः, वासवदत्तिकः, ऐतिहासिकः, पौराणिकः, वासन्तिकः ॥ २४१३ ॥

---

माधवठो भवति । अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तात्तु न भवति । आख्या । तदधीते वेद वेत्यर्थे आख्यानाख्यायिकेतिहासपुराणेभ्यश्च माधवठः स्यात् । वस । पूर्ववदर्थे वसन्तादिभ्यश्च माधवठो भवति । तत्र विद्यान्ताद्यथा—वैष्णवविद्यामधीते वेद वेति वैष्णवविद्यिकः । एवं शैवविद्यिकः, ब्राह्मविद्यिकः, सार्पविद्यिक इत्यादि । नेह निषेधादिति शेषः । अङ्गविद्या व्याकरणादि तदधीते वेद वेति सामान्यात् केशवणः आङ्गविद्यः । तथा क्षात्रविद्यः धार्मविद्यः एवं त्रैविद्य इति तु त्र्यवयवा विद्या त्रिविद्या इत्यस्मात् योगविभागादित्यनेन श्यामरामसिद्धात् केशवणं विधाय साधनीयम् अन्यथा 'त्रिराम्याश्चे'त्यनेन प्रत्ययस्य महाहरः स्यात् । ननु यद्यङ्गादिपूर्वादन्यस्माद्विद्यान्तान्माधवठस्तर्हि कथं चातुर्विद्य इत्याक्षेपे समादधाति—चातुर्विद्य इति । चतसृषु विद्यासु कुशल इति तद्धितार्थत्रिरामी । आख्यानेत्यस्य रूपाणि यथा—आख्यानाख्यायिकेत्यनयोः स्वरूपस्य न ग्रहणं किन्तु वाचकस्यैव सम्भवत्वात् । आख्यानं ग्रन्थान्तर्भूतमुपक्षेपागतस्य वर्णनं, आख्यायिका तु प्रबन्धविशेषः । यवक्रीतमधिकृत्य कृतमाख्यानं यावक्रीतं तदधीते वेद वेति यावक्रीतिकः । वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता तामधीते वेद वेति वासवदत्तिकः । यावक्रीतेत्यादेः प्रत्येकमप्याख्यानाख्यायिकात्वं न यथाक्रममित्यपि बोद्धव्यम् । उक्तञ्चान्यैः—यवक्रीतं वासवदत्ताञ्चाधिकृत्य कृतमाख्यानमाख्यायिका चेति । इतिहासमधीत इत्यादि ऐतिहासिकः । एवं पौराणिक । वसन्त ऋतुविशेषस्तस्याध्ययनं सम्भवति वेदनन्तु कष्टकल्पनया घटते तेन यो वसन्ते नियमेन पठ्यते यत्र वा वसन्तो वर्ण्यते स वसन्तसहचरितग्रन्थस्तधीत इत्यादि वासन्तिक इति । वसन्त वर्षा शरद् हेमन्त

२४१४। पदोत्तरपदिकः साधुः, शतपथिक-षष्टि-पथिकौ केशव-ठेन साधू।

२४१५। क्रमादिभ्यो वुः।

क्रमकः, पदकः। एवं शिक्षामीमांसोपनिषद्भ्यः॥ २४१५॥

२४१६। अनुब्राह्मणी नान्तः साधुः।

---

शिशिर प्रथमगुण चरमगुण आत्मगुण आथर्वण अथर्वन् पुनरुक्त चर्चा क्रमेतर श्लक्षण संहिता वृत्ति गण आयुर्वेद द्विपदा त्रिपदा ज्योतिष अनुपद अनुकल्प लक्ष लक्षण अनुषु सन्धातेति वसन्तादिर्गणः। किञ्चात्र वर्षा च शरच्चेति रामकृष्णं समासान्तारामप्रत्ययञ्च कृत्वा वर्षा-शरदेत्यरामान्तपाठो न्यासे व्यवस्थितः। शरदिति विष्णुजनान्तं शब्द-द्वयञ्च एतदन्येषां मतम्॥

२४१४। पदो। तदधीत इत्यादि पूर्वोक्तेऽर्थे केशव-ठेन सह पदोत्तरपदस्य पदोत्तरपदिकः साधुः। भाष्यवृत्तिकृद्भागवृत्तेरप्येतदभीष्टं जयादित्येन त्वेतदन्यथा व्याख्यातं पदशब्द उत्तरस्थितो यत्र तत् पदोत्तरपदं तेनैव पूर्वपदिक इति पदोत्तरपदिक इत्यप्युदाहृतञ्च। शत। तदधीत इत्यादि पूर्वोक्तेऽर्थे केशवठेन सार्धं शतपथषष्टि-पथयोः शतपथिकषष्टिपथिकौ साधू भवतः॥

२४१५। क्रमा। क्रमादिभ्यः पूर्वोक्तेऽर्थे वुर्भवति। क्रममधीते वेद वेति वुरकः क्रमकः। तथा पदमधीत इत्यादि पदकः। प्रकारान्त-रेण क्रमादिगणं दर्शयति–एवमिति। अत्र सामन्नित्यपि कश्चित् पठति॥

२४१६। अनु। पूर्वोक्तेऽर्थेऽनुब्राह्मणीति नान्तः साधुः। नान्त इति सर्वत्र पुस्तकेषु दृश्यते। किञ्चानुब्राह्मणीनन्त इति पाठश्चेत्तदा सुगमस्तथा सति ब्राह्मणाख्यो वेदैकदेशस्तत्सदृशो ग्रन्थोऽनुब्राह्मणशब्दे नोच्यते सादृश्येऽव्ययीभावात्। ततोऽनुब्राह्मणशब्दान्निपातादिन् प्रत्ययः।

२४१७। सर्वादेः सादेस्त्रिराम्याश्च महाहरः, प्रोक्त-प्रत्ययान्ताच्च, सङ्ख्याप्रकृतिसूत्राच्च कोद्धवात्।

सर्ववेदः, सवार्तिकः, पञ्चकल्पः। पाणिनिना प्रोक्तं पाणिनीयं, तदधीते वेद वा इति पाणिनीयः। अष्टकं पाणिनिसूत्रं, तदधीतेवे द वा अष्टकः॥ २४१७॥

तदधीते वेदेति निवृत्तम्।

२४१८। तेन दृष्टं साम।

अत्रार्थेऽपि यथाविहितं स्यात्। वशिष्ठेन दृष्टं साम वाशिष्ठम्; आग्नेयम्॥ २४१८॥

---

अस्त्यर्थेन इना सिद्धमिति चन्द्रेन यदुक्तं तदधीते वेद वेत्यर्थे उत्सर्ग-सिद्धकेशवणेन वाधा स्यात्॥

२४१७। सर्वा। तदधीते वेद वेत्यर्थे सर्वादेः सर्वपूर्वात् सादेः सरामपूर्वाच्च नाम्नः त्रिराम्याश्च सामान्यसिद्धकेशवणस्य महाहरः स्यात्। प्रोक्त। पूर्वोक्तेऽर्थे प्रोक्तप्रत्ययान्ताच्च नाम्नस्तद्विधकेशवणस्य महाहरो भवति। सङ्ख्या। सङ्ख्या प्रकृतिर्यस्य तत् सङ्ख्याप्रकृति तच्च तत् सूत्रञ्चेति सङ्ख्याप्रकृतिसूत्रं तस्मात् क उद्धवो यस्य तत् कोद्धवं तस्मात्। कोद्धवात् सङ्ख्याप्रकृतिपूर्वाच्च तद्विधकेशवणस्य महाहरः स्यात् पूर्वोक्तेऽर्थे। सर्ववेदमधीते वेद वेति सर्ववेदो वार्तिको ग्रन्थविशेषः तेन सह वर्तमानो यो ग्रन्थः स सवार्तिकः तमधीते वेद वेति सवार्तिकः। कल्पशब्दः कल्पपलक्षितग्रन्थविशेषः। पञ्च कल्पानधीते वेद वेति पञ्चकल्पः। अत्र तद्धितार्थे त्रिरामी। एवमेककल्पः द्विकल्प इत्यादि। शेषद्वयस्य वाक्योदाहरणे स्पष्टे। पाणिनीयमित्यादिवृष्णीन्द्राच्छरामः॥

२४१८। तेन। वृत्तिमाह—अत्रेति। तेन दृष्टे सामनि वाच्ये यत्तत्पदवाच्यं तस्मान्नाम्नो यथाविहितं प्रत्ययः स्यादिति निर्गलि-

२४१९। वामदेव्यं साधुः।

२४२०। दृष्टे सामनि जाते च केशवणो वा चिदिष्यते।

औशनं साम, औशनसं वा। शातभिषः शातभिषजो बालः ॥ २४२० ॥

२४२१। गोत्राद्वुर्नृसिंहः।

गार्गकम् ॥ २४२१

दृष्टं साम निवृत्तम्।

२४२२। तेन परिवृतो रथः।

अत्र च यथास्वं प्रत्ययाः स्युः। वस्त्रेण परिवृतो रथः वास्त्रः ॥ २४२२ ॥

---

तोऽर्थः। अयमपि प्रभुश्च। वाशिष्ठमिति सामान्यात् केशवणः। अग्निना दृष्टं साम आग्नेयम्। अत्राग्निकलिभ्यां माधवढ इति ढः ॥

२४१९। वाम। तेन दृष्टं सामेत्यर्थे यरामेण सह वामदेवस्य वामदेव्यं साधुः ॥

२४२०। दृष्टे। दृष्टे सामनि जाते चार्थे विहितकेशवणो वा चिदितीष्यते वक्तव्यमित्यर्थः। ऊशनसा दृष्टं सामेति औशनमित्यादिद्वयम्। एवं विंशतेस्तिहरश्चितीत्यनेन वैंशं वैंशतं वेति। प्रसङ्गाज्जातार्थेऽपि दर्शयति शातभिष इत्यादि शतभिषजो जात इत्यर्थः ॥

२४२१। गोत्रा। तेन दृष्टं सामेत्यर्थे गोत्रप्रत्ययान्तान्नृसिंहो वुर्भवति। गार्ग्येण दृष्टं सामेति वुः विष्णुजनात्तद्धितेति यरामहरः ॥

२४२२। तेन। वृत्तिमाहात्र चेति। अत्रार्थे च तत्पदवाच्यान्नाम्नो यथाविहितं प्रत्ययाः स्युः। अयमपि प्रभुश्च। वास्त्र इत्यत्र सामान्यात् केशवणः ॥

२४२३। पाण्डुकम्बलादिनिः।

पाण्डुकम्बली ॥ २४२३ ॥

२४२४। द्वैप-वैयाघ्रौ तच्चर्मणा परिवृते रथे साधू।

'शकटाद्यपि रथत्वेन मन्यन्ते' इति क्षीरस्वामी। द्वैपी गन्त्री, द्वैपमर्णं इति ॥ २४२४ ॥

परिवृतो निवृत्तः।

२४२५। नक्षत्रेण युक्तः कालः।

अत्रापि यथास्वम्। पुष्येण युक्तं पौषमहः। एवं माघी रात्रिः। कालः किम्? पुष्येण युक्तः शशी ॥ २४२५ ॥

---

२४२३। तेन। परिवृतो रथ इत्यर्थे पाण्डुकम्बलात् इन् भवति। पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बलीति ॥

२४२४। द्वैप। तयोर्द्वीपव्याघ्रयोश्चर्म तच्चर्म तेन परिवृते रथे वाच्ये केशवणेन सह द्वीपव्याघ्रयोर्द्वैपवैयाघ्रौ साधू भवतः। तच्चर्मणेत्यस्य साम्याय द्वीपव्याघ्रशब्दाभ्यां लक्षणया द्वीपचर्म-व्याघ्र-चर्मणी लक्ष्येते। किं वात्र निपातनादुभयत्र चर्मणोऽप्रयोगः। केशवण एवात्र निपातफलम्। ऐयादेशस्तु वृष्णीन्द्रस्थानचतुःसनेत्यनेन सिध्यत्येव। स्वमतं परेषां मतेन परिपुष्णाति शकटेति। शकटादि अपि रथत्वेन पण्डिता मन्यन्ते इति क्षीरस्वाम्याह। टित्वादीप् द्वैपीति। एतद्वाच्यञ्च दर्शयति—गन्त्रीत्यादि ॥

२४२५। नक्ष। अत्रापीति—विवरणम्। नक्षत्रेण युक्तः काल इत्यर्थे नक्षत्रवाचकाच्छब्दाद्यथायोग्यं प्रत्ययः स्यात्। अयमेव विभुश्च। पुष्येण युक्तमित्यत्र अह इति शेषः। तिष्यपुष्ययोर्नक्षत्राणीत्यनेन यरामहरः पौषमह इति। एवमिति। मघया युक्ता रात्रिः माघी रात्रिरित्यनयोः सामान्यात् केशवणः। एवमन्यान्यप्यूह्यानि। किञ्च,

२४२६। रामकृष्णाच्छराम वा।

राधानुराधीयः कालः, अहोरात्रो वा॥ २४२६॥

२४२७। पौषादयो मासे निपात्यन्ते।

पौषी पौर्णमास्यत्र पौषः। एवं माघाद्याः॥ २४२७॥

सामीप्यादत्र नक्षत्रशब्दश्चन्द्रवाचीति जुमरः। ननु कालस्य नित्यत्वात् विभुत्वाच्च * सर्वदैव नक्षत्रेण योगस्तत् कथं पौषादिभिः कालविशेषोऽभिधीयतामिति चोद्यपरीहारमाह–सामीप्यादिति। यदा यन्नक्षत्रसमीपवर्ती चन्द्रो भवति तदा तन्नक्षत्रनामा भवतीति। सामीप्यात् यथा,–गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गाशब्देन तत्समीपतीरमधीयते तथा नक्षत्रेणापि चन्द्रोऽभिधीयत इति विशिष्टसमीपवर्तिना चन्द्रमसा कालस्य योगः सम्भवति व्यभिचरति चेति। तट्टीका त्विति विशेषो गोस्वामिना न कृतः प्रयोजनावश्यकाभावात्। कालं किं किमर्थम्? कालविधायित्वाभावात् पुष्येणेति वाक्यस्यैव विश्रान्तिः॥

२४२६। राम। नक्षत्रेण युक्तः काल इत्यर्थे रामकृष्णसमासान्तात् नक्षत्रात् छरामो वा भवति। सन्निहितयोरेव नक्षत्रयोः रामकृष्णेऽयं विधिः न दूरान्तरितयोः यतस्तयोरेकस्मिन्नहनि चन्द्रमसापि सामीप्यं न घटते। राधा च अनुराधा च राधानुराधे ताभ्यां युक्तः कालस्तद्विशेषो वा राधानुराधीय इत्यादि। पक्षे सामान्यतः केशवण राधानुराध इत्यादि च॥

२४२७। पौषा। नक्षत्रयुक्ताया पौर्णमास्या अधिकारेण मासे वाच्ये पौषादयः प्रयोगा निपात्यन्ते। अह्नो रात्रेश्च यथा कालविशेषवाचिता तथा पौर्णमास्या अपीति वाक्येन प्रदर्शयति–पौषीति। पुष्येण युक्ता पौर्णमासी पौषी सा अत्र मासे इति निपातात् केशवणः अ-इद्वयस्येतीरामहरः पौष इति। एवमिति माघी पौर्णमास्यत्र माघः।

* सर्वमुर्तसंयोगित्वं विभुत्वमिति विभुत्वलक्षणम्।

२४२८। यत्र प्रकृतिलिङ्गस्य तद्वचनस्य च प्रत्यावृत्तिः, यत्र च हरितक्यादिषु तल्लिङ्गस्यैव, खलतिकादिषु वचनस्यैव, समासे तु बहुवचनविषयोत्तरपदसम्बन्धिनोरेव तयोः प्रत्यावृत्तिः, स महाहरः स्मरहरसंज्ञः।

लुवित्यन्ये। यथा वङ्गस्यापत्यानि बहूनि वङ्गाः, तेषां निवास इत्यर्थे केशवणस्य स्मरहरः। वङ्गा जनपदः। हरितक्याः फलानि

---

फाल्गुनी पौर्णमास्यत्र फाल्गुन इत्याद्या एकादश। सर्वत्रैव पौर्णमासीत्यस्याप्रयोगः पौष्यादेर्वाच्यत्वेन निर्देशात्। पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा। नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे इत्यमरः॥

२४२८। यत्र। इदानीं विशेषप्रतिपादकानि चत्वारि सूत्राणि युगपदाह—यत्रेत्यादिना। यत्र यत्र चैवम्विधानि कार्याणि स च स च स्मरहरसंज्ञ इत्यन्वयः। यत्रेति। यत्र महाहरे प्रकृतेर्लिङ्गस्य तद्वचनस्य प्रकृतेर्वचनस्यैकत्वादेश्च प्रत्त्यावृत्तिः पुनरावृत्तिर्भवति स महाहरः स्मरहरसङ्गः स्यात्। यत्र चेति। अत्र चशब्दस्यानुक्तसमुच्चयार्थत्वादुत्तरत्रापि यत्र यत्रेत्यध्याहार्यम्। यत्र पुनर्महाहरे हरीतक्यादिषु प्रयोगेषु तल्लिङ्गस्यैव हरितक्यादीनां लिङ्गस्यैव प्रत्यावृत्तिर्न वचनस्य स चापि महाहरः स्मरहरसङ्गः। खलेति। यत्र खलतिकादिषु तद्वचनस्यैव प्रत्यावृत्तिर्न तल्लिङ्गस्य स चापि स्मरहरसङ्गः। समेति। बहुवचनं विषयो गोचरो यस्य तद्बहुवचनविषयं तच्च तदुत्तरपदञ्चेति बहुवचनविषयोत्तरपदं तस्य सम्बन्धो विद्यते ययोस्तयोः, यत्र समासे तु सति बहुवचनविषयोत्तरपदसम्बन्धिनोरेव तयोर्लिङ्गवचनयोः प्रत्यावृत्तिः स इत्यादिः पूर्ववत्। अयं लुप्संज्ञ इत्यन्ये पण्डिता वदन्ति। यथेति। क्रमेण दर्श्यत इत्यर्थः। वङ्गा इति बहुषु लक्ष्मीविनेत्यनेन केशवणस्य महाहर इत्युक्तम्। तेषां वङ्गानां निवास इत्यर्थे

हरीतक्यः। तथा खलतिकस्य गिरेरदूरभवानि वनानि खलतिकम्। तथा मथुरा बहवः पञ्चालाश्च मथुरापञ्चालाः। नेह—पञ्चाल-मथुरे॥ २४२८॥

२४२९। स्मरहरार्थस्य विशेषणानि च तद्वत्।

पञ्चालाः सम्पन्ना बहुविप्राः॥ २४२९॥

२४३०। न तु जातेः।

---

वक्ष्यमाणकेशवणस्य जनपदे स्मरहरः स्यादित्यर्थः। वङ्गा जनपद इत्यत्र प्रकृतिलिङ्गवचनयोः प्रत्यावृत्तिः चातुर्थिकस्य स्मरहर इत्यधिकारादनन्तरं तन्नाम्नि देशे इति वक्ष्यमाणलक्षणेन जनपदवाच्ये यः स्मरहरो वक्ष्यते तेन स्मरहरेण वङ्गा इति जनपदस्य विशेषणमिति। हरीतक्याः फलानीत्यर्थे वक्ष्यमाणकेशवणस्य पुष्पफलमूलेषु स्मरहरो बहुलमिति स्मरहरः। हरितक्यः फलानि प्रकृतेर्लिङ्गस्यैवात्र प्रत्यावृत्तिर्न वचनस्य तथासति हरितकी स्यात्। अतो वाच्यानुरूपं वचनम्। तथेत्यारभ्य वनानीतिपर्यन्ते वाक्येऽपि अदूरभवनस्य चतुरर्थत्वात् चातुर्थिकस्य स्मरहर इत्यनेनैव केशवणस्य स्मरहरः, खलतिकं वनानि। प्रकृतेर्वचनस्यैवात्र प्रत्यावृत्तिर्न लिङ्गस्य तथा सति खलतिकः स्यात्, अतो वाच्यानुरूपं लिङ्गम्। तथेति एका मथुरा च वङ्गा इतिवज्जनपदार्था बहवः पञ्चालाश्चेति रामकृष्णे सति मथुरापञ्चाला इत्यत्र पञ्चाला इत्युत्तरपदस्य तन्नाम्नि देशे इत्यनेन चातुर्थिकस्मरहरतया बहुवचनविषयात् तल्लिङ्गवचनयोः प्रत्यावृत्तिः। नेहेत्यत्र उत्तरपदस्य बहुवचनविषयात्वाभावादिति शेषः। पञ्चालाश्च मथुरा चेति पञ्चालशब्दस्य जनपदार्थत्वादेकत्वे एव बहुवचनत्वात् मथुरया सह समासे द्वित्वमेव सङ्गच्छत इति पञ्चालमथुरे इत्यत्र द्विवचनम्॥

२४२९। स्मर। स्मरहरार्थस्य विशेषणानि च तद्वत् स्मरहरार्थवद्भवन्ति। पञ्चालाः देशः कथम्भूताः सम्पन्नाः प्राप्ताः। पुनः कथम्भूताः बहुविप्राः बहवो विप्रा यत्र तथाभूताः॥

२४३०। नतु। जातेः स्मरहरार्थायाः विशेषणानि तद्वन्नतु

पञ्चाला जनपदो रमणीयः ॥ २४३० ॥

२४३१। मनुष्यस्मरहरे च निषेधः।

चञ्चामनुष्यो दर्शनीयः। चञ्चा दर्शनीया इति मा भूत्। अत्रैव प्रतिकृतौ कस्य स्मरहरः। तदेवं स्थिते ॥ २४३१ ॥

२४३२। स्मरहरः कालाविशेषे प्रागुक्तनक्षत्र-प्रत्ययस्यैवेति वर्त्म।

अद्य पुष्यः, अद्य विशाखा। पुष्यादियुक्तं कालमात्रमत्राभिधीयते, न तु तद्विशेषः। कालविशेषे तु—श्रावणी रात्रिः ॥२४३२॥

२४३३। कुमारीमूढ़वान् कुमारः कौमारस्तत्-कुमारेणोढ़ा सा च कौमारी।

---

भवन्ति। पूर्वेण प्राप्ते निषेधोऽयम्। पञ्चाला इत्यनेन जनपदजातिरुच्यते इति। रमणीय इत्यत्र पञ्चाला इतिवन्न बहुवचनम्॥

२४३१। मनुष्य। मनुष्यवाच्ये स्मरहरे च सति विशेषणानां विशेषवत्त्वस्य निषेधः स्यात्। चञ्चा तृणप्रतिमा सा इवेति इवार्थे कः प्रकृतौ संज्ञायाञ्चेति कः। मनुष्ये तस्य स्मरहर इति चञ्चामनुष्यो दर्शनीय इत्यत्र दर्शनीये चञ्चावल्लिङ्गं न स्यात्। तदेव—स्पष्टयति चञ्चेति। दर्शनीया इति प्रयोगो नाभूदित्यर्थः। प्रतिकृतौ विषये कप्रत्ययस्यैव स्यरहर इत्याह—अत्रेति। तदिति तत्तस्मादेवम्प्रकारेण स्थिते स्मरहरे इत्यर्थः॥

२४३२। स्मर। कालाविशेषे वाच्ये प्रागुक्तनक्षत्रप्रत्ययस्यैव स्मरहरः स्यादिति। वर्त्म पन्था इत्यर्थः। प्रागुक्तोऽत्र केशवण एव नान्यः। अद्येत्यादिः स्पष्ठम्। कालाविशेषे विधानात् कालविशेषे तु न स्यादित्याह—कालेति। तेन श्रावणीत्यत्र स्मरहरो न स्यात्॥

२४३३। कुमा। अपूर्वपतिं कुमारीमूढ़वान् यः कुमारः स

अत्र द्वयं साधुः। 'उपलम्भ्यामपश्यन्तः कौमारीं पततां वरः' इति भट्टिः ( ७।९२ ) ॥ २४३३ ॥

२४३४। तत्र भुक्तोत्सृष्टमित्यर्थे पात्रात्।

अण्णेव। शरावे भुक्तोत्सृष्टं शारावम्। व्रतार्थं स्थण्डिले शेते स्थाण्डिलः अणन्त साधुः ॥ २४३४ ॥

२४३५। तत्र संस्कृतं भक्ष्यश्चेत्।

अत्रापि यथास्वम्। भ्राष्ट्रे संस्कृता भ्राष्ट्रा अपूपाः ॥२४३५॥

२४३६। उख्यादयश्च।

---

कौमारः। तत्कुमारेण तथाविधां कुमारीमूढ़वता कुमारेण उढ़ा या कुमारी सा च पुनः कौमारी। वृत्तिमाह–अत्रेति। अत्रार्थे कुमारकुमार्योः केशवणेन सार्धं कौमारकौमारीति द्वयं साधुः स्यादित्यर्थः। तथा च भट्टौ दृश्यते ( ७।९० )। उपलम्भ्यामित्यस्मात् पूर्वं पद्यार्द्धन्त्वेवम्। 'म्रियामहे न गच्छामः कौशल्यायनिवल्लभाम्।' रावणेन हृतायां सीतायां श्रीरामस्योन्मादप्रश्नोऽयम्। पततां वर हे जटायो ॥

२४३४। तत्र। तत्र भुक्तोत्सृष्टमुद्धृतमित्यर्थे पात्रवाचकान्नाम्नः अण् स्यात्। अणिति विवरणम्। भुक्तोच्छिष्टमुद्धृतमुच्यत इत्यन्ये। शरेति स्पष्टम्। व्रतार्थं स्थण्डिले भूमौ शेते इत्यर्थेऽणा सह स्थण्डिलस्य स्थाण्डिलः साधुः स्यात् ॥

२४३५। तत्र। संस्कृतं सत उत्कर्षाधानम्। वृत्तिमाह–अत्रेति। तत्र संस्कृतं भक्ष्यञ्चेदित्यर्थे यत्तच्छब्दनिर्दिष्टं तस्माद्यथास्वं प्रत्ययः स्यात्। खवविषदमभ्यवहार्यं भक्ष्यमिति जयादित्यादिभिरत्र रूढ़िरूपमुक्तम्। तत्र भृष्टमुद्गादि खवम् अभ्यवहार्यम् ओदनादि विषदमभ्यवहार्यम्। भ्राष्ट्र इति वाक्योदाहरणे स्पष्टे ॥

२४३६। उख्य। वृत्तिमाह–अत्रेति। अत्रोक्तार्थे उख्याद्यौदश्वित्कान्ता इत्येते षट् यरामादिभिश्चतुर्भिर्यथायोग्यं साधवो भवन्ति।

अत्र उख्य-शूल्य-क्षैरेय-दाधिक-औदश्वित-औदश्वित्का: इत्येते यरामेण माधवढराम-ठरामाभ्यां केशवणरामेण च यथास्वं साधवः ॥ २४३६ ॥

२४३७। सोऽत्र वर्तत इति पूर्णमासात् केशवण:, अन्यायादेर्माधव-ठ:।

पौर्णमासी तिथि:, आन्यायिक:, औत्पातिक:, नावयज्ञिक: ॥ २४३७ ॥

२४३८। पितृव्यादय: पितृभ्रात्रादौ।

साधवः ॥ २४३८ ॥

---

केशवणरामेण चेत्यत्र चशब्दात् माधवठरामेणापि सहेति योज्यम्। एषु सर्वत्रैव तत्र संस्कृतं भक्ष्यमिति वाक्यं योज्यम्। किञ्च, क्षीरे संस्कृतस्य खवविषदत्वं नास्तीति अभ्यवहरणीयमात्रभक्ष्यमिति जयादित्यादिभि: क्षैरेयी यवागूरित्युदाहृतम्। दाधिकमिति तेन संस्कृतमित्यनेनापि सिद्धं भविष्यति, एतदर्थे भवनार्थन्त्वत्र दर्शितम्। दध्न्यधिकरणे यद्द्रव्यान्तरेण संष्क्रियते तदनेनोच्यते इति न्यासश्च। दध्नि संस्कृतमित्यर्थविवक्षायां टण् मा भूदित्याहुराचार्या:, किन्तु न किञ्चिद्दध्नि संष्क्रियमाणं प्रसिद्धमस्ति यस्याभिधानं दाधिकं भवेदिति स्पष्टार्थं वचनमिति भागवृत्ति:। औदश्वित्क इति तान्ताच्चेति ठस्य क: ॥

२४३७। सोऽत्र। अत्र स वर्तते इत्यर्थे पूर्णमासान्नाम्न: केशवण: स्यात्। सोऽत्र वर्तत इत्यर्थे अन्यायादेरुत्तरो माधवठ: स्यात्। पूर्णो मासोऽत्र वर्तते पौर्णमासीति, अन्यायोऽत्र वर्तते आन्यायिक इति, उत्पातोऽत्र वर्तते औत्पातिक इति, नवयज्ञोऽत्र वर्तते नावयज्ञिक इत्यादि:। नावयज्ञिक इत्यत्र नारयज्ञिक इति क्वचिद्दृश्यते, तदपि नासङ्गतं सम्भवत्वात् ॥

२४३८। पितृ। पितृभ्राता आदिर्यस्य स पितृभ्रात्रादिस्तदादौ

२४३९। अविषोढ़ाविदूषाविमरीषाण्यविदुग्धे। साधूनि॥ २४३९॥

२४४०। तिलपिञ्ज-तिलपेजौ निष्फलतिले। साधू॥ २४४०॥

२४४१। तस्य विषये देशे। अत्र यथास्वम्। यदूनां विषयो देशो यादवः॥ २४४१॥

२४४२। राजन्यादिभ्यो वुर्नृसिंहः। राजन्यको मानवको देशः॥ २४४२॥

---

वाच्ये यथास्वं प्रत्ययेन पित्रादेः पितृव्यादयः साधवो भवन्ति। पितुर्भ्रातित्यर्थे पितृशब्दान्निपातात् व्यः पितृव्य इति। आदिपदात् पितुः पितेत्यर्थे तच्छब्दात् तद्वदामहच् पितामहः। प्रपितामहस्तु प्रकृष्टः पितामह इति मध्यपदलोपिसमाससिद्धः। तथा मातुर्भ्रातित्यर्थे मातृशब्दादुलच् मातुल इति मातुः पितेत्यर्थे पूर्ववदामहच् मातामह इति। प्रपितामहवत् प्रमातामहोऽपि। मातुर्मातामहाद्येवमित्यमरेणाप्युक्तम्॥

२४३९। अवि। अविमषस्तद्दुग्धे वाच्येऽविशब्दस्य षोढ़दूषमरीषैः सार्धं क्रमेण अविषोढ़ादीनि त्रीणि साधूनि भवन्ति॥

२४४०। तिल। फलरहिततिले वाच्ये तिलशब्दस्य पिञ्जपेजाभ्यां सह तिलपिञ्जेत्यादिद्वयं साधु भवति॥

२४४१। तस्य। वृत्तिमाह—अत्रेति। अत्रार्थे तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात्। वाक्योदाहरणे स्वयमाह—यदूनामिति॥

२४४२। राज। तस्य विषये देशे राजन्यादिभ्यो नृसिंहो

२४४३। सोऽस्यादिरिति छन्दसः प्रगाथेषु।

अत्र च यथास्वम्। प्रगाथो मन्त्रविशेषः। पङ्क्तिरादिरस्य प्रगाथस्य पाङ्क्तः प्रगाथः। एवमानष्टुभः ॥ २४४३ ॥

२४४४। छन्दसः स्वार्थे।

त्रिष्टुवेव त्रैष्टुभम्। एवं जागतम्। ब्रह्मण्येवाभिधानम् ॥२४४४

२४४५। तदस्येत्यर्थे प्रयोजनाद्योद्धृभ्यश्च युद्धे।

अत्र च यथास्वम्। सीता प्रयोजनमस्य सैतं युद्धम्। एवं

---

वुर्भवति। राजन्यस्य विषयो देशः राजन्यकः। मानवस्य विषयो देशः मानवक इति ॥

२४४३। सोऽस्य। अत्रेति विवरणम्। 'तच्छ'ब्देन छन्दविशेष उच्यते, 'इदम्' शब्देन तु प्रगाथविशेषः। एवं सति स-छन्दोविशेषोऽस्य प्रगाथविशेषस्य आदिरित्यर्थे छन्दोविशेषवाचकादुत्तरो यथास्व प्रत्ययः स्यात्, प्रगाथविशेषेषु वाच्येषु। प्रगाथशब्दस्य दुष्पष्टत्वात् स्वयं स्पष्टयति-प्रगाथ इति। यत्र प्रग्रन्थनात् प्रगानाद्वा द्वे ऋचौ तिस्र क्रियेते स मन्त्रः प्रगाथ इत्यर्थः। पङ्क्तिरित्यादिः स्पष्टम्। दशाक्षरैर्वर्णितपादेन पङ्क्तिरित्यादि छन्दोग्रन्थेऽनुसन्धेयम्। पाङ्क्त इत्यत्र सामान्यतः केशवणः। एवमुत्तरत्रापि। एवमिति अनुष्टुप् आदिरस्य प्रगाथस्य आनष्टुभः प्रगाथ इति ॥

२४४४। छन्द। स्वार्थेऽर्थे छन्दसश्छन्दोवाचकात् पूर्ववत् केशवणः स्यात्। त्रिष्विति स्पष्टम्। इतः परं ये ये वाक्योदाहरणे ग्रन्थकृद्दास्यति ते ते मयात्र नोत्थाप्येते इति ज्ञेयम्। जगत्येवेति जागतम्। एतद्द्वयस्य ब्रह्मण्येव वर्तनमित्याह-ब्रह्मेति ॥

२४४५। तद। वृत्तिमाह-अत्रेति। 'तच्छ'ब्देन प्रयोजनमुच्यते 'इदम्' शब्देन युद्धं तथा तच्छब्देन योद्धार 'इदम्' शब्देन युद्धम्। तत् प्रयोजनमस्य युद्धस्येत्यर्थे तथा ते योद्धारोऽस्य युद्धस्येत्यर्थे च सति

सौभद्रं, स्त्रैणं, पौंस्नम्। भरता योद्धारोऽस्य भारतः संग्रामः॥ २४४५॥

२४४६। तदस्यां प्रहरणमिति क्रीड़ायां णरामः।

दण्डः प्रहरणमस्यां क्रीड़ायां दाण्डा क्रीड़ा। एवं मौष्टा पाल्लवा॥ २४४६॥

२४४७। सास्यां क्रियेति घणो णरामः।

श्येनपातः क्रिया अस्यां श्यैनम्पाता मृगया। तैलम्पाता स्वधा अनयोर्मुम् च। मौषलपाता भूमिः॥ २४४७॥

---

युद्धे वाच्ये प्रयोजनवाचकात् योद्धृवाचकेभ्यश्च यथायोग्यं प्रत्ययाः स्युः। सुभद्रा प्रयोजनमस्य सौभद्रम्। एवं रौक्मिणमित्याद्यपि यथायथमूह्यम्। सामान्यादेषु केशवणः। स्त्री प्रयोजनमस्येति पुमान् प्रयोजनमस्येति स्त्रैणमित्यादिद्वयं क्रमेण। विशेषादत्र तु 'स्त्रीपुंसाभ्यामि'त्यनेन नृसिंहणस्नौ। एवं हालेयं, कालेयम्। उत्तरसूत्रस्य वाक्योदाहरणे आह—भरतेति। एवं भैष्मः, भैमः, आर्जुन इत्यादिः॥

२४४६। तद। क्रीड़ायां वाच्यायां तत् प्रहरणमस्यामित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो णरामो भवति। मुष्टिः प्रहरणमस्यां मौष्टा, पल्लवः प्रहरणमस्यां पाल्लवा। याष्टा, शाक्ता इत्यादि॥

२४४७। सा। सा क्रियास्यामित्यर्थेऽन्यपदार्थे वाच्ये घणो घणन्तात् णः स्यात्। श्येनः पक्षिविशेषः तस्य पातः पतनं श्येनपातः स एवात्र क्रिया पतधातोर्घणन्तत्वात्। आदिसर्वेश्वरस्येति वृष्णीन्द्रः। मृगयेति मृगान्वेषणा। तिलपातः क्रिया अस्यामिति तैलम्पाता। स्वधेति यज्ञार्हो मन्त्रविशेषः। स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधेत्युक्तेः। प्रयोगद्वयेऽत्र मुमागमश्चेत्याह—अनेति। अनयोर्मुम् चेति तद्धितबाहुल्यादिति शेषः। तच्च पूर्वपदात् सर्वैरिष्टम्। मुषलपातः क्रिया अस्यां मौषलपातेति॥

अथ चातुर्रथिकाः

२४४८। तदस्मिन्नस्तीति देशे तन्नाम्नि।

अत्र च यथास्वम्। पर्वता अस्मिन् सन्ति पार्वतो देशः ॥२४४८॥

२४४९। तेन निर्वृत्तः।

अत्र च यथास्वम्। कुशाम्बेन निर्वृत्ता कौशाम्बी पुरी ॥२४४९॥

२४५०। तस्य निवासः।

अत्र च यथास्वम्। शिवानां निवासः शैवः॥ २४५०॥

२४५१। तददूरभवश्च।

अत्र च यथास्वम्। यमुनाया अदूरभवो यामुनः। एतेऽर्थाः प्रभव उक्तेष्वेतेषु चतुर्षु वक्ष्यमाणा ज्ञेया इत्यर्थः॥ २४५१॥

---

अथेति। चतुर्षु अर्थेषु भवाश्चातुरर्थिकाः। अथानन्तं चातुरर्थिकाः प्रत्यया दर्श्यन्त ईत्यर्थः॥

२४४८। तद। अत्रेति विवरणम्। तदस्मिन्नस्तीत्यर्थे यद्-यस्मिन्नस्ति तन्नाम्नि देशे वाच्ये तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात्॥

२४४९। तेन। अत्रेति प्राथमिकसूत्रात् परं सर्वत्रैव विवरण-मिति बोद्धव्यम्। तेन निर्वृत्त इत्यर्थे यस्मिन कस्मिन् वाच्ये तच्छब्द-निर्देशान्नाम्नो यथास्वं प्रत्ययः स्यात्। निर्वृत्त इति निर्मितो निष्पन्न इति यावत्॥

२४५०। तस्य। तस्य निवास इत्यर्थे यस्मिन् कस्मिन् वाच्ये तच्छब्दनिर्दिष्टात् यथास्वं प्रत्ययो भवति॥

२४५१। तद। तस्यादूरभवश्चेत्यर्थे यस्मिन् कस्मिन् वाच्ये यथास्वं प्रत्ययः स्यात्। एष्वर्थेषु सर्वत्र सामान्यतः केशवणों विशे-षात्तु विशेष एव। एतानर्थानेकत्रैवाधिकरोति एत इति। एते

२४५२। अरीहणादेर्वुर्नृसिंहः।

अरीहणोऽस्मिन्नस्तीत्याद्यर्थे चतुष्टयेऽपि आरीहणकम् ॥२४५२॥

२४५३। कृशाश्वादेश्छो नृसिंहः।

कार्शाश्वीयम् ॥ २४५३ ॥

२४५४। ऋष्यादेः कः।

ऋष्यकः ॥ २४५४ ॥

---

चत्वारोऽर्थाः प्रभुनामानो भवन्ति। प्रत्ययोत्पत्तिव्यवस्थां निगमयति–उक्तेष्विति ॥

२४५२। अरी। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये अरीहणादेरुत्तरो नृसिंहो वुर्भवति। प्रथमस्य वाक्योदाहरणे दर्शयति–अरीति। अरीहण द्रुघण खदिर भगण चन्दन उलुन्द साञ्चरायण क्रौष्टायण भास्त्रायण प्राश्यायन शौत्रायण त्रैगर्तायन विपथ विपाश उद्दण्ड उदञ्चन खाड़ायन खाण्डुर वीरण काश कृत्स्न जाम्बत शिंशपा किरण रैवत विल्व वैमतायन सौमायन शाण्डिल्यायन सुयज्ञ शिरीष वधिर चाप श्वासेत्यरीहणादिश्चतुस्त्रिंशत् ॥

२४५३। कृशा। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये कृशाश्वादेर्नृसिंहश्छो भवति। कृशाश्वोऽस्मिन्नस्तीत्याद्यर्थे कार्शाश्वीयमिति। कृशाश्व अरिष्ट अरण्य वेश्मन् विशाल रोमक शयन कूट लोमश वर्चस् सुकर पूतन सदृश सुगर सुख धूम अजिर अविनत विनत अरुस् शायस मौद्गल्येति कृशाश्वादिर्द्वाविंशः ॥

२४५४। ऋष्या। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये ऋष्यादेरुत्तरः कः स्यात्। ऋष्योऽस्मिन्नस्तीत्याद्यर्थचतुष्टये ऋष्यक इति। ऋष्य न्यग्रोध शर निलीन विधान वितान विनद्ध परिगूढ़ उत्तराश्मन् स्थूलवाहु खदिर शर्करा अन्तर परिवेश खण्डू वीरणेति ऋष्यादिः षोड़शः ॥

२४५५। कुमुदशर्करादेष्ठरामः।

कुमुदिकं, शर्करिकम् ॥ २४५५ ॥

२४५६। काशादेरिलः।

काशिलम् ॥ २४५६ ॥

२४५७। तृणादेः सः।

तृणसः, नड्सा नदी ॥ २४५७ ॥

२४५८। प्रेक्षादेरिनिः।

प्रेक्षी ॥ २४५८ ॥

---

२४५५। कुमु। कुमुदश्च शर्करा च कुमुदशर्करे ते आदौ यस्य स कुमुदशर्करादिस्तस्मात् तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये ठरामो भवति। वक्ष्यमाणकुमुदादिभ्यो माधवटो भविष्यति तद्भेदार्थमिदम्। कुमुदोऽस्मिन्नस्तीत्याद्यर्थचतुष्टये कुमुदिकम् एवं शर्करिकम्। सूत्रस्थादिपदात् गर्त न्यग्रोध इक्कट कङ्कट वीज वल्वज परिवाद परिवाप अश्वत्थ शिरीष सुराज्ञ पलाश कूप विकङ्कतेति चतुर्दशो गृह्यते॥

२४५६। काशा। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये काशादेः पर इलः स्यात्। काशोऽस्मिन्नस्तीत्याद्यर्थचतुष्टये काशिलमिति। काश वास पलाश अश्वत्थ पीयूक्षा विष तृण नड़ वल कर्दम कर्वूर कण्टक गृहा इति काशादिस्त्रयोदशः॥

२४५७। तृणा। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये तृणादेरुत्तरः सः स्यात्। तृणमस्मिन्नस्तीत्याद्यर्थचतुष्टये तृणस इति। एवं नड़सा लक्ष्म्यामत्राप्। तृण नड़ पर्ण वर्ण स्वर्ण छल वल जलेत्यष्टौ तृणादिः॥

२४५८। प्रेक्षा। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये प्रेक्षादेः पर इनिर्भवति। प्रेक्षास्मिन्नस्तीत्याद्यर्थचतुष्टये प्रेक्षीति।

२४५९। अश्मादिभ्यो रः।

अश्मरः ॥ २४५९ ॥

२४६०। सख्यादेर्माधव-ढः।

साखेयम् ॥ २४६० ॥

२४६१। सङ्काशादेर्ण्यः।

साङ्काश्यं काम्पिल्यम् ॥ २४६१ ॥

२४६२। बलादेर्यः।

वल्यम् ॥ २४६२ ॥

---

प्रेक्षा फलका बन्धुका ध्रुवका धूरका क्षिपका न्यग्रोध इक्कट कङ्कट प्रकटेति दश प्रेक्षादिः ॥

२४५९। अश्म। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्येऽश्मादेरुत्तरो रो भवति। अश्मास्मिन्नस्तीति पूर्ववत्। अश्मर इति लक्ष्म्यान्तु अश्मरा। रोगे पुनरश्मरी गौरादित्वात्। अश्मन् ओष यूथ मीन दर्भ वृन्द गूड़ खण्ड काण्ड नख शिखेत्येकादशोऽश्मादिः ॥

२४६०। सख्या। उक्तार्थचतुष्टये पूर्ववदवाच्ये सख्यादेर्माधवढः स्यात्। सखास्मिन्नस्तीत्याद्यर्थचतुर्थेऽपि साखेयमिति। सखि सखिदत्त वाग्दत्त गोभिल भल्लपाल चक्र चक्रवाक छगल अशोक चीर वीर शीहर सरस समर सुरसेति सख्यादिः पञ्चदशः ॥

२४६१। सङ्का। तदस्मिन्नस्तीत्यादि पूर्वार्थे तन्नाम्नि देशादौ वाच्ये सङ्काशादेरुत्तरो ण्यरामः स्यात्। सङ्काशोऽस्मिन्नस्तीत्याद्यर्थचतुष्के साङ्काश्यमिति, एवं काम्पिल्यम्। सङ्काश कम्पिल कश्मीर कर्मार सूरसेन सूर्प ( यूप ? ) अङ्ग नासा अश्मन् कूट अलीन पुलिन तीर्थ अगस्ति विकर्ण विकर नासिका सगदिन् सुगदिन् कलिर खड़िर बूड़ार मञ्जार कोविदारेति सङ्काशादिश्चतुर्विंशतिः ॥

२४६२। बला। तदस्मिन्नस्तीत्यादिचतुर्ष्वर्थेषु तन्नाम्नि देशादौ

२४६३। पक्षादेर्माधव-फः।

पाक्षायणः ॥ २४६३ ॥

२४६४। कर्णादेः फिर्नृसिंहः।

कार्णायिणिः ॥ २४६४ ॥

२४६५। सुतङ्गमादेरिर्नृसिंहः।

सौतङ्गमिः ॥ २४६५ ॥

२४६६। प्रगदिनादेर्ण्यः।

प्रागदिन्यः ॥ २४६६ ॥

---

वाच्ये बलादेरुत्तरो यो भवति। बलोऽस्मिन्नस्तीत्याद्यर्थे बल्यमिति। बल पुल उल कुल हल दुल नल सुख नद वनेति बलादिर्दश ॥

२४६३। पक्षा। तदस्मिन्नस्तीत्याद्यर्थे पूर्ववद्देशादौ वाच्चे पक्षादेर्माधवफो भवति। पक्षोऽस्तीत्याद्यर्थचतुष्के पाक्षायण इति। पक्ष ओष अशुक अलिक चित्र अतिश्व कुम्भ शीकर शकर समन रोमन् लोमक लोमश हंसक सुवर्णक हस्तिविलेति षोड़शः पक्षादिः ॥

२४६४। कर्णा। तदस्मिन्नस्तीत्यादिपूर्ववदर्थे वाच्ये च कर्णादेरुत्तरो नृसिंहः फिः स्यात्। कर्णोऽस्मिन्नस्तीत्याद्यर्थचतुष्टये कार्णायणिरिति। कर्ण अर्क वसिष्ठ वेश शप द्रुपद पाञ्चजन्य स्फिक कुलिश कुम्भी अण्डीवत् जीवेति द्वादशः कर्णादिः ॥

२४६५। सुत। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि देशादौ वाच्ये सुतङ्गमादेः परस्मिन् नृसिंह-इर्भवति। सुतङ्गमोऽस्मिन्नस्तीत्याद्यर्थे सौतङ्गमिरिति। सुतङ्गम मुनिचित्त विप्रचित्त महाचित्त महापुत्र श्वेत गदिक शुद्ध शुक्र विग्र वीजवापिन् श्वन् अर्जुन अजिरेति सुतङ्गमादिश्चतुर्दशः ॥

२४६६। प्रग। तदस्मिन्नस्तीत्यादिपूर्वोक्तेऽर्थे वाच्ये च प्रग-

२४६७। वराहादेर्नृसिंह-कः।

वाराहकम् ॥ २४६७ ॥

२४६८। कुमुद-सोमवारादिभ्यो माधव-ठः।

कौमुदिकं, सौमवारिकं, गौमठिकम् ॥ २४६८ ॥

---

दिनादेरुत्तरो ण्यरापः स्यात्। प्रगदिनोऽस्मिन्नस्तीत्याद्यर्थे प्रागदिन्य इति, एवं सौपन्थ्यः। किन्तु सुपन्थशब्दस्याभावात् सर्वैरेवास्मिन् सुपथशब्दस्य थात् पूर्वं नरामागमो मन्यते, सुपन्थशब्दोऽस्तीत्यपि केचित्। प्रगदिनादिराकृतिगणो ज्ञेयः ॥

२४६७। वरा। तदस्मिन्नस्तीत्यादिपूर्ववदर्थे वाच्ये च वराहादेर्नृसिंहकः स्यात्। वराहोऽस्मिन्नस्तीद्यर्थे वाराहकमिति। वराह पलाश शिरीष विनद्ध विदग्ध विजग्ध विलग्न विभग्न स्थूल बाहु खदिर शर्करेति द्वादशो वराहादिः ॥

२४६८। कुमु। तदस्मिन्नस्तीत्याद्यर्थचतुष्टये पूर्ववद्वाच्ये कुमुदात् सोमवारादिभ्यश्च माधवठो भवति। कुमुदमस्मिन्नस्तीत्याद्यर्थे कौमुदिकमिति। एवं सौमवारिकम्। तथादिपदात् गौमठिकम्। सोमवार गोमठ रथकार दासग्राम पाश्यायन अश्वत्थ शाल्मली मुनिस्थल कूटन्नट कर्ण शिरीष शर्करेति द्वादशः सोमवारादिः। उदन्तादसुवास्त्वादेर्णट्। तथा विपाशोत्तरकूपे चेति जुमरसूत्रद्वयम्। एतद्द्वयं सञ्ज्ञायामिति तट्टीका। अवटवः सन्त्यस्मिन्नित्याद्यर्थे आवटवमिति। सुवास्तु वन्तु तण्डु खण्डु शैवलिन् कर्पूरिन् शिखण्डिन् गर्त कर्कश कठी विकर्ण कृष्ण कर्ण कर्कन्धू मती गाह अद्रि भगीरथ भीमरथ रोणी रोण्यन्त कूपान्तेति द्वाविंशतिः सुवास्त्वादिः। उकारान्तादन्येषामप्यत्र गणे ग्रहणं विपाशोत्तरकूपे चेत्यनेन णट्प्राप्तिनिरासार्थम्। तेनास्माद्गणात् साञ्ज्ञाया अन्यत्रौत्सर्गिकः केशवणः। विपाशा नाम नदीविशेषस्तस्या उत्तरकूपे वाच्ये दत्तेन निर्वृत्तः कूप इति

२४६९। चातुर्र्थिकस्य स्मरहरस्तन्नाम्नि देशे।

पञ्चालाः सन्त्यस्मिन् पञ्चालाः। एवं कुरवः॥ २४६९॥

२४७०। वरणादिभ्यश्च।

वरणा ग्रामः। गोदौ नाम ह्रदौ ग्रामः। खलतिकं वनानि। एवं शिरीषा, शृङ्गी, गया, उज्जयनी॥ २४७०॥

---

दात्त इत्यादिः। तस्या दक्षिणे कूपे तु पूर्ववदौत्सर्गिकः केशवणः। मतोर्बह्वज्विहितात्। बह्वचः कूपे चेति जुमरसूत्रद्वयमप्यत्र वर्त्तते क्रमेण ऐक्कावतं दैर्घवरत्रम् इत्युदाहरणद्वयञ्च णङ्न्तमिति। किञ्च, णट् केशवणयोरभेदात् तद्धितप्रत्ययान्तानां सर्वेषामपि नाम्नां प्रायः सङ्ज्ञात्वसम्भवाच्च एतत्सूत्रचतुष्टयं चान्द्रेण नादृतमिति गोस्वामिचरणैरपि प्रकरणेऽस्मिन्न कृतम्॥

२४६९। चातु। तदस्मिन्नस्तीत्यादावर्थे नाम्नश्चातुर्र्थिकस्य प्रत्ययस्य यथास्वं स्मरहरसंज्ञः स्यात्। यत्र महाहरे प्रकृतिलिङ्गवचनादेः प्रत्यावृत्तिः स महाहरः स्मरहर इति पूर्वमुक्तम्। अधिकारसूत्रमेतत्। प्रभुरयमित्यसाक्षात् प्रतीयमानं ज्ञेयम्। तदस्मिन्नस्तीत्याद्यर्थे तन्नाम्नि क्षत्रियसनाम्नि देशे वाच्ये नाम्नः सामान्यसिद्धकेशवणस्य स्मरहरः स्मात्। पञ्चालस्यापत्यानि बहूनि पञ्चालाः ते सन्त्यस्मिन्नित्येकत्वे वाच्येऽपि पञ्चाला इति बहुवचनान्तम्। एवमिति कुरोरपत्यानि बहूनि कुरवः ते सन्त्यस्मिन् कुरव इति॥

२४७०। वर। तदस्मिन्नस्तीत्याद्यर्थे यथाकथञ्चिद्वाच्ये वरणादिभ्यश्च यथाप्रत्ययस्य स्मरहरः। वरणानामदूरभवो ग्रामः वरणा इति। आदिपदगृहीतानामुदाहरणान्याह—गोदावित्यादिना। नाम इति। सङ्ज्ञा स्याच्चेतना नामेत्यमरात्। तथा सति गोदौ ह्रदसङ्ज्ञौतावत्र ग्रामे स्तः तयोरदूरभवो ग्रामो वा गोदाविति। खलतिकस्य गिरेरदूरभवानि वनानि खलतिकमिति। उदाहरणद्वयेऽत्र औत्सर्गिककेशवणस्य स्मरहरः। एवमिति एवम्प्रकारेणेत्यर्थः। यथा गोदखलतिकौ वरणादिः। एवं

২৪৭১। শর্করায়া বা।

শর্করা, শার্করম্। মাধবঠহ্ছরামশ্চ—শার্করিকং, শর্করীয়ম্॥ ২৪৭১॥

স্মরহরো নিবৃত্তঃ।

২৪৭২। নদ্যাং মতুঃ সংজ্ঞায়াং ত্রিবিক্রমশ্চ।

উডুম্বরাবতী নদী॥ ২৪৭২॥

২৪৭৩। মধ্বাদিভ্যশ্চ।

---

শিরীষা শৃঙ্গী গয়া উজ্জয়নীতি চত্বারশ্চ তথা গোমতী কাঞ্চী শাল্মলী তক্ষশিলা গঙ্গেতি পঞ্চ চ। অত্র মধ্যে শিরীষশব্দাৎ বরাহাদিত্বেন নৃসিহকস্য সোমবারাদিত্বেন মাধবঠস্য চ স্মরহরঃ। শাল্মলীশব্দাদপি তদাদিত্বেন তস্য স্মরহরঃ। শেষেভ্যস্তু কেশবণস্যৈব। শিরীষেত্যত্র লক্ষ্মীত্বমতন্ত্রং পুরুষোত্তমস্যাপি সম্ভবাৎ। তদ্ধিতবাহুল্যাত্তু যত্র যত্র যদ্‌যৎ প্রত্যয়স্য স্মরহরঃ পক্ষে তত্তৎপ্রত্যয়স্য স্থিতিরপি ।।

২৪৭১। শর্ক। তদস্মিন্নস্তীত্যাদ্যর্থে যথাসম্ভববাচ্যে শর্করায়া উত্তরস্য পূর্বোক্তপ্রত্যয়স্য স্মরহরো বা স্যাৎ। শর্করেত্যত্র কেশবণ-মাধবঠ-ছরামাণাং স্মরহরঃ পক্ষে এতেষাং স্থিতিরিতি। শার্করমিত্যত্র সামান্যসিদ্ধকেশবণস্য স্থিতিঃ। এবং মাধবঠ-ছরাময়োরপি পক্ষে স্থিতিরিত্যাহ—মাধবেতি। শার্করিকমিত্যত্র সোমবারাদিত্বান্মাধবঠঃ। শর্করীয়মিত্যত্র উৎকরাদিত্বাচ্ছরামঃ ।।

২৪৭২। নদ্যা। তদস্মিন্নস্তীত্যাদ্যর্থচতুষ্টয়ে সংজ্ঞায়াং গম্যমানায়াং নদ্যাং বাচ্যায়াং নাম্ন উত্তরো মতুস্তস্য ত্রিবিক্রমশ্চ ভবতি। উডুম্বরোঽস্যামস্তীত্যাদ্যর্থে উডুম্বরাবতীতি। এবং শরাবতী ইক্ষুমতীত্যাদিঃ। অত্র অষুবাস্ত্বাদের্নদ্যামিতি সূত্রং বিধায় কশ্চিৎ সৌবাস্তবীতি প্রত্যুদাহরতি ।।

২৪৭৩। মধ্বা। তদস্মিন্নস্তীত্যাদ্যর্থে যথাকথঞ্চিদ্বাচ্যে মধ্বা-

मधुमान्। अद्वयेति मतोर्मस्य वः ( २१२३ )—विषवान्॥ २४७३॥

२४७४। कुमुद-नड़-वेतसेभ्यो मतुच्।

कुमुद्वान्, नड्वान् वेतस्वान्॥ २४७४॥

२४७५। महिषाच्च।

महिष्वान्॥ २४७५॥

२४७६। नड़शादाभ्यां वलच्।

नड्वलं, शाद्वलम्॥ २४७६॥

२४७७। शिखाया वलः।

शिखाबलम्॥ २४७७॥

---

दिभ्यश्च मतुः स्यात्। मध्वस्मिन्नस्तीत्याद्यर्थे मधुमानिति। अत्व-सन्तोद्धवस्येति त्रिविक्रमः। अचश्चतुर्भुजानुबन्धानाञ्चेति नुम् सत्सङ्गान्तस्येति तरामहरः। अद्वयमाभ्यामित्यनेन मतोमस्य व इति सूचयति अद्वयेति। विषं मृणालं तद्वान् जलाशय इति। मधु विष स्थाणु इक्षु वेणु कर्क्कन्धू शमी करीर हिम किशरा शार्यणा वर्मन् रमण पार्दाकी शर इष्टका आसुति शक्ति रिष्टि आसन्दी शकटे-त्येकविंशतिर्मध्वादिः॥

२४७४। कुमु। तदस्मिन्नस्तीत्यादिचतुरर्थेषु यथासम्भववाच्ये-कुमुदनड़वेतसेभ्यो मतुज्भवति। संसारस्य हरश्चितीति संसारहरः। कुमुदमस्मिन्नस्तीत्याद्यर्थे कुमुद्वानित्यादित्रयम्॥

२४७५। महि। महिषाच्चोत्तरः पूर्ववन्मतुच् स्यात्। महिषोऽ-स्मिन्नस्तीत्याद्यर्थे महिष्वानिति॥

२४७६। नड़। तदस्मिन्नस्तीत्याद्यर्थे पूर्ववद्वाच्ये नड़शादाभ्यां बलज्भवति। नड़ोऽस्मिन्नस्तीत्यादिपूर्ववत् नड्वलम्। एवं शाद्वलम्॥

२४७७। शिखा। तदस्मिन्नस्तीत्याद्यर्थे यथाकथञ्चिद्वाच्ये

२४७८। उत्करादिभ्यश्छरामः।

उत्करीयम् ॥ २४७८ ॥

२४७९। नड़ादिभ्यः कुक् च।

नड़कीयम्। नड़-बल-प्लक्ष ॥ २४७९ ॥

२४८०। क्रुञ्चाया वामनश्च, उक्ष्णो नलोपश्च।

क्रुञ्चकीयम्। उक्षकीयम् ॥ २४८० ॥

उक्ताश्चातुरर्थिकाः।

---

शिखाया बलः स्यात्। शिखा अस्मिन्नस्तीत्याद्यर्थे शिखाबलमिति ॥

२४७८। उत्। तदस्मिन्नस्तीत्यादिपूर्वोक्तेऽर्थे पूर्ववद्वाच्ये उत्करादिभ्यश्छरामः स्यात्। उत्करोऽस्मिन्नस्तीत्याद्यर्थे उत्करीयमिति। उत्कर सङ्कर सम्फल पिप्पल पिप्पलीमूल अश्मन् अर्क पर्ण सुपर्ण खण्डाजिन अग्नितिक कितव अतिप अनेक पलाश त्रिवेणी चिबुक पिचुक अश्वत्थ काश कुश भस्त्रा विशाला शाला अन्यजन कर्मन् उत्क्रोश ऋतु खदिर शूर्पनाय श्यावनाय नैरोचक कसित नितान्त वृक्ष इन्द्रवृक्ष आर्द्रवृक्ष शर्करेति उत्करादिरष्टात्रिंशत् ॥

२४७९। नडा। तदस्मिन्नस्तीत्यादिच्चतुरर्थेषु पूर्ववद्वाच्ये नड़ादिभ्यश्छरामस्तस्मिन् परे कुगागमश्च स्यात्। नड़ोऽस्मिन्नस्तीत्याद्यर्थे नड़कीयमिति। यथा—नड़ बल प्लक्षेति त्रयं नड़ादिः। तथा विल्व वेणु वेत्र वेतस इक्षु तक्षन् काष्ठ कपोतेत्यष्टावपि ज्ञेयः। किञ्च, नामान्तस्येत्यनेन तक्ष्णो नरामहरश्च ॥

२४८०। क्रुञ्चा। उक्तचतुर्ष्वर्थेषु यथावद्वाच्ये क्रुञ्चायाश्छरामस्तस्य वामनस्तथा कुक् च भवति। पूर्ववदुक्ष्णश्छरामो नरामहरः कुक् च स्यात्। क्रुञ्चास्मिन्नस्ति क्रुञ्चाया निर्वृत्तः क्रुञ्चाया निवासः

## २४८१ । शेषार्थे विधिः प्राग्विकारात् ।

उक्तेभ्योऽन्ये शेषाः । ते च द्विविधाः—प्रसिद्धग प्रयुज्यमाना, वक्ष्यमाणास्तत्र जातादयश्च । पूर्वे यथा—चक्षुषा गृह्यते चाक्षुसं रूपम् । एवं श्रावणः शब्द इत्यादयः । चाक्षुसादावेतेऽपि । अश्वैरुह्यते आश्वो रथः । एवं चातुरं शकटं, दृशदि पिष्टा, दार्शदा माषाः । एवमौलूखलाः शक्तवः । चतुर्दश्यां दृश्यते चातुर्दशो राक्षस इत्यादिः । उत्तरे तूदाहरिष्यन्ते ॥ २४८१ ॥

---

क्रुञ्चाया अदूरभव इत्यर्थचतुष्टयेऽपि क्रुञ्चकीयम् । एवमुक्षकीयमिति । चातुर्थिकान् समापयति—उक्ताश्चेति ॥

२४८१ । शेषा । विकारात् प्राक् पूर्वं विधिः प्रत्ययविधानं शेषार्थे भवति । महाविभ्रयम् । शेषाः के इत्यपेक्षायामाह—उक्ते इति । तेन रक्तं रागादित्यादितददूरभवश्चेत्यन्तेभ्य उक्तेभ्योऽन्येऽर्थाः शेषाः स्युः । शेषार्थानां द्वैविध्यमाह—त इति । प्रसिद्धग्रा लोकप्रसिद्धग्रक्त्या प्रयुज्यमानाः सर्वेषां प्रयोगार्हा इति । अनन्तरमत्रैव वक्ष्यमाणास्तत्र जातादयश्चेति ते शेषार्थाः पुनर्द्विविधाः स्युः । किञ्च, वक्ष्यमाणाः प्रत्ययाः तेन रक्तमित्याद्यर्थेषु न भवन्ति । अनन्तरोद्देश्येषु सर्वेष्वेवार्थेषु तु भवन्तीति शेषार्थाधिकारप्रयोजनमिति । तेषां मध्ये प्रथमतः प्रसिद्धग्रा शेषार्था यथोदाह्रियन्त इत्याह—पूर्व इति । तेन दीव्यतीत्यतः प्रागर्थे केशवणस्याधिकारादत्र प्रसिद्धग्रर्थेषु केशवण एव । श्रावण इति श्रवणेन गृह्यत इत्यर्थः । चक्षुषादावर्थे एतेऽव्यवहितवक्ष्यमाणा अपि ज्ञेया इत्याह—चाक्षुति । चातुरमिति चतुर्भिरुह्यत इत्यर्थः । औलूखला इति उलूखले पिष्टाः क्षुण्णा वेत्यर्थः । इत्यादीत्यादिपदेन शिष्टप्रयोगानुसारादन्येऽप्यूह्याः । इदानीं तत्र जातादावुदाहरिष्यन्नाह—उत्तरे त्विति ॥

२४८२। राष्ट्राद्घरामः।

राष्ट्रे जातादिः राष्ट्रियः॥ २४८२॥

२४८३। अवारपारात् खरामः।

अवारपारीणः॥ २४८३॥

२४८४। विगृहीताच्च।

अवारीणः, पारीणः, पारावारीण इति चेष्यते॥ २४८४॥

२४८५। ग्रामाद्य-नृसिंहखौ।

ग्राम्यः, ग्रामीणः। 'न वृष्णीन्द्रहेतु'-( १६४७ ) इति पुरुषोत्तमवत्त्व-निषेधः—ग्रामीणाभार्यः॥ २४८५

---

२४८२। राष्ट्रा। तत्र जातादावर्थे राष्ट्रादुत्तरो घरामः स्यात्। घ इयः, अ-इद्वयस्येत्यरामहरः॥

२४८३। अवा। तत्र जातादौ अवारपारात् खरामः स्यात्। अवारपारे जातादिः अवारपारीण इति॥

२४८४। विगृ। तत्र जातादौ विगृहीतादपारात् पारात् व्याख्यानतो विशेषलाभ इति शिष्टोक्त्या व्युत्क्रमाच्च खरामः स्यात्। तेन अवारे पारे पारावारे जातादिरिति क्रमेणावारीण इत्यादित्रयम्॥

२४८५। ग्रामा। तत्र जातादावर्थे ग्रामादुत्तरे य-नृसिंहखौ भवतः। ग्रामे जातादिरिति ग्राम्य इत्यादिद्वयम्। एतत्प्रत्ययान्तस्य लक्ष्मीत्वे 'वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणजातीययोरि'त्यनेन प्राप्तपुरुषोत्तमवत्त्वस्य वाधकलक्षणं स्मारयति—न वृष्णीति। 'न वृष्णीन्द्रहेतुतद्धितान्तलक्ष्मीररक्तविकारयो'रिति समुदायः। ग्रामीणा भार्या यस्येति पीताम्बरसमासे ग्रामीणाभार्यः॥

२४८६। कुलकुक्षिग्रीवाभ्यो माधव-ढकः श्वखड्गालङ्कारेषु।

कौलेयकः श्वा, कौक्षेयकः खड्गः, ग्रैवेयकः कण्ठालङ्कारः॥२४८६

२४८७। कन्थाया माधव-ठः।

कान्थिकः॥ २४८७॥

२४८८। निसस्त्यरामो देशान्निर्गते॥

निष्टय्रश्चाण्डालादिः॥ २४८८॥

२४८९। नित्यं ध्रुवे साधुः।

२४९०। कत्र्र्यादिभ्यो माधव-ढकः।

कर्त्री कात्र्रेयकः, कुम्भी कौम्भेयकः। एवं ग्रामेयकः, नागरेयकः॥ २४९०॥

---

२४८६। कुल। तत्र जातादावर्थे श्वखड्गालङ्कारेषु वाच्येषु यथाक्रमं कुलकुक्षिग्रीवाभ्यो माधवढको भवति। स्पष्टमुदाहरणं वाक्यन्तु पूर्ववद्योज्यम्॥

२४८७। कन्था। तत्र जातादावर्थे कन्थाया उत्तरो माधवठः स्यात्। कन्थ। चीरवस्त्रनिर्मिता तस्यां जातादिः कान्थिकः कीटादिः॥

२४८८। निस। तत्र जातादौ मध्ये देशान्निर्गतेऽर्थे निसः परस्त्यरामो भवति। निर्गतो देशादिति निष्टय्रः 'निर्दुर्वहिःप्रादुराविश्चतुरामि'त्यनेन षत्वम्। षात् परस्येति तरामस्य टराम इति। निरो वर्णाश्रमवहिष्कृते इति कश्चित्।

२४८९। नित्यम्। ध्रुवे वाच्ये त्यप्रत्ययेन सह निसः स्थाने नित्यं साधुः। त्यप्रत्ययो निसः सरामहरश्चात्र निपातफलम्॥

२४९०। कत्र्री। तत्र जातादावर्थे कत्र्र्यादिभ्यो माधवढको भवति। कत्र्र्यां जातादिः कात्र्रेयक इति कौम्भेयक इत्यादिः। कर्त्री कुम्भी ग्राम नगरी माहिष्मती कर्मण्वती कत्रि हस्तिन् पुष्कर पुष्कल यौवन कुण्ड-

२४९१। नद्यादिभ्यो माधव-ढः।

नादेयं जलं वाराणसेयो जनः॥ २४९१॥

२४९२। दक्षिणा-पश्चात्-पुरोभ्यो नृसिंहस्त्यः।

दक्षिणाशब्दोऽयमव्ययम्। दाक्षिणात्यः, पाश्चात्यः, पौरस्त्यः ॥ २४९२॥

२४९३। रङ्कोरमनुष्ये माधव-फ-केशवणौ।

---

नेति द्वादशः कत्र्र्यादिः। किञ्चात्र कर्त्रीति कर्तृशब्द ईवन्तः। कत्रीति तु कुत्सितास्त्रयो यत्रेति 'कोः कदि'त्यनेन कदादेशसिद्धमिति जिनेन्द्रः ॥

२४९१। नद्या। तत्र जातादावर्थे नद्यादिभ्यो माधवढः स्यात्। नद्यां जातादि नादेयमिति तथा वाराणसेयमित्यादि। नदी वारणसी ग्रावन्ती मही कौशाम्बी काशायनी कादिरी वामा दामा साल्वा दूर्वा दार्वी सेनकी पूर्वनगरीति नद्यादिश्चतुर्दशः ॥

२४९२। दक्षि। तत्र जातादावर्थे दक्षिणापश्चात्पुरोभ्य उत्तरो नृसिंहस्त्यः स्यात्। दक्षिणाशब्दो यद्यपि आवन्तोऽव्ययञ्चास्ति तथाप्यव्ययसाहचर्यादव्ययस्यैव ग्रहणमित्याह—दक्षिणेति। दक्षिणादिशि जातादिः दाक्षिणात्य इति। अनव्ययत्वेऽत्र पुरुषोत्तमवत्त्वं स्यात्। एवं पाश्चात्त्य इति * द्वयम् ॥

२४९३। रङ्को। तत्र जातादावर्थे मनुष्ये वाच्ये रङ्कुशब्दा-

---

* दिक्शब्दाद्दिग्देशकाले स्तादिति स्तात्प्रत्यये परे अवस्शब्दस्य पश्चादादेश ततस्तण् आदिस्वरवृद्धिः पाश्चात्त्य इति अमरटीकाभिप्रायः। दक्षिणापश्चात्पुरतस्त्यक्। पाणिनिः ( ४।२।९८ ) पाश्चात्त्य इति सिद्धान्तकौमुदीपाठः। परन्तु पश्चात् + ण्यः, व्यटेर्लोप इत्यत्र क्वचिन्न टेर्लोप इति मुग्धबोधीय—दुर्गादासटीकाबलात् यथाकथञ्चित् पाश्चात्य इति साधनीयम्। ( श्रीरासः ) ॥

रङ्कुदेश राङ्कवायणो गौः, राङ्कवं वस्त्रम् ॥ २४९३ ॥

२४९४। द्युप्रागवागुदक्प्रतीचो यरामः ।

दिव्यं, प्राच्यम्, अवाच्यम्, उदीच्यं, प्रतीच्यम् ॥२४९४॥

२४९५। अव्ययात् कालवाचिनः केशवस्तनः ।

प्राक्तनः ॥ २४९५ ॥

२४९६। ऐषमोह्यःश्वसस्त्यश्च ।

ऐषमस्तनः, ऐषमस्त्यः। एवं ह्यस्तनः इत्यादि माधवठेन शौवस्तिकश्चेष्यते ॥ २४९६ ॥

---

न्माधवफकेशवणौ भवतः। रङ्कोर्दुष्पष्टार्थत्वादर्थं स्पष्टयति—रङ्कुिति राङ्कवायण इत्यत्र द्वये वाक्यं पूर्ववत् ॥

२४९४। द्युप्रा। तत्र जातादौ द्युप्रागवागुदक्प्रतीचो यरामो भवति। दिवि जातादि दिव्यमित्यादिः ॥

२४९५। अव्य। तत्र जातादौ कालवाचिनोऽव्ययात् केशवस्तनः स्यात्। क्विवन्तप्रपूर्वाञ्चधातोरपि प्राक् सम्भवतीति अव्ययादित्युक्तम्। तेन प्राक् पूर्वं जातादिः प्राक्तन इति ॥

२४९६। ऐष। पूर्वोक्तार्थे ऐषमोह्यःश्वस उत्तरस्त्यो भवति, चकारात् तनोऽपि। एतेषां कालवाचिरूपाव्ययत्वान्नित्ये तने प्राप्ते पाक्षिकार्थं वचनम्। वर्तमानवत्सर ऐषमस् तत्र जातादिः ऐषमस्तन इत्यादिद्वयम्। ह्यो गतकल्यवचनं * तत्र जातादिः ह्यस्तनः ह्यस्त्यश्च। इत्यादीत्यादिपदेन भाव्यहोवाचि श्वस् तस्मिन् जातादिः श्वस्तनः श्वस्त्यश्चेति। तत्र जाताद्यर्थे माधवठेन सह श्वसः स्थाने शौवस्तिकश्चेतीष्यते। वक्तव्यप्रकारान्तरमेतत् तरामागमश्चात्रेष्टः ॥

---

* गतकल्येति वङ्गभाषाप्रचलितप्रयोगः स च व्याकरणदुष्टः कल्यशब्दस्य गतदिनवाचित्वं न दृश्यते, परन्तु प्रत्यूषवाचित्वमेव। अत्र अद्यदिवसात् पूर्वदिनवचनं इत्येव साधुः ॥

२४९७। अमाविःक्वेहतसित्रेभ्यस्त्यरामः।

अमात्यः, आविष्ट्यः, क्वत्यः, इहत्यः, इतस्त्यः, अत्रत्यः ॥२४९७

२४९८। अरण्याण्णरामः।

आरण्यः ॥ २४९८ ॥

२४९९। दूरादेत्यः।

दूरेत्यः ॥ २४९९ ॥

२५००। उत्तरान्नृसिंहाहः।

औत्तराहः ॥ २५०० ॥

---

२४९७। अमा। तत्र जातादौ अमादिभ्यस्त्यरामो भवति। अमाशब्दः समीपवाची स्वरादिगणपाठादव्ययं तत्र जातादिः अमात्यः बन्धुवर्गः। आविःशब्दश्चाव्ययं पूर्ववद्भावये निर्दुर्बहिःप्रादुराविरिति षत्वम्। षात् परस्येति तस्य टत्वं आविष्ट्य इति। क्वेति किम्-शब्दस्य सप्तम्यन्तं वदाद्यव्ययं क्वत्य इति। इहेति इदम्-शब्दस्य सप्तम्यन्तं वदाद्यव्ययम् इहत्य इति। इत इति इदम्-शब्दस्य पञ्चम्यास्तसिप्रत्ययान्तं वदाद्यव्ययम् इतस्त्य इति। अत्रेति इदम्-शब्दस्य सप्तम्यास्त्रप्रत्ययान्तं वदाद्यव्ययम् अत्रत्य इति। क्वेत्यादिचतुर्णां निपातसाध्यत्वं वक्ष्यते। किञ्च, तसित्रेत्यनेन तसि त्रप्रत्ययान्तं गृह्यते, न केवलमुदाहृतद्वयं तेन कुतस्त्यः कुत्रत्य यतस्त्य यत्रत्य इत्यादयोऽपि यथासम्भवमह्याः ॥

२४९८। अर। तत्र जातादौ अरण्याण्णरामः स्यात्।

२४९९। दूर। तत्र जातादौ दूरशब्दादेत्यो भवति॥

२५००। उत्त। तत्र जातादौ उत्तरशब्दात् नृसिंहरूप आहः स्यात्॥

२५०१। तीरोत्तरपदात् केशवणः, रूप्योत्तरपदाण्णरामः।

गाङ्गतीरं, गाङ्गरूप्यम् ॥ २५०१ ॥

२५०२। दिक्पूर्वपदादनाम्नि णरामः।

पौर्वशालः, औत्तरशालः ॥ २५०२ ॥

२५०३। नृसिंहेरामाद्गोत्रात् केशवणः।

छरामापवादः। दाक्षेर्जातादिर्दाक्षः ॥ २५०३

२५०४। आदिवृष्णिन्द्राच्छरामः, नामधेयाद्वा।

---

२५०१। तीर। तीरमुत्तरपदं यस्य तस्मात् तत्र जातादौ केशवणः स्यात्। रूप्यमुत्तरपदं यस्य तस्मात्तु पूर्वोक्तेऽर्थे णरामः। गङ्गायास्तीरं गङ्गातीरं तस्मिन् जातादि गाङ्गतीरम्। गङ्गाया आगतं गङ्गारूप्यं तस्मिन् जातादि गाङ्गरूप्यमित्यत्र द्वये समासावस्थायाम् 'ईवापो संज्ञायां बहुलमि'ति वामनः। केशवणत्वात् लक्ष्म्यान्तु गाङ्गतीरी लताप्रभृतिः। किञ्च, गाङ्गरूप्यमित्यत्र रूप्यप्रत्ययस्य केवलयत्वाभावात् 'विष्णुजनात्तद्धितयस्ये'त्यनेन यहरो न स्यात् ॥

२५०२। दिक्। दिक् पूर्वपदं यस्य तस्माच्छब्दात् तत्र जातादावर्थेऽनाम्नि वाच्ये णरामो भवति। पूर्वस्यां शालायां जातादिः पौर्वशाल इति। एवमौत्तरशालः। अनाम्नीति किम्? पूर्वा चासौ इषुकामशमी चेति सप्तर्षय इत्यादिवत् संज्ञायां श्यामरामः। पश्चात तत्र जातादौ सामान्यतः केशवणः 'दिशस्त्वमद्रणामि'त्यनेनोत्तरपदस्य वृष्णीन्द्रः पूर्वेषुकामशममित्येकस्य संज्ञा ॥

२५०३। नृसि। पूर्वोक्तेऽर्थे नृसिंह इरामो यत्र तस्माद्गोत्रवाचकान्नाम्नः केशवणः। वक्ष्यमाणछरामस्यापवादोऽयमित्याह—छरेति ॥

२५०४। आदि। आदिवृष्णीन्द्राच्छब्दात् तत्र जातादौ छरामः

वैष्णवीयः, राधीयः, तदीयः, त्वदीयः। द्वित्व-बहुत्वयोर्युष्मदीयः; एवं मदीयः, अस्मदीयः ॥ २५०४ ॥

२५०५। तावक-तावकीन-यौष्माक-यौष्माकीनाश्च।

२५०६। मामकादयश्च पूर्ववत् साधवः।

नामधेयाद्वा। कृष्णीयाः कार्ष्णाः; रामीयाः, रामाः ॥२५०६॥

---

स्यात्। आ ऐ औरामा यस्येत्यनेन तद्यदादयश्चेत्यनेन चादिवृष्णीन्द्र-संज्ञोक्ता। नाम। पूर्वोक्तेऽर्थे नामधेयात् संज्ञाशब्दात् छरामो भवति। वैष्णवे जातादिः वैष्णव्यां वा वैष्णवीय इत्यादि। तस्मिन् तस्यां वा जातादिः तदीयः। एवं यदीय इत्यादिः। त्वयि जातादिः त्वदीयः। 'युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्वे' इत्यनेनात्र त्वदादेशः। "द्वित्वबहुत्वयोरि'त्यनेन द्विवचनबहुवचनयोर्विषययोर्युष्मदस्मदोस्त्वन्मदादेशौ न भवत इति सूचितम्। तेन युवयोर्युष्मासु वा जातादिः युष्मदीय इति। एवम्प्रकारेण मयि जातादिः मदीयः। आवयोरस्मासु वा जातादिः। अस्मदीय इति ॥

२५०५। ताव। ताव। प्रागुक्तेऽर्थे तवेत्यस्य नृसिंहवुखाभ्यां सह तावकतावकीनाविति द्वौ द्वित्वबहुत्वयोर्वर्तमानस्य युष्मदस्ताभ्यां यौष्माकयौष्माकीनाविति द्वौ च साधू भवतः, खात् पूर्वं करामागमश्च भवति। षष्ठ्याः सामान्यसम्बन्धनिरूपकत्वात् यथायथमपादानादि-सम्बन्धबोधकत्वमप्यस्ति तस्मादर्थार्थं नेदं लक्षणं, किन्तु तवेत्यस्य विष्णुभक्तिमहाहराभावार्थं युष्मदः संसारस्यारामार्थं नृसिंहवुखार्थं खे करामागमार्थञ्चेति ॥

२५०६। माम। पूर्ववत् तावकादिवत्। तत्तत्प्रत्ययकार्याभ्यां ममादीनां मामकादयश्च साधवो भवन्ति। तव-युवयोर्युष्माकं वा सम्बन्धे जातादिरिति वाक्ये तावकादयश्चत्वारः। एवं मम आवयोरस्माकं वा सम्बन्धे जातादिर्मामक-मामकीन आस्माक-आस्माकीना इति चत्वारश्च। उत्तरसूत्रस्योदाहरणार्थमाह—नामेति। कृष्णे जातादयः

२५०७। भवतो माधव-ठः।

भावत्कः ॥ २५०७ ॥

२५०८। भवदीयश्च।

तत्र साधुः स्यात् ॥ २५०८ ॥

२५०९। काश्यादिभ्यष्ठो नृसिंहो माधवश्च।

काशिका, काशिकी ; वैदिका, वैदिकी ॥ २५०९ ॥

२५१०। आदिवृष्णीन्द्रादपि बहुवचनविषयाज्जनपदाद्-वुर्नृसिंहः, समुद्रान्नौमनुष्ययोः, नगरात् कुत्साप्रावीण्ययोः, अरण्यान्मनुष्यपथ्यध्यायन्याय-विहारहस्तिषु गोमये वा।

---

कृष्णीयाः, पक्षे औत्सर्गिककेशवणः कार्ष्णा इति च। एवं रामीया इत्यादिद्वयम् ॥

२५०७। भव। तत्र जातादौ भवच्छब्दान्माधवठो भवति। भावत्क इत्यत्र 'चतुर्भुजान्तादित्यनेन तान्तात् ठस्य कः ॥

२५०८। भव। वृत्तिमाह—तत्रेति। तत्र पूर्वोक्तार्थे छेन सह भवतो भवदीयश्च साधुर्भवेत्। अत्र छः भवतो दश्च निपातफलम् ॥

२५०९। काश्या। पूर्वोक्तेऽर्थे काश्यादिभ्यो नृसिंहो माधवश्च ठो भवति। काश्यां जातादिर्या सा काशिका वृत्त्यादिः माधवत्वात् काशिकीति। एवं वैदिका वैदिकी विद्यादिः। काश्यादेरित्यनेन सिद्धेऽपि यद्बहुवचनं तेनैतेषां ग्रहणम्। काशी वेद चेदि सञ्जाति सम्पाति सन्तापि सम्वाह्य मोदमान अच्युत सकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भारद्धि सुरङ्ग अरिन्दम सरमित्र साधुमित्र दासमित्र देवदत्त दासग्राम सोधावतान सौरतान युवराज युपराज उपराज सिन्धुमित्र देवराजेति काश्यादिस्त्रिशत् ॥

२५१०। आदि। तत्र जातादौ आदिवृष्णीन्द्रात् बहुवचन-

शौरसेनकः माथुरकः ; सामुद्रिका नौ ; सामुद्रको मनुष्यः ; नागरकौ खलकुशलौ ; आरण्यको मनुष्यः ; आरण्यकः पन्था इत्यादिः । आरण्यकम् आरण्यं गोमयम् ॥ २५१० ॥

२५११ । कौरवक-यौगन्धरकौ वा ।

साधू ॥ २५११ ॥

२५१२ । मद्रकश्च ।

साधुः ॥ २५१२ ॥

---

विषयाज्जनपदात् अपिकारात् अनादिवृष्णीन्द्राच्च तद्रूपाज्जनपदात् नृसिंहो वुर्भवति । समु । पूर्वोक्तेऽर्थे नौमनुष्ययोर्वाच्ययोः समुद्रात् नृसिंहो वुः स्यात् । नग । पूर्वस्मिन्नर्थे कुत्साप्रावीण्ययोर्नगरात् नृसिंहो वुः स्यात् । अर । तत्र जातादौ मनुष्यादिषु षट्सु वाच्येषु अरण्यान्नृसिंहो वुर्भवति, गोमये वाच्ये तु वा भवति । शूरसेने भवा येऽन्तरालदेशास्ते शौरसेनास्तेषु जातादिः शौरसेनकः । एवं शाकेत आर्जुनायन दाण्डायन राजगृह धार्तरङ्गी माठर व्याहार त्र्याहार आञ्जिकुलादिभ्यश्च । मथुराया एकत्वेऽपि बहुत्वमादराधिक्यात् । तेन मथुरासु जातादिः माथुरकः । एवं धूम चण्ड शशादन स्थली घोषस्थली, महास्थली शस्त्रापितृ भक्ष्याणी मद्रकुल शस्याय वर्बर गर्दभ घोष पुष्प पल्ली अश्वयातीर्थ सक्षि द्वीप अन्तरीप अरुण उज्जयनी दाक्षिणापथेत्यादिभ्यश्च । समुद्रादित्यादिसूत्रत्रयस्य क्रमेणोदाहरणानि दर्शयति सामुद्रिकेत्यादिना । इत्यादीत्यादिपदेनाध्यायन्यायविहारहस्तिनो ज्ञेयाः । गोमये वैकल्प्यात् आरण्यमित्यत्र अरण्याण्णराम इति णः ॥

२५११ । कौर । तत्र जातादावर्थे नृसिंहवुना साकं कुरुयुगन्धरयोः कौरवकयौगन्धरकौ वा साधू भवतः । पक्षे औत्सर्गिककेशवणेन कौरवयौगन्धरौ ॥

२५१२ । मद्र । मद्रे जातादिरित्यर्थे करामेण मद्रकश्च साधुर्भवति ॥

२५१३। करामोद्धवाद्देशात् केशवणः, कच्छा-दिभ्यश्च।

ऋषिकात् आर्षिकः। काच्छः, सैन्धवः। कच्छ, सिन्धु, कम्बोज, गन्धार, काश्मीर, शाल्व, कुरु, रङ्कु॥ २५१३॥

२५१४। मनुष्यतत्स्थयोस्तु वुर्नृसिंहः।

काच्छको मनुष्यः। तत्स्थे—काच्छकमस्य हसितम्। सैन्धविका चूड़ा॥ २५१४॥

२५१५। गहादिभ्यश्छरामः।

गहीयः, नान्तरीयः। एवम्—एकग्राम-अन्तस्थ-सम-विषमेभ्यः॥ २५१५॥

---

२५१३। करा। कराम उद्धवो यस्य तस्माद्देशनाम्नस्तत्र जातादौ केशवणः स्यात्। कच्छा। पूर्वोक्तेऽर्थे कच्छादिभ्यश्छ देशेभ्यः केशवणो भवति। ऋषिकादिति ऋषिकमुद्दिश्योदाह्रियते। ऋषिके जातादिः आर्षिक इति। एवमैक्षवाक नैलीनक वैजायकप्रभृतयश्च। कच्छे जातादिः काच्छः। एवं सैन्धव इत्यादिः। कच्छादिगणं दर्शयति कच्छेत्यादिरङ्क्वन्तेन। अत्र वर्ण अङ्गार मधुमत् विरूप अनुषण्ड द्वीप अजपाद कुतूभर इत्येतानपि केचित् पठन्ति॥

२५१४। मनु। पूर्वोक्तेऽर्थे मनुष्यमनुष्यस्थयोर्वाच्ययोस्तु कच्छा-दिभ्यो नृसिंहो वुर्भवति। अस्य कच्छजातादेर्हसितमपि काच्छकम्। एवं तत्स्थिता चूड़ा सैन्धविकेत्यपि॥

२५१५। गहा। गहादिभ्यस्तत्र जातादौ छरामो भवति। गहः घटा तस्मिन् जातादिः गहीय इत्यादिः। अतिदेशेनैव गणं र्निर्दिशति एवमिति। एक ग्रामादिचतुर्भ्योऽपि छः स्यात्। सूत्रे आदि-शब्दत्वेऽपि यद्बहुवचनं तदन्यानपि संगृह्णाति यथा—उत्तम अङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाखि उत्तमशाखि समानशाखि एकपलाश

२५१६ । मध्यस्य मध्यमञ्च ।

मध्यमीयः ॥ २५१६ ॥

२५१७ । पर-जन-देव-राजभ्यः कीयः ।

परकीयमित्यादि चान्द्रमतम् । स्वशब्दात्तु न दृश्यते । तस्मादप्येके, तेन स्वीयं, स्वकीयम् । स्वीयमित्यसाधुरिति पशुपतिः ॥ २५१७ ॥

२५१८ । वेणुकादिभ्यश्छरामो वृष्णीन्द्रश्च ।

---

इषुप्र इष्वनीक अवस्यन्दन कामप्रस्थ खाड़ायन गान्धारि शेवनिका शैशरि काठेराण नाठेराण शौङ्गि आसुरि आहिंसि आमिति आमित्रि व्याड़ि भौरि भौलि आध्यश्व आग्निशर्मि देवशर्मि शौद्रि वाराटकि वाल्मीकि क्षौमधृति उत्तम उत्तर नेमि धन्वन् दत्ताश इत्यादिः । एषां केचिद्भ्रः सामान्यतः केचिद्भ्रः करापोद्धवादित्यतश्च केशवणे प्राप्ते केचिद्भ्र आदिवृष्णीन्द्रादपीति नृसिंहवुप्राप्ते केचिद्भ्रोऽप्राप्ते विधानमिदम् ॥

२५१६ । मध्य । पूर्वोक्तेऽर्थे मध्यस्य सम्बन्धे छरामस्तस्मिंस्तस्य मध्यमञ्च स्यात् । मध्ये जातादिर्मध्यमीयः ॥

२५१७ । पर । पूर्वोक्तेऽर्थे परादिभ्यश्चतुर्भ्यः कीयो भवति । परस्मिन् जातादिः परकीयम् । इत्यादीत्यादिपदेन जनकीयं देवकीयं राजकीयमिति । चान्द्रस्याप्येतमित्याह—चान्द्रेति, चान्द्रमतमित्यस्मात् चशब्दः प्रयोक्तव्यः तथा सति चान्द्रमतञ्चैतदित्यर्थः । सूत्रेऽस्मिन् स्वशब्दस्यापि ग्रहणमिति परमतेनोपपादयन्नाह—स्वेति । स्वशब्दात्तु न दृश्यते कीय इत्यन्ये । तस्मात् स्वशब्दादपि कीर इत्येके च । तेन मतभेदेन कीयभावाभावत्वात् स्वीयं स्वकीयञ्चेति । किञ्च, स्वशब्दात् कीयराहित्यं पशुपतेरनभीष्टमित्याह—स्वीयमित्यादिना । भङ्ग्या एकेषां पशुपतेश्च मतमेव स्वमतमिति सूचितं दुर्बले बलवद्बाधापातात् ॥

२४१८ । वेणु । तत्र जातादौ वेणुकादिभ्यश्छरामस्तस्मिन् वेणु-

वैणुकीयम्, चैत्रकीयमित्यादिः ॥ २५१८ ॥

२५१९। पर्वताच्छरामः।

पर्वतीयः ॥ २५१९ ॥

२५२०। अमनुष्ये तु वा।

पर्वतीयं फलं पार्वतं वा ॥ २५२० ॥

२५२१। अर्धाद्यरामः, सपूर्वान्माधव-ठः।

अर्ध्यं, माथुरार्धिकम् ॥ २५२१ ॥

२५२२। परार्धादेर्यरामः।

परार्ध्यम्, अवरार्ध्यम्, अधमार्ध्यम्, मध्यमार्ध्यम्, उत्तमार्ध्यम् ॥ २५२२ ॥

---

कादीनां वृष्णीन्द्रश्च भवति। नृसिंहछ इति यन्न कृतं तद्वैचित्र्यार्थम्। इत्यादीत्यादिपदात् औत्तरपदकीयम्। माध्यपदकीयमिति। आकृतिगणोऽयम्। 'करामोद्धवादि'त्यनेन प्राप्तकेशवणबाधनार्थमिदम् ॥

२५१९। पर्व। पूर्वोक्तेऽर्थे पर्वतात् छरामः स्यात्। मनुष्यविषयोऽयं परत्रामनुष्येत्युक्तेः। पर्वते जातादिः पर्वतीयो मनुष्यः ॥

२५२०। अम। अमनुष्ये वाच्ये तु प्रागुक्तार्थे पर्वताच्छरामो वा स्यात्। पक्षे सामान्यतः केशवणश्च। पर्वते जातादिः पार्वतीयमित्यादिद्वयम् ॥

२५२१। अर्धा। पूर्वोक्तेऽर्थे अर्धशब्दाद्यरामः स्यात्, पूर्वपदेन सह वर्तमानात्तु तस्मान्माधवठः। अर्धे जातादि अर्ध्यमिति। मथुराया अर्धं मथुरार्धं तस्मिन् जातादि माथुरार्धिकम् ॥

२५२२। परा। प्रागुक्तार्थे परार्धादेरुत्तरो यरामः स्यात्। परार्धे जातादि परार्ध्यमित्यादि पञ्चकम्। एवमुर्ध्यम् अधरार्ध्यम् उत्तमार्ध्यम् ॥

२५२३। दिक्पूर्वार्धाद्धुभौ।

पूर्वार्धिकं, पूर्वार्ध्यम् ; दाक्षिणार्धिकं, दक्षिणाध्यम् ॥२५२३॥

२५२४। ग्रामजनपदैकदेशत्वे तु केशवण-माधवठौ।

इमेऽस्य, ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः ॥२५२४॥

२५२५। मध्यमादिमावमाधमाः।

साधवः। मध्य साम्प्रतिके ; नात्युच्चैर्नातिनीचैर्मध्यः ॥२५२५॥

२५२६। समुद्रद्वीपजातादौ द्वैप्यः।

साधुः ॥ २५२६ ॥

---

२५२३। दिक्। दिक् पूर्वे यस्य तथाभूतादर्धात् पूर्वोक्तेऽर्थे उभौ माधवठ-यरामौ भवतः। पूर्वार्धे जातादि पौर्वार्धिकमित्यादि-चतुष्कम् ॥

२५२४। ग्राम। पूर्वोक्तेऽर्थे ग्रामस्य जनपदस्य चैकदेशत्वे वाच्ये दिक्पूर्वार्धात् केशवणमाधवठौ भवतः। तत्र जातादेरादिपदगृहीत-विशेषैकार्थोऽयम्। तेन प्रकारान्तरं वाक्यं दर्शयति—इम इत्यादि वेत्यस्मात् पूर्वार्धा इति योज्यम् ॥

२५२५। मध्य। तत्र जातादौ मध्य आदि अवस् अधस् इत्येतेषां मरामेण सह मध्यमादयश्चत्वारः साधवो भवन्ति। सलोपश्चावोऽधसोरिति क्रमदीश्वरः। पूर्वोक्तेऽर्थे साम्प्रतिके वाच्ये अरामेण सह मध्यस्य मध्यः साधुः स्यात्। वाक्योदाहरणे दर्शयति—नात्युच्चैरिति। मध्यो वैयाकरणादिः प्रत्ययकरणमत्रार्थनिरूपणार्थं नान्यत् प्रयोजनम् ॥

२५२६। समु। समुद्रद्वीपजातादौ द्वीपस्य नृसिंहयरामेण सार्धं द्वैप्यः साधुः स्यात्। समुद्रशब्दस्यात्र तत्समीपे लाक्षणिकत्वात् समुद्रसमीपवर्तिद्वीपजातादिः सर्वो द्वैप्यशब्दवाच्यः। अन्यथा समुद्र-ग्रहणवैयर्थ्यम् ॥

२५२७। कालान्माधवठः।

'संख्याया वर्षस्याभाविनि' ( २०७९ ) इत्युत्तरपदवृष्णीन्द्रः —द्विवार्षिकः, साम्वत्सरिकः ॥ २५२७ ॥

२५२८। शारदिकं श्राद्धे रोगातपयोर्वा।

साधुः ॥ २५२८ ॥

२५२९। नैषिक-प्रादोषिकौ वा।

साधुः ॥ २५२९ ॥

२५३०। सन्धिवेलादेः केशवणः ऋतुनक्षत्राभ्याञ्च।

सान्धिवेलं, सान्ध्यम्, आमावास्यं, त्रायोदशं, चातुर्दशं,

---

२५२७। काला। पूर्वोक्तेऽर्थे कालवाचकात् माधवठो भवति। उत्तरपदस्य वृष्णीन्द्रप्रतिपादकसूत्रं सूचयति सङ्ख्येति। द्वयोर्वर्षयोर्जातादिः द्विवार्षिक इत्यादिः ॥

२५२८। शार। तत्र जातादौ श्राद्धे वाच्ये शरदः स्थान माधवठेन सह शारदिकं नित्यं साधुः स्यात्। रोगातपयोर्वाच्ययोस्तु विकल्पः। पक्षे शारदो रोग आतपो वा ॥

२५२९। नैशि। तत्र जातादौ निशाप्रदोषयोर्माधवठेन साकं नैशिकप्रदोषिकौ साधू वा भवतः। अत्रापि पक्षे औत्सर्गिककेशवणः स्यात् ॥

२५३०। सन्धि। पूर्वोक्तेऽर्थे सन्धिवेलादेः केशवणो भवति। ऋतुनक्षत्राभ्याञ्च तद्वत् केशवणः स्यात्। सन्धिवेलायां जातादि सान्धिवेलमित्यादि प्रातिपदमित्यन्तं सप्तसङ्ख्यकम्। साम्वत्सरं केशवणान्तं भवत् सत् पुनः फलपर्वणोर्वाच्ययोरेव भवति। एवं वाहीक कलकीट बहुकीट शरसेन पटच्चर पर्वत उदपान तक्षन् लोमन् यकृत् महत कमल भिदा परिखा गोष्ठी गोमती पलदी नैतकीभ्यश्च। ऋतो-

पौर्णमासं, प्रातिपदम्। साम्वत्सरन्तु फलपर्वणोरेव। ऋतोः—ग्रैष्मं, शैशिरम्। नक्षत्रात्—तैषं, पौषम् ॥ २५३० ॥

२५३१। प्रावृषेण्यः।

साधुः ॥ २५३१ ॥

२५३२। वर्षाभ्यो माधवठः।

वार्षिकं, पौर्ववर्षिकम् ॥ २५३२ ॥

२५३३। हैमन-हैमन्तौ।

अरामणन्तौ साधू ॥ २५३३ ॥

---

रिति रूपं दर्श्यते इति शेषः। ग्रीष्मे जातादि ग्रैष्मम्। एवं शैशिरं वासन्तमित्यादिः। नक्षत्रात् नक्षत्रमधिकृत्य रूपं दर्श्यते। तिष्ये जातादि तैषमित्यादि 'तिष्यपुष्ययोर्नक्षत्राणी'त्यनेनात्र यहरः ॥

२५३१। प्रावृ। तत्र जातादौ एण्यप्रत्ययेन साकं प्रावृषः प्रावृषेण्यः साधुः स्यात्। ऋतुनक्षत्रेति प्राप्तकेशवणवाधकमिदम् ॥

२५३२। वर्षा। पूर्वोक्तेऽर्थे वर्षाभ्यो माधवठो भवति। वर्षासु जातादि वार्षिकम्। नाम्ना तु कुचिदित्युक्तत्वात् समासान्तादपि स्यात्। तेन पूर्वासु गतासु वर्षासु जातादि पौर्ववर्षिकमित्यपि। वर्षाभ्य इत्यनेन वर्षाशब्दस्य बहुवचनान्तत्वं सूचितं तेनैकवचनेऽस्य प्रयोगो नास्ति ॥

२५२३। हैम। तत्र जातादौ अरामण् अन्तो ययोस्तथाभूतौ हैमन-हैमन्तौ साधू भवतः। वृत्तौ णरामान्तावित्यकृत्वा अरामणन्ताविति यत् कृतं तत्तु शिष्याणां व्युत्पत्तिवैचित्रार्थम्। अत्र 'वामनात् ङणना' इत्यनेन णस्य द्वित्वं न स्यात् उणादिति ङन्तसनन्तादिदत् सूत्रनिर्देशवलात्। निपातादत्र णप्रत्ययः। पक्षे हेमन्तस्य तलोपश्च। केशवणान्तत्वेन निपातनं विना अरामणन्तत्वेन यन्निपातनं तदेतज्ज्ञापकात् लक्ष्म्यां वाच्यायां हैमाना हैमन्तेति स्यात्। हेमन्तात्तलोपश्च वेति कस्यचित् सूत्रम्। तन्मते टणो विकल्पात् पक्षे कालन्माधवठ इति ठश्च तेन लक्ष्म्यां हैमनी हैमन्तिकी च स्यात् ॥

२५३४। सायन्तन-चिरन्तन-प्राह्णेतन-प्रगेतनानि।

सायादीनां केशवतनान्तानि साधूनि ॥ २५३४ ॥

२५३५। अव्ययाद्दिवातन-दोषातन-प्रातस्तनादीनि च।

साधूनि ॥ २५३५ ॥

२५३६। चिरत्न-परुत्ने च, अग्रिम-पश्चिमान्तिमानि च।

साधूनि २५३६ ॥

२५३७। पूर्वाह्णेतन-पराह्णेतने वा।

साधुनि पक्षे। पौर्वाह्णिकम्। शैशिकार्थाश्चैते ॥ २५३७ ॥

---

२५३४। साय। सुगमम्। वृत्तिमाह—सायेति। तत्र जातादौ सायादीनां सायन्तनादीनीति योज्यम्। अत्र तनप्रत्ययः पूर्वद्वये मुगागम ङेर्महाहराभावश्च नितातफलम्।

२५३५। अव्य। तत्र जातादौ अव्ययादुत्तरे तनप्रत्ययेन सह दिवादीनां द्दिवातनेति त्रयादीनि साधनि भवन्ति। अत्राव्ययादित्युक्तत्वादनव्ययदिवादीनामेतानि न भवन्तीति ज्ञेयम्। आदिपदात् शिष्टप्रयोगानुसारेण यथासम्भवमन्यान्यह्यानि ।।

२५३६। चिर। तत्र जातादौ चिरपुरयोस्त्नप्रत्ययेन सजुचिरत्नपुरत्ने इति द्वेच साधूनि भवतः। अग्रि। तत्र जातादौ क्रमेणाग्रपश्चादन्तानामिमच्प्रत्ययेन सहाग्रिमादीनि त्रीनि साधूनि स्युः ।।

२५३७। पूर्व। तत्र जातादावर्थे पूर्वाह्णपराह्णयोस्तनप्रत्ययेन ङरलुका च साकं पूर्वाह्णेतन पूर्वाह्णेतने इति द्वे साधूनि वा भवतः। पक्षे काल्लान्माधवेत्यनेन पौर्वाह्णिकं पाराह्णिकमिति च। सामान्यशैषिकार्थान् समापयति शैषिकेति ।।

२५३८। तत्र जातः।

अत्र यथास्वमणादयः—माथुरः, राष्ट्रियः इत्यादिः ॥ २५३८ ॥

२५३९। प्रावृषष्ठरामः।

प्रावृषिकः ॥ २५३९ ॥

२५४०। शारदकादयो मुद्गादौ, पन्थकः पथि जाते।

साधवः ॥ २५४० ॥

---

२५३८। तत्र। इदानीं शैषिकार्थेषु पृथक् पृथगर्थं दर्शयितुमारभते तत्रेत्यादिना यावत्समाप्ति। वृत्तिमाह—अत्रेति। यथास्वमिति सामान्यतः सामान्यं विशेषतस्तु विशेषः। अणादय इति केशवणादय इत्यर्थः। प्रभुरयमिति गम्यमत्र ज्ञेयं, पूर्वं प्रतिज्ञातत्वात्। मथुरायां जातः माथुरः। तेन दीव्यतीत्यतः प्रागित्यनेनात्र केशवणः। राष्ट्रे जातः राष्ट्रियः, राष्ट्राद्यराम इत्यनेनात्र घः। इत्यादीत्यादिपदेन पूर्वोक्तजातादावर्थे यद्यस्माद्गणाद्यो यः प्रत्ययो विहितस्तस्मात्तस्मादत्रार्थेऽपि स स वोद्धव्य इति सूचितम्। यत्किञ्चिद्योयो विशेषस्तत्तदर्थं ग्रन्थकृता लक्षणानि वक्ष्यन्ते ॥

२५३९। प्रावृ। तत्र जात इत्यर्थे प्रावृट्शब्दात् टरामः स्यात्। ऋतुनक्षत्राभ्याञ्चेत्यनेन प्राप्तकेशवणसा प्रावृषेण्यः साधुरित्यनेन विहित एन्यप्रत्ययो वाधकस्तद्वाधकस्त्वयम्। एतेन तत्र जातादौ यो यो विहितस्तस्य तस्यापि सामान्यत्वादत्रार्थे वक्ष्यमाणान्यार्थे च विहितो वाधकः स्यात्। तद्धितबाहुल्यात् कृचित् कृचित् स च सचापि स्यादित्यपि वोद्धव्यम् ॥

२५४०। शार। तत्र जातार्थे शरदादीनां नृसिहवुना सह शारदकादयः साधवो भवन्तो मुद्गादौ वाच्ये भवन्ति। ऋतुनक्षत्रेति विहितकेणवणस्यापवादोऽयं मुद्गादेरन्यत्र तु स एव। पन्थ। पथि

२५४१ । अमावास्याया अरामवुरामौ वा ।

अमावास्यः, अमावास्यकः ; आमावास्यम् ॥ २५४१ ॥

२५४२ । सिद्धोः सिन्धुक-सैन्धवौ ।

साधू ॥ २५४२ ॥

२५४३ । श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसु-हस्ताविशाखाषाढ़ावहुलाभ्यो महाहरः ।

एतत्पर्यायाश्च गृह्यन्ते । लक्ष्मीप्रत्यस्य महाहरः । श्रविष्ठः, फल्गुनोऽर्जुनः ॥ २५४३ ॥

२५४४ । स्वार्थे त्वरामण् ।

फाल्गुनः ॥ २५४४ ॥

---

जाते वाच्ये पथो वुनासह पन्थकः साधुः स्यात् । अत्र वुः पथः पन्थादेशश्च निपातनात् । ठरामापवादोऽयम् ।।

२५४१ । अमा । पूर्वोक्तेऽर्थे अमावास्याया उत्तरस्मिन् अराम-वुरामौ वा भवतः । अमावास्वायां जातः अमावास्य इत्यादिद्वयम् । पक्षे, आमावास्यमित्यत्र सन्धिवेलादेः केशवणः ।।

२५४२ । सिन्धोः । तत्र जातेऽर्थे वुणाभ्यां सह सिद्धोः सिन्धुक-सैन्धवौ साधू भवतः ।।

२५४३ । श्रवि । तत्र जातेऽर्थे श्रविष्ठादि बहुलान्तेभ्य उत्तरस्य ऋतुनक्षत्रेत्यनेन विहितकेशवणस्य महाहरः स्यात् । श्रविष्ठादीनां ग्रहणे-नात्र तत्पर्यायाणामपि ग्रहणमित्याह—एतदिति । पूर्वोक्तलक्षणं स्मारयति लक्ष्मीति । किञ्चात्र महाहर इत्यस्मात् परं तद्धितमहाहरे इति योज्यम् । श्रविष्ठायां जातः श्रविष्ठ इत्यादिः ।।

२५४४ । स्वार्थे । स्वार्थेऽर्थे पुनर्जातार्थप्रत्ययहरात् फल्गुनात् अरामन् स्यात् । ण इत् अरामः शेषः । फल्गुन एव फाल्गुनः ।।

२५४५। चित्रा-रोहिणी-रेवतीभ्यो लक्ष्म्यां महाहरः, फल्गुन्याषाढ़ाभ्यां ठारामयोः।

चित्रा, रोहिणी, रेवती। एवं फल्गुनी, आषाढ़ा ॥ २५४५ ॥

२५४६। श्रविष्ठाषाढ़ीयौ वा।

साधू ॥ २५४६ ॥

२५४७। स्थानान्त-गोशाल-खरशालेभ्यो महाहरः।

गोस्थाने जातो गोस्थानः। एवं गोशालः ॥ २५४७ ॥

२५४८। वत्सशालाभिजिदश्वयुक्शतभिषग्भ्यो महाहरो वा।

वत्सशालो वात्सशालः ॥ २५४८ ॥

---

२५४५। चित्रा। पूर्वोक्तेऽर्थे लक्ष्म्यां वाच्यायां चित्रारोहिणीरेवतीभ्यः पूर्वोक्तकेशवणस्य महाहरः स्यात्। फल्गु। पूर्वोक्तेऽर्थे फल्गुन्याषाढ़ाभ्यामुत्तरयोष्ठरामारामयोर्लक्ष्म्यां महाहरः स्यात्। चित्रायां जाता वाला चित्रेत्यादिषु लक्ष्मीप्रत्ययस्येत्यनेन तद्धितमहाहरे सत्यावीपोर्महाहरेऽपि पुनर्लक्ष्मीत्वे आवीपौ भवतः ॥

२५४६। श्रवि। तत्र जातार्थे केशवणछाभ्यां साकं श्रविष्ठाषाढ़योः श्राविष्ठाषाढ़ीयौ वा साधू भवतः। पक्षे पूर्वोक्तो महाहरः ॥

२५४७। स्थाना। पूर्वोक्तेऽर्थे स्थानमन्ते यस्य तस्मात् गोशालखरशालाभ्याञ्चौत्सर्गिककेशवणस्य महाहरो भवति। गोस्थान इतिवत् घोटकस्थान इत्यादि च। गोशाल इत्यस्मादित्यादि योज्यम् ॥

२५४८। वत्स। पूर्वोक्तेऽर्थे वत्सशालादिभ्यः सामान्यतः प्राप्तकेशवणस्य महाहरो वा स्यात्। वत्सशाले जातः वत्सशाल इत्यादि-

२५४९। नक्षत्रेभ्यो वहुलं महाहरः।

रौहिणो रोहिणः, मृगशिराः मार्गशीर्षः॥ २५४९॥

पूर्णजातः।

२५५०। कृतलब्धक्रीतकुशलाः।

तत्रेति सर्वत्रानुवर्तते। तत्रकृतादिषु यथास्वं भवति। मथुरायां कृतो लब्धः क्रीतः कुशलो वा माथुरः। एवं राष्ट्रियः॥ २५५०॥

---

द्वयम्। एवं अभिजित् अश्वयुक् शतभिषक्। पक्षे आभिजित इत्यादिः॥

२५४९। नक्ष। तत्र जातेऽर्थे नक्षत्रवाचिभ्यः केशवणस्य महाहरो बहुलं यथा स्यात्तथा भवति। रोहिण्यां जातः रौहिणो रौहिणश्च। किन्त्वत्र लक्ष्मीप्रत्ययस्येति पूर्ववदीश्वरः। मृगशिरा इत्यत्र 'अत्वसन्त्ये'त्यनेन त्रिविक्रमः 'स-ररामयोरि'ति विष्णुसर्गः। मार्गशीर्ष इत्यत्र नाम्ना तु क्वचिदित्युक्तेः 'शिरसः शीर्षोऽणी'त्यनेन शीर्षदिशः। अर्थं समापयति पूर्ण इति॥

२५५०। कृत। तत्रेत्यस्य निवृत्तिशङ्कापरिहारार्थमाह—तत्रेति। किञ्चानेन तत्रेत्यस्य वक्ष्यमाणप्रायभवादिष्वनुवृत्तिं सूचयन् कृतादिभिः सह प्रत्येकं सम्बन्धोऽपि सूचितः। यद्यपि यत्र यत्कृतं तत्तत्र जातमपि भवति, यद्यत्र क्रीतं तत्तत्र लब्धमपि भवति, तथापि शब्दार्थस्य भिन्नत्वाद्भेदोऽप्यस्त्येव न पर्यायत्वमिति पृथगुपादानम्। तथाहि, स्वभावनिष्पत्तावपेक्षितपरव्यापारः कृतशब्दस्यार्थः, आत्मजन्मन्यनुभूतकर्तृभावो जातशब्दस्यार्थः, प्राप्तिसामान्यं लब्धशब्दस्यार्थः मूल्येन प्राप्तिः क्रीतशब्दस्यार्थः, इत्यादि यथासम्भवम्। वृत्तिमप्याह—तत्र कृतेति। यथास्वमिति प्रत्यय इति शेषः। अर्थाद् यत्र कृतादिस्ततएव प्रत्ययः। अत्रार्थेऽपि सामान्यतः केशवणो विशेषतस्तु विशेष एवेति सूचयन् वाक्योदाहरणानि ददाति मथुरायामिति। पूर्णोऽयमर्थः॥

२५५१। प्रायभवः।

अत्रापि यथास्वम्। मथुरायां प्रायेण भवति माथुरः। एवं राष्ट्रियः॥ २५५१॥

२५५२। उपजानूपकर्णोपनीविभ्यो माधवठः।

औपजानुकः पाणिः। एवम् औपकर्णिकः, औपनीविकः॥२५५२॥

२५५३। स्थितः।

अत्र च यथास्वम्। माथुरो राजा॥ २५५३॥

२५५४। कोषाद्विकारे माधवढः।

कौषेयं वस्त्रम्॥ २५५४॥

२५५५। कालात्।

तत्र भवात् प्राक्। प्रभुरयम्॥ २५५५॥

---

२५५१। प्राय। विवरणमाह–अत्रापीति। यथास्वमित्यनेनैव सामान्यतः सामान्यं विशेषतस्तु विशेष एवेति सूचितम्। यथास्वमित्यस्मात् परस्मिन्नाम्नः प्रत्ययाः स्युरिति द्रष्टव्यम्।

२५५२। उप। तत्र प्रायभव इत्यर्थे उपजानूपकर्णोपनीविभ्यो माधवठो भवति ।।

२५५३। स्थित। अत्र चेति पूर्ववद्विवरणम्।

२५५४। कोषा। तत्र स्थितेऽर्थे विकारे वाच्ये कोषशब्दान्माधवढः स्यात्। कीटविशेषैर्निर्मितमात्मगृहं कोषस्तत्र स्थितविकारं कौषेयम्। कौषेयशब्दस्य रूढ़ित्वप्रतिपादनार्थं वस्त्रमित्युक्तं, यदपि कौषेयं सूत्रमप्युच्यते, तदपि कारणे कार्योपचारात्। 'कौषेयं कृमिकोषोत्थमि'त्यमरः।।

२५५५। काला। तत्र भवात् प्रागर्थे कालवचनाद्यथास्वं प्रत्ययः स्यात्। अयं विधिः प्रभुनामाधिकारः।।

२५५६। साधु-पुष्प्यत्-पच्यमानाः।

साधुरित्याद्यर्थे कालात् यथास्वम्। हेमन्ते साधु हैमनं वासः। वसन्ते पुष्प्यति वासन्ती लता। शरदि पच्यन्ते शारदा माषाः ॥ २५५६ ॥

२५५७। उप्तः।

अत्र च यथास्वम्। ग्रैष्मः शालिः ॥ २५५७ ॥

२५५८। आश्वयुज्या वुर्नृसिंहः।

आश्वयुज्यां पूर्णिमायाम् उप्ता आश्वयुजका यवाः ॥२५५८॥

२५५९। ग्रीष्मवसन्ताभ्यां वा।

---

२५५६। साधु। विवरणं साधुरिति। साधुरिति सुप्रतिष्ठितः। पुष्प विकसने दिवादिरित्यस्य पुष्प्यदिति शत्रन्तम्। डु-पचष पाकेऽदादिरित्यस्य पच्यमानमिति कर्मकर्तरि शानान्तम्। तत्र साधुस्तत्र पुष्प्यत् तत्र पच्यमानमित्यर्थे कालवाचिनो यथायोग्यं प्रत्ययो भवति। प्रत्येकमर्थानामुदारणान्याह—हेमन्त इत्यादिना। हैमनमिति 'हैमनहैमन्तावि'त्यनेन साधुः। वासन्तीति ऋतुनक्षत्रेत्यनेन केशवणरामान्तम्। एवं शारदा इत्यपि ॥

२५५७। उप्तः। अयमपि प्रभुः। डु-वप वीजतन्तुसन्ताने कर्मणि क्तः। तत्रोप्त इत्यर्थे कालाद्यथास्वं प्रत्ययः स्यात्। ग्रीष्मे उप्तः ग्रैष्म इति 'ऋतुनक्षत्रे'त्यनेन केशवणः ॥

२५५८। आश्व। तत्रोप्तेऽर्थे कालवाचकाश्वयुजीशब्दान्नृसिंहो वुर्भवति। अश्विनीपर्यायोऽश्वयुक्शब्दस्तद्युक्ता पूर्णमासीति नक्षत्रेण युक्तकाल इत्यनेन केशवणरामान्ताश्वयुजीत्यस्याः कालान्माधवठः इत्यनेन प्राप्तठरामापवादकमिदम्। वाक्योदारणे स्पष्टे ॥

२५५९। ग्रीष्म। तत्रोप्ते ग्रीष्मवसन्तभ्यां नृसिंहो वुर्वा भवति।

ग्रैष्मकं, वासन्तकम्। पक्षे ऋत्व्यरामण् ॥ २५५९ ॥

२५६०। देयमृणम्।

मासे देयमृणं मासिकम्। ऋणं किम्? मासे देया भिक्षा ॥ २५६० ॥

२५६१। ग्रीष्मावरसमाभ्यां वुर्नृसिंहः।

ग्रैष्मकम्, आवरसमकम् ऋणम् ॥ २५६१ ॥

२५६२। सम्वत्सराग्रहायणीभ्यां नृसिंहवु-माधवठौ।

साम्वत्सरकं, साम्वत्सरिकम् ॥ २५६२ ॥

---

ग्रीष्मे उप्तं ग्रैष्मकम्। एवं वासन्तकम्। पक्षे, ऋतुनक्षत्राभ्याञ्चेत्यनेन केशवण इति। प्रकारान्तरेणाह—ऋत्वरामणिति। किन्त्वनेनात्र टित्त्वाभावोऽपि सूचितः ॥

२५६०। देय। तत्र देयमृणमित्यर्थे कालात् यथास्वं प्रत्ययः स्यात्। प्रभुत्वादिगम्यमिति प्रागुक्तं न विस्मर्तव्यम्। मासिकमित्यत्र कालान्माधवठः। ऋणमिति किं किमर्थम्? यर्हि न स्यात्तर्हि न स्यादित्यभिप्रायः। तेन भिक्षाया ऋणत्वाभावाद्वाक्यस्यैव स्थितिरिति ॥

२५६१। ग्रीष्मा। अवरा चासौ समा चेति अवरसमा आगामी वत्सर उच्यते 'वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणे'ति पुंवद्भावः। तत्र देयमृणमित्यर्थे ग्रीष्मावरसमाभ्यां नृसिंहो वुः स्यात्। कालादिति प्राप्तमाधवठापवादोऽयम् ॥

२५६२। सम्व। सम्वत्सराग्रहायणीभ्यां कालावाचिभ्यां तत्र देयमृणमित्यर्थे नृसिंहवुमाधवठौ भवतः। ननु सम्वत्सराग्रहायणीभ्यां नृसिंहवुर्वेति कृतेऽपि वु-त्यक्त पक्षे कालादित्येनेन माधवठो भविष्यति तर्हि माधवठेति किमर्थं उच्यते, फले देये ऋणे विवक्षिते साम्वत्सरन्तु फलपर्वणोरित्यनेन प्राप्तकेशवणं वाधित्वात्रार्थे सम्वत्सरान्माधवठ-

२५६३। व्याहरति मृगः।

अत्र च यथास्वम्। निशायां व्याहरति मृगो नैषः, नैषिकः ॥ २५६३ ॥

तत्रेति निवृत्रम्।

२५६४। तदस्य सोढ़म्।

अत्र च यथास्वम्। निशासहचरितं कर्म निशा, तत् सोढ़ं जितमभ्यस्तमस्येति नैशो वैष्णव नैशिकः॥ 'नैशिक-प्रादोषिकौ वा' (२५२९) इति विकल्पः॥ २५६४ ॥

उक्तं कालात्।

---

स्यैव भवनार्थम्। यथा—साम्वत्सरकमित्यादिद्वयं तथा आग्रहायणकम् आग्रहायणिकमिति च। प्रकरणेऽत्र कलाप्यश्वत्थयववुषादक इति सूत्रं विधाय क्रमदीश्वरः कलाप्यादीनां मयुरादिवाचित्वात् कालवाचित्वमघटमानमाशङ्क्य यत्र मयुराः कलापिनः स कालः साहचर्यात् कलापी यत्राश्वत्था फलिनः सोऽश्वत्थः यत्र यववुषमुत्पद्यते स यववुषमिति कालत्वं निगमय्य च तत्र देयमृणं कलापकम् अश्वत्थकं यववुषकमिति त्रयं साधयतीति ज्ञेयम् ॥

२५६३। व्याह। तत्र व्याहरति मृग इत्यर्थे कालाद्यथास्वं प्रत्ययः स्यात्। व्याहरति क्रीड़तीत्यर्थः। नैशिकप्रादोषिकौ वेति विकल्पनिपातात् पक्षे केशवणश्चेति नैशश्चेति इत्यादिद्वयम्। तत्रेति सर्वत्रानुवर्तत इति यदुक्तं तत्समापयति तत्रेति ॥

२५६४। तद। तदस्य सौढ़मभ्यस्तमित्यर्थे कालाद्यथास्वं प्रत्ययः स्यात्। सोढ़ं सहनं जितमभ्यस्तमध्ययनमिति पर्यायस्तत्तु कालस्य न सम्भवतीति साहचर्यात् कालेन सहचरितं कर्म सहनादिकाले समर्प्य कालसहचरितकर्माभ्यासेन तदभ्यस्तं प्रतिपादयति निशेति। निशया सहचरितं यत् कर्म तदेव निशा तत् सोढ़मित्यादि स्पष्टं

२५६५। तत्र भवः।

अत्र च यथास्वम्। मथुरायां भवो विद्यमानः माथुरः। एवं राष्ट्रियः। भवोऽयं प्रभुः, प्राक् तत आगतात्॥ २५६५॥

२५६६। दिगादिभ्यो यरामः।

दिश्यं, वन्यं, रहस्यं, गण्यम्, अन्त्यं, यूथ्यं, वंश्यम्॥२५६६॥

२५६७। शरीरावयवाच्च।

दन्त्यं, तालव्यम्, आस्ये भवम् आस्यम्॥ २५६७॥

---

वाक्यम्। नैशो वैष्णवो नैशिकश्च। विकल्पसूत्रं सूचयति—नैशिकेति। वेति विकल्प इत्यत्र वेति विकल्पादिति योज्यम्। कालाधिकारं समापयति उक्तमिति॥

२५६५। तत्र। तत्र भव इत्यर्थे यतो भवति तस्मात् यथास्वं प्रत्ययः स्यात्। भवो विद्यमानार्थो न जननार्थो गतार्थत्वादिति वाक्येनैव स्पष्टयति—मथुरायामिति। माथुर इति सामान्यात् केशवणः। राष्ट्रिय इति राष्ट्राद् घराम इति घः। तत आगत इत्यस्मात् प्राक् पूर्वस्मिन्नयं भवो प्रभुनामेत्यधिक्रियते भव इति॥

२५६६। दिगा। तत्र भव इत्यर्थे दिगादिभ्यो यरामो भवति। भव इत्यलन्तमत्प्रत्ययान्तञ्च सम्भवतीति ब्रह्मलिङ्गमपि तेन दिशि भवं दिश्यमित्यादि। दिश् वाल रहस् गण अन्तर पुग वंश वर्ग मृग पक्ष धार्य मित्र मेधा अन्तर पथिन् बहुल अलीक उखा शाखिन् आदि मुख जघन मेघ यूथ न्याय अनुवंश वेश वरण काल आकाशेति त्रिंशद्दिशादिः। वालधार्यशाखिन् आदि आकाशेत्येतेभ्य 'आदिवृष्णीन्द्रादि'त्यनेन छे प्राप्ते शेषेभ्य केशवणे प्राप्ते विधानम्। मुखजघनाभ्यां शरीरावयवाच्चेत्यनेन यरामे सिद्धेऽपि यदत्र तयोर्ग्रहणं तत्तु शरीरावयवार्थं यतः सेनाद्यवयवौ मुखजघनशब्दावशरीरावयवौ॥

२५६७। शरी। तत्र भवेऽर्थे शरीरावयवाच्च यरामो भवति। दन्ते भवं दन्त्यम्। एवं तालव्यमिति द्वयम्। किञ्च, तालुशब्दाद्ये

२५६८। विष्णुजनाद्धरिमित्रस्य हरो हरिमित्रे वा।

आस्यम् ॥ २५६८ ॥

२५६९। जिह्वामूलीयाङ्गुलीयौ।

साधू ॥ २५६९ ॥

२५७०। दृति-कुक्षि-कलशि-वस्ति-अस्ति-अहीत्येतेभ्यो माधव-ङः।

दार्तेयम् ॥ २५७० ॥

२५७१। ग्रैवग्रैवेयके।

साधुनी ॥ २५७१ ॥

---

सति ओद्वयस्येति गोविन्दः, उद्वयस्येत्यवच्। केशवणं यावदयं वाध्यत एव तावदादिवृष्णीन्द्रादिति छमपि वाध्यत इति सूचयितुं तालव्यमिति द्वयमुपन्यस्तम्। एवमोष्ठ्यं स्तन्यं कर्ण्यं ललाट्यं नासिक्यमित्यादि ॥

२५६८। विष्णु। हरिमित्रे परे विष्णुजनाद्धरिमित्रस्य हरो वा स्यात्। तदास्यमिति च पूर्ववत् ॥

२५६९। जिह्वा। तत्र भव इत्यर्थे छरामेण सह जिह्वामूलाङ्गुल्योर्जिह्वामूलीयाङ्गुलीयौ साधू भवतः। शरीरावयवत्वेन प्राप्तयरामवाधनार्थमिदम् ॥

२५७०। दृति। तत्र भवेऽर्थे दृत्यादिभ्यो माधवढो भवति। दृति चर्म तत्र भवो दार्तेयः। तथा कौक्षेयः कालसेयः वास्तेयः आस्तेयः आहेयः। किञ्चास्तीति तिङन्तप्रतिरूपकमव्ययं विद्यते। यथा अस्तिक्षीरा ब्राह्मणीति, अस्ति च धनवाचकं तथा ह्यस्तिमानिति बलवानुच्यते इति द्वयोरेवात्र ग्रहणं, तिङन्तस्य तु न नामत्वाभावात्। कलशिशब्दोऽत्र वामनान्तः। कलशिमुदधिगुर्वीं वल्लवा लोड़यन्तीति माघप्रयोगात् ( ११।८ ) ॥

२५७१। ग्रैव। तत्र भवेऽर्थे केशवणमाधवढकाभ्यां सह ग्रीवाया ग्रैवग्रैवेयके साधुनी भवतः। अयमपि यरामापवादः ॥

२५७२। गम्भीर-बहिर्देव-पञ्चजनेभ्यो ण्यरामः।

गाम्भीर्यम्। अव्ययस्यारादादिवर्जम् ( २११३ ) इति संसार-हरः—बाह्यम् ॥ २५७२ ॥

२५७३। अव्ययीभावाण्ण्यरामः, न तूपकूलादिभ्यः, अन्तःपूर्वपदात्तु माधवठः, पर्यनुपूर्वग्रामाच्च।

पारिमुख्यं, पारिहनव्यम्, नेह—औपकूलः, औपशालः, आन्तर्देहिकः, पारिग्रामिकः ॥ २५७३ ॥

---

२५७२। गम्भी। गम्भीरेत्येवमादिभ्यस्तत्र भवेऽर्थे ण्यरामो भवति। गम्भीरे भवं गाम्भीर्यम्। संसारहरविधायकसूत्रं स्मारयति—अव्ययस्येति। बहिर्भवं बाह्यम् एवं दैव्यं पाञ्चजन्यम् ॥

२५७३। अव्य। तत्र भव इत्यर्थेऽव्ययीभावसमस्तान्नाम्नो ण्यरामः स्यात्। न तु। पूर्वोक्तेऽर्थे तादृशेभ्यो उपकूलादिभ्यो ण्यरामो न तु स्यात्। अन्तः। अन्तरिति पूर्वपदं यस्य तस्मादव्ययीभावात्तु तत्रार्थे माधवठो भवति। पर्य। पूर्वार्थे पर्यनुपूर्वौ यस्य तस्मात्तथा-भूताद्ग्रामाच्च माधवठः स्यात्। 'अपपरिबहिरञ्चन्ताः' इत्यनेन परि-मुखं तस्मिन् भवं पारिमुख्यम्। एवं पारिहनव्यम्। एवं पर्योष्ठ परिखल परिसीर अनुसीर अनुपथ अनुतिल अनुगङ्ग अनुशीत अनु-मास अनुयव अनुसूप अनुवंश इत्येतेभ्यश्च। किञ्चात्र उपसीर उपदृश उपकलापानामपि ग्रहणमुपकूलादिगणादन्यत्वादिति केषाञ्चिन्मतम्। केचित्तूपकूलादिगणे पठन्त्येतानिति मतभेदः। मुखं परि परिमुखमिति कथमव्ययीभावो यतोऽपपरीत्यादिना पञ्चम्या अव्ययीभावः। पञ्चमी च वर्जनार्थापपरीति। न तु परिमुखे वर्जनं गम्यते, किन्तर्हि सर्वतो भावः, तस्माद्योगविभागादिना यत्नेनाव्ययीभावः करणीयः। ये तु परि-हनुप्रभृतयस्तेष्वप्यपपरीत्यादिनाव्ययीभावः कथं तेष्वपि वर्जनं न गम्यते, तस्मात् परिमुखवद्यत्नेनैवेति यदन्यैरुक्तं तत्त्वस्माकं नाभीष्टं मुखादीन्

२५७४। माधव-ठः।

प्रभुरयम् ॥ २५७४ ॥

२५७५। अध्यात्मादेः।

आध्यात्मिकः, आधिभौतिकः, चातुर्थिकः, त्रैवर्णिकः, साम्प्रतिकः, गैरिकमित्यादि ॥ २५७५ ॥

२५७६। समानात्तदादेश्च।

---

वर्जयित्वा, भवनस्यान्यत्रापि सम्भवात्। नेहेति निषेधादिति शेषः। तत्र समीपे इत्यनेन कूलस्य समीपमिति विग्रहे उपकूलं तत्र भवः औपकूलः सामान्यादत्र केशवणः। एवं शालायाः समीपे भवः औपशालः। तथा औपकृष्ण इत्याद्याकृतिगणोऽयम् 'अन्तःशब्दो णत्वविधावि'त्यनेनोपेन्द्रत्वप्रतिपादनादव्ययत्वं निश्चितम्। तेन देहस्यान्तरिति विग्रहेऽन्तःशब्दस्य सप्तम्यर्थत्वात्। 'अव्ययं सप्तम्याद्यर्थे ष्वि'त्यनेन समासादव्ययीभावसिद्धमन्तर्देहं तत्र भवः आन्तर्देहिक इति। 'अपपरी'त्यनेन न पूर्ववत् परिग्रामं तत्र भवः पारिग्रामिकः। तथा 'अनुर्यस्य समीपमाह—यस्य च दैर्घ्यं तेने'त्यनेन अनुग्रामं तत्र भवः आनुग्रामिक इति ॥

२५७४। माध। तत्र भव इत्यर्थे नाम्नो माधवठो भवन् यथास्वं स्यात् माधवठमधिकरोति प्रभुरिति ॥

२५७५। अध्या। तत्र भवेऽर्थे अध्यात्मादेर्माधवठो भवति। 'अव्ययं सप्तम्याद्यर्थे ष्वि'त्यनेनात्मानमधिकृत्येति विग्रहे अध्यात्मं तत्र भवः आध्यात्मिकः। एवमाधिभौतिकः तथाधिदैविक इति। 'एवमिहलोके'त्यनयोरुभयपदवृष्णीन्द्र उक्तः। चतुर्ष्वर्थेषु भवः चातुर्थिकः। त्रिषु वर्णेषु भवः त्रैवर्णिकः। एवं साम्प्रतिकः गैरिकमिति। इत्यादीत्यादिपदात् औपजानुकः औपकर्णिकः औपनीविक इत्यादिः च ॥

२५७६। समा। पूर्वोक्तेऽर्थे समानशब्दात् तत्समानमादि यस्य

सामानिकः, सामानग्रामिकः ॥ २५७६ ॥

२५७७। ऊर्ध्वन्धमोर्ध्वदेहाभ्याम्।

और्ध्वन्धमिकः, और्ध्वदेहिकः ॥ २५७७ ॥

२५७८। लोकोत्तरपदा ्।

ऐहलौकिकः ॥ २५७८ ॥

२५७९। मुखतसः पार्श्वतसश्छरामः।

मुखतीयः, पार्श्वतीयः ॥ २५७९ ॥

२५८०। मध्यीय-माध्यम-मध्यमीयाः।

साधवः ॥ २५८० ॥

२५८१। मध्यस्व मध्यन्दिनं केशवणश्च।

---

तस्माच्च माधवठः स्यात्। समाने भवः सामानिकः। एवं सामानग्रामिकः, सामानदेशिक इत्यादिः ॥

२५७७। ऊर्ध्वं। तत्र भवेऽर्थे ऊर्ध्वन्धमोर्ध्वदेहाभ्यां माधवठो भवति। उदाहरणे स्पष्टे ॥

२५७८। लोक। पूर्वोक्तेऽर्थे लोक उत्तरपदं यस्य तस्मान्नाम्नो माधवठो भवति। इह लोके भवः ऐहलौकिकप्रभृतिः उभयपदवृष्णीन्द्रस्तु पूर्ववत् ॥

२५७९। मुख। तत्र भवेऽर्थे मुखतसः पार्श्वतसश्च छरामः स्यात्। मुखतीयेति द्वयेऽत्र 'अव्ययस्यारादिवर्जमि'त्यनेन संसारहरः ॥

२५८०। मध्यीय। तत्र भवेऽर्थे छरामकेशवणाभ्यां सह मध्यस्य मध्यीयमाध्यममध्यमीयास्त्रयः साधवो भवन्ति। अत्र केवलछो मुगागमसहितौ केशवणछरामौ च निपातनात् ॥

२५८१। मध्य। तत्र भव इत्यर्थे मध्यस्य सम्बन्धे केशवण-

माध्यन्दिनमुपगायति ॥ २५८१ ॥

२५८२। थाम्नोऽजिनान्ताच्च महाहरः।

अश्वत्थामा, कृष्णाजिनः ॥ २५८२ ॥

२५८३। वर्गान्ताच्छरामः।

कवर्गीयः ॥ २५८३ ॥

२५८४। अशब्दे यराम-खरामौ वा।

कृष्णवर्ग्यः, कृष्णवर्गीणः, कृष्णवर्गीयः ॥ २५८४ ॥

---

स्तस्मिन् सति तस्य मध्यन्दिनादेशो भवति। माध्येति मध्ये भवं गीतमुपगायतीत्यर्थः ॥

२५८२। थाम्नो। तत्र भव इत्यर्थे थामन्शब्दात् अजिनान्ताच्च प्राप्तकेशवणस्य महाहरः स्यात्। ननु सूत्रे थाम्न इत्युद्दिष्टं तर्ह्यश्वत्थाम्नि भवोऽश्वत्थामेति कथमुदाहृतम्? भद्रमुच्यते। वर्णेन विधौ तदन्तस्य कार्यं स्यान्नाम्ना तु कुचिदिति पारिभाषिकन्यायबलाद्यद्यपि थाम्न इति दर्शितं तथाप्यन्तर्भूतात्तस्मान्महाहर इति ज्ञेयम्। थामाजिनान्तादित्यकृत्वा यत् थाम्न इत्यादिकृतं तत्तु छात्राणां व्युत्पत्तिवैचित्र्यार्थम्। कृष्णशब्देनात्र कृष्णसारमृग उच्यते, तस्याजिनं चर्म तस्मिन् भवः कृष्णाजिन इति ॥

२५८३। वर्गा। वर्गोऽन्ते यस्य तस्मात्तत्र भवेऽर्थे छरामः स्यात्। अशब्द इत्यव्यवहितवक्ष्यमाणादत्र शब्दो वाच्यो गम्यत इत्यनुमीयते। कवर्गे भवः कवर्गीयः शब्दः। एवं चवर्गीयः, टवर्गीय इत्यादिः ॥

२५८४। अश। तत्र भवेऽर्थेऽशब्दे वाच्ये वर्गान्ताद्यराम-खरामौ वा भवतः। कृष्णस्य वर्गः पक्षस्तत्र भवः कृष्णवर्ग्य इति द्वयम्। पक्षे छश्च कृष्णवर्गीय इति ॥

२५८५। कर्णिका-ललाटिके अलङ्कारे।

साधू ॥ २५८५ ॥

उक्तो भवः केवलः।

२५८६। तस्य व्याख्यानमिति च व्याख्यातव्य-नाम्नः।

तस्य व्याख्यानमित्यर्थे भवार्थे च व्याख्यातव्यनाम्नो यथा-विहितं स्यात्। कृतो व्याख्यानं, कृत्सु भवो वा कार्तो ग्रन्थ ॥ २५८६ ॥

२५८७। षात्वणत्विक-कार्ततद्धितिकादयः।

भवव्याख्यानयोर्माधवठान्ताः साधवः ॥ २५८७ ॥

---

२५८५। कर्णि। तत्र भव इत्यर्थेऽलङ्कारे वाच्ये ठरामेण सार्धं कर्णललाटयोः कर्णिकाललाटिके साधू भवतः। अलङ्कारादन्यत्र 'शरीरा-वयवादि'त्यनेन यः कर्ण्यं ललाट्यमिति। केवलभवार्थं समापयति—उक्त इति ॥

२५८६। तस्य। व्याख्यायतेऽनेनेति टनः करणाधिकरणयोरिति करणे टनः। अत्र तत्रभवार्थश्चानुवर्तत इति सूत्रस्थ-चशब्देन सूचित-मिति तदर्थमपि विवरणेन स्फुटीकरोति—तस्येति। यथाविहितमित्यस्मात् प्रत्यय इति पूरणीयम्। प्रभुश्चायमिति गम्यम्। कृत इति कृत्प्रत्ययस्य। कार्त इत्यत्र सामान्यतः केशवणः। ग्रन्थश्चात्र कृदन्तपादौ ज्ञेयस्ते-नैव कृते व्याख्यानस्य कृत्सु भवनस्य च सम्भवत्वात्। एवं सौपः तैपः। ग्रन्थे वाच्य एव तस्मादन्यत्र तु न मथुराया व्याख्यानी सुकोशला इति वाक्यस्यैव स्थितिः ॥

२५८७। षात्व। वृत्तिमाह—भवेति। षत्वणत्वयोर्व्याख्यानं तयो-र्भवो वा षात्वणत्विक इति। कृत्तद्धितयोर्व्याख्यानं तयोर्भवो वा

२५८८। क्रतुभ्यो यज्ञादिभ्यश्च माधवठः।

आग्निष्टोमिकः, राजसूयिकः, पाञ्चौदनिकः ॥ २५८८ ॥

२५८९। ऋषिशब्दादध्याये।

वाशिष्ठिकोऽध्यायः ॥ २५८९ ॥

२५९०। पौरोडाश-पुरोडाशाभ्यां केशवठः।

पौरोडाशिकी, पुरोडाशिकी २५९० ॥

---

कार्ततद्धितिक इति। सूत्रस्थादिपदात् णात्वषत्विकः सामासतद्धिकः ताद्धितसमासिकः सान्धिसुबन्तिकः, सौवन्तसन्धिक इत्यादिः ॥

२५८८। क्रतु। तस्य व्याख्यानं तत्र भवो वेत्यर्थे क्रतुवाचिभ्यो यज्ञवाचिभ्यश्च माधवठः स्यात्। यस्मिन् यज्ञे पशुहिंसास्ति स क्रतुरुच्यते। यत्र तु पशुहिंसा नास्ति स यज्ञ इति भेदो विवक्षणीयः। तस्य व्याख्यानमित्यर्थे क्रत्वादिना क्रत्वादिप्रतिपादकमन्त्रो लक्ष्यते तस्यैव व्याख्यानसम्भवात्। तत्र भवार्थे तु मुख्यार्थेऽपि न कश्चिद्विरोधापत्तिः। आग्नित्यादिद्वयं क्रतूदाहरणम्। पाञ्चौदनिक इति यज्ञोदाहरणम् ॥

२५८९। ऋषि। अध्याये वाच्ये ग्रन्थवाचकात् ऋष्यभिधानान्नाम्नस्तद्व्याख्याने तत्र भवार्थे च माधवठो भवति। साहचर्यादृषिशब्दोऽत्र ग्रन्थविशेषप्रवचनमभिधत्ते केवलऋषिवाचकस्य व्याख्यानासम्भवादिति जुमरादयः। वशिष्ठस्य व्याख्यानं वशिष्ठे भवो वा वाशिष्ठिक इति। एवं वैश्वामित्रिक इत्यादिः। अनध्याये तु वाशिष्ठी ऋक् ॥

२५९०। पौर। तद्व्याख्यने तत्र भवार्थे च ग्रन्थवाचकाभ्यां पौरोडाशपुरोडाशाभ्यां केशवठः स्यात्। पुरोडाशस्य संस्कारको ग्रन्थः पौरोडाशस्तस्य व्याख्या तत्र भवो वा पौरोडाशिकी ऋक्। पुरोडाशसहचरितो मन्त्रः पुरोडाश उच्यते। तेन तस्य व्याख्येत्यादि पूर्ववत् ॥

२५९१। छन्दसो यरामाणौ।

छन्दस्यः, छान्दसः ॥ २५९१ ॥

२५९२। द्विसर्वेश्वर-ऋराम-ब्राह्मण-ऋच्-प्रथम-अध्वर-पुरश्चरण-नामाख्यात इत्येभ्यो माधवठः।

नैष्ठिकः, चातुर्होतृकः, ब्राह्मणिकः, आर्चिक इत्यादिः। नामाख्यातात्—नामाख्यातिकः, विगृहीताच्च नामिकः, आख्यातिकः, आख्यातनामिकः ॥ २५९२ ॥

२५९३। ऋगयणादेः केशवणः।

आर्गयणः, नैरुक्तः, शैक्षः, नैगमः, वैयाकरणः, यौगः, पादः ॥ २५९३ ॥

भवव्याख्याने निवृत्ते।

---

२५९१। छन्दसो। पूर्वोक्तेऽर्थे छन्दःशब्दाद्यरामाणौ भवतः। छन्दसो व्याख्यानं छन्दसि भवो वा छन्दस्य इत्यादिद्वयम् ॥

२५९२। द्विस। तद्व्याख्याने तत्र भवे च द्विसर्वेश्वरात् ऋरामात् ब्राह्मणादिभ्यः सप्तभ्यश्च माधवठो भवति। अत्रापणनामानावपि पठति कश्चित्। निष्ठाया व्याख्यानं निष्ठायां भवो वा नैष्ठिक इति, एवं चातुर्होतृकादित्रयम्। इत्यादीत्यादिपदेन प्राथमिकः, आध्वरिकः, पौरश्चरणिक, आपणिकः, नामिकः। नामाख्यातयोः शब्दद्वयमिलनेन पृथग्रूपेण विपर्ययेणापि प्रयोगार्थं नामाख्यातिक इति पृथगुदाहृतम्। एभ्यो ग्रन्थार्थेभ्य एव। अन्यत्र तु नैष्ठ इत्यादिः। विगृहीताच्चेति विधिवाक्यं न सूत्रम्। नाम्नो व्याख्यानं नाम्नि भवो वेति नामिक इत्यादित्रयम् ॥

२५९३। ऋग। तद्व्याख्याने तत्र भवे च ऋगयणादेर्ग्रन्थवाचकात् केशवणो भवति। ऋचामयनं ऋगयणम् उपचारादध्ययनक्रियाविशिष्टो ग्रन्थ उच्यते। तेन तद्व्याख्यानं तत्र भवो वा आर्गयण

२५९४। तत आगतः।

अत्रापि यथास्वम्। माथुरः, राष्ट्रियः। प्रभुरयं प्रभवतीति यावत्॥ २५९४॥

२५९५। आयस्थानेभ्यो माधवठः, शुण्डिकादिभ्यस्तु केशवणः।

आपणादागतः आपणिकः। एवं शौल्किकः। एवं शौण्डिकः, कार्कशः॥ २५९५॥

---

इत्यादिः। ऋगयण निरुक्त पुनरुक्त शिक्षा निगम व्याकरण युग पाद न्याय पदव्याख्यान छन्दोव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति छन्दोविजिति विद्या वास्तुविद्या क्षेत्रविद्या अङ्गविद्या त्रयीविद्या उत्पत्ति उदपति सम्वत्सर मुहूर्त निमित्त उपनिषदिति षड्विंशतिः ऋगयणादिः। शिक्षान्यायविद्याशब्देभ्यो द्विसर्वेश्वरान्माधवठे व्याकरणशब्दादिवृष्णीन्द्रात् छे शेषेभ्यः षात्वणत्विकादेरादिपदान्माधवठे प्राप्ते विधानम्। अधिकारं समापयति–भवेति॥

२५९४। तत। अत्रेति विवरणम्। अत्रार्थेऽपादानवाचकान्नाम्नो यथाविहितं प्रत्ययः स्यात्। आद्यगादानादिति कस्यचित् सूत्रम्। मथुराया आगतः माथुर इत्यत्र सामान्यतः केशवणः। राष्ट्रादागतः राष्ट्रिय इत्यत्र तु राष्ट्राद्घराम इति घः। प्रभवतीत्यवधीकृत्य प्रभुनामायमित्याह–प्रभुरिति॥

२५९५ आय। आय स्वामिग्राह्यो भागः स येभ्य उपलभ्येत तान्यायस्थानानि एभ्योऽपादानेभ्यस्तत आगतेऽर्थे माधवठो भवति। शुण्डि। शुण्डिक आदिर्येषां तेभ्य आयस्थानेभ्यस्तु तत आगतेऽर्थे केशवणो भवति। आपणं क्रयविक्रयस्थानं तस्मादिति योज्यम्। शूल्कं मूल्यं तत आगतः शौल्किक इति। शुण्डिको मद्यकारस्तस्मादागतः शौण्डिकः कर्कशः कठिनस्तत आगतः कार्कश इति। शुण्डा-

२५९६। विद्यायोनिसम्बन्धेभ्यो वुर्नृसिंहः, ऋरा-
मात्तु माधवठः, पितुर्यरामश्च।

औपाध्यायकः, शैष्यकः, पैतामहकः, मातुलकः। तथा हौतृकः, मातृकः, पैतृकः। 'ऋरामस्य रो ये' (२१२९)—पित्र्यः ॥२५९६॥

२५९७। गोत्राद्वुर्नृसिंहः।

अपत्याधिकारादन्यत्र गोत्रमपत्यमात्रमिति काशिका। औपगवेभ्य आगतः औपगवकः; कुरुभ्यः आगतः कौरवकः॥ २५९७॥

२५९८। हेतोर्मानिवनाम्नश्च रूप्यो वा मयट् च।

---

देरादिपदात् कृकण स्थण्डिल उदपान उपल तीर्थ भूमि तृण पर्ण इत्येतेभ्यश्च केशवणः।

२५९६। विद्या। तत आगतेऽर्थे विद्याकृतसम्बन्धो योनिकृतसम्बन्धश्चोपलभ्यते येभ्यस्तेभ्योऽपादानेभ्यो नृसिंहो वुः स्यात्। ऋरा पूर्वोक्तेऽर्थे ऋरामान्ताद्विद्यायोनिकृतसम्बन्धवाचकादपादानात्तु माधवठः स्यात्। पितु। पूर्वोक्तेऽर्थे पितृरूपादपादानाद्यररामश्चकारान्माधवठः स्यात्। उपाध्यायादागतः औपाध्यायक इत्यत्र विद्याकृतसम्बन्धवाचकात् प्रत्ययः। एवं शैष्यक इत्यत्रापि। पितामहादागतः पैतामहक इत्यत्र तु योनिकृतसम्बन्धवाचकात् प्रत्ययः। एवं मातुलक इत्यत्रापि। हौतृक इत्यत्र ऋरामान्तान्माधवठे कृते चतुर्भुजान्तादिति ठस्य कः। एवं मातृकादिद्वयेऽपि। पितृशब्दात् पक्षे यप्रत्यये ररामविधानं स्मारयति—ऋरामस्येति ॥

२५९७। गोत्रा। गोत्रवाचकादपादानात् तत आगतेऽर्थे नृसिंहो वुर्भवति। अत्र काशिकासम्मतगोत्रमङ्गीकुर्वन्नाह—अपत्येति। अपत्याधिकारादन्यत्रापत्यमात्रं गोत्रमित्यन्वयः। औपगवेभ्य इति बहुवचनेन प्राग्दीव्यतीये कर्तव्ये बहुषु लक्ष्मीं विनेत्यनेन प्राप्तगोत्रप्रत्ययमहाहराभावः सूचितः। एवं कुरुभ्य इत्यत्रापि ॥

२५९८। हेतोः। हेतुभूताच्छब्दान्मनुष्यनाम्नश्च तत आगतेऽर्थे

समादागतः समरूप्यः, विषमरूप्यः, पक्षे गहादित्वाच्छः—समीयः, विषमीयः। तथा विष्णुदत्तरूप्यः, वैष्णुदत्तः। तथा सममयः, विष्णुदत्तमयः॥ २५९८॥

तत आगतः निवृत्तः।

२५९९। ततः प्रभवति।

अत्रापि यथास्वम्। हैमवती गङ्गा॥ २५९९॥

२६००। विदूराण्यरामः।

वैदूर्यः॥ २६००॥

---

रूप्यो वा मयट् च वा स्यात्। पक्षे यथासम्भवम्। रूप्यमयटाविति न कृतं क्रमनिरासार्थम्। समादागत इति समाद्धेतोरागच्छतीत्यर्थः। विषमरूप्य इति विषमादागत इत्यर्थः। रूप्याभावपक्षे गहादित्वाच्छः स्यादित्याह—पक्षे इति। मानवनाम्न उदाहरणार्थमतिदिशति—तथेति। वैष्णवदत्त इत्यत्रौत्सर्गिककेशवणः। हेतुमानवनाम्नोर्युगपदुदाहरणं दर्शयति—तथेति। अधिकारं निवर्तयति—तत इति॥

२५९९। ततः। विवरणमत्रेति। प्रभवतीति प्रथमदर्शनबोधकं तेन यतोऽन्येषां प्रथमदर्शनमुपलभ्यते तस्मान्नाम्नोऽत्रार्थे यथाविहितं प्रत्ययः स्यात्। प्रभुश्चायमिति गम्यम्। हैमवतीति हिमवतः प्रभवतीत्यर्थः सामान्यादत्र केशवणः। किञ्च, ब्रह्मलोकाद्गङ्गाया आगमनं हिमवतस्तु प्रथमदर्शनमित्यागतः प्रभवतीत्यनयोर्महान् भेदः॥

२६००। विदू। ततः प्रभवतीत्यर्थे विदूरशब्दाण्यरामो भवति। विदूरं नगरं ततः प्रभवति वैदूर्यो मणिः। वालवायाद्यण् विदूरञ्चेति क्रमदीश्वरसूत्रम्। विदूरनाम्नि नगरे वैदूर्यः संस्क्रियते आद्युपलम्भस्तु तस्य वालवायगिरेः सकाशादिति वालवायस्यैव विदूरादेशं करोति न तु विदूरात् प्रत्यय इति तट्टीकाकृच्च। ताभ्यामित्येवं यदुक्तं तत्त्वस्माकं ग्रन्थकृतो नाभीष्टं यतो वालवायस्य विदूरादेशेन तुल्यार्थता न ह्यादेशादेशिनोर्भिन्नार्थत्वं कुत्रचिदवगम्यते॥

२६०१। तद्गच्छति पथिदूतयोः।

अत्र च यथास्वम्। माथुरः पन्थाः, द्वारकीयो दूतः ॥२६०१॥

२६०२। अभिनिष्क्रामति द्वारम्।

अत्रापि यथास्वम्। मथुरामभिनिष्क्रामति द्वारं माथुरम्। उपचाद्द्वारं कर्तृ ॥ २६०२ ॥

२६०३। अधिकृत्य कृतो ग्रन्थः।

अत्र च यथास्वम्। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः। एवं भैमरथी आख्यायिका। साहचर्यात्—वासवदत्ता, कादम्बरी ॥ २६०३ ॥

---

२६०१। तद्ग। तद्गच्छतीत्यर्थे पथिदूतयोर्वाच्ययोस्तच्छब्द-निर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात्। मथुरां गच्छति माथुर इति सामान्यात् केशवणः। मथुराया नैरन्तर्यलक्षणा प्राप्तिरेव पथो गमनम्। किम्वा पथि स्थितेषु गच्छत्सु पन्था गच्छतीत्युपचारे-णोच्यते। द्वारकां गच्छति द्वारकीय इति, आदिवृष्णीन्द्रादित्यनेनात्र छरामः। अपथिदूतयोस्तु मथुरां गच्छति वैष्णवः।।

२६०२। अभि। लक्षणवीप्सेत्थम्भूतेष्वभिरित्यभेः कृष्णप्रवचनीय-त्वाद्द्वितीयान्तापेक्षत्वं तेन यदभिनिष्क्रामति द्वारं तस्माद्यथास्वं प्रत्यथः स्याद्द्वारे वाच्ये। मथुरेति मथुरामभिमुखं निष्क्रामतीत्यर्थः। निष्क्रमणे द्वारं करणत्वेन प्रसिद्धं तर्हि कथमत्र कर्तृरूपं प्रतीयते इत्याक्षेपे सिद्धान्तमाह–उपेति। करणत्वेऽपि स्वतन्त्रोपचारात् द्वारमत्र कर्तृ विवक्षितम्। अद्वारे तु मथुरामभिनिष्क्रामति साधुः।।

२६०३। अधि। अधिकृत्य प्रक्रम्य आरभ्येति यावत्। अत्राप्यधि-कृत्येति कर्मापेक्ष्यते इति यदधिकृत्य कृतो ग्रन्थस्तस्माद्यथास्वं प्रत्ययः स्यादधिकृत्य कृतग्रन्थे वाच्ये। सौभद्र इत्यत्र सामान्यतः केशवणः। अग्रन्थे तु सुभद्रामधिकृत्य कृतः प्रासाद इत्यत्र वाक्यस्यैव विश्रान्तिः।

२६०४। शिशुक्रन्दाद्यमसभाद् रामकृष्णसमासादिन्द्रजननादेश्च छरामः।

शिशुक्रन्दं रोगमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः, यमसभीयः, किरातार्जुनीयः, इन्द्रजननीयः। आदेः—शिष्योपनयनीयोऽध्यायः, सीतान्वेषणीयं काव्यम्, प्रद्युम्नागमनीयम्। आकृतिगणोऽयम् ॥ २६०४ ॥

२६०५। रामकृष्णे देवासुरादेः प्रतिषेधः।

दैवासुरं, गौणमुख्यम् ॥ २६०५ ॥

---

एवमिति भीमरथमधिकृत्य कृता आख्यायिका भैमरथीति पूर्ववदत्रापि केशवणः। सहचरितादपि प्रत्ययोत्पत्तिर्भवत्याह—साहचर्यादिति। वासवदत्तः कश्चित् तत्सहचरितं कर्मादि वासवदत्तं तदधिकृत्य कृता आख्यायिका वासवदत्तेति अजादित्वादत्रेप् न स्यात्। एवं कादम्बरः कश्चित् तत्सहचरितं कर्माद्यधिकृत्य कृता आख्यायिका कादम्बरीति। किञ्च, अजादित्वाभावादत्राणकेशवेत्यनेन ईप् ॥

२६०४। शिशु। तदधिकृत्य कृतो ग्रन्थ इत्यर्थे शिशुक्रन्दाद्यमसभान्नाम्नो रामकृष्णसमाससिद्धाच्च नाम्न इन्द्रजननमादि यस्य तस्माच्चोत्तरश्छरामः स्यात्। यमस्य सभा यमसभमित्यत्र राजशब्दं राजविशेषनाम चेति ब्रह्मत्वं ततस्तदधिकृत्य कृतो ग्रन्थो यमसभीयः। किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयः। इन्द्रस्य जननं इन्द्रजननं तदधीति पूर्ववदिन्द्रजननीयः। आदेरिति इन्द्रजननादेरादिपदाद्यथासम्भवमन्येऽपीति योज्यम्। गणं दर्शयति—शिष्योपेति। गणस्येयत्ताभावादाह—आकृतीति ॥

२६०५। राम। पूर्वोक्तेऽर्थे रामकृष्णसमासे देवासुरादेरुत्तरस्मिन् छरामस्य प्रतिषेधः स्यात्। देवासुराधिकृत्य कृतमाख्यानं दैवासुरं तथा गौणमुख्यं राक्षोगन्धर्वमित्यादि। अधिकृत्येति समाप्तम् ॥

२६०६। सोऽस्य निवासः।

अत्र च यथास्वम्। माथुरः, राष्ट्रियः ॥ २६०६ ॥

२६०७। सोऽस्याभिजनः।

अत्र च यथास्वम्। मथुराभिजनः कुलस्थानमस्य माथुरः ॥२६०७

२६०८। पर्वतेभ्यश्छ आयुधजीविनि।

मन्दारः पर्वतोऽभिजन एषामायुधजीविनाम्—मन्दारीयाः ॥ २६०८॥

२६०९। शण्डिकादेर्ण्यः।

शाण्डिक्यः, साङ्काश्यः ॥ २६०९ ॥

---

२६०६। सो। विवरणमत्रेति। निवसन्त्यस्मिन् निवास इत्यधिकरण-घणन्तम्। सोऽस्य निवास इत्यर्थे तच्छब्दनिर्दिष्टाद्देशादेरुत्तरो यथास्वं प्रत्ययो भवति। मथुरा निवासोऽस्य माथुर इत्यत्र सामान्यात् केशवणः। राष्ट्रो निवासोऽस्य राष्ट्रिय इत्यत्र राष्ट्राद्घराम इति घः॥

२६०७। सोऽस्या। सोऽस्याभिजनः कुलस्थानमित्यर्थे तच्छब्दनिर्दिष्टाद्देशादेर्यथाविहितं प्रत्ययः स्यात्। अभिजनः कुलस्थानं पूर्वबान्धवनिवास इति यावत्। माथुर इति सामान्यतः केशवणः। विशेषे तु राष्ट्रिय इत्यादिः॥

२६०८। पर्व। सोऽस्याभिजन इत्यर्थे आयुधजीविनि वाच्ये पर्वतवाचिभ्यश्छरामः स्यात्। पर्वतमात्रनिदशात् गोवर्धनीयाः त्रिकूटीयाः पञ्चकूटिया इत्यादिः। आयुधजीविनीति किम् ? ऋक्षोदोऽस्याभिजनः आर्क्षोदो ब्राह्मणः॥

२६०९। शण्ड। पूर्वोक्तेऽर्थे शण्डिकादेर्ण्यरामो भवति। शण्डिकोऽस्याभिजनः शण्डिक्य इति। एवं साङ्काश्यः। शण्डिक सङ्काश सर्वसेन सर्वकेश शक शट शकवक शटवक शङ्ख बोध कूच बारेति शण्डिकादिर्द्वादशः॥

२६१० । सिन्धु-तक्षशीलादिभ्यः केशवणः ।

सैन्धवः, ताक्षशीलः, काश्मीरः ॥ २६१० ॥

२६११ । भक्तिः ।

भज्यते सेव्यते भक्तिः । अत्रापि यथास्वम् । विष्णुर्भक्ति-रस्य वैष्णवः । एवं माथुरः ॥ २६११ ॥

२६१२ । अचित्तादद्देशकालान्माधवठः, महाराजाच्च ।

आपूपिकः । नेह—माथुरः, ग्रैष्मः । तथा माहाराजिकः ॥२६१२॥

---

२६१० । सिन्धु । सोऽस्याभिजनः इत्यर्थे सिन्धुतक्षशीलावादी येषां तेभ्यः केशवणः स्यात् । सिन्धरस्याभिजनः कुलस्थानमिति सैन्धवः । एवं ताक्षशील इत्यादिः । सिन्धु तक्षशील काश्मीर वर्ण मधुमत् कम्बोज साल्व किष्किन्ध शब्दिका उरस् गन्धार दरद शर वत्सोद्धरण कुवल कौत्सम्त्वर काण्ड वारण ग्रामणी सकल कंस छिन्न संकुचित सिंह कोष्ठ बन्ध बर्वट अम्लानेत्यष्टाविंशतिः सिन्ध्वादिः । सिन्धु वर्ण कम्वोज मधुमत् काश्मीर साल्व इत्येतेभ्यो मनुष्य-तत्स्थयोरित्यनेन कच्छादित्वान्नृसिंहवुरामे, कौत्सम्बर काण्ड वारण ग्रामणीत्येतेभ्यः काश्यादिभ्य इत्यनेन नृसिंहठे, शेषेभ्य आदिवृष्णीन्द्रा-दपि बहुवचनविषयादित्यनेन नृसिंहवुरामे प्राप्ते विधानम् ॥

२६११ । भक्तिः । कृतो बाहुल्याद्भक्तिशब्दोऽत्र कर्मविहित-क्तान्तः इत्याह—भज्यत इति । यदि भक्तिरिति कर्मविहितक्तान्तं न स्यात्तदा विष्णुर्भक्तिरस्येत्यत्र विष्णुरित्युक्तं न स्यात् । अत्रेति वृत्तिः । अत्रेति सा भक्तिरित्यर्थे नाम्नो यथास्वं प्रत्ययः स्यात् । विष्णुर्भक्तिः सेव्य इत्यर्थः । माथुर इति मथुरा भक्तिरस्येत्यर्थः । विशेषे तु राष्ट्रिय इत्यादिः ॥

२६१२ । अचि । सा भक्तिरस्येत्यर्थे देशकालव्यतिरिक्तादचित्त-वाचकाच्छब्दान्माधवठो भवति । महा । पूर्वोक्तेऽर्थे महाराजशब्दाच्च

२६१३। वासुदेवार्जुनाभ्यां वुरामः।

वासुदेवकः, अर्जुनकः ॥ २६१३ ॥

२६१४। गोत्रक्षत्रियाख्याभ्यां बहुलं वुर्नृसिंहः।

माधवकः, यौधिष्ठिरकः। बाहुल्यात् क्वचिन्न—पाणिनीयः, पौरवीयः॥ २६१४ ॥

२६१५। बहुवचनविषयाज्जनपदाद्विहितस्तत्सनामराजभ्यः।

---

माधवठः स्यात्। अपूपो भक्तिरस्येत्यर्थः। तथा शाष्कुलिकः। देशकाल वाचकात्तु सामान्यात् केशवणः स्यादित्याह—नेहेति। तथेति महाराजो भक्तिरस्येत्यर्थः।

२६१३। वासु। पूर्वोक्तेऽर्थे वासुदेवार्जुनाभ्यां वुरामः स्यात्। वासुदेवशब्दो देवतावाचीत्यस्मात् केशवणे, अर्जुनशब्दात्तु गोत्रक्षत्रियाख्याभ्यामित्यनेन नृसिंहवुरामे प्राप्ते विधानम्। वासुदेवो भक्तिरस्येत्यर्थे वासुदेवकः। एवमर्जुनकः॥

२६१४। गोत्र। पूर्वोक्तेऽर्थे गोत्रप्रत्ययान्तात् क्षत्रियाख्यशब्दाच्च बहुलं यथा स्यात्तथा नृसिंहो वुर्भवति। मधोर्गोत्रापत्यं माधवः, स भक्तिरस्य माधवकः। युधिष्ठिरो भक्तिरस्येति यौधिष्ठिरक इत्यादिः। बाहुल्यादिति सूत्रस्य बाहुल्यात् क्वचित् स्थले गोत्रक्षत्रियाभ्यां नृसिंहो वुर्न स्यात्। पणिनो गोत्रापत्यमिति केशवणस्तस्मिन् न च 'गाथिविदथी'त्यनेन संसारहराभावः, पाणिनः स भक्तिरस्येति 'आदिवृष्णीन्द्राच्छराम, इति छः पाणिनीयः। एवं पौरवो भक्तिरस्य पौरवीय इति च॥

२६१५। बहु। 'आदिवृष्णीन्द्रादि'त्यनेन बहुवचनविषयाज्जनपदात्तत्र जातादौ विहितो वुप्रत्ययस्तत्सनामराजभ्यो जनपद-सनाम-

अङ्गानां निवासोऽङ्गाः। तत्र जातः, आदिवृष्णीन्द्रादपीति वुर्नृसिंहः आङ्गकः। तद्वदङ्गा राजानो भक्तिरस्य आङ्गकः। भक्तिशब्दोऽत्र वेदाः प्रमाणमितिवत्॥ २६१५॥

भक्तिर्निवृत्ता।

२७१६। तेन प्रोक्तम्।

अत्रापि यथास्वम्। अन्येन कृता, माथुरेण प्रोक्ता, व्याख्याता—माथुरी वृत्तिः॥ २६१६॥

---

राजभ्यो भक्त्यर्थे भवति। अङ्गस्यापत्यानि पुमांस इति विहित-केशवणस्य 'बहुषु लक्ष्मीं विने'त्यनेन महाहरः। पश्चात्तस्य निवास इत्यस्य चातुरर्थिकस्य प्राग्दीव्यतीयत्वात्। अङ्गानां निवास इति वाक्ये तेन दीव्यतीत्यतः प्रागर्थेष्वित्यनेन केशवणस्ततश्चास्तुरर्थिकस्य स्मरहरस्तन्नाम्नि देश इत्यनेन तस्य स्मरहरस्तेन प्रकृतिलिङ्गवचनयोः प्रत्यावृत्तिः अङ्गा इति। ततस्तत्र जात इत्यर्थे आदिवृष्णीन्द्राद-पीत्यनेन बहुवचनेति पूर्वोक्ताद्वुर्नृसिंह इत्येवं यथा आङ्गक इति तद्वदङ्गा इति वाक्येऽप्याङ्गक इति *। भक्तिशब्दस्यैकवचनत्वे अङ्गा इत्यस्य बहुवचनत्वे बिशेषणविशेष्यभावस्यासङ्गतिमाशङ्क्य समादधाति—भक्तिशब्द इति। वेदाः प्रमाणमित्यत्र यथोद्देश्यविधेयभावान्वय-स्तद्वदिहापीत्यर्थः। प्रकरणमुपसंहरति—भक्तिरिति॥

२६१६। तेन। अत्रार्थेऽपि तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात्। प्रकर्षेण उक्तं व्याख्यातमित्यर्थं वाक्येनैव स्पष्टयति—अन्येनेति। अन्यथा तेन कृतो ग्रन्थ इत्यनेनाभिन्नार्थता स्यात्॥

---

* आदिवृष्णीन्द्रादपि इत्यनेन जातार्थे वुर्विहितः। स एव तद्धितो भक्त्यर्थेऽपि भवति अङ्गेषु जातः आङ्गकः। अयन्तु विशेषः। आदि-वृष्णीन्द्रादपीति देशवाचिभ्यस्तद्धितो जातार्थे विधीयते, बहुवचन-विषयाज्जनपदाद् यश्च विहितस्तन्नामराजभ्यो भक्त्यर्थे विधीयते। ( इति टीकान्तरम् )॥

२६१७। तित्तिर्यादिना प्रोक्तं छन्द आद्यधीयते विदन्ति वा।

तित्तिर्यादिभ्योऽस्मिन्नर्थे वक्ष्यमाणप्रत्ययाः स्युः। एतद्विवरणमाह॥ २६१७॥

२६१८। तित्तिरि-वरतन्तु-खण्डिकेभ्यो नृसिंह-छः।

तित्तिरिणा प्रोक्तं छन्दोऽधीयते विदन्ति वा तैत्तिरीयाः॥ २६१८॥

२६१९। काश्यपकौशिकाभ्यामृषिभ्यां णिनिः, कलापिवैशम्पायनयोरन्तेवासिभ्यश्च।

---

२६१७। तित्तिर्या। अत्र सूत्रं विवरणञ्च स्पष्टे इति तत्तन्न व्याख्यातम्। एतदिति। ग्रन्थस्यास्य स्वयं ग्रन्थकर्त्तैव वृत्तिकृदित्यात्मन उभयायितत्वात् आत्मानं वृत्तिकारं कल्पयित्वा विवरणमाहेत्युक्तम्, अन्यथा आहेत्ययुक्तं स्यात्। एतस्य सामान्यसूत्रस्य विवरणं सूत्रं ग्रन्थकृदाहेत्यर्थः। विवरणमित्येकवचनमतन्त्रं, तेन विवरणानीति ज्ञेयम्। तित्तिरीत्यादिबहुविधविवरणसूत्रस्य सम्भवाच्च॥

२६१८। तित्तिरि। तित्तिर्यादिना प्रोक्तं छन्द आद्यधीयते विदन्ति वेत्यर्थे तित्तिरवरतन्तुखण्डिकेभ्यो नृसिंहछः स्यात्। प्रोक्तप्रत्ययान्ताच्चेत्यनेन प्रोक्तप्रत्ययान्तात् प्राप्तप्रत्ययमहाहरस्य प्रतिषेधार्थमिदम्। पूर्ववदत्रापि तदध्येतृतद्वेदितृवाच्ययोर्न युगपत् प्रत्ययः किन्तु प्रत्येकं, वाशब्दस्य व्यवस्थार्थत्वात्। एवं वारतन्तवीयः खाण्डिकीयम् इति। अत्र औखीयमपि कश्चित् पठति॥

२६१९। काश्य। तेन प्रोक्तं छन्द आदीत्यादि पूर्वोक्तेऽर्थे ऋषिवाचिभ्यां काश्यपकौशिकाभ्यां णिनिर्भवति। इदमपि प्रोक्तप्रत्ययान्तात् प्रत्ययमहाहरबाधनार्थम्। कला। पूर्वोक्तेऽर्थे कलापिवैशाम्पायनयोरन्तेवासिभ्यश्च णिनिः स्यात्। इदमपि पूर्ववद्बाधकम्।

काश्यपिनः, कौशिकिनः। तथा हारिद्रविण, आलम्बिन इत्यादि। एवमन्येऽपि ॥ २६१९ ॥

२६२०। कठचरकाभ्यां महाहरः।

कठेन प्रोक्तमधीयते कठाः ॥ २६२० ॥

२६२१। कलापिनः कालापाः।

साधवः ॥ २६२१ ॥

---

काश्यपेन प्रोक्तं छन्द आद्यधीयते वदन्ति वा काश्यपिन इति। एवं कौशिकिनः। काश्यपेन प्रोक्तं कल्पमधीयते इत्यादि क्रमदीश्वर-वाक्यम्। यज्ञकर्मण्यनुष्ठेयविधेर्विधायको ग्रन्थः कल्प इति तट्टीका-कृच्चेति। युक्तमेतत् छन्द आदीत्यत्रादिपदोपादानात्। ऋषि-वाचकादन्यत्र तु कश्यपगोत्रः काश्यपः। तेन प्रोक्तमित्यर्थे तित्तिर्या-दिपाठात् काश्यपीयमिति। उत्तरसूत्रस्योदाहरणं दर्शयति—तथेति। कलापिनः शिष्यो हरिद्रुस्तेन प्रोक्तं छन्द आद्यधीयते विदन्ति वा हारिद्रविण इति। एवं तौम्बुरिणः, औपलिनः। किन्तु छगलिन इति कलापिशिष्यस्य छागलेयिन इति साधु वक्तव्यम्। इति हरिद्रादि-चत्वारः कलापिनः शिष्याः। आलम्बेन प्रोक्तं छन्द आद्यधीयते विदन्ति वा आलम्बिन इति। इत्यादीत्यादिपदेन पलिङ्ग कम्बल ऋषभ अरुण तण्डुल श्यामायन कठकलापिनिति सप्तानां ग्रहणम्। एवमन्येऽपीत्यनेन तु शौनक वाजसनेय शार्ङ्गरव शापेय शाम्पेय खाड़ायन स्कन्द स्कम्भ देवदर्श रज्जुकन्ठ कठशाठ कषाय तलवकार रज्जुभार पुरुषायुष इति पञ्चदशानां ग्रहणम् ॥

२६२०। कठ। तेन प्रोक्तं छन्द आद्यधीयते विदन्ति वेत्यर्थे वैशम्पायनान्तेवासित्वात् प्राप्तणिनेः कठचकराभ्यां महाहरः स्यात्। कठो मुनिस्तेन प्रोक्तं कठवल्यादिच्छन्दोविशेषमधीयते विदन्ति वा कठा इति। चरकोऽपि मुनिस्तेन प्रोक्तं चरकं वैद्यकशास्त्रमधीयते विदन्ति वा चरका इति ॥

२१६२। कला। कलापिना प्रोक्तं छन्द आद्यधीयते विदन्ति

२६२२। पाराशर्यशिलालिभ्यां णिनिर्भिक्षुनट-सूत्रयोः।

पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। एवं शैलालिनो नटाः॥ २६२२॥

२६२३। कर्मन्द-कृशाश्वाभ्यामिनिस्तयोः।

कर्मन्दी भिक्षुः, कृशाश्वी नटः॥ २६२३॥

गतं प्रोक्ताध्ययनादिः।

---

वेत्यर्थे केशवणेन सार्धं कलापिनः कालापाः साधवो भवन्ति। कलापिनो वैशम्पायनशिष्यत्वात् णिनिप्राप्तेर्विधानमिदम्। निपातनादत्र केशवणस्तस्मिन् संसारहरश्च॥

२६२२। पारा। तेन प्रोक्तमित्यादिपूर्वोक्तेऽर्थे यथाक्रमं भिक्षुनटसूत्रयोर्वाच्ययोः पाराशर्यशिलालिभ्यां णिनिर्भवति। द्वन्द्वात् परः पूर्वो वेत्युक्तेन सूत्रस्य प्रत्येकं भिक्षुनटाभ्यामन्वय इति सूचनार्थं वाक्ये भिक्षुसूत्रमित्युक्तम्, अधीयते इत्यस्माद्विदन्ति वेत्यपि योज्यम्। पाराशर्येत्यस्य गर्गादिर्यरामान्तस्य विष्णुजनात्तद्धितयस्येत्यनेन यहरः। किञ्च, भिक्षुनटसूत्रयोर्यद्यपि सामान्यवाच्यताप्रतीतिस्तथापि प्रोक्तरूपवाच्यता नत्वध्येतृवेदितृवाच्यतेति स्पष्टयितुं पाराशरिण इत्यस्य भिक्षव इति विशेष्यं दर्शितम्। एवमिति शिलालिना प्रोक्तं नटसूत्रमधीयते विदन्ति वा शैलालिनो नटा इत्यत्रापि सर्वं पूर्ववत् कल्प्यम्॥

२६२३। कर्म। तेन प्रोक्तमित्याद्यर्थे तयोर्भिक्षुनटसूत्रयोर्वाच्ययोः कर्मन्दकृशाश्वाभ्यामिनिर्भवति। अत्रापि पूर्ववद्वाच्यत्वं ज्ञेयम्। कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयते वेत्ति वा कर्मन्दीति। अध्येतृवेदितृकर्त्रोर्बहुवचननियमाशङ्कानिरासार्थमेकवचनान्तमुदाहरणमत्रोपन्यस्तम्। एवं कृशाश्वेनेत्यादि पूर्ववत् कृशाश्वीति भिक्षुः भिक्षाहारी नटो नर्तकः। ऋषिणा प्रोक्तयोर्ब्राह्मणकल्पयोरयाज्ञवल्क्यादेर्णिनिरिति वक्तव्यम्।

२६२४। तेनैकदिक्।

अत्रापि यथास्वम्। सुदाम्ना पर्वतेन एकदिक् सौदामनी विद्युत्। एवं कार्ष्णास्तद्भक्ताः॥ २६२४॥

२६२५। तसिश्च।

पूर्वार्थे तसिश्च स्यात्। सुदामतः, कृष्णतः। वदादित्वादव्ययमिदम्॥ २६२५॥

२६२६। उरसस्तसियौ।

उरस्तः, उरस्यः॥ २६२६॥

---

ऋषिकर्त्री प्रोक्तयोर्ब्राह्मणकल्पयोर्वाच्ययोरध्ययनवेदनयोः सतोर्याज्ञवल्क्यादेरन्यस्मात् पूर्ववण्णिनिः स्यात्। शाट्यायनेन प्रोक्तं ब्राह्मणं वेदैकदेशमधीते वेत्ति वेति शाट्यायनी। पिङ्गेन प्रोक्तं कल्पमधीते वेत्ति वा पैङ्गीत्यादि। याज्ञवल्क्यादेस्तु याज्ञवल्क्यः आश्वरथः सौलभन इत्येतेषु सामान्यात् केशवणः। अधिकारं निवर्तयति—गतमिति।

२६२४। तेनै। विवरणमत्रेति। एकशब्दस्तुल्यार्थ इत्यतस्तेनेत्यत्र तुल्यार्थैः षष्ठी चेत्यनेन तृतीया। तेन समानदिशि वाच्यायां तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यादिति फलितार्थः। सौदामनीत्यत्र नान्तस्य नत्वणीपोरिति निषेधात् संसारहरो न स्यात्। षन्-हन्-धृतराज्ञामित्यनेनाणि नियमात्। 'वम-सत्सङ्गहीनस्ये'त्यनेनारामहरश्च न स्यात्। कार्ष्णा इति कृष्णेन एकदिश इत्यर्थः॥

२६२५। तसि। पूर्वस्मिन्नर्थे नाम्नस्तसिः स्यात्। पूर्वापरयोः परविधिर्बलवानिति न्यायेन औत्सर्गिकस्यापवादकस्तसिरित्याशङ्कानिरासार्थोऽत्र चकारः। सुदामत इति सुदाम्ना पर्वतेनैकदिगित्यर्थः। एवं कृष्णतः हिमवत्त इत्यादि। स्वरादि चादिवदादितद्धित इति यदुक्तं तदेव स्मारयति वदादीति॥

२६२६। उर। पूर्वोक्तेऽर्थे उरसस्तसिर्यश्च भवति। उरसैकदिक् उरस्त इत्यादिद्वयम्॥

२६२७। उपज्ञातम्।

अत्रापि यथास्वम्। तेनेत्यनुवर्तते तस्येदमित्यतः प्राक्। पाणिनिनोपज्ञातं प्रथमकृतं पाणिनीयम्, कालापं व्याकरणम्। एवं कार्ष्णी गीता। तद्वद्भागवतम्॥ २६२७॥

२६२८। कृतो ग्रन्थः।

अत्रापि यथास्वम्। भागवती चतुःश्लोकी॥ २६२८॥

२६२९। कृते संज्ञायाम्।

अत्रापि यथास्वम्। माक्षिकं मधु। एवं क्षौद्रमित्यादि॥२६२९॥

---

२६२७। उप। तस्येदमित्यतः पूर्वस्मिन् प्रागुक्तसूत्रेभ्यस्तेनेत्यनुवर्तयन्नाह–तेनेति। तेनोपज्ञाते वाच्ये तच्छब्दवाच्यान्नाम्नो यथास्वं प्रत्ययः स्यात्। धातूनामनेकार्थत्वात्। 'उपसर्गेण धात्वर्थो वलादन्यत्र नीयते' इति प्राचीनोक्तत्वाच्च उपज्ञातं प्रथमकृतमिति दत्तम्। यत् केनापि न कृतं तत् प्रथमकृतं ज्ञेयम्। विनोपदेशेन ज्ञातमुपज्ञातमित्यन्ये। पाणिनीयमित्यादिवृष्णीन्द्राच्छः। कालापमिति कलापिनोपज्ञातमित्यर्थः। सब्रह्मचार्यादेः समूहाद्यणि चेत्यनेनात्र संसारहरः। कार्ष्णीति कृष्णेनोपज्ञातेत्यर्थः। भागवतमिति भगवतोपज्ञातमित्यर्थः। कालापादीनां क्रमेण व्याकरणादित्रयं वाच्यपदम्॥

२६२८। कृतो। तेनेत्यनुवर्तते पूर्वोक्तात्, अतएव तेन कृतः स्वयमुत्पादितो ग्रन्थ इत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो यथाविहितं प्रत्ययः स्यात्। भगवता कृता भागवतीति चतुःश्लोकीत्यत्र 'अरामान्तत्रिरामी'-त्यनेन लक्ष्मीता। ग्रन्थ इति किम्? वैष्णवाचार्येण कृता मालेत्यत्र न स्यात्॥

२६२९। कृते। संज्ञायां गम्यमानायां तेन कृते वाच्ये नाम्नो यथास्वं प्रत्ययः स्यात्। मक्षिकया कृतं माक्षिकमिति मधुनः संज्ञा तेन मध्विति विशेष्यं दर्शितम्। एवमिति क्षुद्रया कृतमित्यर्थः।

२६३०। इन्द्रियादिभ्यो वुर्नृसिंहः।

ऐन्द्रियकं ज्ञानम् ॥ २६३० ॥

तेनेति निवृत्तम्।

२६३१। तस्येदम्।

अत्र च यथास्वम्। हरेरिदं हारम्। तस्येदमित्यनुवर्तते विकारं यावत् ॥ २६३१ ॥

२६३२। रथाद् यरामः, वाहनपूर्वात् केशवणः।

रथ्यं परमरथ्यम्। तथा आस्यरथं चक्रम् ॥ २६३२ ॥

---

इत्यादीत्यादिपदेन गमुंत पूतिका सरघा भ्रमर वरटा वातपेत्यादीनां ग्रहणम्। एभ्योऽत्र सामान्यतः केशवणः ।।

२६३०। इन्द्रिया। तेन कृतेऽर्थे इन्द्रियमादि येषां तेभ्यो नृसिंहो वुर्भवति। इन्द्रियं नेत्रादि तेन कृतं ऐन्द्रियकम्। एवं चक्रेण कृतं चाक्रं खण्डमित्यादि। अन्येत्वत्र कुलाल वरुड़ चण्डाल श्वपाक निषाद कर्मकार कुम्भकार सेना गिरिक देवराज परिषद् वधू ब्राह्मण उरु तरु अनड्वाह इत्यादीन् पठन्ति। अनुवर्तनं निवर्तयति— तेनेति ।।

२६३१। तस्ये। तस्येदमित्यर्थे यत्तत्पदनिर्दिष्टं तस्मान्नाम्नो यथास्वं प्रत्ययो भवति। लिङ्गवचनयोरतन्त्रत्वसूचनार्थमिदमित्यत्र सामान्यतो ब्रह्मत्वं दर्शितम्। तस्येति यावद्विकारमागमिष्यति तावत्तस्येदमित्यनुवर्तत इत्यन्वयः ।।

२६३२। रथा। तस्येदमित्यर्थे रथशब्दाद् यरामः स्यात्। वाह। पूर्वोक्तेऽर्थे वाहनं पूर्वं यस्य तस्माद्रथात्तु केशवणः स्यात्। रथस्येदं रथ्यम्। नाम्ना तु क्वचिदित्यनेन तदन्तस्याप्यत्र ग्रहणमिति सूचनार्थं परमरथ्यमित्यप्युदाहृतम्। वाहनपूर्वादप्यनेन यरामे प्राप्ते केशवणविधानं यत्तदुदाहरति—तथेति। अश्वेन युक्तो रथोऽश्वरथ-

२६३३। हलसीराभ्यां माधवठः।

हालिकम् ॥ २६३३ ॥

२६३४। रामकृष्णाद्वुवैँरविवहनयोर्लक्ष्म्याम्।

काकोलूकिका, अत्रिभरद्वाजिका। दैवासुरमित्यत्र तु न दृश्यते ॥ २६३४ ॥

२६३५। गोत्रचरणाभ्यां वुर्नृसिंहः, न तु दण्डमानवान्तेवासिषु।

गार्गकम्। चरणाद्धर्माम्नाययोरेव। काठकं, कालापकम्।

---

स्तस्येदम् आश्वरथम्। रथावयवे वाच्य एवेति ज्ञापनार्थं त्रयाणां विशेष्यं चक्रं दत्तम्। रथावयवादन्यत्र तु रथस्येदं स्थानमित्यादौ न स्यात् ॥

२६३३। हल। तस्येदमित्यर्थे हलसीराभ्यां माधवठो भवति। तथा सैरिकम् ॥

२६३४। राम। पूर्वोक्तेऽर्थे वैरविवहनयोर्वाच्ययो रामकृष्णसमासनिष्पन्नान्नाम्नो वुर्भवन् लक्ष्म्यां वर्तते। काकश्च उलूकश्चेति 'नित्यवैरिणामि'त्यनेन समाहारः काकोलकं तस्येयं वैरी काकोलकेति। अत्रिभरद्वाजयोर्विवहनं विवाहक्रिया अत्रिभरद्वाजिकेत्युभयत्रापि आपि कृते 'प्रत्ययस्थात् कादि'त्यनेन पूर्वारामस्येरामः। न दृश्यत इत्यनभिधानादिति शेषः। एवं राक्षोगन्धर्वमित्यादि। अदेवासुरादेर्वैरे इति जुमरः ॥

२६३५। गोत्र। तस्येदमित्यर्थे यस्मिन् कस्मिन् सम्बन्धिनि वाच्ये गोत्रचरणाभ्यां नृसिंहो वुर्भवति। दण्डमानवान्तेवासिषु वाच्येषु आभ्यां नृसिंहो वुर्न भवति। गार्ग्यस्येदं गार्गकमिति 'विष्णुजनादि'त्यनेन यहरः। चर। चरणो वेदैकदेशः वेदननिमित्ते पुरुषे वर्तमानः कठादिश्चरणवाचकस्तस्मात्तस्येदमित्यर्थे धर्मे आम्नाये च वाच्ये एव

दण्डमानवादौ तु गौकक्षाः, दण्डमानवाः। दाक्षा अन्तेवासिनः ॥२६३५॥

२६३६। सङ्घाङ्कलक्षणघोषेषु वैद-गार्ग्य-दाक्षि-प्रभृतिभ्यः केशवणः, शाकलान्नृसिंहवुश्च।

विदानां सङ्घोऽङ्को लक्षणं घोषो वा वैदः। गार्गः, दाक्षः। तथा शाकलकः, शाकलः॥ २६३६॥

---

नृसिंहो वुर्भवति नान्यस्मिन्। धर्मो गुणादिः। आम्नायः पाठपरम्परा। कठेन प्रोक्तं छन्द आद्यधीयते विदन्ति वेति कठचरकाभ्यां महाहर इति केशवणस्य महाहरः कठास्तेषामिदं काठकमिति। एवं कलापिनः ये कालापाः सिद्धास्तेषामिदं कालापकमिति। दण्डप्रधाना मानवा दण्डमानवा इति योगविभागादित्यनेन श्यामरामस्तदादौ वाच्ये तु प्रयोगो यथा—गोकक्षस्य गोत्रमिति विदादित्वात् केशवणः गोकक्षस्तस्येमे गौकक्षा इति, एवं दाक्षस्येमे दाक्षा इति। बहुत्वविषयेऽयं प्रतिषेध इति प्रतीत्यर्थं दण्डेत्यादिविशेष्यद्वयं बहुवचनान्तमुपन्यस्तम्॥

२६३६। सङ्घा। तस्येदमित्यर्थे सङ्घाङ्कलक्षणघोषेषु वाच्येषु वैदगार्ग्यदाक्षिप्रभृतिभ्यः केशवणः स्यात्। शाक। पूर्वोक्तेऽर्थे सङ्घादिषु वाच्येषु शाकलात् नृसिंहवुः केशवणश्च भवति। अङ्को गवादिस्थो न गवादीनां सम्भवति किन्तु गवादिस्वामिनः। लक्षणन्तु देवदत्तादिस्थं देवदत्तादेरेवेत्यङ्कलक्षणयोर्गोवलीवर्दवद्भेद इहाङ्गीकृत उभयोरुपादानात्। विदादेरगोपवनादेरित्यनेन बहुत्वे विदादेः केशवणस्य महाहर इति वाक्ये विदानामित्युक्तम्। अन्यथा सूत्रे वैदादीनां ग्रहणमनर्थकं स्यात्। एवं गर्गाणां सङ्घादिरिति प्रथमतो बहुषु लक्ष्मीं विनेत्यनेन गर्गादेर्माधवयस्य महाहरस्ततः केशवणः गार्ग इति। तथा बहुष्वित्यनेन दक्षाणां सङ्घादिरित्यत्रापि अरामान्तत्वाद्विहितनृसिंहेरामस्य महाहरः। पश्चात् केशवणः दाक्ष इति। तथेति। शाकल्यशब्दो गर्गादेर्माधवयान्त इत्यस्मात् शाकल्येन प्रोक्तमित्यर्थे विधानान्तराभावात् केशवणस्तस्मिन् सति 'विष्णुजना-

२६३७। छन्दोगौक्थिक-याज्ञिक-बह्वृच-नटेभ्यो ण्यरामः।

सामान्येन तस्येदमित्यर्थे। धर्माम्नाययोरित्येके। छान्दोग्यम् ॥ २६३७॥

२६३८। रैवतिकादिभ्यश्छरामः।

रैवतिकीयम् ॥ २६३८॥

२६३९। कौपिञ्जल-हास्तिपादाभ्यां केशवणः

कौपिञ्जलं, हास्तिपादम् ॥ २६३९॥

---

त्तद्धिते'त्यनेन यहरः। तस्मात् पुनस्तदधीते वेद वेत्यनेन विहित-केशवणस्य प्रोक्तप्रत्ययान्ताच्चेत्यनेन महाहरः। पुनः शाकलस्य सङ्घा-दिरिति नृसिंहवुकेशवणौ शाकलकः शाकल इति ॥

२६३७। छन्दो। सहेतुकस्वाभिप्रेतवृत्तिमाह—सामेति। सामान्येन हेतुना तस्येदमित्यर्थे यस्मिन् कस्मिन् वाच्ये छन्दोगौक्थिकयाज्ञिक-बह्वृचनटेभ्यो ण्यरामः स्यात्। तस्येदमित्यर्थे धर्माम्नाययोर्वाच्ययो-श्छन्दोगादिभ्यो ण्यरामः स्यादित्यन्ये। छन्दोगशब्दो सामवेदिवचनः। औक्थिकः सामव्याख्यानाध्येतृवचनः। याज्ञिको यज्ञविद्याध्येतृवचनः। बह्वृच ऋग्वेदिवाचीति। छन्दोगस्येदं छान्दोग्यमिति कर्म धर्म आम्नायो वा। एवमौक्थिक्यं याज्ञिक्यं बाह्वृच्यं नाट्यमिति ॥

२६३८। रैव। तस्येदमित्यर्थे रैवतिकादिभ्यश्छरामो भवति। रैवतिकादयो ह्यत्रापत्यप्रत्ययान्ता ज्ञेयाः। रैवतिकीयमिति। रेवत्या अपत्यमित्यर्थे रेवत्यादेर्माधवठ इति रैवतिकस्ततस्तस्येदमित्यर्थे छः। सूत्रस्थादिशब्दात् बहुवचनाच्च स्वापिशि क्षौमधृति सौरग्रीवि औद-मेघि औदवापि बैजवापीत्येतेषां ग्रहणम्। एभ्यस्त्वपत्यार्थेऽरामान्त-त्वान्नृसिंहेरामः। पश्चात्तस्येदमित्यर्थे छः स्वापिशीयमित्यादि ॥

२६३९। कौपि। पूर्वोक्तेऽर्थे कौपिञ्जलहास्तिपादाभ्यां केशवणः स्यात्। आभ्यां गोत्रप्रत्ययान्तत्वात् गोत्रचरणाभ्यामित्यनेन नृसिंहवु-

२६४०। आथर्वणिकस्येकलोपश्च।

आथर्वणो धर्मः आम्नायो वा॥ २६४०॥

पूर्णः शेषाधिकारः।

२६४१। तस्य विकारः।

अत्रार्थे। यथाविहितं प्राग्दीव्यतीयः स्यात्। आश्मनः, आग्नेयः, स्त्रैणः॥ २६४१॥

२६४२। अवयवे च प्राण्योषधिवृक्षेभ्यः।

एभ्यो विकारेऽवयवे च यथास्वं स्यात्। प्राणिनः—मयूराणां

---

प्राप्तौ विधानमिदम्। कौपिञ्जलस्येदं कौपिञ्जलमिति। एवं हास्तिपादम्॥

२६४०। आथ। तस्येदमित्यर्थे आथर्वणिकस्य सम्बन्धे केशवणस्तस्मिंस्तस्येकलोपश्च भवति। इदमपि पूर्ववद्दप्राप्ते विधाणम्। धर्माम्नाययोरेवेति स्वाभिप्रेतं सूचयति–धर्म इत्यादि। शेषाधिकारं निवर्तयति पूर्ण इति॥

२६४१। तस्य। वृत्तिमाह–अत्रेति। अयं विभुश्च। विकारः प्रकृतेरवस्थान्तरं कारणस्यान्यथात्वमिति यावत्। शेषार्थो निवृत्तः प्राग्दीव्यतीयस्तु न निवृत्त इति सूचनार्थं वृत्तौ प्राग्दीव्यतीय इत्युक्तम्। तस्मादेव तेन दीव्यतीत्यतः प्रागर्थेषु केशवण इत्यनेन केशवणस्याधिकारात्। अश्मनो विकार इत्यर्थे आश्मन इत्यत्र सामान्यतः केशवणः। आश्मन विकारे वा इत्यनेन संसारहरस्य विकल्पात् आश्मश्चेति। आग्नेय इत्यग्निकलिभ्यामित्यनेन माधवठः। स्त्रैण इति स्त्रीपुंसाभ्यां नृसिहनस्नाविति नः॥

२६४२। अव। एभ्य इति विवरणम्। यथास्वमित्यस्मात् प्रत्ययः प्रयोक्तव्यः। अवयवे चेति चशब्दस्योक्तसमुच्चयार्थत्वात् विकारे इति व्याख्यातम्। प्राणिन इति प्राणिनं लक्षीकृत्योदाह्रियते इति

विकारोऽवयवो वा मायूरः। भक्ष्याच्छादनयोरेव ; अन्यत्र तु मयूरमयञ्च, वक्ष्यमाणानुरोधात्। ओषधेः—मौर्वं भस्म, मौर्वं काण्डम्। वृक्षात्—आश्वत्थम्। अतःपरं प्राण्यादिभ्यो विकारावयवयो प्रत्ययः, अन्येभ्यस्तु विकारमात्र इति ज्ञेयम्॥ २६४२॥

२६४३। त्रपु-जतुनोस्त्रापुष-जातुषे।

साधुनी॥ २६४३॥

---

गम्ययवन्तात् पञ्चमी। यद्यपि विकारेऽवयवे चेति सामान्येनोक्तं, तथापि भक्ष्याच्छादनरूपयोर्विकारावयवयोरेव केशवणान्तो मायूरः। आभ्यामन्यत्राभक्ष्याच्छादनयोस्तु मयडन्तं मयूरमयं, चकारात् केशवणान्तं मायूरञ्चेत्याह—भक्ष्येत्यादिना। हेतुमाह—वक्ष्यमाणेति। वक्ष्यमाणन्तु मयड् वेति। भक्ष्यविकारो मांसम्। आच्छादनावयवं पुच्छम्। अभक्ष्यविकारो विष्ठादिः। अनाच्छादनावयवः पादादिरिति भेदः। ओषधेरिति औषधिमवलम्ब्योदाह्रियते। ओषधिः फलपाकान्तः। मौर्वमिति मुर्वाया विकारो भस्मेत्यर्थः। एवं मुर्वाया अवयवं काण्डमित्यर्थः। तथा दौर्वमित्यादि। वृक्षादिति पूर्ववत्। वृक्षः फलपुष्पवान्। आश्वत्थमिति अश्वत्थस्य विकारो भस्म अवयवः काण्डं चेत्यर्थः। एवं बिल्व ब्रीहि मुद्ग काण्ड मसूर गोधूम इक्षु वेणु गवेधुका कर्पासी पाटलि कर्कन्धू कुटीर वर्हिण इन्द्रादिश इन्द्रायुध इन्द्रसुरीष वरुण श्यामाक पीयूक्षादिभ्यश्चौत्सर्गिककेशवणः। इतः परं प्रत्ययोत्पत्तिव्यवस्थापकविधिवाक्यमाह—अत इति। अन्येभ्यस्त्विति प्राण्योषधिवृक्षसकाशाद्भिन्नेभ्य इत्यर्थः॥

२६४३। त्रपू। तस्य विकार इत्यर्थे सुडागमकेशवणाभ्यां सह त्रपुजतुनोः स्थाने त्रापुषजातुषे साधुनी भवतः। टिदागमस्य परसम्बन्धित्वात् षत्वन्त्वीश्वरहरिमित्रकडेभ्य इत्यनेन॥

२६४४। शम्याः शमीनश्च।

शमीनी स्रुक्॥ २६४४॥

२६४५। मयड् वा विकारावयवयोरभक्ष्याच्छादनयोः।

विकारे—सुवर्णमयः सौवर्णः। विकारावयवयोः—मयूरमयं मायूरं, मूर्वामयं मौर्वम्। 'अभक्ष्याच्छादनयोः' किम्? मौद्गः सूपः, कार्पासं वासः॥ २६४५॥

२६४६। आदि वृष्णीन्द्रात् शरादेश्च मयट्।

आम्रमयं, शालमयं, शरमयं, मृण्मयं, दर्भमयं, वृषमयम्॥ २६४६॥

---

२६४४। शम्या। तस्य विकार इत्यर्थे शम्याः केशवणस्तस्मिंस्तस्याः शमीनादेशश्च भवति। आदिसर्वेश्वरस्येति वृष्णीन्द्रः शमीनीति॥

२६४५। मयड्। यथासम्भवं भक्ष्याच्छादनव्यतिरिक्तयोस्तद्विकारावयवयोर्वाच्ययोर्नाम्नो मयड् वा भवति। पक्षे औत्सर्गिककेशवणः। सुवणादप्राणित्वात् विकार एव प्रत्ययोत्पत्तिरिति सूचयन्नुदाहरति—विकार इति। मयूरादेः प्राणित्वाद्विकारेऽवयवे च प्रत्ययोत्पत्तिरिति सूचनपूर्वकमुदाहरति—विकारेति। अभक्ष्येति। अभक्ष्याच्छादनयोरिति किं किमर्थं भक्ष्याच्छादनयोरिति यदि स्यात्तर्हि किं स्यादित्यर्थः। भक्ष्याच्छादनरूपविकारवाच्यत्वात् मौद्गादिद्वये केशवण एव॥

२६४६। आदि। यथासम्भवं तद्विकारावयवयोर्वाच्ययोरादिवृष्णीन्द्रात् शरादेश्च परो मयड् भवति। आम्रस्य विकार आम्रमयमित्यादिद्वयमादिवृष्णीन्द्रोदाहरणम्। एवमन्यदप्युदाहार्यम्। शरस्य

२६४७। एकसर्वेश्वराच्च।

वाङ्मयं, त्वङ्मयं, स्रङ्मयम् ॥ २६४७ ॥

२६४८। प्राणिभ्यो रजतादेश्च केशवण:।

मयड़पवादः। मायूरं, राजतं, शैशं, लौहम्, उडुम्बरम्। 'पुरीं दक्ष्यथ काञ्चनीम्' ॥ २६४८ ॥

२६४९। कौषेयं वस्त्रे, गोमयं गोः पुरीषे।

गव्यमन्यत्र ॥ २६४९ ॥

---

विकारः शरमयमित्यादि शरादेरुदाहरणम्। वृषमयमिति तु प्राणित्वदा-विकारावयवयोर्ज्ञेयम् ॥

२६४७। एक। यथायोग्यं तद्विकारावयवोर्वाच्ययोरेक-सर्वेश्वराच्च मयड् भवति। वाचो विकारो वाङ्मयमित्यादि ॥

२६४८। प्राणि। यथासम्भवं तद्विकारावयवयोर्वाच्ययोः प्राणिभ्यो रजतादेश्चापरः केशवणः स्यात्। सामान्यतः केशवणे प्राप्तेऽपि पुनः केशवणविधानात् मयड्वृत्येनेन प्राप्तपाक्षिकमयटोऽपवादकोऽयमिति स्वयं वृत्तिकारः सन्नाह—मयड़पेति। ननु भक्ष्याच्छादनयोर्मायूरमिति दत्तमेव भक्ष्याच्छादनयोस्तु मयूरमयं मायूरञ्च दत्तमिदानीं मयड़पवादादय-मप्यभक्ष्याच्छादनयोरिति लभ्यते, तथाभूतत्वेऽपि यद्यत्र मायूरमेव तर्हि कथं तत्र मयूरमयमित्युदाहृतम्? सत्यं उच्यते। यद्यपि सामान्येना-भक्ष्याच्छादनयोरित्युक्तं, तथाप्यत्र किञ्चिद्विशेषो विवक्षणीयः सत्वेवं प्रवर्तते, मयूरशब्देनात्र तन्मृतरूपस्य विवक्षणीयत्वात् तत्पुच्छादेर्लक्ष-णीयत्वाच्च तत्तद्रूपस्याभक्ष्याच्छादनरूपे विकारेऽवयवे च मायूरमिति सर्वमविरुद्धम्। रजतस्य विकारो राजतमिति, एवं शैशादि। रजत शीश लोह उड़म्बर नीपदारु रोहितक विभीतक पीतदारु त्रिकटक कण्टकारेति रजतादिराकृतिगण इत्यतः शिष्टोदाहरणं दर्शयति—पुरी-मित्यादि ॥

२६४९। कौषे। तस्य विकार इत्यर्थे वस्त्रे वाच्ये माधवढेन

२६५० । पिष्टकः पिष्टिका च संज्ञायाम् ।

अन्यत्र तु पिष्टमयम् ॥ २६५० ॥

२६५१ । व्रीहिमयः पुरोडाशे ।

व्रैहमन्यत् ॥ २६५१ ॥

२६५२ । तैलं यावञ्च संज्ञायाम् ।

अन्यत्र तु तिलमयं, यवमयम् ॥ २६५२ ॥

२६५३ । तालादेः केशवणः ।

मयड़ाद्यपवादः । तालं धनः ॥ २६५३ ॥

---

साकं कोषस्य कौषेयं साधु स्यात । गो । गोर्विकारावयवरूपे पुरीषे वाच्ये मयटा सह गोशब्दस्य गोमयं साधुः । गव्यमिति यरामान्तं वक्ष्यते । अन्यत्रेति गोपुरीषादन्यत्र दुग्धादावित्यर्थः ।।

२६५० । पिष्ट । तस्य विकार इत्यर्थे संज्ञायां वाच्यायां केन सह पिष्टस्य पिष्टकः पिष्टिका च साधू भवतः । अन्यत्रेति संज्ञाया अन्यत्र तु मयड़्वेत्यनेन पिष्टमयमित्यत्र मयट् स्यात् ।

२६५१ । व्रीहि । तस्य विकार इत्यर्थे पुरोडाशे वाच्ये मयटा सह व्रीहेर्व्रीहिमयः साधुः स्यात् । व्रैहमन्यत् विकारमात्रमित्यर्थः, सामान्यादत्र केशवणः ।।

२६५२ । तैल । तस्य विकारार्थे संज्ञायां वाच्यायां केशवणेन साकं तिलयवयोस्तैलं यावञ्च साधुनी भवतः । संज्ञाया अन्यत्र तु मयडित्याह—अन्येति ।।

२६५३ । ताला । पूर्वोक्तेऽर्थे धनुरादौ वाच्ये तालादेः केशवणः स्यात् । मयड़ादीत्यादिपदात् माधवढ-यरामयोर्ग्रहणम् । तालस्य विकार-स्तालमिति । आकृतिगणोऽयं तेन, पलाश खदिर शिंशपा स्यन्दन पुन्नाग करीर शिरीष यवाश किङ्कतेत्येतेषां ग्रहणं पलाशादेर्मयड़-पीत्येके ।।

२६५४। सुवर्णवाचिभ्यः परिमाणे केशवणः।

परिमाणरूपे विकार इति योज्यम्। हाटको निष्कः, जातरूपं कार्षापणम्। परिमाणे किम्? हाटकमयी यष्टिः॥२६५४॥

२६५५। विकाराद्यर्थदैवदारवादेः केशवणः।

दैवदारवस्य विकारोऽवयवो वा दैवदारवः। एवं शामीनः, कापित्थः, दाधित्थः, पालाशः, खादिरः। एवमुरामप्रकृतिकाः सर्वे। तथा प्राणिरजतादयश्च ज्ञेयाः॥ २६५५॥

२६५६। परिमाणात् क्रीतवत्।

सङ्ख्याप्यत्र परिमाणतया गृह्यते; तस्माद्विकारे क्रीतस्येव

---

२६५४। सुवर्ण। परिमाणात् पूर्वं तस्येत्यपि योज्यम्। तथा सति तस्य परिमाणरूपे विकारार्थे सुवर्णवाचिभ्यः शब्देभ्यः केशवणः स्यादित्यर्थः। निष्कस्तोलकद्वयं, कार्षापणन्तु षोड़शपलम्। परिमाणादन्यत्र विकारे मयड़ेवेति सङ्गमयति परीति॥

२६५५। विका। विकारादिरर्थो यस्य स विकाराद्यर्थः स चासौ दैवदारवादिश्चेति विकाराद्यर्थदैवदारवादिस्तस्मात् पुनस्तस्य विकारेऽवयवे च केशवणः स्यात्। एवमित्यतिदेशेन विकाराद्यर्थशामीनादीनां पुनस्तद्विकारावयवयोः केशवण इति सूचितम्। एवमिति प्रागुरामप्रकृतिका यदि पश्चाद्विकाराद्यर्थास्तदा पुनस्तद्विकारावयवयोरेवम्प्रकारेण केशवणान्ता ज्ञेयाः। यथा कङ्गोर्विकारः काङ्गवः पुनः काङ्गवस्य विकारः काङ्गव इत्यादि। तथेत्यनेन प्राणिरजतादयश्च पूर्ववज्ज्ञेयाः। यथा–आश्वस्य विकारोऽवयवो वा आश्व इत्यादि॥ राजतस्य विकारो राजत इत्यादि॥

२६५६। परि। सङ्ख्याया अप्यत्र परिमाणत्वेन ग्रहणं प्रतिपादयन्नाह–सङ्ख्येति। वृत्तिमाह–तस्मादिति क्रीतस्येवेति सप्तम्यर्थे षष्ठी। तस्मात् परिमाणवाचकात् विकारार्थे यथा प्रत्यया भविष्यन्ति,

प्रत्यया वाच्याः। यथा निष्केण क्रीतस्तथा निष्कस्य विकारोऽपि नैष्किकः, शत्यः, शतिकः॥ २६५६ ॥

२६५७। महाहरश्च क्रीतवत्।

द्विसहस्रः, द्विसाहस्रः॥ २६५७॥

२६५८। उष्ट्राद्वुर्नृसिंहः, उमोर्णयोर्वा।

उष्ट्रस्यावयवो विकारो वा औष्ट्रकः, औमकम् औमम्, और्णकम्, और्णम्॥ २६५८॥

२६५९। एण्या माधवढः।

ऐणेयम्। एणात्तु ऐणः॥ २६५९॥

---

तथा प्रत्यया वक्तव्या इत्यर्थः। यथा—निष्केण क्रीत इत्यर्थे प्राग्वते-र्माधवठ इति वक्ष्यमाणठेन नैष्ठिको भविष्यति तथेति सम्बन्धः। शत्य इत्यादिद्वये तु शतात् ठराम-यरामाविति वक्ष्यमाणसूत्रेण क्रीतार्थे यथा ठयौ तद्वदत्रार्थेऽपि ।।

२६५७। महा। सङ्ख्यायाः परिमाणत्वात् क्रीतार्थे यथा प्रत्ययस्य महाहरस्तथा विकारार्थे च। द्वयोः सरस्रयोर्विकार इति तद्धितार्थे त्रिरामी द्विसहस्र इत्यादिद्वये कार्षापणसहस्रसुवर्णेति वक्ष्यमाणेन क्रीतार्थे यथा—विकल्पमहाहरस्तथात्रापि ।।

२६५८। उष्ट्रा। तस्य विकारेऽवयवे च उष्ट्रान्नृसिंहो वुर्भवति। उमो। तत्तद्विकारावयवयोरुमोर्णयोः सम्बन्धे नृसिंहो वुः स्यात्। अतसिः स्यादुमा क्षुमा इत्यमरः। उर्णा पलाशतमित्युक्तम् ।।

२६५९। एण्या। तस्य विकारोऽवयवो वेत्यर्थे एण्या माधवढो भवति। एणी हरिणी। सूत्रे लक्ष्मीत्वनिर्देशात् एणात्तु औत्सर्गिक-केशवण इत्याह—एणात्त्विति। नाम्नो ग्रहणे लिङ्गविशिष्टस्य ग्रहण-मत्र नेष्टम् ।।

२६६०। गव्यपयस्ये।

साधुनी ॥ २६६० ॥

२६६१। दोर्द्रव्यं साधु, द्रोर्माने द्रुवयं साधु।

२६६२। फले।

प्रभुरयम् ॥ २६६२ ॥

२६६३। महाहरः।

विकारावयवयोरुक्तस्य फले महाहरः स्यात्। लक्ष्मीप्रत्ययस्येति वदर्या विकारोऽवयवो वा फलं वदरम्। एवं कुवलम्, आमलकम् ॥ २६६३ ॥

---

२६६०। गव्य। तत्तद्विकारावयवयोरर्थयोर्गोपयसोः स्थाने यरामेण सह गव्यपयस्ये साधुनी भवतः। गव्यं दुग्धादि, पयस्यं नवनीतादि ॥

२६६१। द्रो। तस्य विकार इत्यर्थे यप्रत्ययेन सह द्रुशब्दस्य द्रव्यं साधु स्यात्। द्रो। तस्य विकारे माने वाच्ये वयप्रत्ययेन सह द्रोः स्थाने द्रुवयं साधु स्यात् ॥

२६६२। फले। फले वाच्ये यथास्वं कार्यं स्यात्। अयं विधिः प्रभुनामा स्यात् ॥

२६६३। महा। वृत्तिमाह—विकारेति। तस्य विकारावयवयोरर्थयोर्मयड्इत्यादिनोक्तस्य मयड़ादेः फले वाच्ये महाहरः स्यादित्यर्थः। लक्ष्मीप्रत्ययस्येत्यस्मात् परं महाहरस्तद्धितमहाहरे इति योज्यम्। वदर्या इत्यस्य औपचारिकप्राणित्वं कल्पयित्वा विकारोऽवयवो वेत्युक्तम्। अन्यथा अन्येभ्यस्तु विकारमात्र इत्यनर्थकं स्यात्। एवमिति कुवली वदरी तस्या विकारोऽवयवो वा फलं कुवलम्। आमलक्या विकारादि आमलकम् ॥

२६६४। प्लक्षादेः केशवणः।

प्लाक्षं, नैयग्रोधं, काकुभं, वार्हतम्, आश्वत्थं, वैणवम् ॥२६६४

२६६५। जम्ब्वा केशव-णो महाहरस्मरहरौ च वा।

जाम्ववं फलम्। महाहरे—जम्बु फलं, जम्बूनि फलानि; स्मरहरे—जम्बूः फलं, जम्ब्वः फलानि ॥ २६६५ ॥

२६६६। फलपाकशुषश्च स्मरहरः।

यवादीनां फलानि यवा। तिला, मुद्गाः ॥ २६६६ ॥

२६६७। पुष्पफलमूलेषु स्मरहरो बहुलम्।

---

२६६४। प्लक्षा। तस्य विकारेऽवयवे च फले वाच्ये प्लक्षादेः केशवणः स्यात्। प्लक्षो जटी पर्कट्टिः स्यादित्याद्यमरप्रसिद्धम्। न्यग्रधो वटः, ककुभोऽर्जुनः, वृहती कण्टकारिका, अश्वत्थः प्रसिद्धः वेणुर्वंशः ॥

२६६५। जम्ब्वा। तस्य विकारोऽवयवो वा फलमित्यर्थे जम्ब्वा उत्तरो णरामो वा भवति, पुनर्मयड्त्यनेन प्राप्तमयट्केशवणयोर्महाहरस्मरहरौ वा भवतः। जम्ब्वा विकारोऽवयवो वा फलमिति जाम्बरमित्यादि। महाहर इति रूपं दर्श्यत इति शेषः। जम्बूनीति बहुवचनान्तं समासाशङ्कानिरासार्थं स्मरहरे बहुवचनविषयकजम्ब्व इत्यस्य भेदज्ञापनार्थञ्च। हरीतक्यादिषु तल्लिङ्गस्यैवेत्युक्तत्वात् जम्ब्व इत्यत्र न ब्रह्मलिङ्गम् ॥

२६६६। फल। फलस्य पाकेन शुट् शुष्कता यस्य तस्मान्नाम्नस्तद्विकारावयवरूपे फले वाच्ये मयड्त्युक्तप्रत्ययस्य स्मरहरः स्यात्। यवानामित्यस्मात् परं विकारावयवभूतानीति प्रयोक्तव्यम् ॥

२६६७। पुष्प। तस्य विकारावयवभूतेषु पुष्पफलमूलेषु वाच्येषु नाम्नः पूर्वोक्तप्रत्ययस्य बहुलं यथा स्यात्तथा स्मरहरः स्यात्।

मल्लिका, करवीरं, जाती पुष्पं; क्रमुकं फलं; विदारी मूलम्। एवं हरितक्यादयः। बाहुल्यात् पाटलमाशोकं पुष्पं, वैल्वानि फलानि ॥ २६६७ ॥

उक्तं विकारावयवयोः प्राग्दीव्यतीयाश्च समापिताः।

२६६८। तद्वहतीत्यतः प्राङ्माधवठः।

विभुरयम् ॥ २६६८ ॥

२६६९। तेन दीव्यति खनति जयति जितम्।

तेनेत्यनुवर्तते ओजोयावत् यत्रान्यन्नास्ति चक्रेण दीव्यति खनति जयति जितं वा चाक्रिकः। अक्षैर्जितम् आक्षिकं द्रव्यमित्यपि ॥ २६६९ ॥

---

हरीतक्यादिषु तल्लिङ्गस्यैवेत्यनेन मल्लिकादिषु त्रिषु तत्तल्लिङ्गस्यैव प्रत्यावृत्तिः। पुष्पमिति त्रयाणां विशेष्यम्। एवं क्रमुक इत्यादिद्वयेऽपि। पूर्वोक्तहरीतक्यादीनतिदेशेन स्मारयति—एवमिति। बहुलस्य प्रयोजनं दर्शयितुं हेतुमाह—बाहुल्यादिति। सूत्रस्य वैकल्प्यात् पाटलादिषु केशवणः स्यादिति भावः। उक्तमिति विकारावयवयोरुदाहरणमुक्तम्। प्राग्दीव्यतीयाश्च समापिताः मयेत्यन्वयः॥

२६६८। तद्व। तद्वहतीत्यतोऽर्थात् प्रागर्थे नाम्नो माधवठो भवति। स्वजातीयविजातीयानेकाधिकारव्यापित्वादयं विभुनामेत्यर्थः॥

२६६९। तेन। 'इक्स्तिपौ धातुनिर्देशे' इत्यनेनात्र दिवादित्रिभ्यः स्तीप् दीव्यतीति क्रीडनं व्यवहरणञ्च खनतीत्यवदारणं जयतीति सर्वोत्कर्षाविष्करणं जितमित्यतिक्रमणं वशीकरणञ्चेत्येतेष्वर्थेषु तेनेतिकरणार्थतत्पदनिर्दिष्टान्नाम्नो माधवठो भवति। यावच्छब्दोऽत्र इयत्तार्थ इति हेतोरोजःपर्यन्तं यत्रान्यत् प्रथमविभक्तिनिर्दिष्टं नाम नास्ति, तत्र तेनेत्यनुवर्तत इति परिभाषामाह—तेनेति। सूत्रे सङ्ख्यालिङ्गयो-

२६७० । तदाहेति माशब्दादिभ्यः ।

मा-शब्दमाह—माशब्दिकः । एवं नैत्यशब्दिकः । प्रभूतात् प्राभूतिकः, पर्याप्तात् पार्याप्तिकः ॥ २६७० ॥

२६७१ । सुस्नातादिकं पृच्छति ।

सौस्नातिकः, सौखरात्रिकः ॥ २६७१ ॥

२६७२ । परदारादिकं गच्छति ।

पारदारिकः, गौरुतल्पिकः ॥ २६७२ ॥

२६७३ । संस्कृतम् ।

---

रनियम इत्यक्षैर्जितमित्याद्युपन्यस्तम् । एवं कालानियमोऽपि ज्ञेयः । तेनाक्षैरदीव्यदिति वाक्येऽपि आक्षिक इति । करणादन्यत्र तु वैष्णवेन द्यूत इत्यादौ ठो न स्यात् ।

२६७० । तदा । तदाहेत्यर्थे माशब्द आदिर्येषां तेभ्यो माधवठः स्यात् । अत्र तदिति कर्मपदमस्तीति तेनेति नानुवर्तते । एवमुत्तरत्रापि विभुरित्यधिकारात् कर्मनिर्दिष्टादपि माधवठ इति न दोषाय, माशब्द-माह—माशब्दिक इत्यादि । प्रभूतादिति प्रभूतं लक्ष्मीकृत्य उदाह्रियत इति । प्रभूतः समर्थः । पर्याप्तः समाप्तः ॥

२६७१ । सुस्ना । सुस्नातादिकं पृच्छतीत्यर्थे सुस्नातादिका-न्माधवठः स्यात् । सुस्नातं पृच्छति सौस्नातिक इत्यादि । सुस्नात सुखरात्र सुखसुप्त सुखशय्येति ॥

२६७२ । पर । परदारादिकं गच्छतीत्यर्थे परदारादिकान्माधवठो भवति । परदारान् गच्छति पारदारिक इत्यादि । गुरुतल्पं गुरु-शय्या । गुरुतल्पशब्देन गुरुपत्नी लक्ष्यते इति कश्चित्, तत्तु नास्मा-कमभीष्टं परदारसमानार्थत्वात् ॥

२६७३ । संस्कृ । अत्रान्यविष्णुभक्तिनिर्दिष्टनाम्नोऽभावात् पूर्वोक्त-

दध्ना संस्कृतं दाधिकम् ॥ २६७३ ॥

२६७४। कुलत्थ-करामोद्धवाभ्यां केशवणः ।

कौलत्थं, तैन्तिड़ीकम् ॥ २६७४ ॥

२६७५। तरति ।

तृणपुलेन तरति तार्णपुलिकः ॥ २६७५ ॥

२६७६। नोद्विसर्वेश्वराभ्यां ठरामः ।

नाविकः, घटिकः, बाहुकः, क्षीविकः ॥ २६७६ ॥

२६७७। चरति ।

चरतिर्भक्षणे गतौ च । दाधिकः, शाकटिकः ॥ २६७७ ॥

---

तेनेत्यनुवर्तते इत्यतः, तेन संस्कृतमित्यर्थे संस्करणद्रव्यवाचकान्माधवठः स्यात् । एवं सर्पिषा संस्कृतं सार्पिष्कम् ॥

२६७४। कुल। तेन संस्कृतमित्यर्थे कुलत्थात् करामोद्धवाच्च केशवणः स्यात् । माधवठरामापवादोऽयम् । 'तिन्तिड़ीकञ्च चुक्रञ्च वृक्षाम्लः' इत्यमरः ॥

२६७५। तर। तेन तरतीत्यर्थे तरणवाचकान्माधवठः स्यात् । एवं पोतेन तरति पौतिक इत्यादि ॥

३६७६। नौ। तेन तरतीति नौशब्दात् द्विसर्वेश्वराच्च ठरामो भवति । नावा तरति नाविक इत्यादि ॥

२६७७। चर। यद्यपि चर गताविति धातुचन्द्रिकादौ तथापि धातूनामनेकार्थत्वात् स्वयमत्रार्थद्वयं दर्शयति—चरतिरिति । तेन चरतीत्यर्थे व्यञ्जनवाचकाद्वाहनवाचकाच्च माधवठः स्यात् । दध्ना चरति भुनक्ति दाधिक इति, शकटेन चरति गच्छति शाकटिक इति ॥

२६७८। आकर्षादेः केशवठः।

आर्कार्षिकः, पर्पिकः, रथिकः आश्विकः, आर्कार्षिकी ॥२६७८॥

२६७९। श्वगणात् केशवमाधवठौ।

श्वगणिकी, श्वागणिकी ॥ २६७९ ॥

चरतीति निवृत्तम्।

२६८०। वेतनादिना जीवति।

वैतनिकः, जालिकः, भारिकः, वार्तिकः ॥ २६८० ॥

२६८१। वस्नक्रयविक्रयेभ्यष्ठरामः।

---

२६७८। आक। तेन चरतीत्यर्थे आकर्षादेः केशवठः स्यात्। तद्वहतीत्यतः प्राक् सर्वे प्रत्यया माधवठापवादका इति यत्रान्यः प्रत्ययो नास्ति तत्र माधवठः स्यात्। आकर्षेण चरति आर्कार्षिक इत्यादि। आकर्ष पर्प रथ अश्व जाल व्यास व्याल इत्याकर्षादिः सप्त। आर्कार्षिकीति माधवठेनापि सिध्येत् पुनरत्र यत् केशवठान्तं तत् 'न वृष्णीन्द्रहेतुतद्धितान्तलक्ष्मी'त्यनेन प्राप्तपुम्वद्भावनिषेधनिरासार्थम् ॥

२६७९। श्वग। तेन चरतीत्यर्थे श्वगणात् केशवठो माधवठश्च भवति। श्वगणेन चरतीति श्वगणिकीत्यादिद्वयम्। द्वयोष्ठरामयोष्टित्त्वात् 'अण्केशवे'त्यनेन ईप्। किञ्च, श्वागणिकीत्यत्र 'न श्वपूर्वस्येरामे' इत्यनेन निषेधात् शौवादेशो न स्यात्। चरत्यर्थं समापयति—चरतीति ॥

२६८०। वेत। वेतनादिना जीवतीत्यर्थे वेतनादेरुत्तरे माधवठो भवति। वेवनेन जीवति वैतनिक इत्यादि। वेतन जाल भार वृत्त वाह वेष उपदेश प्रेषण उपास्ति सुख शय्या शक्ति उपनिषद् स्थिग पाद उपस्थान धनुस् दण्ड इत्यष्टादश वेतनादिर्गणः। धनुर्दण्डमित्यन्ये तेन धानुर्दण्डिक इत्यपि ॥

२६८१। वस्न। तेन जीवतीत्यर्थे वस्नक्रयविक्रयेभ्यष्ठरामः

वस्नेन जीवति वस्निकः, क्रयविक्रयिकः। विगृहीताच्च क्रयिको, विक्रयिकः॥ २६८१॥

२६८२। आयुधाच्छठौ।

आयुधीयः, आयुधिकः॥ २६८२॥

२६८३। उत्सङ्गादिना हरति।

औत्सङ्गिकः, औडुपिकः॥ २६८३॥

२६८४। भस्त्रादेः केशवठः विवधवीवधाभ्यां वा।

भस्त्रिकी, विवधिकी॥ २६८४॥

---

स्यात्। वस्नं मूल्यम्। विगृहीति। विगृहीतात् विभक्ताच्च क्रयविक्रयात् ठः स्यात्। तेन क्रयेण जीवति क्रयिक इत्यादिद्वयमपि॥

२६८२। आयु। तेन जीवतीत्यर्थे आयुधाच्छठौ भवतः॥

२६८३। उत्। उत्सङ्गादिना हरतीत्यर्थे उत्सङ्गादेर्माधवठः स्यात्। उत्सङ्गः क्रोड़ः। उडुपश्चन्द्रभेलयोः। उत्सङ्गादिनेत्यादि-पदेनात्र उष्ट्र उत्पट पिटकेति त्रयाणामपि ग्रहणम्॥

२६८४। भस्त्रा। तेन हरतीत्यर्थे भस्त्रादेरुत्तरः केशवठो भवति। विव। तेन हरतीत्यर्थे विवधवीवधाभ्यां केशवठो वा भवति, पक्षे माधवठश्च। भस्त्रया हरति भस्त्रिकीत्यादि। भस्त्रा वरट भरण शीर्षभार शीर्षेभार अंशभार अंशेभार इति भस्त्रादिः सप्त। विवधेन हरति विवधिकी वैवधिकी च *। एवं वीवधिकी वैवधिकी च। प्रत्याहारश्च मार्गश्च विवधवीवधौ च तावित्यमरः। पथि आहरणीये तण्डुलादावेतावित्येके॥

---

* निरुद्धविवधासारप्रसारा गा इव ब्रजम्। इति माघ (२।६४) पद्यस्य टीकायां मल्लिनाथेन विवधवीवधशब्दयोरर्था दर्शिताः। यथा— ध्यानादेर्वीवधः प्राप्तिरासारस्तु सुहृद्बलम्। प्रसारस्तृणकाष्ठादेः प्रवेश इति वैजयन्ती। विवधो वीवधो भारे पर्याहाराध्वनोरपीति हेमचन्द्रः॥

२६८५। कुटिलिकायाः केशवणः।

कुटिलिकया गत्या हरति कौटिलिकः॥ २६८५॥

२६८६। अक्षद्यूतादिना निर्वृत्तम्।

आक्षद्यूतिकं वैरं, जाङ्घापातिकम्॥ २६८६॥

२६८७। भावप्रत्ययात् प्राय इमः।

पाकेन निर्वृत्तं पाकिमं, कुट्टिमा भूमिः, सेकिमा तुलसी एवं कारिमा। पूर्णेन पूर्णिमा॥ २६८७

२६८८। अपमित्येत्यस्मात् नृसिंहकः।

---

२६८५। कुटि। तेन हरतीत्यर्थे कुटिलिकायाः केशवणः स्यात्। कुटिलिकाशब्देन कुटिला गतिः अग्रे वक्रा लोहादिमयी यष्टिरप्युच्यते, इति कौटिलिको मृगः। कुटिलिकया अङ्गाराणि हरति कौटिलिकः कर्मकारश्च ॥

२६८६। अक्ष। अक्षद्यूतादिना निर्वृत्तं निष्पन्नमित्यर्थे अक्षद्यूतादेर्माधवठो भवति। अक्षद्यूत जङ्घापात जायाप्रकृत पादश्वेद कण्टकमर्दन गतागत गमागम यातोपयातेत्यष्टाक्षद्यूतादिः ॥

२६८७। भाव। तेन निर्वृत्तमित्यर्थे भावप्रत्ययान्तात् प्रायो बहुलं यथा स्यात्तथा इमः स्यात्। पाकिममिति डु पचष् पाके भावे घण् तत इमः। कुट्टिमेति। कुट्ट छेदनकुत्सनयोरित्यस्मादपि भावघणन्तादिमः। सेकिमेति सिचिर् क्षरणे घण् चजोः कगाविति कः गोविन्दः पश्चादिमः। कारिमेति डु कृञ् करणे घण् वृष्णीन्द्रः तत इमः। पूर्णिमेति पुरी आप्यायने भावे क्तः। आ ईरामानुबन्धादितीड्भावः, 'रदाभ्यां विष्णुनिष्ठे'त्यनेन क्तस्य न 'धातोरवे'ति त्रिविक्रमः, पश्चादिमः। एषां लक्ष्मीवाच्यत्वात् 'कृष्णादावि'त्यनेनाप् ॥

२६८८। अप। तेन निर्वृत्तमित्यर्थेऽपमित्येत्यस्माच्छब्दान्नृसिंहको

अपमित्येन निर्वृत्तम् आपमित्यकं कम्बलम् ॥ २६८८

२६८९। याचितात् करामः।

याचितकम् ॥ २६८९ ॥

२६९०। संसृष्टम्।

दध्ना संसृष्टमेकीकृतं दाधिकम् ॥ २६९० ॥

२६९१। चूर्णादिनिः।

चूर्णिनोऽपूपाः ॥ २६९१ ॥

---

भवति। अपमित्येति मिङ् प्राणदाने इत्यस्मात् क्त्वा 'क्त्वो यवनञ्-पूर्वसमासे', इति यप्। 'उपेन्द्रोर्यादी'त्यनेनोपेन्द्रसमासः, 'वामनात्तुगि'ति तुक्। अपमित्येनेति शब्दानुकरणं कृत्वा तृतीयान्तं दर्शितम्। अन्यथा 'क्त्वामान्ताश्च कृदव्ययमि'त्यव्ययविधानात् 'अव्ययात् स्वादेर्महाहरः' इत्यनेन तृतीयाया महाहरः स्यात् ॥

२६८९। याचि। तेन निर्वृत्तमित्यर्थे याचितशब्दात् करामः स्यात् ॥

२६९०। संसृ। तेन संसृष्टमित्यर्थे करणार्थान्नाम्नो माधवठः स्यात्। एकीकृतं द्रव्यान्तरं मिश्रीकृतमित्यर्थः। सतः कृतोत्कर्षं हि संस्कृतं संसृष्टन्तु अनुत्कर्षेऽपि मिश्रमात्रमिति संस्कृतेन सहास्य भेदः। न च येन यत् संस्कृतं भवति तदवश्यं तेन सह मिश्रमित्ति नियतमस्ति ; यतो विद्यया संस्कृतो वैद्यिक इत्यत्रामूर्तया विद्यया संस्कारोऽस्त्येव न तु मिश्रत्वं अमूर्तया मिश्रत्वासम्भवात् ॥

२६९१। चूर्णा। तेन संसृष्टमित्यर्थे चूर्णशब्दादिनिर्भवति। ननु यत् चूर्णेन संसृष्टं चूर्णमप्यस्ति, 'अतस्तदस्यास्त्यस्मिन् वा मतुरि'ति मत्वर्थे णिना चूर्णिन इति सेत्स्यति किमनेन ? उच्यते। संसर्गविवक्षायान्तु तेन संसृष्टमिति माधवठः स्यात् तद्बाधनार्थमिदम् ॥

२६९२। मुद्गात् केशवणः।

मौद्गः सूपः ॥ २६९२ ॥

२६९३। लवणान्महाहरः।

लवणा यवागूः ॥ २६९३ ॥

२६९४। व्यञ्जनेनोपसिक्तम्।

दाधिकम्, सार्पिष्कम् ॥ २६९४ ॥

२६९५। ओज आदिना वर्तते।

औजसिकः, साहसिकः, आम्भसिकः ॥ २६९५ ॥

तेनेति निवृत्तम्।

---

२६९२। मुद्गा। तेन संसृष्टमित्यर्थे मुद्गशब्दात् केशवणः स्यात् ॥

२६९३। लव। तेन संसृष्टमित्यर्थे लवणशब्दात् सामान्यतः प्राप्तमाधवठस्य महाहरः स्यात्। लवणेन संसृष्टा लवणेति ॥

२६९४। व्यञ्ज। व्यञ्जनेन उपसिक्तमित्यर्थे व्यञ्जनवाचकात् माधवठः स्यात्। व्यञ्जनमिह दध्यादौ रूढ़ं गृह्यते, तेन संसृष्टमित्यनेन सिद्धेऽपि उपसिक्तविधानस्यैतत् प्रयोजनम्। उपसिक्तार्थे व्यञ्जनादेव यथा प्रत्ययः स्यात्, तथा उदकेनोपसिक्त ओदन इह मा भूदिति। किञ्च, नह्युपसिक्ते नियमेन गुणोत्कर्षः सम्भवति अपकर्षस्यापि सम्भवात् अतोऽस्यापि संस्कृतात् पृथक्त्वम्। सार्पिष्कमिति 'इतन्तादुसन्तादि'त्यनेन ठस्य कः ॥

२६९५। ओज। ओज आदि यस्य स ओज आदिस्तेन वर्तते इत्यर्थे ओज आदेर्माधवठो भवति। वर्तत इति चेष्टते ईहते इति यावत्। ओजसा वर्तते औजसिक इत्यादि। ओज यावदित्युक्तत्वात् तेनेत्यनुवर्तनं निवर्तयति—तेनेति ॥

२६९६। द्विगुणार्थं प्रयच्छति गर्हा चेत्।

द्विगुणार्थं प्रयच्छति द्वैगुणिकः। अत्राल्पकालत्वं तेन गर्ह्यत्वञ्च म्यम्। गवद्धये प्रयच्छति वार्धुषिकः साधुः॥ २६९६॥

२६९७। कुसीदं प्रयच्छति कुसीदिकः, एकादशार्थं दश प्रयच्छति दशैकादशिकश्च गर्हायाम्।

केशवठरामेण साधू॥ २६९७॥

---

२६९६। द्विगु। द्विगुणाय इदं द्विगुणार्थम्। गर्हा शास्त्रोक्त-व्यवहारविरोधिका व्यवहृतिः। एकस्मिन् द्रव्ये द्विणार्थमित्यनेन लक्षितस्तादर्थ्यविशिष्टो द्विगुणशब्दोऽत्र वर्तते इत्याक्षेपाल्लभ्यते। अतएव द्विगुणार्थं प्रयच्छतीत्यर्थे गर्हा चेत्तदा द्विगुणशब्दान्माधवठो भवति। गर्हा चात्राल्पकालत्वेन गम्येत्याह—अत्रेति। तथाहि, यदा उत्तमर्ण एकमेव द्रव्यमल्पकालत्वे द्विगुणार्थं द्विगुण कृत्वा प्रयच्छति पश्चात् पुनः प्रौढ़िवादेन तदेव वर्धयति तदैव कुत्सा। यदा त्वेकगुणं प्रयच्छति पश्चाद्द्विगुणं गृह्णाति तदा न गर्हा शास्त्रोक्तव्यवहारत्वात्। अत्रापि वृद्धय इति निमित्तार्थे चतुर्थ्यन्ते-नाजहत्स्वार्थलक्षणया वृद्ध्यर्थे वृद्धिशब्दस्य प्रवत्तिरिति प्रतिपाद्यते। गर्हा चेदित्यप्यत्रानुवर्तनीयं गर्हागम्यत्वन्तु पूर्वोक्ताल्पकालत्वेनैव। वृद्धये प्रयच्छतीत्यर्थे वृद्धिशब्दाद्विहितमाधवठेन सह तस्य वृधुषादेशेन च ाधुंषिकः साधुः स्यात्। अत्र वृधुषादेशे कृते पश्चादादिसर्व-श्वरस्येत्यनेन वृष्णीन्द्रः। वाधुंषिक इत्युत्तमर्णः, मुख्यतयावृत्त्या शब्दप्रयोगेऽधमर्णो वाच्यः स्यात्, यतोऽसावेव वृद्धिं प्रयच्छतीति जुमर-टाकाकृत्॥

२६९७। कुसी। कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं पूर्ववद-त्रापि गर्हा गम्येति। वृत्तिमाह—केशवेति। गर्हायां गम्यमानायां कुसीदं प्रयच्छतीत्यर्थे केशवठेन सह कुसीदस्य कुसीदिकः साधुः स्यात्।

२६९८। शब्ददर्दुरौ करोति।

शाब्दिको वेणुः, दार्दुरिकः शिल्पी ॥ २६९८ ॥

२६९९। पक्षि-मत्स्य-मृगान् हन्ति।

स्वरूपस्य पर्यायस्य तद्विशेषाणाञ्चेहेष्यते। पाक्षिकः, शाकुनिकः, मायूरिकः, मात्सिकः, मैनिकः, माद्गुरिकः, मार्गिकः, हारिणिकः, सारङ्गिकः ॥ २६९९ ॥

२७००। परिपन्थञ्च तिष्ठति।

परिपन्थशब्दोऽव्ययीभावः, अतएव निपातनात् साधुः। तत्तिष्ठति चकारान्निहन्ति वा पारिपन्थिकश्चौरादिः ॥ २७०० ॥

---

तथैकादशार्थं दश प्रयच्छतीत्यर्थे तेन सार्धं दशैकादशेत्यस्य दशैकादशिकः साधुः। दश च एकादश चेति रामकृष्णसमासे उक्तमिति 'सङ्ख्यायामल्पीयसश्चे'त्यनेन दशशब्दस्य पूर्वनिपातः। केशवठान्तनिपातनादत्र लक्ष्म्यां कुसीदिकी दशैकादशिकी च ।।

२६९८। शब्द। शब्ददर्दुरं करोतीत्यर्थे शब्ददर्दुराभ्यां माधवठः स्यात्। शाब्दिक इत्यस्यौ वाच्यपदं वेणुरिति दत्तम्। अन्येन तु लोकप्रसिद्धात् शाब्दिको वैयाकरणश्छात्रादिरित्युक्तम्। शिल्पीति सामान्येनोक्तम् दर्दुरो वाद्यभाण्डविशेषः। भाण्डसंस्कारकाले दर्दुरं शब्दविशेषं करोतीति रक्षितेन तु दार्दुरिकः कुम्भकारे रूढ़ो मन्यते ।।

२६९९। पक्षि। पक्षिमत्स्यमृगान् हन्तीत्यर्थे पक्ष्यादेर्माधवठो भवति। स्वरूपेति तदात्मरूपस्य तत्तुल्यार्थस्य तद्भेदानाञ्च ग्रहणमिहेष्यते इत्यर्थः। क्रमेणोदाहरति—पाक्षिक इत्यादिः। अजिह्मान् हन्ति अनिमेषान् हन्तित्यत्र न स्यात्। तत्तत्स्वरूपपर्यायविशेषणामभावात् साधारणादनभिधानाच्च ।।

२७००। परि। परिपन्थं तिष्ठति चकारात् तद्धन्ति चेत्यर्थद्वये परिपन्थशब्दान्माधवठः स्यात्। परिपन्थशब्दः सर्वेषां मतेऽव्ययीभाव-

२७०१। माथोत्तरपदं पदवीमनुपदमाक्रन्दञ्च धावति।

माथः पन्थाः। दात्तमाथिकः, पादविकः, आनुपदिकः, आक्रन्दिकः॥ २७०१॥

२७०२। पदोत्तरपदं प्रतिकण्ठमात्मानं ललामञ्च गृह्णाति।

पौर्वपदिकः, औत्तरपदिकः, प्रातिपदिका, प्रातिकण्ठिको वल्लभः, आत्मिकः, लालामिकः॥ २७०२॥

२७०३। धर्ममधर्मञ्च चरति।

धार्मिकः, आधर्मिकः॥ २७०३॥

---

सिद्धः स्वमताव्ययीभावसूत्रैस्तु न सिध्येत्। अतोऽत्रैव निपातनता साधयन्नाह—परीत्यादि। तदित्यस्याव्ययविशेषणत्वात् तस्मिन्नित्यर्थः॥

२७०१। माथो। माथोत्तरपदं पदवीमनुपदमाक्रन्दञ्च धावतीत्यर्थे माथोत्तरपदादेर्मधिवठो भवति। माथशब्दस्य दुष्पष्टार्थत्वात् स्वयमर्थमाह—पन्था इति। माथ इत्युत्तरपदं यस्य स माथोत्तरपदस्तं धावतीति माथोत्तरपदिक इत्यादि। पदवी वर्त्म। पदस्य पश्चादनुपदमिति पश्चाद्योग्ययोरित्यनेनाव्ययीभावसिद्धम्। समवायाद्यर्थोऽनुरिह न गृह्यतेऽनभिधानात्। आक्रन्दन्त्यत्राक्रन्दो देशः॥

२७०२। पदो। पदोत्तरपदं प्रतिकण्ठम आत्मानं ललामञ्च गृह्णातीत्यर्थे पदोत्तरपदादेर्मधिवठः स्यात्। पूर्वञ्च तत् पदञ्चेति पूर्वपदं तद्गृह्णाति पौर्वपदिक इत्यादि त्रयम्। कण्ठं प्रति प्रतिकण्ठमिति 'अभिप्रती लक्षणेने'त्यनेनाभिमुख्येऽव्ययीभावनिष्पन्नम्। ललामं भूषणविशेषः॥

२७०३। धर्म। अत्र चरतीति सेवनार्थं धातूनामनेकार्थत्वात्। धर्ममधर्मञ्च चरतीत्यर्थे धर्माधर्माभ्यां माधवठः स्यात्॥

२७०४। प्रतिपथमेति ठरामश्च।

प्रतिपथिकः, प्रातिपथिकः ॥ २७०४ ॥

२७०५। समवायादीन् समवैति।

सामवायिकः, सामूहिकः, सामुदायिकः ॥ २७०५ ॥

२७०६। परिषदः समवैति ण्यः, सेनाया वा।

पारिषद्यः ; सैन्यः, सैनिकः ॥ २७०६ ॥

२७०७। यः प्रभोर्ललाटमात्रं पश्यति न तु कार्ये व्याप्रियते, स लालाटिकः, यस्त्वविक्षिप्तदृष्टिः कुक्कुटी-

---

२७०४। प्रति । प्रतिपथमिति पूर्वपदाभिमुख्येऽव्ययीभावसिद्ध-मत्प्रत्ययान्तञ्च । प्रतिपथमेति गच्छतीत्यर्थे प्रतिपथशब्दात् ठरामः स्यात्, चशब्दान्माधवठश्च ॥

२७०५। सम। समवायो मिलनं स आदिर्येषां ते समवाया-दयस्तान् समवैतीत्यर्थे समवायादिभ्यो माधवठो भवति। समवायं समवैति इहागत्य तदेकदेशीभवति, समवायिक इत्यादि ॥

२७०६। परि। परिषदः समवैतीत्यर्थे परिषच्छब्दात ण्यरामः स्यात। परिषत् सभा अस्याः समवायार्थान्माधवठे प्राप्ते विधानम्। सेना। सेनां समवैतीत्यर्थे सेनाया ण्यो वा स्यात् समूहार्थत्वात् पक्षे माधवठश्च ॥

२७०७। यः । ललाटमात्रदर्शनं दूरस्थस्य भवतीत्यतः प्रभो-रित्यनेनानुश्लेषः सूचितः। न तु कार्ये व्याप्रियत इति तस्य कार्ये व्यापारयुक्तो न भवतीत्यर्थः। पृधातुरत्र दैवादिकः। य एवम्भूतः स लालाटिक इत्यन्वयः। यस्त्व। अविक्षिप्तदृष्टिरित्यनेन नियतेन्द्रियत्वं

पातयोग्यमल्पदेशं पश्यन् गच्छति, स कौक्कुटिकः। द्वौ च साधू॥ २७०७॥

२७०८। प्रतीपादिकं वर्तते।

प्रतीपं यथा स्यात्तथा वर्तते प्रातीपिकम्। एवमान्वीपिकः, प्रातिलोमिकः, आनुलोमिकः। 'तां प्रातिकूलिकीं मत्वा' इति भट्टिः (५।९४)। पारिमुखिकः, पारिपार्श्विकः॥ २७०८॥

२७०९। तदुञ्चति।

पौष्पिकः॥ २७०९॥

२७१०। तद्रक्षति।

सामाजिकः॥ २७१०॥

---

सूचितम्। कुक्कुटीपातयोग्यमल्पदेशमित्यनेन तु स्वपादमूलसमीपचतुर्हस्तप्रमाणभूमिदर्शित्वं सूचितम्। यः स इत्यनयोरत्रापि पूर्ववदन्वयः। एवमेवम्भूतेऽर्थे माधवठेन सह ललाटकुक्कुटशब्दयोर्लालाटिककौक्कुटिकाविति द्वौ साधू भवत इत्येकत्रैव वृत्तिमाह–द्वौ चेति। लालाठिकः कार्याक्षमो भृत्यः। कौक्कुटिकश्चतुर्थाश्रमी भिक्षुरिति प्रसिद्धम्॥

२७०८। प्रती। प्रतीपं प्रतिकूलं आदि यस्य तत् प्रतीपादिकमिति पीताम्बरसमासीय-कप्रत्ययान्तं क्रियाविशेषणमेतदिति वाक्ये स्पष्टं दर्शितम्। तेन प्रतीपादिकं यथा स्यात्तथा वर्तत इत्यर्थे प्रतीपादिकान्माधवठो भवति। अन्वीपमनुकूलं प्रतीलोम व्यतिक्रमः अनुलोमक्रमः। प्रतिकूलशब्दस्याप्यत्र ग्रहणमिति सूचयन् भट्टिमतेनैवोदाहरति–तामिति (५।९४)। तथा परिमुखादिद्वयस्यापि॥

२७०९। तदु। तदुञ्चति उच्चिनोतीत्यर्थे नाम्नो माधवठो भवति॥

२७१०। तद्र। तद्रक्षति पालयतीत्यर्थे नाम्नो माधवठः स्यात्॥

२७११। तस्य धर्मम्।

शुल्कस्य धर्म्यमाचारः शौल्किकः। एवमापणिकः ॥ २७११ ॥

२७१२। महिष्यादेः केशवणः।

महिष्या धर्म्यं मूल्यं माहिषम्। तथा पौरोहितं कर्म। एवं प्राजापतम् ॥ २७१२ ॥

२७१३। ऋरामात् केशवणः।

होतुर्धर्म्यं हौत्रम् ॥ २७१३ ॥

२७१४। विशसितुर्वैशस्त्रं, विभाजयितुर्वैभाक्तम्।

इण्णिलोपाभ्यां साधुनी ॥ २७१४ ॥

---

२७११। तस्य। तस्य धर्ममित्यर्थे तच्छब्दनिर्देशान्नाम्नो माधवठः स्यात्। शुल्कस्य मूल्यस्य धर्म्यमाचारो न्यायप्राप्त इति यावत् ॥

२७१२। महि। तस्य धर्म्यमित्यर्थे महिष्यादेरुत्तरः केशवणः स्यात्। पूर्वेण माधवठे प्राप्ते तद्बाधनार्थमिदम्। आचार इत्यस्य यथासम्भवत्वादत्र धर्म्यं मूल्यमिति दर्शितम्। कर्मेति वाच्यपदेन पुरोहितस्य धर्म्यं कर्मेति सूचितम्। महिषी पुरोहित प्रजापति प्रजावती प्रलेपिका अनुलेपिका विलेपिका अनुचारक यजमान मणिपाणीति महिष्यादिर्दश ॥

२७१३। ऋरा। तस्य धर्म्यमित्यर्थे ऋरामान्तान्नाम्नः केशवणः स्यात्। हु वह्नौ दाने इत्यस्य तृनन्तस्य होतुरिति ज्ञेयम्। एवमौद्गात्रमित्यादि ॥

२७१४। विश। विशसितुर्धर्म्यमित्यर्थे विपूर्व—शसु हिंसायामित्यस्य तृनन्तस्य केशवणेन सार्धमिड्लोपेन वैशस्त्रं साधु स्यात्। विभा। तस्य धर्म्यमित्यर्थे विपूर्व—भज सेवायां ण्यन्त इत्यस्य तृनन्तस्य केशवणेन साकमिण्णिलोपेन वैभाक्तं साधुः स्यात्। ऋरामादित्यनेन

२७१५ । तस्यावक्रयः ।

शुल्कस्यावक्रयः परिभाषितं मूल्यं शौल्किकः पशुः । एवमापणिकः ॥ २७१५ ।

२७१६ । तदस्य पण्यम् ।

मोदकाः पण्यमस्य मौदिकिकः, लावणिकः ॥ २७१६ ॥

२७१७ । किशरादेः केशवठः ।

किशरादि गन्धद्रव्यं, तदस्य पण्यं किशरिकः, उशीरिकः ॥ २७१७ ॥

२७१८ । तदस्य शिल्पम् ।

---

केशवणे प्राप्तेऽपीण्णिलोपाय वचनमिति स्पष्टयितुं वत्तिमाह–इण्णीति । इट्च णिश्च इण्णी, लोपश्च लोपश्च लोपौ इण्ण्योर्लोपौ इण्णिलोपौ ताभ्याम् । 'द्वन्द्वात् परः पूर्वो वे'त्युक्तदिशा इण्णिलोपेनेति कृतेऽपि कार्य सिद्धौ यत् इण्णिलोपाभ्यामिति कृतं, तेन पूर्वत्र इड्लोपेन परत्र इण्णिलोपेनेति ज्ञापितम् । किन्तु वैभाजित्रमित्युदाहरणार्थं जुमरस्तु केवलं णिलोपं करोति ।

२७१५ । तस्या । तस्यावक्रय इत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो माधवठः स्यात् । अवक्रयः परिभाषितं मूल्यमित्युक्तं, तच्च नैकान्तं धर्म्यं भवति, लोकपीड़यापि परिभाषितमूल्यग्रहणात् अतस्तस्य धर्म्यमित्यतो भिद्यते ॥

२७१६ । तदस्य । तदस्य पण्यं बिक्रय्यमित्यर्थे तच्छनिर्देशाच्छब्दान्माधवठः स्यात् ॥

२७१७ । किश । किशरादेस्तदस्य पण्यमित्यर्थे केशवठो भवति । किशर उशीर वदर स्थगर तरग गुग्गुल हरिद्रा हरिद्रुपर्णीति किशरादिराकृतिगणः ॥

२७१८ । तद । तदस्य शिल्पमित्यर्थे तच्छब्दवाच्यान्नाम्नो माधवठो

मृदङ्गवाद्यं शिल्पमस्य मार्दङ्गिकः। एवं वैणविकः।२७१८॥

२७१९। मड्डुक-झर्झराभ्यां केशवणश्च।

माड्डुकः, माड्डुकिकः॥ २७१९॥

२७२०। तदस्य प्रहरणम्।

चाक्रिकः॥ २७२०॥

२७२१। शक्तियष्टिभ्यां ठीर्माधवः।

शाक्तीकः॥ २७२१॥

२७२२। अस्ति-नास्ति-दिष्टं मतिरस्य।

---

भवति। शिल्पं कौशलं क्रियाभ्यासपूर्वकं ज्ञानविशेष इति यावत्। ननु मृदङ्गवाद्यं शिल्पमस्येति वाक्यमुपन्यस्तमित्यतो मृदङ्गवाद्यशब्दादेव प्रत्ययेन भवितव्यं तत् कथं मृदङ्गशब्दात् प्रत्यय इति चेत् केनाप्युच्यते तदैवं वाच्यम्। यथा मञ्चाः क्रोशन्तीत्यनेन मञ्चस्था जना उच्यन्ते, तद्वद्वाद्यस्य मृदङ्गस्थत्वाल्लक्षणया मृदङ्गशब्देन मृदङ्गवाद्यमुच्यते इति मृदङ्गादेव प्रत्ययः। एवमित्यतिदेशात् वेणुवाद्यशिल्पमस्येति यथायथमन्यदप्यह्यम्॥

२७१९। मड्डु। तदस्य शिल्पमित्यर्थे मड्डुकझर्झराभ्यां केशवणः स्यात्, चकारात् पक्षे माधवठोऽपि। मड्डुकझर्झरौ वाद्यद्रव्यविशेषौ। पूर्ववदत्रापि मड्डुकझर्झरयोस्तत्तद्वाद्य प्रवृत्तिः। मड्डुकवाद्यशिल्पमस्य माड्डुक इत्यादिद्वयम्। एवं झार्झरः झार्झरिकश्च॥

२७२०। तद। प्रह्रियतेऽनेनेति प्रहरणं करणद्रव्यम्। तदस्य प्रहरणमित्यर्थे यत्तच्छब्दनिर्देश्यं तस्मान्माधवठः स्यात्। चाक्रिक इति चक्रं प्रहरणमस्येत्यर्थः। एवं खाड्गिकः पारश्वधिक इत्यादि॥

२७२१। शक्ति। तदस्य प्रहरणमित्यर्थे शक्तियष्टीत्येताभ्यां माधवठीर्भवति। पूर्वेण माधवठे प्राप्ते तद्बाधनार्थमिदम्। शाक्तीक इति शक्तिः प्रहरणमस्येत्यर्थः। एवं याष्टीक इति॥

२७२२। अस्ति। अस्तीति नास्तीति दिष्टमिति च मतिर्ज्ञान-

अस्तीति मतिरस्य आस्तिकः। एवं नास्तिकः। दिष्टं प्रमाणं दैष्टिकः॥ २७२२॥

२७२३। तदस्य शीलम्।

अपूपभक्षणं शीलमस्य आपूपिकः। परुषं शीलमस्य पारुषिकः; एवमाक्रोशिकः, कारुणिकः॥ २७२३॥

२७२४। छत्रादिभ्यः केशवणः।

गुरुदोषाच्छादनाच्छत्रं शीलमस्य छात्रः, शैक्षः, तापसः, चुरा चौरः॥ २७२४॥

---

मस्येत्यर्थे अस्त्यादिभ्योस्त्रिभ्यो माधवठो भवति। एवं नास्तिक इति नास्तीति मतिरस्येत्यर्थः। अस्ति नास्तिशब्दौ तिङन्तप्रतिरूपकाव्ययौ। केचित्तु लक्षणसामर्थ्यात्तिङन्तादेवायं प्रत्यय इति वदन्तीति ज्ञेयम्। दिष्टं प्रमाणमित्यस्मात् परं मतिरस्येति योज्यम्। ग्रन्थकृता दिष्टपदमत्र प्रमाणपरमिति भङ्ग्या यदुक्तं तत्तु जयादित्यादीनामपि मतम्। क्रमदीश्वरेण तु दिष्टपदं दैवपरमपि मत्वा माघकाव्यमुत्थापितम्। तद्यथा। नालम्बते दैष्टिकतां न निषीदति पौरुषे इति (२।८६) माघपद्यन्तूभयथैव सङ्गतार्थं भवतीति तट्टीकाकृच्चाह॥

२७२३। तद। तदस्य शीलमित्यर्थे तच्छब्दनिर्देशान्नाम्नो माधवठः स्यात्। शीलं फलनिरपेक्ष्यसेवा। मृदङ्गशब्दो यथा लक्षणया मृदङ्गवाद्ये वर्तत इत्युक्तम्। तद्वदिहाप्यपूपशब्दोऽपूपभक्षणे वर्तत इति ज्ञेयम्। परुषं निष्ठूरं तदेव शीलमिति गोस्वामिनोऽभिप्रेतं सामान्येन सर्वसिद्धेः। किञ्च, गङ्गातीरे लाक्षणिकगङ्गाशब्दवत् परुषवचने लाक्षणिक इत्यन्ये॥

२७२४। छत्रा। तदस्य शीलमित्यर्थे छत्रादिभ्यः केशवणः स्यात्। यथा छद अपवारण इत्यस्मात् छदादिभ्यश्चेत्यनेन त्रप्रत्ययसिद्धस्य छत्रशब्दस्यावरणं प्रवृत्तिनिमित्तं, तथात्र छत्रशब्दो गुरुदोषाच्छा-

२७२५। इदं भक्ष्यं हितमस्मै।

आपूपिकः ॥ २७२५ ॥

२७२६। कर्मध्ययने वृत्तमस्य।

एकमन्यदध्ययनेष्वपपाठलक्षणं कर्म वृत्तमस्य तद्धितार्थेति समासः ऐकान्यिकः। एवं द्वैयन्यिकः, ऐकरूपिकः, ऐकग्रन्थिकः ॥ २७२६ ॥

---

दनायां वर्तत इत्याह–गुरुदोषेति। आच्छाद्यते इति ण्यन्तादासः श्रन्थादेश्चेत्यनेन भावे लक्ष्म्यामनप्रत्ययान्ता आच्छादना ततो गुरुदोषस्याच्छादना गुरुदोषाच्छादनेति, तथाच गुरुदोषाच्छादनारूपं छत्रं शीलमस्येति छात्रो गुरुदोषावरणशीलः शिष्य इत्यर्थः। चूरेति चूरा शीलमस्येति योज्यम्। चुर स्तेये ण्यन्तो घटादिरित्यस्मात् विष्णुनिष्ठासेट्केत्यत्र प्रत्ययान्ताच्चेत्यनेन ङाप्। छत्र शिक्षा तपः चुरा भिक्षा धुक्षा क्षुधा पुरो दर्श उदस्थान कृषि कर्मन् सत्य अनृतेति छत्रादिश्चतुर्दश ॥

२७२५। इदं। इदं भक्ष्यं हितमस्मै इत्यर्थे इदंशब्दवाच्यान्नाम्नो माधव ठः स्यात्। अस्मा इत्यत्र चतुर्थी हित्याद्यर्थैरिति चतुर्थी। भक्ष्यन्तु व्याख्यातमेव ॥

२७२६। कर्म। अध्ययनेऽध्यनविषये कर्म वृत्तमस्येत्यर्थे नाम्नो माधव ठो भवति। वाक्येनैवार्थं स्पष्टयति एकमित्यादि। तद्धितार्थेति दिक्सङ्ख्ये तद्धितार्थेत्यनेन तद्धितार्थे एकान्ययोस्त्रिरामी समास इत्यर्थः। ऐकान्यिक इति अध्ययनेषु नियुक्तस्य परीक्षाकाले पठतः स्खलितरूपमेकमन्यत् कर्म जातमित्यध्ययणे ह्यन्यत्वमपपाठरूपं सम्भवति। एवमुत्तरत्रापि यथायोग्यं कल्पम्। एवमिति एवमुक्तप्रकारेण द्वे अन्ये अध्ययनेष्वपपाठ लक्षणे कर्मणी वृत्ते अस्येति द्व्यन्ययोः समासे सन्धौ च कृते पश्चात् 'वृष्णीन्द्रस्थानचतुःसने'त्यनेन ऐयादेशः स्यात्। विष्णुपदान्तस्थत्वाभावात् वरामस्यौवादेशस्तु न स्यात्। तथा एकं रूपमध्ययनेष्वपपाठलक्षणं कर्म वृत्तमस्येति पूर्ववत् समासः। एको ग्रन्थोऽध्ययनेष्व-

२७२७। बहुसर्वेश्वर-पूर्वपदात् ठरामः।

द्वादशान्विकः, त्रयोदशग्रन्थिकः ॥ २७२७ ॥

२७२८। तदस्मै दीयते नियुक्तम्।

नियुक्तं कल्पितमग्रभोजनमस्मै दीयते—आग्रभोजनिकः। एवं प्राथमकल्पिकः ॥ २७२८ ॥

२७२९। श्राणामांसौदनाभ्यां मांसादोदनाच्च केशवठः।

श्राणिकः, मांसौदनिकः ॥ २७२९ ॥

---

पपाठलक्षणं कर्म वृत्तमस्येत्यपि पूर्ववत्। न्यासकारेणाप्येवं व्याख्यातम्। अन्येन तु ऐकरूपिकैकग्रन्थिकयोरपपाठलक्षणं नानुमन्यत इति बोद्धव्यम् ॥

२७२७। बहु। कर्माध्ययने वृत्तमस्येत्यर्थे बहुसर्वेश्वरः पूर्वपदं यस्य तस्मान्नाम्नष्ठरामः स्यात्। अत्राप्यपपाठलक्षणरूपं कर्म वृत्तमिति स्मर्तव्यम्। पूर्वसिद्धमाधवठरामापवादोऽयम्। द्वादशान्यानि अध्ययनेष्वपपाठलक्षणानि कर्माणि वृत्तान्यस्येति पूर्ववत् समासः द्वादशान्यिकः। एवं त्रयोदशग्रन्थिकः चतुर्दशरूपिक इत्यादि यथायथमुह्यम् ॥

२७२८। तद। तदस्मै दीयते नियुक्तमित्यर्थे यत्तच्छब्दनिर्देश्यं तस्मान्नाम्नो माधवठो भवति। वाक्येनैवार्थं विषदयति नियुक्तं कल्पितमिति। एवमिति नियुक्तं कल्पितं प्रथमकल्पमस्मै दीयतेप्राथमिक इत्यादि।

२७२९। श्राणा। तदस्मै दीयते नियुक्तमित्यर्थे श्राणामांसौदन इत्येताभ्यां तथा योगविभागेन मांस इत्यस्मात् ओदन इत्यस्माच्च केशवठः स्यात्। नियुक्ता कल्पिता श्राणा अस्मै दीयते श्राणिक इति। श्राणा पयोविकारविशेषः। मांसेन मिश्र ओदनो मांसौदनः।

२७३०। भक्तात् केशवणो वा।

भाक्तः, भाक्तिकः॥ २७३०॥

२७३१। तत्र नियुक्तः।

दौवारिकः, सैनिकः॥ २७३१॥

२७३२। आगारान्तात् ठरामः।

देवागारिकः॥ २७३२॥

२७३३। अदेशकालयोरधीते।

श्मशानेऽधीते श्माशानिकः। एवं चातुष्पथिकः, तथा चातुर्दशिकः, आष्टमिकः॥ २७३३॥

---

नियुक्तः सोऽस्मै दीयते मांसौदनिक इति। एवं मांसिकः औदनिकश्चाणामांसौदनमांसानां वृष्णीन्द्रे कृतेऽकृतेऽपि समरूपत्वात् माधवठेनापि प्रयोगसिद्धौ यत् केशवठविधानं, तत्प्रयोजनन्तु 'न वृष्णीन्द्रहेतुतद्धितान्तलक्ष्मीरि'त्यनेन प्राप्तपुम्बद्भावनिषेधवाधनमिति॥

२७३०। भक्तात्। तदस्मै दीयते नियुक्तमित्यर्थे भक्तमन्नमित्यस्मात् केशवणो वा स्यात् पक्षे माधवठश्च। नियुक्तं भक्तमस्मै दीयते भाक्त इत्यादिद्वयम्॥

२७३१। तत्र। तत्र नियुक्तो निरूपित इत्यर्थे तत्रेत्यनेन निर्देशादधिकरणार्थान्नाम्नो माधवठः स्यात्। द्वारे नियुक्तः द्वौवारिक इत्यत्र 'वृष्णीन्द्रस्थानचतुःसनादेशे'ति सूत्रे द्वारादिस्थयोश्चेत्युक्तत्वाद्वरामस्यौवादेशः। सेनायां नियुक्तः सैनिक इत्यादि॥

२७३२। आगा। तत्र नियुक्त इत्यर्थे आगार इत्यन्ते यस्य तस्माच्छब्दात् ठरामः स्यात्। देवागारे नियुक्तः देवागारिक इति। एवं यज्ञागारिक इत्यादि॥

२७३३। अदे। अदेशकालयोरधीते इत्यर्थे अदेशवाचकादकालवाचकाच्च नाम्नो माधवठो भवति। श्माशानिकादिद्वयमदेशोदाहरणं, चातुर्दशिकादिद्वयन्त्वकालोदाहरणम्। एवन्यदप्यूह्यम्॥

२७३४। कठिनान्त-प्रस्ताव-संस्थानेषु व्यवहरति।

वंशकठिने व्यवहरति वांशकठिनिकः। एवं प्रास्ताविकः, सांस्थानिकः ॥ २७३४ ॥

२७३५। निकटे वसति।

नैकटिकः ॥ २७३५ ॥

२७३६। आवसथात् केशवठः।

आवसथिकः ॥ २७३६ ॥

निवृत्तो माधवठः।

२७३७। प्राग्हिताद्यरामः।

तस्मै हितमित्यतः प्रागर्थे यरामो वाच्यः ॥ २७३७ ॥

२७३८। तद्वहति।

प्रभूरयम् ॥ २७३८ ॥

---

२७३४। कठि। कठिनान्तप्रस्तावसंस्थानेषु व्यवहरतीत्यर्थे कठिनान्तादेर्माधवठः स्यात् ॥

२७३५। निक। निकटे वसतीत्यर्थे निकटशब्दान्माधवठो भवति ॥

२७३६। आव। आवसथे वसतीत्यर्थे आवसथशब्दात् केशवठः स्यात्। केशवस्य टित्त्वादावसथिकीति च स्यात् समासे पुम्वच्च। माधवठं निवर्तयति निवृत्त इति ॥

२७३७। प्राग्। पारिभाषिकोऽयम्। स्वयमेव विवृणोति तस्मै हीति ॥

२७३८। तद्व। तद्वहतीत्यर्थे यत्तच्छब्दनिर्दिष्टं तस्माच्छब्दाद्यरामः स्यात्। तदर्थं प्रत्ययञ्चाधिकरोति प्रभुरिति ॥

२७३९। रथान्त-युग-प्रासङ्गेभ्यः।

द्वौ रथौ वहति तद्धितार्थे त्रिरामी। द्विरथ्यः, युग्यः, प्रासङ्ग्यः॥ २७३९॥

२७४०। धुरो यराम-माधवढौ।

धुर्यो धौरेयः॥ २७४०॥

२७४१। सर्वधुरीणोत्तरधुरीणौ साधू, एकधुरः एकधुरीणश्च साधू।

२७४२। शकटात् केशवणः।

शाकटः, द्वैशकटः॥ २७४२॥

---

२७३९। रथा। तद्वहतीत्यर्थे रथ इत्यन्तो यस्य तस्मात् युगप्रासङ्गाभ्याञ्च यरामो भवति। प्रयोगसिद्ध्यर्थं वाक्येनैव समासप्रकारं दर्शयति द्वाविति। रथान्तेत्यस्य तद्गुणसम्बिज्ञानपीताम्बरनिष्पन्नत्वात् केवलरथशब्दादपि प्रत्ययस्तेन रथं बहतीति रथ्य इत्यपि। वत्सानां दमनार्थं यत् दारु स्कन्धे दीयते तत् प्रासङ्गः॥

२७४०। धुरो। तद्वहतीत्यर्थे धुर इत्यस्माद्यराममाधवढौ भवतः। धुरं भारं बहति धुर्य इत्यादिद्वयम्॥

२७४१। सर्व। तद्वहतीत्यर्थे खेन सह सर्वधुरोत्तरधुरयोः सर्वधुरीणाविति द्वौ साधू भवतः। सर्वा चासौ धूश्चेति श्यामरामसमासः। अनक्षस्य धुर इत्यनेन समासान्तारामप्रत्ययस्तत आप् सर्वधुरा। एवमुत्तरधुरा। अन्यतश्चेत्येके तेन दक्षिणधुरीण इत्यादि च। एक। तद्वहती इत्यर्थे खेन सह पूर्ववदेकधुराया एकधुरः एकधुरीणश्चेति द्वौ साधू भवतः। एकधुर इत्यत्र निपातनात् खप्रत्ययं विधाय तस्य हरे च कृते बहत्यर्थस्य प्राधान्यात् गोरीप आप इत्यनेनापश्च वामन इति॥

२७४२। शक। तद्वहतीत्यर्थे शकटशब्दात् केशवणः स्यात्। द्वौ शकटौ बहतीति तद्धितार्थे त्रिरामी द्वैशकट इति॥

२७४३। हलसीराभ्यां माधवठः।

हालिकः, द्वैहलिकः ॥ २७४३ ॥

२७४४। जन्या जामातुर्वयस्येषु जनीं वधूं वहन्तीत्यर्थे।

साधवः ॥ २७४४ ॥

तद्वहतीति निवृत्तम्।

२७४५। तद्विध्यति न चेद्धनुषा, पादस्य पद्यः।

ऊरू विध्यति ऊरव्यः। एवं पद्यः। नेह—दैत्यं विध्यति धनुषा ॥ २७४५ ॥

२७४६। धनं गणं वा लब्धा।

लब्धेति तृनन्तम्। धन्यो, गण्यः ॥ २७४६ ॥

---

२७४३। हल। तद्वहतीत्यर्थे हलसीराभ्यां माधवठः स्यात्। सीरा लाङ्गलपद्धतिस्तां बहति सैरिक इति ॥

२७४४। जन्या। जनीं वधूं बहन्तीत्यर्थे जामातुर्वयस्येषु जामातुस्तुल्यवयस्केषु वाच्येषु जनीत्यस्या यप्रत्ययेन साकं जन्याः साधवो भवन्ति। तद्वहत्यर्थं समापयति तद्वहेति ॥

२७४५। तद्वि। तद्विध्यतीत्यर्थे चेद्यदि धनुषा वेधनं न स्यात्तदा तच्छब्दनिर्देशान्नाम्नो यरामो भवति। पाद। तद्विध्यति न चेद्धनुषेत्यर्थे पादस्य सम्बन्धे यरामस्तस्य पदादेशश्च। न चेद्धनुषेत्यनेन कारणं विनैव यदि स्वयं विध्यतीति सूचितम्। एवमिति पादौ विध्यति पद्यः कण्टकः। नेहेति धनुः करणनिषेधात् ॥

२७४६। धनं। धनं गणं वा लब्धेत्यर्थे धनगणाभ्यां यरामः स्यात्। लब्धेति वालकल्केस्तान्तमित्याशङ्कानिरासार्थमाह—लब्धेति। डु लभष् प्राप्तविति लभधातोस्तच्छीलादौ तृन् इत्यतः अच्युताभविष्णुनिष्ठाखलार्थेत्यनेन धनं गणमित्यनयोर्न षष्ठीति ॥

२७४७। अन्नाण्णरामः।

आन्नः॥ २७४७॥

२७४८। वशं गतः।

वश्यः॥ २७४८॥

२७४९। पदमस्मिन् दृश्यं पद्यः।

पद्यः साधुः। पद्यं स्थलं, पद्या भूमिः॥ २७४९॥

२७५०। मूलमेषां सुखोत्पाट्यम्।

मूल्या मुद्गादयः॥ २७५०॥

२७५१। धेनुष्या गौर्महिषी वा या दुग्धबन्धके स्थिता।

---

२७४७। अन्ना। तल्लब्धेऽर्थेऽन्नाण्णरामः स्यात्।

२७४८। वशं। वशं गत इत्यर्थे वशशब्दाद्यरामः स्यात्। वशमायत्तत्वं गतः प्राप्तः वश्य इति॥

२७४९। पद। पदमस्मिन् दृश्यमित्यर्थे यरामेन साकं पदस्य पद्यः साधुः स्यात्। पद्यं स्थलमिति। अस्मिन् पादचिन्हं दृश्यं द्रष्टुं शक्यं दर्शनयोग्यमित्यर्थः। एतेन कर्दमस्यावस्थोच्यते नातिद्रवो नातिशुष्क इति॥

२७५०। मूल। एषां मूलं सुखेनोत्पाट्यमित्यर्थे मूलशब्दाद्यरामः स्यात्। फलाद्यर्थं येषां दात्रादिना गात्रं छेदनयोग्यं न भवति। मूल्या इत्यनेन ते मुदगादयोऽत्रोच्यन्ते। तत्समे चेति वक्तव्यम्। तत्तुल्ये च वाच्ये मूलशब्दाद् यरामः स्यादित्यर्थः। यथा मूल्यः पट इति। यावता हिरण्यादिना पटादेरुत्पत्तिर्भवति, तदेवात्र मूलं यावल्लग्नं तावदेव लभत इत्यर्थः॥

२७५१। धेनु। मण्डुकप्लुतन्यायेनात्र साधुरित्यनुवर्तते। दुग्धार्थं

२७५२। गार्हपत्योऽग्निभेदे, नाव्यं नौतार्ये जले, वयस्यो वयसा तुल्ये, धर्म्यो धर्म्यप्राप्ये, विष्यो विषेण बध्ये, मूल्यं मूलेनाभिभाव्ये मूलेन समे च, सीत्यं सीतया सम्मिते, तुल्यं तुलया सम्मिते, रथ-सीता-हलेभ्यो यविधौ तदन्तविधिः।

बन्धके बन्धने या गौर्महिषी वा स्थिता तस्यां वाच्यायां यरामेण यरामागमेन च सह धेनुशब्दस्य धेनुष्या साधुः स्यात्। धेनुः स्यान्नवसूतिकेत्यमरोक्तत्वात् धेनुशब्दस्य सामान्य प्रवृत्त्या धेनुष्येत्यस्य दुग्धार्थबन्धनस्था गौर्महिषी च वाच्येति नायुक्तम्॥

२७५२। गार्ह। तस्यायमित्यर्थेऽग्निभेदे वाच्ये नृसिंहयरामेण सार्धं गृहपतेः गार्हपत्यः साधुः स्यात्। नाव्यं। नावा तार्यं नौतार्यं तस्मिन्नौतार्ये नावा तरणोपयुक्ते जले वाच्ये यरामेण सह नौशब्दस्य नाव्यं साधुः स्यात्। अर्थेऽस्मिन् यप्रत्यय एव निपातफलम्। ओद्वयस्यावावावित्यनेनावादेशस्तु सिध्यत्येव। वय। वयसा तुल्ये सुहृदि वाच्ये यरामेण सार्धं वयःशब्दस्य वयस्यः साधुः स्यात्। धर्म्यो। धर्मेण प्राप्ये लभ्ये पदार्थे वाच्ये यरामेण सह धर्मस्य धर्म्यः साधुः स्यात्। विष्यो। विषेण बध्ये वाच्ये यरामेण सह विषस्य विष्यः साधुः स्यात्। मूल्यं। मूलेनाभिभाव्ये पराभवे तथा मूलेन समे तुल्ये च वाच्ये यरामेण साकं मूलशब्दस्य मल्यं साधु स्यात्। सीत्यम्। सीतया सम्मिते सङ्गतेऽर्थे यरामेण सह सीतायाः सीत्यं साधुः स्यात्। सीता लाङ्गलपद्धतिः। सीत्यं क्षेत्रम्। तुल्यम्। तुलया सम्मिते परिमिते वाच्ये यप्रत्ययेन साकं तुलाशब्दस्य तुल्यं साधु स्यात्। रथ। तेन सम्मितेऽर्थे रथसीताहलेभ्यो यविधौ विषये तदन्तविधिरिष्यत इत्यर्थः। तदन्तेभ्यः समासान्तेभ्यो विधिर्विधानमिति समासवाक्यम्। द्वाभ्यां रथाभ्यां सम्मितो द्विरथ्य इति। एवमेकसीत्यः, त्रिहल्य इति॥

२७५३। धर्मपथ्यर्थन्यायेभ्योऽनपेते।

धर्म्यं, पथ्यम् ॥ २७५३ ॥

२७५४। छन्दसा निर्मितं छन्दस्यम्।

२७५५। उरसः केशवणश्च।

औरसः, उरस्यः ॥ २७५५ ॥

२७५६। हृदयात् प्रिये।

हृद्यः। 'पुत्रेऽनभिधानम्' इति पुरुषोत्तमः ( भाषावृत्तिः ४।४।९५ )। वशीकरणमन्त्रे चायम् ॥ २७५६ ॥

---

२७५३। धर्म। धर्मपथ्यर्थन्यायेभ्योऽनपेतेऽर्थे यरामो भवति। धर्मादनपेतं धर्म्यं तस्मादभ्रष्टमित्यर्थः। ग्रामादनागतमित्यादौ यथा ग्रामादेरपादानादागमननिषेधेऽपि पञ्चमी भवति तथेहापि। एवं पथोऽनपेतं पथ्यं न्यायादनपेतं न्याय्यमिति ॥

२७५४। छन्द। छन्दसा निर्मितमित्यर्थे छन्दःशब्दस्य यरामेण सह छन्दस्यं साधु स्यात्। इच्छापर्यायश्छन्दशब्द इह गृह्यत इति जयादित्यः ॥

२७५५। उर। तेन निर्मितेऽर्थे उरस इत्यस्मात् केशवणः पक्षे यरामश्च। उरसा निर्मितः औरस इत्यादिद्वयम्। पुरुषोत्तम-मतेनैव वाच्यं द्रढ़यन्नाह—पुत्रे त्विति। अयं हृद्य इति वशीकरणाया-न्येषां बान्धवैः सह मन्त्रणे वशीकाराय शास्त्रोक्तमन्त्रविशेषे च वर्तत इत्यपि पुरुषोत्तममतम्। अत्र पुत्र एव वाच्यः सर्वैर्मन्तव्य इति जयादित्यश्च ॥

२७५६। हृद। हृदयशब्दात्तस्य प्रिये वाच्ये यरामो भवति। हृदयस्य प्रियः हृद्य इति। हृदयस्य 'हृल्लेखलासयोर्याणोश्चे'त्यनेनात्र हृदयस्य हृदादेशः ॥

२७५७। मत्यो मतस्य करणे, जन्यो जनस्य जल्पे, हल्यो हलस्य कर्षे।

२७५८। तत्र साधुः।

सामान्यो विप्रः। एवं ब्रह्मण्यः, सभ्यः॥ २७५८॥

२७५९। प्रतिजनादेर्नृसिंह-खः।

प्रातिजनीनः, सांयुगीनः॥ २७५९॥

२७६०। भक्ताण्णः।

भाक्तास्तण्डुलाः॥ २७६०॥

---

२७५७। मत्यो। क्रियतेऽनेनेति टनः करणाधिकरणयोरिति टनः। मतस्य ज्ञानस्य करणं साधनं तस्मिन् वाच्ये यरामेण सह मतस्य मत्यः साधुर्भवति। जन्यो। जनस्य जल्पेऽर्थे यरामेण साकं जन-शब्दस्य जन्य इति साधुः स्यात्। जनस्य जनने इत्येके। हल्यो। हलस्य कष कर्षणे वाच्ये हलशब्दस्य यरामेण साकं हल्यः साधुः स्यात्॥

२७५८। तत्र। साधुरित्यर्थे तच्छब्दनिर्देशान्नाम्नो यरामः स्यात्। साधुः प्रवीणो योगसमर्थो वा सामवेदस्तस्मिन् साधुः सामान्य इति। ब्रह्म वेदैकदेशस्तस्मिन् साधुः ब्रह्मण्य इति। अनो येतु भावकर्मणो-रेवेति नियमात्। नान्तस्य नत्वनीपोरित्यनेनात्र द्वये नरामस्य हरो न स्यात्। सभा परिषत् तस्यां साधुः सभ्य इति॥

२७५९। प्रति। तत्र साधुरित्यर्थे प्रतिजनादेरुत्तरो नृसिंहख स्यात्। जनं प्रति प्रतिजनमित्यव्ययीभावसिद्धं, तत्र साधुः प्रतिजनीन इति। तथा संयुगं युद्धं तस्मिन् साधुः सांयुगीन इत्यादि। प्रति-जन संयुग इदंयुग सत्ययुग परयुग परकुल अमुष्यकूल सर्वजन विश्वजन पञ्चजन महाजनेति प्रतिजनादिरेकादश। 'अदस आयन कुलिकादिष्वि'ति निषेधादमुष्येत्यस्य षष्ठ्या महाहरो न स्यात्॥

२७६०। भक्ता। तत्र साधुरित्यर्थे भक्तशब्दात् णरामः स्यात्॥

२७६१। परिषदो ण्यकेशवणौ।

पारिषद्यः, पारिषदः ॥ २७६१ ॥

२७६२। कथादेर्माधवठः।

काथिकः, वैकत्थिकः, वार्तिकः। एवं गौड़िकः, सांग्रामिकः ॥ २७६२ ॥

२७६३। पथ्यतिथि-वसति-स्वपतिभ्यो माधव-ढः।

पाथेयम् ॥ २७६३ ॥

२७६४। सतीर्थ्यः समानगुरौ समानदर्शने च, समानोदर्यसोदर्यौ समानमातृके।

---

२७६१। परि। तत्र साधुरित्यर्थे परिषच्छब्दाण्ण्यकेशवणौ भवतः ॥

२७६२। कथा। तत्र साधुरित्यर्थे कथादेरुत्तरो माधवठो भवति। कथायां साधुः काथिक इत्यादि। कथा विकत्था वृत्ति गुड़ संग्राम विकथा निसुधा वितण्डा कृष्णविद जनवाद संग्रह गुणगण आयुवद कुल्माष शक्तु अपूपमांसौदन इक्षु वेणु वोध सङ्घात प्रवास निवास उपवासेति चतुर्विंशतिः कथादिः ॥

२७६३। पथ्य। तत्र साधुरित्यर्थे पथ्यतिथिवसतिस्वपतिभ्यो माधवढः स्यात्। पथि साधु पाथेयमिति। एवमातिथेरं वासतेयं स्वापतेयम्। स्वापतेयमिति धनस्याख्यानं हि धनपतेरुपकारकं स्वभावादेव क्लीवत्वमित्यन्ये ॥

२७६४। सती। समानो गुरुर्यस्य समानगुरुस्तस्मिन् समानं दर्शनं मीमांसादि यस्य स समानदर्शनस्तस्मिन्। समाने तीर्थे एकस्मिन् गुरौ साधुरित्यर्थे समानगुरौ समानदर्शने च शिष्य वाच्ये समानतीर्थस्य यरामेण सह सतीर्थ्यः साधुर्भवति। अस्मिन् वाच्ये

२७६५। सगर्भादौ भवः।

सगर्भ्यम्, सयूथ्यम्, अग्र्यम् ॥ २७६५ ॥

२७६६। अग्रीयाग्रियौ च साधू।

यप्रत्ययः समानस्य सादेशश्च निपातफलम्। समानतीर्थात्तत्र वासिनीति जुमरसूत्रम्। एतदर्थस्त्वस्माकं ग्रन्थकृतां नाभीष्टः। सतीर्थः समानगुरुकुलवासिनीत्यनेन सिद्धसतीर्थेन सह सतीर्थ्य इत्यस्यार्थभेदात्। समा। समाना माता यस्य स समानमातृकस्तस्मिन्। समानोदरे साधुरित्यर्थे समानमातृके शिशौ वाच्ये यरामेण सार्धं समानोदर्य-सोदर्याविति द्वौ साधू भवतः। यप्रत्ययेनौदर्ये सिद्धे, विभाषा रूप-गोत्रेत्यत्रोदर्यशब्दस्य ग्रहणात् समानस्य वैकल्पिकः सादेशः। तत्र शयितरि समानोदर्यसोदर्यावित्यन्ये ॥

२७६५। सग। सगर्भादौ भव इत्यर्थे सगर्भादेर्यरामः स्यात्। समानो गर्भ इति वाक्ये विभाषा रूपगोत्रेत्यत्र गर्भस्य ग्रहणात् तस्मिन् परे समानस्य सादेशः सगर्भ इति ततस्तत्र भव इति यरामः सगर्भ्यमिति। यूथेन सह वर्तमानः सयूथ इत्यत्र तु पीताम्वरे सह-शब्दस्य यूथे परे सभावस्ततस्तत्र भव इति यरामः सयूथ्यमिति। क्रमदीश्वरेण तु सयूथसगर्भाभ्यां सहचार्यनुजयोरिति सूत्रं विधाय सयूथ्यः सगभ्य इत्युदाहृत्य छान्दसमिदमित्युक्तम्। तट्टीकाकृता च समानो यूथ इति वाक्ये समानस्यात्र सविधानं छान्दसमित्यत आह—छान्द-समिदमित्युक्त्वा कथं तर्हि भाषायामेतल्लक्षणं कृतमिति पूर्वपक्षीकृत्य क्वचिच्छान्दसा अपि भाषायां प्रयुज्यन्ते इति भावः इति समाधानमपि कृतमिति ज्ञेयम्। अग्रे भवः अग्र्यमिति स्पष्टम् ॥

२७६६। अग्री। तत्र भव इत्यर्थे छघरामाभ्यां साकमग्रशब्द-स्याग्रीयाग्रियाविति द्वौ च साधू भवतः ॥

२७६७। दूताद्भावकर्मणोः।

दूत्यम् ॥ २७६७ ॥

२७६८। अस्त्यर्थे मधु-माधवादयश्चैत्रादिषु।

साधवः। मध्वस्त्यत्र मधुश्चैत्रः, माधवो वैशाखः ; नभांसि मेघाः सन्त्यत्र नभाः श्रावणः, नभस्यो भाद्रः। एवं सहा मार्गः, सहस्यः पौषः, तपा माघ,: नपस्य फाल्गुनः॥ २७६८ ॥

२७६९। इषप्रभृतयो मासि संज्ञाशब्दाः।

इषः, ऊर्जः, शुचिः शुक्रः॥ २७६९ ॥

२७७०। शिवतातिप्रभृतयः शिवादिकरे।

आदिना यमतातिः, विष्णुतातिः। षष्ठीकृष्णपुरुषेण साधवः ॥ २७७० ॥

प्रागघितादिति निवृत्तम्।

---

२७६७। दूता। भावकर्मणोर्वाच्ययोर्दूताद्यरामो भवति। दतस्य भावः कर्म वा दत्यमिति ॥

२७६८। अस्त्य। अस्त्यर्थे चैत्रादिषु मासेषु वाच्येषु केशवणादिना सह मध्वादीनां मधुमाधवादयः प्रयोगाः साधवो भवन्ति। मधुरित्यत्रास्त्यर्थे केशवणहरो निपातफलम्। माधव इत्यत्र केशवण एव निपातफलम्। सहांसि वलानि सन्त्यत्र सहा इत्यादिद्वयम्। तपांसि सन्त्यत्र तपा इत्यादिद्वयम्। नभ आदिभ्यस्त्रिभ्यः क्रमेण श्रावणादिषु वाच्येषु यरामहर-यरामाविति निपातफलम् ॥

२७६९। इष। अस्त्यथ मासि वाच्ये इषप्रभृतयः संज्ञाशब्दा निपात्यन्त इत्यर्थः। इषादिः सूर्यनामभेद इति। इषोऽस्त्यत्र इष इति केशवणहरो निपातफलम्। एवमूर्जादयस्त्रयः। इषादयश्चत्वारो यथासङ्ख्यं आश्विनकार्तिकाषाढ़ज्यैष्ठेषु वर्तन्ते ॥

२७७०। शिव। शिवादीनां करे वाच्ये षष्ठीकृष्णपुरुषसमासेन शिवतातिप्रभृतयः शब्दाः साधवो भवन्ति। शिवस्य कर इति ताति-

२७७१। प्राक् क्रीताच्छरामः, उद्वयगवादिभ्यो यरामः।

क्रीतात् प्राक् छो वाच्यः। उद्वयात् गवादेश्च पुनर्यराम इति ॥ २७७१ ॥

२७७२। गवादौ नाभेर्नभश्च, शुनः सङ्कर्षणस्तस्य त्रिविक्रमश्च वा, ऊधस ऊधनश्च।

नाभ्यार्था प्रकृतिः काष्ठं नभ्यम्, शुने हितं शून्यं शुन्यम्, ऊधन्यम् ॥ २७७२ ॥

---

प्रत्ययेन करार्थतातिशब्देन वा सह शिवस्य समासानन्तरम् अन्तरङ्गस्वादेरित्यनेन षष्ठ्या महाहरे शिवतातिरिति। प्रभृतिशब्दस्याद्यर्थत्वात् उदाहरणान्तराणि दर्शयति–आदिनेति। यमस्य करो यमतातिः, विष्णोः करः विष्णुतातिरिति। एवं सोमताति-सूर्यतात्यादयो ज्ञेयाः। हितात् प्रागर्थान् समापयति प्राग्घितेति ॥

२७७१। प्राक्। स्वयं विवृणोति क्रीतादिति। क्रीतात् प्रागर्थेषु नाम्नश्छरामो वाच्यः। उद्वयात् उद्वयान्तात् गवादेश्च पुनर्यरामो वाच्य इत्यन्वयः। पारिभाषिकोऽयं विभुरिति गम्यम्। गवादेः कार्यान्तरसाधनानि विधिसूत्राण्याह–गवादावित्यादि ॥

२७७२। गवा। गवादावित्यस्य त्रिष्वन्वयः। गवादौ वर्तमानस्य नाभेर्यरामस्तस्मिन् परे तस्य नभञ्च स्यात्। शुनः। गवादौ वर्तमानस्य शुनो यरामस्तस्मिन् परे तस्य सङ्कर्षणः स्यात्। पुनस्तस्य सङ्कर्षणस्य त्रिविक्रमो वा स्यात्। ऊध। गवादौ वर्तमानस्य ऊधसो यरामस्तस्मिन् परे तस्य ऊधनश्च स्यात्। रथैकदेशो नाभिस्तस्यै हितार्था प्रकृतिर्यत् काष्ठं तदेव नभ्यम्। एतदप्राण्यङ्गे एव, प्राण्यङ्गे तु नाभ्यं तैलमिति। ऊधसे हितं ऊधन्यमिति ॥

२७७३। हविरपूपादयश्च गवादिषु वा।

हविष्यं, हविषीयम्; आमिक्ष्यम्, आमिक्षीयं दधि, पुरोडाश्यं, पुरोडाशीयम्। अपूपादेः—अपूप्यम्, अपूपीयम्, तण्डुल्यं तण्डुलीयम्; स्वर्याः स्वरीयाः॥ २७७३॥

२७७४। कम्बल्यमूर्णापलशते साधु।

२७७५। तस्मै हितम्।

अत्रार्थे यथाविहितं स्यात्। कृष्णीयं विष्णव्यं, गव्यम्, महिष्यमित्यादि। अतिगव्यादि च। २७७५॥

---

२७७३। हवि। हविरपूपावादो येषां ते हविरपूपादयः। हविरादयोऽपूपादयश्च गवादिषु वा वर्तन्ते, तेन गवादित्वादेभ्यो यरामस्तदभावपक्षे तु छरामः स्यादिति भावः। हविषे हितं हविष्यमित्यादिद्वयम्। हविरादित्वादामिक्षायै हितं आमिक्ष्यम् आमिक्षीयम्। दध्यत्र वाच्यपदम्। पुरोडाशाय हितं पुरोडाश्यमित्यादिद्वयम्। काकाक्षिगोलकन्यायेनात्रापि दधीति वाच्यपदं दुग्धं वा। अपूपादेरिति रूपं दर्श्यत इति शेषः। अपूपाय हितं अपूप्यमित्यादि। यथा तण्डुलादिद्वयमपूपादि। तथा पृथुक् अखुष अवोध किल्व कण्टक इक्षुन स्थूणा यूप प्रदीप दीप अश्वपदेत्येकादशापि॥

२७७४। कम्ब। उर्णायाः पलशते वाच्ये तस्मै हितमित्यर्थे यरामेण सह कम्बलस्य कम्बल्यमिति साधु स्यात्। ऊर्णा पलशतादन्यत्र कम्बलीया ऊर्णा इति छ एव॥

२७७५। तस्मै। विवरणमत्रेति। अत्रार्थे इत्यस्मात् परं नाम्न इति प्रयोक्तव्यं, विहितमित्यस्मात् परं प्रत्यय इति च। कृष्णाय हितं कृष्णीयमित्यत्रौत्सर्गिकश्छः। विष्णवे हितं विष्णव्यमित्यत्र तु उद्वयेत्यनेन यः पश्चात् उद्वयस्य गोविन्द इति गोविन्दः, ओद्वयस्यावावान्त्यव। गवे हितं गव्यं महिषाय हितं महिष्यमितिद्वये तु

२७७६। शरीरावयवाद्यरामः।

दन्त्यं, कर्ण्यं, राजदन्त्यादि च ॥ २७७६ ॥

२७७७। खल-यव-मास-तिल-वृष-रथ-ब्रह्मभ्यो यरामः।

खल्यम् ॥ २७७७ ॥

२७७८। अजाविभ्यां थ्यः।

अजथ्यम्, अविथ्यम् ॥ २७७८ ॥

२७७९। विश्वजनात्मभोगोत्तरपदेभ्यः यरामः।

---

गवादित्वात् यः। इत्यादीत्यादिपदेन मृगाय हितं मृग्यमित्यादि यथायथमूह्यम्। नाम्ना तु कृचिदिति न्यायमङ्गीकृत्याह—अतीति। गामतिक्रान्तः अतिगुस्तस्मै हितम् अतिगव्यमित्यादि च ॥

२७७६। शरी। तस्मै हितमित्यर्थे शरीरावयववाचकान्नाम्नो यरामः स्यात्। दन्तेभ्यो हितं दन्त्यं मार्जनद्रव्यादि। कर्णाभ्यां हितं कर्ण्यं शलाकादि। एवं पाद्यं नाभ्यामित्यादि। दन्तानां राजा राजदन्तः, तस्मै हितं राजदन्त्यमित्यादि च पूर्वोक्तातिगव्यादिवत् ॥

२७७७। खल। तस्मै हितमित्यर्थे खलादिभ्यो यरामो भवति। खलाय हितं खल्यम्। एवं यव्यं माष्यं तिल्यं वृष्यं रथ्यम्। ब्रह्मण्यमित्यत्र तु भावकर्मणोरेवेति नियमात् संसारहरो न स्यात् ॥

२७७८। अजा। तस्मै हितमित्यर्थे अजाविभ्यामुत्तरः थ्यो भवति। अजाविभ्यामित्यत्र सन्धिकरणेन ग्रन्थकृता अजः अजा इति भेदराहित्यं सूचितम्। तेन अजाय अजायै वा हितम् अजथ्यमिति। अवये हितम् अविथ्यम् ॥

२७७९। विश्व। विश्वजनश्च आत्मा च भोगश्च इत्युत्तरं

विश्वजनीनः, आत्मनीनः, स्वभोगीनः, मातृभोगीनः—क्षुभ्नादिरयम्। 'भोगः शरीरम्' इति स्मृतिः॥ २७७९॥

२७८०। पञ्चजनाच्च।

गायन-वादक-नर्तक-दासी-भण्डरतः खलु पञ्चजनीनः॥ २७८०॥

२७८१। सर्वजनान्माधवठश्च।

सार्वजनिकः, जर्वजनीनः॥ २७८१॥

---

पदं येषां ते विश्वजनात्मभोगोत्तरपदास्तेभ्यः। तस्मै हितमित्यर्थे विश्वजनात् आत्मनो भोगोत्तरपदाच्च खरामः स्यात्। विश्वजनाय हितः विश्वजनीनः। एवमुत्तरत्रापि यथायोग्यं वाक्यं कल्पम्। आत्मनीन इत्यत्र आत्माध्वनोरखराम इत्यनेन खरामादन्यत्र संसारहरविधानात् संसारहरो न स्यात्। स्वस्य भोगः स्वभोगस्तस्मै हितः स्वभोगीनः। मातृभोगीन इत्यस्य क्षुभ्नादित्वमस्तीत्याह—क्षुभ्नादिरिति। मातृभोगीन इत्यस्मात् पर आचार्यभोगीन इति क्वचित् क्वचित् पुस्तके दृश्यते, तस्य क्षुभ्वादित्वन्त्वाख्यातपादे उक्तमेवेत्यतोऽत्राश्यकाभावः। भोगशब्दस्य शरीरवाचित्वं प्रसिद्धमित्याह—भोंग इति। भोगान्तेति कर्तव्ये भोगोत्तरपदेति यत् कृतं तत् बहुपूर्वनिरासार्थं तेन बहुभोगीय इति॥

२७८०। पञ्च। तस्मै हितमित्यर्थे पञ्चजनाच्च खरामः स्यात्। पञ्चजननिरूपणपूर्वकं पञ्चजनीन इत्यस्य वाच्यतां दर्शयति—गायनेति। गायनादिभण्डान्तेषु पञ्चसु यो रतस्तत्परः स एव पञ्चजनीन इत्यर्थः। एतेन गायनवादकनर्तकदासीभण्डरूपेभ्यः पञ्चभ्यो जनेभ्यो रतो हित इति वाक्यं सूचितम्। विश्वजनादेरिति वक्ष्यमाणरीत्या तद्धितार्थत्रिराम्या अस्याः श्यामरामान्तःपातिता स्वीकार्या॥

२७८१। सर्व। तस्मै हितमित्यर्थे सर्वजनान्माधवठः स्यात्, चकारात् खरामोऽपि सर्वश्चासौ जनश्चेति सर्वजनस्तस्मै हितं सार्वजनिक इत्यादिद्वयम्॥

२७८२। महाजनान्माधवठः।

माहाजनिकः। विश्वजनादेः श्यामरामेऽभिधानम् ॥ २७८२ ॥

२७८३। सर्वात् णरामो वा।

सार्वः, सर्वीयः ॥ २७८३ ॥

२७८४। पुरुषात् बधविकारसमूहेषु तेन कृते च माधवढः।

पौरुषेयो बधादिः ॥ २७८४ ॥

---

२७८२। महा। तस्मै हितमित्य महाजनान्माधवठः स्यात्। महांश्चासौ जनश्चेति महतः संसारस्याराम इत्यनेन महाजन इत्यस्मै हितः माहाजनिक इति। एतदन्त विश्वजनानेः श्यामरामसमास एव हितार्थे प्रत्ययस्याभिधानं कथनमित्याह–विश्वेति। यद्यपि सामान्येन विष्णुजनादेरित्युक्तं, तथापि जनान्तसाहचर्यात् भोगोत्तरपदं वर्जयित्वा पञ्चजनादीनां त्रयाणां ग्रहणं, भोगोत्तरपदस्य श्यामरामासङ्गतेश्च। एतेभ्यो जनान्तेभ्यः कर्मधारयसमासे हितार्थे प्रत्ययोत्पत्यभिधानं चन्द्र-जयादित्य-वर्धमानानां मतम्। समानाधिकरण इति भाष्योक्तं बहुव्रीहा-वपि भवतीति सूचनार्थं यतो बहुव्रीहिर्नाम समानाधिकरणानां भव-तीति। अतएव विश्वस्य जन इति षष्ठीकृष्णपुरुषनिष्पन्नात् विश्व-जतात् हितार्थे औत्सर्गिकछरामेण विश्वजनीय इति। एवं पञ्च-जनीय इत्यादि च ॥

२७८३। सर्वा। तस्मै हितमित्यर्थे सर्वशब्दात् णरामो वा स्यात् पक्षे सामान्यतश्छरामश्च ॥

२७८४। पुरु। तस्मै हितमित्यर्थे बधविकारसमूहेषु वाच्येषु तेन पुरुषेण कृते च वाच्ये पुरुषशब्दान्माधवढः स्यात्। तस्मै हिते औत्सर्गिकछे बधादिषु तस्येदमित्यनेन केशवणे, तेन कृते इत्यर्थे तेन कृतः ग्रन्थ इत्यनेन केशवणे प्राप्ते विधानम्। पुरुषाय हितरूपबधा-दिरिति निर्गलितार्थः ॥

२७८५। मानवचरकाभ्यां नृसिहखः।

मानवीनं, चारकीणम् ॥ २७८५ ॥

हितं निवृत्तम्।

२७८६। विकृतेस्तदर्थायां प्रकृतौ।

यथाविहितं स्यात्। धूपाय इदं धूपीयमगुरु। एवं यूपीयं दारु, शङ्कव्यं काष्ठम् ॥ २७८६

२७८७। छदिर्वलिभ्यां माधवढः।

छादिषेयाणि तृणानि, वालेयास्तण्डुलाः। औपधेयन्तु स्वार्थः एव ॥ २७८७ ॥

---

२७८५। मान। तस्मै हितमित्यर्थे मानवचरकाभ्यां नृसिहखो भवति। हितं समापयति हितमिति ॥

२७८६। विकृ। तदर्थायां विकृतिनिमित्तायां प्रकृतौ वाच्यायां विकृतिरूपान्नाम्नो यथाविहितं प्रत्ययः स्यात्। स्वरूपतोऽन्यथाभावो विकृतिः। प्रकृतिरत्रोपादानकारणं, तच्च समानजातीयमभिन्नसन्तान-वृत्तिकारणम्। धूपाय इदमिति यदर्थमन्यत्तस्माच्चतुर्थीति चतुर्थी। धूपोऽत्र विकारवाची तस्योपादानकारणमगुरु तस्य तदर्था च गम्यते इति। एवमुत्तत्रापि। धूपीयमित्यादिद्वये प्राक् क्रीतात् छराम इति छः। शङ्कव्यमित्य उद्वयेति यः। अतदर्थायान्तु धानानां यवा इति धानाशब्दो विकारवाचको भवत्येव तदुपादानकारणमपि यवा भवन्ति, किन्तु कारणेन संबन्धमात्रमत्र विवक्षितं न तादर्थ्यमितीह प्रत्ययो न स्यात् ॥

२७८७। छदि। तदर्थायां प्रकृतौ वाच्यायां विकृतिरूपात् छदिस्शब्दात् वलिशब्दाच्च माधवढो भवति। छद अपवारण इत्य-स्माण्ण्यन्तादौणादिक इस् णेर्हरोऽनिड़ादौ रामधातुक इति णेर्हरः। उणादेर्बाहुल्याच्छाद इत्यस्य वामनश्च। छदिषे इमानि छादिषेयाणीति

२७८८। ऋषभोपानहोर्ञ्यः।

आर्षभ्यो वत्सः, औपानह्यं मुञ्जादि ॥ २७८८ ॥

२७८९। चर्मविकृतेः केशवणः।

वाध्रं वारत्रं चर्म ॥ २७८९ ॥

विकृतेरिति निवृत्तम्।

२७९०। तदस्य अस्मिन् वा स्यादिति।

अत्रार्थद्वये यथोक्तं स्यात्। प्रकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः। प्रसादोऽस्यां भूमौ स्यात् प्रासादीया भूमिः ॥ २७९० ॥

२७९१। परिखाया माधवढः।

---

'ईश्वरहरिमित्रकङेभ्यः प्रत्यये'त्यनेन इसः षत्वम्। उप। स्वार्थे स्वस्मिन्नर्थे एव माधवढेन सह उपधाया औपधेयं पुनः साधु स्यात् ॥

२७८८। ऋष। तदर्थायां विकृतौ वाच्यायां विकृतिरूपात् ऋषभशब्दादुपानहशब्दाच्च ण्यराम स्यात्। आर्षभ्यो वत्स इति ऋषभाय यो वत्सः पुष्यते स एवोच्यते इति प्रकृतिविकृतित्वम्। एवमुपानह्यम् ॥

२७८९। चर्म। तदर्थायां प्रकृतौ वाच्यायां चर्मरूपविकृतेः केशवणः स्यात्। वध्रिश्चर्मकोषस्तस्मै इदं वाध्रमिति वरत्रा चर्मपेटिका तस्यै इदं वारत्रमिति। विकृतिं समापयन्नाह—विकृतेरिति ॥

२७९०। तद। अत्रेति वृत्तौ यथोक्तमित्यस्मात् परं नाम्न इति प्रयोक्तव्यम्। प्रभुर्विधिश्चायम्। वाक्योदाहरणे स्पष्टे। प्राक् क्रीतात् छराम इत्यनेनात्र छः।

२७९१। परि। तदस्य तस्मिन् वेत्यर्थे परिखाया माधवढो

पारिखेयी भूमिः ॥ २७९१ ॥

२७९२। छश्च पूर्णावधिः, प्राग्वतेर्माधवठः।

वतिप्रत्ययात् प्रागर्थे माधवठो वाच्यः। गोपुच्छेन क्रीतं गौपुच्छिकम्, पारायणं वर्तयति पारायणिकः ॥ २७९२ ॥

२७९३। तत्रार्हीयाः।

तेषु प्राग्वतीयेषु तदर्हतीति व्याप्य ये प्रत्यया ये चार्थास्ते आर्हीया उच्यन्ते इत्यर्थः ॥ २७९३ ॥

२७९४। अथार्हीयेषु।

इतः परं तेन क्रीतमित्यादिषु तदर्हतीति पर्यन्तेष्वथषु प्रत्यया वाच्या इत्यर्थः ॥ २७९४ ॥

२७९५। शताट्ठराम-यरामावशतात्मके।

अस्मादार्हीयेष्वेतौ स्याताम्। शतेन क्रीतादिः शतिकः, शत्यः। अशतात्मके किम्? शतमध्यायाः परिमाणमस्य शतकं निदानम्।

---

भवति। परिखा अस्याः परिखा अस्यां वेति पारिखेयीति। प्राकारो ब्राह्मणस्येत्यत्र तु न स्यादनभिधानात्।

२७९२। छश्च। पूर्णावधिः पूर्णपर्यन्तः छश्चेत्यनुवर्तते। प्राग्व। स्वयं विवृणोति वतीति। प्रागर्थेष्वित्यस्मात् परं नाम्न इति योज्यम्। पारिभाषिकाविमौ विभू चेति ॥

२७९३। तत्रा। वृत्तिमाह—तेष्विति ॥

२७९४। अथा। इदमपि स्वयं विवृणोति इत इति ॥

२७९५। शता। न शतम् अशतं तदेवात्मा स्वरूपं यस्य साऽशतात्मकस्तस्मिन्। शतात्मकाद्भिन्ने वाच्येऽस्मात् शतशब्दादार्हीये-ष्वर्थेषु एतौ ठराम-यरामौ भवतः। तत्र प्रथमार्थं दर्शयति—शतेनेति। व्यावृत्त्युदाहरणद्वयमाहाशतेति। अशतात्मक इति किं किमर्थं शता-

एवं शतश्लोकपरिमाणं शतकं काव्यम्। इतः पूर्वं तदन्तविधिरिष्यते ; गव्यम्, अतिगव्यम् ; दन्तं राजदन्तम्। तदर्हतीत्यत उत्तरन्तु सङ्ख्यापूर्वपदानामलुकीति स्मृतिः। पारायणिकः, द्वैपारायणिकः। अत्रार्हीया इत्यधिकृत्य ॥ २७९५ ॥

---

त्मकं यर्हि स्यात्तर्हि न स्यादित्यर्थः। निदानं वैद्यशास्त्रम्। एवमिति। शतं श्लोकाः परिमाणमस्येति वाक्यं योज्यम्। एतेनैतल्लभ्यते यत्र प्रकृत्युक्तायाः सङ्ख्यायाः प्रत्ययवाच्यस्य सङ्ख्येयत्वं न भवति तत्रायं प्रवर्तते। यत्र पुनः प्रकृत्युक्तायाः सङ्ख्यायाः प्रत्ययवाच्यस्य सङ्ख्येयत्वं भवति, तत्रायं न प्रवर्तते इति दिक्। तथाच शतिक इत्यादिद्वयस्य वाच्यः पटादिरेवेति प्रत्ययवाच्यस्य पटादेः स्वसम्बन्धसङ्ख्येयत्वं शतशब्देन नोच्यते। किञ्च, तेन क्रीतस्य पटादेरेव। शतकं निदानमित्यत्र प्रकृत्या शतशब्देन उक्तायाः सङ्ख्यायाः प्रत्ययवाच्यस्य निदानस्य सङ्ख्येयत्वम्। एवं शतकं काव्यमित्यत्रापि। तत्र द्वये सङ्ख्याया अतिशदन्ताया इत्यनेन कप्रत्ययः। इदानीं छात्राणां सुखप्रतिपत्त्या आर्हीयेभ्यः पूर्वापरप्रकरणपरिज्ञानाय क्रमेण पारिभाषिकविधिवाक्यद्वयमाह—इत इति। तदेवान्तं यस्य तत् तदन्तं तदन्तादपि विधिस्तदन्तविधिः। इतस्तेन क्रीतादिरित्यस्मात् पूर्वं पूर्वस्मिन्नर्थे वर्णे विधौ तदन्तस्य कार्यं स्यान्नाम्नातु कुचिदिति न्यायेन यस्मान्नाम्नो यो विधिः कृतस्तन्नामान्तादपि स विधिरिष्यत इत्यर्थः। इष्यत इति वर्तमानप्रयोगेण इतः पूर्वं यथा यस्मान्नाम्नो यो विधिर्विहितस्तन्नामान्तादपि स इष्टस्तद्वत्तेन कृतादावपीष्यत इति केषाञ्चिन्मतम्। उद्वयगवादिभ्य इत्यनेन यप्रत्ययान्तं गव्यमित्यादिकमुक्तम्। तेन कृतादावपि चेत् साधनं तदा गोद्विसर्वेश्वराभ्यामिति वक्ष्यमाणेन यरामान्तं ज्ञेयम्। तदर्हेति। सङ्ख्या पूर्वपदं येषां ते सङ्ख्यापूर्वपदास्तेषाम्। इष्यत इति पूर्वतोऽनुसज्यते। तदर्हतीत्यत उत्तरमुत्तरस्मिन्नर्थेऽलुकीति तद्धितालुकि विषये सङ्ख्या पूर्वपदानां सम्बन्धे यस्मान्नाम्नो यो विधिर्वक्ष्यते, तन्नामान्तादपि स इष्यत इति स्मृतिश्चिन्तनीयेत्यर्थः। पारायणं वर्तयतीति प्राग्वते-

२७९६। सङ्ख्याया अतिशदन्तायाः करामः।

आर्हीयेषु—पञ्चकः। कतिगणबहुतावदादीनामपि सङ्ख्यात्वात् गणकः। अतिशदन्तायाः किम्? साप्ततिकः, पाञ्चाशत्कः ॥२७८६॥

२७९७। कत्यादेरप्रतिषेधः।

कतिकः ॥ २७९७ ॥

२७९८। तावदादेरिको वा।

तावतिकः, तावत्कः ॥ २७९८ ॥

---

मधिवठ इति ठः। पारायणिकः। एवं द्वे पारायणे वर्तयति द्वैपारायणिक इति आदिसर्वेश्वरस्येति वृष्णीन्द्रः। अत्रेति, अत्र प्रकरणे आर्हीया इत्यधिकृत्य अधिकारं कृत्वा प्रत्यया दर्श्यन्त इति शेषः ॥

२७९६। सङ्ख्या। न निद्यते तीतिशदिति च अन्ते यस्याः सा अतिशदन्ता तस्याः। वृत्तिमाह आर्हीति। त्यन्तशदन्तवर्जितायाः सङ्ख्याया आर्हीयेषु तेन क्रीतादिष्वर्थेषु करामः स्यात्। पञ्चभिः क्रीतादिः पञ्चक इति। लोके कत्यादीनां सङ्ख्यात्वप्रतीतेरभावात् हेतुमुखेन सङ्ख्यात्वं प्रतिपादयन्नाह—कतीति। कत्यादीनामपि सङ्ख्यात्वादनेन करामः स्यादिति भावः। तेन गणेन क्रीतादिः गणकः। एवं बहुकः। अतिशदन्तायाः किं किमर्थं तिशदन्ता यर्हि स्यात्तर्हि न स्यात्। सप्ततिभिः क्रीतादिरिति प्राग्वतेर्माधवठ इति ठः। 'अ-इद्वयस्ये'ति इरामहरः साप्ततिकः। पञ्चाशद्भिः क्रीतादिरिति पूर्ववन्माधवठः। पश्चादिसन्तादुसन्तादित्यत्र तान्तादिति ठस्य कः पाञ्चाशत्क इति। अत्र पाञ्चाशतिक इति क्वचित् पुस्तके दृश्यते, सोऽपि शश्वदादिगणकल्पनाद्भवितुमर्हति ॥

२७९७। कत्या। आर्हीयेष्वर्थेषु कत्यादेरुत्तरस्मिन् कप्रत्ययस्याप्रतिषेधो भवति। त्यन्तत्वात् प्रतिषेधे प्राप्ते तस्य पुनर्निषेधोऽयम्। कतिभिः क्रीतादिः कतिक इति। एवं यतिकः ततिक इत्यादि ॥

२७९८। ताव। आर्हीयेष्वर्थेषु तावदादेरुत्तर इको वा भवति

२७९९। शतमानविंशतिकसहस्रवसनात् केशवणः।

शातमानं वासनम् ॥ २७९९ ॥

२८००। विंशतिक-विंशक-त्रिशतिक-त्रिशकाः।

साधवः ॥ २८०० ॥

२८०१। कंसार्द्धाभ्यां केशवठः।

कंसः परिमाणभेदः। कंसिकः, कंसिकी; अर्धिकः, अर्धिकी ॥ २८०१ ॥

---

पक्षे कश्च। तावदादेः सङ्ख्यात्वात् पूर्वेण नित्ये के प्राप्ते विकल्पार्थं वचनम्। तावद्भिः क्रीतादिः तावतिकः पक्षे तावत्क इति। एवं यतिकः यावत्क इति ॥

२७९९। शत। शतमानञ्च विंशतिकञ्च सहस्रञ्च वसनञ्चेति विग्रहे सर्वेऽपि रामकृष्णा विभाषयैकवद्भवन्तीति स्मरणादेकवदत्र शतमानविंशतिकसहस्रवसनमिति। शतमानादिकादार्हीयेष्वर्थेषु केशवणः स्यात्। करामापवादोऽयम्। शतमानेन सुवर्णेन क्रीतादि शातमानमिति। एवं वैंशतिकं साहस्रं वासनम् ॥

२८००। विंश। आर्हीयेष्वर्थेषु क-कच्प्रत्ययाभ्यां सह विंशतित्रिंशतोर्विंशतिकादयश्चत्वारः साधवो भवन्ति। अत्र प्रकृतिद्वये क-कच्-प्रत्ययविधानं कचि ति-तकारयोर्हरश्च निपातफलम्। विंशतेस्ति-हरश्चितीत्यनेन वशतिक इति सिद्धेऽपि, संसारस्य हरश्चितीत्यनेन तु त्रिंशतोऽद्भागस्य हरे प्राप्ते निपातनात् सर्वमविरुद्धम्। विंशत्या क्रीतादिः, त्रिंशता क्रीतादिरिति वाक्यञ्च पूर्ववत् कल्प्यम् ॥

२८०१। कंस। आर्हीयेष्वर्थेषु कंसार्धाभ्यां केशवठः स्यात्। यद्यपि सामान्यतः परिमाणभेद इत्युक्तं, तथापि चतुःषष्ट्या पलैः कंस इति ज्ञेयः। कंसेन क्रीतादिः कंसिक इत्यादि ॥

२८०२। कार्षापणस्य कार्षापणिकप्रतिकौ साधू।

२८०३। शूर्पात् केशवणो वा।

शौर्पं, शौर्पिकम्॥ २८०३॥

२८०४। अध्यर्धपूर्वात् त्रिराम्याश्चार्हीयस्य महाहरोऽसंज्ञायाम्।

अध्यर्धशतेन क्रीतम् अध्यर्धशतम्। त्रिराम्याः—द्विशतं, त्रिशतम्। असंज्ञायां किम्? पाञ्चकपालिकः पटः॥ २८०४॥

२८०५। कार्षापण-सहस्र-सुवर्णशतमानेभ्यो वा।

---

२८०२। कार्षा। कार्षापणेन क्रीतादिरित्यर्थे केशवठेन सार्धं कार्षापणशब्दस्य कार्षापणिकः पक्षे तस्य प्रत्यादेशेन प्रतिकश्चेति द्वौ साधू भवतः॥

२८०३। शूर्पा। आर्हीयेष्वर्थेष शूर्पशब्दात् केशवणो वा स्यात् पक्षे प्राग्वतेरित्यनेन माधवठश्च। द्व्याढ़कन्तु भवेद्द्रोणो द्विद्रोणं शूर्पमेव च। शूर्पेण क्रीतादिरिति वाक्यन्तु पूर्ववत्॥

२८०४। अध्य। असंज्ञायां गम्यमानायां आर्हीयेष्वर्थेषु अध्यर्धं पूर्वं यस्य तस्मात् त्रिराम्याश्चोत्तरस्यार्हीयप्रत्यस्य महाहरो भवति। शतस्य अर्धमर्धशतं तदधिकृत्य अध्यर्धशतं तेन। शतात् ठयरामावित्यनेनात्र ठयरामयोर्महाहरः। त्रिराम्या इति रूपं दर्श्यत इति शेषः। द्वाभ्यां शताभ्यां क्रीतादीति तद्धितार्थे त्रिरामी। पूर्ववदत्रापि ठयरामयोर्महाहरः। असंज्ञायां किं किमर्थं संज्ञा यर्हि स्यात्तर्हि न स्यात्। पञ्चभिः कपालैः क्रीतादिरिति प्राग्वतेर्माधवठ इति ठः॥

२८०५। कार्षा। असंज्ञायां गम्यमानायामार्हीयेष्वर्थेषु अध्यर्धपूर्वेभ्यः कार्षापणादिभ्य आर्हीयस्य केशवठादेर्महाहरः स्यात्। अध्यर्ध-

आर्हीयस्य महाहरः। अध्यर्धकार्षापणम्, अध्यर्धसहस्रम्, अध्यर्धसाहस्रमित्यादि॥ २८०५॥

२८०६। द्वित्रिपूर्वान्निष्काद्विस्ताच्च वा।

द्विनिष्कं द्विनैष्किकम्। एषूत्तरपदवृष्णीन्द्रः। अथ महाहरविषये प्रत्ययविशेषाः॥ २८०६॥

२८०७। विंशतिकात् खरामः।

अध्यर्धविंशतिकीनः॥ २८०७॥

---

कार्षापणेन क्रीतादिरिति। अध्यर्धकार्षापणमित्यादिद्वये कार्षापणस्येत्यनेन निपातसिद्धकेशवठस्य महाहरः पक्षे स्थितिश्च। द्वाभ्यां कार्षापणाभ्यां क्रीतादिरिति द्विकार्षापणिकमित्यादिद्वये तु ठस्य स्थितिः पक्षे महाहरश्च। अध्यर्धसहस्रेण क्रीतादि अध्यर्धसहस्रमित्यादिद्वये शतमार्णविंशतिकेत्यनेन विहितकेशवणस्य पक्षे स्थितिश्च। इत्यादीत्यादिपदेन द्विसहस्रं द्विसाहस्रम्। अध्यर्धशतमानं अध्यर्धशातमानम्। द्विशतमानं द्विशातमानम्। सुवर्णस्य तु प्राग्वतेरित्यनेन विहितमाधवठस्य महाहरः पक्षे स्थितिश्च, तेन अध्यर्धसुवर्णं अध्यर्धसौवर्णिकम्। द्विसुवर्णं द्विसौवर्णिकम्॥

२८०६। द्वित्रि। असंज्ञायामार्हीयेष्वर्थेषु द्वित्री पूर्वौ यस्मात्तथाभूतान्निष्कात् विस्ताच्च आर्हीयस्य महाहरो वा स्यात्। द्वाभ्यां निष्काभ्यां क्रीतादि द्विनिष्कमित्यादिद्वयम्। अत्रापि प्राग्वतेर्माधवठस्य महाहरः पक्षे स्थितिश्च। एवं त्रिनिष्कं त्रिणैष्किकं, द्विविस्तं द्विवैस्तिकं, त्रिविस्तं त्रिवैस्तिकम्। भङ्ग्यात्रोत्तरपदस्य वृष्णीन्द्रं स्मारयति एष्विति। एषु अध्यर्धसाहस्रमित्यादिषु उत्तरपदवृष्णीन्द्रः स्यात्। सङ्ख्यायाः परिमाणस्याशाणस्येत्यादिनेति शेषः। पारिभाषिकविधिवाक्यमाह—अथेति। प्रत्ययविशेषा इत्यस्मात् दर्श्यन्त इति शेषः॥

२८०७। विंश। आर्हीयेष्वर्थेषु महाहरविषये अध्यर्धपूर्वात् त्रिरामीनिष्पन्नाच्च विंशतिकात् खरामः स्यात्। अध्यर्धविंशतिकीन

२८०८। खारीकाकिनोभ्यामीकः।

अध्यर्धखारीकं, द्विकाकिनीकम्॥ २८०८॥

२८०९। केवलाभ्याञ्च।

खारीकं, काकिनीकम्॥ २८०९ ॥

२८१०। पण-पाद-माष-शतेभ्यो यरामः।

अध्यर्धपण्यम्॥ २८१० ॥

---

इति अध्यर्धविंशतिकेन क्रीतादिरित्यर्थः। एवं द्विविंशतिकीन अध्यर्धपूर्वादित्यनेन केशवणस्य महाहरविषयेऽत्र खरामः॥

२८०८। खारी। आर्हीयेष्वर्थेषु महाहरविषये अध्यर्धपूर्वाभ्यां त्रिरामीनिष्पन्नाभ्याञ्च खारीकाकिनीत्येताभ्यामीको भवति। अध्यर्धखार्या क्रीतादि अध्यर्धखारीकमित्यादिद्वयम्। एवं अध्यर्धकाकिनीकं द्विकाकिनीकम्। अत्रापि प्राग्वतेर्माधवठस्य महाहरविषये ईकः स्यात्॥

२८०९। केव। आर्हीयेष्वर्थेषु केवलाभ्याञ्च खारीकाकिनीभ्यामीको भवति। महाहरप्रकरणपाठान्महाहरविषयेऽत्र ईकः स्यात्। खार्या क्रीतादि खारीकमित्यादिद्वयम्। खारिकाकिन्यौ परिमाणविशेषौ॥

२८१०। पण। अध्यर्धपूर्वेभ्यस्त्रिरामीसिद्धेभ्यश्च पणपादमाषशतेभ्य आर्हीयेष्वर्थेषु महाहरविषये यरामो भवति। विंशतिगण्डात्मकः पणः। अध्यर्धपणेन क्रीतादि अध्यर्धपण्यम्। तथा द्विपण्यम्। पणादिभिः परिमाणवचनैः साहचर्यात् परिमाणवाचकस्य पणपादशब्दस्यात्र ग्रहणं न तु प्राण्यङ्गवाचकस्य तेनाध्यर्धपाद्यं द्विपाद्यमित्यत्र पादस्य गादिष्वित्यनेन ये परे पदादेशो न स्यात्। एवमध्यर्धमाष्यं द्विमाष्यम् अध्यर्धशत्यं द्विशत्यम्। एषु सर्वत्रैव पूर्ववट्ठरामस्य महाहरविषये यरामविधानम्॥

२८११। शाण-शताभ्यां वा।

अध्यर्धशाण्यम्, अध्यर्धशाणम् ॥ २८११ ॥

२८१२। द्वित्रिपूर्वाभ्यां केशवणश्च वा।

द्विशाण्यम्, द्विशाणं, द्वैशाणम् ॥ २८१२ ॥

महाहरविषया निवृत्ताः।

२८१३। तेन क्रीतम्।

अत्रार्थे प्राग्वतीया माधवठादयो ज्ञेयाः। सप्तत्या क्रीतं साप्ततिकं, नैष्किकं, मौद्गिकं, शत्यं, शतिकं, द्विकं त्रिकम् ॥ २८१३ ॥

---

२८११। शाण। आर्हीयेष्वथषु महाहरविषये अध्यर्धपूर्वाभ्यां त्रिरामीनिष्पन्नाभ्याञ्च शानशताभ्यां यरामो वा स्यात् पक्षे तस्य महाहरश्च। शाणः परिमाणभेदः। अध्यर्धशाण्यमित्यादिद्वये वाक्यं पूर्ववत्। एवं द्विशाण्यं द्विशाणम्। शतशब्दस्योदाहरणन्तु पूर्ववज्-ज्ञेयम् ॥

२८१२। द्वित्रि। आर्हीयेष्वर्थेषु महाहरविषये द्वित्रि पूर्वौ याभ्यां ताभ्यां शाणशताभ्यां केशवणो वा भवति, चशब्दात् पक्षे तस्य महाहरोऽपि। द्वाभ्यां शाणाभ्यां क्रीतादि द्विशाण्यमित्याद्युदाहरणं त्रयम्। इदानीं महाहरविषयान् प्रत्ययान् समापयन् क्रमेणार्हीयार्थान् आर्हीय-प्रत्ययांश्च दर्शयितुमाह–महाहरेति ॥

२८१३। तेन। वृत्तिमाह–अत्रेति। अत्रार्थे इत्यस्मात् परं यथायोग्यमिति योज्यम्। तथाहि, तेन क्रीतमित्यर्थे करणभूत-तच्छब्दनिर्दिष्टान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादयो भवन्ति। ननु येन यत् क्रीतं तत्तस्य मूल्यं भवतीति मूल्येनास्याभेदात् मूल्येन क्रीतमिति कृतेऽप्यत्र प्राग्वतेर्माधवठादयः। सिध्यन्त्येव कथं तेनेति सामान्यनिर्देशः, मैवं, उच्यते। यद्यपि वास्तवोऽर्थभेदो नास्ति'

२८१४। तस्य निमित्तं संयोगोत्पातौ।

अत्र चार्थे माधवठादयो ज्ञेयाः। शतस्य निमित्तमधमर्णेन संयोगः शत्यः, शतिकः। शुभाशुभसूचकचेष्टादिरुत्पातः। तत्र यथा सहस्रस्य निमित्तमक्षिस्पन्दनं साहस्रम्॥ २८१४॥

२८१५। गो-द्विसर्वेश्वराभ्यां यरामो न तु संख्या-परिमाणाश्वादेः।

गोर्निमित्तं संयोग उत्पातो वा गव्यः। एवं धन्यः, स्वर्ग्यः, यशस्यः, आयुष्यः। सङ्ख्यादेस्तु—पञ्चानां निमित्तं पञ्चकः, प्रास्थिकः। अश्वादेः—आश्विकः, हास्तिकः॥ २८१५॥

---

तथापि विवक्षा विद्यत एव अथवा अर्थभेदोऽपि विद्यत एव यतो यत् सप्तत्यादिना क्रीतं तत्र क्रायकस्य स्वीकारः प्रतीयते, यस्य तु सप्तत्यादिना मूल्यं तत्र व्यवस्थामात्रं प्रतीयते न तु क्रायकस्य स्वीकारः, विशेषतस्तु मल्येन क्रीतमिति यदि कृतं तदा मूल्यादन्यत्र लवेन क्रीतं हस्तेन क्रीतमित्यादौ न भवेयुर्मूल्यस्याप्रतीतेः। साप्ततिकमित्यादित्रिके प्राग्ववतेर्माधवठ इति ठः। शत्यमित्यादिद्वये तु शतात् ठयरामाविति यठारमौ। द्विकमित्यादिद्वये पुनः सङ्ख्याया अतिशदन्ताया इति कः॥

२८१४। तस्य। विवरणमत्रति। अत्र चार्थे इत्यस्मात् परं नाम्नो यथायोग्यं प्राग्वतेरिति पूरणीयम्। संयोगेऽत्र योगसम्बन्धः। उत्पातं निरूपयति शुभेति। एवम्भूतचेष्टादिरुत्पातः स चात्र वाह्वक्षादिष्पन्दनरूपः तत्र यथेति उदाह्रियत इति शेषः॥

२८१५। गो। सङ्ख्या च परिमाणञ्च, अश्व आदिर्यस्य स च सर्वेऽपि रामकृष्णा इत्यनेनैकवत्त्वात् सङ्ख्यापरिमाणाश्वादिस्तस्मात्। तस्य निमित्तं संयोगोत्पातावित्यर्थे गोशब्दात् द्विसर्वेश्वराच्च यरामः स्यात्, सङ्ख्यापरिमाणाश्वादेस्तु न स्यात्। धन्य इति धनस्य निमित्तमित्यादिः पूर्ववत्। सङ्ख्यादेरित्यत्रादिपदेन परिमाणस्य ग्रहणम्।

२८१६। पुत्राच्छ-यरामौ।

पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयः, पुत्र्यः ॥२८१६॥

२८१७। सर्वभूमिपृथिवीभ्यां केशवणः।

सर्वभूमेर्निमित्तमित्यादि सार्वभौमः। अनुशतादिरयम्। प्राथिवः ॥ २८१७ ॥

२८१८। ईश्वर इत्यर्थे च।

सार्वभौमः, पार्थिवः ॥ २८१८ ॥

२८१९। लोकसर्वलोकाभ्यां माधवठो विदिते।

लौकिकः, सार्वलौकिकः—अनुशतादिरयम् ॥ २८१९ ॥

---

निमित्तमित्यस्मात् संयोगोत्पाताविति योज्यम्। पञ्चक इति सङ्ख्याया अतिशदन्ताया इति कः। प्रास्थिक इति प्रस्थशब्दात् प्राग्वतेर्माधवठ इति ठः। एवमाश्विक इत्यादिषु। अश्व हस्तिन् अश्मन् रथ गण ऊर्णा उमा भट्ट वर्षा वस्विति दश अश्वादिः ॥

२८१६। पुत्रा। तस्य निमित्तं संयोगोत्पाताविस्यर्थे पुत्रशब्दाच्छरामयरामौ भवतः ॥

२८१७। सर्व। तस्य निमित्तं संयोगोत्पाताविस्यर्थे सर्वभूमिपृथिवीभ्यामुत्तरः केशवणो भवति। सार्वभौम इत्यत्रानुशतादित्वादुभयपदयोरादिसर्वेश्वरस्य वष्णीन्द्र इत्याह—अन्विति। पार्थिव इति पृथिव्या निमित्तं संयोगोत्पाताविस्यर्थः ॥

२८१८। ईश्व। तस्येश्वर इत्यर्थे सर्वभूमिपृथिवीभ्यां केशवणः स्यात्। सर्वभूमेरीश्वरः सार्वभौम इति। एवं पार्थिव इति च ॥

२८१९। लोक। विदिते ख्याते वाच्ये लोक सर्वलोक इत्येताभ्यां माधवठो भवति। लोके विदितः लौकिकः। सार्वलौकिक इत्यत्रानुशतादित्वादुभयपदयोर्वृष्णीन्द्र इत्याह—अन्विति ॥

२८२० । वात-पित्त-श्लेष्म-सन्निपातेभ्यः शमन-कोपनयोः ।

वातस्य शमनं कोपनं वा वातिकम् ॥ २८२० ॥

२८२१ । तस्य वापः ।

अत्रार्थे यथाविहितं स्यात् । उप्यतेऽस्मिन्निति वापः । प्रस्थस्य वापः क्षेत्रं प्रास्थिकम् । एवं द्रौणिकम् ॥ २८२१ ॥

२८२२ । पात्रात् केशवठः ।

पात्रिकं क्षेत्रम्, पात्रिकी भूः ॥ २८२२ ॥

२८२३ । तदस्मिन् वृद्धिरायो लाभः शुल्क उपदा वा दीयते ।

---

२८२० । वात । शमनकोपनयोर्वाच्ययोर्वातादिभ्यो प्राग्वतेर्माधवठो भवति । यथा वातिकमिति तथा पैत्तिकं श्लैष्मिकं सान्निपातिकम् ॥

२८२१ । तस्य । अत्रार्थे तच्छब्दनिर्दिष्टान्नाम्नो विहितमनतिक्रम्य प्राग्वतेर्माधवठादिः स्यादित्यर्थः । उप्यतेऽस्मिन्निति वाक्ये डु वप बीजतन्तुसन्ताने इत्यस्मात् कर्तृवर्जितकारके चेत्यनेन अधिकरणे घण् । एतेन तच्छब्दनिर्दिष्टात् । प्रत्ययो भवन्नपि वापशब्दनिर्देशस्य वाचकः । अतएव वाप इत्यस्य वाच्यं क्षेत्रमिति दत्तम् । प्रस्थस्येति प्रस्थपरिमाणबीजस्येत्युपचाराज्ज्ञेयं, प्रस्थस्य वपनासम्भवात् । एवं द्रौणिकमाढ़किकमित्यादयो यथायथम् ॥

२८२२ । पात्रा । तस्य वाप इत्यर्थे पात्रशब्दात् केशवठः स्यात् । पात्रं परिमाणविशेष इत्यस्मात् प्राग्वतेर्माधवठेऽपि कृते पात्रिकमित्यादिद्वयं सिध्यत्येव, तथापि केशवठविधानं यत्, तत् न वृष्णीन्द्रहेत्वित्यनेन प्राप्तपुम्वद्भावनिषेधखण्डनार्थम् ॥

२८२३ । तद । दीयत इत्यनेनात्र सम्प्रदानमपेक्षते तेन तदस्मिन्

अत्रार्थे यथास्वम्। तत्र वृद्धिरधमर्णादधिकादानम्, आयो ग्रामादिषु स्वामिभागः। लाभो वाणिज्ययाधिकप्राप्तिः, शुल्को रक्षानिमित्तो राजभागः, उपदा तूत्कोच इति, पञ्चास्मिन् वृद्ध्यादीनामेकतरं दीयते पञ्चकः। एवं विंशतिकः॥ २८२३॥

२८२४। चतुर्थ्यर्थे च।

शतमस्मै वृद्ध्यादिकं दीयते शत्यो विप्रः॥ २८२४॥

२८२५। पूरणादर्धाच्च ठरामः।

द्वितीयिकः, पञ्चमिकः, अर्धिकः॥ २८२५॥

---

वृद्ध्यादि दीयते तस्मै वा दीयत इत्यर्थे तच्छब्दनिर्देशान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादयो भवन्ति। प्रत्येकमर्थान् स्वयं विवृणोति तत्रेत्यादिना। तत्र वृद्ध्यादिषु मध्ये वृद्धिस्तावदधमर्णात् खातकात् सकाशादुत्तमर्णस्य मूलधनादधिकग्रहणम्। स्वामिभागः स्वामिग्राह्यो भागः। वाणिज्यया पटादीनां क्रयविक्रयेण सूत्रादिमूल्यादधिकप्राप्तिः। रक्षेति। वणिजादीनां रक्षानिमित्तो घट्टादौ राज्ञो दण्डरूपो भागः। उत्कोचो राजमन्त्र्यादिभ्यः स्वकार्यसाधनार्थं वेतनदानम्। पञ्चेति वृद्ध्यादीनां मध्ये पञ्च एकतरमस्मिन् दीयतेऽस्मै वा दीयत इति पञ्चक इत्यत्र संख्याया अतीत्यनेन कः। शतिक इत्यत्र शताट्ठयरामाविति ठः॥

२८२४। चतु। पूर्वस्यैव प्रपञ्चोऽयं न पृथक् तेन दीयत इत्यनेन यदपेक्षितसम्प्रदानं तदेव चतुर्थ्यर्थे चेत्यनेन प्रपञ्चितं, तथाच सति वृतद्ध्याद्यस्मिन् दीयतेऽस्मै च, वा दीयत इति तच्छब्दनिर्देशान्नाम्नो यथाविहितं प्राग्वतेर्माधवठादिः स्यादिति पूर्वेण तुल्यम्। तदस्मिन् दीयत इति पूर्वं दर्शितमिति। तदस्मै दीयत इति वाक्यमत्राह—शतेति॥

२८२५। पूर। तदस्मिन् अस्मै वा दीयत इत्यर्थे पूरणप्रत्ययान्तादर्धशब्दाच्च ठरामः स्यात्। द्वयोः पूरणः द्वितीयः सोऽस्मिन्नस्मै वा दीयते द्वितीयिक इत्यादिः॥

२८२६। भागाद्यरामश्च।

भाग्यं, भागिकम् ॥ २८२६ ॥

२८२७। तं हरति बहत्युत्पादयति वंशादिपूर्वाद्भारान्माधवठः।

वांशभारिकः, वाल्वजभारिकः ॥ २८२७ ॥

२८२८। वस्नद्रव्याभ्यां ठकरामौ।

वस्निकः, द्रव्यकः ॥ २८२८ ॥

२८२९। सम्भवत्यवहरति पठति।

एष्वर्थेषु च यथास्वम्। प्रस्थं सम्भवतीत्यादौ प्रास्थिकः कटाहः, खारिकः। प्रमाणानतिरेकः सम्भवः अवहारः संहरणम् ॥ २८२९ ॥

---

२८२६। भागा। तदस्मिन्नस्मै वा दीयत इत्यर्थे भागाद्यरामः स्याच्चकारात् ठरामोऽपि ॥

२८२७। तम्। उत्पादयति आहरति गृह्णातीत्यर्थः। तं हरतीत्याद्यर्थत्रये वंशादिः पूर्वः यस्य तथाभूतात् भारात् स्यात्। वंशादिपूर्वाद्भारादिति सूत्रैकदेशस्थाने वंशादेर्भारभूतादित्येके तन्मते भारभूतं वंशं हरतीत्याद्यर्थे वांशिक इति स्यात्। वंशस्य भारः वंशभारस्तं हरतीत्यादि योज्यम्। वल्वजः वावइरिति लोकप्रसिद्धम् ( काशतृणं वीरणतृणञ्चेति अमरटीका)। एवमादिपदात् कूटज मूल स्थूला अक्ष इक्षु अश्वन् खट्वेति गृह्यते ॥

२८२८। तं हरत्याद्यर्थे वस्नद्रव्याभ्यां यथासंख्यं ठकरामौ भवतः ॥

२८२९। सम्भ। विवरणं एष्विति। एष्वर्थेषु सम्भवत्याद्यर्थेषु नाम्नो यथास्वं प्राग्वतेर्माधवठादिः स्यात्। खारिक इत्यस्मात् पूर्वमेवेमिति योज्यम्। सम्भवत्येव हरतीत्यर्थद्वयं स्पष्टयति प्राणेति।

२८३०। पचतौ द्रोणात् केशवणश्च।

द्रौणी, द्रौणिकी स्थाली ॥ २८३० ॥

२८३१। आढ़काचितपात्रेभ्यः खरामो वा।

सम्भवतीत्यादिषु। आढ़कीना, आढ़किकी ॥ २८३१ ॥

२८३२। त्रिराम्याः केशवठः खरामश्च वा।

सम्भवतीत्यादिषु। द्व्याढ़कीना द्व्याढ़किकी। पक्षे अध्यर्धपूर्वादिति माधवठस्य महाहरः; द्व्याढ़की ॥ २८३२ ॥

२८३३। कुलिजान्महाहरखरामौ वा माधवटश्च

सम्भवतीत्यादिषु। द्विकुलिजी, द्विकुलिजीना, द्विकुलिजिकी। पक्षे माधवठस्य स्थितिरेव—द्वैकुलिजिकी ॥ २८३३ ॥

---

प्रमाणात् पूर्वमाधेयस्येति पूरणीयम्। सम्भवतिः सम्भवपूर्वधारणार्थं इत्यन्ये ॥

२८३०। पच। पचतावर्थे द्रोणशब्दात् केशवणः स्यात्, चकारान्माधवठोऽपि। सम्भवत्यादिषु पचतीति लब्धेऽपि यत् पचताविति कृतं तन्नियमार्थम् ॥

२८३१। आढ़। पचतावित्यस्यानुवृत्तिशङ्कानिरासार्थं वृत्तिमाह—सम्भवतीति। सम्भवतीत्याद्यर्थेषु आढ़कादिभ्यः खरामो वा स्यात् पक्षे प्राग्वतेर्माधवठः। यथा आढ़कीनेत्यादिद्वयम्। एवमाचितीना आचितिकी पात्रीणा पात्रिकीति ॥

२८३२। त्रिरा। सम्भवत्याद्यर्थेषु त्रिरामीनिष्पन्नान्नाम्नः केशवठो वा स्यात् खरामश्च। पक्षे, माधवठस्य महाहर इत्याह—अध्यर्धेति। केशवठखरामयोस्तु महाहरो न स्यादत्र विधानसामर्थ्यात्। त्रिरामी चात्र तद्धितार्थेति ॥

२८३३। कुलि। त्रिराम्यत्रानुवर्तते। सम्भवत्याद्यर्थेषु त्रिरामीनिष्पन्नात् कुलिजशब्दान्महाहरखरामौ वा भवतः पक्षे माधवठश्च

२८३४। सोऽस्यांश-वस्न-भृतयः।

अत्रार्थे च यथास्वम्। पञ्च अंशा वस्ना भृतयो वा अस्य पञ्चकः, शत्यः, शातिकः। अंशो भागः, वस्नो मूल्यं, भृतिर्भरणम् ॥ २८३४ ॥

२८३५। तदस्य परिमाणम्।

अत्र च यथास्वम्। प्रास्थिको राशिः। द्रौणिकः, खारिकः, शत्यः, शतिकः। वार्षशतिको योगः, षष्ठीर्जीवितपरिमाणस्य षाष्टिकः। इह द्वे षष्टी जीवितपरिमाणमस्य माधवठस्याध्यर्धेति

---

वा भवति। द्वौ कुलिजौ सम्भवतः अवहरतः पठत इति द्विकुलिजीत्यत्र अध्यर्धेत्यनेन विहितकेशवठस्य महाहरो वा। स्थितिरेवेति विधानसामर्थ्यादिति शेषः ॥

२८३४। सोऽस्य। अत्रार्थे सोऽस्यांसेत्याद्यर्थे तच्छब्दवाच्यान्नाम्नो यथास्वं प्राग्वतेर्माधवठादिः स्यात्। पञ्चक इत्यत्र संख्याया अतीत्यनेन कः। शत्य इत्यादिद्वये तु शताद्ठयरामाविति यठरामौ। अंशाद्यर्थान् स्वयं विवृणोति अंश इति ॥

२८३५। तद। अत्रार्थे तच्छब्दनिर्दिष्टान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादिर्भवति। प्रस्थं परिमाणमस्य राशेरिति वाक्ये प्रास्थिक इति। एवं द्रौणिकप्रभृतयो यथास्वं प्रत्ययान्ताः। परिमीयते परिच्छिद्यतेऽनेनेति व्यूत्पत्त्या सङ्ख्याया अपि परिमाणवाचित्वमस्तीति सङ्ख्याया उदाहरणान्याह—वार्षेत्यादिना। वर्षशतं जीवितपरिमाणमस्येति वार्षशतिक इत्यस्यादिसर्वेश्वरस्येत्यनेन वृष्णीन्द्रः। अस्येत्यस्मादिति पदं योज्यम्। महाहरस्य पश्चात् केशवठप्राप्तिप्रकारं दर्शयति इहेति। इह प्रकरणे द्वे षष्टी जीवितपरिमाणमस्येति वाक्ये तद्धितार्थे त्रिरामीसमासे प्राग्वतेर्माधवठस्य अर्धेति सूत्रेण महाहरस्तस्मिंश्च सति, सोऽस्येति सोऽस्यांशवस्नभृतय इत्यर्थे वर्तमानेऽपि तदस्येति तदस्य परिमाणमित्यर्थनिर्देशसामर्थ्यात् पुनस्त्रिराम्या इत्यनेन केशवठः स्यादिति

सोऽस्येति वर्तमाने तदस्येत्यर्थनिर्देशसामर्थ्यात् पुनः केशवठः द्विषष्टिकः। 'तस्य विधानसामर्थ्यादलुक्' इति जयादित्यः (काशिका ५।१।५७)। सङ्ख्यात इत्युत्तरपदवृद्धिः—द्विषाष्टिकः, त्रिसाप्ततिकः ॥ २८३५ ॥

२८३६। सङ्ख्यायाः सङ्घसूत्राध्ययनेषु, संज्ञायान्तु स्वार्थे।

सङ्ख्यावाचिनः परिमाणार्थे यथास्वम्। पञ्च परिमाणस्य पञ्चकः सङ्घः। अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनीयसूत्रम्। पञ्चावृत्तयः परिमाणमस्य पञ्चकमध्ययनम्। संज्ञायाम्—पञ्चैव पञ्चकाः॥ २८३६ ॥

२८३७। पङ्क्ति-विंशत्यादयः साधवः।

---

द्विषष्टिकः। अध्यर्धेत्यनेन केशवठस्यापि महाहरसम्भवात् परमतेन तदभावं सूचयन्नाह—तस्येति। तस्य केशवठस्येति। अध्यर्धपूर्वात् त्रिराम्याश्चेत्यत्रासंज्ञायामित्युक्तात् संज्ञायान्तु माधवठस्य स्थितिरित्यादिसर्वेश्वरस्य वृष्णीन्द्रे प्राप्ते स उत्तरपदे स्यादिति स्मारयति सङ्ख्येति। सङ्ख्यातः सम्बत्सरसङ्ख्योरित्यनेनोत्तरपदस्य वृद्धिः। द्विषाष्टिक इत्यत्र वाक्यं पूर्ववत्। वाच्यग्दन्तु पटादिकमूह्यम्। त्रिसाप्ततिक इति त्रयः सप्ततयः परिमाणमस्येत्यर्थः॥

२८३६। सङ्ख्या। वृत्तिमाह—सङ्ख्येति। तदस्य परिमाणमित्यर्थे सङ्घसूत्राध्ययनेषु वाच्येषु सङ्ख्यावाचिनः शब्दाद्यथास्वं प्राग्वतेर्माधवठादिः स्यात्। संज्ञायान्तु गम्यमानायां स्वार्थेऽर्थे तस्माद्यथास्वं माधवठादिः स्यात्। सर्वत्रैवात्र सङ्ख्याया इत्यनेन कः। स्वार्थे संज्ञायामुदाहरणात् पू त्रासंज्ञायामिति गम्यते॥

२८३७। पङ्क्ति। तदस्य परिमाणमित्यर्थे पङ्क्तिविंशत्यादयः

द्वौ पञ्चतौ परिमाणमस्य पङ्क्तिः। द्वो दशतौ विंशतिरित्यादि ॥ २८३७ ॥

२८३८। पञ्चत-दशतौ वर्गे वा।

पञ्च परिमाणमस्य पञ्चतो वर्गः। पक्षे पञ्चकः। एवं दशतः, दशकः ॥ २८३८ ॥

२८३९। तदर्हति।

अत्र च यथास्वम्। छत्रमर्हति छात्रिकः; शत्यः, शतिकः ॥ २८३९ ॥

२८४०। छेदादिभ्यो नित्यत्वे।

---

साधवो भवन्ति। यद्यत् सूत्रेणानुत्पन्नं तत्सर्वं निपातनात् साध्विवति पाणिन्युक्तात्। वर्णागमो वर्णविपर्ययश्चेति पूर्वोक्ताच्च यथेष्टसिद्धमत्र विवक्षणीयम्। तस्मान्निपातनत एव इप्रत्ययेन सह पञ्चतस्य ठरामस्यारामलोपेन द्विशब्दस्याप्रयोगेण च पञ्चतशब्दस्य पङ्क्तिरितीष्टसिद्धम्। पूर्ववदिप्रत्ययेन द्विशब्दस्याप्रयोगेण दरामस्य विमादेशेन च सह दशतस्य विंशतिरिति साधुः। इत्यादीत्यादिपदेन त्रयोदशताः प्रमाणमस्येति त्रिशब्दान्मुमागमेन दशतस्यादि-दरामस्य तरामसम्वन्ध्यरामस्य च हरेण च सह दशतशब्दस्य त्रिंशदिति साधु। एवं चत्वारिंशत् पञ्चाशत् षष्टि सप्तति अशीति नवति शतेत्यादिषु यथास्वं प्रत्ययवर्णविपर्ययहरागमादेशाः परिकल्पनीयाः ॥

२८३८। पञ्च। तदस्य परिमाणमित्यथ पञ्च दश इत्यनयोस्तप्रत्ययेन साकं वर्गे वाच्ये पञ्चत-दशतौ वा साधू भवतः। पक्षे ताभ्यां कश्च स्यात् ॥

२८३९। तद। अत्र चार्थे तच्छब्दवाच्यान्नाम्नो यथायोग्यं प्राग्वतेर्माधवठादिः स्यात् ॥

२८४०। छेदा। तदर्हतीत्यर्थे नित्यत्वे सति छेदादिभ्यो यथास्वं

छेदं नित्यमर्हति छैदिकः। एवं भैदिकः॥ २८४०॥

२८४१। शीर्षच्छेदाद्यरामश्च।

शीर्षच्छेद्यः शैर्षच्छेदिकः॥ २८४१॥

२८४२। दण्डादिभ्यो यरामः।

दण्ड्यः, वध्यः, कश्यः, युग्यः, मुषल्यः, मधुपर्क्यः, अर्घ्यः, मेध्यः, धन्यः॥ २८४२॥

२८४३। पात्राद्घरामश्च।

पात्रियः, पात्र्यः॥ २८४३॥

२८४४। दक्षिणाकरङ्गराभ्यां छरामश्च।

दक्षिणीयः दक्षिण्यो विप्रः, करङ्गरीयः करङ्गर्यो गौः॥ २८४४॥

---

प्रत्ययः स्यात्। छैदिकादिद्वयेऽत्र विधानान्तराभावात् प्राग्वतेर्माधवठ एव। एवमादिपदात्, द्रोह नर्त कर्ष सम्प्रयोग सम्प्रेषण सम्प्रश्नेभ्यश्च॥

२८४१। शीर्ष। तदर्हतीत्यर्थे सति शीर्षच्छेदशब्दाद्यरामः स्यात् चकारात् पूर्वोक्तमाधवठोऽपि॥

२८४२। दण्डा। तदर्हतीत्यर्थे दण्डादिभ्यो यरामः स्यात्। कश्य इति, अश्वादेस्ताड़नी कशा इत्यस्य रूपम्। मेघ उदक वंश इति त्रयमपि दण्डादौ कश्चित् पठति॥

२८४३। पात्रा। तदर्हतीत्यर्थे पात्रशब्दात् घरामः स्यात् चकाराद्योऽपि। पात्रं भोजनभाजनं परिमाणञ्च तत्पात्रमर्हति यः स पात्रीयः पात्र्यश्च येन भुङ्क्ते पुनः पाकेन विनैव पात्रं शुध्यति यच्च तण्डुलादेः पाकस्य परिमाणमर्हति तदेवोच्यते॥

२८४४। दक्षि। तदर्हतीत्यर्थे दक्षिणा कड़ङ्गराभ्यां छरामः स्यात् यश्च। कड़ङ्गरस्तृणविशेषः (वूषः) माषादेः काण्ठभागो वा दीप्ताग्नित्वात् निर्गुणत्वाद्वा यो गौस्तमर्हति स एव कड़ङ्गरीयादिद्वय-

२८४५ । स्थालीविलाच्छरामः ।

स्थालीविलीयास्तण्डुलाः पाकयोग्याः ॥ २८४५ ॥

२८४६ । यज्ञाद्घरामः ।

यज्ञियं द्रव्यम् ॥ २८४६ ॥

२८४७ । ऋत्विजो नृसिंहखः ।

आर्त्विजीनो यजमानः ॥ २८४७ ॥

२८४८ । तत्कर्मार्हतीत्यत्रापि ।

यज्ञियो देशः, आर्त्विजीनं विप्रकुलम् ॥ २८४८ ॥

आर्हीयाः पूर्णाः ।

**प्राग्वतीयोऽनुवर्तते—**

२८४९ । पारायणोत्तरायणचान्द्रायणं वर्तयति ।

---

शब्दवाच्य इति । ( नीवारपाकादिकडङ्गरीयैरामृश्यते जानपदैर्न कच्चित् । इति रघुवंशे । ५।९ ) ॥

२८४५ । स्थाली । तदर्हतीत्यर्थे स्थालीविलशब्दाच्छरामो भवति । स्थाल्या विलमाकाशदेशो ये तमर्हन्ति ते स्थालीविलीया इति ॥

२८४६ । यज्ञ । तदर्हतीत्यर्थे यज्ञशब्दात् घरामः स्यात् ॥

२८४७ । ऋत्वि । तदर्हतीत्यर्थे ऋत्विक्शब्दान्नृसिंहखः स्यात् । ऋत्विक् कृतसंस्कारो द्विजस्तमर्हति आर्त्विजीन इति ॥

२८४८ । तत् । तयोर्यज्ञर्त्विजोः कर्म तत्कर्म । तत्कर्मार्हतीत्यर्थेऽपि यज्ञर्त्विग्भ्यां घनृसिंहखौ भवतः । देश इति कृष्णसाराधिष्ठितो यः स एवात्र ज्ञेयस्तस्यैव यज्ञकर्मार्हत्वात् । यज्ञर्त्विग्भ्यामत्र लक्षणया तत्तत्कर्मोच्यते । तेन यज्ञकर्मार्हतीति वाक्यं योज्यम् । इदानीमार्हीयान् समापयति आर्हीति ॥

प्राग्वतेर्माधवठादीनां प्राप्त्यर्थं प्राग्वतीयानुवर्तनं स्मारयति प्राग्वतीति ॥

पारायणं वर्तयति अधीते पारायणिकः। एवं द्वैपारायणिकः ॥ २८४९ ॥

२८५०। संशयमापन्नः।

सांशयिकः ॥ २८५० ॥

२८५१। योजनं गच्छति।

यौजनिकः। क्रौशशतिकयौजनशतिकावुपसङ्ख्यानात् ॥२८५१॥

२८५२। पथः केशवठः।

पथिकः, पथिकी। पान्थः साधुः। स्त्रियां पान्थी ॥२८५२॥

---

२८४९। पारा। पारायणोत्तरायणचान्द्रायणं वर्तयतीत्यर्थे पारायणादिभ्यः प्राग्वतीयो माधवठः स्यात्। पारायणं वेदस्य शास्त्रस्य वा समस्ताध्ययनं कर्म। उत्तरायणं यज्ञविशेषः। चान्द्रायणो व्रत-विशेषः। वर्तयति अधीते समापयतीति यावत्। एवमौत्तरायणिकः चान्द्रायणिक इति। तदर्हतीत्यत उत्तरन्तु सङ्ख्यापूर्वपदानामलुकीति यदुक्तं तदुदाहरणं दर्शयति एवमिति। तथा द्वैयुत्तरायणिकः द्वैचान्द्रायणिक इति।

२८५०। संश। संशयमापन्न इत्यर्थे संशयात् पूर्वोक्तमाधवठः स्यात्॥

२८५१। योज। योजनं गच्छतीत्यर्थे योजनात् पूर्ववन्माधवठो भवति। क्रौश। उपसङ्ख्यानाद्धेतोस्तद्गच्छतीत्यर्थे माधवठेन सह क्रोशशतयोजनशतयोः क्रौशशतिकयौजनशतिकाविति द्वौ साधू भवतः। ततोऽभिगममर्हति सदा तं याति चेत्यर्थे क्रोशशतयोजनशताभ्यां टिकणित्येके॥

२८५२। पथः। पन्थानं गच्छतीत्यर्थे पथिशब्दात् केशवठः स्यात्। पथिकीति अणकेशवगौरादिभ्य इत्यनेन ईप्। पन्थानं गच्छतीत्यर्थे केशवणेन सह नुमागमपूर्वकं पथिशब्दस्य पान्थः साधुः। पान्थीति पूर्ववदीप्॥

२८५३। उत्तरपथेनाहृतञ्च।

औत्तरपथिकं हरिचन्दनम्। चकारात्तेन गच्छतीत्यत्र च ॥ २८५३ ॥

२८५४। वारि-जङ्गल-स्थल-कान्तार-सङ्कुलाज-पूर्वाच्च।

वारिपथेनाहृतं गच्छति वा वारिपथिकः ॥ २८५४ ॥

२८५५। स्थलवारिभ्यां पथो मधुकमरिचयोः केशवणः।

स्थालपथं मधुकं मरिचं वा ॥ २८५५ ॥

२८५६। कालात्।

कालवाचिभ्यः प्रत्ययो वाच्यः। व्युष्टादिभ्यः केशवण इति यावत् ॥ २८५६ ॥

---

२८५३। उत्त। उत्तरपथेनाहृतञ्चेत्यर्थे उत्तरपथात् पूर्वोक्त-माधवठः स्यात्। सूत्रस्थ-चशब्दार्थं स्वयं विवृणोति चकारेति। इत्यत्र चेति ज्ञेयम् ॥

२८५४। वारि। तेनाहृतं तेन गच्छति वेत्यर्थे वार्यादिपूर्वाच्च पथः प्राग्वतीयमाधवठः स्यात्। यथा वारिपथिकमिति। जाङ्गल-पथिकं स्थालपथिकं कान्तारपथिकं साङ्कुलपथिकम् आजपथिक-मिति ॥

२८५५। स्थल। तेनाहृतं तेन गच्छति वेत्यर्थे मधुक-मरि-चयोर्वाच्ययोः स्थलवारिभ्यामुत्तरस्मात् पथः केशवणः स्यात् ॥

२८५६। काला। स्वयं वृत्तिमाह—कालेति। व्युष्टादिभ्यः केशवण इति यावद्वक्ष्यते तावत् कालवाचिभ्यो यथास्वं प्रत्ययो वक्तव्य इत्यन्वयः। प्रभुरयमिति गम्यम् ॥

२८५७। तेन निर्वृत्तः।

अत्रार्थे कालान्माधवठः। आह्निकं, द्विसाम्वत्सरिकम्; 'संख्यातः संवत्सर'- ( २०७८ ) इत्युत्तरपदवृष्णीन्द्रः॥ २८५७॥

२८५८। तमधीष्टो भृतो भूतो भावी वा।

अत्यन्तव्याप्तौ द्वितीया। मासमधीष्टः सत्कृत्य व्यापारितः, भृतः वेतनेन क्रीतः, भूतः स्वसत्तया व्याप्तकालः, तादृश एवानागतो भावी। स च स च मासिकः। एवं साम्वत्सरिकः॥२८५८॥

---

२८५७। तेन। निर्वृत्तो निष्पन्नः। प्राग्वतेरनुवर्तनान्माधवठ इति प्राग्वतेर्माधवठ इति। अह्ना निर्वृत्तं आह्निकमित्यत्र 'व-मसत्सङ्गे'त्यनेनारामहरः। तदर्हतीत्यत उत्तरन्तु सङ्ख्यापूर्वपदानामलुकीत्युक्तत्वात्। द्वाभ्यां सम्वत्सराभ्यां निर्वृत्तं द्विसाम्वत्सरिकमित्यत्रोत्तरपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रं सूचयति सङ्ख्यात इति॥

२८५८। तम। तमित्यत्र द्वितीयाप्राप्तिविधानं स्मारयति अत्यन्तेति। अत्यन्तेत्यस्मात् पूर्वं कालाध्वनोरिति योज्यम्। तमधीष्टादावर्थे तच्छब्दनिर्देशात् कालवाचकान्माधवठः स्यात्। वाक्यप्रदर्शनमुखेन अधीष्टाद्यर्थान् विवृणोति—मासमिति। तादृश एव स्वसत्तया व्याप्तकाल एव अनागतः सन् भावीति। अधिपूर्व इषु इच्छायां डु भृञ् धारणपोषणयोरित्याभ्यां कर्मणि क्तः। इत्यतः मासमधीष्ट इत्यादौ अध्येषणादेर्यदपेक्षितं पुरुषादि कर्म तदपि क्तेनोक्तं न चात्रान्यक्रियाऽस्ति यस्या मासादि कर्म स्यात् तस्मात् 'कालाध्वनोरत्यन्तव्याप्तावि'त्यनेन द्वितीया स्यात् ग्रन्थकृता सूचितमेतत्। नन्वध्येषणभरणे मुहूर्तं क्रियेते ताभ्यां कथं मासो व्याप्यते। उच्यते। यदर्थं हि ते क्रियेते तत्फलभूतयाध्ययनादिक्रियया मासो व्याप्यते इति। स च सचेति वीप्सया। अधीष्ट भृतो भूतो भावी इत्येतेषां वाच्यार्थो दर्शितः॥

२८५९। मासाद्वयसि यराम-नृसिंहखौ।

मासमधीष्ट इत्यादौ मास्यो मासीनो दारकः। वयसि किम् ? मासिकः कर्मकरः॥ २८५९॥

२८६०। त्रिराम्या यरामः।

द्विमास्यः, त्रिमास्यः॥ २८६०॥

२८६१। षण्मासाण्ण्ययरामौ वा।

षाण्मास्यः, षण्मास्यः, षाण्माषिकः॥ २८६१

२८६२। अवयसि ठ-ण्यरामौ।

षाण्मासिकः, षाण्मास्यो धर्मः॥ २८६२॥

२८६३। निर्वृत्ताद्यर्थपञ्चके।

प्रभुरयम्॥ २८६३॥

---

२८५९। मासा। तमधीष्टादावर्थे वयसि गम्यमाने मासशब्दात् यरामनृसिंहखौ भवतः। दारको वालः। कर्मकारो भृत्यः। वयोऽत्र न गम्यते तस्मादौत्सर्गिकमाधवठः॥

२८६०। त्रिरा। तमधीष्टादावर्थे वयसि गम्ये त्रिराम्या इति त्रिरामीसमासान्तात् कालाद्यरामः स्यात्। द्वौ मासावधीष्टादिरिति तद्धितार्थे त्रिरामी द्विमास्य इति। एवं त्रिमास्यः॥

२८६१। षण्मा। षण्णां मासानां समाहारः षण्मासमित्यस्मा-द्वयसि गम्ये तमधीष्टादावर्थे ण्ययरामौ वा भवतः। द्वाभ्यां त्यक्त-पक्षे औत्सर्गिकमाधवठश्च स्यात्। षण्मासमधीष्टादिरिति क्रमेण षाण्मास्यादित्रयम्॥

२८६२। अव। तमधीष्टादावर्थे वयसि गम्ये षण्मासात् ठ-ण्यरामौ भवतः॥

२८६३। निर्वृ। निर्वृत्ताद्यर्थपञ्चके नाम्नो यथास्वं प्रत्ययः स्यात्। अयं प्रभुनामाधिकार इत्याह—प्रभुरिति॥

२८६४। समायाः खरामः, त्रिराम्यान्तु वा, रात्र्यहःसम्वत्सरेभ्यश्च।

समीनः, द्विसमीनः, द्वैसमिकः ; द्विरात्रीणः, द्वैरात्रिकः ; द्व्यहीनः, द्वैयह्निकः ; द्विसम्वत्सरीणः, द्विसाम्वत्सरिकः ॥ इह द्व्यहीन इत्यत्र समासान्तविधेरनित्यत्वान्न केशवारामस्ततो नाह्नादेशश्च, तस्य तत्रैव विधानात् ॥ २८६४ ॥

२८६५। वर्षात् खमाधवठौ, तयोर्महाहरश्च वा त्रिराम्याम्।

द्विवर्षीणो हरिप्रासादः। द्विवार्षिकः, द्विवर्षः ; 'संख्याया वर्षस्य' ( २०७९ ) इत्युत्तरपदवृष्णीन्द्रः ॥ २८६५ ॥

२८६६। प्राणिनि तु नित्यम्।

---

२८६४। समा। निर्वृत्ताद्यर्थपञ्चके समायाः खरामः स्यात्। त्रिराम्यान्तु सत्यां समायाः खरामो वा स्यात् पक्षे प्राग्वतीयमाधवठश्च। त्रिराम्यां सत्यां रात्र्यहःसम्वत्सरेभ्यश्च पूर्ववत् खराममाधवठौ भवतः। समया निर्वृत्तः समामधीष्टो भृतो भूतो भावी वेति च समीनः। द्वाभ्यां समाभ्यां निर्वृत्तः, द्वे समे अधीष्टादिश्च द्विसमीन इत्यादिद्वयम्। एवं द्विरात्रीण इत्यादि। किञ्च, द्व्यहीन इत्यत्र 'अह्नष्ट-खरामयोरेवे'त्यनेन संसारहरः। 'राजाहःसखिभ्यः' इत्यनेन समासान्तकेशवारामः कस्मान्न स्यादित्यत्र समादधाति इहेति।

२८६५। वर्षा। त्रिराम्यां सत्यां निर्वृत्ताद्यर्थपञ्चके वर्षशब्दात् खमाधवठौ भवतः। तयोः खमाधवठयोर्महाहरश्च वा स्यात्। द्वाभ्यां वर्षाभ्यां निर्वृत्तः। द्वौ वर्षौ अधीष्टादिरिति च द्विवर्षीण इत्यादि। माधवठपक्षे उत्तरपदवृष्णीन्द्रलक्षणं स्मारयति सङ्ख्येति ॥

२८६६। प्राणि। निर्वृत्ताद्यर्थपञ्चके त्रिराम्यां सत्यां प्राणिनि

द्विवर्षो गोपालः ॥ २८६६ ॥

पूर्णं निवृत्तादिः ।

२८६७ । तेन परिजय्यं लभ्यं कार्यं सुकरं वा ।

अत्रार्थे कालान्माधवठः । मासिकं साम्वत्सरिकम् ॥२८६७॥

२८६८ । तत्र दीयते कार्यं वा भववत् प्रत्ययाः स्युः ।

मासे दीयते मासे कार्यं वा मासिकम् । प्रावृषेण्यं, हैमन्यम् ॥ २८६८ ॥

२८६९ । तदस्य ब्रह्मचर्यम् ।

अत्र कालान्माधवठः । मासं व्याप्यब्रह्मचर्यमस्यम ासिकश्छात्रः । मासो यस्य ब्रह्मचर्यस्य तन्मासिकं ब्रह्मचर्यमित्येके ॥२८६९

---

वाच्ये खमाधवठयोर्महाहरस्तु नित्यं स्यात् । निर्वृत्ताद्यर्थपञ्चकं समापयति पूर्णमिति ॥

२८६७ । तेन । परिजय्यं परिजेतुं शक्यम् । परि सर्वतोभावेन लब्धं लब्धव्यं, कार्यं करणीयं, सुकरं सुखसम्पादनीयम् । वाशब्दोऽत्र व्यवस्थार्थः । अत्रार्थ इति तेन परिजय्याद्यर्थ इत्यर्थः । मासेन परिजय्यादि मासिकमित्यादि ॥

२८६८ । तत्र । तत्र दीयते कार्यं वेत्यर्थे नाम्नो यथास्वं भवार्थवत् प्रत्ययाः स्युः । भवार्थस्य जाताद्यन्तर्भावात् जातादौ यस्माद्यस्मान्नाम्नो यो यः प्रत्ययोऽभूत् अनेनातिदेशेन स सोऽत्र ज्ञेयः । अतएव मासिकमित्यत्र कालान्माधवठ इति ठः । तत्र यथा एण्यप्रत्ययेन प्रावृषः प्रावृषेण्यः साधुस्तद्वदत्रापि । एवं तत्र यथा अराणन्तौ हिमस्य हैमनहैमन्तौ साधू तद्वदिहापि ॥

२८६९ । तद । तदित्यत्र 'कालाध्वनोरत्यन्तव्याप्तावि'त्यनेन द्वितीया । तद्व्याप्यास्य ब्रह्मचर्यमित्यर्थे तच्छब्दनिर्दिष्टात् कालवाचकान्माधवठः स्यात् । किम्वा तदिति प्रथमान्तमिति सूचनार्थं मासोऽस्येत्येकेषां मतमुपन्यस्तम् ॥

२८७०। अष्टाचत्वारिंशकाष्टाचत्वारिंशिनौ तावद्वर्षव्रतचारिणि साधू।

२८७१। चातुर्मासक-चातुर्मासिनौ च तथा।

वु-इनिभ्यां साधू॥ २८७१॥

२८७२। चातुर्मास्यस्तद्भवयज्ञे।

साधुः॥ २८७२॥

कालाधिकारः पूर्णः।

२८७३। तच्चरति महानाम्न्यादिभ्यः।

---

२८७०। अष्टा। अष्टाचत्वारिंशच्छब्दोऽत्र तत्सहचरिते व्रते वर्तते साहचर्यात्। तावद्वर्षव्रतचारिणि वाच्येऽष्टाचत्वारिंशच्छब्दस्य अकच्-इनिभ्यां सहाष्टाचत्वारिंशकाष्टाचत्वारिंशिनौ साधू भवतः। तावद्वर्षेत्यष्टाचत्वारिंशद्वर्षसहचरितं व्रतं चरतीति निर्गलितार्थः। किञ्च, अष्टाचत्वारिंशकादिद्वाभ्यां यश्चतुर्वेदेषु प्रतिवेदं द्वादश वर्षाणि व्रतं चरति स उच्यते॥

२८७१। चातुर्मा। तथेत्यनेन तावन्माससहचरितव्रतचारिणीत्यानीतम्। तेन तथा पूर्वोक्तप्रकारेण चतुर्माससहचरितव्रतचारिणि वाच्ये वु इनिभ्यां सह चतुर्मासशब्दस्य चातुर्मासकचातुर्मासिनौ च साधू भवतः। अत्र निपातसामर्थ्यादनयोरादिसर्वेश्वरस्य वृष्णीन्द्रः। अथो वा वु-इनिभ्यामित्यत्र नृसिंहवु-इनिभ्यामिति ज्ञेयम्॥

२८७२। चातु। तद्भवयज्ञे वाच्ये ण्यारामेण सह चतुर्मासशब्दस्य चातुर्मास्यः साधुः स्यात्। चतुर्षु मासेषु भवश्चातुर्मास्यो यागः। कालाधिकारं निवर्तयति कालेति॥

२८७३। तच्च। तच्चरत्यर्थे महानाम्न्यादिभ्यः प्राग्वतीय-

माहानाम्निकः, आवान्तरव्रतिकः ॥ २८७३ ॥

२८७४। अवान्तरदीक्षि-देवव्रतिनौ तच्चारिणि।

साधू ॥ २८७४ ॥

२८७५। आग्निष्टोमिकीप्रभृतयो यज्ञदक्षिणायां साधवः।

२८७६। तत्र दीयते कार्यं वेति व्युष्टादिभ्यः केशवणः।

व्युष्टे दीयते कार्यं वा वैयुष्टं नैत्यम् ॥ २८७६ ॥

---

माधवठो भवति। महानाम्न्यो नाम ऋचः तत्सहचरितव्रतमपि महानाम्नीत्युच्यते उपचारात्। यतस्तस्यैव चरणं सम्भवतीति महानाम्नीश्चरति माहानाम्निक इति। एवमावान्तरव्रतिकः गौदानिक इत्यादिः ॥

२८७४। अवा। तच्चारिणि वाच्ये इना सहावान्तरदीक्षा देवव्रतयोरवान्तरदीक्षि-देवव्रतिनौ साधू भवतः ॥

२८७५। आग्नि। यज्ञदक्षिणायां वाच्यायां तच्चरत्यर्थे माधवठेन साकमीपा च अग्निष्टोमादीनां यज्ञवाचिनामग्निष्टोमिकीप्रभृतयः प्रयोगाः साधवो भवन्ति। प्रभृतिशब्दस्याद्यर्थत्वात्। राजसूयिकी वाजपेयिक्यादयोऽप्यूह्याः ॥

२८७६। तत्र। सुगमम्। उच्छी विवासे इत्यस्य विपूर्वस्य क्ते कृते व्युष्टं वासातिक्रान्तं प्रभातं समाप्तञ्चेति। भरण्यां व्युष्टायां युवतिर्जनयामास तनयमिति शास्त्रान्तरात्। व्युष्टेत्यस्य साहचर्यात् नित्यशब्दोऽप्यत्र वालवाचको गृह्यते नाकाशादिवचनः। वैयुष्टमित्यत्र 'वृष्णीन्द्रस्थानचतुःसनादेशे'त्यनेन ऐयादेशः। नित्ये सर्व-

२८७७। तेन दीयते कार्यं वा यथाकथाचहस्ताभ्यां णयरामौ।

यथाकथाचेत्यव्ययसमुदायोऽनादरार्थः। यथाकथाच दीयते कार्यं वा यथाकथाचम्। एवं हस्तेन हस्त्यम् ॥ २८७७ ॥

२८७८। सम्पादिनि।

अत्र च माधवठः। 'चन्दनेन सम्पादि शोभि चान्दनिकं हरेर्वपुः'। एवं 'कार्णवेष्टनिकं मुखम्' ( भट्टिः ४।२५ ) ॥२८७८॥

२८७९। कर्मवेशाभ्यां यरामः।

कर्मण्यं शरीरं, वेश्यं वपुः ॥ २८७९ ॥

२८८०। तस्मै प्रभवति सन्तापादिभ्यः।

---

काले दीयते कार्यं वा नैत्यमिति। व्युष्ट नित्य निष्क्रम प्रवेशन तीर्थ सङ्ग्राम सङ्घात प्रवास उपवास अग्निपद पीलुथूलेति व्युष्टादिरेकादश ॥

२८७७। तेन। इदमपि सुगमम्। णयरामाविति यथासङ्ख्यं ज्ञेयं न प्रत्येकम्। शब्दार्थं स्वयं स्पष्टयति यथेति। वाक्ये यथाकथाचेत्यस्मात् परमनादरेणेति योज्यम्। हस्तेनेत्यस्मात् परं दीयते कार्यं वेति योज्यम् ॥

२८७८। सम्पा। तेनेति पूर्वसूत्रादनुवर्तते। सम्पादिनीति शीलार्थे णिनिः। तेन सम्पादिनीत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो माधवठो भवति। सम्पादीत्यस्य तात्पर्यार्थं दर्शयति शोभीति। ( वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखम्। इति भट्टिकाव्ये ४।२५ ) ॥

२८७९। कर्म। तेन सम्पादिन्यर्थे कर्मवेशाभ्यां यरामः स्यात्। कर्मणा सम्पादि शोभि कर्मण्यमिति। वेशेन भूषणेन सम्पादि शोभि वेश्यमिति ॥

२८८०। तस्मै। तस्मै प्रभवतीत्यर्थे सन्तापादिभ्यो माधवठः

सन्तापाय प्रभवति सान्तापिकम्। एवं सांयुगिकं, सांग्रामिकम् ॥ २८८३ ॥

२८८१। योगाद्यरामश्च।

योगाय प्रभवति योग्यं, यौगिकम् ॥ २८८१ ॥

२८८२। कार्मुकं धनुषि साधु, सामयिकं प्राप्तसमये साधु।

२८८३। आर्तवं प्राप्तर्तौ।

अणा साधु ॥ २८८३ ॥

२८८४। कल्यं प्रातकाले साधु।

---

स्यात्। प्राग्वतेर्माधवठस्यानुवर्तनादत्र प्रत्ययो नोक्तः। सन्ताप संयुग संग्राम संयोग सन्नाह सम्पराय सम्वेश निष्पेष सम्पेष निसर्ग उपसर्ग विसर्ग प्रकस उपवास सङ्घात सम्पादन शक्तुमांस ओदन शक्तुमांसौदनेति विंशतिः सन्तापादिः ॥

२८८१। योगा। तस्मै प्रभवतीत्यर्थे योगाद्यरामः स्यात् चकारान्माधवठोऽपि ॥

२८८२। कार्मु। तस्मै प्रभवतीत्यर्थे धनुषि वाच्ये उकणा सह कर्मशब्दस्य कार्मुकमिति साधु स्यात्। साम। तस्मै प्रभवतीत्यर्थे प्राप्तः समयो येन तस्मिन् वाच्ये माधवठेन सह समयस्य सामयिकमिति साधु स्यात् ॥

२८८३। आर्त। तस्मै प्रभवतीत्यर्थे प्राप्त ऋतुर्येन तस्मिन् वाच्येऽणा सह ऋतोरार्तवं साधु स्यात्। अस्मिन्नर्थेऽणा साकमुपवस्तृप्रस्रित्रोरौपवस्त्रप्रसित्रे साधुनी भवत इत्यन्ये ॥

२८८४। कल्यम्। तस्मै प्रभवतीत्यर्थे प्रातःकाले वाच्ये यरामेण सह कालस्य कल्यं साधु स्यात्। अत्र यप्रत्ययः कालस्य कलादेशश्च निपातफलम् ॥

२८८५। कालिकं प्राप्तप्रकृष्टदीर्घकाले।
साधु। कालिकमृणं, कालिकी हरिभक्तिः ॥ २८८५॥

२८८६। तदस्य प्रयोजनमत्रार्थे माधवठः।
वैष्णुमहिकं तत्कीर्तनम् ॥ २८८६ ॥

२८८७। चूड़ादेः केशवणः।
चूड़ा प्रयोजनमस्य चौड़ं श्राद्धम् ॥ २८८७ ॥

२८८८। अनुप्रवचनादिभ्यश्छरामः।
अनुप्रवचनीयम्, उत्थापनीयम् ॥ २८८८ ॥

२८८९। विशिपूरिपदिरुहिप्रकृतेरनन्तात् सपूर्वपदात् समापणाच्च।

---

२८८५। कालि। तस्मै प्रभवतीत्यर्थे प्राप्तः प्रकृष्टदीर्घकालो येन तस्मिन् वाच्ये माधवठेन सह कालस्य कालिकं साधु स्यात् ।।

२८८६। तद। अत्रार्थे यस्तच्छब्दनिर्दिष्टस्तस्मान्नाम्नो माधवठः स्यात्। विष्णोर्महः पूजा विष्णुमहः सोऽस्य प्रयोजनं वैष्णुमहिकमिति तत्कीर्तनं विष्णुकीर्तनम् ।।

२८८७। धूड़ा। तदस्य प्रयोजनमित्यर्थे चूड़ादेः केशवणः स्यात्। श्राद्धमिति वाच्यपदं श्रद्धा प्रयोजनमस्येति श्राद्धमिति पृथक् पदमित्यन्ये। श्रद्धया यदन्नादेर्दानं तत्श्राद्धमिति स्मार्तः। चूड़ादिराकृतिगणः ।।

२८८८। अनु। तदस्य प्रयोजनमित्यर्थेऽनुप्रवचनादिभ्यश्छरामो भवति। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयमित्यादि। अनुप्रवचन उत्थापन उपस्थान दीर्घजीवित सम्प्रेषण अनुवासन आभरण अनुवादेत्यष्टसङ्ख्यकोऽनुप्रवचनादिः ।।

२८८९। विशि। अनमित्यन्ते यस्य सोऽनन्तस्मात् पूर्वपदेन सह

गेहानुप्रवेशनीयं, प्रपापूरणीयं, मङ्गलोत्पादनीयं, मठारोहणीयं, कर्मसमापनीयं वैष्णवसत्रम् ॥ २८८९ ॥

२८९०। स्वर्गादिभ्यो यरामः।

स्वर्ग्यं, यशस्यम्, आयुष्यं, धन्यम् ॥ २८९० ॥

२८९१। पुण्याहवाचनादिभ्यो महाहरः।

पुण्याहवाचनं, स्वस्तिवाचनं कर्म ॥ २८९१ ॥

२८९२। वैशाखो मन्थे, आषाढो दण्डे, ऐकागारिकश्चौरे, आकालिक उत्पत्तिमात्राद्विनाशिनि।

---

वर्तमानः सपूर्वपदस्तस्मात्। विश प्रवेशने पूरी आप्यायने पद गतौ रुह जन्मनि प्रादुर्भावे। तदस्य प्रयोजनमित्यर्थे विशादिप्रकृतिभूतात् अनप्रत्ययान्तात् सपूर्वपदात् तथा संपूर्व आपलृ व्याप्तावित्यस्मादनन्तात् सपूर्वपदाच्च छरामो भवति। गेहानुप्रवेशनं प्रयोजनमस्य गेहानुप्रवेशनीयमित्यादि ॥

२८९०। स्वर्गा। तदस्य प्रयोजनमित्यर्थे स्वर्गादिभ्यो यरामः स्यात्। स्वर्गं प्रयोजनमस्य स्वर्ग्यमित्यादि। अत्र धर्म्योऽपि ज्ञेयः ॥

२८९१। पुण्या। तदस्य प्रयोजनमित्यर्थे पुण्याहवाचनादिभ्यो माधवठस्य महाहरः स्यात् ॥

२८९२। वैशा। तदस्य प्रयोजनमित्यर्थे मन्थदण्डयोर्वाच्ययोर्यथासङ्ख्यं केशवणेन साकं विशाखाषाढयोर्वैशाखाषाढौ साध भवतः। ऐका। तदस्य प्रयोजनमित्यर्थे चौरे वाच्ये माधवठेन सह एकागारस्य ऐकागारिकः साधुः स्यात्। एकमसहायं गृहं मोषार्थिनश्चौरस्य प्रयोजनं भवतीति। चौरेऽभिधानात् एकागारं प्रयोजनमस्य भिक्षोरित्यत्र न स्यात्। आका। तदस्य प्रयोजनमित्यर्थे उत्पत्तिमात्राद्विनाशिनि वाच्ये केशवठेन सह आकालशब्दस्याकालिकः साधुः स्यात्।

'आकालिकीं वीक्ष्य मधुप्रवृत्तिम्' इति कुमारसम्भवे (३।३४) ॥ २८९२ ॥

प्राग्वतेर्माधवठः उक्तः ।

२८९३ । उपमानक्रियाद्वतिस्तत्क्रियातुल्यक्रियत्वे।

उपमीयते येन तदुपमानम् । उपमानरूपा क्रिया यस्य तस्माद्वतिः स्यात् । उपमानभूतया क्रियया यद्युपमेयायाः क्रियायास्तुल्यत्वं वाच्यं स्यात् । वैष्णववद्विष्णुं यजते ; यथा वैष्णवकर्तृकं यजनं, तथैव यजते इत्यर्थः । प्रत्ययशक्त्या वैष्णवशब्दोऽत्र वैष्णवकर्तृक-यजनक्रियापर्यवसानः । 'पुत्रं मित्रवदाचरेत्' (वृद्ध-चाणक्यः ७५) इत्यर्थः ; इत्यत्र च यथा मित्रमाचरति तत्प्रति व्यवहरति, तथा, पुत्रमाचरेदित्यर्थः । पूर्वधातुवत् सन् इत्यत्र पूर्वधातोर्यथा परपदादि

---

आकालशब्दोऽयं समानकालसमानार्थः । यद्यपि एकस्य समानकालौ जन्म-विनाशौ न सम्भवतस्तथापि जन्मविनाशयोरत्यन्तसान्निध्यमनेन द्योत्यते। अत्र कृष्णपुरुषोऽव्ययीभावो वा समासो ज्ञेयः । आवृत्तः काल अकाल इति 'कुप्रादयो मध्यपदलोपश्चे'त्यनेन कृष्णपुरुषः । आङ्स्तु मर्यादाभि-विध्योरित्यनेनाव्ययीभावश्च । लक्ष्म्यामीप् स्यादिति शिष्टोदाहरणं दर्शयति आकालिकीमिति ॥

अधिकृतं प्राग्वतेर्माधवठं समापयति प्राग्वतेरिति ॥

२८९३ । उप । उपमाणशब्दं व्युत्पादयति उपेति । एवमुप-मीयते यः स उपमेयः । समासघटकीभूतवाक्यप्रदर्शनपूर्वकं सूत्रं विवृ-णोति उपमानेति । क्रियाशब्दस्य विशेषणत्वादुपमानात् रूपेति दर्शितम् । यद्युपमानभूतया क्रियया सह उपमेयायाः क्रियायास्तुल्यत्वं स्यात्तदा उप-मानरूपा क्रिया यस्य उपमानक्रियाविशिष्टस्य वैष्णवादेस्तस्माद्वैष्णवा-देर्वतिः स्यादित्यन्वयः । उपमानक्रियत्वं नाम स्वाश्रयनिष्ठपरता-निरूपितपूर्वतासम्बन्धेन धात्वर्थविशिष्टत्वम् । सिद्धोपदेशे विरिञ्चौ च सविष्णुचापस वेश्वर इदिति वतेरिराम इत् । स्वरादीत्यादौ वदादि-

भवति, तथा सनन्तादपि भवतीत्यर्थः। एवं गुरुवद्गुरुपुत्रेषु प्रवर्ति-
तव्यम्। यथा गुरौ प्रवृत्यते, तथा तत्पुत्रेषु प्रवर्तनीयमित्यर्थः
॥ २८९३ ॥

२८९४। तत्रेव तस्येव वा।

अत्रार्थे वतिः स्यात्। मथुरायामिव मथुरावत् द्वारकायां प्राचीराः। कृष्णस्येव कृष्णवत् प्रद्युम्नस्य रूपम् ॥ २८९४ ॥

२८९५। तदर्हम्।

अत्रार्थे च वतिः। वैष्णवमर्हति वैष्णववद्वृत्तम्। कृष्णवत् चरित्रम्। अत्रापीवार्थ एव। वैष्णवस्य वृत्तमिव वृत्तमिति। नेह— वैष्णवमर्हति दधि ॥ २८९५ ॥

२८९६। तस्य भावस्ततापौ ब्रह्मलक्ष्म्योः।

---

स्तद्धित इत्युक्तत्वात् वैष्णववदित्यस्मादव्ययत्वेन सोर्महाहरः। यजत इत्यस्मात् परं कोऽपीति योज्यम्। वैष्णवकर्तृकमित्यस्य लक्षणा-वीजत्वेन घटकमाह–प्रत्ययेति। प्रत्ययस्य वत्प्रत्ययस्य शक्त्यासमर्थेन। पुत्रमित्याद्युदाहरणत्रयमर्थञ्च स्पष्टम् ॥

२८९४। तत्रे। अत्रार्थ इत्यस्मान्नाम्न इति योज्यम्। वाक्यो-दाहरणे स्पष्टे ॥

२८९५। तद। अत्रार्थे च तच्छब्दनिर्दिष्टान्नाम्नो वतिः स्यात्। अर्हं योग्यम्। वृत्तमध्ययनं पद्यं वा। यद्यपि सूत्रे अर्हमित्येव-मात्रमुक्तं, तथाप्यत्र इवार्थे गम्य एव नाम्नो वतिः स्यादिति स्वाभिप्रेतमाह–अत्रेति। गम्यमानार्थप्रतीत्यर्थं वाक्ये वृत्तमित्यस्माद्वाच्य-पदादिवेति दर्शितम्। तेनात्र न स्यादित्याह–नेहेति ॥

२८९६। तस्य। तस्य भाव इत्यर्थमधिकरोति–तस्यति। चशब्दा-द्विधिश्च। भावार्थं स्पष्टयति भवेति। अभिधानं कथनं प्रत्ययः प्रतीतिविषयः, अस्माद्धर्मादभिधानप्रत्ययौ भवत इति भावः। पुनस्तमेव

तस्य भाव इति विभुश्च। भवतोऽस्मादभिधानप्रत्ययाविति भावः। शब्दप्रवृत्तिनिमित्तं जात्यादिवस्तुधर्मः। तस्य भाव इत्यर्थे त्वतापौ स्याताम्। जातौ—गोत्वं, गोता; गुणे—शुक्लत्वं, शुक्लता; रूपत्वं, रूपता; रसत्वं, रसता; क्रियायाम्—क्रियात्वं, क्रियाता। समासकृत्तद्धितेषु सम्बन्ध एव प्रवृत्तिनिमित्तम्। कृष्ण-पुरुषत्व, पूजकत्वम्, अनुग्राह्यत्वं, यादवत्वं, भागवतत्वम् ॥२८९६

विशदयति शब्देति। स च शब्दप्रवृत्तिनिमित्तं जात्यादिरूपो वस्तूनां धर्मविशेष इत्यर्थः। यमर्थमुपादाय यद्यस्मिन् प्रवर्तते तत्तस्य शब्दस्य प्रवृत्तेर्निमित्तं तत्प्रतीतिकारणम्। सूत्रं विवृणोति—तस्येति। तस्य भाव इत्यर्थे नाम्नस्त्वतापौ भवन्तौ यथासङ्ख्यं ब्रह्मलक्ष्म्योर्वर्तेते इत्यर्थे। तत्र प्रथमतो जातिरूपे वस्तुधर्मे उदाहरन्नाह—जाताविति। गोर्भावो गोत्वं यत्र गोत्वं वर्तते तत्रैव गोशब्दप्रयोगः क्रियते इति भवति। गोत्वं गोशब्दस्य प्रवृत्तिर्निमित्तम्। जात्यादीत्यत्रादिपदेन गुणक्रिययो-र्ग्रहणमिति—तयोरुदाहरणं दर्शयति—गुण इति। शुक्लस्य भावः शुक्लत्व-मिति शुक्लशब्दस्य प्रवृत्तिनिमित्तम्। एवमुत्तरत्रापि योज्यम्। यथा रूपत्वमित्यादीनि चत्वारि, तथा शब्दत्वं शब्दता, स्पर्शत्वं, स्पर्शता, गन्धत्वं, गन्धतेति ज्ञेयम्। क्रियात्वमित्यादिद्वये 'गुणवचनी त्वतापोरि'त्यनेन पुरुषोत्तमवत्त्वं न स्यात्, क्रियाशब्दस्य गुणकल्पनेऽपि वाच्यलिङ्गत्वा-भावात्। सम्बन्धस्यापि प्रकारान्तरेण भावार्थतां प्रतिपादयति—समासेति। समासकृत्तद्धितेषु समासादिसिद्धेषु शब्देषु सम्बन्ध एव प्रवृत्तिनिमित्तमिति सम्बन्ध एव भावः। अन्यथा एभ्यस्त्वतापौ न स्याताम्। कृष्णस्य पुरुषः कृष्णपुरुष इत्यत्र षष्ठ्या निरूपितो य उभयसम्बन्धः स एव प्रवृत्तिनिमित्तं सत् भाव इति कृष्णपुरुषस्य सम्बन्धरूपो भाव कृष्ण-पुरुषत्वम्। पूजयतीति कर्तरि णकः पूजक इत्यत्र पूजनकर्तृत्वसम्बन्धः प्रवृत्तिनिमित्तमिति स एव भाव इत्यतः पूजकस्य भावः पूजकत्वमिति। एवं ण्यत्प्रत्ययान्तस्यानुग्राह्यस्य भावः। अनुग्राह्यत्वमिति। यदोरपत्यं पुमान् यादव इत्यत्रापि पूर्ववत् षष्ठ्या निरूपित-उभयसम्बन्ध एव भावस्तेन यादवस्य जनकजन्यसम्बन्धरूपो भावः यादवत्वमिति। एवं

२८९७। यदृच्छाशब्दात् स्वरूपमात्रेऽभिधानम्।

डित्थत्वं, डवित्थत्वम्; एवं कवर्ग एव कुत्वम्॥ २८९७॥

२८९८। पक्षे त्वतापौ।

प्रभुरयम्॥ २८९८॥

२८९९। नृसिंहनस्नयोश्च।

पक्षे त्वतापौ स्याताम्। यथा प्रथिमा, पृथुत्वं, पृथुता; पाटवं, पटुत्वं, पटुता; स्त्रैणं, स्त्रीत्वं, स्त्रीता; पौंस्नं, पुंस्त्वं, पुंस्ता॥ २८९९॥

---

भगवता प्रोक्तं भगवतोऽयमिति वा भागवतं भागवतश्चेत्युभयत्रापि षष्ठ्या निरूपितः कारणकार्यादिसम्बन्धः भाव इति भागवतस्य कारणादि-सम्बन्धरूपो भावो भागवतत्वमिति। एवं पक्षे कृष्णपुरुषता पूजकता अनुग्राह्यता यादवता भागवततेति।

२८९७। यदृ। यदृच्छाशब्दात् स्वरूपमात्रेऽर्थे त्वतापोरभिधानं स्यात्। व्यवहारार्थो येन केनापि कथञ्चिद्रूपेण प्रयोक्तव्यः शब्दो यदृच्छाशब्दः। डित्थ एव डित्थत्वं, डवित्थ एव डवित्थत्वम्। एवं डित्थता डवित्थतेति। डित्थः घर्ममयो हस्ती डवित्थः घर्ममयो मृग इति कश्चित् (चर्ममयः, काष्ठमयः इति च ?)। वस्तुधर्मा-भावादत्र स्वरूपेऽभिधानमिति। पुनरप्युदाहरणान्तरं ददाति एवमिति॥

२८९८। पक्षे। तस्य भाव इत्यर्थे नाम्नः पक्षे त्वतापौ भवतः। प्रभुनामायमधिकार इत्याह—प्रभुरिति। अत्र विभु चेमाविति क्वचित् पुस्तके दृश्यते, तदपि नासङ्गतं तदवान्तरसजातीयविजातीया-नेकाधिकारव्यापित्वसम्भवात्॥

२८९९। नृसि। स्त्रीपुभ्यां नृसिंहनस्नौ भावे च वेति विहितयो-र्नृसिंहनस्नयोः स्थाने पक्षे पुनस्त्वतापौ स्याताम्। यथेति उदाह्रियत इति शेषः। पृथोर्भाव इति पृथ्वादिभ्य इमनिर्वेति वक्ष्यमाणेन इमन्

२९००। न नञ्कृष्णपुरुषाद्वक्ष्यमाणाः, अचतुरादिवर्जम्।

अपतित्वमपतिता। अत्र पत्यन्तेति न नृसिंहयः। अत्र तु स्यात्—आचतुर्यम्, आसङ्गत्यम् आलवण्यम्, आवह्यम्, आवुध्यम्, आकत्थ्यम्, आवश्यम्, आलस्यम्॥ २९००॥

२९०१। पृथ्वादिभ्य इमनिर्वा।

वा-करणं केशवणादेः समावेशार्थम्॥ २९०१॥

---

अनेकसर्वेश्वरस्य संसारहरः पृथुमृद्वादेर्ऋरामस्य रश्चेति प्रथिमन् सुनान्तेति त्रिविक्रमः सुनरामयोर्हरः प्रथिमेत्यादि। पटोर्भाव इति वा करणं केशवणादेरिति वक्ष्यमाणरीत्यौत्सर्गिककेशवणः उद्वयस्येति गोविन्दः। पाटवमित्यादि। स्त्रियो भावः स्त्रैणमित्यादि। पुंसो भावः पौंस्नमित्यादि॥

२९००। न नञ्। तस्य भाव इत्यर्थेऽचतुरादीन् वर्जयित्वा नञ्-कृष्णपुरुषसमासान्तान्नाम्नो वक्ष्यमाणाः प्रत्यया न भवन्ति। अचतुरादिभ्यस्तु वक्ष्यमाणा भवन्ति पक्षे त्वतापौ च। अपतेर्भावः अपतित्वमपतितेत्यत्र वक्ष्यमाणानां प्रतिषेधात् त्वतापौ स्याताम्। वक्ष्यमाणप्रत्ययविधानसूत्रं स्मारयति—अत्रेति। अस्मिन् पत्यन्तादित्यनेन नृसिंहयो न स्यात्। नञ्कृष्णपुरुषादिति किं न पटवः। सन्त्यस्य अपटुस्तस्य भाव आपटवमित्यत्र सामान्यतः केशवणः। नञ् इति किं वार्हस्पत्य इत्यत्र पत्यन्तादिति नृसिंहयः स्यात्। अचतुरादिभ्योऽनेन वक्ष्यमाणयः स्यादित्याह—अत्र त्विति। अचतुर्णां भाव आचतुर्यमित्यादि, पक्षे अचतुस्त्वमचतुस्तेत्यादि। अत्रारुच्यमपि कश्चित् पठति॥

२९०१। पृथ्वा। तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनिर्वा स्यात्। विकल्पार्थे वाशब्दप्रयोगस्य फलं दर्शयति वा करणमिति॥

२६०२। इमनिः पुंसि।

पृथ-मृदु-पटु-महत्तनु-लघु-बहु-साधु-आखु-उरु-गुरु-दक्ष-खण्ड-बहुल चण्ड-अकिञ्चन-स्वादु-ह्रस्व-दीर्घ-ऋजु-क्षिप्र-क्षुद्र-प्रियादिः पृथ्वादिः। प्रथिमा, म्रदिमा, पटिमा, महिमा, तनिमा, लघिमा, भूमा, साधिमा, आखिमा, वरिमा, गरिमा, दक्षिमा, खण्डिमा, वंहिमा, चण्डिमा, अकिञ्चनिमा, स्वादिमा, ह्रसिमा, द्राघिमा, ऋजिमा, क्षेपिमा, क्षोदिमा, प्रेमा। पक्षे पार्थवमित्यादीनि च॥ २६०२॥

२६०२। इम। इमनिः पुंसि वर्तते इत्यर्थः। सिद्धोपदेश इत्यनेनान्त्य इराम इत्। पृथ्वादिगणं दर्शयति पृथ्विति। पृथ्वादिः प्रियान्त आदिर्यस्य स पृथ्वादिः स्यादित्यर्थः। प्रियादिरित्यादिपदेन वाल होड़ पाक वत्स मन्द आशु इत्येतेषां ग्रहणम्। पृथ्वादीनां क्रमेणोदाहरणान्याह—प्रथिमेति। अनेकसर्वेश्वरस्य ससारहरः। पृथुमृद्वादेर्ऋरामस्य रश्च। 'क्षिप्रस्य क्षेपः, दीर्घस्य द्राघः, बहुलस्य वंहः, ह्रस्वस्य ह्रसः, क्षुद्रस्य क्षोदः, गुरोर्गरः, उरोर्वरः, प्रियस्य प्रः, वहोर्भूः णीष्ठेमेयः स्वि'त्यनेन पृथ्वादीन्याख्यातोक्तानि कार्याण्यत्र यथास्वं स्युः। पृथुं मृदुं भृशञ्चैव कृशञ्च दृढमेव च। परिपूर्वं दृढञ्चैव षड़िमान् रविधौ स्मरेदिति रविधानञ्चात्र स्मर्तव्यम्। किञ्च, भूमेत्यत्र शिष्टप्रयोगसाम्याय तद्धितबाहुल्यादिमनि बहोर्भूरिति कृते इम्न इरामहरः कार्यः। अत्र भूयिमेति क्वचित् पुस्तके दृश्यते तत्तु न साधीयं, भूतो युट् इत्युत्तरसूत्रे णीष्ठेयःस्वित्यत्र परनिमित्ते इम्नो ग्रहणाभावात्। अत्र वहिमेति कश्चित् पठति तदपि न समञ्जसं, भूरित्यादेशस्यानिवार्यत्वात्। पक्षे, केशवण-त्वतापादयोऽपि भवन्तीत्याह—पक्ष इति। पार्थवमित्यत्र ईशान्ताच्च लघुपूर्वादिति वक्ष्यमाणेन केशवणः। उद्वयस्य गोविन्द इति गोविन्दः। इत्यादीनीत्यादिशब्देन चशब्देन च एतज्ज्ञापितम्। येऽत्र लघुपूर्वा ईशान्ताः पृथ्वादयस्तेभ्य ईशान्तादित्यनेन केशवणः, ये गुणवचनाः खण्डादयस्तेभ्यः पक्षे गुणवचनादित्यनेन नृसिहयः, ये वयोवाचिनो वालादयस्तेभ्यः पक्षे वयोवचनादित्यनेन

२९०३। वर्णाद्दृढादेश्च ष्यञ् इमनिच्च।

वर्णात् शौक्ल्यं शुक्लिमा ; कार्ष्ण्यं, कृष्णिमा ; दृढादेः—दार्ढ्यं, द्रढिमा ; माधुर्यं, माधुरिमा ; वैमल्यं, विमलिमा। त्वतलौ सर्वत्रोदाहार्यौ। इह गुणवचनत्वादेव ष्यञि सिद्धे वर्णग्रहणमिमन्यर्थम्। बधिर-कृश-शीत-उष्ण-मधुरादीनां दृढादौ पाठः। पक्षे इमनिर्यथा स्यात् कर्मणि च ष्यञ् मा भूत्॥ २९०३॥

केशवणः स्यात्। त्वतलौ तु पक्षे सर्वेभ्य एवेति। मलिनिमेत्यसाधुरित्यन्ये, तेन नायमाकृतिगणो येन अपठितेभ्योऽपि इमनादिर्विधेयः, भवतु तर्हि ब्रह्मणि प्रेमेति कथं, सत्यं नेदं इमनन्तरूपं किन्तु, प्रीङ्धातोर्मनन्तरूपमिति॥

२९०३। वर्णा। तस्य भाव इत्यर्थे वर्णवाचकात् दृढादेश्च ष्यञ् इमनिच्च स्यात्। वर्णं लक्षीकृत्योदाहरणादि दर्शयति—वर्णादिति। शुक्लस्य भावः शौक्ल्यं शुक्लिमेत्यादि। दृढादिमभिलक्ष्योदाहरणान्याह—दृढादेरिति। दृढस्य भावः दार्ढ्यं द्रढिमेत्यादि। दृढ मधुरा विमल वृढ परिदृढ भृश अम्ल लवण उपेन्द्र जड मूक मूर्ख पण्डित वक्र वियति विलात विशारद विमति विमनस् सम्मति सम्मनस् इत्यादिर्दृढादि। उत्तरत्र सर्वत्रैव पक्षे त्वतलौ भवत इत्याह—त्वतलाविति। तेन शुक्लत्वं शुक्लतेत्यादि दृढत्वं दृढतेत्यादि च। गुणवाचिनः शुक्लादेर्गुणवाचित्वादेव ष्यञि प्राप्तेऽपि इह सूत्रे इमन्यर्थं वर्णोपादानमित्याह—इहेति। दृढादौ वधिरादीनामपि पाठ इत्याह—वधिरेति। तरुणमप्यत्र केचित् पठन्तीति मधुरादीनामित्यत्रादिपदमुपन्यस्तम्। स्वाभिप्रेतं पारिभाषिकवाक्यमाह—पक्ष इति, अर्थाद्दृढादेः पक्षे। तस्य भाव इत्यर्थे यथा इमनिः स्यात् तथा कर्मणि चेत्यर्थे ष्यञ् मा भूत्। गणस्यास्य गुणविशेषवाचित्वेऽपि वर्णादिति पृथग्ग्रहणात्। माङ्योगे सर्वापवादीङ्भूतेश इत्युक्तात् मा भूत् न भविष्यतीत्यर्थः॥

२९०४। औचित्याद्यः।

ईवन्ता भावे लक्ष्म्यां साधवः। औचिती, आनुपूर्वी, वैदग्धी, चातुरी ॥ २९०४ ॥

२९०५। कर्मणि च।

इतः परं भावे कर्मणि चेति ज्ञेयम् ॥ २९०५ ॥

२९०६। गुणवचनाद्ब्राह्मणादेश्च नृसिहयः।

गुणवचनात्—जड़स्य भावः कर्म वा जाड्यम्। एवं मौढ्यं, कार्श्यम्। ब्राह्मणादेराकृतिगणात्—ब्राह्मण्यं, दौत्यम्। लिङ्ग-विशिष्टग्रहणात्—दूतीनां भावादि दौत्यम्। ब्राह्मण, दूत, चौर, मध्यस्थ, कुशल, चपल, निपुण, पिशुन, राजन, दायाद, कवि ॥ २९०६ ॥

---

२९०४। औचि। विवरणमाह—ईवेति। तस्य भाव इत्यर्थे लक्ष्म्यां वाच्यायामुचितादीनां केशवणपूर्वकेवन्ता औचित्यादयः साधवो भवन्ति। यथा औचितीत्यादिचातुरीत्यन्ताश्चत्वारः। एवं मैत्री याथा-कामी सामग्री रौद्रीत्यादि च ॥

२९०५। कर्म। वृत्तिमाह—इत इति। इतः परं तस्य भावे कर्मणि चार्थे नाम्नो यथायोग्यं वक्ष्यमाणप्रत्ययः स्यादिति ज्ञेयम् ॥

२९०६। गुण। तस्य भावः कर्म वेत्यर्थे गुणवचनात् ब्राह्म-णादेश्च उत्तरो नृसिहयः स्यात्। गुणवचनं लक्षीकृत्योदाहरिष्यन्नाह—गुण-वचनादित्यादि। गुणवाचकस्यापरिमितत्वाद्यथायोग्यमन्यान्युदाहार्याणि। एवमाकृतिगणं ब्राह्मणादिमपि लक्षीकृत्योदाहरण्याह—ब्राह्मणादेरित्यादि। ब्राह्मणस्य भाव कर्म वा ब्राह्मण्यमिति। एवं दौत्यमिति। नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायं हेतुं विन्यस्याह—लिङ्गेति। अतएव दूतीशब्दस्यापि दौत्यमिति। ब्राह्मणादेराकृतिगणादित्युक्तापि ब्राह्मणादिकव्यन्तानेकादश ब्राह्मणादीन् दर्शयति—ब्राह्मणेति। एवं

२९०७। अर्हतो नुम् च।

आर्हन्तम्। आर्हन्ती साधुः ॥ २९०७॥

२९०८। स्तेयं स्तैन्ये, कापेय-ज्ञातेय-वाणिज्याश्च साधवः।

२९०९। पत्यन्तात् पुरोहितादेश्च नृसिंहयः।

व्राजपत्यं, पौरोहित्यं, सैन्यम् ॥ २९०९ ॥

मानव बाड़व धूर्त आराधय विराधय उपसाधय परिराधय अपराधय द्विभाव एकभाव त्रिभाव अल्पभाव अक्षेत्रज्ञ सम्बादिन् सम्बेशिन् बहुभाषिन् शीर्षघातिन समस्थ परमस्थ विषमस्थ अनीश्वर वालिश अलस दुष्पुरुष विशस्ति विषाय करि सहाय गडुल विज्ञातेत्यादिश्च ब्राह्मणादिः ॥

२९०७। अर्ह। तस्य भावः कर्म वेत्यर्थेऽर्हच्छब्दान्नृसिंहयस्तस्मिंस्तस्य नुम्च स्यात्। आर्ह। तस्य भावः कर्म वेत्यर्थे अर्हन्ता च साधुः स्यात्। भावकर्मणोर्वाच्ययोर्विहितप्रत्ययस्य सामान्यतो ब्रह्मत्वे प्राप्ते लक्ष्मीलिङ्गार्थं वचनं तेन लक्ष्म्यां निपातनादीपि सति विष्णुजनात्तद्धित-यस्येत्यनेन यहरः ॥

२९०८। स्तेयम्। तस्य भावः कर्म वेत्यर्थे स्तैन्ये वाच्ये यरामेण साकं स्तेनस्य नस्य हरेण स्तेयं साधु। स्तैन्यन्तु पुरोहितादित्वान्नृसिंहयान्तम्। स्तैन्यं चौर्यम्। तस्य भावः कर्म वेत्यर्थे माधवढेन सह कपिज्ञात्योः कापेयज्ञातेयौ नृसिंहयेन साकन्तु वणिजो वाणिज्यश्चेत्येते साधवो भवन्ति। दूतवणिज्भ्यां यश्चेति * कस्यचिद्वक्तव्यं तेन दूत्यं वणिज्यमिति च ॥

२९०९। पत्य। तस्य भावः कर्म वेत्यर्थे पतिशब्दान्तात् पुरोहितादेश्च नृसिंहयः स्यात्। व्रजपतेर्भावः कर्म वा व्राजपत्यमिति।

* वणिज्-शब्दस्य जान्तस्वरूपनिर्देशात् न वणिग्भ्यामिति ॥

२६१०। प्राणिजातेर्वयोवचनादुद्गात्रादेश्च केशवणः, ईशान्ताच्च लघुपूर्वात्।

प्राणिजातेः—कार्ष्णासारं हारिणम्; वयोवचनात्—कौमारं, यौवनं, स्थाविरम्। उद्गात्रादेः—औद्गात्रम्, औन्नेयं, पौरुषं सौहृदं, दौर्हृदं, चापलं, नैपुणं, पैशुनं, कौतूहलम्॥ २६१०॥

२६११। श्रोत्रियस्य यलोपश्च।

श्रौत्रम्। ईशान्तादिति—हारं, लाघवम्; हरीतक्याः—हारितकम्। ईशान्तात् किम्? पटुकत्वम्। लघुपूर्वात् किम्? पाण्डुत्वम्। काव्यन्तु ब्राह्मणादित्वात्॥ २६११॥

---

एवं गाणपत्यं आधिपत्यं गार्हपत्यमित्यादि। पुरोहितस्य भावः कर्म वा पौरहित्यमित्यादि। पुरोहित सेना ग्रामिक खण्डिक दण्डिक कर्मिक चर्मिक धार्मिक शिलिक पूतिक परिषदिक प्रतिक सारथिक अञ्जलिक सारक्ष सूचकेत्यादिः पुरोहितादिः। पक्षे व्रजपतित्वं व्रजपतितेत्यादि च॥

२६१०। प्राणि। तस्य भावः कर्म वेत्यर्थे प्राणिजातेर्वयोवाचकादुद्गात्रादेश्च केशवणो भवति। ईशा। तस्य भावः कर्म वेत्यर्थे लघुपूर्वादीशान्ताच्च केशवणः स्यात्। तत्र प्राणिजाते रूपं दर्श्यत इत्याह—प्राणीति। एवं वयोवचनादित्यादावपि रूपं दर्श्यत इति योज्यम्। उच्चैर्गायति यः स उद्गाता तस्य भावः कर्म वा औद्गात्रमित्यादिर्यथा। एवमौन्नेत्रं प्राशास्त्रं हौत्रं भ्रात्रं प्रातिहन्त्रं राथगाणकं सौष्ठवं आध्वर्यवमित्यादिश्च॥

२६११। श्रोत्रि। तस्य भावः कर्म वेत्यर्थे श्रोत्रियस्य सम्बन्धे केशवणो यरामहरश्च स्यात्। यरामहरे सति अ-इद्वयस्येतीरामहरः श्रौत्रमिति। श्रौत्रियशब्दोऽयमुद्गात्रादिगणपठित इत्यस्मादत्र य-हराय सूत्रमिदम्। न चेत्तदा ईशान्ताच्चेत्यस्योदाहरणमदत्त्वा इदं करणम-

२९१२। योद्धवादगुरूपोत्तमान्नृसिंहवुः, रामकृष्णान्मनोज्ञादेश्च।

रामणीयकम्, आचार्यकं, साहायकम्; साहाय्यम्, इति जयादित्यः (काशिका ५।१।१३२); नेति भागवृत्तिः। 'गुरूपोत्तमात्' किम् क्षत्रियत्वम्॥ २९१२॥

२९१३। रामकृष्णात्तु लक्ष्याम्।

शैष्योपाध्यायिका, पैतापुत्रिका; मनोज्ञादेः—मानोज्ञकम्, प्रैयरूपकम्, आभिरूपकम्, आमुष्यपुत्रकम्, कौशलपुत्रकम्, आढ्यच्छात्रकम्॥ २९१३॥

---

युक्तं स्यात्। कवेर्भावः कर्म वेति ब्राह्मणादित्वेन नृसिहयान्तं काव्यमित्याह—काव्यन्त्विवति। क्रमदीश्वरपद्मनाभादिभिस्तु ब्राह्मणादेः उद्गात्रादेश्च आकृतिगणत्वात् कौशल्यमित्यादुरुदाहरणानि। मिश्रगणश्चात्र दर्शितः। यथा, कौशल्यं कौशलं, नैपुण्यं नैपुणं, पैशुन्यं पैशुनं, सौहार्द्यं, सौहार्दं, हृदादेशाभावं मत्वा पक्षे सौहृद्यञ्चेत्यादि। कुशल निपुण पिशुन स्थविर दुर्हृद् कुतूहल सुभ्रातृ दुर्भ्रातृ, होतृ यजमान भ्रातृ कर्ण कुक्कुटाण्डक श्रमण कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय वृषन् परिव्राजक ब्रह्मचारिन् अनुशंस क्षेत्रज्ञेत्यादि॥

२९१२। योद्ध। तस्य भावः कर्म वेत्यर्थे यरामोद्धवाद् गुरूपोत्तमान्नाम्नो नृसिंहवुर्भवति। त्रिप्रभृतीनामन्त्यमुत्तमं तत्समीपमुपोत्तमंमित्युक्तमत्र स्मर्तव्यम्॥

२९१३। राम। तस्य भावः कर्म वेत्यर्थे रामकृष्णसमाससिद्धान्नाम्नो मनोज्ञादेश्च नृसिंहवुः स्यात्। रमणीयस्य कर्म वेति रमणीयकमित्यादि। सहायशब्दादत्रार्थे नृसिंहय इति जयादित्यमतं नेति भागवृत्तिमतमिति मतद्वयमुपन्यस्यति साहाय्यमिति। गुरूपोत्तमाभावे तु व्यावृत्तिरूपं दर्शयन्नाह—गुरूपेति। क्षत्रियत्वमिति, एवं क्षत्रियतापि। योपान्तादप्रख्यादन्ताजद्वितीयगुर्वचो णक इति क्रमदीश्वरः। तेन

२९१४। गोत्रचरणाभ्यां श्लाघाधिक्षेपतत्प्राप्ति-
विषये नृसिंहवुर्लक्ष्म्याम्।

भावे कर्मणि चेत्यनुवर्तत एव। गोत्रात्—गार्गिकया श्लाघते, दाक्षिकया अत्याकुरुते अधिक्षिपतीत्यर्थः। वात्ससिकां समवेतः

---

सुप्रख्यस्य सौप्रख्यं सुप्रख्यत्वमिति च। तथा च, योपान्ताद्गुरूपोत्तमान्तादसुप्रख्याद्वुञिति चन्द्रः। योपधाद्गुर्वजुपधाद्वणसुप्रख्यादिति वद्धमानः पाणिनीयास्त्वसिद्धत्वेन ख्याञो यकारस्य षकारत्वाद्योपान्तता नास्तीति वदन्ति, ख्यातेरयं प्रयोग एव नास्त्यनभिधानादिति तैरङ्गीकरणीयं तेन दुष्प्रख्यादपि न भविष्यतीति तेषामभिप्रायो लक्ष्यते, इत्यस्माकं ग्रन्थकृता असुप्रख्यादिति विशेषणं न दत्तमिति। यद्यपि रामकृष्णादिति सामान्येनोक्तं, तथापि लक्ष्म्यामभिधानमिति स्वाभिप्रेतमाह—रामेति। शिष्यश्च उपाधायश्च शिष्योपाध्यायो तयोर्भावः कर्म वेति शैष्योपाध्यायक इत्यस्मात् कृष्णादाप् लक्ष्म्यामित्यात्, प्रत्ययस्थात् कादिति पूर्वारामस्येरामः शैष्योपाध्यायिकेति। एवं पैतापुत्रिका। किञ्च, ऋरामस्यारामः ऋरामान्तपुत्रयोर्विद्यायोनिसम्बन्ध इत्यनेन पितुर्ऋरामस्यारामः। मनोज्ञादेरिति रूपं दर्श्यत इति शेषः। मनोज्ञस्य भावः कर्म वा मानोज्ञकं इत्यादि। आमुष्यपुत्रकमिति प्रशस्तकुलजन्मा। अदस आयन कुलिकादिष्विवत्यनेनात्रामुष्येत्यस्य षष्ठ्या महाहरनिषेधः। मनोज्ञ प्रियरूप अभिरूप अमुष्यपुत्र आढ्यच्छात्र कल्याण स्वरूप अमुष्यकुल छान्दस्य मेधाविन् आढ्यकुल पुत्र इन्द्र श्रोत्रिय चौर धूर्त युबन् विश्वदेव, अवश्यम् ग्रामपुर परपुत्र ग्रामषण्ड ग्राम कुमार बहुल सहाय वृद्धेत्यादिर्मनोज्ञादिः।

२९१४। गोत्र। पूर्वोक्तभावकर्मणोरनुवर्तणं सूचयति भाव इति। तेन तस्य भावः कर्म वेत्यर्थे श्लाघाधिक्षेपतत्प्राप्तिविषये गोत्रचरणाभ्यां नृसिंहवुर्भवन् लक्ष्म्यां वर्तते। या आख्या अपत्यनिमित्ता स गोत्रशब्दवाच्या अथो वा ये प्रवराध्याये पठन्ति ते गोत्रशब्दवाच्याः।

प्राप्त इत्यर्थः। चरणात् काठिकया श्लाघत इत्यादि। श्लाघादेरन्यत्र गार्ग्यत्वम् ॥ २९१४ ॥

२९१५। ऋत्विग्वाचकेभ्यश्छरामः।

अच्छावाकीयं, मित्रावरुणीयं, ब्राह्मणाच्छंसीयम् ॥ २९१५ ॥

२९१६। ब्रह्मणस्त्वः।

ऋत्विकवचनाद्ब्रह्मस्त्वः स्यात्—ब्रह्मत्वम् ॥ २९१६ ॥

भावकर्माधिकारः पूर्णः।

---

यातु आख्या वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा चरणशब्दवाच्या। तच्छब्देन गोत्रचरणयोः सम्बन्धिनी ये कर्मणी ते उच्यते। तथाच श्लाघाधिक्षेपयोर्विषये गोत्रचरणयोर्भावकर्मप्राप्तेर्विषये चेति। गार्ग्यस्य भावः कर्म वेति वुः। विष्णुजनात्तद्धितेति यमहाहरः। कृष्णादाविति आप् प्रत्ययस्थात् कादिति पूर्वारामस्येरामः गार्गिका तया श्लाघते आत्मनि वर्तमानं करोतीत्यर्थः। एवं दाक्षिकया अत्याकुरुत इति अधिक्षिपतीति परान् चौरं मन्यत इति निर्गलितोऽर्थः। वात्सिकामित्यादि तु स्पष्टम्। इत्यादीत्यादिपदेन काठिकया अत्याकुरुते काठिकां समवेत इति। यथा गार्ग्यत्वम्। एवं गार्ग्यता। कठत्वं कठतेति ॥

२९१५। ऋत्विं। तस्य भावः कर्म वेत्यर्थे ऋत्विग्वाचकेभ्यश्छरामः स्यात्। अच्छावकस्य भावः कर्म वा अच्छावाकीयमित्यादि। एवमुद्गातृ होतृ अध्वर्यु प्रस्तोतृ प्रतिस्थातृ प्रतिप्रशातृ प्रोतृ प्रतिहन्तृ अग्नीध्र सुब्रह्मण्य ब्रह्मण्य ग्रावस्तुत् उन्नेतृ इत्येतेभ्यश्च ॥

२९१६। ब्रह्म। ऋत्विग्वचनात् पूर्वं तस्य भावः कर्म वेत्यर्थ इति योज्यम्। सामान्यतस्त्वे प्राप्तेऽपि यत् पुनर्विधानं तत् तानिरासार्थम्। वृत्तौ ऋत्विग्वचनादिति विशेषणात् ब्राह्मणपर्यायस्य ब्रह्मणस्तु ब्रह्मत्वं ब्रह्मता च। भावकर्माधिकारं समापयति भावेति ॥

२९१७। चातुर्वणादयः स्वार्थे।

चातुर्वर्ण्यम्, औपम्यं, सान्निध्यं, यौगपद्यं, चातुवद्यं, षाड़्-गुण्यं, तादर्थ्यं, त्रैलोक्यम्॥ २९१७॥

२९१८। धान्यानां भवने क्षेत्रे नृसिहखः।

भवन्त्यत्रेति भवनम्। मुद्गानां भवनं मौद्गीनम्। एवं कौद्रवीणं, धान्वीनम्॥ २९१८॥

२९१९। व्रीहिशाल्योर्माधवढः।

व्रैहेयं, शालेयम्॥ २९१९॥

२९२०। यव-यवक-षष्टिकाभ्यो यरामः।

---

२९१७। चातु। स्वार्थेऽर्थे नृसिहयेन सह चतुर्वर्णादीनां स्थाने चातुर्वर्ण्यादयः साधव भवन्ति। चतुर्णां वर्णानां समाहारः चतुर्वर्णं तदेव चातुर्वर्ण्यं उपमैव औपम्यमित्यादि। सामान्यादत्र ब्रह्मत्वम्। चतुर्वर्णादिराकृतिगणः॥

२९१८। धान्या। धान्यानामित्यत्र बहुवचनमाद्यर्थम्। तेन धान्यशब्देन धान्यमात्रस्य ग्रहणम्। व्युत्पत्तिद्वारा भवनशब्दस्याधिकरणटनान्ततां प्रतिपादयन्नाह—भवन्त्येति। अर्थात् धान्यानि भवन्ति यत्र तद्भवनं धान्यानामुत्पत्तिस्थानम्। धान्यानां भवने क्षेत्रे वाच्ये धान्यादेरुत्तरो नृसिहखो भवति। मुद्गानां भवनमित्यस्मात् क्षेत्रमिति योज्यम्। यथा मौद्गीनमित्यादित्रयम्। एव कौलत्थीनमित्याद्यप्यूह्यम्। धान्यशब्दस्य तद्धित यस्याभावात् विष्णुजनादित्यनेन य महाहरो न स्यात्॥

२९१९। व्रीहि। धान्यानां क्षेत्रमित्यर्थे व्रीहिशाल्योः सम्बन्धे माधवढो भवति। व्रैहेयमित्यादिद्वयस्य व्रीहेर्भवनं क्षेत्रं शाल्या भवनं क्षेत्रमित्यर्थः॥

२९२०। यव। धान्यानां भवनं क्षेत्रमित्यथ यव-यवक-षष्टि-

यव्यं, यवक्यम् ॥ २९२० ॥

२९२१। तिल-माषोमाभङ्गाणुभ्यो यरामो वा।

तिल्यं तैलीनम् ॥ २९२१ ॥

२९२२। अधान्यानां शाकटशाकिनौ।

इक्षुशाकटं, मूलशाकिनम् ॥ २९२२ ॥

२९२३। तेन वित्तश्चुञ्चुचनौ।

हरिभक्तिचुञ्चुः, हरिभक्तिचनः; तया प्रतीत इत्यर्थः ॥२९२३॥

---

काभ्यो यरामः स्यात्। यवकः वारधान्ये रूढ़ः, षष्टिका कलासधान्ये (षाटिधान)। यवस्य भवनं क्षेत्रं यव्यमिति। एवं यवक्यं षष्टिक्यमिति च ॥

२९२१। तिल। अधान्यानां भवनं क्षैत्रमित्यर्थे तिलादिभ्यो यरामो वा स्यात् पक्षे नृसिहखश्च। तिलस्य भवनं क्षेत्रं तिल्यं तैलीनञ्चेत्यादि। * उमाभङ्गाणव इत्येते क्रमेण मसिना कार्पास चिनेत्येतेषु लोकप्रसिद्धार्थेषु वर्तन्ते। अतसीमप्यत्र कश्चित् पठति। (तिलाणुमाषभङ्गमातस्यः षट् स्युस्तिलादयः) ॥

२९२२। अधा। अधान्यानां भवनं क्षेत्रमित्यर्थे धान्यवाचकव्यतिरिक्तेभ्यः शाकटशाकिनौ भवतः। इक्षूणां भवनं क्षेत्रं इक्षुशाकटम्। मूलानां भवनं क्षेत्रं मूलशाकिनम्। एवमिक्षुशाकिनं मुलशाकटमित्यादि ॥

२९२३। तेन। तेन वित्तो ज्ञात इत्यर्थे तच्छब्दनिर्दिष्टान्नाम्नश्चुञ्चुचनौ भवतः। उदाहरणद्वयस्यार्थमाह—तयेति। तया हरिभक्त्या। वित्तस्यार्थः प्रतीत इति। (ख्यातः इति च?) ॥

---

* व्रीहिभेदस्त्वणुः पुमान्। इत्यमरः। सूक्ष्मचीणकः (चिना बादाम) इत्यर्थः। उमा अतसीति अमरः ॥

२९२४। सर्वचर्मणावृतः ख-नृसिंहखौ।

सर्वचर्मीणः, सार्वचार्मीणो रथः ॥ २९२४ ॥

२९२५। यथामुखं सम्मुखं वा दृश्यतेऽस्मिन्निति खरामः।

खरामोऽयं प्रभुश्च। मुखस्य सादृश्यं यथामुखम्। समं मुखं सम्मुखम्। यथामुखीनः, सम्मुखीनो दर्पणादिः ॥ २९२५ ॥

२९२६। सर्वपूर्वेभ्यः पथ्यङ्गकर्मपत्रपात्रेभ्यस्तद्व्याप्नोतीति।

सर्वपथं व्याप्नोति सर्वपथिना हरिभक्तिः ॥ २९२६ ॥

२९२७। आप्रपदं व्याप्नोति।

आप्रपदीनः ॥ २९२७ ॥

---

२९२४। सर्व। सर्वचर्मणा आवृत इत्यर्थे सर्वचर्मशब्दात् खनृसिंहखौ भवतः। अनुशतादीनामाकृतिगणत्वात् सार्वचार्मीण इत्यत्रोभयपदस्य वृष्णीन्द्रः ॥

२९२५। यथा। यथामुखं सम्मुखं वा दृश्यतेऽस्मिन्नित्यर्थे यथामुखसम्मुखशब्दाभ्यां खरामः स्यात्। खराममधिकरोति खरामेति शब्दद्वयस्याव्ययीभावसमास-निष्पन्न - वाक्यप्रदर्शनपूर्वकमुदाहरणद्वयमाह-मुखस्येति ॥

२९२६। सर्व। तद्व्याप्नोतीत्यर्थे सर्वपूर्वेभ्यः पथ्यङ्गकर्मपत्रपात्रेभ्यः खरामः स्यात्। यथा सर्वपथीनेति। एवं सर्वाङ्गीना सर्वकर्मीणा सर्वपत्रीणा सर्वपात्रीणेति ॥

२९२७। आप्र। आप्रपदं व्याप्नोतीत्यर्थे आप्रपदशब्दात् खरामः स्यात्। आप्रपदं पादाग्रपर्यन्तम्। आप्रपदीनः पटः ॥

२९२८। अनुपदं बद्धा।

अनुपदीना पादुका ॥ २९२८ ॥

२९२९। सर्वान्नानि भक्षयति।

सर्वान्नीनः ॥ २९२९ ॥

२९३०। अयानयं नेयः।

अयः प्रदक्षिणम्, अनयः प्रसव्यं, तदुभयं नेयः; अयानयीनः शारिः ॥ २९३० ॥

२९३१। परोवरं परस्परं पुत्रपौत्रं वानुभवति।

परांश्च अवरांश्च अनुभवति निपातनादोत्वं परोवरीणः। एवं परस्परीणः ॥ २९३१ ॥

---

२९२८। अनु। अनुपदं बद्धापदमिवायता कृतेत्यर्थेऽनुपदशब्दात् खरामः स्यात् ॥

२९२९। सर्वा। सर्वान्नानि भक्षयतीत्यर्थे सर्वान्नशब्दात् खरामः स्यात्। सर्वान्नीनो भिक्षुः ॥

२९३०। अया। अयानयं नेय इत्यर्थेऽयानयशब्दात् खरामः स्यात्। नेय इति णीञ् प्रापणे इत्यस्मात् कृद्बाहुल्यसामर्थ्येन सर्वेश्वरान्ताद्धातोर्यदित्यनेन कर्तरि यत्प्रत्ययोऽत्र ज्ञेयः। अर्थनिरूपणपूर्वकं वाक्यं दर्शयति—अय इति। तदुभयं नेयः, अयानयं नेतव्य इत्यर्थः। अयः प्रदक्षिणगमनम्, अनयः प्रसव्यगमनमित्यन्ये ॥

२९३१। परो। परोवरं परस्परं पुत्रपौत्रं वानुभवतीत्यर्थे परोऽवरादेः खरामः स्यात्। इतरेतरेत्यनेनान्योन्य इत्यत्र यथा निपातनादोत्वं तद्वदिहापीत्याह—पराश्चेति। पराश्चावरांश्यानुभवतीति वाक्ये रामकृष्णसमाससिद्धं परोवरमित्यत्र निपातनादोत्वम्। ततः खरामः। परोवरीण इति। एवमिति परस्परमनुभवति परस्परीण इति। तथा पुत्रपौत्रमनुभवति पुत्रपौत्रीण इति च ॥

२६३२ । अवारं पारमत्यन्तमनुकामं वा गच्छति ।

अवारीणः, पारीणः, अवारपारीणः, पारावारीणः ; अत्यन्तीनः, अनुकामीनः ॥ २६३२ ॥

२६३३ । समांसमीना प्रत्यब्दप्रसवायाम् अद्यश्वीना-सन्नप्रसवायाम् ।

'अद्यश्वीनो वियोगः' इत्यपि जयादित्यः ( काशिका ५।२।१३ ) ॥ २६३३ ॥

---

२६३२ । अवा । अवारं पारमत्यन्तमनुकामं वा गच्छतीत्यर्थेऽ-वारादेः खरामः स्यात् । क्रमेणोदाहरणान्याह—अवारीण इत्यादि । अवारं पारमित्यनयोः क्रमेण व्युत्क्रमेणापि मिलने च प्रयोगः स्यादिति स्वाभिप्रेतं दर्शयति—अवारेत्यादिद्वयम् ॥

२६३३ । समाम् । एते साधव इति समां समीनेत्यादीनां विवरणं स्वयमेकत्रैव वक्ष्यति, तेन साधुरिति सर्वत्र योज्यम् । प्रत्यब्दप्रसवायां गवादौ वाच्ये खरामेण सह समांसमशब्दस्य समांसमीना साधुः स्यात् । समायां समायां * प्रतिवर्षं प्रसूते इत्यर्थः । 'आभीक्ष्ण्यवीप्सयोरि'त्यनेनात्र सम्बत्सरवाचकस्य समाशब्दस्य वीप्सायां द्विरुक्तिस्तस्यां सत्यां निपात-सामर्थ्यात् नराद्युत्तरस्मिन् मुमागमश्च स्यात् । समांसमीना प्रत्यब्द-गर्भधारिण्यामित्यन्ये । ( संक्षिप्तसारकाः ) । अद्य । आसन्नप्रसवायां गवादौ वाच्ये खरामेण सह अद्यश्व इत्यस्य अद्यश्वीना साधुः स्यात् । अद्य श्वो वा सूते या सेत्यर्थः । अत्र संसारहरश्च निपातफलम् । अत्र तत्र भव इत्यर्थेऽव्ययं प्रयोग इष्ट इति जयादित्यमतेन स्पष्टयति अद्येति । अद्य श्वो भवो वियोग इति अद्यश्वीन इत्यपि स्यादिति जयादित्य आहेत्यर्थः । अद्य श्वो वा भवति अद्यश्वीनं मरणमिति तु जुमरः । ( तद्धितपरिशिष्टे २४ ) ॥

---

* समाशब्दो वत्सरवाची बहुवचनान्तः । क्षीरस्वामिमते एकवच-नान्तोऽपीत्यमरटीका ॥

२९३४। आगवीन आ गोप्रतिदानात् कर्मकारिणि, अनुगवीनो गोः पश्चादनुगामिनि, अध्वन्याध्वनीनावध्वानमलं गामिनि, अभ्यमित्रियाभ्यमित्रीणाभ्यमित्रा अभ्यमित्रमलं गामिनि, अश्वीनोऽश्वेनैकाहगम्ये।

एते साधवः॥ २९३४॥

---

२९३४। आग। गां प्रति लक्षीकृत्य दानं गोप्रतिदानमित्यस्मात् आङ्युक्तान्मर्यादाभिविध्योरित्यङ्योगेऽत्र पञ्चमी। गोप्रतिदानपर्यन्तकर्मकारिणि वाच्ये खरामेण साकं आङ्पूर्वस्य गोः आगवीनः साधुः स्यात्। गृहीतस्य सम्बन्धे गां प्रति समर्पणपर्यन्तं यः कर्म करोति स आगवीन इत्यर्थः। अनु। गोः पश्चादनुगामिनि वाच्ये खरामेण सह अनुपूर्वस्य गोरनुगवीनः साधुः स्यात्। अलं गामिनि वाच्येऽयमित्यन्ये। गोः पश्चादलमतिशयं गन्तुं-शीलो गोपोऽनुगवीन इति तद्वाक्योदाहरणे। अस्माकन्तु केवलं गोः पश्चादनुगन्तुं शीलमात्रोऽनुगवीन इति। अध्व। अध्वानमलं गामिनि वाच्ये य-खराभ्यां साकं अध्वशब्दस्य अध्वन्याध्वनीनौ साधू भवतः। निपातसामर्थ्यादत्रद्वये 'नान्तस्य नत्वनीपोरि'त्यनेन संसारहरो न स्यात्। अभ्य। अभ्यमित्रमलं गामिनि वाच्येऽभ्यमित्रमित्यस्य घरामेण खरामेण यरामेण च सहाभ्यमित्रियाभ्यमित्रीणाभ्यमित्राः भवन्ति। अमित्रः शत्रुस्तदभिलक्षीकृत्यालं गच्छतीति अभिप्रती लक्षणेनाभिमुख्ये इत्यनेनाव्ययीभावसिद्धादभ्यमित्रशब्दादत्र घरामादय इति। अश्वी। एकञ्च तदहश्चेति 'राजाहःसखिभ्यः' इत्यनेनात्र समासान्त अत्प्रत्ययान्त एकाहः शब्दो ग्राह्यः। अन्यथा 'अह्नो विष्णुसर्गो विष्णुपदान्ते' इत्यनेन विष्णुसर्गः सति 'अह्नो विष्णुसर्गस्ये'त्यनेन रः स्यात्। अश्वेन एकाहं व्याप्य गम्ये देशादौ वाच्ये खरामेण सहाश्वस्याश्वीनः साधुः स्यात्। सर्वेषां वृत्तिमाह—एत इति॥

अथ कृतवृष्णीन्द्रा दर्श्यन्ते ।

२९३५। गोष्ठीनो भूतपूर्वगोष्ठप्रदेशे, शालीन-कौपीने, अधृष्टाकार्ययोः, व्रातीनो व्रातेन जीवति। ये शरीरमुपास्य जीवन्ति, ते व्रातास्तत्कर्मापि व्रातम् ॥२९३५॥

अथेति पारिभाषिकं वाक्यम्। कृतो वृष्णीन्द्रो येषां ते कृत-
वृष्णीन्द्राः। अथानन्तरं कृतवृष्णीन्द्राः प्रयोगा दर्श्यन्त इत्यर्थः ॥
२९३५। गोष्ठी। भूतः पूर्वः भूतपूर्व इति यदृच्छादित्वेन
निपातनात् श्यामरामसिद्धम्। ततो भूतपूर्वश्चासौ गोष्ठप्रदेशश्चेति
श्यामरामः। भूतपूर्वगोष्ठप्रदेशे प्राग्विद्यमानगोष्ठप्रदेशे वाच्ये खरामेण
सह गोष्ठस्य कृतवृष्णीन्द्रो गौष्ठीनः साधुः स्यात्। गोष्ठेत्यादीनामपि
वृत्तिरेकत्रैव वक्ष्यते एते चेति। गौष्ठीन इत्यत्र देशवाच्यत्वात् पुरु-
षोत्तमता। गोष्ठं * गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकमित्य-
मरोक्ते तु सामान्यतो ब्रह्मतेति। शाली। अधृष्टाकार्ययोर्वाच्ययोः
घरामेण साकं शालाकूपयोः स्थाने कृतवृष्णीन्द्रौ शालीनकौपीनौ
साधू भवतः। अधृष्टशब्देनात्र जड़ उच्यते। एवमकार्यशब्देन असत्
कर्म पापादि उच्यते, तथा नरसाहचर्याच्छरीरावयवविशेषस्तदाच्छा-
दनवासश्चेति बोद्धव्यम्। व्राती। व्रातेन जीवतीत्यर्थे खरामेण सह
व्रातस्य कृतवृष्णीन्द्रो व्रातीनः साधुः स्यात्। वृष्णीन्द्रं विनापि सिद्धे
प्राकरणिकः कृतवृष्णीन्द्रोऽत्र ज्ञेयः। व्रातशब्दस्य द्वैविध्यार्थमाह—य
इति। तदित्यस्मात् पूर्वमुपचारादिति योज्यम्। तेषां व्रातानां कर्म
शरीरोपासनमपि व्रातं स्यादिति शरीरोपासनेन ( शरीरमायास्य इति
जुमरः ) यो जीवति स व्रातीन इत्यर्थः ॥

* ऐक्षिष्ट पुम्भिः प्रचितान् स गोष्ठान् इति भट्टिकाव्ये (२।१४)। अत्र गोष्ठ-
स रामः पुम्भिः प्रचितान् गोष्ठान् ऐक्षिष्ट। अत्र पुस्त्वम्। सगोष्ठान्
शब्दोऽपि पुंलिङ्गोऽस्तीति प्राञ्चः। इति भरतमल्लिकः। तथात्वे कर्तृ-
गोष्ठसहितान् प्रदेशान् इति केचित् इत्यपि भवतः।
पदमुह्यम्। ( श्रीरासः ) ॥

२९३६। साप्तपदीनं सख्ये, हैयङ्गवीनं ह्योगोदोहोद्भवघृते।

एते च साधवः॥ २९३६॥

खरामो निवृत्तः।

२९३७। पीलुकुणादयः पील्वादिपाके।

पीलूनां पाकः पीलुकुणः। पील्वाम्रवदरखदिराः पील्वादयः २९३७॥

---

२९३६। साप्त। तत्प्राप्ये वाच्ये खरामेण सह सप्तपदस्य कृतवृष्णीन्द्रं साप्तपदीनमिति साधु स्यात्। सख्युर्भावः सख्यं तदत्र तत्प्राप्यं ग्राह्यमिति सर्वैर्व्याख्यातं तेन सप्तभिः पदैः प्राप्यं सख्यमिति, तद्धितार्थे त्रिरामी साप्तपदीनमिति। उपचारादेतत् तद्वति च वर्तते तेन साप्तपदीन इति च। हैय। ह्योगोदोहोद्भवघृते वाच्ये खरामेण सह ह्योगोदोहस्य कृतवृष्णीन्द्रं हैयङ्गवीनं साधु स्यात। ह्यो गतकल्यवचनं ❀ तस्मिन् गोदोहो दुग्धं तत्र भवे घृते वाच्ये प्रकृतेरभावेन गत्यन्तराभावात् निपातसामर्थ्यमाश्रित्य ह्योगोदोहस्य हियङ्गुमादेशं कृत्वा हैयङ्गवीनं साधनीयम्। ह्योगोदोहाद्धियङ्गुश्च तद्विकारे घृते इति जुमरः ( तद्धितपरिशिष्टे ९ )। 'घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम्। तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमि'त्यमरः। सर्वेषां वृत्तिमाह–एत इति। एतेभ्यो नृसिंहखरामं न कृत्वा यत्कृतवृष्णीन्द्र इत्युक्तं तद्वैचित्र्यार्थम्। खरामाधिकारं समापयति खराम इति॥

२९३७। पीलु। पील्वादीनां पाके वाच्ये कुण्प्रत्ययेन साकं पील्वादीनां पीलुकुणादयः साधवो भवन्ति। पील्वादिगणं दर्शयति–

---

❀ कल्येति वङ्गभाषायां ग्राम्यप्रचलिताभिप्रायेण कल्यशब्दस्य प्रत्युषार्थत्वात्। इदं मायोक्तपूर्वम्॥

२९३८। कर्णजाहादयः कर्णादिमूले।

'कर्णजाहविलोचना' इति ( भट्टिः ४।१६ ) तु कर्णमूलपर्यन्त-विलोचनेत्यर्थः। कर्णाक्षिनखकेशपादमुखगुल्फभ्रूशृङ्गदन्त-ओष्ठादयः कर्णादयः ॥ २९३८ ॥

२९३९। पक्षतिः पक्षमूले।

'चन्द्रलेखेव पक्षतौ' ( भट्टिः ४।१६ )। 'चञ्चत्पक्षतिभिः खगैः' ॥ २९३९ ॥

२९४०। स्नेहे तैलः।

इङ्गुदीतैलं, शर्षपतैलम् ॥ २९४० ॥

---

पील्वेति। गणेऽत्र कर्कन्धु खदिर शमी करीर करवीर कुवल अश्वत्थे-त्येते च गृह्यन्ते कैश्चित् ॥

२९३८। कर्ण। कर्ण आदिर्येषां ते कर्णादयस्तेषां मूले वाच्ये जाह-प्रत्ययेन सह कर्णादीनां कर्णजाहादयः साधवो भवन्ति। शिष्टोक्त-प्रयोगमेव स्वीयत्वेनोदाहरति कर्णेति ( भट्टौ ४।१६ )। कर्णजाहे विलोचने यस्याः सा। अर्थं स्पष्टयति इति विवृति। कर्णादिगणं दर्शयति—कर्णेति। कर्णाद्योष्ठान्ता एकादशसङ्ख्यकाः कर्णादयः स्युः। पुच्छमप्यत्र कश्चित् पठति। ( कर्णाक्षिकेशा मुखपादपुच्छभ्रूगल्फ-शृङ्गौष्ठमुखानि दन्तः ) ॥

२९३९। पक्ष। पक्षमूले वाच्ये तिप्रत्ययेन सह पक्षस्य पक्षतिः साधुः स्यात्। पक्षशब्दः पञ्चदशसङ्ख्यात्मकदिवसवाची तथा विहगानां छदवाचि चेति द्वयोर्मूलेऽत्र तिप्रत्यय इत्यतः पक्षतेः पञ्चदशवासराणां मूलभूतप्रतिपद्वाचिता। एवं पक्षोणां मूलवाचिता चेति प्राचामुदा-हरणाभ्यां स्पष्टयति—चन्द्रेति। पक्षतौ प्रतिपदि चन्द्रलेखावत् सेत्यर्थः ( भट्टिः ४।१६ )। चञ्चन्ती पक्षतिर्येषां तैः ॥

२९४०। स्नेहे। द्रवकाठिन्यं स्नेहस्तस्मिन् वाच्ये येभ्यः स्नेहो जायते तेभ्यस्तैलप्रत्ययः स्यात्। इङ्गुदीतापसतरुस्तस्याः स्नेह इङ्गुदी-

२९४१। गोगोष्ठादयः पशुस्थाने।

गोगोष्ठं, महिषीगोष्ठम्, उष्ट्रगोष्टम् ॥ २९४१ ॥

२९४२। अविकटाविपटौ तत्सङ्घातविस्तारयोः।

२९४३। गो-गोयुगादयः पशुद्वित्वे।

गोगोयुगम्, अश्वयुगम् ॥ २९४३ ॥

२९४४। गो-षड्‌गवादयः पशुषट्के।

गोषड्‌गवम्, अश्वषड्‌गवम् ॥ २९४४ ॥

---

तैलमिति। एवं शर्षपस्य स्नेहः शर्षपतैलमित्यादि। ( इङ्गुदीतैलमिति शाकुन्तलप्रयोगश्च ) ॥

२९४१। गो। एत इत्यनेन एकत्रैव एषां वृत्तिर्वक्ष्यते। पशूनां स्थाने वाच्ये गोष्ठप्रत्ययेन सह गवादीनां गोगोष्ठादयः साधवो भवन्ति। गवां स्थानं गोगोष्ठम्। गोशब्दाद्‌गोष्ठप्रत्यय इत्याशङ्कानिरासार्थं महिषीगोष्ठमित्यादिद्वयमुक्तम्। एवमश्वगोष्ठं खरगोष्ठमित्यादयोऽपि ॥

२९४२। अवि। तच्छब्देनात्राविः परामृष्यते तस्मात्। अविसङ्घातविस्तारयोर्वाच्ययोः कटपटप्रत्ययाभ्यां साकमविशब्दस्याविकटाविपटौ साधू भवतः ॥

२९४३। गोगोयु। पशूनां द्वित्वे वाच्ये गोयुगप्रत्ययेन सजूर्गवादीनां गोगोयुगादयः साधवो भवन्ति। गोर्द्वित्वं गोगोयुगम्। आदिशब्दादश्वगोयुगमित्यादयोऽपि ॥

२९४४। गो-। पशूनां षट्के वाच्ये षड्‌गवप्रत्ययेन सह गवादीनां गोषड्‌गवादयः साधवो भवन्ति। गवां षट्कं गोषड्‌गवम्। एवमश्वषड्‌गवमित्यादयः ॥

२९४५। अवटीटावनाटावभ्रटा नतनासिके, कर्मठः कर्मसु घटमाने।

एते साधवः॥ २९४५॥

२९४६। अलावूतिलोमाभङ्गाणुभ्यो रजसि कटः।

अलावूनां रजः अलावूकटः॥ २९४६॥

२९४७। उपाधिभ्यां त्यको लक्ष्म्यामासन्नाधिरुढ़योः।

गिरेरुपत्यका वनराजिः; तदासन्नेत्यर्थः। अधित्यका गिरेः; तमधिरूढ़ेत्यर्थः। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः (२।३।७)। 'समुद्रोपत्यका हैमी पर्वताधित्यका पुरी' इति तु भट्टिः (५।८९)॥ २९४७॥

---

२९४५। अव। नता नम्रीभूता नासिका यस्य तस्मिन् वाच्ये टीट-नाट-भ्रट-प्रत्ययैः सह अवेत्यस्य अवटीट अवनाट अवभ्रटाः साधवो भवन्ति। पुरुषोत्तमत्वमत्रातन्त्रं, तेन अवटीटं कुलं अवटीटः पुमान् अवटीटा स्त्रीत्यादि। कर्म। कर्मसु घठमाने जने वाच्ये कर्मणष्ठप्रत्ययेन सह कर्मठः साधुः स्यात्। कर्मठः कर्मसु निपुण इत्यर्थः। विवरणमेते इति॥

२९४६। अला। अलाव्वादीनां रजसि वाच्ये अलावूतिलोमा-भङ्गाणुभ्यः कटः स्यात्। यथा अलावूकटः। एवं तिलकटः, उमाकटः, भङ्गकटः अणुकटः॥

२९४७। उपा। आसन्नाधिरूढ़योर्वाच्ययोरुपाधिभ्यां त्यको भवन् लक्ष्म्यां वर्तते। उदाहरणे दर्शयति गिरेरिति। क कत्य इत्युभयोः प्रत्ययत्वात् 'प्रत्ययस्थात् कादि'त्यनेन त्यरामारामस्येरामो न स्यात्। अत्रासन्नाधिरूढ़योर्यथासङ्ख्यमुपाधिभ्यां त्यकः स्यादित्यमर-

२९४८। तदस्य सञ्जातं तारकादिभ्य इतः।

तारका सञ्जातास्य तारकितं नभः, पुष्पितो वृक्षः। तारका, पुष्प, सख, दुःख, फल, मूल, कुसुम, स्तवक, तन्द्रा, बुभुक्षा, पिपासा, भर, व्रण, रोग, व्याधि, उत्कण्ठा, गर्भोऽप्राणीति। तदस्येत्यनुवर्तते यावत्तस्मिन्॥ २९४८॥

२९४९। द्वयस-दघ्नौ केशवावूर्धप्रमाणे, मात्रट् प्रमाणमात्रे।

---

मतेन स्पष्टयति उपत्येति। गिरेरेवासन्नाधिरूढयोरिति नियमं भट्टिमतेन व्यभिचारयति समुद्रेति॥

२९४८। तद। तदस्य सञ्जातमित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात्। तदस्य सञ्जातमित्यर्थे तारकादिभ्य इतः स्यात्। वाक्योदाहरणे दर्शयति—तारेति। तारकादि आप्राणिन्यन्तमूनविंशतिसङ्ख्यकम्। तारकादिगणमाह—तारकेति। एते चान्ये च तारकादयो भवन्ति। ते यथा। तारका-पुष्प-कल्लोल-तरङ्ग-शर-पल्लवाः। ऋजिष-कण्टकाङ्गार शृङ्गार-ज्वर-कन्दराः। विचारगर्वरोमाञ्चहर्षोत्कर्षकुतूहलाः। गर्भनिष्क्रमणोत्कण्ठाद्रोमदोहार्दचन्द्रिकाः। निद्राकुवलयश्रद्धाकेशकोरककुट्मलाः। कुसुमस्तवकोच्चारप्रवालपुलकव्रणाः। कर्दमव्याधिसीमन्तसुखकञ्चुकहस्तकाः। पिपासामञ्जरीपण्डाबुभुक्षा दुष्खकज्जले। वेगः किशलयस्तन्त्रामुद्रातिलकशैवलाः। मूत्रं पुरीषमुकुले रोगसूत्रादयोऽपरे। प्रयोगदर्शनाज्ज्ञेयास्तारकादौ विचक्षणैः। गर्भादितोऽप्राणिनीत्यन्ये। तदस्य सञ्जातमित्यस्य सञ्जातभागं त्यक्त्वा परत्र तदस्येति भागमनुवर्तयन्नाह—तदस्येति। यावत्तदस्मिस्तावत्तदस्येत्यनुवर्तत इत्यन्वयः॥

२९४९। द्वय। तदस्येत्यर्थे ऊर्धप्रमाणे वाच्ये नाम्नो द्वयस-द्घ्नौ सन्तौ केशवसंज्ञौ भवतः। मात्र। तदस्येत्यर्थे प्रमाणमात्रे वाच्ये तु

ऊरुद्वयसं जलं, गजद्वयसी नदी। एवमूरुदघ्नम्। तथा प्रस्थ-मात्रं घृतं, तन्मात्रं तावन्मात्रम्॥ २९४९॥

२९५०। प्रमाणवाचिभ्यो महाहरश्च।

समं प्रमाणमस्य समः। एवं वितस्तिः, मुष्टिः॥ २९५०॥

२९५१। त्रिराम्यास्तु नित्यम्।

द्विजानु जलम्॥ २९५१॥

२९५२। टच् स्तोमे।

पञ्चदशः स्तोमः, एकविंशः स्तोमः॥ २९५२॥

---

नाम्नो मात्रट् स्यात्। ऊरुरूर्ध्वप्रमाणमस्य उरुद्वयसमिति। केशवत्वा-ल्लक्ष्म्यामीप् गजद्वयसीति। गज ऊर्ध्वप्रमाणमस्या इत्यर्थः। एवमूरु-दघ्नं गजदघ्नीत्यादिः। प्रस्थमात्रमिति प्रस्थमेव प्रमाणमस्येत्यर्थः। तदेव प्रमाणमस्य तन्मात्रम्। तावदेव प्रमाणमस्य तावन्मात्रम्। टित्त्वात् प्रस्थमात्री तुलसीत्यादिः॥

२९५०। प्रमा। तदस्य प्रमाणमित्यर्थेप्र माणमात्रे वाच्ये प्रमाण-वाचिभ्यो द्वयसादयो भवन्ति तेषां महाहरश्च स्यात्। उदाहरणान्याह—सममिति। पक्षे, समद्वयसं समदघ्नं सममात्रं, वितस्तिद्वयसं वितस्तिदघ्नं वितस्तिमात्रं, मुष्टिद्वयसं मुष्टिदघ्नं मुष्टिमात्रम्। एवं समद्वयसीत्यादि॥

२९५१। त्रिरा। तदस्य प्रमाणमित्यर्थे त्रिराम्यास्तु द्वयसादीनां महाहरो नित्यम्। द्वे जानुनी प्रमाणमस्य द्विजानु इति तद्धितार्थे त्रिरामीत्वात् ब्रह्मत्वं तेन सोर्हरः॥

२९५२। टच्। तदस्य प्रमाणमित्यर्थे स्तोमे वाच्ये त्रिराम्याष्टच् स्यात्। पञ्चदश प्रमाणमस्य स्तोमस्येति 'संसारस्य हरश्चिती'त्यनेन संसारहरः पञ्चदश इति। एकविंशतिः प्रमाणमस्य एकविंश इति। विंशतेस्तिहरश्चितात्यनेन तिहरः संसारहरश्च॥

२९५३। शन्नन्तशद्विंशतिभ्य इनिच्।

पञ्चदश प्रमाणमेषां पञ्चदशिनोऽर्धमासाः। एवं त्रिंशिनो मासाः, विंशिनोऽङ्गिरसः॥ २९५३॥

२९५४। प्रमाणात् परिमाणात् सङ्ख्यायाश्च मात्रः संशये।

प्रमाणां समं यान्न वेति सममात्रम्। एवं हस्तमात्रम्। परिमाणात्—प्रस्थमात्रम्। सङ्ख्याया—पञ्चमात्रम्, दशमात्रम्। अत्रापि महाहरमिच्छन्ति॥ २९५४॥

२९५५। वत्वन्तात् केशवद्वयसमात्रौ स्वार्थे।

तावदेव तावद्द्वयसम्; तावन्मात्रम्॥ २९५५॥

---

२९५३। शन्न। शन् इति अन्तं यस्य स शन्नन्तः स च शच्च विंशतिश्च शन्नन्तशद्विंशतयस्ताभ्यः। तदस्य प्रमाणमित्यर्थे शन्नन्तशद्विंशतिभ्य इनिच् भवते। वाक्योदाहरणे दर्शयति—पञ्चेति॥

२९५४। प्रमा। संशयेऽर्थे प्रमाणवाचकात् परिमाणवाचकात् सङ्ख्यावाचकाच्च मात्रः स्यात्। प्रमाणादिति प्रमाणं लक्षीकृत्योदाह्रियत इति। एवमुत्तरत्रापि। प्रस्थमात्रमिति प्रस्थं स्यान्न वेत्यर्थः। पञ्चमात्रमिति पञ्च स्युर्न वेत्यर्थः। एवं दशमात्रम्। अत्रेति अत्रार्थेऽपि महाहरमिच्छन्ति पण्डिता इति शेषः। तेन समं स्यान्न वेति सममित्यादि च॥

२९५५। वत्व। स्वार्थेऽर्थे वत्वन्तान्नाम्नः केशवौ द्वयसमात्रौ भवतः। अत्र यत्तदेतद्भ्य इत्यनेन य आवतुच् वक्ष्यते तदन्तो गृह्यते। तथा तदस्यास्त्यस्मिन्नित्यनेन यो मतुर्वक्ष्यते तस्य यदा अद्वयमाभ्यामित्यनेन वरामादेशस्तदा तदन्तोऽपि गृह्यते। वाक्येऽत्र स्वार्थबोधार्थ एवकारप्रयोगः। एवं यावद्द्वयसं यावन्मात्रमित्यादि। केशवत्वाल्लक्ष्म्यां तावद्द्वयसीत्यादि च॥

२९५६। पुरुषहस्तिभ्यां केशवणश्च तत्प्रमाणे।

पुरुषोऽस्य प्रमाणं पौरुषम्। एवं हास्तिनम्। चकारात् द्वयसादयश्च ॥ २९५६ ॥

२९५७। यत्तदेतद्भ्यस्तत्परिमाणे आवतुच् ।

यत् परिमाणमस्य यावान्; एवं तावान्, एतावान् ॥ २९५७ ॥

२९५८। किमिदमोः कियदियन्तौ साधू।

कियान्, इयान्; कियती, इयती ॥ २९५८ ॥

२९५९। का सङ्ख्यैषां कतिर्वा।

---

२९५६। पुरु। तौ पुरुषहस्तिनौ प्रमाणे यस्य तत्। तत् प्रमाणं तस्मिन् वाच्ये पुरुषहस्तिभ्यां केशवणश्च स्यात्। उदाहरण-द्वयेऽत्र वाच्यपदं जलमित्यध्याहार्यम्। सूत्रस्थ-चशब्दोपादानफलं स्वयमाह–चकारादिति, तेन हस्तिद्वयसं हस्तिमात्रमित्यादि च ॥

२९५७। यत्त। तदेव परिमाणं यस्य तत्। तत् परिमाणं तस्मिन् वाच्ये यत्तदेतद्भ्य आवतुच् स्यात्। संसारस्य हरश्चितीति संसारहरः। 'अत्वसन्तोद्धवस्ये'त्यनेन त्रिविक्रमः। 'अचश्चतुर्भुजे'त्यनेन नुम्। 'राधाविष्णुजनाभ्यामि'ति सोर्हरः। सत्सङ्गान्तस्येति तहरः यावानित्यादि ॥

२९५८। किमि। तदस्य परिमाणमित्यर्थे यतुप्रत्ययेन सह किमिदमोः स्थाने कियदियन्तौ साधू भवतः। किमित्यस्य महरः इदम् इत्यस्य द म-हरोऽत्र निपातफलम्। किं परिमाणमस्य कियान् एवमियान्। चतुर्भुजानुबन्धादित्यनेनात्र लक्ष्म्यामीविति सूचयता कियती इयती च दर्शितेति ॥

२९५९। का। वृत्तिमाह–अत्रेति। अयं कतिरिति, सूत्रे कति-

अत्रार्थेऽयं साधुर्वा। कति ; पक्षे कियन्तः ॥ २९५९ ॥

२९६०। अवयववृत्तेः सङ्ख्यायाः केशवस्तयः, द्वित्रिभ्यामयश्च, उभादयः।

पञ्चावयवा अस्य वृत्तस्य पञ्चतयं पुराणं चतुष्टयी श्रुति। द्वित्रिभ्याम्—द्वयं द्वितयं, त्रयं त्रितयी। तथा उभावयवावस्य उभयो नरसिंहः, उभये देवमनुष्याः, उभयी सृष्टिः ॥ २९६० ॥

२९६१। सङ्ख्याया मयट् भागेन मूल्येन क्रेयभागके।

---

रिति शब्दानुकरणात्। अन्यथास्य बहुत्वात् 'सनान्तसङ्ख्यातः कतेश्च जसशसोरि'त्यनेन जसो महाहरः स्यात्। का सङ्ख्या परिमाणमेषा-मित्यर्थेऽतिच्प्रत्ययेन सह किम्शब्दस्य कतिर्वा स्यात्। पक्षे यत्वन्त इत्याह—पक्ष इति ॥

२९६०। अव। अवयवे। वृत्तिर्वर्तनं यस्याः सा अवयववृत्ति-स्तस्याः। तदस्य प्रमाणमित्यर्थेऽवयववृत्तेः सङ्ख्याया उत्तरः केशवस्तयः स्यात्। द्वित्रि। तदस्य प्रमाणमित्यर्थेऽवयववृत्तिभ्यां द्वित्रिभ्यामयः स्यात्, चकारात् केशवस्तयोऽपि। उभा। तदस्य प्रमाणमित्यर्थेऽवयव-वृत्तेरुभशब्दात् केवलमयः स्यात्। वाक्येऽवयवा इत्यस्मात् परं प्रमाण-मिति योज्यं प्रकरणात्। गम्ययवन्तादित्यनेन द्वित्रिभ्यामित्यत्र पञ्चमी। तेन द्वित्री लक्षीकृत्य उदाह्रियत इत्यर्थः। द्वे अवयवे प्रमाणमस्य द्वयं द्वितयमिति। त्रयोऽवयवाः प्रमाणमस्य त्रयं त्रितयञ्चेति। केशवत्वादन्यपदार्थत्वाद्वा लक्ष्म्यां त्रितयी। एवं द्वितयी च। उभयस्य द्विवचनाभाव इत्युक्तत्वादेकवचनबहुवचने सम्भवत इतिसूचनपूर्वकं वाक्योदाहरणे दर्शयति तथेति। उभाववयवौ येषां ते उभये इति कृष्णनामत्वादस्य कृष्णनाम-कृष्णतो जस्शसोः शिरिति शिः ॥

२९६१। सङ्ख्या। तदस्येत्यर्थे भागरूपेण मूल्येन क्रेयभागके वाच्ये सङ्ख्याया उत्तरो मयट् स्यात्। वाक्योदाहरणे दर्शयति—यवेति।

यवानां द्वौ भागौ मूल्यं भागेत्र स्योदश्वितः तत् द्विमयम् उद-श्विद् यवानाम्। एवं द्विमयी द्राक्षा गुड़स्य। क्रेयभागवतो वाच्य-त्वात् सामा नाधिकरण्यम् ॥ २९६१ ॥

तदस्येति निवृत्तम्।

२९६२। तदस्मिन्नधिकमिति दशान्तादच् शत-सहस्रयोः।

एकादशाधिका अस्मिन् एकादशम् शतम्। एवं द्वादशं सहस्रम् ॥ २९६२ ॥

---

'तक्रन्तूदश्विन्मथितं पादाम्बुर्धाम्बु निर्जलमि'त्यमरः। एवमिति गुड़स्य द्वौ भागौ मूल्यं भागे यस्या द्राक्षायाः सा द्विमयी द्राक्षा गुड़स्येति। सूत्रे क्रेयभागके इत्यत्र पीताम्बरे कप्रत्यय इत्यस्य फलितार्थरूपं मतुप्रत्ययान्तत्वेन विशेषणविशेष्ययोः सामानाधिकरण्यं घटयन्नाह—क्रेयेति। क्रेयभागोऽस्त्यस्मिन्निति क्रेयभागवानित्यस्यैव वाच्यत्वात् द्विमयमित्यादीनामुदश्विदित्यादिभिः सह सामानाधिकरण्यं स्यादि-त्यर्थः। मूल्यभागक्रेयभागयोर्विवक्षाधीनत्वेन नियमितत्वाभावात्। उद-श्वितो द्वौ भागौ मूल्यं भागे येषां यवानां ते द्विमया यवा उदश्वित इत्यादि च। भाग इत्येव, नेह द्वौ व्रीहिमुद्गौ मूल्यमस्योदश्वित इति। मूल्यक्रेययोरिति किं, द्विगुणं घृतं पच्यते क्षीरेणेत्यत्रापि न स्यात्। तदस्येत्यनुवर्तनं निवर्तयति—तदेति ॥

२९६२। तद। तदस्मिन्नधिकमित्यर्थे तच्छब्दनिर्दिष्टान्नाम्नो यथास्वं प्रत्ययः स्यात्। प्रभुरयमिति गम्यम्। दशा। तदस्मिन्नधिक-मित्यर्थे दशान्तान्नाम्नः शतसहस्रयोर्वाच्ययोरच्प्रत्ययः स्यात्। एका-दशमित्यस्य प्रत्ययमहिम्ना एकादशाधिकशतवाच्यम्। एवमुत्तरत्रापि यथायोग्यं कल्पम्। एवमिति द्वादशाधिका अस्मिन् द्वादशं सहस्र-मिति। शतसहस्रयोरिति व्यस्तसमस्तयोरत्र ग्रहणम्। तेन पूर्ववद्वाक्ये एकादशं सहस्रं द्वादशं शतमिति। एवं मिलितत्वेऽपि एकादश

२९६३। शदन्तविंशतिभ्याञ्च।

त्रिंशं शतं, चत्वारिंशं सहस्रं, विंशं शतं, षष्ठं शतमिति तु मत्वर्थीयोऽच्॥ २९६३॥

२९६४। तस्य पूरणे केशवाः।

प्रभुरयम्॥ २९६४॥

२९६५। अच्।

एकादशानां पूरणः एकादशः स्कन्धः। एवं द्वादशः। एकदशी तिथी॥ २९६५॥

---

शतसहस्रं, द्वादशं शतसहस्रं, एकादशं सहस्रशतं, द्वादशं सहस्रशतमिति च ॥

२९६३। शद। तदस्मिन्नधिकमित्यर्थे शतसहस्रयोर्वाच्ययोः शदित्यन्तं यस्य तस्मात् विंशतेश्च पराऽच् स्यात्। त्रिंशदधिका अस्मिन् त्रिंशमिति। चत्वारिंशदधिका अस्मिन् चत्वारिंशम्। एवं विंशतिरधिका अस्मिन् विंशमिति। त्रिंशं सहस्रमित्यादि तु पूर्ववद्व्रस्तादिषु ज्ञेयम्। ननु सूत्रेऽत्र विंशतिशब्दो गृहीतस्तर्हि कथं षष्ठं शतमिति स्यादित्याक्षेपे सिद्धान्तमाह–षष्ठं शतमिति तु मत्वर्थीयः अच्, इति। षष्टिरधिका अस्मिन्नस्तीत्यस्त्यस्य विवक्षणात् षष्ठं शतमिति स्यात्। न तु केवलं तदस्मिन्नधिकमित्यर्थे इति भावः॥

२९६४। तस्य। तस्य पूरणेऽर्थे नाम्नो यथास्वं केशवसंज्ञकाः प्रत्ययाः स्यु। केशवा इत्ययमधिक्रियते प्रभुरयमिति॥

२९६५। अच्। तस्य पूरणेऽर्थे नाम्नः केशवः अच् स्यात्। द्वादश इत्यत्र पूर्ववत् स्कन्ध इति प्रयोक्तव्यं, द्वादशानां पूरण इति वाक्यञ्च। केशवत्वस्य प्रयोजनं दर्शयति–एकादशानां पूरणी तिथीत्यर्थः *॥

---

* तिथिशब्दस्तृतीयस्वरान्तश्चतुर्थस्वरान्तश्च। 'स्त्रीत्वे पाच्छोणादीति ईपि तिथी चेति भरतः।' इत्यमरटीकादर्शनात्॥

२९६६। नान्तादसङ्ख्यादेरमचि।

दशमः स्कन्धः। नान्तात् किम् ? विंशः, त्रिंशः। असङ्ख्यादेः किम्—एकादशः॥ २९६६॥

२९६७। षट्-कति-कतिपय-चतुर्भ्यस्थुगचि।

षष्ठः, कतिथः, कतिपयथः, चतुर्थः। षष्ठी, कतिपयथी॥२९६७

२९६८। चतुर्थे तुर्यतुरीयौ।

साधू। अजादित्वात् तुर्या, तुरीया॥ २९६८॥

---

२९६६। नान्ता। नास्ति सङ्ख्या आदौ यस्य सोऽसङ्ख्यादि-स्तस्मात्। तस्य पूरणेऽर्थेसङ्ख्यापूर्वान्नान्तान्नाम्नोऽच् स्यात्, तस्मिन्नचि परे तस्मादमागमश्च। ( अम् + अच् = अमच्, तस्मिन् अमचि। इति पदच्छेदः। ) अमागमस्योभयभाक्त्वेऽप्यत्र परसम्बन्धित्वविवक्षणात्। संसारस्यहरश्चितीत्यनेन प्रकृतेरेव संसारहरः। अन्यथा मागमोऽनर्थक स्यात्। दशानां पूरणः दशम इति। एवं पञ्चमः शप्तमः अष्टमः नवम इत्यादिः। नान्तादिति किं नान्तो यर्हि न स्यात्तर्हि न स्यादि-त्यर्थः। विंशतेः पूरणो विंशः, त्रिंशतः पूरणः त्रिश इत्यत्र द्वये शदन्तविंशतिभ्याञ्चेत्यनेनाच्। असङ्ख्यादेः किं किमर्थं सङ्ख्यादि यर्हि स्यात्तर्हि न स्यात्। एकादश इत्यत्र अजिति सामान्या च॥

२९६७। षट्। तस्य पूरणेऽर्थे षट् कतिपयचतुर्भोऽच् तस्मिन्नचि थुक्च् स्यात्। षण्णां पूरणः षष्ठ इत्यत्र थुगागमस्य प्रकृतिभाक्त्वात् संसारहरश्चितीत्यनेन उग्घरः स्यात्। षात् परस्येति थस्य ठः। कतीनां पूरणः कतिथ इत्यादिषु च पूर्ववदुग्घरः। केशवाधिकारस्य फलं दर्शयति—षष्ठीत्यादि॥

२९६८। चतु। तस्य पूरण इत्यर्थे चतुर्थे छरामाभ्यां सह चतुः शब्दस्य चरामहरेण तुर्यतुरीयौ साधू भवतः। प्रकरणेऽत्र केशवाधि-कारात् लक्ष्म्यामीपि प्राप्तेऽजादेराकृतिगणत्वादाभ्यामाप् स्यादित्याह—अजादित्वादिति॥

२९६९। बहु-पूग-गण-सङ्घेभ्यस्तिथः।

बहुतिथः, बहुतिथी ॥ २९६९ ॥

२९७०। वतोरिथः।

तावतिथः, यावतिथः ॥ २९७० ॥

२९७१। द्वितीयतृतीय पूरणे साधू।

अजादित्वात्—द्वितीया तृतीया ॥ २९७१ ॥

२९७२। विंशत्यादेस्तमो वा।

विंशतितमः, विंशः; त्रिंशत्तमः, त्रिंशः; एकविंशतितमी, एकविंशी ॥ २९७२ ॥

---

२९७९। बहु। तस्य पूरण इत्यर्थे बहुपूगगणसङ्घेभ्यः केशव-तिथः स्यात्। बहूनां पूरणः, बहुतिथः, लक्ष्म्यां बहुतिथी। एवं पूगतिथः गणतिथः सङ्घतिथ इति। तथा पूगतिथीत्यादि ॥

२९७०। वतो। तस्य पूरण इत्यर्थे वत्वन्तान्नाम्न इथः स्यात्। तावतः पूरणः तावतिथ इति। एवं यावतिथ इत्यादिः ॥

२९७१। द्विती। तस्येत्यनुवर्तते। तेन तस्य पूरणेऽर्थे तीय-प्रत्ययेन सह द्वि त्रि इत्येतयोर्द्वितीयतृतीयौ साधू भवतः। अत्र त्रिशब्दस्य तृभावश्च निपातफलम्। अनयोरप्यजादित्वाल्लक्ष्म्यामाप् स्यादित्याह—अजेति ॥

२९७२। विंश। तस्य पूरणेऽर्थे विंशत्यादेरुत्तरस्तमो वा स्यात्। पक्षे सामान्याच्च। विंशतेः पूरणः विंशतितमः विंशश्च। एवं त्रिंशत्तम-स्त्रिंशश्च। अधिकारप्राप्तकेशवस्य सूचकमुदाहरणमाह—एकेति। विंश-त्यादेराकृतिगणत्वात् ऊनविंशतितमः ऊनविंशः, अष्टविंशतितमः अष्ट-विंशः, ऊनत्रिंशतमः ऊनत्रिंशः, अष्टापञ्चाशत्तमः, अष्टपञ्चाशः, एक-षष्टितमः एकषष्ट इत्यादि च ॥

२९७३। नित्यं शतादेर्मासार्धमासात् सम्वत्सराच्च।
शततमः, सहस्रतमः, लक्षतमः, एकशततमः, द्विसहस्रतमः, सप्त-
लक्षतमः। मासतमो दिवसः, अर्धमासतमः, सम्वत्सरतमः ॥२९७३॥

२९७४। षष्टि-सप्तत्यशीति-नवतिभ्यश्चासङ्ख्या-
पूर्वेभ्यः।
विंशत्यादेर्विकल्पस्य वाधा। षष्टितम इत्यादि। सङ्ख्या-
पूर्वेभ्यस्तु—एकषष्टः, एकषष्टितम् ॥२९७४॥

उक्तं पूरणम्।

---

२९७३। नित्यम्। तस्य पूरणेऽर्थे शतादेर्मासार्धमासात् सम्वत्-
सराच्च नित्यं यथा स्यात्तथा तमो भवति। प्रथमं शतादेरुदा-
हरणान्युपन्यस्यति शततम इत्यादीनि सप्तलक्षतम इत्यन्तानि षट्।
शतस्य पूरण इत्यादिवाक्यन्तु यथासम्भवं योज्यम्। मासादेरुदाहर-
णानि क्रमेणाह—मासतम इत्यादीनि। मासस्य पूरणो दिवस एव
सम्भवतीति दिवस इति विशेष्य दर्शितम्। अर्धमासस्य पूरणन्तु
पक्षान्तवासरो ज्ञेयः, सम्वत्सरस्य पूरणश्च वैशाखः ॥

१९७४। षष्टि। तस्य पूरणेऽर्थेऽसङ्ख्यापूर्वेभ्यः षष्टिसप्तत्यशी-
तिनवतिभ्यश्च नित्यं तमः स्यात्। विंशत्यादेरन्तर्गणत्वात् शतादिभ्योऽपि
तमो वा स्यादिति विकल्पवाधनाय सूत्रद्वये नित्योपादानमिति सूचयन्नाह—
विंशेति वाधेति, वाधकमित्यर्थः। षष्ट्याः पूरणः षष्टितमः। इत्यादी-
त्यादिपदेन सप्ततितमः अशीतितमः नवतितम इति। सङ्ख्यापूर्वाणान्तु
रूपाणि दर्श्यन्त इत्याह—सङ्ख्येति। एकषष्टेः पूरण एकषष्ट इत्यादि-
द्वयम्। प्रथमे अजित्यच् द्वितीये विंशत्यादेरिति तमः। एवमशीत
इत्यादि च। केशवाधिकारात् शततमी षष्टितमीत्याद्यपि। पूरणं समा-
पयति उक्तमिति। पूरणार्थे केशवाधिकारात् सोऽपि निवर्तते ॥

२९७५। स एषां ग्रामणीरिति कः।

त्वं ग्रामणीरेषां त्वत्काः। एवं मत्काः, मत्कं मतम्। देवदत्तकाः ॥ २९७५

२९७६। कोऽयं प्रभुश्च।

२९७७। सस्येन * सम्पन्नः।

सस्यको मणिः, सस्यकः शालिः ॥ २९७७ ॥

२९७८। अंशं हारी।

अंशको दायादः ॥ २९७८ ॥

---

२९७५। स ए। स एषां ग्रामणीतित्यर्थे तच्छब्दनिर्दिष्टात् कः स्यात् वाच्यन्तु एतच्छब्दनिर्दिष्टम्। ग्रामणीर्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपेऽपि चेति नानार्थदृष्ट्या ग्रामणीशब्दस्य शक्तिग्रहो यथासम्भवं कर्तव्यः। ग्रामणीर्मुख्य इत्यन्ये। त्वत्का इति युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्व इति त्वदादेशः। एवमित्यतिदेशात् अहं ग्रामणीरेषां मत्काः। लिङ्गवचनमत्रातन्त्रमिति सूचयन् मत्कं मतमिति च दर्शितम्। केवलं युष्मदस्मदोरेवेत्याशङ्कानिरासार्थं देवदत्तो ग्रामणीरेषां देवदत्तका इत्यपि दर्शितम्। एवं यथासम्भवमन्यानूह्यानि। ग्रामणीरिति किं, त्वं शत्रुरेषामित्यत्र न स्यात् ॥

२९७६। कोऽ। कप्रत्ययमधिकरोति कोऽयमिति ॥

२९७७। सस्येन। सस्यस्तण्डुलादिस्तेन सम्पन्न इत्यर्थे सस्यशब्दात् कः स्यात् ॥

२९७८। अंशं। अंशः। पैतृकधनादिस्तं हारीत्यर्थेऽंशात् कः स्यात्। हारीति हर्तुं शील इति कृत्रस्तच्छीलादौ णिनिः।

---

* सस्यं शस्यं इति रूपद्वयम्। सस स्वप्ने शशु हिंसायां इत्यनयोर्यप्रत्ययेन साधितम्। इयमरटीका। (श्रीरामः) ॥

२९७९। स्वाङ्गात्तदासक्ते।

केशकः, दन्तकः ॥ २९७९ ॥

२९८०। तेन ग्रहीतरि पूरणप्रत्ययात्तस्य हरश्च।

द्वितीयेन ग्रहीता द्विको मेधावी। एवं षट्कः ॥ २९८० ॥

२९८१। ग्रहणे तु हरो वा।

द्वितीयेन रूपेण ग्रन्थग्रहणं द्विकं, द्वितीयकम्। एवं चतुर्थकं, चतुष्कम् ॥ २९८१ ॥

२९८२। काले सम्भवति द्रव्येण प्रयुक्ते च रोगे।

---

२९७९। स्वाङ्गा। तदासक्तेऽर्थे स्वाङ्गवाचकात् कः स्यात्। प्राण्यङ्गं मूर्तिमदित्यनेन प्रतिपादितं स्वाङ्गमत्र ग्राह्यम्। तदासक्तः स्वाङ्गासक्तस्तत्पर इति यावत्। केशे आसक्तः केशक इति। एवं दन्तकः पादक इत्यादिः ॥

२९८०। तेन। तेन ग्रहीतरीत्यर्थे तच्छब्दनिर्दिष्टकरणभूतात् पूरणप्रत्ययात् कः स्यात्। के परे तस्य पूरणप्रत्ययस्य हरश्च स्यात्। द्वितीयेनेत्यावृत्त्यादिर्नेति योज्यम्। न केवलं द्वितीयस्य हरोऽपि तु पूरणप्रत्ययमात्रस्येति सूचयन्नाह-एवमिति। षट्क इति षष्ठेन ग्रहीतेत्यर्थः। एवं तृतीयेन ग्रहीतेति पूरणप्रत्यये हरे सति निमित्तापाये-नैमित्तिकस्याप्यपाये इति न्यायेन तृभावस्य निवृत्तेस्त्रिक इति, किम्बा पूरणप्रत्यस्य हरत्वेन स्थानिवत्त्वात् न न्यायस्य प्रवृत्तिस्तेन तृक इति वा। एवं चतुष्कः पञ्चक इत्यादिः ॥

२९८१। ग्रह। अव्यवहितत्वात्तेनेत्यनुवर्तते इत्यतः, तेन ग्रहणेऽर्थे तु पूरणप्रत्ययात् कः स्यात्। तस्य हरश्च वा स्यात्। वाक्योदाहरणानि स्पष्टानि। ग्रहणमत्र ग्रन्थग्रहणमिति वाक्येन स्पष्टीकृतम् ॥

२९८२। काले। काले सम्भवतीत्यर्थे कालवाचकात्, द्रव्येण

दिवसे सम्भवति दिवस्को ज्वरः। एवं मासकः। विषपुष्पेण प्रयुक्तः विषपुष्पकः॥ २९८२॥

२९८३। द्वितीयकादयश्च तद्भवरोगे, शीतकादयश्च शीतादिकर्तृकरोगे, गूडापूपिकादयः पौर्णमास्यादिषु, पथकादयः पथ्यादिकुशले।

पथकः, कथकः, आकर्षिकः, जातकः इत्यादिः॥ २९८३॥

२९८४। धनकहिरण्यकौ तयोः कामे।

---

प्रयुक्ते च रोगे इत्यर्थे तु द्रव्यवाचकात् कः स्यात्। एवं मासे सम्भवति मासकः। एवं पक्षकः सम्वत्सरक इत्यादिः। द्रव्येणेत्यस्योदाहरणमाह—विषेति॥

२९८३। द्विती। तद्भवरोगे वाच्ये कप्रत्ययेन सह द्वितीयादिनां द्वितीयकादयः साधवो भवन्ति। द्वितीये भवो रोगः द्वितीयकः। एवं तृतीयक इत्यादिः। शीत। शीतादिकर्तृके रोगे वाच्ये कप्रत्ययेन सह शीतादीनां शीतकादयः साधवो भवन्ति। शीतेन रोगः शीतकः। एवं भीतक इत्यादि। गुड़ा। पौर्णमास्यादिषु वाच्येषु कप्रत्येन सह गुड़ापूपादीनां गुड़ापूपिकादयः साधवो भवन्ति। गुड़ेन युक्तोऽपूपोऽस्यां पौर्णमास्यामिति गुड़ापूपात् कः लक्ष्यामजादित्वादाप् प्रत्ययस्थात् कादिति पूर्वारामस्येरामः गुड़ापूपिका पौर्णमासी। एवं घृततण्डुलिकेत्यादि। पथ। पथ्यादिकुशले वाच्ये कप्रत्येन साकं पथ्यादीनां पथकादयः साधवः स्युः। पथि कुशलः निपुणः पथक इत्यत्र पथिशब्दस्येरामस्यारामादेशश्च निपातफलम्। कथायां कुशलः कथक इत्यत्र कथाया आरामस्य वामनश्च निपातफलम्। आकर्षक इत्यादिद्वयं स्पष्टम्। इत्यादीत्यादिपदेन पाठकः मन्त्रक इत्यादि च॥

२९८४। धन। तयोर्धनहिरण्ययोः कामे इच्छायां कप्रत्ययेन सह

देहेऽपि निस्पृहस्यास्य मुमुक्षोर्धनकः कुतः। एवं हिरण्यकः ॥ २९८४ ॥

२९८५। तन्त्रको नवकर्पटे, शीतकोऽलसे, उष्णको दक्षे, अनुकाभिकाभीकाः कमितरि, पार्श्वकः शठे, शृङ्खलकः करभे, उत्क उन्मनसि, अधिरूढस्याधिकः।

एते साधवः ॥ २९८५ ॥

उक्तः कः।

---

धनहिरण्ययोर्धनकहिरण्यकौ साधू भवतः। शिष्टप्रयोगेण स्वमतं पुष्णाति देह इति। देहेऽपि स्पृहारहितस्यास्य मुक्तिमिच्छोर्धनकामः कस्मात् स्यादित्यर्थः। हिरण्यक इति हिरण्यस्य काम इत्यर्थः ॥

२९८५। तन्त्र। नवकर्पटे नूतनकार्पाससम्बन्धिवाससि वाच्ये कप्रत्ययेन सजूस्तन्त्रस्य तन्त्रकः साधुः स्यात्। तन्त्रात् कोऽचिरोद्धृते इति कश्चित्। शीत। अलसे वाच्ये कप्रत्ययेन साकं शीतस्य शीतकः साधुः स्यात्। शीतेऽलसः शीतकः। उष्ण। दक्षे कार्यनिपुणे कप्रत्ययेन सह उष्णस्य उष्णकः साधुः स्यात्। अनु। कमितरि कामुके वाच्ये कप्रत्ययेन सह अन्वभ्योरनुकाभिकाभीकाः साधवो भवन्ति। अनुक इत्यनुकामत इत्यर्थः। अभिक इत्यादिद्वये त्वभिकामत इत्यर्थः। किञ्च, अभीक इत्यत्राभेस्त्रिविक्रमश्च निपातनात्। पार्श्व। शठे वाच्ये कप्रत्ययेन सह पार्श्वस्य पार्श्वकः साधुः स्यात्। पार्श्वक इति पार्श्वे शठ इत्यर्थः। पार्श्वेनान्विच्छतीत्यन्ये। शृङ्ख। करभे वाच्ये कप्रत्ययेन सह शृङ्खलस्य शृङ्खलकः साधुः स्यात्। शृङ्खलं बन्धनमस्य शृङ्खलकः। करभः करिशावकः। उत्। उन्मनसि वाच्ये कप्रत्ययेन सार्धं उदित्यस्य उत्कः साधुः स्यात्। उत्क इत्युत्कण्ठित इत्यर्थः। अधि। केन सहाधिरूढस्याधिकः स्यात्। अत्र निपातनात् कप्रत्यये सति रूढस्य हरः स्यात्। अधिक इत्यधिरूढ इत्यर्थः। के सति अध्यारूढस्याधिरित्येके। द्वितीयकादीनामधिकान्तामेकत्रैव वृत्तिमाह—एत इति। कस्यायमश्वोऽश्वक इति

२९८६। उदरादाद्यूने, अयःशूलात्तैक्ष्ण्येन कारिणि, दण्डाजिनाद्दाम्भिके माधवठः।

औदरिकः, उदरमात्रभरणतत्पर इत्यथः; आयःशूलिकः; दाण्डाजिनिकः॥ २९८६॥

२९८७। श्रोत्रीयश्छन्दोऽधीयाने श्राद्धिकश्राद्धिनौ श्राद्धभोक्तरि।

साधवः॥ २९८७॥

२९८८। अनुपदादिनिरन्वेष्टरि।

'मृग्यस्यानुपदी रामः' ( भट्टिः ५।५० )॥ २९८८॥

---

कुत्सितोऽश्वोऽश्वक इति च वक्तव्यम्। कप्रत्ययं समापयति उक्त इति॥

२९८६। उद। आद्यूने वाच्ये उदरान्माधवठः स्यात्। आदी अदनशीलस्तस्मादप्यूनः निकृष्टस्तस्मिन्। अयः। तैक्ष्ण्येन कारिणि वाच्येऽयःशूलान्माधवठः स्यात्। दण्डा। दाम्भिके वाच्ये दण्डाजि-नान्माधवठः स्यात्। माधवठ इतीदं नात्र विहितं किन्तु प्राग्वते-र्माधवठः इत्यस्यानुवर्तनादेवोक्तम्। औदरिक इत्यस्यार्थं स्वयं स्पष्टयति - उदरेति। आद्यूनः स्यादौदरिक इत्यमरः। अयःशूलं तीक्ष्णं करोति आयः-शूलिक इति। तीक्ष्णस्य भावस्तैक्ष्ण्यमित्यतस्तैक्ष्ण्येनेत्यत्रोपलक्षणे तृतीया इत्ययःशूलतीक्ष्णयोः सामानाधिकरण्यम्। अयःशूलेन तीक्ष्णेनान्यत् साधु करोतीत्यन्ये। दाण्डाजिनिक इति दम्भेन दण्डाजिनं गृह्णातीत्यर्थः॥

२९८७। श्रोत्री। छन्दोऽधीयाने वाच्ये छरामेण सह श्रोत्रस्य श्रोत्रीयः साधुः स्यात्। श्रोत्रशब्दोऽत्र छन्दोवाचकस्तेन श्रोत्रं छन्दोऽ-धीते श्रोत्रीय इति। श्राद्ध। श्राद्धभोक्तरि वाच्ये माधवठ णिनिभ्यां सह श्राद्धस्य श्राद्धिकश्राद्धिनौ साधू भवतः। श्राद्धे भुङ्क्ते इति श्राद्धिकेत्यादिद्वयम्॥

२९८८। अन। अन्वेष्टरि वाच्ये अनुपदादिनिः स्यात्। मृगेति।

२९८९। क्षेत्रियो जन्मान्तरचिकित्स्ये।

साधुः। क्षेत्रं शरीरं, तच्च जन्मान्तरगतं गृह्यते॥ २९८९॥

२९९०। साक्षी साक्षाद्द्रष्टरि।

इन्नन्तः साधुः॥ २९९०॥

२९९१। इन्द्रियमिन्द्रलिङ्गमित्याद्यर्थे संज्ञायां साधु।

२९९२। पूर्वादिनिर्भूतपूर्वकर्तरि।

पूर्वमनेन स्थितं गृहीतं पीतं वा पूर्वी, पूर्विणौ॥ २९९२॥

---

मृगस्यानुपदमन्विच्छतीत्यर्थः। ( अयं भट्टिप्रयोगः ५। ५० )॥

२९८९। क्षेत्रि। जन्मान्तरस्य चिकित्स्ये वाच्ये घरामेण सह क्षत्रस्य क्षत्रियः साधुः स्यात्।१ वाभिप्रेतार्थमाह–क्षेत्रमिति। एवम्भूतस्य क्षेत्रस्य ग्रहणात्। क्षेत्रे जन्मान्तरगतवर्ष्मणि चिकित्स्येतु क्षेत्रिय इति। पूर्वजन्मगतशरीरे चिकित्स्यो व्याधिरिह जन्मन्यसाध्य इत्यर्थः॥

२९९०। साक्षी। साक्षाद्द्रष्टरि वाच्ये साक्षाच्छब्दस्येना सजूः साक्षी साधुः स्यात्। साक्षात् प्रत्यक्षं पश्यतीति साक्षी॥

२९९१। इन्द्रि। इन्द्र आत्मा लिङ्ग्यते ज्ञायते येन चक्षुरादिना तदिन्द्रलिङ्गम्। इन्द्रलिङ्गमित्याद्यर्थे संज्ञायां वाच्यायां घरामेण सह इन्द्रस्य इन्द्रियमिति साधु स्यात्। इत्यादिपदग्रहणात् इन्द्रस्यात्मन इदमनुमापकमिन्द्रियमित्यादि च यथास्वमूह्यम्॥

२९९२। पूर्वा। भूतपूर्वकर्तरि वाच्ये पूर्वशब्दादिनिः स्यात्। भूतपूर्व इति पूर्वकालस्थ इत्यर्थः। स चासौ कर्ता चेति तस्मिन्। अत्र योज्यक्रियाध्याहार्यमिति स्पष्टयितुं वाक्यपुरःसरोदाहरणमाह–पूर्वमिति। पूर्विणाविति पूर्वमाभ्यां स्थितं गृहीतं पीतं वेत्यर्थः। यद्यप्यत्रानुक्तकर्तरि भावपरथैर्वाक्यं दर्शितम्, तथापि कर्तरि विहितेना-

२९९३। सपूर्वपदाच्च।

कृतं पूर्वमनेन इति कृतपूर्वी सृष्टिं, भुक्तपूर्वी दधीनि ॥२९९३॥

२९९४। इष्टादिभ्यश्च।

इष्टमनेन इष्टी हरियागे। अधीति श्रीभागवते। एवं निराकृति, पठिती, गृहीती, कृती, श्रुती ॥ २९९४ ॥

---

तैर्वोक्तः। किञ्च, अत्राधिकरणमप्युह्यमित्यतः पूर्वमित्यधिकरणसूचकमुपन्यस्तं तस्मादेव प्रत्ययश्च सूत्रनिर्देशात् ॥

२९९३। सपू। भूतपूर्वकर्तरि वाच्ये पूर्वपदेन सह वर्तमानात् पूर्वादिनिः स्यात्। वाक्योदाहरणे आह -कृतमिति। अत्र कृतमिति भावे क्तः सृष्टेः कर्मत्वं कृतिक्रियासाध्यत्वात् कर्तुरीप्सिततमत्वादित्यन्ये। कर्मणोऽनुक्तत्वञ्च कर्तरि तद्धितस्य विहितत्वात्, कृतश्च भावे विहितत्वात्। प्रत्ययार्थगुणीभूतायाः क्रियायाः सम्बन्धस्य तु सर्वत्राधिकत्वादेव सृष्टेः कर्मत्वम्। एवं सति कृत्प्रत्ययः क्तो गुणीभाव्यः कर्तरि विहितस्तद्धितेनिप्रत्यय एव मुख्यस्तस्मात् लीलायाः कर्ता कृष्ण इतिवदस्य कर्मणो योग इति विवेचनीयं, कारकपादे यदग्रन्थकृतोक्तं तदिहापि स्मर्तव्यम्। भुक्तपूर्वीति। भुक्तं पूर्वमनेनेत्यर्थपूर्ववदत्रापि दधिशब्दस्य कर्मत्वादिकं विवेचनीयम्। किञ्च, कर्मण एकत्वादिनियमाभावाद्दधीनीति बहुवचनान्तमुपन्यस्तम् ॥

२९९४। इष्टा। भूतपूर्वकर्तरि वाच्ये इष्टादिभ्यश्च इनिः स्यात्। प्रश्नपूर्वकमत्र प्रयोग इति सर्वेषां मतम्। तेन कुत्रेष्टीति प्रश्नेऽपेक्षितमधिकरणं हरियाग इति दर्शितम्। कुत्रेष्टमनेन इष्टी हरियागइत्यपि भवितुमर्हति। एवमुत्तरत्रापि यथासम्भवं योज्यम्। अधीतमनेन अधीतीति। एवं कुत्राधीती श्रीभागवते इत्यादिकमपि। एवमित्यातिदेशिकानां क्रमेण निराकृतमनेन पठितमनेन गृहीतमनेन कृतमनेन श्रुतमनेनेत्यादीनि वाक्यानि ज्ञेयानि। निराकृती पापे, पठिती व्याकरणे, गृहीती धने, कृती कर्मणि, श्रुती वेदे, इत्येतानि यथा-

२९९५। तदस्यास्त्यस्मिन् वा मतुः।

अर्थोऽयं प्रभुश्च। गावोऽस्य सन्ति गोमान् व्रजनाथः। कृष्णोऽस्त्यस्मिन्, 'मतोर्मो वः' (२१२३) कृष्णवान्।

अत्रार्थे नियमश्च—

**भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने।**
**संसर्गेऽस्ति-विवक्षायां मतुर्मुख्या भवन्ति ते॥**

क्रमेण यथा—गोमान् श्रीनन्दः दैत्यवान् कंसः; प्रशंसादौ—

---

योग्यमधिकरणानि च। हरियाग इत्यादिषु सर्वेषु गुणीभूतक्रियासम्बन्धादधिकरणत्वं भावे क्तस्य विहितत्वात्, कर्तरि इनो विहितत्वादित्यादिपूर्ववद्योज्यम्। किञ्च, इष्टादीनामपरिमितत्वादाकृतिगणत्वं ज्ञेयम्॥

२९९५। तद। तदस्यास्ति तस्मिन् वा अस्तीत्यर्थे नाम्नो मतुः स्यात्। अयमर्थः प्रभुनामाधिकारश्चकाराद्विधिरपीत्याह—अर्थ इति। अर्थद्वयस्य क्रमेणोदाहरणद्वयमाह—गाव इति। मतोरित्यस्मात् पूर्वं अद्वयमाभ्यां तदुद्धवाभ्यां विष्णुदासाच्चेति योज्यम्। कृष्णवानित्यस्य गोवर्धन इति वाच्यपदं द्रष्टव्यम्॥

अत्रा। परिभाषासूचकविधिवाक्यमाह—अत्रेति। अत्रार्थे तदस्यास्त्यस्मिन् वेत्यर्थे नियमश्च वक्ष्यत इत्यर्थः। नियममेवाह—भूमेति। भूमा प्रचूरः। अतिशायनोऽतिशयः। स्पष्टमन्यत्। मतुर्मुख्य आदिर्येषां ते मतुमुख्याः। भूमादष्वर्थेषु गम्यमानेषु तदस्यास्त्यस्मिन् वेत्यर्थे नाम्नस्ते प्रसिद्धा वक्ष्यमाणा मतुप्रभृतयो भवन्तीत्यर्थ क्रम इति एष्वर्थेषु क्रमेण यथोदाह्रियते। गोमान् श्रीनन्द इत्यत्र गावोऽस्य सन्त्यस्मिन् वेति गोशब्दस्य बहुवचनान्तत्वेन भूमत्वं गम्यते। दैत्यवान् कंस इत्यत्र दैत्योऽस्यास्त्यस्मिन् वेति दैत्यशब्दस्य निन्द्यत्वेन निन्दा गम्यते। यथार्थतः प्रशंसादि कृष्णे सङ्गच्छत इति तत्रैव प्रशंसादिं गमयन्नुदाहरणान्याह—प्रशंसादाविति। रूपवानित्यत्र रूपमस्यास्त्यस्मिन् वेति

रूपवान् भगवान्, शार्ङ्गी दण्डी कृष्णः ; अस्तिविवक्षायान्तु—क्रियावान्। इन् वक्ष्यते। ( ३०२२ ) ॥ २९९५ ॥

२९९६। गुणवाचिभ्य मत्वर्थस्य महाहरः।

शुक्लः पटः। यदा तु स्वभावाद्गुणिनि गुणे च शुक्लादयो वर्तन्ते, इत्युपगमस्तदा गुणपक्षेऽपि शुक्लवानिति न स्यात्। इत्येव मत्वर्थो महाहरः ॥ २९९६ ॥

---

निरपेक्षरूपस्य प्रशसात्वेन प्रशसा गम्यते। भगवानिति। 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चेति षण्णां भगमितीङ्गना ॥' इत्यनेन भगशब्दः षड़ैश्वर्यवाची सोऽस्यास्त्यस्मिन् वेति भगशब्दस्यात्रैव नित्ययोगो गम्यतेऽन्यत्र तु कल्पितः। शार्ङ्गीति शृङ्गेण निर्मितं शार्ङ्गं धनुस्तदस्यास्त्यस्मिन् वेति शार्ङ्गस्यातिशायनत्वमत्रैव गम्यतेऽन्यत्र तु कादाचित्कम्। दण्डीति दण्डमत्र लगुड़स्तदस्यास्त्यस्मिन् वेति दण्डस्यात्र सांसर्गिकत्वं गम्यते। अस्तीति अस्ति विवक्षायास्त्वनियमत्वात् यस्य यस्मिन् वा क्रियास्ति स क्रियावानिति। शार्ङ्गी दण्डीत्यत्र 'अरामादिनि ठरामावि'त्यनेन इनिः स्यादित्याह—इन्निति ॥

२९९६। गुण। तदस्यास्त्यस्मिन् वेत्यर्थे गुणवाचिभ्यः शब्देभ्यो मत्वर्थस्य महाहरो भवति। शुक्लोऽस्यास्त्यस्मिन् वेति मत्वर्थस्य मत्वादेर्महाहरः। शुक्ल इति। एवं नीलो घट इत्यादि। गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यमरोक्तानुसारेण स्वभावात् शुक्लादयः केवलगुणे गुणविशिष्टद्रव्ये च वर्तमानगुणवाचिनः स्युरिति प्रतिपादनपूर्वकं सूत्रकरणस्य प्रयोजनमाह—यदा त्विति। तथा च, स्वभावत एव गुणिनि गुणे च शुक्लादयो यदा पुनर्वर्तन्त इत्युपगमः प्रतीतिः स्यात्तदा गुणपक्ष इति, केवलगुणपक्षे अपिकारात् गुणयुक्तद्रव्यपक्षे च गुणवाचिनो मत्वर्थीयप्रत्ययेन शुक्लवानितीत्यादिर्न स्यादेवेति मत्वर्थप्रत्ययो महाहरः स्यादित्यर्थः। मत्वर्थग्रहणादेभ्य इनिठरामादीनां यथायोग्यं महाहरो ज्ञेयः ॥

२९९७। रसादिभ्यो मतुरेव प्रायशः।

रस-रूप-गन्ध-स्पर्श-शब्देभ्यो मत्वर्थीयेषु प्रायशो मतुरेव स्यात्। रसवान्। प्रायशः किम् ? रसिकः कृष्णः रूपिण्यो गोप्यः स्पर्शी वायुरित्यादिः ॥ २९९७ ॥

२९९८। प्राणिस्थादारामान्ताल्लो वा सिध्मादेश्च।

चूड़ालः, चूड़ावान् ; नेह—शिखावान् प्रदीपः। त था सिध्मलो गडुलः ॥ २९९८ ॥

२९९९। पार्ष्णि-धमन्योस्त्रिविक्रमश्च।

पार्ष्णीलः, धमनीलः ॥ २९९९ ॥

---

२९९७। रसा। तदस्यास्त्यस्मिन् वेत्यर्थे रसादिभ्यो गुणवाचिभ्यः प्रायो बाहुल्यं यथा स्यात्तथा मतुरेव भवति। पूर्वत्र गुणवाचिभ्य इति सामान्यगुणवाचिग्रहणादेभ्योऽपि मत्वर्थस्य महाहरे प्राप्तेऽयम्। रसादेरन्येभ्य कदाचिदपि मत्वर्थस्य स्थितिर्न स्यादित्येवशब्दस्य प्रयोगः। रसादिगणप्रदर्शनपूर्वकं विवरणमाह—रसेति। रसोऽस्यास्त्यस्मिन् वेति रसवानिति। प्रायोग्रहणफलं दर्शयति—प्रायश इत्यादि। रसिकादिषु अरामादित्यनेन ठरामेनी ज्ञेयौ ॥

२९९८। प्राणि। तदस्यास्त्यस्मिन् वेत्यर्थे प्राणिस्थितादारामान्ताल्लो वा भवति पक्षे मतुश्च। सिध्मा। पूर्वोक्तेऽर्थे सिध्मादेश्च लो वा स्यात् पक्षे मतुश्च। चूड़ास्यास्त्यस्मिन् वेति चूड़ाल इत्यादिद्वयम्। नेहेति प्राणिस्थादिति विशेषणात्। उत्तरस्योदाहरणं दर्शयति—तथेति। सिध्मन् शब्दो गात्रस्थरोगविशेषवाची सिउलीति नीचोक्तिः। गडुर्गलस्थरोगविशेषवाची गलगण्ड इति नीचोक्तिः। सिध्मालो गडुलश्च तत्तद्रोगयुक्तपुरुषवाचकः। एवं सिध्मवान् गडुमांश्चत्यादि। सिध्मादिराकृतिगणः ॥

२९९९। पार्ष्णि। तदस्यास्त्यस्मिन्वे त्यर्थे पार्ष्णिधमनिभ्यां लो वा स्यात्, तयोरिरामस्य त्रिविक्रमश्च। पार्ष्णिर्गुल्फः सोऽस्यास्त्यस्मिन्

३०००। जटाघाटाकालाभ्यः क्षेपे लः।

जटालः, घाटालः, कालालः ॥ ३००० ॥

३००१। क्षुद्रजन्तूपतापेभ्यश्च।

मूषिकालः, युकालः। उपतापात्—मूर्च्छालः, विर्चचिकालः। विकल्पानुवृत्तिः सर्वत्र—सिध्मवान् एवमुत्तरत्रापि ॥ ३००१ ॥

३००२। वत्सलः कामवति, अंशलो वलवति।

साधू ॥ ३००२ ॥

---

वेति पार्ष्णिलः। एवं धमनिर्गात्रशिरास्तद्वान् धमनीलः। पक्षे, पार्ष्णिमानित्यादि ॥

३०००। जटा। तदस्यास्त्यस्मिन् वेत्यर्थे क्षेपे वाच्ये जटाघाटाकालाभ्यो लो वा स्यात्। क्षेपो निन्दा। जटा मिलितकेशः सास्यास्त्यस्मिन् वेति जटाल इत्यादिः। पक्षे जटावानित्यादिश्च ॥

३००१। क्षुद्र। तदस्यास्त्यस्मिन् वेत्यर्थे क्षुद्रजन्तूपतापवाचिभ्यश्च लो वा स्यात्। क्षुद्रजन्तुरनस्थिः स्यादिति क्षुद्रजन्तुलक्षणं स्वयं ग्रन्थकृतोक्तम् ( ७९५ पृः )। मूषिकास्यास्त्यस्मिन् वेति मूषिकाल इत्यादिः। पक्षे मूषिकावानित्यादिश्च। उपतापं लक्षीकृत्योदाहरति उपेति। उपतापः शरीरविकारमात्रम्। मूर्च्छा मोहः सास्यास्त्यस्मिन् वेति मूर्च्छालो मूर्च्छितः। विर्चचिका गात्रकण्डूः सास्येत्यादि पूर्ववत् विर्चचिकाल इत्यादिः। पक्षे, मूर्च्छावानित्यादिश्च। सर्वत्र स्वाभिप्रेतं विकल्पानुवर्तनं स्मारयति विकल्पेति। एवमुत्तरत्रापि सर्वत्र विकल्पानुवृत्तिः स्यादित्यतिदिशति एवमिति ॥

३००२। वत्। तदास्यस्त्यस्मिन् वेत्यर्थे कामवति वाच्ये लप्रत्ययेन सह वत्सस्य लः साधुः स्यात्। अंश। तदास्यास्त्यस्मिन् वेत्यर्थे वलवति वाच्ये लरामेण सह अंशस्य अंशलः साधुः स्यात्। साधू इति द्विवचनान्तमुभयसम्वन्धसूचनार्थम् ॥

३००३। क्लिन्नेऽक्षिण तद्वति पुरुषे च अक्षणश्चुत्-चित्-पित्-लश्च।

चुल्लं, चुल्ल इत्यादयः ॥ ३००३ ॥

३००४। फेनिल-फेनलौ।

साधू ॥ ३००४ ॥

३००५। लोमशादयः पामनादयश्च।

साधवः। लोमशः, कपिशः, पामनः, श्लेष्मणः, हेमनः, वलिनः ॥ ३००५ ॥

३००६। लक्ष्मणो लक्ष्मीवति, अङ्गना-दद्रुण-पिच्छिल-जटिलोरसिलाः।

साधवः ॥ ३००६ ॥

---

३००३। क्लिन्ने। पूर्वोक्तेऽर्थे क्लिन्नेऽक्षिण वाच्ये तद्वति क्लिन्नाक्षवति पुरुषे च वाच्ये अक्षणः सम्बन्धे लः स्यात्, तस्मिन् परे तस्य चुत्-चित्-पित् इत्येते विरिञ्चयश्च भवन्ति। अक्षयस्यास्त्यस्मिन् वेति ईश्वरेच्छाशङ्कितग्रहात्। चिल्लं क्लिन्नचक्षुः चिल्लः क्लिन्नाक्षियुक्त-पुरुषः। इत्यादयः इत्यादिपदेन चिल्लं चिल्लः, पिल्लं पिल्ल इति पूर्वस्य विष्णुपदवत्त्वं स्वादितद्धितयोरित्युक्तात् सर्वत्र दतौ परवर्णौ लचटवर्गेषु नित्यमित्यनेन तरामस्य लः स्यात् ॥

३००४। फेनि। तदस्यास्त्यस्मिन् वेति इललाभ्यां फेनस्य फेनिल-फेनलौ द्वौ साधू भवतः ॥

३००५। लोम। तदस्यास्त्यस्मिन् वेत्यर्थे शरामेण सह लोमादीनां लोमशादयः साधवो भवन्ति, नरामेण साकन्तु पामादीनां पामनादयश्च साधवो भवन्ति। लोमास्यास्त्यस्मिन् वेति लोमश इत्यादि। पामास्यास्त्यस्मिन् वेति पामन इत्यादि। एवमुत्तरत्रापीत्युक्तत्वात् वत्सवान् लोमवानित्यादि च ॥

३००६। लक्ष्म। तदस्यास्त्यस्मिन् वेत्यर्थे लक्ष्मीः शोभादिस्त-

३००७। प्रज्ञा-श्रद्धार्चा-वृत्तिभ्यो णरामः।

प्राज्ञः ॥ ३००७ ॥

३००८। तपस्वि-सहस्रिणौ, तापससाहस्रौ च।

साधू। केशवणान्तत्वात् तापसी, साहस्री ॥ ३००८ ॥

३००९। ज्योत्स्नादेः केशवणः।

ज्यौत्स्नः, तामिस्रः पक्षः ॥ ३००९ ॥

३०१०। सिकताशर्कराभ्याञ्च।

सैकती यमुना। शार्करो घटः ॥ ३०१० ॥

---

वति वाच्ये नरामेण सह लक्ष्मशब्दस्य लक्ष्मणः साधु स्यात्। अङ्ग। तदस्यास्त्यस्मिन् वेत्यर्थे नरामेण साकमङ्गदद्रोरङ्गनादद्रुणौ साधू भवतः। इलेन सह पिच्छजटोरसां पिच्छलजट्टिलोरसिलाश्च साधवो भवन्ति। प्रशंसायामङ्गना त्वन्यत्राङ्गवतीत्यन्ये ॥

३००७। प्रज्ञा। तदस्यास्त्यस्मिन् वेत्यर्थे प्रज्ञाश्रद्धार्चावृत्तिभ्यो णरामः स्यात्। ण इदरामशेषः। प्रज्ञास्यास्त्यस्मिन् वेति प्राज्ञः। एवं श्राद्धः आर्चः वार्त इति ॥

३००८। तप। तदस्यास्त्यस्मिन् वेत्यर्थे विनिन्भ्यां सह तपः-सहस्रयोर्यथासङ्ख्यं तपस्विसहस्रिणौ साधू भवतः। एवं केशवणेन सह तयोस्तापससाहस्रौच साधू भवतः। परत्र केशवणान्तत्वाल्लक्ष्म्या-मीप् स्यादिति स्वाभिप्रेतमाह—केशवेति।

३००९। ज्योत्। पूर्वोक्तेऽर्थे ज्योत्स्नादेः केशवणः स्यात्। ज्योत्स्नास्यास्त्यस्मिन् वेति ज्योत्स्नः। तमिस्रास्यास्त्यस्मिन् वेति तामिस्रः द्वयोरपि विशेष्यं पक्ष इति। एवं यथासम्भवं लक्ष्मवान् ज्योत्स्नावानित्यादि ॥

३०१०। सिक। पूर्वोक्तेऽर्थे शिकताशर्कराभ्याञ्च केशवणः

३०११। स्मरहर इलश्च देशे।

सिकता देशः, सिकतिलः, सैकतः ॥ ३०११ ॥

३०१२। मतुश्च।

सिकतावान्। एवं शर्करादि ॥ ३०१२ ॥

३०१३। दन्तुर उन्नतदन्ते।

साधुः ॥ ३०१३ ॥

३०१४। उषर-शुषिर-पूष्कर-मधुराणि साधुनि, मुखरादयश्च।

साधवः ॥ ३०१४ ॥

---

स्यात्। सिकतास्या अस्त्यस्यां वेति सैकतीति। शर्करास्यास्त्यस्मिन् वेति शार्कर इति ॥

३०११। स्मर। तदस्यास्त्यस्मिन् वेत्यर्थे सिकताशर्कराभ्य केशवणस्य स्मरहरः इलश्च स्यात् देशे वाच्ये। वेत्यस्य सर्वत्रानुवर्तनात् यत्र ये विहितास्तेषां सर्वेषां विकल्पत्वमनुसन्धेयम्। तेन च पक्षे केशवणस्य स्थितत्वात् सैकतश्चेति ॥

३०१२। मतु। पूर्वोक्तेऽर्थे सिकताशर्कराभ्यां मतुश्च स्यात्। सामान्यतो मतौ प्राप्ते यत् पुनरिदं तत् स्पष्टार्थं परत्र मतुप्राप्तेर्ज्ञापकञ्च। एवमिति शर्करेति। स्मरहरपक्षे आदिपदात् शर्करिलः शार्करः शर्करावानिति ॥

३०१३। दन्त। तदस्यास्त्यस्मिन् वेत्यर्थे उन्नता दन्ता यस्य तस्मिन् वाच्ये उरप्रत्ययेन सह दन्तस्य दन्तुरः साधुः स्यात्। अन्यत्र दन्तवान् ॥

३०१४। उष। तदस्यास्त्यस्मिन् वेत्यर्थे रप्रत्ययेन साकं उषादीनां उषर शुषिर पुष्कर मधुराणि साधूनि स्युः। मुख। तदस्यास्त्यस्मिन्

३०१५। द्युमद्रुमौ।

साधू ॥ ३०१५ ॥

३०१६। केशादेर्वो वा।

केशवः, मणिवः, हिरण्यवः, इष्टकावः। केशिककोशकेशवन्तश्च प्रयुज्यन्ते ॥ ३०१६ ॥

३०१७। काण्डीराण्डीरौ।

साधू ॥ ३०१७ ॥

३०१८। रजःकृष्यासुतिपरिषदादिभ्यो वलः।

रजस्वला ॥ ३०१८ ॥

---

वेत्यर्थे रप्रत्ययेन सह मुखादीनां मुखरादयश्च साधवो भवन्ति। मुखरः नखरः पांशुरः पाण्डुरः बन्धुरः खरः नगरः सिन्दूरः कुञ्जर इत्यादि ॥

३०१५। द्युम। पूर्वोक्तेऽर्थे मरामेण सजूः द्युद्रोर्दुमद्रुमौ साधू भवतः। द्यौरस्यास्त्यस्मिन् वेति पूर्वस्य विष्णुपदवत्त्वात् दिव उर्विणुपदान्त इति द्युमः। द्रुर्वृक्षावयवः सोऽस्यास्त्यस्मिन् वेति द्रुमः ॥

३०१६। केश। तदस्यास्त्यस्तिन् वेत्यर्थे केशादेरुत्तरो वो वा स्यात्। केशादयश्चत्वार इत्युदाहरणेन स्पष्टयति केशव इति। केशशब्दात् ठमतु चास्मिन्नर्थे भवत इत्याह-केशिकेति। प्रयुज्यन्त प्राचीनैरिति शेषः। अस्मादिनिश्चेत्येके तेन केशीति च। एतदुपलक्षणं मण्यादेरपि ठादयो भवन्तीति ॥

३०१७। काण्डी। तदस्यास्त्यस्मिन् वेति ईश्वरप्रत्ययेन काण्डाण्डयोः काण्डीराण्डीरौ साधू भवतः ॥

३०१८। रजः। पूर्वोक्तेऽर्थे रजःकृष्यासुतिपरिषदादिभ्यो वल स्यात्। रजोऽस्या अस्त्यस्यां वेति रजस्वला नारी नदी वा। अन्यत्र रजस्वान् वातः ॥

३०१९। त्रिविक्रमश्च।

कृषीवलः, आसुतीवलः, परिषद्वलः। आदिना—भ्रातृवलः, पुत्रवलः मैत्रीवलः, यात्रावलः ३०१९॥

३०२०। दन्तावलशिखावलौ हस्तिमयूरौ।

३०२१। ज्योत्स्ना-तमिस्रा-शृङ्गिणोर्जस्विन्नूर्जस्वल-गोमिन्-मलिन-मलीन-मलोमसाः। *

साधवः॥ ३०२१॥

३०१९। त्रिवि। वने परे वामनान्तानां त्रिविक्रमश्च स्यात्। शिष्टाचाराद्वामनान्तानामन्तस्य त्रिविक्रम इति ग्रन्थकृतामभिप्रायो लक्ष्यते। यदि रज-आदीनामपि त्रिविक्रमः स्यात्तदेदं पृथक् करणमनर्थकं नृसिंहवल इति कृतेऽपि प्रयोगसिद्धेः। वलो भवति त्रिविक्रमश्चेति सूचनार्थं चकार उपन्यस्तः। कृषिरस्यास्त्यस्मिन वेति कृषीवल इत्यादि। आदिशब्दोपादानेन भ्रातृवलप्रभृतयोऽपि भवन्तीत्याह—आदीति॥

३०२०। दन्ता। तदस्यास्त्यस्मिन् वेति वलेन सह दन्तशिखयो-र्दन्तवलशिखावलौ हस्तिमयूरसंज्ञकौ साधू भवतः। किम्बा नेदं सूत्रं, किन्तु पूर्वस्यैव वाच्यनिरूपणपूर्वकमुदाहरणं पूर्वत्रादिग्रहणादनयोः संज्ञात्वाच्च॥

३०२१। ज्योत्। तदस्यास्त्यस्मिन् वेत्यर्थे इन्दुकिरणादिवाच्ये प्रत्ययादिभिः सह ज्योतिषादीनां यथास्वं ज्योत्स्नादयः साधवो भवन्ति। ज्योतिरस्या अस्त्यस्यां वेति निपातान्नो ज्योतिष इरामहरश्च निमित्ता-पायात् षत्वापाये ज्योत्स्ना चन्द्रिकेति। तमोऽस्या अस्त्यस्यां वेति निपातात्, रजस्तमसोऽस इश्च तमिस्रा रात्रिरिति कृष्णादावित्यन-निपातात्, नाभ्यामाप्। शृङ्गमस्यास्त्यस्मिन् वेति निपातादिनः शृङ्गिणो गवादिः। ऊर्जस्तेजोऽस्यास्त्यस्मिन् वेति निपाताद्विन्वलौ ऊर्जस्वी ऊर्जस्वलश्च

* तमिश्रा इति तालव्यशान्तोऽपि पाठः॥

३०२२। अरामादिनि-ठरामौ, व्रीह्यादेश्च।

दण्डी, दण्डिकः ॥ ३०२२ ॥

३०२३। मतुश्चात्र परत्र च।

दण्डवान् ॥ ३०२३ ॥

३०२४। एकाक्षरात् कृतो जातेः सप्तम्याञ्चेनि-ठौ न तु।

स्ववान्, कारकवान्, ब्राह्मणवान्। सप्तम्याम्—कृष्णोऽत्रास्ति

---

बलवानिति। गौरस्यास्त्यस्मिन् वेति निपातादिनौ मुमागमश्च गोमिन इति गोस्वामी। मलमस्यास्त्यस्मिन् वेति निपातादिन ईन ईमसैः सह मलस्य क्रमेण मलिन इत्यादित्रयम्। मतोरौत्सर्गिकत्वात् यथा-योग्य मुखवान् ज्योतिष्मानित्यादयो ज्ञेयाः ॥

३०२२। अरा। पूर्वोक्तेऽर्थेऽरामान्तादिनिठरामौ भवतः। व्रीह्या। पूर्वोऽक्तेऽर्थे व्रीह्यादेश्चेनिठरामौ भवतः। दण्डमस्यास्त्यस्मिन् वेति दण्डी दण्डिकश्चेति ॥

३०२३। मतु। अत्र विषये परत्र विषये च मतुरपि भवति। विषयः कार्यज्ञापकस्तेन अरामाद्व्रीह्यादेश्च मतु स्यादित्यर्थः। दण्ड-वानिति पूर्ववत् ॥

३०२४। एका। पूर्वोक्तेऽर्थे एकाक्षरात् कृतः कृदन्तात् जाते-र्जातिवाचकात् सप्तम्याञ्चेति ठरामौ न तु भवतः। अरामान्तात् प्राप्तेर्निषेधोऽयम्। स्वमस्यास्त्यस्मिन् वेति स्ववान्। एवमवान् कवान् खवानित्यादि। कारकमस्यास्त्यस्मिन् कारकवान्। एवं कृतवान् क्रिय-माणवानित्यादि। ब्राह्मणोऽस्यास्त्यस्मिन् वेति ब्राह्मणवान्। एवं क्षत्रीयवान्। एवं वैश्यवान् शूद्रवानित्यादि। सप्तम्यामित्युदा-ह्रियत इति शेषः। अस्मिन्नित्यनेन सप्तम्यां लब्धेऽपि यत् पुनः

कृष्णवान् देशः। व्यभिचरति च—कार्यी, हार्यी, तण्डुली, तण्डुलिकः। व्रीह्यादेः—व्रीही, व्रीहिकः, व्रीहिमान्, मायी, मायिकः, मायावान्॥ ३०२४॥

३०२५। शिखादिभ्य इनिः।

शिखी, शिखावान्। एवं माली, मेखली, सङ्गी, पताकी, कर्मी, चर्मी॥ ३०२५॥

३०२६। नावादिभ्यष्ठरामः।

नाविकः, नौमान्; यवखदिकः, यवखदावान्॥ ३०२६॥

---

सप्तम्याञ्चेति कृतं तत्तु विशेषं ज्ञापयति तस्मादेव एकाक्षरात् कृतो जातेरन्येभ्यः सप्तम्यामिनिठौ न भवतस्तस्येत्यर्थे तु तावपि भवतः। तेन कृष्णोऽत्रास्तीति वाक्यमुपक्षिप्तम्। कृष्णोऽस्यास्तीत्यर्थे तु कृष्णी कृष्णिकः कृष्णवानिति। व्यभिचरति चेति प्रतिषेध इति शेषः। तण्डुलेन कार्यं कृतं तदस्यास्त्यस्मिन् वेति कार्यी हार्यीति। तण्डुलमस्त्यस्मिन्निति तण्डुली तण्डुलिक इत्यादि। व्रीह्यादेरिति रूपाणि दर्श्यन्त इति पूरयितव्यम्। व्रीहिरस्यास्त्यस्मिन् वेति व्रीहीत्यादिद्वयम्। मतुश्चात्र परत्र चेत्यनेन व्रीहिमानित्यपि। एवं मायीत्यादित्रयम्। शिरःशब्दोऽप्यत्र कैश्चित् पठ्यते॥

३०२५। शिखा। पूर्वोक्तेऽर्थे शिखादिभ्य इनिः स्यात्। शिखास्यास्त्यस्मिन् वेति शिखीति मतुश्चात्रेत्यनेन शिखावानित्यपि। अतिदेशेन गणं दर्शयति एवमिति। चर्मीत्यस्मादित्यादीति योज्यमाकृतिगणत्वात्॥

३०२६। नावा। पूर्वोक्तेऽर्थे नावादिभ्यष्ठरामो भवति। नौरस्यास्त्यस्मिन् वेति नाविकः पूर्ववन्नौमानित्यपि। एवं यवखदिकइत्यादिद्वयम्। यथोक्तमन्यैश्च। व्रीहिशिरोमायाभ्यः शालेरिणिकौ भवतः। संज्ञा माला वीणा शिखा इष्टका मेखला घृणा शाखा।

३०२७। तुन्दादेरिलस्तौ च।

तुन्दिलः, तुन्दिकः, तुन्दी, तुन्दवान्; उदरिलः, उदरिकः, उदरी, उदरवान्; एवं पिचिण्ड, यव। व्रीहेरर्थग्रहणं तुन्दादिषु। शालिनः, शालिकः, शाली ॥ ३०२७॥

३०२८। स्वाङ्गाद्वृद्धौ च।

स्थूलकर्णः—कर्णिलः, कर्णिकः, कर्णी॥ ३०२८॥

३०२९। एकगोपूर्वान्माधवठः, निष्कपूर्वशतसहस्राभ्याश्च।

---

केका जरा पताका वड़वा दंष्ट्रा गदा मानोत्साहाः। आयास व्रत मुकुलोद्दाम दाम निचुल परिणाहाः। स्तवकोद्य माल यान करालारोहाः फलोपयापौ च। अवरोह व्यायामासाद्याः कर्म चर्माद्याः। इन्नेवैतेभ्यः स्यान्मतुश्च सर्वेभ्य एवेष्टः। इक एव नौ कुमारी करण सभा यवखदादिभ्यः॥

३०२७। तुन्दा। पूर्वोक्तेऽर्थे तुन्दादेरुत्तर इलः, तौ इनिठौ च भवन्ति। तुन्दमस्यस्त्यस्मिन् वेति तुन्दिल इत्यादि। एवमिति पिचिण्डिलः पिचिण्डिकः पिचिण्डी पिचिण्डवान्। यविलः यविकः यवी यववान्। वर्ग्यंयरामादिरत्र कुचित् पुस्तके दृश्यते सोऽपि नासङ्गतः, शीघ्रार्थजवशब्दस्य सम्भवात्। व्रीहिपर्यायस्य तुन्दादौ ग्रहणमिति सर्वैर्मन्यते इत्याह—व्रीहेरिति। अतएव शाल्यस्यास्त्यस्मिन् वेति शालिन इत्यादि। एवं मासमुद्गयवेत्युक्तदिशा मासादीनामपि व्रीह्यर्थत्वात् मासिलः मृद्गिल इत्यादि च॥

३०२८। स्वाङ्गा। वृद्धावर्थे तदस्यास्त्यस्मिन् वेत्यर्थे च स्वाङ्गवाचकादिल-इनिठौ च भवन्ति। मतुश्चात्रेत्यनेन तु मतुश्च सर्वत्र। स्थूलकर्ण इति कर्णिल इत्यादि। तथा कर्णोऽस्यास्त्यस्मिन् वेति कर्णिल इत्यादि॥

३०२९। एक। तदस्यास्त्यस्मिन् वेत्यर्थे एकः गौश्चेति पूर्वे

ऐकशतिकः, गौसहस्रिकः ; एकादशीति, श्यामरामादेवेष्यते। तथा नैष्कशतिकः, नैष्कसहस्रिकः ॥ ३०२९ ॥

३०३०। रूप्यो दीनारे प्रशस्तरूपे च।

साधुः ॥ ३०३० ॥

३०३१। हिम्यादयश्च।

साधवः। हिम्यः, गुण्यः, पद्यम् ॥ ३०३१ ॥

३०३२। अस्-माया-मेधा-स्रग्भ्यो विनिः।

---

यस्य तस्मान्नाम्नो माधवठो भवति। निष्क। पूर्वोक्तेऽर्थे निष्क इति पूर्वौ ययोस्तथाभूतसहस्राभ्याञ्च माधवठः स्यात्। एकशतमस्यास्त्यस्मिन् वेति ऐकशतिक इति। एवं गवां सहस्रमस्येत्यादि गौसहस्रिक इति। नन्वेकगोपूर्वाद्यदि माधवठ एव तर्हि कथमेकादशी, इत्यत्र सिद्धान्तमाह—एकादशीति। एकञ्च तत् दश चेति श्यामरामनिष्पन्नात् केशवारामे ईपिच कृते एकादशीतीष्यते। किम्वा श्यामरामसिद्धादेकादशास्य सन्त्यस्मिन् वेति इनि कृते एकादशीत्येवेष्यते। एकेनाधिका दश सन्त्यस्मिन् वेति एकादशिक इत्यन्ये। निष्कपूर्वस्योदाहरणमाह—तथेति। निष्कशतमस्यास्त्यस्मिन् वेति नैष्कशतिक। एवं नैष्कसहस्रिक इति ॥

३०३०। रूप्यो। तदस्यास्त्यस्मिन् वेत्यर्थे दीनारे प्रशस्तरूपे च वाच्ये यरामेण रूपस्य रूप्यः साधुः स्यात्। दीनारो रोपकैरष्टाविंशत्या परिकीर्तितः। सुवर्णसप्ततितमो भागो रोपक उच्चते। पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोड़श ॥

३०३१। हिम्या। तदस्यास्त्यस्मिन् वेत्यर्थे यरामेण साकं हिमादीनां हिमादयः साधवो भवन्ति। हिममस्यास्त्यस्मिन् वेति हिम्य इत्यादि। पूर्ववत् रूपवान् हिमवानित्यादि च ॥

३०३२। अस्। पूर्वोक्तेऽर्थे असित्यसन्तात् मायामेधास्रग्भ्यश्च

तसाभ्यां, मत्वर्थीया यादिवत्। पयस्वी, मायावी, मेधावी, स्रग्वी। सरस्वान् सरस्वतीत्येव तु स्यात्, विनेरनभिधानात् ॥३०३२॥

३०३३। अर्श आदेररामः।

अर्शसः, तुन्दः, काणः, खञ्जः, पलितः, लवणः, गोधूमः ॥३०३३॥

३०३४। आमयावी रोगिनि।

साधुः ॥ ३०३४ ॥

३०३५। शृङ्गारक-वृन्दारक-फलिन-वर्हिण-हृदयालव।

---

विनिः स्यात्। मत्वर्थीयानां यादिवत्त्वमतिदिशति तस्येति। तरामसरामाभ्यामुत्तरस्था मत्वर्थीया यादिवद्भवन्तीति यादिवत्त्वान्मत्वर्थीये परे पूर्वस्य विष्णुपदवत्त्वं स्वादितद्धितयोरयसर्वेश्वराद्योरित्यनेन पूर्वस्य विष्णुपदवत्त्वं न स्यात्। अतएव पयोऽस्यास्त्यस्मिन् वेति पयस्वीत्यत्र सरामस्य विष्णुसर्गो न स्यात् तस्योरामश्च। मायास्यास्त्यस्मिन् वेति मायावी। एवं मेधावीति। ननु यदि मत्वर्थीये पूर्वस्य विष्णुपदवत्त्वाभावस्तर्हि स्रग्वीत्यत्र कथं चवर्गस्य कवर्गः, सत्यं नायं दोषः, 'चवर्गस्य कवर्गो विष्णुपदान्ते' इत्यनेन विष्णुपदान्तेऽत्र जस्य गो स्यात्, किन्तु 'वैष्णवे त्वसवर्गे' इत्यनेनाविष्णुपदान्ते सवर्गातिरिक्ते वैष्णवे तस्य ग इति। यद्यप्यसित्यनेनासन्ताद्विनिर्विहितस्तथापि सरसो मतुप्रत्ययेन पुरुषोत्तमलक्ष्म्योः सरस्वान् सरस्वतीत्येव तु स्यात्। शिष्टैर्विनेरनभिधानादित्याह—सरस्वानिति ॥

३०३३। अर्श। पूर्वोक्तेऽर्थे अर्श इति आदिर्यस्य तस्मादरामः स्यात्। अर्शोऽस्यास्त्यस्मिन् वेति अर्शस इत्यादि ॥

३०३४। आम। तदस्यास्त्यस्मिन् वेत्यर्थे रोगिणि वाच्ये आविना सह आमयस्य आमयावी साधुः स्यात्।

३०३५। शृङ्गा। तदस्यास्त्यस्मिन् वेत्यर्थे आरकेनालुभिः सह

इत्येते साधवः। फली, वर्ही ; हृदयिको, हृदयी ; हृदयवानित्यपि दृश्यते ॥ ३०३५ ॥

३०३६। शीतालु-तिग्मालु-वलूलु-हिमेलवस्तत्तदसहे।

साधवः। हिमेलुरिति सन्ध्यक्षरमध्यः ॥ ३०३६ ॥

३०३७। वातूलो वातासह-वातसङ्घयोः।

साधुः ॥ ३०३७ ॥

३०३८। उर्णायुर्मेषकम्बले।

उरामान्तः साधुः ॥ ३०३८ ॥

---

क्रमेण शृङ्गवृन्दष्फलवर्हि हृदयानां शृङ्गारकादयः साधवो भवन्ति। वृत्तिमाह—इत्येत इति। व्यभिचारादस्य यथासम्भवं फलादिभ्य इनिष्ठो मतुश्च भवतीत्याह—फल्यादिना दृश्यत इत्यन्तेन ॥

३०३६। शीता। तदस्यास्त्यस्मिन् वेत्यर्थे तत्तदसहे वाच्ये आलु ऊलु एलुभिः सह शीततिग्मवलहिम इत्येतेषां शीतालुप्रभृतयः साधवः स्युः। शीतमस्यास्त्यस्मिन् वेति तत्र सहते शीतालुरिति। यस्य विद्यमानत्वं नास्ति, तस्यासहनं न सम्भवतीति शीतस्य विद्यमानपूर्वकमसहनम्। एवमुत्तरत्रापि। किञ्च, वलमस्यास्त्यस्मिन् वेति त्रिविक्रमो रामायूलुना वलस्य वलूलुरिति। हिमलुरित्यत्र इलुप्रत्ययाशङ्कानिरासार्थमाह—सन्ध्यक्षरेति। किम्बा अत्र लैलुप्रत्ययः, किन्तु लिपिकरप्रमादादालुप्रत्ययान्तः। हिमालुरित्यत्र हिमेलुरित्यभूदित्याशङ्का स्यात्, तन्निरासार्थं सन्ध्यक्षरेत्युक्तम् ॥

३०३७। वातू। तदस्यास्त्यस्मिन् वेत्यर्थे वातस्यासहे वातस्य सङ्घे च वाच्ये ऊलेन सह वातस्य वातूलः साधुः स्यात्। अत्रापि वातस्य विद्यमानत्वपूर्वकावसहनसङ्घौ ज्ञेयौ पूर्ववदसङ्गतेः ॥

३०३८। उर्णा। तदस्यास्त्यस्मिन् वेत्यर्थे मेषकम्बले वाच्ये उरामेण साकमुर्णाया उर्णायुः साधुः स्यात्। वृत्तावुरामान्त इत्यनेन पूर्वत्र

३०३९। वाग्ग्मी पण्डिते।

द्विगकारोऽयं साधुः॥ ३०३९॥

३०४०। वाचाल-वाचाटौ निन्द्यबहुभाषिणि।

साधू॥ ३०४०॥

३०४१। स्वामीश्वरे।

साधुः॥ ३०४१॥

३०४२। वातक्यतिसारकि-पिशाचकिनः।

साधवः॥ ३०४२॥

---

युगागमः सूचितोऽन्यथा प्रयोगासिद्धेः। एवं न कृत्वा युप्रत्ययान्त इति यदि कृतं स्यात्तदा अ-इद्वयस्येत्यनेनारामे हरे सति उण्युरित्येव स्यात्॥

३०३९। वाग्ग्मी। तदस्यास्त्यस्मिन् वेत्यर्थे पण्डिते वाच्ये ग्मिन्प्रत्ययेन सह वाचो वाग्ग्मी साधु स्यात्। ग्मिन्नन्तं स्फुटयितुं वृत्तिमाह—द्विगेति। अन्यथा द्विगकारो न घटते। परत्र निन्द्यबहु-भाषिणीत्युक्तत्वादत्र स्तुत्यभाषित्वं गम्यते। तदपि विद्यमानपूर्वक-मेवेति तदस्येत्यादिसामान्यार्थस्य न व्यभिचारः॥

३०४०। वाचा। तदस्यास्त्यस्मिन् वेत्यर्थे निन्द्यबहुभाषिणि वाच्ये आलाटाभ्यां साकं वाचो वाचालवाचाटौ साधू भवतः। अत्रापि कुत्सितभाषित्वं विद्यमानपूर्वकमेवेति पूर्ववत् सामान्यार्थस्य न व्यभि-चारः। एवमुत्तरत्रापि कल्प्यम्॥

३०४१। स्वामी। तदस्यास्त्यस्मिन् वेत्यर्थे ईश्वरे वाच्ये आमिना सह स्वस्य स्वामी साधुः स्यात्॥

३०४२। वात। तदस्यास्त्यस्मिन् वेत्यर्थे इना करामागमेन च सह वातातिसारपिशाचानां वातक्यतिसाकिपिशाचकिनः साधवो भवन्ति।

३०४३ । रामकृष्णादुपतापाद्गर्ह्याद्प्यरामात् प्राणिस्थादिनिर्न्नतु मतुः ।

कटकवलयी, कुष्ठी, ककुदावर्त्ती । 'प्राणिस्थात्' किम् ? पुष्पफलवान् ॥ ३०४३ ॥

३०४४ । प्राण्यङ्गान्नेष्यते ।

पाणिपादवती । आरामात् किम् ? मूर्च्छावती ॥ ३०४४ ॥

३०४५ । पूरणाद्वयसि ।

पञ्चमो मासो वर्षो वास्य पञ्चमी ॥ ३०४५ ॥

---

३०४३ । राम । पूर्वोक्तेऽर्थे प्राणिस्थादरामान्तात् रामकृष्ण-समाससिद्धादुपतापवाचकाद्गर्ह्यवाचकाच्चग नाम्न इनिः स्यात्, मतुस्तु न स्यात् । अत्र मतुनिषेधेन पूर्वत्र च परत्रच यत्र प्रतिषेधनियमयोरभावस्तत्र सर्वत्रैव मतुरिति ज्ञापितम् । कटवलयावस्य स्तोऽस्मिन् वेति कटवलयी कुष्ठमस्यास्त्यस्मिन् वेति कुष्ठी । एवं ज्वरी । ककुदं तालु तस्यावर्तं कुत्सितभ्रमणं ककुदावर्तं तदस्यास्त्यस्मिन् वेति ककुदावर्त्ती हयः । प्राणिस्थादिति किं किमर्थम् । पुष्पफले अस्य स्तोऽस्मिन् वेति पुष्पफलवानित्यत्र मतुरेव ।।

३०४४ । प्राण्य । पूर्वोक्तेऽर्थे प्राणिस्थादरामात् प्राण्यङ्गादिनिर्नेष्यते । रामकृष्णादित्यनेन प्राप्ते निषेधोऽयम् । पाणिपादावस्य स्तोऽस्यां वेति पाणिपादवती । उपतापत्वात् प्राप्तेरेकाङ्गवैकुल्येन व्यावर्तयति अरामात् किमिति । मूर्च्छास्या अस्त्यस्यां वेति मूर्च्छावती ।।

३०४५ । पूर । पूर्वोक्तेऽर्थे वयसि वाच्ये पूरणप्रत्ययान्तादिनि स्यात् । वाक्येऽस्येत्यस्मात् परमस्त्यष्मिन् वेति योज्यम् । पञ्चमी वालः ।।

३०४६। दशमी वृद्धे।
साधुः ॥ ३०४६ ॥

३०४७। सुखादिभ्यश्च।
सुखी, दुःखी ॥ ३०४७ ॥

३०४८। धर्मशीलवर्णान्ताच्च।
वैष्णवधर्मी, वैष्णवशीली, ब्राह्मणवर्णी ॥ ३०४८ ॥

३०४९। हस्ती जातौ।
साधुः ॥ ३०४९ ॥

३०५०। वर्णी ब्रह्मचारिणि, पुष्करिण्यादयो देशे।
साधवः ॥ ३०५० ॥

---

३०४६। दश। तदस्यास्त्यस्मिन् वेत्यर्थे वृद्धे वाच्ये इना सह दशमीत्यस्य दशमी साधुः स्यात्। दशमी दशा मृत्युरस्यास्त्यस्मिन् वेति दशमी। वयःप्रतीतिरत्र नास्तीति निपातः कृतः ॥

३०४७। सुखा। पूर्वोक्तेऽर्थे सुखादिभ्यश्च इनिः स्यात्। सुखमस्यास्त्यस्मिन् वेति सुखी। एवं दुःखी पिपासी क्रोधी मनःसुखी मनोदुःखीत्यादयः ॥

३०४८। धर्म। पूर्वोक्तेऽर्थे धर्मशीलवर्णा अन्ते यस्य तस्माच्च नाम्न इनिः स्यात्। वैष्णवधर्मोऽस्यास्त्यस्मिन् वेति वैष्णवधर्मी। एवं वैष्णवशीली ब्राह्मणवर्णी ब्राह्मणधर्मी क्षत्रीयधर्मीत्यादि ॥

३०४९। हस्ती। तदस्यास्त्यस्मिन् वेत्यर्थे जातौ वाच्ये इना सह हस्तस्य हस्ती स्यात्। करी दन्ती च गजे इति वक्तव्यम् ॥

३०५०। वर्णी। तदस्यास्त्यस्मिन् वेत्यर्थे ब्रह्मचारिणि वाच्ये इना साकं वर्णस्य वर्णी साधुः स्यात्। पुष्क। पुष्करिण्यान्तु खातं स्यादित्यमरोक्तदिशा पुष्करिण्यादय इत्यत्र लिपिकरप्रमादात् पुष्करण्या-

३०५१। बाहुवलि-ऊरुबलिनौ, सर्ववली सर्वजीवी सर्ववेशी च।

साधवः ॥ ३०५१ ॥

३०५२। अर्थी याचके।

साधुः। तदन्ताच्च—धनार्थी ॥ ३०५२ ॥

३०५३। वलादेर्मतुर्वा।

वलवान्, वली ; उत्साहवान्, उत्साही ॥ ३०५३ ॥

दय इति लक्ष्यते *। तदस्यास्त्यस्मिन् वेत्यर्थे देशे वाच्ये इना सह पुष्करादीनां पुष्करिण्यादयः साधवो भवन्ति। पुष्करमस्या आस्त्यस्यां वेति पुष्करिणी वापी। एवं पुष्करी तड़ागः, पुष्करि कुण्डम्। पुष्कराणि तीर्थानि सन्त्यस्मिन् देशे इत्यत्र इन् न स्यादनभिधानात्। एवं तमालि प्रभृतयः। देशादन्यत्र तु पुष्करवान् गजः। पुष्कर तमाल पद्मोत्पल नल शालूक कुमुद कल्लोलाः। यवसशिरीषकरीषा मृणालविषकर्दमास्तरङ्गश्च। कैरवमिति विज्ञेयं प्रयोगतः पुष्करादिरन्योऽपि। तेन काश्मीरिशृङ्गिप्रभृतयश्च भवन्तीति ॥

३०५१। बाहु। तदस्यास्त्यस्मिन् वेत्यर्थे इना सह बाहुवलोरुवलयोर्बाहुवल्यूरुवलिनौ साधू भवतः। सर्व। तदस्यास्त्यस्मिन् वेत्यर्थे इना सह सर्ववलादीनां सर्ववली सर्वजीवी सर्ववेशी च साधवो भवन्ति ॥

३०५२। अर्थी। तदस्यास्त्यस्मिन् वेत्यर्थे याचके वाच्ये इना साधुः स्यात्। तद। पूर्वोक्तेऽर्थे तदन्तात्तन्नामान्ताच्च इन् स्यात्। धनार्थमस्यास्त्यस्मिन् वेति धनार्थी ॥

३०५३। वला। पूर्वोक्तेऽर्थे वलादेर्मतुर्वा स्यात् पक्षे प्राकरणिक

* पाठसौकर्याय लिपिकरप्रमादं अस्वीकृत्य अमरसम्मतः साधुः पाठ एव संयोजितः। लिपिकरप्रमादपाठस्तु पुष्करण्यादय इत्येव मन्तव्यः। (श्रीरासः) ॥

३०५४। कंयु-शंयु-शुभंय्वहंय्वादयः।

साधवः। आदिग्रहणात्—कम्बः, शम्बः, कम्भः, शम्भः; कन्तिः, शन्तिः; कन्तः, शन्तः; कन्तुः, शन्तुः; कंयः, शंयः ॥ ३०५४ ॥

३०५५। तुन्दि-वलि-वटिभ्यो भः।

तुन्दिभः। पामादित्वाद् वलिनश्च ॥ ३०५५ ॥

उक्ता मत्वर्थीयाः।

---

इनिश्च। वलमस्यास्त्यस्मिन् वेति वलवानित्यादि। आकृतिगणोऽयम ॥

३०५४। कंयु। तदस्यास्त्यस्मिन् वेत्यर्थे यप्रत्ययेन सह कमादीनां कंयादयः साधवो भवन्ति। कं वारिणि च मूर्धनीति, विकल्पे कं किमूत चेति चामरोक्तात् कमित्यव्ययं तदस्यास्त्यस्मिन् वेति कंयुरिति। दिष्ट्यां शमुपजोषञ्चेत्यप्यमरोक्तात् शमिति चाव्ययं तदस्येत्यादिपूर्ववत्वाक्यं शंयुरिति। अनयोः साहचर्यात् शुभमप्यव्ययं, ततस्तदस्येत्यादिपूर्ववत् शुभंयुरिति। मङ्गलार्थशुभशब्दाद् युमुम् चेत्येके। अहङ्कारार्थाहमप्यव्ययं तेन पूर्ववदहयुरित्यपि। आदीति सूत्रे आदिशब्दोपादानात् कम्बादयः संयान्ता द्वादशापि भवन्तीत्यन्वयः। कंशंभ्यां भ-व-ति-त-तु-या इति क्रमदीश्वरसूत्रम्। एवं सर्वेषाञ्च। तेन कमस्यास्त्यस्मिन् वेति कम्ब इत्यादौ 'मो विष्णुचक्रं विष्णुजने' इत्यनेन विष्णुचक्रं विधाय विष्णुचक्रस्य हरिवेणुरिति हरिवेणुः कर्तव्यः। मतान्तरन्तु न किञ्चित्। (कम्भिः शम्भिः, कम्भुः शम्भुः, इति च पाठो मतान्तरे) ॥

३०५५। तुन्दि। पूर्वोक्तेऽर्थे तुन्दिवलिवटिभ्यो भः स्यात्। तुन्दिरस्यास्त्यस्मिन् वेति तुन्दिभ इति। एवं वलिभः वटिभः। वलिशब्दस्य पामादिगणपाठात् नप्रत्ययेन वलिन इत्यपि स्यादित्याह-पामेति। तुण्डिमप्यत्र कश्चित् पठति। तुण्डिर्वृद्धनाभिरुच्यते। अयमिन्नन्तोऽप्यस्ति, तेन तुण्डिभ इति च। उदन्वानुदधौ चेति वाच्यम्। उदकमस्यास्त्यस्मिन्

अतपरं स्वार्थिकाः।

अत्र 'प्रथमनिर्दिष्टविष्णुभक्त्यन्तात् प्रत्ययः' ( २३२२ ) इति निवृत्तं, विभाषा त्वनुवर्तते—

वेति मतुरुदकस्योदन् मतोर्मस्य वश्च निपातात् उदन्वान् समुद्रः। चकारात् उदन्वान्नाम ऋषिश्च। विषूचोनो विषुश्चेति वक्तव्यम्। तदस्येत्याद्यर्थे विषूचो नरामः स्यात्तस्य विषुश्च। विष्वगस्यास्त्यस्मिन् वेति र-ष-ऋद्वयाभ्यामित्यनेन णत्वं विषुण इति। औत्सर्गिको मतुश्चात्र दृश्यत इति विष्वग्वानित्यपि। अर्णसो वः स-हरश्चेति वक्तव्यम्। अर्णोऽस्यास्त्यस्मिन् वेति अर्णवः समुद्रः, रूढ़ित्वादत्र मतुर्न स्यात्। गाण्डग्रजकाभ्यां वः संज्ञायामिति वाच्यम्। गाण्डग्रस्यास्त्यस्मिन् वेति गाण्डीवमर्जुनधनुः। वामनादपि दृश्यते, तस्मात् गाण्डिवमिति च *। अजो विष्णुः को ब्रह्मा तावस्य स्तोऽस्मिन् वेति तद्धितबाहुल्यात् कस्य गश्चेत्यजगवं शिवधनुः। अजकवमित्यन्ये। मेधारथाभ्यामिनश्चेति वक्तव्यम्। मेधाऽस्यास्त्यस्मिन् वेति मेधिनः। एवं रथिनः। मतुरप्यत्रेष्यते, तेन मेधावान् रथवानिति च। धनादिनि ठाबुत्तमर्ण इति वाच्यम्। धनमस्यास्त्यस्मिन् वेति धनी धनिकश्चेति। गोमी पूज्ये साधूरिति वाच्यम्। गौरस्यास्त्यस्मिन् वेति गोमी व्रजनाथः। विमूक्तादेः इति वक्तव्यम्। विमुक्तोऽस्यास्त्यस्मिन् वेति वैमुक्तो द्वारकेशवण इति वक्तव्यम्। विमुक्तोऽस्यास्त्यस्मिन् वेति वैमुक्तो द्वारकादिर्वेदादिवा। निद्रादेरालुश्चेति वाच्यम्। निद्रास्यास्त्यस्मिन् वेति निद्रालुः। एवं तन्त्रालुः श्रद्धालुः कृपालुः। चशब्दात् निद्रावानित्याद्यपि। अच्छवाकादेश्छः सूक्तसाम्नोरिति वक्तव्यम्। अच्छवागस्यास्त्यस्मिन् वेति अच्छवाकीयं सूक्तं साम वा। अध्यायानुवाकयोश्छस्य हरश्च। अध्यायानुवाकयोर्वाच्ययोरच्छवागादित्वात् प्राप्तछस्य हरो वा स्यात् पक्षे स्थितिश्च। गर्धभाण्डोऽस्यास्त्यस्मिन् वेति गर्धभाण्डीयो गर्धभाण्डोऽध्यायोऽनुवाको वा। एवं यथासम्भवमन्यान्यूह्यानि। मत्वर्थीयान् समापयति उक्ता इति॥

* अमरकोषे च रूपद्वयं दृश्यते। कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ। इति क्षत्रियवर्गे॥

३०५६। कृष्णनामबहुभ्यां, न तु द्व्यादिचतुर्भ्यः।

प्रभुरयं प्राग्दिशीयः। स चायं पूर्वविष्णुभक्तिवन्मन्तव्य ॥ ३०५६ ॥

३०५७। पञ्चमीतस्तसिः।

अन्तरङ्गस्वादेर्महाहरः। सर्वतः, विश्वतः, ततः, यतः, बतहुः ॥ ३०५७ ॥

---

अतः। अर्थविशेषेषु प्रत्ययान् दर्शयित्वा इदानीं स्वार्थिकान्दर्शयितुं प्रक्रमते अत इति। अतो मत्वर्थीयेभ्यः परं परस्मिन् स्वस्मिन्नर्थे भवाः प्रत्यया दर्श्यन्त इत्यर्थः। प्रकृतिलिङ्गवचनान्यतिक्रम्य ये वर्तन्ते ते स्वार्थिका इति प्रथा। प्रथमनिर्दिष्टविष्णुभक्त्यन्तात् प्रत्यय इति यदुक्तं तन्निवृत्तं विभाषा पुनरनुवर्तत एवेति प्रतिपादयति अत्रेति। अत्र स्वार्थेऽर्थे ॥

३०५६। कृष्ण। स्वार्थेऽर्थे कृष्णनामसंज्ञकात् बहुशब्दाच्च परेभ्य प्रत्ययेभ्यो यथास्वं कार्याणि स्युः। द्व्यादिचतुर्भ्यस्तु न स्युः। द्व्यादीत्यत्र चतुर्भ्य इति पदेन युष्मदस्मद्भवतां ग्रहणम्। प्रभुनामायमधिकार इत्याह—प्रभुरिति। दिशः प्राक् प्राग्दिक् तत्र भवः प्राग्दिशीयः, अयमधिकारः प्राग्दिशीयः स्यात्, दिक् पूर्वविद्यमानत्वात्। स चेति सोऽयं दिशः प्राग्विहितः प्रसिद्धाचारात् पूर्वविष्णुभक्तिसदृशो मन्तव्य इत्यन्वयः। अनेन पञ्चम्यादीनामुत्तरे ये यत्र विधास्यन्ते ते तत्सदृशा इति प्रतिपादितम्। तेन च प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इत्यनेन प्रकृतिप्रत्यययोरेकार्थताप्रतिपादनात् वक्ष्यमाणपञ्चम्यादिभ्यः परविहितकार्याणां स्वार्थिकत्वम् ॥

३०५७। पञ्च। स्वार्थे कृष्णनामबहुभ्यामुत्तरस्याः पञ्चम्या उत्तरस्तसिः स्यात् द्व्यादिचतुर्भ्यस्तु न। पूर्वस्य विष्णुपदवत्त्वमित्युक्तदिशा पूर्वस्य विष्णुपदवत्ता। तस्यादिप्रत्ययानां समासावयवत्वात् पूर्वस्य विष्णुपदवत्त्वाच्च अन्तर्भिन्नपदत्वेऽप्येकनामेत्यनेन समासः। प्रकृत्याश्रितप्रकृतावपीत्यनेन पञ्चम्यादीनां पूर्वकृतत्वादन्तरङ्गत्वम्। एतत् सर्व

३०५८। सप्तमीतस्त्रः।

सर्वत्र बहुत्रः॥ ३०५८॥

३०५९। एतदोऽतोऽत्र, इदम इत इह, अदसोऽमुतोऽमुत्र, किमः कुतः कुत्रेति।

तसत्राभ्यां त्रिष्वपि लिङ्गेषु साधवः॥ ३०५९॥

---

मनोगतं स्पष्टयन्नाह—अन्तरङ्गेति। अन्यथैकपदत्वारम्भाभावेऽन्तरङ्गेत्युक्तमनर्थकं स्यात्। कार्यपूर्वं पञ्चमी स्यात् कार्यस्थाने तु षष्ठिका। इत्यनुसारेण पञ्चम्या इति षष्ठ्यन्तनिर्देशेनापि प्रयोगसिद्धौ यत् पञ्चमीत इति कृतं तद्विष्णुपदवत्त्वादीनां ज्ञापनार्थं शिष्याणां व्युत्पत्तिवैचित्र्यार्थञ्च। सर्वस्मादिति सर्वतः। एवं विश्वतः। तस्मादिति ततः। स चायमित्यनेन पूर्वस्वादिवन्मननादत्र तदादिसप्तानां संसारस्याराम इत्यनेन संसारस्यारामः। एवं यतः। पञ्चमीत इति पञ्चमीमात्रनिर्देशात् बहुभ्य इति बहुतः। एवं ब्रह्मलक्ष्म्योरपि, यतो वाच्यलिङ्गलक्ष्म्योस्त्रादौ पुरुषोत्तमवत्त्वमुक्तम्। नत्वित्यनेन निषेधात् द्वत इत्यादिकं न स्यात्। केचित्तु द्वितः, युष्मत्तः, अस्मत्त इति यदुदाहरन्ति तदस्माकं नाभीष्टं द्वित इत्यत्र संसारस्यारामाभावात् भवतु इत्यदर्शनात् भाष्यविरोधाच्च। किञ्च, युष्मत्तः, अस्मत्त इति छान्दसं, द्वाभ्यामागत इति तस्प्रत्ययान्तो द्वित इति सर्वेषां मतम्॥

३०५८। सप्त। स्वार्थे सर्वनाम-बहुभ्यामुत्तरस्याः सप्तमीतः परस्त्रः स्यात्, द्व्यादिचतुर्भ्यस्तु न। अत्रापि सप्तमीत इति पूर्ववत् समाधेयम्। सर्वस्मिन्निति सर्वत्र, बहुष्विति बहुत्र। एवमाद्यन्तोदाहरणात् विश्वत्र तत्र यत्रेति च

३०६९। एत। वृत्तिमाह—तसेति। अविशेषात् त्रिष्वपि लिङ्गेषु एकत्वद्वित्वत्वेषु पञ्चमीसप्तम्योरादेशाभ्यां तस्त्राभ्यां सह एतदादीनां क्रमेणातोऽत्रादयः साधवो भवन्ति। यद्यपि प्रकृतिप्रत्यययोः सहैवादेशो

३०६०। कुत्रस्य क्वेति च, इतरत्रापि भवदादियोगे दृश्यते।

सभवान्, ततोभवान्, तत्रभवान्। ततो दीर्घायुषं ब्रवीमि तत्र वा। ततो देवानां प्रियेण कृतं तत्र वा इत्यादि॥ ३०६०॥

३०६१। कालेऽधिकरणे सर्वदादयः।

साधवः॥ ३०६१॥

---

निपात इत्येकदादेशेनावयवभेदाभावास्तथापि एतदोऽरामः पञ्चमीसप्तम्योस्तस्त्रौ। इदम इरामः पञ्चमीसप्तम्योस्तस्त्रौ। अदसोऽमुः पञ्चमीसप्तम्योस्तस्त्रौ। किमः कुः पञ्चमीसप्तम्योस्तस्त्रावित्यवयवभेदः कल्पनीयः। एतस्मात् एताभ्यां एतेभ्य इति अतः। एतस्मिन् एतयोः एतेष्विति अत्रेत्यादीनि यथासम्भवं वाक्योदाहरणानि॥

३०६०। कुत्र। कुत्रेत्यस्य कु इति च साधुः स्यात्। चशब्दोऽत्र वार्थ इति, पक्षे कुत्रेत्यस्यापि स्थितिः। पञ्चमीसप्तमीभ्यामन्यस्वादिविषयेऽपि तस्त्राविति सर्वेषां मतमालोक्याह—इतरेति। भवदादियोगे सति कृष्णनामादिभ्यः पञ्चमीसप्तमीभ्यामितरत्रापि प्रथमादिस्वादिष्वपि तस्त्रौ भवत इति दृश्यते। अतएव सभवानिति वाक्ये तच्छब्दस्य ततोभवान्, तत्रभवानिति। एवं सर्वो भवान् सर्वत्रभवान्, योभवान्, यतोभवान्, यत्रभवानित्यादि। भवदादीत्यादिशब्देन दीर्घायुषादीनां ग्रहणमिति सूचयन्नाह—तत इति। तं दीर्घायुषं ब्रवीमीति वाक्ये ततो दीर्घायुष वा ब्रवीमीति। एवं सर्वं दीर्घायुषं ब्रवीमीति सर्वतो दीर्घायुषं सर्वत्र दीर्घायुषं वा ब्रवीमीत्यादि पूर्ववत्। तेन देवानां प्रियेण कृतं व्यर्थमिति वाक्ये ततस्तत्र वा देवानां प्रियेण कृतमिति। इत्यादीत्यादिपदेन तस्मै देवाय दत्तं हविरिति ततो देवाय दत्तं हविस्तत्र वा। तस्य देवस्येदं हविरिति ततो देवस्येदं हविस्तत्र वेति। एवं द्वित्वबहुत्वयोरप्युह्यम्। तथा सर्वो भवानित्यादिवाक्ये सर्वतोभवान् सर्वत्र वेति। यो भवानित्यादिवाक्ये यतोभवान् यत्र वेत्यादि च॥

३०६२। सर्वस्य सर्वदा सदा, तदस्तदा तदानीं तर्हि, यदो यदा यर्हि, इदम एतर्हि इदानीमधुना, किमः कदा कर्हीति, विशेष्योपादाने तु न स्यात्।

सर्वत्र काले ॥ ३०६२ ॥

---

३०६१। काले। कालेऽधिकरणे वाच्ये दादिप्रत्ययेन साकं सर्वादीनां यथासम्भवं सर्वदादयः साधवो भवन्ति ॥

३०६२। सर्व यद्यपि काल इति सामान्यसूत्रेणैव सर्वे प्रयोगाः सिध्यन्ति, तथापि प्रकृतिप्रत्ययानां भेदार्थं कियतीनां विशेषकरणेन तदन्येषां दाप्रत्ययसिद्धावशिष्टार्थञ्च विवरणसूत्राण्याह- सर्वेत्यादि। सर्वस्मिन् काल इत्यर्थे दाप्रत्ययेन सह सर्वस्य सर्वदा सदेत्येतौ साधू भवतः। निपातफलमत्र दाप्रत्यय पक्षे सर्वस्य स इत्यादेशश्च। तद। तस्मिन् काल इत्यर्थे दा दानीं र्हिभिः सह तच्छब्दस्य तदा तदानीं तर्हीत्येते साधवो भवन्ति। यदो। यस्मिन् काल इत्यर्थे दा-र्हिभ्यां सजूः यच्छब्दस्य यदा यर्हीत्येतौ साधू भवतः। तदादिऽप्तानामित्यनेन तद्-यदोरित्यनयोः संसारस्यारामः। इद। अस्मिन् काल इत्यर्थे र्हि दानीं धुनाभिः सार्धमिदंशब्दस्य एतर्हि इदानीं अधुना इत्येते साधवो भवन्ति। अत्र र्हीत्यादित्रयप्रत्यया इदम एत इ अश्च निपातनादिति। किमः। कस्मिन् काल इत्यर्थे दार्हिभ्यां सह किम्शब्दस्य कदा कर्हीत्येतौ साध भवतः। किमः कश्चात्र निपातफलम्। विशे। विशेष्य ग्रहणे सति कालेऽधिकरणे वाच्ये सर्वदादिस्तु न स्यात्। सर्वस्मिन् काल इति सर्वत्र काल इत्यत्र तु पूर्वोक्तत्रप्रत्यय एव। एवं तत्र काल इत्यादि च। कालेऽधिकरणे सर्वदादयः सप्तम्यामेवेत्यन्ये केचित्तु सप्तम्या अन्यैर्दादिभिरिति ज्ञेयम्। अन्यर्हि अमुर्हि चेति कश्चिदिच्छति। काल इति किं सर्वस्मिन् देश इत्यादौ न स्यात्। अनद्यतने र्हिरन्यतरस्यामिति पाणिनिलक्षणे सर्वनामभ्य एव र्हिः प्राप्नोति, तथापि प्रयोगदर्शनेन व्यवस्थितमिति सूचयद्भिश्चन्द्रवर्धमानादिभिः किं यत्तदेतदन्येभ्य एव

३०६३। सर्वेण प्रकारेणेत्यादौ सर्वथादयः।

सर्वथा, यथा, तथा, इत्थं, कथम् ॥ ३०६३ ॥

३०६४। सद्य आदयश्च।

र्हिविहितः। जयादित्येन अन्यर्हीति नोदाहृतम्। जुमरनन्दिनातु अमुर्हीति सुवन्तपादे उदाहृतमिति गोयीचन्द्रेणोक्तम् * ॥

३०६३। सर्वे। सर्वेण प्रकारेणेत्यादावर्थे थादिभिः सह सर्वादीनां यथास्वं सर्वथादयः साधवो भवन्ति। प्रकारः सादृश्येऽप्यस्ति यथायं विष्णुदत्त प्रकार इति सामान्यस्य भेदके धर्मेऽप्यस्ति स तु द्रव्याश्रितः यथा निपुणत्वादिः। अत्र पुनर्द्वितीयार्थस्य ग्रहणमिति सर्वैः। सर्वविष्णुभक्त्यर्थेऽयं विधिरिति सूचनार्थं सूत्रे इत्यादावित्युपन्यस्तम्। तस्मात् सर्वेण प्रकारेण सम्पादयति, सर्वं प्रकारं करोति, सर्वस्मै प्रकाराय ददाति, सर्वस्मात् प्रकारात् भुङ्क्ते, सर्वस्य प्रकारस्य स्निह्यति' सर्वस्मिन् प्रकारे तुष्यतीत्यर्थे सर्वथेति। एवं येन प्रकारेणेत्याद्यर्थे यथेति। एवञ्च, तथा एतथा, उभथा उभयथा, अन्यथा अन्यतरथा, इतरथा, अमुथा, अपरथेत्यादिप्रयोगदर्शनादन्यदप्यूह्यम्। इत्थमिति अनेन प्रकारेणेत्यादावर्थे निपातादिदमस्थम् तस्य इदादेशश्च। कथमित्यत्रापि केन प्रकारेणेत्यादावर्थे निपातात् थम स्वादिस्थानीयत्वात् थमस्तस्मिन् परे 'किमः को विष्णुभक्तावि'त्यनेन किमः कादेशः। थापवादावेतौ। एवं द्वित्वबहुत्वयोरपि सर्वथादयो यथास्वमूह्याः। एतच्छब्दस्य इत्थमित्येके तन्मते एतथेति न स्यात् ॥

३०६४। सद्य। अहरादौ वाच्ये द्य आदिभिः सह समानादीनां

* गवा वृषभेण गच्छतीति हनजनाद्गमादेर्ड इति गोयः शिवस्तस्य पत्नी गोयी दुर्गा, तां चन्दयति आह्लादयतीति गोयीचन्द्रः। इत्यस्मत्पूज्यचरणाध्यापकगोलोकगत-ॐकृष्णचन्द्रगोस्वामिकृता व्याख्या। (श्रीरासः) ॥

समानेऽहनि सद्यः ; पूर्वस्मिन् वत्सरे परुत् ; पूर्वतरे वत्सरे परारि, परिरि ; अस्मिन् वत्सरे ऐदमः ; परस्मिन्नहनि परेद्यवि अस्मिन्नहनि अद्य ; पूर्वस्मिन्नहनि पूर्वेद्युः ; उभयस्मिन्नहनि उभयेद्युः, उभयद्युः ॥ २०६० ॥

उक्ताः प्राग्दिशीयाः ।

३०६५ । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो

---

सद्य आदयश्च साधवो भवन्ति । वाक्योदाहरणानि स्वयमाह—समान इत्यादिनोभयद्युरित्यन्तेन । तथातु निपातसामर्थ्यात् प्रकृति-प्रत्ययविभाग आदेशश्च यथसम्भवं कल्प्यते । सद्य इति समानशब्दा-द्द्यस्तस्मिंस्तस्य सादेशश्च । सद्यः निमित्तनिमित्तिनो समानेऽहनीति तु निर्गलितार्थः । यथोक्तमन्यैः । सद्यः प्राणहरं मर्मताड़नमिति यस्मि-न्नहनि मर्मताड़नं तस्मिन्नेवाहनि प्राणहरणमित्यर्थः । परुदिति पूर्व-शब्दादुत् तस्मिंस्तस्य परादेशश्च । परारीति पूर्वतरशब्दादारि तस्मिं-स्तस्य परादेशश्च । एवमरिप्रत्ययेन साकं पूर्वतरस्य परिरीति च । ऐदम इति इदम्शब्दान्नृसिंहसमस् तस्मिंस्तस्य दम्भागहरश्च । आदि-सर्वेश्वरस्येति वृष्णीन्द्रः । ईश्वरहरिमित्रेति षत्वम् । परेद्यवीति पर-शब्दादेद्यवि अ-इद्वयस्येत्यरामहरः । अद्य इति इदशब्दात् द्य तस्मिं-स्तस्यारामादेशश्च । पूर्वेद्युरिति पूर्वशब्दादेद्युस् अ-इद्वयस्येत्यरामहरः । एवमपरस्मिन्नहनीत्यादिवाक्ये अपरेद्युः, उत्तरेद्युः, अधरेद्युः, अन्येद्युः, अन्यतरेद्युः, इतरेद्युरित्येतेऽपि केनचिदुदाह्रियन्ते । उभयेद्युरित्यादिद्वयेतु उभयशब्दादेद्युस् द्युस् चेति । विनञ्भ्यां नानाणाविति वक्तव्यम् । ( संक्षिप्तसारे तद्धितपरिशिष्टे ३६८ ) । लोकप्रसिद्धार्थे वि नञ् इत्येताभ्यां यथासङ्ख्यं नाना-णौ भवतः । विना नाना । एते सर्वेऽ-व्ययाः । प्राग्दिशीयान् समापयति उक्ता इति ॥

३०६५ । दिक् । दिग्देशकालेष्वर्थेषु वर्तमानेभ्यो दिग्वाचि-शब्देभ्यः परवर्तिनीभ्यः सप्तमीपञ्चमीप्रथमाभ्य उत्तरोऽस्तातिः स्यात् ।

दिग्देशकालेष्वस्तातिः, पूर्वाधरावरेभ्योऽसिश्च, पूर्वादीनां पुर अध अव तयोः, अवस्त्वस्तातौ वा।

पूर्वस्यां दिशि, पूर्वस्याः दिशः, पूर्वा दिक्, पुरस्तात् पुरः। एवम् अधस्तात् अधः। अवस्तात्, अवरस्तात् अवः। एवं देशकालयोरपि। धाप्रत्ययं यावदस्तातिप्रत्ययैकविषये विधिः ॥ ३०६५ ॥

३०६६। दक्षिणोत्तराभ्यामतसिः।

दक्षिणतः ॥ ३०६६ ॥

---

सिद्धोपदेशे विरिञ्चौ चेत्यनेन इराम इत्। विभूरयमिति गम्यम्। सप्तम्यादिभ्योऽस्तातेर्विधानात् पूर्वविष्णुभक्तिवत्त्वं सूचितम्। तेनान्तरङ्गस्वादेर्महाहर इत्यनेन सप्तम्यादेर्महाहरः। पूर्वा। दिग्देशकालेषु वर्तमानेभ्यः पूर्वाधरावरेभ्यः परवर्ति सप्तमीपञ्चमीप्रथमाभ्यः उत्तरोऽसिः स्यात् चकारादस्तातिरपि। तयोरस्तात्यस्योः परयोः पूर्वादीनां स्थाने क्रमेण पुर अध अव इत्येते विरिञ्चयो भवन्ति। अस्तातौ परे त्ववरस्याव इत्यादेशो वा स्यात्। वाक्योदाहरणानि क्रमेण दर्शयति पूर्वस्यामिति। किञ्च, अपेक्षकत्वात् दिशि दिशो दिगित्येतेभ्यो यथायोग्यं वसति आगतः रमणीयाः इत्येताः प्रयोक्तव्याः। तथा दिक् रमणीयेत्यस्मात् परमिति वाक्ये इत्यपि योज्यम्। पुरस्तादित्यादौ अ-इद्वयस्येत्यनेनारामहरः। एवमित्यतिदेशेन पूर्वस्मिन् देशे काले वा वसति पूर्वस्मात् देशात् कालाद्वा आगतः, पूर्वो देशः कालो वा रमणीय इत्यादि वाक्ये पूर्ववत् पुरस्तादादयो भवन्तीति सूचितम्। पूर्वविष्णुभक्तिवत्त्वात् वाक्यवत् पुरस्तात् वसति आगतः रमणीय इत्यादयोऽपि ज्ञेयाः। एवं द्वित्वबहुत्वयोरपि सर्वत्र। गम्यमानविभ्वधिकारफलभूतपारिभाषिकव्यवस्थामाह—धाप्रत्ययमिति। यावत् धाप्रत्ययं तावत् अस्तातिप्रत्ययस्य य एकरूपो विषयस्तस्मिन् विधिर्विधानम् ॥

३०६६। दक्षि। दिग्देशकालेषु वर्तमानाभ्यां दक्षिणोत्तराभ्या-

३०६७। परावराभ्यां वा।

परतः परस्तात् ॥ ३०६७ ॥

३०६८। अञ्चतेर्महाहरः।

अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्महाहरः स्यात्। तत्र लक्ष्मी-प्रत्ययस्य महाहरः। प्राग्वसतीत्यादि ॥ ३०६८ ॥

३०६९। उपर्युपरिष्टात्।

एतौ अस्तात्यर्थे निपात्येते ॥ ३०६९ ॥

---

मुत्तरस्मात् सप्तम्यादेः परोऽतसिर्भवति। दक्षिणस्यां दिशि वसति दक्षिणस्या दिश आगतः दक्षिणा दिक् रम्येति दक्षिणत इति। एव-मुत्तरतः। पूर्ववत् दक्षिणतो वसतीत्याद्यपि ज्ञेयम् ॥

३०६७। परा। दिग्देशकालेषु वर्तमानाभ्यां परावराभ्यामुत्तर-स्मात् सप्तम्यादेः परोऽतसिर्वा स्यात् पक्षे अस्तातिश्च। परस्यां दिशि वसतीत्यादौ वाक्ये परतः परस्तादिति। एवमवरतः अव-रस्तात्। पूर्ववत् परतो वसतीत्यादि च ॥

३०६८। अञ्च। वृत्तिमाह—अञ्चतीति दिक्शब्दादुत्तरतः सप्त-म्यादेरिति योज्यम्। तत्रेति अस्तातौ महाहरे सतोरयर्थः। लक्ष्मी-प्रत्ययस्य महाहर इति तद्धितमहाहरे इति शेषः। प्राच्यां दिशि वसतीत्यादौ वाक्ये प्राग्वसतीत्यादि। एवं अवाग्वसतीत्यादि, उदग्वसती-त्यादि पराग्वसतीत्यादि च ॥

३०६९। उप। वृत्तिमाह—एताविति। अरि अरिष्टाद्भ्यां सह दिग्देशकालेषु वर्तमानस्योर्ध्वशब्दस्यैतावुपर्युपरिष्टातौ निपात्येते। निपा-तनादत्र अर्यरिष्टातौ ऊर्ध्वशब्दस्य उपश्च। ऊर्ध्वायां दिशि वसति ऊर्ध्वाया दिश आगतः ऊर्ध्वा दिक् रमणीयेति वाक्ये उपरि उप-रिष्टाद्वसतीत्यादिपूर्ववत्। दिगादेरन्यत्र तु ऊर्ध्वे ब्राह्मणे वसतीत्यदौ न स्यादनभिधानात्। अत्रोर्ध्वशब्दो देशाद्युपलक्षिते ब्राह्मणे वर्तते इति।

३०७०। अवरस्य पश्चादस्तातौ साधुः।

पश्चाद्वसत्यागतो रमणीयं वा ॥ ३०७० ॥

३०७१। दिक्पूर्वपदस्य च।

दक्षिणपश्चात्। पश्चभावात्—पश्चार्धो दक्षिणपश्चार्धः ॥ ३०७१ ॥

३०७२। उत्तराधरदक्षिणेभ्य आतिः।

उत्तरात्, अधरात् ॥ ३०७२ ॥

---

एवमस्तात्यर्थ इति सूचनेन अनयोरपि सप्तम्यादेरुत्तरत्र विहितत्वे लब्धे, ऊर्ध्वं देशं गत इत्यत्र न स्यात्। एतदुपलक्षणं सप्तम्यादेरन्यतोऽस्तातिप्रभृतयोऽपि पूर्वत्रोत्तरत्र च न भवन्तीति ॥

३०७०। अव। अस्तातावित्यस्मात् परं विषयेऽयमिति योज्यम्। अर्थात् सप्तम्यादेः परस्यास्तातेरातं विधाय, तेन सह दिगादौ वर्तमानस्यावरस्य पश्चादेशेन पश्चात् साधु स्यात्। अवरस्यां दिशि वसतीत्यादौ वाक्ये पश्चाद्वसतीत्यादि ॥

३०७१। दिक्। पूर्ववदस्तातिनासाकं दिगादौ वर्तमानस्य दिग्वाचि पूर्वपदं यस्य तस्य चावरस्य पश्चात् साधु स्यात्। दक्षिणस्याश्च अवरस्याश्च दिशोर्यदन्तरालमिति वाक्ये दक्षिणपूर्वादयस्तदन्तराले इति पीताम्बरः दक्षिणावरादिक्। तस्यां दिशि वसतीत्यादौ वाक्ये दक्षिणपश्चाद्वसतीत्यादि। एवमुत्तरपश्चाद्वसतीत्यादि च यथास्वमुह्यम्। पश्चाच्छब्दस्य पश्चभावोऽर्धे इत्यनेन विहितः पश्चभावोऽत्र दिक् पूर्वपदस्य भवेन्न वा इत्याशङ्कायामाह—पश्चभावादिति। प्रसङ्गात् पूर्वोदाहरणमप्युपन्यस्तं पश्चार्ध इति। दक्षिणपश्चाद्दिशोऽर्धः दक्षिणपस्चार्ध इति ॥

३०७२। उत्त। दिगादौ वर्तमानेभ्य उत्तराधरदक्षिणेभ्य उत्तरस्मात् सप्तम्यादेः पर आतिः स्यात्। उत्तरस्यां दिशि वसतीत्यादौ

३०७३। अदूरे एनोऽपञ्चम्या वा।

उत्तरात् उत्तरेण वसति रमणीयं वा। अपञ्चम्याः किम् ? व्रजस्य दक्षिणत आगतः ॥ ३०७३ ॥

३०७४। दक्षिणाददूरे आरामः।

दक्षिणा वसति रमणीयं वा ॥ ३०७४ ॥

३०७५। आहिश्च दूरे।

दक्षिणाहि दक्षिणा ॥ ३०७५ ॥

---

वाक्ये उत्तराद्वसतीत्यादि। अधरस्यां वसतीत्यादौ वाक्ये अधराद्वसतीत्यादि। अधरस्यां वसतीत्यादौ वाक्ये अधराद्वसीत्यादि। किञ्च, दक्षिणशब्दस्य काले वर्तने न सम्भवतीति दिग्देशयोरेव वृत्तिर्गृह्यते। तेन दक्षिणस्यां दिशि दक्षिणस्मिन् देशे वा वसतीत्यादौ वाक्ये दक्षिणाद्वसति रमणीयं वेत्यादि ॥

३०७३। अदू। अत्र प्रकृतिर्निर्देशाभावेन पूर्वसूत्रादुत्तरादयोऽनुवर्तन्ते व्यवधानराहित्यात्। तेनादूरे दिगादौ वर्तमानेभ्य उत्तराधरदक्षिणेभ्यः परस्या अपञ्चम्या उत्तर एनो वा स्यात् पक्षे आतिश्च। अदूरायामुत्तरस्यां दिशि वसतीत्यादौ वाक्ये उत्तरादुत्तरेण वसतीत्यादि। एवमधरात्। अधरेण वसतीत्यादि, दक्षिणात् दक्षिणेन वसतीत्यादि च। पञ्चमीवर्जनस्य फलं दर्शयति अपञ्चेति। पञ्चम्या उत्तरस्तु एनो न स्यात्। पञ्चमीतस्तसिरिति तसिश्च स्यादित्यभिप्रायः। व्रजस्यादूराया दक्षिणस्या आगत इति व्रजस्येत्यादि ॥

३०७४। दक्षि। अदूरे दिगादौ वर्तमानाद्दक्षिणादुत्तरस्या अपञ्चम्या आरामः स्यात्। अदूरायां दक्षिणस्यां दिशि वसतीत्यादौ वाक्ये दक्षिणा वसतीत्यादि ॥

३०७५। आहि। दूरे दिगादौ वर्तमानाद्दक्षिणादपञ्चम्या आहिः स्यात्, चशब्दादारामोऽपि। दूरायां दक्षिणस्यां दिशिः वसतीत्यादौ वाक्ये दक्षिणाहि वसतीत्यादि ॥

३०७६। उत्तराच्च।

उत्तरा उत्तराहि वसति रम्यं वा। अपञ्चम्या इति निवृत्तम्। उक्ता अस्तात्यर्थाः। एत एवातस्यर्थाः—यैर्योगे षष्ठी एनेन द्वितीया-षष्ठ्यौ अञ्चुत्तरपदादारामाहियोगे पञ्चमी भवेत्॥ ३०७६॥

३०७७। क्रियाप्रकारवृत्तेः सङ्ख्याया धा।

पञ्चधा हरिमर्चयति, सप्तधा॥ ३०७७॥

३०७८। द्रव्यविभागे च।

एकं द्विधा कुरु॥ ३०७८॥

३०७९। एकधास्थाने ऐकध्यञ्च।

---

३०७६। उत्त। दूरे दिगादौ वर्तमानादुत्तरशब्दाच्चापञ्चम्या आरामाही भवतः। दूरायामुत्तरस्यां दिशि वसतीत्यादौ वाक्ये उत्तरे-त्यादि। अस्तात्यर्थान् समापयति उक्ता इति। अतस्यर्थान् प्रति-पादयति एत इति। यैर्योगे षष्ठी। एनेन द्वितीयाषष्ठ्यौ, अञ्चुत्तर-पदादारामाहियोगे पञ्चमी भवेत्, एत एवास्तात्यर्था इत्ययः॥

३०७७। क्रिया। प्रकारौ भेदसादृश्ये इत्यमरोक्ताद्द्वयोरेवात्र ग्रहणम्। क्रियायाः प्रकारभूता वृत्तिर्यस्यास्तस्याः सङ्ख्याया उत्तरो धा भवति। पञ्च प्रकारान् पञ्चभिः प्रकारैर्वा हरिमर्चयतीति पञ्चधा हरिमर्चयतीति। एवं सप्तधा हरिमर्चयतीति। तथा षड्धा चतुर्धा अष्टधा नवधा विंशतिधेत्यादि। डत्यन्तादिश्च सङ्ख्यावाचीत्यन्ये। तेन कतिधा यतिधा ततिधा बहुधेत्यादि च। डत्यन्त-यत्वन्त-वत्वन्त अप्रचुरार्थबहु असङ्ख्यार्थगणः॥

३०७८। द्रव्य। द्रव्यविभागे च वर्तमानायाः सङ्ख्याया धा स्यात्। एकं द्विभागं कुर्विति एकं द्विधेति॥

३०७९। एक। एकधा स्थाने ऐकध्यञ्च साधु स्यात्। अत्र

साधु। द्विधा-त्रिधा-स्थाने द्वेधा द्वैधमित्यादि च। तसिमा-रभ्य सर्वमेतदन्तमव्ययम् ॥ ३०७९ ॥

३०८०। गर्ह्ये पाशः।

हीनो याज्ञिको याज्ञिकपाशः ॥ ३०८० ॥

३०८१। षष्ठाष्टमाभ्यां णरामारामौ भागे।

षाष्ठः षष्ठो भागः; आष्टमः, अष्टमः ॥ ३०८१ ॥

---

धाप्रत्ययस्य नृसिंह-ध्यकरणमेव निपातफलं, तस्मिन् सति वृष्णीन्द्रस्तु स्वयमेव सिध्येत्। द्वौ राशी एकप्रकारं करोतीति ऐकध्यं करोतीति। एतदुपलक्षणम्। तेन द्विधा त्रिधा स्थाने द्वेधा द्वैधमित्यादि च भवति। इत्यादीत्यादिपदात् त्रेधा त्रैधमिति। अत्र गोविन्दवृष्णीन्द्रौ वृष्णीन्द्र-पक्षे धेत्यस्य वामनश्च निपातफलम्। तस्यन्तमवधीकृत्य एतत्पर्यन्तं सर्वमव्ययमिति स्पष्टयन्नाह—तसिमिति। किञ्च, अव्ययनिरूपणे वदादि-तद्धित इत्युक्तत्वादेतत्सर्वं वदाद्यन्तर्भूतं ज्ञेयम्।

३०८०। गर्ह्ये। गर्ह्यो निन्द्यस्तस्मिन् वर्तमानान्नाम्नः पाशो भवति। येन प्रवृत्तिनिमित्तेन शब्दस्य वृत्तिस्तस्यैव निन्द्यायामयं प्रत्ययस्तदर्थप्रतीतेर्नैकट्यात्। वाक्योदाहरणे स्पष्टे। एवं वैयाकरण-पाशः पाचकपाश इत्यादि। यदि यज्ञे प्रवीणः प्रकारान्तरेण गर्ह्यस्त-त्र तु न भवति। यथा याज्ञिकः कितवः वैयाकरणश्चौर इति। अत्रा-र्थेऽपि भवतीति तु रक्षस्पाशानिति भट्टौ दृश्यते। राक्षसत्वेनात्र न निन्द्यः, किन्तु युद्धेनैव। जातेर्निन्दाया अभावात् द्रव्यस्यैव निन्दायां रक्षस्शब्दात् पाश इति भावः॥

३०८१। षष्ठा। भागे वर्तमानाभ्यां षष्ठाष्टमाभ्यां णरामा-रामौ भवतः। षष्ठो भाग इति षाष्ठ इत्यादिद्वयम्। एवमाष्टम इत्यादिद्वयञ्च॥

३०८२। पश्वङ्गे भागे षष्ठकः।

साधुः॥ ३०८२ ॥

३०८३। भूतपूर्वे केशवचरः।

भूतपूर्वो वैष्णवः वैष्णवचरः ॥ ३०८३ ॥

३०८४। षष्ठ्या रूप्यश्च।

वैष्णवस्य भूतपूर्वो वैष्णवरूप्यो ग्रामः। वैष्णवचरः ॥३०८४॥

३०८५। गुणप्रकर्षयुक्तात्तमेष्ठौ।

अयमेषां कृष्णतमः, अयमेषां पटिष्ठः। अत्र नामजन्यप्रकरणोक्तमनेकसर्वेश्वरस्य संसारहरः इत्यादिकं स्मर्तव्यम् ॥ ३०८५ ॥

---

३०८२। पश्व। पश्वङ्गे भागे वर्तमानस्य षष्ठस्य करामेण सह षष्ठकः साधुः स्यात्। मानरूपे भागेऽयं साधुरित्यन्ये ॥

३०८३। भूत। भूतपूर्वेऽर्थे वर्तमानान्नाम्नः केशवचरः स्यात्। प्राग्भूते चरट् इति केषाञ्चित् सूत्रम्। पूर्वभूत इति प्राग्भूत इत्यर्थः। एवं वैष्णवचरी अर्पितचरीत्यादि। सर्वथाऽतीतत्वमत्रार्थो भूतग्रहणात् यत्र भूतस्य वर्तमानताऽस्ति तत्र न भवति। यथा–ईश्वरो भूतः, प्रागीश्वर आसीदिदानीमप्यस्तीत्यर्थः ॥

३०८४। षष्ठ्या। तत्सम्बन्धिनि भूतपूर्वे वाच्ये षष्ठ्यन्तान्नाम्नो रूप्य स्यात् केशवचरश्च। वैष्णवस्य सम्बन्धी भूतपूर्वः प्राग्भूतो ग्राम इति वाक्ये वैष्णवरूप्य इत्यादिद्वयम् ॥

३०८५। गुण। गुणप्रकर्षयुक्तान्नाम्नस्तमेष्ठौ भवतः। प्रकर्षोऽतिशयोऽत्यर्थ इति पर्यायः। गुणस्य प्रकर्षः गुणप्रकर्षः, तेन युक्त गुणप्रकर्षयुक्तस्तस्मात्। गुणप्रकर्षयुक्तस्तु समानापेक्षको भवति। ते॰ बहूनां मध्ये यस्यैकतरस्य प्रकर्षगुणयुक्तत्वं तस्मादेव इमा॰ति सूचक वाक्यमाह–अयमेषामिति। अयमेषां प्रकर्षः कृष्ण इति शेषः। एत्र-

३०८६। आख्यातात्तमाम्।

भजतितमाम् ॥ ३०८६ ॥

३०८७। द्वयोरेकतरस्य गुणप्रकर्षे तरेयसू।

अयमनयोर्वैष्णवतरः ; पटुतरः, पटीयान्। द्वयोरिति द्विभाग-मात्रपरं, तेन पञ्चमीपक्षेऽपि श्रौघ्नेभ्यो माथुरा आढ्यतराः ॥३०८७॥

---

मुत्तरत्रापि। तथा च अयं कृष्णोऽयं कृष्णोऽयं कृष्ण इत्येषां मध्येऽय-मतिशयः कृष्ण इति कृष्णतमः। एवमयं पटुरयं पटुरयं पटुरित्येषां मध्ये प्रकर्षोऽयं पटुरिति पटिष्ठः। अस्मिन् प्रकरणे णौ इष्ठेमेयःसु परेषु नामधातुप्रकरणोक्तं विशेषादिकमपि चिन्तनीयमित्याह–अत्रेति। नामज-ण्यन्तेत्यनेन नामजधातुर्ण्यन्तो ज्ञेयः, तस्य प्रकरणे उक्तम्। नामजन्यप्रकरणोक्तमिति पाठः क्वचिद्दृश्यते, तथा सति, नामजधातु-प्रकरणोक्तमिति ज्ञेयम्। इत्यादिकमित्यादिपदेन पृथुमृद्वादेर्ऋरामस्य रश्च, क्षिप्रस्य क्षेप इत्यादेर्ग्रहणम्। अतएव पटिष्ट इत्यत्र इष्ठे परे पटुशब्दस्य संसारहरः। एवं कृष्णेष्ठः पटुतम इति च। तथा शुक्लतमः लघिष्ठ इत्यादि ॥

३०८६। आख्या। आख्यातपदेनात्राख्यातान्तो गृह्यते, केवला-ख्यातस्य प्रयोगासम्भवात्। तेन बहूनामाख्यातान्तानां मध्ये एकस्य गुणप्रकर्षत्वे गुणप्रकर्षयुक्तादाख्यातान्तात् तमां स्यात्। यद्यपि क्रियाया गुणविशेषत्वात् न गुणागुणवृत्तय इत्युक्तदिशा गुणप्रकर्षयुक्तता न घटते, तथापि तदाश्रयकर्तु र्भजनादिनैपुण्यगुणप्रकर्षयुक्तत्वस्योपचारात् तद्युक्तत्वं सम्भवतीति ज्ञेयम्। अतएव अयं भजति अयं भजति अयं भजतीत्येषां मध्येऽयं प्रकर्षेण भजतीति भजतितमाम्। एवं पचतितमां पठति-तमामित्यादि। न केवलमयं वर्तमानेऽपि तु भूतभविष्यतोरपीति अभूत्तमां वभूवतमां भवितातमां भविष्यतितमामभविष्यत्तमामित्यादि च ॥

३०८७। द्वयो। द्वयोर्मध्ये एकतरस्य गुणप्रकर्षे सति तद्-युक्तात् तरेयसू भवतः। पूर्ववदत्रापि द्वयोर्मध्ये एकतरस्य गुणप्रकर्ष-

३०८८। आख्यातात्तराम्।

भजतितराम् । इष्ठेयसू गुणवचनादेव, तथैवोदाहृतम् । विन्मत्वोर्हर इति इष्ठेयस्वोरपि दर्शितत्वादगुणवचनेभ्योऽपि तौ

---

युक्तत्वसूचकं वाक्यमाह—अयमिति । अयमनयोः प्रकर्षो वैष्णवो इति, तथा च अयं वैष्णवः अयं वैष्णवः इत्यनयोर्मध्ये प्रकर्षोऽयं वैष्णवः वैष्णवतरः। एवं पटुतरः पटीयानिति । अत्रापि पूर्ववत् पटुशब्दस्य संसारहरः। तथा वैष्णवीयानित्यपि। ननु यदि द्वयोरेकतरस्य गुणप्रकर्षे तरेयसू इति भवता विहितं तर्हि कथं श्रोघ्नेभ्यो माथुरा, आढ्यतरा इति बहुत्वे तरः, इति प्रश्ने सिद्धान्तमाह—द्वयोरिति । द्वयोरिति पदं द्विभागमात्रपरं नतु द्विवचनपरमित्येता द्विभागयोर्मध्ये एकतरभागस्यैकत्वे बहुत्वेऽपि तरो न दोषायेति भावः । तेनेति द्विभाग-मात्रपरत्वेन हेतुनेत्यर्थः। पञ्चमीपक्षेऽपीत्यनेन तु षष्ठीसप्तम्योर्निर्धा-रणे तर इत्याशङ्कापि निराकृता। पञ्चमी चात्र सामान्यतो विशे-षस्य निर्धारणे षष्ठीसप्तम्यौ विशेषतश्चेत् पञ्चम्येवेत्यनेन ज्ञेया ॥

३०८८। आख्या। द्वयोराख्यातान्तयोरेकतरस्य गुणप्रकर्षे तद्युक्ता-दाख्यातान्तात् तरां स्यात् । आख्यातात्तमामित्यत्र यदुक्तं तत्सर्वमत्रापि योज्यम्। तेन अय भ जति अयं भजतीत्यनयोर्मध्ये प्रकर्षेणायं भजतीति भजतितरामित्यादि। केवलगुणवचनादेवेष्ठेयसू भवत इति स्वाभिप्राय-माह—इष्ठ इति । एवशब्दात् परं हेत्वर्थ इति शब्दः प्रयोक्तव्यः। इति तथैवोदाहृतं पटिष्ठः पटीयानित्येवोदाहृतम्। गुणविशिष्टत्वेन केवल-गुणवाचित्वाभावात् कृष्णेष्ठः वैष्णवीयानियानिति तु नोदाहृतम्। मया तु गुणविशिष्टस्यापि गुणगुणिनोरभेदविवक्षया गुणवाचित्वप्रतिपादनात् कादाचित्कप्रयोगदर्शनाच्चोदाहृतमिति । जातिसंज्ञयोस्तु गुणवाचि-त्वाभावेन गुणप्रकर्षयुक्तत्वाभावात् गोतमः देवदत्ततमः ब्राह्मणतरः डित्थतरः इत्यादि न स्यात्। यद्यत्रापि क्रियागुणप्रकर्षो विधीयते, तदा तमतराभ्यां भवितव्यमेव। तेन गौरीतमा कुमारीतमा शवली-

ज्ञाप्यौ ; यथा—अयमेषांस्रजिष्ठः, अयमनयोः स्रजीयान् ; एवमोजिष्ठः, ओजीयान् ; त्वचिष्ठः, त्वचीयान् ; धर्मिष्ठश्च ॥ ३०८८ ॥

---

तरा ब्राह्मणीतरेत्यादि यथास्वं स्यात्। ननु भवतु नामैतदादिकं तमादीनां स्वार्थिकत्वेन गौरीतमादेरुत्तरोऽणकेशवगौरादिभ्य इत्यनेन अरामान्तजातेरित्यनेन च ईप् कथं न स्यात्। सत्यं, श्रूयताम्। अचरमवयस्काः सर्वे गौरादय इत्युक्तमित्यतो रूढ्या येऽचरमवयोवचना वर्णजातिवचनाश्च तेभ्य एव ईप्प्रत्ययः स्यात्। यतो न तु तमतरान्ता-दयोऽचरमवयःप्रभृतिषु रूढ़ा अत एभ्यो न ईप् अजादेराकृतिगणत्वात्तु आवेव। किञ्च, गुणप्रकर्षप्रत्ययान्तात् पुनर्गुणप्रकर्षे द्योत्ये स्वरूप-प्रत्ययो नेष्यते विरूपप्रत्ययस्त्विष्यत एव। यथा कुरूणां युधिष्ठिरः श्रेष्ठतम इत्यादि। श्रीगोस्वामिपादस्तु इष्ठेयसू इत्यत्र नियमं विधाय तथैवोदाहृतमित्युक्त्वापि एतदादिकं परमतं हृदि निधाय तत्रारुचिः सन् ज्ञापकमाह—विन्मत्वोरिति। विन्मत्वोर्हरः इत्यत्र णौ इष्ठेमेयःस्विति परनिमित्तेषु इष्ठेयस्वोरपि दर्शितत्वात् अगुणवाचिभ्योऽपि ताविष्ठेसू ज्ञाप्यौ भवत इत्यर्थः। अतएवागुणवचनात् तौ यथोदाह्रियेते इत्याह—यथेति। अयमेषामिति। अयं स्रग्वी अयं स्रग्वी अयं स्रग्वीत्येषां मध्येऽयं प्रकर्षः स्रग्वीति स्रजिष्ठः। अयमनयोरिति। अयं स्रग्वी अयं स्रग्वीत्यनयोर्मध्येऽयं प्रकर्षः स्रग्वीति स्रजीयान्। एवमिति अयमेषां प्रकर्ष ओजस्वीति ओजिष्ठः। अयमनयोः प्रकर्ष ओजस्वीति ओजीयान्। अयमेषां प्रकर्षस्त्वग्वानिति त्वचिष्ठः। अयमनयोः प्रकर्ष-स्त्वग्वानिति त्वचीयान्। धर्मिष्ठश्चेति। अयमेषां प्रकर्षो धर्मवानित्यर्थः। तथा अयं धर्मवान् अयं धर्मवान् अयं धर्मवानित्येषां मध्येऽयं प्रकर्षो धर्मवानिति च। किञ्च, नामधातुप्रकरणे तत्करोत्याद्यर्थे णिविधौ प्रकरणस्यास्य प्रासङ्गिकत्वात् तत्र यद्यदुक्तं तत्सर्वमिहाप्यायातीति प्रशस्यस्य श्रज्यौ वृद्धस्य वर्षज्यावित्यनेन इष्ठादौ श्रेष्ठः श्रेयान्, वर्षिष्ठः वर्षीयान्, ज्येष्ठः ज्यायानित्याद्यपि यथासम्भवं स्यात्। किन्तु, सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः। इति श्रीहरि-

३०८९। प्रशंसायां रूपः।

वैष्णवरूपः, पण्डितरूपः ॥ ३०८९ ॥

३०९० । आख्याताच्च ।

पचतिरूपम् ; अत्र ब्रह्मत्वमेव ॥ ३०९० ॥

भक्तिरसामृतसिन्धौ ज्यायानिति दर्शनात्, ज्यायानित्येस्य ज्यायान् वा साधुरिति वक्तव्यः। श्रीमज्जीवगोस्वामिपादानां तथैवानुमतत्वाच्च यतस्तत्र पद्ये तथाभूतप्रयोगं दृष्ट्वाप्यत्र विशेषो न कृतः। अन्ये तु प्रशस्यवृद्धयोर्ज्यादेशं कृत्वा नित्यमीयसोरादिलोपमाहुरिति ॥

३०८९। प्रशं। प्रशंसा स्तुतिः। प्रकृतिविशेषणञ्चैतत्। तेन प्रशंसाविशिष्टेऽर्थे वर्तमानान्नाम्नो रूपः स्यात्। अगृहीतार्थविशेषाः प्रत्ययाः प्रकृत्यर्थं विशेषयन्तीत्यतः प्रकृत्यर्थस्यैव ये लिङ्गवचने ते विशेषणस्यापि भवत इति। प्रशस्तः वैष्णवः वैष्णवरूप इति। एवं प्रशस्तः पण्डितः पण्डितरूप इत्यादि ॥

३०९०। आख्या। प्रशंसाविशिष्टेऽर्थे वर्तमानादाख्यातान्ताच्च रूपः स्यात्। प्रशस्तं पठतीति पठतिरुपम्। एवं प्रशस्तं पठतः पठन्तीति पठतोरूपं पठन्तिरूपमित्यादि। 'क्रियाविशेषणं कर्म तच्च ब्रह्मैकवचनं सदानुक्तञ्चे'त्यनेन क्रियाविशेषणस्य ब्रह्मत्वस्यैव सम्भवादाह—अत्रेति। अगृहीतार्थविशेषप्रत्ययानां प्रकृत्यर्थविशेषकरणत्वेन विशेषणत्वे सिद्धे ब्रह्मत्वमेवेति भावः। क्रिया धात्वर्थ इत्युक्तं, सा च द्विधा,—साधकरूपा साधनरूपा, इत्यपि प्रकारान्तरेणोक्तञ्च। अत्र तु 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायेन साधकरूपाया एव ग्रहणात् स्वार्थिकप्रत्ययानां तस्या एव विशेषणत्वं न तु साधनरूपायाः, अतएव सत्तादिक्रियावाचि-भूप्रभृतिधातूनां कर्त्रादिवाच्यभेदेन द्वित्वे बहुत्वेऽपि केवलसत्तादिरूपसाध्यक्रियाया एकत्वात् तस्याः फलभूताया एकरूपकर्मविशेषणात् रूपप्रत्ययान्तादेकवचनमेव द्विबहुवचने च न भवत इति ॥

३०९१। ईषदसमाप्तौ कल्प-देश्य-देशीयाः।

वैष्णवकल्पः, पण्डितदेश्य ॥ ३०९१ ॥

३०९२। आख्याताच्च।

भजतिकल्पम्। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिक्रान्ता अपीति, विष्णुकल्पा लक्ष्मीः, दर्शनकल्पा हरेः स्फूर्तिः, दृष्टि-कल्पं हरेः स्फुरणम् ॥ ३०९२ ॥

३०९३। स्वाद्यन्तात् प्राग्बहुर्वा कल्पार्थे।

---

३०९१। ईष। ईषदसमाप्तिर्मनागूना किञ्चिन्न्यूना इति यावत्। ईषदसमाप्तौ वर्तमानान्नाम्नः कल्पदेश्यदेशीया भवन्ति। किञ्चिन्न्यूनो वैष्णव इति वैष्णवकल्पः। किञ्चिदल्पत्वप्रवृत्तिनिमित्तो वैष्णवोऽत्रोच्यते। एवं वैष्णवदेश्यः वैष्णवदेशीयः। तथा ईषदसमाप्तः पण्डित इति पण्डितदेश्यः पण्डितकल्पः पण्डितदेशीय इत्यादि ॥

३०९२। आख्या। ईषदसमाप्तौ वर्तमानादाख्यातान्ताच्च कल्प-देश्यदेशीया भवन्ति। ईषन्न्यूनं भजतीति भजतिकल्पम्। किञ्चि-दल्पप्रवृत्तिनिमित्ता भजनक्रियात्रोच्यते। एवं भजतिदेश्यं भजति-देशीयं भजतोदेश्यं भजन्तिदेश्यमित्यादि। अत्रापि रूपप्रत्ययान्तवत् लिङ्गवचनकल्पनं योज्यम्। स्वार्थिकप्रत्ययानां प्रकृतिलिङ्गवचनवत्त्वस्य कृचिद्व्यभिचारोऽपि भवतीति सूचयन्नाह-स्वार्थिका इति। प्रकृतित इति षष्ठ्यास्तसिस्तेन स्वार्थिकाः प्रकृतेर्लिङ्गवचनान्यतिक्रान्ता अपि भवन्तीति हेतोर्विष्णुकल्पेत्यादौ लक्ष्मीलिङ्गत्वादीत्यर्थः। विष्णुकल्पा लक्ष्मीरित्यत्र लक्ष्म्यामौपचारिकस्य विष्णुत्वस्य किञ्चिन्न्यूनत्वमिति विष्णोः किञ्चिन्न्यूना लक्ष्मीरिति, तस्य सदृशेति निर्गलितोऽर्थः। एवं दर्शनकल्पेत्यादावपि। वाक्यमर्थञ्च यथायथमूह्यम्। अत्र त्वत्कल्पः पचति त्वत्कल्पो वैष्णवाचार्यः पाचयतीत्याद्यपि कश्चिदुदाहरतीति ॥

३०९३। स्वाद्य। कल्पार्थे वर्तमानात् स्वाद्यन्तान्नाम्नः प्राक्

बहुनारायणा लक्ष्मीः। 'लघुर्बहुतृणं नरः' ( माघः २।५० ) पक्षे, नारायणकल्पा इत्यादि ॥ ३०९३ ॥

३०९४। प्रकारवति जातीयः।

वैष्णवप्रकारवान् वैष्णवजातीयः। तथा जातीयः तज्जातीयः ॥ ३०९४ ॥

---

पूर्वं बहुप्रत्ययो वा स्यात्। पञ्चमी च तदुत्तरे इत्यस्य बाधनार्थं प्रागित्युपन्यस्तम्। बहुनारायणा लक्ष्मीरिति नारायणात् किञ्चिन्न्यूना लक्ष्मीरित्यर्थः। लघुर्बहुतृणं नर इति (माघे २।५०) तृणादपि लघुः क्षुद्रो नर इत्यर्थः। स्वार्थिका इत्यनेन स्वार्थिकप्रत्ययानां प्रकृतिलिङ्गवचनातिक्रमणानतिक्रमणत्वं यदुक्तं तदेव स्पष्टयितुमुदाहरणद्वयं दर्शितम्। तेन पूर्वत्र प्रकृतिलिङ्गवचनयोरतिक्रमणात् लक्ष्मीलिङ्गता परत्र तयोरनतिक्रमणाद्ब्रह्मलिङ्गतेति। ननु बहु ददाति बहु करोतीत्यादौ किञ्चिदूनार्थे बहुशब्दो दृश्यत एव। तेन समासेनैवाभिष्टप्रयोगसिद्धत्वात् सूत्रमिदं व्यर्थमिति यत् तदसत्, यतो गर्तोत्तरपदात् छप्रत्ययेन बहुगर्तीय इत्येव स्यात्, केशवणरामेण तु बाहुगर्त इति न स्यात्। बहुपत्या इत्यत्र समासे निषेधाभावात् हरिसङ्गत्वे 'हरितष्टा ने'त्यनेन नादेशः स्यात्। बहुराजा बहुगौः बहुपन्था इत्यादौ 'राजाहसखिभ्यः' इत्यादिना समासान्तः केशवारामः स्यात्। बहुसर्पिष्पात्रमित्यत्रोत्तरपदस्थत्वात् विष्णुसर्गस्य षरामो न स्यात्। एतदेव चान्द्रादीनामपि मतम्। सूत्रे वाशब्दोपादानात् पक्षे कल्पादयोऽपि भवन्तीत्याह—पक्ष इति। इत्यादीत्यादिपदेन नारायणदेश्या नारायणदेशीयेति ॥

३०९४। प्रका। प्रकारः सामान्यस्य भेदको धर्मः स तु द्रव्याश्रितः, यथा—वैष्णवत्वादि। प्रकारवति वर्तमानान्नाम्नो जातीयः स्यात्। वाक्योदाहरणे दर्शयति—वैष्णवेति। प्रकारार्थे थादय उक्ता अयन्तु प्रकारवतीति विषयभेदात् प्रकारवत्यर्थे तथाशब्दादपि जातीयो भवत्येव। एवमस्मिन्नर्थे तदादेरुत्तरस्य जातीयस्य तर्बाधोऽपि न स्यादि-

३०९५। प्रागिवीयात् कः, अव्ययकृष्णनाम्नोस्तु संसारात् प्रागक् कस्य च दः, तत्र स्वाद्यन्तस्य संसारात् प्रागक् ओराम-सराम-भरामादि-वर्जम्।

प्रभुरयम्। कस्य च द इति यथासम्भवं सहजस्यान्तिम-करामस्येति ज्ञेयम्—उच्चकैः, नीचकैः, धिक्धकित्, पृथक्पृथकत्। सर्वके, विश्वके, त्वयका, मयका, त्वयकि, मयकि। ओरामादि-

---

त्युदाहरणद्वयमाह—तथेति। तथा प्रकारवान् तथाजीय इति तत्प्रकारवान् तज्जातीय इति। एवं यथाजातीयः यज्जातीय इत्यादिः॥

३०९५। प्रागि। इवीयार्थात् प्रागर्थे नाम्नो यथास्वं कः स्यात्। प्रभुरयमिति गम्यम्। अव्य। इवात् प्रागर्थेऽव्ययकृष्णनाम्नोस्तु सम्बन्धिनः ससारात् पूर्वस्मिन् अक्प्रत्ययः स्यात्, तयोः कस्य च दश्च। तत्र। ओराम-सराम-भरामा आदयो यस्य संसारस्य तं वर्जयित्वा ओराम-सरामभरामादिवर्जम्। युवयोरावयोरित्यादौ विष्णुसर्गमपेक्ष्य ओरामस्यादित्वम्। अन्तरालपाठात् विष्णुसर्गस्य सर्वेश्वरत्वेन ससारत्वञ्च। तत्राव्ययकृष्णनाम्नोर्मध्ये ओरामसरामभरामादिरूपं संसारं वर्जयित्वा स्वाद्यन्तस्य संसारात् पूर्वमक् स्यात्। प्रभुरयमित्यत्र प्रभुश्चायमिति योज्यम् विध्यंस्यापि सम्भवात्। कस्य च द इत्यस्य दुष्पष्टत्वात् स्वयं विवृणोति—कस्येति। अर्थान्तरस्यानुक्तत्वादत्र स्वार्थेऽयं प्रत्यय इति ज्ञेयम्। तेन उच्चैरेव उच्चकैः, नीचैरेव नाचकैः, धिक्धिगेव धिक्धकित्, पृथक्पृथगेव पृथक्पृथकदिति। शेषद्वयेऽत्र सहजान्तिम-करामस्य दरामो वीप्सया द्विरुक्तिश्च, ततो 'विष्णुदासस्य हरिकमलं वे'त्यनेन तरामः। सर्वे एव सर्वके। एवं विश्वके इति। इदानीं स्वाद्यन्तस्योदाहरणान्याह—त्वयैव त्वयकेत्यादि। ओरामेत्यस्य विवरणपूर्वकमुदाहरणान्याह—ओरामेति। ओरामादिभ्यः परो यः संसारः स ओरामादिपरः तस्य भावः ओरा-

परत्ववर्जनादिह नाम्न एव संसारात् प्रागक्—युवकयोः, आवकयोः, युष्मकासु, अस्मकासु, युष्मकाभिः, अस्मकाभिः। गौणत्वेन कृष्ण-नामत्वाभावादत्र णक्—त्वं पिता यस्य स त्वत्पितृकः, न तू त्वकत्-पितृकः। नाममात्रस्य वाच्यत्वात् समासेऽन्यपदार्थप्रधानत्वाद् गौण-त्वम्। आख्यातस्य च दृश्यते—जल्पतकि॥ ३०९५॥

३०९६। अत्र वर्चेर्निजेश्च भूतेश्वरे।

अवक्, अवकक्; अनेनेक्। अत्र कस्य च दो नेष्यते॥३०९६॥

---

मादिपरत्वं तस्य वर्जनं ओरामादिपरत्ववर्जनं तस्मात्। एतदेव सुदन्तपादे, किन्तु त्रिसर्वेश्वरत्वे मध्यसर्वेश्वरात् प्रागक् इत्यनेनोक्तम। युवयोरेव युवकयोरित्यादि। समासादिना गौणत्वेन कृष्णनामत्वाभाव-स्तस्मादेव च स्वार्थाभावात् स्वार्थिकोऽयमत्र न स्यादित्याह–गौणेति। तत्पितृक इत्यत्र पीताम्बरे कप्रत्ययः। 'युष्मदस्मदोस्त्वन्मदावुत्तरपद-प्रत्यययोरि'त्यनेन त्वदादेशश्च। व्यावर्तकं पदमाह–नत्विति। गौणत्वं प्रतिपादयति–नामेति। समासेऽन्यपदार्थप्रधानत्वेन नाममात्रस्य वाच्य-त्वात्। कृष्णनाम्नो गौणत्वमित्यर्थः। आख्यातान्तस्यापि लिङ्गधर्म-त्वाभावेनाव्ययान्तःपातादयं स्यादित्याह–आख्यातेति। दृश्यत इति अगिति शेषः। जल्पत्येव जल्पतकीत्यादि॥

३०९६। अत्र। अत्रेत्याख्यातेषु मध्ये भूतेश्वरे प्रयोगे वचे-र्निजेश्च संसारात् प्रागक् स्यात्। अवगिति वच परिभाषणे इत्यस्मात् भूतेश्वर-दिप्, अदादेः शपो महाहर इति शपो महाहरः। धातोः पूर्वमदित्यनेनादागमः। विष्णुजनाद्दिस्योर्हर इति दिप्सिपोर्हरः। ततः अवगेव अवकक्। अनेनेगिति। णिजिर् शौचे, जुहोत्यादेरदाद्यन्तर्ग-णत्वात् भूतेश्वरदिवादिपूर्ववत्। किञ्च, जुहोत्यादेः पूर्ववद्द्विर्वचनं शवलुकीत्यनेन द्विर्वचनम्। 'णिजि-विजि-विषां नरस्य गोविन्दः कृष्ण-धातुकमात्रे' इत्यनेन नरस्य गोविन्दः। लघूद्धवस्येत्यनेन तु नारायणस्य गोविन्दः, ततः अनेनेगेव अनेनकेक इति। अत्र कस्य च दो नेष्यते सहजत्वाभावादिति शेषः॥

३०९७। तूष्णीमस्तूष्णीकां साधु।

तूष्णीकामासते विज्ञाः ॥ ३०९७॥

अथ तत्रार्थनियमाः

३०९८। अज्ञातवैशिष्ट्ये।

न ज्ञायते कस्यायं वैष्णवः वैष्णवकः। अज्ञात उच्चैरीदृशस्तादृशो वा उच्चकैः। अज्ञातासौ कस्य कीदृशी वा असकौ। एवं सर्वके, विश्वके। भजतकि। कस्य च दः—पृथकत्॥ ३०९८॥

३०९९। कुत्सिते।

---

३०९७। तूष्णी। काम्प्रत्ययेन सह तूष्णीम्शब्दस्य मरामहरेण तूष्णीकामिति साधु स्यात्। तूष्णीकामित्यस्य मान्ताव्ययत्वात् तूष्णीकामासते विज्ञा इति तूष्णीकां यथा स्यात्तथा तिष्ठन्तीत्यर्थः। अथेति अथानन्तरमिदानीं तत्राक्प्रत्ययविषयेऽर्थनियमा दर्श्यन्त इत्यर्थः॥

३०९८। अज्ञा। विशिष्टस्य भावः वशिष्ट्यं, न ज्ञातं वैशिष्ट्यं यस्य तस्मिन्नर्थे वर्तमानस्य नाम्नः सम्बन्धे कोऽव्ययस्य कृष्णनाम्नस्तथाख्यातस्य च ससारात् प्रागक् स्यात्। वाक्योदाहरणानि क्रमेणाह—न ज्ञायत इत्यादि। अत्र वाक्यस्था ईदृशादयस्त्रयः कप्रत्ययान्ता ज्ञेयाः। यथा तत्सूत्राणि—समाने कर्मण्यन्यतदादिषु च। कर्मोपमानेषु दृशः कः क्विप् सकः कर्मणि। समानस्य च सः। अन्यादेरिवेन सह संसारस्यारामो दृशादिषु। इदम ईश् किमः कीश् अदसोऽमूश्। अयमिव दृश्यतेऽसौ इत्यादिवाक्ये ईदृश इत्यादि यथास्वम्। एवमिति न ज्ञायन्ते कस्येमे सर्वे सर्वके इति। तथाः विश्वके यके तके इत्यादि। न ज्ञायते कोऽयं कीदृशं भजति भजतकीत्यादि। न ज्ञातं पृथगीदृशं तादृशं वा पृथकदिति॥

३०९९। कुत्। कुत्सितो निन्द्यः। अस्मिन्नर्थे वर्तमानेभ्यो नामा-

अत्र च काकौ। कुत्सितोऽश्वः अश्वकः; उच्चकैः, सर्वके, भजतकि ॥ ३०९९ ॥

३१००। संज्ञायाम्।

काकौ। शूद्रक इति कस्यचिद्राज्ञो नाम ॥ ३१०० ॥

३१०१। अनुकम्पायाम्।

काकौ। वैष्णवको दुर्वलकः। सर्वके, भजतकि ॥ ३१०१ ॥

३१०२। एवं नीतिदानमानितयोरपि।

'गोपायकेद्धनायुषी'। सुवर्णं गृहीत्वा सुखं तिष्ठक इति ॥ ३१०२ ॥

---

दिभ्यः काकौ भवत इत्यस्य सूचकं विवरणमाहात्र चेति। यद्यप्यत्र सामान्येन काकावित्युक्तम्। तथापि यावत् सम्भवस्तावद्विधिरिति न्यायेन कुत्सिते वर्तमानान्नाम्नः कः स्यात्, तथा अस्मिन् वर्तमानानामव्ययादीनां ससारात् प्रागक् स्यादिति ज्ञेयम्। एवमुत्तरत्रापि। नाम्नो वाक्योदाहरणे स्पष्टे। कुत्सितमुच्चैरुच्चकैरिति। एवं कुत्सिताः सर्वे कुत्सितं भजतीति सर्वके इत्यादिद्वयम्। पूर्ववदत्रापि पृथकत् यके तके इत्यादयो ज्ञेयाः ॥

३१००। संज्ञा। संज्ञायां वर्तमानेभ्यो यथासम्भवं काकौ भवतः। शूद्रनामा कश्चिद्राजा शूद्रक इति। एवं सर्वकः शिवः, दक्षिणकः प्रवीण इत्यादि ॥

३१०१। अनु। कारुण्येनाभ्युपपत्तिरनुकम्पा, अस्यां वर्तमानेभ्यो नामादिभ्यो यथास्वं काकौ भवतः। अनुकम्पितो वैष्णवः वैष्णवक इति अनुकम्पितो दुर्वलो दुर्वलक इति। एवं सर्वके यके तके इत्यादि। अनुकम्पितं भजति भजतकीति। एवं अवकक् अनेनकेक् इत्यादि ॥

३१०२। एवं। एवमुक्तप्रकारेण नीतिदानमानितयोरपि वर्तमानेभ्यो नामादिभ्यो यथायथं काकौ भवतः। धनायुषी गोपायेदिति

३१०३। बहुसर्वेश्वरान्नृनाम्नष्ठरामो वा, घराम इलश्च, उपादेरड्वुरामौ च।

तत्र कपक्षे—देवदत्तकः, उपेन्द्रदत्तकः ॥ ३१०३ ॥

३१०४। अजिनान्तस्योत्तरपदलोपश्च।

व्याघ्राजिनो नामानुकम्पितः व्याघ्रकः। एवं कृष्णकः। ठादिपक्षे सूत्रान्तराणि ॥ ३१०४ ॥

३१०५। द्वितीयात् सर्वेश्वराच्चतुर्थादपि परभागस्य सर्वेश्वरे।

अनुकम्पितो विष्णुदत्तो विष्णुकः। 'चतुर्भुजान्तात्' (२१२७)

---

गोपायकेदिति। स्वेष्टमन्त्रं गुरुञ्चापि गोपायकेद्धनायुषी इति नीतिशास्त्रोक्तम्। सुवर्णं गृहीत्वा सुखं तिष्ठ तिष्ठक इत्यादि। यथोक्तमन्यैः—कृपायां निन्दने ज्ञाने नीतौ दानेन मानिते। अन्त्यस्वरात् पूर्वमक् वा सर्वनाम-तिङव्ययादिति ।।

३१०३। बहु। अनुकम्पादौ वर्तमानात् बहवः सर्वेश्वरा यस्य तस्मात् मनुष्यनाम्नष्ठरामो वा स्यात। घराम इलश्च तथा कश्च। उपा। अनुकम्पादौ वर्तमानात् उप आदिर्यस्य तस्माद्बहुसर्वेश्वरान्नृनाम्नोऽड्वुरामौ भवतः। चशब्दात, ठरामादयः कश्च भवन्ति। प्रथमतः कपक्ष उदाहरति—तत्रेति। अनुकम्पितो देवदत्तः देवदत्तक इति। अनुकम्पित उपेन्द्रदत्त इति उपेन्द्रदत्तकः ।।

३१०४। अजि। अजिनान्तस्य सम्बन्धे ठरामादयो भवन्ति, उत्तरपदलोपश्च। एवं कृष्णक इति कृष्णाजिनो नामानुकम्पित इत्यर्थः। सूत्रान्तराणि दर्शयितुमाह—ठादीति ।।

३१०५। द्विती। सर्वेश्वरे परे द्वितीयात् सर्वेश्वरात् चतुर्थादपि सर्वेश्वरात् परभागस्य हरः स्यात्। प्रथमतः सर्वेश्वरपरत्वाय

इति ठस्य कः। एवं पितृकः। अनुकम्पितो देवदत्तः देविकः। घपक्षे देवियः। इल—देविलः। चतुर्थसर्वेश्वरात्—लक्ष्मीपतिदत्तोऽनुकम्पितो लक्ष्मीपतिकः ॥ ३१०५ ॥

३१०६। लोपोऽसर्वेश्वरे क्वापि क्वापि पूर्वपदस्य च। अप्रत्ययस्तथैवेष्ट उद्वयाल्ल इलस्य च।

देवकः, दत्तकः, दत्तः; विष्णुलः; उपादेः खल्वपि ॥ ३१०६ ॥

३१०७। सन्ध्यक्षरस्य द्वितीयसर्वेश्वरत्वे तदादेर्लोपवचनम्।

अनुकम्पित उपेन्द्रदत्तः—उपड़ः, उपकः ॥ ३१०७॥

---

ठस्य इकं कृत्वापि वर्णानां तद्व्यक्तिवद्भावो यत्र मंस्यते तत्रैवेत्यनेनात्र व्यक्तिवद्भावमङ्गीकृत्याह—चतुर्भुजेति। पितृक इति अनुकम्पितः पितृदत्त इत्यर्थः। घ इल इति घपक्षे इलपक्षे उदाह्रियत इति शेषः। चतुर्थसर्वेश्वरादिति परभागस्य हरो दर्श्यत इति शेषः। यथा—लक्ष्मीपतिकस्तथा लक्ष्मीपतियः लक्ष्मीपतिलः लक्ष्मीपतिदत्तकश्च ॥

३१०६। लोपो। असर्वेश्वरे प्रत्यये परे क्वापि कुत्रचित् पूर्वपदस्य लोपः स्यात्। पुनः क्वापि परपदस्य च तथैवाप्रत्यय इष्टश्च उद्वयादुत्तरस्य इलस्य लोऽपीत्यर्थः। अप्रत्यय इति प्रत्ययशून्यः, अरामप्रत्ययो वा, तथा सति अप्रत्ययपक्षे अ-इद्वयस्येत्यनेन पूर्वस्य इद्वयस्य हरः। क्रमेणोदाहरणत्रयमाह—देवक इत्यादि। अनुकम्पितो देवदत्त इत्यर्थस्तु पूर्ववत्। विष्णुल इति अनुकम्पितो विष्णुदत्त इत्यर्थः। उपेति उपादेरुत्तरस्य परभागस्यैव हरः स्यादिति खल्वपीत्यनेन निर्धारितमिति ॥

३१०७। सन्ध्य। सन्ध्यक्षरस्य द्वितीयसर्वेश्वरत्वे सति तदादेर्लोपवचनं तत्सन्ध्यक्षरमारभ्यान्तप्रभृतेर्लोपकथनम्। केवलमुत्तर-

३१०८। एकसर्वेश्वरपूर्वपदादुत्तरपदलोपश्च।

वागाशीः वाचिकः, त्वगाशीः त्वचिकः ॥ ३१०८ ॥

३१०९। षड़ङ्गुलिदत्तकस्य षड़िको निपात्यते।

३११०। शेवल-विशालवरुणार्यमादीनां तृतीय-सर्वेश्वरात् परभागस्य हरः।

शेवलदत्तकः, शेवलिकः, शेवलियः, शेवलिल इत्यादि ॥ ३११० ॥

---

पदस्य लोपे प्राप्ते सन्ध्यक्षरादेर्लोपे चाप्राप्ते वक्तव्यमेतत्। एवमुपिय उपिल इति, सर्वेश्वरे लोपविधानात् कपक्षे उपेन्द्रदत्तक इति च ॥

३१०८। एक। सर्वेश्वरे परे एकसर्वेश्वरपूर्वपदादुत्तरपदस्य लोपश्च भवति। अनुकम्पिता वागाशीः वाचिक इति, अनुकम्पिता त्वगाशीः त्वचिक इति। चकारस्योक्तसमुच्चयार्थत्वेन पूर्वेषामनुकर्षणात् वाचियः त्वचियः, वाचिलः त्वचिलः, वाचड़ः त्वचड़ः, वाचकः त्वचक इति। कपक्षे पूर्वस्य विष्णुपदवत्त्वमननात् वागाशीष्कः, त्वगाशीष्क इति च। एतेषां प्रत्ययानां स्वार्थिकत्वात्। अनुकम्पिता वागाशीरित्यादिवाक्येऽपि स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिक्रान्ता अपीत्युक्तदिशा वाचिकादीनां पुरुषोत्तमवत्त्वं पूर्ववदेव कल्प्यम् ॥

३१०९। षड़। अनुकम्पादौ वर्तमानस्य षड़ङ्गुलिदत्तकस्य ठरामेण सह षड़िक इति निपात्यते। त्रिपदत्वादत्र चतुर्थसर्वेश्वरादित्यनेन दत्तकस्य लोपे प्राप्तेऽङ्गुलप्रभृतेर्लोपार्थं वचनम्। उपलक्षणञ्चैतत् तेन, अनुकम्पितः षड़ङ्गुलिदत्तकः। षड़ियः षड़िलः, षड़ड़ः षड़कः। कपक्षे षड़ङ्गुलिदत्तक इति ॥

३११०। शेव। सर्वेश्वरे परे शेवलविशालवरुणार्यमादीनां तृतीयसर्वेश्वरात् परभागस्य हरः स्यात्। पूर्वेणाप्राप्तेऽयं विधिः। अनुकम्पितः शेवलदत्त इति शेवलदत्तक इत्यादि। इत्यादीत्यादिपदेन

३१११। तूष्णींशीले तूष्णीकः साधुः।

३११२। एक-एकक-एकाको चासहाये।

साधवः। एकाकिन्निति नान्तः॥ ३११२॥

३११३। ह्रस्वे।

काकावित्येव। दण्डकः, स्तम्भकः, सर्वके॥ ३११३॥

---

शेवलङः शेवलक इति। एवं विशालदत्तक इत्यादि, वरुणदत्तक इत्यादि, अर्यमदत्तक इत्यादि च यथायथमूह्यम्। किञ्च, नीतेः पारम्पर्योपदेशत्वेन शिक्षणार्थत्वात् दानमानितस्य पारितोषिकार्थत्वाच्च शिक्षितो दानेन सम्मानितो वा देवदत्त इति देवदत्तक इत्यादि। शिक्षितो दानेन सम्मानितो वा व्याघ्राजिनो नामेति व्याघ्रक इत्यादि। शिक्षितो दानेन सम्मानितो विष्णुदत्त इति विष्णुक इत्यादि। शिक्षितो दानेन सम्मानितो वा लक्ष्मीपतिदत्त इति लक्ष्मीपतिक इत्यादि। एवं देवक इत्यादि, उपड़ इत्यादि, वाचिक इत्यादि। वागाशीर्दत्तोऽनुकम्पितः शिक्षितो दानेन सम्मानितो वेति वाचिक इत्यादीत्यन्ये। तथा षड़िक इत्यादि शेवलदत्तक इत्यादि च॥

३१११। तूष्णीं। तूष्णींशीले वाच्ये कप्रत्ययेन सह तूष्णीमित्यस्य म-हरेण तूष्णीक इत्ययं साधुः स्यात्। तूष्णीको मौनी॥

३११२। एक। असहाये वर्तमानस्य एकशब्दस्य अरामकरामाकिन्भिः सह एक-एकक-एकाकीति च क्रमेण साधवो भवन्ति। अन्तिमस्य नान्तत्वं स्वयमाह—एकाकीति। शतमेकाकिनो यान्ति असहाया इत्यर्थः। अत्रासहाय इति वचनमेकस्य सङ्ख्यावाचित्वनिरासार्थम्॥

३११३। ह्रस्वे। ह्रस्वः खर्वः अस्मिन्नर्थे वर्तमानान्नामादेर्यथासम्भवं पूर्ववत् काकावित्येव स्यात्। ह्रस्वो दण्डः दण्डक इति। एवं स्तम्भक इति। ह्रस्वाः सर्वे सर्वके इति। एवं यके तके इत्यादि॥

३११४। अल्पे।

काकौ। घृतकम्, उच्चकैः, विश्वके, भजतकि ॥ ३११४ ॥

३११५। संज्ञायां कः।

वेणुकः, वंशकः ॥ ३११५ ॥

३११६। कुटी-शमी-शुण्डादिभ्यो रः, कुत्वा उपच्, कासूगोणीभ्यां तरट् च।

कुटीरः, शमीरः, शुण्डारः। कुटी मृत्शरीरमित्येके। कुतूपः। एतेषां पुंस्यभिधानम्। कासूतरी, गोणीतरी ; कासूवस्त्र-भेदः ॥ ३११६ ॥

---

३११४। अल्पे। अल्पेऽर्थे वर्तमानान्नामादेर्यथास्वं काकौ भवतः। अल्पं घृतं घृतकं, अल्पमुच्चैरुच्चकै,, अल्पा विश्वे विश्वके, अल्पं भजति भजतकीत्यादि ॥

३११५। संज्ञा। संज्ञायां वर्तमानान्नाम्नः कः स्यात्। वेणुनामा कश्चित् वेणुक इति। एवं वंशक इत्यादि ॥

३११६। कुटी। संज्ञायां वर्तमानेभ्यः कुटीशमीशुण्डादिभ्यो रः स्यात्। कुत्वा। संज्ञायां वर्तमानायाः कुत्वाः उत्तर उपच् स्यात्। कासू। संशायां वर्तयानाभ्यां कासूगोणीभ्यां तरट् च स्यात्। पूर्व-सूत्रात् सूत्रत्रयेऽत्र संज्ञाया अनुकर्षणार्थश्चशब्दः प्रदर्शितः। कुटी धनादिरक्षार्थं इष्टकादिरचितो गृहविशेषः। सैवाल्पा कुटीर इति। शमी। शमी तापादिशमनी सैवाल्पा शमीर इति। शुण्डा हस्तिकरः शुण्डार इति। सूत्रस्थादिपदात् भाण्डीरः काण्डीरः हिण्डीर इत्यादि च। कुठीशब्दस्य परमतार्थमाह—कुटीति। अल्पा कुतूरिति कुतूपः, संसारस्य हरश्चितीत्यनेनात्र कुत्वाः संसारहरः। 'कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतूपः पुमानि'त्यमरः। कुटीरेत्यादीनां स्वार्थिकप्रत्ययान्तत्वात्

३११७। वत्सोक्षाश्वर्षभेभ्यश्चासम्पूर्णतद्रूपत्वे।

वत्सत्वेनासम्पूर्णो वत्सतरो द्वितीयवयाः। एवमुक्षतरः तृतीयवयाः। अश्वतरी खरजाता, ऋषभतरो मन्दः॥ ३११७॥

३११८। कियत्तद्भ्यो गुणक्रियासंज्ञाभिर्द्वयोरेकस्य निर्धारणायामतरच्।

कतरो भवतोर्वैष्णवः? यतरो वैष्णवः, ततर आयातु। एवं कतरः पूजकः, कतरो विष्णुशर्मा॥ ३११८॥

---

लक्ष्मीत्वे प्राप्तेऽभिधानात् पुंस्त्वमित्याह—एतेषामिति। अभिधानमित्यस्मात् परं स्वार्थिकाः प्रकृतेर्लिङ्गवचनान्यप्यतिक्रान्ता भवन्तीति हेतुभूतं कल्प्यम्। कासूरेव कासूतरीति, गण्येव गोणीतरीति। कासूशब्दस्यार्थमाह—कासूरिति। कासूः शक्तिरायुधविशेष इत्यन्ये। गां नयतीति गोणीरिति क्विबन्तः॥

३११७। वत्। न सम्पूर्णस्तद्रूपो यस्य सोऽसम्पूर्णतद्रूपस्तस्य भावोऽसम्पूर्णतद्रूपत्वं तस्मिन् वाच्ये वत्सोक्षाश्वर्षभेभ्यश्च तरट् स्यात्। वत्सत्वेनासम्पूर्ण इति वाक्ये न वत्सत्वेन मुक्तोऽपि वत्सत्वस्य किञ्चिदंशापरित्यागः सूचित इति वत्सतरस्य द्वितीयवयःप्राप्तत्वेऽपि तद्रूपस्यासम्पूर्णत्वं गम्यते। एवमिति उक्षत्वेन तारुण्येनासम्पूर्ण उक्षतर इत्यत्रापि पूर्ववत्तारुण्यस्य किञ्चिदपरित्यागात्, तृतीयवयःप्राप्तत्वेऽपि तद्रूपस्याम्पूर्णत्वम्। एवं वत्सतरी उक्षतरीति च। अश्वतरी खरजातेति अश्वजातौ खरेण जातेत्यर्थः। उभयावयवदर्शनादत्रासम्पूर्णतद्रूपत्वम्। एवमश्वतरोऽपि। ऋषभतरो मन्द इत्यनेन भारवहनाशक्तः सूचित इति ऋषभतर इत्यस्य प्राप्तसमर्थत्वेऽप्यसम्पूर्णतद्रूपमिति॥

३११८। किय। गुणेन क्रियया संज्ञया चद्वयोर्मध्ये एकस्य निर्धारणायां गम्यमानायां कियत्तद्भ्योऽतरच् स्यात्। गुणादिभिः पृथक्-

३११९। बहूनां जातिप्रश्नेऽतमजकौ।

कतमो भवतां वैष्णवः? यतमः, ततमः। अक्पक्षे—'किमः कः' इत्यादौ साकस्यापीति—कः, यकः, सकः। महाविभाषया वाक्यञ्च। जातीति किम्? यो भवतां विष्णुदत्तः॥ ३११९॥

३१२०। एकाच्च पूर्ववत्तरतमौ।

---

करणं निर्धारणम्। भवतोर्द्वयोर्मध्ये को वैष्णव इति चित्करणात् संसारहरः कतर इति। एवं भवतोर्यो वैष्णवः स आयातु इति यतरो भवतोर्वैष्णवस्ततर आयात्विति योज्यम्। कृष्णपूजादावत्र वैष्णवत्वेनाह्वानं ध्वनितमिति। एवमिति भवतोः कः पूजक इति कतर इति तथा यतर पूजकः, ततर आयात्विति पूर्ववत् पूजकत्वक्रिययात्राह्वानम्। एवं भवतोः को विष्णुशर्मा कतर इति। तथा भवतोर्यो विष्णुशर्मा स आयात्विति यतरः ततर इति च। संज्ञयात्राह्वानमिति॥

३११९। बहू। जातिप्रश्नेऽर्थे बहूनामेकस्य निर्धारणायां किं यत्तद्भ्योऽतमजकौ भवतः। भवतां मध्ये को वैष्णवः कतम इति। भवतां यो वैष्णवः स आयात्विति यतमः ततम इति। अक्पक्षे साधनार्थं पूर्वोक्तं सूत्रं स्मारयति किम इति। किमः क इत्यादौ सूत्रे साकस्यापीत्यनेनाक् सहितस्यापि किमः कादेश इति भवतां को वैष्णवः क इति। तथा भवतां यो वैष्णवः स आयात्विति यकः सक इति च। महेति तद्धितस्य महाविभाषया पक्षे वाक्यमपि तिष्ठतीत्यर्थः। विष्णुधिदैवतादिगुणविशिष्टस्य जातिशालित्वाभावेऽप्यत्र व्यवहारनिष्पत्तये पारिभाषिकी जाति कल्प्या, दृश्यते हि जातिशक्तिवादिनां मते डित्थादीनामपि वालवृद्धयुवाद्यदीरितभेदेन अयं डित्थोऽयं डित्थ इति डित्थत्वं जातिरिति। जातेरन्यत्र तौ नस्त इति व्यावृत्तिमाह—जातीत्यादि। विष्णुदत्त इति कस्यचिन्नाम डित्वादिवदत्र जातिर्न विवक्षितेति॥

३१२०। एका। पूर्ववदित्युपादानात् गुणक्रियासंज्ञाभिर्द्वयोरेकस्य

एकतरो भवतोरायातु। एवं भवतामेकतमः ॥ ३१२० ॥

३१२१। अवक्षेपे कः।

व्याकरणकेनायं गर्वितः। गर्वोऽत्राक्षिप्यते ॥ ३१२१ ॥

प्रागिवीयाः पूर्णाः।

३१२२। इवार्थे कः प्रतिकृतौ संज्ञायाञ्च।

इवार्थः सादृश्यं, तद्विशेषः प्रतिकृतिः। कृष्णसारप्रतिकृतिः कृष्णसारकः। संज्ञायाम्—कृष्णमृगकः। इवार्थे विधिः प्राक् पदात्। प्रकृतिकृतौ प्राग्वस्तेः ॥ ३१२२ ॥

---

निर्धारणायां, तथा बहूनामेकस्य निर्धारणायां यथा क्रममेककशब्दात् पुनस्तरमौ भवतः। एकेति भवतोरेको वैष्णव आयात्वित्यर्थः। एवमिति भवतामेको वैष्णव आयात्वित्यर्थः। अन्यार्थे इदमन्याभ्यां तर इदमो दमो हरश्चेति वाच्यम्। अन्यार्थे वर्तमानाभ्यामिदमन्याभ्यां तरस्तस्मिन्निदमो दमिति भागस्य हरश्च स्यात्। इतर अन्यतर इति पृथग्जन इत्यर्थः ॥

३१२१। अव। अवक्षिप्यतेऽसाविति कर्मणि घञ्। अवक्षेपेऽर्थे गम्ये प्रत्यासत्त्या अवक्षेपयुक्तान्नाम्नः कः स्यात्। व्याकरणकेनेति। व्याकरणकत्वेनायं गर्वित इति वैयाकरणकत्वेनायं विकत्थत इति निर्गलितोऽर्थः। नन्ववक्षेप इत्युक्तम्। कुतोऽत्र गर्वितत्वमागतमिति प्रश्ने सिद्धान्तमाह—गर्व इति। इवार्थात् प्रागर्थान् प्रत्ययांश्च समापयति—प्रागिति ॥

३१२२। इवा। प्रतिकृतौ सञ्ज्ञायाञ्च वाच्यायामित्यर्थे वर्तमानान्नाम्नः कः स्यात्। इवार्थं प्रतिकृतिञ्च स्पष्टयन्नाह—इवार्थ इति। तद्विशेष इति तस्यैवार्थस्य भेद इत्यर्थः। कृष्णेति कृष्णसारस्येव प्रतिकृतिरित्यन्तर्भूतमिवार्थं ज्ञेयं सूत्रे इवार्थग्रहणात्। एवमुत्तरत्रापि यत्रैव शब्दो न दृश्यते तत्र यथासम्भवमूह्यः। प्रतिकृतावुदाहरणं दत्वा संज्ञायां दर्शयति—संज्ञेति। कृष्णमृग इव कृष्णमृगक

३१२३। मनुष्ये तस्य स्मरहरः जीविकार्थे चापण्ये।

चञ्चेव चञ्चा मनुष्यः, चञ्चा तृणप्रतिमा। जीविकार्थे य आदित्यादि-प्रतिकृतिं कृत्वा भ्रमति, स आदित्यः। एवं स्कन्दः, वासुदेवः। अपण्ये किम्? वासुदेवकान् विक्रीणीते ॥ ३१२३ ॥

३१२४। देवपथादिभ्यश्च।

देवपथः, काश्यपः ॥ ३१२४ ॥

३१२५। अर्चासु पूजनार्थासु चित्रतद्ध्वजेऽपि च।
इवे प्रतिकृतौ लोपः कस्य देवपथादिषु ॥

---

इति। प्रत्ययोत्पत्त्यर्थं परिभाषामाह—इवेति। पादात् पूर्वमिवार्थे विधिरिष्यते। वस्तेः प्राक् तु प्रतिकृतौ विधिरिष्यत इत्यर्थः ॥

३१२३। मनु। इवार्थे सति मनुष्ये वाच्ये प्रतिकृतेरुत्तरस्य तस्य कप्रत्ययस्य स्मरहरः स्यात्। अपण्ये गम्ये इवार्थे च तस्यास्तस्य स्मरहरः स्यात्। स्मरहरे प्रकृतेर्लिङ्गवचनयोः प्रत्यावृत्तिरित्युक्तमिति मनुष्ये वाच्येऽपि चञ्चेत्यत्र लक्ष्मीत्वम्। चञ्चेत्यस्य पर्यायार्थमाह—तृणेति। वाक्ये जीविकार्थ इत्यत्र निमित्तात् कर्मसंयोग इत्यनेन सप्तमीति जीविकायै आदित्यादेरिव प्रतिकृतिं कृत्वा यो भ्रमति स आदित्य इति। एवमिति। स्कन्दः कार्त्तिकेयस्तस्येव प्रतिकृतिं कृत्वा जीविकार्थं यो भ्रमति स स्कन्द इति। तथा जीविकार्थं वसुदेवस्येव प्रतिकृतिं कृत्वा यो भ्रमति स वासुदेव इति। व्यावर्तयन्नाह—अपण्य इति। वास्वित्यादेः पूर्वं जीविकायामिति योज्यम्। अत्र मूल्यग्रहणेन जीविकार्थं वासुदेवस्य प्रतिकृतीर्निर्माय विक्रीणीते इत्यर्थः ॥

३१२४। देव। जीविकार्थे चापण्ये देवपथादिभ्यश्च कस्य स्मरहरः स्यात्। देवपथ इति जीविकार्थं देवपथस्येव प्रतिकृतिं कृत्वा यो भ्रमति स इत्यर्थः। एवं काश्यप इत्यादि। आकृतिगणोऽयम् ॥

३१२५। अर्चा। व्यवस्थापककारिकामाह—अर्चेति। पूजनार्था-

अर्चासु—शिवः, विष्णुः; चित्रकर्मणि—दुर्योधनः, अर्जुनः; ध्वजेषु—कपिः, गरुड़ः, सिंहः। प्रतिकृतिर्गता ॥ ३१२५ ॥

**३१२६। वस्तेर्माधवढः।**

वस्तिरिव वास्तेयं, वास्तेयी ॥ ३१२६ ॥

**३१२७। शिलाया ढरामश्च।**

शिलेव शिलेयमस्याः शरीरम्। माधवत्वात् शैलेयं दधि, शैलेयी तनुः ॥ ३१२७ ॥

---

स्वर्चासु वाच्यासु तथा चित्रकर्मणि तद्ध्वजेऽपि। इवे। इवे प्रतिकृतौ च वाच्यायाम्। एवं देवपथादिषु प्रयोगेषु च यथायोग्यं शिवप्रभृतिभ्यः कस्य लोपः स्मरहरः स्यात्। अर्चास्विति रूपं दर्श्यत इति शेषः। एवमुत्तरत्रापि। पूजनार्थं शिवस्येव प्रतिकृतिर्निर्मीयते शिव इति। एवं विष्णुः सूर्य इत्यादि। दुर्योधन इति। दुर्योधनस्येव प्रतिकृतिश्चित्रीयत इत्यर्थः। एवमर्जुनः युधिष्ठिर इत्यादि। कपेरिव प्रतिकृतिर्ध्वजः क्रियते इति कपिरित्यादि। इवे प्रतिकृतौ देवपथादिषु च चञ्चेत्यादीन्युक्तोदाहरणानि ज्ञेयानि। प्रतिकृतेरिवार्थविशेषत्वात् गोस्वामिपादैः कृष्णसारप्रतिकृतिरित्यादौ वाक्ये ईवशब्दप्रयोगो न कृतः। मया तु इवार्थे कः प्रतिकृताविति सूत्रदृष्ट्या यथासम्भवमिव-प्रयोगः कृत इति। अन्ये तु देवपथादिषु सिंहान्तेषु स्वार्थे प्रत्ययहरमिच्छन्तीति। प्रतिकृत्यर्थं समापयति—प्रतीति ॥

३१२६। वस्ते। इवार्थे वस्तेरुत्तरो माधवढः स्यात्। इवार्थः सादृश्य इति पूर्वमुक्तमेव। वस्तिर्नाभेरधः ॥

३१२७। शिला। इवार्थे शिलाया ढरामः स्यात्, चकारान्माधवढोऽपि। अस्या नायिकाया इति। माधेति। ढस्य माधवत्वात् टनित्त्वं तेन वृष्णीन्द्रः लक्ष्म्यामीप् च भवतीति भावः। वाक्यन्तु पूर्ववत् ॥

३१२८। शाखादिभ्यो यः।

शाखेव शाख्यः। मुख्यः, जघन्यः ॥ ३१२८ ॥

३१२९। द्रव्यं भव्ये साधुः।

भव्यः अभिप्रेतानामर्थानां पात्रभूतः। 'द्रव्योऽयं मानवकः' इति काशिका ( ५।३।१०४ )। "द्रुरिव सर्वाश्रयत्वाद् यति द्रव्यं निपात्यते भव्यञ्चेत्, 'द्रव्यमेव खलु सर्ववल्लभम्' इति प्रयोगदर्शनात्" इति भाषावृत्तिः ( ५।३।१०४ ) ॥ ३१२९ ॥

३१३०। कुशाग्राच्छरामः।

कुशाग्रमिव कुशाग्रीया वृद्धिः ॥ ३१३० ॥

---

३१२८। शाखा। इवार्थे शाखादिभ्यो यः स्यात्। शाखा मुख जघन अर्षजवन स्कन्द अग्र उरस् चरण शरण शृङ्ग मेघ विरसेति द्वादश शाखादिः ॥

३१२९। द्रव्यम्। इवार्थे भव्ये वाच्ये यरामेण सह द्रुशब्दस्य द्रव्यं साधु स्यात्। स्वाभीष्टार्थमाह—भव्य इति। अभिप्रेतानां मनोगतानामर्थानां यः पात्रभूतः स एव भव्य इत्यर्थः। द्रव्यशब्दोऽत्र स्वभावतो ब्रह्मलिङ्ग इति प्राचीनमतेनैव स्पष्टयति—द्रव्यमिति। अयं मानवको द्रव्यमिति योज्यम्। स्वोक्तार्थमपि परमतेन स्फूटयति—द्रुरिति। द्रव्यमेव खलु सर्ववल्लभमिति प्रयोगदर्शनाद्धेतोर्द्रुरिव सर्वाश्रयो द्रव्यमिति भाषावृत्तिराहेत्यन्वयः। द्रुर्यथात्मनः फलादिभिरर्थिनः प्रीणाति तथायमप्यभीष्टदानेन सर्वाश्रयः सन् भव्य इति द्रव्यस्य निर्गलितोऽर्थः। आत्मगुणसम्पन्नोऽपि द्रव्यमुच्यते, द्रव्यं हि क्रियां विनयति नाद्रव्यमिति। हिरण्यादिकमपि द्रव्यं पुरुषार्थसाधकत्वादित्यन्ये च ॥

३१३०। कुशा। इवार्थे कुशाग्रशब्दाच्छरामः स्यात्। कुशाग्रमिवेति सूक्ष्मत्वात् तीक्ष्णत्वाच्च ॥

३१३१। काकतालीयादयः साधवः।

आकस्मिकेन तालपतनेन काकस्य बध इव केनापि देवदत्तस्य बधः—काकतालीयम्। एवं अजा-कृपाणीयं बधः। ब्रह्मत्वे त्वभिधानम्। काकतालादिशब्देनात्राकस्मात्तालादिपतनहेतुकः काकादिबध उच्यते, अस्मिन्नर्थे समासश्चात्र समर्थ्यते, देवदत्तस्य तद्वद्बधस्तद्धितार्थः॥ ३१३१॥

३१३२। शर्करादिभ्यः केशवणः।

शर्करेव शार्करं कापालम् ॥ ३१३२॥

३१३३। अङ्गुल्यादेर्माधवठः।

---

३१३१। काक। इवार्थे देवदत्तादेर्बधे वाच्ये छरामेण सह काकतालादीनां स्थाने काकतालीयादयः साधवो भवन्ति। वाक्योदाहरणे स्वयं दर्शयति—आकस्मिकेनेति। एवमिति आकस्मिकेन कृपाणीपतनेन अजाया बध इव देवदत्तस्य बधः। अजाकृपाणीयमिति। अनेन सूत्रेण साध्यप्रयोगाणां ब्रह्मत्वं एव कथनमित्याह—ब्रह्मत्व इति। एवमर्धजरतीयं घुणाक्षरीयं अन्धगर्तीयं खलतिविल्वीयमित्यादि। काकतालादिशब्दानां शक्तिनिरूपणपूर्वकं समाससमर्थनमाह—काकतालेत्यादि। देवदत्तस्य तद्वद्बध इति आकस्मिकतालपतनेन काकस्य बध इवेति तद्धितार्थो ज्ञेयः। काकतालशब्द काकस्य गमन एव तालस्य पतनेन काकमरणे वर्तते तद्वदाकस्मिकसङ्गतं काकतालीयमिति। अर्धजरतीशब्दोऽर्धजरतीसमाने वर्तते तद्वदिष्टानिष्टत्वात्, अर्धजरतीयमिति च कश्चित्॥

३१३२। शर्क। इवार्थे शर्करादिभ्यः केशवणः स्यात्। शर्करा कपाल पुण्डरीक शतपत्र गोलोमन् नकुल सिकता गोपुच्छ कृपाटिका नाराचेति शर्करादिर्दश॥

३१३३। अङ्ग। इवार्थे अङ्गुल्यादेर्माधवठः स्यात्। अङ्गुली

अङ्गुलीव आङ्गुलिकः । एवं भारुजिकादि ॥ ३१३३ ॥

३१३४ । एकशालायाष्ठरामो वा ।

एकशालेव एकशालिकः । पक्षे—कः, माधवठ इत्यन्ये ॥३१३४॥

३१३५ । कर्कलोहिताभ्यां ठीर्नृसिंहः ।

कर्कः शुक्लोऽश्वः तेन सदृशः कार्कीको गौः । लौहितीकः स्फटिकः । स्वयमलोहित उपाश्रयात्तथावभाषते ॥ ३१३५ ॥

उक्तमिवार्थे ।

३१३६ । पादशताभ्यां सङ्ख्यादिभ्यां वीप्सायां वुरामो लक्ष्यामन्त्यलोपश्च, दण्डदानयोश्च ।

---

भरुज् शष्कुली कुलिश उरस् वर्ण नक्र हरि मुनि कपिश मण्डल घोणी खल चरु उदश्विदित्यङ्गुल्यादिः पञ्चदश ॥

३१३४ । एक । इवार्थे एकशालाया उत्तरष्ठरामो वा स्यात् । अन्येषां मतमेव स्वमतमित्यङ्गीकुर्वन्नाह—पक्ष इति । तेन एकशालकः ऐकशालिक इति च ॥

३१३५ । कर्क । इवार्थे कर्कलोहिताभ्यां नृसिंहष्ठीर्भवति । कर्कशब्दस्यार्थदर्शनपूर्वकं वाक्योदाहरणे दर्शयति—कर्क इति । एवं लोहितेन सदृशो लौहितीक इति । स्फटिकादिः समीपाश्रयवशादेव तथावभाषत इत्याह—स्वयमिति । इवार्थं समापयति—उक्तमिति ॥

३१३६ । पाद । पादञ्च शतञ्च पादशते ताभ्यां । सङ्ख्या आदिर्ययोस्ते सङ्ख्यादिनी ताभ्याम् । वीप्सायामर्थे सङ्ख्यापूर्वपदाभ्यां पादशताभ्यां वुरामस्तस्मिंस्तयोरन्त्यस्य लोपश्च स्याल्लक्ष्म्यां लक्ष्मीलिङ्गे वर्तते । अन्त्य । अन्त्यलोपश्चेत्यत्र च शब्दोऽन्वाचयार्थस्तेन भो वटो भिक्षामट यदि पश्येद्गाञ्चानयेति वदन्ति, मानादरविषयत्वादत्र 'अद्वयस्ये'त्यनेन शतशब्दस्यारामहरेण प्रयोजनान्तराभावात् प्रयोगसिद्धेऽपि

द्वौ द्वौ पादौ तद्धितार्थे समासः, अन्त्यलोपात् 'पाच्छब्दस्य वामनो भगवति' ( २६० )—द्विपदिका। एवं त्रिशतिका ॥ ३१३६॥

३१३७। अन्यतोऽपीष्यते।

त्रिमोदकिका। तथा द्विपदिकां दण्डितः। त्रिशतिकां व्यवसृजति ॥ ३१३७॥

३१३८। स्थूलादिभ्यः प्रकारोक्तौ कः।

---

अन्त्यलोपे पाच्छब्दस्य वामनकरणार्थश्च-शब्द इति ज्ञेयम्। दण्ड। वीप्सानिवृत्त्यर्थमिदम्। दण्डदानयोर्गम्यमानयोश्च सङ्ख्यादिभ्यां पादशताभ्यां वुरामस्तस्मिंस्तयोरन्त्यलोपश्च स्यात् लक्ष्म्यां वर्तते। वाक्यप्रदर्शनपूर्वकं समासप्रकारमाह—द्वौ द्वाविति। पादावित्यस्मात् परमारोपिताविति क्रियापदं योज्यं शिष्टाचारात्। समास इति त्रिरामीसमास इति शेषः। 'अ-द्वयस्य हरो भगवती'त्यनेनैवेष्टसिद्धावप्यन्त्यलोपश्चेति यत् कृतं तदेतज्ज्ञापकमिति। लोपपदमत्र महाहरपरमित्यतश्चारामव्यवधानाभावात् पाच्छब्दस्य वामनः स्यादन्यथा तु न स्यादिति सूचयन्नाह—अन्त्यलोपादिति। द्विपदिकेति द्विपदिकरूपाल्लक्ष्म्यामीपि कृते पश्चात् 'प्रत्ययस्थ-ल् कादि'त्यनेन पूर्वारामस्येरामः। एवमिति त्रीणि शतानि आरोपितानीति त्रिशतिका ॥

३१३७। अन्य। वीप्सायां सङ्ख्यादेरन्यतोऽपि नाम्नो वुराम इष्यतेऽन्त्यलोपश्च लक्ष्म्याम्। शिष्ठाचाराद्वक्तव्यमेतत्। त्रयस्त्रयो मोदका आरोपिता इति त्रिमोदकिका। एवं द्व्यपूपिका इत्यादि। अत्र सर्वत्र प्रत्ययेनैव वीप्सायां द्वित्वादेरप्युक्तत्वात् न पुनरुक्तिरेकत्वञ्च। दण्डदानयोरुदाहरणे आह-तथेति। द्वौ पादौ दण्डित इति त्रीणि शतानि व्यवसृजतीति च वाक्यं योज्यम्। व्यवसृजतीति विशेषेण त्यजति ददातीति यावत्। अत्राप्यन्यत इति युज्यते, तेन द्विमोदकिकां ददाति द्व्यपूपिकामश्नातीत्यादि स्यात् ॥

३१३८। स्थूला। प्रकारस्योक्तौ स्थूलादिभ्यः कः स्यात्।

वक्ष्यमाणजातीयस्य बाधा। स्थूलप्रकारः स्थूलकः। एवं यवकः, अश्वकः, चञ्चतासदृशः चञ्चत्कः। एवं वृहत्कः ॥३१३८॥

३१३९। अनत्यन्तगतौ क्तात्।

नात्यन्तं भिन्नं भिन्नकं, छिन्नकम् ॥ ३१३९ ॥

३१४०। नार्धवाचिपूर्वात्।

अर्धपीतं, सामिभुक्तं, खण्डकृतं, नेमभिन्नम्। प्रतिषेधोऽयम्। स्वार्थिकस्य तस्य चास्तित्वे लिङ्गमिदमेव; तेन बहुतरकमिति जयादित्यः ॥ ३१४० ॥

---

सामान्यस्य भेदको धर्मः प्रकारः स च द्रव्याश्रितो यथा स्थूलादेः स्थूलत्वादि। वक्ष्यमाणजातीयस्य बाधेति बाधकमित्यर्थः। स्थूलको मणिः। एवमिति यवप्रकारः अश्वप्रकार इत्यर्थः। चञ्चतासदृश इत्यनेन स्फुरत्कान्तिकत्वाद्योऽञ्चन्नपि चञ्चन्निव लक्ष्यते स चञ्चत्क इति सूचितम्। एवं चलत्कः। एवमिति प्रभामण्डलयोगाददृहन्नपि यो वृहन्निव लक्ष्यते, स वृहत्क इति। अत्र त्रये सादृश्यमेव प्रकारार्थं व्याचक्षते। स्थूल यव अश्व चञ्चत् वृहत् चलत् अणु मास इक्षु ईषत् चञ्चु श्वशुर कुमारी पुत्रकुमारी पर्णमूल मूलपत्र हल वाट्या कालेति स्थूलादिरूर्नविंशतिः ।।

३१३९। अन। न अत्यन्तमनत्यन्तं अनत्यन्तस्य गतिरनत्यन्तगतिस्तस्याम्। अत्यन्तस्याप्राप्तौ सत्यां क्तप्रत्ययान्तात् कः स्यात्। भिन्नकमिति ईषद्भिन्नमित्यर्थः। नात्यन्तं छिन्नं छिन्नकमिति। अनत्यन्ते किम् ?–भिन्नं काष्ठम्। अत्यन्तमेव भिन्नमित्यर्थः ।।

३१४०। नार्ध। अनत्यन्तगतौ अर्धवाची पूर्वो यस्य तस्मात् क्तान्तात् को न स्यात्। नात्यन्तमर्धं पीतमिति नात्यन्तमर्धरूपेणोपलक्षितं पीतं वेति अर्धपीतम्। एव सामिभुक्तमित्यादि त्रयमपि। अत्रार्धप्रभृतयश्चत्वारोऽर्धवाचकाः। क्तान्तत्वात् प्राप्तेऽयं निषेध

३१४१। वृहतिका वस्त्रविशेषे, अषड़क्षीणं तृतीयाद्यगोचरे, आशितङ्गवीनं गावो यत्राशिताः पुरा, अलङ्कर्मीणः कर्मक्षमे, अलम्पुरुषीणः पुरुषाय शक्ते। एते साधवः॥ ३१४१॥

इत्याह—प्रतीति। स्वार्थीति, इदमेव प्रतिषेधसूत्रमेव पुनः स्वार्थिकस्य तस्य कप्रत्ययस्यास्तित्वे विद्यमानत्वेऽपि लिङ्गं ज्ञापकमित्यन्वयोऽर्थश्चेति। तेन ज्ञापकेन हेतुना बहुतरमेव बहुतरकमिति जयादित्य आह। एवमर्धपीतमेवार्धपीतकमित्यादि च। अभिन्नोपपन्नबहुसुकरादेस्तरात् क इत्यन्ये॥

३१४१। वृह। वस्त्रविशेषे वाच्ये करामेण साकं वृहत्या वृहतिका साधुः स्यात्। अत्र स्वार्थे कस्तस्मिन् वृहत्या वामनश्च निपातफलम्। किञ्च, अस्य स्वार्थिकत्वात् प्रकृतिवल्लिङ्गत्वेऽजादित्वादाप्। नित्योऽयं विधिरभिधानशक्त्या। वस्त्रविशेषादन्यत्र तु वृहती ओषधिः। अष। तृतीयाद्यगोचरे वाच्येऽषड़क्षीत्यस्य खरामेण साकमषड़क्षीणं साधु स्यात्। अविद्यमानानानि षड़क्षीणि अस्मिन्नित्यषड़क्षीणं मन्त्रादि। तृतीयजनादेरगोचरस्य वाच्यत्वात् यदेकेन द्वाभ्यां वा कृतं तदेवोच्यते। आशि। पुरा पूर्वस्मिन् यत्र गाव आशितास्तृप्ताः तस्मिन्नरण्यादौ वाच्ये खरामेण सह आशितगोशब्दस्याशितङ्गवीनं साधु स्यात्। अत्राशितान्मुमागमश्च निपातफलम्। अलम्। कर्मक्षमे वाच्येऽलंपूर्वस्य कर्मणः खरामेण सह अलङ्कर्मीणः साधुः स्यात्। अलं जातः कर्मणे इति पर्यादयश्चतुर्थ्या इत्यनेन मध्यपदलोपिचतुर्थीकृष्णपुरुषसिद्धात् खरामः। अलङ्कर्मीण इति कर्मदक्ष इति कश्चित्। अलं। पुरुषाय शक्ते वाच्ये खरामेण सहालंपूर्वस्य पुरुषस्यालम्पुरुषीणः साधुः स्यात्। अलं शक्तः पुरुषाय इति पूर्ववत् वाक्यादिः। अत्र द्वयेऽलंशब्दस्य मान्ताव्ययत्वान्मुमागमो नापेक्ष्य इति। एकत्रैव वृत्तिमाह—एत इति। कश्चिदाह—टप्रत्ययान्तोऽषड़क्ष इत्याद्यपि प्रयोक्तव्यमेवेति॥

३१४२। अञ्चेः खरामो वा स्वार्थे, न तु दिशि।

प्राक् प्राचीनं, प्राचीना ब्राह्मणी। तिर्यक् तिरश्चीनं, प्रत्यक् प्रतीचीनम्। नेह—प्राची दिक्॥ ३१४२॥

३१४३। जात्यन्ताच्छरामो द्रव्ये।

ब्राह्मणजातीयः। अद्रव्ये तु ब्राह्मणजातिरदुष्टा॥ ३१४३॥

३१४४। स्थानान्ताच्छो वा तुल्यत्वे।

भगवत्स्थानीयो भगवत्तुल्यः। एवं भगवत्स्थानः॥ ३१४४॥

३१४५। किमेरामाख्याताव्ययेभ्यस्तरान्तमाश्चाद्रव्यप्रकर्षे।

---

३१४२। अञ्चे। स्वार्थेऽर्थेऽञ्चेरुत्तरः खरामो वा स्यात्, दिशि वाच्ये तु न स्यात्। अञ्चेरिति लुप्तक्तप्रत्ययस्यैव ग्रहणं नामाधिकारात्। प्रागिति प्रागेवेति योऽयम्। प्रत्ययस्य वैकल्प्यात् प्रथमतः प्रकृतेरेव स्थितिः, पक्षे प्राचीनं धनं, प्राचीनो वृद्ध इत्यादि। तिरश्चीनमिति 'तिर्यचस्तिरश्चिरुदच उदीचीरि'चित्यनेनात्र तिरश्चादेशः। प्रतीचीनमिति 'अचोऽरामहरो भगवती'त्यनेनात्रारामहरः, पूर्वस्य त्रिविक्रमश्च॥

३१४३। जात्य। द्रव्ये वाच्ये जात्यन्ताच्छब्दाच्छरामः स्यात्। ब्राह्मणजातिरिव ब्राह्मणजातायः भट्टादिः। द्रव्यादन्यत्र तु न स्यादित्याह—अद्रव्ये त्विति। ब्राह्मणजातिरित्यत्र जातेरेव प्रधानता न तत्तुल्यस्य॥

३१४४। स्थाना। तुल्यत्वे वाच्ये स्थानान्तान्नाम्नश्छो वा भवति। शब्दशक्त्यात्र स्थान एव भगवत्साम्यं वक्तीति भगवतः स्थानमेव भगवत्स्थानीयः। भगवत्तुल्य इति भगवत्साम्य स च तुल्यादि॥

३१४५। किमे। अद्रव्यस्य प्रकर्षे वर्तमानात् किंशब्दात् एरा-

किन्तरां, किन्तमाम्। अत्र क्रियाया गुणस्य वा प्रकर्षः। पूर्वाह्णेतरां, पूर्वाह्णेतमाम्। अत्राधारशक्तेः प्रकर्षः। एवं यातितरां, यातितमाम्। प्रातस्तरां, प्रातस्तमाम्। नितराम्, उच्चैस्तराम्। द्रव्यप्रकर्षे प्रतिषेधः; उच्चैस्तरः कश्चित्॥ ३१४५॥

३१४६। सङ्ख्यायाः क्रियाभ्यावृत्तौ कृत्वसुः, द्वित्रिचतुर्भ्यः सुः।

---

मात्। आख्यातान्तात् अव्ययाच्च तरां तमाञ्च स्यात्। इदं किं इदं किमित्यनयोर्मध्येऽतिशयेन किं किन्तराम्। इदं किं इदं किं इत्येषां मध्ये अतिशयेन किं किन्तमां, वदादित्वादनयोरव्ययत्वम्। यद्यपिशब्दः प्रश्ने वर्तते, तथापि न प्रश्नप्रकर्षे प्रत्ययः किन्तर्हि पृच्छ्यमानस्य गुणस्य क्रियाया वा प्रकर्षे इत्याह—अत्रेति। अत्र स्थले क्रियाया गुणस्य वा प्रकर्षः स्यात्, तराद्यन्तत्वेन पृच्छ्यमानप्रकर्षस्यैवावगम्यमानत्वात्। अस्मिन् पूर्वाह्णेऽस्मिन् पूर्वाह्णे इत्यनयोर्मध्येऽतिशयेन पूर्वाह्णे पूर्वाह्णेतराम्। एवं बहूनां मध्ये एकस्योत्कर्षे पूर्वाह्णेतमाम्। 'कालान् ङेर्वा तर-तम-काल-तनेष्वि'त्यनेनात्र सप्तम्या अलुक्। यद्यपि नामाधिकारात् सर्वत्र नाम्न एव प्रत्ययस्तथापि विधानवलादत्र सप्तम्यन्तादप्ययं तद्धित इति ज्ञेयम्। अद्रव्यप्रकर्ष इत्युक्तं सफलीकुर्वन्नाह—अत्रेति। एवमित्यनेन पूर्वार्थसूचनात् इदं याति इदं यातीत्यनयोर्मध्ये इदमतिशयेन यातीति यातितरामित्यादौ यथायोग्यं वाक्यं कल्प्यम्। यातितरामित्यादिद्वये क्रियायाः प्रकर्षः। प्रातस्तरामित्यादिद्वये कालस्य। नितरामित्यादिद्वये गुणस्येति। अद्रव्यप्रकर्ष इत्युक्तात् द्रव्यप्रकर्षे तु प्रतिषेध इत्याह—द्रव्येति। कश्चिदिति वृक्षादिरित्यर्थः। किञ्च, पूर्वाह्णेतरामित्यत्र कालव्यतिरिक्तस्य एरामस्य भावात् कालस्य द्रव्यवाचित्वेऽपि न निषेधः। एवं शिष्टाचारात् प्रातस्तरामित्यादिद्वये च॥

३१४६। सङ्ख्या। क्रियाया अभित आवृत्तिः क्रियाभ्यावृत्तिस्तस्यां गम्यमानायां सङ्ख्यायाः सङ्ख्यावाचिनः कृत्वसुः स्यात्। द्वित्रि।

पञ्च वारान् हरिमर्चयति पञ्चकृत्वः। शतकृत्वः स्तुतवान्। द्विरधीते गीतां, त्रिश्चतुर्वा ॥ ३१४६॥

३१४७। बहोर्धा वा निकटकालक्रियाभ्यावृत्तौ।

बहुधा यजते, बहुकृत्वो वा। अनिकटत्वे तु—बहुकृत्व इत्येव ॥ ३१४७॥

---

अभ्यावृत्तौ गम्यमानायां द्वित्रिचतुर्भ्यः सङ्ख्यावाचिभ्यस्तुसुः स्यात्। कृत्वसोः सोश्चोराम इत्। पुनः पुनः प्रवृत्तिरभ्यावृत्तिः। अभ्यावृत्तिरेव वार इति वाक्ये वारशब्दं गृह्णन्नाह—पञ्चेति। यथा पञ्चकृत्व इति, तथा शतं वारान् हरिं स्तुतवान् शतकृत्व इति वदादित्वादत्र यथासम्भवं स्वादेर्महाहरः। एवं षट्कृत्वः सप्तकृत्वो भुङ्क्ते गच्छति तिष्ठतीत्यादि यथेष्टम्। द्वौ वारावधीत इति द्विरधीते। एवं त्रीन् वारान् चतुरो वारानधीते द्विरधीते चतुरधीत इति ज्ञेयम्। किञ्च, अत्र कश्चित् द्व्यादिभ्यो विकल्पं सुमिच्छतीति वाशब्देन सूचितम्॥ तेन द्विकृत्व इत्याद्यपि॥

३१४७। बहो। निकटकालक्रियाभ्यावृत्तौ गम्यमानायां बहुशब्दात् धा वा स्यात् पक्षे कृत्वसुश्च। बहुधेत्यादौ बहून् वारान् यजत इति वाक्यं योज्यम्। निकटत्व एव विकल्पः निकटत्वाभावे तु केवलं कृत्वसुरित्याह—अनिकट इति। सकृच्चैकस्य वारे गम्यमाने एकशब्दादुत्तरे सुर्भवति। एकशब्दस्य स्थाने सकृच्चादेशः। आदेशे सति लुग् युजन्तस्येति सुलुक् च। सकृद्भुङ्क्ते एकवारं भुङ्क्त इत्यर्थः, इति जुमरः। अभ्यवृत्तिर्वारः न चात्राभ्यावृत्तिः सम्भवति, तथापि लक्षणकरणसामर्थ्यादौपचारिको वारशब्दः प्रयोज्य इति कश्चित्। कश्चित्त्वेवमाह लक्षणमेतत् प्रपञ्चार्थं सकृच्छब्दस्यैकवारार्थस्य सकृद्भुङ्क्त इति भविष्यति, एकशब्दात्तु अभ्यावृत्त्यभावादेव कृत्वसुर्न भविष्यतीति मतभेदाद्गोस्वामिपादैरेतन्न विवृतम्॥

३१४८। तत्प्रकृतवचने केशवमयः।

प्राचुर्येणं प्रस्तुतः प्रकृतः, स चासौ प्रकृतश्चेति तत्प्रकृतः, तद्वचनेऽर्थे मयट् स्यात्। अन्नं प्रकृतं प्रस्तुतमन्नमयमिह। अपर-आह—अन्नं प्रकृतमस्मिन् अन्नमयो यज्ञः। अपूपमयं पर्व। उभयथापि प्रमाणम् ॥ ३१४८ ॥

३१४९। समूहवच्च बहुषु।

बहुषु प्रस्तुतेषूच्यमानेषु समूहवत् प्रत्ययाः स्युः। अपूपाः प्रकृताः उच्यन्ते आपूपिकमिह; अन्यपदार्थपक्षे आपूपिकं पर्व। चकारान्मयट्—अपूपमयम्; तुलसीमयी पात्री। मोदकाः प्रकृता उच्यन्तेऽस्मिन् मौदकिकं, मोदक-मयम् ॥ ३१४९ ॥

---

३१४८। तत् प्रकृतशब्दस्य हृदयस्थमर्थं प्रतिपादयन् वृत्तिमाह—प्राचुर्येणेति। प्राचुर्येण बाहुल्येन यः प्रस्तुतः सम्भृतीकृतः स एव प्रकृतपदवाच्यः। सचासावित्यत्र तच्छब्देन यस्मात् प्रत्ययस्तदेव परामृश्यते। तद्वचनेऽर्थे तत्प्रकृतवचनेऽर्थे तच्छब्दनिर्देश्यान्नाम्नो मयट् स्यात्। वाक्ये प्रस्तुतमित्यस्मात् पूर्वं प्राचुर्येणेति योज्यम्। अन्नमयमिहेति पर्वादावित्यर्थः। अत्रापरः कश्चिदेवं वाक्योदाहरणे आहेति व्यक्ति अपेत्यादि। अपूपमयमिति अपूपः प्रकृतोऽस्मिन्नित्यर्थः। उभयथापि उभयप्रकारेऽपि प्रमाणं वाच्यमित्यर्थः ॥

३१४९। समू। वृत्तिमाह—बहुष्विति। समूहवदित्यस्मात् परं नाम्न इति प्रयोक्तव्यम्। आपूपिकमिति तस्य समूह इत्यर्थे यथा 'अचितु-हस्तिधेनुभ्योरि'त्यनेन नृसिंहठस्तद्वदत्रापि इहेति पूर्ववत्। अत्राप्यपरमतमाह—अन्येति। सूत्रस्थं चशब्दस्य फलं वक्ति चकारादिति। यस्मात् समूहवत् प्रत्ययाः स्युस्तस्माच्चकारान्मयड़पि स्यात्। अपूपमयमित्यस्मादिहेत्यूह्यम्। अपरमते तु तुलसीमयीति। मोदका इत्यस्मात् पूर्वं एवमिति पूरयितव्यम् ॥

३१५० । देवतान्तात्तादर्थ्ये यरामः, पादार्घाभ्याञ्च, अतिथेस्तुण्यः ।

विष्णुदेवतायै इदं विष्णुदैवत्यम् । तथा पाद्यम्, अर्घ्यं, तथा आतिथ्यम् ॥ ३१५० ॥

३१५१ । स्वार्थे ।

प्रभुरयम् ॥ ३१५१ ॥

३१५२ । अनन्तावसथेतिह-भेषजेभ्यो ण्यः ।

आनन्त्यम्, आवसथ्यम्, ऐतिह्यं, भैषज्यम् ॥ ३१५२ ॥

३१५३ । तथा नव-सूर-मत्त-यविष्ठ-क्षेमेभ्यो यः ।

---

३१५० । देव । तादर्थ्ये देवतान्तान्नाम्नो यरामः स्यात् । पाद । तादर्थ्ये पादार्घाभ्यामपि स एव स्यात् । अति । पूर्वस्मिन्नर्थेऽतिथि-शब्दात्तु ण्यरामः स्यात् । तथेति पादाय इदमर्घाय इदमित्यर्थः । तथातिथये इदमित्यपि । सर्वत्र पुष्पफलजलादिकं वाच्यम् ॥

३१५१ । स्वार्थे । स्वार्थेऽर्थे नाम्नो यथास्वं प्रत्ययः स्यात् । इममधिकरोति प्रभुरिति ॥

३१५२ । अन । स्वार्थेऽर्थेऽनन्त आवसथ इतिह भेषज इत्येतेभ्यो ण्यरामो भवति । अनन्त एवानन्त्यम् । एवमुत्तरत्रापि वाक्यान्यूह्यानि । पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययमित्यमरः । भैषज्यमौषधम् । चतुर्वर्णादिभ्यश्चेति वक्तव्यम् । स्वार्थेऽर्थे चतुर्वर्णादिभ्यश्च ण्यरामः स्यात् । चतुर्वर्णमेव चातुर्वर्ण्यम् । एवं चातुराश्रम्यं चातुर्वेद्यं सार्व-वैद्यम् । किञ्च, चातुर्वद्यादिद्वयेऽनुहोड़ादित्यादुभयपदस्य वृष्णीन्द्रः । तथा माङ्गल्यं षाड़्गुण्यं सैन्यं सान्निध्यं सामीप्यं औपम्यं सौख्यं माणिक्यं त्रैकाल्यं त्रैशब्द्यं त्रैलोक्यमित्यादि ॥

३१५३ । तथा । तथेति पूर्वोक्तेऽर्थे नवादिभ्यो यरामः स्यात् ।

नव्यं, सूर्यः, मर्त्यम् ॥ ३१५३ ॥

**३१५४। नवस्य नूत्न-नूतन-नवीनाश्च।**

साधवः ॥ ३१५४ ॥

**३१५५। पुराणस्य प्रण-प्रत्न-प्रतन-प्रीणाश्च।**

साधवः ॥ ३१५५ ॥

**३१५६। भाग-रूप-नामभ्यो धेयः।**

भागधयम् ॥ ३१५६ ॥

**३१५७। देवात्ताप् लक्ष्म्याम्।**

देवता ॥ ३१५७॥

---

नव एव नव्यम्। एवं सूर्यः मर्त्यं यविष्ठ्यं क्षेम्यम्। स्वार्थिकाः क्वचित् प्रकृतेर्लिङ्गवचनान्यतिक्रान्ता वर्तन्त इत्यनेन स्वार्थिकानां लिङ्गादिव्यवस्थोक्तात्रापि ज्ञेया ॥

३१५४। नव। स्वार्थेऽर्थे नवस्य सम्बन्धे त्न तन खरामाः सन्तस्तस्य नूरित्यादेशेन सह नूत्न नूतन नवीनाश्च साधवो भवन्ति। नवीन इत्यत्र न्वादेशे सति उद्वयस्येति गोविन्दो ज्ञेयः ॥

३१५५। पुरा। स्वार्थेऽर्थे पुराणस्य सम्बन्धे न त्न तन खरामाः सन्तस्तस्य प्र-इत्यादेशेन सह प्रण प्रत्न प्रतन प्रीणाश्च साधवो भवन्ति। प्रीण इत्यत्र प्रादेशे सति अ-इद्वयस्येत्यरामहरो ज्ञेयः। वाक्यन्तु नव एव पुराण एवेत्यूह्यम् ॥

३१५६। भाग। स्वार्थेऽर्थे भागरूपनामभ्यो धेयः स्यात्। भाग एव भागधेयमिति। एव रूपधेयं नामधेयम् ॥

३१५७। देव। स्वार्थेऽर्थे देवशब्दात् ताप् सन् लक्ष्म्यां वर्तते। देव एव देवतेति ॥

३१५८। यावकादयः साधवः।

यावकः, माणिकः, नान्तरीयकः, कन्दुकः, स्नातक इत्यादि ॥ ३१५८ ॥

३१५९। लोहितको मणिभेदे वर्णे चास्थिरे लाक्षादिना रक्ते च साधुः।

अस्थिरे वर्णे लोहितिका, लोहिनिका चेति दृश्यते ॥३१५९॥

३१६०। कालकमस्थिर-तद्वर्णे स्यात्।

कालकं मुखम् ॥ ३१६० ॥

३१६१। विनयादेर्नृसिंहठः।

---

३१५८। याव। पूर्वोक्तेऽर्थे नृसिंहवुरामादिभिः सह यवादीनां यावकादयः साधवः स्युः। यव एव यावक इति नृसिंहवुरामान्तः। मणिरेव माणिक इति माधवठान्तः। नान्तरीयकादित्रयन्तु करामान्तम्। इत्यादीत्यादिपदेनास्याकृतिगणत्वं सूचितम् ॥

३१५९। लोहि। मणिभेदे वाच्ये अस्थिरेव, वर्णे च वाच्ये लाक्षादिना, रक्ते च वाच्ये कप्रत्ययेन साकं लोहितस्य लोहितकः साधुः स्यात्। अत्रास्थिरे वर्णे ठरामान्ता लोहितिका लोहिनिका चेति प्राचां मते दृश्यते इत्याह—अस्थिर इति। तन्मते तरामस्य पाक्षिकनरामादेशस्तु निपातनात् ज्ञेयः ॥

३१६०। काल। तस्य वर्णस्तद्वर्णः अस्थिरश्चासौ तद्वर्णश्चेति अस्थिरतद्वर्णस्तस्मिन् गम्ये केन सह कालस्य कालकं साधु स्यात्। कालकं मुखमित्यत्र मुखस्य कालिमवत्त्वं शोकादिनैवेति न तद्वर्णस्य स्थिरता ॥

३१६१। विन। तद्धितस्य बाहुल्यात् स्वार्थिकप्रत्ययान्तानां क्वप्रतेः स्थितिसम्भवाच्चात्र वाशब्दो गम्य इति स्वयमुदाहरणैः स्पष्टी-

विनयो वैनयिकः, समयः सामयिकः, उपचारः औपचारिकः, मुक्ता मौक्तिकम् ॥ ३१६१ ॥

३१६२। एवमत्ययव्यवहारसमूहविशेषाच्च, उपायस्यौपयिकम्, अकस्मादित्यस्याकस्मिकम्।

साधु ॥ ३१६२ ॥

३१६३। वाचिकं सन्देशे, कार्मणं वाचा प्रतिपादिते कर्मणि।

साधुनी ॥ ३१६३ ॥

३१६४। ओषधेः केशवणोऽजातौ।

---

करिष्यते। एवं प्रकरणेऽत्र सर्वत्रैव यथासम्भवं यथासम्भवं वाकारो ज्ञेयः। तेन स्वार्थेऽर्थे विनयादेर्नृसिंहठो वा स्यात्। विनय एव विनयः वैनयिक इत्यादिः ॥

३१६२। एव। आतिदेशिकोऽयम्। एवम्प्रकारेणात्ययव्यवहारसमूहविशेषाच्च नृसिंहठो वा स्यात्। अत्यय एव अत्ययः आत्ययिक इत्यादिः। उपा स्वार्थेऽर्थे नृसिंहठेन सार्धं उपायस्यौपयिकं वा स्यात्। अत्र येत्यस्य वामनो निपातफलम्। अक। स्वार्थेऽर्थे नृसिंहठेन साकमकस्मादित्यस्याकस्मिकं साधुवा स्यात्। अत्र संसारहरो निपातफलम्। यथोक्तमत्रान्यैः। विनयोपचारसङ्गतिसमयसमुत्कर्षसम्प्रदानानि। व्यवहारसमाचाराकस्मादनुगामिनः समूहश्च। अत्ययविशेषविषयाः कथञ्चिदत्यन्त इत्याद्याः ॥

३१६३। वाचि। सन्देशे वाच्ये नृसिंहठेन सह वाचो वाचिकं साधु स्यात्। सन्देशवाग्वाचिकमित्यमरः। कार्म। वाचा प्रतिपादिते कर्मणि वाच्ये केशवणरामेण सह कर्मण कार्मणं साधु स्यात् ॥

३१६४। ओष। अजातौ वाच्ये ओषधेरुत्तरः केशवणः स्यात्।

औषधं पिव। जातौ तु,—

"वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः॥
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥"

—इति कुमारसम्भवम् ( १।१० ) ॥३१६४॥

३१६५। प्रज्ञादेः केशवणः।

प्रज्ञ एव प्राज्ञः, प्राज्ञी स्त्री, वणिक् वाणिजः, मरुत् मारुतः, चोरः चौरः, रक्षो राक्षसः, देवता दैवतम्, मनो मानसं, शत्रुः शात्रवः, पिशाचः पैशाचं, वयो वायसः, बन्धुर्बान्धवः, विकृतं, वैकृतं, द्विता द्वैतं, प्रतिभः प्रातिभः, चण्डालश्चाण्डालः। आकृतिगणोऽयम् ॥ ३१६५ ॥

---

यदा ओषधिभिरारब्धे कल्कादौ औषधिशब्दो वर्तते, तदैव ओषधिरेवेति औषधं पिवेति। यदा तु जातौ वर्तते, तदा केशवणो न स्यादिति शिष्टप्रयोगेण द्रढ़यति जाताविति। यत्र हिमालये रजन्यां रात्रौ वनितासखानां वनेचराणां सम्बन्धे दरीगृहोत्सङ्गनिषक्तभासोऽतैलपूराः सुरतप्रदीपा ओषधयो भवन्तीत्यन्वयः। दरी गुहा सैव गृहं तस्योत्सङ्गः क्रोड़स्तत्र निषक्ता नियुक्ता भासो दीप्तयो यासां ताः॥

३१६५। प्रज्ञा। अत्रापि पूर्ववद्वेति गम्यम्। स्वार्थेऽर्थे प्रज्ञादेरुत्तरे केशवणो वा स्यात्। प्रज्ञादिपञ्चदशानामुदाहरणानि दत्त्वापि अपरितुष्यन्नाह—आकृतिगणोऽयमिति। तेन उष्णिह प्रत्यक्ष विद्या जुह्वत् चिकीर्षत् योध चक्षुस् वसु कुञ्च दशार्ह असुर अशनि व्याकृति सम्पत् विपत् विदत् सत्वत् अग्नीध्र हित साधारण आश्रयण आग्रहायणेत्यादीनां ग्रहणं ज्ञेयम्। अत्र साधारणादित्रयाणां ग्रहणं लक्ष्म्यां साधारणीत्याद्यर्थम्। अत्र विददिति शत्रन्तं सत्वदिति मतुप्रत्ययान्तं, तेन विदन्नेव वैदतः, सत्वानेव सात्वतः। कृष्णमृगार्थं जुह्वदित्येके जौह्वतः कृष्णमृग इत्युदाहरन्ति॥

३१६६। मृदो मृत्तिका, मृत्सामृत्स्ने तु प्रशंसायाम्।

साधवः ॥ ३१६६ ॥

स्वार्थो निवृत्तः।

३१६७। तसिर्वा।

प्रभुरयम् ॥ ३१६७ ॥

३१६८। प्रतिनिधौ पञ्चम्याः, अपादाने चाहीयरुहः।

प्रद्युम्नः कृष्णतः प्रति, कृष्णाद्वा। तथा व्रजत आयाति, व्रजाद्वा। अहीयरुहः किम् ? वैष्णवमार्गाद्धीयते ; विष्णुपदादवरोहति ॥ ३१६८ ॥

---

३१६६। मृदो। स्वार्थेऽर्थे इति केन सह मृदो मृत्तिका साधुः स्यात्। मृत्। स्वार्थेऽर्थे प्रशंसायां गम्यमानायान्तु सस्नाभ्यां साकं मृदो मृत्सामृत्स्ने साधू भवतः। स्वार्थं समापयति स्वार्थ इति ॥

३१६७। तसि। नाम्नो यथास्वं तसिर्वा स्यात्। अधिकरोति प्रभुरिति ॥

३१६८। प्रति। प्रतिनिधावर्थे नाम्नः परस्याः पञ्चम्या उत्तरस्तसिर्वा भवति। अपा। हीयच रुट् चेति सर्वेऽपि रामकृष्णा इत्यनेन एकवत् हीयरुट्, न हीयरुट्, अहीयरुट् तस्य। हीयरुहोऽप्रयोगे सति अपादानार्थे चकारात् प्रतिनिधावपि नाम्नः परस्याः पञ्चम्याः परस्तसिर्वा स्यात्। रुह-हाकोरप्रयोगेऽपादानपञ्चम्याः इति जुमरः। सिद्धोपदेशे विरिञ्चौ चेत्यनेन तसेरिराम इत्। पञ्चम्यास्तस् तद्धित इति सुबन्तपादे स्वयमेवोक्तमिति तसेस्तद्धितत्वात्। 'पूर्वस्य विष्णुपदवत्त्वं स्वादितद्धितयोरय-सर्वेश्वराद्योरि'त्यनेन पूर्वस्य विष्णुपदवत्त्वं सिद्धम्। तेन पूर्वस्य विष्णुपदवत्त्वात् तसेस्तद्धितत्वेन समासावय-

३१६९। अतिग्रहाचलनिन्दास्वकर्तरि तृतीयायाः हीयमानपापयोगाच्च।

वृत्ततोऽतिगृह्यते, हरिभक्तितो न चलति, व्यवहारतो निन्दितः। पक्षे—हरिभक्त्येत्यादि। अकर्तरि किम्? वृत्तेन क्षिप्तः। तथा वृत्ततो हीयते, वृत्ततः पापः॥ ३१६९॥

---

वत्वाच्च 'अन्तरङ्गस्वादेर्महाहर' इत्यनेन कृष्णत इत्यत्र तसि परे पञ्चम्या महाहरः। एवमुत्तरत्रापि। अत्र प्रतीति प्रतिनिधौ वर्तते, तस्मात् प्रद्युम्नः कृष्णस्य सदृश इति पर्यवसितोऽर्थः। तथेति पूर्वप्रकारेणेत्यर्थः। व्यावर्तयन्नाह—अहीयेति। वैष्णवमार्गात् हीयत इति त्यज्यते इत्यर्थः। दैवादिको हा इत्यस्य कर्तर्ययं प्रयोग इति कश्चित्। भावे चास्य प्रयोगो नेष्यते इत्यार्या इति स्वार्थाद्धीयते देवदत्तेनेति न स्यात्। तेन कर्मकर्तर्ययं प्रयोग इति बाभटः। हाक्निदशसामर्थ्यात् ओहाङ् गतावित्यस्य सार्थत उज्जिहीत इति कश्चित्। अवरोहतीति श्रंसतीत्यर्थः॥

३१६९। अति। ग्रहाचलनिन्दास्वर्थेषु नाम्न उत्तरस्या अकर्तरि विहितायास्तृतीया परस्तसिर्वा भवति। हीय। हीयमानेन पापेन च योगो यस्य तद्वाचिनः शब्दादुत्तरस्यास्तृतीयाः परस्तसिर्वा स्यात्। वृत्ततोऽतिगृह्यत इति वृत्तेनातिक्रम्य गृह्यत इत्यर्थः। गृह्यत इति 'यक् कृष्णधातुके भावकर्मणोरि'ति यक्। 'ग्रहिज्यावयी'त्यनेन सङ्कर्षणः। अत्र हेतौ करणे वा विहितायास्तृयायायास्तस्। एवं हरिभक्तित इत्यादि-द्वयेऽपि। विकल्पं स्मारयति—पक्ष इति। किञ्च, पक्ष इत्यस्मात् वृत्तेनेत्यपि योज्यम्। अकर्तरीत्यत्र इतिशब्दः प्रयोक्तव्यः सर्वत्र दर्शनात्। वृत्तेन क्षिप्त इति कर्तरि तृतीया। उत्तरसूत्रस्योदाहरणे दर्शयति—तथेति। वृत्ततो हीयते वृत्ततः पाप इति हेतौ करणे वा तृतीया। अत्र वृत्तस्य हीयमानेन पापेन च अवैष्णवादिना। योगः। नात्र निन्दा विवक्षिता, किन्तु स्वरूपाख्यानमेतत् निन्दायां पूर्वेणैव सिद्धेः॥

३१७० । षष्ठ्या विविधपक्षाश्रये रोगादपनयने च ।

देवा अर्जुनतोऽभवन्, आदित्याः कर्णतोऽभवन् । अर्जुनस्य पक्षे, कर्णस्य पक्षे इत्यादि । तथा हिक्कातः कुरु, प्रवाहिकातः कुरु, प्रतीकारमस्याः कुर्वित्यर्थः ॥ ३१७० ॥

३१७१ । प्रथमाप्रभृतिभ्यश्च यथादर्शनम् ।

कर्मगुण इत्यर्थे कर्मगुणतः, स्मरणात् स्मरणतः, आदौ आदितः, पृष्ठे पृष्ठतः, शरीरेण शरीरतः । "मन्त्रो दुष्टः स्वरतो वर्णतो वा" ( पाणिनीय-शिक्षा ५२ ) ॥ ३१७१ ॥

---

३१७० । षष्ठ्या । विविधपक्षाश्रये गम्ये नाम्नः परस्याः षष्ठ्या उत्तरस्तसिर्वा स्यात् । रोगा । अपनयने रोगस्य चिकित्सायां गम्यमानायां रोगवाचिनो नाम्न उत्पन्नायाः षष्ठ्या उत्तरस्तसिर्वा स्यात् । देवा इत्याद्युदाहरणद्वये अर्जुनादि द्वाभ्यां, विविधपक्षाश्रयसम्बन्धे या षष्ठी तस्यास्तस्, विविधपक्षाश्रयश्चात्रासाक्षात् प्रतीयत इति । पक्षे, षष्ठ्यास्थितिरित्यपि सूचयितुमर्थकथनप्रकारमाह—अर्जुनस्येति । अर्जुनस्य पक्षे देवाः, कर्णस्य पक्षे आदित्या अभूवन् यथाक्रमं तयोः पक्षमाश्रितवन्त इत्यर्थः । एतत्तु कर्णार्जुनयोर्द्वैरथयुद्धे विवृतमस्ति । इत्यादीत्यादिपदेन यथासम्भवमन्यदूह्यम् । उत्तरस्योदाहरणे दर्शयति—तथेति । अर्थमाह—प्रतीति । अस्या इति हिक्कायाः प्रवाहिकायाश्च प्रतिकारं कुर्वित्यन्वयः । पूर्ववदत्रापि पक्षे षष्ठ्या स्थितिः । हिक्का रोगविशेषः । प्रवाहिका ग्रहणी रुक् । अपनयने किम् ?—हिक्कायाः प्रकोपं करोतीत्यादिः ।।

३१७१ । प्रथ । दर्शनमिति शिष्टप्रयोगाणामित्यर्थाद्गम्यते । तेन यथादर्शनमिति शिष्टप्रयोगदर्शनमनतिक्रम्य नाम्नो विहितेभ्यः प्रथमादिभ्यश्च तसिर्वा स्यात् । कर्मेति कर्मणो गुणः कर्मगुणः स इत्यर्थे कर्मगुण इति प्रथमायास्तसिः । एवं स्मरणादित्याद्यर्थे स्मरणत इत्यादि स्पष्टम् । पक्षे, प्रथमादेः स्थितिश्च । स्वरतो वर्णत इति

३१७२। बह्वल्पार्थात् कारकाच्छस् माङ्गलिके, सङ्ख्यापरिमाणाभ्याञ्च वीप्सायाम्।

बहुनि बहुभ्यो बहुभिर्वा ददाति बहुषो ददाति। एवं भूरिशः, अल्पशः, स्तोकशः। श्राद्धादौ तु मा भूदिति माङ्गलिकग्रहणम्। सङ्ख्यायाः द्वौ द्वौ ददाति द्विशः, एवं पञ्चशः। परिमाणात्—पणं पणं ददाति पणशः। एवं प्रस्थशः, पादशः। अकारकात्तु—बहुस्वामी ॥ ३१७२ ॥

---

हेतुतृतीयायास्तस्। एवं मन्त्रतो हीन इति तु कर्तृतृतीयायास्तस्, हाक्प्रयोगे पञ्चम्या निषेधात्। हीयमानपापयोगाच्चेत्यस्य प्राप्तिरपि न सम्भवति। कर्तृव्यतिरिक्ततृतीयाया अर्थासङ्गतेश्च ॥

३१७२। बह्व। बहवश्च अल्पश्च बह्वल्पौ तावर्थौ यस्य स बह्वल्पार्थस्तस्मात्। माङ्गलिके गम्ये बह्वार्थादल्पार्थाच्च कारकरूपान्नाम्नः शस् वा भवति। अधिकाराद्वाकारोऽत्रानुवर्तते। सङ्ख्या। वीप्सायां गम्यमानायां सङ्ख्यावाचकात् परिमाणवाचकाच्च कारकरूपान्नाम्नः शस् वा स्यात्। वाक्योदाहरणानि दर्शयति—बहूनीत्यादिना। किञ्च, बहूनीत्यस्मात् पूर्वं आभ्युदयिकादिषु कर्मस्विति योज्यं, माङ्गलिकोपादानात्। एवमाभ्युदयिकादिषु कर्मसु बहुभ्य आगच्छति बहुषु निदधातीत्याद्यर्थेऽपि बहुश इत्यादि। अर्थग्रहणस्य फलं सूचयन्नुदाहरणान्तराण्याह—एवमिति। भूरिश इति आभ्युदयिकादिषु कर्मसु भूरीणि ददातीत्यादि वाक्यं योज्यम्। तथा प्रभूतशो ददातीत्यादि यथास्वम्। एवमाभ्युदयिकादिषु कर्मसु अल्पं ददातीत्याद्यर्थेऽल्पश इत्यादिः। माङ्गलिकग्रहणस्य फलं दर्शयति-श्राद्धेति। श्राद्धादवित्यस्मात् पूर्वं अनिष्टे कर्मणीति पूरणीयम्। तेनानिष्टे कर्मणि अल्पश इत्यादिर्न स्यात्। आभ्युदयिके कर्मणि बहुशो दानं, अनिष्टे कर्मण्यल्पशो दानमिति कश्चित्। बह्वल्पार्थात् किम् ?—गां ददाति। कारकादिति किम् ?—बहूनां स्वामीत्यादौ तु न स्यात्। सङ्ख्याया इति

३१७३। कृते द्विर्वचनेऽनेकसर्वेश्वरोत्तरार्धादव्यक्तानुकरणात् कृभ्वस्तियोगे आच्, नरस्य तलोपश्च।

पटत् पटत् करोति पटपटाकरोति। एवं दम्दमास्यात् ॥३१७३

३१७४। न त्विवतौ।

पटपटदिति करोति ॥ ३१७४ ॥

---

सङ्ख्यां लक्षीकृत्योदाह्रियते इत्यर्थः। यथा द्विश इत्यादिद्वयं, तथा कतिशः गणशः त्रिवच्छः द्वादशश इत्यादिः। परिमाणादिति सङ्ख्याया इतिवद्व्याख्येयम्। यथा—पणश इत्यादि। एवं कार्षापणश इत्यादि च यथास्वम्। पणादयः परिमाणशब्दा अन्यूनानतिरिक्तस्य परिमाणस्वरूपस्य एकार्थस्य वाचकाः विष्णुभक्त्या तु तेषां द्वित्वादिकमौपचारिकमभिधीयते। घटं घटं ददातीत्यत्र तु न भवति, नहि घटादयः पणादिवत् स्वभावात् एकार्थमात्रवृत्तयः यतो जातिशब्दा अमी जात्यतिव्यञ्जकभूतायामनेकव्यक्तौ वर्तन्ते। प्रकरणादिना तु एकार्थावगतौ घटशो देहीत्यादि भवत्येव। यथा—वृन्दशः, सङ्घशः, पूगश इति। वीप्सायामिति किम् ?—द्वौ ददाति। अकारकत्वे तु द्वयोर्द्वयोः स्वामीत्यादौ न स्यात्॥

३१७३। कृते। द्विर्वचन इत्यनेनात्राभीक्ष्ण्यं वीप्सा वा लभ्यते तत्तां विना द्विर्वचनासम्भवात्। यावन्मात्ररूपं तावन्मात्रबोधकमव्यक्तानुकरणमिति। यत्राकारादयो वर्णाः स्पष्टा न प्रतीयन्ते, सोऽव्यक्तशब्दस्तस्यानुकरणमिति कश्चित्। कृभूस्तियोगे द्विर्वचने कृते सति, अनेकसर्वेश्वरोत्तरार्धादव्यक्तानुकरणाच्छब्दात् आच् स्यात्। नरस्य तकारश्चेत्तदा तस्य लोपश्च। एवमिति दम्दमूस्यादिति वाक्ये दम्दमास्यादिति। अत्र नरे तरामाभावात्तस्य हरो न स्यात्। किं वेदं दमच्छब्दस्य रूपम्। एवं खटखटाकरोति खटखटाभवतीत्यादिः॥

३१७४। नत्वि। इति परे कृभूस्तियोगे कृते द्विर्वचनेऽनेक-

३१७५। आच् कृञ्योगे।

प्रभुरयं विं यावत् ॥ ३१७५ ॥

३१७६। द्वितीय-तृतीय-शम्ब-वीजेभ्यः कृषौ सङ्ख्यायाश्च गुणान्तायाः।

द्वितीयं कर्षणं करोति द्वितीयाकरोति। शम्बाकरोति ; पुनस्तिर्यक् कर्षतीत्यर्थः। तथा द्विगुणाकरोति क्षेत्रम् ॥ ३१७६ ॥

३१७७। समायाद् यापनायाम्।

समयाकरोति, कालं यापयतीत्यर्थः ॥ ३१७७ ॥

३१७८। सपत्रनिष्पत्राभ्यामतिव्यथने।

---

सर्वेश्वरोत्तरार्धादव्यक्तानुकरणात्तु आच् न स्यात्। एवं पटपटदिति स्यादित्यादिः। अनेकेति किम् ?–श्रत् श्रत् करोति। अव्यक्तानुकरणादिति किम् ?–दृशत् दृशत् करोतीत्यादौ न स्यात् ॥

३१७५। आच्। कृञ्योगे नाम्नो यथास्वं आच् स्यात्। यावत् विं तावदयं प्रभुनामाधिकार इत्याह–प्रभुरिति ॥

३१७६। द्विती। कृषौ याच्ये द्वितीयतृतीयशम्बवीजेभ्य आज् भवति कृञ्योगे। तथा गुणान्तायाः सङ्ख्यायाश्च आच् स्यात्। यथा–द्वितीयाकरोति। एवं तृतीयाकरोति अनुलोमं स्पृष्टं, पुनः प्रतिलोमं कर्षतीत्यर्थः। शम्बाकरोतीत्यस्यार्थं स्वयमाह–पुनस्तिर्यगिति। एवं वीजाकरोति वीजेन सह कर्षतीत्यर्थः। द्विगुणाकरोतीति द्विगुणं विलेखनं क्षेत्रस्य करोतीत्यर्थः। एवं त्रिगुणाकरोतीत्यादिः। क्षेत्रमिति सर्वेषां वाच्यपदं ज्ञेयम् ॥

३१७७। सम। कृञ्योगे यापनायां गम्यमानायां समयशब्दादाच् स्यात्। यापना तावत्कालस्य सम्भवतीति स्पष्टयन्नाह–कालमिति।

३१७८। सप। पत्रेण सह वर्तमान इति सपत्रः निर्गतं पत्र-

सपत्राकरोति मृगं, पत्रपर्यन्तेन शरेण तं व्यथयतीत्यर्थः। एवं निष्पत्राकरोति पत्रनिर्गमनपर्यन्तेन इत्यादि पूर्ववत्। अतिव्यथने किम्? निष्पत्रं करोति तरुम् ॥ ३१७८ ॥

३१७९। निष्कुलान्निष्कोषणे।

निष्कुलाचकार हिरण्यकशिपूदरम्; अन्तर्भागवहिष्करणेन तद्विदारयामास इत्यर्थः ॥ ३१७९ ॥

३१८०। सुखप्रियाभ्यामानुलोम्ये।

सुखाकरोति वैष्णवम् ॥ ३१८० ॥

---

मस्मादिति निष्पत्रः इत्येताभ्यामतिव्यथने गम्यमाने कृञ्योगे आच् भवति। मृगमित्यस्मात् परं व्याध इति योज्यम्। इत्यादिपूर्ववदिति शरेण तं व्यथयतीत्यर्थः। अतिव्यथन इत्यत्रातिव्यधन इति कश्चित् पठति। तस्मिंश्च सति सपत्राकरोति सपत्रं शरमस्य शरीरे प्रवेशयतीत्यर्थः। निष्पत्राकरोति शरीरात् शरं अपरपार्श्वे निष्क्रामयतीत्यर्थः। व्यावर्तयति अतीति। तरुमित्यस्मात् परं ग्रीष्म इति पुरणीयम्। एवं सपत्रं वृक्षं करोति प्रावृड़िति च ॥

३१७९। निष्कु। निष्कोषणेऽर्थे वर्तमानान्निष्कुलशब्दात् कृञ्योगे आच् स्यात्। निःकोषणार्थं स्फुटयति अन्तरिति। निष्कोषणादन्यत्र तु निष्कुलं करोति शत्रुं समूलं नाशयतीत्यर्थः। कुलशब्दोऽत्र गोत्रवचनः ॥

३१८०। सुख। अनुलोम्ये गम्यमाने कृञ्योगे सुखप्रियाभ्यामाच् भवति। आनुलोम्यमानुकूल्यं तच्च चित्तावधानरूपम्। सुखाकरोति वैष्णवं वैष्णवस्यानुकूल्यं करोतीत्यर्थः। एवं प्रियाकरोतीति। आनुलोम्यादन्यत्र सुखं करोत्यौषधं; औषधस्याचेतनत्वात् नही चित्तावधाने प्रवृत्तिः ॥

३१८१। दुःखात् प्रातिलोम्ये।

दुःखाकरोत्यवैष्णवम् ॥ ३१८१ ॥

३१८२। शूलात् पाके।

शूलाकरोति हरिपराङ्मुखान् यमः ॥ ३१८२ ॥

३१८३। सत्यादशपथे।

सत्याकरोति वस्तूनि वणिक्, मयैतद्ग्रहीतव्यमिति निश्चिनोतीत्यर्थः। अशपथे किम् ? सत्यं करोति ॥ ३१८३ ॥

३१८४। मद्रभद्राभ्यां माङ्गलिकमुण्डने।

मद्राकरोति वालः ॥ ३१८४ ॥

आच् कृञ्योगे निवृत्तः।

---

३१८१। दुःख। कृञ्योगे प्रातिलोम्येऽर्थे गम्ये दुःखशब्दादाच् स्यात्। प्रातिलोम्यं प्रातिकूल्यं तच्च चित्तस्य व्यथनरूपम्। दुःखाकरोत्यवैष्णवम् अवैष्णवस्यानभिमतमाचरतीत्यर्थः। अस्मादन्यत्र दुःखं करोति कुत्सितान्नमिति ॥

३१८२। शूला। कृञ्योगे पाके वाच्ये शूलशब्दादाच् भवति। हरिविमुखान् शूलेन पचतीत्यर्थः। पाक इति किम् ?–शूलं करोति कदन्नम् ॥

३१८३। सत्या। कृञ्योगे सत्यशपथेऽर्थे वर्तमानात् सत्यशब्दादाच् भवति। उदाहरणार्थौ स्पष्टौ। सत्यं करोति अङ्गुल्या गात्रं स्पृष्ट्वा तथ्यमिदमिति ज्ञापयतीत्यर्थः ॥

३१८४। मद्र। मङ्गलपूर्वकं मुण्डनं माङ्गलिकमुण्डनम्, अस्मिन्नर्थे वर्तमानाभ्यां मद्र-भद्र इत्येताभ्यां कृञ्योगे आच् स्यात्। मद्राकरोति वालः, शुभमुण्डनं करोतीत्यर्थः। एवं भद्राकरोति। माङ्गलिकमुण्डनं इति किम् ?–मद्रं करोति भद्रं करोति मङ्गलमात्रं करोतीत्यर्थः। कृञ्योगे आजधिकारं निवर्तयति आजिति ॥

३१८५। अभूततद्भावे कृभ्वस्तियोगे विः, कृञि कर्मणि भ्वस्त्योः कर्तरि।

विः सर्वं इत्॥ ३१८५॥

३१८६। अद्वयस्य वावीरामः, अन्यस्य त्रिविक्रमः।

अकृष्णं कृष्णं करोति कृष्णीकरोति ; अकृष्णः कृष्णो भवति कृष्णीभवति, कृष्णीस्यात् ; एवं हरीकरोति, हरीभवति॥३१८६॥

---

३१८५। अभू। प्रागवस्थातः अवस्थान्तरेण अभूतस्याजातस्यानन्तरं तदात्मलाभोऽवस्थान्तरेण जन्म अभूतद्भावः। कृच भूच अस्तिच कृभूस्तय एषां योगः कृभूस्तियोगस्तस्मिन्। अभूततद्भावेऽर्थे गम्यमाने कृभूस्तियोगे सति नाम्नो विर्भवति। कृञीति। 'यावत्सम्भवस्तावद्विधिरि'ति न्यायेन कृञ्योगे कर्मणि विषये भूस्तियोगे कर्तरि विषये विः स्यादित्यर्थः। विः सर्व इदिति। 'केवलप्रत्ययवेर्हरः' इत्यनेनेति शेषः॥

३१८६। अद्व। विप्रत्यये परेऽद्वयस्य ईरामः स्यात्। अद्वयादन्यस्य त्रिविक्रमश्च। अवस्थान्तरापत्तेरेव वाच्यत्वेन मुख्यत्वात् तद्वाचकादेव नाम्नः प्रत्ययो भवति, नान्यस्मादित्यवधेयम्। वाक्योदाहरणानि। किञ्च, अस्तेर्विध्यन्तस्यैव प्रयोगेऽभूततद्भावप्रतीतिः शब्दशक्तिस्वभावादिति सर्वशास्त्रसम्मतमित्यतः कृष्णीस्यादिति विध्यन्तमुदाहृतं नाच्युताद्यन्तम्। अन्यस्येत्यस्योदाहणं दर्शयति—एवमिति। अहरिं हरिं करोतीत्यादिवाक्यन्तु पूर्ववत्। यद्यप्यन्यस्येति सामान्येनोक्तं, तथापि वामनस्येति ज्ञेयम्। तेन नो स्यादित्यादौ न त्रिविक्रमसम्भावनेति। उक्तञ्च अगौर्गौरभवदित्यर्थे गोऽभवदिति। अभूततद्भाव इति किम्?—शुक्लं करोतीत्यादि। नात्र पूर्वावस्थावतोऽवस्थान्तरेण तदात्मलाभो विवक्षित इति नास्त्यभूततद्भावः। कृभूस्तियोग इति किम्?—अकृष्णः कृष्णो जायत इति वाक्यस्यैव विश्रान्तिः। अभूततद्भावेऽपि कारणात्

३१८७। अरुर्मनश्चक्षुश्चेतोरहोरजसां सलोपश्च।

अरूकरोति, सुमनीभवति, उच्चक्षूस्यात्। सुचेतीकृत्य, रहीभूतं, नीरजीकृतम् ॥ ३१८७ ॥

३१८८। सातिर्वा वि-विषये कार्त्स्न्ये।

पापं भस्मसात्करोति भस्मीकरोति विष्णुभक्तिः ॥ ३१८८ ॥

३१८९। अभिविधौ वि-विषये सम्पद्भ्वस्तियोगे सातिर्वा।

---

कार्यस्य भेदविवक्षायां न भवत्यनभिधानात्। तेन तन्तुभ्यः पटं करोति मृद्भ्यो घटो भवति, तन्तुं पटं करोति, मृदं घटं करोतीत्यादौ विर्न स्यात्। कथं तर्हि, वितानभूतं विततं पृथिव्यां, यशः समूहन्निव दिग्विकीर्णमिति सत्यम्। भूतशब्दोऽत्र शब्दान्तरमिवार्थः। वितानमिवेत्यर्थः। ततोऽत्र वेरभावः। ( तुल्यार्थो भूतशब्दस्तत्र च नाभूततद्भाव इति भारविटीकाकृन्मल्लिनाथाशयः। ३।४२ ॥ )

३१८७। अरु। अभूततद्भावेऽर्थे कृभ्वस्तियोगेऽरुर्मनश्चक्षुश्चेतोरहो रज इत्येतेषां सम्बन्धे विः स्यात्, सरामस्य हरश्च। अरूकरोतीत्यादौ अनरुररुः करोतीत्यादिवाक्यं यथासम्भवमूह्यम्। अरूकरोति उच्चक्षूस्यादित्यत्र द्वये सलोपे सति, अन्यस्येत्यनेन त्रिविक्रमः, शेषेषु 'अद्वयस्ये'त्यनेन ईरामः ।।

३१८८। साति। विविषय इत्यनेनाभूततद्भाव इति। एवं कृभ्वस्तियोग इति। वा-करणात् पक्षे विरिति चानुवर्तते। कार्त्स्न्ये एकव्यक्तेरनेकव्यक्तेश्च सर्वात्मना विकारपत्तिरूपेऽभूततद्भावेऽर्थे कृभ्वस्तियोगे सति नाम्नः सातिर्वा स्याद्विश्च। पापमिति। विष्णुभक्तिः साकल्यं पापमभस्म भस्म करोतीत्यर्थः। एवं भस्मसाद्भवति, भस्मीस्यात् कलुष इति ।।

३१८९। अभि। अत्रापि पूर्ववदभूततद्भावादिरनुवर्तते। अभि-

अभिविधिरभिव्याप्तिः। सुखसात्सम्पद्यते हरिभक्तिः, सुखसाद्भवति, सुखसादस्ति, सुखीभवति ॥ ३१८९ ॥

३१९०। तदधीनवचने कृभ्वस्तिसम्पद्योगे सातिर्वा।

कृष्णाधीनं करोति कृष्णसात्करोति, कृष्णसात्सम्पद्यते ॥३१९०॥

३१९१। देयेऽधोने च सातिस्त्रा च।

कृष्णसात्करोति कृष्णत्राकरोति, कृष्णत्रासम्पद्यते, कृष्णत्राभवति मयेदं कृष्णत्राकृतम् ॥ ३१९१ ॥

---

विधिरूपे वि-विषयेऽभूततद्भावेऽर्थे सम्पद्भूस्तियोगे सति नाम्नः सातिर्वा स्यात् पक्षे विश्च। अनभिधानादत्र कृधातोरनुपादानम्। अभिविध्यर्थं विवृणोति अभीति। अभिव्याप्तिरभिविधिः स चानेकव्यक्तीनां प्रत्येकमेकदेशेन विकारापत्तिरूप इति। सुखेति। हरिभक्तिर्यावत् सुखरूपा सम्पद्यते इत्यर्थः। यावत् सुखरूपेण प्रत्येकं परिणमतीति भावः। वाक्यन्त्वसुखं सुखं सम्पद्यत इत्यादि यथास्वमूह्यम् ॥

३१९०। तद। वि-विषयाग्रहणादन्यत्राभूततद्भावो नानुवर्तते। तदधीनवचने तदायत्तवाच्ये कृभूस्तिसम्पद्योगे नाम्नः सातिर्वा भवति। सूत्रस्यास्य वैकल्पिकत्वात् कृष्णाधीनं करोतीति वाक्यं पाक्षिकोदाहरणञ्च। एवं कृष्णाधीनो भवति, कृष्णसाद् भवतीत्यादि। अभूततद्भावस्याभावादत्र विर्नानुवर्तत इति तस्योदाहरणं न दत्तम्।

३१९१। देये। तदिति पूर्वस्मादनुवर्तते। यस्मै यद्दीयते तत्तदधीनं तस्मिन्नभिधेये तदधीने चार्थे कृभुस्तिसम्पद्योगे नाम्नः सातिस्त्रा च स्यात्। कृष्णदेयं करोति कृष्णाधीनं करोतीति कृष्णसात् करोतीत्यादिद्वयम्। एवं कृष्णदेयं सम्पद्यते कृष्णाधीनं सम्पद्यते इति कृष्णत्रासम्पद्यते। तथा कृष्णदेयं भवति, कृष्णाधीनं भवतीति कृष्णत्रा भवति। मया इदं कृष्णदेयं कृतं कृष्णाधीनं कृतमिति मयेदं कृष्णत्रा कृतमित्यादि ॥

३१९२। देव-मनुष्य-पुरुप-पुरु-मर्त्येभ्यो द्वितीया-सप्तम्योर्बहुलम् ।

कृष्णकृपा देवत्रागच्छति, देवं गच्छतीत्यर्थः। कृष्णः कृपां मनुष्यत्राकरोति, मनुष्ये करोतीत्यर्थः ; एवं पुरुषत्रागच्छतीत्यादि। बाहुल्यात्—बहुत्रा जीव वैष्णव ! शसादिरव्ययं, कृत्वस्वर्थश्च ॥ ३१९२ ॥

पूरितास्तद्धिताः ।

इति श्रीश्रीहरिनामामृताख्ये वैष्णव-व्याकरणे
तद्धित-प्रकरणं सप्तमं
समाप्तम् ॥ ७ ॥

---

३१९२। देव। कृत्रादेरग्रहणादत्र धातुमात्रमवगम्यते। धातुमात्र-योगे द्वितीयासप्तम्योर्विषययोर्देवमनुष्यपुरुषपुरुमर्त्येभ्यो बहुलं त्रा भवति। कृष्णकृपा देवत्रा गच्छतीत्याद्युदाहरणद्वयमर्थद्वयञ्च क्रमेणाह—कृष्ण-केपेति। एवमिति पुरुषं गच्छति पुरुषे वेत्यर्थः। इत्यादिपदेन पुरुत्रा गच्छति मर्त्यत्रा करोति। तथा पुरुत्रा प्राप्नोतीत्यादि च। अत्र बहुशब्दमपि कश्चित् पठतीति बाहुल्येनैव तद्दर्शयन्नाह—बाहुल्यादिति। बह्विति। हे वैष्णव त्वं बहून् कालान् व्याप्य जीवप्राणान् धार-येत्यर्थः। अनेन भङ्ग्या एतच्छास्त्रानुशीलकं प्रति ग्रन्थकृताशीर्दत्ता चिरजीवित्वाभावेनास्यानुशीलनस्यानिष्पत्तेः। एतदुपलक्षणम्। बाहुल्या-दन्यतोऽपि यथासम्भवमूह्यम्। यद्यथाकथञ्चिद्यथा। सामान्ये वर्तमानात् किम्शब्दाच्चिच्चनौस्त इति वक्तव्यम्। किमश्चिच्च नावसाकल्ये इत्यन्ये। कश्चित् कौचित् केचित्, काचित् केचित् काश्चित्, किञ्चित् केचित् कानिचित्। एवं कञ्चन काचन किञ्चनेत्यादि। एवम-नन्तादेरप्यूह्यम्। तथा कुतश्चित् कुत्रचित् कुतश्चन कुत्रचनेत्यादि।

किन्त्वेषु पूर्वस्वादेर्महाहरोऽपि बाहुल्यादेव न स्यात्। बाहुल्यस्यानेकार्थदानसामर्थ्यात् साचिप्रभृतयोऽपि निपातनत्वेन वाच्याः। साचि तिरश्च तिर्यगर्थे, धिक् निन्दायां, हिरुक् पृथक् च वर्जने, मनाक् अल्पे, शनैः क्रियामान्द्ये, उच्चैर्महत्त्वे, जोषं तूष्णीञ्च मौने, कामं स्वेच्छायां, निकाममतिशये, वरं नीचोत्कर्षे, परं तिरोऽन्तर्धानतिर्यगर्थयोः, स्वयमात्मार्थे, प्रायो बाहुल्ये, सपदि तत्क्षणार्थे, साक्षात्, प्रत्यक्षे, समा सर्वकाले, सहसा हठात् चिरेण युगपच्च एककाले, उपांशु अल्पकालोच्चारणे, पुरोऽग्रे, प्रसज्य बलात्कारे, तु पुनरर्थे। अथ किञ्च अनुमतौ। अन्तरा अन्तराले, अमा नो नाच प्रतिषेधे, पूर्वं प्रथमञ्च प्रागर्थे। निश्चयेन पतन्त्यनेकार्थेषु निपात इति। शब्दवारिधेरपारत्वादन्ये शब्दाः शास्त्रान्तराज्ज्ञेयाः। वदादेरन्तर्गणत्वादेतदन्तशसादीनामव्ययत्वं प्रतिपादयति शसादिरिति। शसादिः कृत्वस्वर्थाश्चाव्ययं स्यादित्यर्थः। तद्धितान् समापयति पूरिता इति॥

---

## अथ ग्रन्थोपसंहारः

कृष्णत्राकृतमेतत्तस्माद्विफला न चात्र मात्रापि।
अपि तु महाफलयुक्ता तल्लीलाकाव्यवज्जति॥१॥

---

ननु व्याकरणमिदं हरिनामामृताख्यं तर्ह्यत्र सर्वेषां वर्णानां धातूनां नाम्नाञ्च हरिनामोपरक्तता कथमस्माभिर्न दृश्यत इति शास्त्रार्थपरिपन्थिनश्चेद्ब्रूयुस्तान् प्रत्याह—कृष्णत्रेति। यतो मयैतच्छास्त्रं कृष्णदेयं कृतं कृष्णायार्पितं तस्मादत्र मत्कृतव्याकरणे मात्रापि विफला फलहीना न स्यात, यदत्र मात्राया विफलता न स्यात्, तदा पुनर्धातूनां नाम्नामपि विफलता न स्यादिति किमुत वक्तव्यम्। अपि तु तदर्पितत्वेन मात्रा तल्लीलाकाव्यं श्रीमद्भागवतादि तद्वत् महाफलसम्पृक्ता सती जयति सर्वोत्कर्षेण वर्तते॥१॥

यदत्र व्याक्तमुक्तं न भ्रान्तं वा तदशेषतः।
ज्ञेयं शोध्यश्च विज्ञेभ्यो विज्ञशास्त्रावलोकतः ॥२॥
हानीयं पाणिनीयं रसवदरसवत् काकलापः कलापः
सार-प्रत्यागि सारस्वतमपहतगीर्विस्तरो विस्तरोऽपि।
चान्द्रं दुःखेन सान्द्रं सकलमविकलं शास्त्रमन्यन्न धन्यं
गोविन्दं विन्दमानां भगवति भवतीं वाणि नो
चेद्व्रवाणि ॥३॥

---

पूर्वं व्याकरणे मरुनीवृतीत्यनेन पाणिन्यादिपाटकानपि वैष्णवादीन् स्वस्वशास्त्रे प्रयासं त्याजयित्वा हरिनामामृतरसपानावगाहनार्थमस्मिन शास्त्रे प्रवर्तित इतीदानीं यद्यपि स्वस्य भ्रमप्रमादादिर्नास्ति, तथापि अन्येन किञ्चिदपलपितं मत्वा तान् प्रार्थयते—यदिति। अत्र शास्त्रे यद्व्यक्तं नोक्तं भ्रान्तं वोक्तं तत्सर्वमशेषतः शेषाभावात् विज्ञशास्त्र-दर्शनाद्विज्ञेभ्यः सकाशात् ज्ञेयं शोध्यञ्चेत्यर्थः। अथोवा केवल-मेतच्छास्त्रानुशीलकानां क्वचित् क्वचित् सन्दिहानानां शास्त्रान्तरज्ञान-शून्यानां विज्ञशास्त्रेषु विज्ञजनेषु च दर्शनप्रश्नाभ्यां स्वस्वसन्देहभञ्ज-नार्थमादरप्रतिपादनाय प्रार्थनमिदम्। समानमन्यत् ॥२॥

अथ श्रीभगवन्नामघटितसवश्वरदशावतारादिसंज्ञाद्वारा श्रीगोविन्दं लब्धवती तुष्टा हे वत्स वरं वृणु वरं वृण्विति स्वसाक्षाद्व्रा-षिणीं वागधिदेवीं तत्वदृष्टया भगवन्निजकिङ्कर्यपि लोकरीत्या जीवा-भिमानी सन् प्रेमोत्कण्ठितमनाः सगद्गदवाक् प्रणत्य शिरसि कृताञ्जलिः श्लोकयुग्मेन श्रीमान् ग्रन्थकारः स्तौति। तत्र प्रथमतः शास्त्रान्तर-निन्दामुखेन स्तुवन्नाह—हानीयमिति। हे भगवति हे षड़ैश्वर्यपूर्णे हे वाणि हे वाग्रूपे भगवत्पाणिन्यादिकृतं वेदमतं पाणिनीयप्रभृति-प्रशस्तशब्दशासनमपि भवतीं त्वां यदि गोविन्दं विन्दमानां श्रीकृष्णं प्राप्नुवतीं न व्रवाणि न व्यक्तं वदेत्, तदा तत्सर्वमेवम्भूतमेवम्भूतं स्यादि

पानीयं पाणिनीयं रसमृदु रसवन्मुत्कलापः कलापः
सार-श्रीसारि सारस्वतमधिमधुगीर्विस्तरो विस्तरोऽपि।
चान्द्रं सौख्येन सान्द्रं सकलमविकलं शास्त्रमन्यत् प्रशस्तं
गोविन्दं विन्दती त्वां यदि भगवति गीर्वाणि वाणि
ब्रवाणि ॥४॥

---

त्यन्वयः। तत्र तावत् पाणिनीय पाणिनिना प्रोक्तं रसवत् रस इव पानार्हमप्यरसवत् सन्धानीयं हननार्हं स्यात्। प्रोक्तप्रत्ययान्ताच्चेति पाणिनीत्यस्माच्छः। कुशाग्रादित्वादिवार्थे हानेत्यस्माच्छः। तथा कलापः कार्तिकेयस्य वोढृकलापिना प्रोक्तोऽपि काकानामालाप इवेति कुत्सितालाप इव वेति लुप्तोपमा। एवं सारस्वतं सरस्वत्या भवत्या प्रोक्तमपि सारप्रत्यागि साररहितमिवेति। विस्तरो विस्तरकारेण प्रोक्तः स्वयं विस्तारभूतोऽप्यविस्तरः सन्नपहतगीर्वृथावागिति। चन्द्रं चान्द्रेण प्रोक्तं सकलं कलाभिः सह वर्तमानमप्यविकलं कलाहीनं कलाहीनं सत् दुःखेन सान्द्रं निविड़म्। अन्यत् कार्त्स्न्यं शब्दानुशासनमधन्यं निष्फलमित्यर्थः। आहतजल्पितजटितं शब्दानुशासनस्तोममिति पूर्वोक्तहेतुरप्यत्रानुसन्धेयः ॥३॥

इदानीं पाणिनीयादिशास्त्र-प्रशंसामुखेन स्तुवन्नाह—पानीयमिति। अत्रापि तेन प्रोक्ताद्यर्थं पूर्ववज्ज्ञेयम्। परमानन्दचिद्रूप-स्वप्रसादोन्मुख-श्रीभगवत्स्वरूपशक्तिमुल्लासाद्बहुविधं सम्बोधयन् प्रार्थयते—हे भगवति हे समग्रैश्वर्ययुक्ते हे गीर्वाणि हे वाग्देवि हे वाणि हे वाक्प्रवर्तके पाणिनीयादिशास्त्रं यदि त्वां गोविन्दं विन्दती ब्रवाणि तर्हि तदादि सर्वमेवम्भूतमेवम्भतं स्यादित्यन्वयः। तत्र यदि पाणिनीयं त्वां गोविन्दं लब्धवती वदति, तदा रसेभ्योऽपि कोमलरसतुल्यं पानीयं पानयोग्यं स्यात्। एवं कलाप उत्कलापः उत्कण्ठितालापः। सारस्वतं स्थिरसम्पदं सतुं शीलं स्यात्। विस्तरनामा विस्तरोऽपि बहुलोऽपि सन् अधिकृतमधुगीः स्यात्। चान्द्रमविकलमपि सकलं

भगवन्नामवलिता भगवद्भक्तितत्परैः ।
वृन्दावनस्थजीवस्य कृतिरेषा तु गृह्यताम् ॥५॥
छान्दसाप्रचरद्रूपरूढ़शब्दान् विना मया ।
अत्रालेखि तदिच्छा चेद्‌दृश्योऽन्यः शास्त्रसंग्रहः ॥६॥
हरिनामामृतसंज्ञं, यदर्थमेतत् प्रकाशयामासे ।
उभयत्र च मम मित्रं, स भवतु गोपालदासाख्यः ॥७॥

---

सत् सौख्येन सान्द्रं निविड़ं स्यात्। अन्यत् शेषकार्त्स्न्यं शास्त्रं प्रशस्तं स्यात्। एवं स्तुता श्रीसरस्वती श्रीमद्ग्रन्थकारं प्रति स्वाभीष्टवरं दत्त्वा स्वधाम जगामेति ज्ञेयम् ॥४॥

इदानीं विविधशास्त्राध्यापकावलिनिषेवितपङ्कजः श्रीमान् ग्रन्थकारः स्वकृतिग्रहणाय हरिभक्त्यभिरतान् सच्छात्रादीन् प्रार्थयते—भगवन्निति । भो साधवो वृन्दावनस्थस्य जीवाभिधस्य ममैषा तन्यमाना कृतिर्भवद्भिर्गृह्यताम् । यतो यूयं भगवद्भक्तिपरायणा इयं मम कृतिरपि भगवन्नामयुक्तेति भगवद्भक्तितत्परैर्युष्माभिरेव तु मत्कृतिरेषा ग्राह्या नान्यैरिति भावः । एतदादिबहुशास्त्रकृतापि श्रीमद्गोस्वामिपादेन स्वयशः-प्रतिष्ठादिनिराकाङ्क्षिना वृन्दावनस्थजीवस्येति स्वनामप्रदर्शने यत्परिपाटिहीनं कृतं तत्परिपाटियुतन्तु समासटीकायां तन्नामव्युत्पत्तौ मया दर्शितम् ( ८५३ पृः ४ पं ) ॥५॥

पाणिनीयादौ तत्तद्ग्रन्थकृद्भिश्छान्दसा अप्रचरद्रूपा रूढ़शब्दाश्च प्रयुज्यन्ते मया त्वत्र ग्रन्थे छान्दसानां वैदिकत्वात् अप्रचरद्रूपरूढ़ानां कादाचित्कत्वात् ते ते न प्रयुज्यन्त इत्याह—छान्देति । छान्दसशब्दान् अप्रचरद्रूपरूढ़शब्दांश्च विना भाषात्वादत्र मयान्यशब्दो व्यलेखि, भवतां तेषु छान्दसादिष्वाकाङ्क्षाचेदस्ति तदा युष्माभिरन्यः शास्त्रसंग्रहो दृश्यते इति प्रेरणम् ॥६॥

इदानीन्तु ग्रन्थं समापयता श्रीमद्गोस्वामिपादेन यन्निमित्तमेतच्छास्त्रं प्रकाशितं सर्वावस्थायां तत्साहित्यं प्राार्थ्यते हरिनामामृतेति ।

इति वेदवेदाङ्गवेदान्तेतिहास-पुराणाद्यध्ययनाध्यापन-जनितयशस्तोम-सोमधवलीकृत-दिङ्मुखैर्महामहोपाध्याय-निकरैः परमवृहत्तम-सिद्धिसङ्घैश्च निषेवितपादपङ्कजैः परमहंस-कुल-मुकुटमणि-श्रीमज्जीवगोस्वामिपादैर्विरचितमिदं श्रीमद्धरिनामामृताख्यं वैष्णवं व्याकरणं सम्पूर्णम् ॥ * ॥

यस्मै श्रीयुतगोपालदासाख्याय निमित्तमेतद्धरिनामामृतसंज्ञ व्याकरणं मया प्रकाशयामासे स श्रीमद्गोपालदासनामा उभयत्र व्यवहारे परमार्थे च, किम्बा प्रकटावस्थायामप्रकटावस्थायाञ्च मम मित्रं भवत्वित्यर्थः ॥७॥

इति श्रीरासविहारिसाङ्ख्यतीर्थ परिशोधितं श्रीहरिनामामृत-व्याकरणं सम्पूर्णम् ॥

## टीकाकृतः श्रीजीवस्तुतिः ।

श्रीश्रीमज्जीवगोस्वामिने श्रीवैष्णवाय नमः ।

इत्थं महाशब्दपाथो-निधीनां स्फुरद्भूकालोलकल्लोलवर्गे ।
सदानन्दमान्दोललीलां विधत्ते नमो जीवगोस्वामिने नित्यमस्तु ॥१॥
हरेर्लीलया श्रीनितान्तः कृती यः सदा राधया राधयन् गोपमीशम् ।
तयोर्नाममालाभिरेतद्व्यधत्त नमो जीवगोस्वामिने नित्यमस्तु ॥२॥
पुराणेषु वेदेषु निष्णातवुद्धिस्तदङ्गेषु तत्त्वार्थवेत्ता विचार्य ।
न चान्यत्समो यस्य तत्तद्विचारे नमो जीवगोस्वामिने नित्यमस्तु ॥३॥
कृतं येन भक्त्या परेशप्रवेशं सुशास्त्रं महावोधकं शब्दरूपम् ।
हरेर्नामसन्धानशीलैश्च सेव्यं नमो जीवगोस्वामिने नित्यमस्तु ॥४॥

* पुष्पिकावाक्यमेतत् लिपिकारकृतं न तु ग्रन्थकारकृतमिति प्रतीयते एवं संज्ञासन्ध्यादिसर्वप्रकरणान्ते ज्ञेयम् ॥

टीकाकारस्य सविनयविज्ञप्तिः ।

§ अब्धिकोटिगभीरस्य श्रीजीवस्य महामतेः ।
बोद्धुं कार्त्स्न्यमतं कोऽपि न शक्तोऽत्र महीतले ।।५।।
तथाप्यहं तत्पदाब्जद्वन्द्वमाश्रित्य क्षुद्रकः ।
तत्कृतेस्तु यथायोग्यं व्याख्यानां कृतवान् मुदा ।।६।।
श्रीगोविन्दपदद्वयं हृदि बहन् श्रीकिन्दुविल्वे * वसन् ।।
मासे कार्तिकसंज्ञके शुभतिथौ घस्रे तथा भार्गवे ।।
भक्त्या श्रीगुरुपादपद्मयुगलं नत्वा च सद्वैष्णवान् ।।
श्रीगोपीचरणाभिधः कलिभवोऽकार्षं हि टीकां मुदा ।।७।।
हे वैष्णवा हरिपरायणसद्गुणाढ्या
युष्मत्कृते मम कृतिर्न यथा वृथा स्यात् ।
एषा तथैव परिशीलक-सज्जनेभ्यः
सन्दीयतामिदमहं बहुधा हि याचे ।।८।।
जाड्यमान्द्यादिदोषाद्धि यदत्र न स्फुटं भवेत् ।
तत्सर्वं विज्ञशास्त्रेभ्यः शोध्यं ज्ञेयं भवादृशैः ।।९।।
पुलिन्दोत्थोः यथा वह्निः स्वर्णनैर्मल्यकारकः ।
तथैवायं मदुत्थोऽपि वुद्धिसम्मार्जको भवेत् ।।१०।।

इति परमभागवताग्रगण्य-श्रीमद्धरेकृष्णाचार्यकृतौ व ालतोषणीनाम्न्यां टीकायां मध्ये तुर्याश्रमिक-वेदान्तभूषण-श्रीमद्गोपीचरणदासस्य विरचितातद्धितोद्दीपनीनाम्नी सप्तमी टीका समाप्ता ।।

श्रीहरिगुरुवैष्णवब्राह्मणेभ्यो नमोऽस्तु ।।

---

§ चतुर्थश्लाकादनन्तरं 'अक्षरमिदं श्रीगोपीचरणदासस्य पुस्तकञ्च' इति टीकाया आदर्शपुस्तके लिखितमस्ति, सुतरां आदर्शटीकापुस्तकमिदं शेषटीकाकारस्यैव स्वहस्तलिखितमिति प्रतीयते ।।

*केन्दुविल्वेति श्रीगीतगोविन्दकारस्य श्रीमतो जयदेवस्य वसति-स्थानस्य नाम, अधुना वीरभूमप्रदेशे केँदुलीति यस्य ख्यातिरस्ति ।।

# अव्ययशब्दसंग्रहः *

अ—अभाव-भेद-अप्राधान्य-ईषत्-
  सादृश्य-विरोधार्थेषु ।
अकस्मात्—अकारणात्, हठात् ।
अग्रतस्—प्रथमे, सम्मुखे ।
अघोस्—सम्बोधने ।
अङ्ग—सम्बोधने ।
अचिरात्—शीघ्रम् ।
अञ्जसा—शीघ्रम्, सत्यम् ।
अट्टट्ट—उच्चशब्दे ।
अतस्—अतएव ।
अति—अधिकम् ।
अतीव—अतिशयम्, अधिकम् ।
अत्र—अस्मिन् ।
अथ—मङ्गलान्तरारम्भप्रश्न-
  कार्त्स्न्यार्थेषु ।
अथकिम्—स्वीकारे ।
अथो—मङ्गलानन्तरारम्भप्रश्न-
  कार्त्स्न्यार्थेषु ।
अद्धा—सत्यम्, यथार्थम् ।
अद्य—अद्य, इदानीम् ।
अधरात्—नीचार्थे ।
अधरेण—नीचार्थे ।
अधस्—नीचार्थे ।
अधस्तात्—नीचार्थे ।
अधुना—इदानीम् ।

अनु—पश्चात्, लक्षीकृत्य ।
अनुपदम्—तदनन्तरम् ।
अन्ततस्—शेषार्थे, न्यूनार्थे ।
अन्तर—मध्ये, शेषे, अन्तःकरणे च ।
अन्तरा—व्यतिरेकेण, मध्ये ।
अन्तरेण—विना ।
अन्यत्—अन्यप्रकारः ।
अन्यतरेद्युस्—द्वयोर्मध्ये एकदिने ।
अन्यतस्—अन्यत्र, अन्यप्रकारेण ।
अन्यत्र—अन्यस्थाने, अन्यविषये ।
अन्यथा—अन्येन प्रकारेण ।
अन्यदा—अन्यस्मिन् समये ।
अन्येद्युस् }
अपरेद्युस् } —अपरदिने ।
अभि—प्रति ।
अभितस्—सर्वस्यां दिशि, समीपे ।
अमा—सह, चन्द्रकलायाम् ।
अमुत्र—परलोके ।
अयि—कोमलसम्बोधने, प्रश्ने च ।
अये—सम्बोधने, स्मरणे च ।
अरे—नीचे-सम्बोधने ।
अरे रे—नीच-सम्बोधने ।
अर्वाक्—पूर्वे, पश्चात्, वक्रार्थे च ।
अर्वाच्—पूर्वे, पश्चात्, वक्रार्थे च ।
अलम्—व्यर्थसमर्थयोः ।

---

* व्याकरण-पाठार्थिनामेकत्राव्ययशब्दज्ञानार्थमयं समाहृतः ।

अवश्यम्—निश्चये ।
असि—तमर्थे ।
अस्तम्—अदर्शने, नाशे ।
अस्ति—भवत्यर्थे, तिष्ठत्यर्थे च ।
अस्तु—भवतु ।
अस्मि—अहमर्थे ।
अहह—खेदे, आश्चर्ये च ।
अहहा—खेदे, आश्चर्ये च ।
अहे—सम्बोधने ।
अहो—आश्चर्ये ।
अहोवत्—कारुण्ये ।
अह्लाय—शीघ्रम्, तत्क्षणात् ।
आ—स्मरणे, पर्यन्तार्थे च ।
आं—स्मरणे, स्वीकारे च ।
आः—विरक्तौ, पीड़ायाञ्च ।
आरात्—दूरे, समीपे च ।
आविस्—प्रकाशे ।
आहो—सन्देहे, प्रश्ने च ।
आहोस्वित्—प्रश्चे, सन्देहे
इ—खेदे, कोपे च ।
इतस्—ततः, अत्र ।
इतस्ततः—अत्र तत्र ।
इतरेद्युस्—अन्यदिने ।
इति—इदमर्थे, शेषे, अतएव ।
इतिह—परम्परायाम् ।
इत्थम्—अनेन प्रकारेण ।
इदानीम्—अधुना ।
इव—सदृशार्थे, वाक्यालङ्कारे च ।
इस्—खेदे, विस्मये च ।
इह—अत्र ।
ईषत्—स्वल्पे ।
उ—वितर्के, पादपूरणे च ।
उच्चकैस्—उच्चे, अधिके च ।
उच्चैस्—उच्चे, अधिके च ।
उत—संशये, समुच्चये च ।
उताहो—प्रश्ने, विकल्पे च ।
उताहोस्वित्—प्रश्ने, विकल्पे च ।
उत्तरतस्—उत्तरे ।
उत्तरात्—उत्तरे ।
उत्तरेण—उत्तरे ।
उत्तरेद्यूस्—परदिने ।
उदक—उत्तरस्यां दिशि ।
उपजोषम्, उपयोषम्—आनन्दे, सन्तोषे च ।
उपरि—उच्चस्थाने ।
उपांशु—निर्जने ।
उभयतस्—उभयेन, प्रकारेण ।
उभयेद्युस्—उभयदिने ।
उन्—क्रोधे, प्रतिज्ञायाञ्च ।
उररी—स्वीकारे ।
उरी—स्वीकारे ।
उरुरी—स्वीकारे ।
उषा—प्रातः ।
ऊ—दुःखे ।

ऊम्—गर्वे, क्रोधे च ।
ऊररी—स्वीकारे ।
ऊरी—स्वीकारे ।
ऊरुरी—स्वीकारे ।
ऊर्ध्वम्—उपरि ।
ऊषा—प्रातः ।
ऋते—विना ।
ए—स्मरणे, सम्बोधने च ।
एकत्र—एकस्थाने, सहयोगेन ।
एकदा—एकस्मिन् समये ।
एकैकशम्—एकक्रमेण ।
एतर्हि—इदानीम्, अतः कारणात् ।
एव—अवधारणे ।
एवम्—अनेन प्रकारेण,
सम्मतौ च ।
ऐ—स्मरणे, सम्बोधने ।
ऐषमस्—अस्मिन् वत्सरे ।
ओ—सम्बोधने, स्मरणे च
ओम्—प्रणवे, स्वीकारे च ।
औ—सम्बोधने ।
कच्चित्—प्रश्ने, इच्छाप्रकाशे च ।
कति—कियति ।
कथम्—केन प्रकारेण ।
कदा—कस्मिन् समये ।
कदाचन—कस्मिंश्चित् समये ।
कदाचित्—कस्मिंश्चित् समये ।
कर्हि—कदाचित् ।

कर्हिचित्—कस्मिंचित् समये ।
कामम्—यथेष्टम्, पर्याप्तम् ।
किं पुनः—वक्तुमधिकं किम् ।
किंवा—अथवा ।
किंस्वित्—सम्भावनायाम् बितर्के च ।
किञ्च—अपिच ।
किञ्चन—किञ्चित् स्वल्पे,
कियदंशे च ।
किञ्चित्—स्वल्पे ।
किन्तु—परन्तु ।
किन्नु—संशये ।
किम्—कुत्सितार्थे, प्रश्ने,
कितर्के च ।
किमिति—किमर्थम् ।
किमु—सम्भावनायाम्, कितर्के च ।
किमुत—सम्भावनायाम्, वितर्के च ।
किल—निश्चितार्थे, अलीके,
सम्भावनायां वार्तायाञ्च ।
कु—कुत्सिते, पापे, मन्दे,
अमङ्गले च ।
कुतस्—कस्मात् स्थानात्, किं
निमित्तम् ।
कुत्र—कस्मिन् स्थाने, कस्मिन्
विस्मये ।
कुत्रचित्—कस्मिंश्चित् स्थाने ।
कृतम्—वारणार्थे ।
कृते—मिनित्तम् ।

केशाकेशि—केशेषु केशेषु आक्रम्य यद्युद्धम् ।
क्रमशः—परपरक्रमेण ।
क्व—कुत्र ।
क्वचन—कुत्र, कस्मिश्चित् समये ।
खलु—निश्चये वाक्यालङ्कारे च ।
चतुर्धा—चतुःप्रकारेण ।

चिरम्, चिरेण, चिराय, चिररात्राय, चिरात्, चिरस्य, चिरे —चिरकालम्, वहुकालम् (व्याप्य) ।

चेत्—यदि ।
जातु—कदाचित् ।
जोषम्—तूष्णीम्, सुखे च ।
झटिति—शीघ्रम् ।
तत्—तस्मात्, तन्निमित्तम् ।
ततस्—तस्माद्धेतोः, तदनन्तरम् ।
तत्र—तस्मिन् स्थाने ।
तथा—तेन प्रकारेण ।
तथाहि—दृष्टान्ततः ।
तदा—तस्मिन् समये ।
तदानीम्—तस्मिन् समये ।
तर्हि—तदा, ततः ।

तावत्—साकल्ये, वाक्यालङ्कारे, तत्परिमिते च ।
तिरस्—अप्रकाशे, वक्रार्थे च ।
तिर्यक—वक्रार्थे, पार्श्वे च ।
तु—किन्तु, पुनः ।
तूष्णीम्—मौनिनि, स्थिरे च ।
त्रिः—वारत्रयम् ।

त्रेधा, त्रैधम् —त्रिप्रकारेण ।

दक्षिणतस्, दक्षिणात्, दक्षिणेन —दक्षिणास्यां दिशि ।

दण्डादण्डि—दण्डेन दण्डेनाक्रम्य यद्युद्धम् ।
दिवा—दिने ।
दिष्ट्या—भाग्येन ।
दुष्ठु—कु, निन्दिते ।
दैवात्—दैवक्रमेण ।
द्राक्—शीघ्रम् ।

द्विधा, द्वेधा —द्विवारम्, द्विप्रकारम् ।

धिक्—निन्दायाम् ।

न, नञ् —निषेधे ।

नक्तम्—रात्रौ ।
नचेत्—तन्न सति ।

नमस्—नमस्कारे, प्रणामे च ।

नवधा—नवप्रकारेण ।

नवशः—नवभिर्नवभिः ।

नहि, ना—निषेधे ।

नाना—बहुविधेषु ।

नाम—आख्यायाम्, सम्भावनायाम्, प्रकाश्ये च ।

नास्ति—न भवतीत्यर्थे ।

निकषा—निकटे ।

नितराम्—अवश्यम्, अत्यन्तम् ।

नित्यदा—सर्वदा ।

नीचकैस्, नीचैस्—क्षुद्रे, स्वल्पे, निम्मे च ।

नु—सन्देहे वा अनिश्चये ।

नूनम्—निश्चये, वितर्के च ।

नो—निषेधे, न ।

नोचेत्—तन्न सति ।

न्यक्—नीचे, घृण्ये च ।

पञ्चधा—पञ्चभिः प्रकारैः ।

परम्—केवलम्, अनन्तरम् ।

परश्वस्, परःश्वस्—आगामिनि तृतीयदिने ।

पराक्—वक्रे, कुटिले च ।

परासि—गतवत्सरात् पूर्वम् ।

परितस्—चतुर्दिक्षु ।

परुत्, परेद्यवि, परेद्युस्—परदिने ।

पश्चात्—परे, पश्चिमे च ।

पुनःपुनर्—वारंवारम्, पुनःपुनः ।

पुनर्—पुनः, अप्रथमे ।

पुरतस्—सम्मुखे ।

पुरस्, पुरस्तात्—पूर्वस्यां दिशि, प्रथमे, सम्मुखे च ।

पूरा—पूर्वस्मिन् काले, निकटे च ।

पूर्वेण—पूर्वस्यां दिशि, पूर्वकाले च ।

पूर्वेद्युस्—पूर्वदिने ।

पृथक्—भिन्ने ।

पृष्ठतस्—पश्चाद्भागे ।

प्रकामम्—यथेष्टम्, यथेच्छम् ।

प्रगे—प्रत्यूषे ।

प्रत्यक्—पश्चात्, पूर्वे, पश्चिमे ।

प्रत्यहम्—प्रतिदिनम् ।

प्रत्युत—वैपरीत्ये ।

प्रसह्य—हठात्, बलपूर्वकम् ।

प्राक्—पूर्वम् ।

प्रातर्—प्रभाते ।

प्रादुस्—व्यक्तार्थे ।

प्राध्वम्—आनुकूल्ये ।

प्रायशस्—बाहुल्यरूपेण ।

प्रायस्—बाहुल्येन ।

प्राह्णे—प्रभाते।
प्रेत्य—परलोके, परकाले च।
फट्—मन्त्रांशविशेषे, अस्त्रमन्त्रे, अनुकारशब्दे च।
बहुशस्—बहुरूपेण, बाहुल्यरूपेण च।
भगोस्—सम्बोधने।
भूयस्—बाहुल्येन, वारंवारम्।
भूर—बहुलम्, बहु।
भूरिशस्—बहुवारम्, बहुशः।
भृशम्—अतिशयम्, बहुवारम्।

भो, भोस्—सम्बोधने।

मंक्षु—शीघ्रम्, अतिशयञ्च।
मत्—मदीयार्थे।
मनाक्—ईषत्।
मम—ममतायाम्।
मा—निषेधे, निन्दायाञ्च।
मिथस्—परस्परम्, रहसि च।
मिथ्या—निष्फले, असत्ये च।
मुधा—वृथा, निष्फले।
मुहुस्—वारंवारम्।
मृषा—मिथ्या।
यत्—यस्माद्धेतोः यथाविधे च।
यतस्—यस्माद्धेतोः, यथाविधे च।
यत्र—यस्मिन् स्थाने।

यथा—येन प्रकारेण, सत्ये, अनतिक्रमे च।

यथातथम्, यथायथम्, यथार्हन्, यथावत्, यथास्वम्—यथायोग्यम्, यथार्थे च।

यदा—यस्मिन् समये।
यदि—सम्भावनायाम्।
यावत्—साकल्ये, परिमाणे, पर्यन्ते च।
युगपत्—एककालिकम्।
रहस्—निर्जने।
रे—सम्बोधने।
वत्—खेदे, विस्मये, हर्षे च।
वरन्—उत्कृष्टे।

वषट्, वौषट्—आहुतिमन्त्रे।

वहिस्—वहिर्भागे।
वा—विकल्पे, वितर्के, समुच्चये, उपमायाम्, वाक्यपूरणे च।
वाड़म्—स्वीकारे।
विधिवत्—यथाविधि।
विना—व्यतिरेकेण।

विश्वक्, विष्वक्—सर्वत्र, सर्वव्यापिनि।

वृथा—अकारणम् ।
शनैस्—क्रमशः, अल्पे अल्पे च ।
शश्वत्—निरन्तरम्, वारंवारम् ।
शान्तम्—निवृत्तम्, वारितम् ।
श्रत्—श्रद्धायाम् ।
श्वस्—आगामिदिने ।
संवत्—वत्सरे ।
सकृत्—एकवारम् ।
सत्रा—सहितम् ।
सदा—सर्वदा ।
सद्यस्—तत्क्षणे ।
सपदि—शीघ्रम्, सहार्थे च ।
समन्तस्—सर्वतः ।
समन्तात्—चतुर्दिक्षु, सर्वतः ।
समम्—सह, एकदा ।
समया—समीपे ।
समुपयोषम्—हर्षे, भाग्ये च ।
सम्प्रति—अधुना ।
सम्यक्—तत्यम्, सर्वतोभावेन, साकल्येन ।
सर्वतस्—सर्वप्रकारेण, सर्वस्यां दिशि ।
सर्वत्र—सर्वस्थाने ।
सर्वत्र—सर्वप्रकारेण ।
सर्वदा—सर्वस्मिन् समये ।
सह—समम् ।
सहसा—हठात्, अतर्कितम् ।
साकम्—सह ।
साक्षात्—प्रत्यक्षम् ।
साचि—वक्रे, नते च ।
सामि—कियदंशे ।
साम्प्रतम्—उचितम्, सम्प्रति ।
सायम्—सन्ध्याकाले ।
सार्धम्—सह ।
सुचिरम्—बहुकालम् ।
सुतराम्—अगत्या, अवश्यम्, अत्यन्तम् ।
सुष्ठु—उत्तमम् ।
स्थाने—उचितम् ।
स्म—अतीते ।
स्वधा—मन्त्रविशेषे ।
स्वयम्—निजार्थे, आत्मावच्छिन्ने ।
स्वर्—स्वर्गे ।
स्वस्ति—शुभे, मङ्गले च ।
स्वाहा—मन्त्रविशेषे ।
स्वित्—प्रश्ने, वितर्के, संशये च ।
ह—सम्बोधने, पादपूरणे च ।
हहो—सम्बोधने ।
हञ्जे—नीचां प्रति सम्बोधने ।
हण्डे—चेटीं, प्रति, सम्बोधने ।
हन्त—खेदे, हर्षे च ।
हला—सखीं प्रति सम्बोधने ।
हा—विषादे, शोके, पीड़ायाञ्च ।
हिरुक्—भिन्ने, मध्ये च ।

हिहि
ही
हीही } —हास्ये, हास्यशब्दे, आह्लादे च ।

हे
हेहे
है
हो } —संम्बोधने ।

हुम्
हूम् } —स्वीकारे ।

ह्यस्—परदिने ।

